**पाराशर्यवचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां**
**संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीवनीम् ।**
**पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिताम्**
**आनीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम् ॥ २ ॥**

---

श्रुतिशिरसि विदीप्तत्वे स्वयमेव ब्रह्म सम्यग् विज्ञाय सर्वेऽनुभवेयुः। किमर्थमत्रभवान् प्रयस्यतीत्यत्र—ततोऽनुभवः क्षीरपानमात्रं भवति ; अमृतत्वहेतुसुधापानसंपत्तये तु तत्र मथनं महद्भिः कृतम् । सापि सुधा व्याघातबलात् दुर्लभा संप्रति सुमनसामासीदिति सैव भोगानुकूलमानीयते सर्वेभ्यः प्रदानायेत्याह **पाराशर्येति** । पाराशर्यो भगवान् बादरायणो व्यासः । **वचः** शारीरकम् । तदपि भोग्यमेव; तथाऽपि सूत्रजातस्य उपनिषद्गतत्वाभावात् उद्धृतत्वादिविशेषणानां प्रमेय एव साक्षादन्वयात् **वचः**पदं शारीरकप्रमेयपरम् । वचः सुधेव **वचस्सुधा** । सादृश्यं भोग्यताप्रयुक्तमिति स्वत एव सिद्धम् । दुर्ग्रहाणि आकारान्तराणि तु पश्चात् ज्ञाप्यन्ते । अत्र समासविचारः भावप्रकाशिका-भूमिकायामस्मदीयायामपि द्रष्टव्यः। **पिबन्तु** इत्यतो रूपकविवक्षेह भाव्या । **मध्येति**कथनात् सर्वसार-ग्रहणं सूच्यते । **प्राणः** परमात्मा । तस्य संसरद्भिरज्ञातत्वात् तेषां व्यपगतप्राणत्वमुच्यते । तेषां प्राणाधानमेव जीवनम् । संजीवनञ्च पुनस्तदपायप्रसक्तिवारणात् । तेन, **'यो मां पश्यति सर्वत्र', 'सर्व-भूतस्थितं यो माम्'** इतिरीत्या ज्ञानयोगपूर्तिपर्यन्तं दुःखामिश्रभगवदनुसंधानरूपजीवनवतां पश्चात् प्राणं विना भवनरूपे कैवल्ये या प्रवृत्तिः, तस्या अपि विघटनेनामृतत्वकरणं वचस्सुधायाः ज्ञाप्यते । ननु वचसः सुधात्वेन उपनिषदादीनां दुग्धाब्धित्वादिना च रूपणवत् उत्तरार्धेऽपि रूपणं युक्तम् ; तत्र लक्ष्यत इति चेत्—असत्पूर्वाचार्या एव गुरुधन्वन्तरिप्रभृत्याचार्यत्वेन, बहुमतय एवासुरत्वेन च रूप्यन्ताम् । अथवा पूर्वाचार्या एव सुराः ; तेषु **क्षितं** स्थितिः, प्राप्तिः यस्याः तामित्यर्थोऽस्तु । क्षि निवासगत्योरिति धातुः । बहुमतय एव व्याघाताः । अत्र आदिपर्वणि (32-33) गरुत्मता अमृताहरणे अश्वकन्दादिभट, भ्रमचक्रविशेष—चक्षुर्विषभुजगव्याघाता उक्ता अप्यनुसंधेयाः । बहुशब्दस्य मति-शब्देन व्याघातशब्देन वा तत्पुरुषः, बहुव्रीहिर्वा । पूर्वाचार्यैः सुरक्षितत्वेपि पश्चात्तनविविधमतिक्षोभात् दुष्प्रापाऽऽसीदिति पुनरानयनप्रयत्नः । स्वयमव्याहतत्वात् व्याघातदूरस्थितैव हि व्याघातवादिबलात् अन्येषां दूरस्थिताऽऽसीत् । **आनीतामिति** । अत्र मया गरुत्मतेति पूरणीयम् । 'गायत्र्या सोममाभरत्' इति श्रुत्या छन्दोमयेन गरुत्मता निजाक्षरेण वेदेन सोमशब्दवाच्यममृतमानीतं बोध्यते । "कद्रूश्च वै सुपर्णी च" इत्यनुवाकोऽपि द्रष्टव्यः । अथवा रामानुजो भगवान् ; धन्वन्तरिरक्षितां असुरैरपहृतां भगवता मोहिनीरूपेणात्मीयैरमृतमयैरक्षरैरानीतामित्यर्थसंभवात् । तुशब्दः पुनर्दूरस्थिति-प्रसक्तिव्यवच्छेदकः । **निजपदम्** वचोऽमृतसंबन्धीत्यर्थकं वा आनयनकर्तृसंबन्धीत्यर्थकं वा । न कदापि क्षरन्तीत्यक्षराणि । **सुमनसः** । देवानां सुधेव सहृदयानां शुद्धमनसां दैव-प्रकृतीनां पेयेयम् ; दुर्मनसां तु असुरप्रकृतीनां परमपुरुषवरणीयताविरहिणां दुष्प्रापेति भावः ।

भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते—

(प्रथमाध्याये प्रथमपादे प्रथमं जिज्ञासाधिकरणम्)

ॐ ॥ अथातो ब्रह्मजिज्ञासा ॥ १।१।१

अत्रायमथशब्दः आनन्तर्ये भवति ; अतश्शब्दो वृत्तस्य हेतुभावे । अधीतसाङ्गसशिरस्कवेदस्य अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्य अनन्तस्थिर-

---

अन्वहम् । 'आशरीरात् शारीरकप्रवचनव्रतमाद्रियेथाः' इति ह्यनुशास्ति । सुधासाधर्म्यकथने स्वादुत्वं सिद्ध्यति; सुधावैधर्म्यकथने तु स्वादुतरत्वम् । अत इह वचस्सुधेयं न प्रसिद्धसुधावत् अनित्यसविकारक्षुद्रदुग्धाब्धिभवा, न मुमूर्षुजीवनमात्रकरी, न सुधाप्रतिपादकत्वाभावेन अनिजभूतैरक्षरैरानीता, न देवलोकस्थकतिपयमात्रकादाचित्कपानगोचरः ; किंतु अन्यादृशीति भावान्तरमपि तत्त्वटीकायामदर्शि ॥

ननु किमिति निजाक्षरैरानयनम् । पूर्वाचार्यसूक्तय एव वाच्यन्तामित्यत्राह **भगवदिति** । **पूर्वाचार्याः** द्रमिडभाष्यकारादयः । अतोऽतिविस्तरातिसंक्षेपरहितं कर्तव्यमिति भावः । किमिदं वैशेषिकदर्शनस्य प्रशस्तदेवभाष्यमिव, उपनिषदां वेदार्थसंग्रह इव च आनुपूर्वीव्याख्यानानात्मकमित्यत्राह **तदिति** । न केवलं प्रतिसूत्रम्, प्रतिपदमपि व्याख्या क्रियत इति ज्ञापयितुं **सूत्राक्षराणीति** । तन्मताननुसारेण स्वकपोलकल्पितमतग्रहे अक्षराणि अनुसृतानि न भवन्तीत्यपि सूच्यते । सूत्रव्याख्यानात् भाष्यम् । सूत्राणि हि सुस्पष्टार्थत्वाभावात् सूचनेन, प्रतिबुद्धानां हृदि विषयधारणमात्रार्थं स्युः । भाष्यं तु भाषणमात्रेण सर्वेषां श्रोतॄणां सर्वार्थस्पष्टबोधकत्वात् बहुभ्यो बोधाय, विना व्याख्यानं भाषणार्हं भवति । तत्रापि प्रत्यक्षरमवधाय अन्वितार्थप्रतिपादनादिदं श्रीभाष्यमिति ।

प्रथमं पदानामर्थमाह **अत्रेति** । **अत्र**—ब्रह्ममीमांसात्मनि मीमांसाशास्त्रोत्तरभागे स्थितः, **अयम्** अतश्शब्दशिरस्कः अथशब्दः, **आनन्तर्ये**—अव्यवहितोत्तरत्ववाची भवति । **भवतीति** प्रसिद्धिप्रयुक्तस्वारस्यं प्रदर्श्यते । अथशब्दः ब्रह्ममीमांसारम्भगत्वात् अतश्शब्दशिरस्कत्वात् स्वस्वारस्याच्चानन्तर्यवाच्येवेति यावत् । स्वारस्यदर्शनात् किञ्चिदानन्तर्ये आलोचिते, अत इत्येतच्छब्देन च पूर्वप्रकृतपरामर्शिना पूर्वं किञ्चिदासीदिति ज्ञापिते उपनिषदर्थब्रह्ममीमांसा निर्दिष्टा पूर्वभागार्थकर्ममीमांसारूपं विशेषमपि सूचयतीति भावः । **अतश्शब्द** इत्यत्र **अत्रायं भवतीति** पदत्रयस्यानुषङ्गः । इह **अयमित्यस्य** अथशब्दपूर्वक इत्यर्थान्तरं वर्णनीयम् । **अथशब्देन** यदानन्तर्यं विवक्ष्यते, तदेव **अत** इति हेतुतया परामृश्यत इति भावः । अनन्तरमित्युक्तौ कर्मज्ञानानन्तरमिति लाभम्, अत इत्यस्य च कर्मज्ञानादित्यर्थलाभञ्च दर्शयति **अधीतेति** । व्याकरणाद्यङ्गसहितः उपनिषद्रूपशिरस्सहितश्च वेदोऽधीतो येन तस्येत्यर्थः । कर्मब्रह्मविषयकापातप्रतीतिमतः इत्युक्तं भवति । **अधिगतेति** । अल्पास्थिरफलकं यत् **केवलं** ब्रह्मज्ञानविधुरं कर्म, तद्विषयकज्ञानं **अधिगतं** प्राप्तं येन तादृशतयेत्यर्थः । अस्य संजातेत्यत्रान्वयः । अधिगतेत्यतः

**फलब्रह्मजिज्ञासा ह्यनन्तरभाविनी ।**

**ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्मण इति कर्मणि षष्ठी ; " कर्तृकर्मणोः कृति "** ( पा. अ. 2. 3. 65.) **इति विशेषविधानात् । यद्यपि संबन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः—तथाऽपि, आक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात् कर्मणि षष्ठी गृह्यते । न च "प्रतिपदविधाना षष्ठी न समस्यते"** (अ. 2. 2. 10. वा.) **इति कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः, "कृद्योगा च षष्ठी समस्यते"** (अ. 2. 2. 9. वा) **इति प्रतिप्रसवसद्भावात् (सम्भवात्) ।**

---

पूर्वम्, अनन्तस्थिरफलकर्मजिज्ञासया कर्मविचारे प्रवृत्तस्येति पूरणीयम्। **फलब्रह्मेति** फलभूतब्रह्मेत्यर्थः। **अनन्तरभाविनीति** । वेदमधीतवतः कर्मणि ब्रह्मणि च युगपदनन्तस्थिरफलापातप्रतीतौ स्थितायामपि कर्मजिज्ञासा ब्रह्मजिज्ञासायाः प्रतिबन्धिकाऽऽसीत् । कर्मनिर्णयेन प्रतिबन्धकस्य निवर्तितत्वात् मोक्षाभिलाषो जायते, ततो ब्रह्मजिज्ञासा चेति भावः । अधीतेत्यादिवाक्यं सूत्रवाक्यार्थबोधकमिव प्रतीयमानमपि अथातश्शब्दार्थस्य वर्णितस्योपपादनार्थं प्रवृत्तम्; ब्रह्मजिज्ञासापदार्थवर्णनानन्तरं हि वाक्यार्थो वर्णनीयः ।

ब्रह्मणः परमोद्देश्यत्वात्, धर्माय जिज्ञासेति शाबरभाष्यदर्शनाच्च चतुर्थीतत्पुरुषं मा कश्चित् मंस्तेति विगृह्णाति **ब्रह्मण इति** । **कर्मणि षष्ठी** । न तु पञ्चमी, नापि शेषे षष्ठी । **कर्तृकर्मणोः कृति** । कृदन्ते शब्दे परे कर्तृरूपार्थे कर्मरूपार्थे वा षष्ठी स्यादित्यर्थः । ब्रह्मणो जिज्ञासाकर्मत्वेऽपि विग्रह घटकषष्ठी न कर्मरूपार्थे, किंतु शेषे इति शंकां परिहर्तुमनुवदति **यद्यपीति । संबन्धसामान्यपरिग्रहे** संबन्धसामान्यरूपशेषपदार्थस्य आदरेण ग्रहणे आदरकारणञ्च— ब्रह्मकर्मकजिज्ञासेति कथने ब्रह्मस्वरूपमात्रं विचार्यं स्यात्; इह तु चतुरध्याय्यां ब्रह्मस्वरूपप्रमाणसाधनफलानि विचार्यन्त इति सर्वविषयप्रतिज्ञासंपत्तये संबन्धसामान्यं ग्राह्यमिति । तत्र निर्विशेषं न सामान्यमिति न्यायात् कर्मार्थत्वसिद्ध्या नान्यसंबन्धप्रसक्तिरिति । **सामान्यपरिग्रहे** इत्यत्रापि कर्मणि षष्ठ्येव स्वरसा । **तथापीति ।** संबन्धसामान्ये कथिते, कोसौ इति जिज्ञासायाम् ब्रह्मस्वरूपकर्मकत्वं तत्प्रमाणकर्मकत्वं तत्साधनकर्मकत्वं तत्फलकर्मकत्वञ्चेति विशेषचतुष्टयमाक्षेपकल्प्यम् । एतदपेक्षया ब्रह्मकर्मकत्वं षष्ठीवाच्यतयैव स्वीकृत्य, 'राजा समागत' इत्युक्तौ परिकरागमनस्याक्षेपवत् स्वरूपविचारेण प्रमाणादिविचारमात्राक्षेपो युक्त इति भावः । 'आक्षेपकल्प्यब्रह्मकर्मकत्वापेक्षया **आभिधानिकस्य**—वाच्यस्य ब्रह्मकर्मकत्वस्य ग्राह्यत्वात्' इत्यनेन, कर्मत्वस्य आक्षेपापेक्षया अभिधानिकत्वस्य युक्तत्वादित्युक्तं भवति ।

**प्रतिपदविधाना —प्रतिपदं** पदं पदं प्रति विधानं यस्याः सा शेषषष्ठीभिन्ना षष्ठी ; तदन्तं पदं न समासं लभत इत्यर्थः । **कृद्योगा** कृताऽन्विता, 'कर्तृकर्मणोः कृती'ति विहिता । **प्रतिप्रसवः** अपवादापवादः । प्राप्तषष्ठीसमासनिषेधरूपं प्रतिपदविधानेतिवार्तिकमपवादः; तदपवदनमनेन वार्तिके-

**ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते। सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयम्, सोऽस्य मुख्योऽर्थः। स च सर्वेश्वर एव। अतो ब्रह्मशब्द-**

---

नेति। तर्हि पूर्वनिषेधस्य कुत्रोपयोग इति चेत्—'ज्ञोऽविदर्थस्य करणे' इति सूत्रविहितषष्ठीस्थले। तदर्थश्च—ज्ञानार्थकत्वरहितस्य ज्ञाधातोः यत् करणम् तत्र षष्ठीति। अत्र वदन्ति—करणस्य संबन्धसामान्यरूपशेषविवक्षायां षष्ठी भवति। सर्पिषो जानीते इत्युदाहरणम्। जानीते इत्यस्य प्रवर्तत इत्यर्थः। तत्र करणं सर्पिः। तस्य करणत्वमविवक्षित्वा सर्पिस्संबन्धिनी प्रवृत्तिरिति संबन्धविवक्षैव प्रकृते। ननु तर्हि, 'षष्ठी शेषे' इति सूत्रेणैव षष्ठी भविष्यति, किमर्थमिदं सूत्रमिति चेत्—एतत्सूत्रे सत्येव इयं षष्ठी प्रतिपदविधाना स्यात्। तेन समासनिषेध इति एतत्सार्थक्यमिति। ननु सर्पिषो जानीते इति सुबन्ततिङन्तयोः कथं समासप्रसक्तिरिति चेत्—तर्हि सर्पिषो ज्ञानमित्युदाहरणमस्तु। अर्थस्तु सर्पिस्संबन्धिनी प्रवृत्तिरित्येव। न च ज्ञानपदस्य कृदन्तत्वात् षष्ठीयं कृद्योगैवेति समासप्रतिप्रसवसंभवः इति वाच्यम्—अस्य कृदन्तत्वेपि नात्र कृद्योगनिमित्ता कर्तरि कर्मणि वा षष्ठी, किन्तु अविदर्थक ज्ञाधातुकरणविषयिण्येवेति प्रतिप्रसवासंभवात्। **प्रतिप्रसवसद्भावा**दिति पाठवत् **प्रतिप्रसवसंभवा**दिति पाठोऽपि प्रसिद्धः। तदर्थस्तु सर्पिषो ज्ञानमित्यत्र प्रतिप्रसवासंभववत् ब्रह्मजिज्ञासेत्यत्रासंभवो नास्तीति॥ तथा च ब्रह्मशब्दस्येह ब्रह्मकर्मकेत्यर्थः, न तु ब्रह्मसंबन्धीति इत्युक्तं भवति।

नन्वसमर्थः सूत्रकारः, पुरुषोत्तमजिज्ञासेत्येवंरीत्या प्रयोगे कार्ये प्रकृतिपुरुषाद्यर्थान्तरप्रसिद्धब्रह्मपदस्य प्रयोगादित्याशङ्कायाम्, न ह्येष स्थाणोरपराधः, यदेनमन्धो न पश्यतीति प्रतिविवक्षया ब्रह्मशब्दस्य पुरुषोत्तममात्राभिधायित्वमाह **ब्रह्मशब्देन** चेति। चस्त्वर्थे; पूर्ववाक्यार्थेनोत्तरवाक्यार्थसमुच्चये वा; दृष्टान्ततया पुरुषोत्तमादिशब्दसमुच्चये वा। बद्धानां निरस्तनिखिलदोषत्वमेव नास्ति। मुक्तानां नित्यानाञ्च तत्सत्त्वेपि तन्न स्वभावतः। **स्वाभाविकत्वम्** अनन्याधीनत्वम्। तादृशं दोषराहित्यं परमात्मन एव। एवंसति निखिलपदं किमर्थमिति चेत्—निरतिशयबृहत्त्वपरिचयायेति ध्येयम्। **स्वभावत** इतीदमुत्तरपदेऽप्यन्वेति। तेन सर्वेश्वरगुणानामप्यविद्याधीनत्वमतनिरासः। **अनवधिकः** उत्कृष्टावधिरहितः अतिशयः येषां ते असंख्येयकल्याणगुणगणाः। बहुव्रीहिणा तद्गलाभः। गणस्यासंख्येयत्वकथने गुणासंख्येयत्वं कैमुत्यसिद्धम्। अन्येषामेकोपि गुणः अनन्याधीनो नास्ति; अथापि सर्वगुणकथनं ब्रह्मशब्दार्थव्युत्पत्तय एव। नन्विमानि निरस्तदोषत्व निरतिशयनिखिलगुणत्व पुरुषोत्तमत्वानि न ब्रह्मशब्दप्रवृत्तिनिमित्तानि; गौरवात्। एकांशस्यैव पर्याप्ततयेतरवैयर्थ्याच्च। स्वाभाविकवत्त्वमिति लघुपक्षसंभवाच्च। न चेष्टापत्तिः। योगेनैव निर्वाहे रूढ्ययोगात्। तर्हि प्रकृत्यादावपि तच्छब्दः स्यादिति चेत्—नेदमनिष्टम्; प्रयोगदर्शनात्। अतः बृहत्त्ववदिति सर्वानुगतबृहत्त्वरूपयोगार्थ एव ग्राह्य इति सूत्रकृदसामर्थ्यं तदवस्थमित्यत्रोपपादयति **सर्वत्रे**ति। योगार्थ इष्यते; अथापि निरतिशय-

स्तत्रैव मुख्यवृत्तः; तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः; अनेकार्थकल्पनाऽयोगात्; भगवच्छब्दवत्। तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः। अतः सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म।

ज्ञातुमिच्छा जिज्ञासा। इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते।

---

बृहदित्यर्थे योगरूढिः। सर्वतोनिरतिशयत्वव्युत्पादनायैव पूर्वं बहुविशेषणकथनम्। बृहत्त्वमुत्कर्षः। 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' इति निरुक्तात् बृहत्त्वं बृंहणत्वं च ग्राह्यम्। स्वरूपगत उत्कर्षो बृहत्त्वम्; गुणद्वारा उत्कर्षः बृंहणत्वम्। अतः साक्षात् परम्परया चेति असंकोचेन निरतिशयोत्कर्षविशिष्टमिति ब्रह्मशब्दार्थः। योगमात्रस्वीकारे तु घटपटादावपि बृहत्त्वसत्त्वात् बृहत्पदस्येव ब्रह्मपदस्याप्यविशेषेण प्रयोगः स्यात्। यत्रयत्र ब्रह्मशब्दः, सर्वतावन्मात्रानुगतं प्रवृत्तिनिमित्तं च न लभ्यते। अतश्च प्रमाणबलाच्च पुरुषोत्तमे योगरूढिः स्वीकार्येति भावः। निरुक्ते **बृहती**तिपदमार्षम्। बृंहतीति, बर्हतीति वा ग्राह्यम्; बृह बृहि वृद्धौ इत्येव धातुपाठात्॥ तर्हि प्रकृत्यादौ प्रयोगनिर्वाहः कथमित्यत्राह **तस्मा**दिति। हर्यादिशब्दानामिवानेकार्थरूढिरेव किं न स्यादित्यत्राह **अनेके**ति। लक्षणादिना निर्वाहसंभवे नानाशक्तिर्न कल्प्येति सिद्धान्तः। अन्यथा गङ्गाशब्दस्य तीरमपि मुख्यार्थः स्यादिति भावः। ब्रह्मशब्दे योगरूढौ युक्तिं प्रमाणञ्च सूचयितुं भगवच्छब्दो दृष्टान्त्यते। "तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः। शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः" इति भगवच्छब्दविषयं विष्णुपुराणम्। "वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि। तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने" इति ब्रह्मशब्दविषयं गारुडं पुराणम्। ननु सगुणब्रह्मणि रूढावपि अत्र निर्गुणब्रह्मैव लक्षणया ग्राह्यम्, तज्जिज्ञासयैवामृतत्वभावादित्यद्वैतिमतं निरसितुमाह **तापे**ति। **सर्वेश्वर** एवेति। एतावत्सूचनाय ब्रह्मशब्दः प्रयुक्तः सूत्रकृतेति भावः। इदं द्वितीयसूत्रेण लक्षणकथनेन सूत्रकार एव दर्शयिष्यति।

न्यायनिबन्धनत्वात् सूत्रस्य विवक्षितान् पक्षसाध्यहेतून् दर्शयिष्यन् इच्छायाः साध्यकोटिप्रवेशवैयर्थ्यमालोच्याह **इच्छाया** इति। अयं भावः—मान्बधेत्यादिना मानेर्जिज्ञासायां सन् विहितः। तत्र ज्ञानेच्छारूपार्थविवक्षा चेत्, विशेषविधिरयमनपेक्षितः। अतो मीमांसाशब्दः मननरूपधात्वर्थमात्रे सन्नन्तः। तत्र जिज्ञासापदं विचारात्मकज्ञानरूपधात्वर्थमात्रविवक्षया प्रयुक्तम्। ज्ञाधातोरुपरि स्वार्थे सनोऽभावात् इच्छार्थक एव सन्। अथापि तदर्थ उपेक्ष्यते। तथेह तामुपेक्ष्य ज्ञानमात्रं विधीयते। उपेक्षणञ्च इच्छायाः सर्वत्र विषयसिद्ध्यर्थत्वात् आर्थप्राधान्यं विषयस्येति तावन्मात्रं पर्याप्तमिति धिया। तदुक्तं **सारे**, 'ज्ञानमिहाभिप्रेतम्' इति। विधेयत्वं च ज्ञानस्य नाप्रवृत्तप्रवर्तनरूपम्; विचारात्मके ज्ञाने रागतः प्रवृत्तेर्वक्ष्यमाणत्वात्। प्रवृत्तस्यापि तु पूर्वपक्षियुक्तिबलात् विचारस्यासंभवशङ्कायां संभवज्ञापनं क्रियत इति अज्ञातज्ञापनमेवेह विधानम्। तच्च पर्वतेऽग्नेरिव विचारस्येह साध्य-

स्वरूपम् । ननु प्रवर्तनरूपार्थाभावे विचारः कर्तव्य इति कर्तव्यपदाध्याहारः कथं भाष्ये उपरि क्रियते; अत्र च ज्ञातव्यमिति कथं तव्यप्रत्ययः इति चेत्—"प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इत्यनेन प्राप्तकालरूपार्थविवक्षया ।

अस्तु तावत् । सूत्रे कर्तव्येत्यध्याहारे सति कथं ज्ञानस्य साध्यतेति चेत्—अत्रेदं बोध्यम्—अतश्शब्दे पञ्चम्यर्थो हेतुत्वं कारकत्वरूपं ज्ञापकत्वरूपं वेति विचारे स्वरससिद्धं कारकहेतुत्वमेव तदर्थ इति टीकातत्त्वटीकाभ्यां ज्ञायते ; एवं वाच्यार्थे सत्यपि अतश्शब्दस्य प्रयोजनं ज्ञापकहेतुसूचनमित्यपि । भाष्येऽपि, 'ब्रह्मजिज्ञासा ह्यनन्तरभाविनी' इत्यनेन ब्रह्मविषयकापातप्रतीतिकार्यो ब्रह्मविचारोऽनन्तरं भवितुमर्हतीति कारकहेतुत्वघटितवाक्यार्थोऽदर्शि । सूत्रस्य न्यायनिबन्धनरूपत्वात् ज्ञापकहेतुत्वं स्वरसमिति केचित् कथयेयुः । कारकस्यैवात्र ज्ञापकत्वं वक्तव्यमिति कारकसद्भावप्रदर्शने तत् अर्थसिद्धम् ; सूत्रवाक्यार्थे वर्णिते ततःसमुचितपक्षसाध्य हेतुप्रयोगेण विवक्षितानुमानसंभवादित्यन्ये मन्येरन् । अत्र हि—कर्मब्रह्मविषयकापातप्रतीत्योः पूर्वं स्थितयोः निर्णयरूपफलेच्छा, विचाररूपोपायेच्छा च क्रमाज्जाता विचारं जनयेत् । तत्र कर्मविचारेच्छा प्राक् स्थिता ब्रह्मापातप्रतीत्यधीनविचारप्रतिबन्धिका बभूव । कर्मविचारे वृत्ते च प्रतिबन्धकापायात् ब्रह्मनिर्णयरूपफलेच्छा, विचारेच्छा, तदधीनो विचारश्च । अत्र विचारे कर्मनिर्णयः प्रतिबन्धकाभावसंपादकतया, ब्रह्मापातप्रतीतिश्च विचारेच्छाद्वारा कारणे भवतः । तत्र पूर्वपक्षी एवं शंकते—कर्मनिर्णयः प्राभाकररीत्या सिद्धे व्युत्पत्त्यभावसमर्थकतया आपातप्रतीतिरूपकारणविघटक एवासीदिति विचारकारणमेव नास्तीति । तत्र अत इति कारणसत्त्वं प्रदर्श्यते सूत्रकारेण । सिद्धे व्युत्पत्तिर्भवतीति तदाशयः । एवं कारणाभावात् कार्याभाव इति शंकायां कारणसत्त्वात् कार्यमस्तीति साधनमपि सिद्ध्यतीति । जिज्ञासा कर्तव्येति, ब्रह्म जिज्ञासितव्यमिति च शांकरम् । अस्मद्भाष्येऽप्युभयविधम् । अत्र कर्तव्येत्यध्याहारात् भवतीत्यध्याहारो ज्यायान्; अनुशासनसंमतेः । कर्तव्यत्वमपि कृत्यर्हत्वं भवनार्हत्वमेवेति न तदध्याहारे कश्चिद् विशेषः । ज्ञानेच्छा कर्तव्या, ज्ञानं कर्तव्यमिति प्रयोगश्च न समञ्जसः । अतो जिज्ञासैव, ज्ञानमेव वा विधीयते ; सन्प्रयोगश्च रागतः प्रवृत्तिसूचनाय । सर्वथा आपातप्रतीतिमूलककर्मविचारानन्तरः तद्धेतुको ब्रह्मविचार इति वाक्यार्थः । जिज्ञासाशब्दस्य परसीत्या निर्णयेच्छेत्यर्थाङ्गीकारेऽपि, अस्मद्रीत्या विचारेच्छेत्यर्थस्वीकारेऽपि आपातप्रतीतिहेतुकत्वं तत्र न बाधितम् । अतः कर्तव्येत्येतदन्वयाय इच्छारूपार्थत्याग इति न मन्तव्यम् । किंतु स इच्छांशस्यानपेक्षितत्वात् । पूर्वपक्षिणा विचारासंभवस्यैव शंकितत्वात् विचार एव तद्धेतुकत्वं विवक्षितम् । अतोऽपि ज्ञानमत्र विचारात्मकम् ; न तु निर्णयात्मकम् । अत इति च कारकहेतुत्वपरम् ।

तर्हि अथातश्शब्दयोरन्यतरेणालमिति चेत्—उच्यते । कर्मविचारानन्तरमित्युक्तिमात्रेण कारकहेतुत्वनिश्चयो न भवति ; अहेतोरपि पूर्वभावित्वात् ; अन्यथासिद्धस्यापि नियतपूर्वभावित्वात् । अत इति कारकहेतुत्वोक्तौ यद्यपि अथेत्यानन्तर्यमप्यर्थसिद्धम्—अथापि ब्रह्मापातप्रतीतिमूलको

**मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वात् उपरितनभागावसेयस्य ब्रह्मज्ञानस्या-नन्ताक्षयफलत्वाच्च पूर्ववृत्तात् कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति ।**

**तदाह वृत्तिकारः—"वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा" इति । वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्, "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्व-सिद्धिः" इति । अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवत् अध्यायभेदवच्च पूर्वोत्तरमी-मांसयोर्भेदः । मीमांसाशास्त्रम्, "अथातो धर्मजिज्ञासा"** (पू. मी. 1. 1. 1.) **इत्यारभ्य, "अना-वृत्तिःशब्दादनावृत्तिःशब्दात्"** ( उ. मी. 4. 4. 22. ) **इत्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रमम् ।**

---

विचारः कर्मविचारानन्तरमेव न भवति, कर्मनिर्णयस्य सिद्धव्युत्पत्तिनिरासकतया कारणविघटकत्वादिति शंकायां कर्मविचारपश्चाद्भावित्वमेव विचारे साध्यतेऽत्रेति साध्यपरोऽथशब्दः; हेतुप्रदर्शकश्चात-श्शब्दः । अव्यवहितपश्चाद्भावरूपानन्तर्यवाचिपदप्रयोगात् विचारापेक्षितपुष्कलकारणसद्भावसूचनात् सर्वपूर्वपक्षनिरासः । तत्र कारकहेतुत्वकथनेऽपि ज्ञापकहेतुत्वमप्यभिमतमेवेति ।

ब्रह्मज्ञानं कर्मविचारानन्तर्यविशिष्टम्, कर्मनिर्णयविशिष्टब्रह्मापातप्रतीतेरित्युक्तौ हेतोर्विचारक-पुरुषैकनिष्ठत्वान्न पक्षधर्मता, आपातप्रतीत्यभावस्य पूर्वपक्षिणा कथ्यमानत्वात् ब्रह्मविषयकविचाररूप-पक्षाप्रसिद्ध्या आश्रयासिद्धिश्चेति विमृश्य, ज्ञानं विधेयं = साध्यमिति भाषित्वा सूत्राभिमतं प्रयोगं दर्शयति **मीमांसेत्यादिना** । ब्रह्मेति पक्षः ; कर्मविचारानन्तरविचारविषयत्वार्हत्वं साध्यम्; कर्म-निर्णयसहितापातप्रतीतिविषयत्वं हेतुरिति भावः । कर्मविचारकाले ततः प्राक्चाऽऽपातप्रतीतिसत्त्वेऽपि साध्याभावात्, ब्रह्मनिर्णयादूर्ध्वं कर्मनिर्णयसत्त्वेऽपि साध्याभावाच्च व्यभिचारः स्यादिति हेतौ दलद्वयमिति । **अनन्ताक्षयफलत्वादिति** ; अनन्ताक्षयफलकत्वविषयकदृढापातप्रतीतेरित्यर्थः । **ज्ञात-व्यम्**— विचार्यमित्यर्थः ।

**शारीरकम्** ; शारीरः सर्वजगच्छरीरकः परमात्मा ; तं कायति कथयतीति अस्य चतुर्लक्षण-स्येदं नामेति आनन्दमयाधिकरणे वक्ष्यते । शारीरस्य जीवस्य यत् वस्तुगत्या सुखं कम् तदधिकृत्य प्रवृत्तमिति, शरीरसत्तापर्यन्तं पुंसः सुखायमानं शास्त्रमिति च गम्यते । **जैमिनीयेनेति** पदेन पूर्वभागः षोडशाध्यायी जैमिन्येककर्तृकेति स्पष्टम् । **षोडशलक्षणेन** ; षोडश **लक्षणानि** अध्यायाः यस्मिन् तेन । **षट्कभेदवत्**— पूर्वमीमांसान्तर्गतद्वादशलक्षण्यां उपदेशषट्कम्, अतिदेशषट्क-मिति भेद इव । **अध्यायभेदवत्** प्रमाणाध्याय-कर्मभेदाध्यायादिभेद इव । **पूर्वोत्तरेति** । एक-स्मिन् काये पूर्वकायोत्तरकायभेदवदिति भावः ।

ननु विचारोऽयं वैधश्चेत्, **जिज्ञासेति** सना रागतः प्रवृत्तिसूचनं न घटते । अवैधश्चेत्— कर्मविचारानन्तरमिति को नियमः ; यथेच्छं ब्रह्मविचारस्यापि प्राक् संभवात् । अध्यापनविधिबलेन प्रवृत्तः आचार्यः स्वेच्छाबलात् ब्रह्मविचारेऽपि पूर्वं प्ररोचयेत् । कर्मविचारं विनैव च ब्रह्मविचारः

तथाहि—प्रथमं तावत्, "स्वाध्यायोऽध्येतव्यः" (तै. आ. 2. 15.) इति अध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते। तच्चाध्ययनं किंरूपम् कथं च कर्तव्यमित्यपेक्षायाम्, "अष्टवर्षं ब्राह्मणमुपनयीत", "तमध्यापयेत्" (श. ब्रा.), इत्यनेन, "श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥" (मनु. 4. 95.) इत्यादिव्रत-नियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते। एवं सत्सन्तानप्रसूत-सदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्य आचार्योच्चारणानूच्चारणरूपमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते। अध्ययनं च स्वाध्यायसंस्कारः; "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्य कर्मत्वावगमात्। संस्कारो हि नाम कार्यान्तरयोग्यताकरणम्। संस्कार्यत्वं च स्वाध्यायस्य युक्तम्। धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनावबोधित्वात्; जपादिना स्वरूपेणापि तत्साधनत्वाच्च। एवमध्ययनविधिर्मन्त्रवत् नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति। अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात्, गृहीतात् स्वाध्यायात् आगम्यमानान् प्रयोजनवतोऽर्थान्

---

प्रायः क्रियमाणो लक्ष्यते इत्याशङ्कायाम्—यदि वेदाध्ययनमविहितं स्यात्, तदैवं शङ्काप्रसक्तिः; न त्विदानीम्। अद्यतनानुष्ठानं यथाकथञ्चिदस्तु नाम। प्रथमं ब्रह्मविचारप्रवृत्तिः कीदृशमधिकारिणं प्रतीति शोधने, सर्वं समाहितं भवतीत्याकलय्योपपादयितुमारभते **तथाहीति**। **प्रथमं तावदि** त्यस्य प्रथमरीतिस्तावदित्यर्थस्वीकारे, **स्वाध्यायेत्यारभ्य शारीरकमीमांसायामधिकरोतीत्यन्त**-वाक्यप्रमेयं प्रथमरीतित्वेन विवक्षितम्। तेनार्वाचीना अव्यवस्था न शास्त्रप्रवृत्तिसमयानुसारिवाक्यार्थभञ्जनी भवेदित्युक्तं भवति। अथवा प्रथमं तावत् ग्रहणं विधीयत इत्येवान्वयः। अनन्तरस्य विचारस्याविधेयत्वेपि प्रप्रथममध्ययनं विधीयत इति कर्मविचारसिद्धिरिति। अध्ययनमात्राधीनं ग्रहणं प्रथममेव विधीयते; न त्वध्यापनविधिशेषतया पश्चादिति वा, प्रथमभूतमक्षरराशिग्रहणमेव विधीयते, न विचार इति वाऽप्यर्थः। **स्वाध्यायः**—स्वस्याध्याय इति वा, स्वश्चासौ अध्यायश्चेति वा विग्रहः। पितृपितामहपरम्परया स्वकीयत्वेन प्राप्तो वेद इत्यर्थः। अध्ययनेन ग्रहणं विधीयते=ग्रहणार्थमध्ययनं विधीयत इत्यर्थः। **किंरूपम्;** स्वतन्त्रपाठरूपं वा गुरुमुखोच्चारणानूच्चारणरूपं वेत्यर्थः। **अर्धपञ्चमान्** अर्धं पञ्चमे मासि यत्र तान् सार्धान् चतुरो दक्षिणायनमासान्। स्वाध्यायाध्ययनस्य स्वर्गार्थत्वे अर्थविचारप्रसक्तिर्न स्यादिति संस्कारकर्मत्वं दर्शयति **अध्ययनञ्चेति**। **संस्कारः**—संस्कारककर्म। तदन्तर्गतः संस्कारश्च कार्यान्तरार्हता। व्रीहीन् प्रोक्षतीत्यत्र व्रीह्युद्देशेन प्रोक्षणविधानवत् अत्र स्वाध्यायोद्देशेनाध्ययनविधानादिदं संस्कारककर्म। तत्र प्रोक्षणजन्यसंस्कारः अदृष्टरूपोऽतिशयः; इह तु वेदप्राप्तिरेवेति भेदः। प्राप्तेन वेदेन साध्यं कार्यान्तरञ्च वेदस्वरूपस्य जपोऽध्यापनञ्च, वेदार्थस्य चानुष्ठानमिति बोध्यम्। यथाविहितमध्ययनं विना तत्तत्करणे फलं नेति ततः सिध्यति। **मन्त्रवत्** विषहरणादिलौकिक संध्योपासनादिवैदिककार्यार्थमन्त्रविधिवत्। **दर्शनादिति**। अज्ञाना

आपाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषनिर्णयफलवेदवाक्यविचाररूपमीमांसाश्रवणे अधीतवेदः पुरुषः स्वयमेव प्रवर्तते । तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वा अध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु च अमृतत्वरूपानन्तस्थिरफलापातप्रतीतेः तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति ॥

तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं दर्शयन्ति—"तत् यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते" (छा. 8. 1. 6.), "अन्तवदेवास्य तद्भवति" (बृह. 5. 8. 9.), "न ह्यध्रुवैः प्राप्यते" (कठ. 2. 10.), "प्लवा ह्येते अदृढा यज्ञरूपाः" (मुण्ड. 1. 2. 7.), "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्—नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" (मु. 1. 2. 12,13.), "ब्रह्मविदाप्नोति परम्" (तै. आन. 1.), "न पुनर्मृत्यवे तदेकं पश्यति", "न पश्यो मृत्युं पश्यति" (छा. 7. 26. 2.), "स स्वराड् भवति" (छा. 7.25.2.), "तमेवं विद्वानमृत इह भवति" (पु. सू. 20.), "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" (श्वे. 1.6.) इत्यादीनि ॥

---

व्याकरणादीनामपि सहाधीतत्वादिति भावः । **स्वयमेव** । स्वाध्यायोऽध्येतव्य इतिवाक्येनार्थज्ञानोद्देशेन विचाराख्येतिकर्तव्यताविशिष्टमध्ययनं विधीयत इति विचारवैधत्वं मीमांसकमतं नेष्यते इति भावः । **विधिस्वरूपे**—विधेः यत् स्वरूपं साध्यसाधनेतिकर्तव्यतारूपांशत्रयविशिष्टार्थभावनादियुक्तत्वम्, तस्मिन् । **अधिकरोति** अधिकारी भवति । तथाचैवंक्रमेण प्रवृत्तं प्रति विचारशास्त्रं व्युत्पादनायावतीर्णम् । अद्यतनास्तु एवंरूपाधिकारविरहेपि अनिषेधात् मुमुक्षुतया शास्त्रमिदमधीयत इति नैतदनुसारेणाथशब्दार्थश्चिन्त्य इति भावः ।

ननु 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती'त्यादि दृष्ट्वा अनन्तस्थिरफलं कर्म स्यादिति प्रवृत्य अल्पास्थिरफलमिति कर्ममीमांसया निर्णीतवान् पुमान् तुल्यरीत्या ब्रह्मफलेऽप्यनाश्वासः किं न स्यादित्यत्र—वेदान्तवाक्यैः स्वगृहीतरीत्या कर्मफलास्थैर्यबोधनपूर्वं ब्रह्मफलस्थैर्यबोधनात् कदाचित् इदं यथावत् स्यादिति विचिचारयिषत्येवेति वक्तुं वेदान्तवाक्यानि तादृशि उदाहरति **तथा चेति** । लोक्यत इति **लोकः**—फलम् । **कृतेन**—कर्मणा । **येन**—विज्ञानेन । **तां** तदुपायरूपाम् । **प्रोवाच** प्रब्रूयादित्यर्थः । उपसन्नस्य सत्पात्रत्वे गुरुर्न विलम्बते, प्रोक्तवानेव भवतीति ज्ञापयितुं लिडादरः । **तेन जुष्टः**—प्रेरयित्रा प्रीत्या विषयीकृतः ।

ननु च—साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वम् , स्वर्गादीनां च क्षयित्वम् , ब्रह्मोपासनस्यामृतत्वफलत्वं च ज्ञायत एव ; अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्तताम् ; किमर्था धर्मविचारापेक्षा ? ॥

एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम् , साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात् ॥ सत्यम् ; आपातप्रतीतिर्विद्यत एव । तथापि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वात् आपातप्रतीतोऽप्यर्थः संशयविपर्ययौ नातिवर्तते। अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्यः इति चेत्—तथैव धर्मविचारोऽपि कर्तव्य इति पश्यतु भवान् ॥

(लघुपूर्वपक्षः)

ननु च—ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते, तदेव पूर्ववृत्तं वक्तव्यम् । न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः ; अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः ॥

कर्माङ्गाश्रयाणि उद्गीथाद्युपासनानि अत्रैव चिन्त्यन्ते; तत् अनधिगतकर्मणो न शक्यं कर्तुमिति चेत्—अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य । अस्मिन् शास्त्रे अनाद्यविद्याकृतविविधभेददर्शननिमित्त - जन्मजरामरणादि - सांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूलमिथ्याज्ञाननिबर्हणाय आत्मैकत्वविज्ञानं प्रतिपिपादयिषितम् । अस्य हि भेदावलम्बि कर्मज्ञानं क्वोपयुज्यते ? प्रत्युत विरुद्धमेव । उद्गीथादिविचारस्तु कर्मशेषभूत

---

**ननुचे**ति । कर्मविचारं विनैव ब्रह्मविचारो रागाद्भवितुमर्हतीति शंकायां समाधानाय **तथाही**त्यादि उक्तम् ; पुनरपि प्रकारान्तरेण तदेव शंकते ; अतः **चकारः** । **ननुचे**त्यस्य प्रश्नश्चेति वाऽर्थः । एतद्भाष्येण शांकरभाष्ये, कर्मविचारं विनैव अध्ययनमात्रेण कर्मफलक्षयित्वबोधकपूर्वोक्तवाक्यबलादेव अल्पास्थिरफलकत्वनिर्णयो जात इति कृत्वा अतश्शब्देन तस्य हेतुत्ववर्णनं कृतं निरस्तं मन्तव्यम् ।

नन्वस्तु कर्मविचारः पूर्वभावी ; अथापि न सोऽपेक्षित इति न तदानन्तर्यमथशब्दार्थ इति शंकते **ननु चेति** । कर्मविचारस्य प्रतिबन्धकनिवर्तनविषयोपयोगेऽपि कारणविषयोपयोगो नास्ति, अन्यस्य त्वस्तीत्यभिमानः । शारीरकमध्ये उद्गीथाद्युपासनविचारात्, उद्गीथादेश्च कर्माङ्गतया कर्मापेक्षत्वात् कर्मविचारापेक्षा तस्यास्तीति सिद्धान्ती पृच्छति **कर्मे**ति । प्रस्तावः उद्गीथः प्रतिहार इति कर्माङ्गभूताः सामभागाः ॥ शारीरकशास्त्रप्रधानार्थो नोपासनम् ; किं तु ऐक्यज्ञानरूपविज्ञानम् । तदपेक्षितं न कर्मेति प्रतिवदति **अनभिज्ञ** इति । शारीरकशास्त्रविज्ञानस्य=ब्रह्मसूत्रप्रतिपिपादयिषितस्य ज्ञानस्य । **मिथ्याज्ञानं** भ्रान्तिज्ञानम् , मिथ्याभूतमविद्याख्यमज्ञानं वा । **उद्गीथादिविचारस्तु** तदुपासनविचारस्तु । तुशब्दो ब्रह्मोपासनविचारवैलक्षण्यपरः पूर्वशङ्कापरिहारकः । ननूपनिषत्स्वेवो-

एव ज्ञानरूपत्वाविशेषादिहैव क्रियते। स तु न साक्षात्सङ्गतः। अतो यत्प्रधानं शास्त्रम्, तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम् ॥

बाढम्; तदपेक्षितं च कर्मविज्ञानमेव; कर्मसमुच्चितात् ज्ञानादपवर्गश्रुतेः। वक्ष्यति च, "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" (उ. मी. 3.4.26.) इति। अपेक्षिते च कर्मण्यज्ञाते केन समुच्चयः, केन नेति विभागो न शक्यते ज्ञातुम्। अतस्तदेव पूर्ववृत्तम्--

नैतत् युक्तम्; सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः। अविद्यानिवृत्तिरेव हि मोक्षः। वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत्?

श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति--"अन्तवदेवास्य तद्भवति" (बृ. 5. 8. 9.), "तत् यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते" (छा. 8. 1. 6.), 'ब्रह्मविदाप्नोति परम्" (तै. आन. 1.), "ब्रह्म वेद ब्रह्मैव भवति" (मु. 3. 2. 9.), "तमेव विदित्वाऽति मृत्युमेति" (श्वे. 3. 8.) इत्याद्याः ॥

यदपि चेदमुक्तम्--यज्ञादिकर्मापेक्षा विद्येति--तत् वस्तुविरोधात् श्रुत्यक्षरपर्यालोचनया च अन्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते; न फलोत्पत्तौ; "विविदिषन्ति" (बृ. 6. 4. 22.) इति श्रवणात्। विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाऽऽह--"शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्" (बृह. 6. 4. 23) इति ॥

---

द्गीथोपासनविधानात् तदपि मुख्यमित्यत्राह स त्विति। तुः प्रकृतशंकानिवर्तकः। उपनिषत्स्वपि न साक्षात्संबन्ध इति भावः।

६८ ननु मोक्षार्थविद्यायाः कर्मसमुच्चयेनैवोपायत्वात् कर्मापेक्षा ध्रुवेति पुनः पृच्छति बाढमिति। 'कर्मसमुच्चितात् ज्ञानादपवर्गश्रुतेः' इति भास्करभाष्ये पङ्क्तिः। तन्मते कर्म विना विद्यायाः न फलजननसामर्थ्यम्; यादवप्रकाशमते विद्याकर्मणोस्तुल्यबलत्वम्, इष्टप्राप्ति--अनिष्टनिवृत्तिरूपमोक्षांशयोः विद्याकर्मसाध्यत्वस्वीकारात्; सिद्धान्ते कर्माभावे विद्याया एवानिष्पत्तिरिति भेदः। एवं पक्षत्रयेऽपि कर्मापेक्षेति भावः। ननु कारणात्मकाज्ञाननिवृत्तिः तत्त्वज्ञानादस्तु। भेददर्शनादिरूपकार्यात्मकाज्ञाननिवृत्तिः कर्मणा स्यादित्यत्र असंभाव्यमिदमित्याह वर्णेति। यदपिचेत्यादि। अपि विरोधे। इत्येवमस्माकं विरुद्धमिव यत् कर्मसमुच्चितत्वमुक्तम्, तदित्यर्थः। वस्तुविरोधात्--भेदवासनावर्धकत्वात्। श्रुत्यक्षरम्--विविदिषन्तीति विदेरुपरि सन्प्रत्ययः। न फलोत्पत्तौ--मोक्षोत्पत्तौ वेदनोत्पत्तौ च। शमादीनामेव--कर्मोपरमादीनामेव। नन्वध्ययनसमनन्तरमेव वाक्यार्थज्ञानसंभवात् विचारशास्त्रमेव व्यर्थम्। अत एव विविदिषाऽपि नापेक्षिता; वाक्यार्थज्ञानस्य पुरुषतन्त्रत्वाभावात्

तदेवं जन्मान्तरशतानुष्ठित—अनभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्याम्, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा.6.2.1.), "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. आन. 1.), "निष्कलं निष्क्रियं शान्तम्" (श्वे. 6. 19.), "अयमात्मा ब्रह्म" (बृह. 6. 4. 5.), "तत्त्वमसि" (छा. 6. 8. 7.) इत्यादिवाक्यजन्यज्ञानादविद्या निवर्तते। वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि। श्रवणं नाम—वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यात् न्याययुक्तार्थग्रहणम्। एवमाचार्योपदिष्टस्यार्थस्य स्वात्मनि, एवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम्। एतद्विरोध्यनादिभेदवासनानिरसनाय अस्यैवार्थस्यानवरतभावना निदिध्यासनम्। श्रवणादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीति, एवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं वक्तव्यम्।

तच्च—नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्, इहामुत्रफलभोगविरागः, मुमुक्षुत्वं चेत्येतत् साधनचतुष्टयम्; अनेन विना जिज्ञासानुपपत्तेः। अर्थस्वभावादेव इदमेव पूर्ववृत्तमिति ज्ञायते॥

एतदुक्तं भवति—ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम्। बन्धश्चापारमार्थिकः। स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते। निवर्तकश्च

---

वस्तुतन्त्रत्वात् स्वत एवोत्पत्तेः। अत एव शमादिरपि व्यर्थ इत्यत्राह **वाक्यार्थेति**। दृढनिश्चयात्मकज्ञानमेतावत्सापेक्षमिति भावः। **न्याययुक्तेति**। पूर्वमापाततप्रतीतिः; इदानीमेव भेदश्रुत्याद्युपमर्दकन्यायग्रहणात् निश्चय इति भावः। **इहामुत्रफलेति**; ऐहिकामुष्मिकफलेत्यर्थः। ननु रज्जुज्ञानात् रज्जुसर्पनिवृत्तावपि तन्मूलभयादिजन्यज्वरादेरनिवृत्तिवत् तत्त्वज्ञानात् अविद्यानिवृत्तावपि तदधीनभेददर्शनबन्धाद्यनिवृत्तिरेवेति कर्मण एव फलोत्पत्तावुपयोगोऽस्तु; ज्ञाने गुरुशिष्यादिभेदास्पदस्य श्रवणस्येव, अनन्तविकल्पास्पदस्य कर्मणोऽपि हेतुत्वसंभवादित्यत्रोपपादयति **एतदुक्तमिति**। रज्जुसर्पदृष्टान्तो विषमः; तत्र ज्वरादेः पारमार्थिकत्वात्। इह तु अविद्यावत् सर्वं बन्धादिकमपि मिथ्यैवेति तत्त्वज्ञानमेकमेवालमिति भावः। **आच्छादिकेति**। आच्छादकाविद्यामूलमिति पुंवद्भावपाठ एव स्थितः स्यात्; प्रधानव्याख्यानेषु एतद्विचाराभावात्। टीकायामाच्छादिकेत्यनुवादः मूललेखानुसारिलेखकप्रमादात्। यथा आरम्भणाधिकरणभावप्रकाशिकायां **कल्पिकाविद्येति** पदे विमृश्यते इति केचित्। ब्रह्मस्वरूपस्य आच्छादिका=आच्छादनम्। धात्वर्थे ण्वुल्। तदर्थाविद्या; तत्रैव ण्वुलि स्वरूपस्य आच्छादिका यया, तादृगविद्येति वा इत्यन्ये। अस्तु वा ब्रह्मस्वरूपाच्छादिका अविद्या मूलमपारमार्थिकमिति वाक्यच्छेदः। अविद्याख्यं मूलमपारमार्थिकम्; **भेददर्शनमेव बन्धमूलम्**; तदप्यपारमार्थिकमेव; तथापि तस्य पारमार्थिकत्वेपि तत्त्वज्ञाननिवर्त्यत्वं सर्वेष्टमिति विशेषः; बन्धश्चापारमार्थिकत्वादविद्यावद् बाध्य एवेति भाष्यार्थः।

ज्ञानं तत्त्वमस्यादिवाक्यजन्यम् । तस्यैतस्य वाक्यजन्यस्य ज्ञानस्य स्वरूपोत्पत्तौ कार्ये वा कर्मणो नोपयोगः। विविदिषायामेव तु कर्मणामुपयोगः। स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्वविवृद्ध्या भवतीतीममुपयोगमभिप्रेत्य, "ब्राह्मणा विविदिषन्ति" (बृ.6 4·22.) इत्युक्तमिति॥

अतः कर्मज्ञानस्यानुपयोगात् उक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम् ॥

(लघुसिद्धान्तः)

अत्रोच्यते—यदुक्तम्, 'अविद्यानिवृत्तिरेव मोक्षः; सा च ब्रह्मविज्ञानादेव भवति' इति—तदभ्युपगम्यते । अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम्—किं वाक्याद्वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मकं ज्ञानमिति । न तावत् वाक्यजन्यं ज्ञानम्; तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः; तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च ।

---

परे तु आच्छादिका अविद्या मूलं यस्येति बहुपदबहुव्रीहिः ; तत्र समानाधिकरणस्य अविद्यापदस्य मध्यमस्योत्तरपदत्वाभावात् पूर्वपदे पुंवद्भावो नेत्याहुः। विविदिषायामपि परम्परयैव कारणस्य कर्मणः वेदनं प्रति कारणत्वे का प्रसक्तिरिति वक्तुमाह **स च पापेति**। अथवा वेदनकारणत्वं यया द्वारा, तयैव विविदिषाकारणत्वमिति न कल्पनागौरवमिति दर्शयितुमिदम् ॥

**अनभिज्ञो भवानिति** उपायभूतज्ञानानभिज्ञत्वरूपदूषणस्य पूर्वपक्षिकृतत्वात्, कर्मणामुपायापेक्षितत्वस्यैव वक्तव्यत्वाच्चोपायस्वरूपशोधनेन लघुपूर्वपक्षं निरसितुमारभते **अत्रोच्यत** इति । इष्टप्राप्त्यनिष्टनिवृत्तिरूपं विभिन्नं फलद्वयं यथासंख्यं ज्ञानकर्मरूपोपायद्वयसाध्यमिति यादवप्रकाशमतं नास्मदिष्टमिति दर्शयितुमाह **यदुक्तमिति**। अविद्यानिवृत्तिः, ब्रह्मविज्ञानमिति शब्दैक्यमात्रम ; अर्थस्तु मतभेदेन भिन्नः। भावरूपाज्ञानमविद्येति अद्वैतिनः; पुण्यपापरूपकर्मेति वयम् । ब्रह्म तेषां निर्गुणम्; अस्माकं सगुणम्। विज्ञानभेद इहैव वक्ष्यते । **विधित्सितम्** । विधानमज्ञातज्ञापनम ; ज्ञापयितुमिष्टमित्यर्थः । **किंरूपमित्यस्य** विवरणं **किं वाक्येति** । प्रथमं तन्मतम्; द्वितीयमस्मदीयम् । ननु स्वपक्षे परपक्षे च अविद्या तन्निवृत्ति ब्रह्म-तद्विज्ञानरूपपदार्थानां भेदे वर्तमाने एकरूपशब्दप्रयोगेणोभयैक्यान्वारोहः किमर्थं भाष्यकृता क्रियते ; स्पष्टं सर्वानभ्युपगमस्यैव प्रदर्श्यत्वादिति चेत्—परपक्षखण्डनं महासिद्धान्त एव प्रपञ्चयिष्यते । इह तु तन्मताविद्यादिपदार्थाभ्युपगमेऽपि मोक्षो वाक्याद्वाक्यार्थज्ञानान्न सुवचः, किन्तूपासनाधीनसाक्षात्कारादेवेति समन्वयाधिकरणे ध्याननियोगवाद्यद्वैतिवक्ष्यमाणरीत्याऽपि शांकरपक्षनिरसनं सूचयितुमेवमुक्तम्। इयान् विशेषः—उपासनजन्यं मानसं दर्शनं मुक्तिसाधनमिति तन्मतम्; उपासनात्मकं ज्ञानमेवेत्यास्माकमिति। **विधानमन्तरेणेति** । तत्त्वमसि, अयमात्मा ब्रह्मेति वाक्यश्रवणादेव जायमानतया, ब्रह्म वेद, तं विद्यात्, उपासीतेत्यादिकं व्यर्थमित्यर्थः ॥ ध्यानाभ्यासकृताभेदवासनया भेदवासनानिरासे जाते पश्चाद्वाक्यात् वाक्यार्थज्ञानं जायते; तदेवाविद्यानिवर्तकम्; तथाज्ञानवन्तश्च शुकसनकादयः । तेषामपि भेदज्ञानं दृश्यत इति

न च वाच्यम्— 'भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनयति; जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय, चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत्; अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवति'—इति—सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः; सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात्।

सत्यपि वाक्यार्थज्ञाने अनादिवासनया मात्रया भेदज्ञानमनुवर्तते इति भवता न शक्यते वक्तुम्; भेदज्ञानसामग्र्या अपि वासनायाः मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात्। ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ, निवर्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः। 'वासनाकार्यं भेदज्ञानं छिन्नमूलम्, अथ चानुवर्तते' इति बालिशभाषितम्। द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वात् मिथ्याज्ञानानु(नि)वृत्तिरविरुद्धा। प्रबलप्रमाणबाधितत्वेन भयादि कार्यं तु निवर्तते।

अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति; भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात् तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः।
अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्।

तथा च श्रुतयः, "विज्ञाय प्रज्ञां कुर्वीत" (बृ. 6.4.21.), "अनुविद्य विजानाति" (छा. 8. 12. 6.), "ओमित्येवात्मानं ध्यायथ" (मु. 2. 2. 6.), "निचाय्य तं मृत्युमुखात् प्रमुच्यते" (कठ. 1. 3. 15 ), "आत्मानमेव लोकमुपासीत" (बृ. 3. 4. 15.), "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ. . 6. 5. 6.), "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" (छा. 8. 7. 1.) इत्येवमाद्याः॥ अत्र, "निदिध्यासितव्यः" इत्यादिना ऐकार्थ्यात् "अनुविद्य विजानाति", "विज्ञाय प्रज्ञां कुर्वीत" इत्येवमादिभिः, वाक्यार्थज्ञानं (नस्य) ध्यानोपकारकत्वात् "अनुविद्य" "विज्ञाय" इत्यनूद्य, "प्रज्ञाङ्कुर्वीत" "विजानाति" इति ध्यानं विधीयते। "श्रोतव्यः" इति चानुवादः—स्वाध्यायस्यार्थपरत्वेनाधी-

---

चेत्—अस्तु; अथाप्यविद्या निवृत्तैव—इति वादं निरस्यति **न चेति**। वाच्यमित्यस्य भेदेत्यादि भवतीत्यन्तं विशेष्यम्। **छिन्नमूलत्वेन**। **मूल**मविद्या। दर्शनादिति। अन्यथा वाक्यार्थध्यानाभ्यास एव कथम्। तत्त्वज्ञानस्य भेदवासनानिराससापेक्षतया अविद्यानिवर्तकत्वे च अविद्यादेर्मिथ्यात्वं न स्यादिति च ध्येयम्।

एवं प्रथमपक्षं निरस्य द्वितीयमङ्गीकारयति **अत** इति। वाक्यार्थज्ञानादन्यदित्युक्तौ दर्शनं ध्यानजन्यमिति कश्चिदद्वैती मन्येतेति **ध्याने**त्यादि विशेषणम्।

तवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तते इति श्रवणस्य प्राप्तत्वात् । श्रवणप्रतिष्ठार्थत्वान्मननस्य, "मन्तव्यः" इति चानुवादः । तस्मात् ध्यानमेव विधीयते ।

वक्ष्यति च, (शा 4. 1. 1.) "आवृत्तिरसकृदुपदेशात्" इति । तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते, विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात्—(छा. 3. 18.) "मनो ब्रह्मेत्युपासीत" इत्यत्र, "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद"; (बृ 3. 4. 7) "न स वेद। अकृत्स्नो ह्येषः...आत्मेत्येवोपासीत"; (छा 4. 1. 4.) "यस्तद्वेद यत् स वेद । स मयैतदुक्तः" इत्यत्र, (छा 4. 2. 2.) "अनु मे एतां भगवो देवतां शाधि, यां देवतामुपास्से" इति ॥

ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम्, (छा 7. 26. 2.) "ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात् ।

सा च स्मृतिर्दर्शनसमानाकारा, (मु 2. 2.9.) "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" इत्यनेन (इत्यादिना) ऐकार्थ्यात् । एवं

---

ननु श्रोतव्य इति तव्यप्रत्ययात् अनुविद्य इत्यादावपि विशिष्टविधिरिति स्यादित्यत्र **श्रोतव्य इति चेति** प्रत्युच्य, अनुविद्येति मननपरतया विशिष्टविधिरस्तु इत्यत्राह **श्रवणेति** ।

इदं ध्यानम्, सूत्राभिप्रेतमुपासनञ्चैकमिति ज्ञापनाय सूत्रमुदाहरति **वक्ष्यति** चेति । तदर्थं सूत्रार्थमाह **तदिदमिति** । **व्यतिकरेण** एकस्थानेऽन्यस्थितिरूपमिथस्संबन्धेन । **न स वेदेति** । अत्र, "स योऽत एकैकमुपास्ते, न स वेद । अकृत्स्नो ह्येषोऽत एकैकेन भवति । आत्मेत्येवोपासीत" इति पूर्णानुपूर्वी । अत्रोभयोरुपक्रमोपसंहारौ । श्रुत्यर्थस्तु—अन्तरात्मानं विहाय चेतनाचेतनमात्रमुपासीनः अकृत्स्नविदिति । **यस्तदिति** । अत्र, "एनं सर्वं तदभिसमेति, यत् किञ्च प्रजाः साधु कुर्वन्ति, यस्तद्वेद, यत् स वेद । स मयैतदुक्तः" इति श्रुतिवाक्यम् । तदर्थः—यत् स वेद—रैक्वो यत् उपास्ते, तत् योऽन्यः (ततो गृहीत्वा) वेद, तं रैक्वविदितवेदिनं सर्वप्रजाकर्म अभिसमेति=सर्वप्रजाकर्मज्ञाने तत्कर्मज्ञानान्तर्भूते इति । स मयैतदुक्तः=तादृशो रैक्वो मया एतत्—तद्वेद्यमधिकृत्यैवमुक्त इति । शेषमस्मत्परिष्कारे । **अनु मे** इति । देवतां मे अनुशाधि—उपदिशेत्यर्थः ॥ ध्यै चिन्तायाम् । ध्यानं चिन्तनम् । तत्राविच्छिन्नत्वं विशेषणमाह **ध्यानञ्चेति** । **स्मृतिलम्भे**—ध्रुवस्मृतिप्राप्तौ सत्याम् । **ग्रन्थीनां** रागद्वेषपापादीनाम् । ननु पूर्ववाक्ये 'द्रष्टव्य' इति किञ्चिदस्ति ; तत् किमित्यत्राह **सा चेति** । **परावरे** उत्कृष्टनिकृष्टसर्वात्मनि ; परं सर्वमवरं यस्मात् तस्मिन् परमे इति वा । **दर्शनसमानाकारत्वं** प्रत्यक्षवत् विशदत्वं दृष्टे इति पदविवक्षितम् । पूर्वोक्तस्मृतेर्मुख्यदर्शनत्वायोगात्, नीरूपस्यात्मनो दर्शनायोगात्, दिव्यमङ्गलविग्रहस्याप्यसंनिहितस्य तदयोगाच्च मुख्यार्थे त्याज्ये, समुचितार्थे तात्पर्यमिति । **इत्यनेने**त्यत्र **इत्यादिनेति** पाठान्तरम् । तदा **आदिपदेन** दृशिविषयेऽपि व्यतिकरेण·

च सति, (बृ 6. 5. 6.) "आत्मा वा अरे द्रष्टव्यः" इत्यनेन निदिध्यासनस्य दर्शन-समानाकारता विधीयते। भवति च स्मृतेर्भावनाप्रकर्षाद् दर्शनरूपता॥

वाक्यकारेणैतत् सर्वं प्रपञ्चितम्—(वाक्यग्रन्थः)—"वेदनमुपासनं स्यात् तद्विषये श्रवणात्" इति सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम्; "सकृत् प्रत्ययं कुर्यात् शब्दार्थस्य कृतत्वात् प्रयाजादिवत्" इति पूर्वपक्षं कृत्वा, "सिद्धं तूपासनशब्दात्" इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम्; "उपासनं स्याद् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च" इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम्।

सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता। दर्शनरूपता च प्रत्यक्षतापत्तिः। एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं (ध्रुवानुस्मृतिं?) विशिनष्टि, (मु 3. 2. 3.) "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति। अनेन केवलश्रवणमनननिदिध्यासनानामात्म-

निर्देशरूपा श्रुतिर्गृह्यते। यथा बृहदारण्यके (3-4-15), "अथ यो ह वा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति, स एनमविदितो न भुनक्ति....आत्मानमेव लोकमुपासीत" इति। दृशिविद्युपासीनामत्र मेलनम्। **विधीयते** ज्ञाप्यते। **द्रष्टव्य** इत्यस्य दर्शनतुल्यज्ञानविषयीकर्तव्य इत्यर्थः। कथं कृते दृष्टत्वं स्यादित्याकांक्षायाम्, यथा द्रष्टव्यः, तथा श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्युच्यते। अतो दर्शन-समानध्यानस्य निदिध्यासितव्यपदेन विधाने द्रष्टव्यपदं तात्पर्यग्राहकम्, ध्यानदर्शनयोरैक्यादिति भावः।

वाक्यार्थज्ञानरूपवेदनं वा तदधीनध्यानानन्तरमानसदर्शनमेव वा नोपायः; किं तु ध्यान-मेवेत्यत्र प्राचीनसंप्रदायमपि प्रमाणयति **वाक्यकारेणे**ति। वाक्यनामकस्य छान्दोग्यव्याख्यानस्य कर्ता ब्रह्मनन्दी। **श्रवणादिति**=श्रवणादित्यन्तवाक्येन। **सिद्धं तु**=उपासनमितिपूर्वज्ञातमेव ग्राह्यम्, उपासिश्रवणादित्यर्थः। वाक्ये वेदनं प्रत्यक्षदर्शनं स्यादित्यनुक्तत्वात् स्मृतिरित्युक्तत्वात् ध्यानमेवोपायः। दर्शनबोधकवाक्यसामञ्जस्यं तु प्रागेवादर्शीत्याह **सेय**मिति। दृशेरनुभवसामान्येऽन्यत्र प्रयोगेऽपि इह स्मृतेरपरोक्षवत् वैशद्यं विवक्षितमित्याह **दर्शनरूपते**ति। **आपत्तिः** आरोप इव। विशेषान्तरमाह **एव**मिति। **ध्रुवानुस्मृति**मिति **टीकापाठ** इव। फलान्तरवैमुख्यमूलकातिप्रीतिरूपत्व-विशिष्टामवगमयतीति **विशिनष्टी**त्यस्यार्थः। **प्रवचनेन** मननेन। **मेधया** ध्यानेन। **श्रुतेन** श्रवणेन। **यं** जीवम्। **वृणुते** अनुगृह्णाति बुद्धियोगादिदानेन। अत्र वृतेन लभ्य इत्युक्तम्। स्पष्टञ्च गीतायाम्, (8-14) "अनन्यचेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः पार्थ! नित्ययुक्तस्य योगिनः" इति फलान्तरवैमुख्येनातिप्रीतिरूपतापन्नयोगशाली लब्धा दर्शित इति स एव व्रियमाण इति ज्ञायते। तत्र भाष्ये वृण इत्यस्य मत्प्राप्त्यनुगुणोपासनविवेकं तद्विरोधिनिरसनम् अत्यर्थप्रीतिमत्त्वादिकञ्चाहमेव ददामीत्यर्थोऽभाषि। **विवृणुते** अनुभवविषयीकरोति। **केवले**ति

प्राप्त्यनुपायत्वमुक्त्वा, यमेवैष [पर] आत्मा वृणुते तेनैव लभ्यः इत्युक्तम्। प्रियतम एव हि वरणीयो भवति। यस्यायं निरतिशयप्रियः, स एवास्य प्रियतमो भवति। यथाऽयं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम्, "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥" इति (गी 10. 10.), "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।" (गी.7. 17.) इति च ॥ अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य, स एव परेणाऽऽत्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति।

एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते ; उपासनपर्यायत्वाद्भक्तिशब्दस्य। अत एव श्रुतिस्मृतिभिरेवमभिधीयते— (श्वे 3. 8.) "तमेव विदित्वाऽति मृत्युमेति", (पु 17.) तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते", (गी 11.53,54.) "नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन!। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप!", (गी. 8. 22.) "पुरुषः स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया" इति ॥

एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति, (शा. 3. 4 26.) "यज्ञादिश्रुतेरश्ववत्" इति अभिधास्यते। यद्यपि विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते, तथाऽपि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्य अभ्यासाधेयातिशयस्य आप्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात् तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि। वक्ष्यति च-(शा 4. 1. 12.) "आ प्रयाणात् तत्रापि हि दृष्टम्", (शा 4. 1. 16.) "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्", (शा 3. 4. 33.) "सहकारित्वेन च" इत्यादिषु।

वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह (वाक्यग्रन्थः)—"तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्च" इति। विवेकादीनां स्वरूपं चाऽऽह—"जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेकः" इति।

---

प्रीतिरूपतारहितेत्यर्थः। **सततयुक्तानां** सततयोगकांक्षिणाम्। **प्रीतिपूर्वकं** ददामीत्यन्वयः। **स्मर्यमाणेति** ; ध्यानविषयस्येत्यर्थः। ननु किमिति सर्वैकीकारः, ध्यानातिरिक्तायाः भक्तेरपि स्मृतावुपायत्वकथनात् तद्वद् भेदसंभवादित्यत्राह **एवंरूपेति**। 'भज सेवायाम्', 'सेवा भक्तिरुपास्तिः स्यात्', 'प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इत्यादि द्रष्टव्यम्।

एवं तावत् विधित्सितं ज्ञानमिदमिति विवेचितम्। तस्य कर्मापेक्षत्वं प्रकृते वक्तव्यं वदति **एवंरूपाया** इति। **विवेकादिभ्य एव** ; न तु शमदमादिमात्रेणेत्यर्थः। **संभवात्** युक्तत्वात्। **निर्वचनात्** विशेषवचनात्। अन्नं **जातिदुष्टं** लशुनादि ; **आश्रयदुष्टं** शूद्रपतिताद्यन्नम् ; **निमित्तदुष्टं**

अत्र निर्वचनम्, ( छा 7. 26. ) "आहारशुद्धौ सत्त्वशुद्धिः; सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति। "विमोकः कामानभिष्वङ्गः" इति। (छा 3. 14. 1.) "शान्त उपासीत" इति निर्वचनम्। "आरम्ब(म्भ)णसंशीलनं पुनःपुनरभ्यासः" इति। निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण, (गी. 8. 6.) "सदा तद्भावभावितः" इति। "पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया" इति। निर्वचनम्, (मु 3. 1. 4.) "क्रियावानेष ब्रह्मविदां वरिष्ठः", (बृ. 6. 4. 22.) "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति च। "सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि" इति। निर्वचनम्, (मु 3. 1. 5.) "सत्येन लभ्यः", (प्र 1. 15, 16.), "तेषामेवैष...विरजो ब्रह्मलोकः" इत्यादि। "देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसः अवसादः" इति। तद्विपर्ययोऽनवसादः। निर्वचनम्, (मु 3. 2. 4.) "नायमात्मा बलहीनेन लभ्यः" इति। "तद्विपर्ययजा तुष्टिरुद्धर्षः" इति। तद्विपर्ययोऽनुद्धर्षः। अति-

---

केशकीटाद्यवपन्नम्। अत्र विवेकादिपदानामर्थदर्शिवाक्यजातमपि वाक्यकारीयम्। निर्वचनोदाहरणं सर्वं द्रमिडभाष्यकारदर्शितम्। आरम्भणेतिपाठेऽपि आलम्भनं स्पृश्यमानमित्यर्थात् आलम्बनमेवोक्तं भवति। यथा वाचारम्भणमित्यत्र वागालम्बनमिति परमते।¦ आरम्बणं त्वालम्बनमेव। लरयोरभेदः, ततो णत्वमिति चाविशिष्टम्। स्मार्तमिति। श्रौतं तु, अथमुनिरिति। **अनभिध्या** प्रातिकूल्यचिन्ताविरहः। सत्येन लभ्यस्तपसा ह्येष आत्मेति मुण्डकम्। सत्योदाहरणमिदम्। तेषामित्यादि प्रश्नवाक्यम् आर्जवोदाहरणम्। **तेषामेवैष** इति बुभुक्षुविषयम्। तदुपरि, 'तेषामसौ विरजोब्रह्मलोकः, न येषु जिह्ममनृतं न माया च' इति वाक्यं मुमुक्षुविषयमिह ग्राह्यम्। **इत्यादी**त्यादिना दयादानादिनिर्वचनग्रहणम्। **शोके**ति शोकनिमित्तेत्यर्थकम्। **देशे**त्यादेरर्थ एवम्—देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च मनसोऽभास्वरत्वमवसादः। तज्जं दैन्यमिति वैगुण्यादिजं दैन्यमिति तद्विवरणमेव। अथवा **तज्जं**-दैन्यजम्; देशकालवैगुण्यादिजं दैन्यमिव, दैन्यजञ्च दैन्यम् मनसोऽभास्वरत्वमवसाद इति। परदैन्यदर्शनजमपि हि दैन्यमस्ति। **आदि**पदेन भयवस्तुग्रहणमिति। यद्वा **वैगुण्यात् अनुस्मृतेश्चे**तिपञ्चमी न ज्ञापकहेतौ, किं तु कारकहेताविति विवरणमात्रतया तज्जमिति प्रयोगः। अथवाऽस्तु—तज्जमित्यस्य शोकजमित्यर्थः; शोकपदस्य पूर्वं प्रयुक्तत्वात्। देशकालवैगुण्याद्यधीनं यत् दैन्यं मनसोऽभास्वरत्वरूपम्, तत् आत्मगुणरूपशोकद्वारा जायते इति तज्जपदेन बोध्यते। शोको धर्मभूतज्ञानावस्था; दैन्यं तु मानसं वक्ष्यमाणबलप्रतिकोटिः। **वस्त्वादी**त्यादिपदेन गुणक्रियापरिग्रहः। अनुस्मरणमतीतविषयकम्। **अनुस्मृतेश्चे**ति चकारेण आगामिभयवस्त्वादिनिरीक्षणसमुच्चयः। तज्जमिति तत्पदप्रयोगो भयस्यापि संग्रहायेति। **तद्विपर्ययजे**ति। देशकालसाद्गुण्यात् प्रियवस्त्वाद्यनुस्मृतेश्च जायमानेत्यर्थः।

सन्तोषश्च विरोधीत्यर्थः । निर्वचनमपि, (बृ 6. 4. 23.) "शान्तो दान्तः", इति । एवंनियमयुक्तस्य आश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति ॥

तथा च श्रुत्यन्तरम्, (ई. 11.) "विद्यां चाविद्यां च यस्तद् वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥" इति । अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म । अविद्यया–कर्मणा मृत्युं–ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म तीर्त्वा–अपोह्य विद्यया–ज्ञानेन अमृतं–ब्रह्म अश्नुते–प्राप्नोतीत्यर्थः । मृत्युतरणोपायतया प्रतीता अविद्या–विद्येतरत्–विहितं कर्मैव । यथोक्तम्, (वि पु, 6. 2.) "इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥" इति ॥

ज्ञानविरोधि च कर्म पुण्यपापरूपम् । ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतया उभयोरपि पापशब्दाभिधेयत्वम् । अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्व-

---

उपासनस्य कर्मांगकत्वे वाक्यग्रन्थः प्रमाणीकृतः; अङ्गत्वप्रकारबोधिके श्रुतिस्मृती अपि प्रमाणयितुमाह **तथाचेति**। एवमर्थशोधनेन शाङ्करोक्तः कर्मानपेक्षत्वपक्ष इव भास्करयादवप्रकाशपक्षावपि खण्डितौ भवतः। **अविद्यया** कर्मणा बाधक कर्मज्ञानरूपमृत्युनिवृत्तौ **विद्यया** देवतोपासनेन देवतासायुज्यप्राप्तिरिति शांकरोपनिषद्भाष्ये वर्णित एतन्मन्त्रार्थः स्वरसः। परंतु स तन्मते मुमुक्षुप्रकरणानुगुणो न भवतीति विद्वत्प्रकरणानुगुण्याय **ब्रह्मसिद्धौ** अर्थान्तरं वर्णितम्— **विद्यां** तत्त्वज्ञानम्, **अविद्यां** मूलाज्ञानञ्च यो वेद, सः **अविद्यया**—अविद्यापरिणामभूतवृत्तिज्ञानेन मृत्युमविद्यां निवर्त्य **विद्यया**ऽमृतं ज्ञानरूपं ब्रह्म प्राप्नोतीति। अनूदितोऽयमर्थो **भामत्यादौ** (1-1-4)। अत्र विद्यापदद्वयं विभिन्नार्थकम्, **अविद्यापदद्वयञ्चे**त्यादिक्लेशः स्फुट एव। एवं नानार्थचिन्तकैः पदार्थैकरूप्यकरणायैवमर्थो वाच्यो भवेत्—**अविद्यया**—भावरूपाज्ञानेन **मृत्युं** संसारं **तीर्त्वा** प्राप्य स्थितः **विद्यया** वृत्तिज्ञानेन मुक्तो भवतीति। परन्त्विदमुपबृंहणविरुद्धम्—इत्यादिकं मनसिकृत्य विष्णुपुराणमुदाहरिष्यन् समुचितमेतन्मन्त्रार्थमाह **अत्रेति**। **प्राचीनं** पूर्वकालकृतम्। उत्तराघाश्लेषकरं स्यात्, न मया सुबहुयज्ञाद्यपनोद्यमनेकं पापं कृतमिति शङ्कावारणायेदम्; कृत्याकरणनिवृत्तिरेव वा तत्काले दुष्कर्मकरणप्रसक्तिवारणं वा मृत्युतरणमिति मतिनिरासाय च। **मृत्युशब्दः** मृतत्वहेतुपरः प्रकृते अमृतत्वहेतुभूतज्ञानप्रतिबन्धकपरः। **सः** केशिध्वजः। **ज्ञानव्यपाश्रयः** श्रवणं प्राप्तः। **ब्रह्मविद्याम्** उपासनम् **अधिष्ठाय** उद्दिश्य यज्ञान् **इयाज** चकार। किमर्थम्—प्रतिबन्धकपापापनोदनाय। **कर्मेति** सामान्यनिर्देशाभिप्रायं स्वयमेव स्फुटयति **ज्ञानविरोधि चेति**। ननु पुण्यपापे विधूयेति प्रमाणबलात् विद्यायाः पुण्यनाशकत्वं युक्तम्; न तु कर्मणः। धर्मस्य, पापमपनुदतीति पापनाशकत्वमेव च श्रूयते इत्यत्र तच्छ्रुतिनिर्वाहायाह **ब्रह्मेति**। स्वफलसाधनार्थस्य कर्मणः ज्ञानविरोधित्वमेव कथमित्यत्राह **अस्य चेति**। पुण्यस्य पापस्य च कामक्रोधहेतोः ज्योतिष्टोमाभिचारसुरापानादेः रजस्तमोवर्धकत्वं संप्रतिपन्नम्। अतस्तद्वृद्धौ सत्त्वह्रासात् तदनभिभूतत्वरूपशुद्ध-

विरोधिरजस्तमोविवृद्धिद्वारेण । पापस्य च ज्ञानोदयविरोधित्वम् , (कौ 2 3. 65.) "एष एवासाधु कर्म कारयति तम् , यमधो निनीषति" इति श्रुत्याऽवगम्यते । रजस्तमसोर्यथार्थज्ञानावरणत्वं सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम् , (गी 14. 17.) "सत्त्वात् सञ्जायते ज्ञानम्" इत्यादिना । अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम् । तन्निरसनं च अनभिसंहितफलेनानुष्ठितेन धर्मेण । तथा च श्रुतिः, (तै. नारा. (63) 144.) " धर्मेण पापमपनुदति "–इति ।

तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षम् । अतोऽपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति, सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या ॥

अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते ; फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयात् ऋते कर्मस्वरूप-तत्फल-तत्स्थिरत्वास्थिरत्वात्मनित्य-

त्वाश्रयसत्त्वाभावात् ज्ञानानुत्पत्तिः । अतः पापतुल्यत्वं पुण्यस्येति भावः । पापस्यैव ज्ञानविरोधित्वे श्रुतिरूपं गमकमाह **पापस्य चे**ति । एतच्छ्रुत्यर्थः परायत्ताधिकरण भाष्ये स्पष्टः । अन्तरायबाहुल्यात् मोक्षोपायनिष्पत्तौ संदिहानं प्रति कथितम् , अतिमात्रव्यवसाये मुमुक्षोः सति, वत्सलो भगवान् उन्निनीषया स्वयमेव भक्तं साधुकर्मणि प्रेरयतीति । उन्निनीषा—ऊर्ध्वलोकसंयोगानुकूलव्यापारानुकूलव्यापारकरणेच्छा । प्रथमव्यापारो भक्तगतः भक्तियोगादिरूपः । एवमानुकूल्ये व्यवसितपुरुषविषये तदनुग्रहमुक्त्वा प्रातिकूल्ये व्यवसितपुरुषविषये तन्निग्रहमाह—**एष एवासाध्वि**ति । अधोनिनीषा चाधोगतिप्रापणेच्छा । अधोगतिश्च, 'अधो गच्छन्ति तामसाः' इत्युक्ततामसानाम् । एवमधोगतिलम्भनाय असाधुकर्मप्रेरकत्वं बोधयता वाक्येन पापस्याज्ञानहेतुतमोगतिहेतुत्वं ज्ञाप्यत इति सिद्धं ज्ञानविरोधित्वमिति भावः । अत्र श्रुतौ तमसो ज्ञानविरोधित्वस्यास्पष्टत्वात् तत्र, सत्त्वस्य ज्ञानहेतुत्वे च स्मृतिमुपष्टम्भकतया दर्शयति **रजस्तमसोरि**ति ।

कर्मज्ञानस्यापेक्षितत्वे ब्रह्म विचार्य पश्चादेव तद्विचारः क्रियतामित्यत्राह **केवले**ति । आवश्यकस्य कर्मविचारस्य पूर्वभावित्वे इदं गमकमिति भावः । एवं वक्ष्यमाणमपि बोध्यम् । कर्मविचारवत् अस्मदुक्तसाधनचतुष्टयमपि सह गृह्यतामित्याशङ्कायाम्—साधनचतुष्टये यावत् ग्रहीतुं शक्यम् तावत् कर्मविचारानन्तर्यकथनेनैव सिद्धम् । अतस्तस्यार्थसिद्धत्वात् अनेककथनापेक्षया सर्वकोटीकार्यैकार्थानन्तर्यस्य युक्तत्वात् उपजीव्यत्वाच्च कर्मविचार एव ग्राह्य इत्याह **अपिचे**ति । विवेकादयश्चेति चकारेण कर्माल्पास्थिरफलत्वज्ञानसमुच्चयः । तस्यैव एषामपि कर्ममीमांसाधीनत्वमविशिष्टमिति ज्ञापनार्थमेतत् । **फलकरणेतिकर्तव्यते**त्यादिना प्रधानकर्म—तदङ्ग-तत्प्रयोज्यप्रयोजकभाव—तदनुष्ठानक्रम—तदधिकारितदङ्गातिदेशादिसर्वज्ञानावश्यकत्वबोधनात् पूर्णपूर्वमीमांसासापेक्षत्वं ज्ञापितम् । तान्येव कर्माणि भक्तिरूपफलाय क्रियमाणानि नास्थिरफलानि भवन्तीति ज्ञापयितुं **तत्स्थिरत्वे**त्युक्तम् । इदञ्चोत्तर-

त्वादीनां दुरवबोधत्वात्। एषां साधनत्वं च विनियोगादवसेयम्। विनियोगश्च श्रुति-लिङ्गादिभ्यः। स च तार्तीयः। उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टि-रूपाणि ब्रह्मज्ञानापेक्षाणीति इहैव चिन्तनीयानि। तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापादनानि एतानि सुतरामिहैव संगतानि। तेषाञ्च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता ॥ ॥ महापूर्वपक्षः ॥

यदप्याहुः—अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः। तदतिरेकि नाना-विधज्ञातृ-ज्ञेय-तत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम्—( छा 6. 2. 1.)

---

मीमांसाश्रवणमन्तरेण न संपत्स्यत इति कथं नित्यानित्यवस्तुविवेकस्य ब्रह्मविचारपूर्वभावितेत्याक्षेपोऽप्यत्र हृद्गतः। शमदमादिकमपि निषेधवाक्यानामर्थविमर्शाधीनमिति पूर्वमीमांसापेक्षमेव। शान्तो दान्त इति वाक्ये अङ्गताबोधश्च पूर्वमीमांसोक्तप्रमाणविमर्शाधीनः। अत आदिपदेन शमादि-कमपि गृह्यते। तथाच नित्यानित्यवस्तुविवेकादिषु ये ब्रह्मविचारात् पूर्वमसिद्धा अंशाः तान् विनाऽन्येषां कर्मविचाराधीनसिद्धिकत्वात् तदानन्तर्येत एव सर्वसिद्ध्या पृथग्गणनं न कार्यमित्युक्तं भवति। **साधनचतुष्टयेति**, तथा शमदमादिसाधनेति साधनपदप्रयोगोऽपि धर्मजिज्ञासायाः पूर्वभावित्वं साधयतीत्याह **एषामिति**। **उद्गीथादीत्यादिपदेन** प्रस्तावादिग्रहणम्। तत्र प्राणाख्यब्रह्मदृष्टेः उद्गीथे हिरण्मयपुरुषदृष्टेरिव कथितत्वात्। **कर्मसमृद्धिः**—कर्मजन्यफलस्याप्रतिबन्धं सिद्धिः। **अपिः** कर्माङ्गाविषयक स्वतन्त्र मनोब्रह्मोपासनादिसमुच्चायकः। **एतानि** उद्गीथाद्युपासनानि। **तेषाञ्चेति**; अप्रधानोपासनानाञ्चेत्यर्थः। **कर्मेति** त्रैवर्गिक करणत्रयपूर्वकव्यापारग्रहणम्। संकर्षश्च कर्मविषयक एव ॥

ननु मोक्षार्थज्ञानस्योपासनात्मकभक्तिरूपतया कर्मापेक्षत्ववर्णनमिदं तदा स्यात्, यदि जीवब्रह्मद्वैतं तात्त्विकं स्यात्। तदेव न; वस्तुस्वरूपोपदेशपरैः निर्गुणब्रह्ममात्रस्य सत्यत्वावगमादिति शंकायाम्, पूर्वोक्तस्थापनाय तत्संमतां तत्त्वहितपुरुषार्थस्थितिं प्रतिक्षेप्तुं विस्तरेण तन्मतमनुवदति **यदपीति**। आहुरिति बहुवचनेन बहुपरग्रन्थनिष्कृष्टार्थानुवाद इहेति सूच्यते। अशेषाः **विशेषाः** सजातीयविजातीयस्वगतभेदाः तत्प्रत्यनीकं—तद्रहितम्। **चिन्मात्रम्**। चित्त्वं स्वयम्प्रकाशत्वम्। तदपि भावरूपं तत्र नास्ति; किन्तु जडप्रत्यनीकमेव तदिति ज्ञापनाय मात्रपदम्। ब्रह्मणः सदिति अनुवृत्तत्वम् अन्येषां व्यावृत्तत्वञ्च तदिष्टम्। व्यावृत्तानां भेदशब्देन विशेषशब्देन च व्यवहारः; यथा आम्र इति वृक्षभेदो वृक्षविशेष इति। स्वगतभेदो नाम ज्ञानादिर्गुणः। **नानाविधज्ञातृ** इति ईश्वर जीव सर्वग्रहणम्। ज्ञानमिति ब्रह्म हि कथ्यते, तत् कथं कल्पितमिति शङ्काऽभावाय **तत्कृत-ज्ञानभेदे**त्युक्तम्, न तु ज्ञानेति। वृत्तिरूपज्ञानविशेषाः ज्ञानभेदाः। तेषु ज्ञानरूपब्रह्मसंसर्गविशेषात् ज्ञानत्वव्यपदेशः। **आदिना** ज्ञानकरणस्य, प्रातिभासिकादेश्च ग्रहणम्। प्रमाणानुपपत्तौ प्राति-भासिकादेः पृथग्वक्ष्यमाणत्वात्। समन्वयाधिकरणे च भामती, 'प्रमातृत्वनिवृत्तौ प्रमाणादयःतिस्रो विधाः निवर्तन्ते' इति। **तस्मिन्नेव**। कल्प्यानेकत्वं नाधिष्ठानानेकत्वसापेक्षमिति भावः।

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्", (मु. 1. 1. 5.) "अथ परा, यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यम्, अगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्, नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः", (तै. आन. 1.) "सत्यं ज्ञानमनन्तं ब्रह्म", (श्वे. 6. 19.) "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्", (के. 2. 3.) "यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्", (बृ. 5. 4. 2.) "न दृष्टेर्द्रष्टारं पश्येः; न मतेर्मन्तारं मन्वीथाः", (तै. मृ.) "आनन्दो ब्रह्म", (बृ. 4. 4. 6.) "इदं सर्वं यत्, अयमात्मा", (बृ. 6. 4. 19.) "नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति", (बृ. 4. 4. 14.) "यत्र हि द्वैतमिव भवति...तदितर इतरं पश्यति...यत्र त्वस्य सर्वमात्मैवाभूत्...तत् केन कं पश्येत्... तत् केन कं विजानीयात्", (छा. 6. 1. 4.) "वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्", (तै. आन. 7.) "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति", (शा. 3. 2. 11.) "न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि", (शा. 3. 2. 3.) "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्", (वि. पु. 6. 7. 53.) "प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्।" (वि. पु. 1. 2. 6.) "ज्ञानस्वरूपमत्यन्त-

---

**सदेवे**त्येवकारेण विजातीयविशेषराहित्यम्, **एकमेवे**ति सजातीयराहित्यम्, **अद्वितीय**मिति स्वगतभेदरूपगुणादिराहित्यञ्च श्रावितमिति स्वरसम्। **भूतयोनि**मिति। यत् प्रपञ्चकारणत्वेनादौ पश्यन्ति, तत् शोधने सर्वविशेषशून्यमिति वाक्यार्थः। **यस्यामत**मित्यादिना ज्ञेयत्वस्यापि निषेधः। ज्ञेयत्वं नास्तीत्युक्तम्; ज्ञातृत्वमपि नेत्युच्यते **नदृष्टे**रिति। शेषं सिद्धान्ते। **आनन्द** इति; दुःखविलक्षणमित्यर्थः। **इद**मिति; आत्मनि सर्वं कल्पितमित्यर्थः। कल्पनेति किम्? वस्तुत एव जगदैक्यमात्मन्यस्तु इत्यत्र जगदभावश्रुतिमाह **नेहे**ति। किञ्चन किमपि—ज्ञाता वा ज्ञेयं वा। **नाना** भेदः नास्ति। **मृत्योः** संसारात्। मिथ्यात्वं दर्शयितुमाह यत्रेति। यत्र-यदा। **वाचारम्भण**मिति। **वाचा** वाक्। तदालम्बनं व्यावहारिकं घटादिकार्यं तत्तन्नाम च। मृदेव सत्येत्यर्थः। तथा च कारणं सत्यम्, कार्यमसत्यमित्यर्थः। **यदे**ति। **एतस्मिन् उ** आत्मन्येव **दरम्** ईषदपि **अन्तरं** भेदं **कुरुते** कल्पयति।

श्रुतीरुक्त्वा सूत्रमाह **न स्थानत** इति। उभयलिङ्गं नेत्यन्वयः। केवलसाकारत्वम्, निराकारस्यैव पृथिव्यादिस्थानरूपोपाधिप्रयुक्तसाकारत्वञ्च ब्रह्मणो नास्ति। सदैव निर्विकारं हि सर्वत्र श्रुतमिति सूत्रार्थः। ब्रह्मनिर्विशेषत्वरूपप्रथमांशे सूत्रं प्रदर्श्य जगन्मिथ्यात्वरूपद्वितीयांशे सूत्रं दर्शयति **माये**ति। कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्=पारमार्थिकरूपस्येषदप्यभिव्यक्त्यभावात् **मायामात्रं** मिथ्यैवेत्यर्थः। यद्यपीदं स्वप्नमात्रविषयं दृश्यते, अथापि सर्वं ज्ञानं यथार्थमिति पूर्वपक्षस्य, सर्वं मिथ्येति सिद्धान्तस्य चैवात्र स्वप्नोदाहरणमुखेन भामत्याद्यभिमतत्वात् इदं प्रपञ्चमिथ्यात्वे प्रमाणम्।

अथ विष्णुपुराणं प्रमाणयति **प्रत्यस्तमिते**ति। इदं निर्विशेषसत्यत्वे प्रमाणम्। **ज्ञानस्वरूप**-

निर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥", (वि. पु. 1. 4. 38.) "परमार्थस्त्वमेवैको नान्योस्ति जगतः पते ! ।", (वि. पु.1. 4. 39,40, 41.) "यदेतद्दृश्यते मूर्तमेतद् ज्ञानात्मनस्तव । भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥ ये तु ज्ञानविदः शुद्धचेतसः तेऽखिलं जगत् । ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर !॥", (वि. पु. 2. 14. 31.) "तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् । विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥", (वि. पु.2. 13. 90.) "यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ! । तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥", (वि. पु. 2. 14. 32.) "वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः । अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥", (वि.पु. 2. 16. 23.), "सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् । इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥", (वि. पु. 6. 7. 96.) "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥", (गी. 10. 20.) "अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः ॥", (गी. 13. 3.) "क्षेत्रज्ञं' चापि मां विद्धि सर्वक्षेत्रेषु भारत ! ॥", (गी. 10. 19.) "न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ॥" इत्यादिभिर्वस्तुस्वरूपोपदेशपरैः शास्त्रैः, 'निर्विशेषचिन्मात्रं ब्रह्मैव सत्यम्, अन्यत् सर्वं मिथ्या' इत्यभिधानात् ॥

मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम्; यथा रज्ज्वा-

---

मित्यादि जगन्मिथ्यात्वे प्रमाणम् । **तमेवे**त्यस्य, विष्णुं प्रणम्य जगतामीशं कथयामीत्युपर्यन्वयः । पते इत्येतदनन्तरमुत्तरार्धम् अननुकूलत्वात् त्यक्तम् । **अर्थस्वरूपं** जगद्रूपेण । **त्वद्रूपं**-त्वदभिन्नम् । **तस्यात्मे**त्यादि आत्मैक्ये प्रमाणम् । **मत्तः** इति मदपेक्षयेति जडभरतद्विजग्रहणम्; **पार्थिवसत्तमे**ति सौवीरराजस्य । **सोहं स च त्वम्**—अहं गुरुस्तव ऋभुः, त्वं निदाघो राजा च सः=परमात्मैवेत्यर्थः । इदञ्च वक्ष्यमाणवचनञ्च जीवब्रह्मैक्ये भेदमिथ्यात्वे च प्रमाणम् । अथ गीता—अहमित्यादिना जीवब्रह्मैक्यमुक्तम् । **आत्मा** जीवात्मा । **न तदस्ती**ति प्रपञ्चमिथ्यात्वम् । **वस्तुस्वरूपोपदेशे**ति । उपासनपर-स्वरूपपरवाक्ययोर्मध्ये स्वरूपपरवाक्यमेव तत्त्वपरमिति भावः ।

नतु कथं द्वैतापलापः, सर्वस्य ब्रह्मणि कल्पितत्वेपि अन्यत्रावश्यं सद्भावात्; रज्जुप्रभृतिषु अन्यत्रस्थितसर्पत्वादीनामेव ह्यारोप इत्यत्र स्वाभिमतं वक्ष्यन् मिथ्यात्वं निर्वक्ति **मिथ्यात्वमि**ति । **रज्ज्वाद्यधिष्ठाने**त्यादिना स्वाभिमतं कथ्यते । दृष्टस्यैवाऽऽरोप इति न । न हि यादृशस्थौल्यदैर्घ्या रज्जुः, तादृशाकारः सर्पः कचित् दृष्टः । अतोऽपूर्व एवायं सर्पो भासते, बाध्यते च । (तथा जगदपि ।) सर्वथैवासत्त्वे शशविषाणवन्न प्रतीयेत; सर्वथैव सत्त्वे च न बाध्येत; अतो दोषाधीनं सत्त्वम्, तत्त्वज्ञानानन्तरमप्रतीत्या ज्ञानाधीना निवृत्तिश्च सर्पान्तरवैलक्षण्येन स्वीक्रियत इति भावः । अत्र लक्षणे निवर्त्यत्वमात्रोक्तौ रज्ज्वा अपि छेदनेन निवर्त्यत्वान्मिथ्येति व्यवहार्यतापत्तिः; अतो

यधिष्ठानसर्पादिः । दोषवशाद्धि तत्र तत्कल्पनम् ; एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगत् यथावस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपम् ।

दोषश्च स्वरूपतिरोधान-विविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या । (छा. 8. 3. 2.) "अनृतेन हि प्रत्यूढाः", (छा. 8. 3. 1.) "तेषां सत्यानां सतामनृतमपिधानम्", (तै. ब्रा. 2. 8. 9.) "नासदासीन्नो सदासीत् तदानीं तम आसीत्। तमसा गूढमग्रे प्रकेतम्", (श्वे. 4. 10.) "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्", (बृ.4.5.19.) "इन्द्रो मायाभिः पुरुरूप ईयते", (गी. 7. 14.) "मम माया दुरत्यया", (गौ.का.1.16.)

---

ज्ञाननिवर्त्यत्वमिति। निवर्त्यत्वं नास्तीतिप्रतीतिविषयत्वम्; तत् रज्जावेव सर्पभ्रमे, नेयं रज्जुरिति भवतीति तद्वारणाय यथावस्थितवस्तुज्ञानेति। तत्र सर्पभ्रमो हि न यथावस्थितवस्तुविषयकः; सर्पस्यासत्यत्वात्। यथावस्थितेति ज्ञानविशेषणे सर्पभ्रमस्य सत्यतया न तद्दोषपरिहार इति वस्तुनि सत्यत्वनिवेशं दर्शयितुं वस्तुपदम्। कल्पितस्य सर्पस्य भूदलनादिभ्रमेण कचिन्निवृत्तावपि तत्त्वज्ञानतो निवृत्तियोग्यताऽस्त्येवेति तत्रापि समन्वयः। नन्वीश्वरसंकल्पनिवर्त्ये सत्यवस्तुन्यतिव्याप्तिः। न। ज्ञानमात्रेति निवेशात्। संकल्पश्च शक्तिसहकृत एव कार्यकर इति न दोषः। वस्तुज्ञानोत्पादकादृष्टस्य वस्तुज्ञाननिवर्त्यत्वादतिव्याप्तिरिति **प्रतीयमानत्वपूर्वकेति**। अदृष्टश्च न प्रतीयते। नन्वहमज्ञ इति अज्ञाने प्रतीयमाने तत्त्वज्ञाननिवर्त्यत्वसत्त्वादतिव्याप्तिरिति चेन्न; नियमेन प्रतीयमानत्वविवक्षणात्। अथवा रज्जौ रज्जुत्वादेः नियमेन प्रतीयमानस्य नेयं रज्जुत्वमिति प्रतीत्या मिथ्यात्वापत्तिः। अतः येन संबन्धेन यत्र यस्य निषेधः, तत्र तेन संबन्धेन प्रतीयमानत्वमपेक्षितम्। न चाज्ञानादिकं तादात्म्येन प्रतीयत इति न दोषः। स्वप्रकारतावच्छेदकसंबन्धावच्छिन्न—यथावस्थितवस्तुज्ञानप्रयोज्य स्वविशेष्यनिष्ठाभावीय प्रतियोगिताश्रयत्वं मिथ्यात्वमित्युक्तं भवति। स्वं मिथ्यावस्तु। अयं सर्प इत्यत्र तादात्म्यं संबन्धः; अत्र जलमिति मरीचिकादावन्यादृश इति यथायथम्। निवर्त्यत्वमित्यत्र मिथ्यावस्तुनिवृत्तेरपायरूपाया एव विवक्षणे तस्याः मिथ्यावस्तुमात्रगतत्वात् निवर्त्यत्वमात्रं लक्षणं पर्याप्तं स्यात्। तस्य दुर्बोधत्वात् नास्तीतिप्रतीतिविषयत्वमेवेह निवर्त्यत्वम्। एवञ्चेदं निर्वचनं तार्किकादिसाधारणमेव भवितुमर्हति। इदमेव शाङ्कराध्यासभाष्यनिष्कृष्टम्॥ स्वमते समन्वयप्रकारमुपपादयति **दोषेति**।

ननु स्वयम्प्रकाशतया ब्रह्मस्वरूपे प्रकाशमाने कथं कल्पना? दोषात् पूर्वं स्थितस्य च स्वरूपप्रकाशस्य कथं लोपः? दोषस्य सत्यत्वेन द्वैतापत्तिश्चेत्यत्राह **दोषश्चेति**। तिरोधानं विक्षेप इति कार्यद्वयमविद्यायाः। तत्र तिरोधाने प्रमाणमाह **अनृतेनेति**। विक्षेपे प्रमाणं वक्ष्यते **इन्द्रो मायाभिरिति**। **अनृतेन** मिथ्याभूतया अविद्यया तिरोहिताः अपहतपाप्मत्वादयः स्वरूपात्मकधर्माः। **तेषाम्** अपहतपाप्मत्वादीनाम्। **नासदासीन्नो सदासीत्**; सदसदनिर्वचनीयमासीदित्यर्थः। **तमः** अज्ञानम्। **प्रकेतम्**—निकेतरूपं ब्रह्म सर्वाधिष्ठानम्। मिथ्यात्वकण्ठोक्तिर्**मायामिति**। **इन्द्रः** परमात्मा। **पुरु** बहु।

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" इत्यादिभिः निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते। यथोक्तम्—(वि. पु. 2. 12. 39, 40.) "ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः। ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥ यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम्। तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥", (वि. पु.2.12.43,44,45.) "तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचिद् द्विज ! वस्तु जातम्। विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥ ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्। एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्। एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥" इति।

अस्याश्चाविद्यायाः निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति, "न पुनर्मृत्यवे तदेकं पश्यति", "न पश्यो मृत्युं पश्यति" (छा 7. 26. 2.), "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति" (तै. आनं. 7. 2.), "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" (मु. 2. 2. 9.), "ब्रह्म वेद ब्रह्मैव भवति" (मु. 3. 2. 9.), "तमेव विदित्वाऽति मृत्युमेति नान्यः पन्थाः" (श्वे. 3. 8.) इत्याद्याः (दयः) श्रुतयः। अत्र मृत्युशब्देनाविद्याऽभिधीयते। यथा सनत्सुजातवचनम्, (भा. उद्यो. 41. 4.) "प्रमादं वै मृत्युमहं ब्रवीमि ; सदाऽप्रमादममृतत्वं ब्रवीमि" इति। (तै. आनं 1. 1.) "सत्यं ज्ञानमनन्तं ब्रह्म", (बृ. 5. 9. 25.) "विज्ञानमानन्दं ब्रह्म", इत्यादिशोधकवाक्यावसेयनिर्विशेषस्वरूपब्रह्मात्मैकत्वविज्ञानं च, (बृ. 3. 4. 10.) "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति, न स वेद", (बृ. 3. 4. 7.) "अकृत्स्नो

---

**अनादिमाययेति** गौडपादकारिका तैः श्रुतित्वारोपेणोपन्यस्यते। **विज्ञानविजृम्भितानि** विविधविपरीतज्ञानात्मकाविद्याकल्पितानि। **संकल्पः** एकीकरणस्य आरोपस्य हेतुरविद्या। विभिन्नं ज्ञायतेऽनेनेति **विज्ञानम्**; संकल्प्यते अनेनेति **संकल्पः**। **संव्यवहारभूत** व्यावहारिकसत्यम् यत्, **तत्रापि कारण**मविद्याख्यं कारणतया सर्वभुवनापेक्षितमुक्तमित्यर्थः। **आत्म्यं**—व्याप्यं-शरीरम् ; तद्रहिते। **अनिरुक्ते** शब्दागोचरे। **अनिलयने** आधाररहिते। **अभयम्** निर्भीकम्; अभयाय वा। **परावरे** ब्रह्मजीवरूपे। **सदाऽप्रमादम्**—आत्यन्तिकं प्रमादाभावम्। मृत्युः प्रमादः अज्ञानं संसृतिहेतुः, न तु मोहाख्यमन्यथाज्ञानमिति सनत्सुजातोक्तम्। अन्यथाज्ञानस्यापि मूलमज्ञानमिति। **अन्याम्** अन्यत्वेनेत्यर्थः। एतद्विवरणम **अन्य** इत्यादि। अत्र पूर्वम्, अहं ब्रह्मास्मीतिवेदनं प्रतिबोध्य, भेदोपासकनिन्दनं कृतम्। समनन्तरञ्च, 'यथा पशुः, एवं स देवानाम्' इति स निन्द्यते ॥ भेदोपासननिन्दकं

ह्येषः", ( बृ. 3. 4. 7. ) " आत्मेत्येवोपासीत", ( छा. 6. 8. 7. ) " तत्त्वमसि", (जाबाल) "त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि भगवो देवते", ( ऐत. 4. 2. ) " तद्योऽहं सोऽसौ, योऽसौ सोऽहम् [अस्मि]" इत्यादिवाक्यसिद्धम् । वक्ष्यति चैतदेव (शा. 4. 1. 3.) "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति । तथा च वाक्यकारः ( वाक्यग्रन्थ ), " आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः" इति ॥

अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता ।

ननु च—सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्य[वि]ज्ञानेन क्रियते ?॥ कथं वा 'रज्जुरेषा न सर्पः' इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते ? ॥ तत्र द्वयोः प्रत्यक्षयोर्विरोधः; इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य च इति चेत्—तुल्ययोर्विरोधे वा कथं बाध्यबाधकभावः ? ॥ पूर्वोत्तरयोर्दुष्टकारणजन्यत्वतदभावाभ्यामिति चेत्——शास्त्र-

पूर्वोक्तवाक्यादपि पूर्वं स्थितं वाक्यान्तरमुद्धरति **अकृत्स्नो ह्येषः** इति । 'अकृत्स्नो ह्येषोऽत एकैकेन भवती'ति पूर्णं वाक्यम । एतत्पूर्वम्, 'स योत एकैकमुपास्ते, न स वेद' इति भेदोपासनरूपप्रत्येकोपासननिन्दाश्रवणात् तत्तदुपास्यप्राप्त्या पूर्णता न भवतीति अत्रोच्यते । भेदनिन्दां प्रदर्श्य अभेदं वेद्यं दर्शयति **आत्मेति** । अहमिति ब्रह्मोपासीतेत्यर्थः । **त्वं वा** इति ब्रह्मसंबोधनेनोक्तिः । **तत् योहमिति** परोक्षवचनम् । नात्र दृष्टिविधिः, दृष्टिविधौ परस्परव्यतिहारायोगादिति भावः । **वक्ष्यति चेति** । सूत्रव्याख्यारूपत्वादस्य ग्रन्थस्य सूत्रकार इत्यर्थसिद्धम् । **उपगच्छन्ति**—उपासते । **ग्राहयन्ति च**—श्रुतयश्च बोधयन्ति । **सर्वस्य** प्रपञ्चस्य **तन्निष्पत्तेः**—तत्र आत्मनि कल्पितत्वादित्यर्थः ।

स्वपक्षेऽनुपपत्तिमुद्भाव्य परिजिहीर्षन् श्रौतत्वमिव युक्तत्वमप्यस्तीत्याह **अनेन चेति** । एतेन—सगुणब्रह्मोपासनात् तत्प्राप्तिर्मुक्तिरिति पक्षे ध्यानमोक्षयोरदृष्टघटितकार्यकारणभावेऽपि श्रुतितात्पर्यं कल्पनीयम् । तत्त्वज्ञानात् मिथ्याभूतबन्धनिवृत्तिर्मुक्तिरिति अस्मत्पक्षे तु न तथा, तत्त्वज्ञानमिथ्यावस्तुनिवृत्त्योः कार्यकारणभावस्य लोकक्लृप्तत्वादिति लाघवमपि सूचितम् । अनुपपत्तिं शङ्कते **ननु चेति** । प्रमाणसंप्रदायविरोधः पृष्टः परिहृतः; युक्तिविरोधोपि पृच्छ्यत इत्याशयेन **चकारः** । प्रत्यक्षविरुद्धा-प्रबलप्रत्यक्षविषयप्रतियोगिका । अयं प्रष्टुराशयः—लौकिकसंनिकर्षाजन्य-दोषविशेषाजन्यबुद्धिं प्रति बाधनिश्चयो विरोधीति तार्किकाः । तादृशस्थल एव बाधेन मिथ्यानिवृत्तिः सुवचा । अत्र च भेदरूपप्रपञ्चज्ञानं प्रत्यक्षम् । अप्रत्यक्षस्य कतिपयस्य भेदस्य निवृत्तावपि न सर्वनिवृत्तिर्घटते । अन्यथा परोक्षप्राबल्ये, आदित्यो यूप इति श्रुतिरैक्यं यथाश्रुतं बोधयेदिति । अद्वैती पृच्छति **कथं वेति** । अन्य आह **तत्रेति** । अद्वैती पृच्छति **तुल्ययोरिति** । अन्य आह **पूर्वेति** । अद्वैत्याह **शास्त्रेति । समानमेतत्** । प्रत्यक्षपरोक्षयोर्विरोधे प्रत्यक्षं बलीयः, प्रत्यक्षयोर्मध्य एवादुष्टकारणजन्यं बलीय इति नियमद्वयं विहाय, सामान्यत एव ज्ञानयोर्विरोधे अदुष्टकारणजन्यं बलीय इति स्वीकार्यम् । एवञ्च प्रपञ्चप्रत्यक्षस्य दोषजन्यत्वादिष्टसिद्धिरिति भावः । एवं स्वीकाराभावे दण्डम्,

प्रत्यक्षयोरपि समानमेतत्। एतदुक्तं भवति—बाध्यबाधकभावे तुल्यत्व-सापेक्षत्वनिरपेक्षत्वादि न कारणम्; ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात्। तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते। एवं च सति द्वयोःप्रमाणयोर्विरोधे यत् संभाव्यमानान्यथासिद्धि, तद् बाध्यम्; अनन्यथासिद्धमनवकाशमितरत् बाधकम् इति सर्वत्र बाध्यबाधकभावनिर्णयः—इति॥ तस्मादनादिनिधन-अविच्छिन्नसम्प्रदाय-असम्भाव्यमानदोषगन्ध-अनवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्धमुक्तबुद्ध (बुद्धमुक्त) स्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन सम्भाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव। सम्भाव्यते च विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो (ख्य) दोषः।

ननु—अनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य, "ज्योतिष्टोमेन स्वर्गकामो यजेत" (पू. मी. श्रुति.) इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत॥

---

शास्त्रजनितैक्यज्ञानस्यादुष्टकारणजन्यत्वञ्च दर्शयितुं प्रवृत्तः, शास्त्राधीनभेदज्ञानस्य बाधः कथम्, अदुष्टकारणजन्यत्वाविशेषादित्याशङ्कापरिहारानुगुणं निष्कृष्योपपादयति **एतदुक्तं भवतीति**। **तुल्यत्वेति**। दुष्टकारणजन्यस्य बाध्यत्वे अदुष्टकारणजन्यस्य बाधकत्वे च ज्ञानयोस्तुल्यप्रमाणकत्वं प्रयोजकम्; अन्यत्र सापेक्षत्वं बाध्यत्वे, निरपेक्षत्वञ्च बाधकत्वे प्रयोजकमिति नानाप्रकारता नेत्यर्थः। **आदिना** दुष्टकारणजन्यत्वतदभावग्रहणम्। **न कारणम्** अप्रयोजकम्। **ज्वालेति**। **अन्यथेत्यादिः**। ननु ज्वालाप्रत्यक्षं नैवोपमृद्यत इत्यत्राह **तत्र हीति**। ऐक्यप्रत्यक्षमुपमृद्यत इति भावः। दीपमारोप्य शयितः प्रभाते उत्थाय सेयं दीपज्वालेति पूर्वरात्रदृष्टज्वालयैक्यं साक्षात्करोति। वस्तुतस्तत्र ज्वाला भिन्नैव! आरोपकालोत्पन्नाया एव ज्वालाया आप्रभातस्थायित्वे तदैव शिष्टवर्तितैलापसारणेऽपि तत्सद्भावप्रसंगात्। प्रतिक्षणमभिनवज्वालोत्पादनादेव क्रमेण वर्तितैलक्षयः। तत्र प्रथमक्षणज्वालावदुत्तरक्षणज्वालानामुत्पत्तिः, अन्तिमज्वालावत् पूर्वज्वालानां प्रतिक्षणविनाशश्चानुमीयते। अतो न युगपदनेकज्वालोपलम्भप्रसङ्गः। अतः ज्वाला प्रतिक्षणं भिन्ना भिन्नसामग्रीजन्यत्वादिति ज्वालाभेदोऽनुमानैकगम्यः। प्रत्यक्षस्य निरपेक्षतया प्राबल्ये च तेनैक्यप्रत्यक्षोपमर्दो न स्यादिति यावत्। सर्वस्थलानुगतं नियममाह **एवञ्चेति**। **प्रमाणयोः** प्रमात्वेनाभिमतयोः। **विरोधे**। उत्सर्गापवादस्थले तु द्वयोर्विभिन्नविषयकत्वान्न विरोध इति भावः। **संभाव्यमानान्यथासिद्धि**। **अन्यथा** विषयवास्तवत्वं विनापि **सिद्धिः** स्वरूपलाभः यस्य ज्ञानस्य इतरप्रमाणानन्यथासिद्धिं दृष्ट्वा ऊह्यते, तादृशम्। इतरस्यानन्यथासिद्धिश्च तस्यानवकाशत्वात्=अन्यबाधं विनोत्पत्तुमनर्हत्वादिति भावः। **अनादिनिधन**त्वादिचतुष्कं शास्त्रविशेषणम्। **जन्येति** अवबोधविशेषणम्। **भेदवासनादी**त्यादिपदेन भावरूपाज्ञानग्रहणम्। भेदवासनायाः दोषत्वं न युक्तमिति शङ्कते **नन्विति**। दुष्टकारणजन्यमन्येन बाध्यत इत्यनुक्त्वा अन्यथासिद्धमनन्यथासिद्धेन बाध्यत इत्युक्तावपि बाध्यस्य दोषमूलकत्वमवश्यभावि। तथा च निर्दोषशास्त्रजन्यभेदज्ञानस्य दोषजत्वं व्याहतम्। अतो बाध्यत्वं नेषितुं शक्यमिति

**सत्यम्; पूर्वापरापच्छेदे पूर्वशास्त्रवत् मोक्षशास्त्रस्य निरवकाशत्वात् तेन बाध्यत एव। वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः; निर्गुणत्वात् परस्य ब्रह्मणः॥**

भावः। बाध्यत्वमिषितुं शक्यमेव। शास्त्रस्य निर्दोषत्वमपौरुषेयतया पुरुषदोषमूलकत्वाभावमात्रेण। भेदवासनादिरूपदोषकल्पितत्वं तु सर्वस्यैव तस्याप्यक्षतम्। भेदवासनाया दोषत्वञ्चानवकाशमोक्षशास्त्रबलसिद्धम्। न च, शास्त्रञ्चेत्, न बाध्यत इति नियमः; अपच्छेदस्थले तद्दर्शनात् तन्न्यायस्यैवात्राप्यादरणादित्याशयेनाह **सत्यमिति**। **पूर्वापरापच्छेदे** पूर्वापच्छेदोत्तरापच्छेदयोरेकप्रयोगे समाहारे। एकापच्छेदस्य पूर्वत्वे अन्यापच्छेदस्योत्तरत्वे च सतीत्यर्थः। **पूर्वशास्त्रवत्** पूर्वापच्छेदनिमित्तकप्रायश्चित्तविधायकशास्त्रमिव। **बाध्यते** ज्योतिष्टोमादिशास्त्रमिति शेषः। अपच्छेदविषयस्तावदेवम्—ज्योतिष्टोमे, 'अध्वर्युं विनिष्क्रामन्तं प्रस्तोता संतनुयात्, तं प्रतिहर्ता, तमुद्गाता, तं यजमानः, तं प्रशास्ता' इति अध्वर्युप्रभृतिकच्छग्रहणपूर्वकं प्रस्तोत्रादीनामुत्तरेषां बहिष्पवमानस्तोत्रार्थं गमनमुक्तम्। तत्र च मध्ये कच्छग्रहणरूपान्वारम्भविच्छेदे प्रायश्चित्तमाम्नायते, "यदि प्रस्तोताऽपच्छिन्द्यात्, ब्रह्मणे वरं दद्यात्। यदि प्रतिहर्ता, सर्ववेदसं दद्यात्। यद्युद्गाता, अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत; तत्र तद् दद्यात्, यत् पूर्वस्मिन् दास्यन् स्यात्" इति। तत्रैकैकापच्छेदे तत्तन्निमित्तकं प्रायश्चित्तमसंदिग्धम्। यत्र चोभाभ्यां युगपद्विच्छेदः, तत्र नैमित्तिकद्वयानुष्ठानस्य शक्यत्वे न कस्यचिद्बाधः। यत्र तु विरोधः, यथा उद्गातृप्रतिहर्त्रपच्छेदयौगपद्ये, तत्र युगपदेव नैमित्तिकवाक्यद्वयप्रवृत्तेः अविशेषाद्विकल्पः। यदा त्वपच्छेदयोस्तयोः क्रमेण प्रवृत्तिः, तत्र विरोधात् कस्यचिदेव नैमित्तिकस्यानुष्ठाने कर्तव्ये कतरस्येति चिन्ता। तत्रोपक्रमाधिकरणनयेन पूर्वापच्छेदप्रायश्चित्तशास्त्रार्थानुष्ठानमिति पूर्वपक्षः। उत्तरापच्छेदज्ञानाधीनं यत् प्रायश्चित्तज्ञानम्, तस्य पूर्वप्रायश्चित्तज्ञानबाधेनैवोदितत्वात् पूर्वस्य बाध इति सिद्धान्तः। तथा च सूत्रम्, "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" (पू.मी. 6. 5. 54.) इति। तद्वदिह ज्योतिष्टोमादिपूर्वशास्त्रार्थबाधेन मोक्षपरशास्त्रार्थज्ञानस्योदितत्वादिदं प्रबलम्। ज्योतिष्टोमादिविधिर्हि त्रिवर्गफलप्रावण्यस्य मोक्षप्रावण्यपूर्वभावित्वात् पूर्वशास्त्रम्, तदधिकारिविषये सावकाशश्च। न चैवं तत्तदधिकारिविषये तत्तदुपयोगान्न कस्यापि बाध इति शङ्क्यम्; मोक्षस्य सर्वभेदनिवृत्तिरूपतया तदर्थतत्त्वज्ञानस्य सर्वभेदबाधकतया ज्योतिष्टोमादिवाक्यस्य बाध्यार्थपरत्वावश्यम्भावात्। तथापि बाध इष्यत एवापच्छेदनयेनेति भावः। कर्मकाण्डविधिषूक्तं औपनिषदोपासनविधिष्वप्यतिदिशति **वेदान्तेति**। उपासनवाक्यानामयथार्थविषयकत्वस्वीकारेऽपि नोपासनविधिभङ्गः। अथापि यथोपासनं फलस्य प्रदर्शितत्वात् उपासनविषयोऽप्यबाध्य इव। परन्तु तत्र 'जक्षत् क्रीडन् रममाणः स्त्रीभिः' इति वैषयिकसुखरूपफलनिर्देशात् तत्प्रावण्यं पूर्वम्, मोक्षप्रावण्यं पश्चादिति सगुणशास्त्रस्य पूर्वत्वात् बाध्यत्वमिति भावः। ननु सगुणब्रह्मोपासनशास्त्रमेव मोक्षशास्त्रम्। तत्फलं जक्षणादिकञ्च ब्रह्मानुभवगर्भं न वैषयिकसुखम्। तर्हि भेदस्याबाध्यत्वात् भेदवासना दोषो न भवेदिति चेत्-मा भूदित्यत्रोपपादयति **निर्गुणत्वा-**

**ननु च**–( मु. 1. 10. ) **"यः सर्वज्ञः सर्ववित्"**, ( श्वे. 6. 8. ) **"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"**, ( छा. 8. 1. 5. ) **"सत्यकामः सत्यसङ्कल्पः"** इत्यादि-ब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणां कथं बाध्यत्वम्? ॥ **निर्गुणवाक्यसामर्थ्यादिति ब्रूमः ।** **एतदुक्तं भवति** ( बृ. 5. 8. 8.) **"अस्थूलमनण्वह्रस्वमदीर्घम्"**, ( तै. आनं. 1. ) **"सत्यं ज्ञानमनन्तं ब्रह्म"**, (मन्त्रि.2.2; 4.) **"निर्गुणम्"**, ( श्वे. 6. 19. ) **"निरञ्जनम्"** इत्यादिवाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्म इति प्रतिपादयन्ति; इतराणि च सगुणम् । उभयविधवाक्यानां विरोधे तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वात् बलीयस्त्वमिति न किंचिदप(व)हीनम् ॥

**ननु च**–**"सत्यं ज्ञानमनन्तं ब्रह्म"** इत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते ॥ **नेत्युच्यते, सामानाधिकरण्येनैकार्थत्वप्रतीतेः ॥ अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वम-**

---

दिति । अवरब्रह्मणः सगुणत्वेऽपि परस्य निर्गुणत्वादित्यर्थः । निर्गुणब्रह्मबोधकवाक्यसत्त्वात् निर्गुण-ब्रह्मभावस्य फलत्वे सिद्धे, स एव मुख्यमोक्ष इति तत्प्रावण्यस्य पश्चात्तनत्वात् सगुणब्रह्मानुभव-शास्त्रं पूर्वमेवेति तद्बाध एष्टव्य इति भावः । नन्वेवं विधिविषयाणां बाध्यत्वस्य फलप्रावण्य-पूर्वत्वचिन्तनया सुवचत्वेऽपि स्वरूपोपदेशरूपसगुणवाक्यार्थबाधो निर्युक्तिकः । अत एव भेदवासना न दोषः, ब्रह्मगुणानां सत्यत्वस्वाभाविकत्वश्रवणाद्दोषमूलकत्वायोगाच्चेति शङ्कते **ननु चेति ।** **निर्गुणवाक्यसामर्थ्या**दिति । गुणसामान्यनिषेधपरत्वस्वरसादित्यर्थः । स्वाभिमतापच्छेदनयावतारमत्र विशदयितुमाह **एतदि**ति । **कूटस्थे**ति । कूटं नाम यत्रायःपिण्डे तप्तं अयः निक्षिप्य प्रह्रियते, तत् स्वयमविकृतं परविकारहेतुः । तद्वत् तिष्ठतीति कूटस्थम् । **गुणापेक्षत्वेन ।** अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्; प्रसक्तस्यैव प्रतिषेध्यत्वादिति भावः । तथा च गुणवाक्यजातं पूर्वम्, निर्गुणवाक्यजातं परम् । ननूपासनापरवाक्येषु गुणश्रवणमुपासनार्थतया सफलम् । गुणानादरणे स्वरूपोपदेशरूपसगुणवाक्यानां नैष्फल्यमेवेति चेन्न–'यन्न दुःखेन' इत्यादिस्वर्गस्वरूपशोधकवाक्यवत् उपासनप्राप्यब्रह्मस्वरूपप्रकारबोधकत्वेनोपयोगात् । इममर्थं सूचयितुमाह **न किञ्चिदपहीन**मिति ।

निर्गुणवाक्येषु सत्यज्ञानादिवाक्यगणनमयुक्तमिति सिद्धान्ती शङ्कते **ननु चे**ति ॥ **सत्य-ज्ञानादयः** सत्यत्वज्ञानत्वादयः । तथाऽनुक्तिश्च अद्वैतिभिस्तथोक्तेः; यथा न्यायमकरन्दे, धर्मस्य सत्यादेरिति । तथा प्रकारवाचिनां प्रकारिपर्यन्तार्थकत्वात्, 'सत्याः कामाः,' 'सत्यकामः' इत्याद्यनुरोधेन सत्यपदमनेकसत्यविशिष्टार्थकं ज्ञानपदञ्च ज्ञानविशिष्टार्थकं भवतीति सत्यज्ञानगुण-कत्वमपि सुवचमिति सूचनायाप्येवम् । अत एव अनन्तपदाप्रयोगेणादिपदप्रयोगः । त्रिविध-परिच्छेदरहितत्वस्य परमात्ममात्रवृत्तितया तत्र तादृशप्रकाराभावेन सत्यज्ञानानन्तत्वादिगुणा इत्येव प्रयोक्तव्यम् । तदा च विवक्षितस्फोरणं शिथिलमिति । अत्रादिना अनन्तत्वग्रहणम् । शब्दस्यान्यत्र तत्प्रत्यायकत्वस्वाभाव्येऽपि समानाधिकरणवाक्यघटकपदानां तन्नेत्याह **नेति** । पदानां समानाधि-

विरुद्धमिति चेत्—अनभिधानज्ञो देवानांप्रियः। एकार्थत्वं नाम सर्वपदानामर्थैक्यम्; विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः। ततश्चैकार्थत्वं न सिध्यति॥ एवं तर्हि सर्वपदानां पर्यायता स्यात्, अविशिष्टार्थाभिधायित्वात्॥ एकार्थाभिधायित्वेऽप्यपर्यायत्वमवहितमनाः शृणु—एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकत्वपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्यायता च। एतदुक्तं भवति—

करणत्वं नाम एकार्थवृत्तित्वम्। गुणगुण्युभयाभिधाने च तद्भङ्गः स्यादित्यर्थः। **अविरुद्धम्।** अभिन्नत्वाद् धर्मिण इति भावः। **अनभिधानज्ञ** इति। अभिधानं हि बोधनमात्रम्; न तु विशेष्यबोधनम्। गुणे गुणिनि चाभिधीयमाने कथमेकपदाभिहितमेवान्यपदाभिधेयं स्यात्। अतोऽभिधानपदस्यार्थं न जानातीत्यर्थः; समानाधिकरणवाक्यमखण्डाभिधायि, व्यधिकरणवाक्यमेवान्विताभिधायीत्यभिधानविधां न जानातीति च। **देवानांप्रियः।** मूर्खरूपार्थे अलुक्समासः। अखण्डपरवाक्यानामपि विशेष्यविशेषणरूपानेकार्थपरत्ववादी हि, अन्योऽसौ अन्योऽहमिति रीत्या देवोपासक एव भवति। तथाच, यथा पशुरेवं स देवानां प्रिय इति पशुरेवेति हृदयम्। **अर्थैक्यम्**—अर्थस्याभिन्नत्वम्। पृच्छति **एव**मिति। **एवं तर्हि**—विशेषणानभिधायित्वे। **पर्यायता स्या**दिति। अत एकातिरिक्तपदानां वैयर्थ्यं स्यादिति। समाधत्ते **एके**ति। **अपर्यायत्वम्** अवैयर्थ्यसंपादकमपर्यायत्वम्। **निश्चया**दिति। समानविभक्तिकत्वबलेनेत्यादिः। **निश्चया**दित्यस्य **परत्वेने**त्यत्रान्वयः। पदार्थेति; पदयथाश्रुतार्थेत्यर्थः। स च ऋतादिः। तद्विरोधि अनृतजडादि। अर्थस्येत्यस्य प्रत्यनीकत्वेऽन्वयः। प्रत्यनीकत्वं= व्यावृत्तत्वम्, विलक्षणत्वम्। **तत्परत्वेन** तदनभिधानेन धर्मिमात्राभिधानेपि तत्र तात्पर्यस्वीकारेण **अर्थवत्त्वं** सप्रयोजनत्वम्। सर्वमिदं **सर्वज्ञात्ममुनि**प्रणीतसंक्षेपशारीरकादौ विस्तरेण द्रष्टव्यम्। ननु सर्वेषां पदानां केवलव्यक्तिमात्रपरत्वे अस्य पदस्येदृशप्रत्यनीकत्वपरत्वमिति कथमवगम्यते? प्रत्यनीकत्वस्याबोधनेपि ब्रह्मणि तत्स्वीकारात् तस्य सविशेषत्वमवर्जनीयश्च। एवंसति किमपराद्धं सत्यत्वादियथाश्रुतधर्मेण? इयान् विशेषः–प्रत्यनीकत्वमभावः, सत्यत्वादिर्भाव इति। सधर्मत्वं सर्वत्राविशिष्टम्—इत्यत्र विवृणोति **एत**दिति। अयं भावः—ब्रह्मविदाप्नोति परमित्युपक्रान्तम्। किं ब्रह्मेति जिज्ञासा प्रवृत्ता। तत्र लक्षणकथनं युक्तम्। तच्चेतरव्यावृत्ततया तज्ज्ञापनार्थम्। तत्र वरं प्रथममेवेतरव्यावृत्ततया ज्ञापनमिति तत् क्रियतेऽनेन वाक्येन। समानाधिकरणवाक्यत्वात्तु एकार्थबोधकत्वरक्षायै धर्मस्याभिधेयत्वं त्यक्तम्। एवमपि सत्यशब्दस्य वस्तुतः सत्यत्वविशिष्टोपस्थापकत्वस्वाभाव्यात् तस्यानृतव्यावृत्तत्वज्ञापकत्वमेव युक्तमित्येवं विमृश्य सत्यज्ञानादिपदानामनृतजडादिव्यावृत्तिपरत्वं यथासंख्यमिष्यते। अनन्तपदस्य साक्षादेव परिच्छिन्नव्यावृत्त्यर्थकत्वेऽपि समानाधिकरणपदत्वात् तत्त्यागेन व्यक्तिमात्रबोधकत्वमेव। व्यावृत्तीनामपि बोध्यत्वस्वीकारे, तासामनृतजडादितत्तदर्थघटिततया तेषामपि बोधे प्रवेशादेकार्थकत्वभङ्गः स्यात्। लक्षणकार्यस्य व्यावृत्तत्वस्यावश्यं ज्ञेयतया चापि यथाश्रुतसत्यत्वादित्यागेन व्यावृत्तत्वग्रहणम्। सधर्मकत्वभिया

लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम्। तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते। तत्र सत्यपदं विकारास्पदत्वेनासत्यात् वस्तुनो व्यावृत्तब्रह्मपरम्। ज्ञानपदं चान्याधीनप्रकाश-जडरूपात् वस्तुनो व्यावृत्तपरम्। अनन्तपदं च देशतः कालतो वस्तुतश्च परिच्छिन्नाद् व्यावृत्तपरम्। न च व्यावृत्तिर्भावरूपोऽभावरूपो वा धर्मः। अपि तु सकलेतरविरोधि ब्रह्मैव। यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिः तत्पदार्थस्वरूपमेव; न धर्मान्तरम्। एवमेकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयत् अर्थवत्तरमेकार्थमपर्यायं च पदत्रयम्। तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति।

एवं वाक्यार्थप्रतिपादने सत्येव, (छा. 6. 2. 1.) "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादिभिरैकार्थ्यम्। (तै. स्रु. 1.) "यतो वा इमानि भूतानि जायन्ते", (छा. 6. 2. 1.) "सदेव सोम्येदमग्र आसीत्", (ऐत. 1. 1. 1.) "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते, (तै. आनं 1. 1.) "सत्यं ज्ञानमनन्तं ब्रह्म" इति। तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्म अवगतम्। जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम्। अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते। अन्यथा, (श्वे. 6. 19.) "निरञ्जनम्", (मंत्रि. 1.2; 2. 4.) "निर्गुणम्" इत्यादिभिश्च विरोधः। अतश्चैतत् लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति।

ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्था-

---

च सत्यत्वादिकं ब्रह्मणि नेष्यते। तर्हि व्यावृत्तत्वेष्टावपि सधर्मत्वं स्यादिति चेन्न; तस्य धर्मत्वाभावात्। धर्मिरूपाभावत्वात्; यथा शुक्ले कृष्णव्यावृत्तिर्धर्मरूपापि शौक्ल्ये स्थिता कार्ष्ण्यव्यावृत्तिः धर्मिभूतशौक्ल्यरूपैव, तद्वत्। अत आसां व्यावृत्तीनां ब्रह्मरूपत्वान्न सधर्मकत्वापत्तिः। नापि वैयर्थ्यादयो दोषा इति। **सकलेति**। सकलाः **इतरपदार्थाः**—अनृतजडपरिच्छिन्नाः, तेषां **विरोधिरूपं** तद्व्यावृत्तं स्वरूपम्। **पदार्थविरोधी**त्यत्र पदार्थविरोधिकमिति बहुव्रीहिर्वा। **तद्विरोधिरूप**मित्यत्र **विरोधिपदार्थ**स्तु ब्रह्मस्वरूपविरोधी अनृतजडादिः। **फलतः**। व्यावृत्तीनां शब्दार्थत्वाभावात् बोधाविषयत्वेऽपि पदावैयर्थ्याय तत्र तात्पर्यकल्पनादिति भावः। **व्यावृत्तिरि**ति। व्यावृत्तिर्भावरूपो धर्म इति सिद्धान्ती; अभाव एव सन् धर्म इति तार्किकः। नोभयथाऽपि; धर्मिभिन्नत्वानङ्गीकारादित्यर्थः। **अपर्याय**मिति। न विद्यते पर्यायभूतपदान्तरं स्वमध्ये यस्य पदत्रयस्य, तत् अपर्यायम्। **अपर्याय** इति पाठे मिथः पर्यायो न भवतीत्यर्थः। पर्यायत्वं नाम अभिन्नार्थकत्वमात्रं न; किं तु भिन्नप्रयोजनराहित्यमपीति भावः। **कारणतयोपलक्षितस्य** कारणत्वरूपोपलक्षणलक्षणवत्तया ज्ञापितस्य। 'यतोवा' इति वाक्यमुपलक्षणत्वदर्शकमिति भावः।

**पनपरत्वे लक्षणा स्यात् ॥ नैष दोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात्। सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति सर्वसंमतम् ॥ ननु च—सर्वपदानां लक्षणा न दृष्टचरी ॥ ततः किम्? वाक्यतात्पर्याविरोधे सति एकस्यापि न दृष्टा। समभिव्याहृतपदसमुदायस्यैतत् तात्पर्यमिति निश्चिते सति, द्वयोः त्रयाणां सर्वेषां वा तदविरोधाय एकस्येव लक्षणा न दोषाय। तथा च शास्त्रस्थैरभ्युपगम्यते—कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां**

---

**तात्पर्यवृत्तेः** तात्पर्यमूलकलक्षणावृत्तेः। **ऐक्य एवे**ति। अन्यथा समानाधिकरणपदानां विशिष्टपरत्वे विशेषणभेदेन विशिष्टस्यापि भिन्नत्वात् अभेदान्वयानुपपत्तिरिति भावः। **ततः किमि**ति। अन्यत्रादृष्टाऽप्यत्र स्वीकार्येति भावः। वस्तुतो दृष्टैवेत्याह **तथा चे**ति। तथाऽभ्युपगम्यते चेत्यन्वयः। तथा शास्त्रस्थैश्चाभ्युपम्यत इत्यन्वये, न केवलं लौकिकैः, शास्त्रस्थैरपीत्यर्थः। विषं भुङ्क्ष्वेत्यत्र सुबन्तं तिङन्तञ्च पदं लाक्षणिकमिति सर्वलक्षणा; द्विषदन्नभोजननिवृत्त्यनुकूलनिवर्तनाख्यव्यापारबोधनात्। द्वितीयाविभक्ताविह न लक्षणेति चेत्-विभक्तीनां संबन्धतात्पर्यग्राहकतया न कुत्राप्यर्थवत्त्वमितिपक्षे तथाऽस्तु। **तथा** चेत्यस्य सर्वपदलाक्षणिकत्वेनापीत्यर्थे यथास्थलमेव चकारः। ननु अन्विताभिधायकत्वं पदानामिष्टम्। लाक्षणिकं पदञ्च नानुभावकम्। अतो वाक्येऽन्तत एकं पदं शक्तं स्वीकार्यम्। तदैव तत्रान्विताभिधायकत्वसिद्धिरिति शङ्कायाम्, अन्विताभिधानवादिभिः प्राभाकरैरेव सर्वपदलक्षणा स्वीकृतेति दर्शयति **कार्ये**ति। तन्मते हि वेदे लिङोऽपूर्वाख्यकार्यवाचित्वम्, पदानां तदन्विताभिधायकत्वञ्च स्वीकृत्य लोके तदभावाल्लक्षणेष्टा। तथा हि—गामानयेति कार्यपरव्यवहारादेव व्युत्पत्तिर्भवतीति पदानां कार्यान्विताभिधायित्वं सिद्धम्। तच्च कार्यं लिङर्थः क्रियारूपम्; गवानयनं कार्यमिति लोके बोधात्। एवं लोकाद् व्युत्पन्नस्य पश्चात्, यजेत स्वर्गकाम इत्यत्र यागः कार्य इति बोधः प्रसक्तः। स च स्वर्गकामपदोक्तस्य नियोज्यस्यानन्वयादनुत्पन्नः। न हि कालान्तरभाविस्वर्गकामनावतः क्षणप्रध्वंसिनि यागे कार्ये नियोजनं भवितुमर्हति। अतः यागजन्यमपूर्वाख्यं कार्यं कल्प्यम्। तत्र चास्य नियोजनम्। अस्य चापूर्वस्य क्रियातिरिक्तस्य लोकतोऽनवगमात् कार्यत्वेन रूपेण तत्र व्युत्पत्तिर्न जाता। कल्पितस्य चापूर्वस्य वाचकपदान्तराभावात् स्वर्गकामपदार्थान्वयार्थञ्च वैदिकलिङादिवाच्यत्वमेवेष्यते। अथ वेदोक्तमपूर्वं वा लोकोक्तं क्रियाकार्यं वा लिङर्थ इति विचारे, वेदवाक्यानामेव मुख्यप्रमाणत्वात् लौकिकवाक्यानाञ्च वक्त्रभिप्रेतार्थानुवादकतया तथा प्रामाण्याभावात् लिङो वैदिककार्यभूतमपूर्वमेवार्थ इति निश्चीयते। एवञ्च तदन्विताभिधायित्वमेवान्येषां पदानां पश्चान्निर्धार्यते। ततश्च गामानयेत्यादौ लिङः क्रियात्मककार्ये लक्षणा, पदान्तरस्य च तदन्विते लक्षणेति सर्वं लाक्षणिकमेव लोके इति। तर्हि शक्त्या प्रतिपादनरूपाभिधानाभावात् कथमन्विताभिधानमिति चेत्—न हि तत्राभिधानपदार्थे नैर्भर्यम्। अन्वितमेवाभिधेयमिति अन्वितत्वांशे एव। तर्हि समानाधिकरणवाक्ये अखण्डार्थबोधस्वीकारे अन्वितबोधनं कथमिति चेत्—न हि प्राभाकरोक्तं सर्वमेष्टव्यम्, तथासति कार्यान्विताभिधायित्वस्यैव तदिष्टतया, सत्यं ज्ञानमिति सिद्ध-

पदानां लक्षणा समाश्रीयते। अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वात् लिङादिभिः क्रिया कार्यं लक्षणया प्रतिपाद्यते—कार्यान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्यार्थ इति क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकमेव। अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणाऽपि न दोषः।

अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम्॥

प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम्। सति च विरोधे बलीयस्त्वं वक्तव्यम्; विरोध एव न दृश्यते, निर्विशेषसन्मात्रब्रह्मग्राहित्वात् प्रत्यक्षस्य॥ ननु च—'घटोऽस्ति', 'पटोस्ति' इति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते। विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात्॥ सत्यम्; तथैवात्र विविच्यते॥ कथम्॥ घटोऽस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते। न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं संभवति, तयोर्भिन्नकालज्ञानफलत्वात्; प्रत्यक्षज्ञानस्य चैकक्षणवर्तित्वात्। तत्र स्वरूपं वा भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम्। भेदग्रहणस्य स्वरूपग्रहण-तत्प्रतियोगिस्मरणसव्य-

---

परवाक्यस्याबोधकत्वापत्तेः। अतः कार्यान्वितविषयनियमवत् अन्वितविषयनियमोऽपि त्यज्यत इति सारम्। **अपूर्वकार्ये** अपूर्वाख्ये कार्ये। **क्रिया कार्यं** क्रियारूपं कार्यम्॥

'प्रत्यक्षस्य भेदग्राहित्वे हि ऐक्यग्राहिशास्त्रविरोधः। तदेव न। किंतु अद्वैतशास्त्रवत् सन्मात्रग्राह्येव प्रत्यक्षमपि' इत्युपपादयितुमारभते **प्रत्यक्षे**ति। 'नासतो विद्यते भावः' इति गीताशाङ्करानुसारि ब्रह्मसिद्धिमुखग्रन्थनिरूपितमेतत्। **एकविषयत्वेन** सन्मात्रविषयकत्वेन। **धारावाहिकविज्ञानवत्**। धारावत् अविच्छिन्न-घटादि किञ्चिद्विषयकत्वाभिमत-ज्ञान संततिवत्। धारावाह्येव धारावाहिकम्। **तथैवात्र विविच्यते**। घटोऽस्तीत्यादिज्ञाने प्रत्यक्षमेकविषयकत्वेन एकव्यवहारहेतुत्वेन च परिशील्यते। अस्तित्वं सत्स्वरूपम्। सत्तेति धर्मान्तरमितिमतिनिवृत्तये तथा प्रयोगः। **तद्भेदः** तद्विशेषः, तत्संबन्धी भेदः; घटस्वरूपनिष्ठः घटस्वरूपः पटादिभेदः। **स्वरूपपदस्येहोपरि अस्तित्वे घटव्यक्तौ च प्रयोगः** कृतोऽवधेयः। अस्तित्वं भेदश्चेत्यनुक्त्वा **तद्भेद** इत्युक्तिः वक्ष्यमाणानुपपत्तिस्फोरणाय। स्वरूपग्राहिसापेक्षग्रहविषयत्वं हि भेदस्य वक्ष्यते। **तत्प्रतियोगी**ति; भेदरूपाभावप्रतियोगीत्यर्थः। घट इत्यनेन पटादिभिन्नग्रहणमानुभविकम्। तत्र भेदाश्रयस्वरूपम् अस्तीति सत्स्वरूपश्चैकम्, सामानाधिकरण्यात्। एवञ्च स्वरूपं पटादिभेदश्चेतिद्वितये स्वरूपमितरनिरपेक्षं प्रत्यक्षेण सुग्रहम्; भेदस्त्वभावः आश्रयप्रतियोग्युभयज्ञानानन्तरग्राह्यत्वात् स्वरूपेण सह न गृह्यते। स्वरूपग्राहिप्रत्यक्षञ्च पश्चाद्भेदग्राहकं न भवति, क्षणिकतया नष्टत्वात्। अन्यत् प्रत्यक्षं जायमानमप्येवमेव स्वरूपग्रहणोपक्षीणमिति न कदापि केनापि भेदग्रहसंभवः। अतो भेदस्फुरणं वासनाधीनस्मृतिमात्रमिति वक्तव्यम्। एवञ्च यथा शुक्तौ इदं रजतमितिज्ञाने इदमंशप्रत्यक्षसहभूता रजतस्मृतिर्भ्रान्तिः, एवमिह भेद-

पेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयम्—इति न भेदः प्रत्यक्षेण गृह्यते । अतो भ्रान्तिमूल एव भेदव्यवहारः ॥

किंच भेदो नाम कश्चित् पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते—भेदस्तावन्न वस्तुस्वरूपम्; वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत् सर्वस्माद्भेदव्यवहारप्रसक्तेः । न च वाच्यम्, स्वरूपे गृहीतेऽपि भिन्न इति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात् तत्स्मरणाभावेन तदानीमेव न भेदव्यवहारः इति; स्वरूपमात्रभेदवादिनो हि प्रतियोग्यपेक्षा च नोत्प्रेक्षितुं क्षमा; स्वरूपभेदयोः स्वरूपत्वाविशेषात्—यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात्; 'हस्तः, करः' इतिवत् 'घटः, भिन्नः' इति पर्यायत्वं च स्यात् ।

नापि धर्मः; धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः, अन्यथा स्वरूपमेव स्यात् । भेदे च, तस्यापि भेदस्तद्धर्मः, तस्यापीत्यनवस्था ।

किंच जात्यादिविशिष्टवस्तुग्रहणे सति भेदग्रहणम्, भेदग्रहणे सति जात्यादिविशिष्टवस्तुग्रहणमित्यन्योन्याश्रयणम् ।

अतो भेदस्य दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् ॥

किंच 'घटोऽस्ति', 'पटोऽस्ति', घटोऽनुभूयते', 'पटोऽनुभूयते' इति सर्वे पदार्थाः

---

स्मृतिरपि भ्रान्तिरिति घट्टार्थः । अस्तित्वं तद्भेदश्चेत्यस्य सन्मात्रं तत्र कल्पितभेदश्चेत्यन्तर्मतोऽर्थ । भ्रान्तिमूल एवेत्येवकारः प्रत्यक्षमूलत्वव्यवच्छेदाय । अत्रैव प्रकृतवाक्यतात्पर्यम् ।

अस्तु स्मृतित्वम्; कथं भ्रान्तित्वनिश्चय इति चेत्—भेदस्य प्रत्यक्षाविषयत्वमेव प्रकृतम् । तच्च सिद्धम् । भ्रान्तित्वनियामकं तस्यासत्यत्वं त्वेवमित्याह किंश्चेति । न्यायविद्भिरिति । भेदसाधको न्यायः सर्वोऽप्यपन्याय इति भावः । स्वरूपत्वाविशेषादिति हेतुः पूर्वान्वयी । अथवा अस्य हेतोरुत्तरत्र, तथैव स्यात्, पर्यायत्वञ्च स्यादिति वाक्यद्वयेऽप्यन्वयः ॥ धर्मत्वे सतीति । तस्य पटभेदस्य घटधर्मस्य घटात् भेदोऽवश्याश्रयणीयः; भेदे च एवं तस्य घटात् भेदे सति च, तस्यापि घटभेदस्यापि पटभेदधर्मस्य पटभेदात् यो भेदः सः तद्धर्मः घटभेदधर्मः, अथ तस्यापि पटभेदभेदस्यापि स्वधर्मिणो भेदः स्वधर्म इत्येवं धर्मभूतस्य भेदस्य स्वधर्मिणो भेदपरम्परेत्येवमनवस्थेत्यर्थः । तस्यापीति पुनर्वचनं तस्यापि भेदस्तद्धर्म इति वाक्यस्य उपर्युपरि आवर्तनप्रदर्शनाय । धर्मपक्षे अनवस्थामुक्त्वा अन्योन्याश्रयमाह किंश्चेति । घटस्य स्वेतरसर्वभेदवत्त्वग्रहः घटत्वजातिविशिष्टघटाख्यवस्तुरूपानुयोगिग्रहसापेक्षः । तथा पूर्वं पटभेदाग्रहणे च पट इत्यग्रहणं घट इति ग्रहणञ्च कथमिति भावः ।

ननु भेदस्य दुर्निरूपत्वेपि घटपटादिसत्स्वरूपाणां प्रत्यक्षविषयत्वात् कथं ब्रह्मैकविषयकत्वमिति शंकायां घटादीनामपारमार्थ्ये प्रत्यक्षविषये सन्मात्रे कल्पितत्वञ्च हृद्गतमाह किंश्चेति । एवं

सत्तानुभूतिघटिता एव दृश्यन्ते । अत्र सर्वासु प्रतिपत्तिषु सन्मात्रमनुवर्तमानं दृश्यत इति तदेव परमार्थः, विशेषास्तु व्यावर्तमानतया अपरमार्थाः, रज्जुसर्पादिवत्—यथा रज्जुरधिष्ठानतयाऽनुवर्तमाना परमार्थसती ; व्यावर्तमानाः सर्पभूदलनाम्बुधारादयः अपरमार्थाः ॥

ननु च—रज्जुसर्पादौ, 'रज्जुरियम्, न सर्पः' इत्यादिरज्ज्वाद्यधिष्ठानयाथार्थ्य(त्म्य)-ज्ञानेन बाधितत्वात् सर्पादेरपारमार्थ्यम् ; न व्यावर्तमानत्वात् । रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतया ; किंत्वबाधितत्वात् । अत्र तु घटादीनामबाधितानां कथमपारमार्थ्यम् ?॥ —उच्यते । घटादौ दृष्टा व्यावृत्तिः ; सा किंरूपेति विवेचनीयम् । किं घटोऽस्तीत्यत्र

---

सन्मात्रसिद्धावपि तस्यानुभवेनैव साधनीयत्वात् सन्मात्रमनुभवश्चेति द्वैतापत्तिरिति शंकायां तयोरैक्यं वक्ष्यति ; तदुपयोगाय **घटोनुभूयत** इत्यादिकथनम् । अत्र अस्तीत्याकारिकासु । **रज्जुसर्पादिवत्** रज्जुवत्, सर्पभूदलनादिवच्चेत्यर्थः । **अनुवर्तमाना** ; अयं सर्पः, इदं भूदलनम्, इयमम्बुधारेति ज्ञानेषु इदंशब्देनोल्लिख्यमानत्वात् । ननु पटोस्तीति यत्र भवति, तत्र घटस्यापि सह सद्भावसंभवात् व्यावर्तमानत्वमसिद्धम् । किञ्च इयं रज्जुः, इयं दृढा, इयं गोबन्धनीति प्रतीतिषु व्यावर्तमानत्वात् रज्जुत्वदृढत्वादिरपरमार्थः स्यात् । रज्जुसर्पं गृहीत्वा, सर्पोयं सुदीर्घः, सर्पोयं भयङ्करः इत्येवमनुवर्तमानत्वाच्च रज्जुसर्पः सत्यः स्यात् । अतः सत्यत्वे प्रयोजकमबाधितत्वम्, असत्यत्वे प्रयोजकञ्च बाधितत्वमिति, सत् परमार्थः अनुवर्तमानत्वादित्यत्राबाधितत्वमुपाधिः; घटादयोऽपरमार्थाः व्यावर्तमानत्वादित्यत्र च बाधितत्वमुपाधिरिति सिद्धान्ती शंकते **ननुचेति** । **रज्जुसर्पादौ**-रज्ज्वादौ सर्पादौ च । रज्ज्वाद्यधिष्ठानेति ; रज्ज्वादिरूपाधिष्ठानेत्यर्थः । व्यावर्तमानत्वरूपहेतुस्वरूपशोधने तदपि सिद्ध्यति, तेन सह बाधितत्वमपि सेत्स्यतीति न तस्योपाधित्वमिति वक्तुमाह **उच्यत इति** ।

पटोऽस्तीत्यत्र सह घटस्यापि संभवात् व्यावर्तमानत्वमसिद्धमित्युक्तम्-तन्न; त्वयापि, **न व्यावर्तमानत्वादिति** तदिष्टेः, पटोऽस्ति, कटोऽस्ति इत्यादिप्रतीतौ घटव्यावृत्तेरनुभूयमानत्वाच्चेत्याह **घटादौ दृष्टा व्यावृत्तिरिति** वाक्येन । **व्यावृत्तिः** पटादिव्यावृत्तिः घटादिनिष्ठा दृष्टेत्यर्थः; पूर्वानुसारात् । अथवा घटादौ गृह्यमाणे, घटोस्तीत्यादिप्रतीतौ पटादिगता व्यावृत्तिर्दृष्टेत्यर्थः ; उत्तरानुसारात् ॥ मास्तु स्वरूपासिद्धिः; सोपाधिकत्वात् व्याप्यत्वासिद्धिरित्युक्तं परिहरति **सेत्यादिना** । **किंरूपा**; भ्रान्तिसिद्धा वा प्रामाणिकी वेत्यर्थः । किञ्चित्प्रतीत्यविषयत्वादिरूपा वा अभावप्रतियोगित्वरूपा वेति वाऽर्थः । अस्ति हि तद्व्यावृत्तिः तदवृत्तित्वम्, तदविषयत्वम्, तदविषयकप्रतीतिविषयत्वमित्येवमनेकप्रकारा । **किमित्यादिना** स्वीकर्तव्यरूपप्रदर्शनम् । **किमित्यस्य** चेदित्यर्थे पर्यवसानम् । एवं वा—विवेचनीयमित्युक्त्वा, किं तद्रूपम्, ब्रूहीति पृच्छति **किमिति** । एवमेव वक्तव्यमित्याह **घटोऽस्तीत्यत्रे**त्यादिना । अयं भावः—व्यावृत्तिर्भ्रान्तिसिद्धेत्यत्र न किञ्चित् प्रमाणम् । यत्किञ्चित्प्रतीत्यविषयत्वम् व्यावर्तमानत्वमित्युक्तौ रज्ज्वादेरपि तत्सत्त्वात् अपारमार्थ्यं स्यात् । किञ्च घटपटादेर्मिथोविरोधित्वात् सर्पभूदलनादितुल्यत्वं युक्तम्; सतश्च रज्जुतुल्यत्वमिति ते प्रष्टुराशयः । अतो

पटाद्यभावः ? सिद्धं तर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम् । अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः । सा व्यावर्तमानानामपारमार्थ्यं साधयति । रज्जुवत् सन्मात्रमबाधितमनुवर्तते । तस्मात् सन्मात्रातिरेकि सर्वमपरमार्थः ॥

प्रयोगश्च भवति—सत् परमार्थः, अनुवर्तमानत्वात्, रज्जुसर्पादौ रज्ज्वादिवत्; घटादयोऽपरमार्थाः, व्यावर्तमानत्वात्, रज्ज्वाद्यधिष्ठानसर्पादिवत्—इति । एवं सति अनुवर्तमानाऽनुभूतिरेव परमार्थः ॥ ३८

सैव सती । ननु च—सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम् ॥ नैवम् । भेदो हि प्रत्यक्षाविषयत्वात् दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः । अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति । तस्मात् सत् अनुभूतिरेव ।

सा च स्वतस्सिद्धा, अनुभूतित्वात् । अन्यतस्सिद्धौ घटादिवत् अननुभूतित्व-

---

घटोऽस्तीति प्रतीतिविषये पटादेर्व्यावृत्तिः पटादितादात्म्याभाव एव । स च वास्तवः । अन्यथा हि घटः पटः स्यादिति विवेचयाम इति । तर्हि व्यावृत्तेरेतद्रूपत्वे । **सिद्धं बाधितत्वम्**—उपाधिरयं पक्षेऽस्त्येवेत्यर्थः । **बाधफलभूता** बाधेन सिद्ध्यन्ती; बाधितत्वाविनाभूतेति यावत् । **विषयनिवृत्तिः** विषयतादात्म्याभावः । अयं भावः—घटादयः सन्मात्रे कल्पिताः सद्विषयककिञ्चित्प्रतीतिविशेष्यत्वे सति तद्विषयककिञ्चित्प्रतीतिविषयव्यावृत्तत्वात् । यत् यद्विषयकत्वघटितप्रकृतहेतुमत्, तत् तत्र कल्पितम् यथा रज्जौ सर्प इत्यनुमानम् । प्रतीतिविषयव्यावृत्तत्वं नाम प्रतीतिविषयानुयोगिकभेदप्रतियोगित्वम्; बाधितत्वञ्चैवंरूपेण गृह्यमाणत्वम् । पूर्वोक्तदृढत्वगोबन्धनत्वादौ च प्रतीतिविशेष्यत्वरूपदलाभावान्न व्यभिचारः । एकस्यां रज्जौ दृढत्वादिसमुच्चयवत् एकस्मिन् सति घटपटादितादात्म्यसमुच्चयाभावात् इहैवं व्यावृत्तिरवश्यस्वीकार्येति ॥

**सन्मात्रातिरेकी**ति । सदभिन्नत्वेन प्रतीयमानानामपि घटादीनां कल्पितत्वावसायात् सद्भिन्नत्वमेवेति भावः । एवं निरुपाधिकत्वस्थापनसिद्धं प्रयोगद्वयं प्रदर्शयति **प्रयोगश्चे**ति । ननु सति पारमार्थ्यानुमानं सिद्धसाधनमिति चेत्—घटादयश्चेदपरमार्थाः, सदपि तथैव स्यादिति तर्कयतो वादिनः, शून्यवादिनश्च निरसितुमेवं प्रदर्शनात् । अनुवर्तमानत्वं नाम मिथोविरोध्यनेकवस्तुतादात्म्येन पृथक्पृथग् गृह्यमाणत्वम् । **एवं सति**-अनुवर्तमानत्वे पारमार्थ्यसाधके सति ।

**सैव सती**ति । अनुभूतिरेव सन्मात्रमित्यर्थः । सन्मात्रमनुभूतिभिन्नं अनुभूतिविषयत्वादित्यनुमाने साध्याभावं हेत्वभावञ्च क्रमेण वाक्यद्वयेनाह **भेदो ही**ति, **अतएवे**ति च ।

शास्त्रवत् प्रत्यक्षमप्यद्वैतवस्तुविषयकमिति वक्तुं सन्मात्रग्राहित्वमुक्तम् । तद्वत् अनुभूतिग्राहित्वस्यापि सत्त्वात् द्वैतमेवेति शङ्कायाम्, सदनुभूत्योरैक्यं स्थापितम् । एवमपि, मेयस्य मानाधीनसिद्धिकत्वात् भेद एष्टव्यः; अतः अनुभूतिसाधकानुभवान्तरापेक्षायां पुनर्द्वैतप्रसंग इत्यत्र मानान्तरं विनैव तत्सिद्धिमाह **सा चे**ति । **स्वतःसिद्धा** स्वयंप्रकाशा अनुभूतित्वादिति व्यतिरे-

प्रसङ्गः । किञ्च अनुभवापेक्षा चानुभूतेर्न शक्या कल्पयितुम्, सत्तयैव प्रकाशमानत्वात् । न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाऽभ्युपगम्येत ।

अथैवं मनुषे—उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते 'घटोऽनुभूयते' इति- न हि कश्चित् 'घटोऽयम्' इति जानन् तदानीमेव अविषयभूताम् अनिदम्भावाम् अनुभूतिमप्यनुभवति । तस्मात् घटादिप्रकाशनिष्पत्तौ चक्षुरादिकरणसन्निकर्षवत् अनुभूतेः सद्भाव एव हेतुः । तदनन्तरम् अर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते ॥ 'एवं तर्ह्यनुभूतेरजडाया अर्थवत् जडत्वमापद्यत' इति चेत्—किमिदमजडत्वं नाम ? न

---

क्यनुमानमिदम् । अनुकूलतर्कमुखेनोपरि तदुपपादनम् । **येन**; अप्रकाशमानत्वे सति हीत्यर्थः ।

ज्ञानं ज्ञातताlिङ्गकानुमानगम्यमिति वदन् भाट्टः स्वयम्प्रकाशत्वमाक्षिपति । **अथेति । घटोनुभूयत** इति । न हि घटानुभवोऽनुभूयत इति वदतीति भावः । ननु घटोनुभूयत इत्युक्त्या घटस्यानुभवस्य चोल्लेखात् उभयमेवानुभूतमस्त्वित्याशंकायाम्, घटोऽयमित्येवानुभवः संप्रतिपन्न इति दर्शयति **नहीति** । एतद्वाक्येऽपि **घटोनुभूयत इतीत्यस्यानुषङ्गः** घटोनुभूयत इति न हि प्रथमज्ञानाकार इत्यर्थः । **घटोऽयमितीति** । न ह्यनुभूतिः घटो वा इदमर्थो वा भवति । **इदम्भावः** पुरोवर्तित्वम् ; तद्रहिता हि अनुभूतिः । **तदानीमेवे**त्यनेन, मानान्तरेण अनुभूतेर्ग्रहणात् पश्चादेव घटोनुभूयत इति कामं भवेदिति ज्ञाप्यते । **अनुभूयते** इति वर्तमाननिर्देशस्तदा स्थूलकालविवक्षया । ननु अनुभूतिः स्वयं गृह्यमाणैव परप्रकाशिका प्रकाशकत्वात् आलोकादिवत् इत्यत्राह— **तस्मादिति** । इन्द्रियं तत्संनिकर्षश्च स्वयमज्ञायमानतयैव प्रकाशके इति स हेतुरनैकान्तिक इति भावः । एतावदुक्तं भाट्ट-तार्किक-मुरारिमिश्रादिसाधारणम् । अथ भाट्टः अनुभूतिग्राहकप्रमाणमनुमानमित्याह **तदनन्तरमिति** । **कादाचित्केति** । चक्षुस्संनिकर्षात् घटानुभूतौ जातायां घटे ज्ञातता उत्पद्यते । अत एवाह घटो ज्ञात इति । सैव ज्ञातता प्रकाश इति प्राकट्यमिति च व्यपदिश्यते । अथ ज्ञाततेयं कारणजन्या कादाचित्कत्वादित्यनुमाने सति तत्तज्ज्ञातता तत्तत्पुरुषमात्रग्राह्यत्वात् तत्तत्पुरुषसमवेतगुणजन्येत्यनुमीयते इत्यनुभूतेरनुमानमूलैव सिद्धिरिति । **प्रकाशातिशयेति । प्रकाशः** प्राकट्यम्, ज्ञातता ; स एवा**तिशयः** विशेषः । **एवं तर्हि**-स्वयम्प्रकाशत्वाभावे, ज्ञानान्तरवेद्यत्वे । **किमिद**मिति । स्वयम्प्रकाशत्वमजडत्वमितीदमप्रसिद्धम् । जडत्वं ज्ञानानाश्रयत्वमिति लोकप्रसिद्धम् । तत् अनुभूतौ घटादाविव सर्वेष्टमेवेति भावः । ननु यावत्क्षणमस्ति, तावत्क्षणमपि प्रकाशमानत्वमजडत्वम् । तत् अनुभूतेः पश्चादनुमेयत्वाङ्गीकारे न स्यादिति शंकां परिहरति **न तावदिति । ताव**दित्यवधारणे ; न प्राथम्ये ; पक्षान्तरोल्लेखस्यास्पष्टत्वात् । यदीदमनुभूतौ स्वीक्रियते, सुखदुःखयोरपि स्वीकर्तव्यम् ; अनुभवार्थमेव तदुत्पादनात् । सुखदुःखे च ज्ञानेनैव प्रकाशेते, न तु स्वयम् । अवश्यानुभाव्यस्य सुखादेरेव जडत्वे, अनुभूतौ तदिष्टौ को दोषः ? नन्वनुभवकाले सुखमस्तीत्येव प्रतिपत्तव्यम् ; पूर्वमपि कञ्चित्कालमननुभूतमस्तु ; किं तेनेति चेत्—तर्हि अनुभूता-

तावत् स्वसत्तायाः प्रकाशाव्यभिचारः; सुखादिष्वपि तत्सम्भवात्; न हि कदाचिदपि सुखादयः सन्तः नोपलभ्यन्ते। अतोऽनुभूतिः स्वयमेव नानुभूयते; अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवत् अशक्यत्वादिति—

तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम्; अनुभूतिव्यतिरेकिणो (रेकेण) विषयधर्मस्य प्रकाशस्य रूपादिवत् अनुपलब्धेः; उभयाभ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यधर्मकल्पनानुपपत्तेश्च। अतो नानुभूतिरनुमीयते; नापि ज्ञानान्तर सिद्धा। अपि तु सर्वं साधयन्ती अनुभूतिः स्वयमेव सिध्यति।

प्रयोगश्च—अनुभूतिरनन्याधीनस्वधर्मव्यवहारा; स्वसम्बन्धादर्थान्तरे तद्धर्म-

---

वप्येवमस्त्वित्याशयेनाह **सुखादिष्विति**। सत्त्वादित्यनुक्त्वा **संभवादि**त्युक्त्या प्रत्यक्षे विषयस्य कारणतया सुखादिकमपि न प्रथमक्षणे उपलभ्यते इति स्वपक्षो द्योत्यते। अद्वैतिमते तु सुखादेः, सर्वासां वृत्तीनाम्, प्रातिभासिकरजतादीनाञ्च जडानामेव यावत्सत्त्वं प्रकाशमानत्वमस्तीति नेदं लक्षण मिति भावः। एवञ्च सत्तयैवप्रकाशमानत्वरूपपूर्वोक्तहेतोर्दुष्टतया अनुभवस्यानुभवान्तरवेद्यत्वमेवेति पूर्वोक्तं स्वतःसिद्धत्वरूपं साध्यं दुःसाधमित्याह **अत** इति। बाधकहेतुमप्याह **अर्थेति**। **स्वात्मस्पर्शवत्**—स्वस्पर्शवत्। न स्वेन स्वमेव स्पृश्यत इति भावः। यथोक्तम्—"अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति। स्वांशेन ज्ञानमप्येवं नात्मानं स्प्रष्टुमर्हति॥" इति। अनुभूतिः न स्वकर्तृकस्पर्शकर्म कर्तृत्वात् अंगुल्यग्रवदिति।

एवं भाट्टोक्तं क्षिपति **तदिति**। अनुभवस्य **विभवः** इतरनिरपेक्षं प्रकाशमानत्वम्। **प्रकाशस्य** ज्ञाततायाः। घटो ज्ञात इत्यस्य घटो ज्ञानविषय इत्येवार्थः। अतः अनुभूतिरेव ज्ञानं प्रतीयते, न तु ज्ञाततेत्यपूर्वो धर्म इति। **अनुपलब्धेरिति**। ज्ञाततां चक्षुरादिना पश्यामीति रूपादिवत् बाह्यग्रहणाभावादित्यर्थः। **अनुपपत्तेश्चेति**। घटः कृतः, अन्नं भुक्तमित्यादावपि कृति-भोजनादि धात्वर्थातिरिक्तस्य विषये कल्पनप्रसंगादिति भावः।

मा भूदनुमानगम्यत्वम्; सुखादिवत् मानसप्रत्यक्षविषयोऽस्तु इति तार्किकस्य मीमांसकमुरारिमिश्रस्य च मतं निरस्यति **नापीति**। अनुभूतिग्राहकज्ञानस्यानुभूत्यतिरिक्तत्वानुपलब्धेः कल्पनागौरवाच्चेति हेतुविवक्षया **अत** इत्यनुषञ्जनीयम्। तर्हि सुखादिकमपि स्वयम्प्रकाशमस्तु इत्यत्राह **अपि-त्विति**। **सर्वं साधयन्तीति** हेतुगर्भविशेषणम्। परप्रकाशकत्वात् स्वयमेव प्रकाशत इति भावः।

पूर्वं स्वतस्सिद्धत्वानुमानस्यान्येन दूषितत्वात संप्रति तदेवानुमानप्रयोगेण दर्शयति **प्रयोगश्चेति**। धर्मश्च व्यवहारश्च धर्मव्यवहारौ; स्वौ धर्मव्यवहारौ यस्या अनन्याधीनौ सा। धर्मपदेन ज्ञातता विवक्ष्यते। यद्यपि वेदान्ती ज्ञाततां नेच्छति, अथापि तत्स्वीकारेपि अनुभूतिर्घट इव स्वस्मिन्नपि स्वयमेव ज्ञाततामुत्पादयेदिति ज्ञापनायेदम्। ज्ञाततायाः अनुभूत्यनुमापकत्वं खण्डितम्। अथापि घटं जानातीत्यादौ घटस्य क्रियाजन्यफलशालित्वरूपकर्मत्वरक्षणाय तत्स्वीकाराभिमानमाट्ट-

त्यैवमुक्तिः। वस्तुतस्तदस्वीकारसूचनायैव धर्मेति विहाय व्यवहारघटितानुमाननिर्देशः। अनुभूतिः स्वसंबन्धात् घटे ज्ञातताख्यं धर्मं जनयति, अतः स्वस्मिन्नपि स धर्मः स्वमात्राधीन इति धर्मघटितानुमाने समन्वयः। अनुभूतिः स्वसंबन्धात् घटे तद्व्यवहारमिव स्वस्मिन् स्वव्यवहारमपि करोति; घटमनुभवामीति घटतदनुभवोभयविषयव्यवहार एव जायत इति व्यवहारघटितानुमाने समन्वयः। अत्र धर्ममात्रस्य साध्यत्वे अनुभूतित्वादिधर्ममादायार्थान्तरात् विवक्षितासिद्धिः। अतोऽनन्याधीनत्वविशेषणम्। अनुभूतित्वस्य अनुभूतिसामग्र्यधीनत्वात् तद्वारणम्। अनन्याधीनधर्मेत्युक्तौ घटगतज्ञाततायाः अनुभूत्यन्यानधीनायाः ग्रहणेन स एव दोष इति स्वेति। स धर्मः नानुभूतिगतः।

अत्र रूपादिः दृष्टान्तः। रूपं घटगतं घटे स्वसंबन्धवशात् चाक्षुषत्वं जनयति; स्वस्य चाक्षुषत्वमपि स्वयमेव जनयति। घटे रूपसमवायरूपसंबन्धस्येव रूपस्य चाक्षुषत्वाय रूपे रूपसमवायो हि नापेक्षितः। एवं स्पर्शेऽपि त्वाचप्रत्यक्षविषयत्वजननं द्रष्टव्यम्। रूपगतस्य चाक्षुषत्वस्य चक्षुरधीनत्वात् कथमनन्याधीनत्वमिति चेत्—अनन्याधीनत्वं नाम स्वसजातीयानधीनत्वमेव; चक्षुरपेक्षत्वेपि अनुभूतिसजातीयमनुभूत्यन्तरं नापेक्षितमिति न साध्यवैकल्यम्। नन्वेवमनुभूतौ अनुभूत्यन्तरानधीनानुभूतित्वरूपधर्ममादाय सिद्धसाधनमिति चेत्—स्वधर्मेत्यस्य हेतुघटकधर्मसजातीयधर्मेत्यर्थः। हेतौ तद्धर्मपदेन प्राकट्यस्य ग्रहणादत्रापि तदेव ग्राह्यमिति। तथाच स्वसजातीयपदार्थानधीन-किञ्चिद्धर्मसजातीयधर्मवती, स्वसंबन्धादर्थान्तरे तद्धर्महेतुत्वादित्यनुमानम्। हेतौ तत्पदेन साध्यघटक किञ्चिद्धर्मपदोक्तं गृह्यते। हेतुघटकदलकृत्यं तु—हेतुत्वमात्रोक्तौ सर्वत्र मृदादावपि घटादिहेतुत्वसत्त्वात् साध्याभावाद् व्यभिचारः स्यात्। अनुभूतावपि ज्ञानत्वरूपधर्मसजातीयानुभूतित्वादिधर्ममादायार्थान्तरं स्यात्। अतस्तद्धर्महेतुत्वमुक्तम्। वृक्षः स्वस्मिन् अङ्कुरादिहेतुः; तस्यानन्याधीनमङ्कुरादिमत्त्वसजातीयं धर्मान्तरं नास्तीति व्यभिचारात् अर्थान्तर इत्युक्तम्। तत्र स्वस्मिन्नेव तद्धेतुत्वमिति न दोषः। पिता पुत्रे पुत्रत्वहेतुः; स्वगतपुत्रत्वं तु तस्य स्वपित्रधीनमिति अनन्याधीनत्वाभावाद् व्यभिचारः; अतः स्वसंबन्धादित्युक्तम्। न हि पुत्रजननानन्तरं तेन सह संयोगादिसंबन्धवशात् पिता पुत्रत्वं जनयति। अतो न तत्र हेतुरिति न व्यभिचारः। संबन्धपदेन तादात्म्यं न ग्राह्यमिति स्पष्टत्वाय अर्थान्तर इत्युक्तम्। नन्वग्निर्घटादौ स्वसंबन्धात् पाकजरूपरसादि जनयति; न तस्य स्वस्मिन् रूपादिधर्मवत्त्वमिति व्यभिचार इति चेत्—अनुभूतिः स्वसजातीयनिरपेक्षतद्धर्मवती स्वसंबन्धादर्थान्तरे स्वगतधर्मसजातीयधर्महेतुत्वादिति परिष्करणात्। साध्ये तद्धर्मपदम्, स्वगतधर्मेति हेतुघटकधर्मपरम्। अग्नेश्च न स्वपदेन ग्रहणम्, स्वगतपाकजधर्माप्रसिद्धेरिति न व्यभिचारः। अनुभूतिः सजातीयनिरपेक्षव्यवहारविषयः स्वसंबन्धप्रयोज्य-स्वभिन्नार्थविषयकव्यवहारकत्वादिति व्यवहारानुमानम्। अत्र हेतुत्वादिति वा पदार्थत्वादिति वा हेतुरलम्; आत्मसिद्ध्यनुसारात्। विस्तरः टीकातत्त्वटीकादौ। अनुभूतिप्राकट्यं स्वाश्रयसजातीयानपेक्षं स्वाश्रयोत्पाद्यस्वाश्रयभिन्ननिष्ठधर्मसजातीयत्वात् रूपादिगतचाक्षुषत्वादिवत्, अनुभूतिविषयकव्यवहारः स्वविषयानु-

व्यवहारहेतुत्वात् । यः स्वसम्बन्धादर्थान्तरे यद्धर्म-व्यवहारहेतुः, स तयोः स्वस्मिन्अनन्याधीनो दृष्टः; यथा रूपादिश्चाक्षुषत्वादौ । रूपादिर्हि पृथिव्यादौ स्वसम्बन्धात् चाक्षुषत्वादि जनयन्, स्वस्मिन्न रूपादिसम्बन्धाधीनश्चाक्षुषत्वादौ । अतोऽनुभूतिः आत्मनः प्रकाशमानत्वे प्रकाशत इति व्यवहारे च स्वयमेव हेतुः ।

सेयं स्वयंप्रकाशाऽनुभूतिर्नित्या च; प्रागभावाद्यभावात् । तदभावश्च स्वतस्सिद्धत्वादेव । न ह्यनुभूतेः स्वतस्सिद्धायाः प्रागभावः स्वतोऽन्यतो वाऽवगन्तुं शक्यते । अनुभूतिः स्वाभावमवगमयन्ती, सती तावन्नावगमयति । तस्याः सत्त्वे विरोधादेव तदभावो नास्तीति, कथं सा स्वाभावमवगमयति ? । एवमसत्यपि नावगमयति; अनुभूतिः स्वयमसती स्वाभावे कथं प्रमाणं भवेत् ? । नाप्यन्यतोऽवगन्तुं शक्यते; अनुभूतेरनन्यगोचरत्वात् । अस्याः प्रागभावं साधयत् प्रमाणम् अनुभूतिम्, 'इयम्' इति ('अनुभूतिरियम्' इति) विषयीकृत्य तदभावं साधयेत् । स्वतस्सिद्धत्वेन इयमिति विषयीकारानर्हत्वात् न तत्प्रागभावोऽन्यतः शक्यावगमः । अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तुमित्यु-

---

भूतिसजातीयनिरपेक्षः स्वविषयो(यानुभूत्यु)त्पाद्य-स्वविषयभिन्न(घटादि) विषयकव्यवहारसजातीयत्वादित्यादि च भाव्यम् ॥

अत्र विशेषव्याप्त्ययोगात् सामान्यमुखीं व्याप्तिमाह य इति । आत्मनः स्वस्य । प्रकाशमानत्वे प्राकट्ये । प्रकाशत इति व्यवहारे चेति व्यवहारघटितानुमानसमन्वयाय । ननु प्रकाशत इत्यस्य प्राकट्यवदिति नार्थः । तदनङ्गीकार एवैतदनुमानप्रवृत्तेः; किं तु व्यवहारानुगुणीभवतीत्यर्थः । तथाच घटानुभूतिमात्रं घटः प्रकाशत इति व्यवहारकारणं न भवति, किंतु घटो व्यवहारानुगुण इत्यनुभूतिरेव । तथा अनुभूतिः प्रकाशत इति व्यवहारे चानुभूतिगतव्यवहारानुगुण्यविषयकानुभूतिरेव कारणम्, न घटानुभूतिमात्रमिति कथं स्वसजातीयनिरपेक्षत्वमिति चेत्—प्रकाशत इति व्यवहारे इत्यस्य, घटो मे प्रकाशते, घटोनुभूयते, घटं जानामीति व्यवहारे इत्यर्थः । तत्र घटव्यवहारांशे स्वव्यवहारांशे च अनुभूतेः कारणत्वात् । हेतुसमन्वयाय घट इति घटादिविषयकव्यवहारः, साध्यसमन्वयाय प्रकाशते इति अनुभूतिविषयकव्यवहारश्च ग्राह्य इत्यलम् । स्वयमेवेति । अत्र स्वप्रकाशत्वस्य परप्रकाश्यत्वस्य चास्माभिरनुमताविष्टतया अन्याधीनस्वव्यवहारवत् अनन्याधीनोऽपि व्यवहारोऽस्तीति नानुपपत्तिः । अद्वैतिमते परप्रकाश्यत्वं कदापि नैवेष्टम्, तदा अन्याधीनस्वव्यवहारा न भवतीत्यर्थोऽपि स्यात् ॥ स्वात्मस्पर्शः कथमिति चात्र समाहितप्रायम्; स्वस्पर्शं विनैव स्वव्यवहारकारणत्वमात्रस्येष्टत्वात् ।

अथानुभूतेर्नित्यत्वं साधयति सेति । सेयं स्वयंप्रकाशा परमार्थत्व-सन्मात्रत्व-स्वयम्प्रकाशत्ववती । आदिना ध्वंसग्रहः । नित्या पूर्वोत्तरावधिरहिता; उत्पत्त्यादिषड्भावविकाररहितेति वा; उत्पत्तिरहितेत्येव वा; उत्तरानुसारात् । ध्वंसाभावस्याप्युत्पत्त्यभावसाधकत्वं संभवति । इतरविकार-

त्पत्तिप्रति[सं]बद्धाश्चान्येऽपि भावविकारास्तस्या न सन्ति ।

अनुत्पन्नेयमनुभूतिः आत्मनि नानात्वमपि न सहते ; व्यापकविरुद्धोपलब्धेः । न ह्यनुत्पन्नं नानाभूतं दृष्टम् । भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न सम्भवति । अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्याः धर्मः । यतो निर्धूतनिखिलभेदा संवित्, अत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्रकाशरूपा सैवाऽऽत्मा ; अजडत्वाच्च । अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानम्, अनात्मत्वमपि संविदो व्यावर्तयति ॥

---

राहित्यं तूत्पत्त्यभावहेतुना साधयिष्यते । **उत्पत्तिप्रतिबद्धा** इति । **प्रतिबन्धो** व्याप्तिः । उत्पत्तिव्याप्या इत्यर्थः । **भावविकाराः**—परिणामवृद्धिक्षयादयः । **तदभावः** प्रागभावादेरभावः । **अन्यतः** ज्ञानान्तरेण । **अनुभूतिरिति** । अनुभूतिकाले प्रागभावाद्यभावात् प्रागभावादिकाले चानुभूत्यभावात् स्वतो न तद्ग्रहणमिति भावः । प्रमाणं ज्ञानम् ।

अथानुभूतेरनानात्वं साधयति **अनुत्पन्नेति** । **व्यापकविरुद्धोपलब्धेः**—नानात्वव्यापकमुत्पन्नत्वम् ; तद्विरुद्धश्चोत्पत्त्यभावः ; तस्य साधितत्वादित्यर्थः । **न हीति** । यत्रानुत्पन्नत्वम्, तत्र न नानात्वमिति अन्वयव्याप्तिपरं न भवतीदं वाक्यम्; अनुभूत्यतिरिक्तानुत्पन्नवस्त्वभावात् व्याप्तिग्रहणासंभवात् । अतः, न हि नानाभूतमनुत्पन्नं दृष्टमिति योजना । यत्र नानात्वम्, तत्रोत्पन्नत्वमिति व्यतिरेकव्याप्तिः । नानात्वपक्षकानुमानेन पुनः साधयति **भेदेति** । नानात्वेत्यर्थः । अत्रानुभाव्यत्वादिति हेतुः । अन्वयव्याप्तिरिह । ननु नित्यत्वस्वयंप्रकाशत्वादीनामिदानीमनुमिततया अनुभाव्यानामेषामनुभूतिधर्मत्वाद् व्यभिचार इत्यत्राह **अत** इति । अनुभूतिर्न परमार्थतो नित्यत्वादिधर्मवती अनुभवस्वरूपत्वादित्यनुमाने अन्वयव्याप्तेर्व्यतिरेकव्याप्तेर्वा दुर्वचत्वात् नित्यत्वादयो नानुभूतिधर्माः अनुभाव्यत्वादित्यन्वय्यनुमानं ग्राह्यमिति सूचनाय **अन्योपि कश्चिदिति** शैल्यन्तरादरणम् । नन्वनुभाव्यसंबन्धस्यायोगेपि अनुभूतेराश्रयः सुवचः, अनुभूतिवत् तस्यापि स्वयम्प्रकाशतया ज्ञानान्तरमनपेक्ष्य अहं जानामीति द्वयस्यापि भानसंभवादित्यत्र तमपि निरस्यति **यत** इति । भेदस्य दुर्निरूपत्वं हि प्रागुक्तमेवेति भावः । तर्ह्यात्मनोऽस्वीकारे बन्धमोक्षौ कस्येत्यत्राह **इति स्वप्रकाशेति** । इतीत्यन्तेन निर्भेदत्वहेतुरात्मत्वसाधक उक्तः । स्वप्रकाशत्वरूपं हेत्वन्तरमभिप्रेत्य **स्वेत्यादि** । **स्वप्रकाशत्वं** स्वाधीनस्वव्यवहारकत्वम् । हेत्वन्तरञ्चाह **अजडत्वाच्चेति** । अजडत्वं अन्याधीन प्रकाशराहित्यम् । व्यतिरेकव्याप्तिरिह सर्वत्र । **व्याप्तमिति** कर्तरिक्तप्रत्ययः, व्यापकमित्यर्थः ।

नन्वात्मा ज्ञातेति सर्वलोकप्रसिद्धं नापलपनीयम् । अद्वैतमतेऽप्येवं युक्तं स्वीकर्तुम्—घटोऽनुभूयत इत्येवमनुवर्तमानत्वाद्धि अनुभूतिः परमार्थ इत्युक्तम् । घटो मयाऽनुभूयते, घटमहं जानामीति अहमर्थानुवृत्तेरप्यानुभविकतया अहमर्थ एव परमार्थ इत्यस्तु । एवञ्च लोकप्रसिद्धात्मस्वीकारः, आत्मनि अबाध्यं ज्ञातृत्वञ्चेति महान् गुणः । निर्भेदत्वादियुक्त्या घटादीनामिवानुभूतीनामपि

ननु च अहं जानामीति ज्ञातृता प्रतीतिसिद्धा ॥

नैवम्; सा भ्रान्तिसिद्धा, रजततेव शुक्तिशकलस्य; अनुभूतेः स्वात्मनि कर्तृत्वायोगात्। अतो मनुष्योऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवत् ज्ञातृत्वमप्यध्यस्तम्। ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम्। तच्च विक्रियात्मकं जडं विकारि-

---

निषेधात् अहमर्थमात्रस्वीकाराच्च नाद्वैतहानिः। एवं हि व्यवहारकाले ज्ञातृत्वमबाध्यं तन्मतेपि स्थास्यतीति कश्चित् शङ्कते ननु चेति। एवमेतत्पङ्क्त्यवतरणाच्च—'निर्भेदत्वादियुक्त्या सर्वापारमार्थ्ये कथिते कथं ज्ञातृत्वादिसत्यत्वविषयकशंका? तर्केण बाधेऽपि प्रत्यक्षप्रसिद्धं न त्याज्यं चेत्, जगदसत्यत्वमपि न त्याज्यं स्यादिति क इह विशेष' इति शङ्काया नावकाशः। रजततेव शुक्तिशकलस्येति समाधानवाक्यञ्च व्यावहारिकसत्यतयापि वा ज्ञातृत्वं स्वीकार्यमिति पूर्वपक्षं द्योतयति। अत एव प्रमितिसिद्धेत्यनुक्त्वा प्रतीतिसिद्धेत्याह। प्रतीतिसिद्धेत्यस्य सर्वलोकप्रसिद्धिसिद्धेत्येवार्थः; अथापि कदाचिद्बाध्यतापि सूच्यते। तेन—कामं ब्रह्मज्ञानबाध्यत्वमस्तु; तावत्कालाबाध्या तु ज्ञातृता स्वीकार्येत्यभिसंधिरिति।

अहमर्थात्मवादं परित्यज्य अनुभूत्यात्मवादी अद्वैती प्रत्याह नैवमिति। अनुभूतेरिति। सत्यमहमर्थस्यानुवृत्तिरस्ति। अथापि तस्यात्मत्वे स्वयम्प्रकाशत्वादनुभूतित्वमेष्टव्यम्। एवञ्चानुभूत्यन्तरकल्पने मानाभावात् तस्या एवानुभूतेर्विषयग्राहित्वादिकं स्वीकर्तव्यम्। एवञ्च अहं जानामीत्यस्य, अहमर्थभूतानुभूतिः विषयग्राह्यनुभूत्यात्मकस्वकर्त्री इत्यर्थः आपतति। न च स्वस्य स्वकर्तृत्वं घटते। अतो भ्रान्तिरेव त्वयाप्येष्टव्या। अतः त्वद्रीत्यापि—अहमर्थो नानुभूतिः, अननुभूतितया स्वयम्प्रकाशत्वाभावाच्चाहमर्थो नात्मेति सिद्ध्यतीति। नन्वेवमात्मनि ज्ञातृत्वाभावविवेके सत्यपि अहं जानामीति प्रत्ययः कथमनुवर्तत इत्यत्र समुचितदृष्टान्तप्रदर्शनपूर्वकं ज्ञातृत्वस्य प्रातिभासिकत्वं निगमयति अत इति। अत्यन्तबहिर्भूतेति। देहो बाह्यः; अहङ्कार आन्तरः आत्मसंनिकृष्टः। देहो नात्मेति विवेकोऽतिविशदः। तस्मिन् सत्यपि पिण्डात्माभिमानरूपवासनावशात् आत्मनि मनुष्यत्वादिभ्रान्तिरनुवर्तते। तद्वत् अहमर्थात्माभिमानवशात आत्मनि ज्ञातृत्वाध्यासः। अत्यन्तबहिर्भूतविषयभ्रान्तिरेव चेन्नापैति, इयं कथमपेयादिति भावः। मनुष्यत्वादीति विशेषणकथनं मनुष्यत्वादिकमध्यस्यत इति ज्ञापनाय। आदिना स्थौल्यादिग्रहः। अभिमानस्तत्र कारणतयोक्तः। अभिमानवदिति। अभिमानस्याध्यस्तत्वाभावात् कथं वतिप्रत्यय इति चेत्—अभिमाने इवेति सप्तम्यन्ताद्वतिः। अहमर्थात्माभिमानो दार्ष्टान्तिकः। ज्ञातृत्वमपीत्यपिना मनुष्यत्वादिसमुच्चयः। ननु रजतत्ववत् ज्ञातृत्वस्य कचित् प्रसिद्धत्वे ह्यध्यासः स्यात। ज्ञातृत्वं हि अनुभूतिकर्तृत्वम्। तच्च शशविषाणायमानमिति प्राक् ज्ञापितमित्यत्राह ज्ञातृत्वं हीति। तदप्रसिद्धावपि ज्ञानक्रियाकर्तृत्वं प्रसिद्धमिति भावः। तर्हि तत् मदुक्ताहमर्थात्मनि कल्पनां विनैवास्त्वित्यत्राह तच्चेति। तदाधारत्वमनात्मन एव; न त्वात्मन इति भावः।

द्रव्याहंकारग्रन्थिस्थम् अविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव संभवति ? दृश्यधीन-सिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम्। सुषुप्तिमूर्च्छादावहंप्रत्ययापायेऽप्यात्मानुभवदर्शनेन नाऽऽत्मनोऽहंप्रत्ययगोचरत्वम्। कर्तृत्वेऽहंप्रत्ययगोचरत्वे चाऽऽत्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः। अहंप्रत्ययगोचरात् कर्तृतया प्रसिद्धात् देहात् तत्क्रियाफलस्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव; तथाऽहमर्थात् ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम्।

---

अथ सिद्धान्ते करिष्यमाणानुवादानुसारेण **सा भ्रान्तिसिद्धे**त्यादेरेवमर्थोऽस्तु-**सा भ्रान्तिसिद्धा**—अहं जानामीति ज्ञाधातूक्तायामनुभूतौ अहमर्थाहङ्काराध्यासः। अहंशब्दस्य च ज्ञातेत्यर्थः। एवञ्च इदं रजतमित्यत्र रजततेव ज्ञातृत्वमध्यस्तम्। **मनुष्यत्वादी**ति। मनुष्योहमित्यादौ आत्मनि मनुष्यत्वस्थूलत्वाद्यध्यासवत् अहं जानामीत्यत्र ज्ञाधात्वर्थतया प्रागुक्तनिर्विशेषात्मनि ज्ञान-क्रियाकर्तृत्वरूपज्ञातृत्वाश्रयभूताहमर्थात्माभिमानकृतः तादृशज्ञातृत्वाध्यास इत्यर्थः। अहंकारपदेन न गर्वग्रहणमिति ज्ञापनाय **विकारिद्रव्ये**ति। **ग्रन्थिः** दुर्मोचग्रथनं वस्तु। रागद्वेषादयो ग्रन्थिगताः। साक्षित्वं न द्रष्टृत्वम्, किंतु परप्रकाशरूपत्वमिति ज्ञापनाय **साक्षिणि चिन्मात्रात्मनी**ति। एवञ्च विक्रियात्वात् जडत्वाच्च ज्ञातृत्वं न निर्विकाराजडात्मनिष्ठमित्यर्थः। नन्वात्मनः कर्तृत्वभोक्तृत्वयोरभावे विधिनिषेधादिवैयर्थ्यम्; तत्स्वीकारे च तदर्थं ज्ञातृत्वमप्येष्टव्यमिति अहमर्थ एवात्मेत्यत्राह **दृशी**ति। दृशिः अनुभूतिः। **दृश्यधीनसिद्धित्वं** नाम प्रागुक्तमनुभाव्यत्वमेव। **कर्तृत्वादे**रिति। नेदं ज्ञानकर्तृत्वम्। अनन्तरवाक्ये देहे तदुक्तेः। अतः सर्वक्रियाकर्तृत्वम्। तत्सहचरितभोक्तृत्वाहंत्वादिरादिशब्दार्थः। नन्वनुभाव्यमात्मनि किञ्चिन्मास्तु; अहंत्वं तु स्यात्, स्वयम्प्रकाशत्वादित्यत्र तन्निषेधति **सुषुप्ती**ति। सुषुप्तौ अहंप्रत्ययापायः आत्मानुभवश्चात्रैव दर्शयिष्येते। तन्न्यायेन मूर्छा-मृति-मुक्तिष्वपि तत्स्वीकारः। न केवलमनुभाव्यत्वहेतुना, विपरीतप्रसंगभियाऽपि कर्तृत्वाहम्प्रत्ययविषयत्वे नात्मन इत्याह **कर्तृत्वे** इति। नन्वात्मनः प्रत्यक्त्वं सर्वेष्टम्। तच्च स्वस्मै भासमानत्वम्; स्वप्रकाशफलभोक्तृत्वमिति यावत्। भोक्तृत्वञ्च सर्वं पुरुषस्येति, "फलञ्च पुरुषार्थत्वात्" इति सूत्रसिद्धम्। एवं भोक्तृत्वे सति, 'शास्त्रफलं प्रयोक्तरि' इति न्यायेन कर्तृत्वमप्येष्टव्यम्। मयेदं कर्तव्यमित्यध्यवसायाच्च ज्ञातृत्वमपि सह सिद्ध्यति। एवं सर्वलोकप्रसिद्ध्यनुसारेण एषां सिद्धौ एतदात्मधर्मत्वाभावसाधकानां हेतूनामेवाभासत्वमित्यत्राह **अहम्प्रत्यये**ति। अहं कर्तेत्यनुभवो देहमादाय निरूढः। "कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते। पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इति गीतादिप्रमाणसिद्धमेतत्। एवञ्च कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्यं त्यक्तं भवति। तच्च भोक्तृत्वं ज्ञातृत्वञ्चाहङ्कारस्यैवेष्यते, नात्मनः। न च तावता प्रत्यक्त्वहानिः, अनन्यार्थतया भासमानत्वरूपस्य प्रत्यक्त्वस्याऽऽत्मन्यक्षतेरिति भावः। **भोक्तुरात्मन** इत्यत्र, "तत्संगतोऽहंकर्ता; तत्फलानुभवोऽपि तस्यैव। न चाहंकर्तैवात्मा, तत्साक्षित्वात्" इति समन्वयाधिकरणभाष्यमनु-

एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यहंकारः स्वाश्रयतया तमभिव्यनक्ति । आत्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः । दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्ब-गोत्वादिकमात्मस्थतयाऽभिव्यनक्ति । तत्कृतोऽयम्, 'जानाम्यहम्' इति भ्रमः । स्वप्रकाशायाः अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभिव्यङ्ग्यत्वमिति मा वोचः; रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वदर्शनात् । जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः ।

---

संधेयम् । प्रत्यगात्मेत्यनेन भोक्तृत्वाभावेऽपि प्रत्यक्त्वं भवितुमर्हतीति ज्ञाप्यते । एवं देहादिगतस्य पूतिकूश्माण्डायितस्याहंत्वस्य नात्मनिष्ठतेति सिद्धम् ।

नन्वेवमहङ्कारे ज्ञानक्रियाकर्तृत्वं अहं जानामीत्यनेन गृह्यते चेत्, अत्रानुभूतेर्न भानम् । अतः अनुभूत्यनुवृत्तिरिह पूर्वोक्ता न घटते । यदि वृत्तिरूपक्रियायाः जडायाः वस्तुप्रकाशकत्वाभावात् वृत्त्यवच्छिन्नचैतन्यपर्यन्तं ज्ञाधातुवाच्यम्; अतोऽनुभूत्यनुवृत्तिरित्युच्यते—तर्हि तस्य चैतन्यस्य त्वन्मते आत्मत्वात् अहंकारात्माभिमानस्य त्वदिष्टतया अहं ज्ञानमित्येव प्रतीतिः स्यात्, न तु जानामीति । चैतन्यकर्तृत्वञ्चाप्रसिद्धमिति तस्य आत्मनीवाहंकारेऽप्यसिद्धिश्चेत्यत्राह **एवमिति** । **एवं** उक्तरीत्या । **स्वरूपस्येत्य**त्रान्वयः । **जडोपी**ति व्यञ्जकत्वासंभवशंका प्रदर्श्यते; **अभिव्यञ्जक इति** वस्तुवैलक्षण्यप्रयुक्तव्यञ्जकत्वमाह। यथा सूर्यव्यञ्जकत्वं जलस्य, तद्वदिति भावः। **स्वाश्रयतयेति** बहुव्रीहिः; स्वनिष्ठतयेत्यर्थः। **खण्डः** गोविशेषः। **बिम्बशब्दः** मुखचन्द्रयोरेव बिम्बता, **न** गोत्वस्येति ज्ञापनाय। न हि दर्पणमात्रं व्यञ्जकम्, किंतु जलादिकमपि; न च प्रतिबिम्बकमेव व्यञ्जकम्, खण्डादिरन्योऽपीति प्रतिबोधयितुमेतावदुक्तिः। एवञ्च जानामीति वृत्त्यवच्छिन्नचैतन्यकथनात् तत्कर्तृत्वस्याभावेऽपि तदाश्रयत्वमहमर्थे भवतीत्युक्तम्। नन्वेतावता ज्ञातृत्वमहङ्कारे उपपादितम्; आत्मनि ज्ञातृत्वभ्रम इह कथं सिद्ध्यति? मा भूदिति चेत्—सा भ्रान्तिसिद्धेति पूर्वोक्तविरोधः; अहं ब्रह्मास्मीत्यादौ अहमित्यात्मग्रहणानुभवविरोधश्च; बन्धमोक्षयोरात्मनि उपपादनासिद्धिश्चेत्यत्राह **तत्कृत** इति। दर्पणव्यङ्ग्ये मुखे दर्पणमालिन्यमिव, अहंकारनिष्ठा ज्ञातृता तद्व्यङ्ग्ये आत्मनि भातीति सा भ्रान्तिसिद्धा। अथवा अहम्पदेनाहमर्थतयारोपितचैतन्यग्रहणे तत्राहमर्थगतज्ञातृत्वस्य भ्रान्तिरित्याशयः। **रविकरेति**। जलस्य रविप्रतिबिम्बव्यञ्जकत्वेऽपि रविव्यञ्जकत्वाभावादिदमुदाहृतम्। करतलस्य रविकरव्यंग्यत्वं प्रत्यक्षे आलोकस्य कारणत्वात्।

नन्वात्मनः प्रमाणतः साधने, 'कामं प्रथमतः तत्तद्धर्मविशिष्टतयैव सिद्धिः स्यात्, तथापि पश्चात् तेषां धर्माणां यौक्तिको वा, नेतीति शाब्दो वा बाधः' इति संभाव्यते। स्वानुभवसिद्धत्वे तु यथानुभवमेव वस्तुसिद्धिः। तत्रात्मनः अहमित्येव स्वानुभवः, नान्यथा। अत एव अहं ब्रह्मास्मीत्येव तत्त्वग्रहः। अतोऽहंत्वं दुर्निषेधम्। यदि ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वं निर्विकारे मा भूदिति तदाश्रयोऽहङ्कारोपि सह ग्राह्यः, तर्हि अहमर्थावच्छिन्नचैतन्यमेवाहंत्वविशिष्टं अहंशब्दबोध्यमिति मुक्तावपि

यतः अहं जानामीति ज्ञाताऽयमहमर्थश्चिन्मात्रात्मनो न पारमार्थिको धर्मः, अत एव सुषुप्तिमुक्त्योर्नान्वेति । तत्र ह्यहमर्थोल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेणाऽऽत्माऽवभासते । अत एव सुप्तोत्थितः कदाचित्, 'मामप्यहं न ज्ञातवान्' इति परामृशति ॥

तस्मात् परमार्थतो निरस्तसमस्तभेदविकल्प-निर्विशेषचिन्मात्रैकरसकूटस्थनित्य-संविदेव भ्रान्त्या ज्ञातृज्ञेयज्ञानरूपविविधविचित्रभेदा विवर्तत इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते इति—

तथैव स्यात्। अयञ्चाहमर्थः चैतन्यविशेषणतया तद्धर्मत्वेन व्यपदिश्यमानः पारमार्थिकः कश्चित् । एवं तर्हि अद्वैतहानिरिति चेत्—यावदाकारविशिष्टमनुभवसिद्धम्, तावदधिकनिषेधे यादृशमद्वैतम्, तादृशमेव ग्राह्यम् । अतो ज्ञातृत्वमनिच्छताऽप्यहन्त्वादि नापह्नोतुं शक्यत इत्यन्तरङ्गाक्षेपे, पूर्वं सुषुप्तिमूर्छादावहम्प्रत्ययापायेऽपीत्युक्तं विवृण्वन् तत्त्वं शोधयति **यत** इति । एवमवतरणे च न अहमर्थादिपदे लक्षणा, न वा धर्मपदानन्वयः । सिद्धान्तेऽपि, 'अहमर्थो धर्म' इत्यनुवदिष्यति । सुषुप्त्यादावहम्प्रत्ययाभावादहमर्थाभाव इति न ज्ञातुरहमर्थस्याहंत्वस्य चात्मपारमार्थिकधर्मतेति शुद्धं चिन्मात्रमेवात्मेत्यर्थः । यदि पारमर्थिकं स्यात, सुषुप्तिमुक्त्यन्वयि स्यात । "नाह खल्वयं भगव एवं संप्रत्यात्मानं जानाति अयमहमस्मीति" इति सुषुप्तौ, 'अहंकारं बलं दर्पं....विमुच्य.... ब्रह्मभूयाय कल्पते' इति मुक्तौ च तदनन्वयः कथ्यते । अत एव प्रतिसुषुप्ति अहमर्थविनाश इष्यतेऽस्माभिः । सुप्तोत्थितस्य लौकिकानुभवोऽपि अहमर्थस्य सुषुप्तावभावसाधकः । पारमार्थिकत्वे आत्मप्रकाशेनैव तत्सर्वप्रकाशः सर्वदा स्यादिति भावः । अत्राहंत्वादिकं नात्मधर्मः, सुषुप्त्यादावभावादिति प्रयोगस्य विवक्षितत्वात् यतइतिवाक्यं साध्यपरम्, अत इति वाक्यं हेतुपरम् । कथं यतःपदघटितस्य साध्यपरतेति चेत्—उक्तमेवात्र वक्तव्यं सर्वैः, अग्निमत्त्वेनधूमवत्त्वमितिवत् साध्यस्य हेतुं प्रति कारकविधया प्रयोजकत्वसद्भावान्न दोष इति । यद्यपि—आत्मा पारमार्थिकः सुषुप्त्याद्यन्वयित्वादिति हेतुसाध्यभावे स्थिते पारमार्थिकत्वाभावरूपस्य साध्याभावस्य व्याप्यत्वं सुषुप्त्याद्यनन्वयरूपस्य हेत्वभावस्य व्यापकत्वञ्च सिद्धयति । एवञ्च व्याप्यपरं वाक्यं यत इत्यारभ्यत इति न दोषः—अथाप्यत्र सुषुप्त्याद्यनन्वयं पूर्वमुपपाद्य तेनापारमार्थिकत्वमेव साध्यत इति ध्येयम् । **मां न ज्ञातवान्** इति अहमर्थस्य चाहंत्वस्य च ज्ञानाभावः कथ्यते । अहमित्यनेनात्मस्वरूपमात्रप्रकाशो ज्ञाप्यते । अतश्चिन्मात्रमेवात्मस्वरूपमिति ॥

एवं निर्विशेषं सन्मात्रं चिन्मात्रमात्मस्वरूपं सत्यम्, अन्यन्मिथ्येति लोकतोपि सिध्यतीति न शास्त्रप्रत्यक्षविरोधः ; विरोधेपि शास्त्रप्राबल्यं प्रागेव प्रत्यपादीति महापूर्वपक्षमुपसंहरति **तस्मा**दिति । **विवर्तते** कल्प्यते । ब्रह्म सर्वविवर्तोपादानम् । **शुद्धम्** अविद्यारहितम् । **बुद्धं** ज्ञानस्वरूपम्, स्वयंप्रकाशितमिति वा । **मुक्तं** बन्धरहितम् । **विद्याप्रतिपत्तये** । कर्मणामनुपयोगात् कर्मविचारो नापेक्षित इति सिद्धमेतत् ।

(महासिद्धान्तः)

**तदिदम्–औपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणाम्, अनादिपापवासनादूषिताशेषशेमुषीकाणाम्, अनधिगत-पदवाक्यस्वरूप-तदर्थयाथात्म्य-प्रत्यक्षादिसकल-प्रमाणवृत्त-तदितिकर्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितमिति, न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम्। तथाहि–**

**निर्विशेषवस्तुवादिभिः निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तुम्; सविशेषवस्तुविषयत्वात् सर्वप्रमाणानाम्।**

**यस्तु स्वानुभवसिद्धमिति स्वगोष्ठीनिष्ठः समयः, सोऽप्यात्मसाक्षिक सविशेषानुभवा-**

---

संसारस्य सत्यत्वात् ज्ञानाबाध्यत्वात् न ब्रह्मजिज्ञासा समारम्भणीयेति प्रथमाधिकरणे पूर्वपक्षे, असत्यत्वात् ज्ञानबाध्यत्वादारम्भणीयेति तैः कृतः सिद्धान्तोपि इहार्थात् सूचितो भवति। उपरि सत्यत्वस्थापनेन तदधिकरणरचनानिरासोऽर्थसिद्धः।

महासिद्धान्तमारभते **तदिदमिति**। पूर्ववाक्यस्थस्य **इति**शब्दस्य इत्याकारकवाक्यजातबोध्यमित्यर्थः। तादृशवाक्यगम्यं यत् विषयजातमाहुर्बहवो बहुभिर्ग्रन्थैः, **इदम्** अस्मद्वाक्यसंगृहीतं **तत्** विषयजातमनादरणीयमिति विशिष्टार्थः। **वरणीयते**त्यनेन, 'नायमात्मा प्रवचनेन' इति श्रुतिर्ज्ञाप्यते। **गुणविशेषो** भक्तिः। न हि परमपुरुषस्य प्राप्यत्वं तैरध्यवसीयते; किंतु जगदविशेषं तत्त्वज्ञानेन निवर्त्यत्वमिति भावः। **अनधिगत**त्वं स्वरूपे, याथात्म्ये, प्रमाणवृत्ते, न्यायमार्गे च। **विकल्पासह**त्वम् एवं वा तथा वेति विकल्पकाल एवाऽऽभासत्वेन सुग्रहत्वात्। **कुतर्काः** वेदबाह्यतर्काः। त एव **कल्काः** आत्तसाराः असारांशाः। **इती**ति; इतिहेतोरित्यर्थः। **न्यायानुगृहीत**त्वं तर्केतिकर्तव्यताकत्वम्। उक्तविधं कल्पितत्वमुपपादयति **तथाही**ति॥

परैः, निर्भेदसत्यत्व-निखिलमिथ्यात्व-तन्मूलाविद्या-तन्निवर्तकतत्त्वज्ञानादिकमुक्त्वा, प्रबलत्वात् शास्त्रं प्रत्यक्षादिविरुद्धमर्थं बोधयतीति पूर्वमुपवर्ण्य, 'विरोध एव न; प्रत्यक्षस्यापि निर्विशेषविषयकत्वात्' इत्युपपादयद्भिः सर्वं प्रमाणं निर्विशेषे प्रसरतीति निगमनं चिकीर्षितम्। तत्प्रतीपतया निर्विशेषविषयकं न किमपि प्रमाणं संभवतीति प्रथमं निरूप्य, शास्त्रस्य तदिष्टार्थपरत्वे प्रत्यक्षादिविरोधं प्रतिष्ठाप्य, ततः असत्यात् सत्यायोगादिनाऽपि शास्त्रस्य बाधकत्वासंभवमुपवर्ण्य, शास्त्रवचनमपि तदुपात्तं श्रुतिस्मृत्यात्मकं सर्वं सविशेषपरमेवेत्युपपाद्य, सप्तविधानुपपत्तिविस्तरेणाविद्यामपि निरसिष्यति। आदौ सामान्यतः प्रमाणाभावमाह **निर्विशेषे**ति। **न शक्यते** इति। ननु सिद्ध्यसिद्धिभ्यां व्याघातः; निर्विशेषसिद्धौ तन्निषेधायोगात्, असिद्धौ चाप्रसिद्ध्या तन्निषेधायोगादिति चेन्न–प्रतियोगितया सर्वविशेषप्रकारकाभावप्रकारककिञ्चिद्विशेष्यकज्ञानं प्रमा न भवतीत्येवं तात्पर्यात्। निर्विशेषस्य भवद्वाक्यज्ञाप्यत्वे सति च न निर्विशेषत्वम्, तदभावे च निर्विशेषासिद्धिरिति॥

ननु मा भूत् प्रमाणम्, स्वयम्प्रकाशतया निर्विशेषस्य स्वतः सिद्धेरितीदमनुवदति **यस्त्वि**ति।

**देव निरस्तः; 'इदमहमदर्शम्' इति केनचिद्विशेषेण विशिष्टविषयत्वात् सर्वेषामनुभवानाम्।**

**सविशेषोऽप्यनुभूयमानोऽनुभवः केनचित् युक्त्याभासेन निर्विशेष इति निष्कृष्यमाणः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैर्निष्क्रष्टव्य इति निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते। अतः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त इति, न क्वचिन्निर्विशेषवस्तुसिद्धिः।**

---

एतत्पक्षखण्डनं पश्चात् कर्तुं युक्तम्; **सर्वप्रमाणाना**मित्येतदनन्तरं **शब्दस्य तु** इत्यादिवक्ष्यमाणप्रमाणविशेषचिन्ताक्रमस्य युक्तत्वात्—अथापि स्वतस्सिद्धिपक्षदूषणप्रकारः सर्वप्रमाणसविशेषविषयकत्वोपपादको भवतीत्याशयेनात्रोक्तिः। **निरस्त** इति। निर्विशेषस्य प्रकाश इति गोष्ठीसंकेतमात्रम्; सविशेषस्यैव प्रकाशः स्वस्वविदित इत्यर्थः। उपपादयति **इदमिति**। अयं भावः—तन्मते जानामि, अनुभवामीति प्रकाशमानातिरिक्तस्वप्रकाशवस्त्वभावात् प्रमाणजन्याः धात्वर्थभूता अनुभवा एव ग्राह्याः। ते च प्रत्यक्षानुमानादिभेदभिन्नाः। तेषां सर्वेषां दृशित्वञ्चेष्टम्। दृश्यत्वात् दृश्यधीनसिद्धित्वान्मिथ्येति व्यवहारात्। तादृशदर्शनविषयकश्च व्यवहारः दर्शनानन्तरम्, इदमहमदर्शमिति भवति। स च दृश्यद्रष्टृदर्शनत्रितयविषयकः। किं तत्र निर्विशेषम्; **इद**मित्यत्र पुरोवर्तित्वादि, आत्मनि अहंत्वम्, दर्शने अनुभवत्वातीतत्वादि च हि भासत इति। अत्र **अदर्श**मिति सर्वानुभवग्रहणम्; **सर्वेषा**मित्युक्तेः। भूतकालनिर्देशश्च **अदर्श**मितीति **इति**शब्देन दर्शनजन्यव्यवहारविवक्षणादुपपन्नः। तेन अनुभवानामनित्यत्वमपि तदनिष्टं ज्ञापितं भवति। **इति...विशेषेण**—एतद्व्यवहारगम्यविशेषेण। विशिष्टत्वादनुभवानामित्यनुक्त्वा **विशिष्टविषयत्वा**दित्युक्त्या अनुभववत् अनुभवविषयभूतमपि न निर्विशेषमिति ज्ञाप्यते। **विशिष्टविषयत्वात्**; विशिष्टव्यवहार्यकत्वादित्यर्थः। नन्वेषु अनुभवेषु प्रतीयमानानां सविषयत्वसाश्रयत्वादिधर्माणामनुभाव्यतया स्वयम्प्रकाशानुभवनिष्ठत्वायोगस्य परिशीलनान्निर्विशेषत्वसिद्धिरिति शंकते **सविशेष** इति। **सविशेषोऽप्यनुभूयमानः**-सविशेषत्वेन प्रकाशमानोपीत्यर्थः। **युक्त्याभासः** अनुभूतित्वादिः। **केनचि**दित्युक्त्वा पश्चाद् बहुवचनप्रयोगः कथम्, **सत्तातिरेकिभि**रित्यादेर्द्विःपाठश्च कुत इति चेत्—उच्यते। अनुभवो निर्विशेषः अनुभवत्वादिति प्रयोगे, अनुभवः न विशेषसामान्याभाववान् तत्तद्विशेषाभावरूपयावदभाववत्त्वाभावात्, अनुभवत्वरूपहेत्वादिकतिपयविशेषवत्त्वादिति शंकायाम्, विशेषाभावरूपैः स्वभावैरेव साधितैः, हेत्वन्तरैर्वा तत्साधनं कार्यम्। तेषां च नानुभवस्वरूपमात्रता, तन्निष्ठसत्तारूपधर्ममात्रता वा; तज्ज्ञाने सत्यप्येतद्धेतुज्ञानाभावात्। नापि सविशेषसाधारणता, हेतोरसाधकत्वापातात्। अतस्तान् आदाय सविशेषत्वम्। अथ तेषां हेतूनामप्यसिद्धिशंकायां तत्साधकानि हेत्वन्तराणि प्रयोक्तव्यानीत्येवं हेतुधारायां प्रवहन्त्यां कथं तस्य निर्विशेषतेति सूक्त्यर्थ इति। द्विःपाठेन हेतुधारा सूच्यते। अत्र **स्वभावविशेषै**रिति बहुवचनेन हेतुसाध्यपक्षतावच्छेदकरूपधर्मत्रयमवर्जनीयमित्यपि गम्यते। निर्विशेषत्वनिष्कर्षकत्वाभिमतमनुभूतित्वं स्वप्रकाशत्वं वा, इदमदर्शमिति

धियो हि धीत्वं स्वप्रकाशता च ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः । स्वापमद-मूर्च्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः । स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेके विशेषाः सन्त्येव । ते च न वस्तुमात्रमितिशक्योपपादनाः । वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात्; स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात् ।

अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम् ॥

शब्दस्य तु विशेषेण सविशेष एव वस्तुनि अभिधानसामर्थ्यम्, पदवाक्यरूपेण प्रवृत्तेः । प्रकृतिप्रत्यययोगेन हि पदत्वम् । प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम् । पदभेदश्चार्थभेदनिबन्धनः । पदसंघातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यात् न निर्विशेषवस्तुनि शब्दः प्रमाणम् ।

प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः । सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम् । निर्विकल्पकमपि सविशेषविषयमेव; सविकल्पके, स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसंधानहेतुत्वात् । निर्विकल्पकं

---

गृहीतस्य सविषयकत्वस्यास्वीकारे न सिध्येदित्याह धिय इति । सविषयकत्वमेव धीत्वं चेत्, विषयप्रकाशनस्वभावत्वादितिहेत्वविशेषः स्यात् । अतो धीत्वं धीशब्दवाच्यत्वम् । परप्रकाशकत्वात् अनुभूतित्वं स्वप्रकाशत्वञ्च वदद्भिरेव परप्रकाशत्वरूपविशेषापलापे स्वप्रकाशत्वस्याप्यसिद्धौ तत् शशविषाणायत इति भावः । ननु न जागरकालिकानुभवमादाय निर्विशेषत्वं ब्रूमः, किंतु स्वापे, 'मामपि न ज्ञातवान्' इति अहम्भानं विनैव भानात् तत्र विशेषास्फूर्तेः तत् निर्विशेषमितीत्यत्राह स्वापेति । स्वावसरे अहमर्थनिरूपणावसरे । सुखमहमस्वाप्सम्, मामप्यहं न ज्ञातवान् इति भवत्प्रदर्शिताकारत एव तदा सविशेषस्फूर्तिं वक्ष्याम इत्याशयेन निपुणतरमित्युक्तम् । अस्यात्मप्रकाशस्य ज्ञातृत्वर्थप्रकाशरूपत्वस्य तन्मात्रद्रष्टत्वादपि पूर्वं स्वगोष्ठीनिष्ठ इत्युक्तम् । अत इति । स्वानुभवसिद्धत्वशोधनव्याजेन सर्वप्रमाणसविशेषविषयकत्वस्याप्युपपादितत्वादित्यर्थः ।

स्वाभिमतेन शास्त्रबलीयस्त्वेन स्वमतसाधनमन्ततो मन्येतेति तदसंभवमेव विशिष्य प्रतिबोधयति शब्दस्यत्विति । पदसंघातेति । अत इत्यादिः ।

अथ प्रत्यक्षादौ विशिष्याप्युपपादयति । तत्र मानान्तरस्य सविशेषविषयकत्वनियमेऽपि प्रत्यक्षे स नास्ति, निर्विकल्पकप्रत्यक्षस्य सर्वसंमतत्वात् । तत एव सिध्यतु निर्विशेषमिति परे मन्वीरन्निति तच्छोधनमारभते प्रत्यक्षस्येति । एवं प्रत्यक्षविचारस्य प्राप्तत्वादपि भेदग्राहित्वसन्मात्रग्राहित्वादिसर्वनिरूपणानन्तरमेव शास्त्रवाक्यार्थशोधनम् । जात्यादीत्यादिपदेन रूपादिग्रहणम् । सविकल्पके इति । स्वस्मिन् निर्विकल्पकज्ञाने पुरुषेणानुभूतो यः पदार्थः, तस्य विशिष्टतया प्रतिसंधानं पुरुषेण सविकल्पके क्रियमाणं यत्, तत्र निर्विकल्पकस्य हेतुत्वादित्यर्थः । निर्विकल्पके विशिष्टवस्तुग्रहणे सत्येव तत्प्रतिसंधानं सविकल्पके भवेदिति यावत् । अयं भावः—इन्द्रियसंनिकृष्टे वस्तुनि तत्तदिन्द्रियग्राह्याः

नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणम्; न सर्वविशेषरहितस्य, तथाभूतस्य कदाचिदपि ग्रहणादर्शनात्; अनुपपत्तेश्च। केनचिद्विशेषेण इदमित्थमिति हि सर्वा प्रतीतिरुपजायते; त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात्। अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम्, द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते। तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते; द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः। प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेयमिति, द्वितीयादिग्रहणस्य सविकल्पकत्वम्। सास्नादिवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यत इति, प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्; न पुनरसंस्थानरूपजात्यादेरग्रहणात्। संस्थानरूपजात्यादेरप्यैन्द्रियकत्वाविशेषात्, संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्तु, इत्थमिति गृह्यते। अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानिवत् संस्थानञ्च सर्वदैव गृह्यत इति तेषु सविकल्पकत्वमेव। अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् ॥

अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम्। इदमित्थमितिप्रतीतौ इदमित्थंभाव-

---

यावन्तो धर्माः, तावद्विशिष्टतद्वस्तुग्रहणमेव पूर्वभावि। तदनन्तरं तत्सजातीयवस्त्वन्तरग्रहणे सति सेयं गौरिति साजात्यविषयकं दर्शनं भवति। तत्र पूर्वगृहीतगोत्वविशिष्टव्यक्तिप्रतिसंधानेन सह तद्गोत्वानुवृत्तेरन्यत्र गवि ग्रहणं भवतीति इदं सविकल्पकम्। कल्पः कल्पनाविषयः चिन्तागोचरः मानसप्रतिसंधानपदं वस्तु; इन्द्रियसंनिकृष्टभिन्नतदंशविषयकं सविकल्पकम्। संस्कारसहकृतेन्द्रियजन्यज्ञानमिति यावत्। केवलं तु निर्विकल्पकम्। यदा चैक एव गोपिण्डः पूर्वं दृष्टः पुनरपि दृश्यते, तदा तस्य पूर्वदेशकालस्थताप्रतिसंधानेन सहोत्तरदेशकालसंबन्धग्रहणे तु तदपि सविकल्पकमेव। अत्र व्यक्तेर्देशान्तरकालान्तरानुवृत्तिग्रहणम्, पूर्वत्र जातेरिति विवेकः। **त्रिकोण**मिति गोमुखस्य नाम। **प्रथमपिण्डग्रहण**मित्यादौ प्रथमादिपदं पिण्डे अथवा ग्रहणेऽन्वेति। **गोत्वादे**रित्यादिपदेन देशकालान्तरानुवृत्तव्यक्तिग्रहणम्। नैयायिकाः विशिष्टज्ञानं प्रति विशेषणज्ञानं कारणमिति कार्यकारणभावं वृथैव परिकल्प्य विशिष्टज्ञानशेषतया कथञ्चित् अनुभवागोचरमपि निर्विकल्पकं कल्पयन्ति। विशिष्टप्रत्यक्षं सर्वथैवापलपतस्तु निर्विशेषनिर्विकल्पकल्पनं निष्प्रमाणकमित्याशयेनोपसंहरति **अतः प्रत्यक्षस्ये**ति। **कदाचिदपि** प्रथममपि। यदि विशिष्टप्रत्यक्षं पश्चादिष्यते, तर्हि निर्विकल्पके तद्ग्रहणेपि वस्तु सविशेषमेव सर्वत्रेति ध्येयम्।

ननु सर्वत्र धर्मधर्मिणोर्भेदवत् अभेदस्यापि स्वीकारात् इन्द्रियेण अविशेषात् सर्वग्रहणेऽपि धर्मधर्मिभेदग्रहणे सविकल्पता, अभेदग्रहणे च निर्विकल्पतेति स्यादिति वादं निरसितुमाह **अत एवे**ति। विशिष्टवस्तुग्राहित्ववर्णनादेवेत्यर्थः। **सर्वत्रे**ति। भिन्नाभिन्नत्वं कुत्रापि नास्तीति यावत्।

योरैक्यं कथमिव प्रत्येतुं शक्यते ? तत्रेत्थंभावः सास्नादिसंस्थानविशेषः, तद्विशेष्यं द्रव्यमिदमंश इति अनयोरैक्यं प्रतीतिपराहतमेव ।

तथाहि–प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते । व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्टतया इत्थमिति प्रतीतेः । सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्यक्तः । तत्र दण्डकुण्डलादयः पृथक्संस्थानसंस्थिताः स्वनिष्ठाश्च कदाचित्कचित् द्रव्यान्तरविशेषणतयाऽवतिष्ठन्ते । गोत्वादयस्तु द्रव्यसंस्थानतयैव पदार्थभूतास्सन्तो द्रव्यविशेषणतया अवस्थिताः । उभयत्र विशेषणविशेष्यभावः समानः । तत एव तयोर्भेदप्रतिपत्तिश्च । इयांस्तु विशेषः–पृथक्स्थितिप्रतिपत्तियोग्याः दण्डादयः, गोत्वादयस्तु नियमेन तदनर्हाः इति । अतः, 'वस्तुविरोधः प्रतीतिपराहतः' इति प्रतीतिप्रकारनिह्नवादेवोच्यते । प्रतीतिप्रकारो हि, इदमित्थमित्येव सर्वसंमतः । तदेतत् सूत्रकारेण, "नैकस्मिन्नसम्भवात्" (उ. मी 2. 2. 31.) इति सुव्यक्तमुपपादितम् ॥

अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसम्बन्धविशिष्टविषयत्वादनुमानमपि सविशेषविषयमेव । प्रमाणसङ्ख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः । वस्तुगतस्वभावविशेषैः तदेव वस्तु

---

भेद एवास्ति, नाभेद इति भावः । ननु शौक्ल्यं काष्र्ण्यव्यावृत्तमिति व्यावृत्तेरित्थंभावस्य यथा शौक्ल्यादभिन्नता, तथाऽत्र स्यादित्यत्रोपपादयति **तथा हीति** । शौक्ल्यमात्रदर्शनेपि इतरव्यावृत्तिग्रहात् तत्राभेद एव, न भिन्नता । अत्र व्यक्तिमात्रग्रहणे शुक्त्यादौ व्यावृत्तबुद्ध्यनुदयात् इत्थम्भावस्य धर्मितो भेद एव; नाभेद इति भावः । **व्यावृत्तमेव प्रतीयते**; इतरपदार्थसंशयविपर्ययवारकग्रहविषयीभवतीत्यर्थः । तर्हि दण्डीत्यादिवत् कुतो न मतुप्प्रत्यय इत्यत्राह **तत्रेति** । **स्वनिष्ठाः** पुरुषादिपृथग्भूताः । तत्र हेतुः **पृथगित्यादि** । **वस्तुविरोधः प्रतीतिपराहत इतीति**; इत्ययं पक्ष इत्यर्थः । वस्तुनोः धर्मधर्मिणोः विरोधः=अत्यन्तभेदः अयं गौरित्यैक्यप्रतीतिनिराकृत इति तेषां पक्षः । **नैकस्मिन्निति** भेदाभेदवादिजैनखण्डनसूत्रम् ।

एवं शब्दस्य प्रत्यक्षस्य च निर्विशेषविषयत्वं न भवतीति विशिष्योक्तम् । अथ शिष्टे स्वाभिमते अनुमाने तदाह **अत इति** । **प्रत्यक्षादीत्यादिपदेन** अनुमानागमपरिग्रहः । **दृष्टः** गृहीतः **संबन्धः** हेतुव्यापकत्वम्; तद्विशिष्टसाध्यविषयकत्वादित्यर्थः । **अनुमानम्** अनुमितिः । अस्तु तर्हि अर्थापत्त्यादिकं निर्विशेषे प्रमाणमित्यत्राह **प्रमाणेति** । **संख्येति** । अत्र, प्रत्यक्षमेकं चार्वाकाः काणादा अनुमामपि । आक्षपादास्तु चत्वारि षण्मीमांसाविदो विदुरित्येवं भाव्यम् । **अयमेव**= अतिरिक्तप्रमाणानङ्गीकारिणां प्रत्यक्षानुमानागमविषयत्वाभिमतो यः, स एव; सविशेष एवेत्यर्थः । नन्वस्तु सर्वेषां प्रमाणानामुत्सर्गतः सविशेषविषयकत्वम् । अथापि तदेव सविशेषं पक्षीकृत्य निर्विशेषत्वं युक्त्या साध्यत इत्यत्राह **वस्त्विवति** । पूर्वं निर्विशेषस्य स्वानुभवसिद्धत्वखण्डनावसरे

निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञायामिव स्ववाग्विरोधमपि न जानाति ॥

यत्तु (पृ. 35.) प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयम्, भेदश्च विकल्पासहत्वाद् दुर्निरूपः इत्युक्तम्—तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वात् जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम्। संवेदनवद् रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि सम्भवत्येव। अत एव च नानवस्थाऽन्योन्याश्रयणं च (पृ.. 36.)। एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वात् क्षणान्तरग्राह्यं न किञ्चिदिह तिष्ठति। अपि च सन्मात्रग्राहित्वे 'घटोऽस्ति' 'पटोऽस्ति' इति विशिष्टविषया प्रतीतिर्विरुध्यते। यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न

---

एवमाक्षेपस्य परिहारो दर्शित एवेति सूचयितुं **वस्तुगतस्वभावविशेषै**रिति पदप्रयोगः। पूर्वानुक्तमुभयत्र भवत् दोषान्तरं प्रतिज्ञाविरोधादिकमाह **जननी**त्यादिना।

एवं निर्विशेषस्य सामान्यतः सर्वप्रमाणाविषयत्वं पूर्वमुक्त्वा, स्वानुभवसिद्धत्वखण्डनसरण्या तदुपपाद्य, विशिष्टैकैकप्रमाणासंभवञ्च **शब्दस्यतु** इत्यादिना विशदमवगमय्य, तत्र निर्विकल्पकप्रत्यक्षस्यापि सविशेषविषयकत्वे स्थापनीये वृत्ते, तदनुरुध्य निर्विशेषस्य प्रत्यक्षादिविषयत्वप्रकारं परोक्तं विस्तरेण खण्डयितुमारभते **यत्तु** इत्यादिना। प्रत्यक्षादेस्तद्विषयकत्वस्य तैरन्ते उक्तत्वेऽपि, तस्य पूर्वं खण्डने सत्येव शास्त्रस्य प्रत्यक्षविरुद्धत्वेन वास्तवार्थान्तरपरिशीलनौचित्यं स्यादिति तत्खण्डनं पूर्वम्; अथ बलाबलम्, शास्त्रस्य तत्संमतार्थकत्वेऽपि बाधकत्वायोगः, श्रुतिपुराणादितदुदाहृतशास्त्रवचनवास्तवार्थश्च क्रमात्; ततः सप्तविधानुपपत्तिप्रपञ्चनेनाविद्यादूषणम् इति **महासिद्धान्तगमनिका**। तत्र निर्विशेषस्य प्रत्यक्षविषयत्ववादिना तस्य सन्मात्रविषयकत्वं भेददुर्निरूपत्वं घटाद्यपारमार्थ्यसाधकव्यावर्तमानत्वम् अनुभूतेः सन्मात्रैक्यं स्वयमेव प्रकाशत्वं नित्यत्वं निर्विकारत्वम् आत्मत्वम् अनुभाव्यानाश्रयत्वञ्च क्रमेणोक्तमिति, तावतां क्रमेणाऽऽदौ खण्डनमिह। **जात्यादी**त्यादिना शौक्ल्यादिगुणग्रहणम्। **वस्तुनः स्वस्य चेति**; धर्मिणो जात्यादिधर्मस्य चेत्यर्थः। गवि गोत्वे गृहीते गवि वा गोत्वे वा इतरभेदसंदेहानुदयात् भेदग्रहोऽस्तीति वक्तव्यम्। अतो गोत्वमेव भेद इति भावः। गोत्वं स्वस्मिन् भेदव्यवहारे अनन्याधीनम्, स्वसंबन्धात् गवि भेदव्यवहारहेतुत्वादित्यभिप्रेत्याह **संवेदनवदि**ति। **अत एव**—गोत्वात्मके इतरभेदे प्रतीयमानस्येतरभेदस्य गोत्वातिरिक्तत्वाभावादेव। **अन्योन्येति**। गोत्वविशिष्टग्रहणातिरिक्तस्य इतरभेदग्रहणस्याभावादिति भावः। **वर्तित्वेऽपी**त्यपिना अनेकक्षणवर्तित्वेष्टिः सूच्यते।

स्वपक्षेऽनुपपत्तिं परिहृत्य परपक्षेऽनुपपत्तीर्दर्शयति **अपि चेति**। **विरुध्यत इति**। भेदस्य स्मर्यमाणत्वेऽपि सन्मात्रे तद्वैशिष्ट्यप्रतीतिः कथम्; घटं साक्षात्करोमीत्यनुसंधानञ्च न स्यादिति भावः। जातिग्रहस्य भेदग्रहत्वव्युत्पादनौपयिकं प्रसञ्जनं **यदि चेति**। घटोस्तीति प्रतीतेर्घटाविषयकत्वे

गृहीतः, किमिति अश्वार्थी महिषदर्शने(नेन) निवर्तते । सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्—तत्तत्प्रतिपत्तिविषयसहचारिणः सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते ?

किञ्च, अश्वे हस्तिनि च संवेदनयोरेकविषयत्वेन उपरितनस्य गृहीतग्राहित्वात् विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात् । प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थविषयत्वमेवाभ्युपगतं भवति । सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्येत ।

न च चक्षुषा सन्मात्रं गृह्यते; तस्य[रूप]रूपिरूपैकार्थसमवेतपदार्थग्राहित्वात् । नापि त्वचा; स्पर्शवद्वस्तुविषयत्वात् । श्रोत्रादीन्यपि न सन्मात्रविषयाणि; किन्तु शब्दरसगन्धलक्षणविशेषविषयाण्येव । अतः सन्मात्रस्य ग्राहकं न किञ्चिदिह दृश्यते ।

निर्विशेषसन्मात्रस्य[च]प्रत्यक्षेणैव ग्र.णे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव स्यात्; सन्मात्रब्रह्मणः प्रमेयभावश्च । ततो जडत्वनाशित्वादयस्त्वयैवोक्ताः ।

अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षम् । संस्थानातिरेकिणः अनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात्, तावतैव गोत्वादिजातिव्यवहारोपपत्तेः, अतिरेकवादेऽपि संस्थानस्य संप्रतिपन्नत्वाच्च संस्थानमेव जातिः । संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तु संस्थानमनुसन्धेयम् । जातिग्रहणेनैव भिन्न इति व्यवहारसंभवात्,

---

घटशब्दो न स्मर्येत । विना कारणं स्मरणे पटादिशब्दा अपि स्मर्येरन्नित्याह तत्तदिति । गृहीतग्राहित्वं घटोयमितिज्ञानानन्तरे नीलो घट इति ज्ञानेप्यस्ति; तद्वारणाय विशेषाभावाच्चेति । स्मृतित्वं स्यादिति नोक्तम्: संस्काराजन्यत्वात् । अशेषग्रहणात् संवेदनान्तरग्राह्ययावदंशग्रहणात् । अन्धेति चक्षुष्मद्ग्राह्ययावद्ग्राहित्वमन्धे यदि, स कथमन्धः ? श्रोत्रवद्ग्राह्ययावद्ग्राहित्वे सति कथं कश्चिद् बधिर इति

चक्षुरादिकरणकल्पनाऽपि तन्मते न स्यादितीदं मुखान्तरेणाह न चेति । रूपीति; रूपतदाश्रयेत्यर्थः । रूपरूपीति पाठान्तरम् ।

तार्किकाः आकृतिव्यङ्ग्या जातिः, जात्या इतरभेदग्रहः इति वर्णयन्तः संस्थानजातिभेदानां भेदमाहुः । मीमांसका अप्यर्वाञ्चो जातिरूपाः कृतिशक्तिवादिनो जाते संस्थानस्य च भेदं मन्यन्ते । अस्य वेदान्त्यनभिमतत्वात् अतो वस्तुसंस्थानेतिनिगमनं साधिष्ठमेवेत्युपपादयति संस्थानातिरेकिण इत्यादिना । नन्वात्मादिद्रव्येषु गुणादिषु चावयवसंनिवेशरूपसंस्थानायोगात् कथं संस्थानमेव जातिरित्यत्राह संस्थानं नामेति । रूपमिति । स्वरूपनिरूपकधर्मविशेष एवात्र विवक्षितः । अवयवसंनिवेशस्थले स एव स प्रायो भवति । ब्राह्मणक्षत्रियादिषु सत्त्वादिगुणतारतम्यादिः, आत्मादिषु चैतन्यधर्मवत्त्वादिः अखण्डः सखण्डो वा धर्मविशेषः संस्थानमिति विवक्ष्यते । गोत्वादिस्तु न जातिः; आकृत्यतिरेके मानाभावात् । आकृतिश्च संस्थानमेवेति भावः ।

एवं जातिसंस्थानैक्यं प्रसाध्य जातिभेदयोरैक्यमपि साधयति जातीति । गोत्वाग्रहेपि व्यक्ति-

पदार्थान्तरादर्शनात्, अर्थान्तरवादिनाऽप्यभ्युपगतत्वाच्च गोत्वादिरेव भेदः। ननु च— जात्यादिरेव भेदश्चेत्, तस्मिन् गृहीते तद्व्यवहारवत् भेदव्यवहारः स्यात्॥ सत्यम्; भेदश्च व्यवह्रियत एव; गोत्वादिव्यवहारात्। गोत्वादिरेव हि सकलेतरव्यावृत्तिः; गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोर्निवृत्तेः। भेदग्रहणेनैव ह्यभेदनिवृत्तिः। 'अयमस्माद्भिन्नः' इति तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्ष(क्ष्य)त्वात् प्रतियोग्यपेक्षया भिन्न इति व्यवहार इत्युक्तम्॥

यत् पुनः (पु. 37.) घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुक्तम्—तत् अनालोचितबाध्यबाधकभावव्यावृत्त्यनुवृत्तिविशेषस्य भ्रान्तिपरिकल्पितम्। द्वयोर्ज्ञानयोर्विरोधे हि

मात्रग्रहेपि व्यक्त्यन्तरैक्यबुद्ध्यनुदयात् सजातीयेति। महिषत्वाद्यवच्छिन्नाभेदबुद्धिव्यवहारयोरित्यर्थः। गोत्वं महिषादिभेदः महिषाद्यभेदधीनिवर्तकत्वादित्यनुमानम्। **अभेदनिवृत्तिः** अभेदबुद्धिव्यवहारनिवृत्तिः। ननु भेदगोत्वयोरेकत्वे गोत्वग्रहणसमनन्तरमेव गौरिति व्यवहारवत् अयमस्माद् भिन्न इति व्यवहारोऽपि स्यादित्यत्राह **अयमिति**। तत्र अस्मादिति प्रतियोगिनिर्देशात् **तस्य** प्रतियोगिज्ञानजनकशब्दप्रयोगस्य प्रतियोगिज्ञानसापेक्षत्वात् **प्रतियोग्यपेक्षया** प्रतियोगिज्ञानप्रतीक्षया किञ्चिद्विलम्बेन भिन्न इति व्यवहार इत्यर्थः। एतावता गोपदभिन्नपदयोर्न पर्यायत्वप्रसंगः; गोभिन्न इत्यपि तदर्थसंभवादित्यपि दर्शितम्। एवं वा—ननु भेदगोत्वयोरेकत्वे अयमस्माद्भिन्न इतिवत् अयमस्माद् गौरित्यपि व्यवहारापत्तिरित्यत्राह **अयमिति**। प्रतियोगिवाचकपदप्रयोगस्य भिन्नपदापेक्षत्वात् **प्रतियोग्यपेक्षया** प्रतियोग्यन्वयानुरोधेन भिन्न इत्येव व्यवहार इत्यर्थः। **तदपेक्ष्यत्वादिति** पाठे भिन्नपदेन प्रतियोगिनिर्देशस्यापेक्षितत्वादित्यर्थः। अयमस्माद् भिन्न इति व्यवहारे यः प्रतियोगिनिर्देशः, तस्य भिन्नपदेनापेक्षितत्वात् स्वरसतः त विना न भिन्नपदप्रयोग इत्युक्तं भवति। **इत्युक्तमिति**; "जात्यादेरेव भेदव्यवहारहेतुत्वात्" इति वाक्येनोक्तमित्यर्थः। स्वरूपतो गोत्वबोधः प्रतियोगिनिरपेक्षः, भेदत्वेन तद्बोधस्तु तत्सापेक्ष इति व्यवस्था॥ भेददुर्निरूपत्वे स धर्मो धर्मी वेति विकल्पोऽपि दुःस्थः॥

एवं भेदस्य प्रत्यक्षसिद्धतया सुनिरूपत्वस्य घटादेर्भ्रान्तिसिद्धत्वाभावस्य चोपपादनात् तन्मूलको घटाद्यपारमार्थ्यनिश्चयो निरस्तः। अथ व्यावर्तमानत्वहेतुना तत्साधनं कृतं दूषयति **यत्पुनरिति**। **विशेषाणामि**त्यनेन सर्वविशेषनिषेधे सामान्यमपि न भवति; निर्विशेषं न सामान्यमिति न्यायादिति सूच्यते। **तत्** अपारमार्थ्यम्। बाध्यत्वं बाधकत्वं व्यावृत्तिविशेषः अनुवृत्तिविशेषश्च सम्यग् विचार्यन्ते चेत्, एवं साधनं न भवतीति। अनुवृत्तिविशेषस्याप्यत्र घटनं तत्स्वरूपशोधने घटादेरपि ततः पारमार्थ्यमेवेति ज्ञापनाय। एकत्र दृष्टस्य रज्जुसर्पस्य अन्यत्र रज्जुरस्तीतिदर्शनेन निवृत्त्यभावात् तद्वत्ताप्रतीतिविशेष्यनिष्ठ-तत्कालावच्छिन्नतदभावज्ञानस्य तत्र तद्वत्ताज्ञानस्य च बाध्यबाधकभावः, तद्वत्ताप्रतीतिविशेष्यनिष्ठतत्कालावच्छिन्नाभावप्रतियोगित्वरूपा व्यावृत्तिरेव च मिथ्यात्वसाधिकेति वक्तव्यम्। तदत्र एकत्र 'घटोस्ती'ति ज्ञाने, अन्यत्र 'पटोस्ती'ति ज्ञाने च न तत्प्रसंग इति

बाध्यबाधकभावः; बाधितस्यैव व्यावृत्तिः। अत्र घटपटादिषु देशकालभेदेन विरोध एव नास्ति। यस्मिन् देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नः, तस्मिन् देशे तस्मिन् काले तस्याभावः प्रतिपन्नश्चेत्, तत्र विरोधात् बलवतो बाधकत्वं बाधितस्य च निवृत्तिः। देशान्तरकालान्तरसंबन्धितयाऽनुभूतस्य अन्यदेशकालयोरभावप्रतीतौ (प्रतिपत्तौ) न विरोध इति कथमत्र बाध्यबाधकभावः? अन्यत्र निवृत्तस्यान्यत्र निवृत्तिर्वा कथमुच्यते? रज्जुसर्पादिषु तु तद्देशकालसंबन्धितयैवाभावप्रतीतेः विरोधः, बाधकत्वम्, व्यावृत्तिश्चेति, देशकालान्तरदृष्टस्य देशकालान्तरव्यावर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति, न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः॥

यत्तु (38) अनुवर्तमानत्वात् सत् परमार्थः इति—तत् सिद्धमेवेति न साधनमर्हति। अतो न सन्मात्रमेव वस्तु॥ अनुभूतिसद्विशेषयोश्च विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वादबाधितत्वाच्च, अनुभूतिरेव सतीत्येतदपि (38) निरस्तम्॥

यत्तु(38) अनुभूतेः स्वयंप्रकाशत्वमुक्तम्—तत् विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव; न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति; परानुभवस्य हानोपादानादिलिङ्गकानुमानज्ञानविषयत्वात्, स्वानुभवस्याप्यतीतस्य 'अज्ञासिषम्' इति ज्ञानविषयत्वदर्शनाच्च। अतः, अनुभूतिश्चेत्, स्वतस्सिद्धेति वक्तुं न शक्यते॥

'अनुभूतेरनुभाव्यत्वे, अननुभूतित्वम्' इत्यपि (39) दुरुक्तम्; स्वगतातीतानुभवानां परगतानुभवानां चानुभाव्यत्वेनाननुभूतित्वप्रसङ्गात्। परानुभवानुमानान-

---

भावः। **मिथ्यात्वव्याप्तं** मिथ्यात्वव्याप्यम्। **व्यावर्तमानत्वमात्रम्** देशकालाघटितं केवलं अभावप्रतियोगित्वम्। एवञ्च पारमार्थ्यसाधकोऽनुवृत्तिविशेषो नाम प्रतिपन्नोपाधौतदभावरूपोक्तविधव्यावृत्त्यभाव एवेति ध्येयम्॥ ईदृशेनानुवर्तमानत्वेन पारमार्थ्यसाधनसंभवेऽपि तत् सति न साधनीयम्, सिद्धसाधनादित्याह **यत्त्विति**। **सत्** अस्तिशब्दार्थः। प्रत्युत घटादौ अनेनानुवर्तमानत्वेन पारमार्थ्यं परान् प्रति अस्माभिः साध्यते इति न सन्मात्रसत्यतेत्याह **अत** इति। सन्मात्रपदेन निर्विशेषसत्पक्षीकरणे आश्रयासिद्धिः, अनुवर्तमानत्वपदेनानेकप्रतीतिविषयत्वादिरूपार्थान्तरग्रहणे च अपरमार्थेपि तत्सत्त्वादसद्धेतुतेत्यपि ध्येयम्। एवं पूर्वपक्ष्युक्तव्यावर्तमानत्वप्रकारस्यापि व्यभिचारादप्रयोजकत्वाच्चाहेतुत्वं मन्तव्यम्।

अनुभूतिपारमार्थ्यसाधनेऽप्येवं सिद्धसाधनदोषः स्पष्ट इति तदुपेक्षणेन **सैव सतीत्युक्तं** खण्डयति **अनुभूतीति**। **तत्** अनुभूतिस्वयम्प्रकाशत्वम्। **ज्ञातुरात्मनः** स्वाश्रयमात्मानं प्रति। **तथैव** निर्बाधम्। सर्वान् प्रत्यपीति नियमो नास्तीत्युपपादयति **परेति**; सर्वदेति नियमाभावोपपादनं **स्वेति**। **उपादानादी**त्यादिपदेन वाचिकव्यवहारग्रहणम्। **अनुभूतिश्चे**दिति; अनुभूतित्वादित्यर्थः। **स्वतस्सिद्धेती**ति; स्वयमेवप्रकाशमानेति, अन्याप्रकाश्येति इत्यर्थः। **अननुभूतित्वप्रसंगा**दिति।

भ्युपगमे च शब्दार्थसम्बन्धग्रहणाभावेन समस्तशब्दव्यवहारोच्छेदप्रसङ्गः। आचार्यस्य ज्ञानवत्त्वमनुमाय तदुपसत्तिश्च क्रियते; सा च नोपपद्यते। न च अन्यविषयत्वेऽननुभूतित्वम्। अनुभूतित्वं नाम वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्; स्वसत्तयैव स्वविषयसाधनत्वं वा। ते चानुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे नापगच्छत इति नानुभूतित्वमपगच्छति। घटादेस्त्वननुभूतित्वम्, एतत्स्वभावविरहात्; नानुभाव्यत्वात्।

तथा अनुभूतेरननुभाव्यत्वेऽपि, अननुभूतित्वप्रसङ्गो दुर्वारः; गगनकुसुमादेरननुभाव्यस्याननुभूतित्वात्॥ गगनकुसुमादेरननुभूतित्वमसत्त्वप्रयुक्तम्, नाननुभाव्यत्वप्रयुक्तमिति चेत्—एवं तर्हि, 'घटादेरप्यज्ञानाविरोधित्वमननुभूतित्वनिबन्धनम्; नानुभाव्यत्वम्' इत्यास्थीयताम्॥ अनुभूतेरनुभाव्यत्वे अज्ञानाविरोधित्वमपि तस्याः घटादेरिव प्रसज्यत इति चेत्—अननुभाव्यत्वेऽपि गगनकुसुमादेरिवाज्ञानाविरोधित्वमपि प्रसज्यत एव।

अतोऽनुभाव्यत्वेऽननुभूतित्वमित्युपहास्यम्॥

यत्तु(42)संविदः स्वतस्सिद्धायाः प्रागभावाद्यभावादुत्पत्तिर्निरस्यते—तदन्धस्य जात्यन्धेन यष्टिः प्रदीयते। प्रागभावस्य ग्राहकाभावादभावो न शक्यते वक्तुम्; अनुभूत्यैव

---

अननुभाव्यत्वानुमानं बाधितमिति यावत्। संबन्धेति। प्रयोज्यवृद्धज्ञानमनुमाय हि व्युत्पत्तिसंपादनमिति भावः। वर्तमानेति। स्वसत्तयैव प्रकाशमानत्वमात्रमनुभूतित्वमिति नेष्यते। अतो न दोष इति भावः। वस्तुत एवं न निर्वचनीयम्—अनुभूतित्वस्वयम्प्रकाशत्वयोरैक्यप्रसंगात् तेन स्वयं प्रकाशत्वसाधनानुपपत्तेः; अस्वयम्प्रकाशत्ववादिभिरपि अनुभूत्यादिशब्दव्यवहारात् सर्वसंमताकारस्य तच्छब्दार्थतया स्वीकार्यत्वादित्याशय्य, अन्यथा निर्वक्ति स्वेति। अननुभूतित्वम् अनुभूतिशब्दावाच्यत्वम्। एतत्स्वभावेति; प्रकाशकत्वेत्यर्थः। इदमज्ञानविरोधित्वञ्चैकमेवेति न वक्ष्यमाणविरोधः।

यदि अप्रयोजकमनुभाव्यत्वं अननुभूतित्वप्रयोजकं मन्यते, अननुभाव्यत्वमेव तथा किं न स्यादिति प्रतिबन्धा दूषयति तथेति। अज्ञानाविरोधित्वमेवेति। खपुष्पादौ अननुभूतित्वे असत्त्वं प्रयोजकम्; घटादावननुभूतित्वे अनुभाव्यत्वं प्रयोजकमिति प्रयोजकद्वयकल्पनानुपपत्त्या सर्वत्राज्ञानाविरोधित्वमेकं प्रयोजकं युक्तम् (एवञ्चात्मनोऽप्यनुभूतिशब्द्यत्वं घटते) इति भावः। उपहास्यम्। मुख्यविषये हास्यत्वमन्यदस्ति; अत्रोपहास्यत्वम्। कथञ्च अननुभाव्यानुभूतिविषये एतावान् व्यवहारो भवद्भिः क्रियत इति।

अनुभूतिर्नित्या प्रागभावाभावादित्युक्तं खण्डयितुमनुवदति यत्त्विति। निरस्यते। निरस्यत इति यत्, तदिति योजना। खण्डनमिदं यदप्यस्या इत्येतद्वाक्यावधि। प्रदीयते; प्रदीयत इत्येतदित्यर्थः। संविदोऽवस्थारूपत्वे अवस्थाया एवोत्पत्तिरूपतया पृथगुत्पत्त्यभावः उच्येतापि; प्राग-

ग्रहणात् ॥ कथमनुभूतिः सती तदानीमेव स्वाभावं विरुद्धमवगमयतीति चेत्—न ह्यनुभूतिः स्वसमकालवर्तिनमेव विषयीकरोतीत्यस्ति नियमः ; अतीतानागतयोरविषयत्वप्रसङ्गात् । अथ मन्यसे—अनुभूतिप्रागभावादेः सिद्ध्यतः तत्समकालभावनियमोऽस्तीति, किं त्वया क्वचिदेवं दृष्टम्, येन नियमं ब्रवीषि । हन्त तर्हि तत एव दर्शनात् प्रागभावादिः सिद्ध इति न तदपह्नवः (तदभावनिह्नवः) ।

तत्प्रागभावं च तत्समकालवर्तिनमनुन्मत्तः को ब्रवीति ? इन्द्रियजन्मनः प्रत्यक्षस्य ह्येष स्वभावनियमः, यत् स्वसमकालवर्तिनः पदार्थस्य ग्राहकत्वम् ; न सर्वेषां ज्ञानानां प्रमाणानां च ; स्मरणानुमानागमयोगिप्रत्यक्षादिषु कालान्तरवर्तिनोऽपि ग्रहणदर्शनात् ।

अत एव च प्रमाणस्य प्रमेयाविनाभावः । न हि प्रमाणस्य स्वसमकालवर्तिना

---

भावाभावस्तु दुर्वच इति भावेन अन्धज्ञात्यन्धविभागः । **तदानीमेवे**त्यस्य एवकारे नैर्भर्यम् । तेनासत्त्वात् पूर्वकालेऽवगमयितुमनर्हा तदानीमपि नेति सर्वानुवादो भवति । **विरुद्धमि**त्यस्य स्वसमकालावर्तिनमित्यर्थः । स्वकाले प्रागभावाभावात् प्रागभावकाल एव तं गृहीत्वा पश्चादनुभूतिर्भवतीति वक्तुं न शक्यते, स्वयमसती कथं गृह्णीयादिति । अतस्तदानीमेवावगमयतीति वक्तव्यम् । तच्च न भवति, प्रागभावाभावादिति भावः । अत्र काचिदनुभूतिर्जायमाना अनुभूत्यन्तरप्रागभावं स्वसमकालवर्तिनं गृह्णातीति न [illegible] इति [illegible] सुवचम्—अथापि पूर्वपक्षिणा अनुभूतेरनुभूत्यन्तरग्राह्यत्वस्यास्वीकारात्, [illegible] स्वयं कथं गृह्यत इति पृष्टत्वाच्च तथा स्वाभावग्रहणमेव भवतीति प्रतिवदति **न ही**ति । **अथे**त्यादि । इतरवैलक्षण्येनानुभूतेः स्वयमेव प्रकाशमानत्वात्, अनुभूतिप्रागभावस्यापीतरवैलक्षण्येन (स्वानुयोगिक) स्वसमकालवर्त्यनुभूत्य[illegible] ग्राह्यत्वमिति यदि [illegible]सि, तर्हि दृष्ट्वैव तथा वक्तव्यमिति तदेव दर्शनं प्रागभावसाधकमित्यर्थः । [illegible] **दृष्टम्**-समकालसिद्धत्वेन प्रागभावादि दृष्टम् । **येन**-यत् दर्शनमनुरुध्य । वयं तु न समकालवर्ति[illegible] स्वीकृत्य प्रागभावग्राहित्वं ब्रूम इत्याह **तत्प्रागि**ति ।

तर्हि ज्ञानस्य वर्तमानग्राहित्वनियमाभावे अतीतादेरचाक्षुषं कथ[illegible] ऐन्द्रियकप्रत्यक्षविषयः स नियम इत्याह **इन्द्रिये**ति । **प्रमाणानाम्** प्रमितिरूपज्ञानविशेषाणा[illegible] । **अनुमान**मनुमितिः । **आगमशब्दः** आगमस्यायम् **आगम** इति शब्दजन्यबोधपरः । **आदि**प[illegible]इतराादिप्रत्यक्षपरम् । ननु प्रमाणस्य प्रमेयाव्यभिचारित्वमिष्टम् । अव्यभिचारित्वञ्चाविनाभूतत्वम् । [illegible] प्रमेयेऽतीतेऽनागते च प्रमा जायेत, तर्हि विनाभाव एवेत्यत्राह **अत एव चे**ति । **अतः** असमकालवर्तिग्राहकत्वात् । **एवकारः** तस्याविनाभावाविरोधित्वसूचकः । **चकारः** समकालवर्तिग्राहकत्वसमुच्चायकः । समकालवर्तिग्राहित्ववत् असमकालवर्तिग्राहित्वे सत्येव—तस्मिन् सत्यपि अविनाभावो भवतीत्यर्थः । ननु प्रमेयशून्यकालवर्तिन्याः प्रमायाः प्रमेयाविनाभावः कथमित्यत्र व्युत्पादयति **न ही**ति । प्रमाणस्यार्थे

अविनाभावोऽर्थसम्बन्धः ; अपि तु यद्देशकालादिसम्बन्धितया योऽर्थोऽवभासते, तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता ।

अत इदमपि निरस्तम्—स्मृतिर्न बाह्यविषया नष्टेऽप्यर्थे स्मृतिदर्शनात्—इति ॥

अथोच्येत—न तावत् संवित्प्रागभावः प्रत्यक्षावसेयः, अवर्तमानत्वात् । न च प्रमाणान्तरावसेयः लिङ्गाद्यभावात् । न हि संवित्प्रागभावव्याप्तमिह लिङ्गमुपलभ्यते । नानुपपत्तिरपि कस्यचिद्दृश्यते । न चाऽऽगमस्तद्विषयो दृष्टचरः । अतस्तत्प्रागभावः

---

संबन्धरूपोऽविनाभावः समसमकालवर्तिना पदार्थेन विनाऽभावरूपो न भवतीत्यर्थः । आदिशब्दः प्रकारपरः । अवभासते प्रमाणेन गृह्यते । तस्य अर्थस्य । तथाविधाकारमिथ्यात्वप्रत्यनीकता प्रमाणगृहीतदेशकालप्रकारासंबन्धाभावः । अर्थनिष्ठः प्रमाणग्राह्याकारासंबन्धाभाव एव प्रमाणस्यार्थसंबन्धोऽविनाभाव इत्यर्थः । अन्यत्रेव प्रमाणप्रमेययोरपि संबन्ध उच्यमानः एकनिष्ठः अन्यप्रतियोगिक एव भवति । स प्रमाणनिष्ठो वा कथ्यताम्, प्रमेयनिष्ठो वेत्याशयेनेदमुक्तम् । एतदर्थमेव अर्थसंबन्ध इति पदम् । स्वग्राह्ययद्यत्संबन्धितया प्रमाणग्राह्यत्वं यत्रयत्र, तत्रतत्र तथा स्वग्राह्यतत्संबन्धित्वमित्येवं स्वव्यापकप्रमेयकत्वमेव प्रमाणस्य प्रमेयाविनाभाव इत्युक्तं भवति । तथाविधाकारवत्त्वमित्येवालम्, किमिति मिथ्यात्वप्रत्यनीकत्वपर्यन्तमिति चेत्—अविनाभाव अन्यत्राभावद्वयघटनात् तदनुसारेण। वस्तुनि प्रकारसंबन्धस्य कादाचित्कत्वेऽपि प्रामाण्यं भवति, मिथ्यात्वनामकोऽत्यन्ताभावो न चेत्, अलं तावदिति च ज्ञाप्यते । एतावता कालान्तरस्थितस्य ग्रहणेऽपि न नियमभङ्ग इत्युक्तम् ।

ननु तर्हि स्मृतेरपि प्रामाण्यं स्यात्, उक्ताविनाभावसत्त्वात् । अतोऽर्थसंबन्धोऽन्य एव वक्तव्यः । अतीतादावपि स्मृतिदर्शनात् तत्रार्थसंबन्धायोगात् संबन्धं विनापि भानमिति, तथैव वर्तमानार्थस्मृतावपीष्यत इति सर्वत्रार्थसंबन्धो नास्तीत्युपपादनीयम् । यथैवं स्मृतौ, तथाऽनुमानादावपि अर्थसंबन्धाभावश्चिन्त्यते, अतीतादिरूपेऽप्यर्थे तद्दर्शनात् । तर्हि प्रत्यक्षातिरिक्तं सर्वममानं स्यादिति चेत्—नेदं चार्वाकसोदरस्य नेष्टम् । अतः प्रत्यक्षमेव मानमिति समकालवर्तिनाऽविनाभाव एव मेयसंबन्ध इति मन्यमानं प्रत्याह अत इति । इतीदमपि निरस्तमित्यन्वयः । स्मृतिसामान्यमर्थसंबन्धरहितम्, स्मृतित्वात्, अतीतेऽर्थे जायमानस्मृतिवदितीदं न युक्तम्—उक्तविधार्थसंबन्धस्यैवाविनाभावरूपत्वात् स्मृतावपि तस्येष्टत्वात् । तस्याः बाह्यविषयकत्वेऽनुपपत्त्यभावात् । प्रामाण्यं हि याथार्थ्यरूपं स्मृतावस्त्येव । अनुभवत्वागृहीतग्राहित्वादिघटितयाथार्थ्यरूपं तु प्रामाण्यं मा भूत् । अनुभवापलापेनानुमानादिसर्वाप्रामाण्ये कल्पिते प्रत्यक्षविरोध एव । अन्यथा शुक्तिरजतविभ्रमदर्शनात् प्रत्यक्षमपि अर्थसंबन्धं विनैव भवतीति ज्ञानसामान्यमप्रमा स्यादिति भावः ।

भवतु भिन्नकालपदार्थग्राहित्वमनुभूतेः । अथापि स्वप्रागभावग्राहिणी अनुभूतिरुच्यमाना कीदृशप्रमाणजन्येति शङ्कामनुवदति अथोच्येतेति । आदिशब्देनार्थापत्तिशब्दयोर्ग्रहणम् ; तद् विवृणोति नानुपेत्यादिना । संवित्प्रागभावं विना यदि किञ्चिदनुपपन्नं भवेत्, ततोऽर्थापत्त्या स सिद्ध्येत्

प्रमाणाभावादेव न सेत्स्यति—इति—यद्येवम्, स्वतस्सिद्धत्वविभवं परित्यज्य प्रमाणाभावे (प्रमाणभावे) अवरूढश्चेत्, योग्यानुपलब्ध्यैवाभावः समर्थित इत्युपशाम्यतु भवान् ॥

दित्यर्थः। उपमानं तु सादृश्यादिमात्रविषयकत्वात् इहासंभावितमित्युपेक्षितम्। **प्रमाणाभावादेवेति**। अनुपलब्धिर्नाम षष्ठं प्रमाणम्। पूर्वपञ्चविधप्रमाणजन्यप्रमित्यभाव एव सः। तेन वस्त्वभावसिद्धिः। इह च संवित्प्रागभावविषये सर्वप्रमित्यभावस्योक्तत्वात् प्रागभावाभाव एव सेत्स्यति। न च संवित्प्रागभावाप्रसिद्ध्या तदभावः कथं सिद्ध्येदिति वाच्यम्—संवित् प्रागभावरहितेत्युक्तेः। अतः प्रागभावो न सेत्स्यतीत्याशयः। परिहरति **यद्येवमिति**। यद्येवमित्यस्य प्रागभावासिद्धिश्चेदित्यर्थकत्वभ्रमवारणाय तत् विवृणोति **स्वत** इत्यादिना **चेदि**त्यन्तेन। संवित् प्रागभावरहिता स्वतस्सिद्धत्वादित्यारब्धं परित्यज्य, संवित् प्रागभावरहिता प्रमाणाभावादित्युच्यते चेदित्यर्थः। **प्रमाणभावेऽवरूढश्चेत्** इति पाठे, सति प्रमाणे प्रागभाव इष्यत इति प्रमाणभावविचारप्रवृत्तश्चेदित्यर्थः। चेदितिपदस्य पाठाभावे यद्येवमित्यादि एकं वाक्यम्। **योग्यानुपलब्ध्यैवेति**। प्रागभावानुपलब्ध्या तदभाव उच्यते भवता। अस्माभिश्च संविदनुपलब्ध्या संवित्प्रागभाव इति भावः। **समर्थित** इति। नन्वात्मसिद्धौ अत्र संदर्भे, "योग्यानुपलब्ध्यैवाभावस्य समर्थितत्वात्" इत्युक्तं युक्तम्, ततः प्रागेव, "योग्यानुपलम्भनिराकृतस्तत्सद्भावः" इति, "इयन्तं कालं न किञ्चिदहमज्ञासिषमिति प्रबुद्धः प्रत्यवमृशति" इति चोक्तत्वात्। अत्र तु इतः परमेव तत् वक्ष्यत इति कथं भूतकालनिर्देश इति चेत्—न; अनुभूतेरनुभवान्तरानुभाव्यत्वस्य, तदतीतत्वे अज्ञासिषमिति प्रतीतेश्च प्रागुक्त्या तुल्यनयात् नाज्ञासिषमित्यभावप्रतीतेरप्युक्तप्रायत्वात्।

अत्रेदं निगूढम्—स्वतस्सिद्धत्वमजन्यत्वं स्वयंप्रकाशत्वञ्च। **प्रमाणे**त्यस्यानुमित्यादिरूपानुभूतिकरणेत्यर्थः। संविदोऽनादित्वविभवम्, अन्याप्रकाश्यत्वरूपस्वयम्प्रकाशत्वविभवञ्च स्वसंमतं संप्रति त्यक्तवानसि। संवित्प्रागभावसाधकलिङ्गाद्युपलम्भे तदिष्टेः संविदो ज्ञानान्तरवेद्यत्वसंभवस्य त्वयाऽऽविष्कारात्। तदर्थं प्रमाणाभावमुपन्यस्यता त्वया योग्यानुपलब्धेः सारितत्वात् तयैव संवित्प्रागभावस्त्वयैव साधितप्राय इति। एवकारः पूर्ववाक्यसारितत्वदर्शकः; न तु मानान्तरव्यवच्छेदकः। नन्वनुपलब्धिप्रमाणजन्यं ज्ञानमैन्द्रियकमिव प्रत्यक्षं, प्रत्यक्षतुल्यं वा तदिष्टम्। एवञ्चानुपलब्धिजन्यानुभूतिः स्वासमकालवर्तिनं स्वप्रागभावं न साधयेत्। अत एव प्रत्यक्षस्यासाधकत्वकथनेनैवानुपलब्धेरप्रमाणत्वं सिद्धमिति लिङ्गादिमात्रस्य पूर्वपक्षे तेनोक्तिरिति चेत्—उच्यते। अनुभूतिः स्वसमकालवर्त्येकग्राहिणीति व्यवस्थाखण्डनमेवेह चिकीर्षितम्। स्वत एव स्वप्रागभावग्रहणं साधनीयमिति नास्माकमाग्रहः। यदि त्वया अनुभूतेरजन्यत्वाननुभाव्यत्वपक्षग्रहं परित्यज्य तदनुभूतिकरणविचारः क्रियते, तर्हि अस्माभिरपि स्वतः स्वप्रागभावग्रहं परित्यज्यैवमुच्यते—त्वयैव भंग्यन्तरेण प्रागभावश्चिन्तितः; घटप्रत्यक्षानुपलब्ध्या घटप्रत्यक्षप्रागभावज्ञाने जाते तेन स्वप्रागभावाग्रहणेऽपि प्रत्यक्षप्रागभावो गृह्यत एवेति। अत एव, उपशाम्य तु भवानित्युच्यते। स्वतः स्वप्रागभावग्रहणविषये

... त्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत्, तस्य न सर्वदा सत्ता... दृश्यत इति घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते। तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः। घटादिविषयमेव संवेदनं स्वयं कालानवच्छिन्नं प्रतीतं

चिन्ता नः पृथगस्तु नाम; भवतस्तूपशम एवेति।

इदमपि बोध्यम्—अहं सुषुप्तिकाले ज्ञानाभाववान् आसं ज्ञानाश्रयतयाऽनुपलब्धेरिति अनुपलब्धिर्ज्ञायमाना प्रागभावज्ञानकारणम्। अनुपलब्धेः सत्तया प्रत्यक्षकरणत्वेऽपि ज्ञायमानतया परोक्षज्ञानकरणत्वात्। तच्च ज्ञानसामान्याभावज्ञानं स्वप्रागभावमपि विषयीकरोति। एवमनुभवाभावस्यानुमानं प्रतिसंधानञ्चोपरि वक्ष्यमाणमपि ग्राह्यम्; ताभ्यामपि स्वप्रागभावग्रहणात्। एवमानुमानिकसिद्धिमाशय्य च **समर्थित** इति पदप्रयोग इति।

**लिङ्गाद्यभावा**दित्युक्तमप्ययुक्तम्; अनुपलब्ध्यतिरिक्तस्यापि प्रागभावसाधकस्य सत्त्वादिति दर्शयितुमाह **किञ्चे**त्यादि। घटः प्रकृतप्रत्यक्षकालवर्ती तद्विषयत्वादिति सर्वसंमतम्। अत्र घटोऽस्तीति जानामीति प्रत्यक्षे च घटस्यापि कालसंबन्धः स्पष्टः। **न—दृश्यत** इतीत्यनेन प्रकृतकालपूर्वोत्तरकालावच्छिन्नघटसत्ताविषयकत्वेनादृश्यमानत्वादिति, तादृशकालावच्छिन्नघटसत्ताव्यवहारजनकत्वेनादृश्यमानत्वादिति वा हेतुरुक्तः। अनेन तथाघटसत्त्वाविषयकत्वं तद्व्यवहाराजनकत्वं वा साध्यते। तदाह **प्रतीयत** इत्यन्तेन। उक्तसाध्ये ज्ञापकहेतुः प्रागुक्तः; कारकहेतुमाह **तदप्रतीतिश्चे**ति। संवेदनगतं यत् कालपरिच्छिन्नत्वम्, तत्प्रयोज्यं पूर्वोत्तरकालसत्त्वव्यवहाराजनकत्वमिति तदर्थः। अतः प्रयोज्येन प्रयोजकस्यानुमानम्। तथाच घटसंवेदनं प्रकृतकालपूर्वोत्तरकालावच्छिन्नघटसत्त्वव्यवहाराजनकं तथा दृश्यमानत्वाभावात्, घटसंवेदनं प्रकृतकालपरिच्छिन्नं घटादिपूर्वोत्तरकालव्यवहाराजनकत्वादित्यनुमानद्वयम्। अत्र द्वितीयं प्रागभावसाधकं भवति। ननु कालपरिच्छिन्नत्वादित्येतावति पर्याप्ते, 'कालपरिच्छिन्नतयाप्रतीते'रिति **प्रतीति**पदं किमर्थमिति चेत्—कालपरिच्छिन्नत्वं प्रतीयते=ज्ञानेन स्वप्रागभावोऽपि गृह्यत इति ज्ञापनायेदम्। तदेवम्—यो हि घटमहं न पश्यामीति गृह्णन्नेव यदृच्छया तं पश्यति, तस्य तस्मिन् दर्शने उपस्थित-पूर्वकालिकाभावविशिष्टप्रकृतकालसंबन्धमानमानुभविकम्। तथाच तेन दर्शनेन स्वप्रागभावोऽपि गृह्यत इति प्रकृतोपयोगः। एवं घटसंवेदनानि किञ्चित्कालसंबन्धित्वे सति तत्पूर्वोत्तरकालासंबन्धीनि तत्कालसत्तयाव्यवहाराजनकत्वादित्यनुमानजन्यानुमितेरपि घटसंवेदनरूपतया स्वप्रागभावग्राहित्वं ग्राह्यम्।

प्रत्यक्षस्य स्वस्मिन् प्रकृतकालसंबन्धित्वविषयकत्वरूपप्रकृतसाध्यापलापेऽनिष्टमाह **घटे**ति। **कालानवच्छिन्नं**—तथासत्। कालसंबन्धित्वं विनेति यावत्। प्रत्यक्षस्य प्रकृतकालसंबन्धे गृहीते घटादेरपि तत्कालसंबन्धः सिद्ध्यति। यदि, अहं घटज्ञ इति ज्ञानाकारः, तत्र न ज्ञानस्य कालसंबन्धो भाति, तावताऽनुभूतिर्नित्येति च मन्यते—तर्हि घटादेरपि कालपरिच्छेदासिद्ध्या सर्वकालवर्तिप्रत्यक्षविषयस्य सर्वकालवर्तित्वावश्यकतया च नित्यत्वं स्यादिति।

चेत्, संवेदनविषयो घटादिरपि कालानवच्छिन्नः प्रतीयेतेति नित्यस्स्यात्। नित्यं चेत् संवेदनं स्वतस्सिद्धं नित्यमित्येव प्रतीयेत। न च तथा प्रतीयते। एवमनुमानादिसंविदोऽपि कालानवच्छिन्नाः प्रतीताश्चेत्, स्वविषयानपि कालानवच्छिन्नान् प्रकाशयन्तीति ते च सर्वे कालानवच्छिन्नाः नित्यास्स्युः, संविदनुरूपस्वरूपत्वाद्विषयाणाम्।

न च निर्विषया काचित् संविदस्ति, अनुपलब्धेः। विषयप्रकाशनतयैवोपलब्धेरेव हि संविदः स्वयंप्रकाशता समर्थिता। संविदो विषयप्रकाशनतास्वभावविरहे सति स्वयं-प्रकाशत्वासिद्धेः, अनुभूतेरनुभवान्तरानुभाव्यत्वाच्च संविदस्तुच्छतैव स्यात्।

न च स्वापमदमूर्च्छादिषु सर्वविषयशून्या केवलैव संवित् परिस्फुरतीति वाच्यम्, योग्यानुपलब्धिपराहतत्वात्।

तास्वपि दशास्वनुभूतिरनुभूता चेत्, तस्याः प्रबोधसमयेऽनुसंधानं स्यात्; न च तदस्ति ॥ नन्वनुभूतस्य पदार्थस्य स्मरणनियमो न दृष्टचरः। अतः स्मरणाभावः

---

एवं घटादिनित्यत्वापत्त्या संवेदनानित्यत्वमुक्तम्। आपत्त्यन्तरेणापि तदाह **नित्यश्चे**दिति। स्वतस्सिद्धत्वादनुभवान्तरागोचरत्वात्, संवेदननित्यत्वे तदेव संवेदनं मानं वक्तव्यमिति नित्यत्वेन प्रतीतिर्भवेदित्यर्थः। न चानित्यत्वेऽप्यनित्यमिति प्रतीयेतेति दोषः; अनुभवान्तरागोचरत्ववादिनो ह्ययं दोषः। वयं तु संवेदनस्य स्वरूपतः स्वयम्प्रकाशत्वम्, अनित्यत्वादिरूपेण तस्यैव ज्ञानान्तरवे-द्यत्वञ्चाऽऽतिष्ठामहे इति। एवं वाऽर्थः—संवेदनं नित्यं चेत्, नित्यम्=इदानीमिव सर्वदा, इत्येव **प्रतीयेत**—घटं संवेद्मीत्याकारकप्रतीतिर्भवन्त्येव स्यादिति। घटमहं साक्षात्करोमीति प्रत्यक्ष इव अनुमिनोमीत्येवं परोक्षज्ञानेऽपि कालपरिच्छिन्नत्वमानुभविकम्। तदस्वीकारेऽप्येष दोष इत्याह **एव**मिति। **कालानवच्छिन्नाः प्रतीताश्चेत्**—कालावच्छेदमन्तरा प्रकाशन्ते चेत्। ननु प्रत्यक्षस्य वर्तमानग्राहित्वात् तत्रापत्तिः कृता युज्यते; न त्वत्रेति चेत्—उच्यते। अनुमितेर्नित्यत्वेऽनुमिति-प्रयोजकस्य हेतुदर्शनस्य नित्यतया तद्विषयस्य हेतोर्नित्यत्वे तस्य साध्याधीनतया साध्यस्यापि नित्यत्वम्; तथा तदाश्रयस्य पक्षस्यापि। अतः प्रत्यक्षोपजीवित्वादनुमानादेः, प्रत्यक्षविषयनित्यत्वे अनुमितिविषयनित्यत्वमपि प्रायः प्राप्तमेवेति।

ननु सविषयकसंविन्नित्यत्वे खल्वयं दोषः; निर्विषयाया एव तु नित्यत्वं ब्रूम इत्यत्राह **न चे**ति। **अनुपलब्धे**रिति। स्पष्टमेवेदं सूत्रितम्, "न भावोऽनुपलब्धेः" इति। **केवला** आश्रयेणापि रहिता। **पराहतत्वा**दिति। स्वापे घटाद्यनुपलब्धिरनुभवसामग्र्यभावात् युज्यते; स्वयम्प्रकाशायास्तु संविदः सत्त्वेऽनुपलब्धिर्न भवतीति भावः। ननु तदाऽनुपलब्धिः कथम्, तत्स्फुरणस्यैवोच्यमानत्वात्। न चोपलब्ध्यन्तरप्रसंगः, तस्या अनन्यगोचरत्वात्, निद्रासत्त्वाच्चेत्य-त्रोपपादयति **तास्वपी**ति। यथा पश्चात् स्मरणाभावात् **प्रातश्च**त्वरे गजो नानुभूत इत्यनुमीयते, तथा संविदः स्वापकालिकप्रकाशाभावोऽपि पश्चात्तदस्मरणादेवानुमीयत इति भावः। न च ज्ञानान्तरा-

कथमनुभवाभावं साधयेत् ? ॥ उच्यते । निखिलसंस्कारतिरस्कृतिकर-देहविगमादिप्रबलहेतु-विरहेऽप्यस्मरणनियमोऽनुभवाभावमेव साधयति ।

न केवलमस्मरणनियमादनुभवाभावः ; सुप्तोत्थितस्य, 'इयन्तं कालं न किंचिदहमज्ञासिषम्' इति प्रत्यवमर्शेनैव सिद्धेः । न च सत्यप्यनुभवे तदस्मरणनियमो विषयावच्छेद-विरहादहंकारविगमाद्वेति शक्यते वक्तुम् ; अर्थान्तराननुभवस्यार्थान्तराभावस्य च अनुभूतार्थान्तरास्मरणहेतुत्वाभावात् । तास्वपि दशास्वहमर्थोऽनुवर्तत इति च वक्ष्यते ।

ननु स्वापादिदशास्वपि सविशेषोऽनुभवोऽस्तीति पूर्वमुक्तम् ॥ सत्यमुक्तम् ; स तु आत्मानुभवः । स च सविशेष एवेति स्थापयिष्यते । इह तु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते ॥ केवलैव संवित् आत्मानुभव इति चेत्[न]—सा च साश्रयेति ह्युपपादयिष्यते ।

---

विषयत्वादेव न स्मर्यत इति वाच्यम्—तर्हि तत एव सुषुप्तौ प्रकाशितत्वस्यापि प्रतिपादनायोगात् । देहविगमादीति । तदुक्तं संवित्सिद्धौ, "प्रायणात नरकक्लेशात् प्रसूतिव्यसनादपि । चिरानुवृत्ताः प्राग्जन्मभेदाः न स्मृतिगोचराः" इति । प्रसूतिव्यसनम्—जननकालिकशिशुक्लेशः । तथाच, स्मरणप्रतिबन्धकाभावे सति अस्मर्यमाणत्वादिति विशिष्टो हेतुरिति भावः । साधकाभाव उक्तः, बाधकमप्यस्तीत्याह न केवलमिति । अनुभूतिः सुषुप्तिकालिकप्रकाशाभाववती तत्कालिकाभावप्रतियोगितयाऽनुसंधीयमानत्वादित्यनुमानं बाधकम् । ननु पूर्वप्रकृतास्मरणनियमविचारेऽवशिष्टे सति मध्ये एतदुक्तिः कुत इति चेत्—प्रतिसंधानानुभवः, अस्मरणेनानुपलब्ध्यनुमानसत्तां सूचयतीति न स हेतुर्दुष्ट इति ज्ञापनाय । एवमनुमानेन प्रतिसंधानेन चानुपलब्धिर्दर्शिता । तत्राप्रतिसंधाने विपरीतप्रतिसंधाने च कारणमन्यत् शङ्कते न चेति । सुषुप्तौ विषयाणामभानमिव धृतिज्ञानाश्रयस्याहमर्थस्य नाशोऽपि तैरिष्यते ; तदनुसारेणेदम् । अर्थान्तराभावस्य अहमर्थनाशस्य । अभावादिति । सुषुप्तिप्राक्कालानुभूतानां पश्चात् स्मरणवत् सुषुप्तिकालप्रकाशितानुभूतिस्मरणमप्यावश्यकमिति भावः । अहमर्थविलयस्तदेत्यपि दुर्वचमित्याह तास्विति ।

ननु सुषुप्तावनुभवनिरासेऽपसिद्धान्त इति पृच्छति नन्विति । आत्मानुभव इति । आत्मरूपोऽनुभवः, आत्मभानं वा ; न तु जानात्यर्थ इति भावः । आत्ममात्रभाने कथं सविशेषतेत्यत्राह स च । सविशेष इति । सुखमहमस्वाप्समिति पश्चात् सुखत्वविशिष्टप्रतिसंधानादिति भावः । ननु आत्मरूपोऽनुभवोऽयं निर्विषयनिराश्रयसंविदेवेति कथं तन्निषेध इति पृच्छति केवलैवेति । सा च साश्रयेति । आत्मेत्यनुक्त्वा आत्मानुभूतिः आत्मसंविदिति व्यवहारो हि आत्मनः स्फूर्तिरूपधर्मविवक्षया । सा चात्मनिष्ठत्वात् साश्रयैवेति । का नाम स्फूर्तिरिति चेत्—या घटादिषु जागरदशायां ज्ञानेन क्रियते, तादृशी । आत्मानुभव इतीत्यत्र आत्मानुभवे(-स्वापे) इति सप्तम्यन्तपदच्छेदोऽपि टीकायां प्रथमं कृतः । स्वापे धर्मभूतज्ञानस्य निर्विषयत्वेऽपि निराश्रयत्वं न भवतीति तदा विवक्षितार्थः ।

अतः, अनुभूतिस्सती स्वयं स्वप्रागभावं न साधयतीति प्रागभा[illegible] वक्तुम् । अनुभूतेरनुभाव्यत्वसंभवोपपादनेन अन्यतोऽप्यसिद्धिर्निरस्ता । [illegible] प्रागभावाद्यसिद्धया संविदोऽनुत्पत्तिः उपपत्तिमती ।

यदप्यस्या अनुत्पत्त्या विकारान्तरनिरसनम् (43); तदप्यनुपपन्नम्, प्रागभावे व्यभिचारात् । तस्य हि जन्माभावेऽपि विनाशो दृश्यते । भावेष्विति विशेषणे तर्ककुशलताऽऽविष्कृता भवति । तथा च भवदभिमताऽविद्याऽनुत्पन्नैव विविधविकारास्पदं तत्त्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यम् ।। तद्विकाराः सर्वे मिथ्याभूता इति चेत्– किं भवतः परमार्थभूतोऽप्यस्ति विकारः, येनैतद्विशेषणमर्थवद्भवति । न ह्यसावभ्युपगम्यते ।।

यदपि (43) अनुभूतिरजत्वात् स्वस्मिन् विभागं न सहते इति–तदपि नोपपद्यते; अजस्यैवाऽत्मनो देहेन्द्रियादिभ्यो विभक्तत्वात् । अनादित्वेन चाभ्युपगताया अविद्यायाः आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात् । स विभागो मिथ्यारूप इति चेत्; जन्मप्रतिबद्धः परमार्थविभागः किं क्वचिद् दृष्टस्त्वया ? अविद्यायाः आत्मनः परमार्थतो विभागाभावे (वेहि) वस्तुतो ह्य (तोऽ) विद्यैव स्यादात्मा । अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव, छेद्यभेदात् छेदनभेदवत् ।।

---

पश्चात् 'आत्मनोऽनुभवः' इति प्रथमान्ततैवेष्टा । आत्मस्फुरणमप्यात्मैवेति पूर्वपक्ष्याशयः । सविशेषात्मवादे तदपि धर्म एवेति सिद्धान्ती । प्रकारान्तरेणापि सविशेषत्वान्न पक्षद्वयैक्यमिति तु तत्त्वम् । ज्ञादिधात्वर्थभूतानुभूतिरेवात्मा संविदिति तदुक्त्या सा नैव निराश्रयेति विवक्षितम् ।

अत इति । निर्विषयानुभूतौ मानाभावात् सविषयानुभूतीनाञ्च विषयनित्यत्वादिपरिहाराय कालपरिच्छिन्नत्वस्यावश्यकतया स्वप्रागभावग्राहित्वस्य संविद्युपपादनादित्यर्थः । एवं स्वस्य स्वप्रागभावग्राहित्वमुपसंहृतम् । अथ परेणापि प्रागभावग्रहमाह अनुभूतेरिति । अनुभूतिर्नि[illegible] अजडत्वादित्यनुमाने स्वरूपासिद्धिर्बाधश्चोक्तावेवेति दोषान्तरमपि दर्शयति प्रागभावे इति । तथा च–भावरूपा च । भावत्वे सति अजत्वादिति दलान्तरेण प्रागभाववारणेऽप्यविद्यायां व्यभिचार इति तन्मतरीत्याऽनुमानं दुष्टमिति भावः । अनुभूतिर्न नाना अजत्वादित्यनुमाने साध्यमनानात्वं नाम किम् ? सजातीयभेदराहित्यमिति चेत्–सजातीयेतिविशेषणं व्यर्थम्; भेदान्तरसद्भावशङ्कावहञ्च । अतो भेदराहित्यमेव साधनीयमिति मत्वा दूषयति अजस्येति । विभक्तत्वं भिन्नत्वम् । जन्मप्रतिबद्धः हेत्वभावरूपोत्पन्नत्वव्याप्यः । विभागः साध्याभावरूपो भेदः । एवं विजातीयभेद उक्तः । अजत्वादिधर्मोक्त्यैव स्वगतभेदराहित्यमपि बाधितमित्यर्थसिद्धम् । सजातीयभेदराहित्यमपि बाधितमिति दर्शयति अबाधितेति । सन्मात्रप्रत्यक्षखण्डनावसरे घटादेरपि विषयत्वस्य, अबाधितानां ज्ञानानां विभिन्नतया वस्तुविषयकत्वस्य च स्थापनात् घटोऽस्तीतिज्ञानं पटोऽस्तीतिज्ञानभिन्नं तदविषयविषयकत्वात्, यथा एकच्छेदनाविषयविषयकं छेदनान्तरमित्यनुमानं सुगममिति भावः ।। एवञ्च—

यदपि (43) नास्या दृशेर्दशिरूपाया दृश्यः कश्चिदपि धर्मोऽस्ति ; दृश्यत्वादेव तेषां न दृशिधर्मत्वम् इति च—तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्वस्वयंप्रकाशत्वादिधर्मैरुभयमनैकान्तिकम् । न च ते संवेदनमात्रम् ; स्वरूपभेदात् । स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम् ; स्वयंप्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता ; प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम् ; सर्वकालवर्तमानत्वं हि नित्यत्वम् ; एकत्वमेकसंख्यावच्छेदः इति । तेषां जडत्वाद्यभावरूपतायामपि तथाभूतैरपि चैतन्यधर्मभूतैः तैरनैकान्त्यमपरिहार्यम् । संविदि तु स्वरूपातिरेकेण जडत्वादिप्रत्यनीकत्वमित्यभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेत्, तत्तन्निषेधोक्त्या किमपि नोक्तं भवेत् ।

अपिच संवित् सिध्यति वा न वा ; सिध्यति चेत्—सधर्मता स्यात् ; न चेत्—तुच्छता ; गगनकुसुमादिवत् ॥ सिद्धिरेव संविदिति चेत्—कस्य कं प्रतीति वक्तव्यम् । यदि न कस्य चित् कंचित्प्रति—सा तर्हि न सिद्धिः । सिद्धिर्हि पुत्रत्वमिव कस्यचित् कंचित्प्रति भवति ॥ आत्मन इति चेत्—कोऽयमात्मा ? ॥ ननु संविदेवेत्युक्तम् ॥ सत्यमुक्तम् ; दुरुक्तं तु तत् । तथाहि—कस्यचित् पुरुषस्य किंचिदर्थजातं प्रति सिद्धिरूपतया

---

एकेनैव समूहालम्बनज्ञानेन नानादृश्यग्रहणात् दर्शनभेदाभावात् कथमेवमिति न शङ्क्यम् ; उक्तरीत्या एकसंविद्दृश्यभिन्नविषयकसंविदैव ततो भेदस्य भाषितत्वात् ।

दृशिर्दृश्यधर्मरहिता दृशित्वात्, दृश्याः न दृशिधर्माः दृश्यत्वादिति व्यतिरेकिहेतुद्वयमनैकान्तिकम् ; नित्यत्वादिदृश्यधर्मवत्यां दृशौ दृशित्वाभावाभावात्, दृशिधर्मेषु तेषु दृश्यत्वाभावाभावाच्चेत्याशयेनाह । तदपीति । तदुभयमपीत्यन्वयः । प्रकाशनं प्रकाशकम् । स्वाश्रयायेति । इदं संवेदनगतस्वयम्प्रकाशत्वानुसारेण वैशद्यायोक्तम् ; शिष्टस्यैव पर्याप्तत्वात् । ज्ञाततानङ्गीकारात् प्रकाशशब्दार्थमन्यरूपमाह प्रकाशश्चेति । स्वयम्प्रकाशत्वादीनामभावरूपत्वे अधिकरणात्मकतया न धर्मत्वप्रसक्तिरिति मतिमपाकरोति तेषामिति । नोक्तं भवेदिति । स्वरूपविषये विवादाभावेऽपि विधाभेदेषु विवाददर्शनात् स्वाभिमतैर्विधाभेदैः स्वमतोपपादनान्न स्वरूपेणैक्यं धर्माणामिति हि प्रागेवोक्तम् ।

संविदो निर्धूतनिखिलभेदत्वेनाश्रयस्य ज्ञातुरप्यभावात् आत्मत्वमित्युक्तं खण्डयिष्यन्, नित्यत्वस्वयम्प्रकाशत्वादिस्वगतभेदवत्त्वस्योपपादितत्वात् स्वगतभेदान्तरप्रस्तावमुखेन सजातीयविजातीयभेदवत्त्वमप्युपपादयितुमाह अपिचेति । सिद्ध्यति प्रकाशते । न चेत्—न प्रकाशते चेत् । सिद्धिरेवेति । प्रकाशो नाम व्यवहारानुगुण्यम्, व्यवहारपूर्वकालसंबन्धः । स च संबन्धः स्वरूपानतिरिक्त इति न तेन सधर्मत्वमिति भावः । तर्हि व्यवहारकालादिविजातीयभेदवत्त्वं दुर्वारमिति दूषणस्य सत्त्वेऽपि संविदित्युक्त्यैव स्वीकर्तव्यं विजातीयभेदमाश्रयविषयरूपं दर्शयितुमाह—कस्येति । कस्य किंनिष्ठा । कं प्रति किंविषयिका । न सिद्धिरिति ; न संविदित्यर्थः । उभयोरैक्यस्य तदुक्तत्वात् तत्पदप्रयोगः । दुरुक्तमिति । संविदः संविन्निष्ठत्वाभावादिति भावः ।

तत्संबन्धिनी सा संवित् स्वयं कथमिवात्मभावमनुभवेत् ? एतदुक्तं भवति—अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगति संविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषः, 'घटमहं जानामि,' 'इममर्थमवगच्छामि,' 'पटमहं संवेद्मि' इति सर्वेषामात्मसाक्षिकः प्रसिद्धः। एतत्स्वभावतया हि तस्याः स्वयंप्रकाशता भवताऽप्युपपादिता। अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मत्ववत् कर्तृत्वमपि दुर्घटमिति ॥

तथा ह्यस्य कर्तुः स्थिरत्वं कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिवोत्पत्तिस्थितिनिरोधाश्च प्रत्यक्षमीक्ष्यन्ते। कर्तृस्थैर्यं तावत्—'स एवायमर्थः पूर्वं मयाऽनुभूतः' इति

---

एवंवाऽर्थः—सिद्धिः प्रकाशः कस्य पदार्थस्य भवति, कस्मै च भवतीति प्रश्नः। प्रतिशब्दप्रयोगसाम्यात् पुत्रत्वदृष्टान्तीकरणम्। आत्मन इति चेदिति। आत्मन इत्यावर्तते। आत्मनः—स्वस्य, संविदः सिद्धिः आत्मने—आत्मशब्देन लोकप्रसिद्धायेति चेदित्यर्थः। तत्र चतुर्थ्यन्तात्मशब्दवाच्यः क इति पृच्छति कोऽयमिति। विषयाश्रयरूपविजातीयद्वयं विना संविन्न सिद्ध्यतीत्युपपादयति तथाहीति। प्रथमव्याख्या तथाहीत्युपपादनानुगुणा। प्रतीतिसामान्यस्य इदमित्थमित्याकारतया प्रकारप्रकार्यनेकविषयकत्वमेकैकसंविद्यपीति वक्तुं जातपदम्। तत्संबन्धिनी पुरुषनिष्ठा। कर्मत्ववदिति। विषयापलापेन विज्ञानमात्रस्वीकारिणो योगाचारस्य, 'नाभाव उपलब्धेः' इति सूत्रे भवद्भिरपि निराकृतत्वात् ज्ञानातिरिक्तविषयसत्त्वं भवत्संमतम्; तत एव ज्ञातृसत्त्वमपीति भावः।

ननु तस्मिन्नेवाधिकरणे साक्षी कश्चित् शांकरभाष्ये स्थापितः—साक्षी च संविदेव। ज्ञानावगत्यादिशब्दानामन्तःकरणवृत्तिपरत्वात् वृत्तीनामेव विषयसंबन्धित्वात् सविषयकवृत्तीनाञ्च स्वयम्प्रकाशसंवित्प्रकाश्यत्वात् संविदेव एवं वस्तुप्रकाशकत्वात् वस्तुग्राहिणीति ज्ञातृत्वेन व्यवह्रियत इयेवम्। अतो विषयग्रहणकर्तृत्वात् कर्तृत्वं सुवचमित्यत्रोपपादयति तथा ह्यस्येति। विषयो ज्ञानं ज्ञातेति त्रयं तावत् सर्वसंमतम्। तत्र विषयो योगाचारनिरसनेन स्थापितः। ज्ञानञ्च सविषयकं विषयप्रकाशकमनुभवसिद्धम्। तद्विरोधेन अप्रकाशिकाः वृत्तीः परिकल्प्य तासां विषयसंबन्धमभिमत्य जडानां तासां संविद्रूपज्ञानान्तरबलात् विषयप्रकाशकत्वकल्पनं ज्ञानानाश्रयस्य संविदः तन्मुखेन अमुख्यज्ञातृत्वकल्पनं चायुक्तम्। किं तु यथानुभवं ज्ञानानां वस्तुप्रकाशकत्वम्, यस्मै तानि प्रकाशन्ते, साक्षात् तेषां तन्निष्ठत्वञ्च स्वीकर्तव्यमिति स एवाश्रय आत्मेति भावः। अनुभविता न विषयग्राह्यनुभवः स्थिरत्वात्, प्रत्यभिज्ञाश्रयत्वात्, ज्ञानाधारत्वेन विषयत्वादिति हेतुत्रयमत्र क्रमेण विवक्षितम्। तत्र प्रथमहेतुः संविद्यप्यस्तीति भ्रमवारणाय अहंजानामीत्यादिवाक्यमिति विवेकः। स एवायमर्थ इति विषयस्थैर्यकथनम्। तच्च, बाधकाभावेपि ज्वालाभेदनयेन प्रकृतज्ञानविषयस्य कर्तृस्थैर्यस्यापलापे तुल्यरीत्या विषयस्थैर्यस्याप्यपलाप इति बौद्धमतक्षणिकत्वापत्तिरिति सूचनाय। पूर्वमिति। य इति आदिः। अयमिति इदानीं स्वेन दृश्यमानत्वस्यापि विषयीकरणात् पूर्वोत्तरकालद्वयसंबन्धरूपं

प्रत्यभिज्ञाप्रत्यक्षसिद्धम् । 'अहं जानामि', 'अहमज्ञासिषम्', 'ज्ञातुरेव ममेदानीं ज्ञानं नष्टम्' इति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धा इति कुतस्तदैक्यम् । एवं क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे पूर्वेद्युर्दृष्टमपरेद्युः इदमहमदर्शम् इति प्रत्यभिज्ञा च न घटते ; अन्येनानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसंभवः । किञ्च अनुभूतेरात्मत्वाभ्युपगमे तस्याः नित्यत्वेऽपि प्रतिसंधानासंभवस्तदवस्थः । प्रतिसन्धानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति—नानुभूतिमात्रम्—'अहमेवेदं पूर्वमप्यन्वभूवम्' इति । भवतोऽप्यनुभूतेर्न ह्यनुभवितृत्वमिष्टम् ; अनुभूतिरनुभूतिमात्रमेव ।

संविन्नाम काचिन्निराश्रया निर्विषया वा(चा)त्यन्तानुपलब्धेर्न संभवतीत्युक्तम् । उभयाभ्युपेता संविदेवाऽऽत्मेति उपलब्धिपराहतम् । अनुभूतिमात्रमेव परमार्थ इति निष्कर्षकहेत्वाभासाश्च निराकृताः ॥

ननु च (43) 'अहं जानामि' इत्यस्मत्प्रत्यये योऽनिदमंशः प्रकाशैकरसश्चित्पदार्थः, स आत्मा । तस्मिन् तद्बलनिर्भासिततया युष्मदर्थलक्षणः, अहं जानामीति सिध्यन् अहमर्थ-

---

स्थैर्यं कर्तृनिष्ठमप्यत्र विषयीभवतीति न हेत्वसिद्धिरिति भावः । संविदां स्थिरत्वे सति प्रकृतहेतोर्विपक्षगामित्वेनासाधकत्वात् तदस्थैर्यमाह अहमिति । अत एवास्थिरत्वात् प्रत्यभिज्ञाश्रयत्वमप्यनुपपन्नमिति एवं प्रत्यभिज्ञाप्रसंगादाह एवमिति । पूर्वेद्युरित्याकारभेददर्शनात् पूर्वप्रत्यभिज्ञायाः प्रकृतानुपयोगोऽभिमत इति न मन्तव्यम् । सैव प्रत्यभिज्ञा संविदस्तदाश्रयत्वासंभवकथनाय प्रकृतेऽनूद्यते । तर्हि किमिति आकारस्यैवं लेखनमिति चेत्-एवं कश्चिदद्वैती कथयेत्—संविदां भङ्गुरत्वेपि अहंकारस्य ज्ञातृत्वाभिमतस्य स्थिरत्वात् कर्तृस्थैर्यविषयकप्रत्यभिज्ञोपपत्तिरिति । तदर्थं पूर्वेद्युरित्येवं पूर्वप्रत्यभिज्ञाविवरणम् । तन्मते प्रतिस्वापमहङ्कारप्रलयात् स्थैर्यं न घटत इति भावः । दृष्टमित्यत्र प्रति इत्यध्याहारो वा ; दृष्टमिदमित्यन्वयेन पूर्वेद्युरित्यारभ्य प्रत्यभिज्ञाकारो वा । अथवा पूर्वेद्युर्दृष्टत्वेनापरेद्युरदर्शमिदमिति तदर्थः । तेन प्रत्यभिज्ञाश्रयत्वस्यापि प्रत्यभिज्ञान्तरविषयतया विषयान्तरवत् अवश्याङ्गीकार्यत्वं ज्ञाप्यते । अस्थिरस्याश्रयत्वायोगमुपपादयति अन्येनेति । तृतीयं हेतुमाह किञ्चेति । प्रतिसंधानेतिपदं तस्य प्रकृतत्वात् । ननु साक्षिण एव ज्ञातृत्वं ब्रूमः, न वृत्तीनामित्यत्राह संविन्नामेति । अहमिदं जानामीत्यत्र स साक्षी किमहम्पदेनोच्यते, उत ज्ञाधातुना । आद्येऽहमर्थ एव सः । अन्त्ये विषयविषयकसंविदेव ! अन्यस्तु नोपलभ्यते । वृत्तिसाक्षिरूपानुभवद्वये च मानाभाव इति ॥

एवं निर्धूतनिखिलभेदत्वं निराकृत्य ज्ञातुरात्मत्वं वदन्, 'स्वप्रकाशस्वरूपा सैवात्मा' इति तदुक्तं खण्डयितुमनुवदति ननुचेति । अस्मत्प्रत्यये अहमित्युल्लिख्यमानान्तर्गतः । अहमित्यनेन अन्तःकरणावच्छिन्नचैतन्यं ग्राह्यम् । तत्रान्तःकरणमहङ्कारं विना नान्यत् । अनिदमंशः प्रत्यग्भूतः । तद्बलनिर्भासिततया युष्मदर्थलक्षणः—चिद्भास्यत्वरूपं युष्मदर्थस्य लक्षणं प्राप्तः । सिद्ध्यन् ज्ञानाद्याश्रयतया प्रतीयमानः । अनुभूतिरात्मा प्रत्यक्त्वात्, अनुभूतिः प्रतीची स्वयम्प्रकाशत्वात्,

श्चिन्मात्रातिरेकी युष्मदर्थ एव ॥ नैतदेवम्; 'अहं जानामि' इति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव ॥ किञ्च—

अहमर्थो न चेदात्मा, प्रत्यक्त्वं नात्मनो भवेत्। अहंबुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते ॥
निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट्। भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥
अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति। अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥
मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता। इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति॥
स्वसम्बन्धितया ह्यस्याः सत्ता वि(ऽपि)ज्ञप्तितादि च। स्वसम्बन्धवियोगे तु ज्ञप्तिरेव न सिद्ध्यति॥
छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत्। अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥
'विज्ञातारमरे केन,' 'जानात्येवे'ति च श्रुतिः। 'एतद्यो वेत्ति तं प्राहुःक्षेत्रज्ञ' इति च स्मृतिः ॥
'नाऽत्मा श्रुते'रित्यारभ्य सूत्रकारोऽपि वक्ष्यति।
'ज्ञोऽत एवे' त्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम् ॥

---

अनुभूतिः स्वयम्प्रकाशा चित्त्वादिति व्यतिरेक्यनुमानत्रयम्, अहमर्थो नात्मा पराक्त्वात् घटवत्, अहमर्थः पराक् ज्ञानाधीनप्रकाशत्वात्, अहमर्थो ज्ञानाधीनप्रकाशः चिद्भिन्नत्वादित्यन्वय्यनुमानत्रयञ्च पूर्वपक्षीष्टमिह दर्शितम्। **धर्मधर्मितये**ति। अहमित्युभयोल्लेखो न प्रामाणिकः। उल्लेखेऽपि तत्र चिदंशः किं धात्वर्थानुभूतेरन्यः, अनन्यो वा। आद्योऽनुपलब्धिहतः। अन्त्ये धर्मतया प्रतीतस्य न शेषित्वेनोल्लेखप्रसक्तिः। उक्तानुमानेषु अनुभूतिस्वयम्प्रकाशत्वानुमानमेकमेव निर्दुष्टम्। अनुभूतिर्न प्रत्यक् धर्मतयैव भासमानत्वात्, अहमर्थः प्रत्यक् अन्यशेषत्वेनाभासमानत्वादिति प्रत्यक्षानुगुणमनुमातव्यमिति भावः।

अहङ्कारस्याहंशब्दमुख्यार्थत्वं खण्डयति **किञ्चे**ति। आत्मा अहमर्थः प्रत्यक्त्वादित्यनुमानम्। तत्रानुकूलतर्कः श्लोकेनोच्यते। परागर्थस्य इदमित्युल्लेखवत् प्रत्यगर्थस्याहमित्युल्लेख इति व्यक्तम्। उल्लेखान्तरञ्च न लक्ष्यते। यदि प्रत्यगर्थस्याहंशब्दो न वाचकः स्यात्, स कथं तदभिलापकशब्दः स्यात्। ननु वाच्यत्वं ब्रह्मणो न युक्तमिति वाच्यमन्यत् परिकल्प्य तस्य लक्ष्यत्वमुच्यत इति चेत्— कुतो न युक्तम्? सधर्मकत्वापत्तेरिति चेत्—लक्ष्यत्वेऽपि तुल्यम्। अविद्यासंबन्धः, अधिष्ठानत्वमित्याद्यपि च हि एवमयुक्तं स्यादिति। अहंशब्दमुख्यार्थो नाहङ्कारः, नित्यत्वेन मोक्षभाक्त्वेन चेष्यमाणत्वादित्याह **निरस्ते**ति। अहमर्थो ज्ञानाधीनप्रकाशः अनुभूतिभिन्नत्वादित्यनुमानं बाधितम्, ज्ञानमहमर्थाधीनसत्ताप्रकाशोभयवत् तद्धर्मत्वादित्यनुमातव्यत्वादित्याह **स्वे**ति। **विज्ञप्तितादि** विषयप्रकाशत्वं स्वयम्प्रकाशत्वञ्च। तदधीनत्वे स्वयमिति कथमिति चेत्—ज्ञानान्तरानपेक्षणमात्रात्। धर्मस्य धर्म्यायत्तत्वं ह्युचितमिति भावः। **छेत्तुरि**त्यादि। अत्र, 'नाभाव उपलब्धेः' इत्यत्रत्य**भामती**, "यथा छेत्ता छिदया छेद्यं वृक्षादि व्याप्नोति, न तु छिदां छिदान्तरेण, नापि छिदैव छेत्री—एवं प्रमाता प्रमेयं नीलादि प्रमया व्याप्नोति। न तु प्रमां प्रमान्तरेण, नापि प्रमैव प्रमात्री" इत्यादिरनुसंधेया।

अहम्प्रत्ययसिद्धो ह्यस्मदर्थः ; युष्मत्प्रत्ययविषयो युष्मदर्थः । तत्र, अहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिवद्व्याहतार्थं च ।

न चासौ ज्ञाताऽहमर्थोऽन्याधीनप्रकाशः ; स्वयंप्रकाशत्वात् । चैतन्यस्वभावता हि स्वयंप्रकाशता । यः प्रकाशस्वभावः, सोऽनन्याधीनप्रकाशः, दीपवत् । न हि दीपादेः स्वप्रभावलनिर्भासितत्वेनाप्रकाशत्वमन्याधीनप्रकाशत्वं च । किं तर्हि ? दीपः[स्वयं]प्रकाशस्वभावः स्वयमेव प्रकाशते ; अन्यानपि प्रकाशयति स्वप्रभया ।

एतदुक्तं भवति—यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते—

---

उक्तकारिकार्थमाह अहम्प्रत्ययेत्यादिना । आत्मा जडः स्यात् अनुभूतिभिन्नत्वादित्यत्राह **न चेति । नान्याधीनप्रकाशः** ; अन्यमात्राधीनप्रकाशो न ; स्वाधीनप्रकाशरहितो नेत्यर्थः । सिद्धान्ते धर्मभूतज्ञानाधीनप्रकाशस्यापीष्टतया यथाश्रुतानुपपत्तेः । आत्मनि ज्ञाननिरपेक्षप्रकाशत्वापरपर्यायस्वयम्प्रकाशत्वरूपहेतोरसिद्धिरित्यत्राह **चैतन्येति** । स्वयम्प्रकाशत्वं नाम स्वाधीनप्रकाशकत्वम् । इदञ्चाहमर्थस्य चैतन्यगुणकत्वात् चैतन्याधीनस्य विषयप्रकाशादेर्धर्मिभूतस्वाधीनत्वात् दुरपह्नवम् । अतश्चैतन्यस्वभावत्वं स्वाधीनसर्वप्रकाशत्वं प्रकृतसाध्यविलक्षणं सद्धेतुरिति । **स्वयम्प्रकाशशब्दस्या**त्रत्यस्यायमर्थ इति, "अन्यानपि प्रकाशयति स्वप्रभया" इत्युपरितनवाक्येन स्पष्टम् । उक्तमर्थमुदाहरणप्रदर्शनेन मनसि लगयति य इति । अत्र **सिद्धिग्रन्थे, "चैतन्यस्वभावतया** स्वयञ्ज्योतिष्ट्वात्" इति हेतुः प्रयुक्तः । अत्र भाष्ये तृतीयान्तपाठाभावात् **चैतन्यस्वभावतेति** वाक्ये यथाश्रुतानन्वयात् क्लिष्टनिर्वाहः टीकादौ कृतः । स्वरसार्थस्तु दर्शितः । सिद्धिग्रन्थेपि तृतीयायाः अभेदादिपरता भाष्यकृदिष्टा स्यात् । ननु दीपे आत्मनि च प्रकाशस्वभावत्वमेकरूपं न भवति ; ज्ञानगतमेव तु प्रकाशकत्वम्, दीपे तु व्यवहारयोग्यतापत्तिरूपप्रकाशजनकज्ञानप्रतिबन्धकतमोनिरासकत्वमात्रं प्रकाशकत्वमिति भावरूपाज्ञानानुमानावसरे वक्ष्यमाणत्वात् । तत् कथं दृष्टान्तदार्ष्टान्तिकयोरेकरूपहेतुमत्त्वमिति चेत्—नात्र हेतुना साधनार्थं दीपदृष्टान्तः ; किन्तु ज्ञानजनकत्वरूपप्रकाशकत्वं यथा दीपे, तथा व्यवहारयोग्यत्वरूपप्रकाशकत्वमात्मनि संभाव्यत इति औचित्यमात्रप्रदर्शनम् । एतेन—औष्ण्यादेरुपलब्धिव्यवस्थाप्यत्ववत् चतुरङ्गुलमुद्गम्य विशरणमुपलब्धिव्यवस्थाप्यमस्तु ; मणिद्युमणिप्रभृतीनामपि मौक्तिकवत् रत्नाकरादिजलोद्भवोपचयाद्यस्तु ; विशीर्णावयवरूपप्रभाकत्वादि वैज्ञानिकेष्टश्चास्तु; सूर्यदीपादितेजसि स्थैर्यास्थैर्यादिकमपि यथायथम्; तस्माद्द्वैतिसंमतमपि नान्यैरेष्टव्यं प्रभाया अतिरिक्तत्वम्—इत्यपि निरस्तम्—आत्मतद्धर्मज्ञानरूपप्रामाणिकार्थस्य मनसि लगयत्वायोदाहरणप्रदर्शने पि तत्र नैर्भर्याभावात्, सुदीर्घप्रसरणार्हप्रभाद्रव्यस्याश्रयावयवत्वायोगाच्चेति । **प्रकाशस्वभावः** विषयप्रकाशकधर्मविशिष्टः । **निर्भासितत्वेनाप्रकाशत्वमिति** । दीपस्य प्रभानिर्भासितत्वं नेष्टम् । अतोऽस्य निर्भासित्वानिष्ट्या प्रभानिर्भासितत्वप्रयुक्तास्वयम्प्रकाशत्वं न ; नापि दीपान्तराधीनप्रकाशत्वमित्यर्थः ।

ननु दृष्टान्तेऽपि द्रव्यद्वयं नेत्यत्रोपपादयति **एतदुक्तमिति** । **यथा—अवतिष्ठते** इति वाक्यस्य

यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता—तथाऽपि तेजोद्रव्यमेव; न शौक्ल्यादिवद् गुणः; स्वाश्रयादन्यत्रापि वर्तमानत्वात् रूपवत्त्वाच्च शौक्ल्यादिवैधर्म्यात्। प्रकाशवत्त्वाच्च तेजोद्रव्यमेव; नार्थान्तरम्। प्रकाशवत्त्वं च स्वस्वरूपस्यान्येषां च प्रकाशकत्वात्। अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रयत्व-तच्छेषत्वनिबन्धनः। न च आश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते, मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गात्। दीपेऽप्यवयविप्रतिपत्तिः कदाचिदपि न स्यात्। न हि विशरणस्वभावावयवाः दीपाश्चतुरङ्गुलमात्रं नियमेन पिण्डीभूता ऊर्ध्वमुद्गम्य ततः पश्चात् युगपदेव तिर्यगूर्ध्वमधश्चैकरूपा विशीर्णाः प्रचरन्तीति शक्यं वक्तुम्। अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना विनश्यन्तीति पुष्कलकारणक्रमोपनिपातात् तद्विनाशे विनाशाच्चावगम्यते। प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यमौष्ण्याधिक्यमित्यादि उपलब्धिव्यवस्थाप्यम्; अग्न्यादीनामौष्ण्यादिवत्— एवमात्मा चिद्रूप एव चैतन्यगुणक इति। चिद्रूपता हि स्वयंप्रकाशता॥

तथा हि श्रुतयः—"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नःप्रज्ञानघन एव" (बृ. 6. 5. 12.), (बृ. 4. 4. 12.)"विज्ञानघन

"एवमात्मा चिद्रूप" इति वक्ष्यमाणवाक्येन संबन्धः। **एकमेव तेजोद्रव्यमि**ति। तेजस्त्वेनैकजातीयं द्रव्यमित्यर्थः। **तेजोद्रव्यमेवे**ति द्विःप्रयोगे पूर्वत्र तेज इत्यविवक्षितम्; परत्र द्रव्यमित्यविवक्षितम्। दीपस्य तेजस्त्वेपि मणिद्युमणिवैषम्यमाह **अतः सप्रभाका** इति। **पुष्कलकारणक्रमः** तैलवर्त्याद्यंशघटितसामग्रीक्रमिकता। आश्रयनाशनाश्यानां विशरणमप्यशक्यवचनमिति भावः। विशरणाभावे मूलभागे अवयवबाहुल्यम्, अग्रे वैरल्यमित्यादि कथमित्यत्राह **प्रभाया** इति। **व्यवस्थाप्यम्**; तथाभावस्तत्स्वभाव इति उपलम्भबलात् स्वीकार्यमित्यर्थः। एवं प्रभाप्रभावद्द्रव्यभेदोदाहरणञ्च, "गुणाद्वाऽऽलोकवत्" इति सूत्रे सर्वसंमतेः। ननु चित्त्वं ज्ञानत्वं विषयप्रकाशकत्वम्, तत् यदि आत्मन इष्टम्, तर्हि चैतन्यगुणकत्वं व्यर्थमित्यत्राह **चिद्रूपता ही**ति। श्रुतौ ज्ञानमिति व्यपदेशः आत्मनो न विषयग्राहित्वप्रयुक्तः, किन्तु स्वयम्प्रकाशत्वरूपानुभूतिसाधर्म्यप्रयुक्त इति भावः।

**तथा हि श्रुतय** इति। आत्मनः स्वयम्प्रकाशत्वमद्वैतिनोऽपीष्टम्। ज्ञातुरात्मत्वमेव प्रकृतम्। चैतन्यगुणकत्वे चिद्रूपत्वं न स्यादिति शङ्कायां चिद्रूपस्यैव चैतन्यगुणकत्वमुपसंहृतम्। एवम्भूतस्य चैतन्यगुणकत्वमेव, 'विज्ञातारमरे' इति पूर्वश्लोकाभिप्रेतसर्वश्रुत्युदाहरणेन स्पष्टयति। 'ज्ञोत' इति सूत्रमपि दर्शयिष्यति। अतः श्लोकानुसारात् ज्ञातृत्वस्थापनार्थमेव सर्वमिदम्। **रसघन** इति पदं गुणगुणिनोर्भेदात् रसाश्रयत्वे स्वरसमिति दार्ष्टान्तिके प्रज्ञानघनशब्दोऽपि तथेति। अन्तर्बहिरित्यनुक्त्वा **अनन्तरोऽबाह्य** इति व्यतिरेकमुखेनोक्तिः निरवयवे आत्मनि अन्तर्बहिःप्रदेशाभावात्; तदानुरूप्याय। दृष्टान्तेऽपि सैव रीतिः। इदं द्वितीये मैत्रेयीब्राह्मणे। प्रथमे तु केवलं **विज्ञानघन एवे**ति पदम्। तदेतदनुसारात् एतत्समानार्थकम्। अत्रेति वाक्यं स्वप्नप्रकरण एव।

एव", (बृ. 6. 3. 9.) "अत्रायं पुरुषः स्वयंज्योतिर्भवति", "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" (बृ. 6. 3. 30.), "अथ यो वेद, इदं जिघ्राणीति, स आत्मा" (छा. 8. 12. 4.), "कतम आत्मेति। योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" (बृ. 6. 3. 7.), "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" (प्रश्न. 4. 9.), "विज्ञातारमरे केन विजानीयात्" (बृ. 4. 4. 14.), जानात्येवायं पुरुषः" (?...), "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्" (छा. 7. 26. 2.), "स उत्तमः पुरुषः"......"नोपजनं स्मरन्निदं शरीरम्" (छा. 8. 12. 3.), "एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" (प्रश्न 6. 5.), "तस्माद्वा एतस्मान्मनोमयात् अन्योऽन्तर आत्मा विज्ञानमयः" (तै. आनं 4) इत्याद्याः। वक्ष्यति च "ज्ञोऽत एव" (शारी. 2. 3. 19.) इति।

अतः स्वयंप्रकाशोऽयमात्मा ज्ञातैव ; न प्रकाशमात्रम्। प्रकाशत्वादेव कस्यचिदेव भवेत् प्रकाशः, दीपादिप्रकाशवत्। तस्मान्नात्मा भवितुमर्हति संवित्। संविदनुभूतिज्ञानादिशब्दाः संबन्धिशब्दा इति च शब्दार्थविदः। न हि लोकवेदयोः जाना[ती]त्यादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः॥

यच्चोक्तम् (43.), अजडत्वात् संविदेवाऽऽत्मेति-तत्रेदं प्रष्टव्यम्-अजडत्वमिति किम-

---

अत्र स्वप्नेऽयमात्मा स्वयंज्योतिरित्युक्ते स्वयम्प्रकाश इत्यर्थो न स्वरसः ; सर्वदैव स्वयम्प्रकाशत्वात्। 'स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती'ति च पूर्ववाक्यम्। आदित्यादिज्योतिष्ट्वं जागरे आत्मनोऽस्ति ; स्वप्ने तु तन्निरपेक्षेण ज्योतिषा स्वप्नमनुभवतीति कथनात् धर्मभूतज्ञानविवक्षा युक्ता। आदित्यादिकं क्रियानुष्ठापकज्ञानसाधनं जागरे ; स्वप्ने स्वयमेव ज्योतिः ज्ञानसाधनमित्यर्थात्। अन्तर्ज्योतिः स्वयंप्रकाशः। जानात्येव ; न तु ज्ञानस्य कदाचिदभाव इत्यर्थः। पश्यः साक्षात्कर्ता। दुःखताम्— कुत्रापि प्रतिकूलतां न पश्यति। विशेषनिषेधस्य शेषाभ्यनुज्ञानार्थतया मुक्तावपि ज्ञानविशेषसिद्धिरिति ज्ञापयितुमेतदादिवाक्यम्। स उत्तम इति। 'स उत्तमः पुरुषः। स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा नोपजनं स्मरन्निदं शरीरम्' इति वाक्यानुपूर्वी। उत्तमः पुरुषः पुरुषोत्तमः। तत्र पुरुषोत्तमे सः मुक्तः भक्षयन् रममाणश्च सन्, इदं प्राकृतम् उपजनं स्त्रीपुंससामीप्याज्जातं बन्धुजनसमीपे स्थितश्च हेयं शरीरं अस्मरंश्च सन् पर्येति परितो गच्छति। एवमेवेति। यथा नद्यः समुद्रं प्राप्यास्तं गच्छन्ति, एवमेवास्य परिद्रष्टुः सर्वविषयज्ञानवत एव मुक्तस्य षोडश कलाः—कलाः षोडश भूतानि प्राणः श्रद्धेन्द्रियं मनः। अन्नं वीर्यं तपो मन्त्रः कर्म लोकाश्च नाम च—पुरुषं परमात्मानं जीवे प्राप्नुवति सह प्राप्तुं प्रस्थायास्तंगच्छन्तीत्यर्थः। प्रकाशः संवित्। संविदिति ; विदिप्रभृतिधातव इत्यर्थः। संबन्धिशब्दाः विषयाश्रयसंबन्धिवाचकाः। एवं श्लोकाः विवृताः।

भिप्रेतम् ? स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत्—तथा सति दीपादिष्वनैकान्त्यम् । संविदतिरिक्तप्रकाशधर्मानभ्युपगमेनासिद्धिर्विरोधश्च । अव्यभिचरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचारान्निरस्तम् ।

यद्युच्येत—सुखादिः अव्यभिचरितप्रकाशोऽपि अन्यस्मै प्रकाशमानतया घटादिवत् जडत्वेन अनात्मा—इति—ज्ञानं वा किं स्वस्मै प्रकाशते ? तदपि ह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते, अहं सुखीतिवत्, जानाम्यहमिति । अतः स्वस्मै प्रकाशमानत्वरूपमजडत्वं संविदि असिद्धम् । तस्मात् स्वात्मानं प्रति स्वसत्तयैव सिध्यन् अजडोऽहमर्थ एवात्मा । ज्ञानस्यापि प्रकाशता तत्संबन्धायत्ता । तत्कृतमेव हि ज्ञानस्य सुखादेरिव स्वाश्रयचेतनं प्रति प्रकटत्वम्, इतरं प्रति अप्रकटत्वं च । अतः न ज्ञप्तिमात्रमात्मा ; अपि तु ज्ञातैवाहमर्थः ॥

अथ यदुक्तम् (44), अनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते, रजततयेव शुक्तिः ; निरधिष्ठानभ्रमानुपपत्तेः—इति—तदयुक्तम् । तथा

---

ज्ञानस्यात्मत्वसाधकं हेत्वन्तरमजडत्वम् । **स्वसत्ताप्रयुक्तेति** ; स्वाभाविकेत्यर्थः । **असिद्धिर्विरोधश्चेति** । संवित् आत्मा स्वसत्ताप्रयुक्तप्रकाशवत्त्वादित्युक्तौ प्रकाशस्य धर्मस्याभावात् स्वरूपासिद्धिः । दीपादौ अनात्मन्येव हेतुसत्त्वात् साध्याभावसाधकत्वञ्चेत्यर्थः । चार्थः अप्रयोजकत्वम् । प्रयुक्तत्वस्थाने व्यापकत्वनिवेशे सुखादौ व्यभिचारमाह **अव्यभीति** । अव्यभिचरितप्रकाशा सत्ता । स्वस्मै प्रकाशमानत्वरूपाजडत्वविवक्षया व्यभिचारपरिहारेऽपि स्वरूपासिद्धिरित्याह **यद्युच्येते**त्यादिना । **ज्ञानं वे**त्यतः प्राक् **तत्रेदंप्रष्टव्य**मित्यस्यानुषङ्गः ; अतो यदिशब्दोपपत्तिः । एवं ज्ञानस्य स्वस्मै प्रकाशमानत्वं नेत्युक्तम्; स्वयंप्रकाशत्वमपि अन्यानधीनप्रकाशत्वं स्वस्वधर्म्युभयातिरिक्तानधीनप्रकाशत्वरूपमेव वाच्यम्; उक्तं हि श्लोके प्राक्, 'स्वसंबन्धितया ह्यस्याः' इति, धर्मिणं प्रत्येव प्रकाशमानतया धर्म्यधीनत्वस्याऽऽवश्यकत्वादित्याह **ज्ञानस्यापी**ति । अनेन अनुभूतौ हेतुतया साध्यतया वोच्यमानं स्वयम्प्रकाशत्वम्, अनन्याधीनप्रकाशत्वमात्रञ्चेत्, अनन्वितमित्युक्तं भवति ।

ज्ञप्तिमात्रमात्मेति वदता ज्ञातृता भ्रान्तिसिद्धा, रजततेव शुक्तिशकलस्येत्युक्तं खण्डयितुमनुवदति **अथ यदुक्तमि**ति । नात्र पुरोवादवैरूप्यं मन्तव्यम्; एवमाशयात्—अहं जानामीत्यत्र अहमित्युल्लिख्यमाना तावत् अहमर्थावच्छिन्नानुभूतिः । न च कथमनुभूतेर्विषयाश्रयौ विना भानमिति शङ्क्यम्—तस्याः परमार्थतो निर्विषयत्वान्निराश्रयत्वाच्च यथास्थिति भानसंभवात् । तद्विशेषणमहमर्थः । तत्रत्या ज्ञातृता भ्रान्त्याऽनुभूतौ भासते । न च-अहमर्थमात्रमहमिति गृह्यताम् ; तथा च ज्ञातृत्वभ्रमैवेति वाच्यम्-अहमर्थस्य कल्पिततया तज्ज्ञानस्यापि भ्रमतयाऽधिष्ठान-तज्ज्ञानयोरावश्यकत्वात् । न च चिदंशस्यापि विषयाश्रयवत् कल्पितत्वं युक्तम्-निरधिष्ठानभ्रमायोगेन कस्यचिदावश्यकत्वे अप्रकाशस्याधिष्ठानत्वे ज्ञानकल्पनाक्लेशात् स्वयम्प्रकाशायास्तस्या एवाधिष्ठानत्वस्य वक्तव्यत्वादिति । एतत्खण्डने हेतुमाह **तथासती**ति ।

सति अनुभवसामानाधिकरण्येनानुभविताऽहमर्थः प्रतीयेत, 'अनुभूतिरहम्' इति ; पुरोवस्थितभास्वरद्रव्याकारतया रजतादिरिव । अत्र तु पृथगवभासमानैवेयमनुभूतिः अर्थान्तरमहमर्थं विशिनष्टि, दण्ड इव देवदत्तम् । तथा हि, 'अनुभवाम्यहम्' इति प्रतीतिः । तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन् अनुभवाम्यहमिति प्रत्ययः, दण्डमात्रे 'दण्डी देवदत्तः' इति प्रत्ययवत् विशेषणभूतानुभूतिमात्रावलम्बनः कथमिव प्रतिज्ञायेत ?

---

अयमाशयः—अहं जानामीत्यत्रात्मनि ज्ञातृत्वग्रहणं भ्रान्तिरिति वदता, इदं रजतमित्यत्राधिष्ठानारोप्ययोर्वाचकपदवत् आत्मज्ञातृत्वयोर्वाचके पदे के इति वक्तव्यम् । किं जानामीति ज्ञातृत्ववाचि अहमिति चात्मवाचीति, किं वा अहमिति ज्ञातृवाचि जानामीति च ज्ञानवाचीति । उभयमपि न भवतीति प्रदर्शयामः । तथा आत्मनि अहङ्कारगतज्ञातृत्वभोक्तृत्वाध्यासस्य मूलमहङ्कारात्माभिमानः । अयमभिमानरूपोऽध्यासोपि इदं रजतमितिवत् उद्देश्यविधेयरूपेण पदद्वयाभिलापे सति संमन्तव्यः । तत्रानिदमंशत्वेन संमताया अनुभूतेः इयमिति ग्रहणायोगात् सामान्यधर्मान्तरानङ्गीकाराच्च अनुभूतिरित्येव प्रथा वाच्येति अनुभूतिरहमिति तदध्यासाकारो वक्तव्यः । एवमनुल्लेखात् अहमर्थाध्यासोऽनुभूतावित्यत्र मानाभावेन अहमुल्लेखः न युष्मदर्थावच्छिन्नप्रत्यगर्थरूपार्थद्वयविषयक इत्येक एवाहमर्थस्तत्र विषय इति ।

अहमित्युल्लेखान्तःप्रवेशोऽनुभूतेर्नास्तीत्यत्र तस्याः पृथगवभासोपि मानमित्याह अत्रत्विति । त्वन्मते च नेयमनुभूतिरन्या ; जानामि, अनुभूयत इत्यादौ तद्भानस्यैव तवेष्टत्वात् । अथवा अहमनुभवामीति पदद्वयमेवाध्यासाभिलापकमस्त्वित्यत्राह अत्रत्विति । पृथक् अहमित्यत्रानन्तर्गततयेत्यर्थः ; अभेदं विनेत्यर्थो वा । अनुभूतिमात्रावलम्बनः परमार्थतयाऽनुभूत्येकविषयकः ; तदाश्रयत्वाविषयक इति वा । घटोऽस्तीत्यत्र सन्मात्रं विषयः अन्यद् भ्रान्तिमात्रमितिवत्, अहमनुभवामीत्यनुवर्तमानानुभूतिमात्रं विषयः अन्यद् भ्रान्तिमात्रमिति न युक्तम्। आख्यातार्थाश्रयाभानञ्च न युक्तम् । एवं अहमिति अनुभूतिरेव विशेष्यतया भासते, अनुभवामीति सैव प्रकारतया चेत्यपि न युक्तम् । एकस्यैवाधाराधेयभावायोगात् । स्वरूपेणाधारत्वम्, सविषयकानुभूतित्वेन चाधेयत्वमिति चेत्—तर्हि रजतत्ववत् भ्रान्तिसिद्धता कथम्? आधारत्वमहमर्थस्यैवेति चेत्, विशेष्यतयाऽनुभूतिभानमप्रामाणिकम् ।

एतेन—अनुभवस्य वस्तुतो निर्धर्मकत्वात् धर्माभावे च पृथगुल्लेखायोगात् अहमित्येतदन्तर्भूततयैव भानमिति निरस्तम्—स्वरूपमात्रस्य प्रकाशमानत्वेऽध्यासस्य सर्वात्मनाऽनुपपत्तेश्च । अनुभूतावध्यस्यमानस्याहमर्थस्य धर्मोऽहन्त्वञ्च किंरूपम्? न तावत् प्रत्यक्त्वम्, अनभ्युपगमात् । न च कर्तृत्वभोक्तृत्वादिरूपम्, अहं जानामीत्येतावता तादृशधर्माणामनुभवादर्शनात् । न चान्यभास्यत्वरूपेदंत्वाभावः, तस्यापि भवदभिमतेऽहमर्थेऽनिष्टेः। अनुभूतावेव तत्संभवात् अहमनुभव इति प्रतीत्यापत्तेः । अतः स्वयम्भासमाना अनुभूत्यादयोऽपि यदधीनसत्ताप्रकाशाः, तस्मिन् धर्मिण्यात्मन्येवाहन्त्वं साक्षादिति अनुभूतिविशिष्टाहमर्थप्रतीतिरियं प्रमैवेति । ईदृशार्थं मनसिकृत्याह कथमिव प्रतिज्ञायेतेति । एवं अहमिच्छामि, करोमि, भुञ्जे इत्यादौ अध्यासोपपादनमशक्यमित्यपि ध्येयम् ।

यदप्युक्तम् ( 44 ), स्थूलोऽहमित्यादिदेहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनात् ज्ञातृत्वमपि मिथ्येति—तदयुक्तम् ; आत्मतया अभिमताया अनुभूतेरपि मिथ्यात्वं स्यात्; तद्वत एव प्रतीतेः ॥ सकलेतरोपमर्दितत्त्वज्ञानाबाधितत्वेनानुभूतेर्न मिथ्यात्वमिति चेत्—हन्तैवं सति तदबाधादेव ज्ञातृत्वमपि न मिथ्या ॥

यदप्युक्तम् ( 45 ) अविक्रियस्याऽऽत्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न संभवति। अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहङ्कारग्रन्थिस्थम्-इति न ज्ञातृत्वमात्मनः; अपित्वन्तःकरणरूपस्याहङ्कारस्य। कर्तृत्वादिर्हि रूपादिवद् दृश्यधर्मः। कर्तृत्वे अहंप्रत्ययगोचरत्वे चाऽऽत्मनोऽभ्युपगम्यमाने, देहस्येव अनात्मत्वपराक्त्वजडत्वादिप्रसङ्गश्चेति—

नैतदुपपद्यते; देहस्येवाचेतनत्वप्रकृतिपरिणामत्वदृश्यत्वपराक्त्वपरार्थत्वादियोगात् अन्तःकरणरूपस्याहङ्कारस्य; चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य। एतदुक्तं भवति—यथा-देहादिर्दृश्यत्वपराक्त्वादिहेतुभिः तत्प्रत्यनीकद्रष्टृत्वप्रत्यक्त्वादेर्विविच्यते, एवमन्तःकरणरूपाहङ्कारोऽपि तद्द्रष्टव्यत्वादेव तैरेव हेतुभिः तस्माद्विविच्यते—इति। अतो विरोधादेव न ज्ञातृत्वमहङ्कारस्य, दृशित्ववत्। यथा दृशित्वं तत्कर्मणोऽहङ्कारस्य नाभ्युपगम्यते, तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यम् ॥

न च ज्ञातृत्वं विक्रियात्मकम्। ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम्। ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम्। नित्यत्वं चाऽऽत्मनः, "नात्मा श्रुतेः" (शा. 2.3.18.) इत्यादिषु वक्ष्यति। "ज्ञोऽत एव" (शा. 2. 3. 19.) इत्यत्र ज्ञ इति व्यपदेशेन ज्ञाना-

---

मनुष्यत्वादिविशिष्टपिण्डात्माभिमानवदिति पूर्वपक्षिवचनाशयमुद्घाट्य दूषयति **यदपी**त्यादिना। पूर्वं देहात्माभिमानस्य दृष्टान्तप्रदर्शनमात्रेण ज्ञातृत्वस्याध्यस्तता न सिद्ध्येत्; साधकप्रमाणस्यापेक्षितत्वात्। यदि—**अभिमानवज्ज्ञातृत्व**मित्यस्य अभिमानवत्पुरुषनिष्ठज्ञातृत्वमित्यर्थः; हेतुगर्भविशेषणम्; ज्ञातृत्वमपि मनुष्यत्वस्थूलत्वादिवदध्यस्तमित्यत्र अभिमानवन्निष्ठत्वस्य हेतुत्वविवक्षेति मन्यते, तच्चायुक्तमित्यर्थः। ज्ञातृत्वं नात्मनिष्ठं विक्रियात्मकत्वात्, कर्तृत्वादिर्दृश्यधर्मः धर्मत्वात् इत्यनुमानद्वयम्। द्वितीये दृश्येति परिशेषादहङ्कारग्रहणं त्वदभिमतम्। तत्रानुकूलतर्क उक्तः **कर्तृत्व**इत्यादिना। अत्र प्रत्यनुमानानि, अहङ्कारो न ज्ञाता, नाहम्प्रत्ययगोचरः अचेतनत्वात् प्रकृतिपरिणामत्वादित्यादीनि। एषामनुमानानामप्रयोजकत्वं त्वया दुर्वचम्, देहे तन्निषेधाय तेषामेव त्वयैव हेतुत्वेन संमतत्वादित्याह **एतदुक्त**मिति। एवञ्च धर्मत्वादिति हेतुरेवाप्रयोजक इति भावः। विक्रियात्मकत्वादिति हेतुं दूषयति **न च ज्ञातृत्व**मित्यादिना। अयं संदर्भ एवमिह व्याख्यायते—**ज्ञानगुणाश्रयत्व**मिति। न हि ज्ञानं व्यापाररूपक्रिया। जानातीत्यस्य च ज्ञानाश्रय इत्यर्थः; न तु तत्कर्तेति। ज्ञाधातुना अनित्यज्ञानग्रहणेऽप्येवमेव; वस्तुतस्तु तन्नित्यमित्याह **ज्ञानञ्चे**ति। नित्यत्वे,

श्रयत्वं च स्वाभाविकमिति वक्ष्यति । अस्य ज्ञानस्वरूपस्यैव, मणिप्रभृतीनां प्रभाश्रयत्वमिव, ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम् । स्वयमपरिच्छिन्नमेव ज्ञानं संकोचविकासार्हमित्युपपादयिष्यामः । अतः क्षेत्रज्ञावस्थायां कर्मणा संकुचितस्वरूपं तत्तत्कर्मानुगुण-तरतमभावेन(तारतम्येन ?)वर्तते । तच्चेन्द्रियद्वारेण व्यवस्थितम् । तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्य उदयास्तमयव्यपदेशः प्रवर्तते । ज्ञानप्रसरे तु कर्तृत्वमस्त्येव । तच्च न स्वाभाविकम्; अपि तु कर्मकृतम्—इत्यविक्रियस्वरूप एवाऽऽत्मा । एवंरूपविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्यात्मन एवेति न कदाचिदपि जडस्याहङ्कारस्य ज्ञातृत्वसम्भवः ।

जडस्वरूपस्याप्यहङ्कारस्य चित्संनिधानेन तच्छायापत्त्या तत्सम्भव इति चेत्—

---

"उत्पत्तिविनाशादयः प्रत्यक्षमीक्ष्यन्ते" इति पूर्वोक्तव्याघात इत्यत्राह **स्वयमिति** । **स्वयमपरिच्छिन्नं** प्रयत्ननिरपेक्षसर्वव्यापनशीलम् । **संकोचः** प्रलयादाविव विषयाग्रहणम्; न तु किञ्चिद्विषयकसंयोगः । **विकासः** यथायथं प्रसरणम्, विषयसंयोगः । **वर्तते**; "यया क्षेत्रज्ञशक्तिः सा........तारतम्येन वर्तते" इति विष्णुपुराणात् । **तच्च**—तथावर्तनञ्च; न्यूनाधिकविषयकत्वमिति यावत् । **इन्द्रियद्वारेण व्यवस्थितम्**—मनआदिसापेक्षं कतिपयैकग्राहि । ननु पश्यः, ज्ञः, जानात्येवायं पुरुषः इत्यादौ नित्यज्ञानग्रहणेन कर्तृत्वायोगेऽपि, अनित्ये प्रसरे कर्तृत्वं तत एव सविक्रियत्वञ्चात्मनः स्यादित्यत्राह **ज्ञानप्रसरे त्विति** । तुशब्देन अनित्येऽपि यत्नानपेक्षे प्रसरे आश्रयत्वातिरिक्तं कर्तृत्वं नेति ज्ञाप्यते । क्वचित्तु **कर्तृत्वं** ज्ञानोपधायकमनःप्रणिधानादिव्यापारविषयकयत्नवत्त्वरूपमस्ति । **एवकारेण**, 'स न दोषाय; कर्तृत्वस्य परिणामरूपत्वाभावात्' इति ज्ञाप्यते । मुक्ताविदं ज्ञानार्थं नापेक्षितमिति दर्शयितुमाह **तच्चेति** । **तच्च**—पूर्वोक्तं तारतम्येनवर्तनमिव इदं यत्नवत्त्वमपि । **कर्मकृतमिति** । उपकरणसापेक्षे प्रसरे कदाचित् यत्नस्याप्यपेक्षा । मुक्तौ तु प्रतिबन्धकाभावात् स्वत एवादौ प्रसरः; अथ च न तदपाय इति । **इत्यविक्रियेति** । आश्रयत्वरूपज्ञातृत्वपक्षे विक्रियात्मकत्वादिति हेतोरसिद्धिः । कर्तृत्वरूपत्वेऽप्यप्रयोजकत्वम्; विकारित्वानापादकत्वात् । अवस्थाश्रयज्ञानवत्त्वेऽपि स्वरूपेणावस्थाश्रयत्वाभावादिति भावः । सद्वारकावस्थाश्रयत्वमपि मास्तु इत्यत्राह **एवंरूपेति** ।

अहङ्कारे ज्ञानक्रियारूपवृत्तिज्ञानकर्तृत्वं वदन्त एव वृत्तेर्जडत्वात् स्वरूपभूतज्ञानमादायैव ज्ञातृत्वमुपपाद्यमिति तत्र छायापत्तिं संपर्कं व्यञ्जकत्वं च हेतुं वर्णयन्तः, एवं अत्र वृत्तिज्ञाने प्रमाणाभावात् आत्मधर्मभूतं नित्यं ज्ञानमेकमेव संकोचविकासावस्थत्वादनेकरूपमिति नित्यानित्यसर्वज्ञानवत्त्वमप्यात्मन एवेति दर्शिते, स्वयंप्रकाशज्ञानमादायैव संभवति ज्ञातृत्वमित्याक्षिपन्ति; तद्दूषणमारभते **जडस्वरूपस्यापीत्यादिना** । **एवमविक्रियानुभवस्वरूपस्यैवेति** पूर्वमुक्तस्य खण्डनमेतत् । **तच्छायापत्त्या** तत्प्रतिबिम्बप्राप्त्या । **तत्संभवः** ज्ञातृत्वसंभवः । भवद्भिरादौ आत्मनि ज्ञातृत्वाध्यास इत्युक्तम्; इदानीमहङ्कारे स उच्यते । उभयं छायापत्त्या यद्युपपाद्यते, तत्र नैकमपि भवतीत्यभि-

**केयं चिच्छायापत्तिः ? किमहङ्कारच्छायापत्तिः संविदः, उत संविच्छायापत्तिरहङ्कारस्य ? न तावत् संविदः; संविदो(दि)ज्ञातृत्वानभ्युपगमात् । नाप्यहङ्कारस्य; उक्तरीत्या तस्य जडस्य ज्ञातृत्वायोगात् । द्वयोरप्यचाक्षुषत्वाच्च । न ह्यचाक्षुषाणां छाया दृष्टा ।**

**अथ अग्निसंपर्कात् अयःपिण्डौष्ण्यवत् चित्संपर्कात् ज्ञातृत्वोपलब्धिरिति—नैतत्[चेत्] —संविदि वास्तव(वस्तुतो)ज्ञातृत्वानभ्युपगमादेव न तत्संपर्कादहङ्कारे ज्ञातृत्वं तदुपलब्धिर्वा । अहंकारस्य त्वचेतनस्य ज्ञातृत्वासंभवादेव सुतरां न तत्संपर्कात् संविदि ज्ञातृत्वं तदुपलब्धिर्वा ॥**

**यदप्युक्तम् (46) उभयत्र न वस्तुतो ज्ञातृत्वमस्ति । अहङ्कारस्तु अनुभूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति; आदर्शादिवत् इति—तदयुक्तम्; आत्मनः स्वयंज्योतिषो जडस्वरूपाहङ्काराभिव्यङ्ग्यत्वायोगात् । तदुक्तम्—"शान्ताङ्गार इवाऽऽदित्यमहङ्कारो जडात्मकः । स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ॥"** (आत्मसिद्धिः) **इति । स्वयंप्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः । तत्र तदायत्तप्रकाशोऽचित् अहङ्कारः अनुदितानस्तमितस्वरूपप्रकाशम् अशेषार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीति आत्मविदः**

---

संघायाह **केयमिति । तच्छायापत्त्या** इत्यस्य चिच्छायापत्त्या इत्येवार्थः । परंतु अहङ्कारस्येतिपदं संनिधानेनेत्यत्र परमन्वितश्चेत्, उपरि **तत्संभव** इत्यस्य अहङ्कारस्य चितो वा ज्ञातृत्वसंभव इत्यर्थसंभवात् तदनुसारेण **तच्छायापत्त्येत्यस्य** तस्याः चितः अहङ्कारच्छायापत्त्या, तच्छायाया अहङ्कारे आपत्त्येत्यर्थद्वयसंभव इति एवं विकल्पितम् । **अहंकारच्छाया**—अहंकारप्रतिबिम्बः । **संविच्छाया** संवित्प्रतिबिम्बः । आपत्तिः प्राप्तिः । जलगतचलत्वादेः प्रतिबिम्बे आरोपवत् अत्र ज्ञातृत्वारोप इति तदा स्यात्, यदि एकत्र चलत्वादिवत् ज्ञातृत्वं वास्तवं स्यात्; अतो नैवमिति दूषयति **नेति । छायाशब्देन** जले मणिप्रभावेधवत् तत्तदंशप्रवेशविवक्षायामप्येष एव दोषः । नन्वहङ्कारस्य चित्प्रतिबिम्बमादाय मुकुरस्य मुखवत्त्वमिव ज्ञातृत्वमिष्यताम्; अस्य ज्ञातृत्वस्य संविद्यारोपः इत्यत्र दोषान्तरमाह **द्वयोरिति** ।

संपर्कपक्षं दूषयति **अथाग्नीति** । अग्निस्थानापन्नत्वं किं चितः उताहङ्कारस्येति विकल्पं मत्वा दूषयति **संविदिति । न ज्ञातृत्वमिति** पृथङ् न वक्तव्यम्; अथापि रुमाक्षिप्तकाञ्चन्यायेन ज्ञातृत्वोत्पत्तिपक्षशंकासंभावनया तस्यापि निरसनम् ।

अद्वैतिप्रागुक्तं तृतीयं व्यञ्जकत्वपक्षमनूद्य निरस्यति **यदपीति** । परमाचार्यप्रदर्शितदृष्टान्तं तद्ग्रन्थानुवादेनैव दर्शयति **तदुक्तमिति । न युक्तिमदिति**; अनन्वितमित्यर्थः । व्यनक्तीत्यनुक्त्वा, असंभावितत्वस्फोरकविशेषणपूर्वकं व्यनक्तीत्यनुवादः अर्थस्य परिहास्यत्वगमक इत्यभिप्रेत्य व्याचष्टे **स्वयमिति** । अहङ्कारो न प्रकाशव्यञ्जकः अप्रकाशत्वात् शान्ताङ्गारवदित्यनुमानम् । अथ-तद्व्यङ्ग्यस्य

परिहसन्ति ॥ किंच अहङ्कारानुभवयोः स्वभावविरोधात् अनुभूतेरननुभूतित्वप्रसङ्गाच्च न व्यङ्क्तृव्यङ्ग्यभावः ; यथोक्तम्—"व्यङ्क्तृव्यङ्ग्यत्वमन्योन्यं न च स्यात् प्रातिकूल्यतः। व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्यत् यथा घटे ॥" (आत्मसिद्धि) इति ।

न च रविकरनिकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यङ्ग्यत्ववत् संविदभिव्यङ्ग्याहङ्काराभिव्यङ्ग्यत्वं संविदः साधीयः; तत्रापि रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावात् । करतलप्रतिहतगतयो हि रश्मयो बहुलाः स्वयमेव स्फुटतरमुपलभ्यन्त इति तद्बाहुल्यमात्रहेतुत्वात्करतलस्य नाभिव्यञ्जकत्वम् ॥

किंचास्य संवित्स्वरूपस्याऽऽत्मनोऽहंकारनिर्वर्त्या अभिव्यक्तिः किंरूपा ? न तावदुत्पत्तिः ; स्वतस्सिद्धतयाऽनन्योत्पाद्यत्वाभ्युपगमात् । नापि तत्प्रकाशनम् ; तस्यानुभवान्तराननुभाव्यत्वात् ।

तत एव च न तदनुभवसाधनानुग्रहः । स हि द्विधा ; ज्ञेयस्येन्द्रियसंबन्धहेतुत्वेन वा—यथा जातिनिजमुखादिग्रहणे व्यक्तिदर्पणादीनां नयनादीन्द्रियसंबन्धहेतुत्वेन ; बोद्धृगतकल्मषापनयनेन वा—यथा परतत्त्वावबोधनसाधनस्य शास्त्रस्य शमदमादिना । यथोक्तम्—"करणानामभूमित्वान्न तत्संबन्धहेतुता । [अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यते] " (आत्मसिद्धि) इति ।

किंच अनुभूतेरनुभाव्यत्वाभ्युपगमेऽप्यहमर्थेन न तदनुभवसाधनानुग्रहः सुवचः । स ह्यनुभाव्यानुभवोत्पत्तिप्रतिबन्ध[क]निरसनेन भवेत्—यथा रूपादिग्रहणोत्पत्तिनिरोधिसंतमसनिरसनेन चक्षुषो दीपादिना । न चेह तथाविधं निरसनीयं संभाव्यते । न

---

तद्व्यञ्जकत्वमयुक्तम् ; संविद्व्यङ्ग्यत्वरूपस्याहंकारस्वभावस्य विरुद्धं तस्य तद्व्यञ्जकत्ववर्णनम् ; स्वेतरसर्वव्यञ्जकत्वरूपस्य च संवित्स्वभावस्य विरुद्धं तस्याः किञ्चिद्व्यङ्ग्यत्ववर्णनमित्याह **किञ्चेति** । **अन्योन्यमिति** अहंकारे व्यङ्ग्यत्वस्य संविदि व्यञ्जकत्वस्य च पूर्वमेव स्थितत्वात् तद्विरुद्धसमुच्चयनमयुक्तमिति भावः । शेषमस्मद्गूढप्रकाशे ।

एवमहङ्कारस्य व्यञ्जकत्वं व्युदस्तम् ; अथाभिव्यक्तिस्वरूपशोधनेनापि तदाह **किञ्चास्येति** । **ततएवचेति** चकारस्य **अनुग्रह** इत्यनेनान्वयः । **स हि द्विधेति** । स हि त्रिधेति वक्तव्ये द्विधेत्युक्तिः उदाहरिष्यमाणश्लोकेन तृतीयपक्षास्पर्शात् तस्य **किञ्चेति** पृथक्खण्डनाभिप्रायेण । **शमदमादिनेति** । अस्मत्पक्षे भक्त्यादिच ग्राह्यम् । **करणानामभूमित्वात्** अनुभूतेरिन्द्रियागोचरत्वात् । **हेतुता** हेतुत्वरूपसाधनानुग्रहः । **अहमर्थस्ये**त्युत्तरार्धस्थमत्राप्यन्वेति । **न स तेनैव शोध्यते** । स्वस्वरूपस्यैव स्वकल्मषप्रतिभटत्वे कल्मषप्रसक्त्यभावादिति भावः । अनुभूतिविषयकानुभवाभावादेव तृतीयविधोऽनुग्रहोऽपि निरस्त एव ; अथापि निरसनीयार्थाभावेनापि बोद्धृगतदोषनिरासकत्वपक्षमिव बोध्यगतप्रतिबन्धकनिरासपक्षमपि निरसितुमाह **किञ्चानुभूतेरिति** । **दीपादिनेति** । अनुग्रह इति

तावत् संविदात्मगतं तज्ज्ञानोत्पत्तिनिरोधि किंचिदप्यहंकारापनेयमस्ति । अस्ति ह्यज्ञानमिति चेत्; न, अज्ञानस्याहंकारापनोद्यत्वानभ्युपगमात् । ज्ञानमेव ह्यज्ञानस्य निवर्तकम् । न च संविदाश्रयत्वमज्ञानस्य संभवति; ज्ञानसमानाश्रयत्वात्, तत्समानविषयत्वाच्च । ज्ञातृभावविषयभावविरहिते ज्ञानमात्रे साक्षिणि नाज्ञानं भवितुमर्हति; यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेः नाज्ञानाश्रयत्वम्, तथा ज्ञानमात्रेऽपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वं स्यात् ।

संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽपि आत्मतयाऽभ्युपगतायाः तस्याः ज्ञानविषयत्वाभावेन ज्ञानेन न तद्गताज्ञाननिवृत्तिः । ज्ञानं हि स्वविषय एवाज्ञानं निवर्तयति, यथा रज्ज्वादौ । अतो न केनापि कदाचित् संविदाश्रयमज्ञानमुच्छिद्येत । अस्य च सदसद्-

शेषः । अनवहितविशेषणपदः पृच्छति अस्ति हीति । ज्ञानमेव हीति । अन्यथा प्रागेव सर्वमुक्तिप्रसंग इति भावः । संविदात्मगतमित्युक्तमपि दूषयति न चेति । गतमिति तन्निष्ठत्वं वा विवक्षितम्, तद्विषयकत्वं वा; उभयमपि न संभवतीत्यर्थः । तन्निष्ठत्वखण्डनमेव प्रकृतम्; अनुभाव्यत्वपक्षान्वारोहेणेदानीं दूषणात् अनुभवविषयभावराहित्यवर्णनायोगाच्चैवम् । अथापि वस्तुस्थितिमनुसृत्य तदप्युक्तम् । अनुभाव्यत्वस्य यथा वस्तुतोऽभावः, तथाऽनुभवितृत्वस्याप्यभावात् नाज्ञानाश्रयत्वमिति भावः । आधाराधेयभावखण्डनस्यैवात्र विवक्षितत्वादेवोपरि यथेत्यादिना तन्मात्रनिदर्शनम् । घटादेरिति । ज्ञानात्यन्ताभावरूपमज्ञानं यद्यपि घटादावस्ति—अथापि निरसनीयतया वर्ण्यमानमज्ञानं तत्र न प्रसजतीति भावः ।

ननु संवित् खल्वात्मा । आत्मनिष्ठमात्मविषयकञ्चाज्ञानमिष्यते । तस्य च ज्ञानादेव निवृत्तिः । अहंकारस्य तु तादृशज्ञानजनकत्वादेवाज्ञाननिवर्तकत्ववाचोयुक्तिरिति शङ्कां परिहरति संविद् इत्यादिना साधनानुग्रह इत्यन्तेन । अयमाशयः—भावरूपमज्ञानमुपरि निरसिष्यते । ज्ञानप्रागभावस्तु ज्ञानोत्पत्तिविरोधी न भवति । अज्ञानविषयश्चात्मा वस्तुगत्या त्वन्मते ज्ञानविषयो न भवति; तथात्वे जडत्वमिथ्यात्वाद्यापत्तेः । शुद्धात्मविषये ह्यज्ञानं संसारिणाम् । तद्विषये ज्ञानं तव नेष्टमित्याश्चर्यम् । एवं वस्तुस्थितावपि त्वयेदानीं संविदनुभवसाधनानुग्राहकत्वमहङ्कारस्योपपादयितुं यदुच्यते, दीपः प्रभया संतमसनिरोधमिव अहंकारः ज्ञानेनाज्ञानं निवर्तयतीति, तावताऽनुभवसाधनानुग्राहकत्वं प्रकृतं कथमुपपादितं भवति । न हि अहंकारजन्यज्ञानेनाज्ञाने निवर्तिते प्रतिबन्धनिरासः संपन्न इति तदनन्तरं किञ्चित् साधनम्, चक्षुरिव प्रत्यक्षम्, संविद्विषयं ज्ञानान्तरं संसारनिवर्तकं जनयिष्यति, प्रागेव मूलच्छेदात् । अतो नायमवसर एतदुपन्यासस्येति । एवमिह सर्वभाष्यवाक्यनिर्वाहात्, अनुभाव्यत्वाभ्युपगमेऽपीत्यारभ्य प्रवृत्ते भाष्येऽस्मिन् अनुभवविषयत्वनिरासः कथमिति शङ्काया नावसर इति ध्येयम् । अज्ञानमिदं भावरूपं वा ज्ञानप्रागभावो वा; नाद्य इत्याह—अस्य चेति । प्रागभावस्तु कार्यं प्रति कारणत्वात् विरोधित्वमेव नास्तीति, नान्त्य

निर्वचनीयस्याज्ञानस्य स्वरूपमेव दुर्निरूपमित्युपरिष्टात् वक्ष्यते। ज्ञानप्रागभावरूपस्य चाज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभावेन न तन्निरसनेन तज्ज्ञानसाधनानुग्रहः।

अतो न केनापि प्रकारेणाहङ्कारेणानुभूतेरभिव्यक्तिः।

न च स्वाश्रयतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः; प्रदीपादिष्वदर्शनात्; यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोः, अनुग्राहकस्य च। तच्च स्वतःप्रामाण्यन्यायसिद्धम्। न च दर्पणादिर्मुखादेरभिव्यञ्जकः, अपि तु चाक्षुषतेजःप्रतिफलनरूपदोषहेतुः। तद्दोषकृतश्च तत्रान्यथावभासः। अभिव्यञ्जकस्तु आलोकादिरेव। न चेह तथाऽहङ्कारेण संविदि स्वप्रकाशायां तादृशदोषापादनं संभवति। व्यक्तेस्तु जातिराकार इति तदाश्रयतया प्रतीतिः; न तु व्यक्तिव्यङ्ग्यत्वात्।

अतोऽन्तःकरणभूताहङ्कारस्थतया संविदुपलब्धेर्वस्तुतो दोषतो वा न किंचिदिह कारणमिति नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिर्वा। तस्मात् स्वत एव ज्ञातृतया सिद्ध्यन् अहमर्थ एव प्रत्यगात्मा; न ज्ञप्तिमात्रम्। अहंभावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरित्युक्तम्।

तमोगुणाभिभवात् परागर्थानुभवाभावाच्च अहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽपि आप्रबोधादहमित्येकाकारेणाऽऽत्मनः स्फुरणात् सुषुप्तावपि (पृ. 47) नाहंभावविगमः। भवदभिमताया अनुभूतेरपि तथैव प्रथेति वक्तव्यम्। न हि सुषुप्तोत्थितः कश्चित्, 'अहंभावविमुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षितयाऽवतिष्ठे' इत्येवंविधां स्वापसम-

---

इत्याह ज्ञानेति। प्रागभावनिरसनस्य ज्ञानेनैव कार्यतयाऽहङ्कारतः तन्न भवति। तस्य ज्ञानोत्पादकत्वमेव ज्ञानप्रागभावनिरासकत्वमिति चेत्, नायं ज्ञानोत्पत्त्युपयोगी साधनानुग्रहः। ज्ञानमेवानुभूतिविषयकं न भवतीति वस्तुतत्त्वञ्च प्रागेवोक्तमिति भावः। एवमभिव्यक्तिस्वरूपशोधनेनापि अहङ्कारस्य व्यञ्जकत्वं दूषितम्। व्यञ्जकत्वेऽपि अनुभूत्याश्रयतया ज्ञातृतया प्रतीतिर्दुर्निर्वहेत्याह न चेति। तदर्थं व्यञ्जकत्वेन तत्प्रदर्शितानामनुपपादकत्वमाह न च दर्पणेति।

प्रत्यक्त्वेन यदिष्यते, तस्याहन्त्वमपि मुख्यमेषितव्यमिति स्मारयति अहम्भावेति। अहन्त्वस्य स्वाभाविकत्वे सुषुप्तौ अहमिति भानापत्तिरित्यत्रेष्टापत्तिमाह तम इति। तमोगुणाभिभवात् योगिनोऽपि सुषुप्तौ न नित्यत्वादिविशिष्टशुद्धात्मविषयकं विविक्तं ज्ञानम्; अर्थान्तराग्रहणाच्च न वर्णाश्रमादिविशिष्टस्फुटज्ञानम्, किंतु उभयविलक्षणमिति भावः। अहमित्येकाकारेण प्रत्यक्त्वानुकूलत्वैकत्वमात्रविशिष्टतया। तथैव प्रथा-अहन्त्वेन रूपेणैव स्फुरणम्। सुषुप्तिकालिकस्फुरणप्रकारः प्रबोधकालिकपरामर्शत एव निष्कृष्टव्यः। तत्राहंभावादिवियुक्ततया स्फुरणपरामर्शो नास्तीति कथं तदभावसिद्धिरिति दर्शयति न हीति। अवतिष्ठ इत्यस्य अवातिष्ठे, अवास्थिषि इत्यर्थः। "अवतिष्ठ इति वर्तमानोक्तिः तत्सामीप्यात्" इति तत्त्वटीका। प्रतिस्वापमेवमनुवृत्तिचिन्तया वा प्रवाहनित्य-

कालमनुभूतिं परामृशति। एवं हि सुप्तोत्थितस्य परामर्शः, सुखमहमस्वाप्समिति। अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवाऽऽत्मनः सुखित्वं ज्ञातृत्वं च ज्ञायते। न च वाच्यम्— यथेदानीं सुखं भवति, तथा तदानीमस्वाप्समिति एषा प्रतिपत्तिरिति; अतद्रूपत्वात् प्रतिपत्तेः। न चाहमर्थस्याऽऽत्मनोऽस्थिरत्वेन तदानीमहमर्थस्य सुखित्वानुसंधानानुपपत्तिः; यतः सुषुप्तिदशायाः प्राक् अनुभूतं वस्तु सुप्तोत्थितः, 'मयेदं कृतम्, मयेदमनुभूतम्, अहमेतदवोचम्' इति परामृशति।

'एतावन्तं कालं न किंचिदहमज्ञासिषम्' इति च परामृशतीति चेत्—ततः किम्?॥ 'न किंचित्' इति कृत्स्नप्रतिषेध इति चेत्—न, 'अहमवेदिषम्' इति वेदितुरहमर्थस्यैवानुवृत्तेः वेद्यविषयो हि स प्रतिषेधः। 'न किंचित्' इति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात्। सुषुप्तिसमये त्वनुसंधीयमानमहमर्थमात्मानं ज्ञातारम्, अहमिति परामृश्य, 'न किंचिदवेदिषम्' इति वेदने तस्य प्रतिषिध्यमाने, तस्मिन् काले निषि-

---

त्वाभिप्रायेण वर्तमानप्रयोगः। अहम्भावयियुक्तत्वानुसंधाने, अहमित्यस्य कथमाकारे प्रवेश इति चेत् —ज्ञप्तेः प्रत्यक्त्वस्येष्टत्वात् तत्स्फुरणम् अहमित्येव भवेदिति ज्ञापनार्थम्। **आत्मसिद्धौ** तु, 'नाहम्, नाप्यर्थान्तरम्, अपित्वनुभूतिमात्रमज्ञानसाक्षितयाऽवतिष्ठत' इति परामर्शाकारोऽदर्शि। स्वोक्तविशेषपरामर्शे अद्वैत्यभिमतपरामर्शमेव प्रमाणयति **एवं हीति**। **प्रत्यवमर्शेनेति**। अत्र तार्किकैः, स्वापकाले कस्याप्यनुभवाभावात् आत्मनश्च जडत्वात् ज्ञानमिदं सर्वांशेऽप्यनुमित्यादिरूपम्; सुखपदञ्च तात्कालिकदुःखाभावपरमिति मन्यते। अद्वैतिनां प्रत्यवमर्शत्वमेवेष्टम्। अतस्तैः स्वापकाले किञ्चिद् भातमिति स्वीकर्तव्यम्। तत्र सविषयकज्ञानसत्त्वे स्वापविरोधात् स्वापः तद्विशेषणं कालश्च न भाति; अत एव भातं सुखत्वं न स्वापीयम्। तदा सुखभानं च प्रतीतिस्वारस्यसिद्धम्। अत एव सुखमिति न दुःखाभावमात्रम्। आत्मनश्च सुखरूपत्वमानुभविकम्, स्वं प्रति स्वस्य सर्वदाऽनुकूलत्वात्; कदाऽप्यननुकूलत्वाग्रहात्। अतः सुखभाने सिद्धे सुखरूपाहमर्थभानमेव तदेति तद्विषय एवायं प्रत्यवमर्शः। सुखत्वमनुकूलत्वम्; अहन्त्वं प्रत्यक्त्वम्, तच्च स्वस्य स्वभानशेषित्वम्। तथैकत्वमपि अहमनेक इति भ्रमाभावात् जागरे भातीति इहापि भात्येवेति प्रत्यक्त्वैकत्वानुकूलत्वविशिष्टाहमर्थभानं तदेति। **सुखित्वं ज्ञातृत्वञ्चेति**। वैषयिकस्य सुखस्य ज्ञानस्य च तदानीमसंभवस्योक्तत्वात् नित्यस्यापि धर्मभूतज्ञानस्य विषयप्रकाशनवेलायामेव प्रकाशस्य प्रागेव भाषितत्वाच्चात्र सुखरूपज्ञानरूपात्मभानमेव विवक्षितम्। आत्मनो ज्ञानानन्दस्वरूपत्वात्। सुखं ज्ञानञ्च सर्वदा भासमानमेवास्तीति तद्भानवत्त्वमित्यर्थे सुखित्वं ज्ञातृत्वमिति निर्देशः। **अस्थिरत्वेन**। अद्वैतिभिरहङ्कारलयस्यैव तदेष्टत्वात्। **यत इति**। अतो नाहमर्थस्य लयः सुप्तश्च इति भावः। **कृतम्, अनुभूतम्, अवोचमिति** कायिकमानसवाचिकव्यापारकथनम्। **अनुसंधीयमानम्** तदास्थितत्वेन पश्चादनुसंधीयमानम्। **अनुसंधीयमान**पदप्रयोगः अहमर्थस्थितिसिद्धौ तद्भानमपि तदा सेत्स्यतीत्यभिप्रायेण। न च तर्हि

ध्यमानाया वित्तेः सिद्धिम्, अनुवर्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिम्, अनेनैव, 'न किंचिद्हमवेदिषम्' इति परामर्शेन साधयन् तमिममर्थं देवानामेव साधयतु ॥ 'मामप्यहं न ज्ञातवान्' इति अहमर्थस्यापि तदानीमननुसंधानं प्रतीयत इति चेत्—स्वानुभवस्ववचनयोर्विरोधमपि न जानन्ति भवन्तः। 'अहं मां न ज्ञातवान्' इति ह्यनुभववचने ॥ मामिति किं निषिध्यत इति चेत्–साधु पृष्टं भवता। तदुच्यते–अहमर्थस्य ज्ञातुरनुवृत्तेः न स्वरूपं निषिध्यते; अपितु प्रबोधसमयेऽनुसंधीयमानस्याहमर्थस्य वर्णाश्रमादिविशिष्टता। अहं मां न ज्ञातवानित्युक्ते विषयो विवेचनीयः। जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः। स्वाप्ययावस्थाप्रसिद्धाविशदस्वानुभवैकतानश्चाहमर्थः अहमित्यंशस्य विषयः। 'अत्र सुप्तोऽहम्', ईदृशोऽहमिति च मामपि न ज्ञातवानहमित्येव खल्वनुभवप्रकारः।

किंच सुषुप्तावात्मा अज्ञानसाक्षित्वेनाऽऽस्त इति हि भवदीया प्रक्रिया। साक्षित्वं च साक्षाज्ज्ञातृत्वमेव। न ह्यजानतः साक्षित्वम्। ज्ञातैव हि लोकवेदयोः साक्षीति व्यपदिश्यते; न ज्ञानमात्रम्। स्मरति च भगवान् पाणिनिः, (अष्टा. 5. 2. 19.) "साक्षाद्द्रष्टरि संज्ञायाम्" इति साक्षाज्ज्ञातर्येव साक्षिशब्दम्। स चायं साक्षी, जानामीति प्रतीयमानः अस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत। आत्मने स्वयमवभासमानः अहमित्येवावभासत इति स्वापाद्यवस्थास्वप्यात्मा प्रकाशमानः अहमित्येवावभासत इति सिद्धम्।

यत्तु (47), मोक्षदशायामहमर्थो नानुवर्तते–इति–तदपेशलम्। तथा सति आत्म-

---

तदा अहमर्थस्य लयं परित्यज्य साक्षिभास्यत्वं स्वीकुर्म इति वाच्यम्–तावदिष्टौ साक्षिणोऽन्यस्यास्वीकारेणाहमर्थस्वयम्प्रकाशत्वस्यैव स्वीकार्यत्वात्। विषयातिरिक्तसाक्ष्यभावेन वेदननिषेधे साक्षिनिषेधस्यापि सिद्धत्वाच्च। **देवानामिति**। अत्र 'देवानांप्रिय'इत्येवात्मसिद्धौ प्रयोगः। एवं प्रयोगस्तु **पञ्चिकायां वाक्यार्थमातृकावृत्तौ,** "लिङादिव्यापारस्य तु प्रवृत्तिहेतुत्वं देवाः प्रतिपद्यन्ताम्; पिशितचक्षुषो मानुषा वयं नेयतीं प्रमाणभूमिमवगाहितुं क्षमाः" इति। देवाः प्रत्यक्षद्विषः विपरीतवादिनमन्यथोक्तिरासिक्यादभिनन्देयुरपि, न वयमिति वा भावः। अत्रभवन्त इत्यर्थे भगवन्त इतिवत् देवा इति प्रयोगो वा; द्राविड्यां देवरीर् देवर् इतिवत्। **स्वानुभवेति**, स्वानुभवः स्ववचनञ्च अहं मां न ज्ञातवानित्याकारके। **अहम्**–सुखसुप्तोऽहम्। तयोर्विरोधः अहमर्थाभावतदननुसंधानवचनेन साकम्। **किं निषिद्ध्यते;** किं ज्ञानाविषयत्वेन बोध्यत इत्यर्थः। **अनुवृत्तेरिति**। तदाऽहमर्थसद्भावस्यावश्यकत्वात् सुखमहमस्वाप्समिति सुखभानात् तदभिन्नाहमर्थभानस्याप्यनुमन्तव्यत्वादित्यर्थः।

सुषुप्तौ स्वरूपभानवत् अज्ञानभानस्यापि भवदिष्टत्वात् ज्ञातृत्वम्, स्वस्मा एव तद्भानादहन्त्वञ्च तदापि भवतामवर्जनीयमित्याह **किञ्चेति**।

'अहमर्थश्चिन्मात्रात्मनो न पारमार्थिको धर्मः' इति प्राक् पूर्वपक्ष्युक्तमहमर्थस्यानुभूतिपरमार्थ-

नाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात् । न चाहमर्थो धर्ममात्रम्; येन तद्विगमेऽपि अविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत । प्रत्युत स्वरूपमेवाऽहमर्थ आत्मनः । ज्ञानं तु तस्य धर्मः, 'अहं जानामि', 'ज्ञानं मे जातम्' इति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव ॥

अपि च यः परमार्थतो भ्रान्त्या वाऽऽध्यात्मिकादिदुःखैर्दुःखितया स्वात्मानमनुसंधत्ते 'अहं दुःखी' इति, 'सर्वमेतद् दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयम्' इत्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्तते । स साधनानुष्ठानेन, यदि, अहमेव न भविष्यामीत्यवगच्छेत्; अपसर्पेदेवासौ मोक्षकथाप्रस्तावात् । ततश्चाधिकारिविरहादेव सर्वं मोक्षशास्त्रमप्रमाणं स्यात् ॥ अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठत इति चेत्—किमनेन ? मयि नष्टेऽपि किमपि प्रकाशमात्रमपवर्गेऽवतिष्ठत इति मत्वा न हि कश्चित् बुद्धिपूर्वकारी प्रयतते । अतोऽहमर्थस्यैव ज्ञातृतया सिद्ध्यतः प्रत्यगात्मत्वम् । स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते, स्वस्मै प्रकाशमानत्वात् । योऽयः स्वस्मै प्रकाशते, स सर्वोऽहमित्येव प्रकाशते; यथा तथावभासमानत्वेनोभयवादिसम्मतः संसार्यात्मा । यः पुनः अहमिति न चकास्ति, नासौ स्वस्मै प्रकाशते, यथा घटादिः । स्वस्मै प्रकाशते चायं मुक्तात्मा । तस्मादहमित्येव प्रकाशते ।

न चाहमिति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः; मोक्षविरोधात्, अज्ञत्वाद्यहेतुत्वाच्चाहंप्रत्ययस्य । अज्ञानं नाम स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानं वा । अहमित्येवाऽऽत्मनः स्वरूपमिति, स्वरूपज्ञानरूपोऽहंप्रत्ययो नाज्ञत्वमापादयति; कुतः संसारित्वम् ? अपि तु तद्विरोधित्वात् नाशयत्येव ।

ब्रह्मात्मभावापरोक्ष्यनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनाम् अहमित्येवात्मानुभवदर्शनाच्च । श्रूयते हि–( बृ. 3. 4. 10. ) "तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति", ( अथर्वशिरः 9. ) "अहमेकः प्रथममास नर्तामि च भविष्यामि च",

---

धर्मत्वाभावेऽप्यपरमार्थधर्मतयाऽनुभूतिविशेषणतयैवाहमित्युल्लिख्यमानत्वं स्यादिति न चेति । ज्ञानंत्विति । धातूपात्तज्ञानातिरिक्तं अहङ्कारधर्मितया अहमित्युल्लिख्यत इत्यत्रानुभवलेशोऽपि नास्तीति भावः । अपसर्पेदेवेति । स्वनाशार्थमेवोद्बन्धनादौ प्रवृत्तिस्तु देहात्माभिमानिनः, अवश्यं नश्यतो देहस्याद्यैव मरणं वरमिति धिया । देहनाशेऽप्यात्मानुवृत्तिं मन्वानो बुद्धिपूर्वकारी, स्वयमविनाश्य, सुख एव यतेत । इयमेव लोकशास्त्रानुमता गतिरिति भावः । अहमुपलक्षितम्—अहमर्थं विना । पञ्चावयवन्यायप्रयोगं दाढर्याय करोति स च प्रत्यगात्मेति । अन्वयव्यतिरेकोदाहरणद्वयमाह योय इति, यः पुनरिति च । अप्रयोजकत्वमाह अज्ञत्वादीति । स्वरूपज्ञानेति; तत्त्वज्ञानेत्यर्थः । 'योयो देवानां प्रत्यबुध्यत; तथर्षीणा'मिति श्रुतिः । तत्र ऋषिवामदेवप्रतिपत्तिमुदाहृत्य देववामदेवप्रतिपत्तिमुदाहरति अहमेक इति । वाक्यमिदमथर्वशिरस्स्थं रुद्रस्य स्वान्तर्यामितया भगव-

इत्यादि । सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव—( छा. 6. 3. 2. ) "हन्ताहमिमास्तिस्रो देवताः", (तै. 6. 2.) (छा. 6. 2. 3. "बहु स्यां प्रजायेय", "स ईक्षत लोकान्नु सृजा इति" (ऐतरेय. 1. 1. 1.), तथा (गीता. 15. 18.) " यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" (गीता. 10. 20.) "अहमात्मा गुडाकेश", ( गी. 2. 12. ) "न त्वेवाहं जातु नासम्", (गी. 7.6.) " अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ", ( गी. 10. 8. ) " अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ", ( गी. 12. 7. ) " तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ", ( गी. 14. 4. ) " अहं बीजप्रदः पिता ", ( गी. 7. 26. ) " वेदाहं समतीतानि " इत्यादिषु ॥

यदि अहमित्येवात्मनः स्वरूपम्, कथं तर्ह्यहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते, ( गी. 13. 5. ) " महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च " इति ॥ उच्यते —स्वरूपोपदेशेषु सर्वेषु अहमित्येवोपदेशात् तथैवात्मस्वरूपप्रतिपत्तेश्च अहमित्येव प्रत्यगात्मनः स्वरूपम् । अव्यक्तपरिणामभेदस्याहंकारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते । स त्वनात्मनि देहेऽहंभावकरणहेतुत्वेन अहंकार इत्युच्यते । अस्य त्वहंकारशब्दस्य अभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या । अयमेव त्वहंकारः उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते । तस्माद् बाधकापेताऽहंबुद्धिः साक्षादात्मगोचरैव । शरीरगोचरा त्वहंबुद्धिरविद्यैव । यथोक्तं भगवता पराशरेण—" श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ! । अनात्मन्यात्मबुद्धिर्या" ( वि. 6. 7. 10.) इति । यदि ज्ञप्ति-

दनुसंधानप्रतिपादकम् । इतराज्ञानेति ; स्वेतरजीवगताज्ञानेत्यर्थः । सच्छब्दप्रत्ययमात्रभाजः सदितिशब्दितस्य सदिति च प्रतीतस्य ; महदहङ्कारादिमदिति शब्दप्रत्ययाविषयस्य । प्रलये हि नाहङ्कारोऽस्ति ।

' अथातोऽहङ्कारादेशः ' इति भूमविद्यावाक्यात् अहमर्थाहङ्कारयोरैक्यं प्रतीयते । अहङ्कारश्च क्षेत्रे भगवता परिगणितः । हेयत्वञ्चाहङ्कारस्य, 'अहंकारं बलं दर्पम्' इति गीतम् । अतोऽहमर्थो नात्मेति शङ्कितं प्रतिवक्तुमाह—यदीति । भगवतैवेत्येवकारः भेदस्येत्यत्राऽऽकृष्टव्यः । भूमविद्यायामहङ्कारशब्दः अहमितिगृह्यमाणात्मस्वरूपार्थकः, अहमिति ग्रहणमात्रार्थको वा । अहमादेश इत्यनुक्त्वा अहङ्कारादेश इत्युक्तिः स्वप्रकाशात्मभानस्य जीवात्मनि विश्रमेऽपि धर्मभूतज्ञानमन्तर्यामिपर्यन्ते प्रसारणीयमिति ज्ञप्तये । अन्यत्राहङ्कारशब्दः लुप्तच्विप्रत्ययोऽर्थान्तरपर इति विशेषं दर्शयति स त्विति । अनहमर्थं देहादिकम् अहमर्थं कारयति, करोतीति वा (कल्पयतीति) अहङ्कारः महज्जन्यद्रव्यम् । अहम्भावः अहम्बुद्धिः । अस्य अनात्मनि आत्मबुद्धिबोधनपरस्य । अयमेव अहम्भाव एव । पूर्वं करणे घञ् ; इदानीं भावे । आत्मनीव देहेऽप्यहंप्रत्ययः प्रमैव भवतु इत्यत्ता शरीरेति । अविद्यैव; न तु प्रमेत्यर्थः ।

मात्रमेवात्मा, तदा अनात्मनि आत्माभिमाने शरीरे ज्ञप्तिमात्रप्रतिभासः स्यात्; न ज्ञातृत्वप्रतिभासः। तस्मात् ज्ञाताऽहमर्थ एवाऽऽत्मा। तदुक्तम्—

"अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात्।
अविद्यायोगतश्चाऽऽत्मा ज्ञाताऽहमिति भासते॥" (आत्मसिद्धि) इति॥ तथा च—
"देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतस्सुखी॥ (आत्मसिद्धि) इति॥

अनन्यसाधनः=स्वप्रकाशः। व्यापी=अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशनस्वभावः॥

यदुक्तम् (पृ. 29) दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वम्—इति—कोऽयं दोष इति वक्तव्यम्, यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः। अनादिभेदवासनैव हि दोष इति चेत्; भेदवासनायास्तिमिरादिवत् यथावस्थितवस्तु-

---

आत्मा नाहमर्थः, न ज्ञातेति तत्राहंत्वज्ञातृत्वभ्रान्तिवादिनां खण्डनमेवं विवृतं सर्वं संग्रहीतुं आत्मसिद्धिनिगमनश्लोकमुदाहरति **तदुक्तमिति**। **प्रत्यक्षसिद्धत्वं** ज्ञानाहमर्थयोर्धर्मधर्मिभावस्य। **न्यायः**—'प्रत्यक्त्वं नात्मनो भवेत्,' इति; पूर्वोक्तप्रबुद्धप्रतिसंधानादिश्च। **आगमः**—योगिपरमात्मादिविषयकोपि। **अविद्यायोगः** स्थूलोऽहमिति देहे आत्मभ्रमः। शुक्तौ रजतमितिप्रतीतिः वास्तवरजतस्य रजतशब्दमुख्यार्थतां दर्शयति; तद्वत् अहमित्यपि। न हि स्थूलोऽनुभव इति देहात्मभ्रमो जायत इति भावः। देहवत् अन्तःकरणस्य ज्ञानस्य चानात्मत्वेऽपि श्लोकमुदाहरति **तथा चेति**। **अनन्यसाधनः**। साधनं=प्रकाशकम्, प्रकाशो वा। नात्र अन्यसाधनत्वप्रतिषेधः; आत्मनो धर्मभूतज्ञानवेद्यत्वात्, परात्मनापि ज्ञेयत्वाच्च। अतः **अनन्यपदेन** स्वं ग्राह्यमित्याह **स्वप्रकाश** इति। विभुत्वरूपव्यापित्वस्यासंमतत्वादाह **व्यापी** अतीति।

एतावता शास्त्रप्रत्यक्षयोर्विरोध एव नेत्यारभ्योक्तं सर्वं निरस्तम्। शास्त्रेणाद्वैतं साधयितुं प्रवृत्तैः प्रत्यक्षादेरपि स्वानुकूलत्ववर्णनेन स्वबलस्य पुष्टौ कृतायाम्, तत्परिहारेण प्रतिकूलपक्ष एव प्रत्यक्षादिकं स्थापितम्। अन्यथा हि शास्त्रगतस्याद्वैतपरस्य वाक्यस्य भेदानुकूलार्थवर्णने, प्रमाणभूतप्रत्यक्षादिविरुद्धमिदमिति ते प्रत्यवतिष्ठेरन्। एवमेकाकिनि शेषितेऽपि शास्त्रे, तादृशमपि परपक्षप्रतिक्षेपे पर्याप्तं प्राबल्यादित्युद्धतप्रवृत्तिमुन्मूलयितुमनुवदति **यदुक्तमिति**। एवं व्युत्क्रमेण पूर्वपक्षनिरासे हि, शास्त्रस्याद्वैतपरतायाः स्वरसत्वेऽपि अर्थान्तरमेव वर्णनीयमिति निष्कृष्येतेति एवंरीतिरनुसृता। एवंसत्यपि अद्वैतवाक्यमन्यपक्ष एवास्वरसार्थम्, न तु स्वपक्ष इति तत्त्वस्थितिं दर्शयिष्यति। **इति वक्तव्यम्**—इति प्रश्ने उत्तरं वक्तव्यम्। **भेदवासनाया** इति। वासना हि स्मृतिमात्रे हेतुः। तस्याः प्रत्यक्षादिहेतुत्वमेव नास्ति; नतरां विपरीतज्ञानहेतुत्वम्। भेदवासना च भेदज्ञानाधीना। भेदज्ञानञ्च प्रत्यक्षादि। तस्य विपरीतत्वमज्ञातमिति च कथं वासनाया दोषत्वम्। अयमन्यो देवदत्त इति भेदभ्रमजन्या भेदवासना यदि कचिद् दोषः, शुक्तिरजताभेदभ्रमजन्या

विपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम् ?॥ अनेनैव शास्त्रविरोधेन ज्ञास्यत इति चेत्; न, अन्योन्याश्रयणात् । शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेद-वासनायाः दोषत्वनिश्चयः, भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिल-विशेषवस्तुबोधित्वनिश्चय इति ।

किञ्च, यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वम्, शास्त्रमपि तन्मूलत्वेन तथैव स्यात् ॥ अथोच्येत—दोषमूलत्वेऽपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञान-हेतुत्वेन परत्वात् तत् प्रत्यक्षस्य बाधकमिति—तन्न; दोषमूलत्वे ज्ञाते सति परत्वमकिंचि-त्करम् । रज्जुसर्पज्ञाननिमित्तभये सति, भ्रान्तोऽयमिति परिज्ञातेन केनचित् 'नायं सर्पः; मा भैषीः' इत्युक्तेऽपि भयानिवृत्तिदर्शनात् । शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातम् । श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वात् मननादेः ॥

अपि च—इदं शास्त्रम्; एतच्चासंभाव्यमानदोषम्; प्रत्यक्षं तु संभाव्यमानदोषमिति केनावगतं त्वया ? न तावत् स्वतस्सिद्धा निर्धूतनिखिलविशेषाऽनुभूतिरिममर्थमवगमयति; तस्याः सर्वविषयविरक्तत्वात्, शास्त्रपक्षपातविरहाच्च । नाप्यैन्द्रियकं प्रत्यक्षम्; दोषमूल-त्वेन विपरीतार्थत्वात् । तन्मूलत्वादेव नान्यन्यपि प्रमाणानि । अतः स्वापक्षसाधन-प्रमाणानभ्युपगमान्न स्वाभिमतार्थसिद्धिः ॥

ननु व्यावहारिकप्रमाणप्रमेयव्यवहारोऽस्माकमप्यस्त्येव ॥ कोऽयं व्यावहारिको नाम ? ॥ आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथाऽवस्थित इति चेत्—किं तेन प्रयोजनम्; प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात् ॥ अथोच्येत—शास्त्रप्रत्यक्षयोः द्वयोरप्यविद्यामूलत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण बाधो दृश्यते । शास्त्र-

---

अभेदवासनाऽपि दोष इति तुल्यमिति भावः । अभेदशास्त्रप्रामाण्याय कल्प्यत इति शंकते **अनेनेति** । **बोधित्वनिश्चये**-निर्विशेषबोधः प्रमा भवितुमर्हति, शास्त्रञ्च तज्जननक्षममिति निश्चये ।

एवमन्यथासिद्धिसंभावना निरस्ता । अनेन दोषमूलकत्वेन हेतुना, परत्वप्रयुक्तप्राबल्यमपि निरसितुमाह **अथेति** । एकतरप्रामाण्यप्रसक्तौ किल परत्वस्य तन्नियामकता । अप्रामाण्ये सिद्धे तदकिञ्चित्करम्, सर्पभ्रमानन्तरभूदलनभ्रमवदित्याशय्याह **दोषेति** । ननु रज्जुसर्पज्ञानं वस्तुतो दोष-मूलकमपि तथा न गृहीतम् । नायं सर्प इति बाधेव तु भ्रान्तत्वेन गृहीतः । अतस्तत्र तज्ज्ञानमात्रे दोषमूलत्वावधारणात् सर्पज्ञानं यावद्बाधं भयादिकार्यकरमिति युक्तम् । इह तु शास्त्रस्य दोषमूलकत्वं यया प्रक्रियया, तयैव प्रत्यक्षादेरपि दोषमूलकत्वावधारणात् बाधज्ञाननिरपेक्षमेव प्रत्यक्षादेस्त्याज्यत्वं सिद्ध्यतीति चेन्न—दोषमूलकत्वावधारणस्यापि दोषमूलकत्वावधारणमविशेषादिति तस्य प्रत्यक्षादि-वारकत्वाभावात् । इममेवार्थं मुखान्तरेण दर्शयति **अपिचेति** । **अथोच्येतेति** । **गीताशांकर-भाष्यान्ते** ब्रह्मविद्याविधिश्रुत्याद्यप्रामाण्यमाशंक्य परिहृतमिहानुसंधेयम् । **बाध इति** । **बाधदर्शनं**

विषयस्य सदद्वितीयब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थः—इति—तदयुक्तम्; अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात् ।

एतदुक्तं भवति–यथा सकलेतरकाचादिदोषरहितपुरुषान्तरागोचरगिरिगुहासु वसतः तैमिरिकजनस्याज्ञात (स्य ज्ञात) स्वतिमिरस्य सर्वस्य तिमिरदोषाविशेषेण द्विचन्द्रज्ञानमविशिष्टं जायते । न तत्र बाधकप्रत्ययोऽस्तीति न तन्मिथ्या न भवतीति तद्विषयभूतं चन्द्रद्वित्व (द्विचन्द्रत्व) मपि मिथ्यैव । दोषो ह्ययथार्थज्ञानहेतुः–तथा ब्रह्मज्ञानमविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यैव–इति । भवन्ति चात्र प्रयोगाः–विवादाध्यासितं ब्रह्म मिथ्या, अविद्यावत उत्पन्नज्ञानविषयत्वात् प्रपञ्चवत् । ब्रह्म मिथ्या, ज्ञानविषयत्वात् प्रपञ्चवत् । ब्रह्म मिथ्या असत्यहेतुजन्यज्ञानविषयत्वात्, प्रपञ्चवदेव ।

न च वाच्यम्—स्वाप्नस्य हस्त्यादिविज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववत् अविद्यामूलत्वेनासत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहेतुभावो न विरुद्ध इति–स्वाप्नज्ञानस्यासत्यत्वाभावात् । तत्र हि विषयाणामेव मिथ्यात्वम्; तेषामेव हि बाधो दृश्यते; न ज्ञानस्य । न हि, 'मया स्वप्नवेलायामनुभूतं ज्ञानमपि न विद्यते' इति

---

नाम तदभावज्ञानम् । निर्विशेषब्रह्मण्यपि बाधदर्शनं पश्चात् ज्ञापयिष्यति । अभ्युपेत्यापि बाधादर्शनं वस्त्वसिद्धिं विस्तरेणाह **अबाधितस्यापी**ति । अर्थान्यथात्वं सर्वत्र दोषमूलकम् । बाधज्ञानं तु तस्यान्यथात्वस्य ग्राहकमात्रम्; न तु कारकम् । तत् दोषे सति अपारमार्थ्यं विषयस्य दुर्वारमिति उदाहरणेन विशदयति **एतदुक्तमि**ति । बाधकज्ञानं उपदेशकपुरुषमूलकमप्यसंभाव्यमिति ज्ञापनाय **अगोचरे**त्यन्तम् । अनुपदेष्टृयोगिप्रभृत्यनेकपुरुषगोचरत्वेपि न दोष इति तद्व्यवच्छेदाय **अन्तर**-शब्दः । स्वयं दोषमूलकत्वज्ञानाभावे अपारमार्थ्यज्ञानाभावमात्रम्, न तु विषयापारमार्थ्याभावः; दोषस्यैव कारणत्वादिति सूचयितुं **अज्ञातस्वतिमिरस्ये**ति । **ज्ञातस्वतिमिरस्ये**ति पाठे स्वतिमिरदोषस्य स्वयं ज्ञानात् तैर्यथा दोषमूलकत्वज्ञानेनापारमार्थ्यमनुमीयते, तथेहापीति भावो वाच्यः । तदा, 'न तत्र बाधकप्रत्ययोऽस्ति' इत्यस्य प्रकारान्तरमूलकं प्रत्यक्षादिबाधज्ञानं नास्तीत्यर्थः । **तत्** ज्ञानम् । **मिथ्या** भ्रमः । **मिथ्या** अपरमार्थः । **ब्रह्मणा सह मिथ्ये**ति । दोषः ज्ञानमिथ्यात्वस्य भ्रमत्वस्य, विषयमिथ्यात्वस्यापारमार्थ्यस्य च प्रयोजकः । दोषमूलकत्वज्ञानेन च ब्रह्मज्ञानस्य भ्रमत्वज्ञानात् विषयतथात्वबाधः । बाधज्ञानेन साक्षाद् विषयान्यथात्वग्रहः; दोषज्ञानेन दोषजन्यज्ञानस्य भ्रमत्वज्ञानद्वारा अन्यथात्वग्रह इति विशेष इति भावः । **मिथ्यैवे**ति । स्यादिति शेषः । अविद्यास्वीकारे, शास्त्रस्य ब्रह्मप्रतिपादकत्वे, शास्त्रस्यासत्यत्वे च सति त्वया त्वत्संमतहेतुभिः ब्रह्ममिथ्यात्वमेव शंकनीयं स्यादिति प्रयोगत्रयेण दर्शयति **भवन्ति चे**ति ।

स्वाप्न-मायामय-रज्जुसर्प-शंकाविष-प्रतिबिम्ब-रेखावर्ण-प्रतिकृति-नादस्फोटरूप **ब्रह्मसिद्ध्या**-दिदर्शितनानोदाहरणमुखेनान्तिमहेतोः प्राप्तामनैकान्तिकत्वशंकां परिहर्तुं प्रारभते **नचे**त्यादिना ।

कस्यचिदपि प्रत्ययो जायते। 'दर्शनं तु विद्यते, अर्था न सन्ति' इति हि बाधकप्रत्ययः।

मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः; तत्रापि ज्ञानस्याबाधितत्वात्।

विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव, भयादिहेतुः।

सत्यैवादृष्टेऽपि स्वात्मनि सर्पसन्निधानात् दष्टबुद्धिः। सत्यैव शङ्काविषबुद्धिर्मरणहेतुभूता।

वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः।

एषां संवेदनानामुत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च सत्यत्वमवसीयते। हस्त्यादीनामभावे[ऽपि]कथं तद्बुद्धयःसत्या भवन्तीति चेत्—नैतत्, बुद्धीनां सालम्बनत्वमात्रनियमात्। अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितम्; प्रतिभासमानता चास्त्येव दोषवशात्। स तु बाधितोऽसत्य इत्यवसीयते। अबाधिता हि बुद्धिः सत्यैवेत्युक्तम्।

रेखया वर्णप्रतिपत्तावपि नासत्यात् सत्यबुद्धिः, रेखायाः सत्यत्वात्॥ ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः। वर्णात्मता त्वसत्या॥ नैवम्, वर्णात्मताया असत्याया उपायत्वायोगात्। असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टमनुपपन्नं च॥ अथ तस्यां वर्णबुद्धेरुपायत्वम्। एवं तर्ह्यसत्यात् सत्यबुद्धिर्न स्यात्; बुद्धेः सत्यत्वादेव। उपायोपेययोरेकत्वप्रसङ्गश्च; उभयोर्वर्णबुद्धित्वाविशेषात्। रेखाया अविद्यमानवर्णात्मनोपायत्वे च, एकस्यामेव रेखायामविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वादेकरेखादर्शनात् सर्ववर्णप्रतिपत्तिः स्यात्। अथ पिण्डविशेषे देवदत्तादिशब्दसंकेतवत् चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसंकेतवशात् रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति—हन्त तर्हि सत्यादेव सत्यप्रतिपत्तिः, रेखायाः संकेतस्य च सत्यत्वात्॥

---

**विद्यत** इत्यादिवर्तमाननिर्देशः स्वप्नस्य प्रवाहनित्यत्वात्। **शंकाविषं** शंक्यमानं विषम्। **वस्तुभूतः** इति प्रतिभासविशेषणम्। मुखादेर्जलादिस्थत्वेन ज्ञानं प्रतिभासः।

**अर्थक्रिया**—प्रयोजनरूपं कार्यम्। ज्ञाने विषयस्य कारणत्वात् स्वप्नादौ हस्त्यादिज्ञानं सत्यं हस्त्यादेरसत्याज्जायत इति समर्थनमपि न भवतीत्याह **हस्तीति**। असिद्धः स कार्यकारणभावः; अतीतानागतविषयेऽपि ज्ञानोदयात्; भवद्भिः शशविषाणादिविषयेऽपि ज्ञानांगीकारादिति भावः।

असत्यस्य कारणत्वे कार्यप्राक्कालसत्त्वमेव कारणत्वमिति असत्यत्वभङ्ग इत्याह **असत इति**। **निरुपाख्यस्य** व्यवहाराविषयस्य शशविषाणादेः। **असत** इति हेतुगर्भविशेषणम्। **सत्यबुद्धिर्न स्यात्**—सत्यबुद्धिरिति न भवति। **उपायोपेययोः** हेतुफलयोः। **अविद्यमानवर्णात्मना**; अविद्यमानो यो वर्णस्यात्मा स्वरूपं कत्वादि, तेन रूपेण। तस्य रेखायामविद्यमानत्वात् तद्विशिष्टरेखात्वेन कारणत्वायोगात् ककारादिवर्णतादात्म्याभावविशिष्टरेखा कारणमित्येव वाच्यम्। तत् सर्वत्राविशिष्टमिति भावः। **संकेतवशादिति**। भाषादिभेदेनैकवर्णेऽपि रेखाणां भेदात् अनादिवा-

रेखागवयादपि सत्यगवयबुद्धिः सादृश्यनिबन्धना । सादृश्यं च सत्यमेव ।

न चैकरूपस्य शब्दस्य नादविशेषेणार्थभेदबुद्धिहेतुत्वेऽपि असत्यात् सत्यप्रतिपत्तिः ; नानानादाभिव्यक्तस्यैकस्यैव शब्दस्य, तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थभेदबुद्ध्युत्पत्तिहेतुत्वात् । शब्दस्यैकरूपत्वमपि न साधीयः ; गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात् ।

अतोऽसत्याच्छास्त्रात् सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा ॥

ननु न शास्त्रस्य गगनकुसुमवदसत्यत्वम् ; प्रागद्वैतज्ञानात् सद्बुद्धिबोध्यत्वात् । उत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य । न तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः । यदोपायः, तदा अस्त्येव शास्त्रम्, अस्तीति बुद्धेः ॥

नैवम्, असति शास्त्रे, अस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात् ॥ ततः किम् ? ॥ इदं ततः—मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम् ; यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम् ।

---

च्यवाचकभावायोगेपि टिघुभादौ पाणिनिसंकेतस्येवात्रापि संकेतस्य रेखारूपार्थबोधकत्वम् ; संकेताज्ञाने तदप्रतीतेरिति भावः । रेखागवयादावेवं संकेतापेक्षाविरहात् तस्य पृथक्चिन्तनम् ।

**नादविशेषेणे**ति । एकोपि स्फोटः नादगतकत्वखत्वादिविशिष्टरूपेण विभिन्नार्थबुद्धिहेतुरित्यर्थः । **तत्तन्नादे**ति । न कत्वादिविशिष्टतया कारणत्वम्; किंतु ककारादिनादाभिव्यङ्ग्यत्वविशिष्टस्फोटरूपेण । तत्तु सत्यमिति । इदमप्यभ्युपेत्योक्तम् ; स्फोटस्यैवासिद्धेः, तत्तद्वर्णानां भिन्नानामेवानुपूर्वीविशिष्टतया स्मृतानामर्थबुद्धिहेतुत्वादित्याह **शब्दस्ये**ति । विशिष्य **गकारे**त्युक्तिः, "अथ गौरित्यत्र कः शब्दः" इति प्राचां गोशब्दग्रहणपूर्वकविचारमनुसृत्य ।

एवमसत्यात् सत्यविषयकप्रतिपत्त्यसंभवस्योपपादितत्वात् पूर्वोक्तः असत्यहेतुजन्यज्ञानविषयत्वादिति असत्यत्वे हेतुः सुस्थ इति निगमयति **अत** इति । न च शास्त्रस्यासत्यत्वेपि तद्विषयकज्ञानस्य स्वाप्नहस्त्यादिज्ञानस्येव सत्यत्वात् सत्यमेव ज्ञानं हेतुरिति पुनर्हेत्वसिद्धिरिति वाच्यम्—मन्मते तथावैलक्षण्येपि त्वन्मते शास्त्रस्येव तज्ज्ञानस्यापि मिथ्यात्वादसत्यत्वाविशेषात् । मन्मते तु उभयमपि सत्यम् । स्वप्नादिस्थले तु नैवम् । इह त्वद्रीत्याऽनिष्टप्रसंग एव क्रियत इति दोषस्तदवस्थ इति ।

हेतौ निविष्टमसत्यत्वमसिद्धमिति पुनः शङ्कते **नन्वि**ति । **मिथ्यात्वात्**—बाध्यार्थविषयकत्वात् । **असती**त्यनेन सदसद्विलक्षणे सत्त्वं दुर्वचमिति ज्ञापितम् । एवमपि सत्त्वेन प्रतीयमानतया नासत्यत्वमिति पृच्छति **ततः कि**मिति । न सत्यमिति असत्यं=मिथ्येत्यर्थात् मिथ्याहेतुजन्यत्वघटितः प्रकृतहेतुः मिथ्यात्वसाधक एवेत्याह **इदं तत** इति । **मिथ्यात्वम्** मिथ्यात्वसिद्धिः । **अग्नेरपि मिथ्यात्व**मिति । इदं ज्ञानं बाध्यार्थविषयकं मिथ्याविषयकज्ञानजन्यत्वादित्यनुमाने सति, अर्थे मिथ्यात्वं सिद्ध्यत्येव । तदेवार्थपक्षकानुमानेनैव स्पष्टमुच्यत इति भावः । ननु क्वचित् बाष्पधूमज्ञानजन्याग्निज्ञानमबाध्यार्थविषयकमपि दृष्टमिति चेत्—न । मिथ्याहेतुजन्यज्ञानमात्रविषयत्वे

पश्चात्तनबाधादर्शनञ्चासिद्धम्; शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधदर्शनात् ॥ तत्तु भ्रान्तिमूलमिति चेत्—एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम्। पाश्चात्त्यबाधादर्शनं तु तस्यैव—इत्यलमप्रतिष्ठितकुतर्कपरिहसनेन।

श्रुतिघट्टः

यदुक्तम् (पृ. 24.), वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि, "सदेव सोम्येदमग्र आसीत्" इत्येवमादीनि इति—तदयुक्तम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्यसङ्कल्पत्वं सर्वान्तरत्वं सर्वाधारत्वं सर्वनियमनमित्याद्यनेककल्याणगुणविशिष्टताम्, कृत्स्नस्य जगतः तदात्मकतां च प्रतिपाद्य, एवंभूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रति उपदेशाय प्रवृत्तत्वात् प्रकरणस्य। प्रपञ्चितश्चायमर्थो वेदार्थसंग्रहे। अत्राप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्यते।

(24) "अथ परा यया तदक्षरम्" इत्यत्रापि प्राकृतान् हेयगुणान् प्रतिषिध्य नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वाव्ययत्वभूतयोनित्वसार्वज्ञ्यादिकल्याणगुणयोगः परस्य ब्रह्मणः प्रतिपादितः।

(24) "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्रापि सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न निर्विशेषवस्तुसिद्धिः। प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं हि सामानाधिकरण्यम्। तत्र सत्यज्ञानादिपदमुख्यार्थैर्गुणैः तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वा एकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोऽवश्याश्रयणीयः। इयांस्तु विशेषः—एकस्मिन् पक्षे पदानां मुख्यार्थता, अपरस्मिंश्च तेषां लक्षणा। न चाज्ञानादीनां प्रत्यनीकता वस्तुस्वरूपमेव; एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यात्। तथा सति सामानाधिकरण्यासिद्धिश्च; एकस्मिन् वस्तुनि वर्तमानानां पदानां निमित्तभेदानाश्र-

---

विषयमिथ्यात्वध्रौव्यादित्यलम्। एवं शाक्याद्यागमजन्यज्ञानविषयोऽपि दृष्टान्तो भाव्यः। तदागमविषयाणां मिथ्यात्वं दुष्टहेतुजन्यज्ञानविषयत्वेनैव निश्चेयम्; तदुक्तादृश्यार्थविषये बाधदर्शनस्य दुर्वचत्वादिति व्यक्तं पूर्वमीमांसायाम्। एवं तावत्—**अबाधितस्यापि** इत्यादिना बाधादर्शनमभ्युपेत्य दोष उक्तः। अथ बाधदर्शनमेवास्तीति वदन् तदुक्तेः परपक्षसाधकत्वमेवेत्याह **पश्चात्तने**ति।

एवं शास्त्रस्य तदुक्तार्थपरत्वेपि बाधकत्वायोगः प्रपञ्चितः। अथ शास्त्रस्य तदभिमतार्थपरत्वमेव नेति वदन् वेदान्तवाक्यानि प्रथमं तदुदाहृतानि क्रमेण व्याख्यातुमाह **यदुक्त**मिति। **प्रकरणस्य** सद्विद्याप्रकरणस्य। **निपुणतरम्**—अद्वैतिमुखेनैव, तार्किकमुखेन चाद्वैतप्रक्रियाखण्डनेन। **एकस्मिन्** गुणनिमित्तकत्वरूपे। **अपरस्मिन्** व्यावृत्तिनिमित्तकत्वरूपे। असत्यव्यावृत्त्यैक्यमज्ञानादिव्यावृत्तौ न भवतीति दर्शयितुम् असत्यादीनामित्यनुक्त्वा **अज्ञानादीना**मिति। ननु निमित्त-

यणात् । न च एकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदादनेकार्थत्वं पदानां सामानाधिकरण्यविरोधि ; एकस्यैव वस्तुनोऽनेकविशेषणविशिष्टताप्रतिपादनपरत्वात् सामानाधिकरण्यस्य । "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" (कैयटे वृद्ध्याह्निके) इति हि शाब्दिकाः ।

यदुक्तम् (पु. 33.), 'एकमेवाद्वितीयम्' इत्यत्राद्वितीयपदं गुणतोपि सद्वितीयतां न सहते ; अतः सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामद्वितीयवस्तुप्रतिपादनपरत्वमभ्युपगमनीयम् । कारणतयोपलक्षितस्याद्वितीयस्य ब्रह्मणो लक्षणमिदमुच्यते, "सत्यं ज्ञानमनन्तं ब्रह्म" इति । अतो लिलक्षयिषितं ब्रह्म निर्गुणमेव । अन्यथा "निर्गुणम्", "निरञ्जनम्" इत्यादिभिर्विरोधश्च—इति–तदनुपपन्नम्; जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयपदस्य । तथैव विचित्रशक्तियोगमेवावगमयति, (छा. 6. 2. 3.) "तदैक्षत बहु स्यां प्रजायेयेति; । तत् तेजोऽसृजत" इत्यादि ॥ अविशेषेणाद्वितीयमित्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायत इति चेत्—सिसृक्षोर्ब्रह्मण उपादानकारणत्वम्, "सदेव सोम्येदमग्र आसीदेकमेव" इति प्रतिपादितम्। कार्योत्पत्तिस्वाभाव्येन बुद्धिस्थं निमित्तान्तरमिति तदेवाद्वितीयपदेन निषिद्ध्यत इत्यवगम्यते । सर्वनिषेधे हि स्वाभ्युपगताः सिषाधयिषिताः नित्यत्वादयश्च निषिद्धाः स्युः । सर्वशाखाप्रत्ययन्यायश्चात्र भवतो विपरीतफलः ; सर्वशाखासु कारणान्वयिनां सर्व-

---

भेदाश्रयणे तत्तद्व्यावृत्तिविशिष्टत्वाकारेणार्थभेदात् अभिन्नार्थप्रतिपादकत्वं न भवतीति शङ्कां निरस्यति **न चेति** । अद्वितीयश्रुतिबलात् सत्यं ज्ञानमिति निर्विशेषस्वरूपपरमितीदं निरसितुमनुवदति **यदुक्तमिति** । **उपलक्षितस्येति** । कारणत्वस्य विशेषणत्वे हि सद्वितीयत्वापत्तिः । अतस्तस्य तटस्थलक्षणत्वात् स्वरूपलक्षणं सत्यादि । अत एव, 'आनन्दादयः प्रधानस्य' इति सूत्रमिति भावः । **इत्यादिभिरिति** आदिपदेन, 'यतो वाच' इति वाक्यग्रहणम् ; उपरि तदर्थवर्णनात् । **अधिष्ठात्रन्तरं** निमित्तान्तरम् । कतिपयकार्योपयोगिनित्यसूरिरूपनिमित्तान्तरसत्त्वस्य प्रलये संभवेऽपि न तेषां स्वानधीनत्वं स्वपृथक्सिद्धत्वमिति ज्ञापनाय **अन्तरपदमप्यधिकं** प्रयुक्तम् । **विचित्रेति** । तत्तत्कार्यप्रस्तावे कारणे प्रयुक्तमद्वितीयपदं हि तत्तत्कार्यौपयिकद्वितीयवस्तुनिरपेक्षत्वपरमिति भावः । उपादानकारणत्ववत् सत्त्व-इदमर्थाभिन्नत्व-कालसंबन्ध-एकत्वाश्रयत्वञ्च प्रतिपादितमिति सर्वद्वितीयराहित्यं दुर्वचमिति च ध्येयम् । **अविशेषेणेति** । अद्वितीयमित्यस्य स्वसजातीयद्वितीयरहितमित्यर्थ उक्तः **संवित्सिद्धौ** ; अत्र शाङ्करोपनिषद्भाष्योक्तार्थस्वीकारेणैवार्वाचीनाद्वैत्यभिमतार्थखण्डनं क्रियते । लोके मृदादिकमुपादानं कारणत्वेन सजातीयनिमित्तकारणसहितमेव दृष्टम् ; ब्रह्म तु न तथेति प्रकरणानुसारात् उक्तरीत्या प्रकृतार्थपर्यवसानमेव संवित्सिद्ध्यभिमतमपीत्याशयः । **निषिद्धाः स्युरिति** । अद्वितीयपदेनैव सर्वनिषेधे एवकारवैयर्थ्यमपि । **अत्रभवतो विपरीतफल इति** । **अत्र**

ज्ञत्वादीनां गुणानामत्रोपसंहारहेतुत्वात् । अतः कारणवाक्यस्वभावादपि, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन सविशेषमेव प्रतिपाद्यत इति विज्ञायते ।

न च (पु. 33.) निर्गुणवाक्यविरोधः, प्राकृतहेयगुणविषयत्वात् तेषाम्, "निर्गुणम्", 'निरञ्जनम्', "निष्कलं निष्क्रियं शान्तम्" इत्यादीनाम् ।

ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयो ब्रह्मणो ज्ञानस्वरूपतामभिदधति । न तावता निर्विशेषज्ञानमात्रमेव तत्त्वम् ; ज्ञातुरेव ज्ञानस्वरूपत्वात् । ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वं मणिद्युमणिदीपादिवत् युक्तमेवेत्युक्तम् । ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्ति । (मुण्ड 1. 1. 10.) "यः सर्वज्ञः सर्ववित्", (छा. ०. 2. 3.) "तदैक्षत", (छा. 6. 3. 2.) "सेयं देवतैक्षत", (ऐ. 1.) "स ईक्षत लोकान्नु सृजा इति", (कठ 5. 13.) "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्", (श्वे. 1. 9.) "ज्ञाज्ञौ द्वावजावीशनीशौ", (श्वे. 6. 7, 8.) "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेशमीड्यम् ॥ न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", (छा 8. 1. 5.) "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इत्याद्याः श्रुतयो ज्ञातृत्वप्रमुखान् कल्याणगुणान् ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान् वदन्ति ; समस्तहेयरहिततां च ।

निर्गुणवाक्यानां सगुणवाक्यानां च विषयम्—अपहतपाप्मेत्याद्यपिपासइत्यन्तेन हेयगुणान् प्रतिषिद्ध्य, 'सत्यकामः सत्यसङ्कल्पः' इति ब्रह्मणः कल्याणगुणान् विदधती इयं श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभावादन्यतरस्य मिथ्याविषयता-

---

निर्गुणवादे । अत्रभवत इति एकपदं वा ; तदा उपालम्भः । न हि धर्मिस्वरूपप्रतिपत्तये स न्यायः ; किंतु धर्मिणि सर्वत्रोक्ते धर्माणामपि ग्रहणाय । अतो नाद्वितीयस्वरूपसंग्रहस्तेन । किंतु तेनाद्वितीयपदघटितविद्यायामपि तत्रोक्तगुणानामिव अन्यत्रोक्तानामन्यादृशगुणानामप्युपसंहार एवेति भावः । **निरञ्जन**मिति तदनूदितमिहानूद्य तद्घटितार्थारम्भं दर्शयति **निष्कल**मिति ।

**ज्ञातृत्वमेवे**ति । ज्ञानमात्रवादितयाऽभिमतानामपि शब्दव्युत्पत्ति-लोकन्याय-भूयसांन्यायैः ज्ञातृत्वपरत्वमेव स्वरसम् ; स्वयम्प्रकाशत्वस्यापि सत्त्वात् सविषयकगुणवाचिज्ञानपदस्योपचारेणात्मनि प्रयोगदृष्ट्या ज्ञानरूपत्वव्यवहार इति भावः । 'अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति ज्ञानस्वरूपत्वावधारणमात्रेण निर्गुणपदस्य ज्ञानगुणकत्व-तदन्यसर्वगुणनिषेधपरत्वस्वीकारे नानाश्रुतिविरोधः ; ताभिरेव श्रुतिभिः निर्गुणपदस्य हेयरहितेत्यर्थलाभश्चेत्याह **यः सर्वज्ञ** इति । एतदर्थं ज्ञातृत्वपरश्रुत्युदाहरणात् सर्वाः श्रुतयः का इति चोत्तरितं भवतीति तत्पृथगनुक्तिः । **कार्यं** प्रवर्त्यं शरीरम् । **करण**मिन्द्रियादि । **विषयं** विवक्षितार्थम् ; **विविनक्ती**त्यत्रैतदन्वयः । **विरोधाभा-**

श्रयणमपि नाशङ्कनीयम् ।

(तै. आनं. 8.) "भीषाऽस्माद्वातः पवते" इत्यादिना ब्रह्मगुणान् आरभ्य, "ते ये शतम्" इत्यनुक्रमेण क्षेत्रज्ञानन्दातिशयमुक्त्वा, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान्" इति ब्रह्मणः कल्याणगुणानन्त्यम् अत्यादरेण वदतीयं श्रुतिः । (तै. आनं. 1.) "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति ब्रह्मवेदनफलमवगमयद्वाक्यं परस्य विपश्चितो ब्रह्मणो गुणानन्त्यं ब्रवीति । विपश्चिता ब्रह्मणा सह सर्वान् कामान् समश्नुते—काम्यन्त इति कामाः-कल्याणगुणाः; ब्रह्मणा सह तद्गुणान् सर्वान् अश्नुते इत्यर्थः । दहरविद्यायाम्, (छा. 8. 1. 1.) "तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इतिवद् गुणप्राधान्यं वक्तुं सहशब्दः । फलोपासनयोः प्रकारै-

---

वादिति । विरोधे ह्येकतरबाधो विचार्य इति भावः । सगुणवाक्यस्येत्यनुक्त्वा अन्यतरस्येत्युक्तिः—अपच्छेदनयात् निर्गुणवाक्यं प्रबलमिति भवद्भिरुच्यते । असंजातविरोधन्यायेन सगुणवाक्यमेव ग्राह्यम्, निर्गुणवाक्यानां सगुणवाक्यार्थावगत्यनन्तरमेवार्थबोधकत्वात् । अश्वप्रतिग्रहेष्टिन्यायेन चोपक्रमप्राबल्यात् सगुणवाक्यमेवादरणीयम् । अपच्छेदन्यायश्चानियतपौर्वापर्यक्रियाविषयो नात्र प्रवर्तते । अतो विरोधात् निर्गुणवाक्यमेव बाध्यमिति पक्षस्यापि ज्ञप्तये । सति हि विरोधे एवं विचारप्रसक्तिः । विरोध एव न; विषयस्य व्यवस्थितत्वादिति स्वाशयः । एतद्विचारविस्तरः **टीका-शतदूषणी-परमार्थभूषणादौ** द्रष्टव्यः । **मिथ्याविषयताश्रयणमपि** नेति । अपच्छेदस्थले प्रयोगभेदेन वाक्यप्रामाण्यं रक्ष्यते ; अत्र तु विरुद्धार्थवर्णने श्रुतिवाक्यजातमन्यतरत् सर्वथैवाप्रमाणं भवतीति अविरोधनिर्वाह एव कार्य इति भावः ।

निरञ्जनादिवाक्यं निर्गुणपदस्य हेयनिषेधपरत्वव्युत्पादनार्थं प्रवृत्तम्; न तत् अद्वितीयपदस्य त्वदभिमतार्थसाधकमित्युक्तप्रायम् । यतोवाच इत्यपि न साधकम्, तस्य सर्वथा वेद्यत्वादिधर्मप्रतिषेधकत्वाभावादित्यभिप्रयन्नाह **भीषे**ति । **कल्याणगुणानन्त्य**मिति । आनन्दस्यापरिच्छिन्नस्योक्तिर्हि सर्वपरिपूर्णत्वदर्शिनी । आनन्दातिशयश्च, 'युवा स्या'दित्यादिना गुणविभूतिपौष्कल्यमूल एवोक्तः । अनुकूलस्वविधेयसर्वकत्वमेव महानन्दत्वम् । अत ऐश्वर्यादिसर्वगुणकथनमपि तत एवेति भावः । किं वाक्यान्तरगवेषणया, सत्यज्ञानादिवाक्यमेव गुणानन्त्यमादरेण वदत् सत्यादिपदस्य निर्गुणपरत्वनिवारकमित्याह **सोऽश्नुत** इति । **फलमवगमय**दिति । उपासनान्वयितया गुणकथने कथञ्चिदारोपितगुणपरतया नयने प्रयत्येत । फलमपि गुणानुभव एव चेत्, वस्तुतत्त्वमेव तदिति ह्यकामेनाप्यभ्युपेत्यमिति भावः । कथं कामशब्दो गुणपरः, गुणानां धर्मत्वेन धर्म्यपेक्षया प्राधान्यनिर्देशायोगादित्यत्राह **दहरे**ति । **इतिव**दिति । तत्र, 'तस्मिन् कामाः समाहिताः' इति कामपदेनैव गुणाः कथिताः; प्राधान्येन च । अत्र 'सहयोगेन ब्रह्मणोऽप्राधान्यकरणम्, 'आप्नोति परम्' इति प्रागेव ब्रह्मप्राप्तेः ज्ञातत्वात् अज्ञातस्य सर्वकामानुभवस्यापूर्वतया ज्ञाप्यत्वादित्यपि निरुह्येत ;

क्यम्, ( छा. 3. 14. 1. ) " यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति " इति श्रुत्यैव सिद्धम् ।

" यस्यामतं तस्य मतम्...अविज्ञातं विजानताम् " इति ( पु. 24. ) ब्रह्मणो ज्ञानाविषयत्वमुक्तं चेत्—( तै. आनं. 1. ) " ब्रह्मविदाप्नोति परम् ", ( मुण्ड. 3. 2. 9. ) " ब्रह्म वेद ब्रह्मैव भवति " इति ज्ञानान्मोक्षोपदेशो न स्यात् । ( तै. आनं. 6. ) " असन्नेव स भवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः " इति, ब्रह्मविषयज्ञानासद्भावसद्भावाभ्यामात्मनाशमात्मसत्तां च वदति । अतो ब्रह्मविषयवेदनमेवापवर्गोपायं सर्वाः श्रुतयो विदधति । ज्ञानं चोपासनात्मकम्, उपास्यं च ब्रह्म सगुणमित्युक्तम् ।

(तै. आनं. 8.) "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह" इति ब्रह्मणोऽनन्तस्यापरिच्छिन्नगुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्यत्वश्रवणेन ब्रह्मैतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातममतमित्युक्तम्, अपरिच्छिन्नत्वाद् ब्रह्मणः । अन्यथा "यस्यामतं तस्य मतम् ", " विज्ञातमविजानताम् " इति मतत्वविज्ञातत्ववचनं तत्रैव विरुध्यते ।

यत्तु ( पु. 24. ) "न दृष्टेर्द्रष्टारं....न मतेर्मन्तारम् " इति श्रुतिः दृष्टेर्मतेर्व्यतिरिक्तं द्रष्टारं मन्तारं च प्रतिषेधति इति—तत्—आगन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां

---

न तु दहरवाक्ये तथा । अतस्तत्र चेत् प्राधान्यसंभवः, कुतो नात्रेति भावः । सर्वमिदं धर्म्यपेक्षया गुणेष्वादरातिशयं दर्शयतीति तात्पर्यम् । **यथाक्रतुः** यत्प्रकारकोपासनवान् । निर्गुणत्वेनोपासने गुणप्राप्तिर्दुर्लभेति उपासनार्थनिर्गुणत्वारोपवादोवा, सगुणोपासने निर्गुणप्राप्तिवादोवा न युक्त इत्याशयः ।

**ब्रह्मविषयज्ञानासद्भावेति** । 'असद् ब्रह्मेति वेद चेत्' इत्यस्य ब्रह्म नास्तीति ज्ञानवानित्यर्थस्वीकारे, अस्तीति नास्तीति वा यो न जानाति, तस्य क्रोडीकारो न स्यात् । अतः ब्रह्म वेदेत्येतत् असच्चेदित्यर्थः । अथवा ' असदित्यत्र अकारः पृथक्पदं वेदेत्यत्रान्वेति । 'अमानोनाः प्रतिषेधवचनाः ।' ब्रह्म सदिति न वेद चेदित्यर्थः । एवञ्च न सन् असन् इत्यसत्पदार्थोऽप्याञ्जस्येन गृहीतो भवति । अतो ब्रह्मज्ञानाभावः पूर्वार्धविवक्षित इति भावः । भवन्मते तु अज्ञानी प्रशंसनीयः, न त्वेवं निन्दनीय इति च भावः । **अमतमित्यादेः** कोऽर्थ इत्यत्र श्रुतिरेवार्थं दर्शयतीत्याह **यतो वाच इति** । इतीत्यस्य परिच्छेदायोग्यत्वश्रवणेनेत्यत्रान्वयः । तदैकार्थ्यं प्रकृतवाक्यस्यापीति भावः । पूर्वं यतोवाचइत्यर्धस्यानन्दान्वयपरो मन्त्रो गृहीतः, इह तु ब्रह्मान्वयपर इति भेदः ब्रह्मशब्दव्युत्पत्तिरत्र श्रुतिहृद्गता । **तत्रैव** स्ववाक्य एव । अस्य **मतत्वविज्ञातत्ववचन**मित्यनेनान्वयः ।

पूर्वपक्ष्युपात्तस्य वाक्यान्तरस्यार्थं वक्तुमाह **यत्त्विति** । न दृष्टेर्द्रष्टारमित्यस्य **भर्तृप्रपञ्चोक्त**मर्थं प्रदूष्य **शांकरोपनिषद्भाष्ये**, दृष्टेः=अन्तःकरणवृत्तेः द्रष्टारं=भासकमात्मानं साक्षिणं न पश्येः=न दृष्टिविषयीकुर्या इति तस्याविषयत्वमुच्यत इति व्याख्यातम् । तत् यस्यामतमित्येतदर्थदूषणादेव दूषितं

कुतर्कसिद्धां मत्वा, 'न तथाऽऽत्मानं पश्येः, न मन्वीथाः ; अपि तु द्रष्टारं मन्तारमप्यात्मानं दृष्टिमतिरूपमेव पश्येः' इत्यभिदधातीति परिहृतम्। अथवा दृष्टेर्द्रष्टारं मतेर्मन्तारं जीवात्मानं प्रतिषिध्य सर्वभूतान्तरात्मानं परमात्मानमेवोपास्स्वेति वाक्यार्थः। अन्यथा (बृ. 4.4.14.) "विज्ञातारमरे केन विजानीयात्" इत्यादिज्ञातृत्वश्रुतिविरोधश्च।

"आनन्दो ब्रह्म" इति आनन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयत इति (पु. 24.) यदुक्तम्; तत्—ज्ञानाश्रयस्य ब्रह्मणो ज्ञानं स्वरूपमिति वदतीति परिहृतम्। ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यते। (बृ. 5. 9. 2.8) "विज्ञानमानन्दं ब्रह्म" इति, आनन्दरूपमेव ज्ञानं ब्रह्मेत्यर्थः। अत एव भवतामेकरसता। अस्य ज्ञानस्वरूपस्यैव ज्ञातृत्वमपि श्रुतिशतसमधिगतमित्युक्तम्। तद्वदेव, (तै. आनं.) "स एको ब्रह्मण आनन्दः", "आनन्दं ब्रह्मणो विद्वान्" इति व्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म; अपित्वानन्दि; ज्ञातृत्वमेव ह्यानन्दित्वम्।

---

भवतीति अद्वैत्यभिमतमर्थान्तरमनूद्य निरस्यत इह। दृष्टेरिति पञ्चमी ल्यब्लोपे; व्यतिरिक्तपदाध्याहारो वा। दृष्टयतिरिक्तं द्रष्टारं न पश्येः इत्युक्तौ द्रष्टृत्वं नास्तीति कथितं भवतीति पूर्वपक्ष्याशयः। तथैवार्थवर्णनेऽपि द्रष्टृत्वमङ्गीकृत्यैव, द्रष्टारमेव सन्तं दृष्टिव्यतिरिक्ततया—ज्ञानस्वरूपत्वविहीनतया जडतया न पश्येरिति भाववर्णनं संभवतीति सिद्धान्त्याशयः। अत्र पक्षे अध्याहारादिक्लेशात् दृष्टिमत्यादिविशेषशब्दानां ज्ञानस्वरूपेत्यर्थवर्णनक्लेशाच्चार्थान्तरमाह **अथवे**ति। भर्तृप्रपञ्चयोजनैवेयम्। दृष्टेर्द्रष्टारमिति पाकं पचतीतिवन्निर्देशः। **दृष्टे**रिति षष्ठी। दृष्ट्यादेः कर्तारमिति वाक्यार्थः। श्रवणमननध्यानदर्शनकर्ता जीवः न तत्कर्मतया मयोच्यते, अपि तु परमात्मेति याज्ञवल्क्यवचनमिदं प्रकृतसंगतम्। **प्रतिषिद्ध्ये**त्यस्य दृष्ट्यादिविषयभावाद् व्यावर्त्येत्यर्थः। यद्वा भाष्ये **दृष्टे**रिति पञ्चमी। दृष्टेःप्रतिषिद्ध्य= दृष्टिविषयमकृत्वा इत्येवमर्थः। श्रुतौ च पञ्चम्येव वा तृतीयार्थे। तदा दृष्ट्यादिपदानां ज्ञानविशेषपरत्ववत् ज्ञानकरणपरत्वमपि संभवति। तदा **दृष्टेर्द्रष्टारं** करणविशेषायत्तज्ञानवन्तं जीवात्मानं न पश्येः; किं तु करणनिरपेक्षं द्रष्टारमित्यर्थः अन्तराभूतग्रामाधिकरणभाष्यानुसारात्। विस्तरोऽस्मत्परमार्थप्रकाशिकायाम्।

आनन्दशब्दप्रयोगे ज्ञानं स्वरूपमिति कथं लभ्यत इत्यत्राह—**ज्ञानमेवे**ति। सुखादीनां ज्ञानविशेषत्वं **वेदार्थसंग्रहे** उक्तम्। उभयोरेकत्वे कथं विज्ञानमानन्दमिति सहप्रयोग इत्यत्राह **विज्ञान**मिति। आनन्दस्य ज्ञानातिरिक्तत्वभ्रमव्युदासः फलम्। **एकरसता** भवदभिमततत्त्वस्यैकसारभूतता। अथवा **एकरसता** अद्वैते रुचिमत्ता। वस्तुतत्त्वमेवं कथितम्। ज्ञानानन्दयोर्भेदे ज्ञानपदमानन्दपदं वा गुणविशिष्टार्थपरं सुयोजम्। सगुणत्वादस्मद्ब्रह्मण इत्याशयानः, आनन्द इत्यस्य आनन्दमय इत्येतदैकार्थ्यम्, आनन्दमितिनपुंसकत्वेन अर्शआद्यचि आनन्दविशिष्टं ब्रह्मेत्यर्थलाभश्च मनसिकृत्याह **अस्ये**ति। **तद्वदेवे**त्यस्य **नानन्दमात्र**मित्यादिनाऽन्वयः। तद् विवृणोति **ज्ञातृत्वमेव ही**ति।

यदिदमुक्तम् (24), 'यत्र हि द्वैतमिव भवति', 'नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति', 'यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येत्' इति भेदनिषेधो बहुधा दृश्यत इति—तत्—कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात् तत्प्रत्यनीकनानात्वं प्रतिषिध्यते ; न पुनः "बहु स्यां प्रजायेय" (छा. 6.) इति बहुभवनसङ्कल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यत इति परिहृतम् ॥ नानात्वनिषेधादियमपरमार्थविषयेति चेत्——न । प्रत्यक्षादिसकलप्रमाणानवगतं नानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इत्युपहास्यमिदम् ।

"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति" इति ब्रह्मणि नानात्वं पश्यतो भयप्राप्तिरिति ( 24. ) यदुक्तम्——तदसत्——(छा. 3. 14.) "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति तन्नानात्वानुसन्धानस्य शान्तिहेतुत्वोपदेशात् । तथा हि सर्वस्य जगतस्तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वानुसंधानेनात्र शान्तिर्विधी-

---

द्वैतनिषेधवाक्यानामपि सगुणनिर्गुणवाक्यन्यायेनाविरोधेनार्थो वक्तव्य इत्याशयेनाह यदिदमिति। कृत्स्नस्य समष्टिव्यष्टिरूपस्य, चेतनाचेतनरूपस्य जगतः जगद्वाचिपदार्थस्य ब्रह्मकार्यतया ब्रह्मोपादानकतया । तदात्मकत्वेन तदात्मकत्वनिश्चयेन—ब्रह्मात्मकतया शब्दबोध्यत्वेन । ऐक्यात् विशिष्टस्य वस्तुन एकत्वात् । अयमर्थः—'सर्वं खल्विदं ब्रह्म तज्जलान्', 'सदेव सोम्येदम्', 'य आत्मनि तिष्ठन्' इत्यादितः प्रथमतः कार्यस्य जगतः ब्रह्मोपादानकत्वम्, नित्यस्यानित्यस्य च सर्वस्य तदन्तर्यामिकत्वमपि प्रतीयते । उपादानोपादेयभावश्च वस्त्वभेदं विना न भवतीति जगत्पदेन ब्रह्मपर्यन्तार्थविवक्षा सिद्धा । तत्रान्तर्यामित्वश्रवणात् तस्यैवोपादानत्वनिर्वाहकत्वाच्च जगद्वाचिपदं ब्रह्मात्मकजगत्परम्, अर्थात् अन्तर्यामितया जगद्विशिष्टब्रह्मपरमिति निश्चीयते । एवञ्च सर्वस्य तत्प्रकारत्वात् विशिष्टमेकमेव तत्त्वं शास्त्रार्थ इति सिद्धया-द्वैतनिषेधवाक्यानि न प्रकाराणां प्रकारिणो वा निषेधकानि, किंतु विशिष्टवस्त्वैक्यप्रत्यनीकं यत् नानात्वं ईदृशविशिष्टवस्त्वनेकत्वम्, एतद्विशिष्टवस्त्वनन्तर्गतत्वं वा, तत्प्रतिषेधकानीति भाव्यते । अतः सर्वं कर्तृकर्मकरणादिकं स्वतन्त्रमेतदनात्मकं नास्ति ; स्वतन्त्रतत्तद्दर्शनं तु अन्तरात्मज्ञानहीनानामेवेति निषेधश्रुत्यर्थ इति। जगद्वाचिपदानां तदात्मकत्वपर्यन्तार्थनिश्चये कार्यत्वतदन्तर्यामिकत्वोभयं हेतुरित्येतज्ज्ञापकहेतुसमुच्चयार्थः चकारः । एतद्भाष्यार्थप्रपञ्चनं टीकायाम्, तत्तच्छ्रुतिप्रत्येकार्थप्रपञ्चनञ्चोपनिषद्भाष्यपरिष्कारादिषु द्रष्टव्यम्। सर्वत्रार्थसिद्धस्वतन्त्रपदपूरणेन निषेध्यविशेषलाभः सुग्रहः। इयं बहुस्यामित्यादिनानात्वश्रुतिः।

द्वैतनिषेधश्रुत्यन्तररीत्यैव, 'अन्तरं कुरुते' इत्यत्रापि अन्तरं भेदमित्यर्थस्वीकारेणैव समाधानस्य संभवेऽपि वस्तुतः प्रकरणानुगुणमर्थान्तरं वर्णनीयमित्याशयेन तद्वाक्यविषयशंकां पृथगनुवदति यदा हीति । तन्नानात्वानुसंधानस्य—बहु स्यामिति ब्रह्मैव नानाभूतमित्यनुन्धानस्य । गीतञ्च, 'ज्ञानयज्ञेन चाप्यन्ये—एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्' इति । 'इति शान्त

यते । अतो यथावस्थितदेवतिर्यङ्मनुष्यस्थावरादिभेदभिन्नं जगत् ब्रह्मात्मकमित्यनुसंधानस्य शान्तिहेतुतया अभयप्राप्तिहेतुत्वेन न भयहेतुत्वप्रसङ्गः ॥ एवं तर्हि, "अथ तस्य भयं भवति" इति किमुच्यते ॥ इदमुच्यते, "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति" इत्यभयप्राप्तिहेतुत्वेन ब्रह्मणि या प्रतिष्ठाऽभिहिता, तस्याः विच्छेदे भयं भवतीति । यथोक्तं महर्षिभिः—"यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते । सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥" ( गा. पु. 2. 22. 22. ) इत्यादि । ब्रह्मणि प्रतिष्ठाया अन्तरम्=अवकाशः—विच्छेद एव ।

यदुक्तम् (24) 'न स्थानतोऽपि' इति सर्वविशेषरहितं ब्रह्मेति च वक्ष्यतीति—तन्न । सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यति । 'मायामात्रं तु' इति च स्वाप्नानामप्यर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्येण मायामात्रत्वमुच्यत इति जागरितावस्थानुभूतानामिव पारमार्थिकत्वमेव वक्ष्यति ।

स्मृतिपुराणघट्टः

स्मृतिपुराणयोरपि निर्विशेषज्ञानमात्रमेव परमार्थः, अन्यदपारमार्थिकमिति प्रतीयत इति (24; 25) यदभिहितम्—तदसत्—

( गी. 10. 3. ) "यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । ", ( गी. 9.4-5. ) "मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ न च मत्स्थानि भूतानि पश्य मे

---

उपासीते'त्यस्य शान्तिकाम एवमुपासीतेति नार्थः ; तथाऽन्यैरप्यवर्णनात् । **शांकरोपनिषद्भाष्ये**, 'यस्मात् सर्वमिदं ब्रह्म, तद्व्यतिरेकेण न किञ्चित्, अतः शान्तः रागद्वेषादिदोषरहितः यत्तत् सर्वं ब्रह्म, तद् वक्ष्यमाणैर्गुणैरुपासीते'त्यर्थो वर्णितः । एवञ्च **इति**—इत्यनुसंधानेन शान्तः=शान्तिं प्राप्तः सन् उपासीतेत्यर्थं तथैव स्वीकृत्य अनुसंधानमिदं न सर्वाभावविषयकम्, किंतु नानात्मना ब्रह्मस्थितिविषयकमिति अत्र भाष्यते । स्वाभिमतं योजनान्तरम्, शान्तो भूत्वा तज्जलानितिसर्वभूतं ब्रह्मोपासीतेति अन्यत्र दर्शयिष्यते । **अदृश्ये**—दृश्याचेतनविलक्षणे । **आत्म्यं**—शरीरम् ; **अनात्म्ये** सात्म्यबद्धविलक्षणे । **अनिरुक्ते**—पूर्वकाले देवादिशब्दनिरुक्तमुक्तविलक्षणे । **अनिलयने** परमात्मरूपाधारविशिष्टनित्यविलक्षणे । **अभयम्** अभयार्थम् । **प्रतिष्ठां** निष्ठां ध्यानम् ।

**इति**—इत्यनेन । वक्ष्यतीत्यत्रान्वयः । चकारः सविशेषत्वस्येव निर्विशेषत्वस्यापि सूत्रणात् तदेव सत्यमिति स्वाशयज्ञप्तये । **मायामात्रत्वम्** अत्याश्चर्यैकरूपत्वम् । **उच्यते** इति । श्रुत्येतिशेषः । एवं श्रुतितन्मीमांसावाक्यानां तदुदाहृतानामद्वैतपरत्वाभावः प्रतिपादितः ।

अथ तदुदाहृतस्मृतिपुराणवचनेषु तं प्रतिपादयितुमुपोद्घातरूपं किञ्चिदाह **स्मृती**ति । स्मृतिशब्दस्य पूर्वं प्रयुक्तत्वात्, सूचीकटाहन्यायात्, साक्षाद् भगवदुक्तत्वाच्च गीतामादौ दर्शयति **य** इत्यादिना । तदुदाहृतगीतावचनवास्तवार्थञ्च तदुदाहरणक्रमेण पुराणार्थमुक्त्वैव वक्ष्यति **लोके**ति । लोक-

योगमैश्वरम् । भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः ॥", (गी. 7. 6, 7.) "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥", (गी. 10. 42.) "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥", (गी. 15. 17, 18.) "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।",

(वि. 6. 5. 83—87.) "स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने! व्यतीतः। अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद् भुवनान्तराले ॥ समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतव(स)र्गः । इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥ तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥ स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः । सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥ सं[स]ज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् । संदृश्यते वाऽप्यधिगम्यते वा तद् ज्ञानमज्ञानमतोऽन्यदुक्तम् ।",

(वि. 6. 5. 72–75.) "शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते । मैत्रेय भगव-

---

महेश्वरत्वेन वेदने असंमूढत्ववचनात् सर्वसत्यत्वमेव । 'न च मत्स्थानि भूतानि' इत्यनेन भूतानां मिथ्यात्वं न सुवचम् ; तथावचनव्यक्त्यभावात्। सन्त्यपि भूतानि न मत्स्थानीत्यर्थस्तु सम्यक्छ्रुतिविरुद्धः। अतो नाहं सर्वं शिरसि निक्षिप्य प्रयस्य धारयामि, किंतु लोकविलक्षणतयाऽहमाधारभूतः संकल्पमात्रेण धारयामीत्युच्यते । अत एव, पश्य मे योगमैश्वरमितीदमप्यन्वेति । ममात्मा मम संकल्प इति पूर्वानुसारेणार्थः। भावनः सत्ताहेतुः। परतरं नान्यदिति। अन्यत् सर्वं मदवरतयाऽस्तीति ज्ञाप्यते । लोकत्रयम्; लोक्यन्ते प्रमाणैरिति लोकाः अचेतनाः बद्धाः मुक्ताश्च तत्त्वत्रयम्। लोके स्मृतौ ।

सर्वभूतप्रकृतिं सर्वमूलं [प्रकृतिम्], गुणादिदोषान् सत्त्वरजस्तमोमूलान् दोषान् व्यतीतः ; प्रकृत्याद्यवश्यः । तत्र हेतुः अतीतसर्वावरणः अपहतपाप्मत्वादिमान् । आस्तृतमिति । यत् भुवनान्तरालगम्, तत् सर्वं तेन व्याप्तमित्यर्थः । उरुदेहः मत्स्यत्रिविक्रमाद्यवतारः । क्लेशादयः क्लेशकर्मविपाकाशयाः । व्यष्टिः विशेषरूपाप्तिः-ब्रह्माण्डादिसृष्टिः। समष्टिः ततः पूर्वसृष्टिः । अव्यक्तं प्रकृतिः । प्रकटं व्यक्तं महदादि । स्वरूपं शरीरम् । सर्ववेत्ता अवाप्तसमस्तः। एवं तत्त्वमुक्तम ; अथोपाय उच्यते संज्ञायत इति । संज्ञायते श्रवणादिना ज्ञायते। तत् ब्रह्म। तद्विशेषणम् अस्तदोषमित्यादि । येनेत्यस्य येन ज्ञानेनेत्यर्थः । एतत्प्रतिसंबन्धी तच्छब्दः तज्ज्ञानमिति । स ज्ञायते इति पाठे तु, स सर्वेश्वरः येन ज्ञायते तत् ज्ञानमस्तदोषत्वादिविशिष्टमित्यर्थः ; तज्ज्ञानमिति च पृथग्वाक्यम्। अतोऽन्यत् ब्रह्मज्ञानव्यतिरिक्तम्। महाविभूत्याख्ये लीलाभोगविभूतिद्वयनियन्तृतया महाविभूतीत्याख्यायुक्ते । परे ब्रह्मणि । अनेन सम्यक् शब्दवाच्यं गुणविभूतिविग्रहादि-

च्छब्दः सर्वकारणकारणे ॥ संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः । नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥ ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि । स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥", (वि. 6. 5. 79.) "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥," (वि. 6. 5. 76, 77.) 'एवमेष महाशब्दो मैत्रेय ! भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥ तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः ॥ ",

(वि. 6. 7. 70, 71, 72.) "समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तत् विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ समस्तशक्ति रूपाणि तत् करोति जनेश्वर । देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥ जगतामुपकाराय न सा कर्मनिमित्तजा । चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका । ",

(वि. 1. 22. 53.) "एवंप्रकारममलं नित्यं व्यापकमक्षयम् । समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥" (वि. 1. 2. 10—14.) "परः पराणां परमः परमात्माऽऽत्मसंस्थितः । रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥ अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।

---

विशिष्टब्रह्मैव परम् ; न निर्गुणमिति ज्ञायते । भगवच्छब्दघटकाक्षराणामर्थान् आह **संभर्तेति** । **संभर्ता** उपकरणसंमेलकः । **गमयिता** संहर्ता । **इतीरणा** । ईरणा—आख्यानम् । तथाचैश्वर्यादिषट्कवान् इति मतुप्प्रत्ययः । एवं भगशब्दे अक्षरार्थः समुदायार्थश्चोक्तः । अथ वकारार्थः । शिष्टम् अन् इति । इदं विपर्यस्तं नकारः । अस्य हेयरहित इत्यर्थः । तद् दर्शयिष्यति **विना हेयै**रिति । मध्ये **ज्ञाने**त्यादिना भगवच्छब्दरूढिरुच्यते । हेयराहित्यस्यापि रूढ्यर्थनिवेशाय मध्ये एतदुक्तिः । पूर्वं भगशब्दरूढिरुक्ता ; इदानीं भगवच्छब्दस्य । **शब्दवाच्यानि**-प्रवृत्तिनिमित्ततया वाच्यानि । **परिभाषा** रूढिः । तदेवं भगवच्छब्देन अक्षरशो योगेन रूढ्या च विष्णुरुच्यते ।

अयमत्र संग्रहश्लोकः—संभृत्या भर्तृभावात् भ इति गमयितृस्रष्टृनेतृत्वतो **गः**, वासात् वासस्थलत्वात् व इति च **भगवान् अन्** हरिर्हेयहानात् । वीर्यैश्वर्ये विरक्तिर्मतिरपि च यशः श्रीर्भगैर्युक्त एभिःषाड्गुण्याढ्येऽत्र शुद्धे भवति तु भगवन्नाम ; गौणं परत्र ॥

भगवद्वासुदेवेति पदाभ्यां पररूपविशिष्टस्य विवक्षितत्वाभिप्रायेणाह **समस्ताः** इति । **शक्तयः** मुक्तबद्धतत्कर्मरूपाः । 'भूषणास्त्रस्वरूपस्थं यथेदमखिलं जगत्' (वि. 1. 22. 66) इतीदमिहानुसंधेयम् । **विश्वरूपवैरूप्यम्**—अन्यसर्वविलक्षणम् । **देवे**ति । देवादिरूपत्वाभावेपि तदाख्यातचेष्टोभयवन्तीत्यर्थः । **परमं पदम्**—पद्यमानं प्राप्यं परमात्मस्वरूपम् । **आत्मसंस्थितः** स्वनिष्ठः ; अनाधारः । **रूपे**ति । परमात्मस्वरूपं संस्थान-नीलादिवर्ण-गुणान्तरादिवाचकपदरूपसाक्षाद्विशेषणरहितमित्यर्थः । **अपक्षये**ति । षड् भावविकाराः । तत्र पञ्च न सन्ति परमात्मनि ।

वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ॥ सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ तद् ब्रह्म परमं नित्यमजमक्षर(य)-मव्ययम् । एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥ तदेव सर्वमेवैतत् व्यक्ताव्यक्त-स्वरूपवत् । तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥",

( वि. 6. 4. 39, 40. ) "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुष-श्चाप्युभावेतौ लीयेते परमात्मनि । परमात्मा च सर्वेषामाधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥",

( वि. 1. 22. 55–57. ) "द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च । क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ॥ अक्षरं तत् परं ब्रह्म क्षरं सर्वमिदं जगत् । एकदेशस्थितस्याग्नेर्ज्यो-त्स्ना विस्तारिणी यथा ॥ परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥ ",

( वि. 6. 7. 61—63. ) "विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा । अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥ यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा । संसारतापान् अखिलान् अवाप्नोत्यतिसंततान् ॥ तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तते (लक्ष्यते) ॥", (वि पु. 2.7.29-31.) " प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया । विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ॥ तयोः सैव पृथग्भावकारणं संश्रयस्य च । ....यथा सक्तं जले वातो बिभर्ति कणिकाशतम् । शक्तिः साऽपि तथा विष्णोः प्रधानपुरुषात्मनः ॥", (वि. पु. 1. 22. 6.) "तदेतदक्षयं (रं) नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभाव-जन्मनाशविकल्पवत् ॥ "

इत्यादिना परं ब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलं प्रतिपाद्य, कृत्स्नस्य चिदचिद्वस्तुनः

---

अत एव सत्तापि केवला अविकारभूता । एवं स्वरूपगुणविग्रहा उक्ताः । प्रकृतिपुरुषकालशरीर-कत्वमाह **तदेवेति** । **लीयेते** एकीभवतः । अमूर्तमक्षरं ब्रह्म गुणतो बृहत् मुक्तस्वरूपम् । शक्ति-त्रयाश्रयतया भाष्ये शुभाश्रयो वासुदेवविग्रहोऽत्राभिप्रेतो वक्ष्यते । तद्विग्रहाभिप्रायेण **एकदेशस्थि-तस्येति** पदम् । पूर्वोक्ततच्छक्तिविस्तार एवायं विभूतिद्वयभूमेति । शक्तिरिव कार्योपयोग्यपृथक्सिद्ध-विशेषणमिति अत्र सर्वत्र शक्तिव्यपदेशः । शक्तिरित्युक्तं विवरीतुमाह **विष्णुशक्तिरिति** । मुक्त-बद्धरूपपरापरभेदेन विष्णुशक्तिर्द्विधेत्यर्थः । तृतीया शक्तिः कर्म । **विष्णुशक्त्या** विष्णोः संकल्प-शक्त्या । शोधने कर्माख्यशक्तिरेवेयम् । **संश्रयधर्मिणौ** मिथः संबन्धभाजौ । **पृथग्भावः** विभागः संपृक्तयोः प्रधानपुरुषयोः, मोक्षः । **संश्रयः** संपर्कमूलः संसारः । **आविर्भावेति** । तैलकूर्मपादादौ तिरोभावाविर्भावौ ; महदादौ जन्मनाशौ ; एवं भेदवत् ।

करिष्यमाणखण्डनोपयोगितया उदाहृत सर्ववचननिष्कृष्टार्थमाह **इत्यादिनेति** ।

सर्वावस्थावस्थितस्य पारमार्थिकस्यैव, परस्य ब्रह्मणश्शरीरतया रूपत्वं शरीररूपतन्वंश-शक्तिविभूत्यादिशब्दैः तत्तच्छब्दसामानाधिकरण्येन चाभिधाय, तद्विभूतिभूतस्य चिद्वस्तुनः स्वरूपेणावस्थितिमचिन्मिश्रतया क्षेत्रज्ञरूपेण स्थितिं चोक्त्वा, क्षेत्रज्ञावस्थायां पुण्यपापात्मककर्म[स्व]रूपाविद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपत्वाननुसन्धानम् चिद्रूपार्थाकारतयाऽनुसन्धानं च प्रतिपादितमिति—परं ब्रह्म सविशेषम्; तद्विभूतिभूतं जगदपि पारमार्थिकमेवेति ज्ञायते ॥

( 24. ) "प्रत्यस्तमितभेदम्" इत्यत्र देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्याप्यात्मनः स्वरूपं तद्गतभेदरहितत्वेन तद्भेदवाचिदेवादिशब्दागोचरं ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुङ्मनसो न गोचर इत्युच्यत इति, अनेन न प्रपञ्चापलापः ॥

कथमिदमवगम्यत इति चेत्—तदुच्यते—

अस्मिन् प्रकरणे संसारैकभेषजतया योगमभिधाय, योगावयवान् प्रत्याहारपर्यन्तांश्चोक्त्वा, धारणासिद्ध्यर्थं शुभाश्रयं वक्तुं परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयं रूपद्वयं मूर्तामूर्तविभागेन प्रतिपाद्य, तृतीयशक्तिरूपकर्माख्याविद्यावेष्टितम् अचिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावनात्रयान्वयादशुभमित्युक्त्वा, द्वितीयस्य कर्माख्याविद्याविरहिणोऽचिद्वियुक्तस्य ज्ञानैकाकारस्यामूर्ताख्यविभागस्य निष्पन्नयोगिध्येयतया, योगयुङ्मनसोऽनालम्बनतया, स्वतश्शुद्धिविरहाच्च शुभाश्रयत्वं प्रतिषिध्य, परशक्तिरूपमिदममूर्तम् अपरशक्तिरूपं क्षेत्रज्ञाख्यमूर्तं च परशक्तिरूपस्याऽऽत्मनः क्षेत्रज्ञतापत्तिहेतुभूत-तृतीयशक्त्याख्यकर्मरूपाविद्या चेत्येतच्छक्तित्रयाश्रयो भगवदसाधारणम्, "आदित्यवर्णम्" इत्यादिवेदान्तसिद्धं मूर्तरूपं शुभाश्रय इत्युक्तम्। अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयतानर्हतां वक्तुम् 'प्रत्यस्तमितभेदं यत्' इत्युच्यते।

---

एवं विष्णुपुराणप्रतिपाद्यमुदितम्। अथ परोक्तवचसां स्वसंमतमर्थमभिधातुमारभते प्रत्यस्तमितेति। श्लोकेऽत्र मुक्तस्वरूपमुच्यते योगगोचरत्वप्रतिषेधायेत्यर्थः। **योगयुक्** योगारम्भे स्थितः। **कथमिदमवगम्यते** इति; ब्रह्म शब्दे सत्यपि श्लोकोऽयं न परमात्मविषयक इति, मुक्तस्य योगागोचरत्वविषयक इति च कथं ज्ञायत इत्यर्थः। **भावनात्रयान्वयात्**—ब्रह्मभावना, कर्मभावना, उभयभावनेति भावनात्रयम्; तदन्यतमान्वयात्। "सनन्दनादयो ब्रह्मन्! ब्रह्मभावनया युताः। कर्मभावनया चान्ये देवाद्याः स्थावरावराः। हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा" इति ह्युक्तम्। **निष्पन्नयोगिध्येयतया**; योगी द्विविधः प्रक्रमी निष्पन्नश्च। तत्र द्वितीयेन योगिनैव ध्यातुं शक्यतयेत्यर्थः। **स्वतः शुद्धिविरहा**दिति। 'अशुद्धास्ते समस्तास्तु' इत्युक्तत्वादिति भावः।

एवं प्रकरणं प्रदर्श्य प्रत्यस्तमितेतिश्लोकस्य प्रागुक्तार्थं संगमयति अत्रेति। ननु प्रत्यस्त-

तथा हि—( वि. पु. 6. 7. 55. ) "न तत् योगयुजा शक्यं नृप चिन्तयितुं यतः ।" (69) "द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते (परं पदम्)।" (70) "समस्ताः शक्तयश्चैताः नृप यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥" इति च वदति।

तथा चतुर्मुखसनकसनन्दनादीनां जगदन्तर्वर्तिनामविद्यावेष्टितत्वेन शुभाश्रयतानर्हतामुक्त्वा, बद्धानामेव पश्चात् योगेनोद्भूतबोधानां स्वस्वरूपापन्नानां च स्वतश्शुद्धिविरहात् भगवता शौनकेन शुभाश्रयता निषिद्धा, "आब्रह्मस्तम्बपर्यन्ताः जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥ यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः । अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः ॥ पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः । नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ।" ( भविष्य. वि. ध. 104. 23—26 ) । "तस्मात् तदमलं ब्रह्म निसर्गादेव बोधवत् ॥" इत्यादिना परस्य ब्रह्मणो विष्णोस्स्वरूपं स्वासाधारणमेव शुभाश्रय इत्युक्तम् ।

अतोऽत्र न भेदापलापः प्रतीयते ।

---

मितेतिश्लोकस्य परमात्मस्वरूपपरत्वमेवास्तु । तावता न प्रपञ्चापलापप्रसक्तिः ; प्रागुक्तगुणविभूतीनां बाधाभावात् परमात्मस्वरूपं जीववत् देहभेदेन भिन्नं न भवतीति प्रत्यस्तमितभेदमित्युच्यताम् । सत्तामात्रमिति अपक्षयेतिप्रागुक्तश्लोकरीत्या भवत्येव । 'यतो वाचो निवर्तन्त' इतिवत् स्यात् अगोचरं वचसामिति । तत् ब्रह्मसंज्ञितमिति सुष्ठुसंगतमित्यत्रोपपादयति तथाहीति । मूर्तरूपं यथा क्षेत्रज्ञशरीरं परमात्मविग्रह इति द्वेधा, तथा अमूर्तमपि मुक्तस्वरूपं परमात्मस्वरूपञ्चेति द्विविधमस्त्येव । तत्र मुक्तस्वरूपग्रहणे पूर्वं पश्चाच्च शक्तिशब्दव्यपदेशो घटते ; परमात्मन एव स्वं प्रति शक्तित्वायोगात् । सर्वशक्त्याश्रयतया तद्दिव्यमंगलविग्रहकथनमपि तदैव घटते । पूर्वं देवादिभेदप्रस्तावात् प्रत्यस्तमितभेदमिति तद्भेदनिषेधस्तच्छुद्धस्वरूपे समञ्जसः । अमूर्तमिति चोपरि पूर्वममूर्ततयोक्तं मुक्तं परामृशति । अवश्यञ्च जीवात्मध्यानमारभमाणेन भगवद्दिव्यमङ्गलविग्रहध्यानं कार्यमिति गीतम् । अत औचित्यात् मुक्तात्मस्वरूपविषयमित्युच्यते। एवञ्च ब्रह्मपदम्, "ब्रह्मभूतः प्रसन्नात्मा" इत्यादाविव जीवविषये सुस्थमेवेति भावः ।

उक्तमर्थं शौनकग्रन्थसंवादेन द्रढयति तथेत्यादिना । बद्धानामेव-बद्धत्वात् शुभाश्रयतानर्हतया प्रागुक्तानामेव । पश्चादिति श्लोकस्थं पदम् । उद्भूतबोधानामिति व्याख्येयविवरणं स्वस्वरूपापन्नानाञ्चेति । चकारोऽप्यर्थः। स्वस्वरूपापन्नत्वेऽपीत्यर्थः । धर्मभूतज्ञानस्य स्वभावत्वात् नैसर्गिको नेति कथमित्यत्र विव्रियते तेषामप्यन्यतो यतः इति । अन्यतः परमात्मतः । अर्थात् नित्यव्यावृत्तिरपि सिद्धा । यत इत्येतदनन्तरम् इतिपदमध्याहर्तव्यम् ; निषिद्धेति प्रागुक्तस्यात्र समाप्तेः । अथ विष्णुपुराण इव तत्रापि शुभाश्रयः अयमिति दर्शित इति वक्तुं तस्मादिति वाक्यान्तरम् ।

(24) 'ज्ञानस्वरूपम्' इत्यत्रापि ज्ञानव्यतिरिक्तस्यार्थजातस्य कृत्स्नस्य न मिथ्यात्वं प्रतिपाद्यते; ज्ञानस्वरूपस्याऽऽत्मनो देवमनुष्याद्यर्थाकारेणावभासो भ्रान्तिरित्येतावन्मात्रवचनात्। न हि शुक्तिकाया रजततयाऽवभासो भ्रान्तिरित्युक्ते, जगति कृत्स्नं रजतजातं मिथ्या भवति॥

जगद्ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेः, ब्रह्मणो ज्ञानस्वरूपस्यार्थाकारता भ्रान्तिरित्युक्ते सति अर्थजातस्य कृत्स्नस्य मिथ्यात्वमुक्तं स्यादिति चेत्—तदसत्; अस्मिन् शास्त्रे परस्य ब्रह्मणो विष्णोर्निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याण-

---

पूर्वपक्ष्युक्तद्वितीयश्लोकस्यार्थं प्रतिपादयति ज्ञानेति। स्वाभिमतार्थ उपरि वक्ष्यते। तदभिमतार्थशोधनं प्रथमतः। तन्मतरीत्या ज्ञानस्वरूपे आत्मनि जडरूपतादर्शनं भ्रान्तिरिति वाक्यार्थः। तत्र ब्रह्मणि सर्वजगदाकारतादर्शनमित्यर्थ एव ग्राह्य इति कुतः; जीवात्मनि देवाद्यर्थाकारतादर्शनं भ्रान्तिरित्येवार्थसंभवात्। तेन देहात्मभ्रमानुवादमात्रमिह कृतं भवति। तावता देवाद्याकारमिथ्यात्वमपि न सिद्ध्येदित्याह नहीति। देवादिदेहाः सर्वेषां प्रत्यक्षाः आपणादिस्थरजतादिवत् सत्याः। तत्तत्पुरुषस्य स्वात्मनि स्वदेहतादात्म्यकल्पनासिद्धस्त्वनिर्वचनीयदेहोऽन्य एव त्वन्मते युक्तः। अन्यात्मनामप्रत्यक्षतया च न तत्रान्यदेहभ्रान्तिरिति भावः।

इदमत्र बोध्यम्—'अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः' इति देहादौ आत्मभ्रम एव दर्शितः। इह तु आत्मनि देवादिदेहभ्रम उच्यते। शुक्तिरजतस्थले शुक्तेरेव प्रत्यक्षत्वात् तत्रैव रजतभ्रान्तिः। इह पुनरुभयोरपि प्रत्यक्षत्वात् यथायथमुभयमपीत्याशयः। स्पष्टदृश्यमानेऽपि देहे आत्मतादात्म्यानर्हस्वरूपाकारविशेषाग्रहणादात्मभ्रमः; एवमात्मन्यपि। प्रत्यक्षस्येन्द्रियग्राह्यविशेष्यकत्वनियमात् आत्मनि देहभ्रमस्वीकारे कथमयं चाक्षुषभ्रमः स्यादिति चेत्—देहविशेष्यकेऽपि चाक्षुषे अचाक्षुषात्मतादात्म्यभ्रमः कथमिति तुल्यम्। अतिरिक्तत्वाग्रहे चाक्षुषाचाक्षुषत्वादिकमप्यगृहीतमेवेति मन्तव्यम्। तत्रानात्मनि आत्मबुद्धिं वदन् पराशरः, 'पारमार्थिकमधिष्ठानम्, अपारमार्थिकं भ्रान्तिविषयः' इति सत्यासत्यकल्पनां न स्वीकरोतीति ज्ञायते। तथा हि सति देहस्य सत्यत्वम् आत्मनश्चानिर्वचनीयत्वमेषितव्यम्। अतो नानिर्वचनीयख्यातिरित्यलम्।

शङ्कते जगदिति। अयं भावः—'सर्वं खल्विदं ब्रह्म' इत्यादितः यज्जगत्तादात्म्यं ब्रह्मणि भासते, तज्जगदाकारताया एव तत्र भ्रान्तिसिद्धत्वं वर्ण्यते चेत्—जगन्मिथ्यात्वसिद्धौ न कश्चित् क्लेशः; जगदन्तराभावात्। एवमेव ह्यत्र 'जगच्च सः' इत्यैक्यमुक्त्वाऽत्र श्लोके भ्रान्तिरित्युच्यते। जगत्पदं सर्ववाचि। शुक्तिरजतस्थले तु नैवापणस्थितरजततादात्म्येन पुरोवर्तिधर्मिग्रहणम्, नेदमापणस्थरजतमिति भेदग्रहात्। तथाच ज्ञानस्वरूपमिति प्रकृतश्लोकोऽपि अविशेषात् सर्वजगद्रूपार्थभ्रान्तेर्ब्रह्मणि प्रतिपादक एवास्तु इति। अस्मिन्निति। भ्रान्तिदर्शनमिदं किंनिष्ठम्; न तावत् जीवनिष्ठम्, तस्य भ्रान्तिरूपकल्पनाधीनतया प्रथमभ्रान्त्याश्रयस्य वक्तव्यत्वात्, न च शुद्ध-

गुणात्मकस्य महाविभूतेः प्रतिपन्नतया तस्य भ्रान्तिदर्शनासम्भवात् । सामानाधिकरण्येनैक्यप्रतिपादनं च बाधासहमविरुद्धं चेत्यनन्तरमेवोपपादयिष्यते । अतोऽयमपि श्लोको नार्थस्वरूपस्य बाधकः । तथाहि—

(तै. भृ.) "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्म" इति जगज्जन्मादिकारणं ब्रह्मेत्यवसिते सति—

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥"

(भा. आदि. 1. 275) इति शास्त्रेणार्थस्य इतिहासपुराणाभ्यामुपबृंहणं कार्यमिति विज्ञायते । उपबृंहणं नाम—विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थव्यक्तीकरणम् । सकलशाखागतस्य वाक्यार्थस्य अल्पभागश्रवणाद्दुरवगमत्वेन तेन विना निश्चयायोगादुपबृंहणं हि कार्यमेव । तत्र—

---

चैतन्यनिष्ठम्, असंभवात् । न च विष्णुनिष्ठम्, तस्य तत्प्रत्यनीकत्वात् । तदभेदादेव च जीवचैतन्ययोरपि तदयोग इति भावः । जगच्च स इत्यस्यार्थश्च वक्ष्यते । इदमपि ' सर्वं खल्विदं ब्रह्मे'त्यादिकमिवैक्यपरमित्यद्वैती न वक्तुमर्हति, परमार्थापरमार्थयोस्तदयोगात् । अतो बाधार्थसामानाधिकरण्यमित्येव वाच्यम् । तदयुक्तम्, सुतरामैक्यप्रतीतिभङ्गात् समञ्जसार्थान्तरसत्त्वाच्चेत्याह **सामाने**ति । **अर्थस्वरूपस्य** जगतः ।

ननु **ज्ञानस्वरूप**मित्यस्मिन् श्लोके **तमेवे**ति विष्णोरुक्तत्वात् न जीवे देवादिदेहभ्रमपरत्वमस्य युक्तम्; किंतु ब्रह्मणि जगद्भ्रमपरत्वमेव । तस्य च जगन्मिथ्यात्वमन्तरा न निर्वाहः, जगच्च स इति वाक्यस्यापि पूर्वं भावात् इत्याशङ्कायाम्, जगद्बाधवर्णनं प्रष्टुः उपदेष्टुः उपबृंहणीयस्य उपबृंहणस्य पूर्वसंदर्भस्य च विरुद्धमिति प्रदर्शनपूर्वकं श्लोकविवक्षितार्थं वक्तुमारभते **तथाही**ति । **इत्यवसिते सति**—इति जगत्कारणत्वेन ब्रह्मणि सांगवेदाध्ययनविचारमूलं निश्चिते सति । अस्य **विज्ञायत** इत्यनेन नान्वयः; इतिहासेतिश्लोकार्थज्ञानस्य एतदवसायसापेक्षत्वाभावात् । अतः **कार्य**मित्यत्रान्वयः । अवसिते सति अर्थस्येतिहासपुराणाभ्यामुपबृंहणं कार्यमिति इतिहासपुराणाभ्यामिति शास्त्रेण विज्ञायत इति यथार्हं योजनीयम् । योजनान्तरमपि—**अवसिते सति पुलस्त्यवसिष्ठ.........मैत्रेयः परिपप्रच्छे**ति । अवसायानन्तरपरिप्रश्नकरणहेतुश्च उपबृंहणकर्तव्यताज्ञानम् । तद्धेतोर्मध्येऽपेक्षितत्वात् मध्ये अवान्तरवाक्यानि बहूनि घटयन् **तत्रे**ति तदुपसंहरन् महावाक्यशेषमाहेति वक्तव्यम् । एवं वाक्यशैल्याः बहुत्र दर्शनात् । यथा, प्राक्, 'यथैकमेव तेजोद्रव्य'मित्यारब्धवाक्यस्य'एवमात्मा चिद्रूप एवे'ति वाक्येन समापनीयस्य मध्ये (70) यद्यपीत्यादीनि बहूनि वाक्यानि । **अवसिते सति** इत्यस्य मैत्रेयेणावसिते सतीत्यर्थे टीकास्वारस्यादप्येवं योजनैवावसीयते । **समुपबृंहयेत्**—विस्पष्टावगतार्थकं कुर्यात् । **अल्पश्रुतात्**—अल्पं श्रुतं श्रवणं यस्य तस्मात्; किञ्चिच्छाखायामधीतिनः पुरुषात् । अत्र इतिशब्दाध्याहारेण, मामयमल्पश्रुतः **प्रतरिष्यति** वञ्चयिष्यतीति वेदो बिभेतीति योजना । **वेदशब्दो**

पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवतो भगवतः पराशरात् स्वावगतवेदार्थोपबृंहणमिच्छन् मैत्रेयः परिपप्रच्छ—(वि. पु. 1. 1. 4, 5.) "सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत्। बभूव भूयश्च यथा महाभाग भविष्यति ॥ यन्मयं च जगद् ब्रह्मन् यतश्चैतच्चराचरम्। लीनमासीत् यथा यत्र लयमेष्यति यत्र च ॥" इत्यादिना।

अत्र ब्रह्मस्वरूपविशेष-तद्विभूतिभेदप्रकार-तदाराधनस्वरूप-फलविशेषाश्च पृष्टाः। ब्रह्मस्वरूपविशेषप्रश्नेषु, यतश्चैतच्चराचरमिति निमित्तोपादानयोः पृष्टत्वात् यन्मयमित्यनेन सृष्टिस्थितिलयकर्मभूतं जगत् किमात्मकमिति पृष्टम्। तस्य चोत्तरम्, 'जगच्च सः' इति। इदं च तादात्म्यमन्तर्यामिरूपेणाऽऽत्मतया व्याप्तिकृतम्; न तु व्याप्यव्यापकयोर्वस्त्वैक्यकृतम्; यन्मयमिति प्रश्नस्योत्तरत्वात्, जगच्च स इति सामानाधिकरण्यस्य। यन्मयमिति मयट् अत्र न विकारार्थः; पृथक्प्रश्नवैयर्थ्यात्। नापि प्राणमयादिवत् स्वार्थिकः, जगच्च स इत्युत्तरानुपपत्तेः। तदा हि, विष्णुरेवेत्युत्तरमभविष्यत्। अतः प्राचुर्यार्थ एव।

---

वेदान्तपरः। **पुलस्त्येति** विश्वामित्रप्रयुक्तरक्षोभक्षितः पितेति श्रुत्वा सर्वराक्षसविनाशिसत्रकारिणि पराशरे वसिष्ठोपदेशादुपरते, 'देवतापारमार्थ्यञ्च यथावद् वेत्स्यते भवान्' इत्यनुजग्राह पुलस्त्यः; 'पुलस्त्येन यदुक्तं ते तत् तथैव भविष्यति' इति च पितामहो वसिष्ठः। **पारमार्थ्यं** पूर्णयाथात्म्यम्। **ज्ञानवत इति** अतिशायने मतुप्। **अर्थोपबृंहणम्** अर्थवैशद्यकरणम्; त्वत्तः श्रोतुमिच्छामि। किम्; तदाह **यथेत्यादिना**। प्रश्नवाक्यानां 'यतो वा' इति श्रुतिसरूपत्वात् तदैकार्थ्यं जगच्च स इत्यस्य वक्तव्यमित्येतदर्थमेवं विस्तरः।

पुरोवादात्मककारणवाक्येषु लयपूर्वकसृष्टिकथनात्, यतो वा इत्यनुवादिवाक्येऽपि संविशन्तीत्येवं लट्प्रयोगाच्च जन्मादिकमनेकं प्रवाहरूपमिति स्वज्ञातमिति ज्ञापयितुमप्यत्र **बभूव भविष्यतीत्युक्तिः**। जन्मलयमध्यगतं **यन्मयमिति** स्थितिविषयकम्। **इत्यादिनेत्यादिपदविवक्षितश्लोकार्थं** संगृह्णाति **अत्रेति**। इदञ्च निर्गुणतत्त्वविषयकाभिप्रायाभावज्ञापनाय। **कर्मभूतमिति**; **सृष्टिरुत्पत्तिः**; जन्मस्थितिलयैः फलैः स्वगतैः कर्तृव्यापारकर्मभूतमित्यर्थः। **यत** इति निमित्तोपादानक्रोडीकारात् जननकर्ता पृष्ट एव। स्थितौ संयमे च कर्तृप्रश्नोऽप्यत्र यथेत्यत्र हृद्गत इति उत्तरतो ज्ञायते। उत्तरवाक्ये **तत्रैव च स्थितमिति** प्रलयस्थितिरौचित्यादभिप्रेता। परिशेषात् यन्मयमित्येतदुत्तरं जगच्च स इति ॥ अस्तु; तत एव जगद्ब्रह्मैक्यं ब्रूम इति शङ्कायाम्, **किमात्मकमिति** स्वप्रयुक्तात्मशब्दस्य स्वरूपैक्यशरीरात्मभावसाधारणत्वात् विवृणोति **इदञ्च तादात्म्यमिति**। मयडर्थशोधनेनोपपादयति **यन्मयमिति**। **तदेति**। जगत् किमस्तीति प्रश्नार्थोऽभविष्यदित्यादिः। **विष्णुरेवेति**। स्वार्थिकत्वपक्षे सत्यं मिथ्या वेत्येव प्रश्नपर्यवसानस्येष्टत्वात्, रजतमिति गृह्यमाणं रजतमेव न वेति प्रश्ने शुक्तिरेवेत्युत्तरवत्, जगत् किमस्तीति प्रश्ने विष्णुरेवेत्युत्तरमेव युक्तम्। **एवकारेण** च जगन्निषेधः। स्पष्टविवक्षायां तु, **विष्णुरेव**, न जगदिति वक्तव्यम्; प्रत्युत जगच्चेति **चकारेण** पूर्वोक्ताकारैः सह जगद्रूपत्वसमुच्चयात्

(अष्टा. 5. 4. 21.) "तत्प्रकृतवचने मयट्" इति मयट्। कृत्स्नं च जगत् तच्छरीरतया तत्प्रचुरमेव। तस्मात् यन्मयमित्यस्य प्रतिवचनं जगच्च स इति सामानाधिकरण्यं जगद्ब्रह्मणोः शरीरात्मभावनिबन्धनमिति निश्चीयते। अन्यथा—निर्विशेषवस्तुप्रतिपादनपरे शास्त्रेऽभ्युपगम्यमाने, सर्वाण्येतानि प्रश्नप्रतिवचनानि न संगच्छन्ते; तद्विवरणरूपं कृत्स्नं च शास्त्रं न संगच्छते। तथा हि सति, प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवंरूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञानमात्रमित्येवंरूपमेकमेवोत्तरं स्यात्। जगद्ब्रह्मणोरेकद्रव्यत्वपरे च सामानाधिकरण्ये, सत्यसङ्कल्पत्वादिकल्याणगुणैकतानता निखिलहेयप्रत्यनीकता च बाध्येत; सर्वाशुभास्पदं च ब्रह्म भवेत्। आत्मशरीरभाव एवेदं सामानाधिकरण्यं मुख्यवृत्तमिति स्थाप्यते॥ अतः—

(वि. 1. 1. 31.) "विष्णोः सकाशादुद्भूतं जगत् तत्रैव च स्थितम्। स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः॥" इति संग्रहेणोक्तमर्थम्, "परः पराणाम्" इत्यारभ्य विस्तरेण वक्तुं परब्रह्मभूतं भगवन्तं विष्णुं स्वेनैव रूपेणावस्थितम्, "अविकाराय" इति श्लोकेन प्रथमं प्रणम्य, तमेव हिरण्यगर्भस्वावतारशङ्कररूपत्रिमूर्ति-प्रधान-काल-क्षेत्रज्ञसमष्टि-व्यष्टिरूपेणावस्थितं च नमस्करोति। तत्र, 'ज्ञानस्वरूपम्' इत्ययं श्लोकः क्षेत्रज्ञव्यष्ट्यात्मनाऽवस्थितस्य परमात्मनः स्वभावमाह। तस्मान्नात्र निर्विशेषवस्तुप्रतीतिः॥

यदि निर्विशेषज्ञानरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रम्, तर्हि—(वि. 1. 3. 1.) "निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः। कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते॥" इति चोद्यम्, (श्लो. 3. 1. 2, 3.) "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः। यतोऽतो ब्रह्मणस्तास्तु सर्गाद्याः भावशक्तयः॥ भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता।"

---

न तन्निषेध इति भावः। तत्प्रकृतवचने मयडिति। प्रकर्षेण कृतं प्रकृतम्। प्रचुरमिति यावत्। प्रकृत्यर्थस्य प्रचुरतया वचने, प्रकृत्यर्थेन प्रचुरमिति वचने वा मयट्। तदत्र यन्मयमित्यस्य यत्प्रचुरमित्यर्थः। एवं स्थितिप्रश्ने, केवलाधाराधेयभावकथने सर्वप्रकारेण तदधीनसत्ताकत्वं न लभ्येतेति शरीरात्मभावेनोत्तरमुक्तम् जगच्च स इति। जगदन्तर्यामी च स इत्यर्थः। तेन नित्याधारत्वशेषित्वनियन्तृत्वलाभः। सामानाधिकरण्यं समानविभक्तिः। अन्यथेति पदं शाङ्करभास्करपक्षद्वयग्राहकम्। अस्य प्राथमिकार्थो निर्विशेषेत्यादिः। द्वितीयार्थो जगद्ब्रह्मणोरित्यादिः। स्थाप्यते स्थापयिष्यते।

स्वेनैव रूपेणावस्थितम्-सदैकरूपरूपायेत्युक्ततया नित्यसिद्धस्वासाधारणदिव्यमङ्गलविग्रहविशिष्टतया स्थितं वासुदेवम्। तमेव वासुदेवमेव। त्रिमूर्तिविषयकः नम इति श्लोकः। प्रधानविषयकः एकेति। कालविषयकः सर्गेति। क्षेत्रज्ञसमष्टिविषयकः आधारेति। क्षेत्रज्ञव्यष्टिविषयकः ज्ञानस्वरूपमिति प्रकृतः। अस्यायमर्थः—परमार्थतः—प्रमात्मकज्ञानविषयतया अत्यन्तनिर्मलज्ञानरूपजीवशरीरकम् भ्रान्तिविषयतया तु देवाद्यर्थाकारविशिष्टजीवशरीरकं तं विष्णुमिति। उत्तरश्लोकेऽन्वयः।

इति परिहारश्च न घटते । तथा हि सति—'निर्गुणस्य ब्रह्मणः कथ सर्गादिकर्तृत्वम्', 'न ब्रह्मणः पारमार्थिकः सर्गः; अपि तु भ्रान्तिपरिकल्पितः' इति चोद्यपरिहारौ स्याताम् । उत्पत्त्यादि कार्यं सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येषु दृष्टमिति सत्त्वादिगुणरहितस्य परिपूर्णस्याकर्मवश्यस्य कर्मसम्बन्धानर्हस्य कथं सर्गादिकर्तृत्वमभ्युपगम्यत इति चोद्यम्; दृष्टसकलविसजातीयस्य ब्रह्मणो यथोदितस्वभावस्यैव, जलादिविसजातीयस्याग्न्यादेरौष्ण्यादिशक्तियोगवत्, सर्वशक्तियोगो न विरुध्यत इति परिहारः ।

(25)"परमार्थस्त्वमेवैकः" इत्याद्यपि न कृत्स्नस्यापारमार्थ्यं वदति; अपि तु कृत्स्नस्य तदात्मकतया तद्व्यतिरेकेणावस्थितस्यापारमार्थ्यम् । तदेवोपपादयति—(वि. 1. 4. 38.) "तवैष महिमा येन व्याप्तमेतच्चराचरम्" इति । येन त्वयेदं चराचरं व्याप्तम्, अतः त्वदात्मकमेवेदं सर्वमिति त्वदन्यः कोऽपि नास्ति । अतः सर्वात्मतया त्वमेवैकः परमार्थः । अत इदमुच्यते—तवैष महिमा, या सर्वव्याप्तिः—इति । अन्यथा तवैषा भ्रान्तिरिति वक्तव्यम् । जगतः पते, त्वमित्यादीनां पदानां लक्षणा च स्यात् । लीलया महीमुद्धरतो भगवतो महावराहस्य स्तुतिप्रकरणविरोधश्च ॥

यतः कृत्स्नं जगत् ज्ञानात्मना त्वयाऽऽत्मतया व्याप्तत्वेन तव मूर्तम्, तस्मात् त्वदात्मकत्वानुभवसाधनयोगविरहिणः एतत् केवलदेवमनुष्यादिरूपमिति भ्रान्तिज्ञानेन पश्यन्तीत्याह, "यदेतद्दृश्यते" (25) इति ॥

न केवलं वस्तुतस्त्वदात्मकं जगत् देवमनुष्याद्यात्मकमिति दर्शनमेव भ्रमः, ज्ञानाकाराणामात्मनां देवमनुष्याद्यर्थाकारत्वदर्शनमपि भ्रम इत्याह, "ज्ञानस्वरूपमखिलम्" (25) इति ॥ ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्मविदः सर्वस्य भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमनसश्च, ते देवमनुष्यादिप्रकृतिपरिणामविशेषशरीररूपमिदमखिलं जगत् शरीरातिरिक्तज्ञानस्वरूपात्मकं त्वच्छरीरं च पश्यन्तीत्याह, "ये तु ज्ञानविदः" (25)इति । अन्यथा श्लोकानां पौनरुक्त्यम्, पदानां लक्षणा, अर्थविरोधः, प्रकरणविरोधः, शास्त्रतात्पर्यविरोधश्च ॥

"तस्यात्मपरदेहेषु सतोऽप्येकमयम्" (25) इत्यत्र, सर्वेष्वात्मसु ज्ञानैकाकारतया

---

उत्पत्त्यादीत्यादिना स्वाभिमतचोद्यपरिहारवर्णनम् । सत्त्वादिगुणरहितस्येत्यादिपदैः क्रमेण निर्गुणस्येत्यादिपदानामर्थः । येन त्वयेति । येनेति परमात्मपरं वा; यस्मात् कारणादित्यर्थकं वा । पूर्वार्धे उत्तरार्धे वा तच्छब्दाध्याहारः । चराचरमेतत् व्याप्तमित्येष यस्मात् कारणात् तव महिमा, अतस्त्वं परमार्थ इत्यन्वय एव तात्पर्यं वा ।

त्वदात्मकं जगदित्येतदनन्तरं अधिकृत्येति शेषः । अन्यथाऽनन्वयात् । त्वच्छरीरमिति त्वद्रूपमित्यस्यार्थः । अनेन जीवशरीरमपि परमात्मशरीरमिति स्पष्टम् ।

समानेषु सत्सु देवमनुष्यादिप्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतमात्मसु देवाद्याकारेण द्वैतदर्शनमतथ्यमित्युच्यते । पिण्डगतम् आत्मगतमपि द्वैतं न प्रतिषिध्यते । देवमनुष्यादिविविधविचित्रपिण्डेषु वर्तमानं सर्वमात्मवस्तु सममित्यर्थः—यथोक्तं भगवता, (गी. 5. 1.) "शुनि चैव श्वपाके च पण्डिताः समदर्शिनः", ( गी. 5. 16. ) निर्दोषं हि समं ब्रह्म" इत्यादिषु–" तस्यात्मपरदेहेषु सतोऽपि " इति देहातिरिक्ते वस्तुनि स्वपरविभागस्योक्तत्वात् ।

" यद्यन्योऽस्ति परः कोऽपि" (25) इत्यत्रापि नात्मैक्यं प्रतीयते ; 'यदि मत्तः परः कोऽप्यन्यः' इत्येकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयोगायोगात् । तत्र परशब्दः स्वव्यतिरिक्तात्मवचनः । अन्यशब्दः तस्यापि ज्ञानैकाकारत्वादन्याकारत्वप्रतिषेधार्थः । एतदुक्तं भवति––यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानाकारादन्याकारोऽस्ति, तदा, अहमेवमाकारः, अयं चान्यादृशाकार इति शक्यते व्यपदेष्टुम् । न चैवमस्ति ; सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेवेति ।

" वेणुरन्ध्रविभेदेन " (25) इत्यत्रापि—आकारवैषम्यमात्मनां न स्वरूपकृतम् ; अपितु देवादिपिण्डप्रवेशकृतमित्युपदिश्यते ; नात्मैक्यम् । दृष्टान्ते चानेकरन्ध्रवर्तिनां वाय्वंशानां न स्वरूपैक्यम् ; अपित्वाकारसाम्यमेव । तेषां वायुत्वेनैकाकाराणां रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादिसंज्ञाभेदः ; एवमात्मनां देवादिसंज्ञाभेदः । [यथा] तैजसाऽऽप्यपार्थिवद्रव्यांशभूतानां पदार्थानां तत्तद्द्रव्यत्वेनैक्यमेव ; न स्वरूपैक्यम्––तथा वायवीयानामंशानामपि स्वरूपभेदोऽवर्जनीयः ।

" सोऽहं स च त्वम् " (25) इति सर्वात्मनां पूर्वोक्तं ज्ञानाकारत्वं(रं) तच्छब्देन परामृश्य तत्सामानाधिकरण्येन अहंत्वमित्यादीनामर्थानां ज्ञानमेवाऽऽकार इत्युपसंहरन्

---

देवाद्याकारेण द्वैतदर्शनम् पिण्डगतानां देवाद्याकाराणामात्मसु भ्रान्त्या कृतमात्मनानात्वज्ञानम् । आत्मगतमपि द्वैतम् पिण्डव्यक्तिवत् आत्मव्यक्तीनामप्यनेकत्वम् । एकमयं समानाकारप्रचुरम् । विज्ञानं स्वरूपं गुणो वा । 'तथासौ परमात्मन' इत्यस्य एकस्वरूपभेद इत्युत्तरश्लोको विवरणम् । परमात्मा जीवः । परं आत्मन इति छेदो वा । वायोरप्रत्यक्षत्वात् प्रत्यक्षतेजःप्रभृतितौल्येन सांशत्वं दर्शयति तैजसेति । ज्ञानाकारमिति । ननु, ' एकः समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत् ' इति पूर्वार्धेन सर्वस्याच्युतात्मकत्वस्योक्तत्वात स इति अच्युतपरामर्श एव युक्तः; अत एव 'स च सर्वमेतत्' इति पुल्लिङ्गमपि घटत इति चेत्—उच्यते । आदिभरतेन, ' पिण्डः पृथग् यतः ' इति देहातिरिक्तज्ञानैकाकारजीवात्मोपदेशस्यैव कृतत्वात् तत्रैव ऋभुनिदाघसंवादस्यापि साक्षितया गृहीतत्वात् ऋभुणा वासुदेवरूपत्वस्याप्यात्मसु उपदिष्टत्वेऽपि तस्य, ' तदच्युत ' इति पूर्वार्धेनैवोपसंहृतत्वसंभवात उपक्रान्तज्ञानैकाकारोपसंहारस्य कर्तव्यत्वाच्च भाष्योक्त एवार्थः साधीयान् । उक्तं वासुदेवरूपत्वमपि तच्छरीरत्वं वा ज्ञानैकाकारत्वादिना तत्साम्यं वेत्य-

देवाद्याकारभेदेनाऽऽत्मसु भेदमोहं परित्यजेत्याह । अन्यथा देहातिरिक्तो(क्तात्मो)पदेश्यस्वरूपे, अहं त्वं सर्वमेतदात्मस्वरूपमिति भेदनिर्देशो न घटते । अहंत्वमादिशब्दानामुपलक्ष्येण सर्वमेतदात्मस्वरूपमित्यनेन सामानाधिकरण्यादुपलक्षणत्वमपि न संगच्छते । सोऽपि यथोपदेशमकरोदित्याह, "तत्याज भेदं परमार्थदृष्टिः" इति । कुतश्चैष निर्णय इति चेत्—देहात्मविवेकविषयत्वादुपदेशस्य । तच्च, "पिण्डः पृथक् यतः पुंसश्शिरःपाण्यादिलक्षणः" (2. 13. 89.) इति प्रक्रमात् ।

"विभेदजनकेऽज्ञाने" (25) इति च नात्मस्वरूपैक्यपरम् ; नापि जीवपरयोः । आत्मस्वरूपैक्यमुक्तरीत्या निषिद्धम् । जीवपरयोरपि स्वरूपैक्यं देहात्मनोरिव न संभवति—तथा च श्रुतिः, (मु. 3. 1. 1.) "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति, अनश्नन्नन्यो अभिचाकशीति", (कठ. 3. 1.) ऋतं पिबन्तौ सुकृतस्य लोके

---

न्यदेतत् । वक्ष्यते च, ज्ञानैकाकारतया ब्रह्मप्रकारतेति । एवं सति स इति कथं पुल्लिङ्गमित्येव प्रश्नः शिष्यते । तत्रोच्यते—पूर्वं परमार्थः क इत्येव विचारस्य वृत्तत्वात्, 'विज्ञानं परमार्थो हि' इत्युक्तत्वात् उपरि परमार्थदृष्टिरित्यनुवादाच्च विज्ञानरूपपरमार्थः स इति परामृश्यत इति । स इत्यस्य अच्युत इत्यर्थकत्वेपि ज्ञानैकाकारत्व-प्रक्षीणाशेषभावनत्वादिसाम्यकथन एव पर्यवसानमिति वा । अन्यथा स्वरूपैक्योपदेशपरत्वे । ननु अहंत्वमादिशब्दार्थाः देहान्तःकरणादय एव । तन्निबन्धनो भेदनिर्देशः । तत्तदुपलक्ष्यमात्मस्वरूपं त्वेकमित्यत्राह अहमिति । आदिपदेन एतदितिशब्दग्रहणम् । अयमर्थः—आत्मस्वरूपमिति पदस्य सर्वमेतदितिपदसामानाधिकरण्यदर्शनेन तुल्यरीत्या अहमात्मस्वरूपं सः, एतदात्मस्वरूपं सर्वं सः इत्येवार्थावगत्या स्वरूपेषु भेदनिर्देशोऽस्तीति ह्यस्मदुक्तम् । तत्राहमादिशब्दा उपलक्षणवाचिन इति वदता भवता उपलक्ष्यवाचिना आत्मस्वरूपपदेन अहमादीनां सामानाधिकरण्यं दुर्वचम् ; उपलक्षणोपलक्ष्ययोः शाखा चन्द्र इति सामानाधिकरण्याभावादिति । उपलक्ष्येणेत्यस्य स्वार्थोपलक्ष्यवाचिनेत्यर्थः । यद्वाऽयमर्थः—सर्वमेतदात्मस्वरूपमिति सर्वपदेनात्मस्वरूपपदस्यान्वितत्वात् अहमादिपदस्याप्यात्मस्वरूपपदसामानाधिकरण्ये अहमादिपदानामप्यात्मस्वरूपलक्षकत्वे पर्यायतया सामानाधिकरण्यायोगात् लक्षकत्वं न भवतीति । अहंशब्दादेरहमर्थाद्युपलक्षितमित्यर्थोऽपि न । अखण्डार्थवादिभिस्तदसंमतेः । आत्मैक्यपक्षे पृथक्पृथक्कथनानपेक्षणात्, लक्षणाया अयुक्तत्वात्, अहंत्वरूपप्रत्यक्त्वादेरन्यत्वायोगात्, स्वरससिद्धभेदत्यागायोगाच्च । कुतश्चैष इत्यादिना चकारतः परपक्षे उपक्रमानुगुण्यरूपहेतोरप्यभावः स्वपक्षे सत्त्वञ्चोच्यते । तथा च लोकसिद्धात्मभेदानुपमर्देन देहातिरेकोपपादनपूर्वकं देहेष्विवात्मसु मिथो वैलक्षण्यस्याभाव एव प्रकरणार्थ इति भावः ।

भेदव्यपदेशात्, निर्णयादित्युपरितनयोः न संभवतीत्यधस्तादन्वयस्यैव स्वरसत्वात् तथा च श्रुतिरिति प्रथमवाक्येऽपि चो हेतौ । श्रुतिपुराणसूत्रवचनैः भेदस्य निश्चयात् जीवपरैक्यमपि न

गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥", (यजुरारण्य. 3. 20.) "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इत्याद्या। अस्मिन्नपि शास्त्रे, (वि. 6. 5. 83—85.) "स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः। अतीतसर्वावरणोऽखिलात्मा तेनाऽऽस्तृतं यद् भुवनान्तराले ॥ समस्तकल्याणगुणात्मकोऽसौ...परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे", (वि. 6. 7. 61.) "अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा" इति भेदव्यपदेशात्; (शारी. 1. 2. 21.) "उभयेऽपि हि भेदेनैनमधीयते", (शारी. 1. 1. 22.) "भेदव्यपदेशाच्चान्यः", (शारी. 2. 1. 22.) "अधिकं तु भेदनिर्देशात्" इत्यादिसूत्रेषु च, (बृ. माध्यं. 6. 7.) "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति", (बृ. 6. 3. 21.) प्राज्ञेनात्मना संपरिष्वक्तः", (बृ. 6. 3. 35.) "प्राज्ञेनाऽऽत्मनाऽन्वारूढः" इत्यादिभिरुभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात्।

नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसंभवः; अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासंभवात्। यथोक्तम्—(वि. 2. 14. 27.) "परमात्मात्मनोर्योगः परमार्थ इतीष्यते। मिथ्यैतत्; अन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥" इति।

---

संभवतीत्यर्थः। जागर इव सुषुप्तिमरणयोरपि जीवपरभेदः प्राज्ञेनेत्यादिनोक्तः। मुक्तावपि तमाह। तत्र उक्तप्रमाणानां संसारे जीवपरभेदसाधकत्वमिष्ट्वा मुक्तावभेदमनादिसिद्धभेदयोस्तयोर्वदताम्, "उत्क्रमिष्यत एवम्भावात्"इति रीतिभाजां पक्षमपि पराशरवचनेनैव निरसितुमाह **नापी**ति। **योग** इति। अत्र एकस्य द्रव्यस्य द्रव्यान्तरैक्यासंभवेन हेतुनोत्तरार्धोक्तेन योगपक्षस्य खण्डनात् योगशब्द ऐक्यपर इति मन्तव्यम्। विष्णुनामसहस्रशांकरभाष्ये, 'योगो योगविदाम्' इत्यत्र, 'ज्ञानेन्द्रियाणि सर्वाणि निरुध्य मनसा सह। एकत्वभावना योगः क्षेत्रज्ञपरमात्मनोः' इत्युक्तम्। ईदृशार्थखण्डनमत्र श्लोके इति सुवचम्। तत्र श्रीभाष्यकारैः भिन्नस्यैव जीवस्योपासनया परैक्यं मुक्ताविति पक्षखण्डन एवैतदुदाहरणात् सार्वकालिकस्वरूपैक्यं तयोः सर्वथैवासंभावितमिति प्रागुपन्यासावसरे एतदनुदाहरणात् योगशब्दस्वारस्यमिह लक्षितमिति ज्ञायते। श्रीधरीयेऽपि उपासनाधीनतादात्म्यलक्षणयोगखण्डनपरमेवेदं व्याख्यातम्। नित्यभिन्नवस्तुगतैक्यविवक्षायां योगशब्दानाञ्जस्यञ्चोक्तम्। **परमात्मात्मनो**रिति द्विवचनञ्च प्राग्भेदसद्भावं सूचयति। तदिह योगः, अप्राप्तस्य तु या प्राप्तिः स संयोग इति तार्किकैरुक्तः संयोगविशेषः। परं स नश्वरः, अयं तु मुक्तिकालिकः यावद्द्रव्यभावी पृथग्भावानर्हः संयोगः। एवञ्चोदकेसिक्तस्योदकस्येवायं योगः ऐक्यविशेषः ऐक्यश्रुत्यर्थ इति मतमेषाम्। तदत्र खण्ड्यते—श्रुत्युक्तैक्यनिर्वाहप्रवृत्तैः सार्वकालिकस्वरूपैक्यं दुर्वचमिति प्रागुक्तमेव। पूर्वं भिन्नयोः पश्चात् स्वरूपैक्यमपि दुर्वचमेव। न ह्यन्यद् द्रव्यं तद्द्रव्यतामेति। उदके

मुक्तस्य तु तद्धर्मतापत्तिरेवेति भगवद्गीतासूक्तम्—( गी. 14. 2. ) "इदं ज्ञानम(मु)पाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥" इति। इहापि—

( वि. 6. 7. 30. ) "आत्मभावं नयत्येनं तद् ब्रह्म ध्यायिनं मुने। विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥" इति। आत्मभावम् आत्मनः स्वभावम्। न ह्याकर्षक-स्वरूपापत्तिराकृष्यमाणस्य। वक्ष्यति च, ( शारी. 4. 4. 17. ) "जगद्व्यापारवर्जं प्रकरणा-दसन्निहितत्वाच्च", ( शारी. 4. 4. 21. ) "भोगमात्रसाम्यलिङ्गाच्च", ( शारी. 1. 3. 2. ) "मुक्तोपसृप्यव्यपदेशाच्च" इति। वृत्तिरपि, "जगद्व्यापारवर्जं समानो ज्योतिषा" इति। द्रमिडभाष्यकारश्च, "देवतासायुज्यादशरीरस्यापि देवतावत् सर्वार्थसिद्धिः स्यात्" इत्याह। श्रुतयश्च, ( छा. 8. 1. 6. ) "य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति", ( तै. आनं. 1. ) "ब्रह्मविदाप्नोति परम्.... ........सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता", ( तै. भृ. ) "एतमानन्दमय-मात्मानमुपसंक्रम्य, इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्", ( छा. 8. 12. 3. ) "स तत्र पर्येति", ( तै. आनं 7. ) "रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति", ( मु. 3. 2. 8. ) "यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्", ( मु. 3. 1. 3. ) "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्याद्याः।

---

उदकमासिक्तमपि हि नैकं भवति; किन्तु नित्यसंसृष्टम्। तादृशश्च योगोऽभ्युपगम्यमानो नैक्य-श्रुतिनिर्वाहक्षम इति किं तेन कामरूपसंचारादिश्रुत्यर्थविरुद्धेन स्वीकृतेन। न च जातः संयोगो न नश्यतीत्यत्र प्रबलं प्रमाणमस्ति। न च परमात्मानुभवाविच्छेदातिरिक्तः अविनाशिसंयोगात्मक एवाविभाग इत्यत्र प्रमाणमिति श्लोकतात्पर्यम्। अत्र हेतूपन्यासे जीवपरयोर्विभिन्नद्रव्यतायाः कण्ठो-क्तत्वादयमैक्यशब्दोपचरितार्थ इव मुख्यार्थश्च नेत्युक्तमेव। एतदभिप्रायेण निवृत्त्यनुपपत्तौ एतद्वचनो-पादानम्। प्रकरणेऽत्र पुराणेन कः परमार्थः इति विचारप्रवृत्तेन, धनं पुत्रः राज्यं काम्यकर्म अकाम्यकर्म आत्मान्तरापरामर्शेन स्वात्मध्यानम् जीवपरयोर्भिन्नयोरपि मोक्षे ऐक्यापरपर्यायः संयोगविशेषः इत्येषां यथायथं नाशित्व-साधनत्व-मिथ्यात्वान्वयादपुरुषार्थत्वेनापरमार्थत्वमुपपाद्य जीवात्मनां मिथः, परमा-त्मना च परिशीलनीयं साम्यरूपमैक्यमेव परमोऽर्थ इति प्रतिपादितमिति ध्येयम्। तदर्थसंग्रहः—

धनपुत्रराज्यकाम्यान्यकाम्यकर्माऽऽत्मयोग ऐक्यमिति।
न फलं नाशि मृषा वेत्यैक्ये परमार्थताऽऽत्म साम्याख्ये ॥

तर्हि मुक्तावैक्यपरवाक्यार्थः क इत्यत्राह मुक्तस्य त्विति। विकार्यम् सविकारं कर्तुं शक्यम्। आकर्षकः अयस्कान्तः। ज्योतिषा परंज्योतिरित्युक्तेन परमात्मना। ननु सगुणब्रह्मो-

'परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यम्; फलं चैकरूपमेव; अतो विद्याविकल्पः' इति सूत्रकारेणैव, (शारी. 3. 3. 11.) "आनन्दादयः प्रधानस्य", (शारी. 3. 3. 75.) "विकल्पोऽविशिष्टफलत्वात्" इत्यादिषूक्तम्। वाक्यकारेण च सगुणस्यैवोपास्यत्वं विद्याविकल्पश्चोक्तः, "युक्तं तद्गुणकोपासनात्" इति। भाष्यकृता व्याख्यातं च, "यद्यपि सच्चित्तः" इत्यादिना। (मु. 3. 2. 9.) "ब्रह्म वेद ब्रह्मैव भवति" इत्यत्रापि, (मु. 3. 2. 8.) "नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्", (मु. 3. 1.) "निरञ्जनः परमं साम्यमुपैति", (छा. 8. 12.) "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिभिरैकार्थ्यात् प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते। प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा सेयं गौरिति।

अत्रापि, (6. 7. 93.) "विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव। प्रापणीयस्तथैवाऽऽत्मा प्रक्षीणाशेषभावनः॥" इति परब्रह्मध्यानात् आत्मा परब्रह्मवत् प्रक्षीणाशेषभावनः कर्मभावाना ब्रह्मभावनोभयभावनेति भावनात्रयरहितः प्रापणीय इत्यभिधाय, (वि. 6. 7. 94.) "क्षेत्रज्ञः करणी ज्ञानं करणं तस्य तेन तत् (वै द्विज)। निष्पाद्य मुक्तिकार्यं वै (हि) कृतकृत्यं निवर्तते(येत)" इति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्म-

---

पासनफलमर्वाङ्मोक्षोऽयम्; न निर्गुणविद्यारूपपरविद्याफलमित्यत्राह **परेति**। **युक्तम्**-गुणयुक्तमेव प्राप्यम्। **सच्चित्त** इत्यादि। सद्विद्यानिष्ठः यद्यपि दहरविद्यानिष्ठ इव न पृथक् गुणगणमनुसंधत्ते, अथापि गुणगर्भपरदेवतोपासनमेव करोति, अतः सद्विद्यापि सगुणविद्यैवेति युज्यत एव विद्याविकल्प इत्यर्थः। इदं द्रमिडभाष्यवाक्यं वेदार्थसंग्रहे पूर्णमुपात्तम्। एतावत्प्रमाणगणाविरोधाय ब्रह्मैव भवतीत्यत्र ईषदमुख्यार्थस्वीकारो न दोषायेत्याह **ब्रह्म वेदेति**। **ब्रह्मप्रकारता** ब्राह्मेण जैमिनिरित्युक्तरीत्या ब्राह्मप्रकारविशिष्टता। **तत्त्वव्यवहारः** तद्भाववत्त्वोक्तिः। एवममुख्यार्थस्वीकारार्थमेव **एवकारः**। अन्यथा तद्वैयर्थ्यात्। अत एव पूर्वमीमांसायाम्, (3. 2. 5.) 'सूक्तवाक एव याज्या' इति यागलिङ्गं प्रस्तुत्य, "एवकारोपबद्धत्वेनैतल्लिङ्गस्य याज्यात्वासाधकत्वात्" इत्युक्तं भाट्टदीपिकायाम्। विष्णुरेव भूत्वेत्यादि च भाव्यम्। एवकारः सादृश्यार्थक इति च कोशसिद्धम्। **सेयं गौरिति** पूर्वदृष्टभिन्नगवीविषयकव्यवहार उदाहरणम्। तत्र प्रकारैक्यमेव, न व्यक्त्यैक्यमिति।

विभेदजनक इति प्रकृतश्लोकसमनन्तरपूर्वश्लोकान् गृहीत्वाऽपि प्रकारैक्यं प्रतिष्ठापयति **अत्रापीति**। **तथा** ब्रह्मवत्। वत्यर्थः प्रक्षीणाशेषभावनत्वम्। प्रापणीय इत्यत्र णिजन्ताच्चेत् अनीयर्, प्राप्तृप्राप्यभेदलाभः; अणिजन्ताच्चेत् प्राप्यद्वयलाभः। ननु कर्मभावनाक्षयो युक्तः, न ब्रह्मभावनाया इत्याशंकां शमयितुम्, तद्भावेतिवक्ष्यमाणश्लोकस्थतदाशब्दव्याख्यानार्थञ्च क्षेत्रज्ञ इति श्लोकमप्युपादाय व्याचष्टे **क्षेत्रज्ञ** इति। **तेन** करणत्वेन। **तत्** करणम्। तस्य मुक्तिरूपं कार्यं निर्वर्त्य स्वयं कृतकृत्यत्वात् निवर्तत इत्यर्थः। भाष्यविष्णुचित्तीयानुरोधादेवमेव भाष्ये पाठ्यम्। करणनिवृत्तिवचनं

स्वरूपप्राप्तया कृतकृत्यत्वेन निवृत्तिवचनात्, 'यावत्सिद्धचतुष्टय'मित्युक्त्वा (6. 7. 95.) "तद्भावभावमापन्नस्तदाऽसौ परमात्मना। भवत्यभेदी ; भेदश्च तस्याज्ञानकृतो भवेत् ॥" इति मुक्तस्य स्वरूपमाह। तद्भावः=ब्रह्मणो भावः–स्वभावः, न तु स्वरूपैक्यम्, तद्भावभावमापन्न इति द्वितीयभावशब्दानन्वयात्; पूर्वोक्तार्थविरोधाच्च। यद् ब्रह्मणः प्रक्षीणाशेषभावनत्वम्, तदापत्तिः तद्भावभावापत्तिः। यदैवमापन्नः, तदाऽसौ परमात्मना अभेदी भवति=भेदरहितो भवति। ज्ञानैकाकारतया परमात्मनैकप्रकारस्यास्य तस्माद्भेदो देवादिरूपः। तदन्वयोऽस्य कर्मरूपाज्ञानमूलः ; न स्वरूपकृतः। स तु देवादिभेदः परब्रह्मध्यानेन मूलभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावान्निवर्तत इत्यभेदी भवति। यथोक्तम्–(वि. 2. 14. 33.) "एकस्वरूपभेदस्तु बाह्यकर्मवृतिप्रजः। देवादिभेदो(दे)ऽपध्वस्ते नास्त्येवावरणे(स्त्यनावरणो) हि सः ॥" इति।

एतदेव विवृणोति, 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति' (25) इति। विभेदः=विविधो भेदः–देवतिर्यङ्मनुष्यस्थावरात्मकः। यथोक्तं शौनकेनापि, (वि. ध. 100. 21.) "चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः" इति। आत्मनि ज्ञानरूपे देवादिरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मध्यानेनात्यन्तिकनाशं गते सति हेत्वभावादसन्तं परस्मात् ब्रह्मण आत्मनो देवादि-

---

पूर्वं ब्रह्मभावनाप्रक्षयवचनञ्चोपायार्थपरिश्रमस्य पश्चादनपेक्षत्वपरमिति भावः। अत्र उपासनानिवृत्तिर्न जीवस्य पृथगभावात्, किंतु कृतकृत्यत्वादिति इतोऽवगमात् जीवपरभेदसिद्धिः ; यावन्मुक्ति सगुणोपासनाविधानात् निर्गुणव्यवधानाभावसिद्धिश्च। 'भेदश्च तस्याज्ञानकृतः' इत्यस्य ज्ञानतारतम्यदेवादिभेदः कर्मायत्त इत्यर्थो यथाश्रुतः ; भावरूपाज्ञानकृता आत्मभेदबुद्धिरिति परसंमतार्थस्तु न यथाश्रुतः। **तद्भावभावम्** ब्राह्मस्वभावेन सत्तामिति स्वपक्षेऽर्थः। अथवा ब्रह्मगतभावाभिन्नभावमापन्न इत्यर्थः। द्वितीयभावशब्दप्रयोगादेव भावयोरभेदः सौसादृश्यमिति ज्ञायते। तस्य भावो यस्य, स तद्भावः मुक्तः, तस्य भावः, तमिति वा विग्रहः।

भेदशब्दस्यात्मभेदरूपार्थं परित्यज्य देवादिदेहरूपभेदपरत्वेऽपि श्लोकं दर्शयति **यथोक्तमिति**। भाष्ये भेदशब्देन देवादिभेदस्यैवेह सर्वत्र ग्रहणात् तदनुरोधी विष्णुचित्तीयसंमतः, 'देवादिभेदोऽपध्वस्ते नास्त्येवावरणे हि सः' इति पाठः। देवादिभेदोऽयं ध्वस्ते इत्यपि वा। अर्थस्तु देवादिभेदहेतौ कर्मरूपावरणेऽपध्वस्ते हि स देवादिभेदो नास्तीति। पूर्वार्धान्वयि स्यात् देवादिभेद इति पदम्। **कर्मवृती**त्यत्र **कर्मावृती**ति पुराणव्याख्यासंमतपाठः। कर्मप्रवृत्तिज इति पाठोऽपि कश्चित्। टीकोक्तार्थस्तत्रैव द्रष्टव्यः। तत्र अनावरणो हि स इति पठितम्। एवं भेदशब्दार्थं प्रकृतं प्रदर्श्य विवादविषयश्लोकार्थमाह **एतदेवेति**। स हि नास्त्येवेति पूर्वं हिशब्दैवकाराभ्यामभिप्रेतमिह विनियत इति भावः। **ब्रह्मण** इति पञ्चमी। **कः करिष्यती**ति 'अनावृत्तिः शब्दात्' इत्यर्थकथनम्।

रूपभेदं कः करिष्यतीत्यर्थः । 'अविद्या कर्मसंज्ञाऽन्या' इति [हि]अत्रैवोक्तम् ।

'क्षेत्रज्ञं चापि मां विद्धि' (25) इत्यादिनाऽन्तर्यामिरूपेण सर्वस्याऽऽत्मतयैक्यामिधानम् । अन्यथा, (गी. 15. 16.) "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः" इत्यादिभिर्विरोधः । अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवताऽभिहितम्, (गी. 18.61.) "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति", (गी. 15. 15.) "सर्वस्य चाहं हृदि सन्निविष्टः" इति च । 'अहमात्मा गुडाकेश! सर्वभूताशयस्थितः' (25) इति च तदेवोच्यते । भूतशब्दो ह्यात्मपर्यन्तदेहवचनः । यतः सर्वेषामयमात्मा, तत एव सर्वेषां तच्छरीरतया पृथगवस्थानं प्रतिषिध्यते, 'न तदस्ति विना यत् स्यात्' (25) इति; भगवद्विभूत्युपसंहारश्चायमिति तथैवाभ्युपगन्तव्यम् । तत इदमुच्यते, (गी. 10. 41.) "यद्यत् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥" इति ॥

अतः शास्त्रेषु न निर्विशेषवस्तुप्रतिपादनमस्ति; नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनम्; नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः ॥

(अविद्याविषयसप्तविधानुपपत्त्यारम्भः)

यदप्युच्यते (26)—निर्विशेषे स्वयंप्रकाशे वस्तुनि दोषपरिकल्पितम् ईशे(श्वरे)शितव्याद्यनन्तविकल्पं सर्वं जगत् । दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या । सा चावश्याभ्युपगमनीया; (छा. 8. 3. 2.) "अनृतेन हि प्रत्यूढाः" इत्यादिभिः श्रुतिभिः; ब्रह्मणः तत्त्वमस्यादिवाक्यसामानाधिकरण्याव-

---

'अज्ञानकृतः' 'कर्मावृतिप्रजः' इत्येवं ति स्थानसाम्यात् अज्ञानमविद्या आवरणं कर्मेति पदानि समानार्थानीति सुग्रहम्; व्यक्तश्चैक्यमुक्तमित्याह अविद्येति । इदं कर्म शौनकोक्तं मिथ्याज्ञानश्च द्वारद्वारिभावापन्नम् । एवं पुराणार्थ उक्तः ।

पूर्वपक्ष्युपात्तगीतावाक्यार्थमाह क्षेत्रेति । वाक्यमिदं परैः प्रधानतयाऽभिमतमिति एतदर्थं क्रमोल्लङ्घनेन पूर्वमाह । श्लोके चकारः क्षेत्रसमुच्चये । अपिना अचेतनस्यैव चेतनाधिष्ठानापेक्षा, न तु जीवस्येति न मन्तव्यमित्युच्यते । अहमात्मेतिश्लोकेन शरीरगतजीवात्मैक्यमहमर्थे परमात्मनीति न मन्तव्यमित्याशयेनाह अहमिति । 'सर्वभूतहिते रतः' इत्यादिप्रसिद्ध्या भूतशब्देन जीवात्मनां ग्रहणात् पुनः आत्मपदं न तदर्थकमिति भावः । विनेति । मया विनेत्यस्य, मां विहाय, मत्साहित्यहीनतयेत्यर्थः । न केवलं भेदशास्त्राविरोध-स्वोक्तिस्वरसाभ्याम्; प्रकरणादप्ययमेवार्थ इत्याह भगवदिति । तेजः संकल्पः ।

अथ महापूर्वपक्षे 'दोषश्चे'त्यादिनोक्तं निरसितुमनुवदति यदपीति । जीवैक्यानुपपत्त्येति श्रुत्यर्थापत्तिरुक्ता । जीवेश्वरयो विरुद्धधर्माक्रान्तयोरैक्यश्रवणं धर्ममिथ्यात्वेन स्वरूपमात्रशे-

गतजीवैक्यानुपपत्त्या च। सा तु न सती ; भ्रान्तिबाधयोरयोगात्। नाप्यसती ; ख्यातिबाधयोश्चायोगात्। अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविदः–इति––तदयुक्तम्––

सा हि किमाश्रित्य भ्रमं जनयति ? न तावत् जीवमाश्रित्य ; अविद्यापरिकल्पितत्वात् जीवभावस्य। नापि ब्रह्माश्रित्य ; तस्य स्व[यं]प्रकाशज्ञानस्वरूपत्वेनाविद्याविरोधित्वात्। सा हि ज्ञानबाध्याऽभिमता।

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्। अज्ञानं चेत् तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने ॥
ज्ञानं ब्रह्मेति चेत् ज्ञानमज्ञानस्य निवर्तकम्। ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम् ॥
ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत् स्यात् प्रमेयता। ब्रह्मणोऽननुभूतित्वं त्वदुक्तचैव प्रसज्यते ॥"

ज्ञानस्वरूपं ब्रह्मेति ज्ञानं तस्या अविद्याया बाधकम्, न स्वरूपभूतं ज्ञानमिति चेत् न—उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सति (सत्यपि) अन्यतरस्याविद्याविरोधित्वम्, अन्यतरस्य नेति विशेषानवगमात्। एतदुक्तं भवति—ज्ञानस्वरूपं ब्रह्मेत्यनेन ज्ञानेन ब्रह्मणि यः स्वभावोऽवगम्यते, स ब्रह्मणः स्वयंप्रकाशत्वेन स्वयमेव प्रकाशत इति अविद्याविरोधित्वे न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोः इति। किं च—अनुभवस्वरूपस्य ब्रह्मणोऽनुभवान्तराननुभाव्यत्वेन भवतो न तद्विषयं ज्ञानमस्ति। अतो ज्ञानमज्ञानविरोधि चेत्, स्वयमेव विरोधि भवतीति नास्याः ब्रह्माश्रयत्वसंभवः। शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनः ; तन्निवर्तने च ज्ञानान्तरमपेक्षन्ते। ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव ; तत एव निवर्तकान्तरं च नापेक्षते।

अथोच्येत—'ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरोधि' इति। न। इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि, उत प्रपञ्चसत्यत्वरूपाज्ञानविरो-

---

षणेन निर्वाह्यम् ; तन्मिथ्यात्वञ्च दोषायत्तमिति दोषकल्पनेति भावः। **भ्रान्तिबाधयोरयोगात् ;** अविद्यायाः सत्त्वे तद्विषयज्ञानं न भ्रान्तिर्भवेत्, बाधश्च न स्यादित्यर्थः। **ख्यातिबाधयोश्चेति।** असिद्धं शशविषाणं न सत्त्वेन ख्यायते, न च ख्यातिपूर्वं बाध्यत इति भावः। **कोटी**ति ; सदसद्रूपेत्यर्थः। अथ सप्तविधानुपपत्तिप्रदर्शनम्। तत्क्रमसंग्रह एवम्—

आश्रयोऽस्यास्तिरोधिः स्वरूपं सदसदन्यता। मानं निवर्तकश्चैवं निवृत्तिर्नोपपद्यते ॥ इति।

इमा अनुपपत्तीः सप्त प्रपञ्चयिष्यन् आह **तदयुक्त**मिति। प्रथमामाश्रयानुपपत्तिमाह **सा ही**ति। भगवन्नाथमुनिकारिकाः **ज्ञाने**त्यादयः। **ब्रह्मे**ति कर्म। **ज्ञानं ब्रह्म** निर्विशेषचिन्मात्रं ब्रह्म। **चे**दित्यस्य, निवर्तकं चेदित्यन्वयः। तदुपरि नेति खण्डनमध्याहार्यम्। उत्तरश्लोकौ व्याख्याति **ज्ञाने**त्यादिना। वृत्तिज्ञानमधिकप्रकाशकमिति मतिमपाकर्तुमाह **एतदुक्तं भवती**ति। ब्रह्मातिरिक्तप्रकाशकत्वे तत्त्वज्ञानत्वहानिः। प्रकाशितस्य सर्वस्य ब्रह्मत्वे स्वयम्प्रकाशब्रह्माविशेष इति भावः।

**सत्यत्वरूपाज्ञाने**ति। ज्ञानस्याज्ञानविरोधित्वमेव दृष्टम्, न वस्तुविरोधित्वमित्यत्र सत्यस्वा-

धीति विवेचनीयम् । न तावत् ब्रह्मयाथात्म्याज्ञानविरोधि; अतद्विषयत्वात् । ज्ञानाज्ञानयोरेकविषयत्वे(त्वेन) हि विरोधः । प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्वरूपाज्ञानेन विरुध्यते । तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव ॥ ब्रह्मस्वरूपाज्ञानं नाम तस्य सद्वितीयत्वमेव । तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तम् । स्वरूपं तु स्वानुभवसिद्धमिति चेत्—न—ब्रह्मणोऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति तद्विरोधिसद्वितीयत्वरूपाज्ञानं तद्बाधश्च न स्याताम् ॥ अद्वितीयत्वं धर्म इति चेन्न—अनुभवस्वरूपस्य ब्रह्मणोऽनुभाव्यधर्मविरहस्य भवतैव प्रतिपादितत्वात् । अतो ज्ञान[स्व]रूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम् ।

किंच—अविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तः स्यात् । प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धः, विद्यमानस्य विनाशो वा । प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव ॥

अपि च निर्विषया निराश्रया स्व[यं]प्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीत्यत्र किमयं स्वाश्रयदोषः परमार्थभूतः, उतापरमार्थभूत इति विवेचनीयम् । न तावत् परमार्थः, अनभ्युपगमात् । नाप्यपरमार्थः । तथा सति [हि] द्रष्टृत्वेन वा दृश्यत्वेन वा दृशित्वेन वाऽभ्युपगमनीयः । न तावद् दृशिः, दृशिस्वरूपभेदानभ्युपगमात्; भ्रमाधिष्ठानभूतायास्तु साक्षाद्दृशेः माध्यमिकपक्षप्रसङ्गेनापारमार्थ्यानभ्यु-

---

देरज्ञानविक्षेपरूपत्वेनाज्ञानकार्यतया कार्यकारणयोरैक्येन तन्निरोधित्वमेवेति परोत्तरम्; तदा विष्कर्तुमज्ञानपदम् । **सद्वितीयत्वमेवे**ति । स्वरूपाज्ञानं नाम तदद्वितीयत्वाज्ञानमेव । ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं नाम तदद्वितीयत्वज्ञानमेव । तेन स्वरूपाज्ञानं निवर्तते; तदज्ञानकार्यसद्वितीयत्वकल्पनासिद्धं सद्वितीयत्वमपि तदज्ञानमेवेति तन्निवृत्तिरपि भवतीति भावः । अद्वितीयत्वं स्वरूपं वा धर्मो वेति विकल्प्य दूषयति **ने**ति ।

आश्रयानुपपत्तिरुक्ता; तिरोधानानुपपत्तिमाह **किञ्चे**ति। **प्रकाशतिरोधान**मिति । वस्तुतिरोधानं नाम वस्तुनेन्द्रियसंनिकर्षप्रतिबन्धः, वस्तुविषयकप्रकाश(ज्ञान)प्रतिबन्ध एव वा । ब्रह्मणश्च ज्ञानाविषयत्वात् प्रकाशतिरोधानमेव ब्रह्मतिरोधानमिति निष्कृष्यैवमुक्तम् । ब्रह्मविषयकवृत्तिज्ञानप्रतिबन्धः तिरोधानमित्यपि न भवति । आदावन्तःकरणादिरूपवृत्तिज्ञान कारणाभावादेव तदनुदयात् अविद्यायाः प्रतिबन्धकत्वाप्रसक्तेः । उपरि प्रमाणानुपपत्तिमध्ये, 'तिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सत् ब्रह्म तिरस्करोति, ब्रह्म तिरस्कृत्य स्वयमनुभवविषयो भवति' इति विकल्प्य करिष्यमाणं दूषणजातमप्यत्र तिरोधानानुपपत्तावाकृष्यानुसंधेयम् ।

अथ स्वरूपानुपपत्तिमाह **अपिचे**ति । दोषः परमार्थोऽपरमार्थो वा; आद्ये ब्रह्म वाऽन्यद्वा; अन्त्ये दृशिर्वा द्रष्टा वा दृश्यं वेति विकल्प्य स्वरूपदूषणमनुसंधेयम् । **भेदानभ्युपगमात्**; पार-

पगमाच्च । द्रष्टृदृश्ययोस्तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षया अनवस्था स्यात् ॥ अथैतत्परिजिहीर्षया परमार्थसती अनुभूतिरेव ब्रह्मरूपा दोष इति चेत्—ब्रह्मैव चेत् दोषः, प्रपञ्चदर्शनस्यैव तत् मूलं स्यात्; किं प्रपञ्चतुल्याविद्यान्तरपरिकल्पनेन ? ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेनानिर्मोक्षश्च स्यात् । अतः यावत् ब्रह्मव्यतिरिक्तपारमार्थिक-दोषानभ्युपगमः, न तावत् भ्रान्तिरुपपादिता भवति ॥

अनिर्वचनीयत्वं च किमभिप्रेतम् । सदसद्विलक्षणत्वमिति चेत्, तथाविधस्य वस्तुनः प्रमाणशून्यत्वेन अनिर्वचनीयतैव स्यात् । एतदुक्तं भवति— सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वा च प्रतीतिः सदसदाकारा । सदसदाकारायास्तु प्रतीतेः सदसद्विलक्षणं विषय इत्युभ्यपगम्यमाने सर्वं सर्वप्रतीतेर्विषयस्स्यात्—इति ।

अथ स्यात्—

वस्तुस्वरूपतिरोधानकरम् आन्तरबाह्यरूपविविधाध्यासोपादानं सदसदनिर्वचनीयम् अविद्याऽज्ञानादिपदवाच्यं वस्तुयाथात्म्यज्ञाननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव

---

मार्थिकब्रह्मरूपदृश्यतिरिक्त दृशिशब्दमुख्यार्थास्वीकारादित्यर्थः । ब्रह्मरूपदृशिरेवास्तु इति चेत् न; अपारमार्थिकविकल्पो ह्ययमित्याह **ब्रह्मे**ति । अमुख्य वृत्तिरूप दृशिपक्षं द्रष्ट्रादिपक्षसमुच्चयेन दूषयति **द्रष्टि**ति । **काल्पनिकत्वेने**त्येतदनन्तरम्, प्रकृतदोषस्य द्रष्टृत्वे दृश्यत्वे आश्रयविषयावच्छिन्न-दृशिरूपत्वे वेति शेषः । जडस्याहङ्कारस्य द्रष्टृत्वं जडायाः वृत्तेरवच्छिन्नदृशित्वञ्चाद्वैतीष्टमिति प्रकृताविद्यायामपि दृश्यत्ववत् द्रष्टृत्वदृशित्वशिरसोरप्युद्भावनम् । **एतत्परिजिहीर्षया**—अनवस्थापरि-हाराय । **दोषः** अविद्यारूपस्य प्राक्स्वीकृतदोषस्य कल्पको दोषः । एवं तर्हि प्रथमदोषोऽपि मास्त्वित्याह **ब्रह्मे**ति । एवं दोषाख्यधर्मिस्वरूपानुपपत्तिरुक्ता ।

अथानिर्वचनीयत्वानुपपत्तिमाह । **अनिर्वचनीयत्वञ्चे**ति । ननु ख्यातिभ्रान्तिबाधायोगात् सद-सदनिर्वचनीयत्वं पूर्वमुक्तमिति कथं प्रमाणाभावः इत्यत्रोपपादयति **एतदुक्त**मिति । लोके प्रतीतिः, अस्तीति वा नास्तीति वा भवति; न विलक्षणा । एवञ्च प्रमाणेनानिर्वचनीयं अस्तीति ज्ञाप्यते वा, नास्तीति ज्ञाप्यते वा । आद्ये सत्त्वमेव; अन्त्ये चासत्त्वम् । किञ्चिद्रूपेण सत्त्वे च नासत्त्वम्; अन्यरूपेणासत्त्वसमुच्चये च सदसत्त्वमेव; न विलक्षणत्वमिति भावः । **सदसदाकारा**—इदं सदिति वा, इदमसदिति वा आकार-वती । **सदसदाकारायाः** सदसदन्यतराकारं नियमेन भजन्त्याः । अनुल्लिखितस्यापि विषयत्वे घटादिप्रतीतिरपि पटादिविषयिणी स्यादिति भावः । अथ यदि नित्यसद्विलक्षणं नित्यासद्विलक्षणञ्चेत्यर्थः, तर्हि किञ्चित्कालसत्त्वकिञ्चित्कालासत्त्वोभयवदित्यर्थे पर्यवसानात् सदसत्त्वमेव । प्रतीतिश्च सदसदा-कारेति प्रतीतिकालेऽप्यभावरूपबाधो नैव भवेत् । बाधे त्वसत्त्वमेवेति न सदसद्विलक्षणत्वम् । शेष-मनुमानप्रमाणानुपपत्त्यनन्तरवक्ष्यमाणानिर्वचनीयानुपपत्तौ ।

अथ प्रमाणानुपपत्तिं वक्तुं विस्तरेण प्रमाणोपपत्तिमनुवदति **अथ स्या**दिति । अस्य इति **निरवद्य**

किंचिद्वस्तु प्रत्यक्षानुमानाभ्यां प्रतीयते । तदुपहितब्रह्मोपादानश्च अविकारे स्वप्रकाशचिन्मात्रवपुषि तेनैव तिरोहितस्वरूपे प्रत्यगात्मनि अहङ्कारज्ञानज्ञेयविभागरूपोऽध्यासः । तस्यैवावस्थाविशेषेण अध्यासरूपे जगति ज्ञानबाध्यसर्परजतादिवस्तु-तत्तज्ज्ञानरूपा(पोऽ)-ध्यासोऽपि जायते । कृत्स्नस्य मिथ्यारूपस्य तदुपादानत्वं च मिथ्याभूतस्यार्थस्य मिथ्याभूतमेव कारणं भवितुमर्हतीति हेतुबलादवगम्यते ।

कारणाज्ञानविषयं प्रत्यक्षं तावत्—'अहमज्ञः, मामन्यं च न जानामि' इत्यपरोक्षावभासः । अयं तु न ज्ञानप्रागभावविषयः । स हि षष्ठप्रमाणगोचरः । अयं तु अहं सुखीतिवदपरोक्षः । अभावस्य प्रत्यक्ष[गोचर]त्वाभ्युपगमेऽपि अयमनुभवो नात्मनि ज्ञानाभावविषयः ; अनुभववेलायामपि ज्ञानस्य विद्यमानत्वात् ; अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तेश्च । एतदुक्तं भवति—अहमज्ञ इत्यस्मिन् अनुभवे अहमिति आत्मनोऽभावधर्मितया, ज्ञानस्य च प्रतियोगितयाऽवगतिरस्ति वा, न वा । अस्ति चेत्, विरोधादेव न

---

मित्यन्तेनान्वयः । **पञ्चपादिकाविवरणाद्यनुवाद इह । तदुपहितब्रह्मेति** ; अज्ञानविशिष्टब्रह्मेत्यर्थः । वैशिष्ट्यमाश्रयतया वा विषयतया वेत्यन्यदेतत् । **अवस्थाविशेषेणे**त्यस्य **जायत** इत्यत्रान्वयः । तस्य पल्लवाज्ञानमिति तूलाज्ञानमिति च नाम । ननु वक्ष्यमाणप्रत्यक्षानुमानाभ्यां तत्सिद्धावपि तस्य जगदुपादानत्वं न सिद्ध्यतीत्यत्राह **कृत्स्नस्ये**ति । **कारणाज्ञाने**ति । यत् कारणमिष्टम्, तदेवाज्ञानमिति प्रत्यक्षविषयः, नान्यदिति भावः । अज्ञः इत्यनेन आत्माज्ञानापरपर्यायब्रह्माज्ञानग्रहणमिति विशदयितुं **मामित्यादि** तद्विवरणम् । नञुल्लेखात् स्वरसतो भावरूपाज्ञानविषयकत्वादर्शनात् उपपत्त्या तत्समर्थनमारभते **अयंत्विति । षष्ठप्रमाणम्**—अनुपलब्धिः । **अभावस्य प्रत्यक्षत्वाभ्युपगमेपी**ति ; षष्ठप्रमाणस्याभावाख्यस्यापि इन्द्रियवत् प्रत्यक्षकरणत्वाभ्युगमेऽपीति, षष्ठप्रमाणास्वीकारेण अभावरूपप्रमेयस्येन्द्रियजन्यप्रत्यक्षविषयत्वाभ्युपगमेपीति वाऽर्थः । नन्वेकविषयकज्ञानसत्त्वेपि अन्यविषयकज्ञानाभावप्रतीतौ को दोष इत्यत्रानुपपत्तिं विशदयति **एतदि**ति । अहमज्ञ इत्यस्य अहं न जानामीति ह्यर्थः । तत्र प्रतीतौ आत्मा अहमिति धर्मितया भासते ; ज्ञानञ्च प्रतियोगितया । एवं सति कथं ज्ञानाभावः । न भासते चेत्—कथमेवमाकारतेत्यर्थः ।

एवम् अहमज्ञ इत्यनुभवस्यापि ज्ञानत्वात् तस्मिन् सति ज्ञानाभावः कथम् । तदभावे च तदनुभवः कथमित्यपि द्रष्टव्यम् । नं च एकविषयकज्ञानेऽप्यन्यविषयकज्ञानाभावो भवतीति वाच्यम्—अज्ञ इति ज्ञानसामान्याभावस्यैवोक्ततया तदयोगात् । अज्ञ इत्यस्य, मामन्यञ्च न जानामीति विवरणरीत्याऽपि ज्ञानाभावानुभवासंभव एव ; अहमिति धर्मिज्ञानात् मदर्थज्ञानस्य, ज्ञानरूपप्रतियोगिग्रहात् तस्य ज्ञानस्यैव मदन्यतया मदन्यज्ञानस्य च सत्त्वात् ; ज्ञानरूपप्रतियोगिनश्च विषयं विना भानायोगेन मां मदन्यञ्चेत्युक्तविषयाणामपि ज्ञेयतया तज्ज्ञाने सति तज्ज्ञानाभावायोगाच्च । एवमभावज्ञाने प्रतियोगिज्ञानादेः कारणत्वादपि न ज्ञानाभाव इति । अभावज्ञाने धर्मिज्ञानं प्रतियोगिज्ञानञ्च

ज्ञानाभावानुभवसंभवः । नो चेत्, धर्मिप्रतियोगिज्ञानसव्यपेक्षो ज्ञानाभावानुभवः सुतरां न संभवति । ज्ञानाभावस्यानुमेयत्वे अभावाख्यप्रमाणविषयत्वे चेयमनुपपत्तिः समाना । अस्याज्ञानस्य भावरूपत्वे धर्मिप्रतियोगिज्ञानसद्भावेऽपि विरोधाभावात् अयमनुभवो भावरूपाज्ञानविषय एवाभ्युपगन्तव्यः— इति ।

ननु च—भावरूपमप्यज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यते ॥ मैवम्—साक्षिचैतन्यं न वस्तुयाथात्म्यविषयम्; अपि तु अज्ञानविषयम्; अन्यथा मिथ्यार्थावभासानुपपत्तेः । न ह्यज्ञानविषयेण ज्ञानेनाज्ञानं निवर्त्यते इति न विरोधः॥ ननु चेदं भावरूपमप्यज्ञानं विषयविशेषव्यावृत्तमेव साक्षिचैतन्यस्य विषयो भवति । स विषयः प्रमाणा[न]धीनसिद्धिरिति कथमिव साक्षिचैतन्येनास्मदर्थव्यावृत्तमज्ञानं विषयी-

---

कारणम्, तयोरभावे च नाभावानुभव इति सव्यपेक्ष इत्यत्र विवक्षितम्; अभावानुभवः धर्मिविषयकत्वप्रतियोगिविषयकत्वे विना न संभवतीति च । नन्वपरोक्षत्वायोगे परोक्षतैव, अहं मां न जानामीत्यस्यास्तु इत्यत्राह—ज्ञानाभावस्येति । तर्हि ज्ञानाभावरूपपदार्थ एव कथं सिद्ध्यतीति चेन्न—वर्तमानतया ग्रहणायोगेपि अतीततया ज्ञानाभावस्यानुमानादिगम्यत्वात् । **प्रतियोगी**ति । ज्ञानाभाव प्रतियोगीत्यर्थः । **विरोधाभावा**दिति । तस्य तदभावेन साकं विरोधः, नानेनेति भावः ।

ननु भावरूपत्वादज्ञानस्य ज्ञानेनाविरोधे अज्ञाननिवृत्तिः कदापि न स्यात् । अतो यद्विषयकमज्ञानम्, तद्विषयकज्ञानं तन्निवर्तकमिति विरोध एष्टव्यः । प्रकृते च भावरूपमज्ञानमात्मयाथात्म्यविषयकाज्ञानमेव । अहमज्ञ इत्यज्ञानस्य प्रत्यक्षता च तस्य साक्षिभास्यत्वात् । साक्षि च चैतन्यं स्वयम्प्रकाशत्वात् आत्मयाथात्म्यावभासरूपम् । तथाच तस्मिन् सति कथं तदज्ञानमिति शङ्कते **ननु चे**ति । **न वस्तुयाथात्म्यविषय**मिति । स्वयम्प्रकाशतया आत्मरूपवस्त्ववभासरूपत्वेऽपि न तद्याथात्म्यावभासरूपमित्यर्थः । अथवा तस्य स्वयम्प्रकाशत्वेपि वस्तुयाथात्म्यविषयकवृत्तिरूपं तन्न भवति; वृत्तेरेवाज्ञानविरोधित्वमिष्यत इति । **अन्यथा**—याथाम्यविषयकत्वे । स्वरूपात्मकज्ञानस्यापि स्वयम्प्रकाशतया अज्ञानविरोधित्वे अज्ञानप्रसक्त्यभावेन मिथ्याभूतजगत्प्रतीत्यसंभवापत्तेः वृत्तेरेव याथात्म्यविषयकत्वं विरोधित्वञ्चेष्यत इति भावः ।

ननु न जानामीत्यस्य ज्ञानाभावविषयकत्वे भावरूपाज्ञानविषयकत्वे वा, किमिति विषयापेक्षाया वर्तमानत्वात् विषयावच्छिन्नमेवाज्ञानं साक्षिभास्यं वाच्यम् । वस्तुयाथात्म्यमेवाज्ञानविषयः । याथात्म्यञ्च वृत्तिज्ञानविषय इष्यते । वृत्तेश्च प्रमाणजन्यतया स विषयः प्रमाणाधीनसिद्धिकः । यावच्च प्रमाणं तत्र न प्रवर्तते, तावत् तद्विषयवृत्त्यभावात् तस्य विषयस्याभाने तदवच्छिन्नमज्ञानं न साक्षिभास्यम्, विशेषणज्ञानाभावात् । अतः कथम्, अहं मां न जानामीति प्रत्यक्षमिति शङ्कते **ननु चेद**मिति । **विषयविशेषव्यावृत्तं** वस्तुयाथात्म्यरूपविषयावच्छिन्नम् । **प्रमाणाधीनसिद्धिः** प्रमाणजन्यवृत्तिविषयः । **अस्मदर्थव्यावृत्तम्**=आत्मयाथात्म्यावच्छिन्नतया । वस्तुयाथात्म्यविषयकवृत्त्यभावेऽपि

क्रियते ॥ **नैष दोषः । सर्वमेव वस्तुजातं ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषयभूतम् । तत्र जडत्वेन ज्ञाततया सिध्यत एव प्रमाणव्यवधानापेक्षा । अजडस्य तु**

---

स्वयम्प्रकाशं वस्तु स्वरूपत एवाज्ञानविशेषणं भवतीतीष्यत इत्याशयेन परिहरति **नैष** इति । साक्षिविषयविशेषणं वृत्तिज्ञानाभावेपि भासते चेत्, घटादिकमपि भासतामिति शंकां परिहरन् उपपादयति **सर्व**मिति । साक्षिभास्यमेव सर्वम् । परं तत्र प्रत्यग्वस्तु अज्ञानविशेषणतया-अज्ञाततया साक्षिभास्यम्; घटादिकं तु अहं घटज्ञानवानित्येवं ज्ञाने साक्षिभास्ये तद्विशेषणतया–ज्ञाततया तद्भास्यम् । तत्र घटादिजडविषये प्रमाणापेक्षायामपि अज्ञानविशेषणतया स्वयम्प्रकाशात्मभाने न तदपेक्षेति ।

इत्थं भाष्ययोजना च घटादेरज्ञानविषयत्वाभावपक्षेण । **पञ्चपादिका**कृता प्रत्यग्वस्तुविषयकमेवाज्ञानं स्वीकृतम्; न तु घटादिजडविषयकम्; जडस्यापरमार्थतया तद्विषयाज्ञानस्य दोषत्वायोगात्; जडस्य प्रामणप्रसरणसमय एव ज्ञेयतया तदभावकाले कारणाभावादेव तज्ज्ञानाभावसमर्थनसंभवात् जडावारकस्याज्ञानस्यानावश्यकत्वाच्च । आत्मा तु स्वप्रकाश इति तत्र विपरीतभ्रमप्रसक्त्यभावे जगदसिद्ध्या तदाच्छादकमज्ञानमावश्यकमिति । अतो **वस्तुजात**मित्यस्य विभज्य **ज्ञाततयाऽज्ञाततया वे**त्यत्र संगमनमिति ।

अन्योऽपि पक्षः—" जडेषु वस्तुषु तत्स्वरूपावभासं न प्रतिबध्नाति " इत्येतत्पूर्वोत्तरग्रन्थः **पञ्चपादिकाया**मपि जडस्याप्यज्ञानसंबन्धं दर्शयत्येव । अज्ञानस्यानात्मविषये आच्छादकत्वाभावेऽपि तद्विषयकत्वमिष्यत एव । जडं प्रति अज्ञानस्याच्छादकत्वाभावेऽपि घटाद्यवच्छिन्नचैतन्यं प्रति आच्छादकत्वस्वीकारात् घटादेरप्याच्छाद्यकोटिनिविष्टत्वादपि घटादेरज्ञानविषयत्वमक्षतम् । एवं **विवरणव्याख्यानतत्त्वदीपन**मतम् । एतदनुरोधेन **ननु चेद**मित्यादिप्रकृतभाष्ययोजना चैवम्— ननु भावरूपमप्यज्ञानं घटपटादिविषयं वा आत्मयाथात्म्यविषयं वा तत्तद्विषयावच्छिन्नमेव साक्षिभास्यम्; विषयानुपरक्ताज्ञानभानस्यानानुभविकत्वात् । स सर्वोपि विषयः प्रमाणाधीनवृत्तिग्राह्यः आत्मयाथात्म्यस्यापि तथात्वस्योक्तत्वात् । एवञ्च तत्तद्विषयवृत्तिसत्त्वे तदज्ञानं विरोधान्न भवति । वृत्त्यसत्त्वे च विषयाभानात् तत्तदवच्छिन्नाज्ञानं न साक्षिणा भास्येतेति चेन्न-घटं जानामि, आत्मानं जानामीत्येवं सर्वं वस्तु ज्ञाततया साक्षिभास्यम्; एवं घटं न जानामि, मां न जानामीत्येवमज्ञाततयाऽपि । साक्षिभास्यवृत्तिज्ञानविशेषणत्वं तद्भास्याज्ञानविशेषणत्वञ्च सर्वस्याप्यस्त्येव । तत्र वृत्तिज्ञानविशेषणतया भाने प्रमाणापेक्षा । यथा परमाण्वादेरप्रत्यक्षत्वेपि परमाणुज्ञानं मेऽस्तीति मानसप्रत्यक्षविषयज्ञानद्वारा परमाणोरपि प्रत्यक्षभास्यत्वं तार्किकेष्टम्, तथा साक्ष्यभास्यस्यापि घटादेर्वृत्तिविशेषणतया तद्भास्यत्वमिति तत्र प्रमाणापेक्षा । अज्ञानविशेषणतया कस्यचिद्भाने च नैव प्रमाणापेक्षेति ।

भाष्ये **प्रमाणानधीनसिद्धि**रिति पाठश्चेत्, प्रमाणाधीनसिद्धेरिदानीमभावात् कथमज्ञानविशेषणत्वमित्यर्थः । प्रमाणाधीनसिद्धिरिति पाठः पञ्चपादिकाविवरणानुगुणः । प्रमाणेनैव वेद्यः स

प्रत्यग्वस्तुनः स्वयंसिध्यतो न प्रमाणव्यवधानापेक्षेति सदैवाज्ञानस्य व्यावर्तकत्वेनावभासो युज्यते। तस्मात् न्यायोपबृंहितेन प्रत्यक्षेण भावरूपमेवाज्ञानं प्रतीयते ॥

तदिदं भावरूपमज्ञानमनुमानेनापि सिध्यति --विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त–स्वविषयावरण–स्वनिवर्त्य–स्वदेशगतवस्त्वन्तरपूर्वकम्; अप्रकाशि-

---

विषयः; प्रमाणञ्च नेदानीमिति भावः। अस्मदर्थव्यावृत्तमिति। प्रकृताभिप्रायेण प्रयुक्तमस्मदर्थपदं जडावच्छिन्नाज्ञानभानायोगस्यापि शंकितव्यत्वात् जडस्याप्युपलक्षकम्। अस्मत्संबन्धी अर्थः=तद्या-थात्म्यं तत्र कल्पितो घटादिश्चेति वा तदर्थः। ज्ञाततयेति। ज्ञाततायाः ज्ञानजन्यत्वात् वृत्त्यभावे ज्ञाततया ग्रहणमशक्यम्; अज्ञाततायाश्च कारणनिरपेक्षत्वात न तत्र प्रमाणाद्यपेक्षेति। तत्रेत्यादेरय-मर्थः—जडमजडं वा अज्ञानविशेषणतया प्रमाणनिरपेक्षमेव साक्षिभास्यम्। ज्ञाततया सिद्धयत्त्वे, साक्षिभास्यत्वे जडविषये प्रमाणापेक्षा। अजडविषये अयमहमस्मि, अहं मां जानामीति भानं वृत्तिं विना साक्षिमात्रेणापि भवति; स्वरूपस्वयम्प्रकाशत्वस्येष्टत्वात्। याथात्म्यभाने तु स्याद् वृत्त्य-पेक्षा। एवं ज्ञाततया भाने वैषम्यसत्त्वेपि अज्ञानविशेषणतयाऽवभासः सदैव युज्यते, कारणापेक्षा-विरहात्। अतो भावरूपाज्ञानपक्षे मामन्यञ्च न जानामीति अज्ञानविशेषणतया आत्मनः अन्यस्य सर्वस्य च भानं घटत एवेति।

एवं प्रत्यक्षविषये स्थाणुर्वा पुरुषो वेति विवादे उपपत्त्याऽन्यतरविषयकत्वनिर्णयवत् इहापि उपपत्तिसहितेन अहमज्ञ इति प्रत्यक्षेण भावरूपाज्ञाननिर्णय इति साधितम्। अथानुमा-नमपि विवरणोक्तमाह तदिदमिति। विवादाध्यासितं विवादगतम्; प्रकृतसाध्यवत्त्वविवाद-विषयभूतमित्यर्थः। सर्वं प्रमाणज्ञानं न पक्षः, किंतु तत्रतत्र प्रथमज्ञानमात्रमिति ज्ञापनायेदं दलम्। द्वितीयादिज्ञानस्यापि ग्रहणे तु तत्र साध्याभावाद् बाधः, हेत्वभावात् भागासिद्धिश्च स्याताम्। प्रमाणज्ञानं प्रमाभूतज्ञानमित्यर्थः। शुक्तिरजतज्ञानादिरूपभ्रमस्य अज्ञाननिवर्तकत्वानङ्गीकारात् तद्वारणाय प्रमाणेति। शुक्तिरजतवत् जगतोऽपि मिथ्यात्वात् तज्ज्ञानमप्यज्ञाननिवर्तकं न भवेदिति चेत्—इष्टमिदं जडविषयकमज्ञानं नास्तीति वदतामद्वैतिनाम्। तदा च अखण्डाकारब्रह्मतत्त्वज्ञान-रूपवृत्तिमात्रं पक्षः स्यात्। घटादिविषयेऽप्यज्ञानमस्तीति प्रागुक्तमते च तत्प्रमाऽपि पक्ष एव। साध्यञ्च वस्त्वन्तरं भावरूपाज्ञानम्। ज्ञानप्रागभावमादाय सिद्धसाधनवारणाय व्यतिरिक्तान्तं तद्वि-शेषणम्। स्वोत्पादकादृष्टम्, स्वप्रतिबन्धकादृष्टञ्चादाय तद्दोषापत्तिरिति क्रमेण आवरणत्व-निवर्त्य-त्वरूपविशेषणे। घटप्रमया पुरुषनिष्ठाज्ञानस्येव घटगताया अज्ञातताया अपि निवर्तनात् सिद्धसाधन-मेवेति स्वदेशगतत्वरूपं चतुर्थं विशेषणम्। स्वदेशगतं स्वसमानाधिकरणम्। प्रागभावातिरि-क्तत्वेऽप्यभावान्तरं स्यादिति भ्रमवारणाय वस्त्वन्तरेति। प्रतियोगिज्ञाननिरपेक्षत्वादिरूपवैलक्षण्य-ज्ञापनाय अन्तरेति निर्देशः। अर्थप्रकाशकत्वरूपहेतोर्धारावाहिद्वितीयादिज्ञानेष्वपि सत्त्वात् प्रथम-ज्ञानेनैवाज्ञानस्य निवृत्ततया तेषामज्ञानानिवर्तकत्वात् तत्र व्यभिचार इति अप्रकाशितेति अर्थविशेष-

तार्थप्रकाशकत्वात्; अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत् इति।

आलोकाभावमात्रं वा रूपदर्शनाभावमात्रं वा तमः; न द्रव्यान्तरम् (द्रव्यम्)। तत् कथं भावरूपाज्ञानसाधने निदर्शनतयोपन्यस्यत इति चेत्—उच्यते। बह(हु)लत्वविरलत्वाद्यवस्थायोगेन रूपवत्तया चोपलब्धेर्द्रव्यान्तरमेव तमः— इति निरवद्यमिति—अत्रोच्यते—

"अहमज्ञः, मामन्यं च न जानामि" इत्यत्रोपपत्तिसहितेन केवलेन च प्रत्यक्षेण न भावरूपमज्ञानं प्रतीयते। यस्तु ज्ञानप्रागभावविषयत्वे विरोध उक्तः, स हि भावरूपाज्ञानेऽपि तुल्यः। विषयत्वेनाश्रयत्वेन चाज्ञानस्य व्यावर्तकतया प्रत्यगर्थः प्रतिपन्नो वा, अप्रतिपन्नो वा। प्रतिपन्नश्चेत्—तत्स्वरूपज्ञाननिवर्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने कथमिव तिष्ठति? अप्रतिपन्नश्चेत्—व्यावर्तकाश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत? ॥

---

णम्। उदाहरणमाह अन्धकार इति। प्रभायां साध्यसंगमनं वस्त्वन्तरपदेनान्धकारग्रहणेन कार्यम्। द्वितीयादिप्रभायाः, आलोकमध्ये प्रथमोत्पन्नायाश्च प्रभायाः वस्त्वन्तरनिवर्तकत्वाभावात् ईदृशदृष्टान्तानुधावनम्।

ननु दृष्टान्ते साध्यवैकल्यम्, तमसोऽभावरूपत्वादित्यत्राह आलोकेति। "भाऽभावस्तमः" इति वैशेषिकसूत्रे। तद्भाष्यव्याख्याता कन्दलीकारः रूपदर्शनाभावस्तम इति मेने। आलोके सत्यपि अन्धादेरन्धकारानुभवात् रूपदर्शनाभावादरणम्। चाक्षुषदर्शनं सर्वं नियमेन रूपविषयकम्। रूपदर्शनमेव रूपिरूपैकार्थसमवेतादिदर्शनरूपं भवति। तादृशस्य रूपदर्शनस्य यत्र देशेऽभावः, तत्र तमः। मात्रपदं सर्वसंमतैतदतिरिक्तं भावरूपं न कल्प्यमिति ज्ञापनाय। प्रथमपक्षे स्वप्रागभावव्यतिरिक्तत्वमपि नास्ति। द्वितीये वस्तुत्वं नास्ति। न भाव इति वक्तव्ये न द्रव्यान्तरमिति कथनं मीमांसकैर्द्रव्यत्वद्रव्यान्तरत्वयोः साधितत्वात तथानुवादाशयेन। बहलत्वं निबिडत्वम्। आदिना विभक्तत्वसंयुक्तत्वपरत्वापरत्वक्रियावत्त्वग्रहणम्। रूपस्यावस्थानन्तर्भावात् पृथक्करणम्; प्रथमप्रतीततया वा। द्रव्यमेवेति वक्तव्ये द्रव्यान्तरमेवेति कथनं क्लृप्तद्रव्यवैलक्षण्यादद्रव्यमिति शङ्कानुन्मेषाय। नेदम्, 'तमः परे देव एकीभवती'त्युक्तं मूलतत्त्वम्, स्थूलतमस्त्वात्। अथापि तत्कार्यपृथ्वीरूपभूतपरिणामविशेष इति भावः। एवं भावान्तराभाववादितया अधिकरणात्मकद्रव्यत्वमुच्यत इत्येव न; किंतु अन्यदेवेति च ज्ञाप्यते अन्तरपदेन। सिद्धान्तेऽपीदं श्रुतिप्रामाण्यादेवं द्रव्यत्वेनैव मतमिति ज्ञापनाय एवकारः।

एवमविद्यायां प्रत्यक्षमनुमानञ्च संप्रति दर्शिते। मिथ्याभूतस्य मिथ्योपादानकत्वमिति युक्तिरपि प्रत्यक्षानुमानसिद्धस्योपादानत्वसिद्ध्यर्थं प्राक् दर्शिता। एतत्सर्वनिरसनानन्तरमेव महापूर्वपक्षावसरोपन्यस्तश्रुतितदर्थापत्तिरूपप्रमाणशोधनं कार्यमिति प्रथमत इह प्रतिवक्तुमारभते अत्रोच्यत इति। केवलेन चेति। यथा केवलं न साधकम्, तथोपपत्तिसहितमपीति दृष्टान्तीकरणायेदम्। व्यावर्तकाश्रयविषयज्ञानशून्यमिति; व्यावर्तकौ यौ आश्रयविषयौ तयोर्ज्ञानेन सहावर्तमान-

अथ विशदस्वरूपावभासोऽज्ञानविरोधी ; अविशदस्वरूपं तु प्रतीयत इति आश्रयविषयज्ञाने सत्यपि नाज्ञानानुभवविरोधः—इति—हन्त तर्हि ज्ञानप्रागभावोऽपि विशदस्वरूपविषयः ; आश्रयप्रतियोगिज्ञानं तु अविशदस्वरूपविषयमिति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात्।

भावरूपस्याज्ञानस्यापि ह्यज्ञानमिति सिध्यतः प्रागभावसिद्धाविव सापेक्षत्वमस्त्येव। तथा हि—अज्ञानमिति ज्ञानाभावः, तदन्यः, तद्विरोधी वा। त्रयाणामपि तत्स्वरूपज्ञानापेक्षा

---

मित्यर्थः। विशिष्टज्ञानस्य विशेषणविशेष्यग्रहणमन्तरेणानुदयादिति भावः। **कथमनुभूयेतेति।** अज्ञाततया साक्षिभास्यतायां विषयज्ञानं नापेक्षितमित्युक्तं न युक्तम् ; एवं तर्हि अभावप्रतियोगिज्ञानविशेषणतया विषयभाने तज्ज्ञानं नापेक्षितमित्येव कल्पनासंभवात् अतिरिक्तवस्तुकल्पनागौरवस्यायोगात्। यदि च घटपटादीनां ज्ञानाभावेऽप्यज्ञानविशेषणतया भानम्, देशान्तरकालान्तरवर्तिसर्वपदार्थविशेषनिर्देशपूर्वकं तदज्ञानव्यवहारः सर्वकर्तव्यः स्यात्। वस्तुभानेऽपि शब्दाज्ञानादव्यवहार इति तु न ; वाचकशब्दानामप्यज्ञानविशेषणतया भानात् तत्प्रयोगापत्तेः। अतो ज्ञानविशेषणत्व इवाज्ञानविशेषणत्वेऽपि तत्तद्ग्रहणापादनं सममेवेति। ज्ञानमावश्यकमिति स्वीकृत्य कृतं प्रकारान्तरेण दोषपरिहारमाशङ्क्य तदपि तुल्यमित्याह **अथेति।** ननु आश्रयभानमविशदरूपविषयकमस्तु। अज्ञानविशेषणीभूतस्य विषयस्य केन रूपेण भानम् ? अविशदस्वरूपेणेति चेत्—तर्हि कथं तद्विषयाज्ञानम्। कथञ्चाविशदविषयकाज्ञानस्य विशदावभासेन पश्चान्निवृत्तिरिति चेत्—उच्यते—प्रतीतिविषयाकारभिन्नस्याकारस्य प्रतीतिविषयभिन्नत्वेन रूपेण विना स्वरूपतोऽज्ञानमेव वस्तुयाथात्म्याज्ञानम्। एवञ्च भिन्नत्वानवच्छिन्नाकारनिष्ठविषयताकाज्ञानवानहमिति वक्तव्यम्। तादृशविषयताकज्ञानाभाववानहमित्यपि तुल्यरीत्या सुवचमिति वृथैवाज्ञानकल्पनेति भाष्यार्थः। शेषं जिज्ञासादृष्टान्तीकरणपूर्वकपरिमलोक्तिखण्डनावसरे असत्परमार्थभूषणे द्रष्टव्यम्। **विशदस्वरूपविषयः** विशदस्वरूपविषयकज्ञानैकनिवर्त्यः। **आश्रयेति।** अहमित्याश्रयस्य ज्ञानम् अविशदतद्विषयकम् ; यत्किञ्चिद्रूपावच्छिन्नतद्विषयकमिति यावत्। मां न जानामीति मज्ज्ञानरूपस्य प्रतियोगिनो ज्ञानमपि अविशदमदंशावच्छिन्नज्ञानविषयकम् ; प्रतीतिविषयाकारभिन्नत्वानवच्छिन्ना या भिन्नाकारनिष्ठा विषयता तन्निरूपकज्ञानस्य प्रतियोगितया तादृशज्ञानविषयकमिति यावत्। मामित्यस्मदर्थे ज्ञातव्या आकाराः ज्ञातभिन्नत्वरूपेणैव गृह्यन्ते, न तु स्वरूपत इति तादृशज्ञानाभाववानहमिति ज्ञानं नानुपपन्नमिति भावः। यत्र तु घटविषयकस्मरणात्मकज्ञाने सत्यपि घटसाक्षात्काराभाववानहमिति ज्ञानम्, तत्र साक्षात्कारस्याभावेपि साक्षात्काररूपप्रतियोगिस्मरणं सुलभमिति न विरोधगन्धोऽपि। **अन्यत्राभिनिवेशात्**—अभिनिवेशं विना। तद्विषयत्वमेव विशेष इति।

एवं तावत् भावरूपाज्ञानस्य स्वरूपतो भानेऽपि विषयाद्यवच्छिन्नतया भानं ध्रुवमिति ज्ञानाभावतौल्यमुक्तम्। अथ तस्याज्ञानस्य ज्ञानघटिततयैव भानमेव वस्तुतोऽस्तीति तत्कल्पनावकाशलेशोऽपि निरभिनिवेशस्य न भवतीत्याह **भावरूपस्येति। वेति।** 'तदन्यतद्विरुद्धतदभावेषु नञ्'

अवश्याश्रयणीया । यद्यपि तमस्स्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते—तथाऽपि प्रकाशविरोधीत्यनेनाऽऽकारेण प्रतिपत्तौ प्रकाशप्रतिपत्त्यपेक्षाऽस्त्येव । भवदभिमताज्ञानं न कदाचित् स्वरूपेण सिध्यति ; अपित्वज्ञानमित्येव । तथा सति ज्ञानाभाववत् तदपेक्षत्वं समानम् । ज्ञानप्रागभावस्तु भवताऽप्यभ्युपगम्यते, प्रतीयते चेत्युभयाभ्युपेतो ज्ञानप्रागभाव एव 'अहमज्ञो मामन्यं च न जानामि' इत्यनुभूयत इत्यभ्युपगन्तव्यम् ।

नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च न संभवति, स्वानुभवस्वरूपत्वात् ॥ स्वानुभवस्वरूपमपि तिरोहितस्वरूपमज्ञानमनुभवतीति चेत्—किमिदं तिरोहितस्वरूपत्वम् ? अप्रकाशितस्वरूपत्वमिति चेत्—स्वानुभवस्वरूपस्य कथमप्रकाशितस्वरूपत्वम् ? स्वानुभवस्वरूपस्याप्यन्यतोऽप्रकाशितस्वरूपत्वमुपपद्यत इति चेत्—एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वात् अन्यतः स्वरूपनाश एव स्यादिति पूर्वमेवोक्तम् ।

किंच—ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सत् ब्रह्म तिरस्करोति, ब्रह्म तिरस्कृत्य स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणम् ॥

---

इति हि स्मरणम् । **न कदाचिदिति** । न च मुग्धोऽस्मीति मोहरूपेण सिद्ध्यतीति वाच्यम्—मोहो विपरीतज्ञानमज्ञानञ्चेति द्विरूप इति तत्र प्रथमवारणायाज्ञानमित्येव ज्ञेयत्वात् । अज्ञानिनस्तन्निवर्तकज्ञानार्थप्रवृत्त्या ज्ञानेच्छोत्पत्तये ज्ञानज्ञानस्यावश्यकत्वाच्च । **तथासतीति** ; तत **इत्यर्थः** । **अभ्युपगम्यते** । ज्ञानोत्पत्त्यभ्युपगमे पूर्वं तदभावस्येष्टत्वादिति भावः ।

एवं तावद् अज्ञानस्याभावत्वे वा भावत्वे वा तदनुभवासंभवरूपदोषतत्परिहारौ समाविति अतिरिक्तकल्पनागौरवमेव परमते इत्युक्तम् । अथ तन्मत एवाज्ञानानुभवासंभव इत्याह **नित्यमुक्तेति** । अज्ञानानुभवस्य हेयस्य बन्धरूपस्य मुक्ते कथं संभवः ? स्वप्रकाशरूपे स्वाज्ञानानुभवः कथम् ? चैतन्यैकस्वरूपे अज्ञानानुभवितृत्वञ्च कथमित्यर्थः । **स्वानुभवस्वरूपत्वात्** अपरमार्थविषयानुभवविरोधिस्वानुभवरूपतायाः नित्यत्वादित्यर्थः । तेन पूर्वोक्तसर्वानुपपत्तिरत्र गर्भिता । शंकते **स्वेति** । किमिदं तिरोधानम्, सर्वप्रकाशनिवर्तनं वा, अवैशद्यावहत्वं वा । तिरोधान—अज्ञानानुभवयोश्च क्रमिकत्वं वा यौगपद्यं वा । क्रमिकत्वे, अनुभवो वा पूर्वम्, तिरोधानं वेति विकल्पान् हृदि कृत्वा दूषयितुमारभते **किमिदमिति** । आद्यपक्षमुद्भावयति **अप्रकाशितेति** । **स्वानुभवस्वरूपस्येति** ; अनुभवस्याऽऽद्यन्तरहितत्वादित्यर्थः । **अन्यतोऽप्रकाशितस्वरूपत्वमिति** ; अन्याधीनः प्रकाशाभाव इत्यर्थः । नन्वस्तु अवैशद्यावहत्वं तिरोधानमित्यत्र तद्दूषणमुपरि करिष्यन् तदस्तीति कृत्वा क्रमिकत्वादिविकल्पदूषणमारभते **किञ्चेति** । पूर्वं **तिरोहितस्वरूपं अज्ञानमनुभवती**त्युक्तत्वात् तिरोधानं पूर्वमिति सिद्धम् । अज्ञानस्यापरमार्थतया, प्रतीतेः पूर्वमसिद्ध्या तदनुभवः पूर्वमिति वाच्यम् । अतोऽन्योन्याश्रय इत्यर्थः ।

अनुभूतमेव तिरस्करोतीति चेत् ,–यदि अतिरोहितस्वरूपमेव ब्रह्म अज्ञानमनुभवति, तदा तिरोधानकल्पना निष्प्रयोजना स्यात् ; अज्ञानस्वरूपकल्पना च। ब्रह्मणोऽज्ञानदर्शनवत् अज्ञानकार्यतयाऽभिमतप्रपञ्चदर्शनस्यापि संभवात् । किंच–ब्रह्मणोऽज्ञानानुभवः किं स्वतः, अन्यतो वा ? स्वतश्चेत्–अज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानिर्मोक्षः स्यात् ; अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवस्वरूपत्वेन, मिथ्यारजतबाधकज्ञानेन रजतानुभवस्यापि निवृत्तिवत् , निवर्तकज्ञानेनाज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा । अन्यतश्चेत् , किं तदन्यत् ? अज्ञानान्तरमिति चेत्—अनवस्था स्यात् । ब्रह्म तिरस्कृत्यैव स्वयमनुभवविषयो भवतीति चेत्—तथा सति इदमज्ञानं काचादिवत् स्वसत्तया ब्रह्म तिरस्करोतीति ज्ञानबाध्यत्वमज्ञानस्य न स्यात् ॥

अथेदमज्ञानं स्वयमनादि, ब्रह्मणः स्वसाक्षित्वं ब्रह्मस्वरूपतिरस्कृतिं च युगपदेव करोति ; अतो नानवस्थादयो दोषा इति—नैतत् ; स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात् । हेत्वन्तरेण तिरस्कृतमिति चेत्—तर्ह्यस्यानादित्वमपास्तम् । अनवस्था च पूर्वोक्ता । अतिरस्कृतस्वरूपस्यैव साक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यात् ॥

अपि च—अविद्यया ब्रह्मणि तिरोहिते तद् ब्रह्म न किंचिदपि प्रकाशते, उत किंचित् प्रकाशते ? पूर्वस्मिन् कल्पे, प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽप्रकाशे तुच्छतापत्तिरसकृदुक्ता । उत्तरस्मिन् कल्पे, सच्चिदानन्दैकरसे ब्रह्मणि कोऽयमंशस्तिरस्क्रियते ; को वा प्रकाशते ? निरंशे निर्विशेषे प्रकाशमात्रे वस्तुनि आकारद्वयासंभवेन तिरस्कारः प्रकाशश्च युगपन्न

---

अनुभवपूर्वत्वेन तद्दोषपरिहारे दोषमाह **अनुभूतमेवे**ति । तिरोधानपूर्वत्वेन तत्परिहारे च वक्ष्यति **ब्रह्म तिरस्कृत्यैवे**ति । **प्रपञ्चदर्शनस्यापी**ति । अपरमार्थस्याज्ञानस्य दर्शनवत् तद्विना प्रपञ्चदर्शनमेव प्रथमं भवितुमर्हति । न चाज्ञानाभावे प्रपञ्चानुत्पत्त्या कथं तद्दर्शनमिति शंक्यम्—अनुत्पन्नस्याप्यज्ञानस्य दर्शनात् ; काल्पनिकस्य प्रपञ्चस्याज्ञानस्येव हेत्वनपेक्षत्वसंभवाच्च । अतोऽज्ञानोपादानकत्वमप्ययुक्तम् । न च दोषाभावे कथं प्रपञ्चकल्पनेति वाच्यम्—दोषाभावेऽप्यज्ञानस्य कल्पनवदुपपत्तेः ॥ तिरोधानात् पूर्वतया तदनधीनः अज्ञानानुभवः किं स्वाभाविकः, उतान्याधीन इति विकल्प्य दूषयति **किञ्च ब्रह्मण** इति । स्वाभाविकस्यापि निवर्तकज्ञानेन निवृत्तिस्वीकारे दोषमाह **अनुभूती**ति । **काचादी**ति । **काचो** दृष्टिमान्द्यहेतुर्नेत्रदोषः ।

यौगपद्यपक्षो न संभवतीति वक्तुं तमुद्भावयति **अथे**त्यादिना । 'अनुभूतं सत् तिरस्करोती'ति पक्षेऽप्येष दोषो भाव्यः । **एकतानता चे**ति चकारेणानिर्मोक्षादिसत्त्वसमुच्चयः । एवमवैशद्यावहत्वरूपं तिरोधानमभ्युपगम्य दूषणमुक्तम् ; अथ तदेव दूषयितुमाह **अपि चे**ति । **सच्चिदानन्दैकरस** इति । सच्चिदानन्देति पदत्रयप्रयोगेऽपि **एकरसत्वस्य**—स्वरूपमात्रसारकत्वस्य भवदभिमतत्वात् अंशो ना-

संगच्छेते ॥ अथ सच्चिदानन्दैकरसं ब्रह्म अविद्यया तिरोहितस्वरूपमविशदमिव लक्ष्यत इति ॥ प्रकाशमात्रस्वरूपस्य विशदताऽविशदता वा किंरूपा? एतदुक्तं भवति–यः सांशः सविशेषः प्रकाशविषयः, तस्य सकलावभासो विशदावभासः, कतिपयविशेषरहितावभासश्चाविशदावभासः। तत्र य आकारोऽप्रतिपन्नः, तस्मिन्नंशे प्रकाशाभावादेव प्रकाशावैशद्यं न विद्यते। यश्चांशः प्रतिपन्नः, तस्मिन्नंशे तद्विषयप्रकाशो विशद एव। अतः सर्वत्र प्रकाशांशे अवैशद्यं न संभवति। विषयेऽपि, स्वरूपे प्रतीयमाने तद्गतकतिपयविशेषाप्रतीतिरेवावैशद्यम्। तस्मादविषये निर्विशेषे प्रकाशमात्रे ब्रह्मणि, स्वरूपे प्रकाशमाने [तद्गत] कतिपयविशेषाप्रतीति (षाप्रतिपत्ति) रूपावैशद्यं नाम अज्ञानकार्यं न संभवति।

अपिच—इदमविद्याकार्यमवैशद्यं तत्त्वज्ञानोदयात् निवर्तते, न वा। अनिवृत्तौ अपवर्गाभावः। निवृत्तौ च वस्तु किंरूपमिति विवेचनीयम्। विशदस्वरूपमिति चेत्; तत् विशदस्वरूपं प्रागस्ति, न वा। अस्ति चेत्, अविद्याकार्यमवैशद्यं तन्निवृत्तिश्च न स्याताम्। नो चेत्, मोक्षस्य कार्यतया अनित्यता स्यात्।

अस्याज्ञानस्याश्रयानिरूपणादेवासंभवः (114) पूर्वमेवोक्तः। अपि च–अपरमार्थदोष-

---

स्तीति भावः। **किंरूपेति**। विशदतया वस्तुविषयकत्वमेव प्रकाशे वैशद्यम्; अविशदतया वस्तुविषयकत्वमेव च तत्रावैशद्यम्; न तु साक्षादिति भावः। तदेवोपपादयति **एतदिति**। ज्ञाने साक्षात्कारित्वतदभावरूपवैशद्यावैशद्ये स्तः; परन्तु न तदवैशद्यं तिरोधानरूपमिति तत् उपेक्षितम्। **सांश** इत्यंशपदं नावयवमात्रपरम्, धर्मादिपरमपीति ज्ञापनाय **सविशेष** इति विवरणम्। अतएवोपरि अंशपदत्यागः। **ब्रह्मणीत्यस्य न संभवतीत्यत्र, प्रकाशमाने** इत्यस्य च **अप्रतीतीत्यत्रान्वयः**। ननु ब्रह्मणि जडव्यावृत्तिपरिच्छिन्नानन्दव्यावृत्तिमुखाः धर्माः अविद्याबलान्न ज्ञाता इत्यवैशद्यम्। एवं तेषां धर्माणां ब्रह्मस्वरूपैक्यमपि न गृहीतमित्यवैशद्यमिति चेन्न–तर्हि एतदवैशद्यमविद्यानिवृत्तौ निवर्तत इति वाच्यम्—तदा च निवृत्ताविद्यस्य व्यावृत्त्यादिधर्मग्रहणमवर्जनीयमिति कथमद्वैतपरिशेषः। यदि तत्तदग्रहणरूपमवैशद्यं मुक्तावपि, तर्हि तत् अविद्याकृतमिति कथम्। ग्रहणकारणाभावादेवाग्रहणसंभवे अविद्यायाः कथं तत्र हेतुत्वमिति। एवम्भूतार्थमभिप्रेत्याह **अपिचेदमिति**।

एवमहमज्ञ इत्यज्ञानानुभवासंभव उक्तः। अत्र–ज्ञानाभावरूपत्वे स्वप्रकाशेऽपि वृत्तिज्ञानाभावविषयकतया निर्वाहः स्यादपि। भावरूपाज्ञानं तु स्वप्रकाशनिवर्त्यम्। ज्ञाने जाते तद्विषयकवृत्तिज्ञानाभावसंभवस्येव अज्ञानसंभवस्य दुर्वचत्वात्। 'न जातु कश्चित् नाहमिति विपर्येति, न वा अहमस्मि न वेति संदेग्धि' इति आत्मस्वयम्प्रकाशता भवत्सूत्रभाष्येऽप्युपपादिता। संदेहविपर्ययविरोधिनि स्वप्रकाशे सति अज्ञानमस्तीति न हि मन्तुं शक्यम्। अतो भावस्यैवानुभवो न घटत इत्यप्यभिप्रेतम्। अनुभवायोगवत् अज्ञइति पदोपात्ताश्रयत्वायोगोऽप्यस्ति। परन्तु स आश्रयानुपपत्तिनिरूपणे दर्शित इत्याह **अस्येति**। प्रत्यक्षेणाज्ञानस्यापरमार्थत्वेन रूपेणाग्रहणात् नापरमार्थत्वसिद्धिः।

मूलभ्रमवादिना निरधिष्ठानभ्रमासंभवोऽपि दुरुपपादः, भ्रमहेतुभूतदोषदोषाश्रयत्ववत् अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः। ततश्च सर्वशून्यत्वमेव स्यात् ॥

यदुक्तमनुमानेनापि भावरूपमज्ञानं सिध्यतीति—तदयुक्तम्। अनुमानासंभवात् ॥ ननूक्तमनुमानम् ॥ सत्यमुक्तम्। दुरुक्तं तु तत्; अज्ञानेऽप्यनभिमताज्ञानान्तरसाधनेन विरुद्धत्वात् हेतोः। तत्राज्ञानान्तरासाधने हेतोरनैकान्त्यम्। साधने च, तदज्ञानमज्ञानसाक्षित्वं निवारयति। ततश्चाज्ञानकल्पना निष्फला स्यात्।

---

अन्यथा ब्रह्मापि शाब्दवृत्तिज्ञानविषयोऽपरमार्थः स्यात्। स्वतःप्रामाण्याद्धि ज्ञानस्य, विषयाणां पारमार्थ्यमेव। भ्रमजनकदोषरूपत्वाच्चाज्ञानं परमार्थ एव स्यादिति नापारमार्थ्यकल्पना। अपरमार्थस्यापि दोषस्य भ्रमहेतुत्वे निर्दोषस्यापि पुंसः सदोषत्वेन गृहीतत्वे दोषाधीनभ्रमोत्पत्त्यापत्तिः। दोषापारमार्थ्यवत् अधिष्ठानापारमार्थ्यस्यापि स्वीकारसंभवात् सर्वशून्यत्वप्रसंगश्च। तस्मादज्ञानस्य भावत्वदोषत्वोपादानत्वानामिव अपारमार्थ्यस्यापि, उपपत्त्या साधनमसंभवीत्याशय्याह **अपिचेति**।

एवमज्ञानप्रत्यक्षं विचारितम्। एतेन, न किञ्चिदहमवेदिषमिति सुषुप्तोत्थितस्य परामर्शोऽपि न भावरूपाज्ञानविषयक इति सिद्धमेव; अस्य स्मरणरूपत्वे सौषुप्तिकसाक्षिकृतभानरूपस्यापि तन्मूलभूतप्रत्यक्षस्य अहं मामन्यञ्च न जानामीत्याकारस्यैव वक्तव्यत्वात्। अथ परोपन्यस्तमनुमानं निरसितुमाह **यदुक्तमिति**। **अज्ञाने....**इति। अज्ञानविषयकाज्ञानान्तरसाधनेनेत्यर्थः। **विरुद्धत्वादिति**। अभ्युपेतसिद्धान्तविरोधिहेतुवचने विरुद्धत्वं **न्यायसूत्रे** प्राचामिष्टम्। अत इह साध्याभावसाधकहेतुत्वरूपविरुद्धत्वाभावेऽपि न क्षतिः। एतत्सूचनायैव **अनभिमतेति** पदम्। एतदनुमानजन्यानुमितेर्विषयः अज्ञानमेव; तस्यैव साध्यत्वाभिमतेः। तदादायैवाप्रकाशितार्थप्रकाशकत्वमेतदनुमितेर्वक्तव्यम्। अतः स्वविषयभूताज्ञानावारकमज्ञानमन्यदापतति। अत्रानुमितौ हेतुमत्यां साध्याभावे व्यभिचारः। साध्यसत्त्वे चोक्तं विरुद्धत्वम्। अज्ञानावरणमज्ञानमनभिमतमित्येतदुपपादयति **साधने चेति**। प्रथमाज्ञानप्रकाशकत्वं यत् चैतन्यस्य तन्निवारकमेव द्वितीयाज्ञानं स्यादित्यर्थः। न चैवं साक्षिप्रकाशितत्वादेव तत्राप्रकाशितार्थप्रकाशकत्वरूपहेतुरपि नास्तीति न व्यभिचार इति वाच्यम्-तथासति विवादाभावादनुमानायोगात्। न चानुमानस्य ज्ञात एवाज्ञाने भावत्वसाधन एव पर्यवसानमिति शंक्यम्—यद्वस्तु प्रमाणान्तरतो निश्चितम्, तत्रैव विशेषणमात्रसाधनात् विशिष्टसाधनं नेष्यत इति युक्तम्। प्रमाणान्तरगृहीततया निश्चितादन्यत्र विशेषणोक्तौ तु विशिष्टसाधनमेव। अज्ञानपक्षीकारे च, 'आत्मा न सर्वज्ञः' इत्यनुमाने **न्यायकुसुमाञ्जल्युक्त**दूषणन्यायोऽनुसंधेयः। तथा च अहमज्ञ इत्यादौ ज्ञानाभावभानस्य सम्यगुपपादितत्वेन ज्ञातमज्ञानमभाव एवेति तत्र भावत्वसाधने बाधात् अनुमानमहिम्नैवापूर्वमज्ञानं साधनीयमिति तत्राप्रकाशितार्थप्रकाशकत्वस्यावश्यम्भाव इति। **निष्फला स्यादिति**। अज्ञानमज्ञातञ्चेत् असिद्धमेव; अप्रतीतत्वात्। असिद्धाच्च कथं कार्यमिति किमनेनानुमानेनेति। ननु हेतुरनेकान्त इत्यनेन किं विवक्षितम्? न तावदज्ञानासिद्धिः; हेतुजन्यानुमितावप्रकाशिता-

दृष्टान्तश्च साधनविकलः; दीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात्। सर्वत्र ज्ञानस्यैव हि प्रकाशकत्वम्; सत्यपि दीपे ज्ञानेन विना विषयप्रकाशाभावात्। इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव; न प्रकाशकत्वम्। प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव। प्रकाशकज्ञानोत्पत्तौ व्याप्रियमाणचक्षुरिन्द्रियोपकारकहेतुत्वमपेक्ष्य दीपस्य प्रकाशकत्वव्यवहारः। नास्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेन दीपप्रभा निदर्शिता, अपि तु ज्ञानस्येव(स्यैव) स्वविषयावरणनिरसनरूप(पूर्वक)प्रकाशकत्वमङ्गीकृत्येति चेन्न—न हि विरोधिनिरसनमात्रं प्रकाशकत्वम्; अपि त्वर्थपरिच्छेदः; व्यवहारयोग्यतापादनमिति यावत्। तच्च ज्ञानस्यैव। यद्युपकारकाणामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकृतम्, तर्हीन्द्रियाणामुपकारकतमत्वेनाप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम्। तथा सति तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात् हेतोरनैकान्त्यमित्यलमनेन।

---

ज्ञानरूपार्थप्रकाशकत्वमुपपाद्यैवानैकान्त्योक्तेरिति चेन्न—अज्ञानानुमितेः अज्ञानावारकाज्ञानपूर्वकत्वाभावेऽप्यप्रकाशितप्रकाशकत्वमिच्छता साध्यं विनापि हेतुरिष्ट इत्यनया सरण्या हेतुरप्रयोजक इत्येव प्रतिपादनात्। किञ्च यस्य यद्विषयकमज्ञानम्, तत् सर्वं सर्वदा प्रकाशितमस्तीत्यस्यानुभवविरुद्धत्वात् अप्रकाशितार्थप्रकाशकत्वं तत्तदज्ञानानुभवे प्रत्यक्षादिरूपेऽस्ति। तद्रीत्या ब्रह्माज्ञानप्रत्यक्षेपीति तत्र साध्याभावाद् व्यभिचारः इति।

दोषान्तरमाह **दृष्टान्तश्चेति**। प्रकाशो नाम व्यवहारानुगुण्यम्, तत्करत्वं ज्ञानस्यैवेति। अत्र ब्रह्मविषयकाखण्डाकारवृत्तौ प्रकाशितार्थप्रकाशकत्वमेवास्तीति हेत्वसिद्धिरपि भाव्या। नन्विन्द्रियस्य प्रकाशकत्वमिष्टम्; तद्वत् दीपस्याप्यस्त्वित्यत्राह **इन्द्रियाणामपी**ति। इन्द्रियाणां प्रकाशकज्ञानजनकत्वमेव; न प्रकाशकत्वम्। तदपि दीपे नास्ति। तस्य प्रकाशकज्ञानजनकेन्द्रियोपकारकत्वमेवेत्यर्थः। नन्वप्रकाशितार्थप्रकाशकत्वं नाम अप्रकाशितार्थविषयकावरणनिरासकत्वम्, तत् दृष्टान्तेऽप्यस्ति, न त्विन्द्रिये इति न व्यभिचारोऽपीति शंकते **नास्माभिरि**ति। **निरसनपूर्वके**ति। **निरसनरूपे**ति दृष्टः पाठः सम्यक्। एतत्पाठेपि दण्डस्य भ्रमणद्वारा घटजनकत्ववत् दीपस्य निरसनरूपव्यापारद्वारा जनकत्वमेवोक्तमिति ध्येयम्। इवकारं विना **ज्ञानस्यैवे**ति **एव**कारपाठे पूर्वकेत्येव पाठः। तदर्थश्च दीपस्य निरासकत्वमात्रम्, ज्ञानस्यैव निरासकत्वपूर्वकप्रकाशकत्वमित्येवं वाच्यः। निरासकत्वं प्रकाशकत्वञ्च नैकमिति प्रकाशकत्वरूपहेतुविकल एव दृष्टान्त इत्याह **न ही**ति। तर्हि साक्षात्परम्परासाधारण्येन प्रकाशहेतुत्वमेव हेतुरित्यत्राह **यदी**ति। ननु प्रकाशकत्वं परित्यज्य स्वविषयावरणनिरासकत्वमेव हेतुरुच्यते। अप्रकाशितेत्यपि व्यर्थमिति यदि, स हेतुः पूर्ण एव त्यज्यतामिति चेत्—विषयावरणेत्यस्य कोर्थः? विषयविषयकव्यवहारयोग्यतापादकविरोधिकत्वमिति चेत्—योग्यतापादकत्वस्य दीपप्रभायामभावात् हेतुवैकल्यमेव। योग्यतापादकज्ञानहेत्विन्द्रियोपकारकेति घटने पक्षे हेत्वसिद्धिः।

प्रतिप्रयोगाश्च—

विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रयम्; अज्ञानत्वात्; शुक्तिकाद्यज्ञानवत्। ज्ञात्राश्रयं हि तत्। विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्मावरणम्; अज्ञानत्वात्; शुक्तिकाद्यज्ञानवत्। विषयावरणं हि तत्। विवादाध्यासितमज्ञानं न ज्ञाननिवर्त्यम्; ज्ञानविषयानावरणत्वात्; यत् ज्ञाननिवर्त्यमज्ञानम्, तत् ज्ञानविषयावरणम्; यथा शुक्तिकाद्यज्ञानम्॥

ब्रह्म नाज्ञानास्पदम्; ज्ञातृत्वविरहात्; घटादिवत्। ब्रह्म नाज्ञानावरणम्; ज्ञानाविषयत्वात्। यत् अज्ञानावरणम्, तत् ज्ञानविषयभूतम्; यथा शुक्तिकादि। ब्रह्म न ज्ञाननिवर्त्याज्ञानम्; ज्ञानाविषयत्वात्। यत् ज्ञाननिवर्त्याज्ञानम्; तत् ज्ञानविषयभूतम्; यथा शुक्तिकादि॥

विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति; प्रमाणज्ञानत्वात् भवदभिमताज्ञानसाधनप्रमाणज्ञानवत्॥ ज्ञानं न वस्तुनो विनाशकम्; शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात्। यत् वस्तुनो विनाशकम्, तत् शक्तिविशेषोपबृंहितज्ञानमज्ञानं च दृष्टम्; यथेश्वरयोगिप्रभृतिज्ञानम्, यथा च मुद्गरादि।

भावरूपमज्ञानं न ज्ञानविनाश्यम्; भावरूपत्वात्, घटादिवदिति॥ अथोच्येत—बाधकज्ञनेन पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो दृश्यते इति—नैवम्—न हि ज्ञानेन तेषां विनाशः; क्षणिकत्वेन तेषां स्वयमेव विनाशात्। कारणनिवृत्त्या च पश्चादनुत्पत्तेः। क्षणिकत्वं च तेषां ज्ञानवत् उत्पत्तिकारणसंनिधान एवोपलब्धेः, अन्यदाऽनुपलब्धेश्चावग-

---

ज्ञानप्रागभावस्यावरणत्ववत् इन्द्रियप्रागभावस्यापि तदिति तन्निरासकत्वस्येन्द्रियेऽपि सत्त्वादनैकान्त्यश्चेत्याद्यभिप्रायेणाह **इत्यलमनेनेति**।

अत्रानुमाने स्वदेशगतत्व-स्वविषयावरणत्व-स्वनिवर्त्यत्वानामज्ञाने वारकान् प्रतितर्कप्रयोगान् क्रमेण दर्शयति **प्रतिप्रयोगाश्चेति**। अज्ञानत्वे ज्ञानमात्रब्रह्मानाश्रितत्वप्रसङ्गः। यदि ज्ञानमात्रब्रह्माश्रितं स्यात्, अज्ञानं न स्यादिति रीत्या प्रयोगे तात्पर्यम्। प्रथममज्ञानधर्मिकाः प्रयोगास्त्रयः, अथ ब्रह्मधर्मिकाः। अथ वस्त्वन्तरपूर्वकत्वांशनिषेधकं तदुक्तपक्षधर्मिकमेव प्रयोगं वक्ष्यति **विवादेति**। साध्ये विषयपदेन देशपदेन च ब्रह्मग्रहणात् ब्रह्मणश्चाज्ञानस्य च संबन्धात् तदुभयधर्मिकानुमानानि। अथ ज्ञानाज्ञानयोः संबन्धात् तदुभयपक्षकप्रयोगश्च। **अज्ञानावरणम्**—अज्ञानावरणकम्। तत्रैव स्वनिवर्त्यवस्तुकत्वनिषेधकः प्रयोगः ज्ञानधर्मिकः, अज्ञानधर्मिकश्च। अन्वयव्याप्तेर्ज्ञानसामान्यपक्षकस्थल **इह** दुर्वचत्वात् व्यतिरेकव्याप्तिरेव, यत्र वस्तुविनाशकत्वम्, तत्र शक्तिविशेषसहकाराभावविशिष्टज्ञानत्वस्याभाव इत्याकारिका। तत्र संकल्पात्मकज्ञानं मुद्गरादि चोदाहरणम्। आद्ये सहकाराभावरूपविशेषणाभावात् विशिष्टाभावः; अन्त्ये ज्ञानत्वरूपविशेष्याभावादिति विवेकः। न च ज्ञानस्य स्वोत्पादकादृष्टरूपवस्तुनाशकत्वात् बाध इति वाच्यम्—तत्र ज्ञानत्वेन तस्याहेतुत्वात्। एवमुत्तरानु-

म्यते । अक्षणिकत्वे च भयादीनाम् भयादिहेतुभूतज्ञानसंततौ अविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेनानेकभयोपलब्धिप्रसङ्गाच्च । स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन प्रयोगकुशलता चाऽऽविष्कृता ।

अतोऽनुमानेनापि न भावरूपाज्ञानसिद्धिः ।

श्रुतितदर्थापत्तिभ्यामज्ञानासिद्धिरनन्तरमेव वक्ष्यते । मिथ्यार्थस्य [हि] मिथ्यैवोपादानं भवितुमर्हतीत्येतदपि, ( शारी. 2. 1. 4. ) "न विलक्षणत्वात्" इत्यधिकरणन्यायेन परिह्रियते । अतोऽनिर्वचनीयाज्ञानविषया न काचिदपि प्रतीतिरस्ति । प्रतीतिभ्रान्तिबाधैरपि न तथाऽभ्युपगमनीयम् । प्रतीयमानमेव हि प्रतीति-भ्रान्ति-बाधविषयः । आभिः प्रतीतिभिः प्रतीत्यन्तरेण चानुपलब्धमासां विषय इति न युज्यते कल्पयितुम् ।

---

मानेऽपि । **प्रसंगाच्चे**त्यन्तं भावत्वहेतोः भयादौ व्यभिचारशंकापरिहारकम् ।

एवं साध्ये इतरांशस्य विचारितत्वात् शेषांशे दोषं व्यर्थविशेषणत्वमाह **स्वे**ति । **स्वे**ति व्यर्थम् । अभावव्यतिरेकस्यैव पर्याप्तत्वात् **प्रागि**ति च व्यर्थम् । वस्तुपदेनैव भावत्वावगमात् स्वप्रागभावव्यतिरिक्तेत्येव व्यर्थम् । **एवमन्तरे**त्यपि व्यर्थम् । निवर्त्यत्वकथनादेव पूर्वत्वलाभात् **पूर्वे**त्यपि व्यर्थमिति । **वस्त्वन्तरे**ति सदसदनिर्वचनीयभावविवक्षेति चेत्——साध्यवैकल्यं दृष्टान्ते । परैः प्रत्यक्षस्य भावत्वादिसाधकत्वं नास्तीति, अनुमानमुपन्यस्तम् । उभयमप्येवं निरस्तम् । महापूर्वपक्षे कण्ठोक्तस्य प्रमाणस्य पश्चान्निरासः ; इह तु प्रत्यग्रोक्तप्रत्यक्षादिनिरास इत्याशयेन **वक्ष्यत** इत्युक्तम् ।

श्रुत्या सह श्रुतार्थापत्तिं निरसिष्यति । अत्र लौकिकप्रमाणानन्तरं पूर्वोक्तदृष्टार्थापत्तिनिरसनं प्राप्तमिति, जगतो मिथ्याभूतकार्यत्वेन मिथ्योपादानतयाऽज्ञानकल्पनमपि निरस्यति **मिथ्ये**ति । तथाच तस्य भावत्वमिवानिर्वचनीयत्वमप्यसिद्धमिति भावः । **अधिकरणे**ति । व्यावहारिकात् प्रातिभासिकजननञ्च तदिष्टम् ॥ जगतो मिथ्यात्वे प्रतीतिभ्रान्तिबाधाः प्रमाणीकृताः—प्रतीत्या असद्विलक्षणत्वम् , बाधात् सद्विलक्षणत्वम् , तदुभयबलात् भ्रान्तित्वं ज्ञानस्य, विषयस्य च मिथ्यात्वमिति ; सा रीतिरज्ञाने दुर्ग्रहेत्याह **प्रतीती**ति । **प्रतीयमानमेवे**ति । जगतः प्रतीयमानतया तत्र त्रितयविषयत्वचिन्ता, अज्ञानं तु न प्रतीयमानमिति । **आभिः प्रतीतिभिः**——अहमज्ञ इति, अहं मामन्यञ्च न जानामीति, न किञ्चिदहमवेदिषमिति, प्रमाणज्ञानं प्रागभावातिरिक्तवस्तुपूर्वकमिति च प्रतीतिभिः । **प्रतीत्यन्तरेण च**—वक्ष्यमाणश्रुतितदर्थापत्तिजन्यज्ञानेन च । **अनुपलब्धम् ।** तासामन्यविषयकत्वभ्रान्तिरूपत्वसाधनादिति भावः । **प्रतीतिभ्रान्ती**त्यादिवाक्यानि अज्ञानानिर्वचनीयत्वस्येव सामान्यतोऽनिर्वचनीयस्य च प्रतिक्षेपकाणि । इदं रजतम् , नेदं रजतमित्येतद्बलात् नानिर्वचनीयसिद्धिः । प्रतीयमानस्य सत्यरजतस्यैव हि तत्र विषयतेति । **आभिः प्रतीतिभिः** इदं रजतमित्यादिभिः । **प्रतीत्यन्तरेण च** अनिर्वचनीयसाधकानुमानाद्यधीनप्रतीत्या च । पूर्वमज्ञानस्यानिर्वचनीयत्वानुपपत्तिरुक्ता । इहानिर्वचनीयमित्येव किञ्चिन्नास्तीत्युच्यते ॥

शुक्त्यादिषु रजतादिप्रतीतेः, प्रतीतिकालेऽपि तन्नास्तीति बाधेन च, अन्यस्यान्यथाभानायोगाच्च सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात् प्रतीयत इति कल्पनीयमिति चेत्-न-तत्कल्पनायामप्यन्यस्यान्यथाभानस्यावर्जनीयत्वात् अन्यथाभानाभ्युपगमादेव ख्यातिप्रवृत्तिबाधभ्रमत्वानामुपपत्तेरत्यन्तापरिदृष्टाकारणकवस्तुकल्पनाऽयोगात् ।

कल्प्यमानं हीदमनिर्वचनीयं न तावत् (तदानीं) अनिर्वचनीयमिति प्रतीयते; अपितु परमार्थरजतमित्येव । अनिर्वचनीयमित्येव प्रतीतं चेत्; भ्रान्तिबाधयोः प्रवृत्तेरप्यसंभवः । अतोऽन्यस्यान्यथाभानविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेः, तस्यापरिहार्यत्वाच्च शुक्त्यादिरेव रजताद्याकारेणावभासत इति भवताऽभ्युपगन्तव्यम् ।

ख्यात्यन्तरवादिनां च सुदूरमपि गत्वाऽन्यथावभासोऽवश्याश्रयणीयः—असत्ख्यातिपक्षे सदात्मना; आत्मख्यातिपक्षेऽर्थात्मना; अख्यातिपक्षेऽपि अन्यविशेषणमन्य-

---

अन्यथा निर्वाहायोगात् अनिर्वचनीयसिद्धिं शंकते शुक्तीति । शुक्तिविशेष्यकरजतप्रकारकविशिष्टज्ञानत्वान्न ख्यातिद्वयवादिमीमांसकपक्षः । आपणस्थरजतस्य दूरस्थतया संनिकर्षाभावेन शुक्तौ रजतप्रत्यक्षानिर्वाहात् नान्यथाख्यातिवादितार्किकपक्षोऽपि । अतोऽनिर्वचनीयसिद्धिरित्यर्थः । अपूर्वम् पूर्वमस्थितमेवोत्पन्नम् । उत्पन्नत्वे सर्वग्राह्यं किं न स्यादित्यत्राह दोषवशादिति । शुक्तिगतो रजतांशः परिदृष्टः, आपणस्थरजतमिदानीमदृष्टमपि पूर्वं दृष्टम् । अनिर्वचनीयरजतं त्वत्यन्तापरिदृष्टम्; परमार्थे इदं रजतमिति परमार्थस्यैव प्रत्यय इति । एवमत्यन्तापरिदृष्टेत्येतद्विवरणपूर्वकम् अन्यथाभानस्यावर्जनीयत्वमुपपादयति कल्प्यमानं हीति । अपरमार्थे परमार्थत्वबुद्धिरन्यथाख्यातिः । परमार्थत्वमपि अनिर्वचनीयं चेत्—भ्रमत्वमेव न स्यात् । कल्पितस्यैव चेत् इदमित्यप्युल्लेखः, कथं तद्बाधः । बाध एव भ्रमः स्यात्, न तु रजतप्रतीतिः । बाधोऽपि वा अनिर्वचनीयमेवाभावं विषयीकुर्यात् । इदमिति शुक्तिग्रहणे, रजते तत्तादात्म्यभानं च न युज्यते । अतदात्मनस्तादात्म्यभाने चान्यथाख्यातिरेवेति ।

ख्यात्यन्तरेति । सर्वमसन्मन्वानस्य माध्यमिकस्यापि सत्त्वेनैव सर्वप्रतीतिः । विज्ञानरूपात्मातिरिक्तबाह्यानङ्गीकारियोगाचारपक्षे विज्ञानस्यात्मन एव विज्ञानत्वाकारं विना बाह्यपदार्थरूपेण भानम् । अख्यातिर्नाम ख्यात्यभावः—विशिष्टज्ञानाभावः । अन्यथाख्यातिपक्षे हि प्रथमतः इदमिति रज्जुज्ञानम्; अथ रजतस्मरणम्; तदुभयमूलकम् इदं रजतमिति विशिष्टज्ञानमस्ति । अख्यातिवादिप्राभाकरमीमांसकपक्षे च मध्ये विशिष्टज्ञानं विना तदुभयत एव व्यवहारनिर्वाह इति । एवमिदमर्थे रज्जौ स्थितस्य सर्पभेदस्य ग्रहणाभावादेव भयादिकमिति स भेदाग्रहोऽप्यख्यातिः । एवं विशिष्टज्ञानानङ्गीकारश्च, तदभावेऽपि कार्यनिर्वाह इति लाघवपर्यालोचनया, सर्वस्य ज्ञानस्य यथार्थत्वरक्षणधिया च । असत्ख्यातिवादिनः आत्मख्यातिवादिनश्च ज्ञानस्यायथार्थत्व एवादर इति अन्यथाख्यानं नावश्यं तत्प्रतिषेध्यम् । अख्यातिवादी तु अन्यथाख्यातिं विनैव निर्वहणोद्युक्त इति विशेषज्ञापनाय अख्यातिपक्षेऽपीत्यपिशब्दः । अयं सर्पे

विशेषणत्वेन, ज्ञानद्वयमेकत्वेन च; विषयासद्भावपक्षेऽपि विद्यमानत्वेन।

किंच—अनिर्वचनीयमपूर्वरजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यम्; न तावत् तत्प्रतीतिः; तस्याः तद्विषयत्वेन तदुत्पत्तेः प्राक् आत्मलाभायोगात्। निर्विषया

---

इत्यत्र अयमिति रज्जुज्ञानं यथार्थम्, सर्प इति सर्पस्मरणञ्च यथार्थमित्युक्तावपि—इदमर्थविशेषणत्वानर्हस्य सर्पस्य तद्विशेषणतया भानं नास्ति चेत्—कथम्, अयं सर्पः, इदं भूदलनमित्येवं समानलिङ्गतादि। ज्ञानद्वयमेकत्वेन न भाति चेत्, कथं ज्ञानद्वयवानहमिति प्रतीत्यनुदयः; नाहं ज्ञानद्वयवान्, किंत्वेकज्ञानवानिति लोकानुभवश्च कथमित्यन्यथाभाने स्वारस्यं दर्शितमत्र; न पुनरन्यथाभानं तैः स्वीकृतमिति मन्तव्यम्; तैरख्यातेरेव सर्वत्रोपपादनात्। विषयेति। असत्ख्यातिपक्षे ज्ञानसामान्यं भ्रान्तिः। जगत्सत्यत्ववादिनोपि केचित् भ्रान्तिविषय शुक्तिरजतादेः परं शशविषाणादिवदसत्त्वमिति असत्ख्यातिमिच्छन्ति। आत्मख्यातिपक्षेपि विज्ञानमात्रस्फूर्तेरभावात् अविद्यमानेनार्थेन सहैव स्फुरणात् सर्वोऽपि भ्रान्तिरेव। प्राभाकरास्तु प्रमामेवाभ्युपयन्तः भ्रान्तिस्थले अख्यात्यैव निर्वाहमाहुः। नैयायिकाः पुनः प्रमां भ्रमं च स्वीकृत्य भ्रमोऽन्यथाख्यातिरिति निर्णयन्ति। अन्ये केचित् भ्रान्तिस्थले निर्विषयख्यातिं मन्यन्ते, विषयाविषयिकैव भ्रान्तिख्यातिर्विषयविषयकतया भातीति। एवंसति भ्रान्तमधिकृत्य, अयं शुक्तौ रजतविषयकज्ञानवानितीश्वरादीनां ज्ञानं भ्रमः स्यात्, रजताविषयके ज्ञाने रजतविषयकत्वावगहनात्। न च—यद्देशयत्कालावच्छिन्नं भवति रजतम्, तथारजताविषयकज्ञानवानित्येवेश्वरादीनां तद्विषये ज्ञानाकारः—इति वाच्यम्—तथासति यस्य यद्विषये ज्ञानं नास्ति, तत्तद्विषये तस्य भ्रान्तत्वापत्तेः; निर्विषयकत्वे ख्यातित्वायोगाच्च। अन्यथा घटादेरपि ख्यातित्वापत्तेः। स्वयम्प्रकाशतया ख्यातिशब्दव्यवहार इति चेत्—तर्हि यथा प्रकाशते, तथैव स्वीकार्यम्; रजतविषयकतयैव स्फुरणात् तन्न हेयम्। अतो निर्विषयख्यातिरित्यस्य अविद्यमानरजतविषयकख्यातिरित्यर्थः। अविद्यमानत्वं विहाय विद्यमानत्वेन रजतावगाहिख्यातिरिति यावत्। तत्र यदि सर्वथैवासतः सत्त्वेन ग्रहः, तर्हि असत्ख्यातिरेव। यदि क्वचित् कदाचित् स्थितस्य तथा, तर्हि अन्यथाख्यातिः। तदुक्तं **तत्त्वमुक्ताकलापे**, "अन्यथाख्यात्यसदधिगमयोरेव पर्याय एषः" (255) इति। असत्ख्यातावप्यन्यथाख्यातिरिह भाष्ये उक्तैव। अत एव निष्कृष्य भाष्यते, **विषयासद्भावपक्षेपि विद्यमानत्वेनेति**। एवं तावदन्यथाख्यातावौचित्यं प्रदर्शितम्। अनेनान्यथाभानायोगः परोक्तः प्रतिक्षिप्तप्रायः। इदं रजतमिति ज्ञानस्य प्रत्यक्षत्वसंपत्तिरन्यथाख्यातौ न भवतीति परे। तेन परोक्षभ्रमेष्वन्थाख्यातित्वं संभवीति सिद्ध्यति। **इष्टञ्चेदमद्वैतपरिभाषादौ**; एवं लोहितः स्फटिक इति प्रत्यक्षविषयेऽपि। तार्किकास्तु भावनाप्रकर्षजस्मरणस्येव स्वप्नविभ्रमस्येव च दोषाधीनं प्रत्यक्षत्वमिति निर्वहन्ति। अतः सर्वत्रान्यथाख्यातिरेव युक्तेत्यन्यत्र विस्तरः।

**अकारणके**त्युक्तं विवृणोति **किञ्चे**ति। **तदुत्पत्तेः** रजतोत्पत्तेः। **आत्मलाभः** स्वरूपप्राप्तिः। निर्विषयत्वे जडत्वात् ख्यातित्वायोगः, जडस्य पश्चादजडत्वायोगः, पश्चाद्ग्रहणे प्रातिभासिकत्वायोग-

जाता तदुत्पाद्य तदेव विषयीकरोतीति महतामिदमुपपादनम्। अथेन्द्रियादिगतो दोषः— तन्न ; तस्य पुरुषाश्रयत्वेनार्थगतकार्यस्योत्पादकत्वायोगात्। नापीन्द्रियाणि; तेषां ज्ञानका-(क) रणत्वात् । नापि दुष्टानीन्द्रियाणि; तेषामपि स्वकार्यभूते ज्ञान एव हि विशेषकरत्वम्। अनादिमिथ्याज्ञानोपादानत्वं तु पूर्वमेव निरस्तम् ।

किंच—अपूर्वमनिर्वचनीयमिदं वस्तु जातं रजतादिबुद्धिशब्दाभ्यां कथमिव विषयी-क्रियते, न घटादिबुद्धिशब्दाभ्याम् ? रजतादिसादृश्यादिति चेत्—तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ स्याताम् । रजतादिजातियोगादिति चेत्; सा किं परमार्थभूता ; अपर-मार्थभूता वा । न तावत् परमार्थभूता; तस्या अपरमार्थान्वयायोगात् । नाप्यपरमार्थभूता; परमार्थान्वयायोगात् ; अपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगाच्चेत्यलमपरिणत-कुतर्कनिरसनेन । अथवा—

यथार्थं सर्वविज्ञानमिति वेदविदां मतम् । श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः ॥

---

श्चेत्यादि विस्मृत्यैवं कथनान्महत्त्वारोपो महतामिति। इन्द्रियादीत्यादिना पुरुषस्यानवधानादिग्रहः **अयोगादिति** । एतेन रजतस्मरण-रजतभेदाग्रहादिविशिष्टशुक्तिधर्मिग्रह एव रजतोत्पादक इति च निरस्तम्; तेषां पुरुषगतत्वेन तत्र किञ्चित्करत्वेऽपि शुक्तौ रजतानुत्पादकत्वात् । उक्तस्य सर्वस्य निमित्तकारणत्वेऽपि रजतद्रव्यस्य बाह्यस्य बाह्यमेव किञ्चिदुपादानं वाच्यम् । न शुक्तिरुपादानम्, विजातीयत्वात्; मृद्घटादिवत् रजतस्य सत्यत्वापत्तेश्च । अथ किं शुक्तौ रजतस्योत्पत्तिः, किंवा सा रजतरूपेण परिणमति ? नाद्यः; तदा इयं रजतवतीति प्रतीतिः स्यात् ; न तु, इदं रजतमिति । नान्त्यः; शुक्तेः परैरप्यदर्शनप्रसंगात्; पुनर्बाधे शुक्त्युत्पत्तये सामग्र्यन्वेषणप्रसंगाच्च । शुक्त्यज्ञानं भावरूप-मुपादानं चेत्, इदं रजतमित्यज्ञानेन सामानाधिकरण्यं स्यात्; न शुक्त्या । शुक्त्युत्पादकानाद्यज्ञा-नमेवोपादानमिति चेत्—तत्राऽऽह **अनादी**ति । जगदपलापाय क्रियमाणमनिर्वचनीयरजतकल्पना-गौरवमपि न व्यवहारनिर्वाहाय भवति; अतो वृथैवेत्याशयेनाह इत्यलमिति। अनिर्वचनीयनिरास-विस्तरोऽस्मद्ग्रन्थेष्वन्यत्रापि द्रष्टव्यः ।

अख्यातिवादिनां पक्षे सर्वं विज्ञानं यथार्थम् । यदाह **प्रकरणपञ्चिकायां** नयवीथीप्रकरणे शालिकनाथः,—"यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये । प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते" इति । परंतु ते इदं रजतमिति ज्ञानद्वयमिति स्वीकृत्य यथार्थत्वं मन्यन्ते । तत्र स्वारस्यभङ्गमाहु-रन्यथाख्यातिवादिनः । अनिर्वचनीयकल्पकास्तु प्रत्यक्षत्वनिर्वाहे प्रवृत्ता अपि इदमिति वृत्तिश्चाक्षुषी, रजतमिति वृत्तिरन्यादृशीति ज्ञानद्वयमेव वदन्तीति स्वारस्यभङ्गस्तुल्यः । बहुषु स्थलेष्वन्यथाख्यातेरेव स्वीकृतत्वात् कल्पनागौरवमात्रम्। एवमन्यथाख्यातिमादृत्योक्त्वा, यावत्संभवंसत्ख्यात्या स्वारस्यं रक्षन् अख्यातिवाद्यभिमतयथार्थत्वं समर्थयितुमारभते **अथवे**ति। इदं रजतमिति विशिष्टज्ञानमेकमेवेतीष्यते। अथापि न भ्रान्तिता, ईदृशापरोक्षज्ञानस्य यथार्थत्वसंभवादिति भावः । यत्रायं प्रकारो न भवति,

"बहु स्या" मितिसंकल्पपूर्वसृष्ट्याद्युपक्रमे। "तासां त्रिवृतमेकैका" मिति श्रुत्यैव चोदितम् ॥
त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते। यदग्नेः रोहितं रूपम् तेजसस्तत्; अपामपि ॥
शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपता। श्रुत्यैव दर्शिता तस्मात् सर्वं सर्वत्र संगताः ॥
पुराणे चैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे।
"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना। नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः।
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः।
महदाद्या विशेषान्ता ह्यण्ड" मित्यादिना ततः ॥
सूत्रकारोऽपि भूतानां त्रिरूपत्वं तथाऽवदत्। त्र्यात्मकत्वात्तु भूयस्त्वादिति तेनाभिधाभिदा॥
सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम्। सोमावयवसद्भावादिति न्यायविदो विदुः ॥
व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः। तदेव सदृशं तस्य, यत् तद्द्रव्यैकदेशभाक् ॥

---

तत्र स्यान्नामान्यथाख्यातिः, सर्वज्ञानयाथार्थ्याख्यातिरेव वा तत्र स्यात्; न तु ख्यात्यन्तरमित्याशयः। **सर्वस्येत्यादि**। पृथिव्यादिभूतानां तेजःप्रभृतिभूतात्मकत्वावगमादित्यर्थः। श्रुतीराह **बह्विति**। स्मृतिं वक्ष्यति **पुराण** इति। **सृष्ट्यादी**ति। बहु स्यामिति संकल्पो व्यष्टिविषयकसंकल्पः; तत्पूर्विका सृष्टिः—तत्संकल्पानन्तरसमष्टिसंकल्पानन्तरसमष्टिसृष्टिपूर्वकव्यष्टिभावः। तस्याः **आदिः** कारणं नाम-रूपव्याकरणम्; तदुपक्रमे इत्यर्थः। **एकैका**मित्येतदनन्तरं करवाणीत्येतत् अकरोदित्येतद्वा स्थितं ग्राह्यम्। **यदग्ने**रिति। अग्नेः यत् रोहितं रूपम्, तत् तेजसः; यदप्यग्नेः शुक्लं रूपम्, तदपाम्; यच्चाग्नेः कृष्णं रूपम्, तत् पृथिव्याः इति भूतत्रयसंहननादग्नेस्त्रिरूपता, यदग्ने रोहितमिति श्रुत्या दर्शितेत्यर्थः। **वीर्यं** दाहक्लेदादिकरणशक्तिः। **संहतिं विना**-मिथः साधारणसंयोगं विना; **असमागम्य कृत्स्नशः**-तदनन्तर-पृथक्करणानर्हव्यतिषङ्गञ्च विना। **समाश्रयण**मुपजीवनम्। महदादीत्युक्तत्वात्, त्रिवृत्करणमात्रं पञ्चीकरणमात्रं वा न; किंतु कथमपि सप्तीकरणमिति ज्ञायते। **विशेषः** अन्तिमकार्यं पृथिवी। **तत** इत्यस्य उपरि **अवद**दित्यत्र, शुक्त्यादाविति वाक्ये चान्वयः। **तेन** एतत्सूत्रोक्तभूयस्त्वहेतुना **अभिधाभिदा** सर्वस्य सर्वत्वेपि पृथिव्यादिशब्दप्रयोगव्यवस्थोपपद्यत इत्यर्थः।

एकस्यान्यांशवत्त्वे श्रुतिस्मृती दर्शिते। पूर्वमीमांसामपि प्रमाणयति **सोमे**ति। 'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इति श्रुत्या सोमालाभे पूतीकलताभिषवेन रससंपत्तिरुक्ता। तत्र स किमपूर्वविधिः उत नियमविधिरिति विमृश्य, सोमेन यजेतेति वाक्येन सोमावयवानां यागसाधनत्वावगमात्, भूयस्सोमावयवकसोमव्यक्त्यलाभे द्रव्यान्तरवर्त्यल्पसोमावयवानामपि साधनत्वस्य सिद्धत्वात् पूतीकापूतीकयत्किञ्चित्सदृशग्रहणप्रसक्तौ पूतीकगतसोमावयवा एवानेन वाक्येन नियम्यन्त इत्युक्तम्। तेन सदृशस्थले एकद्रव्यावयवस्यान्यत्र सद्भावः कण्ठोक्त इति भावः। अत एव पृथग्वचनाभावेऽपि, व्रीहिभिर्यजेतेत्यत्र व्रीह्यलाभे नीवारग्रहणमनुमतमित्याह **व्रीही**ति। **व्रीहिभावतः** व्रीह्यवयवसद्भावात्। व्रीहित्वमवयवसमुदायानतिरिक्तावयविभूत व्रीहिशब्दवाच्यान्तर्गतावयवेष्विव नीवारावयवेष्वपि कति-

**शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधितः । रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः ॥**
**रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते । अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ॥**
**कदाचिच्चक्षुरादेस्तु दोषात् शुक्त्यंशवर्जितः । रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते ॥**
**दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते । अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ॥**
**बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते । शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः ॥**
**नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः । एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥**

---

पर्येष्वस्तीति **भावत** इत्युक्तिः । भवतीत्यध्याहारः; विदुरित्यनुषङ्गो वा । उपपादितमर्थं प्रकृते संगमयति **शुक्ती**ति ।

तावतापि इदं रजतमिति ज्ञानं कथम्, भूयोरजतांशाभावादित्यत्राह **कदाचिदि**ति । **रजतांशो गृहीतः** इदं रजतमिति ग्रहणेन विषयीकृतः । इदमित्यपि तदंशमात्रग्रहणम् । **तत्** (केवल) रजतांश ग्रहणम् । तदानीमिदमिति शुक्त्यंशस्य गृहीतत्वात् तत्र रजतत्वाभावादिति भावः । एवं भ्रमस्यापि यथार्थत्वे बाध्यत्वं कथम्? तत्राह **बाध्ये**ति । अपरीक्षितवस्तुतत्त्वानां कृत्स्नांशे रजतभेदग्रहणमेव भ्रमात्मकम् । तत्त्वज्ञानां तु नैवमिति भावः । ननु **भूयस्त्वेने**त्यस्य कोर्थः? इदं रजतमिति ज्ञानस्य रजतांशभूयस्त्वविषयकत्वाद् बाध्यत्वम्; इयं शुक्तिरिति ज्ञानस्य शुक्त्यंशभूयस्त्वविषयकत्वाद् बाधकत्वमित्यर्थश्चेत्—प्रथमज्ञानमन्यथाख्यातिः स्यात्; अभूयसि भूयस्त्वग्रहणात् । यदि वस्तुगत्या शुक्त्यंशस्य भूयस्त्वात् इयं शुक्तिरिति ज्ञानस्य इदं रजतमिति बाध्यज्ञानं प्रति बाधकभाव इत्यर्थः—तर्हि शुक्तावेव पूर्वम्, इयं शुक्तिरिति जातस्य ज्ञानस्य उत्तरेण इदं रजतमिति भ्रमेण बाधोऽनुभवसिद्धो न स्यादित्यत्रोपपादयति **शुक्ती**ति । तत्त्वज्ञानाम्, 'नेदं रजतम्, किंतु शुक्तिः' इति यत् ज्ञानम्, तत्र इदमिति सर्वांशविशिष्टधर्मि विषयः, तत्र भूयोरजतांशकद्रव्यभेदः भूयश्शुक्त्यंशकद्रव्याभेदश्च विषयीभवति । एवञ्च शुक्तिरिति शुक्त्यंशभूयस्त्वस्य, इदमिति पुरोवर्तिगतांशसाकल्यस्य, इतरांशेन रजतांशन्यूनत्वादिरूपस्य **वैकल्यस्य च ग्रहः** ग्रहणमेव यत् **रूपं**-धर्मः तस्मादिति **शुक्ती**त्यादिपञ्चम्यन्तार्थः । शुक्तिरूपधर्मिविषयकं यत **भूयस्त्वस्य** शुक्त्यंशभूयस्त्वस्य, **वैकल्यस्य** रजतांशन्यूनत्वस्य, **साकल्यस्य** धर्म्यंशगतकार्त्स्न्यस्य च ग्रहणम्, तदभिन्नात रूपादित्यर्थोचितविग्रहो भाव्यः । प्रतीतिविषयाणामिह व्युत्क्रमेण प्रदर्शनमिति । अर्थान्तरवर्णनमन्यत्र द्रष्टव्यम् । एतदुक्तं भवति—**भूयस्त्वेने**ति शुक्त्यंशभूयस्त्वमेव विवक्षितम् । इदं रजतमिति ज्ञानं विद्यमानरजतांशमात्रविषयकत्वात् प्रमैव । 'नेदं रजतम्, किंतु शुक्तिः' इति ज्ञानमपि पूर्वोक्तरीत्या प्रमा । एवं शुक्त्यंशभूयस्त्वज्ञाने रजतांशन्यूनत्वज्ञाने सति पूर्वं शुक्त्यंशाग्रहणमूला या प्रवृत्तिः, सा बाध्यते । एवं बाध्यप्रवृत्तिकत्वमेव ज्ञानस्य बाध्यत्वम् । भूयस्त्वं बाधकं-विफलप्रवृत्तिकत्वकरमिति । अतत्त्वज्ञानां तु ज्ञाने तत्तदंशमात्रं विषयः । **ने**ति । **बाध्यबाधकभाव** इत्यनुषज्यते । एतदर्थमेव बाध्यप्रवृत्तिकत्वमिति स्पष्टं नोक्तम् ।

स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्याः तत्तत्कालावसानाः तथाभूताश्चार्थाः सृज्यन्ते। तथा हि श्रुतिः स्वप्नविषया, (बृ. 6. 3. 10.) "न तत्र रथा न रथयोगा न पन्थानो भवन्ति; अथ रथान् रथयोगान् पथः सृजते। न तत्राऽऽनन्दा मुदः प्रमुदो भवन्ति; अथानन्दान्मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति; अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता" इति। यद्यपि सकलेतरपुरुषानुभाव्यतया तदानीं न भवन्ति—तथाऽपि तत्तत्पुरुषमात्रानुभाव्यतया तथाविधान् अर्थान् ईश्वरः सृजति। स हि कर्ता। तस्य सत्यसङ्कल्पस्याऽऽश्चर्यशक्तेः तथाविधं कर्तृत्वं संभवतीत्यर्थः। (कठ. 2. 5. 8.) "य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः। तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति च। सूत्रकारोऽपि, (शा. 3. 2. 1. 2-3.) "सन्ध्ये सृष्टिराह हि", "निर्मातारं चैके पुत्रादयश्च" इति सूत्रद्वयेन स्वाप्नेष्वर्थेषु जीवस्य स्रष्टृत्वमाशङ्क्य, "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इत्यादिना—न जीवस्य सङ्कल्पमात्रेण

---

एवं सर्वस्य सर्वात्मकत्वज्ञानवतामेव शुक्तावेव शुक्तिज्ञानं पश्चाद्विपरीतज्ञानञ्च यत्र, तत्र वस्तुनो भूयोरजतांशकत्वादिग्रहणमन्यथाख्यात्यस्वीकारे भवत्वख्यातिपक्षीयज्ञानद्वयम् ॥ अपरोक्षभ्रमस्थले प्रायः पुरःस्थितस्यैव दर्शनात् नानिर्वचनीयं कल्पनीयम्; नाप्ययथार्थत्वमित्युक्तम्। तदिदं शुक्तिरजतादिस्थले भवतु। स्वप्नादौ पुनरपरमार्थं विना न निर्वाह इत्याशङ्कायां तत्र तत्र परमार्थास्तित्वमुपपादयति **स्वप्ने** चेत्यादिना। **तथाभूता** इति। स्वप्नमात्रदृष्टप्रकाराः, आश्चर्या इत्यर्थः। **रथयोगाः** युग्याः अश्वादयः। क्वचित् रथादिसविधेऽपि स्वापसंभवात् ते न भवन्तीति कथम्; अपूर्वसृष्टिस्वीकारात् तत्सद्भावात् सामान्यतो रथाद्यभावश्च कथमिति चेत्—स्वप्नदृगतिरिक्तपुरुषानुभाव्यतया न भवन्तीति वक्ष्यते। तथाच वाक्यमिदम् उत्तरवाक्ये **रथान्** इत्यादौ जीवकृतजीतान्तरानुभाव्यजागरीयरथादिविलक्षणानिति विशेषणसमर्पणार्थम्। **अथे**ति प्रकारान्तरे। यद्यप्यन्यैर्नानुभूयन्ते—तावता न सन्तीति न; अन्यादृशाः स्वीकार्या इति सत्यत्वस्थापनार्थमाश्चर्यत्वस्थापनार्थश्चैतावत्। **आनन्दः** अनुकूलवस्तुदर्शनसुखम्। **मुत्** तस्य स्वकीयत्वबुद्धिजप्रीतिः। **प्रमुत्** तद्विनियोगजन्यप्रीतिः। जागरसुखात् स्वाप्नसुखे वैलक्षण्यस्य दुर्वचत्वात्, एकानुभाव्यसुखस्यान्याननुभाव्यतायाः जागरेऽपि सत्त्वाच्च, पूर्वापरानुसाराच्च आनन्दादिशब्दाः तादृशप्रीतिविषयवस्तुपराः। अन्येषां तादृशप्रीत्यजनकाः एकस्य तज्जनकाश्च भवन्तीत्यर्थः। **वेशान्ताः**। दीर्घश्छान्दसः। **वेशन्ताः** पल्वलानि। **पुष्करिण्यः स्रवन्त्य** इति द्वितीयवाक्ये द्वितीयार्थे प्रथमा। **पुष्करिण्यः** पद्मिन्यः; अथवा पुष्कराख्यक्षेत्रतीर्थतुल्यतया पुष्करपदबोध्यतीर्थस्थानानि देवालयीयानि। **कामंकामं** संकल्प्य संकल्प्य। **शुक्रं** शुद्धं हेयप्रत्यनीकम्। **संध्ये**–'इदञ्च परलोकस्थानञ्च' इत्युक्त-पुरुषानुभाव्यस्थानद्वयसंधौ भवे (सुषुप्तिजागरमध्यभवे च) स्वप्ने। तत्र लोकद्वयविषयानुभवात्। नन्वनु-

स्रष्टृत्वमुपपद्यते ; जीवस्य स्वाभाविकसत्यसङ्कल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वात्, ईश्वरस्यैव तत्तत्पुरुषमात्रानुभाव्यतया आश्चर्यभूता सृष्टिरियम्। "तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति परमात्मैव तत्र स्रष्टेत्यवगम्यते— इति परिहरति। अपवरकादिषु शयानस्य स्वप्नदृशः स्वदेहेनैव देशान्तरगमन-राज्याभिषेक-शिरश्छेदादयश्च पुण्यपापफलभूताः शयानदेहसरूपसंस्थानदेहान्तरसृष्ट्योपपद्यन्ते।

पीतशङ्खादौ तु नयनवर्तिपित्तद्रव्यसंभिन्नाः नायनरश्मयः शङ्खादिभिः संयुज्यन्ते। तत्र पित्तगतपीतिमाभिभूतः शङ्खगतशुक्लिमा न गृह्यते। अतः सुवर्णानुलिप्तशङ्खवत् 'पीतः शङ्खः' इति प्रतीयते। पित्तद्रव्यं तद्गतपीतिमा चातिसौक्ष्म्यात् पार्श्वस्थैर्न गृह्यते। पित्तोपहतेन तु स्वनयननिष्क्रान्ततयाऽतिसामीप्यात् सूक्ष्ममपि गृह्यते। तद्ग्रहणजनितसंस्कारसचिवनायनरश्मिभिर्दूरस्थमपि गृह्यते॥

जपाकुसुमसमीपवर्तिस्फटिकमणिरपि तत्प्रभाभिभूततया रक्त इति गृह्यते। जपाकुसुमप्रभा विततापि स्वच्छद्रव्यसंयुक्ततया स्फुटतरमुपलभ्यत इति उपलब्धिव्यवस्थाप्यमिदम्।

मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरप्यम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणात् अदृष्टवशाच्चाम्बुनो ग्रहणात् यथार्थत्वम्।

अलातचक्रेऽप्यलातस्य द्रुततरगमनेन सर्वदेशसंयोगादन्तरालाग्रहणात् तथा प्रतीतिरुपपद्यते। चक्रप्रतीतावप्यन्तरालाग्रहणपूर्वकतत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव। क्वचिदन्तरालाभावादन्तरालाग्रहणम्, क्वचित् शैघ्र्यादग्रहणमिति विशेषः। अतस्तदपि यथार्थम्।

दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था। दर्पणादिप्रतिहतगतयो हि नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्ति। तत्रापि अतिशैघ्र्यादन्तरालाग्रहणात् तथा प्रतीतिः।

---

भाव्यवस्तुसृष्टिस्तावदस्तु ; अनुभवितुर्देहस्य शयानत्वात् कथं तेन गमनादेरनुभूयमानस्य पारमार्थिकत्वमित्यत्राह **अपवरके**ति। **अपवरकः** अन्तः शयनादिगृहम्।

शङ्खादौ पीतरूपादिदर्शनं सादृश्यमूलमपूर्वसृष्टिमूलं वा न भवतीति तत्र वक्तव्यं प्रकारमाह **पीते**ति। एवमेव नीलं नभ इत्यत्र नभोगतनीलपार्थिवांशमात्रग्रहणं बोध्यम्। लौहित्यस्य गुणस्य कथं स्फटिके संक्रमः? न चात्र मुखदर्पणन्यायः, स्फटिकप्रतिहतगतिचाक्षुषरश्मिसंगे जपाप्रत्यक्षापत्तेः इत्यत्राह **जपे**त्यादि। **अन्तरालाग्रहणात्** क्रमेण विभिन्नदेशभाविनाम् अलातसंयोगानां परं ग्रहणात् प्रथमसंयोगकाल-अन्यसंयोगकाल-मध्यकालाग्रहणात् ; क्रमिकत्वाग्रहणादिति यावत्। **अन्तरालाभावात्** वास्तवचक्रे तदीयावयवसंयोगानां मण्डलप्रदेशेषु यौगपद्यादिति भावः। **तदपि यथार्थ**मिति। चक्रमित्यस्य हि मण्डलीयसर्वप्रदेशविशेषसंयुक्तद्रव्यमित्यर्थः ; तत्त्वमक्षतमिति। दर्पणमुखग्रहणे अन्तरालाग्रहणं नाम मध्यदेशाग्रहणम् ; पूर्वं तु मध्यकालाग्रहणम्।

दिङ्मोहेऽपि दिगन्तरस्यास्यां दिशि विद्यमानत्वाददृष्टवशेनैतद्दिगंशवियुक्तो दिगन्तरांशो गृह्यते । अतो दिगन्तरप्रतीतिर्यथार्थैव ।

द्विचन्द्रज्ञानादावपि अङ्गुल्यवष्टम्भतिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात् सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति । तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति । द्वितीया तु किञ्चिद्वक्रगतिः चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति । अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे ग्रहणभेदेन ग्राह्याकारभेदात् एकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति प्रतीतिविशेषः । देशान्तरस्य तद्विशेषणत्वम्, देशान्तरस्य च अगृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति । तत्र सामग्रीद्वित्वं पारमार्थिकम्; तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकम्; ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकम् । तत्र, 'विशेषणद्वयविशिष्टचन्द्रग्रहणद्वयस्यैक एव चन्द्रो ग्राह्यः' इति ग्रहणे प्रत्यभिज्ञानवत् केवलचक्षुषः सामर्थ्याभावात् चाक्षुषज्ञानं तथैवावतिष्ठते ।

---

**दिगन्तरस्येति** । एकत्रैव वस्तुनि प्राच्यत्व-प्रतीच्यत्वादेरापेक्षिकत्वस्यानुभवादिति भावः । **स्वदेशवियुक्तम्**; स्वदेशग्रहणं विनेति यावत् । **युगपत्** अगृहीतभेदयोः अव्यवहितपूर्वोत्तरक्षणयोः । **ग्रहणभेदेन ग्राह्याकारभेदादि**ति । ननु यथा ग्राह्याकारभेदस्य ग्रहणभेदं प्रति हेतुत्वं न भवति, एकेन ज्ञानेन घटपटयोर्ग्रहणात्—तथा ज्ञानभेदस्यापि न ग्राह्याकारभेदं प्रति हेतुता; घट इति पूर्वं गृहीतस्यैव पुनः सामग्र्यां ग्रहणसंभवादिति चेन्न-यद्यत्र सामग्रीद्वित्वप्रयुक्तग्रहणद्वयं न स्यात्, एकयैव सामग्र्या देशद्वयं चन्द्रश्च गृहीते स्याताम्—तदा उभयत्वावच्छिन्नदेशरूपाकारैक्यं स्यात्, ग्रहणभेदात्तु प्रत्येकं तत्तद्देशत्वेन ग्रहणात् उभयत्वावच्छिन्नदेशाधिकरणतारूपग्राह्याकाराभावात् ग्राह्याकारभेद इत्याशयात् । **एकत्वे**ति; चन्द्रगतैकत्वेत्यर्थः । ननु स्वदेशविशिष्टचन्द्रेति युक्तम्, समीपदेशविशिष्टचन्द्रग्रहणमिति कथम्, वैशिष्ट्याभावादित्यत्राह **देशान्तरस्ये**ति । चन्द्रसमीपदेशस्य चन्द्रस्य च ज्ञानद्वये एकस्मिन्नेव वा ज्ञाने निरन्तरभानम्—तस्य देशस्य चन्द्रस्य च यत् अन्तरालम्, तदग्रहणसहितं—तयोर्देशचन्द्रयो मिथोऽसंबन्धाग्रहणपूर्वं भानमिति यावत् । तावता विशिष्टव्यवहार इति । ननु देशभेदेन पूर्वानुभवविषयस्य पाश्चात्यानुभवविषयस्य च सोयं देवदत्त इत्यैक्यप्रतीतिवत् तद्देशग्रहणविषयस्यैतद्देशग्रहणविषयस्य च चन्द्रस्यैक्यप्रतीतिसंभवात् द्वौ चन्द्राविति कथमित्यत्राह **तत्रे**ति । **ग्रहणे** इत्यस्य **सामर्थ्ये**त्यत्रान्वयः । प्रत्यभिज्ञाया एव संस्कारसहितचक्षुर्जन्याया एकत्वग्रहणे सामर्थ्यम्; न तु केवलचक्षुर्जन्यज्ञानस्येत्यर्थः । अथवा यथा संस्कारासहकृतं चक्षुः सोऽयमिति स्मृतिप्रत्यक्षविषयैक्यप्रत्यभिज्ञानं जनयितुं न समर्थम्, तथा अयमयं चन्द्र इति ग्रहणद्वयविषयैक्यज्ञानेऽपि तन्न समर्थमित्यर्थः । देशद्वयसंबन्धस्य कालभेदेनाविरोधवत् अत्राविरोधस्य न ग्रहणम् कालभेदाग्रहणात् । अतोपि न चन्द्रैक्यग्रहणसंभवः । ननु चक्षुष एकस्य गतिभेदेन सामग्रीद्वित्ववर्णनमयुक्तम्, द्वयोश्चक्षुषोरप्येकसामग्रीत्वस्येष्टत्वात् । अन्यथा सर्वदा चाक्षुषद्वयोत्पत्ति-

द्वयोश्चक्षुषोरेकसामग्र्यन्तर्भावेपि तिमिरादिदोषभिन्नं चाक्षुषं तेजः सामग्रीद्वयं भवतीति कार्यकल्प्यम्। अपगते तु दोषे स्वदेशविशिष्टस्य चन्द्रस्यैकग्रहणवेद्यत्वात् एकश्चन्द्र इति भवति प्रत्ययः। दोषकृतं तु सामग्रीद्वित्वं तत्कृतं ग्रहणद्वित्वं तत्कृतं ग्राह्याकारद्वित्वञ्च इति निरवद्यम्॥

अतः सर्वं विज्ञानजातं यथार्थमिति सिद्धम्। ख्यात्यन्तराणां दूषणानि तैस्तैर्वादिभिरेव प्रपञ्चितानीति न तत्र यत्नः क्रियते।

अथवा किमनेन बहुनोपपादनप्रकारेण। प्रत्यक्षानुमानागमाख्यं प्रमाणजातमागमगम्यं च निरस्तनिखिलदोषगन्धमनवधिकातिशयासंख्येयकल्याणगुणगणं सर्वज्ञं सत्यसङ्कल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति? किं नोपपद्यते? भगवता हि परेण ब्रह्मणा क्षेत्रज्ञपुण्यपापानुगुणं तद्भोग्यत्वायाखिलं जगत् सृजता सुखदुःखोपेक्षाफलानुभवानुभाव्याः पदार्थाः सर्वसाधारणानुभवविषयाः, केचन तत्तत्पुरुषमात्रानुभवविषयाः तत्तत्कालावसानाः तथातथाऽनुभाव्याः सृज्यन्ते। तत्र बाध्यबाधकभावः सर्वानुभवविषयतया तद्रहिततया चोपपद्यत इति सर्वं समञ्जसम्॥

---

प्रसंगादित्यत्राह **द्वयो**रिति। दोषाभावे स उत्सर्ग इति भावः। **द्वित्वञ्चे**ति। अत्र द्वौ चन्द्राविति ग्राह्याकारभूतदेशगतं द्वित्वं भासते। स परमार्थः। द्वित्वावच्छिन्नदेशाधारतारूपैकाकाराभावश्च ग्रहणभेदकृत इति ज्ञापनाय ग्रहणभेदोपपादनम्। तदुपपादनाय सामग्रीद्वित्वोपपादनम्। न च द्वाविति ग्रहणगतद्वित्वभानमेवास्त्विति वाच्यम्—वस्तुतो ग्रहणयोर्भेदेऽपि भेदस्याग्रहीतत्वात् ज्ञानास्वयम्प्रकाशत्वपक्षे तद्द्वित्वभानायोगेन ग्राह्याकारद्वित्वस्यैव वक्तव्यत्वात् तस्यैव सर्वैरादरणसंभवाच्च।

ननु स्यान्नाम विषयस्य सर्वस्य परमार्थत्वम्। तावतैषां ज्ञानानां याथार्थ्यं कथम्-द्वित्व-पीतरूपादिसंसर्गस्य चन्द्रशङ्खादौ अविद्यमानस्य ग्रहणात; स्वप्नेऽपि स्वाप्निकपदार्थेषु जागरपदार्थभेदस्य ग्रहणादिति चेन्न-अन्यथाख्यातिं परित्यज्य सर्वज्ञानयाथार्थ्यस्य अथवेत्यारब्धत्वात्। द्वित्वादीनां चन्द्रादीनाञ्चेह निरन्तरभानमात्रम, न तु वैशिष्ट्यग्रहः, किंत्वसंसर्गाग्रह एवेति सर्वत्राख्यातेरेवाभिमतत्वात् यथार्थं सर्वविज्ञानमित्यस्याक्षतेः। विशिष्टज्ञानयाथार्थ्यस्यैव वर्णनं तु कतिपयापरोक्षज्ञानमात्रे। अन्येषामपरोक्षाणाम, सर्वेषां परोक्षप्रमाणाञ्चाख्यातिपक्षेणैव याथार्थ्यम्। एवं देहात्मभ्रमादावपि भेदाग्रह एव; आत्मनोऽप्राकृततया सर्वस्य सर्वात्मकत्वयुक्तेरप्रसरादित्यादिकं बोध्यमित्याशयेनाह **इति निरवद्य**मिति। **प्रपञ्चितानी**ति। पदार्थानां सत्त्वस्य, विज्ञानातिरिक्तसद्भावस्य, निर्विषये ख्यातित्वायोगादेश्चात्रापि ग्रन्थे स्थापिततया ख्यात्यन्तरदूषणं पृथङ् न करणीयमपि। **अथवाकिमित्यादि**र्ग्रन्थः कचिन्न पठ्यत इति टीकायामुक्तम्। स्वपक्षगतवैलक्षण्यप्रदर्शनायान्वारुह्योक्तिरियम्–स्वामश्रुतिमार्गदर्शिनीति विशिष्टज्ञानयथार्थत्वमपि तद्रीत्यैव सर्वत्रेति।

यत् पुनः सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धमिति—तदसत्; ( छा. 8. 3. 2. ) "अनृतेन हि प्रत्यूढाः" इत्यादिष्वनृतशब्दस्यानिर्वचनीयानभिधायित्वात्। ऋतेतरविषयो ह्यनृतशब्दः। ऋतमिति कर्मवाचि; ( कठ. 1. 3. 1. ) "ऋतं पिबन्तौ" इति वचनात्। ऋतं=कर्मफलाभिसंधिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम्। अत्र त (अतस्त)-द्व्यतिरिक्तं सांसारिकफलं कर्म अनृतम्, ब्रह्मप्राप्तिविरोधि; ( छा. 8. 3. 1. ) "एतं ब्रह्मलोकं न विन्दन्ति; अनृतेन हि प्रत्यूढाः" इति वचनात् ॥

( यजु. 2. 8. 9. ) "नासदासीन्नो सदासीत्" इत्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ; उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोः चिदचिद्व्यष्टिभूतयोर्वस्तुनोः अप्ययकाले अचि(चिदचि)त्समष्टिभूते तमश्शब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य। नात्र कस्य चित् सदसदनिर्वचनीयतोच्यते; सदसतोः कालविशेषे असद्भावमात्रवचनात्। अत्र तमश्शब्दाभिहितस्याचित्समष्टित्वं श्रुत्यन्तरादवगम्यते, ( सुबाल. 2. ) "अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते" इति ॥

सत्य तमश्शब्देनाचित्समष्टिरूपायाः प्रकृतेः सूक्ष्मावस्थोच्यते। तस्यास्तु,

---

अविद्याविषयप्रमाणानुपपत्तौ, पूर्वपक्षिणा मिथ्याभूतस्य जगतो मिथ्याभूतमुपादानं भवितुमर्हतीति हेतूपन्यासपूर्वकं अज्ञानरूपधर्मिविषये प्रत्यक्षानुमानरूपप्रमाणद्वयं प्रदर्शितम्। तद्द्वयं तद्धेतुरूपार्थापत्तिश्च विशिष्य विचार्याज्ञानं निरस्य, तन्मिथ्यात्वनिराकरणाय तद्धेतुभूतं जगन्मिथ्यात्वं निरस्यता भ्रमस्वरूपशोधनेन अनिर्वचनीयनिरसनमुखेन ख्यातिविचारेण सर्ववस्तुपारमार्थ्यमेतावता वर्णितम्। अथ श्रुत्यादिप्रमाणानि विमृश्यन्ते। औचित्यात् श्रुत्यर्थापत्तिरपि पूर्वपक्षपुनरनुवादस्थले दर्शिता श्रुत्यनन्तरं विम्रक्ष्यते। तत्र महापूर्वपक्षे गृहीतक्रमेण श्रुतीर्विचारयितुमाह **यत् पुनरिति**।

**कर्मवाचीति**। न त्विह तथ्यत्वेन तथ्यवाचीत्यर्थः। कर्म-तत्फल-तत्पान-तत्कर्त्रादीनां सर्वेषां तथ्यत्वे फलमात्रस्य तथ्यत्वेन कथनायोगात् तथ्यत्वेन तदर्थकत्वं न भवतीति भावः। अवश्यम्भावित्वात् कर्मफलमेव ऋतमित्युच्यत इति परोक्तत्वात् ऋतमवश्यम्भावि। पानान्वयार्हत्वाय तत्र फलग्रहणेऽपि अवश्यम्भावित्वमुखेनैव तद्ग्रहणात् कर्मापि तदर्थः स्यात्। तदुपात्तवाक्य एव, 'तेषां सत्यानां सतामनृतमपिधानम्' इति अद्वैताननुकूलं बहून् सत्यान् प्रदर्श्य तत्पिधायकत्वेनानृतमभिहितम्। एवञ्च ऋतस्य तावत्सत्यप्रकाशकत्वमवसीयते। फलाभिसंधिरहितकर्मैव प्रथमसोपानं तावत्सत्यप्राप्तये। तच्च शेषभूतजीवस्वरूपानुबन्धित्वात् जीवानामवश्यम्भावि; न तु स्वर्गादिकामार्थं कर्म तथा; स्वरूपविरुद्धत्वात्। तत औचित्यात् भगवदर्पणकर्मव्यतिरिक्तं कर्म अनृतमिति लभ्यते। अतएवोपासनार्थं नानाविधं कर्म पुण्यकर्मत्वेन प्रस्तुत्य, (तै. ना.) अनृतादात्मानं जुगुप्सेदिति हेयकर्मण्यनृतपद प्रयोग इति भावः। **प्रलयप्रतिपादनेति**। चिद्व्यष्टेरचित्समष्टौ प्रलयश्चैकीभावमात्रम्। यद्वा तमश्शब्दः चिद्गर्भाचित्पर एव। एतद्दर्शकमेव **चिदचित्समष्टी**ति पाठान्तरम्।

(श्वे. 4. 10.) "मायां तु प्रकृतिं विद्यात्" इति मायाशब्देनाभिधानादनिर्वचनीयत्वमिति चेत्—नैतदेवम्; मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति ॥ मायाशब्दस्य मिथ्यापर्यायत्वेनानिर्वचनीयवाचित्वमिति चेत्—तदपि नास्ति। न हि सर्वत्र मायाशब्दो मिथ्याविषयः; आसुरराक्षसास्त्रादिषु सत्येष्वेव मायाशब्दप्रयोगात्। यथोक्तम्—(वि. पु. 1. 19. 20.) "तेन मायासहस्रं तत् शम्बरस्याऽऽशुगामिना। बालस्य रक्षता देहमेकैकश्येन सूदितम् ॥" इति। अतो मायाशब्दो विचित्रार्थसर्गकराभिधायी। प्रकृतेश्च मायाशब्दाभिधानं विचित्रार्थसर्गकरत्वादेव। (श्वे. 4. 9.) "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः" इति, मायाशब्दवाच्यायाः प्रकृतेर्विचित्रार्थसर्गकरत्वं दर्शयति। परमपुरुषस्य च तद्वत्तामात्रेण मायित्वमुच्यते; नाज्ञत्वेन। जीवस्यैव हि मायया निरोधः श्रूयते, "तस्मिंश्चान्यो मायया संनिरुद्धः" इति; 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' (गौड. का.) इति च। (बृ. 4. 6. 19.) "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यत्रापि विचित्राः शक्तयोऽभिधीयन्ते। अत एव हि (?....) "भूरि त्वष्टेव राजति" इत्युच्यते। न हि मिथ्याभिभूतः कश्चिद्विराजते। (गी. 7. 14.) 'मम माया दुरत्यया' इत्यत्रापि गुणमयीति वचनात् सैव त्रिगुणात्मिका प्रकृतिरुच्यत इति न श्रुतिभिः सदसदनिर्वचनीयाज्ञानप्रतिपादनम् ॥

नाप्यैक्योपदेशानुपपत्त्या। न हि, "तत् त्वमसि" इति जीवपरयोरैक्योपदेशे सति सर्वज्ञे सत्यसङ्कल्पे सकलजगत्सर्गस्थितिविनाशहेतुभूते तच्छब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता काचिदप्यनुपपत्तिर्दृश्यते। ऐक्योपदेशस्तु 'त्वं'शब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः। (छा. 6.3.2.) "अनेन जीवेनाऽऽत्मनाऽ-

---

तेनेत्यादि। बालस्य प्रह्लादस्य शरीरं रक्षता भगवतश्चक्रायुधेन हिरण्यकशिपुप्रेरितशम्बरासुरप्रहितानि मायामयानि आश्चर्यकार्यकराणि सहस्रमस्त्राणि प्रत्येकं छिन्नानीत्यर्थः। न हि मायायाः मिथ्यात्वे आयुधच्छेद्यत्वमिति भावः। ननु तत्र तथाऽस्तु; मिथ्याभूतमपि मायाशब्दार्थ इत्यत्राह अत इति। अनेकार्थकल्पना न युक्तेति भावः। मुख्यार्थ एव स्वीकर्तव्यः; तत्र प्रकृते गमकमप्यस्तीत्याह प्रकृतेश्चेति। अस्मात् मायाख्यात् प्रधानात्। अज्ञानं माया। तद्वशोऽज्ञः परमात्मेति परमतम्। तदा मायीति प्रयोगोऽन्यस्य निरुद्धत्वकथनञ्च न घटत इत्याह परमेति। गौडपादवचनं तदुपात्तं जीवस्यैवाज्ञत्वबोधकं तत्प्रतिकूलमेवेति अत्रैव दर्शयति अनादीति। इन्द्रः। इदि परमैश्वर्ये। इन्द्रः परमेश्वरः। मिथ्याभिभूतः मिथ्याज्ञानप्राप्तपरिभवः। ममेति। तन्मते, 'मम दुरत्यये'त्यर्थः साधुः स्यात्। ततश्च स एव प्रपत्ता स्यात्; न प्रपत्तव्यः।

"ब्रह्मणस्तत्त्वमस्यादिवाक्यसामानाधिकरण्यावगतैक्यानुपपत्त्या च" इति प्राक् तदुक्तां श्रुतार्थापत्तिं निरस्यति नापीति। अनुपपत्तिप्रमाणं हि श्रुतानामर्थानामत्यागेनोपपादकमेवापेक्षते इति

नुप्रविश्य नामरूपे व्याकरवाणि " इति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम् । अतो न ब्रह्माज्ञानपरिकल्पनम् ॥

इतिहासपुराणयोरपि न ब्रह्माज्ञानवादः क्वचिदपि दृश्यते ॥

ननु ( वि. 2. 12. ) "ज्योतींषि विष्णुः" इति ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञाय, "ज्ञानस्वरूपो भगवान् यतोऽसौ" इति शैलाब्धिधरादिभेदभिन्नस्य जगतो ज्ञानैकस्वरूपब्रह्माज्ञानविजृम्भितत्वमभिधाय, "यदा तु शुद्धं निजरूपि" इति ज्ञानस्वरूपस्यैव ब्रह्मणः स्वस्वरूपावस्थितिवेलायां वस्तुभेदाभाव[प्र]दर्शनेनाज्ञानविजृम्भितत्वमेवस्थिरीकृत्य, "वस्त्वस्ति किम्", "मही घटत्वम्" इति श्लोकद्वयेन जगदुपलब्धिप्रकारेणापि वस्तुभेदानामसत्यत्वमुपपाद्य, "तस्मान्न विज्ञानमृते" इति प्रतिज्ञातं ब्रह्मव्यतिरिक्तस्यासत्यत्वमुपसंहृत्य, "विज्ञानमेकम्" इति ज्ञानस्वरूपे ब्रह्मणि भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेति स्फुटीकृत्य, "ज्ञानं विशुद्धम्" इति ज्ञानस्वरूपस्य ब्रह्मणः स्वरूपं विशोध्य, "सद्भाव एवं (षो) भवतो मयोक्तः" इति, 'ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वम्, नान्यस्य; अन्यस्य चासत्यत्वमेव; तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टम्' इति ह्युपदेशो दृश्यते—

नैतदेवम् । अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वा, पूर्वमनुक्तं रूपान्तरम्, (2. 12. 36.) "संक्षेपः श्रूयताम्" इत्यारभ्याभिधीयते । चिदचिन्मिश्रे जगति चिदंशो वाङ्मनसागोचरस्वसंवेद्यस्वरूपभेदो ज्ञानैकाकारतया अस्पृष्टप्राकृतभेदः अविनाशित्वेन अस्तिशब्दवाच्यः; अचिदंशस्तु चिदंशकर्मनिमित्तपरिणामभेदो विनाशीति नास्तिशब्दाभिधेयः; उभयं तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकम्—इत्येतद् रूपं संक्षेपेणात्राभिहितम् । तथाहि—( वि. पु. 2. 12. 37. )

"यदम्बु वैष्णवः कायस्ततो विप्र! वसुन्धरा । पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता॥"

---

भावः । स्मृतिं निरस्यति इतिहासेति । ज्योतींषीति । "ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्दिशो दिशश्च । नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥" । वस्त्वस्तीति । "वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् । यच्चान्यथात्वं द्विज याति भूयो न तत् तथा तत्र कुतो हि तत्त्वम् ।" । तस्य भावः तत्त्वम् । तत्-पूर्ववस्तु । कपालस्य कथं घटत्वमित्यर्थः । महीति । "मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः । जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥" । विस्तीर्णं स्वरूपम् विस्तारम् । रूपान्तरमित्यत्र अन्तरपदेन पूर्वोक्तरूपविरोधिमिथ्यात्वं नोच्यते, किंतु तत्समानाधिकरणमवश्यज्ञेयमन्यद्रूपमिति ज्ञाप्यते । संक्षेपशब्देन सर्वानुगतैकाकाररूपधर्मविवक्षा । संक्षेपत इति पाठः अशुद्धः । वैष्णवः कायः-विष्णोः शरीरभूतम् । एतत्कथनमेतज्जन्यस्यापि शरीरत्वज्ञापनाय । संयुतेतीति । इत्यनेनेत्यर्थः ।

इति, अम्बुनो विष्णोश्शरीरत्वेन अम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः कायः, तस्य च विष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य 'ज्योतींषि विष्णुः' इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्याह। अस्मिन् शास्त्रे पूर्वमप्येतदसकृदुक्तम्—(वि. 1. 22. 86. 38.) "तानि सर्वाणि तद्वपुः" "तत् सर्वं वै हरेस्तनुः", (वि. 1. 2. 69.) "स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति। तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिशति(श्यते) 'ज्योतींषि विष्णुः' इति। अत्रास्त्यात्मकं नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम्; इदमस्त्यात्मकम्, इदं नास्त्यात्मकम्, अस्य च नास्त्यात्मकत्वे हेतुरयमित्याह, ज्ञानस्वरूपो भगवान् यतोऽसौ इति। अशेषक्षेत्रज्ञात्मनाऽवस्थितस्य भगवतो ज्ञानमेव स्वाभाविकं रूपम्; न देवमनुष्यादिवस्तु रूपम्। यत एवम्, तत एवाचिद्रूपदेवमनुष्य(ष्याः)शैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः=तस्य ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसंधानमूलाः; देवाद्याकारानुसंधानमूलकर्ममूला इत्यर्थः। यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणपरिणामास्पदम्, ततः तत् नास्तिशब्दाभिधेयम्, इतरदस्तिशब्दाभिधेयमित्यर्थादुक्तं भवति।

तदेव विवृणोति—यदा तु शुद्धं निजरूपि इति। यदैतत् ज्ञानैकाकारमात्मवस्तु देवाद्याकारेण स्वात्मनि वैविध्यानुसंधानमूलसर्वकर्मक्षयान्निर्दोषं परिशुद्धं निजरूपि भवति, तदा देवाद्याकारेणैकीकृत्याऽऽत्मकल्पनामूलकर्मफलभूताः तद्भोगार्थाः वस्तुषु वस्तुभेदा न भवन्ति=ये देवादिषु वस्तुष्वात्मतयाऽभिमतेषु भोग्यभूताः देवमनुष्यशैलाब्धिधरादिवस्तुभेदाः, ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्ति—इत्यचिद्वस्तुनः कादाचित्कावस्थाविशेषयोगितया नास्तिशब्दाभिधेयत्वम्, इतरस्य सर्वदा निजसिद्धज्ञानैकाकारत्वेन अस्तिशब्दाभिधेयत्वमित्यर्थः। प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगिनोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेत्याह वस्त्वस्ति किम् इति। अस्तिशब्दाभिधेयो ह्यादिमध्यपर्यन्तहीनः सततैकरूपः पदार्थः, तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात्;

---

आत्मेतीति। इत्यर्थेनेत्यर्थः। आहेति; सूचयतीत्यर्थः।

वैविध्येति। श्लोके विज्ञानशब्दः एकरूपे सर्वस्मिन् जीवात्मनि देवादिदेहभेदप्रयुक्तवैविध्यानुसंधानवाचीति भावः। पूर्वार्धे—ज्ञानस्वरूपः ज्ञानाकारात्मशरीरकः भगवान्, न वस्तुभूतः स्वभावतो देवाद्याकारजीवशरीरको न भवतीत्यर्थः। एकीकृत्येति। श्लोके संकल्पपदमेकीकृत्यकल्पनार्थकम्। समिति एकीकारे। देवाद्याकारभेदशालिशरीराभिन्नतया आत्मग्रहणं संकल्पशब्दार्थ इति भावः। वस्तुष्वित्यादि। शरीरविशिष्टात्मरूपविशिष्टवस्त्वन्तर्गताः शरीरभेदा इत्यर्थः। निजसिद्धेति; निजं सिद्धेति, स्वकभावसिद्धेत्यर्थः। आदिमध्यपर्यन्तेति। आद्यन्तयोः सत्त्वे हि

अचिद्वस्तु किंचित् क्वचिदपि तथाभूतं न दृष्टचरम्। ततः किमित्यत्राह यच्चान्यथात्वम् इति। यद्वस्तु प्रतिक्षणमन्यथात्वं याति, तत् उत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसंधानमस्ति। अतः सर्वदा तस्य नास्तिशब्दाभिधेयत्वमेव। तथा ह्युपलभ्यत इत्याह मही घटत्वम् इति। स्वकर्मणा देवमनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यथाभूतमालक्ष्यते; अनुभूयत इत्यर्थः। एवं सति किमप्यचिद् वस्तु अस्तिशब्दार्हमादिमध्यपर्यन्तहीनं सततैकरूपमालक्षितमस्ति किम्? न ह्यस्तीत्यभिप्रायः।

यस्मादेवम्, तस्मात् ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तु कदाचित् क्वचित् केवलास्तिशब्दवाच्यं न भवतीत्याह तस्मान्न विज्ञानमृते इति। आत्मा तु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्यनीकस्वरूपोऽपि देवादिशरीरप्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिः तेनतेन रूपेण बहुधाऽनुसंहित इति तद्भेदानुसंधानं नात्मस्वरूपप्रयुक्तमित्याह विज्ञानमेकम् इति। आत्मस्वरूपं तु कर्मरहितम्; तत एव मलरूपप्रकृतिस्पर्शरहितम्; ततश्च तत्प्रयुक्तशोकमोहलोभाद्यशेषहेयगुणासङ्गि; उपचयापचयानर्हतयैकम्; तत एव सदैकरूपम्; तच्च वासुदेवशरीरमिति तदात्मकम्, अतदात्मकस्य कस्यचिदप्यभावादित्याह ज्ञानं विशुद्धम् इति।

चिदंशः सदैकरूपतया सर्वदाऽस्तिशब्दवाच्यः; अचिदंशस्तु[प्रति]क्षणपरिणामित्वेन सर्वदा नाशगर्भ इति सर्वदा नास्तिशब्दाभिधेयः; एवंरूपचिदचिदात्मकं जगत् वासुदेवशरीरं तदात्मकमिति जगद्याथात्म्यं सम्यगुक्तमित्याह सद्भाव एवम् इति। अत्र सत्यम् असत्यम् इति, यदस्ति यन्नास्ति इति प्रक्रान्तस्योपसंहारः। एतत् ज्ञानैकाकारतया समम्, अशब्दगोचरस्वरूपभेदमेवाचिन्मिश्रं भुवनाश्रितं देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हभेदं यद्वर्तते, तत्र हेतुः कर्मैवेत्युक्तमित्याह एतत्तु यत इति। तदेव विवृणोति–यज्ञः पशुः इति। जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह "यच्चैतत्" इति। (वि. पु. 2. 12. 46. 47.)

---

मध्यपर्वापि स्यात्। स्तिमितेति; प्रतिबद्धेत्यर्थः। विशुद्धमित्यादिपदानां क्रमेणार्थवर्णनं कर्मरहितमित्यादिना। एकमुपचयापचयानर्हम्। सद्भावः याथात्म्यम्। सम्यगिति। संव्यवहारभूतमित्यत्र समिति सम्यगर्थकम्। तेन व्यवहारादेर्मिथ्यात्वव्यावर्तनम्। सम एकीकारार्थकत्वेऽपि अबाधितत्वमर्थसिद्धम्। व्यवहारेत्यनुक्त्वा संव्यवहारेत्युक्तम्, कर्माभावे शुद्धव्यवहारो भवतीति। अतो व्यवहारपदं व्यावहारिकत्वज्ञापकमिति न। एतदिति चेतनवर्गग्रहणम्। ब्रह्माण्डरूपभुवनान्तर्गतं चेतनजातं देवादिव्यवहारं प्राप्तमिति यत्, तत्र कारण कर्मेत्यर्थः। यज्ञः पशुरिति। "यज्ञः पशुर्वह्निरशेषऋत्विक् सोमः सुराः स्वर्गमयश्च कामः। इत्यादिकर्माश्रितमार्गदृष्टं भूरादिभेदाश्च (लोकाश्च) फलानि तेषाम्"। यच्चैतदिति। "यच्चैतद् भुवनगतं मया तवोक्तं सर्वत्र व्रजति हि तत्र कर्मवश्यः।

अत्र निर्विशेषे परे ब्रह्मणि, तदाश्रये सदसदनिर्वचनीये चाज्ञाने, जगतस्तत्कल्पितत्वे चा(वाऽ)नुगुणं किञ्चिदपि पदं न दृश्यते ; अस्तिनास्तिशब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत् परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकम्, ज्ञानैकाकारस्याऽऽत्मनो देवादिविविधाकारानुभवे अचित्परिणामे च हेतुर्वस्तुयाथात्म्यज्ञानविरोधि क्षेत्रज्ञानां कर्मैवेति प्रतिपादनात् ; अस्तिनास्तिसत्यासत्यशब्दानां च सदसदनिर्वचनीयवस्त्वभिधानासामर्थ्याच्च । नास्त्यसत्यशब्दौ अस्तिसत्यशब्दविरोधिनौ । अतश्च ताभ्यामसत्त्वं हि प्रतीयते ; नानिर्वचनीयत्वम् । अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ ; अपि तु विनाशित्वपरौ । "वस्त्वस्ति किम्", "मही घटत्वम्" इति, अत्रापि विनाशित्वमेव ह्युपपादितम् ; न निष्प्रमाणकत्वम्, ज्ञानबाध्यत्वं वा ; एकेनाऽऽकारेणैकस्मिन् कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात् । तुच्छत्वं हि प्रमाणसंबन्धानर्हत्वम् । बाधोऽपि—यद्देशकालादिसम्बन्धितया यदस्तीत्युपलब्धम्, तस्य तद्देशकालादिसम्बन्धितया नास्तीत्युपलब्धिः ; न तु कालान्तरेऽनुभूतस्य कालान्तरे परिणामादिना नास्तीत्युपलब्धिः ; कालभेदेन विरोधाभावात् । अतो न मिथ्यात्वम् ।

एतदुक्तं भवति—ज्ञानस्वरूपमात्मवस्तु आदिमध्यपर्यन्तहीनं सततैकस्वरूपमिति स्वत एव सदा अस्तिशब्दवाच्यम् ; अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरिणामि विनाशीति सर्वदा नास्त्यर्थगर्भमिति नास्त्यसत्यशब्दाभिधेयम्—इति ॥ यथोक्तम्—( 2. 13. 100. ) "यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसंभूतां तत् वस्तु नृप तच्च किम् ॥" ( वि. 2. 14. 24. ) "अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते । तत्तु नास्ति (नाशि) न संदेहो नाशिद्रव्योपपादितम् ॥" इति । देशकालकर्मविशेषापेक्षया अस्तित्वनास्तित्वयोगिनि वस्तुनि केवलास्तिबुद्धिबोध्यत्वमपरमार्थ इति ह्यपरमार्थ इत्युक्तम् । आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम् । श्रोतुश्च मैत्रेयस्य, ( वि. 2. 2. 2. ) "विष्ण्वाधारं यथा चैतत् त्रैलोक्यं समवस्थितम् । परमार्थश्च मे प्रोक्तो यथाज्ञान

---

ज्ञात्वैतत् ध्रुवमचलं सदैकरूपं तत् कुर्यात् विशति हि येन वासुदेवम् ॥" ।

नाशित्वतुच्छत्वबाध्यत्वानां भेदं व्युत्पादयति **एकेने**त्यादिना । ननु प्रकृतिद्रव्यस्यापि सर्वकालस्थिततया सर्वस्य घटादेस्तदभिन्नतया कथं नास्तिशब्दाभिधेयत्वमित्यत्र विवरीतुमाह **एतदुक्त**मिति । नास्तित्वमवस्थान्तरप्राप्तिः । तदस्ति यत्र, तदसत् ; अन्यत् सदिति भावः । **देशे**त्यादि ; 'यत्तु निष्पाद्यते,' 'एवं विनाशिभिर्द्रव्यैः.' इति तत्रोक्तरीत्या कचित् कदाचिन्निष्पादनविघावशादित्यर्थः । निर्गुणादन्यन्नास्तीति चेन्मैत्रेयेणान्ततोऽवधारितम्, विष्ण्वाधारं सर्वमवस्थितमिति सारग्रहणविज्ञापनं न घटत इत्याह **श्रोतुश्चे**ति । ज्योतींषिविष्णुरित्यस्य बाधार्थत्वे विष्ण्वाधारत्वं

प्रधानतः ॥" इत्य(त्याद्य)नुभाषणाच्च, 'ज्योतींषि विष्णुः' इत्यादिसामानाधिकरण्यस्याऽऽत्मशरीरभाव एव निबन्धनम्; चिदचिद्वस्तुनोश्चास्तिनास्तिशब्दप्रयोगनिबन्धनं ज्ञानस्याकर्मनिमित्तस्वाभाविक[स्व]रूपत्वेन प्राधान्यम्; अचिद्वस्तुनश्च तत्कर्मनिमित्तपरिणामित्वेनाप्राधान्यम्' इति प्रतीयते। (इति प्रमाणानुपपत्तिः)

यदुक्तम्—(27) निर्विशेषब्रह्मविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतयः—इति। तदसत्—(तै. उत्त. ना.) "वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय", (तै. ना.) "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि, ... ... ...न तस्येशे कश्चन तस्य नाम महद् यशः,........ य एनं विदुरमृतास्ते भवन्ति" इत्याद्यनेकवाक्यविरोधात्। ब्रह्मणः सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषज्ञानादेव मोक्षं वदन्ति। शोधकवाक्यान्यपि सविशेषमेव ब्रह्म प्रतिपादयन्तीत्युक्तम्।

तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम्; तत्त्वंपदयोः सविशेषब्रह्माभिधायित्वात्। तत्पदं हि सर्वज्ञं सत्यसङ्कल्पं जगत्कारणं ब्रह्म परामृशति; 'तदैक्षत बहु स्याम्' इत्यादिषु तस्यैव प्रकृतत्वात्। तत्समानाधिकरणं त्वम्पदं च अचिद्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति। प्रकारद्वयावस्थितैकवस्तुपरत्वात् सामानाधिकरण्यस्य। प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासंभवेन सामानाधिकरण्यमेव परित्यक्तं स्यात्। द्वयोः पदयोर्लक्षणा च। 'सोऽयं देवदत्तः' इत्यत्रापि न लक्षणा; भूतवर्तमानकालसंबन्धितयैक्यप्रतीत्यविरोधात्। देशभेदविरोधश्च कालभेदेन परिहृतः। "तदैक्षत बहु स्याम्" इत्युपक्रमविरोधश्च। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च न घटते। ज्ञानस्व-

---

नानूद्येत। शरीरात्मभाव एव तथाऽनुवादः। एवं प्रमाणानुपपत्तिः प्रपञ्चिता।

अथ महापूर्वपक्षे उक्तं निवर्तकज्ञानमनूद्य निवर्तकानुपपत्तिं दर्शयति **यदुक्त**मित्यादिना। निवर्तकानुपपत्तिर्नाम परैर्निवर्तकत्वेनाभिमतस्य ज्ञानस्य श्रुत्याद्यर्थत्वानुपपत्तिः। **सर्वे निमेषा** इति कालपरिणामानां तज्जन्यत्वमुच्यते। अधीत्यस्य जज्ञिरे इत्यनेन संबन्धः।

**शोधकवाक्यानि** सत्यं ज्ञानम्, निर्गुणमित्यादीनि। **न लक्षणे**ति। कालद्वयस्य देशद्वयस्य च मिथोविरुद्धतया एकदेशविशिष्टे एककालविशिष्टे च देशान्तर—कालान्तरसंबन्धो न भवतीति सोयमिति पदयोर्व्यक्तिमात्रपरत्वमुच्यते परैः। तन्न—कालद्वयसंबन्धस्यैवात्र ज्ञापनीयत्वात्। अन्यथा हि वस्तुस्थैर्यमैक्यञ्च न सिद्ध्येदिति क्षणभङ्गपक्ष एव स्यात्। न च कालविशिष्टे कथं कालान्तरसंबन्ध इति वाच्यम्—विशेषणांशे काले कालान्तरान्वयाविवक्षणात्; विशेष्यान्वयस्य चाबाधात्। न हि नीलमुत्पलमित्यत्र नीलत्वे उत्पलत्वान्वय इष्टः। देशद्वयसंबन्धोऽप्येवं कालभेदेन सुनिर्वहः; परिच्छिन्ने वस्तुनि तस्य तथैव निर्वाह्यत्वात्। कालद्वयसंबन्धस्तु देशभेद इवैकत्रापि देशे संभावित इति न दोषः।

**रूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य समस्तकल्याणगुणात्मकस्याज्ञानम् , तत्कार्यानन्तापुरुषार्थाश्रयत्वं च भवति ।**

**बाधार्थत्वे च सामानाधिकरण्यस्य त्वंतत्पदयोरधिष्ठानलक्षणा निवृत्तिलक्षणा चेति लक्षणादयः त एव दोषाः । इयांस्तु विशेषः—नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनम् । तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च ॥ अधि-**

---

तदत्र स इति अयमिति च पदाभ्यां प्रत्यायितार्थस्य प्रकारस्य विशेष्यस्य वा कस्य परित्यागोऽस्ति, येन लक्षणा स्यादिति भावः । **भवतीति** ; भवेदित्यर्थः ।

अवच्छेदवादे उपाध्यवच्छिन्नस्य जीवत्वात् विशेषणत्यागेन स्वरूपे लक्षणया जीवब्रह्मैक्यबोधः । स निरस्तः । प्रतिबिम्बवादे उपाधेरिवोपाधौ प्रतिबिम्बस्यापि बाध्यत्वात् ज्योतींषि विष्णुरित्येवं जडसामानाधिकरण्यस्थल इव जीवसामानाधिकरण्यस्थलेऽपि बाधायां सामानाधिकरण्यमेव तैरिष्यते । तमर्थमपि निरस्यति **बाधार्थत्वे चेति** । तदा चोरः स्थाणुरित्यत्र स्थाणौ, न चोर इति चोरनिषेधवत्, 'तत् न त्वम्' इत्यर्थो वर्णनीयः । अतः त्वमित्यस्य न त्वमित्यर्थे लक्षणा । तत्पदार्थभूते प्रकृतसर्वकारणत्व-सर्वज्ञत्व-सर्वशक्तित्व-सत्यसंकल्पत्वादिविशिष्टे जीवभ्रान्तेः कस्याप्यभावात् तद्बाधाप्रसक्तेः जगद्भ्रमाधिष्ठानत्वाभिमतं चैतन्यमेव तत्पदेन लक्ष्यम्-इति पदद्वयेऽपि लक्षणेति भावः । निवृत्तिलक्षणाऽधिष्ठानलक्षणा चेति क्रमोपेक्षा कुत इति चेत्—तत्पदार्थस्य सर्वज्ञेश्वरस्याप्यसत्यत्वेन बाध्यतया त्वम्पदेनाधिष्ठानलक्षणया तस्मिन् तत्पदार्थनिषेधोपि कार्य इति ज्ञप्तये । अवच्छेदपक्षेऽपि उपाध्यवच्छिन्नस्य मिथ्यात्वात् तस्यापि बाधोऽस्त्येव । तथा अवच्छिन्नचैतन्यैकदेशचैतन्यलक्षणैवाधिष्ठानलक्षणा । **आदिना** उपक्रमविरोधादिपूर्वोक्तसर्वपरिग्रहः ।

**इयांस्तु विशेषः** ; वक्ष्यमाणानेकविधदोषोपि प्रत्युताधिक इत्यर्थः । **अप्रतिपन्नस्येति** । सामानाधिकरण्यमैक्यतात्पर्यकम् । तत पूर्वत्र किञ्चिद्दर्शितम् । इह नञाद्यभावात् बाधप्रतीतिर्नैव संभवतीत्यर्थः । **नेदंरजतमितिव**दित्यनेन-नञ्घटितवाक्ये, कथञ्चिदेवकारघटितवाक्ये च भेदप्रतीतिवत् रजतं शुक्तिरिति समानाधिकरणप्रयोगे बाधप्रतीतिर्नास्तीत्युच्यते । एतेन शुक्तिरजतयोर्मानान्तरेण भेदप्रतीतिवत् जीवेश्वरयोरपि भेदस्य प्रतिपन्नत्वात् कथमप्रतिपन्नतेत्यपास्तम् । अथवा तत्र प्रसक्तस्य रजततादात्म्यस्य प्रतिषेधः कर्तव्यः । अत्र तदर्थे त्वमर्थैक्यप्रतीत्यभावात् बाधाप्रवृत्तेरप्रतिपन्न एव बाध इति स्यात् । अत एव बाधायां सामानाधिकरण्यमेत्येतदेवायुक्तम् , जननी वन्ध्येतिवत् । चोरः स्थाणुरिति वाक्यमपि न प्रसिद्धम् । चोरनिवृत्तेः स्थाणुत्वस्य चोभयोर्विधेयत्वात् । पूर्वमेव स्थाणुत्वे गृहीते तु चोरभ्रान्तिप्रसक्त्यभावात् स्थाणुर्न चोर इति नैव वक्तव्यम् । अयं न चोरः, किंतु स्थाणुरित्यर्थवर्णने तु इदम्पदेनैव सामानाधिकरण्यं स्थाणुपदस्य, न चोरपदेन । एवमत्र वाक्यभेदोपि दोषः । अथ चोरत्वेन प्रतीत इति चोरशब्दार्थमुक्त्वा स स्थाणुरित्येकवाक्यता क्रियताम् । अर्थाच्चोरनिषेधः । तद्वदिहेति चेत्—अत्र किंनिषेधः ? चोरत्वस्थाणुत्वयोर्विरोधात् चोरत्वनिवृत्तिवत् अत्र तत्त्व-त्वमर्थधर्मयोर्विरोधात् त्वमर्थ-

ष्ठानं तु प्राक्तिरोहितम् अतिरोहितस्वरूपं तत्पदेनोपस्थाप्यत इति चेन्न—प्रागधिष्ठाना-प्रकाशे तदाश्रयभ्रमबाधयोरसम्भवात् ॥ भ्रमाश्रय (?) मधिष्ठानमतिरोहितमिति चेत्—तदेवाधिष्ठानस्वरूपं भ्रमविरोधीति तत्प्रकाशे सुतरां न तदाश्रयभ्रमबाधौ। अतोऽधिष्ठाना-तिरेकिपारमार्थिकधर्म-तत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादौ। अधिष्ठाने हि पुरुषमात्राकारे प्रतीयमाने, तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्व-भ्रमः, राजत्वोपदेशेन च तन्निवृत्तिर्भवति; नाधिष्ठानमात्रोपदेशेन; तस्य प्रकाशमानत्वे-नानुपदेश्यत्वात्; भ्रमानुपमर्दित्वाच्च।

जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम्। प्रकारद्वयविशिष्टैकवस्तु-प्रतिपादनेन सामानाधिकरण्यं च सिद्धम्। निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्म-कस्य ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति। उपक्रमानुकूलता च। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च; सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणः स्थूलचिद-चिद्वस्तुशरीरत्वेन कार्यत्वात्। (श्वे. 6. 7. 8.) "तमीश्वराणां परमं महेश्वरम्.......... पराऽस्य शक्तिर्विविधैव श्रूयते", (छा. 8. 1. 6.) अपहतपाप्मा.......... सत्यकामः सत्यसङ्कल्पः" इत्यादिश्रुत्यन्तराविरोधश्च। 'तत् त्वमसि' इत्यत्रोद्देश्योपादेयविभागः

---

त्वनिवृत्तिरिति चेत्—अत्र सर्वज्ञे तत्पदार्थे जीवत्वेन प्रतीतेरभावात् त्वमर्थत्वेनप्रतीत इत्यर्थानन्वयः। तत्पदेनाधिष्ठानलक्षणायां सा लक्षणा, प्रतीतिविषय इति लक्षणा चेति लक्षणाद्वयम्। चोरव्यक्तिस्था-णुव्यक्तिभेदस्यैव तत्र सिद्धिवत् अत्रापि तत्पदार्थ-त्वम्पदार्थव्यक्त्योर्भेदस्यैव सिद्धिरित्यनिष्टापत्तिश्च ॥ अथ तत्र प्रत्यक्षे स्थाण्वादिव्यक्तिभेदः सिद्धः, नेह तथेति चेत—तर्हि धर्मद्वयाश्रयत्वमेकस्य स्यात्। तथा-ऽपि बाधे अप्रतिपन्नबाधकल्पना ॥ दुःखार्हत्वतदनर्हत्वयोर्मिथोविरोधादसमावेश इति चेत्, तथैव व्यक्ति-भेदोपि भेदप्रतीत्युपष्टब्धः सिद्ध्येदेव। एवं चोरः स्थाणुरित्यस्य चोरकल्पनाधिष्ठानं स्थाणुरित्यर्थस्वी-कारेऽपि भाव्यम्। सर्वमिदं **लक्षणादयस्त एव दोषा** इत्यादिभाष्ये हृद्गतम्। **भ्रमाश्रयम्।** भ्रमो विषयी, विषयवान्; अधिष्ठानं विषयः। अतः भ्रमः **आश्रयः** विषयी यस्य तदिति बहुव्रीहिः। अत्र, 'पाठो निरीक्ष्य' इत्युक्तं टीकायाम्। **तदेवेति**। धर्मानङ्गीकारादिति भावः। **तदाश्रय-भ्रमेति** ॥ तत् प्रति विषयिभूतभ्रमेति पूर्ववत्। अन्यो वाऽर्थः।

परपक्षे लक्षणादिर्दोष उक्तः। स्वपक्षे तत्सर्वाभावं दर्शयति **जीवशरीरके**त्यादिना। अन्त-र्यामिपर्यन्ते लक्षणेत्यादिभ्रमवारणायेदम्। ननु तत्पदार्थे त्वमर्थान्तर्यामित्वं हि विधेयम्। तदा उद्देश्य-वाचकपदानुरोधेन अस्तीति क्रिया स्यात्; न तु असीति। त्वमित्यस्योद्देश्यसमर्पकत्वे त्वदन्तर्यामी-त्यर्थो न भवति अज्ञातत्वात्। जीवमात्रार्थकत्वे सामानाधिकरण्यायोगः। तदित्यस्य तदात्मक इत्यर्थस्वीकारे तु लक्षणैव। (एतद्विस्तरः अस्मदीयेशावास्योपनिषदाचार्यभाष्यतात्पर्ये द्रष्टव्यः) इत्याशयेन पृच्छति **तत्त्रमिति**। **उपादेयेति**। अनुवाद्यत्वविधेयत्वे, गुणत्वप्रधानत्वे, उद्देश्यत्वो-

कथमिति चेत्—नात्र किञ्चिदुद्दिश्य किमपि विधीयते ; "ऐतदात्म्यमिदं सर्वम्" इत्यनेनैव प्राप्तत्वात् । अप्राप्ते हि शास्त्रमर्थवत् । इदं सर्वमिति सजीवं जगन्निर्दिश्य, 'ऐतदात्म्य'-मिति, तस्यैष आत्मेति तत्र प्रतिपादितम् । तत्र च हेतुरुक्तः—" सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः " इति, ( छा. 3. 14. 1. ) " सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तः" इतिवत् ॥

तथा श्रुत्यन्तराणि च ब्रह्मणः तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति—( तै. आरण्यके 3.11.21. ) " अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" ( बृ. 5. 7. 3. ) " यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः ", " य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः", ( सुबा. 8. ७. 6. 2. ) " यः पृथिवीमन्तरे सञ्चरन् " इत्यारभ्य, " यस्य मृत्युश्शरीरम्, यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः", ( तै. आनं ) " तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् " इत्यादीनि ।

अत्रापि—( छा. 6. 3. 2. ) " अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " इति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं शब्दवाच्यत्वं च प्रतिपादितम् । " तदनुप्रविश्य । सच्च त्यच्चाभवत्" इत्यनेनैकार्थ्यात् जीवस्यापि ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशादेवेत्यवगम्यते । अतश्चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्यमात्मशरीरभावादेवेत्यवगम्यते । तस्मात् ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्

---

पादेयत्वे परस्परप्रतिसंबन्धिनी इति मीमांसकसरणिः। उपरि विधीयते इत्युक्तिः सर्वसमादृतरीत्या । विधीयते अज्ञाततया ज्ञाप्यते । ननु प्राप्तमपि विधीयताम्; तत्राहाप्राप्ते इति । अन्यथा रागप्राप्तं सर्वं शास्त्रेण वक्तव्यम् ; वाक्ये उद्देश्यासिद्धिश्चेत्यादि द्रष्टव्यम् । तज्जलानिति । जं च लं च तदेव अन् च जलान् ; तस्य जलानिति संबन्धसामान्ये षष्ठी । ततो जायमानं तस्मिन् लीयमानं तेनानच्चेत्यर्थः । इतिशब्दार्थो हेतुः । एवं हेतुस्पष्टयाभिप्रायेणैव एतद्वाक्योदाहरणम् । तत्प्रयोज्यत्वं सर्वाभेदस्य । ब्रह्मेति द्वितीयान्तम् । तज्जत्वादिहेतुकसर्वाभेदाश्रयब्रह्मविषयकोपासनं शान्तः सन् कुर्यादित्यर्थः । अत्र तज्जलानितिहेतुगर्भविशेषणं कृत्वा तज्जलानत्वात् सर्वाभिन्नं ब्रह्मेत्यर्थोऽपि भवितुमर्हति । तदा इतिशब्दस्य, 'इति हेतुना शान्तः सन्' इति शान्तपदेनान्वयः स्यात् । तदा ब्रह्मेति प्रथमान्तम् । एवं तर्हि उपासीतेत्यत्र कर्माध्याहारः कार्यः स्यात । अत इदं भाष्ये नादृतम् । द्वितीयान्तत्वेपि खलुशब्दो युज्यते, 'इदं किलाव्याजमनोहरं वपुः' इत्यत्र किलशब्दवत् । आरभ्येति पूर्णपाठग्रहणाय । अत्रापि तत्त्वमसिघटितसद्विद्यायामपि । तदन्विति । जीवेनात्मनेति न जीवेनैक्यमिति व्यक्तमत्र ।

तस्य प्रतिपादकोऽपि शब्दः तत्पर्यन्तमेव स्वार्थमभिदधाति । अतः सर्वशब्दानां लोकव्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धमिति, "ऐतदात्म्यमिदं सर्वम्" इति प्रतिज्ञातार्थस्य, "तत् त्वमसि" इति सामानाधिकरण्येन विशेषे उपसंहारः । अतः—

निर्विशेषवस्त्वैक्यवादिनः, भेदाभेदवादिनः, केवलभेदवादिनश्च वैयधिकरण्येन-सामानाधिकरण्येन च ब्रह्मात्मभावोपदेशाः सर्वे परित्यक्ताः स्युः–एकस्मिन् वस्तुनि कस्य तादात्म्यमुपदिश्यते ? ॥ तस्यैवेति चेत्; तत् स्ववाक्येनैवावगतमिति न तादात्म्यो-

---

उपसंहार इति । सामानाधिकरण्येन विशेषे उपसंहारः, वैयधिकरण्येनोक्तस्य सामानाधिकरण्येनोपसंहारः, सामान्येनोक्तस्य विशेषे उपसंहारश्चेत्यर्थः । अथवा सामान्यतः सामानाधिकरण्येन सदेव सोम्येदमित्यारब्धस्यैक्यस्य शरीरात्मभावमूलकत्वं वैयधिकरण्येन मध्ये विस्तरेणोपपाद्य उपक्रान्तार्थस्य स्वशरीरकब्रह्मोपासनकर्तव्यत्वानुगुण्याय श्वेतकेतुरूपोपदेश्यविशेषे उपसंहार इत्यर्थः । तथाचाज्ञातज्ञाप्यरूपविधेयाभावात् अन्तर्यामित्वस्य ज्ञातत्वात् त्वत्पदं त्वदन्तर्यामीत्यर्थकम् । न चान्तर्यामीत्यर्थे असीति पदायोगः; तस्य युष्मच्छब्दमात्रनिबन्धनत्वात् । अत्राज्ञातज्ञाप्यत्वरूपविधेयत्वाभावेपि, एकं विशेष्यमन्यद्विशेषणम्, विशेष्यानुसारात् असीति प्रयोग इत्येतद् भाष्यकारैर्न प्रतिषिद्ध्यते । त्वं वा अहमस्मि, अहं वै त्वमसीति प्रयोगनियमदर्शनात् । विधेयानुरोधेनापि क्रियापदं महाभाष्येष्टम्, 'सुवर्णं खदिराङ्गारसवर्णे कुण्डले भवतः' इति दर्शितत्वादित्युक्तं **न्यायपरिशुद्धौ** ।

एवं स्वमते निर्दोषत्वं गुणश्चादर्शि । एवं तत्त्वमसिनिर्वाहः कस्मादद्वैतिभ्यो द्वैतिभ्यश्च न रोचते ? नूनं शरीरात्मभावास्वीकारात् । तथासति वैयधिकरण्येन सामानाधिकरण्येन च कृतास्तदुपदेशाः तैस्त्यक्ता एव भवन्तीति परेषां दोषं वक्तुमारभते **अत इति** । शरीरात्मभावरूपतादात्म्यस्यैव श्रुत्यभिमतत्वादित्यर्थः । अस्य **उपपादिता भवन्तीत्यत्राप्यन्वयः** । **ब्रह्मात्मभावः** ब्रह्मणश्चेतनाचेतननिरूपितात्मत्वम् । तदुपदेशाः वैयधिकरण्येन, 'ऐतदात्म्यमिदं सर्वम्', 'यः पृथिव्यां तिष्ठन्', 'य आत्मनि तिष्ठन्' इत्यादयः । सामानाधिकरण्येन तदुपदेशाः, 'सर्वं खल्विदं ब्रह्म' 'ज्योतींषि विष्णुः', 'तत् त्वमसि' इत्यादयः । ननु साक्षादैक्यमेवोक्त्वा वयमेव समानाधिकरणवाक्यं सुष्ठु निर्वहाम इत्यद्वैतिशंकायां क्रमेण तेषां तदयोगमाह **एकस्मिन्निति** । वैयधिकरण्येनेत्यंशे तैः किमपि न शक्यं वक्तुमिति हेतुना, प्रकरणस्य सामानाधिकरण्यविषयत्वाच्च तन्मात्रे शङ्का । **एकस्मिन्** निर्विशेषे एकस्मिन् सति । ज्योतींषि, त्वम् इत्यादिपदानां विशिष्टपरत्वे ऐक्यं बाधितमिति तैरेवोक्तम् । स्वरूपमात्रलक्षणायां स्वैक्यं स्वस्य ज्ञातमेवेति नोपदेष्टव्यमस्तीति । **स्ववाक्यम्** सत्यं ज्ञानमनन्तमित्यादि प्रागुक्तवाक्यम् । एक पदमप्यलम्; किं वाक्येनेति च भावः । कल्पितभेदनिरसनमित्यस्य कोऽर्थः ? विशिष्टार्थबोधकज्योतिरादिपदप्रयोगेण सामानाधिकरण्ये दृष्टे ऐक्यनिर्वाहाय ज्योतिरादिविशेषणत्यागात् भेदाः कल्पिताः निरस्या इति सिद्ध्यतीत्यर्थ इति चेत् —सामानाधिकरण्यस्य एकार्थवृत्ति-भिन्नप्रवृत्तिनिमित्तकशब्दत्वरूपत्वात् धर्मत्यागे बोधो न भवतीत्युक्तम् । अथ बाधायां

पदेशावसेयमस्ति किञ्चित ॥ कल्पितभेदनिरसनमिति चेत्, तत्तु न सामानाधिकरण्यतादात्म्योपदेशावसेयमित्युक्तम् । सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवाऽऽवहेत् । भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात् तत्प्रयुक्ताः जीवगताः दोषाः ब्रह्मण्येव प्रादुःष्युरिति निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्तास्स्युः । स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणः स्वत एव जीवभावाभ्युपगमात् गुणवत् दोषाश्च स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध एव । केवलभेदवादिनां च अत्यन्तभिन्नयोः केनापि प्रकारेणैक्यासंभवादेव ब्रह्मात्मभावोपदेशा न संभवन्तीति सर्ववेदान्तपरित्यागः स्यात् ।

निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः कृत्स्नस्य ब्रह्मात्मभावोपदेशाः सर्वे सम्यगुपपादिता भवन्ति । जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन, 'गौरश्वो मनुष्यो देवो जातः पुरुषः कर्मभिः' इति सामानाधिकरण्यं लोकवेदयोर्मुख्यमेव दृष्टचरम् । जातिगुणयोरपि[हि]द्रव्यप्रकारत्वमेव, 'खण्डो गौः' 'शुक्लः पटः' इति सामानाधिकरण्यनिबन्धनम् ; मनुष्यत्वादिविशिष्टपिण्डानामपि आत्मनः प्रकारतयैव पदार्थत्वात् मनुष्यः पुरुषः षण्डो योषिदात्मा जात इति सामानाधिकरण्यं सर्वत्रानुगतमिति प्रकारत्वमेव सामानाधिकरण्यनिबन्धनम् ; न परस्परव्यावृत्ता जात्यादयः । स्वनिष्ठानामेव हि द्रव्याणां कदाचित् क्वचिद् द्रव्यविशेषणत्वे मत्वर्थीयप्रत्ययो दृष्टः, 'दण्डी' 'कुण्डली' इति ; न पृथक्प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम् ; तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव ॥

---

सामानाधिकरण्यमित्यर्थः, स च न ; तादात्म्योपदेशो भेदसाधनाय न प्रभवतीति ह्युक्तमित्याह तत्तु इति । अर्थद्वयखण्डनज्ञापनाय सामानाधिकरण्येति तादात्म्योपदेशेति चोक्तम् । शांकरमते दोष उक्तः । अथ भेदाभेदवादे वदन् तत्र भास्करीये प्रथममाह ब्रह्मण्येवेति । आकाश-घटाकाशयोरिव ब्रह्मजीवयोरैक्यस्य तदुक्तत्वात् । शांकरपक्षेऽप्ययं दोषोऽस्ति । परंतु अन्तःकरणाद्युपाध्यवच्छिन्नस्य मिथ्यात्वेन भेदस्वीकारे स दोषो न, दोषस्यापि मिथ्यात्वात्तु न भास्करपक्ष इवासद्यतेत्याशयः । यादवप्रकाशीये आह स्वाभाविकेति । अग्नेर्विस्फुलिङ्गवत् ब्रह्मतो जीवानामुत्पत्तेरिष्टत्वात् पितापुत्रयोरिव स्वाभाविको भेद एतन्मते । स्वत एव । उपाध्यवच्छिन्नब्रह्म जीव इति पक्षे प्राप्ताप्राप्तविवेकेनोपाधौ दोषविश्रम इति कथयितुं कथञ्चित् यत्येत ; औपाधिका वा दोषाः साक्षादात्मनीति वा ; न त्विह तथेति भावः । शरीरात्मभावानङ्गीकारिभेदवादिमते त्वैक्योपदेशासंभवः स्पष्ट इत्याह केवलेति ।

प्रकारत्वमात्रस्य दण्डकुण्डलादावपि भावात् अपृथक्सिद्धप्रकारत्वं विवक्षितमिति दर्शयितुं स्वनिष्ठानामिति । स्वनिष्ठत्वं प्रकृताधारनिरपेक्षस्थितिमत्त्वम् । पृथक्प्रतिपत्तिस्थित्यनर्हाणा-

यदि 'गौरश्वो मनुष्यो देवः पुरुषो योषित् षण्ड आत्मा कर्मभिर्जातः' इत्यत्र, 'खण्डो मुण्डो गौः' 'शुक्लः पटः' 'कृष्णः पटः' इति जातिगुणवत् आत्मप्रकारत्वं मनुष्यादिशरीराणामिष्यते— तर्हि जातिव्यक्त्योरिव प्रकारप्रकारिणोः शरीरात्मनोरपि नियमेन सह प्रतिपत्तिः स्यात्; न चैवं दृश्यते। न हि नियमेन गोत्वादिवत् आत्माश्रयतयैवाऽऽत्मना सह मनुष्यादिशरीरं पश्यन्ति। अतो 'मनुष्य आत्मा' इति सामानाधिकरण्यं लाक्षणिकमेव—

नैतदेवम्; मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वम्, तदेकप्रयोजनत्वम्, तत्प्रकारत्वं च जात्यादितुल्यम्। आत्मैकाश्रयत्वमात्मविश्लेषे शरीरस्य विनाशादवगम्यते। आत्मैकप्रयोजनत्वं च तत्कर्मफलभोगार्थतयैव सद्भावात्। तत्प्रकारत्वमपि 'देवो मनुष्यः' इत्यात्मविशेषणतयैव प्रतीतेः। एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः। एतत्स्वभावविरहादेव दण्डकुण्डलादीनां विशेषणत्वे 'दण्डी; कुण्डली' इति मत्वर्थीय प्रत्ययः। देवमनुष्यादिपिण्डानामात्मैकाश्रयत्व-तदेकप्रयोजनत्व-तत्प्रकारत्वस्वभावात् 'देवो मनुष्य आत्मा' इति लोकवेदयोः सामानाधिकरण्येन व्यवहारः। जातिव्यक्त्योर्नियमेन सह प्रतीतिः उभयोश्चाक्षुषत्वात्। आत्मनस्तु अचाक्षुषत्वात् चक्षुषा शरीरग्रहणवेलायामात्मा न गृह्यते।

पृथग्ग्रहणयोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटमिति मा वोचः; जात्यादिवत् तदेकाश्रयत्व-तदेकप्रयोजनत्व-तद्विशेषणत्वैः शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमात्।

---

मिति ह्युच्यते; पृथक्प्रतिपत्त्यर्हञ्च शरीरमिति कृत्वा तर्हीत्यादिदोषोद्भावनम्। आत्माश्रयतया जीवात्मनिष्ठतया। पृथक्सिद्धमित्यत्र सिद्धिः=प्रतिपत्तिः स्थितिश्च; तदुभयार्हं पृथक्सिद्धम्। शरीरं तु न तथेति भावः। एवञ्च गौरित्यादौ आत्मबोधो लक्षणयैवेति शंकितुराशयः। शरीरे जातिगुणसाम्यं बहु प्रदर्श्य परिहरति नेति। आत्मैकाश्रयत्वमित्यत्र आत्मपदं शरीरप्रतिसंबन्धिन आत्मत्वात्। जात्याद्यनुगमाय यत्किञ्चिदेकाश्रयत्वमित्येव विवक्षितम्। तत्प्रकारत्वं तद्ग्रहे सति स्वरसतस्तद्विशेषणतयैव भासमानत्वम्। तथा च पृथक्प्रतिपत्त्यनर्हत्वं नाम स्वाश्रयग्रहकाले स्वयं स्वरसतस्तद्विशेष्यत्वेनाप्रतीयमानत्वम्। यथा गोगोत्वयोर्ग्रहणकाले इयं गौरिति गोत्वस्य विशेषणतयैव प्रतीतिः— तदुक्तं पार्थसारथिमिश्रैः शास्त्रदीपिकायाम्, 'न हि जातु लौकिकः, इह गोत्वमिति प्रत्येति; किंतु इयं गौरिती'ति—तथा आत्मनो देहस्य च ग्रहे अयं मनुष्य इत्येव प्रत्ययः, न तु अस्य मनुष्यशरीरमितीति भावः। धर्म्यग्रहणकाले विशेषणस्य विशेष्यतया भानं न दोषाय। तद्ग्रहणैकसामग्रीवेद्यत्वाभावात्। तदिदं जातिगुणयोरपि तुल्यमिति भावः। शरीरविनाशादिति। विश्लेषे शरीरं पततीति दृष्टम्, तथा विशीर्णं पूर्वसंस्थानं त्यजत्येवेति भावः। जातिगुणयोर्धर्म्यर्थत्वं तद्व्यावर्तकतया। तद्विशेषणत्वैरित्युक्तं तद्विशेषणत्वमपि तेन सह ग्रहे तं प्रति स्वरसतो विशेषण-

सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धन इत्युक्तम् । यथा चक्षुषा पृथिव्यादेर्गन्धरसादिसम्बन्धित्वं स्वाभाविकमपि न गृह्यते, एवं चक्षुषा गृह्यमाणं शरीरमात्मप्रकारतैकस्वभावमपि न तथा गृह्यते ; आत्मग्रहणे चक्षुषः सामर्थ्याभावात् । नैतावता शरीरस्य तत्प्रकारत्वस्वभावविरहः । तत्प्रकारतैकस्वभावत्वमेव सामानधिकरण्यनिबन्धनम् । आत्मप्रकारतया प्रतिपादनसमर्थस्तु शब्दः सहैव प्रकारतया प्रतिपादयति ॥

ननु च शाब्देऽपि व्यवहारे शरीरशब्देन शरीरमात्रं गृह्यत इति नात्मपर्यन्तता शरीरशब्दस्य ॥ नैवम् ; आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपणात् निष्कर्षकशब्दोऽयम् ; यथा गोत्वं शुक्लत्वम् आकृतिः गुणः इत्यादिशब्दाः ।

अतो गवादिशब्दवत् देवमनुष्यादिशब्दा आत्मपर्यन्ताः । एवं देवमनुष्यादिपिण्डविशिष्टानां जीवानां परमात्मशरीरतया तत्प्रकारत्वात् जीवात्मवाचिनः शब्दाः परमात्मपर्यन्ताः । अतः परस्य ब्रह्मणः प्रकारतयैव चिदचिद्वस्तुनः पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः । अयमर्थो वेदार्थसंग्रहे समर्थितः । इदमेव शरीरात्मभावलक्षणं तादात्म्यम्, 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति वक्ष्यति । 'आत्मेत्येव तु गृह्णीयात्' इति च वाक्यकारः ॥

---

त्वम् । तर्हि जात्यादेः परं कुतः सहोपलम्भनियम इत्यत्र तदेकाश्रयत्वादिकं तत्र न प्रयोजकमित्याह **सहेति** । तदेकाश्रयत्वस्य प्रयोजकत्वे तत्रैव हानिं दर्शयति **यथेति** । गन्धादिर्हि घ्राणग्राह्यः, न द्रव्यम् । **आदिना** जातिरपि ग्राह्या ; गवाश्वादिजातिसंदेहेऽपि कदाचिद्व्यक्तिग्रहणात् । यदाहुः, "पश्यतः श्वेतमारूपं हेषाशब्दञ्च शृण्वतः । खुरविक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः" इति । चक्षुर्वत् शब्दोऽपि शरीरमात्रग्राहकः स्यादित्यत्राह **आत्मेति** । न हि शब्दस्य आत्मबोधनयोग्यता नास्ति इति भावः । **सहैवेत्येवकारेण**—पूर्वं धर्मवचनम्, पश्चाद्धर्मिण आक्षेप इत्यादिकुसृष्टिर्न ; चक्षुषो युगपदेव जातिशिष्टव्यक्तिग्राहित्वस्य समर्थितत्वात्, रूपं विना द्रव्यमात्रग्राहित्वं चक्षुषो नास्तीति तार्किकैरप्युक्तत्वाच्च तेन जातिगुणनयेन विशिष्टे शक्त्या युगपदुभयग्रहणमेव । **अयमेवाकृत्यधिकरणसिद्धान्तः** इति सूचितम् । एवं जातिगुणन्यायं देहात्मविषये लोकसिद्धं प्रदर्श्य जीवपरयोरपि देहात्मभावात् स न्यायो निर्विघात इत्याह **एवं देवेति** । **प्रयोग** इति । अतः परमतेष्वेव लक्षणा दोषः, नास्माकमित्युक्तं भवति । ननु शब्दानां परमात्मपर्यन्तवाचित्वे लोकक्लृप्तव्युत्पत्तिभङ्ग इत्यत्राह **अयमर्थ** इति । यावद्वाचित्वं लोकावगतम्, तावन्न त्यज्यते । पूरणं तु वेदान्तव्युत्पत्त्येत्यादिकं वेदार्थसंग्रहे वर्णितमिति भावः ।

एवं तत्त्वमसि, अहं वै त्वमसीत्याद्यर्थमुपपाद्य, महापूर्वपक्षे तदुपात्तसूत्र-वाक्यवचनयोः स्वमत एव सामञ्जस्यं दर्शयति **इदमेवेति** । न त्वैक्यरूपं तादात्म्यमित्यर्थः । 'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' इति वाक्यवचने तु परोपात्ते **तन्निष्पत्तेः**=तत्र कल्पितत्वादित्यर्थवर्णनमयु-

(संग्रहेण सिद्धान्तोपन्यासः)

अत्रेदं तत्त्वम्—अचिद्वस्तुनः, चिद्वस्तुनः, परस्य च ब्रह्मणः भोग्यत्वेन भोक्तृत्वेन चेशितृत्वेन च स्वरूपविवेकमाहुः काश्चन श्रुतयः, (श्वे. 4. 9. 10.) "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः, मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्", (श्वे. 1. 10.) "क्षरं प्रधानममृताक्षरं हरः, क्षरात्मानावीशते देव एकः"—अमृताक्षरं हर इति भोक्ता निर्दिश्यते, प्रधानमात्मनो भोग्यत्वेन हरतीति हरः—(श्वे. 6 9.) "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः", (श्वे. 6. 16.) "प्रधानक्षेत्रज्ञपतिर्गुणेशः", (तै. नारा.) "पतिं विश्वस्याऽऽत्मेश्वरं शाश्वतं शिवमच्युतम्", (श्वे. 1. 9.) "ज्ञाज्ञौ द्वावजावीशनीशौ", (कठ. 5. 13.) "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्", (श्वे. 1. 12.) "भोक्ता भोग्यं प्रेरितारं च मत्वा", (मु. 3. 1. 1.) "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति", (श्वे. 1. 6.) "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति", (तै. नारा.)

---

क्तम्; किंतु—'स योऽत एकैकमुपास्ते न सवेद; अकृत्स्नो ह्येषोऽत एकैकेन भवति; आत्मेत्येवोपासीत; अत्र ह्येते सर्व एकं भवन्ति' (बृह. 3. 4.) इति एकैकोपासननिषेधो न तदपरमार्थत्वात्, किंतु तस्याकृत्स्नत्वात्। तेन तत्तत्सहितपरमात्मन एव पूर्णत्वावगमनात् शरीरात्मभाव एव ज्ञाप्यते। एवञ्च मुमुक्षोः चेतनाचेतनोपासनं किमप्युच्यमानं न तावन्मात्रविषयम्। कारणोपासनस्यैव फलप्रदत्वात् नारायणानुवाकोक्तरीत्या तत्तदात्मोपासनमेव कुर्वीत; चेतनाचेतनरूपस्य सर्वस्यान्तर्यामिभूततज्जन्यतया कारणध्यानस्याक्षततया मोक्षसिद्धेरित्यर्थो ग्राह्य इति।

नन्वास्तामर्थः। एवं सर्वस्य तदेकजन्यत्वकथनात् प्रकृतिपुरुषयोरपि परमात्मनि लयप्रतिपादकवाक्यसत्त्वाच्च तदेकमेव तत्त्वम्। अस्तु जगतः सत्यत्वम्; अस्तु च विष्णोरन्तर्यामित्वेन तत्त्वमसीत्याद्यर्थनिर्वाहौचित्यम्। एकमेव सत् चिदचिदीश्वरभेदभिन्नमित्यद्वैतं तत्त्वमस्तु। अतस्तदनुरोधी निर्वाहोऽपि युक्तः। ब्रह्मणि दोषस्तु श्रुतिबलादेष्टव्यः। असहने भवतु सर्वस्य मिथ्यात्वमिति शंकायाम्, एतावत् परमतखण्डनार्थापेक्षितमात्रकथनात् स्वमतकृत्स्नांशाकथनादुच्चावचसंदेहप्रादुर्भावः स्यादिति मनसिकृत्य वक्तव्यं सर्वं संकलय्य प्रतिपादयितुमारभते **अत्रेदं तत्त्वमिति**। प्रायो महापूर्वपक्षोक्तं सर्वं परिहृतमासीत्। एकमेव तु वाक्यम्, 'अनेन च.........मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता' इति शिष्यते। तदयुक्तत्वप्रतिपादनाय निवृत्त्यनुपपत्तिमुपरि वक्ष्यति। मध्ये, **सर्वस्य तन्निष्पत्तेरि**त्येतन्मूलशंकापरिहारमुखेनैतदारम्भः। अनेनाद्वैत्यभिमतस्य निवर्तकज्ञानस्य श्रुतिवाक्याजन्यत्वं सम्यगुपपादितं भवति। **भोक्तृत्वेन चे**ति चकारो न स्यात्। अथवा भोग्यत्वमात्रमचिति, भोक्तरि भोग्यत्वसमुच्चयः, ईशितरि भोग्यत्वभोक्तृत्वसमुच्चय इति विवेकाय तत्प्रयोगः। **जनिता** जनयिता। **गुणेशः** ज्ञानशक्त्यादिकल्याणगुणविशिष्टः। **पृथगि**ति। जीवात्मानमीश्वरञ्च

" अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ", ( श्वे. 4. 7. ) " समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः " इत्याद्याः ।

स्मृतावपि—( गी. 7. 4–5. ) " अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ", ( गी. 6. 7. 8. ) " सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ", ( गी. 9. 10. ) " मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते ॥ ", ( गी. 13. 16. ) "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । ", ( गी. 14. 3. ) "मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् । संभवः सर्वभूतानां ततो भवति भारत ॥ " इति । जगद्योनिभूतं महत् ब्रह्म मदीयं प्रकृत्याख्यं भूतसूक्ष्ममचिद्वस्तु यत् ; तस्मिंश्चेतनाख्यं गर्भं यत् (?)संयोजयामि, ततो मत्कृतात् चिदचित्संसर्गात् देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां संभवो भवतीत्यर्थः ।

एवं भोक्तृभोग्यरूपेणावस्थितयोः सर्वावस्थावस्थितयोश्चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिं परमपुरुषस्य चात्मत्वमाहुः काश्चन श्रुतयः, ( बृ. 5.7.7. ) " यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति" इत्यारभ्य, "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति । तथा, ( सुबाल.7. ) " (?) यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेद " इत्यारभ्य, " योऽऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद, यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः "—अत्र मृत्युशब्देन तमश्शब्दवाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयते ; अस्यामेवोपनिषदि—( सुबाल. 2. ) " अव्यक्तमक्षरे

---

पृथक् ध्यात्वा तेनेश्वरेण प्रीतिविषयीकृतस्तदनुग्रहान्मोक्षं प्राप्नोतीत्यर्थः । अन्योऽजः मुक्तो जहाति । अनीशया—प्रकृत्या ; ईशनाभावादिति वा । **इति** उक्तप्रकारं स्वस्मादन्यमीशम् अस्य **महिमानं** शरीरात्मभावान्तर्गतेशनानुकूल्यासिद्ध्च यदा पश्यति, तदा वीतशोको भवति ।

**सूयते** । षूङ् प्राणिप्रसवे । दिवादिः । कर्तरि । प्रसौतीत्यर्थः । **यत् संयोजयामीति** । **गीताभाष्ये** ( 13. 2. ) यत्पदं नास्ति । सत्त्वे, संयोजयामीति यत्, ततो हेतोरित्यन्वयार्थः ।

**पृथिव्या अन्तर** इति । **पृथिव्या** इति पञ्चमी । एवं प्रतिपर्यायम् । **अस्यामेवोपनिषदि**= सुबालोपनिषद्येव ।

लीयते । अक्षरं तमसि लीयते" इति वचनात्—( यजुरारण्य. 3. 11. 21. ) "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" इति च ।

एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थ-कारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थं च जगत् स एवेत्याहुः,—(छा. 6. 2. 1.) "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत् तेजोऽसृजत" इत्यारभ्य, "सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनाः सत्प्रतिष्ठाः । ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत् त्वमसि श्वेतकेतो" इति, तथा, ( तै. आनं. ) 'सोऽकामयत, बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत" इत्यारभ्य, "सत्यं चानृतं च सत्यमभवत्" इत्याद्याः । अत्रापि श्रुत्यन्तरसिद्धः चिदचितोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः, (छा. 6. 3. 2.) "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति, ( तै. आनं )"तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत् .... विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत्" इति च । 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' इति जीवस्य ब्रह्मात्मकत्वम्, 'तदनुप्रविश्य सच्च त्यच्चाभवत्', 'विज्ञानं चाविज्ञानं च' इत्यनेनैकार्थ्यात् आत्मशरीरभावनिबन्धनमिति विज्ञायते । एवंभूतमेव नामरूपव्याकरणम्, (बृ. 3. 4. 7.) "तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत" इत्यत्रा-प्युक्तम् ।

अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति कारणात् कार्यस्यानन्यत्वेन कारणविज्ञानेन कार्यस्य ज्ञाततयैकविज्ञानेन सर्वविज्ञानं [ च ] समीहितमुपपन्नतरम् । "अहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति, 'तिस्रो देवता' इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानु-प्रवेशेन नामरूपव्याकरणवचनात् सर्वे वाचकाः शब्दाः अचिद्विशिष्टजीव (अचिज्जीव)

---

अत्रापीति ; छान्दोग्यतैत्तिरीययोरपीत्यर्थः । अनुप्रवेशो नाम स्वकीयेन जीवीयेन च धर्मभूतज्ञानेन व्यापनविशेषः । शेषं परिष्कारे ।

एवम्भूतमेवेति । न तु ब्रह्ममात्रस्य प्रकृतिमात्रस्य वेत्यर्थः ।

उपपन्नतरम्, उपपन्नतरः इति प्रयोगद्वयेन, असंकरार्थं भेदस्वीकारे प्रतिज्ञा नोपपद्यते, तदर्थं चाभेदस्वीकारे असंकरो नोपपद्यते ; अस्मत्पक्षे तूभयमुपपन्नमित्युच्यते । तत्र तरपा, 'विशिष्टस्य शब्दार्थत्वादस्मन्मते विशेषणद्रव्ये विशेष्यद्रव्ये चैकविज्ञानेन सर्वविज्ञातत्वमस्ति ; यथायथं तत्तत्स्वभावान्वयित्वस्त्वपि साक्षादुक्तं भवती'ति विशेषो द्योत्यते । अचिद्विशिष्टजीव-विशिष्टेत्यत्र अचिज्जीवविशिष्टेति पाठान्तरम् । नामरूपव्याकरणस्य व्यष्टिविषयकत्वात् तत्राचेतनस्य

विशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम् । अतः स्थूलसूक्ष्मचिदचित्प्रकारं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत् ।

सूक्ष्मचिदचिद्वस्तुशरीरकं ब्रह्मैव कारणमिति ब्रह्मोपादानत्वेऽपि, संघातस्योपादानत्वेन चिदचितोर्ब्रह्मणश्च स्वभावासंकरोऽप्युपपन्नतरः॥ यथा शुक्लकृष्णरक्ततन्तुसंघातोपादानत्वेऽपि चित्रपटस्य तत्तत्तन्तुप्रदेश एव शौक्ल्यादिसंबन्ध इति कार्यावस्थायामपि सर्वत्र वर्णासङ्करः-तथा चिदचिदीश्वरसंघातोपादानत्वेऽपि जगतः, कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसङ्करः। तन्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित् संहतानां कारणत्वं कार्यत्वं च; इह तु चिदचितोः सर्वावस्थ(स्थावस्थित)योः परमपुरुषशरीरत्वेन तत्प्रकारतयैव पदार्थत्वात् तत्प्रकारः परमपुरुषः सर्वदा सर्वशब्दवाच्य इति विशेषः। स्वभावभेदस्तदसङ्करश्च तत्र चात्र च तुल्यः। एवं च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावादविकृतत्वमुपपन्नतरम्। स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुन आत्मतयाऽवस्थानात् कार्यत्वमप्युपपन्नतरम्। अवस्थान्तरापत्तिरेव हि कार्यता।

निर्गुणवादाश्च परस्य ब्रह्मणो हेयगुणासंबन्धादुपपद्यन्ते। (छा. 8. 1. 5.) "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः" इति हेयगुणान् प्रतिषिध्य, "सत्यकामः सत्यसङ्कल्पः' इति कल्याणगुणान् विदधती इयं श्रुतिरेवान्यत्र सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति। ज्ञानस्वरूपं ब्रह्मेतिवादश्च सर्वज्ञस्य सर्वशक्तेर्निखिलहेयप्रत्यनीककल्याणगुणाकरस्य ब्रह्मणः स्वरूपं ज्ञानैकनिरूपणीयं स्वयंप्रकाशतया ज्ञानस्वरूपं चेत्यभ्युपगमादुपपन्नतरः। (मु. 1. 1. 9.) "यः सर्वज्ञः सर्ववित्", (श्वे. 6. 8.) पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", (बृ 4.4.14.) "विज्ञातारमरे

---

सर्वस्य जीवं प्रति शरीरत्वात् प्रथमपाठ उपपन्नः; सर्वे वाचका इत्यस्य व्यष्टिविषयमात्रपरत्वं तदा। समष्टौ मूलप्रकृतौ च जीवशरीरत्वाभावात् तत्र चिद्वैशिष्ट्यमिवाचिद्वैशिष्ट्यमपि साक्षात् परमात्मन एव। व्यष्टावपि अचेतनशरीरकत्वस्य परमात्मन्यप्यक्षततया सर्वैकरस्याय सामान्यतः सूक्ष्मचिदचिद्विशिष्टस्य स्थूलचिदचिद्विशिष्टस्य च कार्यकारणभाव उच्यते। तत्र समष्ट्यादौ अचिद्विशिष्टजीवविशिष्टेति क्रमो नास्तीत्याशयेनोत्तरपाठ इति भाव्यम्। सर्वानुगमाभिप्रायेण चाचिद्वैशिष्ट्यं जीवे अनिवेश्योच्यते अतः स्थूलसूक्ष्मेत्यादि। तदा, सर्वे इति चेतनाचेतनवाचिसर्वशब्दग्रहणम्। व्यष्टौ नामवत्त्वायानुप्रवेशवचनात् सर्वत्रानुप्रवेशायत्तं नामवत्त्वमिति ज्ञायते हीति भाष्यार्थः।

तन्तुसंघातसाम्यं न सर्वांशे इति व्युत्पादयति तन्तूनामिति। तत्र चेति। एवं रूपरसादिविशिष्टे द्रव्ये द्रव्यस्य चक्षुस्त्वगुभयग्राह्यत्वं रूपस्य चक्षुर्मात्रग्राह्यत्वं गन्धस्य घ्राणग्राह्यत्वं प्रकारैकस्वभावत्वमित्यादिरप्यसंकीर्णः स्वभावो भाव्यः।

केन विजानीयात् " इत्यादिकाः ज्ञातृत्वमावेदयन्ति; ( तै. आनं. ) " सत्यं ज्ञानम् " इत्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञानस्वरूपताम् ।

( तै. आनं. ) " सोऽकामयत बहु स्याम् ", ( छा. 6. 2. 3. ) " तदैक्षत बहु स्याम् " ( बृ. 3. 4. 7. ) " तन्नामरूपाभ्यां व्याक्रियत " इति ब्रह्मैव स्वसङ्कल्पात् विचित्रस्थिरत्रसरूपतया नानाप्रकारमवस्थितमिति तत्प्रत्यनीकाब्रह्मात्मकवस्तुनानात्वमतत्त्वमिति तत् प्रतिषिध्यते, ( कठ. 4. 10-11. ) " मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति.... नेह नानाऽस्ति किञ्चन ", ( बृ. 4. 4. 14. ) " यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति... यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं विजानीयात् " इत्यादिना । न पुनः, 'बहु स्यां प्रजायेय' इत्यादिश्रुतिसिद्धं स्वसङ्कल्पकृतं ब्रह्मणो नानानामरूपभाक्त्वेन नानाप्रकारत्वमपि निषिध्यते । " यत्र त्वस्य सर्वमात्मैवाभूत् ", इत्यादिनिषेधवाक्यादौ च तत् स्थापितम्, ( बृ. 4. 4. 6. ) " सर्वं तं परादात् योऽन्यत्राऽऽत्मनः सर्वं वेद ", ( बृ. 4. 10. ) " तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदो यजुर्वेदः " इत्यादिना ॥

एवं चिदचिदीश्वराणां स्वभावभेदं स्वरूपभेदं च वदन्तीनां कार्यकारणभावं कार्यकारणयोरनन्यत्वं च वदन्तीनां सर्वासां श्रुतीनामविरोधः, चिदचितोः परमात्मनश्च सर्वदा शरीरात्मभावं शरीरभूतयोः कारणदशायां नामरूपविभागानर्हसूक्ष्मदशापत्तिं कार्यदशायां च तदर्हस्थूलदशापत्तिं वदन्तीभिः श्रुतिभिरेव ज्ञायत इति, ब्रह्माज्ञानवादस्य औपाधिकब्रह्मभेदवादस्य अन्यस्यापि अपन्यायमूलस्य सकलश्रुतिविरुद्धस्य न कथञ्चिदप्यवकाशो दृश्यते । चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां शरीरात्मभावेन प्रकारप्रकारितया श्रुतिभिरेव प्रतिपन्नतया श्रुत्यन्तरेण कार्यकारणभावप्रतिपादनं कार्यकारणयोरैक्यप्रतिपादनं च ह्यविरुद्धम् । यथा—आग्नेयादीन् षड् यागान् उत्पत्तिवाक्यैः पृथगुत्पन्नान् समुदायानुवादिवाक्यद्वयेन समुदायद्वयत्वमापन्नान् " दर्शपूर्णमासाभ्याम् " इत्यधिकारवाक्यं कामिनः कर्तव्यतया विदधाति; तथा चिदचिदीश्वरान् विविक्तस्वरूपस्वभावान्,

**निषेधवाक्यादौ** निषेधवाक्यस्योपक्रमे । **अविरोधः** मिथः प्राप्तस्य विरोधस्याभावः । **अन्यस्यापीति** ; स्वाभाविकभेदविशिष्टाभेदवादस्य यादवप्रकाशीयस्य, अशरीरत्वविशिष्टभेदवादस्य च निमित्तमात्रब्रह्मवादिद्वैतिकृतस्येत्येवमर्थः । ब्रह्माज्ञानवादादौ सर्वत्र अपन्यायेत्यादिविशेषणान्वयः । **यथाऽऽग्नेयादीन्** इति । 'यदाग्नेयोऽष्टाकपालः पौर्णमास्याममावास्यायाञ्चे'ति वाक्ये आग्नेयद्वयविधिः । अत्र एक एवाग्नेयः; पर्वभेदेन प्रयोगभेदमात्रमिति प्राच्यमीमांसकाः ; उत्पत्तिवाक्य एव विरुद्धकालद्वयश्रवणात् कर्मभेद एवेत्याग्नेयद्वयमेवेति नव्याः । अग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदिति अग्नीषोमीयः, उपांशुयाजमन्तरा यजतीत्युपांशुयाजश्चाधिकौ पौर्णमा-

( श्वे. 1. 10. ) "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः", ( तै. नारा. ) "पतिं विश्वस्याऽऽत्मेश्वरम्..........आत्मा नारायणः परः" इत्यादिवाक्यैः पृथक् प्रतिपाद्य, ( बृ. माध्य 6. 7. ) "यस्य पृथिवी शरीरम्......यस्याऽऽत्मा शरीरम्", ( सुबा. 7 ) "यस्याव्यक्तं शरीरम् .. यस्याक्षरं शरीरम्....एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिभिर्वाक्यैश्चिदचितोः सर्वावस्थावस्थितयोः परमात्मशरीरतां परमात्मनस्तदात्मतां च प्रतिपाद्य शरीरिभूतपरमात्माभिधायिभिः सद्ब्रह्मात्मादिशब्दैः कारणावस्थः कार्यावस्थश्च परमात्मैक एवेति पृथक्प्रतिपन्नं वस्तुत्रितयं ( छा. 6. 2. 1. ) "सदेव सोम्येदमग्र आसीत्", ( छा 6. 8. 7. ) "ऐतदात्म्यमिदं सर्वम्", ( छा. 3. 14. 1. ) "सर्वं खल्विदं ब्रह्म" इत्यादिवाक्यं प्रतिपादयति । चिदचिद्वस्तुशरीरिणः परमात्मनः परमात्मशब्देनाभिधाने हि नास्ति विरोधः, यथा मनुष्यपिण्डशरीरकस्याऽऽत्मविशेषस्य 'अयमात्मा सुखी' इत्यात्मशब्देनाभिधाने इत्यलमतिविस्तरेण ॥

यत् पुनरिदमुक्तम् — 'ब्रह्मात्मैकत्वविज्ञानेनैवाविद्यानिवृत्तिर्युक्ता' इति, तदयुक्तम्, बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात् । पुण्यापुण्यरूपकर्मनिमित्तदेवादिशरीरप्रवेश-तत्प्रयुक्तसुखदुःखानुभवरूपस्य बन्धस्य मिथ्यात्वं कथमिव शक्यते वक्तुम् । एवंरूपबन्धनिवृत्तिर्भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादलभ्येति पूर्वमेवोक्तम् । भवदभिमतस्यैक्यज्ञानस्य यथावस्थितवस्तुविपरीतविषयस्य मिथ्यारूपत्वेन बन्धविवृद्धिरेव फलं

---

स्याम् । ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायामिति ऐन्द्रयागद्वयमधिकं दर्शे । एवमेते षट् । 'य एवं विद्वान् पौर्णमासीं यजते', 'य एवं विद्वान् अमावास्यां यजते' इति विद्वत्पदघटितवाक्यद्वयेन तत्तत्कालकर्तव्यस्य त्रिकस्य त्रिकस्य समुदायरूपेणानुवादः । तेन दर्शपूर्णमासाभ्यां यजेतेत्यादौ दर्शादिपदयोः समुदितबोधकत्वसिद्धिः । तद्वदिह त्रीणि तत्त्वानि पूर्वं पृथग्बोधितानि; अन्तर्यामिब्राह्मणादिना समुदायीकृतानि ; सदेवेदमित्यादिवाक्यैः समुदिततया बोध्यन्त इति साम्यं विवक्षितम् । शरीरिभूतेत्यादिवाक्यस्यैवमन्वयः—ब्रह्मेत्यादिवाक्यं कारणावस्थः कार्यावस्थश्चैक एवेति हेतोः स्वघटकैः सद्ब्रह्मात्मादिशब्दैः वस्तुत्रितयं प्रतिपादयतीति । ऐतदात्म्यमित्यत्रात्मशब्दः स्वरूपवचनः, सर्वपदं विशिष्टपरमित्याशयेनैतदुदाहरणम् । ननु शरीरवाचकशब्दप्रयोगे शरीरिपर्यन्तलाभः स्यात् ; अत्र 'सदेव,' 'ऐतदात्म्यं' 'आत्मैव,' 'ब्रह्म वै,' 'एको ह वै नारायण' इत्यादौ परमात्ममात्रकथने कथं चेतनाचेतनग्रहणमित्यत्राह चिदिति । आत्मा सुखीत्यत्र सुखान्यथानुपपत्त्या देहाक्षेपवत् सृष्ट्यन्यथानुपपत्त्या चिदचितोराक्षेपः ; विशिष्टस्यैव कारणतायाः स्पष्टमन्यत्र श्रुतत्वादिति भावः । एवं स्वसिद्धान्तसारः समदर्शि ।

अथ शिष्टम्, 'अनेन —बन्धस्य निवृत्तिर्युक्तेति निवृत्त्युपपत्तिवादमनुपपत्तिप्रदर्शनेन निरसितुमाह यत्पुनरिति । सर्वस्य निवृत्तिर्न भवतीति अत्रोच्यते, सर्वनिवृत्तिर्भवतीति पूर्वपक्ष्युक्त-

भवति । (वि. 2. 14. 27.) "मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः" इतिशास्त्रात्, (गी. 15. 17.) "उत्तमः पुरुषस्त्वन्यः", (श्वे. 1. 6.) "पृथगात्मानं प्रेरितारं च मत्वा" इति, जीवात्मविसजातीयस्य तदन्तर्यामिणो ब्रह्मणो ज्ञानं परमपुरुषार्थलक्षणमोक्षसाधनमित्युपदेशाच्च ।

अपिच—भवदभिमतस्य (स्यापि) निवर्तकज्ञानस्यापि(स्य) मिथ्यारूपत्वात् तस्य निवर्तकान्तरं मृग्यम् ॥ निवर्तकज्ञानमिदं स्वविरोधि सर्वं भेदजातं [वि]निवर्त्य, क्षणिकत्वात् स्वयमेव[वि]नश्यतीति चेन्न ; तत्स्वरूप-तदुत्पत्ति-विनाशानां काल्पनिकत्वेन विनाशतत्कल्पना कल्पकरूपाविद्यायाः निवर्तकान्तरमन्वेषणीयम् ॥ तद्विनाशो ब्रह्मस्वरूपमेवेति चेत्—तथा सति निवर्तकज्ञानोत्पत्तिरेव न स्यात् ; तद्विनाशे तिष्ठति, तदुत्पत्त्यसंभवात् ।

अपिच चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता ? अध्यासरूप इति चेत्—न ; तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् तत्कर्तृत्वानुपपत्तेः । ब्रह्मस्वरूपमिति (मेवेति) चेत् ; ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वं किं स्वरूपम्, उताध्यस्तम् ? अध्यस्तं चेत्—अयमध्यासः तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव । निवर्तकज्ञानान्तराभ्युपगमे तस्यापि त्रिरूपत्वात् ज्ञात्रपेक्षयाऽनवस्था स्यात् । ब्रह्मस्वरूपस्यैव

---

खण्डनाय । **कथमिव** । इवशब्दः प्रकाराभासेनापि न वक्तुं शक्यत इति ज्ञापनाय । **मिथ्यैतदिति** पराशरश्लोकार्थः प्रागेवोक्तः । प्रमाणविरोध उक्तः । अथ प्रमाणं दूरीकृत्य सर्वमिथ्यात्वेष्टावपि मिथ्यास्थले तत्त्वज्ञानान्मिथ्याज्ञानाननुवृत्तिमात्रम्, दोषसत्त्वे तु मिथ्याज्ञानानुवृत्तावपि तत्राप्रामाण्यज्ञानमित्येतावदेव सर्वेष्टम् ; न तु वस्तुनिवृत्तिः । तदुपगमेपि सर्वनिवृत्त्यनुपपत्तिमाह **अपिचेति** । वह्निर्दाह्यं विनाश्य अनुविनाशवत्, विषनाशकविषनाशवच्च भवत्विति शंकते **निवर्तकेति** । **कल्पकरूपेति** । विनाशतद्विषयकभ्रमतदाश्रयाणामविद्याकार्यत्वादविद्यात्वम् । **अन्वेषणीयमिति** । अन्वेषणाभावे तेषां सत्त्वात् न सर्वनिवृत्तिः । अविद्यान्तराभावे विनाशस्यैवाभावात् निवर्तकज्ञानमेव स्यात् । तस्य च वृत्तिरूपतयाऽन्तःकरणादेरपि सत्त्वे पूर्ववत् सर्वसत्त्वमेव । निवर्तकान्तरान्वेषणे च तन्निवृत्यादिकल्पकाविद्यानिवर्तकान्तरान्वेषणयाऽनवस्था । न च स्वविनाशनिवृत्तौ स्वयं कारणं भवितुमर्हति, तदा स्वयमसत्त्वात् । वह्निविषन्यायेन निवर्तकज्ञाननिवर्तकज्ञानान्तरानपेक्षायामपि नाशादिमिथ्याभूतपदार्थनिवर्तकज्ञानान्तरापेक्षयाऽनवस्था दर्शिता ; अथ निवर्तकज्ञानस्य प्रथमस्याश्रयापेक्षयाऽनवस्थामाह **अपि च चिदिति** । **कोऽयं ज्ञातेति** अध्यासापरपर्यायमिथ्याभूतो वा अधिष्ठानरूपो वेति प्रश्नः । **किं स्वरूपमिति** । किं वास्तवमित्यर्थः । **तिष्ठत्येवेति** । ज्ञानोत्पत्त्यनन्तरमेव ज्ञातृत्वाध्यासस्य जायमानताया वक्तव्यत्वात् तस्य तन्मूलाविद्यायाश्च निवर्तकज्ञानविषयत्वस्वीकारे तत्काले तदुत्तरकाले वा बाध्योत्पत्त्ययोगादध्यासाभावे ज्ञातभावापत्तेरिति भावः । तिष्ठतु कामम् ; तन्निवृत्तिर्निवर्तकज्ञानान्तरादित्यत्राह **निवर्तकेति** । **त्रिरूपत्वादिति** । स्वरूपाश्रयविषयत्रयवत्त्वात् । त्रिपुटी ज्ञान

ज्ञातृत्वेऽस्मदीय एव पक्षः परिगृहीतस्स्यात् । निवर्तकज्ञानस्वरूपं स्वस्य ज्ञाता च ब्रह्मव्यतिरिक्तत्वेन स्वनिवर्त्यान्तर्गतमिति वचनम्, 'भूतलव्यतिरिक्तं कृत्स्नं देवदत्तेन छिन्नम्' इत्यस्यामेव च्छेदनक्रियायामस्य च्छेत्तुः अस्याश्छेदनक्रियायाश्च छेद्यानुप्रवेशवचनवत् उपहास्यम् । अध्यस्तो ज्ञाता स्वनाशहेतुभूतनिवर्तकज्ञाने स्वयं कर्ता च न भवति; स्वनाशस्यापुरुषार्थत्वात् । तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगमे भेददर्शनतन्मूलाविद्यादीनां कल्पनमेव न स्यात्—इत्यलमनेन दिष्टहतमुद्गराभिघातेन ।

तस्मादनादिकर्मप्रवाहरूपाज्ञानमूलत्वाद् बन्धस्य तन्निबर्हणम् उक्तलक्षणज्ञानादेव । तदुत्पत्तिश्च अहरहरनुष्ठीयमानपरमपुरुषाराधनवेषात्मयाथात्म्यबुद्धिविशेषसंस्कृतवर्णाश्रमोचितकर्मलभ्या । तत्र केवलकर्मणामल्पास्थिरफलत्वम्, अनभिसंहितफल-परमपुरुषाराधनवेषाणां कर्मणाम् उपासनात्मकज्ञानोत्पत्तिद्वारेण ब्रह्मयाथात्म्यानुभवरूपानन्तस्थिरफलत्वं च कर्मस्वरूपज्ञानात् ऋते न ज्ञायते, केवलाकारपरित्यागपूर्वकयथोक्तस्वरूपकर्मोपादानं च न संभवतीति कर्मविचारानन्तरं तत एव हेतोः ब्रह्मविचारः कर्तव्य इति अथातः इत्युक्तम् ॥

---

इति हि प्रसिद्धम् । अनवस्थेति । स ज्ञाता ब्रह्मरूपः तत्र ज्ञातृत्वञ्चाध्यासरूपमिति तन्निवर्तकज्ञानान्तरस्य वक्तव्यतया ज्ञातृत्वाध्यासपरम्परा निवर्तकज्ञानपरम्परा चेत्यनेकाऽनवस्थेत्यर्थः । अस्मदीय एव पक्ष इति । ब्रह्मणो वाऽन्यस्य वाऽऽत्मनः ज्ञातृत्वं वास्तवमस्माभिरेव हि स्वीकृतम् । तदभ्युपगमे चाद्वैतहानिः । धर्मभूतज्ञानेष्टौ च तुल्यन्यायेन विषयाणामपि सत्यत्वं प्रकाशवञ्चावैयर्थ्यादिति सूत्रितमिति न प्रपञ्चनिवृत्तिप्रसक्तिरिति तत्त्वहितपुरुषार्था अस्मदीया एव एष्टव्या इति भावः । प्रथमनिवर्तकज्ञानमेव, 'ब्रह्मव्यतिरिक्तं सर्वं मिथ्या' इत्याकारकत्वात् व्यतिरिक्तत्वेन ज्ञातृत्वाध्यासतन्मूलाविद्यादिकमपि विषयीकरोतीति न ज्ञानान्तरापेक्षेति शङ्कते निवर्तकेति । छेद्यानुप्रवेशेति । छेद्यतयाऽनुप्रवेशेत्यर्थः । छेदनार्हदेहस्यापि छेत्तुः स्वच्छेद्यभूतलगतसर्ववस्तुकर्मकच्छेदनक्रियाकर्मत्वं दुर्घटम् । क्रियायास्तु छेद्यत्वासंभवात् सुतराम् । तथा ज्ञातुः ज्ञाने जाते अध्यासाधीनसिद्धिकस्य तज्ज्ञानबाध्यत्वे सिद्धिर्दुर्वचा । एवं बाधकज्ञाने सति बाध्यसिद्धेरेवाभावात् कस्य ब्रह्मव्यतिरिक्तत्वम् । यदि तस्य व्यतिरिक्तत्वम्, तर्हि बाधके सत्यप्यध्यस्ततया सिद्धस्य कथं बाध्यानुप्रवेश इति भावः । ज्ञातुर्निवृत्त्यनुपपत्तिं प्रकारान्तरेणाह अध्यस्त इति ।

एवं महापूर्वपक्षमपि निरस्य प्रकृतमुपसंहरति तस्मादिति । तस्मात् लघुसिद्धान्तेन महासिद्धान्तेन च परप्रक्रियाया निरस्तत्वादित्यर्थः । केवलकर्मणां परमपुरुषाराधनत्वरहितकर्मणाम् । न संभवतीतीति । इति हेतोः; इति कर्मविचारस्य पूर्ववृत्तत्वं परिशील्येत्यर्थः । कर्तव्य इतीत्यादि; कर्तव्य इतीदम् अथात इत्यनेनोक्तम्, इत्यर्थे अथात इतीदं प्रयुक्तमिति वाऽर्थः ॥

सूत्राक्षरार्थ उक्तः। अथ सूत्राभिप्रेतौ पूर्वोत्तरपक्षौ वर्णनीयौ। एकैकमप्यधिकरणं हि पञ्चाङ्गम्। 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। फलञ्चात्रेति पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः॥' तत्र तत्तच्छास्त्रभेदेन विषयो भिद्यते। मीमांसाशब्दस्य पूज्यार्थविचारार्थकत्वात् वेदवाक्यार्थ-विचारस्यैवात्र क्रियमाणत्वात् वेदवाक्यमेव विषयः। तत्र पूर्वमीमांसायाः कर्मकाण्डः, उत्तरस्याश्च वेदान्तः। मीमांसेयं काण्डत्रयात्मनाऽपि विभज्यते, कर्मकाण्डो देवताकाण्डो ज्ञानकाण्डश्चेत्यन्यदे-तत्। तत्र तत्र यद् वेदादिवाक्यं विषयतया गृहीतम्, तत्र पक्षद्वयोपपत्तिपरिशीलने विशयः= संशयः प्रादुर्भवति। अथ पूर्वपक्षी स्वपक्षसाधकयुक्तेः प्राबल्यं मन्वानः प्रत्यवतिष्ठते। सिद्धान्ती स्वपक्षबलेन तं निरस्यति। सर्वोयं विचारो निष्फलविषये न प्रवर्तेत इति तत्र फलमपि यथार्हं वक्तव्यम्। तत्र परमसाध्यस्य साधकयुक्तिः, तत्साधकयुक्तिरित्येवं यावदपेक्षं पूर्वपक्षे सिद्धान्ते च युक्त्यन्वेषणं भवति। तेन मूलभूततत्तद्युक्तिसिद्ध्या तत्तत्साध्यसिद्धिरिति क्रमेण परमसाध्यसिद्धिरिति पूर्वपक्षे सिद्धान्ते च फलफलिभावक्रमोऽप्यस्ति। विषयविशयफलानामर्थसिद्ध्या पूर्वोत्तरपक्षयोरेव प्राधान्यम्।

मीमांसाशास्त्रान्तर्गतं शारीरकशास्त्राख्यमन्तिमं काण्डमिदं द्विकद्वयात्मकम्। एकैकद्विके-ऽप्यध्यायद्वयम्। शास्त्रेऽध्यायपादविभागवत् यथायथं पेटिकाविभागोप्यस्ति। अतश्चेह संगति-संग्रह एवम्—शास्त्रकाण्डद्विकाध्याय पादपेटीनिवेश्यता। अनन्तराभिधानार्थजिज्ञास्यत्वञ्च संगतिः- इति। तत्रैतच्छास्त्रारम्भः कर्तव्यो न वेति विचारः चतुर्भिरधिकरणैरुपक्रमे क्रियत इति उपोद्घात-रूपा चतुरधिकरणी एका पेटिका। पश्चादेव वेदान्तवाक्यविशेषविचारो यथासङ्गति। तदेषु चतुर्षु वेदान्तवाक्यं सर्वं वा ब्रह्म वा विषयः। तद्विचारः कर्तुमर्हो न वेति विशयः। तत्र वेदान्तविचार आरम्भणीयो न वेति प्रथमविमर्शः। तदर्थं वेदान्ताः ब्रह्मणि प्रमाणं न वेति द्वितीयः। इदमुभयं चतुरधिकरणीसाधारणम्। ब्रह्मणि प्रमाणमित्यस्य ब्रह्मविषयकं यत् इतरव्यावृत्ततया ज्ञानं मानान्त-राजन्यतज्ज्ञानजनकमित्यर्थः। तत्र ब्रह्मरूपकार्यानन्वितार्थविषयकत्वसंभवासंभवविचारः प्रथमाधि-करणे। इतरव्यावृत्ताकारविषयकत्वसंभवासंभवविचारो द्वितीये। मानान्तराजन्यत्वांशविचारस्तृतीये। ईदृशज्ञानजननार्थत्वयोगायोगविचारश्चतुर्थे। तस्मादनारम्भयुक्तिः प्रत्यधिकरणं भिन्ना। तन्निरा-करणं सिद्धान्ते। यदाहुः—"व्युत्पत्त्यभावः प्रतिपत्तिदौःस्थ्यम् अन्येन सिद्धत्वमथाफलत्वम्। एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि" इति।

तत्रेह प्रथमाधिकरणे पूर्वं कर्मकाण्डे प्राभाकरोक्तेन सिद्धेऽर्थे शब्दव्युत्पत्त्यभावेन हेतुना ब्रह्मविषये अप्रामाण्यमाह पूर्वपक्षी। ब्रह्म कर्मविचारानन्तरज्ञानकाण्डविचारविषयः कर्मनिर्ण-यविशेषविशिष्टापातप्रतीतिविषयत्वादिति हि सिद्धान्त्युपन्यासः। तत्र हेतौ आपातप्रतीतिरूपविशेष्या-सिद्धिः प्रधानतयेहोपपाद्यते। कर्मनिर्णयरूपविशेषणासिद्धिरपि वक्ष्यते। कथं ब्रह्मविषये आपात-प्रतीतिर्नास्तीति चेत्—ब्रह्मप्रधानकं वेदान्तवाक्यजातमिति कृत्वा हि ब्रह्मजिज्ञासेत्युच्यते। एवञ्चेदं न कार्यप्रधानकम्। तथा च कार्यानन्वितार्थात्मनि तत्र व्युत्पत्तिर्न संभवति। व्युत्पत्तिर्नाम शब्दस्य

(जिज्ञासाधिकरणरचना)

**तत्र पूर्वपक्षवादी मन्यते—वृद्धव्यवहारादन्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासम्भवात्, व्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन कार्यार्थ एव शब्दस्य प्रामाण्यमिति कार्यरूप एव वेदार्थः। अतो न वेदान्ताः परिनिष्पन्ने परे ब्रह्मणि प्रमाणभावमनुभवितुमर्हन्ति।**

**न च पुत्रजन्मादिसिद्धवस्तुविषयवाक्येषु, हर्षहेतूनां कालत्रयवर्तिनामर्थानामानन्त्यात् सुलग्नसुखप्रसवादिहर्षहेत्वर्थान्तरोपनिपातसम्भावनया च, प्रियार्थप्रतिपत्तिनिमित्तमुखविकासादिलिङ्गेनार्थविशेषबुद्धिहेतुत्वनिश्चयः।**

---

शक्तिग्रहः। यद्यपि, "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषात् विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः" इति शक्तिग्राहकप्रमाणानि—व्याकरणमुपमानं कोशः आप्तवाक्यं व्यवहारो वाक्यशेषः विवरणं प्रसिद्धपदसांनिध्यमिति अष्टौ परिगण्यन्ते——तथापि प्राथमिकी व्युत्पत्तिर्व्यवहारादेव। व्यवहारो द्विविधः वाचिकः कायिकश्च। एकेन गामानयेति वाचिकव्यवहारे कृते अन्येन च गवानयनरूपे कार्ये कायिकव्यवहारे कृते, उभयमवदधानः कश्चित् भाषानभिज्ञः; 'इयं गवानयनरूपकार्यहेतुभूता गवानयनकार्यताबुद्धिः गामानयेति वाक्यजन्या तदन्वयव्यतिरेकवत्त्वात्' इति वाक्यस्य कार्यबोधकत्वं निश्चिनोति। गामानयतीति वाक्यप्रयोगे तु कार्यस्य कस्यचिदकरणात् व्युत्पत्तिर्न भवति। अतः कार्यत्वेन कार्यं शब्दार्थ इति बुद्ध्यते। विधिप्रत्ययाभावे तद्बोधानुदयात् लिङादीनां कार्यबोधकत्वमवगम्यान्येषां साक्षात् परम्परया वा कार्यान्वितबोधकत्वञ्च परिशील्य सर्वं कार्यपरमिति निश्चिनोति। एवञ्च व्याकरणादिभिर्व्युत्पत्त्युपगमोऽपि कार्यवाचिपदविशेषचिन्तनया कार्यतदन्वितविषय एव भवितुमर्हति। सिद्धान्तिना ब्रह्मप्राधान्यं स्वीक्रियते। ब्रह्म च न कार्यम्; नापि पूर्वं कार्यं सत् पश्चान्निष्पन्नमिदम्; नापि कार्यान्वितम्। अतः सर्वदा सिद्धमेवेति **परिनिष्पन्नम्**। कार्यमपि निष्पन्नत्वदशां विना कार्यत्वेन यदा बोध्यते, तदैव व्युत्पत्तिरिति स्थिते, का कथा परिनिष्पन्नविषये। न च वेदान्तात् ब्रह्मप्रतीतिर्जायमाना कथमपलप्यत इति वाच्यम्—या खल्वापातप्रतीतिः प्रामाण्यसंभावनास्पदम्, सैव विचारे हेतुः। शब्दानां कार्यबोधकत्वनिश्चये सति च सिद्धमात्रविषयापातप्रतीतेरप्रामाण्यमेवावगम्यते। अयञ्च सर्वस्य कार्यपरत्वविषयकनिश्चयः इदानीं स्थित एव; कर्मविचारस्य वृत्तत्वात् तत्र प्राभाकरैः आम्नायस्य क्रियार्थत्वात् कार्यानन्वयित्वे वाक्याप्रामाण्यस्योपपादितत्वात्। अतः कर्मनिर्णय एव संभावितप्रामाण्यकापातप्रतीतिरूपहेतुविघटक इति न ब्रह्मविचारारम्भ इति। इमं पूर्वपक्षं वर्णयितुमारभते तत्रेति। **तत्र** ब्रह्मविचारविषये। सिद्धपरादपि वाक्याद् व्युत्पत्तिरस्तीत्यत्र भाट्टोदाहरणं प्रतिक्षिपति **न चेति**। वाक्येषु हेतुत्वनिश्चयो नेत्यन्वयः। पुत्रजन्मादिवाक्यानि पक्षः, पुत्रजननादिरूपार्थविशेषबुद्धिहेतुत्वनिश्चयाभावः साध्यम्, तत्र साध्ये हेतुः **आनन्त्यादिति, संभावनयेति** च। निश्चयरूपप्रतियोग्यंशे कारणं **मुखविकासादि**। इदं वाक्यं पुत्रजननरूपार्थबुद्धिहेतुः प्रियार्थप्रतिपत्तिहेतुत्वे

**नापि व्युत्पन्नेतरपद-विभक्त्यर्थस्य पदान्तरार्थनिश्चयेन प्रकृत्यर्थनिश्चयेन वा शब्दस्य सिद्धवस्तुन्य(स्त्व)भिधानशक्तिनिश्चयः; ज्ञातकार्याभिधायिपदसमुदायस्य तदंशविशेषनिश्चयरूपत्वात् तस्य ।**

**न च सर्पाद्भीतस्य, 'नायं सर्पः, रज्जुरेषा' इति शब्दश्रवणसमनन्तरं भयनिवृत्तिदर्शनेन सर्पाभावबुद्धिहेतुत्वनिश्चयः; अत्रापि निश्चेष्टम्, निर्विषम्, अचेतनमिदं वस्त्वित्याद्यर्थबोधेषु बहुषु भयनिवृत्तिहेतुषु सत्सु विशेषनिश्चयायोगात् ।**

**कार्यबुद्धि-प्रवृत्ति व्याप्तिबलेन शब्दस्य प्रवर्तकार्थावबोधित्वमव(मुप)गतमिति सर्वपदानां कार्यपरत्वेन सर्वैः पदैः कार्यस्यैव विशिष्टस्य प्रतिपादनात् नान्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः ।**

---

सति एतदन्याहेतुत्वादिति बुद्धिहेतुत्वानुमितिः । इदं वाक्यं प्रियार्थप्रतिपत्तिहेतुः स्वश्रवणानन्तरभाविमुखविकासकत्वादिति हेतुसाधकहेतुः । **अर्थानाम्** धनलाभादिरूपाणाम् । पुत्रविषयकत्वनिश्चये सत्यपि पुत्रजननरूपविशेष एवोक्त इति दुर्निश्चयमित्याह **सुलग्नेति** ।

प्रसिद्धपदसमभिव्याहारात् सिद्धे व्युत्पत्तिं **तार्किक**दर्शितां प्रतिवक्ति **नापीति** । व्युत्पन्नेतरपदार्थस्य पुंसः पदान्तरार्थनिश्चयस्य जायमानतया, व्युत्पन्नविभक्त्यर्थस्य पुंसः प्रकृत्यर्थनिश्चयस्य जायमानतया चेति अत्राभिमतमुदाहरणद्वयम् । तत्र पिकः कूजतीति प्रथमम्, कोकिलकर्तृकत्वज्ञानोत्पत्तेः । पयसा वृक्षं सिञ्चतीति द्वितीयम्, पयश्शब्दस्य जले व्युत्पत्तेः । **ज्ञातेति** । कूजितं शृणु, सेचनं कुरु इत्यादिवाक्यतः कार्यान्विततया पूर्वं व्युत्पन्नौ कूजतिसिञ्चतिशब्दौ । तच्छेषतया कार्यान्वितमेव कोकिलसलिलादि ततो बुद्ध्यत इति भावः ।

अद्वैतिदर्शितं सिद्धपरवाक्यमपि अन्यथयति **न च सर्पादिति** । निश्चेष्टमिदम्, निर्विषमिदम्, अचेतनं मृतमिदमित्यनेकार्थो विवक्षितः । वाचस्पतिपक्षं परास्यति **कार्यबुद्धीति** । तत्पक्ष एवम्—कार्ये व्युत्पत्तिर्गवादिपदेषु न; विधिप्रत्ययस्यैव कार्यवाचित्वात् । कार्यान्विते व्युत्पत्तिश्च न लिङादिविधिप्रत्यये । कार्ये स्वस्मिन् स्वान्वितत्वायोगात् । उभयानुगमाय इतरान्वितस्य बोधकमित्युक्तौ सर्वानुगमसिद्धिः । तथाच सिद्धपदसमुदायेपि एकान्वितार्थपरत्वमन्यस्याक्षतमिति । **स्वार्थमात्रे** इति मात्रपदं कार्य घटन व्यवच्छेदकम् कार्य-सिद्धकात्स्न्र्ये वा । **नेति**, तत्खण्डनम् । तत्र हेतुः **कार्येत्यादिः** । प्राथमिकव्युत्पत्तेः कार्यैकविषयकत्वात् तद्विरोधेन पदानामन्यान्विताभिधायित्वमात्रं न युक्तम् । न चाननुगमः; विशिष्टकार्यांशाभिधायित्वं सर्वेषां पदानामिति स्वीकारात् । लिङादेर्विशेष्यांशे, अन्येषां च विशेषणांशे वृत्तौ विशिष्टकार्यपरत्वमनुगतमेव । सिद्धपरवाक्यश्च न तथेति भावः । **कार्येत्यादेरर्थस्तावत्**—यत्र यत्र प्रवृत्तिः, तत्र तत्र पूर्वं कार्यबुद्धिरिति व्याप्तिज्ञानं भवति । तेन पदानां कार्यपरत्वनिश्चयः इति । अतः **बलेनेत्यस्य परत्वेनेत्यत्रान्वयः**; न तु **अवगत**मित्यत्र । सामान्यतः प्रवर्तकार्थावबोधित्वावगमस्यैतद्व्याप्त्यधीनत्वाभावात् । तदयमर्थः—गामानयेति वाक्यश्रवणानन्तरं

इष्टसाधनताबुद्धिस्तु कार्यबुद्धिद्वारेण प्रवृत्तिहेतुः ; न स्वरूपेण; अतीतानागतवर्तमानेष्टोपायबुद्धिषु प्रवृत्त्यनुपलब्धेः। इष्टोपायो हि—मत्प्रयत्नात् ऋते न सिध्यति ; अतो मत्कृतिसाध्यः' इति बुद्धिर्यावन्न जायते—तावन्न प्रवर्तते।

अतः कार्यबुद्धिरेव प्रवृत्तिहेतुरिति प्रवर्तकस्यैव शब्दवाच्यतया कार्यस्यैव वेदवेद्यत्वात् परिनिष्पन्नरूपब्रह्मप्राप्तिलक्षणानन्तस्थिरफलाप्रतिपत्तेः, "अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति" ( आप. श्रौ. 2. 1. 1.) इत्यादिभिः कर्मणामेव स्थिरफलत्वप्रतिपादनाच्च कर्मफलाल्पास्थिरत्व-ब्रह्मज्ञानफलानन्तस्थिरत्वज्ञानहेतुको ब्रह्मविचारारम्भो न युक्तः–इति।

अत्राभिधीयते–निखिललोकविदितशब्दार्थसंबन्धावधारणप्रकारमपनुद्य, सर्वं शब्दा-

---

प्रवृत्तेर्दर्शनात् प्रवर्तकोऽर्थः शब्देन बोधित इत्यवगतम्। यस्य ज्ञाने सति प्रवृत्तिर्जायते, स एव प्रवर्तकोऽर्थः। कोऽसौ प्रवर्तकोऽर्थ इति विचारे कार्यबुद्धिप्रवृत्तिव्याप्तिबलात् कार्यं प्रवर्तकोऽर्थ इति निश्चीयते; ततः पदानां कार्यपरत्वमवधार्यत इति। प्रवर्तकार्थावबोधित्वमित्यत्र प्रवर्तककार्यावबोधित्वमिति विवक्षायां तु यथापाठमेवान्वयः।

इष्टसाधनताज्ञानस्य प्रवृत्तिकारणत्वात् इष्टसाधनत्वं प्रवर्तकोऽर्थ इति तद्बोधकत्वं मण्डनादिमतम्; तन्निरस्यति इष्टेति। अतीतं वाऽनागतं वा वर्तमानं वा यदीष्टसाधनत्वेन ज्ञायते, तदा न भवति प्रवृत्तिः, कुतः ? न ह्यतीतं प्रवृत्त्या साधयितुं शक्यम्। तथा कालान्तरभावि च। वर्तमानं तु सिद्धत्वादेव न साध्यमिति किमर्था प्रवृत्तिः। अतः कार्यत्वज्ञानानन्तरमेव प्रवृत्तिरिति भावः। तत्रापि स्वप्रवृत्तिसाध्यमिति ज्ञाने सत्येव तत्र स्वयं प्रवर्तते, न तु केवलकार्यताज्ञानादित्याह इष्टोपाय इति। इष्ट उपायो यस्येति बहुव्रीहिः। पुरुषोऽन्यपदार्थः; न प्रवर्तत इत्यत्रान्वयः—साध्य इत्यस्योपाय इति विशेष्यमध्याहार्यम्।

प्रकृतोपसंहारपूर्वकं पूर्वपक्षमुपसंहरति अत इति। कर्मास्थिरफलकत्वनिर्णयरूपविशेषणांशस्याप्यसिद्धिमाह अक्षय्यमिति। ननु पूर्वमीमांसया अल्पास्थिरफलत्वस्य कर्मसु निर्णीतत्वात् कथमयं पूर्वपक्ष इति चेत्—अयं भावः—अक्षय्यमिति वाक्येऽपि स्थिरत्वविषयकापातप्रतीतिरस्ति। यदि न्यायमूलनिर्णयेन तत्राप्रामाण्यबुद्धिः, तर्हि अत्रापि सिद्धेऽव्युत्पत्त्यभावयुक्त्या उपनिषदां कर्मविधिशेषत्वनिश्चयेन मन्त्रार्थवादजन्यापातप्रतीतेरुपेक्ष्यतया ब्रह्मस्थिरफलत्वापातप्रतीतेरपि संभावितप्रामाण्यकत्वं नास्ति॥ यथा कथञ्चिदापातप्रतीतिरलमिति चेत्—सा तत्राप्यस्तीति। अथवा फलमपि भवतु किञ्चित् यदि अनन्तम्, तर्हि वचनबलात् किञ्चित्कर्मफलमेव तथास्तु। तथाच कर्मणैव संसिद्धिं मुक्तेरपीच्छेम। अस्तु चौपनिषदज्ञानस्य तच्छेषत्वम्। अतो न पृथग्विचार्येति। तथा च व्यवहारादन्यत्र प्रथमव्युत्पत्त्यभावात् तस्याश्च कार्यविषयकत्वात् शब्दानां कार्यपरत्वावधारणात् सिद्धार्थे व्युत्पत्त्यभावात् वेदान्तानां सिद्धब्रह्मपरत्वायोगात् तेषां तद्विषये प्रामाण्याभावात् ततस्तद्विचाररूपा ब्रह्मजिज्ञासा नारम्भणीयेति पूर्वः पक्षः।

नामलौकिकैकार्थावबोधित्वावधारणं प्रामाणिका न बहुमन्वते। एवं किल बालाः शब्दार्थ संबन्धमवधारयन्ति—मातापितृप्रभृतिभिः अम्बातातमातुलादीन् शशिपशुनरमृगपक्षिसर्पादींश्च, 'एनमवेहि, इमं चावधारय' इत्यभिप्रायेण, अङ्गुल्या निर्दिश्यनिर्दिश्य तैस्तैः शब्दैः तेषुतेष्वर्थेषु बहुशश्शिक्षिताः शनैश्शनैःतैस्तैरेव शब्दैः तेषुतेष्वर्थेषु स्वात्मनां बुद्ध्युत्पत्तिं दृष्ट्वा शब्दार्थयोः संबन्धान्तरादर्शनात् संकेतयितृपुरुषाज्ञानाच्च तेष्वर्थेषु तेषां शब्दानां

---

प्रथमव्युत्पत्तिः सिद्धविषयेऽपि भवति, सिद्धविषय एव च प्रथमव्युत्पत्तिरिति प्रदर्श्य सिद्धान्ती पक्षमिमं प्रतिक्षिपति। अलौकिकैकार्थेति। कार्यपरत्वावधारणमेवानुचितम्। तत्र प्राभाकराः प्रथमगृहीतं लौकिककार्यं परित्यज्य अपूर्वात्मककार्यपरत्वमेव शब्दानामिति कल्पनान्तरं कुर्वन्ति। तच्च निरसिष्यते। तदभिप्रायेणेदम्। अथवा सर्वलोकाननुमतत्वादलौकिकं यत् एकार्थावधारणं सिद्धं विहाय कार्यमात्रपरत्वावधारणरूपम्, तन्न बहुमन्वते। यथायथमुभयपरत्वं युक्तमिति भावः। अम्बादिशब्दाः ससंबन्धिकाः, शश्यादिशब्दाः न तथेति पृथक्करणम्। अन्विततयैव ज्ञेयमपि अन्वये शब्दतोऽनवबुद्धेऽपि ज्ञायत इत्यपि ससंबन्धिकशब्दोदाहरणसूच्यम्। सर्पादींश्चेत्यन्तस्य निर्दिश्येत्यत्रान्वयः। एनमवेहि इमञ्चावधारयेति। उच्चार्यमाणशब्दश्रवणेन सह निर्दिश्यमानार्थावधारणमपि कुरु इत्यर्थः। तर्जन्याः शब्दोच्चारणकाले स्वमुखसमीपनयनपूर्वकं वस्तुनोऽभिमुखं ततः प्रसारणादुभयनिर्देशः। प्रथमतः अम्बा अम्बेति द्विस्त्रिः शब्दशिक्षां परं विधाय, पश्चात् तदुच्चारणपूर्वकमर्थप्रदर्शनमिति सूचनाय शब्दविषये एनमिति अन्वादेशादरणम्।

अत्रायं विशिष्टार्थः– शब्दप्रयोगाङ्गुलिनिर्देशज्ञानसहितमर्थज्ञानं पुनःपुनरुत्पद्यमानं तत्र दृढसंस्कारमुत्पादयति। तत्राङ्गुलिनिर्देशस्य अम्बाताताद्यनेकार्थसाधारणतया, क्रमेण, अङ्गुलिनिर्देशं विनाऽपि शिक्षायाः क्रियमाणतया च, 'निर्देशोऽयं द्वारमात्रम्, न बोध्यः नापि बोधक इति निश्चिन्वते। एवं साहचर्यभूमदर्शनजनितसंस्कारदाढर्यबलात् शब्दार्थयोरेकतरग्रहणेऽप्यन्यतरत्र बुद्धिर्भवति। तत्र शब्दानामर्थशेषत्वमर्थानां कार्योपयोगित्वञ्चानुभविकमिति शब्दानां बोधकत्वमर्थानां बोध्यत्वञ्चावधारयन्ति। अथ चिन्तयन्ति—यदि साहचर्यमात्रेणार्थबोधः, किमिति शब्दमिममर्थान्तरसाहचर्यसिद्ध्यर्थमेव न प्रयुञ्जते? स्वयं स्वपूर्ववृद्धैस्तथैव शिक्षितत्वादिति चेन्न– अस्य शब्दस्यायमर्थ इति पश्चात्तनशिक्षास्थले हि साहचर्याधीनस्मरणं न सुवचम्। अतस्तत्र अस्यायं बोध्य इति बोध्यबोधकभावज्ञानात् बोधकत्वं स्वभाव एव स्यात्। लोके आधुनिकशब्देषु संकेतवशादर्थबोधो यद्यपि दृष्टः, सापि रीतिरत्र न भवति; अनादिशब्दे संकेतयितृपुरुषस्य दुर्भेत्वात् दुर्वचत्वाच्चेति। ननु बालस्य संबन्धान्तराभावादिविमर्शः कथमिति चेत्-उच्यते। अत्र भाष्येऽर्थद्वयम्—यदि बालः, तर्हि संबन्धान्तरदर्शन-संकेतज्ञानाद्यभावात् बोधकत्वस्वभावमेव गृह्णाति। यदि तु प्रौढः, तदा अन्यत्र सर्वत्रानुपपत्तिचिन्तनया बोधकत्वं निश्चिनोतीति। अधिकरणसारावल्युक्तरीत्या जन्मान्तरार्जितस्य बोधकत्वशक्तिसंस्कारस्य शिक्षावशादुद्बोध इति पक्षे तु सुतराम्। न चैकस्य पदस्य कथं बोधजनकत्व-

प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति। पुनश्च व्युत्पन्नेतरशब्देषु, 'अस्य शब्दस्यायमर्थः' इति पूर्व[ वत् ]वृद्धैः शिक्षिताः सर्वशब्दानामर्थमवगम्य परप्रत्यायनाय तत्तदर्थावबोधिवाक्यजातं प्रयुञ्जते।

प्रकारान्तरेणापि शब्दार्थसंबन्धावधारणं सुशकम्—केनचित् पुरुषेण हस्तचेष्टादिना, "'पिता ते सुखमास्ते' इति देवदत्ताय ज्ञापय" इति प्रेषितः कश्चित् तज्ज्ञापने प्रवृत्तः, 'पिता ते सुखमास्ते' इति शब्दं प्रयुङ्क्ते। पार्श्वस्थोऽन्यो व्युत्पित्सुः मूकवत् चेष्टाविशेषज्ञः तज्ज्ञापने प्रवृत्तमिमं ज्ञात्वाऽनुगतः तज्ज्ञापनाय प्रयुक्तमिमं शब्दं श्रुत्वा, 'अयं शब्दस्तदर्थबुद्धिहेतुः' इति निश्चिनोति—इति, कार्यार्थ एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धनः।

मिति वाच्यम्—बोधपदेन शाब्दबोधपर्यन्ताविवक्षणात्। अथवा इयमम्बा इति पदद्वयं ग्राह्यम् यद्वा प्रथमतोऽम्बाशब्दे, पश्चात् गमनकाले, गच्छति गच्छतीति क्रियापदे च शिक्षायाम् अम्बा गच्छतीति वाक्याद् बोधो भवेदेव। वाक्यजातस्य प्रयोगे तु प्रकारान्तरेणानेकाव्युत्पन्नशब्दव्युत्पादनमप्यपेक्षितम्। अस्यायमर्थ इति। 'शब्दस्य', 'अर्थः' इति शब्दयोरर्थे ज्ञाते पश्चात् सर्वत्रैवमेव शिक्षा। नेदं पर्यायपदशिक्षणम्। किंत्वर्थविषये प्रथममेव कस्यचित् शब्दस्य ज्ञापनमेव। वाक्यजातप्रयोगे पर्यायपदज्ञानस्यानपेक्षितत्वात्। अथवा पुनश्चेति वाक्यं पूर्वोक्तातिरिक्त-व्याकरणादिसर्वव्युत्पत्तिग्राहकप्रमाणानामपेक्षाप्रदर्शकम्। एकैकपदमात्रे शिक्षायामपि पश्चात् वाक्यमन्तरा बोधाजननात्तु वाक्यापेक्षां दृष्ट्वा क्रमेण तस्यान्वितार्थबोधकत्वस्य निश्चय इति मन्तव्यम्। अत इदमभिहितान्वय—अन्विताभिधानोभयसाधारणम्।

ननु बोधकत्वमेव चेत् संबन्धः, बोधकत्वे सिद्धे तज्ज्ञानम्, तज्ज्ञाने जाते बोधकत्वसिद्धिरिति परस्परापेक्षा। एवं गङ्गाशब्दस्य तीरबोधकत्वमप्यस्तीति तस्य तत्रापि शक्तिः स्यादिति चेन्न—कायिकव्यवहारात् बोधमनुमाय शब्दस्य तद्बोधजनकत्वं पूर्वं जानाति; अथ स शब्दः श्रोतुरपि पूर्वजातबोधकत्वज्ञानवशात् बोधको भवतीति न परस्परापेक्षा। यथा च विशेषणत्वमभावस्य संबन्ध इत्युक्तौ विशेषणताप्रयोजकस्वरूपसंबन्धे तात्पर्यम्, तथा बोधकत्वं संबन्ध इत्यस्य बोधजनकताप्रयोजकशब्दशक्तौ तात्पर्यम्। शक्तिश्चातिरिक्तः पदार्थः। शक्तिरियं दाहकशक्त्यादिविलक्षणा; ज्ञायमानतया हेतुत्वात्। तत्र गवादिशब्दे गवादिवस्तुबोधनशक्तिरिति। गङ्गापदे च प्रवाहबोधनशक्तिरेव; तीरबोधस्तु तीरस्मृतिहेतुप्रवाहबोधशक्तिबलादेव; एवमसाधुशब्देषु साधुशब्दार्थोपस्थितिहेतुसाधुशब्दस्मरणहेतुशक्तिबलादेवार्थबोध इति न सर्वशक्तत्वापत्तिरिति। प्रथमतोऽन्वितबोधकत्वस्यैवाज्ञाने सति कार्यान्वितबोधकत्वस्य का प्रसक्तिरिति च अम्बातातायुदाहरणेन ज्ञापितम्।

प्रथमत एव प्रौढस्यान्वितार्थबोधं सिद्धविषये उदाहरणान्तरेण दर्शयति प्रकारान्तरेणेत्यादिना। गामानयेति पूर्वपक्ष्युक्तस्थले प्रयोजकवृद्धः-प्रयोज्यवृद्धः व्युत्पित्सुश्चेति पुरुषत्रयम्; अत्र

अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म, तदुपासनं चापरिमितफलं बोधयन्तीति तन्निर्णयफलो ब्रह्मविचारः कर्तव्यः।

कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्य एव ॥ कथम् ॥ (बृ. 4. 4. 5. 5.) "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", (छा. 8. 7. 1.) "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः", (बृ. 6. 4. 21.) विज्ञाय प्रज्ञां कुर्वीत", (छा. 8. 1. 1.) "दहरोऽस्मिन्नन्तर आकाशः तस्मिन् यदन्तः तदन्वेष्टव्यम् तद्वाव विजिज्ञासितव्यम्", (तै-नारा. 10. 23.) "तत्रापि दह्रं गगनं विशोकः तस्मिन् यदन्तस्तदुपासितव्यम्" इत्यादिभिः प्रतिपन्नोपासनविषयकार्याधिकृतफलत्वेन, (तै-आन.1. 1.) "ब्रह्मविदाप्नोति परम्" इत्यादिभिर्ब्रह्मप्राप्तिः श्रूयत इति ब्रह्मस्वरूपतद्विशेषणानाम्, दुःखासंभिन्नदेशविशेषरूपस्वर्गादिवत्, रात्रिसत्रप्रतिष्ठादिवत्, अपगोरणशतयातनासाध्यसाधनभाववच्च, कार्योपयोगितयैव सिद्धेः।

---

पुरुषचतुष्टयमिति विशेषः।एवं प्रथमं कार्यबोधेऽपि आवापोद्वापतः सिद्धमात्रबोधोऽपि युक्तइतिध्येयम्।

एवं सिद्धबोधकत्वसमर्थनेन पृथग्वेदान्तप्रामाण्यं सुस्थितमिति प्रकृताधिकरणकृत्यं निष्पन्नम्। परंतु कार्यार्थवादिनापि पूर्वमीमांसासिद्धस्य पूर्णवेदप्रामाण्यस्य स्वीकार्यतया कर्मकाण्डशेषतया विलक्षणब्रह्मावबोधनेनैव प्राशस्त्यादिपरतयोपनिषन्नयनमालोचितमिति तन्निरसनेन पृथगुपनिषदुपदिष्टकार्यान्तरसंबन्धितया यथावस्थितब्रह्मबोधनेनैव कार्यपरतया निर्वाह एव तेनालोचयितव्य इत्युपदेष्टुमारभते कार्येति। आकाशः आ=समन्तात् काशमानत्वादिमान् परमात्मा। तस्मिन् यत् कल्याणगुणजातम्। दह्रं गगनमिति विशोकपदवाच्यपरमात्मविशेषणम्; परिच्छेद्यपरिच्छेदकयोरैक्यारोपेण गगनमिति प्रयोगः। गगनवत् सूक्ष्मस्वच्छस्वरूप इति वाऽर्थः; 'आकाशात्मा' 'खं ब्रह्म' इत्यादाविवोपचारात्। उपासनविषयकार्याधिकृतफलत्वेनेति कथनं प्राभाकरपरिपाट्या। उपासनं धात्वर्थः; तद्विषयकं कार्यमपूर्वं नियोगो विध्यर्थः; तदधिकृतो नियोज्यः पुरुषः; तस्मै नियोगेनानुगृहीतं फलं ब्रह्मप्राप्तिरिति। उपासनाख्यविधेयार्थविशेषणतया सिद्धौ ब्रह्मविशेषणादेर्वास्तवत्वं न नियतं स्यात्; असतोऽप्युपास्यमानत्वात्। अतो वस्तुसत्त्वनिश्चयदार्ढ्याय फलकोटिनिविष्टतया सिद्धिं दर्शयति स्वर्गादिवदिति। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतञ्च तत् सुखं स्वःपदास्पदम्' इति स्वर्गवाक्यशेष इहानुसंहितः। न ह्येतदर्थत्यागो मीमांसकेष्ट इति भावः। दुःखासंभिन्नत्वं=दुःखामिश्रत्वम्। मध्ये दुःखं प्रविश्य पूर्वापरसुखं भिनत्तीति नेति भावः। फलविशेषणलाभमर्थवादात् प्रदर्श्य फललाभमेव ततो दर्शयति रात्रिसत्रेति। काम्यकर्मसु, 'विश्वजिता यजेते'ति विहितस्य विश्वजिद्यागस्य विधिवाक्ये फलाश्रवणेऽपि, 'सः स्वर्गः स्यात् सर्वान् प्रति अविशिष्टत्वात्' इति स्वर्गः फलमिति स्वर्गकामपदाध्याहारमुक्त्वा, 'तिस्रो रात्रीरुपयन्ती'ति विहिते रात्रिसत्रयागे तु न तदध्याहारः, 'प्रतितिष्ठन्ति ह वा य एताः रात्रीरुपयन्ति'

**'गामानय' इत्यादिष्वपि वाक्येषु न कार्यार्थे व्युत्पत्तिः; भवदभिमतकार्यस्य दुर्निरूपत्वात् । कृतिभावभावि कृत्युद्देश्यं हि भवतः कार्यम् ।**

---

इत्यर्थवादे प्रतिष्ठाज्ञापनात् तस्या एव फलत्वमिति रात्रिसत्राधिकरणे तैर्निर्णीतत्वादिति भावः । विधिवाक्यार्थवादत इव निषेधार्थवादतोऽप्यर्थस्य स्वीकृतत्वं दर्शयति **अपगोरणेति** । 'तस्माद् ब्राह्मणाय नापगुरेत' इति ब्राह्मणहननसंकल्पनिषेधवाक्यम् । तत्रार्थवादः, 'यो ब्राह्मणायापगुरते, तं शतेन यातयात्' इति । **यातना** यमबाधा । अर्थात् यमः कर्ता । अपगोरणकारिणं यमः शतं वत्सरान् बाधामनुभावयेदित्यर्थः । एतदर्थास्वीकारे निषेधान्न निवर्तेतेति निषेध्यस्यैतत्फलस्य च कार्यकारणभावं स्वीकृत्य यमलोकादिकमिषितम् । तद्वदिहापि, 'असन्नेव स भवति असद् ब्रह्मेति वेद चेत्', 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्येवं ब्रह्माज्ञाने ब्रह्मज्ञापचरणादौ चानिष्टप्रतिपादकानां मोक्षोपायविरोधिफलपराणां वाक्यानामर्थोऽपि सत्य इति । अतो विचार-आवश्यक इति भावः । अपगोरणोदाहरणेनेदमपि सूचितम्—दर्शपूर्णमासप्रकरणगतेऽप्यस्मिन् वाक्ये क्रत्वर्थत्वत्यागेनार्थवादबलात् पुरुषार्थतया प्रकरणभङ्ग इष्यते यदि, कथमुपनिषद्रूपभिन्नप्रकरणगतार्थ-वादार्थं परित्यज्य कर्मविधिशेषत्वेन सर्वनयनं युज्यते ? कर्मकाण्डान्ते ईशोपनिषदिव कर्मकाण्डमध्य एव यदि ब्रह्मप्राप्तितदुपायपरार्थवादाः स्युः, तदाप्यपगोरणादिन्यायेन प्रकरणं भित्त्वा स्वातन्त्र्यं स्वीकार्यम्, किमुतेदानीमिति ।

एवं तर्हि, उपासनजिज्ञासेत्येव सूत्र्यताम्, किमिति ब्रह्मजिज्ञासेति सूत्र्यते इति चेत् —कार्यप्राधान्यमन्वारुह्य किल पूर्वपक्षिणमेवं प्रतिबोधयामः—अन्यार्थवादत्वापेक्षया वरमुपनिष-त्कार्यविधिशेषत्वमिति ; न ब्रह्मणः प्राधान्यमस्माभिस्त्यक्तमिति । उपासनाऽपि क्रियमाणा न प्रधा-नोपायः । अपितु सिद्धोपायो ब्रह्मैव प्रधानम्; फलमपि तदेवेति सर्वथा ब्रह्मैव जिज्ञास्यम् ॥

व्यवहारात् सिद्धे शक्तिग्रहः समर्थितः । पूर्वपक्षिणा प्रथमं कार्ये शक्तिग्रह इति यदुक्तम्, तत्रापि तदभिमतरीत्यभावं तत्पक्षाश्रद्धेयत्वद्रढिम्ने आह **गामिति** । **न कार्यार्थे व्युत्पत्तिरिति** । अस्ति कार्ये व्युत्पत्तिः ; परन्तु न त्वदभिमते कार्ये इति तदबोधकत्वं तेषामपि सिद्धपरवाक्याविशि-ष्टमिति भावः । वैदिकविधिवाक्येष्वपि तदभिमतकार्यपरत्वाभावो वक्ष्यते । तदप्यत्रादिपददर्शितम् । **प्रकरणपञ्चिकायाम्**—'यजेत स्वर्गकामः' इत्यादौ स्वर्गकामस्येदं कार्यमिति प्रतीत्या स्वर्गसाधन एव कार्यताग्रहणम्; न स्वर्गे, नापि तदसाधने कर्मणि । गामानयेत्यादावपि कार्ये क्रियाविलक्षण एव व्युत्पत्तिः । कार्यञ्चेह सुखं दुःखनिवृत्तिर्वा । क्रियायां तत्साधनतया कार्यत्वारोपमात्रम्—इत्युक्तम् । तत सर्वमिह निरसनीयमभिमतम् । **व्युत्पत्तिर्नेत्यस्य** । प्रथमव्युत्पत्तिर्वा पश्चात्तनतद्विषयनिर्णयो वा अनुशासनमूलतद्बोधो वा नास्तीत्यर्थः । वक्ष्यत्यस्य लिङर्थत्वाभावमपि । तस्य तदभिमतकार्यत्वाभावं प्रथममाह । **दुर्निरूपत्वात्** । भवदभिमतमपूर्वमेव नास्ति । तत्सत्त्वेऽपि तत्रापि कार्यत्वं भवदभिमतं न भवतीत्यर्थः । **कृतिभावभावि** । कृतेः सद्भावे भवतीति तथा । **हिशब्देन** "कृतिसाध्यं प्रधानं यत् तत्

कृत्युद्देश्यत्वं च कृतिकर्मत्वम्। कृतिकर्मत्वञ्च कृत्या प्राप्तुमिष्टतमत्वम्। इष्टतमञ्च सुखम्, वर्तमानदुःखस्य तन्निवृत्तिर्वा। तत्रेष्टसुखादिना पुरुषेण स्वप्रयत्नात् ऋते यदि तदसिद्धिः प्रतीता, ततः प्रयत्नेच्छुः प्रवर्तते पुरुष इति न क्वचिदपीच्छाविषयस्य कृत्यधीनसिद्धित्वमन्तरेण कृत्युद्देश्यत्वं नाम किञ्चिदप्युपलभ्यते॥ इच्छाविषयस्य प्रेरकत्वं च प्रयत्नाधीनसिद्धित्वमेव; तत एव प्रवृत्तेः।

न च पुरुषानुकूलत्वं कृत्युद्देश्यत्वम्; यतः सुखमेव पुरुषानुकूलम्। न च दुःखनिवृत्तेः पुरुषानुकूलत्वम्; 'पुरुषानुकूलं सुखम्, तत्प्रतिकूलं दुःखम्' इति हि सुखदुःखयोः स्वरूपविवेकः। दुःखस्य प्रतिकूलतया, तन्निवृत्तिरिष्टा भवति; नानुकूलतया। अनुकूलप्रतिकूलान्वयविरहे स्वरूपेणावस्थितिर्हि दुःखनिवृत्तिः। अतः सुखव्यतिरिक्तस्य क्रियादेरनुकूलत्वं न संभवति। न सुखार्थतया तस्याप्यनुकूलत्वम्; दुःखात्मकत्वात् तस्य।

---

कार्यमभिधीयते" इति तदुक्त्यनुसंधानम्। तत्र प्रधानत्वं कृत्युद्देश्यत्वम्। तत् किमिति विचार्यत इह। कृत्युद्देश्यत्वं तैः कृतिकर्मत्वं कृतिमत्पुरुषानुकूलत्वं कृतिशेषित्वं कृतिप्रयोजनत्वमिति च बहुधा व्यवह्रियत इति तत्सर्वशोधनमत्र।

**कृत्या प्राप्तु**मिति। 'कर्तुरीप्सिततमं कर्म' इति सूत्रणादिति भावः। **वर्तमानदुःखस्ये**ति बहुव्रीहिः। एवं भविष्यद्दुःखचिन्तारूपभयस्थले दुःखप्रागभावरक्षणमप्युद्देश्यं भवति। एतावता कार्यलक्षणमिष्टतमत्वघटितमपूर्वे असंभवीत्युक्तं भवति। **इष्टत**मित्येतावदनुक्त्वा **कृत्या प्राप्तु**मित्यधिकप्रयोगकृत्यं दर्शयति **तत्रे**ति। तन्निष्ठमित्यर्थः; **कृत्युद्देश्यत्व**मित्यत्रान्वयः। उद्देश्यमित्येवानुक्त्वा कृत्युद्देश्यमिति विशेषणादेतावत् विवक्षितमित्याह **इच्छाविषयस्य कृत्यधीनसिद्धित्वमन्तरेणे**ति। अस्यायं भावः—**कृत्या प्राप्तुमिष्टतमत्व**मित्यस्य प्रकारान्तराधीनसिद्ध्यभावप्रयुक्तस्वप्रयत्नसाध्यत्वप्रकारकेच्छाविषयत्वातिशयवत्त्वमित्यर्थो भवति। एवं साध्यत्वेनेच्छाविषयत्वोक्तावपि साध्यत्वस्य साक्षादनुक्तत्वात् तदर्थं **कृतिभावभावी**ति दलमिति वक्तव्यम्। एतदपेक्षया इष्टतमत्वे सति कृतिसाध्यत्वमित्येव लक्षणं पर्याप्तमिति किमधिकेनेति।

ननु कृतिभावभावीति दलापौनरुक्त्याय इच्छाविषयनिष्ठं कृत्यधीनसिद्धिकत्वं कृतिकर्मत्वमित्यनुक्त्वा इच्छाविषयनिष्ठं प्रेरकत्वं कृतिकर्मत्वमित्युच्यत इत्यत्राह **इच्छे**ति। कृतिकर्मत्वमित्यस्य प्रेरकत्वमित्यर्थः प्रेरणायाः कृत्यनुकूलव्यापारतया कृतिघटितत्वादेव लभ्यते। अतः प्रेरकत्वं कृतिप्रयोजकत्वमिति इष्टतमत्वे सति कृतिप्रयोजकत्वमिति विशिष्टम्। प्रयोजकत्वञ्च फलस्य न कृतिपूर्वभावित्वात्। अतः कृत्यधीनसिद्धित्वमेव प्रेरकत्वमिति। सर्वथाऽप्यसंभवो लक्षणस्यास्त्येव।

**पुरुषानुकूलत्व**मिति; कृत्याश्रयानुकूलत्वमित्यर्थः। **नानुकूलतये**ति; न तु निवृत्तिनिष्ठया अनुकूलतया निवृत्तेरिष्टत्वमित्यर्थः। **दुःखात्मकत्वा**दिति। सुखं भावि। दुःखमेव गवानयनकालेष्वस्ति; तस्य श्रमसाध्यत्वात्। अतो दुःखरूपत्वमेव युक्तमिति भावः।

सुखार्थतयाऽपि तदुपादानेच्छामात्रमेव भवति ।

न च कृतिं प्रति शेषित्वं कृत्युदेश्यत्वम्; भवत्पक्षे शेषित्वस्यानिरूपणात् । न च परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति तत्प्रतिसंबन्धी शेषीत्यवगम्यते; तथा सति कृतेरशेषत्वेन तां प्रति तत्साध्यस्य शेषित्वाभावात् । न च परोद्देशप्रवृत्त्यर्हतायाऽशेषत्वेन परः शेषी; उद्देश्यत्वस्यैव निरूप्यमाणत्वात्; प्रधानस्यापि भृत्योद्देशप्रवृत्त्यर्हत्वदर्शनाच्च ॥ प्रधानस्तु भृत्यपोषणेऽपि स्वोद्देशेन प्रवर्तत इति चेन्न—भृत्योऽपि हि प्रधानपोषणे स्वोद्देशेनैव प्रवर्तते । कार्यस्वरूपस्यैवानिरूपणात्, 'कार्यप्रतिसंबन्धी शेषः, तत्प्रतिसंबन्धी शेषी' इत्यप्यसङ्गतम् ॥

नापि कृतिप्रयोजनत्वं कृत्युदेश्यत्वम्; पुरुषस्य कृत्यारम्भप्रयोजनमेव हि कृतिप्रयोजनम् । स चेच्छाविषयः ।

तस्मादिष्टत्वातिरेकिकृत्युद्देश्यत्वानिरूपणात् कृतिसाध्यताकृतिप्रधानत्व[स्व]रूपं कार्यं दुर्निरूपमेव ॥

नियोगस्यापि साक्षादिषिविषयभूतसुखदुःखनिवृत्तिभ्यामन्यत्वात् तत्साधनतयै

---

**अनिरूपणात्**—शेषित्वस्य कार्ये समन्वयार्हतया भवद्ग्रन्थेष्वनिरूपितत्वात् । ननु शेषित्वं शेषवत्त्वम्; शेषत्वप्रतिसंबन्धित्वम् । तथा च शेषलक्षणे निरुक्ते तत् सुग्रहमिति दर्शयन्तं प्रत्याह **न चेति** । **परं** फलादि; तदुद्देशेन प्रवृत्तस्य पुरुषस्य कृतिः—तदुद्देशेन **प्रवृत्ता**=उत्पन्ना कृतिरिति वा; **तद्व्याप्त्यर्हत्वं** तद्विषयत्वम् । **इति** इत्यतः । **तत्प्रतिसंबन्धी**-परम्परया शेषत्वनिरूपकः **परेति** शब्दनिर्दिष्टः । तथाच यदुद्देशप्रवृत्तपुरुषकृतिव्याप्त्यर्हत्वं यस्य, स शेषी, स च शेष इति भावः । **न चावगम्यत** इत्यन्वयः । **तथेति** । कृतिं प्रति शेषित्वं हीदानीं विचार्यते । न च कृतिरेव कृतिव्याप्त्यर्हेति भावः । **शेषत्वेन**-शेषस्वरूप(लक्षण)त्वेन । अत्राप्युद्देशघटनादात्माश्रय इत्याह **उद्देश्येति** । अन्यत् शेषित्वनिर्वचनं खण्डयति **कार्येति** । विधिविषयस्यैव शेषत्वं मीमांसकेष्टम् । श्रीभाष्यकृदभिमतं शेषलक्षणं परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपम्, स शेषः परः शेषीति निर्दिष्टम्, परमप्रयोजनभूतपरगतातिशयाधायकत्वमिति टीकादौ निष्कृष्टम् ।

**कृत्यारम्भप्रयोजन**मिति । कृतेरारम्भः उत्पत्तिर्येन, तत् प्रयोजनमित्यर्थः । 'यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम्' इति **न्यायदर्शनसूत्रम्** । यद्विषयकेच्छाधीना प्रवृत्तिः, तत् प्रयोजनमिति यावत् । कृत्यारम्भानन्तरमान्तरालिकानेकफलदृष्टावपि प्रथमारम्भो यस्य मुख्यस्योद्देशेन, तत् प्रयोजनमिति यावत् । इदमभिप्रेत्याह **स चेच्छाविषय** इति । **दुर्निरूपमेव**; गवानयनमपि निरुक्तकार्यताविशिष्टं न भवतीत्यर्थः । अतः प्रथमतो व्युत्पत्तिविषयभूतं कार्यत्वमिदं नेत्युक्तं भवति ।

ननु मा भून्मुख्यं कार्यत्वं गवानयनादौ । तस्य तत्रारोप एवास्मदिष्टः । साक्षाच्च तत् वैदिकविध्यर्थे नियोग एवेति तदाशयं निरस्यति **नियोगस्यापी**ति । **इषिः** इच्छा । तद्विषयौ सुखं

वेष्टत्वं कृतिसाध्यत्वं च। अत एव हि तस्य क्रियातिरिक्तता। अन्यथा क्रियैव कार्यं स्यात्। स्वर्गकामपदसमभिव्याहारानुगुण्येन लिङादिवाच्यं कार्यं स्वर्गसाधनमेवेति क्षणभङ्गिकर्मातिरेकि स्थिरं स्वर्गसाधनमपूर्वमेव कार्यमिति स्वर्गसाधनतोल्लेखेनैव ह्यपूर्वव्युत्पत्तिः। अतः, 'प्रथममनन्यार्थतया प्रतिपन्नस्य कार्यस्यानन्यार्थत्वनिर्वहणायापूर्वमेव पश्चात् स्वर्गसाधनं भवती'ति उपहास्यम्। स्वर्गकामपदान्वितकार्याभिधायिपदेन प्रथममप्यनन्यार्थतानभिधानात्; सुखदुःखनिवृत्तितत्साधनेभ्योऽन्यस्यानन्यार्थस्य कृतिसाध्यताप्रतीत्यनुपपत्तेश्च।

अपिच—किमिदं नियोगस्य प्रयोजनत्वम्॥ सुखवन्नियोगस्याप्यनुकूलत्वमेवेति चेत्—किं नियोगः सुखम्; सुखमेव ह्यनुकूलम्॥ सुखविशेषवत् नियोगापरपर्यायं विलक्षणं सुखान्तरमिति चेत्—किं तत्र प्रमाणमिति वक्तव्यम्॥ स्वानुभवश्चेत्, न; विषयविशेषानुभवसुखवत् नियोगानुभवसुखमिदमिति भवताऽपि नानुभूयते। शास्त्रेण

---

दुःखनिवृत्तिश्च। नन्वपूर्वस्य स्वर्गसाधनत्वमिष्टमिति सत्यम्। तावता स्वर्गसाधनतयेष्टत्वं तस्येति न ब्रूमः। किंतु इष्टतमत्वकृतिसाध्यत्वोभयाकारविशिष्टतया लिङ्गृहीतं कार्यं स्वर्गकामपदसमभिव्याहारात् स्वर्गसाधनत्वेनाप्यवगतमिति तत् स्वर्गमपि साधयति। लिङ्श्रवणकाले पूर्वमनन्यार्थतया प्रतीतत्वात् अपूर्वं स्वमुद्दिश्यैव पुरुषं नियोजयति, प्रभुरिव भृत्यम्। एवं प्रवृत्तं पुरुषं स्वप्राधान्यनिर्वाहाय प्रभुर्भृतिप्रदानेनेव स्वर्गप्रदानेनानुगृह्णात्यपूर्वम्। तथा च साध्यभूतस्य स्वस्यापूर्वस्य विवृद्धिविशेषः स्वर्गप्राप्तिरिति इमं प्राभाकरोपन्यासं प्रतिक्षिपन्नाह **स्वर्गे**ति। उपायस्यापीष्टतमत्वे इष्टतमं कृतिसाध्यञ्च प्रतीतं कार्यं लोक इव वेदेऽपि धात्वर्थरूपमेवास्त्विति हि प्रथमं चिन्ता भवत्येव। तस्य समभिव्याहृतपदावगतस्वर्गसाधनत्वबाधादेव तत्त्यागेनान्यस्यापूर्वस्य ग्रहणम्। अतः ग्रहणकाल एव तत् स्वर्गसाधनत्वेनैवावगम्यते, नानन्यार्थत्वेन। एवं गृहीतस्याप्यपूर्वस्य यदि क्रियावत् असाधनत्वम्, कथं तद् गृह्येतेत्यवश्यं साधनत्वाकारेणैव तदवगन्तव्यम्। 'स्वगतानन्यार्थत्वनिर्वहणाये'त्यप्ययुक्तम्। स्वर्गसाधनत्वे हि अन्यार्थत्वमेव निरुह्येत। अन्यसाधनत्वे सत्येवानन्यार्थत्वे, सुखेनाप्यन्यसाधनेन भवितव्यम्। किञ्च स्वर्गासाधनं सदेवापूर्वं चिरमात्मसंरक्षणं कुर्यात्। अन्यथा स्वर्गं ददत् स्वनाशाय स्वयमेव कारणं स्यात्। को हि प्रभुः स्वनाशापादके भृत्यानुग्रहकार्ये प्रवर्तेत। अपि च किमिदमपूर्वं प्रभुरिव चेतयमानम्, येनैतावदनन्यार्थत्वरक्षणचिन्तायां व्याप्रियते। तत् सर्वथोपहास्यमिदमिति भावः।

**नानुभूयत** इति। अननुभूयमानं हि न भवति सुखम्। न चादृष्टमित्युच्यमानमनुभवविषयो भवितुमर्हति। न चानुभूयमानत्वेऽन्यथानुपपत्तिकल्प्यत्वमिति भावः। नियोगस्य विषयात्मकसुखत्वं वा अनुभवात्मकसुखत्वं वा। नान्त्यः, विषयविशेषादर्शनात; अपूर्वस्य सविषयकपदार्थत्वाभावाच्च। अत आद्यपक्ष एव ग्राह्य इत्यभिप्रायेण **नियोगानुभवसुखमि**त्युक्तम्। चन्दनाद्यनुभव एव सुखमिति स्थितेऽपि तदनुभवजन्यं सुखमिति गुणान्तरमिति तार्किकादयः। अत उभयपक्षानुकूल्याय **अनु-**

नियोगस्य पुरुषार्थतया प्रतिपादनात् पश्चात्तु भोक्ष्यत इति चेत्— किं नियोगस्य पुरुषार्थत्ववाचि शास्त्रम् । न तावल्लौकिकं वाक्यम्; तस्य दुःखात्मकक्रियाविषयत्वात्, तेन सुखादिसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनात् । नापि वैदिकम्; तेनापि स्वर्गादिसाधनतयैव कार्यस्य प्रतिपादनात् । नापि नित्यनैमित्तिकशास्त्रम्; तस्यापि तदभिधायित्वं स्वर्गकामवाक्यस्थापूर्वव्युत्पत्तिपूर्वकमिति उक्तरीत्या तेनापि सुखादिसाधनकार्याभिधानमवर्जनीयम् । नियतैहिकफलस्य कर्मणोऽनुष्ठितस्य फलत्वेन तदानीमनुभूयमानान्नाद्य(द्या)रोगतादिव्यतिरेकेण नियोगरूपसुखानुभवानुपलब्धेश्च, नियोगः सुखमित्यत्र न किंचन प्रमाणमुपलभामहे । अर्थवादादिष्वपि स्वर्गादिसुखप्रकारकीर्तनवत् नियोगरूपसुखप्रकारकीर्तनं भवतामपि न दृष्टचरम् ।

अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमित्यध्यवसीयते । धात्वर्थस्य च यागादेरग्न्यादिदेवतान्तर्यामिपरमपुरुषसमाराधनरूपता, समाराधितात् परमपुरुषात् फलसिद्धिश्चेति, ( शारी. 3. 2. 37. ) "फलमत उपपत्तेः" इत्यत्र प्रतिपादयिष्यते ।

---

भवसुखमित्युक्तम् । **लौकिक**मिति । क्षीरकामो धेनुं पालयेदित्यादि । **अवर्जनीय**मिति । लोकावगतकार्यस्य वेदे स्वर्गसाधनत्वाद्यन्वयानर्हतया त्यागेन अपूर्वरूपकार्ये प्रथमं कामवाक्येषु गृहीते, नित्यादिवाक्यगतलिङपि अपूर्ववाची वैदिकलिङ्त्वादित्यनुमानात् तत्रापूर्ववाचित्वग्रहणात् । अनुमानस्य च कृप्तसजातीयसाधकत्वस्यैव भावादिति भावः । **अन्नाद्यारोगतादी**ति पाठे, 'एतयाऽन्नाद्यकामं याजयेत्', 'अन्नाद्यस्यावरुद्ध्यै' इत्यादिश्रौतप्रयोगानुसारेण अन्नं भुक्तजातीयम् अद्यमपूर्ववस्तु भोक्तव्यञ्च मिलितं फलम् । **अन्नाद्यरोगते**ति पाठे आद्यमादिपदमिष्टान्तरग्राहकम्, द्वितीयमादिपदं अनिष्टनिवृत्त्यन्तरग्राहकमिति निर्वाह्यम् ।

कस्तर्हि भवदभिमतो लिङर्थ इत्यत्राह **अत** इति । **अपि**शब्देन यथा लडादिलकारस्थले धात्वर्थगतवर्तमानत्वादिबोधः, तथा लिङादौ धात्वर्थगतकृतिसाध्यत्वबोध इत्यानुरूप्यं प्रदर्श्यते । **मात्र**पदेनोद्देश्यत्व-तदाश्रयव्यवच्छेदः । अपूर्वार्थकत्वपक्ष इव नात्रानुशासनविरोध इति वक्तुमाह **अनुशासने**ति । "विधिनिमन्त्रणामन्त्रणसंप्रश्नप्रार्थनेषु लिङ्" इति अनेकार्थप्रदर्शनं हि सर्वानुगतैकार्थग्रहणसूचनाय । अनुगतमन्वययोग्यञ्च स्थितं कृतिसाध्यत्वमेव लोकवेदसाधारणमिति भावः । न च यजते इति वर्तमाननिर्देशेपि आख्यातार्थकृतेर्धात्वर्थयागसंबन्धे कृतिसाध्यत्वं बुद्ध्यत एव । तदत्र को विशेष इति चेन्न—तत्र किञ्चित्कृतिविषयत्वबोधेऽपि श्रोतृकृतिसाध्यताया अप्रतीतेः । किमिदं कृतिसाध्यत्वमिति चेत्—आप्तेच्छामूलकं यत् कृतिजन्यत्वम्, तत्; अथवा कृतिजन्यत्वप्रकारकाप्तेच्छाविषयत्वमित्यन्यत्र विस्तरः । मा भूदपूर्वं प्राभाकररीत्या लिङ्वाच्यम्; अथाप्यपूर्वमेषितव्यमिति भाट्टादयः । तदपि निरस्यति **धात्वि**ति ।

अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म बोधयन्तीति ब्रह्मोपासनफलानन्त्यं स्थिरत्वञ्च सिद्धम् । चातुर्मास्यादिकर्मस्वपि, केवलस्य कर्मणः क्षयिफलत्वोपदेशात् अक्षयफलश्रवणम्, ( बृ. 4. 3. 3. ) "वायुश्चान्तरिक्षं चैतदमृतम्" इत्यादिवदापेक्षिकं मन्तव्यम् ॥

अतः केवलानां कर्मणामल्पास्थिरफलत्वात्, ब्रह्मज्ञानस्य चानन्तस्थिरफलत्वात् तन्निर्णयफलो ब्रह्मविचारारम्भो युक्त इति स्थितम् ॥

इति श्रीभाष्ये जिज्ञासाधिकरणम् ॥ १ ॥



---

तथाचापूर्वरूपकार्यान्वितबोधकत्वं वा कृत्युद्देश्यरूपकार्यान्वितबोधकत्वं वा कुत्रापि नास्ति । कृतिसाध्यान्वितबोधकत्वमपि विधिवाक्येष्वेव । सिद्धपरवाक्येषु च सिद्धान्वितबोधकत्वमेव । अतः परिनिष्पन्नब्रह्मतदन्वितबोधकत्वमुपनिषदां नासंभवि । अतो ब्रह्मानन्तस्थिरफलापातप्रतीतेः संभावितप्रामाण्यकत्वान्न हेतुघटकविशेष्यदलहानिरिति निगमयति अत इति । विशेषणदलहानिरपि न भवति । उपनिषद्वाक्यानां कर्मकाण्डशेषत्वं विना स्वातन्त्र्यस्य प्राक् वर्णितत्वात् कर्मज्ञानयोर्मध्ये ज्ञानप्राधान्यस्य वक्ष्यमाणत्वात्, कर्मणां काम्यानां क्षयिफलकत्वनिर्णयस्य कर्ममीमांसाकृतस्य बाधानवकाशात्, ज्ञानद्वारा निष्कामकर्मणामनन्तस्थिरफलकत्वस्य च सर्वकर्माविशिष्टतया चातुर्मास्यमात्रे अक्षय्यफलकत्वायोगात् कतिपयदिनसाध्यकर्मापेक्षया बहुमाससाध्यकर्मफलमधिकमिति प्रशंसामात्रत्वावगम इत्यशयेनाह चातुर्मास्येति स्थितमिति; अविचार्यतया सिद्धमित्यर्थः । एतद्विचारफलं ब्रह्मविचारप्रवृत्तिस्तम्भनपरिहारः । अनारम्भमूलेषु चतुर्षु एकमेतावता निराकृतम् । अन्यनिराकरणार्थमुपरि त्रीण्यधिकरणानि ।

भाष्यार्थविज्ञानकृते यथावत् यावत्तु वक्तव्यमिति प्रतीतम् ।
तावद्भवत्यत्र; परं परत्र विशेषचिन्तात्मनि वीक्षणीयम् ॥

अथातश्शब्दभाष्येण राहुमीमांसको जितः ।
अधिक्रियार्थभाष्येण केतुमीमांसकस्तथा ॥

**श्रीहयवदन परब्रह्मणे नमः**

**॥ शुभमस्तु ॥**



अथ जन्माद्यधिकरणम् ॥ २ ॥

'किं पुनस्तद् ब्रह्म, यज्जिज्ञास्यमुच्यते' इत्यत्राह—

## 2. जन्माद्यस्य यतः ॥ १ । १ । २ ॥

जन्मादीति सृष्टिस्थितिप्रलयम् । तद्गुणसंविज्ञानो(न)बहुव्रीहिः । अस्य-अचिन्त्य-

---

॥ जन्माद्यधिकरणम् ॥

**यज्जिज्ञास्यमुच्यते** इत्यधिकप्रयोगः द्वितीयसूत्रस्य पूर्वसूत्रेणैकवाक्यताप्रदर्शनार्थः; निर्विशेषस्य जिज्ञास्यत्वमपि न भवति, निर्गुणब्रह्मजिज्ञासायां सगुणब्रह्मलक्षणं कथ्यमानञ्च न घटत इति द्योतनार्थश्च ; 'ब्रह्मशब्दस्य नानार्थेषु प्रयोगात् मोक्षहेतुनिर्णयविषयो ब्रह्म तत्र किं भवति। न च निरतिशयबृहत्त्वं ब्रह्मशब्दार्थ इति तत्रैकमेव मुख्यमिति वाच्यम्—अग्नीन्द्रादिविषयेऽपि, 'अग्निः सर्वा देवताः', 'नकिरिन्द्र त्वदुत्तरः' इत्येवं निरतिशयबृहत्त्वावगमादनिर्धारणात्, इति शंकाद्योतनार्थश्च। ननु पूर्वाधिकरणेन ब्रह्मविचारारभ्यत्वे केनचित् प्रकारेणोक्ते प्रकारान्तरेणानारभ्यत्वशङ्कायां प्राप्तायां तन्निराकरणार्थं हि द्वितीयसूत्ररूपाधिकरणप्रवृत्तिः । तत् कथं 'किं ब्रह्मेत्यत्राहे'त्यन्यादृशमवतारणमिति चेत्—न; अनया भंग्या वक्ष्यमाणपूर्वपक्षस्यैव संगतिप्रदर्शनायोल्लेखात्। लक्षणायोगात् इदं ब्रह्मेत्यवधारणायोगात् अनेकमेव ब्रह्मेति, एकत्र निरतिशयबृहत्त्वायोगात् न तद्विचारोऽनन्तस्थिरफलहेतुरिति तात्पर्यात् । एवमुत्तराधिकरणादावपि ।

अत्र पूर्ववत् ब्रह्मविचार आरम्भणीयो न वा, वेदान्ताः ब्रह्मणि प्रमाणं न वेति विमर्शौ भाव्यौ । तदुपरि, ज्ञातवस्तुविलक्षणमिति ज्ञाने सत्येव विचारे प्रवृत्तेः, वैलक्षण्यस्य च शब्दैकसमधिगम्ये प्रत्यक्षादितोऽसिद्धया लक्षणेनैव वेद्यत्वात् वेदान्तो ब्रह्मणो लक्षणं प्रतिपादयितुमर्हति न वेति विचारः। उच्यमानस्य धर्मस्य विशेषणतया वोपलक्षणतया वा लक्षणत्वं भवति न वेति तदर्थो विचारः। तदत्र पूर्वस्थापितस्य विचारारभ्यत्वस्य मुखान्तरेणाक्षेपात् आक्षेपिकी संगतिः । **यतो वा इमानी**त्युदाहरणमात्रम् । अस्य वाक्यस्य किं ब्रह्मेतिजिज्ञासायां प्रवृत्ततया लक्षणपरत्वस्य स्पष्टत्वात् तदुक्तिः। एवं संभावितानि वाक्यान्तराण्यपि ग्राह्याणि। 'सत्यं ज्ञान'मित्यादेर्द्वितीयान्तत्वात् लक्षणवाक्यत्वमस्पष्टमिति स्पष्टवाक्यमिदमेव गृहीतम् ।

**जन्मादीति** एकवचननिर्देशात् त्रयाणां ग्रहणमयुक्तम्, जन्मनो जन्मादिकत्वायोगादप्यग्रहणमित्याशंकायां तदर्थमाह **जन्मेति** । जन्म आदिर्यस्य तदित्यत्र यस्येत्यनेन सृष्टिस्थितिप्रलयसमुदायग्रहणम् । **सृष्टि**पदमुत्पत्तिपरम् । निमित्तकारणत्वमप्यत्र विवक्षितमिति ज्ञापनाय **सृष्टि**पदप्रयोगः । एकनिष्ठत्वेन निर्ज्ञातानामेकवचनेन समाहारं कृत्वा समुदायस्य किञ्चिदधीनतायाः सूत्रणात् तत्तदंशकारणं भिन्नभिन्नमिति पूर्वपक्षस्य परिहारार्थमिदमधिकरणमिति गम्यते । **तद्गुणसंविज्ञान** इति । तदिति अन्यपदार्थ उच्यते । तस्य विशेष्यस्य गुणः विशेषणभूतः यो वर्तिपदार्थः जन्म, तस्य **संविज्ञानः** अन्यसमुच्चयेन वाक्यार्थान्वयितया ज्ञापक इति तदर्थः। स्वार्थान्वय्यन्वित-

विविधविचित्ररचनस्य नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः, यतः—यस्मात् सर्वेश्वरात् निखिलहेयप्रत्यनीकस्वरूपात् सत्यसंकल्पात् ज्ञानानन्दाद्यनन्तकल्याणगुणात् सर्वज्ञात् सर्वशक्तेः परमकारुणिकात् परस्मात् पुंसः सृष्टिस्थितिप्रलयाः प्रवर्तन्ते, तत् ब्रह्मेति सूत्रार्थः ।

(तै.भृ .1) "भृगुर्वै वारुणिः वरुणं पितरमुपससार, अधीहि भगवो ब्रह्म" इत्यारभ्य, "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद् ब्रह्म" इति श्रूयते । तत्र संशयः—किमस्माद्वाक्यात् ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते, न वा—इति । किं प्राप्तम् ? न शक्यमिति—

न तावत् जन्मादयो विशेषणत्वेन ब्रह्म लक्षयन्ति, अनेकविशेषणव्यावृत्तत्वेन ब्रह्मणोऽनेकत्वप्रसक्तेः । विशेषणत्वं हि व्यावर्तकत्वम् ॥ ननु 'देवदत्तः श्यामो युवा

---

वर्तिपदार्थैकत्वं तद्गुणसंविज्ञानत्वम्। समित्येकीकारे । ज्ञानशब्दे करणे ल्युट् । स च गुणश्च तद्गुणाविति न विग्रहः; 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषप्रसङ्गात् । तद्गुणस्य संविज्ञानं यत्रेति बहुव्रीहिरपि क्लिष्टः । आदिशब्दघटितसमासे यथाविवक्षं तद्गुणसंविज्ञानत्वाभावस्यापि दर्शनात् तथा नेहेति ज्ञापनाय चैतद्भाष्यम् । ज्ञानानन्दाद्यनन्तेत्यत्र आदिपदेन सत्यानन्तामलग्रहणम् । भावप्रधानो निर्देशः । ज्ञानत्वादिस्वरूपनिरूपकधर्मविशिष्टादित्यर्थः । ननु सत्यत्वादयः पञ्चषा एव स्वरूपनिरूपकधर्माः, तत् कथमनन्तेति । उच्यते-अमलत्वस्य विततिः अस्थूलमनणु इत्यादि अनन्तमित्याद्याशयेन तथोक्तिः । अथवा अनन्तत्वमविनाशित्वम्; तेनैषां नित्यवस्तुस्वरूपनिरूपकत्वलाभः ।

यद्यपि सूत्रकारेण जगज्जन्मादिकारणत्वं लक्षणमित्येतावदेवोक्तम्; न तु तत् वेदप्रतिपाद्यमित्यपि; अनुमानतोऽपि जगत्कारणतया तदवगमालोचनसंभवात्—अथापि उपनिषत्तो ब्रह्मविचारस्यारब्धत्वात्, तत्राप्यत्र सूत्रे जन्मपदयतःपदाभ्यां यतोवाइति श्रुतिप्रत्यभिज्ञापनाच्च जगत्कारणत्वस्य लक्षणत्वेनावधारणं श्रुतिमूलमित्येव तदभिप्रायोऽवगम्यत इति, जगज्जन्मादिकारणत्वं लक्षणं भवितुमर्हति न वेत्येतावदविचार्य श्रुतिवाक्यं तथा प्रतिपादयितुमर्हति न वेति विचारं प्रविवर्तयिषुः श्रुतिमुपादत्ते भृगुर्वा इति । अधीहि । इक् स्मरणे । स्मर; उपदिशेति यावत् । इण्धातुरेव वा प्रयोगबलादधिपूर्वः प्रवचनार्थः । यतः वै इति पदच्छेदः । प्रयन्तीति शत्रन्तम् । प्रयन्ति म्रियमाणानि सन्ति यत् विशन्ति; यत्र लीयन्त इत्यर्थः । लये मोक्षोऽप्यन्तर्भूतः । तत् विजिज्ञासस्व-जन्मादिकारणं वस्तु इदमिति विचार्यावधारय; तद् ब्रह्म—यदेवमवधार्यते, तद् ब्रह्मेत्यर्थः । मध्ये तद्विजिज्ञासस्वेति प्रयोगात् कारणत्वमुपलक्षणलक्षणमिति सूच्यते । अथवा कुत इदमेव ब्रह्मेति शंका मा भूदिति तदुक्तिः । तेन कारणत्वादेव निरतिशयबृहत्त्वम्, सर्वकारणत्वस्यैकत्र संभवाच्च नानेकब्रह्मप्रसक्तिरिति ज्ञाप्यते ।

व्यावर्तकत्वम् विशेषणान्तरविशिष्टात् स्वविशिष्टवस्तुभेदकत्वम् । श्यामो युवेत्यादि

लोहिताक्षः समपरिमाणः' इत्यत्र विशेषणबहुत्वेऽप्येक एव देवदत्तः प्रतीयते। एवमत्राप्येकमेव ब्रह्म भवति ॥ नैवम्। तत्र प्रमाणान्तरेणैक्यप्रतीतेरेकस्मिन्नेव विशेषणानामुपसंहारः। अन्यथा तत्रापि व्यावर्तकत्वेनानेकत्वमपरिहार्यम्। अत्र त्वनेनैव विशेषणेन लिलक्षयिषितत्वात् ब्रह्मणः प्रमाणान्तरेणैक्यमनवगतमिति व्यावर्तकभेदेन ब्रह्मबहुत्वमवर्जनीयम् ॥

ब्रह्मशब्दैक्यादत्राप्यैक्यं प्रतीयत इति चेत्—न। अज्ञातगोव्यक्तेः जिज्ञासोः पुरुषस्य, 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्युक्ते गोपदैक्येऽपि खण्डत्वादिव्यावर्तकभेदेन गोव्यक्तिबहुत्वप्रतीतेः ब्रह्मव्यक्तयोऽपि बह्वयः स्युः।

अत एव लिलक्षयिषिते वस्तुनि एषां विशेषणानां संभूय लक्षणत्वमप्यनुपपन्नम्।

नाप्युपलक्षणत्वेन लक्षयन्ति; आकारान्तराप्रतिपत्तेः। उपलक्षणानामेकेनाऽऽ-

---

विलक्षणप्रयोगः विष्णोर्बुद्धौ विपरिवर्तमानत्वात्। अन्यथा प्रत्यक्षेण देवदत्तैक्याग्रहे। अनेकत्वं; देवदत्तस्य। खण्डत्वादिर्जातिविशेषः। गोव्यक्तिबहुत्वप्रतीतेरित्येतदनन्तरं तद्वदिति शेषः। ननु प्रत्येकं विशेषणत्वेऽयं दोषः; समुदितस्य(त्रयस्य) लक्षणत्वमस्त्वित्यत्राह अत एवेति। भेदकानां मेलनायोगादेवेत्यर्थः। एवं त्रयस्यैकलक्षणत्वे एकदलाव्यावृत्तस्यान्येन दलेन व्यावृत्तिरित्यस्याभावेन दलवैयर्थ्यात्, विभिन्नलक्षणत्वे च मिथोव्यावर्तकत्वेन ब्रह्मभेदस्यावश्यकत्वाच्चेदमयुक्तमिति भावः। ननु 'यतो जायन्ते' इत्यत्र 'जनिकर्तुः प्रकृतिः, इति उपादानत्वं विवक्षितम्। 'यत् अभिसंविशन्ती'त्यत्र च लयस्थानत्वमुच्यते। उपादानादन्यत्र लयासंभवो लोकसिद्ध इति जन्महेतुत्वं लयहेतुत्वञ्च श्यामत्वयुवत्वादिवत् एकनिष्ठम्; तत् कथं भेदकम्; एवञ्च तन्मध्यपतितं स्थितिहेतुत्वमपि तथेति चेत्—उच्यते—लयस्थानत्वरूपलयहेतुत्वबलेनैव उपादानत्वरूपजनिहेतुत्वस्य सिद्धत्वात्, 'यतो जायन्त' इत्यत्र निमित्तकारणत्वस्यापि विवक्षा युक्ता। सदेवेत्यादिपुरोवादिवाक्येषु ईक्षणरूपसंकल्पकथनादप्येतद् युक्तम्। तत्र जन्मस्थितिलयविषयकतत्तत्संकल्पानामपि अपेक्षितत्वात् तेषामपि सौत्रेण यत इत्यनेन स्वरसतो विवक्षितत्वात् तेषां विशेषणत्वे भेदकत्वेन जननस्थापनध्वंसनव्यापारवन्ति त्रीणीति तात्पर्यम्। अत एव जननस्थापनध्वंसनानामित्यधिकरणसारावलिः।

एवं विशेषणत्वपक्षे निरतिशयबृहदेकं न सिद्ध्यतीत्युक्तम्। अथोपलक्षणत्वपक्षं दूषयति नापीति। ननूपलक्षणत्वपक्षेऽपि न पूर्वदोषोद्धारः। न हि धर्मिण्यसंबद्धस्योपलक्षणत्वम्। शाखायाश्चन्द्रोपलक्षणत्वं हि कादाचित्कऋजुप्रदेशवर्तित्वसंबन्धमादायैव; तथा जन्मादेरुपलक्षणत्वेऽपि हेतुहेतुमद्भावसंबन्धो ग्राह्य इत्युक्तं टीकायाम्। एवञ्च धर्मिसंबन्धे आवश्यके जन्मकारणत्व—तदन्यकारणत्वयोर्विरोधस्य प्रागुक्ततया त्रितयस्यैकनिष्ठत्वाभावात् त्रितयोपलक्ष्यधर्मत्रयाश्रयतया धर्मित्रयमापतत्येवेति चेत्—अस्तु कामम्; आकारान्तराप्रतिपत्तिरधिको दोष इहेति। अथवा यत् सर्वकालवर्ति, तद् विशेषणम्, यत् किञ्चित्कालवर्ति, तत् उपलक्षणम्। विशेषणत्वपक्षे च मिथोविरोधात् व्यावर्त-

कारेण प्रतिपन्नस्य केनचिदाकारान्तरेण प्रतिपत्तिहेतुत्वं हि दृष्टम्, 'यत्रायं सारसः, स देवदत्तकेदारः' इत्यादिषु ॥

ननु च, (तै. आ. 1.) 'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रतिपन्नाकारस्य जगज्जन्मादीनि उपलक्षणानि भवन्ति। न; इतरेतरप्रतिपन्नाकारापेक्षत्वेन उभयोर्लक्षणवाक्ययोरन्योन्याश्रयणात्।

अतो न लक्षणतो ब्रह्म प्रतिपत्तुं शक्यत इति ॥

एवं प्राप्तेऽभिधीयते—जगत्सृष्टिस्थितिप्रलयैरुपलक्षणभूतैर्ब्रह्म प्रतिपत्तुं शक्यते। न च

---

कत्वम्। उपलक्षणत्वे तु तत्तदत्यन्तायोगव्यवच्छेदमात्रस्य धर्मिणि स्वीकारात् कालभेदेनाविरोधात् त्रयेणाप्युपलक्ष्यमेकमित्याशयः। तथा च विशेषणानां सर्वेषामेव मिथो भेदकत्वं यथा, तथा विशेष्येण सह सर्वकालवर्तिनामेव विशेषणत्वं भेदकत्वञ्चाभिमन्यमान एवात्र पूर्वपक्षी। स तत्तज्जन्मकारणत्वादेः सार्वकालिकत्वासंभवं जानन्नपि दूषकशैलीमनुसृत्य स्वाभिमतरक्षणाय सर्वप्रकारेण विकल्प्य दूषयति। तेन सत्यत्वादिलक्षणान्तरं सर्वकालवर्त्यपि दूषितं स्यादिति मन्यते। जन्मादेरीदृशविशेषणत्वायोगपरिशीलनयैवोपलक्षणत्वपक्षस्य पश्चात् परिशेषणेन दूषणं पूर्वपक्षे। तस्यैव ग्राह्यत्वादेव प्रथमं तदादरणं सिद्धान्ते इत्यलम्। दृष्टमिति। ननु क्वचिद् दृष्टमिति सर्वत्र तदपेक्षा कुतः? गोसदृशो गवय इत्यत्र गोसादृश्यमुपलक्षणमिति सर्वसंमतम्। न च ग्रामीणस्य तत्र पूर्वप्रतिपन्नाकारः कश्चिदस्ति इति चेन्न—तस्यावश्यकत्वात्। उपलक्षणत्वं हि ज्ञाप्यबहिर्भूतत्वम्। एवञ्चास्य ज्ञाप्यार्थं प्रति उद्देश्यतावच्छेदकत्वाभावात्, अयं देवदत्तीयः, अयमसौ गवयपदवाच्य इति ज्ञाप्याकारः यद्धर्मावच्छिन्नोद्देशेन विधेयः, स कश्चिदपेक्षित इति। न च पूर्वप्रतिपन्नत्वं नाम उपलक्षणज्ञानात् पूर्वप्रतिपन्नत्वमिति नियमः; ज्ञाप्याकारविधानाय तत्पूर्वप्रतिपत्तेरेवापेक्षितत्वात्। ग्रामीणस्य गोसादृश्यं श्रुतवतोऽरण्ये तद्ग्रहणकाले प्रतिपन्ना गवयत्वजातिरेव, अयमसाविति उद्देश्यतावच्छेदकीभवति। वक्ष्यति च कारणत्वरूपोपलक्षणज्ञानानन्तरज्ञात-तदाक्षिप्त सर्वज्ञत्वादिधर्माणामपि पूर्वप्रतिपन्नाकारत्वं भाष्य एव; टीकायाञ्च शब्दोत्थापितबुभुत्सामूलकप्रत्यक्षविषयवक्त्वादेश्चन्द्रे पूर्वप्रतिपन्नाकारत्वम्। अयं प्रतिपन्नाकारोऽप्यसाधारण एव ग्राह्यः, साधारणस्यातिप्रसक्ततयोद्देश्यतावच्छेदकत्वायोगात्। सारस उपलक्षणम्। देवदत्तीयत्वमुपलक्ष्यम्। प्रतिपन्नाकारश्च सारससंबन्धग्रहणादिकाले चक्षुर्गोचरः तत्केदारगतायामविस्तारविशेषादिरसाधारण एव भाव्यः। अत एव सत्यंज्ञानमिति पूर्वप्रतिपन्नाकार इत्युक्तौ तस्याप्यसाधारणतया लक्षणत्वार्हत्वात् विशेषणोपलक्षणत्वविकल्पो दुस्त्यज इति वक्ष्यति। विशेषणत्वे तेन साक्षादेव व्यावृत्तिप्रतीतिः; उपलक्षणत्वे तु ततो विशेषणस्थानापन्नेन पूर्वप्रतिपन्नाकारेण व्यावृत्तिप्रतीतिरिति विशेषः। सर्वथा लक्षणस्य व्यावर्तकत्वं संभवत्येव।

**जगत्सृष्टी**ति। वरुणोपदिष्टेन भृगुणा पश्चाद् विमृश्य, आनन्दो ब्रह्मेति निर्धारणात् आनन्दत्वं पूर्वप्रतिपन्नाकारः। तच्चानन्दमयत्वम्। आनन्दवल्ल्याम्, 'सोकामयत बहु स्या'मिति आनन्दमये कारण-

उपलक्षणोपलक्ष्याकारव्यतिरिक्ताकारान्तराप्रतिपत्तेर्ब्रह्माप्रतिपत्तिः । उपलक्ष्यं ह्यनवधिकातिशयबृहत्, बृंहणं च; बृहतेर्धातोः तदर्थत्वात् । तदुपलक्षणभूताश्च जगज्जन्मस्थितिलयाः । 'यतो, येन, यत्' इति प्रसिद्धवन्निर्देशेन यथाप्रसिद्धि जन्मादिकारणमनूद्यते । प्रसिद्धिश्च, (छा. 6. 2. 1.) "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्—तदैक्षत बहु स्यां प्रजायेयेति, तत् तेजोऽसृजत" इति एकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन । तदपि 'सदेवेदमग्रे एकमेवासीत्' इत्युपादानतां प्रतिपाद्य, 'अद्वितीयम्' इत्यधिष्ठात्रन्तरं प्रतिषिध्य, 'तदैक्षत बहु, स्यां प्रजायेयेति तत्तेजोऽसृजत' इति एकस्यैव प्रतिपादनात् । तस्मात् यन्मूलाः जगज्जन्मस्थितिलयाः तद् ब्रह्मेति जन्मस्थितिलयाः स्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति । जगन्निमित्तोपादानताऽऽक्षिप्तसर्वज्ञत्वसत्यसङ्कल्पत्वविचित्रशक्तित्वाद्याकारबृहत्त्वेन प्रतिपन्नं ब्रह्मेति च जन्मादीनां तथाप्रतिपन्नस्य लक्षणत्वेन नाकारान्तराप्रतिपत्तिरूपानुपपत्तिः ॥

जगज्जन्मादीनां विशेषणतया लक्षणत्वेऽपि न कश्चित् दोषः । लक्षणभूतान्यपि विशेषणानि स्वविरोधिव्यावृत्तं वस्तु लक्षयन्ति । अज्ञातस्वरूपे वस्तुन्येकस्मिन् लिलक्षयिषितेऽपि परस्पराविरोध्यनेकविशेषणलक्षणत्वं न भेदमापादयति । विशेषणानामेकाश्रयतया प्रतीते-

---

त्वावगमात् । विशेषणतयालक्षणत्वेपीत्यादिवचनशैल्याऽप्येतदवगम्यते । जगत्कारणत्वमुपलक्षणमिति श्रुतिस्वारस्यादवगमादेव तथैवानन्दाद्यधिकरणे भाषिष्यते । अतः उपलक्षणपक्षमेव प्रथमतो गृहीत्वा समाधत्ते इति ध्येयम् । **आकारान्तरेति**—असाधारणाकारेत्यर्थः । **बृहतेरिति**, 'बृहति बृंहयती'त्यथर्वशिरोनिरुक्तवचनगतपदानुकरणम्; बृहतिशब्दघटकत्वाभिमतधातोरित्यर्थः । **जन्मादिकारण**मिति । यतो येन यदिति जन्मादिक्रियाकारकतया निर्देशात् कारणत्वलाभः । तत्कारणत्वमविशेषात् पुरोवादिवाक्यानुसाराच्च निमित्तत्वमपि । अतो बृहत्त्वातिशयविशेषसिद्धिः । **आकारबृहत्त्वेने**ति । केवलबृहत्त्वस्यातिप्रसक्तत्वात् प्रतिपन्नाकारत्वं न युक्तमिति प्रसिद्धव्यावृत्त सर्वज्ञत्वादिकथनम् । सर्वज्ञत्वादेर्बृहत्त्वरूपत्वकथनञ्च ब्रह्मशब्दार्थघटकनिरतिशयत्वं तत्सर्वांशे इति ज्ञप्तये । एवंरीत्या पुरोवादिकारणवाक्यावधृतनारायणत्व-पुरुषत्व-श्रीपतित्व-निरतिशयानन्दत्वादीनामपि प्रतिपन्नाकारत्वं बोध्यम् । नारायणत्वादिविशेषणभूतधर्मपुरस्कारेणैव बोधनं विहायैवमुपलक्षणधर्ममुखेन बोधनं कुत इति चेत्—तथाबोधने ब्रह्मशब्दस्तत्र रूढ इत्येव मन्येत । इदानीं तु सर्वनिरूपितसर्वप्रकारकारणत्वावगमात् निरतिशयबृहत्त्वरूपयोगार्थसद्भावो गृह्येतेति । अत एव श्रूयते, "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" इति । अत्र **पर**मिति सर्वप्रकारपरत्वरूपोत्कर्षः प्रवृत्तिनिमित्तमिति ज्ञाप्यते ।

विशेषणत्वपक्षमपि निर्वहति **जगज्जन्मादीना**मिति । विशेषणं विशेषणान्तरविशिष्टाद् व्यावर्तकमिति नियमो नेष्यते; किं तु विशेषणं स्वविरोधिधर्मविशिष्टाद् व्यावर्तकमित्येव; तथैव दर्शनात् । अन्यथा देवदत्तश्यामत्वयुवत्वादौ विशेषणत्वाभावप्रसंगात् ॥ असति बाधे तथेति नियम इति चेत्—

रेकस्मिन्नेवोपसंहारात्। खण्डत्वादयस्तु विरोधादेव गोव्यक्तिभेदमापादयन्ति। अत्र तु कालभेदेन जन्मादीनां न विरोधः॥

'यतो वा इमानि भूतानि जायन्ते' इत्यादिकारणवाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्तं स्वरूपमभिधीयते—'सत्यं ज्ञानमनन्तं ब्रह्म' इति। तत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माऽऽह। तेन विकारास्पदमचेतनम्,

---

सति बाधे विशेषणत्वं कीदृशमिति प्रश्ने प्रकारान्तरस्यानुसर्तव्यत्वादिति भावः। व्यावर्तकलक्षणत्वमेकदेशस्यापि भवेत्। अथापि समुदितमपि निरतिशयबृहत्त्वेन ब्रह्मशब्दव्यवहार्यतायै लक्षणं भवेत्; व्यवहारस्यापि लक्षणप्रयोजनत्वात्। तेनान्यस्य कारणत्वशंकाव्युदासः। न च जननस्थापनध्वंसनानां विरोधिता; कालभेदेन समावेशादित्याह अत्रत्विति। कालभेदेनेति। नन्वेवं विशेषणत्वमेव न सिद्ध्यति; सर्वकालसत्त्व एव हि विशेषणत्वमिति चेत्—न; तत्तद्वस्तुजन्मस्थितिलयकारणत्वानां यौगपद्यायोगेन सार्वकालिकत्ववर्णनायोगात्। अतो धर्मिणा सह नियमेन प्रतीयमानत्वं विशेषणत्वम्, कदाचित्प्रतीतत्वमुपलक्षणत्वमित्येव वक्तव्यमित्याशयात्। अत एव गवये गोसादृश्यस्य गवयत्वस्य च सर्वकालवर्तित्वेऽपि गवयत्वमेव विशेषणम्, गोसादृश्यं तूपलक्षणमितीष्यते। विशेषणत्वोपलक्षणत्वनिरूपणवैविध्यं व्युत्पत्तिवादादौ द्रष्टव्यम्। अथात्रोपलक्षणत्वं ज्ञाप्यबहिर्भूतत्वम्, विशेषणत्वं नियमेन ज्ञाप्येन सह प्रतीयमानत्वम्। जन्मादिकारणत्वे मिथोविरुद्धमिदमुभयं कथमिति चेत्—उच्यते। यादृशकार्यार्थं यद्विषयकज्ञानमपेक्षितम्, तादृशकार्ये तद्वस्तुप्रयोजनकाले तद्वस्तु उक्ताकारविशिष्टतयैव प्रतीयते यदि, तत्र स विशेषणम्; अन्यथोपलक्षणम्। जगत्कारणत्वेन ब्रह्मज्ञानञ्चोपासनार्थम्। कारणत्वं क्वचिद्विद्यायामुपास्याकारः; क्वचिन्न। अतः कारणत्वविशिष्टवस्तूपासनरूपविद्याधिकृतस्य तद् विशेषणम्; अन्यविद्याधिकृतस्य तदुपलक्षणम्। पुरुषभेदेनैव लोकेपि विशेषणत्वोपलक्षणत्वयोर्वक्तव्यत्वात्। तर्हि, 'कारणं तु ध्येय' इति कथमिति चेत्—कारणत्वमुखेनैव ब्रह्म पूर्वं ज्ञातव्यम्, तदेव ब्रह्मशब्दार्थनिरतिशयबृहत्त्वावधारणात्। न केवलमेतावत्; सत्यत्वज्ञानत्वादिस्वरूपनिरूपकधर्मविशिष्टतया ब्रह्मज्ञानं तावन्नियतम्। सत्यादिवाक्यञ्च शोधकवाक्यम्। कारणवाक्येन कारणत्वेऽवधृते तेन अग्नीन्द्रविधिरुद्र-प्रकृत्याकाशादिचेतनाचेतनव्यावृत्तत्वे सिद्धेऽपि लोके किञ्चिद्विषये कारणभूतानां चेतनाचेतनानां सविकारत्वदर्शनेन तत्साजात्यशंकायाम्, चिदचिद्वैजात्यरूपवैलक्षण्यान्तरज्ञापकत्वमेव शोधकत्वम्। तदर्थञ्च पूर्वं कारणत्वावधारणमावश्यकमिति, कारणं तु ध्येय इत्युक्तम्।

तदिदमभिसंधायाह यतोवा इति। यद्यपि न कारणवाक्यानन्तरं सत्यंज्ञानमिति वाक्यं पठ्यते—अथापि सत्यं ज्ञानमित्यादेर्द्वितीयान्तत्वात् ब्रह्मलक्षणवाक्यत्वाभावात् प्रकारान्तरेण ज्ञातस्य ब्रह्मणो विशेषणकथनपरत्वं ज्ञायते। ब्रह्मेदमिति ज्ञानञ्च यतोवा इत्यादिवाक्यादेव भवितुमर्हति। तत एवाग्नीन्द्रादिसर्वभिन्नत्वे ज्ञाते पुनर्विशेषणवर्णनं किमर्थमिति जिज्ञासायामेवमुक्तमिति ध्येयम्।

तत्संसृष्टश्चेतनश्च व्यावृत्तः ; नामान्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात् । ज्ञानपदं नित्यासङ्कुचितज्ञानैकाकारमाह । तेन कदाचित् सङ्कुचितज्ञानत्वेन मुक्ताः व्यावृत्ताः । अनन्तपदं देशकालवस्तुपरिच्छेदरहितं स्वरूपमाह । सगुणत्वात् स्वरूपस्य, स्वरूपेण गुणैश्चानन्त्यम् । तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणाः नित्याः व्यावृत्ताः ; विशेषणानां व्यावर्तकत्वात् । ततः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन वाक्येन जगज्जन्मादिनाऽवगतस्वरूपं ब्रह्म(वस्तु)सकलेतरवस्तुविसजातीयमिति लक्ष्यत इति नान्योन्याश्रयणम् । अतः सकलजगज्जन्मादिकारणं निरवद्यं सर्वज्ञं सत्यसङ्कल्पं सर्वशक्ति ब्रह्म लक्षणतः प्रतिपत्तुं शक्यत इति सिद्धम् ॥

ये तु निर्विशेषवस्तु जिज्ञास्यमिति वदन्ति, तन्मते "ब्रह्मजिज्ञासा जन्माद्यस्य यतः" इत्यसङ्गतं स्यात् ; निरतिशयबृहत् बृंहणं च ब्रह्मेति निर्वचनात् ; तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च । एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु च ईक्षणाद्यन्वयदर्शनात् सूत्राणि सूत्रोदाहृतश्रुतयश्च न तत्र प्रमाणम् । तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वान्न निर्विशेषवस्तुनि प्रमाणम् । जगज्जन्मादिभ्रमो(माः)यतः, तद् ब्रह्मेति स्वोत्प्रेक्षापक्षेऽपि न निर्विशेषवस्तुसिद्धिः ; 'भ्रममूलमज्ञानम्, अज्ञानसाक्षि ब्रह्म' इत्यभ्युपगमात् । साक्षित्वं हि प्रकाशैकरसतयैवोच्यते । प्रकाशत्वं तु जडाद्व्यावर्तकं स्वस्य परस्य च व्यवहारयोग्यतापादनस्वभावेन भवति । तथा सति सविशेषत्वम् । तदभावे

---

अद्वैतिसंमतमनृतजडपरिच्छिन्नव्यावृत्तरूपमर्थं निरसितुमप्येतत् । पदावैयर्थ्याय बुद्ध्यारोहक्रमेण व्यावृत्तिक्रमवर्णनम् । **अचेतन**मित्यत्र **व्यावृत्त** इत्यस्य विपरिणम्यापकर्षः । **ज्ञान**पदं स्वयम्प्रकाशार्थकं परसंमतम् । तस्यास्मत्पक्षाविरोधेऽपि अत्र ज्ञानपदस्यान्तोदात्तत्वात् अर्शआद्यजन्तत्वेन ज्ञानगुणकस्वरूपार्थमाह **ज्ञानपद**मिति । **परिच्छेदरहितं स्वरूप**मिति । सर्वदेशसंबन्धित्वं सर्वकालसंबन्धित्वं सर्ववस्तुसामानाधिकरण्यार्हत्वञ्चानन्त्यम् । सत्यत्वादीनामेषां भावरूपेण ग्रहणम्, अक्षरध्यधिकरण विवक्षितस्यामलत्वरूपधर्मस्य हेयविरोधित्वरूपेणेति विवेकः । **स्वरूपं** धर्मविशिष्टधर्मि । तत्र यथार्हं धर्मेऽपि राहित्यविवक्षेत्याशयेनाह **सगुणत्वा**दिति । आनन्त्यमारम्भणाधिकरणे विचार्यते । **सातिशयेति** ; परमात्माधीनस्वरूपातिशयविशिष्टेत्यर्थः । नित्यसूरिस्वरूपगुणापेक्षया अतिशयः अनन्याधीनस्वरूपः परमात्मस्वरूपगुणेष्वस्तीति वा एषां सातिशयत्वम् ।

सूत्राणां न्यायनिबन्धनरूपत्वात् सूत्राभिमततर्काणामप्यद्वैतासाधकत्वमाह **तर्कश्चेति**। **प्रकाशत्वम्** प्रकाशपदवाच्यत्वम् । **स्वस्य परस्य चेति** । अस्मन्मते आत्मनः स्वव्यवहारयोग्यतापादनमेव स्वभावः, धर्मभूतज्ञानस्य तूभयविषये । परमते ज्ञानान्तरानङ्गीकारात् सर्वमात्मन एव वाच्यम् । नन्वेवं सविशेषत्वमज्ञानसद्भावपर्यन्तं मिथ्याभूतमस्तु ; न पश्चात् । न च परमार्थत इत्यत्राह—**तदभावे** इति । मानान्तरगम्यत्वेन, स्वयंप्रकाशत्वेन वा तुच्छत्वं परिहार्यम् । तदुभयमपि मुक्तौ नेष्टम् । बन्धेऽपि

**प्रकाशतैव न स्यात् । तुच्छतैव स्यात्** ॥ इति जन्माद्यधिकरणम् ॥ २ ॥

अथ शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

**जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम् । तदयुक्तम् । तद्धि न वाक्यप्रतिपाद्यम्, अनुमानेन सिद्धेरित्याशङ्क्याह—**

**3. शास्त्रयोनित्वात् ॥ १ १ । ३ ॥**

शास्त्रं यस्य योनिः कारणं प्रमाणम्, तत् शास्त्रयोनि ; तस्य भावः शास्त्रयोनित्वम् ।

---

तन्मिथ्या। एकत्वानुकूलत्वोभयविशिष्टतया संसृतौ स्वतः प्रकाशितस्य चात्मनः मुक्तौ तद्वारकं किमस्ति। प्रकाशस्यान्याधीनत्वे स्वतस्त्वहानिः। संसृतौ परिच्छिन्नानन्दतया स्थितस्यापरिच्छिन्नस्वरूपानन्दाविर्भावो मुक्ताविति वेदान्तिमतहानिश्च । तथा जगत्कारणत्वेन, आनन्दो ब्रह्मेति आनन्दस्वरूपोपलक्षणं श्रुतिकृतमपि त्यक्तं भवति । अतः स्वस्य स्वानुकूल्यस्य च नित्यप्रकाश एष्टव्यः। न चेत्, अभाववैलक्षण्यमपि न स्यात् । कदाचित् धर्माश्रयतया प्रतीतत्वमात्रेण मिथ्याभूतेन तुच्छत्वपरिहारे जगद्वत् अपारमार्थिकत्वेऽपि तत्परिहारसंभवादधिष्ठानमपि मिथ्यैव भवतु। मिथ्याभूतस्य कथं स्वयं प्रकाश इति चेत्—स्वतस्सिद्धस्य प्रकाशस्य कथं हानिरेति च तुल्यम्। अन्यविधं सर्वं वैलक्षण्यमिवेदमप्येकं मिथ्याभूत एवास्तु । श्रुतिस्तु उपलक्ष्याकारेणापि शून्यं ज्ञानत्वानन्दत्वादिरहितमेव मुक्तावस्तीति न कुत्रापि बोधयतीति । **तुच्छतैव स्यादिति** । जडव्यावृत्तेरसकृदुक्तेः प्रकाशत्वाभावस्य च संप्रतीष्टेः जडप्रकाशोभयविलक्षणस्य सतोऽसंभवेन तुच्छतैव । पूर्वं प्रकाशमात्ररूपस्याज्ञानतिरोहितत्वे प्रकाशनाशात् तुच्छत्वमापादितम् । प्रकारान्तरेण पीदानीमापाद्यत इति च **एव**काराशयः ॥ २ ॥

॥ **शास्त्रयोनित्वाधिकरणम्** ॥

चतुरधिकरण्यां पूर्वाधिकरणद्वयमेका पेटिका । तत्र वेदान्तानां सिद्धब्रह्मविषयकव्यावृत्तबुद्धिजनकत्वमस्तीत्युक्तम्। उत्तरद्वयेन पेटिकान्तरेण ब्रह्मणि तेषां तात्पर्याभावशंका परिह्रियते । तत्र ब्रह्मणः प्रमाणान्तरगोचरत्वात् प्राप्तेऽर्थे शास्त्रतात्पर्यं न युक्तम् ; न च निश्चितमर्थं कश्चिद्विचारयेत् । तथा च शास्त्रस्य ब्रह्मविषये अज्ञातज्ञापकत्वरूपप्रामाण्यायोगात् व्यर्थत्वाच्च शास्त्रतो ब्रह्मविचारो नारम्भणीय इति पूर्वपक्षः । न च पूर्वाधिकरणे निमित्तोपादानोभयरूपत्वस्य ब्रह्मणि कथनात् तत्र निमित्तत्वांशस्यानुमानसिद्धत्वेऽपि अन्यांशे तात्पर्यस्यावश्यकत्वमिति वाच्यम्—निमित्तोपादानयोर्भेदस्यैव लोके दर्शनेन ब्रह्मणोऽनुमानेनोपादानादिवस्त्वन्तरविषयकज्ञानचिकीर्षादिमत्त्वेनैवानुमिततया उपादानत्वस्य धर्मिग्राहकमानबाधितत्वेन तत्र शास्त्रतात्पर्यायोगात् । तथा च क्वचिदंशे सिद्धतया तात्पर्याभावः, क्वचिच्च बाधिततयेति न शास्त्रप्रमाणकं ब्रह्मेति । अत्राक्षेपसंगतिं दर्शयति **जगदिति** । **न वाक्यप्रतिपाद्यम्**—न शास्त्रजन्याज्ञातज्ञानविषयः ; शास्त्रतात्पर्याविषय इति वा । शास्त्रं योनिर्यस्येति प्रयोगे यस्य शास्त्रमित्यन्वयशङ्का स्यात् , योनिरित्यत्रानन्वयात्, ब्रह्मणः किञ्चित्कार्यत्वादिति **यस्य योनिरि**ति भाषितम्। **प्रमाण**मित्यत्र **प्रमा** अज्ञातज्ञानम् । अत्यन्तातीन्द्रि-

तस्मात् ब्रह्मज्ञानकारणत्वात् शास्त्रस्य, तद्योनित्वं ब्रह्मणः। अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणः शास्त्रैकप्रमाणकत्वात् उक्तस्वरूपं ब्रह्म, 'यतो वा इमानि भूतानि' इत्यादिवाक्यं बोधयत्येवेत्यर्थः॥

( पूर्वः पक्षः )

ननु—शास्त्रयोनित्वं ब्रह्मणो न संभवति, प्रमाणान्तरवेद्यत्वाद् ब्रह्मणः। अप्राप्ते तु शास्त्रमर्थवत्॥

किं तर्हि तत्र प्रमाणम्। न तावत् प्रत्यक्षम्। तद्धि द्विविधम्, इन्द्रियसंभवं योगसंभवं चेति। इन्द्रिसंभवश्च बाह्यसंभवम् आन्तरसंभवश्चेति द्विधा। बाह्येन्द्रियाणि विद्यमानसन्निकर्ष-योग्य-स्वविषयबोधजननानीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषविषयबोधजननानि। नाप्यान्तरम्; आन्तरसुखदुःखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः। नापि योगजन्यम्; भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वान्न प्रामाण्यमिति कुतः प्रत्यक्षता; तद्-

---

यत्वम्, स्वयमतीन्द्रियत्वे सति ऐन्द्रियकस्वानुमापकराहित्यम्। प्रमाणाविषयतयेत्यस्य प्रमाणाविषयत्वरूपेत्यर्थः; एकप्रमाणकत्वादित्यत्रान्वयः। अतो बोधयत्येवेत्यंशे प्रमाणाविषयत्वस्यैव हेतुत्वात् न हेतुसाध्यैक्यम्।

अधिकरणपूर्वपक्षं तार्किकस्यारभते नन्विति। ईश्वरसिद्धिग्रन्थानुरोधीदं भाष्यम्। तत्रोपरितनभागो लुप्तः। आगमप्रामाण्यमत्रोपजीव्यम्। आगमिकेश्वरवादी तार्किकपूर्वपक्षमाक्षिपति किंतर्हीत्यादिना, आगमादृते कथमीश्वरः सेत्स्यतीत्यन्तेन। आगमातिरिक्तं प्रमाणं प्रत्यक्षमनुमानञ्चेति द्वयमेव। तदुभयं निषेधति क्रमेण। आन्तरेति; अन्तर्वर्तीन्द्रियेत्यर्थः। विद्यमानेति। विद्यमानः इन्द्रियसंनिकर्षो येषाम्, ते योग्याः गुरुत्वपिशाचादिविलक्षणाः स्वविषयाः, तद्बोधेत्यर्थः। संनिकर्षस्य विद्यमानत्वकथनादेव विषयवर्तमानत्वं सिद्धम्। असंनिकृष्टं न ग्राह्यम्; तथारूपस्य चक्षुर्विषयत्वेऽपि पिशाचादिरूपमयोग्यत्वान्न ग्राह्यम्; रस इन्द्रिययोग्योऽपि चक्षुरविषयत्वादग्राह्यः इत्याशयेन एतावदुक्तम्। आन्तरसुखदुःखादिव्यतिरिक्तेति। स्वात्मतत्संबन्धिधर्मव्यतिरिक्तेत्यर्थः। इदमेव व्यतिरिक्तत्वं विषयेषु बहिष्ट्वम्। बहिरिन्द्रियेण प्रथमतो गृहीतस्य घटादेर्मानसविषयत्वस्य पश्चादिष्टतया बहिरिन्द्रियानपेक्षेति। योगजप्रत्यक्षं किं भाव्यमानवस्तुविषयकम् अन्यविषयकं वा। आद्ये स्मरणरूपतया प्रमाणत्वस्यैवाभावात् प्रत्यक्षत्वं सुतरां न भवतीत्याह भावनेति। पर्यन्तजन्मनः—पर्यन्तः काष्ठा, अतिशयः; ततो जातस्य। न प्रामाण्यमिति। न च स्मृतेरपि यथार्थत्वरूपं प्रमात्वमस्तीति वाच्यम्—अज्ञातार्थज्ञानत्वरूपप्रमात्वं शास्त्रजन्यज्ञाननिष्ठं न वेत्येवेदानीं विचार्यमाणत्वात्। स्मृतियाथार्थ्यस्य तत्करणभूतानुभवयाथार्थ्याधीनतया सोऽनुभवः किंजन्य इत्येव प्रश्नात्। अनुमानजानुभवमूला योगजस्मृतिरिति चेत्—तदनुमानमुपरि विचार्यत

तिरिक्तविषयत्वे कारणाभावात् । तथा सति तस्य भ्रमरूपता । नाप्यनुमानं विशेषतो दृष्टं सामान्यतोदृष्टं वा । अतीन्द्रिये वस्तुनि संबन्धावधारणविरहात् न विशेषतोदृष्टम् । समस्तवस्तुसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतोदृष्टमपि न लिङ्गमुपलभ्यते ॥

ननु च—जगतः कार्यत्वं तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञकर्तृकत्वव्याप्तम् । अचेतनारब्धत्वं जगतश्चैकचेतनाधीनत्वेन व्याप्तम् । सर्वं हि घटादिकार्यं तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञकर्तृकं दृष्टम् । अचेतनारब्धमरोगं स्वशरीरमेकचेतनाधीनं च । सावयवत्वेन जगतः कार्यत्वम् (मिति) ॥

---

एव । योगजमिदं भाव्यमानातिरिक्तविषयकमस्तु इत्यत्राह तदतिरिक्तेति । कारणाभावात्-अन्यविषयचित्तवृत्तिनिरोधात ; इन्द्रियरूपप्रमाणान्तरमनपेक्ष्य योगबलस्यान्यविषयकप्रमित्यनुत्पादकत्वाच्च । तथासति—प्रमाणरूपसहायाभावेपि अन्यविषयकत्वे । भ्रमरूपता । दोषस्यैव कारणत्वादिति भावः । न च योगिनां न भ्रम इति नियमः ; कपिलकणादादीनां मिथोविरुद्धार्थज्ञानस्य प्रसिद्धत्वाद् भ्रमत्वस्यावर्जनीयत्वादिति भावः ।

विशेषतोदृष्टम्—साध्यतावच्छेदकत्वाभिमतधर्मावच्छिन्ननिरूपितव्याप्तिकतया ज्ञातं लिङ्गम् । सामान्यतोदृष्टम् साध्यतावच्छेदकत्वाभिमतधर्मव्यापकधर्मावच्छिन्ननिरूपितव्याप्तिकतया ज्ञातं लिङ्गम् । अनुमानपदस्यात्रानुमितिपरत्वे तादृशतादृशलिङ्गजन्यानुमितिरित्यर्थः । पर्वतोऽग्निमान् धूमादिति विशेषतोदृष्टम् । अग्नित्वस्यैव साध्यतावछेदकत्वात् व्यापकतावच्छेदकत्वाच्च । अनुष्णाशीतस्पर्शोऽयं द्रव्याश्रितः गुणत्वादिति वाय्वनुमानं सामान्यतोदृष्टम् । वायुत्वरूपाभिमतधर्मव्यापकद्रव्यत्वरूपधर्मपुरस्कारेणैव गुणत्वे व्याप्तिग्रहात् । अन्यद्रव्यविलक्षणवायुसिद्धिस्तु परिशेषात् । संबन्धेति । ईश्वरादेरतीन्द्रियत्वात् तन्निरूपितव्याप्तिरूपसंबन्धः कुत्रापि हेतौ न सुग्रह इति । क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वादिति कर्तृत्वेन सामान्यतोव्याप्तिग्रहे किञ्चित्कर्तृसिद्धावपि सर्वेश्वररूपविशेषपर्यवसानं न भवतीत्याह—समस्तेति ।

पूर्वपक्षी आगमिकेश्वरवादिनं प्रति विशेषपर्यवसायि लिङ्गमुपलभ्यत एवेति पृच्छति ननुचेति । जगत् उपादानाद्यभिज्ञकर्तृकं कार्यत्वादिति प्रथमानुमानम् । एवमनुमितस्य कर्तुरत्रैकत्वसिद्ध्यभावादनुमानान्तरम् , जगत् एकचेतनाधीनं अचेतनारब्धत्वादिति । अत्र हेत्वोरसिद्धिपरिहारकमनुमानम्—जगत् कार्यं (आरब्धं) सावयवत्वादिति । प्रथमानुमाने घटादिर्दृष्टान्तः ; द्वितीये अरोगस्वशरीरं दृष्टान्तः । उपादानं परमाण्वादि ; उपकरणं धर्माधर्मादि ; संप्रदानं भोक्तृवर्गः ; प्रयोजनं भोगरूपोपकारः । तदभिज्ञः तत्साक्षात्कारी । अत्र मीमांसककृतं दूषणजातमुद्भाव्य पूर्वपक्षिप्रश्नं समाधत्ते उच्यते इति ।

प्रथमानुमानस्य पुनःसमर्थन-निरसनादिविस्तरसद्भावात् द्वितीयं सर्वथादुष्टत्वाच्चादौ दूषयति

उच्यते—किमिदमेकचेतनाधीनत्वम्? न तावत् तदायत्तोत्पत्तिस्थितित्वम्; दृष्टान्तो हि साध्यविकलस्स्यात्। न ह्यरोगं स्वशरीरमेकचेतनायत्तोत्पत्तिस्थिति; तच्छरीरस्य भोक्तॄणां भार्यादिसर्वचेतनानामदृष्टजन्यत्वात् तदुत्पत्तिस्थित्योः। किंच शरीरावयविनः स्वावयवसमवेततारूपा स्थितिरवयवसंश्लेषविशेषव्यतिरेकेण न चेतनमपेक्षते। प्राणनलक्षणा तु स्थितिः पक्षत्वाभिमते क्षितिजलधिमहीधरादौ न संभवतीति पक्षसपक्षानुगतामेकरूपां स्थितिं नोपलभामहे। तदायत्तप्रवृत्तित्वं तदधीनत्वमिति चेत्—अनेकचेतनसाध्येषु गुरुतररथशिलामहीरुहादिषु व्यभिचारः। चेतनमात्राधीनत्वे सिद्धसाध्यता।

किंच-उभयवादिसिद्धानां जीवानामेव लाघवेन कर्तृत्वाभ्युपगमो युक्तः। न च जीवानामुपादानाद्यनभिज्ञतया कर्तृत्वासंभवः; सर्वेषामेव चेतनानां पृथिव्याद्युपादानयागाद्युपकरणसाक्षात्कारसामर्थ्यात्; यथेदानीं पृथिव्यादयो यागादयश्च प्रत्यक्षमीक्ष्यन्ते। उपकरणभूतयागादिशक्तिरूपापूर्वादिशब्दवाच्यादृष्टसाक्षात्काराभावेऽपि चेतनानां न कर्तृत्वानुपपत्तिः; तत्साक्षात्कारानपेक्षणात् कार्यारम्भस्य। शक्तिमत्साक्षात्कार एव हि कार्यारम्भोपयोगी। शक्तेस्तु ज्ञानमात्रमेवोपयुज्यते; न साक्षात्कारः। न हि कुलालादयः कार्योपकरणभूतदण्डचक्रादिवत् तच्छक्तिमपि साक्षात्कृत्य घटमणिकादिकार्यमारभन्ते। इह तु चेतनानाम् आगमावगतयागादिशक्तिविशेषाणां कार्यारम्भो नानुपपन्नः।

---

**किमिदमिति**। अधीनत्वमुत्पत्तौ वा स्थितौ वा प्रवृत्तौ वा, स्थितिरप्याधेयता वा प्राणनं वा; सर्वथापि न भवतीति दूषयति **न तावदित्यादिना**। स्वशरीरस्य स्वसंकल्पाधीनोत्पत्तिकत्वाभावात् स्वगतादृष्टाधीनत्वमेव वाच्यम्—तत्रैकाधीनत्वाभावात् साध्यवैकल्यमित्याह **दृष्टान्तोहीति**। **स्थित्यो-रित्यत्र** स्थितिः कालदेशसंबन्धादिः। **प्राणनेति**। ननु सिद्धान्ते शरीरात्मभावस्थले सर्वत्र प्राणनं दुरुपपादम्। अथापि यावत्सत्तमेकाधीनतया एकं प्रति शरीरत्वमिष्यते। तद्दृष्टान्तेन जगत एकचेतनाधीनत्वानुमानं किं न स्यादिति चेन्न—हेतोरप्रयोजकत्वात्; घटादौ व्यभिचारात्; तावता शरीरात्मभावसिद्धावपि जगत्कारणतयेश्वरासिद्धेश्च।

अथ प्रथमानुमानस्येश्वररूपविशेषे पर्यवसानाभावमाह— **किञ्चेति**। सामान्यतः कर्त्रधीनत्वसाधने जीवानेवाऽऽदाय सिद्धसाधनेऽपि उपादानोपकरणेति पूर्वोक्तसाध्ये तदप्रसक्तिरिति शंकां परिहरति **न चेति**। अदृष्टविषयेऽपि साक्षात्कारस्य साध्ये प्रवेशे दृष्टान्ते साध्यवैकल्यमित्याशयेनाह **उपकरणभूतेति**। **यागादीत्यादिना** दण्डचक्रादिग्रहः। **अपूर्वादीत्या-दिना** कारणगतसहजशक्त्यादिग्रहः। सर्वस्यादृष्टशब्देन ग्रहणम्। वक्ष्यति हि **दण्डचक्रादिवत् तच्छक्तिमपीति**। नन्वसाक्षात्काररूपोपि शक्तिग्रहोऽत्र न भवति; दण्डादाविवान्वयव्यतिरेकादर्शनादित्यत्राह **इहत्विति**। **नानुपपन्न इति**। अतः सिद्धसाधनमिति भावः। ननु यद्यत् कार्यं तस्य तस्य स्वसाक्षादुपादानोपकरणादिसाक्षात्कारिकर्तृकत्वं साध्यते इत्याशंकायां कार्यत्वहेतोः सोपाधिक-

किञ्च यत् शक्यक्रियं शक्योपादानादिविज्ञानञ्च, तदेव तदभिज्ञकर्तृकं दृष्टम् । मही-महीधर महार्णवादि तु अशक्यक्रियमशक्योपादानादिविज्ञानं चेति न चेतनकर्तृकम् । अतो घटमणिकादिसजातीय-शक्यक्रियशक्योपादानादिविज्ञान-वस्तुगतमेव कार्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधने प्रभवति ।

किञ्च घटादिकार्यमनीश्वरेणाल्पज्ञानशक्तिना सशरीरेण परिग्रहवताऽनाप्तकामेन निर्मितं दृष्टमिति तथाविधमेव चेतनं कर्तारं साधयन् अयं कार्यत्वहेतुः सिषाधयिषित-पुरुषसार्वज्ञ्यसर्वैश्वर्यादिविपरीतसाधनात् विरुद्धस्स्यात् । न चैतावता सर्वानुमानोच्छेद-प्रसङ्गः । लिङ्गिनि प्रमाणान्तरगोचरे लिङ्गबलोपस्थापिताः विपरीतविशेषाः तत्प्रमाण-प्रतिहतगतयो निवर्तन्ते । इह तु सकलेतरप्रमाणाविषये लिङ्गिनि निखिलनिर्माणचतुरे, अन्वयव्यतिरेकावगताविनाभावनियमाः धर्माः सर्व एवाविशेषेण प्रसज्यन्ते ; निवर्तकप्रमाणाभावात् तथैवावतिष्ठन्ते ।

अत आगमात् ऋते कथमीश्वरः सेत्स्यति ॥

अत्राहुः—सावयवत्वादेव जगतः कार्यत्वं न प्रत्याख्यातुं शक्यते । भवन्ति च प्रयोगाः—विवादाध्यासितं भू-भूधरादि कार्यं सावयवत्वात् घटादिवत् ; तथा-विवा-

---

त्वमाह **किञ्चे**ति । शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वञ्चोपाधिः । **वस्तुगतमेव कार्यत्व**मिति । यथा धूमसाधने आर्द्रेन्धनप्रभववह्निरेव सद्धेतुः, न केवलवह्निः—तथा शक्यक्रियत्वविशिष्टमुत्पत्तिमत्त्वरूपं कार्यत्वमेव निरुक्तचेतनकर्तृकत्वव्याप्यम्, न तु केवलकार्यत्वम् । तथा चोपाध्यभावात् पक्षे साध्याभावसाधनम्, हेतौ उपाधिव्यभिचारेण साध्यव्यभिचारोन्नयनञ्चेति हेतुर्दुष्ट इति भावः । ननु तर्हि पर्वते साध्यमानोऽप्यग्निः महानसीयवत् फूत्कारजन्यत्वान्नपचनत्वपरिमितत्वाद्याकारविशिष्ट एव साधनीयः स्यात्, तथैव दृष्टत्वात् । तथाचार्थान्यथाभावादनुमानस्यैवासंभव इत्यत्राह **न चे**ति । **प्रमाणप्रतिहते**ति । फूत्कारजन्यत्वादीनां दीपादिष्वभावात् नानुगतत्वम् । परिमितत्वादीनां दावाग्नौ प्रत्यक्षादिना बाधात् त्याग इति भावः । **धर्माः** किञ्चिदनीश्वरत्व-कर्मवश्यत्व-किञ्चिज्ज्ञत्व-सशरीरत्वोपकरणसापेक्षत्वादयः ; तेषामुपलभ्यमानसर्वकर्त्रनुगतत्वात् ।

**आगमादृते** इति । अनेन आगमिकेश्वरवादिनः प्रश्नोऽयमिति ज्ञायते ।

एवं **किंतर्हितत्रे**त्यारभ्य कृते प्रश्ने पूर्वपक्षी तार्किकः प्रतिवदति **अत्राहु**रिति । ननु **सावयवत्वादेवे**त्यादिना कार्यत्वस्य किमिति स्थापनम् ; सिद्धान्तिना तस्याप्रत्याख्यातत्वात् । एवञ्च बहुहेतूपन्यासोऽपि व्यर्थ इति चेत्—सत्यम् । सिद्धान्तिना सेश्वरमीमांसकेन **पञ्चिकादि**-मीमांसाग्रन्थोक्तरीत्यैव तार्किकवादस्य खण्डितत्वात् मीमांसकैश्च प्रलयादिकमनिच्छद्भिः, 'न कदाचिदनीदृशं जगत्' इति वदद्भिः महीजलधिमुखानामुत्पत्तिविशेषस्यानभिमतत्वात् तद्विषये सिद्धान्तिनः मीमांसकानुसारित्वाभावदृढीकरणायैवमुपन्यासः । प्राभाकरा अपि नूनमीश्वरस्यानुमानिकतामेव निरा-

दाध्यासितमवनि-जलधि-महीधरादि कार्यं महत्त्वे सति क्रियावत्त्वात् घटवत् ( घटादिवत् ); तनुभुवनादि कार्यं महत्त्वे सति मूर्तत्वात् घटवत्—इति। सावयवेषु द्रव्येषु 'इदमेव क्रियते, नेतरत्' इति कार्यत्वस्य नियामकं सावयवत्वातिरेकि रूपान्तरं नोपलभामहे॥ कार्यत्वप्रतिनियतं शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं चोपलभ्यत इति चेत्—न; कार्यत्वेनानुमतेऽपि विषये ज्ञानशक्ती कार्यानुमेये इति, अन्यत्रापि सावयवत्वादिना कार्यत्वं ज्ञातमिति ते च प्रतिपन्ने एवेति न कश्चिद्विशेषः। तथा हि घटमणिकादिषु कृतेषु कार्यदर्शनानुमित-कर्तृगततन्निर्माणशक्तिज्ञानः पुरुषोऽदृष्टपूर्वं विचित्रसन्निवेशं नरेन्द्रभवनमालोक्य अवयवसंनिवेशविशेषेण तस्य कार्यत्वं निश्चित्य, तदानीमेव कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोति। अतः तनुभुवनादेः कार्यत्वे सिद्धे सर्वसाक्षात्कारतन्निर्माणादि-

---

कुर्वन्ति; **नयविवेक-प्रभाकरविजयादौ** वेदान्ततस्तदिष्टेः। **कार्यत्वमुत्पत्तिमत्त्वं** कृतिसाध्यत्वं वा। तत्र यद्यपि—पूर्वमुत्पत्तिमत्त्वरूपकार्यत्व एव सोपधिकतायाः दर्शितत्वात् **पञ्चिका-न्यायग्रन्थ-आगमप्रामाण्यादि**ष्विव चात्रापि कार्यत्वमुत्पत्तिमत्त्वम्। सावयवत्वस्य तत्साधकत्वौचित्याच्च। सावयवत्वेनोत्पत्तिमत्त्वसाधनम्, तेन कृतिसाध्यत्वानुमानमिति-–तथाप्यत्र, '**तनुभुवनादिपक्षकानुमाने** तन्वा उत्पत्तिमत्त्वस्य निर्विवादतया साधनायोगात् कार्यत्वं कृतिसाध्यत्वं साध्यमित्युचितम्; उपरि **क्रियत** इति प्रयोगाच्चे'ति **टीका**। पूर्वस्मिन् पक्षे सावयवत्वादेवेत्येवकारेण तस्य हेतोः सिद्धान्त्यदूषितत्वं ज्ञाप्यते। असति आगमेन बाधे सावयवत्वं सद्धेतुरित्याशयः सिद्धान्तिनः। द्वितीयपक्षे च एवकारः उत्पत्तिमत्त्वमद्वारीकृत्य साक्षादेवेत्यर्थे। सावयवत्वेनैव साक्षात् कृतिसाध्यत्वरूपकार्यत्वानुमानं **न्यायरत्नाकरे**। **कार्यत्वप्रतिनियत**मिति भाष्यमप्येतदनुकूलम्। कार्यत्वप्रतिनियतम्=कार्यत्वसमनियतम्। न चोत्पत्तिमत्त्वसमनियतं शक्यक्रियत्वादि; तनुबीजाङ्कुरादिषु तदभावात्। **क्रियेति**। अवन्यादेः क्रिया भूकम्पादौ द्रश्या। **मूर्तत्वात्**-परिच्छिन्नपरिमाणवत्त्वात्। गगनपरमाणुवारणाय दलद्वयम्। सावयवत्वमवयवसमवेतत्वं वा अवयवारब्धत्वं वा अवयवातिरिक्तावयव्यनङ्गीकारिणः सिद्धान्तिनो नेष्टम्। हेतावेवोत्पत्तिघटनात् उत्पत्तिमत्त्वसाधकत्वमपि न तस्य। अवयवमिथःसंयोग एव तदिति चेत्—अवयवत्वं नाम किमिति विचार्यम्। अतो लाघवात् द्वितीयहेतुः। ततोपि लघु तृतीयमुत्कर्षरहितपरिमाणवत्त्वम्। ननु कतिपयसावयववृत्ति किञ्चित् कार्यत्वनियामकमस्तु। तथाच सर्वसावयववृत्ति हेतुत्रयमपि तेन सोपाधिकमिति शंकां परिहरति **सावयवेष्विति**। **सावयवत्वातिरेकि**; सावयवत्वम**तिरेकि** अधिकदेशवृत्ति यस्य तत्; सावयवत्वन्यूनवृत्तीति यावत्। घटमणिकादौ शक्यक्रियत्वादिसद्भावे किं प्रमाणम्; तस्याप्रत्यक्षत्वात्। अनुमीयत इति चेत्—प्रत्यक्षसिद्धेन कार्यत्वेन तदनुमीयताम्, अनुमानसिद्धेन वेति न कश्चिद्विशेषः। तथाच पक्षे शक्यक्रियत्वादेरपि संदिग्धत्वात् पक्षे व्यभिचारसंदेहस्यानुमानभञ्जकत्वाभावात् कृतिसाध्यत्वसाधकहेतोरेवाविशेषेण तत्साधकत्वाच्च न दोष इति भावः। **तन्निर्माणादीत्यनेन ईश्वरसिद्ध्युक्त-उपादानाद्य-**

निपुणः कश्चित् पुरुषविशेषः सिद्ध्यत्येव ॥

किञ्च सर्वचेतनानां धर्माधर्मनिमित्तेऽपि सुखदुःखोपभोगे चेतनानधिष्ठितयोः तयोरचेतनयोः फलहेतुत्वानुपपत्तेः सर्वकर्मानुगुणसर्वफलप्रदानचतुरः कश्चिदास्थेयः ; वर्धकिनाऽनधिष्ठितस्य वास्यादेरचेतनस्य देशकालाद्यनेकपरिकरसंनिधानेऽपि यूपादिनिर्माणसाधनत्वादर्शनात् । बीजाङ्कुरादेः पक्षान्तर्भावेन तैर्व्यभिचारापादनं श्रोत्रियवेतालानामनभिज्ञताविजृम्भितम् । तत एव सुखादिभिर्व्यभिचारवचनमपि तथैव । न च लाघवेनोभयवादिसंप्रतिपन्नक्षेत्रज्ञानामेव ईदृशाधिष्ठातृत्वकल्पनं युक्तम् ; तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात् । दर्शनानुगुणैव हि सर्वत्र कल्पना । न च क्षेत्रज्ञवत् ईश्वरस्याशक्तिनिश्चयोऽस्ति । अतः प्रमाणान्तरतो न तत्सिद्ध्यनुपपत्तिः । समर्थकर्तृपूर्वकत्वनियतकार्यत्वहेतुना सिध्यन् स्वाभाविकसर्वार्थसाक्षात्कारतन्नियमनशक्तिसंपन्न एव सिद्ध्यति ॥

यत्तु अनैश्वर्याद्यापादनेन धर्मविशेषविपरीतसाधनत्वमुन्नीतम् ; तत् अनुमानवृत्तानभिज्ञत्वनिबन्धनम् ; सपक्षे सह दृष्टानां सर्वेषां कार्यस्याहेतुभूतानां च धर्माणां लिङ्गिन्यप्राप्तेः ।

एतदुक्तं भवति—केनचित् किंश्चित् क्रियमाणं स्वोत्पत्तये कर्तुः स्वनिर्माणसामर्थ्यं स्वोपादानोपकरणज्ञानं चापेक्षते ; न त्वन्यासामर्थ्यमन्याज्ञानं च, हेतुत्वाभावात् । स्वनिर्माणसामर्थ्य-स्वोपादानोपकरणज्ञानाभ्यामेव स्वोत्पत्तावुपपन्नायां संबन्धितया दर्शनमात्रेणाकिंचित्करस्यार्थान्तराज्ञानादेर्हेतुत्वकल्पनायोगात्—इति । किंच—क्रियमाणवस्तुव्यतिरि-

---

धिष्ठानतत्प्रेरणविवक्षा ।

आदिपदगृहीतमधिष्ठानमाश्रित्य अनुमानान्तरं दर्शयति किञ्चेति । पूर्वमेकचेतनाधीनमित्यनुमानं दूषितम् । तदप्यन्यथा निरुच्येह स्थापितमिव । अधीनत्वं नाम चेतनाधिष्ठितोपादानोपकरणादिजन्यत्वम् । एवञ्च तदभिज्ञकर्तृकत्ववत् तदधिष्ठातृकर्तृकत्वमपि साध्यमिति भावः । वास्यादेरिति । वासी-तक्षणकरणविशेषः । यूपोक्तिः श्रोत्रियस्य तत्रानुभवातिशयात् । पक्षान्तर्भावेनेति । बीजस्याङ्कुरस्य पुष्पस्यान्यस्य च सर्वस्य पक्षत्वात् तत्रापि चेतनाधिष्ठितोपादानादिजन्यत्वस्य साध्यत्वात् न व्यभिचारः । संकल्पवदात्मसंयोगरूपाधिष्ठानस्य सुखादावभावेऽपि धर्माधर्मयोरिव परम्परासंबन्धस्वीकारान्न दोष इत्याशयेनाह तत एव सुखादिभिरिति । सुखादिकमचेतनं चेतनानधिष्ठितमेव रोमोद्गम-अश्रुनिर्गमादिजनकमिति नास्ति ; तत्रापि स्थापनादिति भावः । लिङ्गिन्यप्राप्तेः-पक्षे असिद्धेः ; साध्यनिरूपितव्याप्त्यभावादिति वा । अहेतुभूतत्वमुपपादयति एतदुक्तमिति । विषयविशेषानिवेशेन किं सामान्यतः किञ्चिदज्ञानादिकमित्युच्यते, प्रकृतातिरिक्तसर्वविषयकाज्ञानमिति वा, पटविषयकं घटविषयकमिति विशिष्य वा । आद्ये उक्तम्, एतदुक्तमित्यादि । हेतुत्वाभावादिति । अन्यथासिद्धमिति भावः । हेतुस्तदनुमाने अप्रयोजक इति भावः । शिष्टपक्षद्वये आह किञ्चेति । सामान्यतः किञ्चिदज्ञानमित्युक्तावपि, निर्विशेषं न सामान्यमिति न्यायेन तत्तत्तन्नियततत्तद्विषयकत्वमेव

क्तार्थाज्ञानादिकं किं सर्वविषयं क्रियोपयोगि ; उत कतिपयविषयम् । न तावत् सर्वविषयम् ; न हि कुलालादिः क्रियमाणव्यतिरिक्तं किमपि न जानाति । नापि कतिपयविषयम् , सर्वेषु कर्तृषु तत्तदज्ञानाशक्त्यनियमेन सर्वेषामज्ञानादीनां व्यभिचारात् । अतः कार्यत्वस्यासाधकानामनीश्वरत्वादीनां लिङ्गिन्यप्राप्तिरिति न विपरीतसाधनत्वम् ॥

कुलालादीनां दण्डचक्राद्यधिष्ठानं शरीरद्वारेणैव दृष्टमिति जगदुपादानोपकरणाधिष्ठानमीश्वरस्याशरीरस्यानुपपन्नमिति चेत्—न ; संकल्पमात्रेणैव परशरीरगत भूत-वेताल-गरलाद्यपगमविनाशदर्शनात् । कथमशरीरस्य परप्रवर्तनरूपः संकल्प इति चेत्—न शरीरापेक्षः संकल्पः ; शरीरस्य संकल्पहेतुत्वाभावात् । मन एव हि संकल्पहेतुः । तदभ्युपगतमीश्वरेऽपि ; कार्यत्वेनैव ज्ञानशक्तिवत् मनसोऽपि प्राप्तत्वात् ॥ मानसः सङ्कल्पः सशरीरस्यैव; सशरीरस्यैव समनस्कत्वादिति चेत्—न; मनसो नित्यत्वेन देहापगमेऽपि मन[स]स्सद्भावेनानैकान्त्यात् । अतो विचित्रावयवसन्निवेशविशेषतनुभुवनादिकार्यनिर्माणे पुण्यपापपरवशः परिमितशक्तिज्ञानः क्षेत्रज्ञो न प्रभवतीति निखिलभुवननिर्माणचतुरोऽचिन्त्यापरिमितज्ञानशक्त्यैश्वर्योऽशरीरः संकल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेष ईश्वरोऽनुमानेनैव सिद्ध्यति ।

अतः प्रमाणान्तरावसेयत्वाद् ब्रह्मणः, नैतद्वाक्यं ब्रह्म प्रतिपादयति । किञ्च—अत्यन्तभिन्नयोरेव मृद्द्रव्यकुलालयोर्निमित्तोपादानत्वदर्शनेन, आकाशादेर्निरवयवद्रव्यस्य कार्यत्वानुपपत्त्या च नैकमेव ब्रह्म कृत्स्नस्य जगतो निमित्तमुपादानं च प्रतिपादयितुं शक्नोति—इति ॥

एवं प्राप्ते ब्रूमः—यथोक्तलक्षणं ब्रह्म जन्मादिवाक्यं बोधयत्येव । कुतः ? शास्त्रैकप्रमाणकत्वाद् ब्रह्मणः । यदुक्तम्—सावयवत्वादिना कार्यं सर्वं जगत् । कार्यञ्च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेयः—इति । तदयुक्तम् , महीमहार्णवादीनां कार्यत्वेऽप्येकदैव एकेन (एकेनैव)निर्मिता

---

वक्तव्यमिति न केनापि व्याप्तिरस्तीत्याशयेन **किञ्चेति** शब्दप्रयोगः । **अप्राप्तिरितीति** ; प्राप्त्यभावादित्यर्थः ।

भवतु साक्षादज्ञत्वादेः परमात्मन्यसिद्धिः ; शरीरं तु कारणत्वात् अवश्यमेष्टव्यम् ; तच्च कर्माधीनमेवेति अस्मदिष्टसिद्धिरिति शंकां परिहरति **कुलालेति** । विना प्रमाणं कथं मनोभ्युपगम इत्यत्राह **कार्यत्वेनैवेति** । एवं मनस्स्वीकारश्च तार्किकैकदेशिनाम् । नन्वीश्वरस्योपादानत्वगगनकारणत्वादिमत्तया शास्त्रवेद्यत्वमस्तु ; तत्राह **किञ्चेति** । शब्दस्यानुमानोपजीवित्वात् तद्बाधितार्थबोधकत्वं न भवतीति भावः । अत्र पूर्ववाक्यात् **एतद्वाक्य**मिति कर्तृपदानुषङ्गः ।

**शास्त्रैकप्रमाणकत्वात्**—शास्त्रेतरप्रमाणागोचरत्वात् । अतो न साध्याविशिष्टता । **एकं**

इत्यत्र प्रमाणाभावात् । न चैकस्य घटस्येव सर्वेषामेकं कार्यत्वम्, येनैकदैवैकः कर्ता स्यात् । पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनियमादर्शनात् । न च क्षेत्रज्ञानां विचित्रजगन्निर्माणाशक्त्या, कार्यत्वबलेन तदतिरिक्तकल्पनायामनेककल्पनानुपपत्तेश्चैकः कर्ता भवितुमर्हतीति ; क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन, तेषामेवातिशयितादृष्टसंभावनया च तत्तद्विलक्षणकार्यहेतुत्वसंभवात् तदतिरिक्तात्यन्तादृष्टपुरुषकल्पनानुपपत्तेः । न च युगपत् सर्वोत्पत्तिः सर्वोच्छित्तिश्च प्रमाणपदवीमधिरोहतः; अदर्शनात्, क्रमेणैवोत्पत्तिविनाशदर्शनाच्च । कार्यत्वेन सर्वोत्पत्तिविनाशयोः कल्प्यमानयोर्दर्शनानुगुण्येन कल्पनायां (मपि) विरोधाभावाच्च ।

---

**कार्यत्वम्**—एकसामग्रीजन्यत्वम् ; एकक्षणावच्छिन्नोत्पत्तिकत्वं वा । **एकस्येति** । एकक्षणावच्छिन्नोत्पत्तिकत्वनियमे एकत्वमेव हेतुः । तन्न महादाविति भावः । **स्यादि**त्यनेन एकं कार्यत्वमपि बहुकर्तृनिरूपितं भवितुमर्हतीति सूच्यते । नन्वनुमानस्य लाघवपक्षपातित्वात् कर्तुरेकत्वसिद्धिरितीदं निरस्यति **न च क्षेत्रेति** । एकस्याप्यकल्पने महल्लाघवमित्याशयेन हेतुमाह **क्षेत्रज्ञानामेवेति** । न च जगत् स्वकारणयावद्विषयकज्ञानवत्कर्तृकमित्यनुमाने सर्वज्ञसिद्धिरिति वाच्यम्—रथगोपुरादौ यावद्विषयकज्ञानरहितांशिकज्ञानशाल्यनेकशिल्पिकृते साध्याभावादनुमानायोगात् । ननु महाप्रलयानन्तरसृष्ट्यारम्भे क्षेत्रज्ञः कोऽस्तीत्यत्राह **न च युगपदिति** । **अदर्शनादिति** प्रत्यक्षप्रमाणासंभव उक्तः । अनुमानं निरसिष्यति । प्रत्युत बाधकप्रत्यक्षमेवास्तीत्याह **क्रमेणैवेति** । न हि सर्वस्य घटस्य पटादेर्वा तौ दृश्येते इति भावः ।

ननु विश्वसंतानोऽयं दृश्यसंतानशून्यैरारब्धः संतानत्वात् अरणिमन्थाग्निसंतानवत्, विश्वसंततिरत्यन्तमुच्छिद्यते संततित्वात् प्रदीपसंततिवदिति **न्यायकुसुमाञ्जल्युक्तानुमानतः** कदाचित् विश्वस्याप्युत्पत्तिः कदाचिदुच्छित्तिश्च कल्प्ये इत्यत्र तादृशानुमानमपि दूषयति **कार्यत्वेनेति**। संतानत्वरूपकार्यविशेषत्वेनेत्यर्थः । **कल्प्यमानयोरिति** सप्तम्यन्ते एतदन्वयः । तत्पाठविषये टीकादिकं विमृश्यम् । उपरि **कल्पनाया**मित्यत्राप्यन्वयाभिप्रायेण **कार्यत्वेने**तिपदप्रयोगः ; न तु कार्यत्वविशेषेणेति । संतानत्वहेतुरप्रयोजकः । प्रदीपादेर्नवनवोत्पाद्यत्वादचिरस्थायित्वात् संतत्युच्छेदेऽपि अन्यत्रापि तथात्वे न प्रमाणम् । प्रदीपादावपि अदृश्यसंततिरवार्या । महापटनाशेऽपि कन्थादिसद्भाववत् महापृथिवीलयेऽपि खण्डपृथिवीनां संभवात् द्व्यणुकादिब्रह्माण्डान्तकार्यवर्गस्य युगपत् परमाणुसाद्भावो न कल्प्यः । ब्रह्माण्डान्तरस्य एकप्रलयकाले इष्टतया च न सर्वथा क्षेत्रज्ञाभाव इति भावः । विशिष्य कार्यसामान्यं कार्यान्तरसत्तासमानकालिकनाशप्रतियोगि कार्यत्वादित्यनुमानं संभवतीति चाह **दर्शनानुगुण्येनेति**। **विरोधाभावाच्चेति** । प्रत्यक्षानुमानविरोधस्तु नास्ति । सर्वप्रलयात्मकमहाप्रलयबोधकागमविरोधस्तु न तार्किकैर्वक्तुं शक्यः, ईश्वरोक्ततयैव आगमप्रामाण्यात् ईश्वरविषयविवादावसरे तत्प्रदर्शनायोगात् । महा-

अतो बुद्धिमदेककर्तृकत्वे साध्ये कार्यत्वस्यानैकान्त्यम् ; पक्षस्याप्रसिद्धविशेषणत्वम् ; साध्यविकलता च दृष्टान्तस्य ; सर्वनिर्माणचतुरस्य एकस्याप्रसिद्धेः । बुद्धिमत्कर्तृकत्वमात्रे साध्ये सिद्धसाधनता। सार्वज्ञ्यसर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकमिदं कार्यत्वं किं युगपदुत्पद्यमानसर्ववस्तुगतम् ? उत क्रमेणोत्पद्यमानसर्ववस्तुगतम् ? युगपदुत्पद्यमानसर्ववस्तुगतत्वे कार्यत्वस्यासिद्धता । क्रमेणोत्पद्यमानसर्ववस्तुगतत्वे अनेककर्तृकत्वसाधनात् विरुद्धता । अत्राप्येककर्तृकत्वसाधने प्रत्यक्षानुमानविरोधः ; शास्त्रविरोधश्च, कुम्भकारो जायते, रथकारो जायते इत्यादिश्रवणात् ॥

अपि च सर्वेषां कार्याणां शरीरादीनां च सत्त्वादिगुणकार्यरूपसुखाद्यन्वयदर्शनेन सत्त्वादिमूलत्वमवश्याश्रयणीयम् । कार्यवैचित्र्यहेतुभूताः कारणगता विशेषाः सत्त्वादयः ;

---

प्रलयेऽपि नित्यसूर्याद्यनेकसद्भावश्चागमसिद्धः । कुसुमाञ्जलावेव नानाब्रह्माण्डसंभवप्रदर्शनेन युगपत् सर्वोच्छित्तौ न प्रमाणम् । अण्डान्तरसञ्चारायोगश्चानुमातुमशक्यः; शक्तिवैचित्र्यसंभवादिति भावः ।

**अनैकान्त्यम्** ; अनेककर्तृकरथगोपुरादिभिरिति शेषः । बुद्धिमत्पदस्य सर्वज्ञेत्यर्थे साध्याप्रसिद्ध्यादिदोषमाह **पक्षस्येति**। ननु केवलकार्यत्वस्य हेतुत्वे एकेश्वरासिद्धावपि किञ्चिद्विशेषितकार्यत्वेन तत्सिद्धिः सुवचा ; तत्र जीवेनानिर्वाहादित्याशंकायां तत् कार्यत्वं द्वेधा विकल्प्य निरस्यति **सार्वज्ञ्येति**। सार्वज्ञ्यादिकं न साध्यकोटिप्रविष्टम् ; अप्रसिद्धिदोषापत्तेरुक्तत्वात् । किंतु अर्थसिद्धम् । **किमित्यादि** । अत्र विमतं पक्षः। पक्षतावच्छेदकव्यापकैककालावच्छिन्नोत्पत्तिकत्वं हेतुः। तच्च दृष्टान्तानुगमाय, विभिन्नजीवकृतत्वेनानिश्चितकार्यमात्रवृत्तिप्रकृतान्वयितावच्छेदकत्वाभिमतधर्मव्यापकैककालावच्छिन्नोत्पत्तिकत्वपर्यवसितं वाच्यम्। स च धर्मः पक्षतावच्छेदकः युगपदेककृतानेककार्यगततया दृष्टान्ततावच्छेदकश्च । यद्वा तत्तज्जीवकाल-तद्भिन्नकालोभयावच्छिन्नोत्पत्तिकत्वं हेतुः । इदमपि दृष्टान्तानुगतम् । आभ्यामेककर्तृकत्वसाधने परमात्मकर्तृकत्वं विना पक्षे न निर्वाहः; एकस्य जीवस्येदृशकार्यकरत्वाभावादिति अनुमातुरभिमानः। तत्राद्यो हेतुरप्रसिद्धः; सर्वसंबन्ध्युत्पत्तेरेककालावच्छिन्नत्वाभावात् । द्वितीयो हेतुः विभिन्नजीवकर्तृके उभयस्मिन् प्रसिद्धः; परंतु तत्रैव पक्षे नानाकर्तृकत्वसाधक एव स्यादिति भावः। ननु लोके विभिन्नकर्तृकत्वेनानेककर्तृकत्वेन चाभिमतान्यपि कार्याणि पक्षीकृत्य एकमात्रकर्तृकत्वेन सुनिश्चितं कार्यं दृष्टान्तीकृत्य कार्यत्वहेतुनैव एककर्तृकत्वं साधयाम इत्यत्राह **अत्रापीति** । एकपरमात्मकर्तृकत्वं सर्वत्रेति वासनैकविजृम्भितमिदमिति बाधो दोष इति ।

पूर्वं जीववत् अस्यापि कर्तुः किञ्चिद्विषयकाज्ञानाशक्त्याद्यापादनं पूर्वपक्षिणा निराकृतम्, 'तस्य कार्यानुपयोगात्' इति ; तत्र कार्योपयोग्येव गुणवश्यत्वकर्मवश्यत्वादिकमापाद्य तस्यानीश्वरत्वमाह **अपि चेति** । तार्किकवत् पाशुपता अपि आनुमानिकेश्वरवादिनः, तैः सत्त्वादिगुणस्वीकारादेवमुक्तिः ; कर्मस्वीकारस्तु तार्किकेष्वपि । **शरीरादीनामिति** कथनं---शरीरे सुखाद्यन्वयः तन्मूलसत्त्वाद्यन्वयश्च संमन्तव्यः, तद्वदेवान्येषामपि पाञ्चभौतिकत्वात् तथात्वमवर्जनीयमिति सूचनाय । तेषां

तेषां कार्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण ; पुरुषस्य च तद्योगः कर्ममूलः इति कार्यविशेषारम्भायैव ज्ञानशक्तिवत् कर्तुः कर्मसम्बन्धः कार्यहेतुत्वेनैवाव-श्याश्रयणीयः; ज्ञानशक्तिवैचित्र्यस्य च कर्ममूलत्वात् । इच्छायाः कार्यारम्भहेतुत्वेऽपि विषयविशेषविशेषितायास्तस्याः सत्त्वादिमूलकत्वेन कर्मसम्बन्धोऽवर्जनीयः ।

अतः क्षेत्रज्ञा एव कर्तारः ; न तद्विलक्षणः कश्चिदनुमानात् सिध्यति ॥

भवन्ति च (चात्र) प्रयोगाः—तनुभुवनादि क्षेत्रज्ञकर्तृकम्, कार्यत्वात्, घटवत् । ईश्वरः कर्ता न भवति, प्रयोजनशून्यत्वात्, मुक्तात्मवत् । ईश्वरः कर्ता न भवति, अशरी-रत्वात् तद्वदेव । न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः, तत्राप्यनादेः सूक्ष्मशरीरस्य सद्भावात् । विमतिविषयः कालो न लोकशून्यः, कालत्वात् वर्तमानकालवत् इति ।

अपिच—किमीश्वरः सशरीरोऽशरीरो वा कार्यं करोति । न तावत् अशरीरः; अशरीरस्य कर्तृत्वानुपलब्धेः । मानसान्यपि कार्याणि सशरीरस्यैव भवन्ति ; मनसो नित्यत्वेऽप्य-

---

सुखदुःखमोहमयत्वं सिद्धान्ते आत्मगतसुखदुःखमोहहेतुभूत प्रतिनियतधर्मवत्त्वमेव; त एव धर्माः सत्त्वरजस्तमांसि । सन्तु भूतेषु ते विशेषाः ; कर्तुः किमायातमित्यत्राह तेषामिति । तद्युक्तपुरुषेति । पुरुषस्य सत्त्वादियुक्तत्वं शरीरेन्द्रियादिसंघातद्वारा । वैचित्र्यस्येति । कर्माभावे वैचित्र्यं कथ-मिति भावः । तथा च ज्ञानशक्तिमत्कर्तृकत्ववत् कर्मवश्यकर्तृकत्वमप्यनुमातव्यमेवेति भावः । स्वतन्त्रतया जीवस्येच्छैव नियामिकाऽस्तु इत्यत्र तद्वैचित्र्यमपि कर्ममूलमेवेत्याह इच्छाया इति ।

ईश्वर इति । न च सिद्ध्यसिद्धिभ्यां व्याघात इति वाच्यम्—प्रतितर्कमात्रत्वात् । यदि प्रयोजनशून्यः अशरीरश्च स्यात्, कर्ता न भवेदित्युक्तं भवति । ननु कर्तृत्वं शरीरापेक्षमित्यनेन किं विवक्षितम्? यदि कृतिं प्रति शरीरमपि कारणमिति—तन्न; शरीरं विना मनोमात्रेण तत्संभवस्य प्रागुक्तत्वात् । यदि कृत्यधीनो बाह्यवस्तुगतो व्यापारः शरीरव्यापारद्वारक इति—तन्न; पुरुषस्य कृत्यधीने स्वशरीरव्यापारे शरीरान्तरव्यापारद्वारीकरणाभावात् । यदि प्रेरणानुकूलः संकल्पवत्पुरुषसंबन्धविशेषः पुरुषसंयुक्तशरीरसंयुक्तत्वरूप एव भवतीति—तदपि न ; शरीरप्रेरणायां तदभावात् । यदि तु पूर्वक्षणावच्छिन्नशरीरसंबन्धस्याभावे व्यापार्यमाणवस्तुसंबन्धः पुंसो न भवतीत्युच्यते—तदपि न ; व्यापार्यमाणस्वशरीरसंबन्धस्य प्राथमिकस्य शरीरसंबन्धपूर्वकत्वा-भावादित्याक्षेपं परिहरति न चेति । अनादेरिति ; प्रवाहानादेरित्यर्थः । स्थूलशरीरे स्थित्वा सूक्ष्मं प्रविशति, सूक्ष्मे स्थित्वा स्थूलमिति मध्येमध्ये नवनवं सूक्ष्मं निर्मीयत इति स्थूलवत् सूक्ष्म-मप्यनादि । न पुनः सांख्यमत इवैकमनादि सूक्ष्मं शरीरमस्माकम् । 'उपपन्नस्तल्लक्षण' इति सूत्रभाष्यं न सांख्यमतानुकूलम् । तदनन्तरप्रतिपत्त्यधिकरणे सूक्ष्मस्य स्थूलदेहरूपेण परिणामः, पुनः स्थूलस्य सूक्ष्मत्वञ्चाभाषि । ननु आदिसृष्टौ प्रथमशरीराधिष्ठाने पूर्वशरीरसंबन्धो नेत्यत्राह विमतीति । वेद-प्रामाण्यसिद्धेः प्राक् प्रलयोपि न सिद्ध्यतीत्याशयः । कृत्यादिकारणतयाऽपि शरीरापेक्षामाह अपि-

शरीरेषु मुक्तेषु तत्कार्यादर्शनात् । नापि सशरीरः; विकल्पासहत्वात् । तच्छरीरं किं नित्यम्, उतानित्यम् । न तावन्नित्यम्; सावयवस्य तस्य नित्यत्वे जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः । नाप्यनित्यम्, तद्व्यतिरिक्तस्य तच्छरीरहेतोः तदानीमभावात् ॥ स्वयमेव हेतुरिति चेन्न; अशरीरस्य तदयोगात् ॥ अन्येन शरीरेण सशरीर इति चेन्न ; अनवस्थानात् ॥ स किं सव्यापारो निर्व्यापारो वा । अशरीरत्वादेव न सव्यापारः । नापि निर्व्यापारः कार्यं करोति मुक्तात्मवत् । कार्यं जगत् इच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वम्; दृष्टान्तस्य च साध्यहीनता ।

अतो दर्शनानुगुण्येनेश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतः सर्वेश्वरः पुरुषोत्तमः ॥ शास्त्रं तु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविसजातीयं सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितोदारगुणसागरं निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादयतीति न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषगन्धप्रसङ्गः । यत्तु निमित्तोपादानयोरैक्यमाकाशादेर्निरवयवद्रव्यस्य कार्यत्वं चानुपलब्धम् अशक्यप्रतिपादनमित्युक्तम्—तदप्यविरुद्धमिति, (शारी. 1. 4. 23.) "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्", (शारी. 2. 3. 1.) "न वियदश्रुतेः" इत्यत्र प्रतिपादयिष्यते । अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वात् 'यतो वा इमानि भूतानि' इति वाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम् ॥ इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

अथ समन्वयाधिकरणम् ॥ ४ ॥

यद्यपि प्रमाणान्तरागोचरं ब्रह्म, तथापि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म

---

चेति । सर्वमिदमत्र विवक्षितं पशुपत्यधिकरणे सूत्रारूढम् । प्रागुक्तज्ञानेच्छाकृतिवत् व्यापारस्यापि कारणतयाऽनुमानादपि शरीरापेक्षेत्याह स किमिति । इच्छामात्रव्यापारेति बहुव्रीहिः ।

शास्त्रैकविषयत्वादिति । शास्त्रमित्यस्य अज्ञातज्ञापकशब्दोऽर्थः । तद्योनित्वं तन्मूलकत्वं तदधीनप्रतिपत्त्यर्हत्वम्; तस्मात् ब्रह्म वेदान्तवाक्यजन्यप्रतीतिविषय इति सूत्रार्थः ॥ (३)

**समन्वयाधिकरणम्**

प्रवृत्तिनिवृत्तिपरत्वाभावेनेति । 'यन्न दुःखेन संभिन्नम्' इत्येवं स्वर्गादिसिद्धवस्तुबोधकानामपि, यजेत स्वर्गकाम इत्यादिप्रवृत्त्यादिबोधकवाक्यैकवाक्यतास्वीकारात् प्रवृत्तिनिवृत्तिपरत्वमस्ति । तद्वत् अर्थवादवच्च उपनिषदामप्यर्थवादत्वेन कर्मविध्येकवाक्यतायां कथञ्चित् सिद्धप्रतिपादकत्वं स्यात् । सिद्धेव्युत्पत्तिसमर्थनादिना स्वातन्त्र्यस्येष्टत्वात्तु तत्र तात्पर्यायोगान्न प्रतिपादकत्वमिति भावः । शास्त्रयोनीति । शास्त्रपदप्रयोगश्च सूत्र एव कृतः । न च प्रवृत्तिनिवृत्तिपरभिन्नस्य शास्त्रत्वम्; निष्प्रयोजनत्वात् । यदाहुः, "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते" इतीति भावः ।

न शास्त्रं प्रतिपादयतीत्याशङ्क्याह—

4. तत्तु समन्वयात् ॥ १ । १ । ४ ॥

प्रसक्ताशङ्कानिवृत्त्यर्थः तुशब्दः । तत् शास्त्रप्रमाणकत्वं ब्रह्मणः संभवत्येव । कुतः ? समन्वयात्—परमपुरुषार्थतयाऽन्वयः समन्वयः; परमपुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयात् ।

एवमिव समन्वितो ह्यौपनिषदः पदसमुदायः—(तै.भृ..) "यतो वा इमानि भूतानि जायन्ते", (छा. 6. 2. 1, ) सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत", (बृ. 3. 2. 11.) "ब्रह्म वा इदमेकमेवाग्र आसीत्", (ऐतरेय. 1. 1. 1.) "आत्मा वा इदमेक एवाग्र आसीत्", (तै. आनं) "तस्माद्वा एतस्मादात्मन आकाशः संभूतः", (महोपनिषत्. 1. 1.) "एको ह वै नारायण आसीत्", (तै.आनं) "सत्यं ज्ञानमनन्तं ब्रह्म", (तै. भृ.) "आनन्दो ब्रह्म" इत्येवमादिः ।

न च व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां पदसमुदायानाम् अखिलजगदुत्पत्तिस्थितिविनाशहेतुभूताशेषदोषप्रत्यनीकापरिमितोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वम्; स्वविषयावबोधपर्यवसायित्वात् सर्वप्रमाणानाम् । न च प्रयोजनानुगुणा प्रमाणप्रवृत्तिः । प्रयोजनं

---

सूत्रे तदिति शास्त्रयोनित्वमुच्यते । पूर्वसूत्रे शास्त्रयोनित्वपदतात्पर्यार्थभूतं प्रमाणान्तरागोचरत्वं हेतुतया विवक्षितम्; इह तद्वाच्यार्थः साध्यतयाऽभिमतः । **प्रसक्ते**ति । अप्रामाण्यशंका प्रथमसूत्रमारभ्य प्रवृत्ताऽत्र निःशेषं निवर्त्येत इति सूचनार्थं इह तुशब्द इति भावः । तेन चतुःसूत्री उपोद्घात इति सूच्यते । **समन्वया**दित्यस्य वेदान्ताभिधेयत्वादित्यर्थे साध्याविशिष्टो हेतुः स्यात् । अन्वयो नाम अयोगव्यवच्छेदेन ब्रह्मणो वेदान्तवाक्येषु संबन्धः, कारणवाक्येषु अन्ययोगव्यवच्छेदेनापि तत्संबन्धः समन्वय इत्युक्तौ पादत्रिपादीरूपप्रथमाध्यायार्थप्रतिज्ञामात्रता स्यात्; न पृथगधिकरणकृत्यम् । अपुरुषार्थतयाऽनन्वयशंकायां तत्परिहारकोऽर्थः किल वक्तव्यः । प्रथमाध्यायस्य समन्वयाध्याय इति व्यवहारस्तु अन्वयपदेनैव अयोगान्ययोगव्यवच्छेदमुखेन ब्रह्मान्वयविवक्षया भवितुमर्हति । अतः समित्यस्य सम्यक्त्वं पुरुषार्थत्वमित्यर्थं विवक्षित्वा पुरुषार्थतया प्रतिपाद्यत्वादिति हेतुमाह **परमे**ति । **एवमिवे**ति इवशब्देन संभावितप्रामाण्यक पुरुषार्थत्वप्रकारकापातप्रतीतिविषयत्वमस्तीति ज्ञाप्यते । प्रथमाध्यायसमाप्तावेव हि, एवमेव समन्वित इति वक्तुं शक्यम् । **औपनिषदः** । उपनिषदित्यस्य षद्लृधातोरवसादनार्थकतया, ब्रह्म उपनीय अविद्यामवसादयतीत्युपनिषद् ब्रह्मविद्या; तत्प्रतिपादकवाक्येऽपि तच्छब्द इति परभाष्यम्; अत्राधिकरणे भामती च । "ब्रह्मणि उपनिषण्णेत्युपनिषत्" इति **वाक्यम्** । सूत्रे **अन्वया**दित्यनेन, अनन्वये आदित्यो यूप इत्यादाविवान्यपरता स्यात्, न त्वत्रेति सूचितम् । तद् दर्शयति **न चे**त्यादिना । प्रमाणं प्रयोजनवद्विषयकमेवेति न नियम इत्याह **न च प्रयोजने**ति । अन्यथा लोष्टदर्शनस्य काञ्चनविषयकत्वकल्पना स्यादिति भावः ।

हि प्रमाणानुगुणम् । न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वम् ; पुरुषार्थान्वय-प्रतीतेः । तथा स्वरूपपरेष्वपि, 'पुत्रस्ते जातः, नायं सर्पः' इत्यादिषु हर्षभयनिवृत्ति-रूपप्रयोजनवत्त्वं दृष्टम् ॥ ( पूर्वःपक्षः )

अत्राह—न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति ; प्रवृत्तिनिवृत्त्यन्वयविरहिणः शास्त्रस्यानर्थक्यात् । यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति ; तथाऽपि शास्त्रं प्रयोजनपर्यवसाय्येव । न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलब्धचरः । न च किञ्चित् प्रयोजनमनुद्दिश्य वाक्यप्रयोगः, श्रवणं वा संभवति । तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम्, 'अर्थार्थी राजकुलं गच्छेत्', 'मन्दाग्निर्नाम्बु पिबेत्', 'स्वर्गकामो यजेत' 'न कलञ्जं भक्षयेत्', इत्येवमादिषु ।

यत् पुनः-सिद्धवस्तुपरेष्वपि, 'पुत्रस्ते जातः', 'नायं सर्पो रज्जुरेषा' इत्यादिषु हर्षभयनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तम् । तत्र किं पुत्रजन्माद्यर्थात् पुरुषार्थावाप्तिः, उत तज्ज्ञानादिति विवेचनीयम् ॥ सतोऽप्यज्ञातस्यार्थस्यापुरुषार्थत्वेन तज्ज्ञानादिति

---

प्रवृत्तिनिवृत्त्यन्वय एव प्रयोजनवत्त्वमित्यपि नास्तीत्याह **न च प्रवृत्तीति** । **पुरुषार्थान्वयेति** । अभिरूपवस्तुप्रत्यक्षानुमानादाविति शेषः । **हर्षेति**—हर्ष इष्टं फलम् ; अनिष्टनिवृत्तिरूपं फलं भयनिवृत्तिः । तथाच प्रयोजने सति असति च प्रमाणप्रवृत्तिदर्शनात् प्रमितौ जातायां तद्विषयानुरूपं प्रेप्साजिहासोपेक्षान्यतमोत्पत्तेरनुभवात् प्रवृत्तिनिवृत्त्यन्यतरनियमाभावाच्च कथं प्रमाणसामान्ये प्रवृत्तिनिवृत्ति मूलसाफल्यवर्णनमिति ।

एवं सूत्रार्थे उपपादिते, यत्रयत्र शास्त्रत्वम्, तत्रतत्र प्रयोजनवत्त्वमिति्वत्, प्रयोजनवच्छास्त्रत्वं यत्र, तत्र प्रवृत्तिनिवृत्त्यन्यतरान्वयः इति नियमं शंकते **अत्राहेति** । अयमेव प्रधानपूर्वपक्षी मीमांसकः । उपनिषदामपि कर्मकाण्डस्थार्थवादवत् वाच्यार्थे तात्पर्यं नास्ति ; प्राशस्त्यपर्यवसानेन कर्मकाण्डविधिशेषत्वमेवेति तदाशयः । यत्किञ्चिद्विधिशेषत्वं विनैव प्रयोजनवत्त्वसंभवात् प्रामाण्यं सुस्थमासामिति सिद्धान्ती । इदमेव शाङ्करमतमपि । अद्वैतिष्वेव केचिदौपनिषदविधिशेषत्वेन प्रयोजनवत्त्वं प्राञ्चोऽवोचन् । तत्र निष्प्रपञ्चीकरणनियोगवादिन एके । ध्यानविधिवादिनस्त्वन्ये । मीमांसकः प्रधानपूर्वपक्षी प्रथमं प्रथमनियोगवादिमतमनूद्य निरस्य, ध्यानविधिवादिमतं प्रस्ताव्य, तत्खण्डकं शांकरमतं प्रसंगात् भास्करमतञ्च तन्मुखेन प्रतिक्षिप्य, स्वयं तं ध्यानविधिवादं व्युदस्य स्वपक्षमुपसंहरति ; ततः यथावत् सिद्धान्तवर्णनमिति क्रम इह भाव्यः । **शांकरभाष्ये उभयलिङ्गाधिकरणे** प्रपञ्चविलयनियोगवादिनः, इह ध्यानविधिवादिनश्च दूषितत्वात् तत्तद्वादिनां जरत्त्वम् ।

प्रमाणवाक्यत्वात् प्रयोजनपर्यवसायीत्यनुमाने व्याप्तिं दर्शयति **नहीति** ; अनुकूलतर्कं दर्शयति **न चेति** । इष्टप्राप्तौ अनिष्टपरिहारे च लौकिकवैदिकवाक्योदाहरणात् चतुष्टम् ।

चेत्—तर्हि असत्यप्यर्थे ज्ञानादेव पुरुषार्थः सिध्यतीति अर्थपरत्वाभावेन प्रयोजनपर्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम्। तस्मात् सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्यवसानमिति कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासंभवात् न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति ॥

अत्र कश्चिदाह—वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणभावमनुभवन्ति॥ कथम्॥ निष्प्रपञ्चमद्वितीयं ज्ञानैकरसं ब्रह्म अनाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्चप्रविलयद्वारेण विधिविषयत्वम्—इति॥ कोऽसौ द्रष्टृदृश्यरूपप्रपञ्चप्रविलयद्वारेण साध्य-ज्ञानैकरसब्रह्मविषयो विधिः॥ (बृ 5. 2.) "न

---

अर्थपरत्वाभावेनेति-अर्थबोधकत्वेऽपि तत्र तात्पर्याभावेनेत्यर्थः। न च जगतो मिथ्यात्वात् तन्निवृत्तेश्च तत्त्वज्ञानैकसाध्यत्वात् वेदान्तजनितब्रह्मात्मैक्यज्ञानं तत्त्वज्ञानमेव भवतीति अर्थवास्तवत्वमिति वाच्यम्-भूदलनभ्रान्त्याऽपि रज्जुसर्पनिवृत्तिदर्शनेन शून्यवादिरीत्या ब्रह्मणोप्यतत्त्वतासंभवात्। न च शास्त्रप्रतिपन्नतया सत्यमेवेति वाच्यम्—न हि, 'आदित्यो यूपः' 'यजमानः प्रस्तरः,' 'इयं वै जुहूः, स्वर्गो लोक आहवनीयः' इत्यादियथाश्रुतार्थानां सत्यत्वम्। अतो विवक्षितार्थस्यैव सत्यत्वमिष्टम्; न तु सर्वस्य। अत्र चोपनिषद्रूपार्थवादानामपि कर्मविधिशेषतया प्राशस्त्यपरत्वमिति तत् प्राशस्त्यं सत्यमेवेति न ब्रह्मसद्भावेऽपि प्रामाण्यम्। न चैतदसत्यत्वकल्पनया प्राशस्त्यरूपार्थान्तरस्वीकारेणान्यशेषत्ववर्णनापेक्षया स्वातन्त्र्येण यथाश्रुतार्थसत्यत्वेन प्रामाण्यवर्णन एव लाघवमिति वाच्यम्—ब्रह्मात्मैक्यस्य बहुप्रमाणबाधिततया सत्यत्वायोगात्। नच तर्हि भेदवादिरीत्या तत्त्वमस्याद्यर्थवर्णनेनार्थसत्यत्वमिष्यतामिति वाच्यम्-एवमपि सत्यभूततदर्थज्ञानजन्यः पुरुषार्थः क इत्यस्य वक्तव्यत्वात्। न हि वाक्यार्थज्ञानमात्रान्मोक्षो भवति॥ विचित्रवस्तुश्रवणजनितमहानन्द एव काव्यरसास्वादादिवत् अस्तु पुरुषार्थ इति चेत्—तस्य शारीरकविचारादिश्रममन्तरेण आपातप्रतीतितोऽपि संभवेन ब्रह्ममीमांसावैयर्थ्यात्। विचारमूलकनिश्चयात्मकज्ञानेनैव भवन् आनन्द एव संपाद्य इति न हि विधिर्भवति। न च तादृशनियमापूर्वस्य क्वचिदुपयोगोऽस्ति। अतो वरमापातप्रतीतार्थमसत्यमादायैव तात्कालिकानन्दरूपप्रयोजनपर्यवसायित्वेऽपि शास्त्रस्य तावता प्रामाण्यासिद्ध्या प्राशस्त्यरूपलक्ष्यार्थमुखेनादृष्टार्थतयाऽवश्यक्लृप्तकर्मविधिशेषत्वकल्पनमुपनिषदाम्। तत् सिद्धम्, "यावत् खलु प्रमातृणां प्रवर्तननिवर्तने। शब्दाः न कुर्वते तावन्न निराकांक्षबोधनम्" इतीति भावः। शेषं पूर्वपक्षोपसंहारे।

अत्र पूर्वपक्षे दूरस्थकर्मविधिशेषत्वापेक्षया औपनिषदकार्यपरतयैव प्रामाण्यं समर्थयन्ते जरदद्वैतिनः। तेषु निष्प्रपञ्चीकरणनियोगवादिनः कस्यचित् पक्षमुपन्यस्यति **अत्र कश्चिदाहे**ति। **कथमि**ति। सिद्धस्य ब्रह्मणः कथं प्रवृत्तिविषयतेति प्रश्नः। सिद्धस्यापि व्रीह्यादेः वैतुष्यादिमत्तया साध्यत्ववत् ब्रह्मणोऽपि सिद्धस्य निष्प्रपञ्चतया साध्यत्वमिति प्रतिवदति **निष्प्रपञ्च**मिति। 'न

दृष्टेर्द्रष्टारं पश्येः न मतेर्मन्तारं मन्वीथाः" इत्या(त्येवमा)दिः । द्रष्टृदृश्यरूपभेदशून्यं दृशिमात्रं ब्रह्म कुर्यादित्यर्थः । स्वतस्सिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण कार्यत्व(साध्यत्व)मविरुद्धम्—इति ॥

तदयुक्तम्—नियोगवाक्यार्थवादिना हि नियोगः, नियोज्यविशेषणम्, विषयः, करणम्, इतिकर्तव्यता, प्रयोक्ता च वक्तव्याः ।

तत्र हि नियोज्यविशेषणमनुपादेयम्; तच्च निमित्तं फलमिति द्विधा । अत्र किं नियोज्यविशेषणम्, तच्च किं निमित्तं फलं वेति विवेचनीयम् । ब्रह्मस्वरूपयाथात्म्यानुभवश्चेत् नियोज्यविशेषणम्, तर्हि न तत् निमित्तम्, जीवनादिवत् तस्यासिद्धत्वात् ।

---

दृष्टेर्द्रष्टारं पश्येः' इत्यस्यार्थः—दृष्टेः अन्तःकरणवृत्तिविशेषस्य जडस्य द्रष्टारम् अवभासकर्तारं चैतन्यस्वरूपमात्मानं न पश्येः=अन्तःकरणवृत्तिविषयं न कुर्या इति । स्वप्रकाशचैतन्यं ज्ञानान्तरदृश्यं न भवतीति यावत् । दृष्टेः द्रष्टारं=दृष्टिकर्तारमित्यर्थे वा, दृष्ट्यपेक्षयाऽन्यं द्रष्टारमित्यर्थे वा सति द्रष्टृनिषेधः । सर्वथा चैतन्यातिरिक्तप्रपञ्चरूपं न पश्येः, चैतन्ये प्रपञ्चस्य कल्पितत्वात् तत् निष्प्रपञ्चं कुर्या इति विधौ पर्यवसानम् ।

**नियोगवाक्यार्थेति**। नियोगः कार्यम् अपूर्वं लिङर्थः; स एव वाक्यमुख्यार्थः इति प्राभाकराः । ज्योतिष्टोमेन यजेतेत्यादौ स यथा सर्वमाह, तथा प्रकृतेऽपि विधौ भवता सर्वं वक्तव्यमित्यर्थः । **नियोज्यः** प्रेर्यपुरुषः । तस्य **विशेषणं** काम्यस्थले स्वर्गकामत्वादि; नित्यस्थले यावज्जीवमित्युक्तजीवनादि । **विषयः करणञ्च** धात्वर्थ एव यागादिः । क्वचित्तु, दध्नेन्द्रियकामस्य जुहुयादित्यादौ होमो **विषयः**, दधि **करण**मिति भेदः स्यात् । **इतिकर्तव्यता** चाङ्गजातम् । **प्रयोक्ता** कर्ता नियोज्याभिन्नः । प्रयोक्तृपर्यन्तपदानां क्रमेण द्वन्द्व इव व्यस्तप्रयोगेऽपि **प्रयोक्तव्या** इति पुंल्लिङ्गनिर्देशो युक्तः । यथा दण्डिना, "तैः शरीरञ्च काव्यानामलङ्काराश्च दर्शिताः" ( का. 1. 10. ) इति । विचारितञ्चेदमस्माभिः **वैशेषिकरसायने**, "एतेन कर्माणि गुणाश्च व्याख्याताः" ( 1. 2. 23. ) इति सूत्रे । अपूर्वरूपो नियोगो दुर्वच इति स्थितं प्रथमाधिकरण एव ।

नियोगदूषणस्य प्रयोक्तृदूषणस्येव करणदूषणेऽन्तर्भावात् द्वितीयस्य दूषणमारभते **तत्र हि नियोज्येति** । नित्यकाम्यविवेकाय अत्रैतद्विकल्पः । **अनुपादेय**मिति । देशः कालः फलं निमित्तं कर्तेति अनुपादेयपञ्चकं मीमांसकगणितम्; पुरुषकृतिसाध्यत्वाभावात् । **फलमिति** । काम्यमानं फलम्; फलकामत्वमिति यावत् । **किमिति** । प्रकृतनियोगवाक्ये किं वस्तु नियोज्यविशेषणत्वेनाभिमतम्; तथात्वञ्च तस्य निमित्ततया फलतया वेति प्रश्नः । 'ब्रह्मयाथात्म्यमनुभवन् निष्प्रपञ्चं ब्रह्म कुर्यादिति विधिः । तत्रानुभवो विशेषणम् । तस्य पूर्वसिद्धत्वे निमित्तत्वम् । उत्तरत्वे, अभिचरन् यजेतेत्यत्र अभिचारस्येव फलत्वम् । अतो विकल्प्य दूषयति **तर्हीति** । **असिद्धत्वात्**—स्वतःसिद्धत्वाभावात् । साध्यताम्; तदनन्तरमेव तत् निमित्तं भवत्विति चेत्-साधनं किमर्थम्? मोक्षार्थमिति चेत्—तर्हि

निमित्तत्वे च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवत् नित्यत(व) द्विषयानुष्ठानप्रसङ्गः । नापि फलम्; नैयोगिकफलत्वेन स्वर्गादिवत् अनित्यत्वप्रसङ्गात् ।

कश्चात्र नियोगविषयः । ब्रह्मैवेति चेत्--न, तस्य नित्यत्वेनाभव्यरूपत्वात्, अभावार्थत्वाच्च ।। निष्प्रपञ्चं ब्रह्म साध्यमिति चेत्-साध्यत्वेऽपि फलत्वमेव; अभावार्थत्वान्न विधिविषयत्वम् । साध्यत्वञ्च कस्य ? किं ब्रह्मणः, उत प्रपञ्चनिवृत्तेः । न तावद् ब्रह्मणः, सिद्धत्वात्; अनित्यत्वप्रसक्तेश्च । अथ प्रपञ्चनिवृत्तेः—न तर्हि ब्रह्मणः साध्यत्वम् ।। प्रपञ्चनिवृत्तिरेव विधिविषय इति चेत्-न; तस्याः फलत्वेन विधिविषयत्वायोगात् । प्रपञ्चनिवृत्तिरेव हि मोक्षः; स च फलम् । अस्य च नियोगविषयत्वे नियोगात् प्रपञ्चनिवृत्तिः, प्रपञ्चनिवृत्त्या नियोग इतीतरेतराश्रयत्वम् ।

अपि च--किं निवर्तनीयः प्रपञ्चो मिथ्यारूपः, सत्यो वा । मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन न किंचित् प्रयोजनम् ।। नियोगस्तु निवर्तकज्ञानमुत्पाद्य तद्द्वारेण

---

तस्यैवानुष्ठानप्रयोजकत्वात् अनुभवस्यानुष्ठापकत्वरूपनिमित्तत्वं न भवतीति ।। निमित्तत्वेष्टौ दोषमप्याह निमित्तत्वे चेति । ब्रह्मयाथात्म्यानुभवे सिद्धे कर्ता विषयमनुतिष्ठतीति अस्य निमित्तत्वं वक्तव्यम् । तस्मिन् सिद्धेऽनन्तरक्षणे मोक्ष एवेति कः किमनुतिष्ठेत् ? यद्यपवर्गेऽप्यनुतिष्ठति, तर्हि सकृदिति किम्, भूयोभूयोऽप्यनुतिष्ठेत् । अग्निविद्यादिवत् कर्तृविशेषणत्वं विना निमित्तत्वकथनं हि, यदायदा तत्, तदातदा कार्यानुष्ठानमिति तस्यावश्यानुष्ठापकत्वसिद्ध्यर्थमेव; अतो जीवनविशेषानुवृत्तौ अग्निहोत्रावृत्तिवत् एतदावृत्तिसत्त्व एव निमित्तत्वसिद्धिः । न च मुक्तत्वेन सामग्र्यभावान्न भूयः करोतीति वाच्यम्—सामग्र्यभावस्य सकृदनुष्ठानेऽपि तुल्यत्वात् । अतः तन्न निमित्तमित्येव भाव्यमिति भावः । अनित्यत्वेति । अनुभवस्याभावे अज्ञानमेव पुनः स्यात् । अनुभवेनाज्ञानं निवृत्तमिति चेत्-'अज्ञानं निवृत्तम्, ज्ञानमपि नास्ती'ति कथम्, अन्यतरस्यावश्यकत्वादिति भावः ।

अथानुभवस्य फलत्ववादिना विषयः तदनुरूपो वक्तव्यः, यजेतेत्यादौ यागादिरिव; स क इति तृतीयं विषयं क्षिपति कश्चेति । स्वर्गकामो यागं कुर्यादितिवत् अनुभवकामो निष्प्रपञ्चं ब्रह्म कुर्यादित्युच्यते । तत्र प्रपञ्चनिवृत्तिविशिष्टब्रह्म विषयः । तत्र विशेष्यं वा विशेषणं वा विशिष्टं वा विषय इति विकल्प्य दूषणमिह । भव्यं भवनकर्तृ, साध्यम् । भावार्थः धात्वर्थः । भावार्थोपि सत्ता न नियोगविषयः, भव्यमपि फलं न तथेति उभयरूपत्वमपेक्षितम् । ब्रह्मणि भव्यत्वभावार्थत्वयोरभावात् प्रपञ्चनिवृत्तिरूपविशेषणस्यैव विषयत्वं वक्तव्यम्, तदपि न; तस्याः फलत्वादिति ।

विषयत्ववत् करणत्वमपि न तस्या इत्याशयेन तुरीयं करणमभिक्रुत्याह अपि चेति । विषयदूषणेनैव करणदूषणस्य कृतत्वेऽपि करणत्वाकारस्यापि दूषणं यथाक्रमम् । नियोगदूषणमार्थिकम् । करणत्वं हि फलसाधननियोगरूपापूर्वसाधनत्वम् । तत्र नियोगो नैतत्साध्यः, फलमपि न नियोगसाध्यमित्युच्यत

प्रपञ्चस्य निवर्तक इति चेत्—तत् स्ववाक्यादेव जातमिति नियोगेन न प्रयोजनम्। वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात् सपरिकरस्य नियोगस्यासिद्धिश्च। प्रपञ्चस्य निवर्त्यत्वे, प्रपञ्च[स्य] निवर्तको नियोगः किं ब्रह्मस्वरूपमेव, उत तद्व्यतिरिक्तः। यदि ब्रह्मस्वरूपमेव; निवर्तकस्य नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न संभवति। नित्यत्वेन नियोगस्य विषयानुष्ठानसाध्यत्वं च न घटते। अथ ब्रह्मस्वरूपव्यतिरिक्तः, तस्य कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च नष्ट इत्याश्रयाभावादसिद्धिः। प्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वात् न नियोगनिष्पाद्यं मोक्षाख्यं फलम्।

किंच—प्रपञ्चनिवृत्तेर्नियोगकरणस्य इतिकर्तव्यताऽभावात्, अनुपकृतस्य च करणत्वायोगात्न करणत्वम्॥ कथमितिकर्तव्यताऽभाव इति चेत्—इत्थम्। अस्येतिकर्तव्यता भावरूपा, अभावरूपा वा। भावरूपा च करणशरीरनिष्पत्ति-तदनुग्रह-कार्यभेदभिन्ना। उभयविधा च न संभवति। न हि मुद्गराभिघातादिवत् कृत्स्नस्य प्रपञ्चस्य निवर्तकः कोऽपि दृश्यत इति दृष्टार्था न संभवति। नापि निष्पन्नस्य करणस्य कार्योत्पत्तावनुग्रहः संभवति; अनुग्राहकांशसद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः। ब्रह्मणः

---

इह। स्ववाक्यादेव तत्त्वमसीत्यादित एव। सपरिकरस्य नियोगस्य—जीवरूपाश्रयविशिष्टस्यापूर्वस्य। सत्यत्वपक्षं दूषयति प्रपञ्चस्येति। निवर्त्यत्व इति। सत्यत्वात् प्रपञ्चो नियोगनिवर्त्यो भवतीति चेदित्यर्थः। अथ...व्यतिरिक्तः इति; अपूर्वं जीवनिष्ठमेव नियोगश्चेदित्यर्थः। करणत्वघटकांशद्वयमपि नेत्याह तस्येति। अत्र शाङ्करे 'उभयलिंगाधिकरणे' ( 3. 2. 21. ) यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यते, एवमपवर्गकामस्य प्रपञ्चप्रविलयः (प्रपञ्चनिवृत्तिः); यथा च तमसि व्यवस्थितं घटादितत्त्वमवबुभुत्समानेन तमः प्रविलाप्यते, एवं ब्रह्मतत्त्वमवबुभुत्समानेन प्रपञ्चः प्रविलापयितव्यः' इति तत्पक्षोपन्यासः, दूषणञ्च, 'किमग्निप्रतापसंपर्कात् घृतकाठिन्यप्रविलय इव (सत्य) प्रपञ्चप्रविलयः कर्तव्यः, आहोस्वित्.........अविद्याकृतः.........(आद्ये) स पुरुषमात्रेणाशक्यः प्रविलापयितुम्। (शक्यत्वे) आदिमुक्तेन प्रविलयः कृत इतीदानीं (किमपि न स्यात्। अन्त्ये, अनावेदिते ब्रह्मणि, ब्रह्मविज्ञानं कुरु, प्रपञ्चप्रविलयश्चेति शतकृत्व उक्तेपि न जायेत। (आवेदिते च विद्ययैव सर्वसिद्धिरिति किं नियोगेन। नियोज्योपि प्रपञ्चान्तर्गतश्चेत्, नष्ट इति कुत्र नियोगोत्पत्तिः। ब्रह्मैव चेत्, तस्य कथं नियोज्यता' इत्यादिकं भाषितमनुसंधेयम्।

इतिकर्तव्यतारूपपञ्चमविषये आह इत्थमिति। करणेति—। करणं प्रपञ्चनिवृत्तिः। तच्छरीरनिष्पादकं संनिपत्योपकारकम्; अनुग्राहकमारादुपकारकम्। कोपीति; पुरुषसाध्यः कश्चिदित्यर्थः। अनुग्राहकांशेति। अनुग्राहकस्य प्रयाजवत् करणात् पूर्वत्वेऽपि, अनुयाजादिवत् उत्तरत्वेपि अनुग्राह्य प्रपञ्चनिवृत्तिरूपकरणोत्पत्त्यनन्तरमेव कार्यतया अनुग्राहके सति कथं कृत्स्ननिवृत्तिरिति

अद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत्—तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षः सिद्ध इति न करणादिनिष्पाद्यमवशिष्यत इति पूर्वमेवोक्तम् । अभावरूपत्वे चाभावादेव न करणशरीरं निष्पादयति । (नाप्यनुग्रहकः (कम्) ।

अतो निष्प्रपञ्चब्रह्मविषयी विधिर्न संभवति ॥

अन्योऽप्याह—यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यम्—तथाऽपि ब्रह्मस्वरूपं सिध्यत्येव ॥ कुतः ॥ ध्यानविधिसामर्थ्यात् । एवमेव हि समामनन्ति—(बृ. 4 4. 5.) "आत्मा वा अरे द्रष्टव्यः...निदिध्यासितव्यः", (छा. 8. 7. 1.) "य आत्मा अपहतपाप्मा...सोऽन्वेष्टव्यः; स विजिज्ञासितव्यः", "आत्मेत्येवोपासीत" (बृ. 3. 4. 7....15.) "आत्मानमेव लोकमुपासीत" इति । अत्र ध्यानविषयो हि नियोगः स्वविषयभूतं ध्यानं ध्येयैकनिरूपणीयमिति ध्येयमाक्षिपति । स च ध्येयः स्ववाक्यनिर्दिष्ट आत्मा । स किंरूप इत्यपेक्षायां तत्स्वरूपविशेषसमर्पणद्वारेण (तै. आनं) "सत्यं ज्ञानमनन्तं ब्रह्म", (छा. 6. 2. 1.) सदेव सोम्येदमग्र आसीत्" इत्येवमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यमिति विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्यमस्त्येव । अतः, "एकमेवाद्वितीयम्", (छा. 6. 8.) "तत् सत्यं स आत्मा तत् त्वमसि श्वेतकेतो", (कठ. 4. 11.) "नेह नानाऽस्ति किञ्चन" इत्यादिभिः, ब्रह्मस्वरूपमेकमेव सत्यम् तद्व्यतिरिक्तं सर्वं मिथ्येत्यवगम्यते । प्रत्यक्षादिभिः भेदावलम्बिना,च कर्मशास्त्रेण भेदः प्रतीयते । भेदाभेदयोः परस्परविरोधे सति अनाद्यविद्यामूलत्वेनापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इति निश्चीयते । तत्र ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्याकृतविविधभेदाद्वितीयज्ञानैकरसब्रह्मरूपमोक्षः प्राप्यते ।

न च वाक्यात् वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः; अनुपलब्धेः; विविधभेददर्शनानुवृत्तेश्च । तथा च सति श्रवणादिविधानमनर्थकं स्यात् ॥ अथोच्येत—

---

भावः । अभावरूपेतिकर्तव्यतापक्षं खण्डयति अभावेति । अभावादेवेति । प्रपञ्चस्य मिथ्यात्वेन विद्यामात्रतस्तन्निवृत्तिरिति नान्यापेक्षाऽस्ति । किञ्च यथा, नानृतं वदेदित्यनृतवदननिवृत्तेः क्रत्वर्थत्वं तत्प्रतियोगिनः अनृतवदनस्य क्रतुवैगुण्यकरत्वात्—तद्वदिह शमादिरूपनैष्कर्म्यप्रतियोगिनः जातायां प्रपञ्चनिवृत्तौ वैगुण्यकरत्वमपि न, प्रपञ्चनिवृत्तिसाध्यस्यान्यस्याभावादिति भावः ॥

निष्प्रपञ्चं कुरु इत्यस्य निष्प्रपञ्चतानुकूलव्यापारं कुरु इत्यर्थः । स च ध्यानमिति, निदिध्यासितव्य इत्यादिरेव विधिर्भवतीति ध्यानविधिवादिपक्षमारभते अन्योऽपीति । भेदाभेदयोः परस्परविरोधे इति । एतद्विरोधस्थापनार्थमेवाविरोधवादिभास्करमतखण्डनमुत्तरत्रेत्यवधेयम् । ब्रह्मध्याननियोगेन । नियोगोऽपूर्वम् ; तत्फलं साक्षात्कारः ॥ अथोच्येतेत्यादिना शांकरपक्षानुवादः ।

साक्षात्कारो वाक्यजन्य एव, न नियोगजन्यः ; मुक्तिरपि न नियोगजन्येति ध्यानविधिखण्डनं

'रज्जुरेषा न सर्पः' इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात् रज्जुसर्पवत् बन्धस्य च (स्यापि) मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता; न नियोगेन। नियोगसाध्यत्वे मोक्षस्यानित्यत्वं स्यात्, स्वर्गादिवत्। मोक्षस्य नित्यत्वं हि सर्ववादिसंप्रतिपन्नम्। किञ्च धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्तचतुर्विधशरीरसम्बन्धरूपसंसारफलत्वमवर्जनीयम्। तस्मान्न धर्मसाध्यो मोक्षः। तथा च श्रुतिः, (छा. 8. 12. 1.) "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति। अशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणात्, न धर्मसाध्यमशरीरत्वमिति विज्ञायते। न च नियोगविशेषसाध्यफलविशेषवत् ध्याननियोगसाध्यमशरीरत्वम्; अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात्। यथाऽऽहुः श्रुतयः (कठ. 2. 22.) "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति", (मुण्ड. 2. 1. 2.) "अप्राणो ह्यमनाः शुभ्रः", (बृ. 6. 3. 5.) "असङ्गो ह्ययं पुरुषः" इत्याद्याः। अतोऽशरीरत्वरूपो मोक्षो नित्य इति न धर्मसाध्यः। तथा च श्रुतिः—"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताद्भव्याच्च यत् तत् पश्यसि तद् वद" इति॥

अपिच—उत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न संभवति। न तावदुत्पाद्यः; मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात्। नापि प्राप्यः; आत्मस्वरूपत्वेन ब्रह्मणो नित्यप्राप्तत्वात्। नापि विकार्यः; दध्यादिवदनित्यत्वप्रसङ्गादेव। नापि संस्कार्यः; संस्कारो हि दोषापनयनेन वा गुणाधानेन वा साधयति। न तावत् दोषापनयनेन; नित्यशुद्धत्वाद् ब्रह्मणः। नाप्यतिशयाधानेन; अनाधेयातिशयस्वरूप-

---

प्रकृताधिकरणशांकरभाष्यारूढं ध्यानविधिवादी खण्डनायानुवदति एतदादिना पदसमुदायेन सिध्यतीत्यन्तेन। नियोगसाध्यत्वे=मध्ये साक्षात्कारोऽनपेक्षित इति साक्षादेव नियोगसाध्यत्वस्वीकारे। प्रियाप्रिययोर्द्वयोरप्यनिष्टत्वात् अनिष्टनिवृत्तिरूपमोक्षस्य ध्यानविधिफलत्वात् मध्यभावि अशरीरत्वमपि तत्फलम्, सशरीरत्वमिव धर्माधर्मयोरित्यत्राह न चेति। 'तदेतत् अशरीरत्वं मोक्षाख्यं पारमार्थिकं कूटस्थनित्यं स्वयंज्योतिस्स्वभावम्, यत्र धर्माधर्मौ नोपावर्तेते, सह कार्येण कालत्रयञ्च' इत्युक्त्वा शाङ्करोदाहृतां तत्परश्रुतिं दर्शयति तथा चेति। अन्यत्रेति। धर्मफलात् सुखात् अधर्मफलाद् दुःखात् कृताकृतात् कार्यकारणरूपात् परिणामिनित्याच्चान्यत् भूतकालाद्यनवच्छिन्नं च यत्, तद् वदेत्यर्थः। उक्तस्य मोक्षस्य ब्रह्मात्मरूपत्वेन सर्वविधसाध्यत्वायोगं विशदयति अपिचेत्यादिना। सामान्यतः स्थितं कर्मचातुर्विध्यमेव गुणकर्मस्थले दर्शितं मीमांसकैः। स्थितद्रव्यप्रत्यभिज्ञाने संस्कार्यत्वम्। क्षीरं विनाश्य दध्युत्पत्तिश्चेत्, विकार्यमित्युच्यते। एतदुभयैकीकरणेन चातुर्विध्यमुपेक्ष्य प्राप्यं

त्वात् । नित्यनिर्विकारत्वेन स्वाश्रयायाः पराश्रयायाश्च क्रियाया अविषयतया न, निर्घर्षणेनाऽऽदर्शादिवदपि संस्कार्यत्वम् ॥ न च देहस्थया स्नानादिक्रियया आत्मा संस्क्रियते; किं त्वविद्यागृहीतः तत्सङ्घातोऽहङ्कर्ता । तत्फलानुभवोऽपि तस्यैव । न चाहङ्कर्तैवाऽऽत्मा ; तत्साक्षित्वात् । तथा च मन्त्रवर्णः (श्वे. 4. 6.) "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति" इति । (कठ. 3. 4.) "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः", (श्वे. 6. 11.) "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च", (ई. 8.) "स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्" इति च अविद्यागृहीतादहङ्कर्तुरात्मस्वरूपमनाधेयातिशयं नित्यशुद्धं निर्विकारं निष्कृष्यते । तस्मादात्मस्वरूपत्वेन न साध्यो मोक्षः ॥ ८

यद्येवम्, किं वाक्यार्थज्ञानेन क्रियत इति चेत्—मोक्षप्रतिबन्धनिवृत्तिमात्रमिति ब्रूमः । तथा च श्रुतयः (प्रश्न 6. 7.) "त्वं हि नः पिता, योऽस्माकमविद्यायाः परं पारं तारयसीति", "श्रुतं ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि । तं मा भगवान् शोकस्य पारं तारयतु" (छा. 7. 1. 3; 7. 26. 2.) "तस्मै मृदितकषायाय

---

निर्वर्त्यं विकार्यमिति त्रैधमपि वैयाकरणैर्वर्णितम् । **पराश्रयायाश्चे**ति । स्वस्मिन् क्रियोत्पत्तौ सविकारत्वं स्पष्टम् । अन्यक्रियाविषयत्वे क्रियाजन्यसंयोगादिरेव विकारः । **आदर्शे**ति । आदर्शव्यापारेण वा हस्तव्यापारेण वा भास्वरत्वमादर्शस्य । आत्मनः संस्कार्यत्वरूपसाध्यत्वम्, 'यस्यैते चत्वारिंशत् संस्काराः' इत्यादिबहुशास्त्रसिद्धमितीदं निरस्यति **न च देहे**ति । **देहस्थये**त्यनेन क्रियाया अविषयोऽपि क्रियाजन्यसंस्कारभाक् भवतीति ज्ञाप्यते । **तयोः** अहङ्कारजीवयोर्मध्ये । ननु 'पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' इति भोक्तृत्वमात्मन एवेत्यत्राह **आत्मेन्द्रिये**ति । **आत्मा** शरीरम् । संहतस्यैव भोक्तृत्वमुक्तम् । शुद्धस्य स्वरूपस्य संस्कार्यत्वं न भवतीति भावः । इदं विशदयति **एक** इति । पूर्वार्धे जीवेश्वरैक्यमुक्तम्; **कर्माध्यक्ष** इति कर्तृत्वाभावः; **अधिवास** इति भ्रमाधिष्ठानत्वम्; **साक्षी**ति परभासकत्वम्; **चेते**ति स्वप्रकाशचैतन्यरूपत्वम्; **केवल** इति सजातीयविजातीयविशेषराहित्यम्; **निर्गुण** इति ज्ञानादिस्वगतविशेषराहित्यम् । **शुक्र**मिति । अत्र **भामती**—'**शुक्रं**-दीप्तिमत्, **अव्रणम्**—दुःखरहितम्, **अस्नाविरम्**—अविगलितम्, अविनाशीति यावत्' इति । **शांकरभाष्ये, तयो**रित्यादिश्रुतिद्वयमहङ्कारस्य भोक्तृत्वाय, **एक** इत्यादिद्वयं शुद्धस्य तदभावाय चोपात्तम् । अत्र तु आत्मेन्द्रियेत्यपि उपरितनेनैकीकृतम् ; **पूर्व**मितिशब्देन वाक्यसमाप्तेः **आत्मेत्यादेः निष्कृष्यत** इत्यन्तस्यैकवाक्यतायाश्च स्पष्टं दर्शनात् । **आत्मे**ति वाक्यस्य देहाद्यभावे आत्मनो भोक्तृत्वं न भवतीत्युपपादनार्थतायाश्च प्रकरणतोऽवगमः कठश्रुतौ द्रष्टव्यः ।

ननु मोक्षानित्यत्वापादनं नियोगसाध्यत्वपक्ष इव वाक्यार्थज्ञानसाध्यत्वपक्षेऽपि तुल्यमित्याशयेन पृच्छति **यद्येव**मिति । **निवृत्तिमात्र**मिति । नैतद् भवतः सुवचम्, नियोगस्य ज्ञानातिरिक्तत्वेन

तमसः पारं दर्शयति भगवान् सनत्कुमारः" इत्याद्याः । तस्मात् नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते । निवृत्तिस्तु साध्याऽपि प्रध्वंसाभावरूपा न विनश्यति । (मुण्ड. 3. 2. 9.) " ब्रह्म वेद ब्रह्मैव भवति ", ( श्वे. 3. 8. ) " तमेव विदित्वाऽति मृत्युमेति" इत्यादिवचनं मोक्षस्य वेदनानन्तरभावितां प्रतिपादयत् नियोगव्यवधानं प्रतिरुणद्धि । न च विदिक्रियाकर्मत्वेन वा ध्यानक्रियाकर्मत्वेन वा कार्यानुप्रवेशः, उभयविधकर्मत्वप्रतिषेधात् । ( केन. 1. 4. ) "अन्यदेव तद् विदितादथो अविदितादधि", ( बृ. 4. 4. 14. ) " येनेदं सर्वं विजानाति, तं केन विजानीयात् " इति, (केन.1.5.) "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति च ॥

न चैतावता शास्त्रस्य निर्विषयत्वम् ; अविद्याकल्पितभेदनिवृत्तिपरत्वात् शास्त्रस्य । न हीदन्तया ब्रह्म विषयीकरोति शास्त्रम् । अपि तु अविषयं प्रत्यगात्मस्वरूपं प्रतिपादयत् अविद्याकल्पितज्ञानज्ञातृज्ञेयविभागं निवर्तयति । तथा च शास्त्रम्—( बृ. 5. 4. 2. ) " न दृष्टेर्द्रष्टारं पश्येः " इत्येवमादि ।

न च ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम् ; स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात् तेषाम् । न च ज्ञानमात्रात् बन्धनिवृत्तिर्न दृष्टेति वाच्यम् ; बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः ।

अत एव न, शरीरपातादूर्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम् । न हि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते । यदि शरीरसंम्बन्धः पारमार्थिकः, तदा हि तद्विनाशापेक्षा । स तु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः । यस्य

---

तत्साध्यत्वस्य प्रतिबन्धकनिवृत्तौ स्वीकारे प्रतिबन्धकस्य प्रपञ्चादेः सत्यत्वापत्तेरित्याशयः । **तमेव विदित्वेति** ; तं विदित्वैव, वेदनसमनन्तरमेवेत्यर्थः । ननु वाक्यार्थज्ञानपक्षेपि, " स वै वेदितव्यः " इति विधिविषयत्वमवर्जनीयम् ; एवञ्च, "निदिध्यासितव्यः" इति ध्यानविधिविषयत्वमप्यस्तु इत्यत्राह **न चेति** । ज्ञानविषयत्वस्यैवाभावे का कथा विधिविषयत्वस्येति प्रत्याह **उभयकर्मत्वेति** । **निर्विषयत्वमिति** । शास्त्रयोनित्वादिति सूत्रविरोधश्च विवक्षितः । **भेदनिवृत्तीति** । गौरिव शृङ्गग्रहणेन न ब्रह्म शास्त्रेणेदन्तया ग्राह्यते । जगत्कारणत्वादितटस्थलक्षणविशिष्टतया तु ब्रह्म प्रतिपादयत् शास्त्रं तस्य तत्त्वमसीतिप्रत्यगात्मनैक्यं बोधयत् विशेषणांशानां मिथ्यात्वं ज्ञापयतीति सर्वनिवृत्तिः । एवं प्रत्यगात्मातिरिक्तब्रह्मनिषेधात् स्वयम्प्रकाशत्वेनाविषयभूतं यत् प्रत्यगात्मस्वरूपम्, तन्मात्रपरिशेषणात् अविषयत्वमेव शास्त्रोक्तं भवतीति भावः । **ज्ञानादेवेति** । यत् पुरुषतन्त्रं विधितन्त्रं वा न भवति, किं तु वस्तुतन्त्रं वाक्यश्रवणसमनन्तरं स्वयमेव जायमानं वाक्यार्थज्ञानम्, तस्मादेवेत्यर्थः । **विकल्पविमुखीकरणेति** ; विषयान्तरज्ञानोत्पत्त्यर्हतया या मनःस्थितिः, तद्विघटनेत्यर्थः । ननु शरीरपातपर्यन्तं ज्ञानिनो बद्धत्वस्य प्रत्यक्षसिद्धत्वात् कथं तद्विरुद्धमुच्यते इत्यत्राह **अत एवेति** ।

तु बन्धो न निवृत्तः, तस्य ज्ञानमेव न जातमित्यवगम्यते; ज्ञानकार्यादर्शनात्। तस्मात्, शरीरस्थितिर्भवतु वा; मा वा; वाक्यार्थज्ञानसमनन्तरं मुक्त एवासौ।

अतो न ध्याननियोगसाध्यो मोक्ष इति न ध्यानविधिशेषतया ब्रह्मणस्सिद्धिः। अपि तु, (तै. आनं.1.) "सत्यं ज्ञानमनन्तं ब्रह्म", (छा. 6. 7.) "तत् त्वमसि", (मा. 1. 2.) (बृ 4. 5. 19.) "अयमात्मा ब्रह्म" इति तत्परेणैव पदसमुदायेन सिध्यतीति—

तदयुक्तम्; वाक्यार्थज्ञानमात्रात् बन्धनिवृत्त्यनुपपत्तेः। यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः, तथाऽपि बन्धस्यापरोक्षत्वात् न परोक्षरूपेण वाक्यार्थज्ञानेन स बाध्यते, रज्ज्वादौ अपरोक्षसर्पप्रतीतौ वर्तमानायाम्, 'नायं सर्पो रज्जुरेषा' इत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात्। आप्तोपदेशस्य तु भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्ष्य(क्ष)निमित्तप्रवृत्तिहेतुत्वेन। तथा हि-रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषः, 'नायं सर्पो रज्जुरेषा' इत्याप्तोपदेशेन तद्वस्तुयाथात्म्यदर्शने प्रवृत्तः तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्तते।

न च शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्; तस्यानिन्द्रियत्वात्। ज्ञानसामग्रीष्विन्द्रियाण्येव ह्यपरोक्ष साधनानि (ज्ञानजनकानि)। न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमनननिदिध्यासनविमुखीकृतबाह्यविषयस्य[पुरुषस्य]वाक्यमेवापरोक्षज्ञानं जनयतीति; निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां स्वविषयनियमातिक्रमादर्शनेन तदयोगात्।

न च ध्यानस्य वाक्यार्थज्ञानोपायता; इतरेतराश्रयत्वात्—वाक्यार्थज्ञाने जाते तद्विषयध्यानम्, ध्याने निर्वृत्ते वाक्यार्थज्ञानमिति। न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम्। तथा सति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात्। न ह्यन्यध्यानमन्यौन्मुख्यमुत्पादयति। ज्ञातार्थस्मृतिसंततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयम्; ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासंभवात्। न च—ध्यानमूलं ज्ञानं वाक्यान्तरजन्यम्; निवर्तकज्ञानं तत्त्वमस्यादिवाक्यजन्यम्—इति युक्तम्। ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानं तत्त्वमस्यादिवाक्यजन्यज्ञानेनैकविषयम्, भिन्नविषयं वा। एकविषयत्वे, तदेवेतरेतराश्रयत्वम्। भिन्नविषयत्वे, ध्यानेन तदौन्मुख्यापादनासंभवः। किञ्च ध्यानस्य ध्येयध्यात्राद्यनेक-

---

ध्यानविधिवादी जरदद्वैती शांकरपक्षं जीवन्मुक्तिसहितं खण्डयति तदयुक्तमित्यादिना। शाब्दापरोक्षवादं खण्डयति **न च शब्द एवेति**। अन्योन्याश्रयदोषपरिहाराय ध्यानात् पूर्वं वाक्यार्थज्ञानं न स्वीकुर्म इत्यत्राह **ज्ञातार्थेति**। **तदेवेति**। न हि वाक्यव्यक्तिघटनेन ज्ञानध्यानयोः कार्यकारणभावः, किंतु सामान्येन। अन्यथा पुरुषभेदेन वाक्यव्यक्त्यनियमात् कार्यकारणभावासिद्धिश्चेति भावः। अदृष्टार्थध्यानविध्यावश्यकत्वमाह **किञ्चेति**। विषयान्तरविमुखीकरणमन्तरा वाक्यार्थ-

प्रपञ्चापेक्षत्वात् निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवण मनन निदिध्यासनविधीनामानर्थक्यमेव ॥

यतो वाक्यादापरोक्ष्यज्ञानासंभवात् वाक्यार्थज्ञानेनाविद्या न निवर्तते, तत एव जीवन्मुक्तिरपि दूरोत्सारिता । का चेयं जीवन्मुक्तिः ? सशरीरस्यैव मोक्ष इति चेत्—' माता मे वन्ध्या ' इतिवत् असङ्गतार्थं वचः ; यतः सशरीरत्वं बन्धः, अशरीरत्वमेव मोक्ष इति त्वयैव श्रुतिभिरुपपादितम् ॥ अथ सशरीरत्वप्रतिभासे वर्तमाने यस्यायं प्रतिभासो मिथ्येति प्रत्ययः, तस्य सशरीरत्वनिवृत्तिरिति ॥ न, मिथ्येति प्रत्ययेन सशरीरत्वं निवृत्तं चेत्, कथं सशरीरस्य मुक्तिः ? । अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं

---

ज्ञानासंभवात् विधिमन्तरैव ध्यानं प्राप्तमिति वदतां दृष्टविधयैव ध्यानोपयोगः ; विध्यभावेऽदृष्टायोगात् । मनःप्रणिधानेनेतरविषयानुभवव्यावर्तनेऽपि ध्यानस्य ध्येयध्यातृुपकरणादिसापेक्षत्वेन इदमहमेनदर्थमेवं धारयामीति मानसव्यवसायो बह्वर्थविषयकोऽनुवृत्त एव स्यात् । तथा प्रणिधानेन सर्वस्मृतिभङ्गे वाक्यस्मरणस्याप्यभावात् वाक्यमर्थज्ञानं न जनयेदिति तत्स्मरणमनुवर्तनीयम् । तच्चानेकाक्षर-तत्पौर्वापर्य-पद-प्रकृति-विभक्ति-तदर्थ-तच्छक्त्याकांक्षाद्यनेकार्थस्मरणगर्भमिति भेदकदम्बज्ञानमेव । तथाऽर्थोऽपि निष्प्रपञ्चब्रह्मात्मैकत्वरूपः ; न ब्रह्ममात्रम्, तस्य स्वयम्प्रकाशस्य प्रकाशेऽपि जगन्निवृत्त्यदर्शनात् । अतः स्थूलत्वाद्यात्मक प्रपञ्चरूपप्रतियोगि-अस्थूलत्वादिरूप तदभाव-ब्रह्मरूपधर्मि-निर्विशेषप्रत्यागात्म-तत्तादात्म्याद्यनेकार्थविषयस्मृतिसंतानरूपध्यानं कथं न भेदसंदोहानालीढं भवति ? तादृशस्य च ध्यानस्याभिमतज्ञानकारणत्वं न कुत्रापि क्लृप्तम्, नतरां वाक्यजन्यज्ञानकारणत्वमिति कथं दृष्टविधयोपयोगः । न च ध्यानमिदं किञ्चित्स्वल्पकालप्रणिधानमात्रम् ; किन्तु अहरहरभ्यसनीयमाप्रयाणात् दीर्घकालनैरन्तर्यसेवनीयञ्चेति भावः ।

' वाक्यार्थज्ञानसमनन्तरं मुक्त एवासौ ' इति प्रागुक्तां जीवन्मुक्तिमप्ययमद्वैती निरस्यति यत इति । अशरीरत्वं मोक्ष इति प्रागुक्तत्वात् सशरीरत्वाशरीरत्वयोर्मिथोविरोध इत्याह मातेति । मातृशब्दस्य मातृत्वभ्रान्तिपदमित्यर्थवर्णनेन निर्वाहनिषेधाय मे इत्यधिकमुक्तम् । कारणबलेनाशरीरत्वसंपत्त्यभ्युपगमे तदा सशरीरत्वरूपविशेषणांशहानिरित्याह अथेत्यादिना । तस्येति । अहं सशरीर इति ज्ञानं मिथ्येति प्रत्ययवत इत्यर्थः । तादृशप्रत्ययजन्यत्वं सशरीरत्वनिवृत्तेर्विवक्षितम् । ननु अशरीरत्वमेव नित्यम् । अतः सशरीरत्वं कस्यापि नास्ति । परन्तु सशरीरत्वप्रतिभासो बद्धानामस्ति, स नास्ति जीवन्मुक्तस्येति विशेष इत्यत्राह अजीवतोऽपीति । एवं बद्धवैलक्षण्येऽपि मुक्तवैलक्षण्यं जीवन्मुक्ते कथम्, उभयोरशरीरत्वस्य सशरीरोऽहमिति प्रतिभासराहित्यस्य चाविशिष्टत्वादित्यर्थः ॥ कोऽयमिति । सशरीरत्वदलपरिष्कारः कः । सशरीरत्वज्ञानं मिथ्यार्थविषयकमिति ज्ञानं जीवन्मुक्तस्यास्तीति चेत्—अस्तु ; तत् किं मुक्तत्वम्, उत सशरीरत्वम् । उभयमपि न भवति, यथाक्रमं मुक्ते बद्धसामान्ये चाभावात् । जीवन्मुक्तत्वं हि बद्धमुक्तोभयगताकारद्वय-

जीवन्मुक्तिरिति विशेषः ॥ अथ सशरीरत्वप्रतिभासो बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते, स जीवन्मुक्त इति चेत्—न; ब्रह्मव्यतिरिक्तसकलवस्तुविषयत्वाद् बाधकज्ञानस्य। कारणभूता(तोऽ)विद्याकर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति, बाधितानुवृत्तिर्न शक्यते वक्तुम्। द्विचन्द्रादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वात् द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता। किञ्च, (छा. 6. 14. 2.) "तस्य तावदेव चिरम्, यावन्न विमोक्ष्ये. अथ संपत्स्ये" इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीयं श्रुतिः जीवन्मुक्तिं वारयति। सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता—(आप. ध. 2. 21. 13-17.) "...वेदान् इमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्", "बुद्धे क्षेमप्रापणम्", "तच्छास्त्रैर्विप्रतिषिद्धम्", "बुद्धे चेत् क्षेमप्रापणम्, इहैव न दुःखमुपलभेत", "एतेन परं व्याख्यातम्" इति। अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः। अतः सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न संभवति ॥

---

समुच्चय इति प्रश्ने तात्पर्यम्। ननु अशरीरत्वं यथाश्रुतमेव विशेष्यम्। सशरीरत्वं तु सशरीरोऽहमिति प्रतिभासवत्त्वम्। इदमजीवन्मुक्ते न भवति। कथं तत्त्वज्ञाने बाधके सति प्रतिभासोऽयमिति चेत्—बाधितोऽप्यनुवर्तत इति स्वीकुर्मः। बद्धे तु अबाधितोऽनुवर्तत इति विशेष इति शङ्कते अथेति।

जीवन्मुक्तौ श्रुत्यादिविरोधमपि दर्शयति किञ्चेति। तस्येति। तस्य मे इत्यर्थः। एतदर्थविमर्शोऽस्मत्परिष्कारे द्रष्टव्यः। तच्छास्त्रैरिति। अत्र वेदानित्यारभ्य श्रीभाष्येऽनुवादात्, बुद्धे क्षेमप्रापणं शास्त्रैर्विप्रतिषिद्धमित्येकसूत्रमकृत्वा तदिति पृथक्करणात् वेदानिति सूत्रमपि पूर्वपक्षपरमिति, तदिति तत्सर्वनिषेधारम्भ इति च ज्ञायते। तदयमर्थो भाष्यनिगूढः—'सर्ववेदाध्ययनतद्विचारादिकमनपेक्ष्य इहामुत्रफलभोगविरागसंपत्त्या संन्यस्य आत्मश्रवणं कुर्यात्; ततो वाक्यार्थज्ञानमात्रेण मोक्षप्राप्तिः' इति केचित्—तत् वेदाध्ययनतद्विचारानन्तरं परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायादिति शास्त्रगतिविप्रतिषिद्धम्; वैराग्यस्यापेक्षितत्वेऽपि संन्यासपर्यन्तवैराग्ये सत्येव श्रवणं कार्यमित्येतच्च श्वेतकेतुप्रभृतीनां पित्रादितो विद्याग्रहणप्रतिपादकशास्त्रविप्रतिषिद्धम्। अतः परित्यागः श्रवणाय नापेक्षितः। वाक्यार्थज्ञानमात्रान्मोक्ष इति च मनन-ध्यान-शरीरवियोग-लोकान्तरगमन-तदनन्तरमोक्षप्रतिपादकसर्वशास्त्रविप्रतिषिद्धम्। तथा, अत्रैव मुक्त इति वादांशः प्रत्यक्षविरुद्धश्चेति। बुद्धे चेत् क्षेमप्रापणमिति पुनरनुवादः सूत्रद्वयदर्शितपूर्वपक्षे उत्तरांशमात्रेऽनुभवविरोधज्ञापनाय। इह अत्र लोके; एतज्जन्मनीति चार्थः। परम्; विदुषो जन्मान्तरसद्भावोऽपीत्यर्थः; वसिष्ठादेर्दर्शनादिति भावः। ज्ञानमात्रात् ध्यानादिरहितात्। शास्त्रैरितिबहुवचनञ्चेया भूयोनुरोधेन कतिपयवाक्यापातार्थत्याज्यता।

ननु स्यादयं सिद्धान्ते सूत्रार्थः; सूत्रस्वारस्यात्, उज्ज्वलाख्यव्याख्यानुरोधाच्च सूत्रद्वयस्यापि हतविधिनिषेधाधिकारिविषयत्वात्। 'सर्वतः परिमोक्षमेके' इति पूर्वसूत्रदर्शितैकीयमतविवरणं सूत्रद्वयमिति पक्षे च सुतराम्। अथापि ध्यानविधिवादी अद्वैती कथं प्रथमसूत्रार्थखण्डनं मोक्षार्थगत्या-

तस्मात् ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः । न च नियोगसाध्यत्वे मोक्षस्यानित्यत्वप्रसक्तिः ; प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात् ।

किञ्च, न नियोगेन साक्षात् बन्धनिवृत्तिः क्रियते ; किंतु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्ष्यज्ञानेन । नियोगस्तु तदापरोक्ष्यज्ञानं जनयति ॥ कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत्—कथं वा भवतोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम् ? ॥ मनोनैर्मल्यद्वारेणेति चेत्—ममापि तथैव ॥ मम तु निर्मले मनसि शास्त्रेण ज्ञानमुत्पाद्यते । तव तु नियोगेन मनसि निर्मले ज्ञानसामग्री वक्तव्येति चेत्—ध्याननियोगनिर्मलं मन एव साधनमिति ब्रूमः ॥ केनावगम्यते इति चेत्—भवतो वा, 'कर्मभिर्मनो निर्मलं भवति; निर्मले मनसि श्रवणमनननिदिध्यासनैः सकलेतरविषयविमुखस्यैव शास्त्रं निवर्तकज्ञानमुत्पादयती'ति केनावगम्यते ? ॥ (बृ. 6. 4. 22.) "विविदिषन्ति यज्ञेन दानेन तपसानाशकेन", (बृ. 6. 5. 6.) "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", (मुण्ड. 3. 2. 9) "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिभिः शास्त्रैरिति चेत्—ममापि, "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", (तै. आनं.) "ब्रह्मविदाप्नोति परम्", (मुण्ड. 3. 1. 8.) "न चक्षुषा गृह्यते नापि वाचा", (6....?) "मनसा तु विशुद्धेन", (कठ. 6. 9. "हृदा मनीषा मनसाऽभिक्लृप्तः" इत्यादिभिः शास्त्रैर्ध्याननियोगेन मनो निर्मलं भवति; निर्मलं च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यते—इति निरवद्यम् ॥

'नेदं यदिदमुपासते' इत्युपास्यत्वं प्रतिषिद्धमिति चेत्—नैवम् । नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते ; अपि तु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यते । यदिदं जगदुपासते

---

दिकञ्च संमन्यते इति चेत्—यथार्ह सोपि निर्बहेत् । ध्यानविधित्यागिभिरद्वैतिभिस्तत एव तदर्थयज्ञदानादेः तदर्थकवेदानुवचनस्य च त्यक्तत्वेऽपि, स्वयं तत्त्यागमसंमन्यमानः तत्रापि सूत्रविरोधं प्रदर्शयितुमेव वेदानित्यादिकमुदाजहार । अत एव विवादाभावात् 'सत्यानृते सुखदुःखे' इति प्रथमांशं सूत्रे विसृज्य 'वेदान्' इतीदमुपक्रम्यानुवाद । आह चात एव अतो ज्ञानमात्रादित्यादि ।

निवृत्तिमात्रस्यैवेति । भावपदार्थस्य साध्यत्वे ह्यनित्यत्वम् ; न ध्वंसस्य । अन्यथा प्रायश्चित्तनाशितस्य पापस्य पुनरुन्मज्जनं स्यादिति भावः । ननु तथापि नियोगसाध्यत्वे प्रतिबन्धकस्य मिथ्यात्वभङ्ग इत्यत्राह किञ्चेति । इति निरवद्यमिति । ध्याननियोगाङ्गीकारमात्रेण जगत्सत्यत्वापत्तिरूपावद्यं वा, प्रत्यक्षस्य वाक्यजन्यत्वास्वीकारे करणाभावरूपावद्यं वा नास्ति । प्रत्युत समन्वयसूत्रस्थभाष्यभामत्यादिकमेव सावद्यम्—सहकार्यन्तरविधिसूत्रविरोधात् ; तद्भाष्यभामत्यादिव्याहतत्वात् ; जीवन्मुक्तिविरोधिश्रुतिस्मृतिलोकविरोधाच्चेति भावः । पूर्वं वेद्यत्वमुपास्यत्वमित्युभयं प्रतिषिद्धमस्तीति भविविवादिनोक्तम् । तत्र स्वयमुपासनाविधिस्वीकारात् उपास्यत्वांशप्रतिषेधमात्रस्य समाधानमाह नेदमिति । जगद्वैरूप्यम्—जगद्वैलक्षण्यम् । वाक्यस्य नोपासत इत्यत्र न नैर्भर्यम्, किं तु नेदं

प्राणिनः, नेदं ब्रह्म तदेव ब्रह्म त्वं विद्धि, यत् वाचाऽनभ्युदितम्, येन वागभ्युद्यते इति वाक्यार्थः। अन्यथा, 'तदेव ब्रह्म त्वं विद्धि' इति विरुध्यते। ध्यानविधिवैयर्थ्यं च स्यात्।

अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः॥

यदपि कैश्चिदुक्तम्, भेदाभेदयोर्विरोधो न विद्यते इति—तदयुक्तम्। न हि शीतोष्णतमःप्रकाशादिवत् भेदाभेदावेकस्मिन् वस्तुनि सङ्गच्छेते॥

अथोच्येत—सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्। सर्वञ्च भिन्नाभिन्नं प्रतीयते—कारणात्मना जात्यात्मना चाभिन्नम्, कार्यात्मना व्यक्त्यात्मना च भिन्नम्। छायातपादिषु विरोधः सहानवस्थानलक्षणः, भिन्नाधारत्वरूपश्च। कार्यकारणयोर्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते। प्रत्युत एकमेव वस्तु द्विरूपं प्रतीयते, यथा 'मृदयं घटः', 'खण्डो गौः', 'मुण्डो गौः' इति। न चैकरूपं किञ्चिदपि वस्तु लौकिकैः (लोके) दृष्टचरम्। न च तृणादेर्ज्वलनादिवत् अभेदो भेदोपमर्दी दृश्यत इति न वस्तुविरोधः; मृत्सुवर्णगवाश्वाद्यात्मनाऽवस्थितस्यैव घटमकुटखण्डवडबाद्यात्मना चावस्थानात्। न चाभिन्नस्य भिन्नस्य च वस्तुनोऽभेदो भेदश्च एक एवाकार इतीश्वराज्ञा॥ प्रतीतत्वादैकरूप्यं चेत्—प्रतीतत्वादेव

---

यदिदमित्यत्र। यदिदं सविशेषं नाना दृश्यमानमुपास्यमानञ्च, तद्भिन्नं वाचा सम्यक्कथ्यमानादन्यत्, ज्ञानरूपतया वाग्व्यवहारकारणभूतञ्च ब्रह्म विद्धीत्यर्थः। वेदनविधिरपि ध्यानविधिरेवेत्याशयश्च सूच्यते **अन्यथे**ति वाक्येन। अत एव च **ध्यानविधी**त्यस्य वाक्यान्तररूपध्यानविधीत्यर्थः **टीकाया**मुक्तः।

नन्वद्वैते स्थित्वा ध्यानविधिसमर्थनं युक्तम्। किन्तु निष्प्रपञ्चीकरणनियोगवादिवत् अविधेयज्ञानवादिवच्च प्रपञ्चमिथ्यात्वस्वीकारेण प्रपञ्चलयवर्णनं न युज्यते; मिथ्यात्वे प्रमाणाभावात्॥ प्रत्यक्ष-कर्मशास्त्रादिप्रसिद्धस्य भेदस्य शास्त्रविशेषसिद्धस्याभेदस्य च मिथोविरोधादेकतरस्योपेक्ष्यत्वे भेदस्याविद्यामूलकतयैवोपपत्त्या मिथ्यात्वनिर्णय इति तु न, भेदाभेदयोर्विरोधस्यैवाभावादिति **भास्कर**प्रत्यवस्थानं निरसितुमनुवदति **यदपी**ति। प्रत्यवस्थानमिदम्, 'भेदाभेदयोः परस्परविरोधे सति' इति प्रागुक्तवाक्याक्षेपेण प्रवृत्तमिति भाष्य एव परिहारारम्भे दर्शयिष्यते। **सहानवस्थानमिति।** सहेत्यस्य युगपदित्यर्थः। एककालावच्छेदेनैकत्रावर्तमानत्वमेको विरोधः। सामान्यत एवैकाधिकरणावृत्तित्वपर्यवसितं भिन्नाधारत्वमन्यो विरोधः। आद्यः सामान्यतः तमःप्रकाशयोः। अन्यः तत्तत्तमोव्यक्तितत्तत्प्रकाशव्यक्त्योः, शीतोष्णस्पर्शयोश्च। तृतीयोऽपि विरोधः वध्यघातकभावाख्यः; तृणदहनादिषु अयम्। अनयोः क्षणमेकं सहावस्थानमपि भवेत्। तत्र यथा संयोगेन तमसः संयोगेन प्रकाशस्य च सहानवस्थानादि, तथा तादात्म्येन कार्यजात्यादेः तादात्म्येन कारणव्यक्त्यादिना सहेति न वक्तुमुचितम्। तदाह **कार्यकारणयो**रिति। **न वस्तुविरोध** इति त्रिविधविरोधाभावोपसंहारः। **ईश्वराज्ञे**ति। सामानाधिकरण्यार्हयोरपि क्वचिदाज्ञावशात् वैयधिकरण्यं भवेत्; नैवमिह; सामाना-

भिन्नाभिन्नत्वमिति द्वैरूप्यमप्यभ्युपगम्यताम्। न हि विष्फारिताक्षः पुरुषो घटशरावखण्ड-मुण्डादिषु वस्तुषूपलभ्यमानेषु 'इयं मृत्, अयश्च(अयं) घटः', 'इदं गोत्वम्, इयश्च(इयं) व्यक्तिः' इति विवेक्तुं शक्नोति। अपि तु, 'मृदयं घटः,' 'खण्डो गौः' इत्येव प्रत्येति॥ अनुवृत्तिबुद्धिबोध्यं कारणमाकृतिश्च, व्यावृत्तिबुद्धिबोध्यं कार्यं व्यक्तिश्चेति विविनक्तीति चेन्—नैवम्, विविक्ताकारानुपलब्धेः। न हि सुसूक्ष्ममपि निरीक्षमाणैः, 'इदमनुवर्त-मानम्, इदं च व्यावर्तमानम्' इति पुरोऽवस्थिते वस्तुन्याकारभेद उपलभ्यते। यथा संप्रतिपन्नैक्ये कार्ये विशेषे चैकत्वबुद्धिरुपजायते, तथैव सकारणे ससामान्ये चैकत्वबुद्धि-रविशिष्टोपजायते; एवमेव देशतः कालतश्च आकारतश्चात्यन्तविलक्षणेष्वपि वस्तुषु तदेवेद-मिति प्रत्यभिज्ञा जायते। अतो द्व्यात्मकमेव वस्तु प्रतीयते इति कार्यकारणयोर्जातिव्य-क्त्योश्चात्यन्तभेदोपपादनं प्रतीतिपराहतम्।

अथोच्येत—'मृदयं घटः', 'खण्डो गौः' इतिवत् 'देवोऽहं मनुष्योऽहम्' इति सामा-नाधिकरण्येनैक्यप्रतीतेरात्मशरीरयोरपि भिन्नाभिन्नत्वं स्यात्; अत इदं भेदाभेदोप-पादनं निजमदननिहितहुतवहज्वालायत इति—तदिदमनाकलितभेदाभेदसाधनसामा-नाधिकरण्यतदर्थयाथात्म्यावबोधविलसितम्। तथाहि—अबाधित एव प्रत्ययः सर्वत्रार्थं व्यवस्थापयति। देहा(वा)द्यात्माभिमानस्तु आत्मयाथात्म्यगोचरैः सर्वैः प्रमाणैर्बाध्यमानो रज्जुसर्पादिबुद्धिवत् नात्मशरीरयोरभेदं साधयति। 'खण्डो गौः', 'मुण्डो गौः' इति सामानाधिकरण्यस्य न केनचित् क्वचित् बाधो दृश्यते। तस्मान्नातिप्रसङ्गः।

अत एव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः; अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः। तत्राभेद एव स्वाभाविकः। भेदस्त्वौपाधिकः। कथमवगम्यत इति चेत्—(छा. 6. 8. 7.) "तत् त्वमसि" (बृ. 3. 7. 23.) "नान्योऽतोऽस्ति द्रष्टा", (बृ. 4. 5. 19) "अयमात्मा ब्रह्म" इत्यादिभिः श्रुतिभिः, "ब्रह्मेमे द्यावापृथिवी" इति प्रकृत्य, "ब्रह्म दाशाः ब्रह्म दासाः ब्रह्मेमे कितवा उत। स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान्" इति आथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च, (श्वे. 6 13.) "नित्यो नित्यानां चेतनश्चेतना-नामेको बहूनां यो विदधाति कामान्", (श्वे. 1. 6.) "ज्ञाज्ञौ द्वावजावीशनीशौ",

धिकरण्यदर्शनादिति भावः। संप्रतिपन्नैक्ये इति। स्वेन स्वस्यैक्यं हि निर्विवादमिति। विशेषे—व्यक्तौ। द्रव्यद्वयेऽपि भिन्नाभिन्नत्वमाह एवमिति। अनाकलितेति। भेदाभेदसाधनं सामा-नाधिकरण्यं यत्र वाक्ये तदिति बहुव्रीहिः। तस्य तदर्थस्य च याथात्म्यमनाकलितं येन, तस्य पुंसो योऽवबोधो भ्रान्तिः तद्विलसितमित्यर्थः। अथवा याथात्म्यावबोधविलसितमनाकलितमप्राप्तं येन वचनेन, तदिदमित्यर्थः। अबाधितमेव सामानाधिकरण्यं भेदाभेदसमाहारकमिति भावः। अंशत्वेनेति। 'अंशो नाने'तिसूत्रं स्वपक्ष एव स्वरसमित्येतदाशयः। भेदाभेदोभयसत्त्वे जीवब्रह्माद्वै-

(श्वे. 5. 12.) "क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः", (श्वे. 6. 16.) "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः", (श्वे. 6. 9.) "स कारणं करणाधिपाधिपः", "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति", "य आत्मनि तिष्ठन्", "प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद", "प्राज्ञेनाऽत्मनाऽन्वारूढः उत्सर्जन् याति", "तमेव विदित्वाऽति मृत्युमेति" इत्यादिभिर्भेदश्रवणाच्च जीवपरयोर्भेदाभेदाववश्याश्रयणीयौ। तत्र, "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात्, "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इति तदानीं भेदेनेश्वरदर्शननिषेधाच्चाभेदः स्वाभाविक इत्यवगम्यते॥

ननु च "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति सहश्रुत्या तदानीमपि भेदः प्रतीयते। वक्ष्यति च, "जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च", "भोगमात्रसाम्यलिङ्गाच्च" इति॥ नैतदेवम्; "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतिशतैरात्मभेदप्रतिषेधात्। 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति सर्वैः कामैस्सह ब्रह्माश्नुते—सर्वगुणान्वितं ब्रह्माश्नुते इत्युक्तं भवति। अन्यथा ब्रह्मणा सहेत्यप्राधान्यं ब्रह्मणः प्रसज्येत। 'जगद्व्यापारवर्जम्' इत्यत्र, मुक्तस्य भेदेनावस्थाने सति ऐश्वर्यस्य न्यूनताप्रसङ्गो वक्ष्यते। अन्यथा, "सम्पद्याविर्भावः स्वेनशब्दात्" इत्यादिभिर्विरोधात्।

तस्मादभेद एव स्वाभाविकः। भेदस्तु जीवानां परस्मात् ब्रह्मणः, परस्परं च बुद्धीन्द्रियदेहोपाधिकृतः। यद्यपि ब्रह्म निरवयवं सर्वगतश्च; तथाऽपि आकाश इव घटादिना, बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेदः संभवत्येव। न च भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसंयोगः, बुद्ध्याद्युपाधिसंयोगाद् ब्रह्मणि भेद इतीतरेतराश्रयत्वम्; उपाधेस्तत्संयोगस्य च कर्मकृतत्वात्; तत्प्रवाहस्य चानादित्वात्। एतदुक्तं भवति—पूर्वकर्मसंबद्धाज्जीवात् स्वसंबद्ध एवोपाधिरुत्पद्यते; तद्युक्तात् कर्म। एवं बीजाङ्कुरन्यायेन कर्मोपाधिसंबन्धस्यानादित्वान्न दोष इति। अतो जीवानां परस्परं ब्रह्मणा चाभेद एव स्वाभाविकः। उपाधीनां पुनः परस्परं ब्रह्मणा चाभेदवत् भेदोऽपि स्वाभाविकः, उपाधीनामुपाध्यन्तराभावात्, तदभ्युपगमेऽनव-

---

तज्ज्ञानादेव मुक्तिरिति कथमित्यत्राह **तत्राभेद** इति। **श्रुतिभि**रित्यस्य **अभेदश्रवणा**दित्यत्रान्वयः। **श्रवणाच्चे**ति चकारस्य **ब्रह्मसूक्ते** इत्यत्र संबन्धः। अभेदश्रवणात् भेदश्रवणाच्चावश्याश्रयणीयाविति अन्वयः। मुक्तावपि भेदं द्वैतवादी शङ्कते **ननुचे**ति। भोक्तृसाहित्यपरत्वे हि आत्मभेदापत्तिः; भोग्यसाहित्यमेव त्वभिमतम्। 'आप्नोति परम्' इत्युक्तभोग्यविवरणत्वात्। ब्रह्मसहितकामानुभवो नाम कामसहितब्रह्मरूपस्वानुभव एवेति भास्करीयः प्रतिवदति **नैत**दिति। **प्रसङ्ग** इति। जगद्व्यापारवर्जं स्यात्, तदयुक्तमिति सूत्रार्थ एतन्मते। अचेतने जीववैलक्षण्यमाह **उपाधीना**मिति। तेषां ब्रह्मपरिणामरूपत्वात्, कार्यांशस्य कारणावशिष्टांशादिव भेद इत्यर्थः।

स्थानाच्च। अतो जीवकर्मानुरूपं ब्रह्मणो भिन्नाभिन्नस्वभावा एवोपाधय उत्पद्यन्ते इति—

अत्रोच्यते—अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातमिति वेदान्तवाक्यैरभेदः प्रतीयते; भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेदः प्रतीयते। भेदाभेदयोः परस्परविरोधात् अनाद्यविद्यामूलतयाऽपि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इत्युक्तम्। तत्र यदुक्तम्—भेदाभेदयोरुभयोरपि प्रतीतिसिद्धत्वान्न विरोधः—इति। तद-युक्तम्। कस्माच्चित्कस्यचिद्विलक्षणत्वं हि तस्मात् तस्य भेदः। तद्विपरीतत्वं चा(त्वम)-भेदः। तयोस्तथाभावातथाभावरूपयोरेकत्र संभवमनुन्मत्तः को ब्रवीति॥

कारणात्मना जात्यात्मना चाभेदः, कार्यात्मना व्यक्त्यात्मना च भेदः इत्याकार-भेदादविरोध इति चेत्—न; विकल्पासहत्वात्। आकारभेदादविरोधं वदतः किमेकस्मिन् आकारे भेदः, आकारान्तरे चाभेदः इत्यभिप्रायः?; उताऽऽकारद्वययोगिवस्तुगतावुभाव-पीति?। पूर्वस्मिन् कल्पे—व्यक्तिगतो भेदः, जातिगतश्चाभेद इति नैकस्य द्व्यात्मकता॥ जातिर्व्यक्तिरिति चैकमेव वस्त्विति चेत्, तर्ह्याकारभेदादविरोधः परित्यक्तस्स्यात्। एकस्मिंश्च विलक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम्। द्वितीये तु कल्पे—अन्योन्यविलक्षण-माकारद्वयम्, अप्रतिपन्नं च तदाश्रयभूतं वस्त्विति तृतीयाभ्युपगमेऽपि त्रयाणामन्योन्य-वैलक्षण्यमेवोपपादितं स्यात्; न पुनरभेदः॥ आकारद्वयनिरुह्यमाणाविरोधं तदाश्रयभूते वस्तुनि भिन्नाभिन्नत्वमिति चेत्—स्वस्माद्विलक्षणं स्वाश्रयमाकारद्वयं स्वस्मिन् विरुद्धधर्म-द्वयसमावेशनिर्वाहकं कथं भवेत्? अविलक्षणं तु कथन्तराम्? आकारद्वयतद्वतोश्च द्व्यात्मक-त्वाभ्युपगमे निर्वाहकान्तरापेक्षयाऽनवस्था स्यात्। न च संप्रतिपन्नैक्यव्यक्तिप्रतीतिवत् स-सामान्येऽपि वस्तुनि एकरूपा प्रतीतिरुपजायते, यतः, 'इदमित्थम्' इति सर्वत्र प्रकारप्रका-रितयैव सर्वा प्रतीतिः। तत्र प्रकारांशो जातिः प्रकार्यंशो व्यक्तिरिति नैकाकारा प्रतीतिः।

---

लोकप्रसिद्धस्य भावाभावविरोधस्य बाधकं न किमपीहेत्याशयेन प्रतिवक्ति **कस्माच्चि**दिति। **नैकस्य द्व्यात्मक**तेति। कार्यकारणस्थले उपादानोपादेययोरनन्यत्वस्य श्रुतिसूत्रसिद्धत्वेन द्रव्यैक्ये सति भेद एव न भवति; जातिव्यक्त्योस्त्वभेदो न भवति। अतः कार्यात्मना भेद इत्यस्य एकस्य कारणस्य कार्यमनेकमिति कार्याणां मिथो भेद एवार्थः; न तु मृत्तो घटस्य भेदः। जातिव्यक्तिस्थले चानेकवर्ति-जातेरैक्यमेव; न जातेर्घटादिव्यक्त्या सहैक्यम्। अतः कार्यकारणयोरभेद एव, जातिव्यक्त्योश्च भेद एवेति भावः। **द्वितीये तु कल्पे** इत्यस्य **स्या**दित्यत्रान्वयः। त्रितयं स्वाभिमतमिति बुद्धि-व्युदासाय **तृतीयाभ्युपगमेपी**त्यन्तम्। अनभ्युपगमे हेतुरप्रतिपन्नत्वम**प्रतिपन्न**ञ्चेतिपदेन दर्शितम्। तृतीयं वस्तु कल्पितं तदाकारद्वयाद् भिन्नम्, अभिन्नम्, भिन्नाभिन्नं वेति विकल्पाभिप्रायेण दूषणान्याह **स्वस्मा**दिति। अत्र तृतीये वस्तुनि किमपेक्षया भिन्नाभिन्नत्वमित्यपि चिन्त्यम्। भेदाभेदयोरेकत्रा-नभ्युपगमे कथं द्व्यात्मकव्यवहार इत्यत्र तादृशव्यवहार एव नेत्याह **नचे**ति।

अत एव जीवस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न संभवति । तस्मादभेदस्यानन्यथा-सिद्धशास्त्रमूलत्वादनाद्यविद्यामूल एव भेदप्रत्ययः ॥ नन्वेवं ब्रह्मण एवाज्ञत्वं तन्मूलाश्च जन्म-जरामरणादयो दोषाः प्रादुःष्युः । ततश्च "यस्सर्वज्ञस्सर्ववित्", "एष आत्माऽपहतपाप्मा" इत्यादीनि शास्त्राणि बाध्येरन् ॥ नैवम्; अज्ञानादिदोषाणामपरमार्थत्वात् । भवतस्तूपाधि-ब्रह्मव्यतिरिक्तं वस्तु अनभ्युपगच्छतः ब्रह्मण्येवोपाधिसंसर्गः, तत्कृताश्च जीवत्वाज्ञत्वादयो दोषाः परमार्थत एव भवेयुः । न हि ब्रह्मणि निरवयवे अच्छेद्ये संबद्ध्यमाना उपाधयः तत् छित्वा भित्वा वा संम्बद्ध्यन्ते; अपि तु ब्रह्मस्वरूपे संयुज्य तस्मिन्नेव स्वकार्याणि कुर्वन्ति ॥

यदि मन्वीत—उपाध्युपहितं ब्रह्म जीवः । स चाणुपरिमाणः । अणुत्वं चावच्छेद-कस्य मनसोऽणुत्वात् । स चावच्छेदोऽनादिः । एवमुपाध्युपहिते अंशे संबध्यमाना दोषाः अनुपहिते परे ब्रह्मणि न संबध्यन्ते—इति । अयं प्रष्टव्यः—किमुपाधिना छिन्नो ब्रह्मखण्डोऽणुरूपो जीवः, उत अच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः, उतोपाधिसंयुक्तं ब्रह्मस्वरूपम्, अथोपाधिसंयुक्तं चेतनान्तरम्, अथोपाधिरेव इति । अच्छेद्यत्वात् ब्रह्मणः, प्रथमः कल्पो न कल्पते । आदिमत्त्वं च जीवस्य स्यात् । एकस्य सतो द्वैधीकरणं हि च्छेदनम् । द्वितीये तु कल्पे ब्रह्मण एव प्रदेशविशेषे उपाधिसंबन्धात् औपाधिकाः सर्वे दोषाः तस्यैव स्युः । उपाधौ गच्छति उपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणा-योगादनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशभेदात् क्षणेक्षणे बन्धमोक्षौ च स्याताम् । आकर्षणे चाच्छिन्नत्वात् कृत्स्नस्य ब्रह्मणः आकर्षणं स्यात् ॥ निरंशस्य व्यापिनः आकर्षणं न संभवतीति चेत्—तर्हि उपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात् । अच्छिन्नब्रह्म-प्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां च जीवानां ब्रह्मण एव प्रदेशत्वेन, एकत्वेन प्रतिसन्धानं स्यात् । प्रदेशभेदादप्रतिसन्धाने चैकस्यापि स्वोपाधौ गच्छति [ सति ] प्रतिसन्धानं न स्यात् । तृतीये तु कल्पे ब्रह्मस्वरूपस्यैवोपाधिसंबन्धेन जीवत्वापातात् तदतिरिक्तानुपहित-ब्रह्मासिद्धिः स्यात् । सर्वेषु च देहेष्वेक एव जीवः स्यात् । तुरीये तु कल्पे ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यौपाधिकत्वं परित्यक्तं स्यात् । चरमे चार्वाकपक्ष एव परिगृहीतः स्यात् ।

तस्मादभेदशास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम् । अतः प्रवृत्तिनिवृत्तिप्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि ध्यानविधिशेषतया वेदान्तवाक्यानां

---

अत एव; लोके ध्यात्मकव्यवहाराविरोधस्थापकस्य कचिदप्यदर्शनात तन्न्यायातिदेशायोगा-दित्यर्थः । तर्हि अभेद एव देहात्मप्रत्यय इव पूर्वोक्ते स्यादपरमार्थ इति मतिव्युदासाय निगमयति तस्मादिति । 'नन्वेवम्' इत्यपि भास्करशङ्कैव । भेदस्य सत्यत्वे, 'जीव एवाज्ञो जन्मादिमांश्च, न ब्रह्मे'ति सुवचमिति तदभिमानः । अज्ञानादिदोषाणामिति । सर्वज्ञत्वादीनां गुणानामपि दोषमूलकत्वाद् दोषत्वमेवेति मृषावादिहृदयम् । किमुपाधिनेत्यादि । अत्र द्वितीयपक्ष एव तदिष्टः । संभावित-

ब्रह्मस्वरूपे प्रामाण्यमुपपन्नम्—इति—

तदप्ययुक्तम्—ध्यानविधिशेषत्वेऽपि वेदान्तवाक्यानामर्थसत्यत्वे(?)प्रामाण्यायोगात्। एतदुक्तं भवति—ब्रह्मस्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्ते; उत स्वतन्त्राण्येव ?। एकवाक्यत्वे ध्यानविधिपरत्वेन ब्रह्मस्वरूपे तात्पर्यं न संभवति। भिन्नवाक्यत्वे प्रवृत्तिनिवृत्ति[प्रयोजन]विरहादनवबोधकत्वमेव। न च वाच्यम्—ध्यानं नाम स्मृतिसन्ततिरूपम्। तच्च स्मर्तव्यैकनिरूपणीयमिति ध्यानविधेः स्मर्तव्यविशेषाकाङ्क्षायाम् (बृ.4.4.67.) "इदं सर्वं यदयमात्मा", (बृ.4.5. 19.) "अयमात्मा ब्रह्म सर्वानुभूः", "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादीनि स्वरूपतद्विशेषादीनि समर्पयन्ति। नैनैकवाक्यतामापन्नानि अर्थसद्भावे प्रमाणम्—इति; ध्यानविधेः स्मर्तव्यविशेषापेक्षत्वेऽपि "नाम ब्रह्म" इत्यादिदृष्टिविधिवदसत्येनाप्यर्थविशेषेण ध्याननिर्वृत्त्युपपत्तेः ध्येयसत्यत्वानपेक्षणात्। अतो वेदान्तवाक्यानां प्रवृत्तिनिवृत्तिप्रयोजनविधुरत्वात्, ध्यानविधिशेषत्वेऽपि ध्येयविशेषस्वरूपसमर्पणमात्रपर्यवसानात्, स्वातन्त्र्येऽपि बालातुराद्युपच्छन्दनवाक्यवत् ज्ञानमात्रेणैव पुरुषार्थपर्यन्ततासिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात् ब्रह्मणः शास्त्रप्रमाणकत्वं न संभवतीति प्राप्तम् ॥

---

सवप्रकारदोषोद्भावनाय तु नानाकल्पविकल्पनम्। प्रामाण्यमुपपन्नमिति। ननु ब्रह्मभूयोद्देशेन न ध्यानविधिः, नित्यसिद्धत्वात्। नाप्यविद्यानिवृत्त्युद्देशेन, तस्य साक्षात् तदजन्यत्वात्। न च साक्षात्कारोद्देशेन तद्विधिरिति पूर्वमेव तत्साक्षात्कारफलेनेत्यादिना दर्शितमिति वाच्यम्; उपासनाधीनदृढतरसंस्कारस्य साक्षात्कारकरणमनःसहकारितायाः लोकसिद्धत्वात्। अतो विधिर्व्यर्थ इति भामत्यामुक्तमिति चेन्न-न हि भामत्यभिमत-भावनाधेयवैशद्यरूपसाक्षात्कारोद्देशेन ध्यानविधिः। तस्य 'वृक्षेवृक्षे च पश्यामी'त्यादाविव वास्तवसाक्षात्कारत्वाभावात्। वास्तवसाक्षात्कारश्च नोपासनजन्यतया लोकसिद्धः। अतो विहितोपासनजन्यविष्णुप्रसादरूपापूर्वसहकृतमनःकरणकत्वस्यैव तत्रेष्टतया विधिसार्थक्यमिति। विधिशेषतयेत्यस्य विधिविहितोपासनाविषयरूपतया तदङ्गत्वेनेत्यर्थः।

मुख्यपूर्वपक्षी मीमांसको ध्यानविधिवादिनमपि निरस्यन् जृम्भते तदप्ययुक्तमिति। अर्थसत्यत्वे प्रामाण्यायोगादित्यत्र प्रामाण्येत्यत्र तात्पर्येति पाठो युक्तः; टीकानुरोधी च। ननु किं अर्थसत्यत्वे ध्यानं न भवति, कुतस्तत्र तात्पर्यायोग इत्यत्र विशदयति एतदुक्तमिति। ब्रह्मबोधकवाक्यानां ध्यानविध्येकवाक्यत्वे ध्यानमेकमेव विधेयम्। ध्येयवस्तु लोकसिद्धश्चेत्—सत्यमेव। असिद्धश्चेत्—कथं सत्यता। इदं वस्तु वर्तते, इदं ध्येयमित्यर्थद्वयपरत्वे हि वाक्यभेदः स्यात्। स्वरूपपरवाक्यानां पृथग्वाक्यतयैव पठितत्वात् वाक्यभेद इष्ट इति चेत्—न; ध्यानाय तत्सत्यत्वस्यानपेक्षितत्वात्, सत्त्वबोधेऽपि एकवाक्यत्वास्वीकारे तेषां प्रवृत्तिनिवृत्त्यन्वयाभावात् व्यर्थता हि स्यादेव। अतः प्रयोजनवदर्थान्तरस्य विवक्षणीयतया नैतदर्थबोधपर्यवसानमिति।

**तत्र प्रतिपद्यते**—तत्तु समन्वयात्-इति । समन्वयः **सम्यगन्वयः—पुरुषार्थतयाऽन्वय इत्यर्थः । परमपुरुषार्थभूतस्यानवधिकातिशयानन्द[स्व]रूपस्य ब्रह्मणोऽभिधेयतयाऽन्वयात्** तत् **शास्त्रप्रमाणकत्वं सिध्यत्येवेत्यर्थः । निरस्तनिखिलदोषनिरतिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन् वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहान्न प्रयोजनपर्यवसायीति ब्रुवाणः राजकुलवासिनः पुरुषस्य कौलेयककुलाननुप्रवेशेन प्रयोजनशून्यतां ब्रूते ।**

---

ननु ध्येयाकारसमर्पकत्वे वस्तुसत्त्वनियमाभावेऽपि यथाध्यानं वस्तुप्राप्तिबोधकतत्क्रतुशास्त्रबलात् ध्येयस्य फलत्वेन सत्यत्वं सिद्ध्यति ; यथा, ''यन्न दु खेन संभिन्नम्'इति स्वर्गस्वरूपपरवाक्यस्य विधिशेषत्वे तदर्थसत्यत्वम्, तद्वदिति चेत्—अयं पूर्वपक्ष्याशयः–किं ब्रह्मणि तात्पर्यं वेदान्तानाम्, किंवा प्रपञ्चनिवृत्तौ, आहोस्वित् जीवस्य दुःखाद्विमोके ? नाद्यः ; निर्विशेषे सर्वथैवाविषये तात्पर्यायोगात् । न द्वितीयः, तस्याः फलत्वे प्रमाणाभावात् ; ज्ञानेन प्रपञ्चनिवृत्त्यदर्शनाच्च । बहुजनानुकूलस्य प्रपञ्चस्य स्वानुकूलत्वाभावमात्रेण निवर्तनायोगाच्च । प्रपञ्चभेदस्तु दुर्वच एव । न च तृतीयः ; दुःखादेर्मिथ्यात्वेन स्वत एव मुक्तस्य विधिसंपाद्यमोक्षवर्णनायोगात् । अतो मिथ्यात्वमते शास्त्रवैयर्थ्यमेव । सत्यत्वपक्षेपि फलपरवाक्यानां यथाश्रुतार्थप्रामाण्यस्वीकारे, 'जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा', 'कामान्नी कामरूप्यनुसंचरन्,' 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ते' इत्यादिसिद्ध-विजिघत्सत्वादिस्वरूपविरुद्धभक्षणहसनक्रीडनरमणसर्वलोकसंचरण-पित्रादिबन्धुलाभार्थजननादि -क्षुद्रफलशरीराद्यापत्त्या यथावस्थितमोक्षासिद्धिः स्यात् । ब्रह्मानुभवपरमानन्दसागरगोष्पदायमानत्वं फलान्तरेषु दर्शयितुमेवं स्तुतिरिति ब्रह्मानुभवमात्रफलस्वीकारे तु वेदान्तिभिरपि यथाश्रुतार्थस्त्यज्यत एवेति किमस्मदभिमतसर्ववेदान्तार्थवादतायां प्रद्वेषेण । तत्क्रतुश्रुतिरपि क्रतुशब्दघटितत्वात् कर्मविधिशेषत्वमेव दर्शयेत् । कर्मविधिदर्शितस्वर्गादिफलविवरणमेव च जक्षणादिवाक्यं भवितुमर्हतीति नास्माकं यथाश्रुतार्थत्यागोऽपि । किञ्च ब्रह्मणो विधिशेषत्वे विधेयस्य भक्त्यादेरेव प्राधान्यात्, अथातःशेषधर्मजिज्ञासा, परमधर्मजिज्ञासेत्येवंरीत्यैव प्रतिज्ञा कार्येति ब्रह्मजिज्ञासेति सूत्रणमयुक्तम् । तदर्थं विध्यन्वये त्यक्ते तु वैयर्थ्यमेवोपनिषदामिति न विचार्यतेति ।

**बोधयन्निति** ; बोधयन्नपीत्यर्थः । **कौलेयककुलेति** । **कौलेयाः**—श्वानः । त एव, तत्तुल्याः श्ववृत्तयो वा **कौलेयकाः** । सेव्यकुलस्थितस्य सेवककुलानन्तःप्रवेशः कथं हेयतापादक इत्युक्तं भवति । अयमाशयः–प्रवृत्तिपरत्वेन प्रामाण्ये निवृत्तिपरवाक्यप्रामाण्यस्य भङ्गः । निवृत्तिपरत्वेन चेत्—पूर्वस्य । किमर्थमुभयप्रामाण्यमवश्यमिति प्रश्ने च, पुरुषार्थपर्यवसानादित्येवोत्तरम् । तदेव सर्वानुगतम् । तत्र प्रवृत्तिपरवाक्यस्य पुरुषार्थपर्यवसानम्, तज्जनितबोधाधीनप्रवृत्तिविषयात् यागादितः फलस्य कालान्तरे भावात् । निवृत्तिपरवाक्यस्य तु—तद्बोध्यनिवृत्तौ सत्यां तत्प्रतियोगिनिषिद्धकर्माचरणाद्यनरकादिदुःखदूरत्वरूपं यत् अनिष्टप्रागभावपरिरक्षणात्मकं फलम्, तत्पर्यवसानं वाच्यम् । एवञ्च पुरुषार्थहेतुतया प्रामाण्यम्, पुरुषार्थहेतुत्वं साक्षाद्वा परम्परया वा यथायथमिति स्थितम् ।

एतदुक्तं भवति—अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरावरतत्त्वयाथात्म्यस्वस्वरूपावबोधानां देवासुर गन्धर्वसिद्धविद्याधरकिन्नरकिम्पुरुष यक्षराक्षसपिशाच मनुज पशुशकुनिसरीसृप वृक्षगुल्मलतादूर्वादीनां स्त्रीपुन्नपुंसकभेदभिन्नानां क्षेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणाम्, मुक्तानां स्वस्य चाविशेषेणानुभवसंभवे स्वरूपगुणविभवचेष्टितैरनवधिकातिशयानन्दजननं परं ब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्यवसायि। प्रवृत्तिनिवृत्तिनिष्ठं तु यावत्पुरुषार्थान्वयबोधं न प्रयोजनपर्यवसायि। एवम्भूतं परं ब्रह्म कथं प्राप्यत

---

तत्र दुःखस्य तु स्वनिवृत्तेश्चैव, तत्साधनपशुपुत्रादीनामपि फलत्वस्य लोकशास्त्रसंप्रतिपन्नतया, हेतुरपि पुरुषार्थ एवेति पुरुषार्थलम्भकबोधजनकत्वमेव प्रयोजनपर्यवसायित्वम्। तत्र ब्रह्मणः साक्षादेव पुरुषार्थतया राजतुल्यता; तत्प्रतिपादकवाक्यं राजभोगकरतत्कुलवासितुल्यम्। प्रवृत्तिनिवृत्तिप्रमुखस्य तु राजभोगतत्त्वतत्भोगरूपस्वर्गाद्युपजीवितावीनातिशयकौलेयकसाम्यम्। सेवकानां पुरुषार्थप्रदत्वं च राजन्येवायत्तम्। प्रवृत्त्यादिपरवाक्यजातं कौलेयककुलवासितुल्यमिति।

ननु ब्रह्म महानन्दमिति वाक्यश्रवणात् श्रोतुः किं फलम्? प्रवृत्त्यादिपरवाक्यं तु कर्तुः फलं बोधयतीति भवति प्रयोजनपर्यवसायीत्यत्र विशदयति एतदुक्तमिति। 'सर्वेषां परमानन्दस्वप्रदानोन्मुखतया ब्रह्मास्ती'ति वेदान्तवाक्यार्थः। आनन्दो ब्रह्मेत्यत्रापि आनन्दपदेनानुकूलवाचकेन अविशेषेण श्रोतृपुरुषानुकूल्यस्यापि बोधसंभवात् भोग्यत्वं सिद्धम्। एवं सर्वेषां स्वप्राप्तौ स्वयं ज्ञानविषयतया साधनभूतस्य तस्य ज्ञानं कथं न पुरुषार्थवहम्? ननु ऐहिकामुष्मिकचिरानन्दसंदोहेऽप्यल्पत्वबुद्ध्या विरज्य स्थिरफलान्वेषणप्रवृत्तस्य पुंसः कियानयं श्रवणजनित आनन्दः, येन तावतैव पुरुषार्थपर्यवसानमिति चेन्न—फलस्याल्पत्वेऽपि वाक्यानां साफल्यप्रामाण्ययोरक्षतत्वात्। स्थिरफलप्रदः स पर इति ज्ञानमप्यतो जायत एव। किञ्च प्रयोजनसाधनप्रवृत्त्यादिकमनवबोध्य सिद्धार्थमात्रकथनेनापि शास्त्राणां प्रामाण्यं दृश्यते, यथा रत्नपरीक्षाशास्त्रस्य, निधिस्थलनिरूपक-अश्वगजादिलक्षणपरशास्त्राणाञ्च। तत्र तत्र तत्तत्प्रयोजनार्था प्रवृत्तिर्लोकत एव सिद्धेति लक्षणवर्णनमात्रे शास्त्रतात्पर्यम्। अप्राप्ते हि शास्त्रमर्थवत्। तथेह ब्रह्ममात्रे बोधिते राजसंश्रयन्यायेन तदाश्रयणप्रवृत्तिः स्वत एव भविष्यति। एवं प्राप्तनानामार्गविलक्षणपद्धतिविधानार्थं तु भक्त्यादिविधानं पश्चात् शास्त्रे पृथगिति, न तदुपजीवनेनैव सिद्धब्रह्मपरवाक्यप्रामाण्यसमीक्षणमिति। विस्तरोऽस्मदीये कौस्तुभे द्रष्टव्यः।

व्यवस्थितेत्यादिविशेषणं बहुव्रीहिवृत्तं क्षेत्रज्ञविशेषणम्; बद्धानामित्यर्थः। मुक्तानां स्वस्य चाविशेषेणेत्यस्य मुक्तस्वोभयनिर्विशेषमित्यर्थः। उभयस्यापि जननमित्यत्रान्वयः। मुक्ताः नित्यमुक्ताः। अनुभवसंभवे अनुभवकाले प्राप्ते। नायमसत्काव्यरसास्वादाद्यानन्दतुल्यः, भाविस्वपुरुषार्थविषयकत्वात्। न चार्थासत्यत्वम्; अबाधितार्थस्यासत्यत्वायोगात्। जक्षदादिवाक्यविवक्षितार्थानां हेयविलक्षणतया मोक्षान्तर्भावो दर्शयिष्यते कामाद्यधिकरणादौ। एवम्भूतमित्यादिना

इत्यपेक्षायाम्, "ब्रह्मविदाप्नोति परम्", "आत्मानमेव लोकमुपासीत" इति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते। यथा, 'स्ववेश्मनि निधिरस्ति' इति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तस्सन् पश्चात् तदुपादाने च प्रयतते; यथा च—कश्चिद्राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनात् निष्क्रान्तो मार्गाद् भ्रष्टः नष्ट इति राज्ञाविज्ञातः, स्वयं चाज्ञातपितृकः केनचिद् द्विजवर्येण वर्धितोऽधिगतवेदशास्त्रः षोडशवर्षः सर्वकल्याणगुणाकरस्तिष्ठन्, 'पिता ते सर्वलोकाधिपतिः गाम्भीर्यौदार्यवात्सल्यसौशील्यशौर्यवीर्यपराक्रमादिगुणसंपन्नः त्वामेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठति' इति केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं शृणोति चेत्—तदानीमेव, 'अहं तावत् जीवतः पुत्रः, मत्पिता च सर्वसंपत्समृद्धः' इति निरतिशयहर्षसमन्वितो भवति। राजा च स्वपुत्रं जीवन्तमरोगमतिमनोहरदर्शनं विदितसकलवेद्यं श्रुत्वाऽवाप्तसमस्तपुरुषार्थो भवति। पश्चात् तदुपादाने च प्रयतते। पश्चात् तावुभौ सङ्गच्छेते च—इति।

---

अनुभवसंभवे इत्युक्तमुपपादयन् विधिवैयर्थ्यं परिहरति। अयं भावः—यागादिक्रियाविधिस्थलेऽपि प्रयोगविधिप्रयोजनजिज्ञासायामुक्तं **न्यायरत्नमालायाम्**, 'किं यागादिकं कर्म, यदृच्छोपनतमेघच्छायेव संतापनिवारणम्, अस्मदननुष्ठितमेव फलं दद्यात्, उत स्वयमनुष्ठितं सदिति विशये प्रयोगविधिः पुरुषं प्रयोजयती'ति। सुतरां पुनरिह, सर्वस्वामी स्वतन्त्रः परमकारुणिकः फलप्रदः इति श्रवणात् तूष्णीम्भूय फलप्रतीक्षापराः केचन भवेयुः, परे च राजोपसर्पणमिव बहुप्रकारमुपसर्पणं भावयेयुः। प्रसिद्धश्च मार्जारन्यायो मर्कटन्यायश्च। अतः पश्चात् वास्तवपथप्रदर्शनायोपासनप्रपदनादिवाक्यानां प्रवृत्तिरिति न विधिवाक्याभावे स्वरूपपरवाक्याप्रामाण्यमिति। अतो नात्र, 'यन्न दुःखेने'ति स्वर्गलक्षकवाक्यतुल्यताऽपि। **स्ववेश्मनीत्यत्र** स्वपदमवधेयम्। **नष्ट इति विज्ञातः** नष्टत्वेन ज्ञातः। अविज्ञात इतिच्छेदे **नष्ट इति**—नष्टत्वादित्यर्थः। दार्ष्टान्तिके, असन्निति भगवतोपेक्षित इत्यर्थः। **केनचित्**-एतद्राजसंबन्धीत्यजानताऽपि क्षत्रलक्षणदर्शिना। दार्ष्टान्तिके देहातिरिक्तात्मावबोधिशास्त्राध्यापक इह ग्राह्यः; भगवच्छेषत्वबोधकवेदान्तविषयाचार्यः—**अभियुक्ततमेने**ति। **तदानीमेव**-प्राप्तितदुपायापरिज्ञानेपि। अत्र स्वरूपपरवाक्यमात्रात् पुरुषार्थः संपत्कामस्य राजकुमारस्येव, राज्ञोऽपि तच्छ्रुतवाक्यात् सुवच इत्यभिप्रेत्याह **राजा चे**ति। अत्र ब्रह्मणः सर्वज्ञतया श्रवणादेरनपेक्षितत्वात् राजतुल्यत्वायोगात् **राजा चे**त्यपि उपासकं प्रत्येव दृष्टान्तः; पुत्रश्च ब्रह्म। वासुदेवः सर्वमिति पुत्रभावना भगवति प्रसिद्धैवेत्येका योजना **टीकायाम्**। अथ आचार्यादिप्रार्थनया प्रजा अनुगृह्णतो भगवतः श्रवणाद्यानन्दोऽपि सुप्रसिद्ध इति राजा ब्रह्मैवेति यथाश्रुतयोजनापि। **पश्चात्....प्रयतत** इति वाक्यं प्राप्यविषयमिव, निधिदृष्टान्त इव प्राप्तृविषयमपि; पुरुषगतव्यापारः सर्वः पश्चात्। न स स्वरूपपरवाक्यस्य पुरुषार्थपरत्वायापेक्ष्यत इति भावः। **प्रयतते**; प्रीतिरूपापन्नश्रवणमात्रे सत्यपि, 'तेषां सततयुक्ताना' मितिरीत्या स एवासन्मुखेन सर्वं संपादयतीति ज्ञानात्, पुमर्थपर्यवसानं सुतरामिति

यत् पुनः—परिनिष्पन्नवस्तुगोचरस्य वाक्यस्य तज्ज्ञानमात्रेणापि पुरुषार्थपर्यवसानात् बालातुराद्युपच्छन्दनवाक्यवत् नार्थसद्भावे प्रामाण्यम्—इति—तदसत्—अर्थसद्भावाभावे निश्चिते, ज्ञातोऽप्यर्थः पुरुषार्थाय न भवति। बालातुरादीनामप्यर्थसद्भावभ्रान्त्या हर्षाद्युत्पत्तिः। तेषामेव तस्मिन्नेव(न्नपि) ज्ञाने विद्यमाने यदि अर्थाभावनिश्चयो जायेत, तदनन्तरमेव हर्षादयो निवर्तेरन्। औपनिषदेष्वपि वाक्येषु ब्रह्मास्तित्वतात्पर्याभावनिश्चये ब्रह्मज्ञाने सत्यपि पुरुषार्थपर्यवसानं न स्यात्। अतः, 'यतो वा इमानि भूतानि जायन्ते' इत्यादिवाक्यं निखिलजगदेककारणं निरस्तनिखिलदोषगन्धं सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणाकरमनवधिकातिशयानन्दं ब्रह्मास्तीति बोधयतीति सिद्धम् ॥ ४ ॥

॥ इति समन्वयाधिकरणम् ॥ ४ ॥ इति श्रीभाष्ये चतुःसूत्री। श्रीरस्तु।

---

पर्यवसानं न स्यादिति। कर्मविधिष्वपि प्रवृत्तिं प्रति प्रवर्तनाज्ञानस्यैव कारणत्वात् अनप्रमासाधारण्येनैव कारणताया वक्तव्यत्वात् भ्रमाधीनप्रवृत्त्यापि प्रवर्तकवाक्यचारितार्थ्यात् वास्तवप्रवर्तनायाः फलस्य चासिद्धिप्रसंगः। अपौरुषेयवेदजन्यबोधत्वात् स्वतःप्रामाण्यमिति तु ब्रह्मबोधेऽपि तुल्यम्। न च कर्मविधिविप्रकृष्टानामुपनिषदां कर्मविध्यर्थवादत्वम्। न च कर्मनिन्दापूर्वकं ब्रह्मबोधकानां कर्मविधौ तात्पर्यम्। किञ्च विधिसंनिधिश्रुतार्थवादस्थलेऽपि निरर्थवादकविधिवाक्य इव विधिबलादेव प्राशस्त्यसिद्ध्या मिथनार्थवादावैयर्थ्यायाकांक्षोत्थापनमिति भवन्नये स्थिते, का प्रसक्तिः कर्मविधीनामेतद्विषयकस्वरसाकांक्षायाः। उपनिषदस्तु पुरुषार्थस्यैव बोधनात् शान्ताकांक्षाः। प्राशस्त्यरूपार्थान्तरवर्णनमपि व्यर्थम्। तस्मादन्यथापुरुषार्थपर्यवसानस्यायोग एव। न च क्रियार्थकवाक्यशेषत्वप्रतिपादकपूर्वमीमांसाधिकरणविरोधः; तस्य स्वतन्त्रेदृशवाक्यातिरिक्तविषयकत्वात्। कर्मनिरूपणप्रवृत्तेः तद्विधिसंनिहितार्थवादवाक्यानामेव विभजनप्रयोजनवर्णनं तत्र कृतम्। तदपवादभूतमिदमधिकरणम्। तत् सिद्धं स्वातन्त्र्येण पुरुषार्थपर्यवसायित्वमस्तीति, ब्रह्मविचार आरम्भणीय इति च ॥ ४ ॥

स्वच्छोऽपि निस्तरङ्गोऽपि भाष्यरत्नाकरो यदि। गभीरो नावगाह्येत कथं रत्नग्रहो भवेत् ॥

इति वात्स्यवीरराघवसुधिया विहितः शुभंयुरवगाहः।
औपोद्घातिकभाष्यगरत्नस्तोमग्रहे जयति ॥

इति श्रीमद्वेदान्तरामानुज-यतीन्द्र-महादेशिकचरणारविन्दचञ्चरीकस्य श्रीमद्रङ्गरामानुज-मुनीन्द्र-महादेशिकपदपद्मसेवासमधिगतसर्ववेदान्तार्थस्य वात्स्यश्रीशैलसार्वभौमचक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे चतुस्सूत्री।
श्रीमते रामानुजाय नमः। शुभमस्तु।



श्रीः

ईक्षत्यधिकरणम् ॥ ५ ॥ (विषयवाक्यम्. छा. ६-१—१६)

## (५) ईक्षतेर्नाशब्दम् १।१।५॥

**(तै. भृ. १-१) "यतो वा इमानि" इत्यादिजगत्कारणवादिवाक्यप्रतिपाद्यं सर्वज्ञं सर्वशक्ति समस्तहेयप्रत्यनीककल्याणगुणैकतानं ब्रह्म जिज्ञास्यमित्युक्तम्। इदानीं जगत्कारणवादिवाक्यानामानुमानिकप्रधानादिप्रतिपादनानर्हतोच्यते, 'ईक्षतेर्नाशब्दम्' इत्यादिना।**

---

श्रीभाष्यार्थदर्पणे ईक्षत्यधिकरणम् ॥ ५ ॥

श्रीभाष्यदीपसारैर्व्याख्यानैरपि महद्भिरुक्तार्थम्। शारीरकं प्रसीदतु सोपनिषत् वर्तितोद्घातम् ॥
उपोद्घातात्मकैः सूत्रैश्चतुर्भिर्बादरायणः। पूर्वतन्त्र इवोद्देशं लक्षणञ्चापि वर्तयन् ॥
शास्त्रान्यागम्यतापूर्वं शास्त्रगम्यत्वमब्रवीत्। यतोऽधिकारी विषयः संबन्धश्च प्रयोजनम् ॥
अबोध्यन्त क्रमात् तत् स्यात् अनुबन्धिचतुष्टयम्। अथ शास्त्रम्-तत्र सिद्धो विषयः कथ्यते द्विके ॥
आद्ये, द्विकान्तरे साध्यं विषय्यस्य नयस्य तु। वेदवाक्यविचारत्वादस्ति शास्त्रेऽत्र संगतिः ॥
वेदान्तवाक्यचिन्तात्वात् काण्डे शारीरकेऽस्ति सा। विषयस्य ब्रह्मणो हि चिन्ता, पूर्वद्विके ततः ॥
चिन्ता कारणवाक्यस्येत्याद्येऽध्यायेऽस्ति संगतिः। अयोगस्य व्यवच्छेदात् पादे संगतिरादिमे ॥
तत्र सामान्यचिन्तात्वात् पूर्वत्वाच्चाप्यचिद्धियः। प्राथम्यमिति शास्त्रादिसंगतिस्थितिरीक्ष्यताम् ॥
एतदुद्घाततारूपात् आनन्तर्याद्धि संगता। पूर्वपेटी, ततो नात्र तत्संगतिरपेक्ष्यते ॥
अन्यथोपोद्घातताया अनुवृत्तिः प्रसज्यते। अस्तु वाऽवसरः; प्राहुराक्षेपञ्चेह संगतिम् ॥

यद्यपि चतुःसूत्र्यां पूर्वपूर्वाधिकरणसिद्धस्याऽऽरम्भणीयत्वस्य मुखान्तरेणाक्षेपे उत्तरोत्तराधिकरणप्रवृत्तिवत् नेह साधितपूर्वस्यारम्भणीयत्वस्य पुनराक्षेपः; तथा सति सर्वस्योपोद्घाततापत्तेः—अथापि शास्त्रयोनित्वस्य चाऽऽनन्दमयत्वस्य च पूर्वाधिकरणप्रदर्शितस्याक्षेप इत्येतावता तद्वाचोयुक्तिः। तावता नाविचार्यत्वशङ्का; शास्त्रवाक्यविशेषस्यार्थविचारे प्रवृत्त्यैव युक्त्या वस्तुविशेषं निर्धारयता पूर्वपक्षिणा स्वपूर्वपक्षस्य शास्त्रयोनित्वानन्दमयत्वरहितवस्तुपर्यवसानप्रदर्शनात् विचारारम्भस्थितेः। तत्रापि—पूर्वाधिकरणे आनन्दत्वं स्थापितमिति तस्याक्षेप इति न। किं तु आनन्दो ब्रह्मेत्यादिवाक्यावगतानन्दभावोऽस्ति चेत्, विचारो युज्यते हीति तत्र तात्पर्यसंभावनामात्रेण पूर्वं प्रवृत्तिरिति। एवं विचिन्त्य विचारे प्रवृत्तस्तु सद्विद्यादिभिः प्रधानादिकमेव जगत्कारणं प्रोक्तं मन्वानः कारणे शास्त्रयोनित्वबुद्धिमानन्दत्वबुद्धिञ्च त्याजयति। तेन कर्मविचारे अनन्तस्थिरफलत्वमत्या प्रवृत्तस्य अल्पास्थिरफलत्वनिर्णय एव यथा, तथा ब्रह्मविचारेऽपि प्रवृत्त्याऽपेक्षितालाभनिर्णय एवेति पूर्वपक्ष्याशयः। इदमेवं पूर्वपक्षफलमभिसंधायोक्तं **सारावलौ**, "नानुमानाद्ययोग्यौ दुःखास्पृष्टौ च तावित्यथ परकथनम्" इति। सर्वमिदमिह **यतो वा** इत्यारम्भभाष्ये भाव्यम्।

**प्रधानादीत्यादिपदेन** जीवग्रहणम्। **उच्यते**; समन्वयाध्यायेनेति शेषः। तत्र प्रथमोऽयोगव्यवच्छेदपादः; उपरि त्रिपादी अन्ययोगव्यवच्छेदपरा। अयोगव्यवच्छेदो नाम सिद्धान्त्यभिमतव्यक्ति-

**इदमाम्नायते छान्दोग्ये, (छा. ६-२-१) "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति; तत् तेजोऽसृजत" इत्यादि। तत्र संदेहः (संदिह्यते)— किं सच्छब्दवाच्यं जगत्कारणं परोक्तमानुमानिकं प्रधानम्, उतोक्तलक्षणं ब्रह्म—इति॥**

**किं प्राप्तम्? प्रधानमिति। कुतः? 'सदेव सोम्येदमग्र आसीदेकमेव' इति इदंशब्दवाच्यस्य चेतनभोग्यभूतस्य सत्त्वरजस्तमोमयस्य वियदादिनानारूपविकारावस्थस्य वस्तुनः**

---

विशेषरूपत्रयेण: उपनिषच्छास्त्रेणाप्रतिपादनरूपस्यायोगस्य निराकरणम्। कारणवाक्येषु क्वचिदन्यस्यापि प्रतिपादनरूपस्यान्ययोगस्य व्यवच्छेद उपरि। अत्रादौ अधिकरणत्रये साधारणवत्प्रतीतशब्दघटितवाक्यं विषयः; उपरि अर्थविशेषरूढपदघटितवाक्यम्। तत्र प्रत्यक्षसिद्धाचेतनप्रपञ्चसजातीये कारणत्वशंका पूर्वम्, ततश्चेतनसामान्यविषये, ततश्चेतनविशेषे क्वापीति बुद्ध्यारोहक्रमेण विचारः। तदनुगुणं सदादिशब्दघटितं सामान्यवाक्यमत्राधिकरणे विषयः—जगत्कारणमेव हि ब्रह्म; तत्तु विचार्यमाणमचेतनमेव भवतीति पूर्वपक्षिणः सांख्यमतादरणेन प्रत्यवस्थानम्। **तत्र संदेह** इति। कारणे अचेतनप्रपञ्चैक्यश्रवणात् ईक्षणश्रवणाच्चाचेतनं चेतनं वेति संदेह इत्यर्थः।

**परोक्तम्**—सांख्योक्तमब्रह्मात्मकम्। **उक्तलक्षणम्** सर्वज्ञत्वादिविशिष्टतयाऽस्मदुक्तम्। **प्राप्त**मित्यस्य युक्तमित्यर्थः। कश्चिदधिकरणे 'किं युक्त'मित्यपि प्रयोगात्। 'इति प्राप्ते' इति पूर्वपक्षसमाप्तिरीतिदर्शने तु **प्राप्तं** प्रसक्तमित्यर्थः। **सदेवे**त्यादि। प्रपञ्चकारणं किमिति विचारे तार्किकाः, परमाणव एवेति प्रतिपन्नाः। तैः पृथिव्यप्तेजसां कार्यकारणभावोऽपि नेष्टः। कार्यकारणयोराधाराधेयभावाद्भेदश्च ते कल्पयन्ति। सांख्यास्तु प्रकृतिमेकां सर्वप्रपञ्चकारणत्वेनानुमिन्वन्ति; उपादानोपादेयैक्यञ्चाहुः। तत्कूटस्थश्च कपिलः कणादादिविलक्षणः, भगवदवतारत्वेन प्रसिद्धेः। तैरनुमानप्रमाणत एव प्रकृतिः स्थाप्यते। सद्विद्यावाक्यञ्च तदेकार्थम्। अत्र हि, 'उत तमादेशमप्राक्ष्यः, येनाश्रुतं श्रुतं भवति' इत्यनेन येन श्रुतेनाश्रुतं सर्वं श्रुतं भवतीति एकविज्ञानेन सर्वविज्ञाने पित्रोद्दालकेनोक्ते, कथमिति श्वेतकेतोर्जिज्ञासायाम्, मृत्पिण्ड-लोहमणि(सुवर्ण) - कृष्णायसविज्ञानेन तत्तत्कार्यविज्ञाने निदर्शिते, तादृशवस्तुन उपदेशे तेन प्रार्थिते, गुरुराह—'इदानीं प्रपञ्चरूपेण स्थितं प्राक् सद्रूपेणासीत्, ततस्तेजः, तत आपः, ततः पृथिवी चाजायत। ततोऽण्डजजीवजोद्भिज्जादीनि भूतानि। तदर्थञ्च तेजोबन्नानि त्रिवृत्कृतानि। सर्वमत्रोपलभ्यमानं त्रिवृत्कृतमेव। तादृशतेजोबन्नैरेव शरीरं पोष्यते। वाक्प्राणमनांसि चाऽऽप्याय्यन्ते' इति। एवमत्रैकस्य कार्यैणैकीभूतस्य कार्यकारणभावापन्नतेजोबन्नकारणभूतस्य मृत्पिण्डादिसदृशस्य कारणस्य कथनात् तत् सत् प्रधानमेव। लोके च चेतनाचेतनयोर्मध्ये चेतनस्य नित्यत्वादचेतनमात्रमेव कार्यमिति कार्यसामान्यकारणमचेतनमेव। न केवलमचेतनत्वमात्रेण, विशेषरूपेणापि सारूप्यं सांख्येष्टम्। प्रपञ्चो हि सुखदुःखजनकः। तत्र दुःखजनकत्वं दुःखहेतुव्यापारस्य प्राक्करणात्। तत्करणञ्च नाज्ञानं मोहं विनेत्येवं सुखदुःखमोहहेतुत्वं प्रपञ्चस्य प्रत्यक्षम्। इदमेव च सत्त्वरजस्तमोमयत्वम्। ईदृशमेव प्रधानं सांख्येष्टम्। न चेक्षणादिप्रतिपादनात् शास्त्रं सांख्योक्तविलक्षण-

**कारणावस्थां वदति। कारणभूतद्रव्यस्यावस्थान्तरापत्तिरेव हि कार्यता। अतः, यद् द्रव्यं यत्स्वभावं च कार्यावस्थम्, तत्स्वभावं तदेव द्रव्यं कारणावस्थम्। सत्त्वादिमयं च कार्यमिति गुणसाम्यावस्थं प्रधानमेव [हि] कारणम्। तदेवोपसंहृतसकलविशेषं सन्मात्रमिति, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यभिधीयते। तत एव [च] कार्यकारणयोरनन्यत्वम्। तथासत्येव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः। अन्यथा, "यथा सोम्यैकेन मृत्पिण्डेन" इत्यादिमृत्पिण्डतत्कार्यदृष्टान्त-दार्ष्टान्तिकयोर्वैरूप्यं चेति—जगत्कारणवादिवाक्येन महर्षिणा कपिलेनोक्तं प्रधानमेव प्रतिपाद्यते। प्रतिज्ञादृष्टान्तरूपेणानुमानवेषमेव चेदं वाक्यमिति सच्छब्दवाच्यमानुमानिकमेव—**

**इत्येवं प्राप्तेऽभिधीयते—ईक्षतेर्नाशब्दम्—इति। यस्मिन् शब्द एव प्रमाणं न भवति, तत् अशब्दम् आनुमानिकम्; प्रधानमित्यर्थः। न तत् जगत्कारणवादिवाक्यप्रतिपाद्यम्;**

---

प्रतिपादकं भवत्विति वाच्यम्; अनुमानसिद्धार्थानुवादस्यैव शास्त्रेण क्रियमाणत्वात्, अनुमानतः कारणकल्पने च साजात्यादचेतनस्यैव कल्पनीयत्वात्, सद्विद्यायाश्च मृत्पिण्डादिदृष्टान्तनिदर्शनपूर्वकं कारणवस्तुस्थापकतया, तथा स्थापकत्वस्य चानुमानप्रमाण एव सत्त्वेनानुमानिकप्रधानसिद्धेरेव शास्त्रेष्टत्वावसायेन तत्रेक्षणादेर्वर्णनासंभवादिति पूर्वपक्षसारः।

**गुणसाम्यावस्थ**मिति। सत्त्वादिगुणानां तारतम्यं-तेषां वैषम्यं कार्यप्रपञ्चे; प्रधानं तु साम्यापन्नगुणत्रयमेव। ननु कारणस्येव कार्यस्यापि सत्त्वाविशेषात्, 'सदासीदग्रे' इति कारणावस्थोच्यत इति कथमुच्यत इत्यत्राह **तदेवे**ति। सदेव=सन्मात्रम्, सत्तातिरिक्तविकाररहितमासीत्; जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते नश्यतीत्युच्यमानविशेषान्तराणां तदोपसंहारात्। तदेव विव्रियते, 'एकमेवाद्वितीय'मिति। नामरूपविभागरहितं गुणवैषम्यरहितमीश्वररूपद्वितीयकारणरहितश्चेत्यर्थः। सदिदमिति सामानाधिकरण्यस्यापि साधकत्वमाह **तत एवे**ति। प्रधानस्याभिधेयत्वादेवेत्यर्थः। हेत्वन्तरमाह **तथासत्येवे**ति। अनुमानापेक्षितदृष्टान्तप्रदर्शनेनानुमानिकार्थानुवादरूपत्वावगमात् अनुमानागोचरब्रह्मविषयकं न भवतीदं वाक्यमिति प्रधानयुक्तिं दर्शयति **प्रतिज्ञे**ति। एतच्छेषतयाऽनुमानरीतिप्रदर्शनार्थमेवाचेतनसारूप्यादिकमत्राधिकरणे उक्तम्। सारूप्यादिराहित्यात् ब्रह्म न कारणमित्याक्षेपस्तु विशिष्य द्वितीयेऽध्याये उद्भाव्य निरसिष्यते। इदमानुमानिकत्वमेव पूर्वपक्षिहेतुरिति सूचयति **अशब्द**मिति पदम्। जगत्कारणस्यानुमानगम्यतायाः श्रुत्या प्रदर्शितत्वात् आनुमानिकमेव श्रुत्याऽनूद्यत इति हि पूर्वपक्षः।

**शब्द एव प्रमाणं न भवती**ति। ननु अघटं भूतलमित्युक्तौ घटमात्ररहितमित्यर्थस्य प्रतीत्यभावात् शब्दमात्ररहितम्, शब्दानुमानरूपप्रमाणद्वययुक्तमिति कथमुच्येतेति चेत्—न। **दीपा**दिग्रन्थे एवकाराभावात् अत्रापि तद्घटितविग्रहानङ्गीकारात्। **एव**कारस्य चात्र कार्त्स्न्यपरत्वात्। श्रुतिः कपिलागमो वा सर्वः शब्दोऽनुमानसिद्धानुवादमात्रमित्यर्थः। अथवा **आगमप्रामाण्ये,** "अपि च प्रवृत्तप्रमाणान्तरमपि स्वगोचरं तद्गोचरतया नावभासयतीति परमपि प्रमाणमेव" इत्युक्तम्। तद्रीत्या यथा

कुतः ? ईक्षतेः । सच्छब्दवाच्यसंबन्धिव्यापारविशेषाभिधायिनः ईक्षतेर्धातोः श्रवणात्, 'तदैक्षत बहु स्यां प्रजायेय' इति । ईक्षणक्रियायोगश्चाचेतने प्रधाने न संभवति । अत ईदृशेक्षणक्षमश्चेतनविशेषः सर्वज्ञः सर्वशक्तिः पुरुषोत्तमः सच्छब्दाभिधेयः । तथा च सर्वेष्वेव सृष्टिप्रकरणेषु ईक्षापूर्विकैव सृष्टिः प्रतीयते, (ऐ. १-१) "स ईक्षत लोकान् नु सृजा इति ; स इमाँल्लोकान् असृजत", (प्र. ६-३, ४) "स ईक्षाश्चक्रे...स प्राणमसृजत" इत्यादिषु ॥

ननु च कार्यानुगुणेनैव कारणेन भवितव्यम् ॥ सत्यम् ; सर्वकार्यानुगुण एव सर्वज्ञः सर्वशक्तिः सत्यसङ्कल्पः पुरुषोत्तमः सूक्ष्मचिदचिद्वस्तुशरीरकः । यथाऽऽह—(श्वे. ६-८) "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", (मु. १-१-६) "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः", (सु. ७) "यस्याव्यक्तं शरीरं...यस्याक्षरं शरीरं...यस्य मृत्युः शरीरम्...एष सर्वभूतान्तरात्मा" इति । तदेतत्, (शारी. २-१-४) "न विलक्षणत्वात्" इत्यादिषु प्रतिपादयिष्यते ; अत्र सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते । वस्तुविरोधस्तु तत्रैव परिहरिष्यते ।

यत्तूक्तम्—प्रतिज्ञादृष्टान्तयोगादनुमानरूपमेवेदं वाक्यम्—इति—तदसत् ; हेत्वनु-

---

अनुमानं शब्दनिरपेक्षं प्रधानं प्रत्याययति, तथा अपौरुषेयः शब्दोऽप्यनुमाननिरपेक्ष इत्युभयं प्रमाणमस्तु । यत्र पुनरेकतरत अन्यतरोपजीवनपूर्वकस्वप्रवृत्तिं दर्शयदेवाविर्भवति, तत्रैवास्वातन्त्र्यम्, यथा श्रुत्यपेक्षायाः स्मृतेरित्याशङ्कां परिहर्तुमेवकारः स्वयं प्रयुक्तः । तेन शब्दानुमानयोर्मध्ये शब्द एव प्रधानविषये प्रमाणं न भवति, नानुमानम् ; सद्विद्यायां शब्दस्य भूयोदृष्टान्तप्रदर्शकत्वेन अनुमानोपजीवितया स्वप्रवृत्तिप्रदर्शकत्वादिति अपरमात्मपरत्वे विषयवाक्यस्य, पूर्वपक्षयुक्तिः सम्यक् प्रदर्शिता भवति । अब्भक्ष इत्यत्रेव शब्दमात्रप्रमाणकभिन्नमित्यवधारणलाभ इति व्याख्यातॄणामाशयस्तु—शब्दशब्दात् अर्शआद्यचि शब्दमित्यस्य शब्दवत् शब्दमात्रमानकमित्यर्थः संभवतीति । न प्रधानम्, नाव्यक्तमित्येवमप्रयुज्य नाशब्दमिति प्रयोगः अनुमानसिद्धानुवादरूपपूर्वपक्षसूचनार्थ इव उत्तराधिकरणेऽनुवृत्त्यर्थश्च । सच्छब्दवाच्यं **नाशब्दम्** नाशब्दतया भवदभिमतप्रधानम् ईक्षणवत्त्वेनाभिहितत्वादिति सूत्रार्थः । सूत्रे ईक्षतेरिति पञ्चमी ॥

जीवसामान्येऽप्यसंभावितस्येक्षणस्याचेतने का प्रसक्तिरित्याशयेनाह **अत ईदृशेति** । अचेतनभूतकार्योपादानत्वतया कथमीक्षणं विवक्षितं स्यादित्यत्र तदनङ्गीकारे बहुश्रुतिविरोध इत्याशयेनाह **तथा चेति** । ननु स्रष्टिकर्तृ—योगादिभावितशक्तिक पुरुषविषयतया तच्छ्रुतिनिर्वाहः स्यात् ; इयं तु सर्वजगदुपादानपरेत्याशङ्कामुद्भाव्य परिहरति **ननु चेति** । ननु चिदचिच्छरीरके वस्तुनि न किञ्चित्प्रमाणम् ; कथञ्च विलक्षणस्य चेतनमात्रस्योपादानत्वमित्यत्राह **तदेतदिति** । चेतनमचेतनं वा किमुपादानत्वार्हमित्यर्थस्वभावपर्यालोचना नात्र ; किं तु श्रुतिवाक्यानामचेतनस्योपादानत्वप्रतिपादकत्वे किं स्वारस्यम्, चेतनस्य वेत्येव प्रकृतमिति भावः । अनुमानोपजीवित्वदर्शनादचेतनमेव श्रुत्यभिमतमित्युक्तमितीदमनूद्य निरस्यति **यत्त्विति** । **हेत्विति** । अनुमानं अनुमितिकरणं हेतुः । तदनुपन्यासे कथमनुमानवार्ता । दृष्टान्तस्तु, प्रयुक्ते

**पादानात्। (छा. ६-१-३) 'येनाश्रुतं श्रुतम्' इत्येकविज्ञानेन सर्वविज्ञाने प्रतिपिपादयिषिते सर्वात्मना तदसंभवं मन्वानस्य तत्संभवमात्रप्रदर्शनाय हि दृष्टान्तोपादानम्। ईक्षत्यादिश्रवणादेव ह्यनुमानगन्धाभावोऽवगतः ॥ ५ ॥**

**अथ स्यात्—न चेतनगतं मुख्यमीक्षणमिहोच्यते, अपि तु प्रधानगतं गौणमीक्षणम्; "तत् तेज ऐक्षत—ता आप ऐक्षन्त" इति गौणेक्षणसाहचर्यात्। भवति चाचेतनेष्वपि चेतनधर्मोपचारः, यथा, 'वृष्टिप्रतीक्षाः शालयः', (रा. सु. २६-६) "वर्षेण बीजं प्रतिसंजहर्ष" इति। अतो गौणमीक्षणमिति। इमामाशङ्कामनुभाष्य परिहरति—**

**गौणश्चेन्नात्मशब्दात् १। १। ६॥**

**यदुक्तम्—गौणेक्षणसाहचर्यात् सतोऽपीक्षणव्यपदेशः सर्गनियतपूर्वावस्थाभिप्रायो गौण इति; तन्न—"ऐतदात्म्यमिदं सर्वम् तत् सत्यम् स आत्मा" इति सच्छब्दप्रतिपादितस्य**

---

अनुमाने व्याप्तिग्रहदौःस्थ्ये सति तत्परिहाराय कश्चिदेवापेक्ष्यत इति न तदुक्तिनियम इति भावः। एवं सत्यपि यदि दृष्टान्तकथनव्यापकमनुमानादरणमिति स्यात्, अन्विष्येतापि हेतुः; तदपि नेत्याह **येने**ति। श्वेतकेतुश्च कुत इत्यपृच्छन् **कथ**मित्येव पृच्छतीति असंभावितत्वशंकैव तस्येति ज्ञायते। नन्वत्र सद्विद्यायां सर्वत्र दृष्टप्रक्रियाप्रदर्शनेनैव प्रतिखण्डं विवक्षितार्थोपपादनं दृश्यते। तेजस्तोऽपामुत्पत्तावपि, "तस्मात् यत्र क्वचन शोचति, स्वेदते वा पुरुषः, तेजस एव तदध्यापो जायन्ते" इति जलहेतुत्वं तेजसो निदर्शितम्। तथाऽपामन्नहेतुत्वेऽपि, "तस्मात् यत्र क्वचन वर्षति, तदेव भूयिष्ठमन्नं भवति, अद्भ्य एव तदधि अन्नाद्यं जायते" इति निदर्शनं लक्ष्यते। अत उपपत्तिमूलकमेव सतः कारणत्ववर्णनमिष्टमित्यत्राह **ईक्षत्यादी**ति। प्रथमतः, बहु स्यामिति, प्रजायेयेति चेक्षणम्, पश्चात् नामरूपे व्याकरवाणि इति, त्रिवृतं त्रिवृतं करवाणि इति चेक्षणं वर्ण्यमानम्, कापिलानुमानाभ्यूहं प्रतिरुणद्धि। न चाब्जनकत्वमग्नेः दृष्टानुसार्यनुमानकल्प्यम्, अरणितोऽप्यग्निप्रादुर्भावेनान्नजन्यत्वस्यापि कल्पनापत्तेः, जलादपि विद्युदुत्पत्तिदर्शनाच्च। एवं कठिनस्यापि द्रवीभावो भुक्ताहार-शर्करादावप्युपलभ्यते इति सर्वमिदमसाधकम्। अत इह सर्वत्र शास्त्रेणापूर्वतया प्रतिपादितविषये असंभवशङ्कापरिहार एव श्रुत्यभिमत इति भावः। **अनुमानगन्धे**ति **गन्ध**पदेनानुमानासंभवोऽप्याशय्यते। कथमत्रानुमानप्रयोगः? जगत् सत्कार्यम्, मृन्मयादिकमिव मृत्पिण्डादिकार्यमिति चेत्—अत्र कार्यत्वस्यानुमेयत्वान्न हेतुता। जगत् स्वकारणैकज्ञानज्ञेयम् कार्यत्वात् मृन्मयादिवदिति विवक्षितमिति चेत्—पृथिव्यबादेरभिमतकारणकार्यत्वं प्रागसिद्धम्। एकज्ञानज्ञेयत्वानुमानस्य फलमपि न किञ्चिल्लक्ष्यते। तेजआदिज्ञानेन जलादेर्ज्ञातत्वञ्चानुभवानारूढमित्यादिविमर्श इह भाव्यः ॥ ५ ॥

नन्वनुमानं सिध्यतु मा वा; सद्विद्यायां सामान्येन सत्पदेनाचेतनग्रहणमेव युक्तम्। न चेक्षणं बाधकम्, गौणेक्षणस्यैवात्र साहचर्यबलेन विवक्षितत्वादिति शंकते **अथ स्या**दिति। **वृष्टिप्रतीक्षाः**—वृष्टिलभ्भनीयवृद्धिका इति विवक्षितार्थः। **बीजं प्रतिसंजहर्ष**—अङ्कुरपूर्वभाव्यवस्थाविशिष्टमासीदित्यर्थः।

आत्मशब्देन व्यपदेशात् । एतदुक्तं भवति—"ऐतदात्म्यमिदं सर्वम् । स आत्मा" इति चेतनाचेतन(नात्मक)प्रपञ्चोद्देशेन सत आत्मत्वोपदेशोऽयं नाचेतने प्रधाने सङ्गच्छते इति। अतस्तेजोबन्नानामपि परमात्मैवाऽऽत्मेति तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः। तथा हि, "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्वं तत्तन्नामभाक्त्वञ्च। इति, 'तत्तेज ऐक्षत', 'ता आप ऐक्षन्त' इत्यपि मुख्य एवेक्षणव्यपदेशः। अतः साहचर्यादपि, 'तदैक्षत' इत्यत्र गौणत्वाशङ्का दूरोत्सारितेति सूत्राभिप्रायः ॥ ६ ॥

इतश्च न प्रधानं सच्छब्दप्रतिपाद्यम्—

---

यद्यप्यत्र, "गुणैर्निमित्तैर्गणैश्च गुरुः संबोधिता प्रागपि साधुसिद्धैः। वातातपक्लान्तमिव प्रनष्टं वर्षेण बीजं प्रतिसंजहर्ष" इति श्लोके सीतादेव्या एव हर्षक्रियाकर्तृत्वात् न गौणत्वप्रसक्तिः—अथाप्युपमाने बीजेऽपि तत्पदान्वयौचित्यात् तत्र विवक्षितार्थस्य गौणतेत्याशयः। नन्वात्मशब्दस्य मृदात्मा घट इत्यादाविव स्वरूपवाचित्वात् नानुपपत्तिरित्यत्राह **एतदि**ति। पूर्वं 'सन्मूलाः—सर्वाः प्रजाः' इति चेतनानामपि निर्दिष्टत्वात् 'इदं सर्व'मिति सर्वशब्देन तेषामपि ग्राह्यतया तत्स्वरूपत्वं प्रधाने कथम्। अस्मन्मते च नेहात्मशब्दस्य स्वरूपवाचित्वम्; किं तु अन्तर्यामिवाचित्वमिति। तथाच प्रथमप्रतीतस्य मुख्यार्थस्य साहचर्यलिङ्गेन भङ्गो न युक्त इति भावः। साहचर्यं त्वग्रयप्रायन्यायः। स दर्शितः **शाबरे**, 'उपांशुयाजमन्तरा यजती'ति उपांशुयाजस्य प्रधानयागविधिमध्ये विधानात् प्राधान्यमिति कथने, "प्राये वचनाच्च" (२-२-१२) इति सूत्रे, "प्रधानकर्मप्राये वचनं प्रधानकर्मतामुपोद्बलयति, यथा अग्रयप्राये लिखितं दृष्ट्वा भवेत्, 'अयमग्रयः' इति मतिः" इति। प्रत्युतेह सर्वत्र मुख्यार्थस्यैव ग्राह्यत्वात् साहचर्यमस्मदनुकूलमेवेति वक्तुमाह **अत** इति। **अतः** सतः परमात्मत्वात्। **तथा** **ही**ति; परमात्मवाचकत्वौपयिकं हीत्यर्थः। **तिस्रो देवताः**—तेजोबन्नानि। ननु त्रिवृत्कृततेजोबन्नप्रवेशस्य व्यष्टौ नामरूपभाक्त्वस्य चेहावगमेपि समष्टितेजःप्रभृतिषु कथं तदवगम इति चेन्न—जीवद्वारकानुप्रवेशादिवर्णनाय त्रिवृत्करणकथनेऽपि अत्रानुप्रवेशस्य नामादिभाक्त्वफलकत्वे सति तुल्यनयेन समष्टौ केवलानुप्रवेशनामरूपभाक्त्वयोः तथा सिद्धेः। स्पष्टमिदं तैत्तिरीये, 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इति। **इतीति**; परमात्मवाचकत्वादित्यर्थः। एवञ्चास्य सूत्रस्य, ईक्षतिशब्दः इह न गौणः; 'ऐतदात्म्यमिदं सर्वम्' इति **आत्मशब्दात्**—सत्, तेजः, आपः इति शब्दैरात्मसंशब्दनावसायादिति वास्तवार्थः। तेजआदिशब्दानां परमात्मपर्यन्तवाचित्वानवधारणेपि सत आत्मत्वात् ईक्षणमगौणमिति ज्ञापनाय प्राक् सामान्येनार्थ उक्त इति भावः ॥ ६ ॥

सद्विद्यायां घट्टद्वयम्, प्रथमं खण्डसप्तकं तत्त्वोपदेशकम्, द्वितीयं खण्डनवकं हितपुरुषार्थप्रधानम्। द्वितीये प्रतिखण्डम्, 'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति आवर्तते। तत्रत्यात्मपदग्रहणेन पूर्वघट्टस्य चेतनपरत्वं पूर्वसूत्रदर्शितम्। अतस्तद्घट्टवाक्यावगम्यं हेत्वन्तरं दर्शयति इतश्चेति।

**तन्निष्ठस्य मोक्षोपदेशात् १। १। ७॥**

**मुमुक्षोः श्वेतकेतोः, 'तत् त्वमसि' इति सदात्मकत्वानुसन्धानमुपदिश्य, तन्निष्ठस्य, "तस्य तावदेव चिरम्, यावन्न विमोक्ष्ये। अथ संपत्स्ये" इति शरीरपातमात्रान्तरायो ब्रह्मसंपत्तिलक्षणो मोक्ष इत्युपदिशति। यदि च प्रधानमचेतनं कारणमुपदिश्येत, तदा तदात्मकत्वानुसन्धानस्य मोक्षसाधनत्वोपदेशो नोपपद्यते(द्येत)। (छां. ३-१४-१) "यथाक्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति" इति तन्निष्ठस्याचेतनसंपत्तिरेव स्यात्। न च मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रमेवंविधतापत्रयाभिहतिहेतुभूतामचित्संपत्तिमुपदिशति। प्रधानकारणवादिनोऽपि हि प्रधाननिष्ठस्य मोक्षं नाभ्युपगच्छन्ति ॥ ७ ॥**

**इतश्च न प्रधानम्—**

**हेयत्वावचनाच्च १। १। ८॥**

**यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत्, तदा मुमुक्षोः श्वेतकेतोः तदात्मकत्वं मोक्षविरोधित्वात् हेयत्वेनैवोपदेश्यं स्यात्। न च तत् क्रियते। प्रत्युतोपादेयत्वेनैव, "तत् त्वमसि", "तस्य तावदेव चिरम्" इत्युपदिश्यते ॥ ८ ॥**

---

**तस्येति**। एतत्पूर्ववाक्यम्, "एवमेवेहाचार्यवान् पुरुषो वेद" इति। यथा गन्धारेभ्यः पिनद्धाक्षमानीतः कश्चित् अक्ष्यभिनहनं (अक्षिबन्धनं) प्रमुच्योपदिष्टो गन्धारानेवाभिसंपद्यते, एवमेवाचार्यवान् पुरुषः सत् विद्वान् पण्डितो मेधावी संपद्यत इति अत्र प्रतिपादनात् **तस्येत्यस्य** सद्विषयकाचार्यमूलकवेदननिष्ठस्येत्यर्थः। यावन्न विमोक्ष्ये, तावदेव **चिरं** विलम्बः; अथ संपत्स्ये इति तस्याध्यवसायो भवतीति **तस्येत्यादिश्रुत्यर्थः**। शेषं **परिष्कारे**। **तन्निष्ठस्य** सदुपासकस्य मोक्षोपदेशादिति सूत्रार्थः। उपक्रमे, 'येनाश्रुतं श्रुतं भवति, अमतं मतम्, अविज्ञातं विज्ञातम्' इति श्रवणमननध्यानानामुक्तत्वात्, 'आचार्यवान् पुरुषो वेद' इत्युपसंहारे वेदनमुपासनं स्यादित्याशयेन **निष्ठेति** प्रयोगः। तथा **तन्निष्ठस्येत्यत्र** तत्त्वमसीति तदैक्यानुसंधानमप्यभिमतम्, न च प्रधानैक्यमात्मनः सुवचमिति ॥७॥

ननु मा भूत् वेदनमुपासनम्, विज्ञानमपि, "व्यक्ताव्यक्तज्ञविज्ञानात्" इति सांख्यकारिकायामिव मननानन्तरभावि निष्पन्दज्ञानमेव। तत् अव्यक्तविषये तत्रैव हेयतया भवितुमर्हति। तत्त्वमसीति च अनादिसिद्धप्रकृत्यात्मभ्रान्त्यनुवादः इत्यत्र प्रवृत्तं सूत्रमवतारयति **इतश्चेति**। न हि, 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इत्यत्रेवेह सतो हेयत्वमुक्तमिति सूत्रार्थः। चकारेण, प्रत्युत 'अथ संपत्स्ये' इति संपत्स्यमानत्ववचनमेवास्ति; न तु संप्रति सता बाध्यमानत्वमित्यर्थ उच्यत इत्याशयेनाह **प्रत्युतेत्यादि**। अतोऽनुक्तसमुच्चायकश्चकारः ८ ॥

ननूपक्रमविरोधादुपसंहारवाक्यानि अन्यथा नेयानि। अत एव प्रतिज्ञासामानाधिकरण्यादिना कार्यकारणैक्यावगमेन सतोऽचेतनत्वे उपक्रमसिद्धे पश्चाच्छ्रुतमीक्षणं गौणमित्युच्यते। अन्यथा हीक्षणप्राधान्ये निमित्तेश्वरपरमिदमित्युपादानत्वभङ्ग एवेत्यत्र उपक्रमस्यापि परपक्ष एवाघटमानतोपर्युच्यते।

इतश्च न प्रधानम्—

प्रतिज्ञाविरोधात् १। १। ९॥

प्रधानकारणत्वे प्रतिज्ञाविरोधश्च भवति। वाक्योपक्रमे ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्। तच्च कार्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात् तत्कार्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम्। तत्तु, प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्यत्वाभावात् प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुध्यते॥ ९॥

इतश्च न प्रधानम्—

स्वाप्ययात् १। १। १०॥

तदेव सच्छब्दवाच्यं प्रकृत्याह, (छां० ६-९-१) "स्वप्नान्तं मे सोम्य विजानीहीति। यत्रैतत् पुरुषः स्वपिति नाम, सता सोम्य तदा संपन्नो भवति। स्वमपीतो भवति। तस्मादेनं स्वपितीत्याचक्षते। स्वं ह्यपीतो भवति" इति। सुषुप्तं जीवं सता संपन्नम्, स्वमपीतः—स्वस्मिन् प्रलीनः इति व्यपदिशति। प्रलयश्च—स्वकारणे लयः। न चाचेतनं प्रधानं चेतनस्य जीवस्य कारणं भवितुमर्हति। [स्वमपीतो भवति—आत्मानमेव जीवोऽपीतो भवतीत्यर्थः। चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव जीवशब्देनाभिधीयत इति नामरूपव्याकरणश्रुत्योक्तम्।

---

तदवतारयति इतश्चेति। स्वपक्षे तदविरोधप्रकारस्तु अनपेक्षितत्वान्नोक्तः। उपक्रमप्रभृतिविरोधादुपसंहारान्यथानयनमयुक्तमित्येतावता पूर्वपक्षिविरमात्। नेदं सूत्रं शाङ्करे॥ ९॥

ननु चेतनानामपि देहिनां विशेषणभूताचिदंशमादाय प्रधानस्योपादानत्वं युज्यते। विशेष्यांशस्य नित्यतया सर्वमतेऽप्युपादेयत्वाप्रसक्तेः। अतः सत् अचेतनमेवेत्यत्र—प्रकरणानुसारेण सच्छब्दस्य चेतनपरत्वं चेतनस्याप्युपादेयभावस्य श्रुत्यभिमतत्वञ्च दर्शयितुं प्रवृत्तं सूत्रमवतारयति इतश्चेति। एतत्सूत्रमत्र द्वितीयषष्ठोपक्रमखण्डविषयकम्। स्वप्नान्तं सुषुप्तिम्। मे मत्त इति यावत्। 'पुरुषः स्वपितीत्यस्य पुरुषः स्वस्मिन् अपीतिमान् इत्यर्थः; तेन सता संपन्न इत्युक्तं भवती'ति वदन्त्या श्रुत्या, चेतनस्य स्वस्मिन् लयः सुषुप्तिः, स्वं च सदेवेति बोधनात् चेतनेऽप्युपादानोपादेयभावः, स्वशब्दार्थचेतनस्य सच्छब्दार्थस्य चाभेदश्च ज्ञाप्यते। न च स्वशब्दः स्वकीयपरः सन् प्रधानवाची; तथासति तत्र स्वभिन्ने स्वस्य लयायोगात् इति सत् नाचेतनमिति भावः। घटत्वावस्थापन्नस्य चूर्णत्वकपालत्वाद्यवस्थापन्नैक्यवत् जाग्रद्दशाश्लिष्टदेहनियमनरागद्वेषादिबाह्येन्द्रियव्यापारादिमत्त्वरूपावस्थापन्नस्य जीवस्य तद्राहित्यरूपावस्थापन्नैक्यकथनात् चेतनविषयेऽपि कार्यकारणभाव एषितव्य इति। न च सच्छब्दस्य चेतनाचेतनोभयपरत्वमयुक्तमिति वाच्यम्—उभयविशिष्टपरमात्मन एव तदर्थत्वात् तैजससुषुप्तादिशब्दानामपि तत्तद्विशेषणविशिष्टपरतया विशिष्टैककारणकत्वनिर्वाहात्।

अत्र भवितुमर्हतीत्येतदनन्तरम्, तथासुषुप्तमित्यतः पूर्वम्, स्वमपीत इत्यारभ्य तदाभवन्तीति इत्येतावत् वाक्यजातं प्राचीनश्रीभाष्यतालकोशेऽनुपलभ्यमानत्वात्, टीकायां, 'नचाचेतन'-

तत् जीवशब्दाभिधेयं ब्रह्म सुषुप्तिकालेऽपि प्रलयकाल इव नामरूपपरिष्वङ्गाभावात् केवलसच्छब्दाभिधेयमिति, 'सता सोम्य तदा संपन्नो भवति; स्वमपीतो भवति' इत्युच्यते। तथा समानप्रकरणे नामरूपपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात्, (बृ० ६–३-२१) "प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इत्युच्यते। आमोक्षाज्जीवस्य नामरूपपरिष्वङ्गादेव हि स्वव्यतिरिक्तविषयज्ञानोदयः। सुषुप्तिकाले हि नामरूपे विहाय सता संपरिष्वक्तः पुनरपि जागरदशायां नामरूपे परिष्वज्य तत्तन्नामरूपो भवतीति श्रुत्यन्तरे स्पष्टमभिधीयते, (कौ-३-३०) "... सुप्तः स्वप्नं न कथञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति .... "एतस्मात् आत्मनः प्राणा यथायतनं विप्रतिष्ठन्ते", तथा (छा. ६-९) "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा ... दंशो वा मशको वा यद्यद्भवन्ति तत् आभवन्ति"—इति च।]

**तथा सुषुप्तं जीवम्, (बृ. ६-३-२१) "प्राज्ञेनात्मना संपरिष्वक्तः" इति च वदति॥ तस्मात् सच्छब्दवाच्यः परं ब्रह्म सर्वज्ञः परमेश्वरः पुरुषोत्तम एव। तदाह वृत्तिकारः, "(छा.**

---

मितिवाक्यव्याख्यानसमनन्तरं **तथासुषुप्त**मितिवाक्यस्यैव व्याख्यातत्वात् प्रत्यक्षरव्याख्यारूपायामत्र मध्यभागस्थानेकवाक्यजाते कस्याप्यंशस्य व्याख्यानाभावात्, एतन्मध्येऽत्रैव श्रूयमाणस्य, "आत्मानमेव जीवोऽपीतो भवतीत्यर्थः" इति वाक्यस्य **सारग्रन्थ**स्थितत्वेनैव टीकायामुद्धरणाच्च, सर्वमिदं भाष्यकारसूक्तिरूपं सदपि, **सार**गतमेव श्रीभाष्ये अर्थविशदायार्वाग्भिः प्रक्षिप्तम्। अन्यथा **तथाप्राज्ञेने**त्यनेन पौनरुक्त्यञ्चेत्यवधेयम्॥

एवं **स्वपद**स्य स्वकीयप्रधानपरत्वाभावं परमात्मपरत्वञ्च वाक्यान्तरेण द्रढयति **तथा सुषुप्त**मिति। आत्मवाचि**स्व**शब्देन सतो निर्देशात् सत् चेतनमिति सिद्धम्। तत् परमात्मपर्यन्तमिति इतोऽवगम्यते। एवं प्राज्ञेनात्मनेति वाक्योदाहरणात् शङ्कान्तरमपि शमितम्—पुरुषः स्वमपीतो भवतीत्यत्र पुरुषपदं जाग्रदवस्थावैचित्र्यविशिष्टचित्तादिमज्जीवपरमिति सर्वसंमतम्। तस्य स्वस्मिन् लयो नाम स्वकीये निर्व्यापारे चित्ताद्युपकरणे लय एव। स्वपदस्य निर्व्यापारचित्तादिमज्जीवपरत्वेऽपि विशेषणस्य विशेषणे लय एव पर्यवसानम्। इदमेव निष्कृष्य **सति** प्रधाने लय इत्युच्यत इत्येवं हि शंका भवति। तच्छमनञ्च—प्राज्ञे लयस्य सति लयस्य चैक्यावगमात् सत् प्राज्ञः, स्वाप्ययश्च प्राज्ञे लय इति न सदचेतनमिति।

अत्र अप्ययादित्येतावति सूत्रिते स चेतनकर्तृको न स्पष्टं प्रतीयेतेति तत्स्फुटप्रतीतये, 'स्वमपीतो भवती'ति वाक्यस्मारणायैव **स्व**शब्दस्याधिकस्य प्रयोगः। अतो न स्वपदघटितवाक्यमेव विवक्षणीयमिति निर्बन्धः; चेतनस्य सति लयकथनात् सदपि चेतनमित्येतावत एव पर्याप्तत्वात्। तथाचाष्टमखण्डोक्तस्वाप्ययरूपसत्संपत्तिपरत्ववत् अस्य सूत्रस्य नवमखण्डोक्तसत्संपत्तिपरत्वमपि युक्तम्। तेन दशमखण्डोक्तं सत्त आगमनमपि संनिकर्षात् लक्षितं भवेत्। तत्र हि क्रमेण, 'सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामहे इति' इति, 'सत आगम्य न विदुः, सत आगच्छामह इति'इति च श्रूयते। एवञ्चानेन सूत्रेणैव सर्वस्योक्ततया **गतिसामान्या**दिति सूत्रस्य तत्खण्डविषयकतया **यादवप्रकाशीय**योजनं **वृत्ति**विरुद्धमिति ज्ञापयितुं नानासुषुप्तिप्रकरणगतानेकवाक्यविषयकत्वमस्य सूत्रस्य **वृत्ति**वचनमुखेन दर्शयति **तदाहे**ति।

६-८-१) सता सोम्य तदा संपन्नो भवति इति, संपत्त्यसंपत्तिभ्यामेतदध्यवसीयते। प्राज्ञेनात्मना संपरिष्वक्तः इति चाह" इति ॥ १० ॥

इतश्च न प्रधानम्—

गतिसामान्यात् १।१।११॥

(ऐत. १-१) "आत्मा वा इदमेक एवाग्र आसीत्; नान्यत् किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमाँल्लोकानसृजत", (तै. आनं.) "तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी", (बृ. ४-४-१०) "अस्य महतो भूतस्य निःश्वसितमेतत् यदृग्वेदः" इत्यादिश्रुतिवाक्यानां या गतिः प्रवृत्तिः तत्समानार्थत्वादस्य। तेषु च सर्वेषु सर्वेश्वरः कारणमवगम्यते; तस्मादत्रापि सर्वेश्वर एव कारणमिति निश्चीयते ॥ ११ ॥

इतश्च न प्रधानम्—

श्रुतत्वाच्च १। १। १२॥

श्रुतमेव ह्यस्यामुपनिषदि अस्य सच्छब्दवाच्यस्य आत्मत्वेन नामरूपयोर्व्याकर्तृत्वं

---

इति संपत्तौ। इतिशब्दः प्रकारवचनः नवमदशमखण्डगतवाक्यग्राहकः। इति चाहेति चकारेण, 'अत्र ह्यस्मिन् प्राण एकधा भवति', 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते ... एवमेवास्मादात्मनः सर्वे प्राणाः—व्युच्चरन्ति' इत्यादिग्रहणम्। तथाच स्वाप्ययपरप्रकृतनामावैकार्थ्यस्य न प्रधानपरत्वे भवतीति वृत्तिग्रन्थदर्शितं भवति ॥ १० ॥

महतो भूतस्य। भूतशब्दो देहविशिष्टात्मवाची। विराट्पुरुषस्येत्यर्थः। गतिसामान्यात्—गतेः प्रवृत्तेः—बोधनव्यापारस्य समानत्वात्—एकविषयकत्वादित्यर्थः; सतश्चेतनपरत्वे एव आत्मादिचेतनवाचिपदघटितकारणवाक्यसमानार्थकत्वस्य सद्विद्यायां भावादिति यावत्। छागपशुन्यायरूपसामान्यविशेषन्यायेन कारणवाक्यानि सर्वाणि, "एको ह वै नारायण आसीत्, न ब्रह्मा, नेशानः"इति वाक्यश्रुतनारायणैकविषयाणीति एतत्सूत्रनिगूढम् ॥ ११ ॥

ननु सद्विद्यागता हेतवः प्रागुक्ताः; गतिसामान्यादि श्रुत्यन्तराणि च दर्शितानि। एवंसति पुनः श्रुतत्वाच्चेति किमुच्यत इत्यत्र, अभिप्रेतमाह श्रुतमेव ह्यस्यामिति। सद्विद्यावाक्य एव पूर्वोक्तातिरिक्ताः आदेशोत्पत्त्यधिकरणसारावलिश्लोकदर्शितप्रभृतयः, एवमत्र छान्दोग्ये पूर्वोत्तरविद्याप्रकरणावगताश्च जगत्कारणस्य चेतनविशेषत्वोपयोगिन इह सूत्रेऽभिप्रेता इति। ननु यदि श्रुत्यन्तराणि पूर्वसूत्रस्य, एतत्सूत्रस्य चेत् छान्दोग्योपनिषत् विषयः, तर्हि कथमत्रैवोपरि तथाच श्रुत्यन्तराणि इत्यन्योपन्यासः क्रियत इति चेत्—उच्यते। पूर्वमचेतनवैलक्षण्योपयोगिनो हेतवः प्रदर्शिताः। अथ गतिसामान्ये प्रस्तुते तत एव नारायणत्वरूपपरमचेतननिर्धारणमप्यासीत्। तादृशनिर्धारणविशेषे प्रकृतोपनिषत्प्रदर्शनार्थमेवेदं सूत्रम्। तदुपबृंहकतया पुनरिह श्रुत्यन्तरोपन्यास इति। अथवा गतिसामान्यसूत्रे सद्विद्याभिन्नानि अप्ययपूर्वक-

सर्वज्ञत्वं सर्वशक्तित्वं सर्वाधारत्वम् अपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वञ्च—"अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि", "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः", "ऐतदात्म्यमिदं सर्वम्। तत् सत्यम्। स आत्मा", (छा. ८-१, २-५) "यच्चास्येहास्ति यच्च नास्ति, सर्वं तदस्मिन् समाहितम्। ...अस्मिन् कामाः समाहिताः; एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति। तथा च श्रुत्यन्तराणि—(श्वे. ५-६) "न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्। स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः", (पु. सू.) "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते", (तै. आर. ३-११-२१) "अन्तः प्रविष्टः शास्ता जनानाँ सर्वात्मा", (तै. ना.) "विश्वात्मानं परायणम्...पतिं विश्वस्याऽऽत्मेश्वरम्...यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः", (सुबा. ७) "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादीनि।

तस्मात् जगत्कारणवादिवाक्यं न प्रधानादिप्रतिपादनयोग्यम्। अतः सर्वज्ञः सर्वशक्तिः सर्वेश्वरेश्वरो निरस्तनिखिलदोषगन्धोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणौघमहार्णवः पुरुषोत्तमो नारायण एव निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति स्थितम्॥

अत एव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेण आभिः श्रुतिभिः निरस्तो वेदितव्यः; पारमार्थिकमुख्येक्षणादिगुणयोगि जिज्ञास्यं ब्रह्मेति स्थापनात्। निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकम्। वेदान्तवेद्यं ब्रह्म जिज्ञास्यतया प्रतिज्ञातम्। तच्च चेतनमिति, 'ईक्षतेर्नाशब्दम्' इत्यादिभिः सूत्रैः प्रतिपाद्यते। चेतनत्वं नाम चैतन्यगुणयोगः। अत ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव। किञ्च—निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य प्रकाशत्व-

---

सृष्टिपरवाक्यानि सर्वाणि विवक्षितानि। इह पुनः तदतिरिक्तानि सर्वाणि—अर्थात् सद्विद्यागतवाक्यानि च असृष्टिवाक्यानि च कारणस्य परमचेतनत्वप्रतिपादकानि विवक्षितानि। अत इह श्रुत्यन्तरोपन्यासोऽपि सुष्ठु संगच्छत इति। **यच्चास्येति।** **अस्य** उपासकस्य इहलोके यत् भोग्यजातमस्ति, यच्च नास्ति, तत् सर्वमस्मिन् दहरपरमात्मनि भोग्यत्वाय समाहितमस्तीत्यर्थः। **कामाः** कल्याणगुणाः, ते चानन्तरोक्ताः अपहतपाप्मत्वादयः। **पतिः** स्वामी। **ईशिता** नियन्ता। **लिङ्गम्** शरीरम्; साधकहेतुर्वा, अचिन्त्यत्वात्। **जनिता** जनयिता। **सर्वाणीति।** नामरूपनिर्वोढा स रूपाणि विधाय नामानि कृत्वा व्यवहरन् शिक्षको भवतीति। **प्रधानादीति।** सम्यक्परिशीलयतामनेनैवाधिकरणेन चेतनसामान्य—आकाशाद्यचेतनविशेष—इन्द्रादिचेतनविशेषकारणत्वशंकाऽपि सहृदयानां न संभाव्यते इति दर्शयितुम् आदिपदम्। अथवा विज्ञानमात्रकारणत्ववादोऽपि निरस्त इति ज्ञाप्यतेऽनेन। तदेव विस्पष्टयिष्यति **अतएवेत्यादिना।** **गुणगणौघेति।** गुणगणा एव ओघाः प्रवाहाः तत्प्रवेशस्थानभूतमहार्णव इति।

मपि दुरुपपादम् । प्रकाशो हि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन् वस्तुविशेषः । निर्विशेषस्य वस्तुनः तदुभयरूपत्वाभावात् घटादिवत् अचित्त्वमेव ॥ तदुभयरूपत्वाभावेऽपि तत्क्षमत्वमस्तीति चेत्-तन्न । तत्क्षमत्वं हि तत्सामर्थ्यमेव । सामर्थ्यगुणयोगे हि निर्विशेषवादः परित्यक्तः स्यात् ॥ अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युपगम्यत इति चेत्—हन्त तर्हि तत एव सर्वज्ञता सर्वशक्तित्वं सर्वेश्वरेश्वरत्वं सर्वकल्याणगुणाकरत्वं सकलहेयप्रत्यनीकतेत्यादयः सर्वेऽभ्युपगन्तव्याः । शक्तिमत्त्वं च कार्यविशेषानुगुणत्वम् ; तच्च कार्यविशेषैकनिरूपणीयम् ; कार्यविशेषस्य निष्प्रमाणकत्वे तदेकनिरूपणीयं शक्तिमत्त्वमपि निष्प्रमाणकं स्यात् । किञ्च निर्विशेषवस्तुवादिनो वस्तुत्वमपि निष्प्रमाणम् । प्रत्यक्षानुमानागमस्वानुभवाः सविशेषगोचरा इति पूर्वमेवोक्तम् । तस्मात् 'विचित्रचेतनात्मकजगद्रूपेण बहु स्याम्' इतीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्य इति सिद्धम् ॥ १२ ॥ ॥ इति ईक्षत्यधिकरणम् ॥ ५ ॥

( आनन्दमयाधिकरणम् ॥ ६ ॥ )

एवं जिज्ञासितस्य ब्रह्मणः चेतनभोग्यभूत-जडरूप-सत्त्वरजस्तमोमय-प्रधानाद् व्या-

---

व्यवहारयोग्यतामापादयन् वस्तुविशेष इत्यत्र आपादकत्वांशाभावसमर्थनं निष्प्रमाणकं स्यादित्यन्तेन कृत्वा वस्तुत्वाभावं समर्थयते किञ्चेति ॥ १२ ॥

'यतो वा इमानी'ति तैत्तिरीयवाक्यमादाय लक्षणे कथिते तद्ब्रह्म किमिति विचार्य आनन्द इति भृगुणा निर्धारितम् ; तत् वस्तु किमिति चिन्ता प्राप्ता । अथापि तल्लक्षणाश्रयोऽचेतन एवेति मध्येऽतिप्रसिद्धाचेतनविषये बलवत् प्रवृत्ता शङ्का । तस्यां शमितायां प्रागेव प्राप्ता शङ्का संप्रति प्राप्तावसराऽऽसीत् । अत आनन्दमयाधिकरणोत्थानम् । तदत्र—जगत्कारणत्वं लक्षणं हि भृगवे वरुणेनोपदिष्टम् । भृगुश्च विमृशन् आनन्दो ब्रह्मेति व्यजानात् । जीवात्मनश्चानन्दरूपत्वात् स एव तेन विज्ञातः स्यात् । स हि विज्ञानरूपबुद्धिव्यतिरिक्तः, तत्संनिकृष्टश्च । न च—आनन्दवल्ल्यामुक्तस्यानन्दमयस्य भृगुविज्ञातानन्दस्य चैक्यमावश्यकम् ; आनन्दमयश्च जीवादन्यः—इति शंक्यम्, तस्यापि जीवत्वात् । तत्र हि, 'तस्माद्वा एतदस्मादात्मन आकाशः संभूतः' इत्युपक्रमे, उपरि, "सोऽकामयत बहु स्यां प्रजायेयेति "इति "असद्वा इदमग्र आसीत्"इति च कारणत्वेन वर्ण्यमान आत्मैव मध्ये आनन्दमयः शारीर आत्मेति कथ्यते । शारीरत्वाच्च कारणभूतोऽयमानन्दमयो जीव एव । न च पूर्वाधिकरणे सद्विद्यया प्रधानवैलक्षण्यवत् जीववैलक्षण्यमप्यवगमितमिति नैवं शंकाप्रसक्तिरिति वाच्यम्-सद्विद्ययाऽपि जीवैक्यपक्षोपष्टम्भनस्यैव करणात् । तथा हि तत्र, 'अनेन जीवेनात्मनाऽनुप्रविश्य', 'तत् त्वमसि' इति कारणस्य जीवस्य चैक्यं श्राव्यते । ननु कथं जीवस्य निमित्तत्वोपादानत्वोभयं प्रपञ्चनिरूपितमिति चेत्-जीवातिरिक्तधर्म्यकल्पनेन जीव एव कारणत्वनिर्वाहे चिन्त्यमाने पूर्वं प्रधानकारणवादपूर्वपक्ष इव यादृशकारणत्वं जीवे संभावितम्, तावत्येव सर्ववाक्यविश्रम इति । एवमभिप्रेत्याह एवंजिज्ञासितस्येति । आनन्दशब्दस्य जीवतदितरसाधारण्यात् आनन्दमयशब्दार्थे निर्धारिते तदर्थोऽपि निधार्यत इति, सूत्रे आनन्दमय एव गृहीतः ।

वृत्तिरुक्ता। इदानीं कर्मवश्यात् त्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुःखसागरनिमज्जनेनाशुद्धात्, शुद्धाच्च प्रत्यगात्मनोऽन्यत् निखिलहेयप्रत्यनीकनिरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते—

६. आनन्दमयोऽभ्यासात् १। १। १३॥

तैत्तिरीया अधीयते—(तै. १) "स वा एष पुरुषोऽन्नरसमयः" इति प्रकृत्य, "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः" इति। तत्र सन्देहः—किमयमानन्दमयो बन्धमोक्षभागिनः प्रत्यगात्मनो जीवशब्दाभिलपनीयादन्यः परमात्मा, उत स एव—इति। किं युक्तम्?

प्रत्यगात्मेति। कुतः? "तस्यैष एव शारीर आत्मा" इत्यानन्दमयस्य शारीरत्वश्रवणात्; शारीरो हि शरीरसम्बन्धी जीवात्मा॥

ननु च जगत्कारणतया प्रतिपादितस्य ब्रह्मणः सुखप्रतिपत्त्यर्थमन्नमयादीन् अनुक्रम्य तदेव जगत्कारणम्, आनन्दमय इत्युपदिशति; जगत्कारणं च, (छा. ६-२-३) "तदैक्षत" इतीक्षणश्रवणात् सर्वज्ञः सर्वेश्वर इत्युक्तम्॥

---

**किंयुक्त**मिति विचारप्रस्तावः; अथ पूर्वपक्षी आह **प्रत्यगात्मेती**ति। नन्वस्मिन् अधिकरणे कः पूर्वपक्षी? प्रकृतिपुरुषरूपतत्त्वद्वयवादी सांख्यः प्रकृतिकारणत्वे निरस्ते पुरुषस्य जीवस्य कारणत्वं श्रुत्यर्थ इति शंकत इति चेत्-न; तेन चैतन्यमात्रमात्मेति स्वीकारात्; आनन्दरूपत्वस्यानुक्तत्वात्। दुःखव्यावृत्तिमात्रमेवेदमिति चेत्-तत् किं प्रधानेऽपि न भवति? एवं उपरि जीवब्रह्मैक्यवादस्याद्वैत्याहृतस्य विस्तरेण भाष्ये खण्डनात्, पूर्वपक्षोपसंहारे, 'नेतरोऽनुपपत्तेः'इति सूत्रावतरणादौ च निर्विशेषाद्वैत्यात्मवादस्योपन्यासाच्च सांख्यरीतिर्न युज्यते। अथ तर्हि स्यादद्वैती पूर्वपक्षी। न। तन्मते जीवातिरिक्ततया व्यवहारसिद्धस्यैव जगत्कारणत्वादिति चेत्—उच्यते। 'सच्चिदानन्दरूप आत्मा कश्चिदेवाऽऽच्छादकविक्षेपकाविद्याविवशो जगद्धेतुः। तस्यानन्दरूपत्वात् आनन्द इति व्यपदेशः, आनन्दमय इति च; मयटः स्वार्थिकत्वात्। अस्तु वाऽविद्यापारवश्यात् विकारार्थकत्वम्। तस्य सुखदुःखभाज एव कारणत्वे संभवति किमिति जीवेशभेदकल्पनयाऽन्यकारणत्ववादः। अवश्यमेव जीवेशभेदकल्पनेऽपि जीवकल्पितत्वं प्रपञ्चस्य स्वीकार्यम्। अन्यथा तस्य तत्प्रतीत्यसंभवात्। न ह्यन्यकल्पितमन्यः प्रत्येति' इत्यद्वैतिमतमेव स्वयं परिष्कृत्य कश्चिदिह प्रत्यवतिष्ठत इति। एतेन—अनेकजीववादिसांख्यमतेन पूर्वपक्षे कस्य जीवस्य कारणत्वमिह पूर्वपक्ष्यभिमतम्? विनिगमनाविरहात् सर्वस्येति चेत्-न हि सर्वः सर्वप्रपञ्चकारणं भवितुमर्हति; अंशभेदेनैव तेषां कारणत्वप्रसक्तेः—इति निरस्तम्। अनेक एव जीवा अंशभेदेन कारणं भवन्तु, किमीश्वरेणेति पूर्वपक्षस्यापि संभवाच्च। यथा सर्वत्रप्रसिद्ध्यधिकरणे। एकमतरीतिमनुसृत्य पूर्वपक्षे प्रवर्तितेऽपि, यन्मते यथायथा जीव इष्टः तथातथास्थितस्यापि जीवस्य सर्वथा न कारणत्वप्रसक्तिरित्यत्रैव सिद्धान्ततात्पर्याच्च। भाष्यगतिस्तु परिष्कृताद्वैतपक्षावलम्बने स्वरसेति।

सत्यमुक्तम्; स तु जीवात्मा निर्दिश्यते; (छा. ६-३-२) "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य", (छा. ६-८-७) "तत् त्वमसि श्वेतकेतो" इति कारणतया निर्दिष्टस्य जीवसामानाधिकरण्यनिर्देशात्। सामानाधिकरण्यं ह्येकत्वप्रतिपादनपरम्; यथा 'सोऽयं देवदत्तः' इत्यादौ। ईक्षापूर्विका च सृष्टिश्चेतनस्य जीवस्योपपद्यत एव। अतः, (तै. आनं-१) "ब्रह्मविदाप्नोति परम्" इति जीवस्याविद्यासंसर्गवियुक्तं स्वरूपं प्राप्यतयोपदिश्यते। अविद्यावियुक्तस्वरूपस्य लक्षणमिदमुच्यते. "सत्यं ज्ञानमनन्तं ब्रह्म" इति। तद्रूपप्राप्तिरेव हि मोक्षः। (छा. ८-१२-१) "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति। अतो जीवस्याविद्यावियुक्तं स्वरूपं प्राप्यतया प्रक्रान्तम्, आनन्दमय इत्युपदिश्यते। तथा हि शाखाचन्द्रन्यायेनाऽऽत्मस्वरूपं दर्शयितुम्, "अन्नमयः पुरुषः" इति शरीरं प्रथमं निर्दिश्य, तदन्तरभूतं तस्य धारकं पञ्चवृत्तिप्राणम्, तस्याप्यन्तरभूतं मनः, तदन्तरभूतां च बुद्धिम्, "प्राणमयः", "मनोमयः", विज्ञानमयः" इति तत्रतत्र बुद्ध्यवतरणक्रमेण निर्दिश्य सर्वान्तरभूतं जीवात्मानम्, 'अन्योऽन्तर आत्माऽऽनन्दमयः" इत्युपदिश्य अन्तरात्मपरम्परां समापयति। अतो जीवात्मस्वरूपमेव, "ब्रह्मविदाप्नोति" इति प्रक्रान्तं ब्रह्म; तदेवाऽऽनन्दमय इत्युपदिष्टमिति निश्चीयते॥

ननु च—"ब्रह्म पुच्छं प्रतिष्ठा" इत्यानन्दमयादन्यद्ब्रह्मेति प्रतीयते॥—नैवम्। ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वरूपितं शिरःपक्षपुच्छरूपेण व्यपदिश्यते। यथाऽन्नमयो देहोऽवयवी स्वस्मादनतिरिक्तैः स्वावयवैरेव, "तस्येदमेव शिरः" इत्यादिना शिरःपक्षपुच्छवत्तया निदर्शितः—तथा आनन्दमयं ब्रह्मापि स्वस्मादनतिरिक्तैः प्रियादिभिर्निदर्शितम्। तत्रावयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामाश्रयतया अखण्डरूपमानन्दमयम्, "ब्रह्म पुच्छं प्रतिष्ठा" इत्युच्यते। यदि चानन्दमयादन्यद् ब्रह्माभविष्यत्, 'तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्म' इत्यादि निरदेक्ष्यत। न चैवं निर्दिश्यते। एतदुक्तं भवति—

---

**ईक्षापूर्विका च सृष्टिरिति**। अविद्यागतं हि ज्ञातृत्वं कर्तृत्वञ्च। चैतन्यरूपात्मनस्तत्र प्रतिफलनं विना तन्न भवतीति चैतन्यमेव तत्र कारणमिति भावः। **तद्रूपेति**; अविद्यावियुक्तस्वरूपेत्यर्थः। **शांकरभाष्ये** अधिकरणमिदं वृत्तिकाररीत्या यथावद् व्याख्याय अन्ते, "इदं त्विह वक्तव्यम्" इत्यादिना आनन्दमयस्य जीवत्वम्, तत्पुच्छस्यैव च ब्रह्मत्वं सूत्रोपमर्देन प्रपञ्चितम्। तदिहात्मब्रह्मानन्दमयानामैक्यवादिपूर्वपक्षिमुखेन खण्डयितुमनुवदति **ननुचेति**। ब्रह्मशब्देनोपक्रान्तस्य, ब्रह्म पुच्छं प्रतिष्ठेतिवाक्येनोपसंहारात्, असन्नेवेति श्लोके आनन्दमयपदनिर्देशेन ब्रह्मपदनिर्देशात् अन्नमयादिवच्च आनन्दमयस्यापि कोशत्वेन ब्रह्मण एवात्मत्वमिति शंकितुराशयः। **निदर्शितः** निरूपितः। **आश्रयतयेति**। आनन्दविशिष्टे ब्रह्मणि कर्मांशः पुच्छमित्यर्थः। ब्रह्मशब्देनोपक्रमात्, 'तस्माद्वा एतस्माद् विज्ञानमयादन्योऽन्तर आत्मा ब्रह्म' इत्यनिर्देशात् 'ब्रह्म पुच्छम्' इत्येव कथनाच्च ब्रह्मानन्दमयभेदः प्रतीयत इत्यत्राह **एतदुक्तं भवतीति**। "तस्माद्वा

'ब्रह्मविदाप्नोति परम्' इति प्रक्रान्तं ब्रह्म, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति लक्षणतः सकलेतरव्यावृत्ताकारं प्रतिपाद्य, तदेव, "तस्माद्वा एतस्मादात्मनः" इत्यात्मशब्देन निर्दिश्य, तस्य सर्वान्तरत्वेनाऽऽत्मत्वं व्यञ्जयद्वाक्यम्, अन्नमयादिषु तत्तदन्तरतया आत्मत्वेन निर्दिष्टान् प्राणमयादीन् अतिक्रम्य, "अन्योऽन्तर आत्माऽऽनन्दमयः" इति आत्मशब्देन निर्दे-श्यानन्दमये समापयति। अत आत्मशब्देन प्रक्रान्तं ब्रह्माऽऽनन्दमय इति निश्चीयते—इति॥

ननु च—"ब्रह्म पुच्छं प्रतिष्ठा" इत्युक्त्वा, "असन्नेव स भवति, असद्ब्रह्मेति वेद वेद। अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः" इति ब्रह्मज्ञानाज्ञानाभ्यामात्मनः सद्भावासद्भावौ दर्शयति; नानन्दमयज्ञानाज्ञानाभ्याम्। न चानन्दमयस्य प्रियमोदादिरूपेण सर्वलोकविदितस्य सद्भावासद्भावज्ञानाऽऽशङ्का युक्ता। अतो नानन्दमयमधिकृत्यायं श्लोक उदाहृतः। तस्मात् आनन्दमयादन्यद् ब्रह्म॥ नैवम्—'इदं पुच्छं प्रतिष्ठा', 'पृथिवी पुच्छं प्रतिष्ठा', 'अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा', 'महः पुच्छं प्रतिष्ठा' इत्युक्त्वा तत्र-तत्रोदाहृताः, 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यादिश्लोकाः यथा न पुच्छमात्रप्रतिपादनपराः; अपि त्वन्नमयादिपुरुषप्रतिपादनपराः—एवमत्राप्यानन्दमयस्यायम् 'असन्नेव' इति श्लोकः; नानन्दमयव्यतिरिक्तस्य पुच्छस्य। आनन्दमयस्यैव ब्रह्मत्वेऽपि प्रियमोदादिरूपेण रूपित[स्य त] स्यापरिच्छिन्नानन्दस्य सद्भावासद्भावज्ञानाऽऽशङ्का युक्तैव। पुच्छब्रह्मणोऽप्यपरिच्छिन्नानन्द-तयैव ह्यप्रसिद्धता॥ शिरःप्रभृत्यवयवि(व)त्वाभावाद्ब्रह्मणः, नानन्दमयो ब्रह्मेति चेत्—ब्रह्मणः पुच्छत्वप्रतिष्ठात्वाभावात् पुच्छमपि ब्रह्म न भवेत्॥ अथाविद्यापरिकल्पितस्य वस्तुनस्तस्य (स्याश्र) आश्रयभूतत्वात् ब्रह्मणः, पुच्छं प्रतिष्ठेति रूपणमात्रमित्युच्येत, हन्त तर्हि त (अ)-स्यासुखाद्व्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादिरूपणं भविष्यति। एवं च, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति विकारास्पद-जड-परिच्छिन्नवस्त्वन्तरव्यावृत्तस्यासुखाद् व्यावृत्तिः, 'आनन्दमय' इत्युपदिश्यते। ततश्चाखण्डैकरसानन्दरूपे ब्रह्मणि आनन्दमय इति मयट् प्राणमय

---

एतस्मादात्मन आकाशः" इति ब्रह्मात्मनोरैक्यं प्रथमतः श्रावितम्। अथ 'आत्माऽऽनन्दमय' इति आनन्दमयस्यात्मत्वमुक्तम्। तेन सिद्धमेवास्य ब्रह्मत्वम्। अत एव श्लोके ब्रह्मशब्देन निर्देशः। ब्रह्मणा विपश्चितेति ब्रह्मण्युक्तं विपश्चित्त्वमेव च, सोऽकामयतेति आनन्दमये आत्मनि विशदमुपपाद्यत इत्यैक्यमे-वेति भावः।

**सद्भावासद्भावज्ञानाशंके**ति श्लोकयथाश्रुतानुसारेण। सद्भावज्ञानाज्ञानशंकेति तु जिज्ञा-साधिकरण (पु. ९३) दर्शितार्थानुसारेण वाच्यम्। **आशंका**पदेन **चे**च्छब्दार्थो विवक्षितः। असद्भाव-ज्ञानमसंभावितमिति शंकितुराशयः। **पुच्छब्रह्मणोऽपी**ति। ब्रह्मण आनन्दत्वं भवदिष्टम्। आनन्दश्चेत् सर्वलोकविदितः, कथं तद्रूपं निर्गुणं ब्रह्म न विदितम्। तत्र यः समाधिः, स एवात्रापीति। वस्तुतो-ऽद्वैतिमते सत्यत्वादेरिवानन्दत्वस्याप्यभावादभिमतमर्थं दर्शयति **एवञ्चे**ति। **स्वार्थिक** इति। **आनन्दो**

इव स्वार्थिको द्रष्टव्यः । तस्मादविद्यापरिकल्पितविविधविचित्रदेवादिभेदभिन्नस्य जीवात्मनः स्वाभाविकं रूपमखण्डैकरसं सुखैकतानमानन्दमय इत्युच्यत इत्यानन्दमयः प्रत्यगात्मा ॥

एवं प्राप्ते प्रचक्ष्महे—आनन्दमयोऽभ्यासात्—आनन्दमयः परमात्मा । कुतः ? अभ्यासात् । "सैषाऽऽनन्दस्य मीमाँसा भवति" इत्यारभ्य, "यतो वाचो निवर्तन्ते" इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कोऽभ्यस्यमान आनन्दः अनन्तदुःखमिश्रपरिमितसुखलवभागिनि जीवात्मन्यसम्भवन् निखिलहेयप्रत्यनीकं कल्याणैकतानं सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति । यथाऽऽह 'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः' इति ॥

---

भोक्त्येतदनुरोधे स्वार्थिकः । अविद्याशबलस्यैव कारणत्वात् तद्विवक्षायामस्तु विकारार्थकः; शबलस्य शुद्धं प्रति विकारभूतत्वादिति च निश्चितम् । अत एव **विकारशब्दादिति** सूत्रम् । **अविद्येत्यादिना** एकस्यैवात्मनो देवादिभेदकल्पना पूर्वपक्षीति ज्ञाप्यते ।

**किंयुक्तमिति** विचारप्रस्तावे **प्रत्यगात्मेतीत्यादिना** पूर्वपक्षे प्राप्ते यत् युक्तं तत् प्रचक्ष्महे इत्याह **एवंप्राप्त** इति । **आनन्दमय** इति पक्षः । आनन्दमयशब्दवाच्य इत्यर्थः । नाशब्दमिति साध्यमनुषज्यते । ईक्षतेरित्येतदनुसारेण अचेतनं प्राक् अशब्दशब्दार्थः । इहाभ्यस्यमानानन्दरूपविशेषानुसारात् जीवस्तदर्थः । सोऽपि अशब्दः; स्वयम्प्रकाशत्वप्रत्यक्षत्वादिमत्त्वात् । अभ्यस्यत इत्यभ्यासः । भावे चेत्, आनन्दस्याभ्यसनादित्यर्थः, । कर्मणि चेत्, अभ्यस्यमानवत्त्वादित्यर्थः । अभ्यासो गुणनं वर्धनम्, अधिकतया प्रतिपादनम् । जीवगतानन्दाधिकत्वेन प्रतिपादितानन्दवत्त्वात् न जीव इत्युक्तं भवति । आधिक्यञ्च शतगुणनरूपम्, अपरिच्छिन्नत्वञ्च । पूर्वं तेयेशतमिति वाक्यवेद्यम्; उत्तरं यतोवाच इति । न च मुक्तजीवेऽपि हेतुमत्त्वादनेकान्त इति शंक्यम् - पूर्वपक्षाभिमतस्य मुक्तस्य केवलानन्दरूपत्वेन आनन्दवत्त्वस्यैवाभावात्; बद्धस्य च बद्धाधिकनयाभ्यस्तानन्दाभावात् । सिद्धान्त्यभिमतमुक्ते च शब्दैकसमधिगम्यतया **नाशब्दमिति** साध्यस्यापि सत्त्वेनादोषात् । अशुद्धजीव एव च जगत्कारणत्वप्रसक्त्या तद्व्यावृत्तिरेवेह सूत्रे विवक्षिता । नेतर इति सूत्रएवैतदितरमुक्तप्रस्तावात् ॥ जीवातिरेकदर्शि वाक्यमाह **यथाऽऽहेति** । नन्विदं भेदव्यपदेशसूत्रविषयवाक्यमिह न ग्राह्यम् । नैवम् । अन्य इत्यंशो तद्विषयवाक्यम्; आनन्दमय इत्यंशो प्रकृतसूत्रविषयवाक्यम्; प्रागस्यैवोपादानात् । नन्वन्यत्वप्रतिपादनमेवेह भाष्येण प्रदर्श्यते; तदप्रकृतमिति चेत्—उच्यते । भेदव्यपदेशसूत्रं भिन्नतयाव्यपदिष्टत्वेन हेतुना भेदं साधयति; इह तु भाष्यं तत्साधितं भिन्नत्वमुपजीव्य आनन्दमयशब्दस्याधिकानन्दवत्त्वरूपमर्थं प्रकृतहेतुनिविष्टं स्थापयति । अयं भावः—आनन्दमयशब्दे मयट् यदि स्वार्थिकः, तर्हि जीवभिन्नत्वमानन्दे वर्ण्यमानं न घटते । जीवस्याप्यानन्दतया, आनन्दत्वावच्छिन्ने जीवप्रतियोगिकभेदानुयोगित्वायोगात् । अधिकानन्दश्चेदानन्दमयः, तदनुयोगितावच्छेदकधर्मस्य जीवावृत्तित्वाद् भेदः सुवचः । तत् मयट्शब्दः न स्वार्थे, न च विकारे इति ।

नन्वस्य जीवभेदपरत्वे सिद्धे एवं स्यात्, तदेव न; विज्ञानमयशब्दस्य बुद्धिपरत्वादित्याशंकायां

विज्ञानमयो हि जीवः, न बुद्धिमात्रम्, मयट्प्रत्ययेन व्यतिरेकप्रतीतेः। प्राणमये त्वगत्या स्वार्थिकताऽऽश्रीयते। इह तु तद्वतो जीवस्य संभवात् नानर्थक्यं न्याय्यम्। बद्धो मुक्तश्च प्रत्यगात्मा ज्ञातैवेत्यभ्युपेष्महि। प्राणमयादौ च मयडर्थसंभवोऽनन्तरमेव वक्ष्यते॥ कथं तर्हि विज्ञानमयविषये श्लोके, 'विज्ञानं यज्ञं तनुते' इति केवलविज्ञानशब्दोपादानमुपपद्यते॥ ज्ञातुरेवाऽऽत्मनः स्वरूपमपि स्वप्रकाशतया विज्ञानमित्युच्यत इति न दोषः। ज्ञानैकनिरूपणीयत्वाच्च ज्ञातुस्स्वरूपस्य। स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन धर्मिस्वरूपमपि प्रतिपादयन्ति, गवादिशब्दवत्। (अष्टा. ३-३ ११३) "कृत्यल्युटो बहुलम्" इति वा कर्तरि ल्युडाश्रीयते। नन्द्यादित्वं वाऽऽश्रित्य (अष्टा. ३-१-१३४) "नन्दिग्रहि" इत्यादिना कर्तरि ल्युः। अत एव [च], 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते। बुद्धिमात्रस्य हि न कर्तृत्वं संभवति। अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात्माधीनेषु अन्नमयादिषु न चेतनधर्मभूतं कर्तृत्वं श्रूयते। अत एव च चेतनमचेतनं च स्वासाधारणैः निलयनत्वानिलयनत्वादिभिर्धर्मविशेषैर्विभज्य निर्दिशद्वाक्यम्, 'विज्ञानं चाविज्ञानं च' इति, विज्ञानशब्देन तद्गुणं चेतनं वदति। तथाऽन्तर्यामिब्राह्मणे, "यो विज्ञाने तिष्ठन्" इत्यस्य काण्वपाठगतस्य पर्यायस्य स्थाने, "य आत्मनि तिष्ठन्" इति पर्यायमधीयाना माध्यन्दिनाः काण्वपाठगत(तं)विज्ञानशब्दनिर्दिष्टं जीवात्मेति स्फुटीकुर्वन्ति। विज्ञानमिति च नपुंसकलिङ्गं वस्तुत्वाभिप्रायम्। तदेवं विज्ञानमयाज्जीवादन्यस्तदन्तरः परमात्मा आनन्दमयः। यद्यपि, 'विज्ञानं यज्ञं तनुते' इति श्लोके ज्ञानमात्रमेवोपादीयते; न ज्ञाता—तथापि 'अन्योन्तर आत्मा विज्ञानमयः' इति तद्वान् ज्ञातैवोपदिश्यते; यथा, 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यत्र श्लोके केवलान्नोपादानेऽपि 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र नान्नमात्रं निर्दिष्टम्; अपितु तन्मयः तद्विकारः। एतत् सर्वं हृदि निधाय सूत्रकारः स्वयमेव, "भेदव्यपदेशात्" इति अनन्तरमेव वदति॥

यदुक्तम्-जगत्कारणतया निर्दिष्टस्य, (छां. ६-३-२) "अनेन जीवेनाऽऽत्मनाऽनु-

---

भेदव्यपदेशसूत्रेऽप्यपेक्षितमंशमिहैव प्रसक्तत्वात् शोधयति **विज्ञानमयो ही**त्यादिना। इममंशमभिप्रेत्य, **अनन्तरमेव वदती**ति भाष्यम्। स्वप्रकाशत्वरूपार्थस्वीकारे धर्म्यैक्येऽपि विज्ञान-विज्ञानमयशब्दयोः प्रवृत्तिनिमित्तभेदो भवति; ऐकरूप्याय निमित्तैक्यस्याप्याश्रयणेनाह **ज्ञानैके**ति। विज्ञात्यादिशब्दैः जीवनिर्देशादर्शनात् विज्ञानशब्दमात्रोपयोगि निर्वाहान्तरमाह **कृत्ये**ति। अर्शआद्यचोऽप्युपलक्षणमिदम्। अव्युत्पन्नो वा भवतु विज्ञानशब्दः; किमनेन; धर्मिपर्यन्तार्थकत्वमवर्जनीयमिति बोधयितुमुपपत्तिमाह **अत एवे**ति। हेत्वन्तरमाह **अत एव चे**ति। मयटः स्वार्थिकत्वाभावमुपसंहरति **तदेव**मिति।

ननु वाक्यमिदं न जीवादन्यत्वपरम्, जीवैक्यपर-तत्त्वमस्यादिविरोधादित्याशंकायाम्, पूर्वं पूर्वपक्ष्युक्तं परासितुमनुवदति **यदुक्त**मिति। एकस्यैव दुःखादिभाक्त्वाकारेण जीवत्वम्, कारणत्वाकारेण

प्रविश्य", (छा. ६-८-७) "तत् त्वमसि" इति च जीवसामानाधिकरण्यनिर्देशात् जगत्कारणमपि जीवस्वरूपात् नातिरिच्यत इति कृत्वा, जीवस्यैव स्वरूपम्, 'ब्रह्मविदाप्नोति परम्' इति प्रक्रान्तमसुखाद्व्यावृत्तत्वेन आनन्दमय इत्युपदिश्यत इति—तदयुक्तम्; जीवस्य चेतनत्वे सत्यपि, 'तदैक्षत बहु स्यां प्रजायेयेति। तत् तेजोऽसृजत' इति स्वसङ्कल्पपूर्वकानन्तविचित्रसृष्टियोगानुपपत्तेः। शुद्धावस्थस्यापि [हि] तस्य सर्गादिजगद्व्यापारासम्भवः (शारी. ४-४-१७, २१.) "जगद्व्यापारवर्जम्", "भोगमात्रसाम्यलिङ्गाच्च" इत्यत्रोपपादयिष्यते॥

कारणभूतस्य ब्रह्मणो जीवस्वरूपत्वानभ्युपगमे, 'अनेन जीवेनाऽऽत्मना', 'तत् त्वमसि' इति सामानाधिकरण्यनिर्देशः कथमुपपद्यत इति चेत्—कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासङ्ख्येयकल्याणगुणगणस्य सकलकारणभूतस्य ब्रह्मणः नानाविधानन्तदुःखाकर-कर्माधीननिरन्तरतिरोहितादिसकलप्रवृत्तिजीवस्वरूपत्वम्?॥ अन्यतरस्य मिथ्यात्वेनोपपद्यत इति चेत्—कस्य भोः? किं हेयसंबन्धस्य? किं वा हेयप्रत्यनीककल्याणैकतानस्वभावस्य?॥

हेयप्रत्यनीककल्याणैकतान[स्वभाव]स्य ब्रह्मणोऽनाद्यविद्याश्रयत्वेन हेयसंबन्धमिथ्याप्रतिभासो मिथ्यारूप इति चेत्—विप्रतिषिद्धमिदमभिधीयते—ब्रह्मणो हेयप्रत्यनीककल्याणैकतानत्वम्, अनाद्यविद्याश्रयत्वेनानन्त दुःखविषयमिथ्याप्रतिभासाश्रयत्वञ्चेति। अविद्याश्रयत्वं तत्कार्यदुःखप्रतिभासाश्रयत्वं चैव हि हेयसंबन्धः। तत्सम्बन्धित्वं तत्प्रत्यनीकत्वं च विरुद्धमेव। तथाऽपि तस्य मिथ्यात्वान्न विरोध इति मा वोचः। मिथ्याभूतमप्यपुरुषार्थ एव; यन्निरसनाय सर्वे वेदान्ता आरभ्यन्त इति ब्रूषे। निरसनीयापुरुषार्थयोगश्च हेयप्रत्यनीककल्याणैकतानतया विरुध्यते॥ किं कुर्मः? (छा. ६-१-३) 'येनाश्रुतं श्रुतं भवति' इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय, (छा. ६-२-१) 'सदेव सोम्येदमग्र आसीत्' इत्यादिना निखिलजगदेककारणताम्, (छा. ६-२-३) 'तदैक्षत बहु स्याम्' इति सत्यसङ्कल्पतां च ब्रह्मणः प्रतिपाद्य, तस्यैव ब्रह्मणः (छा. ६-८-७) 'तत्त्वमसि' इति सामानाधिकरण्येनानन्तदुःखाश्रयजीवैक्यं प्रतिपादितम्। तदन्यथानुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वादि परिकल्पनीयमिति चेत्—श्रुतोपपत्तयेऽप्यनुपपन्नं विरुद्धं च न कल्पनीयम्॥

---

ब्रह्मत्वमिति औपाधिकभेदावलम्बनेन भेदश्रुतिनिर्वाहः कार्यः, अन्यथा ऐक्यश्रुतिसामञ्जस्याभावादित्याशङ्कायाम्, ऐक्यश्रुतिसामञ्जस्यमपि मत एव न भवतीति निवेदयितुमुत्थापयति कारणभूतस्येति। मिथ्याप्रतिभासो मिथ्यारूप इति। मिथ्याप्रतिभासः-मिथ्याज्ञानम्, भ्रान्तिः। तस्यापि हेयत्वात् कथं हेयासंबन्ध इत्यत्र, तस्य प्रतिभासस्यापि मिथ्यात्वान्न हेयसंबन्ध इति प्रत्युत्तराशयेन मिथ्यारूपत्वोक्तिः। आत्मनि दुःखादि, तत्प्रतिभासश्चेति सर्वं तथ्यमिति तत्त्वज्ञाः। सत्यमपि दुःखादिकमहङ्कारस्थमात्मन्यविद्यमानं प्रतिभासत इति सांख्याः। तन्मतेपि प्रतिभासनिवृत्तये तत्त्वज्ञानान्वेषणा घटते। यस्य हि दुःखादिकमप्यसत्यम्,

अथ हेयसंबन्ध एव पारमार्थिकः, कल्याणैकस्वभावता तु मिथ्याभूता—हन्तैवं तापत्रयाभिहतचेतनोज्जिजीवयिषया प्रवृत्तं शास्त्रम्, 'तापत्रयाभिहतिरेव तस्य पारमार्थिकी; कल्याणैकस्वभावस्तु भ्रान्तिपरिकल्पितः' इति बोधयत् सम्यगुज्जीवयति ॥

अथैतद्दोषपरिजिहीर्षया ब्रह्मणो निर्विशेषचिन्मात्रस्वरूपातिरिक्त(क्तं ?) जीवत्वदुःखित्वादिकं सत्यसङ्कल्पत्वकल्याणगुणाकरत्वजगत्कारणत्वाद्यपि मिथ्याभूतमिति कल्पनीयमिति चेत्—अहो भवतां वाक्यार्थपर्यालोचनकुशलता। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सेत्स्यति (संपत्स्यते)। यथैकविज्ञानं परमार्थविषयम्, तथैव सर्वविज्ञानमपि यदि परमार्थविषयं तदन्तर्गतं च—तदा तज्ज्ञानेन सर्वविज्ञानमिति शक्यते वक्तुम्। न हि परमार्थशुक्तिकाज्ञानेन तदाश्रयमपरामर्थरजतं ज्ञातं भवति ॥

अथोच्येत—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अयमर्थः—निर्विशेषवस्तुमात्रमेव सत्यम्, अन्यदसत्यम् इति—न तर्हि, (छा. ६-१-३) 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति श्रूयेत। येन श्रुतेनाश्रुतमपि श्रुतं भवतीति ह्यस्य वाक्यस्यार्थः। कारणतयोपलक्षितनिर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत् प्रतिज्ञातः—(छां. ६-१-४) 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातम्' इति दृष्टान्तोऽपि न घटते। मृत्पिण्डविज्ञानेन हि तद्विकारस्य ज्ञातता निदर्शिता ॥ तत्रापि विकारस्यासत्यताऽभिप्रेतेति चेत्—मृद्विकारस्य रज्जुसर्पादिवत् असत्यत्वं शुश्रूषोरसिद्धमिति प्रतिज्ञातार्थसंभावनाप्रदर्शनाय 'यथा सोम्य' इति प्रसिद्धवदुपन्यासो न युज्यते। न च तत्त्वमस्यादिवाक्यजन्यज्ञानोत्पत्तेः प्राक् विकारजातस्यासत्यतामापादयत् तर्कानुगृहीतम्, अननुगृहीतं वा प्रमाणमुपलभामह इति। अयमर्थः, (शारी. २-१-१५) 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र वक्ष्यते।

तथा 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत...हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा. ६-८-३) 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः। ऐतदात्म्यमिदं

---

तत्प्रतिभासोऽप्यसत्यः, तस्य किमर्थो वेदान्तारम्भः। किमपि हेयं नास्ति, हेयनिवर्तनाय वेदान्तचिन्तेति व्याहतिरेव सर्वथेति ध्येयम्। **अहो भवतामिति**। वाक्यप्रतीतयथाश्रुतार्थत्यागेनार्थान्तरवर्णनं लोके प्रत्यक्षानुमानाविरोधाय पूर्वापरसंदर्भाविरोधाय च भवति। अत एव सिंहो माणवक इत्यत्र प्रतीतैक्यनिर्वाहायैकस्मिन् पदे वृत्त्यन्तराश्रयणम्। भवतां तु प्रत्यक्षादिसिद्धभेदत्यागः, पूर्वापरप्रतीतार्थत्यागः, जीवपरगुणपरित्यागः, तत्त्वमसिवाक्यस्थसर्वपदमुख्यवृत्तित्यागः, शास्त्रवैयर्थ्यम्, विचारवैयर्थ्यमित्येवं सर्वदोषसमाहार इति भावः। उपक्रमप्रभृतिसर्वांशविरोधं शास्त्रान्तरविरोधञ्च क्रमेण दर्शयति **एकेति**।

**न तर्हीति**। येन श्रुतेन श्रुतमप्यश्रुतं भवतीति भवन्मते वक्तुमुचितम्। तत्, 'सर्वं विज्ञातं स्या'दित्युत्तरेणानन्वितम्। रज्जुज्ञानेन सर्पतज्ज्ञानयोर्निवृत्तिवत् निवृत्तिर्हि सर्वस्य वक्तव्या ; न सर्वज्ञानमिति भावः।

सर्वम्' इत्यादिनाऽस्य जगतः सदात्मकता, सृष्टेः पूर्वकाले नामरूपविभागप्रहाणम्, जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणः स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वम्, 'सृष्टिकालेऽहमेवानन्तस्थिरत्रसरूपेण बहु स्याम्' इत्यनन्यथासिद्धसङ्कल्पविशेषः, यथासङ्कल्पमनन्तानिवतत्त्वानां विलक्षणक्रमविशेषविशिष्टा सृष्टिः, समस्तेष्वचेतनेषु वस्तुषु स्वात्मकजीवानुप्रवेशेनैवानन्तनामरूपव्याकरणम्, स्वव्यतिरिक्तस्य समस्तस्य स्वमूलत्वम्, स्वायतनत्वम्, स्वप्रवर्त्यत्वम्, स्वेनैव जीवनम्, स्वव्याप्यत्वमित्यादयोऽनन्तविशेषाः शास्त्रैकसमधिगम्याः प्रतिपादिताः । तत्सम्बन्धितया प्रकरणान्तरेषु अपहतपाप्मत्वादि-निरस्तनिखिलदोषता-सर्वज्ञता-सर्वेश्वरत्व-सत्यकामत्व-सत्यसङ्कल्पत्व-सर्वानन्दकरण-निरतिशयानन्दयोगादयः सकलेतरप्रमाणाविषयाः सहस्रशः प्रतिपादिताः । एवमनन्यथासिद्धानन्तविशेषविशिष्टप्रकृतवस्तुपरामर्शितच्छब्दस्य निर्विशेषवस्तुमात्रोपदेशपरत्वमसङ्गतत्वेनोन्मत्तप्रलपितायेत ।

त्वंपदं च न निर्विशिष्टजीववाचि । तस्यापि निर्विशेषस्वरूपोपस्थापनपरत्वे स्वार्थः परित्यक्तः स्यात् । निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो ह्यविद्यया तिरोधाने स्वरूपनाशप्रसङ्गादिति तन्न संभवतीति पूर्वमेवोक्तम् । एवं च सति समानाधिकरणवृत्तयोः तत् त्वमिति द्वयोरपि पदयोर्मुख्यार्थपरित्यागेन लक्षणा च समाश्रयणीया ॥

अथोच्येत—समानाधिकरणवृत्तानामेकार्थप्रतिपादनपरतया विशेषणांशे तात्पर्याभावादेव विशेषणविशिष्टवस्तुमात्रैक्यप्रतिपादनात् न लक्षणाप्रसङ्गः; यथा 'नीलमुत्पलम्' इति पदद्वयस्य विशिष्टैकत्वप्रतिपादनपरत्वेन नीलत्वोत्पलत्वरूपविशेषणद्वयं न विवक्ष्यते । तद्विवक्षायां हि नीलत्वविशिष्टाकारेणोत्पलत्वविशिष्टाकारस्यैकत्वप्रतिपादनं प्रसज्येत । तत्तु न संभवति । न हि नैल्यविशिष्टाकारेण तद्वस्तु उत्पलपदेन विशेष्यते; जातिगुणयोरन्योन्यसमवायप्रसङ्गात् । अतो नीलत्वोत्पलत्वोपलक्षितवस्त्वैकत्वमात्रं सामानाधिकरण्येन प्रतिपाद्यते । तथा 'सोऽयं देवदत्तः' इति, अतीतकाल-विप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण संनिहितदेश-वर्तमानकालविशिष्टतया प्रतिपादनानुपपत्तेरुभयदेशकालोपलक्षितस्वरूपमात्रैक्यं सामानाधिकरण्येन प्रतिपाद्यते । यद्यपि नीलमित्याद्येकपदश्रवणे प्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्न प्रतिपाद्यते—तथाऽपि वाच्येऽर्थे प्रधानांशस्य प्रतिपादनान्न लक्षणा । अपि तु विशेषणांशस्याविवक्षामात्रम् । सर्वत्र सामानाधिकरण्यस्यैष एव स्वभाव

---

**न लक्षणाप्रसंग** इति । विशेषणांशत्यागे सत्यपि समानाधिकरणवाक्यस्थले सर्वत्र एवमेवाभिधानात् निरूढलक्षणेयं न सांप्रतिकलक्षणावद् दोषायेति भावः । **जातिगुणयोरन्योन्यसमवायेति** । नीलगुणविशिष्टे उत्पलत्वान्वये विशेष्य इव विशेषणेऽपि उत्पलत्वं स्यात्, एवं विपरिवर्ते इत्यर्थः । **उपलक्षितेति** । नीलत्वादेर्नोपस्थापकत्वम् इति भावः । लक्षणेत्येव वक्तुमशक्यम् । शक्यसंबन्धो हि लक्षणा । शक्यार्थो धर्म्येव बोध्यत इति न तत्र शक्यसंबन्धप्रसक्तिरिति चाह **यद्यपीत्यादिना** ।

इति न कश्चिद्दोषः—इति—

तदिदमसारम्—सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यम्। तत्र समानाधिकरणवृत्तानामपि नीलादिपदानां नैल्यादिविशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते; यथा—'नीलमुत्पलमानय' इत्युक्ते नीलिमादिविशिष्टमेवाऽऽनीयते, यथा च—'विन्ध्याटव्यां मदमुदितो मातङ्गगणस्तिष्ठति' इति पदद्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयते। एवं वेदान्तवाक्येष्वपि समानाधिकरणादिषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम्। न च विशेषणविवक्षायामितरविशिष्टाकारं वस्तु अन्येन विशेष्टव्यम्; अपि तु सर्वैर्विशेषणैः स्वरूपमेव विशेष्यम्। तथा हि, (कैयटे वृद्धच् ह्निके) "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति। अन्वयेन निवृत्त्या वा पदान्तरप्रतिपाद्यादाकारादाकारान्तरयुक्ततया तस्यैव वस्तुनः पदान्तरप्रतिपाद्यत्वं सामानाधिकरण्यकार्यम्। यथा 'देवदत्तः श्यामो युवा लोहिताक्षोऽदीनोऽकृपणोऽनवद्यः' इति। यत्र त्वेकस्मिन् वस्तुनि समन्वयायोग्यं विशेषणद्वयं समानाधिकरणपदनिर्दिष्टम्; तत्राप्यन्यतरत् पदममुख्यवृत्तमाश्रीयते; न द्वयम्। यथा 'गौर्वाहीकः' इति। नीलोत्पलादिषु तु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्टं प्रतिपाद्यते॥

अथ मनुषे—एकविशेषणप्रतिबन्धित्वेन निरूप्यमाणं विशेषणान्तरप्रतिसम्बन्धित्वात् (नो) विलक्षणम् इति घटपटयोरिवैव भिन्नविषयत्वेऽप्यैक्यप्रतिपादनासंभवात् समानाधिकरणशब्दस्य न विशिष्टप्रतिपादनपरत्वम्; अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेव—इति—

स्यादेतदेवम्, यदि विशेषणद्वयप्रतिबन्धित्वमात्रमैक्यं निरुन्ध्यात्। न चैतदस्ति; एकस्मिन् धर्मिण्युपसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्येकत्वं निरुणद्धि। अयोग्यता च प्रमाणान्तरसिद्धा घटत्वपटत्वयोः। 'नीलमुत्पलम्' इत्यादिषु तु दण्डित्वकुण्डलित्ववत्

---

समानाधिकरणस्थलेष्वपि व्यधिकरणस्थलेष्विव प्रवृत्तिनिमित्तबोधविषय एव सर्वत्रेति न तत्त्यागेऽनादितात्पर्यमित्याशयेनाह **सर्वेष्वेवेति**। **यथेति यथा चेति** च प्रत्यक्षपरोक्षभेदेन, कार्यपरत्व-सिद्धपरत्वभेदेन, कारकाकारकविभक्तिभेदेन चोदाहरणद्वयम्। अन्योन्यसमवायप्रसंगं परिहरति **न च विशेषणेति**। जातिगुणयोरन्योन्यासमवायस्य प्रत्यक्षसिद्धत्वात् प्रतीतार्थप्रतिपादकवाक्ये लोकरीतिविरोधेनैवार्थस्य वाच्यत्वादिति भावः। **विशेषणान्तरप्रतिसंबन्धित्वादिति**। नीलत्वविशिष्टतया गृहीतं उत्पलत्वविशिष्टत्वापेक्षया **विलक्षणम्**-उत्पलत्वविशिष्टत्वाकारप्रतीत्यविषय इति यावत्। एकधर्मविशिष्टतया किञ्चिद्विषयकप्रतीतेः अपरधर्मविशिष्टतया तदविषयकत्वेऽपि उभयधर्मान्वयस्यैव भंगो नेत्याह **स्यादित्यादिना**। **वस्तुभेदे** सति नीलो घट इति न स्यात्, यथा घटः पट इतीति भावः। **दण्डित्वेत्यादि**। मूर्तानां समानदेशताविरोधात् दण्डकुण्डले भिन्नप्रदेशावच्छेदेन एकस्मिन् स्तः; रूपवत्त्वादि तु प्रदेशभेदं विनापीति

रूपवत्त्वरसवत्त्वगन्धवत्त्वादिवच्च विरोधो नोपलभ्यते । न केवलमविरोध एव; प्रवृत्तिनिमित्तभेदेनैकार्थनिष्ठत्वरूपं सामानाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टता(ताम्)। अन्यथा स्वरूपमात्रैक्ये अनेकपदप्रवृत्तौ निमित्ताभावात् सामानाधिकरण्यमेव न स्यात् । विशेषणानां स्वसंबन्धानादरेण वस्तुस्वरूपोपलक्षणपरत्वे (रूपत्वे) सति एकेनैव वस्तु उपलक्षितमित्युपलक्षणान्तरमनर्थकमेव। उपलक्षणान्तरोपलक्ष्याकारभेदाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः॥

'सोऽयं देवदत्तः' इत्यत्र न लक्षणागन्धो न विद्यते; विरोधाभावात् । देशान्तरसंबन्धितयाऽतीतस्य संनिहितदेशसम्बन्धितया वर्तमानत्वाविरोधात् । अत एव हि 'सोऽयम्' इति प्रत्यभिज्ञया कालद्वयसम्बन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनः स्थिरत्ववादिभिः । अन्यथा प्रतीतिविरोधे सति सर्वेषां क्षणिकत्वमेव स्यात् । देशद्वयसंबन्धविरोधस्तु कालभेदेन परिह्रियते ॥

यतः समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम्; अत एव (यजु. ६-१-६) "अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इति आरुण्यादिविशिष्टैकहायन्या क्रयः साध्यतया विधीयते। तदुक्तम्, (पूर्वमी. ३-१-१२-(२)) "अर्थैकत्वे द्रव्यगुणयो-

---

विशेषपदर्शनाभेनोदाहरणम् । धर्मद्वयविशिष्टतेति । अन्यथा - धर्मद्वयविशिष्टत्वाभावे सामानाधिकरण्यं न स्यादित्युक्त्या, धर्मद्वयविशिष्टत्वमुपपादकम्, उपपाद्यं तु सामानाधिकरण्यम्; जीवतो गृहाभाव उपपाद्यः, बहिःसत्त्वमुपपादकमितिवत् । अतो धर्मद्वयविशिष्टतामिति न पाठ्यम् । शाखायाश्चन्द्रोपलक्षकत्ववत् प्रवृत्तिनिमित्तानां संबन्धरहितानामेवोपलक्षकत्वमस्त्वित्यत्राह विशेषणानामिति । किं स्वरूपोपलक्षकम्, उत धर्मान्तरोपलक्षकम्? आद्ये द्वितीयविशेषणवैयर्थ्यम्, अन्त्ये उपलक्ष्यधर्ममादाय सविशेषत्वात् प्रवृत्तिनिमित्तस्यासंबन्धाद्विवर्णनं व्यर्थमिति भावः । न च 'जातपुत्रः कृष्णकेशः' इत्यत्र वयोवस्थाविशेषस्यैकस्योपलक्ष्यत्वं पदद्वयार्थत्वागश्च यथा, तथा स्यादिति मन्तव्यम् - तत्र हि जातपुत्रत्वं यौवनारम्भोपलक्षकम्, कृष्णकेशत्वं यौवनानवसानोपलक्षकम् । तदुभयोपसंहार एव मध्यमवयोवस्थालाभ इति । अत इहाप्याकारभेद आवश्यकः । एकस्य धर्म्युपलक्षकत्वम्, अन्यस्य तद्गताकारोपलक्षकत्वमित्युक्तावपि सविशेषत्वमेवेति । देशान्तरेत्यादि । कालद्वयसंबन्धित्वस्य न देशभेदेनोपपादनीयता । अतीतत्ववर्तमानत्वयोर्विरोधः पूर्वपक्षिशङ्कितः । तत्र वस्तुनः स्वरूपेणातीतत्वमेव नास्ति । देशान्तरसंबन्धित्वाकारेणातीतत्वं वाच्यम् । तस्य संबन्धातीतत्व एव पर्यवसानम् । अतो न विरोध इत्यर्थः । अस्तु स्थिरत्वसंपत्तये कालद्वयसंबन्धः, देशद्वयसंबन्धस्तु मा भूदित्यत्राह देशद्वयेति । परिहृतस्येति शेषः।

ननु समानाधिकरणस्थले सर्वत्र पदयोर्धर्मविशिष्टधर्मिपर्यन्तत्वकथनं नीलमुत्पलमानयेत्युदाहरणञ्चायुक्तम्; नीलपदस्य गुणमात्रवाचित्वात्; अरुणाधिकरणे तथैव वर्णितत्वादित्यत्राह यत इति । समानाधिकरणपदानां विशिष्टैकार्थप्रतिपादकत्ववर्णनमेवारुणाधिकरणकृत्यमिति भावः । तत्र सूत्रं प्रमाणयति अर्थैकत्वे इति । अर्थैकत्व इति पदं हि पदद्वयवाच्योऽर्थ एक इति बोधयत् गुणमात्रवाचित्वाभि-

नैककर्म्यान्नियमः स्यात्" इति ॥

तत्रैवं पूर्वपक्षी मन्यते—यद्यप्यरुणयेति पदमाकृतेरिव गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वात् द्रव्यपर्यन्तमेवारुणिमानमभिदधाति, तथाऽप्येकहायन्यन्वयनियमोऽरुणिम्नो न

---

मतिं निरस्यतीति भावः। ननु गुणवाचिनां शब्दानां गुणमात्रेऽपि प्रयोगदर्शनेन गुणमात्रे शक्तत्वं स्वीकर्तव्यम्। एवञ्च विशिष्टेऽपि शक्त्यन्तरकल्पनमयुक्तम्। एतेन - आकृत्यधिकरणे मीमांसकैराकृतिमात्रवाचित्वसिद्धान्तवर्णनमयुक्तम्-प्रकारवाचिशब्दानां प्रकारिपर्यन्तबोधकत्वस्वाभाव्येन गोशब्दस्य गोत्वविशिष्टव्यक्तिपर्यन्तवाचित्वात्। तथैव नीलादिपदेऽपि भाव्यमिति आकृत्यधिकरणशिक्षणमूलकशङ्काऽपि निरस्ता। तत्र 'पटस्य शुक्लः' इतिवत् तस्य पटत्वनिरर्थे 'अस्य पटः' इति प्रयोगाभावेन पटशब्दस्याकृतिमात्रे शक्त्यस्वीकारेऽपि शुक्लादिपदे तद्योगात्। अतएवारुणाधिकरणे गोशब्दमुपेक्ष्यारुणाशब्दे चिन्ता वर्तिता। पूर्वपक्षे आरुण्यं गुण एवारुणाशब्दवाच्य इति निष्कर्षस्य च कृतस्य सिद्धान्तेऽपि स्वीकारेणैव तत्र समाधानं वर्णितम्। अतो गुणवाचिनां गुणिपर्यन्तवाचित्वे तदधिकरणविरोध एवेत्याशङ्कायाम्, अर्वाचीनवर्णितपूर्वपक्षसिद्धान्तप्रकारानभ्युपगमेन वर्णनीयौ पूर्वपक्षसिद्धान्तौ दर्शयन् सूत्रार्थमाह तत्रैवमित्यादिना। अत्र, अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणातीति वाक्यं विषयः। तत्र अरुणयेतिपदं क्रीणातीत्यनेनान्वेति, उताध्याहृतक्रियान्तरे; तदर्थं तस्य प्रकृतवाक्यान्वये बाधकमस्ति, न वेति विचारः। तत्र क्रियान्तरान्वय इति पूर्वपक्षः। तदा चाविशेषात् प्राकरणिकसर्वद्रव्येष्वारुण्यसिद्धिः फलम्। प्रकृतवाक्यान्वय इति सिद्धान्ते गोमात्रे आरुण्यस्थितिः। इदं समानं मीमांसकमतेऽस्मन्मते च। तत्र मीमांसकमते पूर्वपक्षे सिद्धान्ते च गुणवाचित्वमेवारुणापदस्येष्टम्; अस्मन्मते उभयत्र गुणिवाचित्वम्। तत्र क्रयस्य द्रव्यविनिमयरूपत्वात् द्रव्यसाध्यतया गुणसाध्यत्वाभावात्, अरुणापदस्य च गुणमात्रवाचित्वात् गुणसाध्यक्रियाविशेषाध्याहारः कार्यः। अत अरुणया परिच्छिन्द्यात् इत्युक्तौ द्रव्यस्यारुण्यगुणपरिच्छेद्यत्वात् द्रव्याकांक्षायां वाक्यस्यास्य ज्योतिष्टोमप्रकरणकल्पिततया प्राकरणिकसर्वद्रव्येष्वारुण्यविधायकत्वमिति तन्मते पूर्वपक्षः। सत्यमारुण्यमात्रमरुणापदार्थः; तथापि तस्य साक्षात्क्रयान्वयासंभवेऽपि द्रव्यद्वाराऽन्वयो घटत इति श्रुतक्रयभावनान्वय एवेति गोमात्रस्यारुण्यमिति सिद्धान्तः। एषा मीमांसकरचनाऽत्र खण्डयिष्यते। स्वयं द्रव्यपर्यन्तत्वमरुणापदस्योक्त्वैव पूर्वपक्षं प्रवर्तयति यद्यपीति। यद्यपि तथापीत्यनेन—अस्मन्मतेऽपि गुणमात्रपरत्वाभिसंधिना पूर्वपक्षः प्रवर्तयितुं शक्यते; आकृतिवाचिशब्दापेक्षया गुणवाचिपदे वैषम्यस्य प्राक् दर्शिततया तदनुरोधेन गुणमात्रवाचित्वमुपपाद्य क्रयानन्वयशंकायां गुणिपर्यन्तत्वसिद्धान्तानिष्करणेन सिद्धान्तसंभवात्; अथापि गुणिपरत्वपक्षे पूर्वपक्षसंभवे किमिति तदुपेक्षेत्याशयः सूच्यते। आकृत्यपेक्षया गुणे स्थितं वैषम्यम्, आकृतेरिव गुणस्यापि इति भङ्ग्या दर्शितम्। द्रव्यस्यारुणापदबोध्यत्वेऽस्मन्मते तस्य प्रकृतवाक्यार्थान्वये किं बाधकमिति चेत्-अरुणयेत्यस्य किमेकहायन्येत्यनेनान्वयः, उत क्रीणातीत्यनेन। नाद्यः; कारकविभक्त्यन्ततया क्रियापद एवान्वयात्। नान्त्यः; एकहायनीरूपैककारकावरुद्धक्रियायां कारकान्तरानन्वयादिति बाधकं ध्येयम्। कारकविभक्तौ सत्यामपि

संभवति : एकहायन्या क्रीणाति, तच्चारुणयेत्यादियदि नाना संभवात्। ततश्च अरुणयेति, वाक्यं भित्त्वा प्रकरणाधिकृतसर्वद्रव्यपर्यन्तमेवारुणिमानमविशेषेणाभिदधाति। अरुणयेति स्त्रीलिङ्ग-निर्देशः प्रकरणाधिकृतसर्वलिङ्गकद्रव्याणां प्रदर्शनार्थः। तस्मादेकहायन्यन्वयनियमोऽरुणिम्नो न स्यात्—इति ॥

अत्राभिधीयते, अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्। 'अरुणयैकहायन्या' इत्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्ययोरभिन्नयोः सामानाधिकरण्येनार्थैकत्वे सिद्धे सति एक-हायनीद्रव्यारुण्यगुणयोररुणयेति पदेनैव विशेषणविशेष्यभावेन संबन्धितयाऽभिहितयोः क्रयाख्यैककर्मान्वयाविरोधादरुणिम्नः क्रयसाधनभूतैकहायन्यन्वयनियमः स्यात्।

---

समानाधिकरणपदानां विशिष्टैकार्थबोधकत्वं व्युत्पत्तिसिद्धमिति एकहायनीपदेनान्वयात् प्रकृतवाक्यान्वय एवेति सिद्धान्ते बाधकवारणम्। तच्चारुणयेति। अयं भावः—कारकाणां क्रियायामेवान्वयात् अरुणयेति पदं नैकहायनीपदान्वयि। अथ एकहायन्या क्रीणाति, अरुणया च इति बोधः, तदा द्रव्यद्वयसाध्य-क्रयद्वयमेव बोधितं स्यात्। एवञ्च अजया क्रीणाति, वाससा क्रीणातीत्येवम्, 'तं वै दशभिः क्रीणाती'ति द्रव्यदशकात्मकगणना विरुध्यते। क्रयसाधनभूतसर्वद्रव्यगतारुण्यविधानतात्पर्यस्वीकारेऽपि सिद्धान्ति-संमतार्थालाभः। तदर्थं सोमोद्देशेन एकहायन्या क्रीणातीति पूर्वं विधानं तादृशविशिष्टक्रयानुवादेनारुण्या-भिधानञ्चात्र वाक्ये एष्टव्यम्। तदा चारुण्यमेकहायनीमात्रविश्रान्तं भवेत्। तथा च वाक्यभेद इति। एवञ्च तच्चेत्यस्य एकहायनीनाभ्यकरणञ्चेत्यर्थः। अत्र विरुद्धत्रिकद्वयापत्तिरपि दोषः। एवमेकक्रयोद्देशेन अरुणाया एकहायन्याश्च सामान्येन विधानेऽपि वाक्यभेद एवेति ध्येयम्। अरुणयेतीति; अरुणयेति पदमित्यर्थः। इदम् अभिदधातीत्यत्र कर्तृ। वाक्यं भित्त्वा एकहायन्या क्रीणातीति वाक्यं स्वस्मात् पृथक्कृत्य। अरुणया क्रीणातीति किञ्चित्तवाक्यनिर्मितं सदिति शेषः। ननु पूर्वमपि वाक्यभेदः; अत्रापि। तत् को विशेष इति चेत्—पूर्वमेकत्रवाक्ये वाक्यद्वयकाङ्क्षीकारात् वाक्यभेदरूपदोषप्रसंगः। अत्र तु वाक्यं भिन्नमेवेति न दोषत्वम्; दोषान्तरमपि तत्र पक्षेऽस्तीति विशेषः। नन्वरुणयेत्यस्यैव वाक्यात् पृथक्करणमिति कुतः। अरुणया क्रीणातीति वाक्यमपि त्यक्त्वा एकहायन्येति पदमेव पृथक्क्रियताम् एक-हायन्यादयो यावन्ति प्राकरणिकद्रव्ये संभाव्यन्ते ऋत्विग्यजमानाद्व्यावृत्तिके, तावत्यस्तु इति चेत्—अस्तु कामम्। समानाधिकरणपदानां मिथोऽन्वयो नेत्येतावदेव पूर्वपक्ष्यभिमतम्। तत्र मध्यपतित-सर्वद्रव्या-न्वयैकहायनीपदपृथक्करणात् अरुणयेत्यस्य पृथक्करणं सुकरमिति, तथा प्रथमश्रुतारुणापद एव विचारे संभवति किं नत्तरान्तरेण च विविच्य नवैव विचारः प्रवर्तितः। मीमांसका एव केचित् एकहायन्या-दिपदेऽपि विचारं कर्तुं मन्यन्ते। तैरपीत्थं अरुणया क्रीणाति, एकहायन्या क्रीणातीत्येवं पृथक्पृथग्वाक्य-सत्त्वेऽपि एकवाक्यीकृत्यैव मीमांसकैर्विचारः प्रवर्तितः। यत्र काप्युदाहरणे न्यायः एवं शिक्षणीय इत्येतावदेव न्यायविदभिमतमित्यलम्।

नियमः स्यादिति। अरुणैकहायन्येतिपदद्वयं समानाधिकरणत्वात् क्रियानपेक्षं आरुण्यै-

यद्येकहायन्याः क्रयसंबन्धवत् अरुणिमसंबन्धोऽपि वाक्यावसेयस्स्यात्, तदा वाक्यस्यार्थद्वयविधानं स्यात्; न चैतदस्ति। अरुणयेति पदेनैवारुणिमविशिष्टद्रव्यमभिहितम्; एकहायनीपदसामानाधिकरण्येन तस्यैकहायनीत्वमात्रमवगम्यते; न गुणसंबन्धः। विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः। 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति हि सामानाधिकरण्यलक्षणम्। अत एव हि 'रक्तः पटो भवति' इत्यादिष्वैकार्थ्यादेकवाक्यत्वम्। पटस्य भवनक्रियासंबन्धे हि वाक्यव्यापारः; रागसंबन्धस्तु रक्तपदेनैवाभिहितः; रागसंबन्धि द्रव्यं पट इत्येतावन्मात्रं सामानाधिकरण्यावसेयम्।

एवमेकेन गुणेन द्वाभ्यां बहुभिर्वा, तेनतेन पदेन समस्तेन व्यस्तेन वा विशिष्टमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासंबन्धाभिधानमविरुद्धम्—देवदत्तः श्यामो युवा लोहिताक्षो दण्डी कुण्डली तिष्ठति, शुक्लेन वाससा यवनिकां संपादयेत्, नीलमुत्पलमानय, नीलोत्पलमानय, गामानय शुक्लां शोभनाक्षीम्, (यजु. २-२) 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्'—इति। एवम् 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इति।

एतदुक्तं भवति—यथा काष्ठैः स्थाल्यामोदनं पचेत् (पचति) इत्यनेककारकविशिष्टा एका क्रिया युगपत् प्रतीयते, तथा समानाधिकरणपदसङ्घाताभिहितमेकैकं कारकं

---

कहायनीत्वविशिष्टद्रव्यार्थकम्। पदविशेषितस्यैव कारकद्वारा क्रियान्वयः। विशिष्टान्वयस्थले च वाक्यभेदाभावः सर्वसंमत इति भावः। कथं तर्हि सर्वत्र कारकविभक्तिरिति चेत्-करणभूतद्रव्यस्य सर्वप्रातिपदिकबोध्यत्वात्, निर्विभक्तिकपदप्रयोगायोगेन विभक्तौ प्रयोक्तव्यायामन्यथार्हविभक्तेरेव द्वे इत्यत्र द्विवचनवत् प्रयोगात्॥ अकारकविभक्तिरूपप्रथमास्थले विशेषणविशेष्ययोर्मिथोऽन्वयो मीमांसकैरेवेष्ट इहापि तुल्य इति दर्शयति **अत एव हीति**। एवं समासस्थलेऽपि मिथोऽन्वयस्तत्संमतः। तत्र मध्ये विभक्तिलोपेऽपि कारकरूपार्थप्रहाणं कुतः। अतोऽनुभवानुसारात् व्यस्तेऽपि सैव रीतिरित्याह **एवमिति**। व्यस्तेऽपि क्वचित् अग्नये पावकायेत्यादौ अग्निपावकरूपार्थद्वयविधानात् वाक्यभेद इत्याशंकयोक्तं **शास्त्रदीपिकायाम्**, अग्नेः पावकत्ववैशिष्ट्यं पुराणादिप्रसिद्धमिति विशिष्टैकार्थविधानान्न दोषः इति। वृथैवायमायासः, सामानाधिकरण्यस्यैव वैशिष्ट्यगमकत्वात्। तर्हि, 'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती'ति वाक्ये आग्नेयाष्टाकपालद्रव्यविधाने वाक्यभेदो न स्यादिति चेत् - न स्यादेव तावन्मात्रस्य विधेयत्वे। कालस्य यागस्य चाप्राप्तत्वादेव विशिष्टविधिरिति। ननु विशिष्टस्य वस्तुन एकत्वेऽपि तस्यानेकपदबोध्यत्वे वाक्यभेद एवेति मीमांसकशंकायाम्—व्यधिकरणवाक्ये तत्तत्कारकविशिष्टैकक्रियाबोधके तस्य विशिष्टस्यानेकपदबोध्यत्वात् वाक्यभेदः स्यात्। तथाच, 'अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः' इतीदं त्यक्तं स्यात्। मिथोऽन्वयेन विशिष्टतावगमान्न दोष इति चेत्-सामानाधिकरण्यस्यापि समस्तस्थल इव विशिष्टतागमकत्वान्न दोष इति तुल्यमिति विवक्षुराह **एतदुक्तं भवतीति**।

तत्तत्कारकप्रतिपत्तिवेलायामेवानेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति न कश्चिद्विरोधः—'खादिरैः शुष्कैः काष्ठैः समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेत्' इत्यादिषु—इति ॥

यत्तु—(यत्तूक्तं)—उपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायीति, अरुणयेति पदेन केवलगुणस्यैवाभिधानमिति — तन्नोपपद्यते ; लोकवेदयोर्द्रव्यवाचिपदसमानाधिकरणस्य गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनात् ॥ उपात्तद्रव्यकवाक्यस्थं गुणपदं केवलगुणाभिधायीत्यप्यसङ्गतम् ; 'पटः शुक्लः' इत्यादिषूपात्तद्रव्यकेऽपि गुणविशिष्टस्यैवाभिधानात् । 'पटस्य शुक्लः' इत्यत्र शौक्ल्यविशिष्टपटाप्रतिपत्तिः असमानविभक्तिनिर्देशकृता ; न पुनरुपात्तद्रव्यकत्वकृता । तत्रैव 'पटस्य शुक्लो भागः' इत्यादिषु समानविभक्तिनिर्देशे शौक्ल्यविशिष्टद्रव्यं प्रतीयते ॥ यत् पुनः—क्रयस्यैकहायन्यवरुद्धतयाऽरुणिम्नः क्रयान्वयो न संभवतीति—तदपि विरोधिगुणरहितद्रव्यवाचिपदसमानाधिकरण-

मीमांसकवचनं निरस्यति यत्त्विति । तदुक्तं तावदेवम्—अरुणयेति पदं गुणमात्रवाचि ; एकहायनीपदेनैव द्रव्यस्योक्तत्वात् उपात्तद्रव्यकवाक्यस्थ गुणपदस्य गुणैकवाचित्वात् । तस्यारुण्यस्य क्रयान्वयश्च न भवति, एकहायनीद्रव्यान्वयेन क्रयस्य शान्ताकांक्षत्वादिति पूर्वपक्षे । सिद्धान्ते च द्रव्यवत् गुणोपि साक्षात् क्रयभावनायामेवान्वेति, कारकत्वात । द्रव्ये आरुण्यान्वयलाभश्च पार्ष्ठिक इति । इदं सर्वमत्र लक्ष्यत एवम् - गुणवाचिनां शब्दानां गुणिवाचित्वं न कुत्रापीति यदि, उपात्तद्रव्यकवाक्यस्थत्वरूपविशेषणं व्यर्थम् । श्वेतमालभेतेत्यादौ द्रव्यपर्यन्तत्वनिष्टेश्चेत्, समानाधिकरणस्थलेऽपि एकार्थवाचित्वरूपसामानाधिकरण्यस्य क्षतस्याभंगेन गुणिपर्यन्तत्वमिष्यताम् । तर्हि, पटस्य शुक्ल इत्यत्रापि स्यादिति चेत्—तदर्थं सामान्यतः, उपात्तद्रव्यकेति न प्रयोक्तव्यम्—'गुणमात्रविवक्षाप्रयुक्तस्य पदस्य गुणवाचित्व'मित्यस्तु । तथाच प्रकारवाचिनां प्रकारिपर्यन्तगामित्वस्वाभाव्यस्याप्यभङ्गः । इयान् विशेषः—गवादिपदं जातिमात्रविवक्षया, अत्र गौरिति न प्रयुज्यते ; प्रयुज्यते तु शुक्लादिशब्द इति । स्वारस्यं तु विशिष्ट एव ॥ एवं गुणस्य क्रयान्वययोग्यतयाऽनन्वय इत्येतावति अनुपरम्य एकहायन्यवरुद्धत्वादनन्वय इति कथनमप्ययुक्तम्-अन्वययोग्यत्वपरिशीलनाभावे आरुण्यावरुद्धत्वादेकहायन्यन्वयो न भवतीत्येव किं नोच्यते । भवन्मते आरुण्यमात्रस्य तदर्थतया, एकहायन्यन्वयेन द्रव्याकांक्षाशान्तावपि गुणाकांक्षाशान्त्यभावेनारुण्यान्वयसंभवाच्च । एकावरुद्धतयाऽन्यानन्वयोक्तिस्तु विरोधिधर्मविषय एव । न हि देवतावरुद्धत्वात् यागे द्रव्यान्वयो न भवतीति सुवचम् । अत इह पौर्वापर्यस्य दुर्वचत्वात् अनेकविधानं न भवतीत्येव पूर्वपक्षे वक्तव्यम् । मर्नविशिष्टापूर्वकर्मविधिसंभवात् तदपि न सुवचम् । अतो गुणस्यान्वययोग्यता नास्तीत्येव भवद्रीतिः । सा तु गुणिपर्यन्तत्वान्नोत्तिष्ठति । किञ्चारुणयेत्यत्रोपलक्षणतृतीयास्वीकारेणैकहायन्यन्वयेनैकवाक्यत्वसंभवात् भिन्नवाक्यन्तरोदाहरणमेव भवन्मते कर्तव्यम् । अनेकपदार्थान्वयासंभवमात्रेण पूर्वपक्षे च, अरुणाशब्दस्य गुणवाचित्वनिरूपणमनपेक्षितम् । कारकाणां मिथोऽनपेक्षं क्रियान्वये अनेकपदोपात्तानामेकद्रव्यत्वनिर्बन्धा-

गुणपदस्य तदाश्रयगुणाभिधानेन क्रियापदान्वयविरोधात् असङ्गतम्। राद्धान्ते चोक्त(क्तेन) न्यायेनारुणिम्नः शाब्दे द्रव्यान्वये सिद्धे, 'द्रव्यगुणयोः क्रयसाधनत्वानुपपत्त्या अर्थात् परस्परान्वयः सिध्यती'त्यप्यसङ्गतम्। अतो यथोक्त एवार्थः ॥

तस्मात् तत्त्वमस्यादिसामानाधिकरण्ये पदद्वयाभिहितविशेषणापरित्यागेनैवैक्यप्रतिपादनं वर्णनीयम्। तत्तु अनाद्यविद्योपहितानवधिकदुःखभागिनः शुद्ध्यशुद्ध्युभयावस्थात् चेतनादर्थान्तरभूतमशेषहेयप्रत्यनीकानवधिककल्याण[गु]णैकतानं परमात्मानमनभ्युपगच्छतो न संभवति॥ अभ्युपगच्छतोऽपि समानाधिकरणपदानां यथावस्थितविशेषणविशिष्टैक्यप्रतिपादनपरत्वाश्रयणे त्वम्पदप्रतिपन्नसकलदोषभागित्वं परस्य प्रसज्येतेति चेत्—नैतदेवम्; त्वम्पदेनापि जीवान्तर्यामिणः परस्यैवाभिधानात्। एतदुक्तं भवति—सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पमिश्रानवधिकातिशयासङ्ख्येयकल्याणगुणगणं समस्तकारणभूतं परं ब्रह्म (छा. ६-२-२) 'बहु स्याम्' इति सङ्कल्प्य तेजोबन्नप्रमुखं कृत्स्नं जगत् सृष्ट्वा, तस्मिन् देवादिविचित्रसंस्थानसंस्थिते जगति चेतनं जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य, स्वयं च स्वेच्छयैव जीवान्तरात्मतयाऽनुप्रविश्य, एवम्भूतेषु स्वपर्यन्तेषु देवाद्याकारेषु संघातेषु नामरूपे व्याकरोत्—एवंरूपसंघातस्यैव वस्तुत्वं शब्दवाच्यत्वं चाकरोदित्यर्थः। अनेन जीवेनात्मना जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयति। ब्रह्मात्मकत्वं च जीवस्य जीवान्तरात्मतया ब्रह्मणोऽनुप्रवेशादित्यवगम्यते, (तै. आन. ६-२) 'इदं सर्वमसृजत,

---

भावात् विभिन्नक्रयाभिधानमेव पौर्णमास्यमावास्याकालभेदभिन्नाग्नेयद्वयवदिति च पूर्वपक्षो युज्यत इति प्रागेवासूचि। सिद्धान्ते एकक्रियान्वयकथनं सम्यक्। परंतु न गुणस्य द्रव्यान्वयः पार्ष्ठिकः, प्रथममेवैकशब्दोपात्तत्वादिति। सूत्रे **अर्थैकत्वे** इति पदमसत्पक्षरीत्यैव पूर्वपक्षसिद्धान्तप्रवर्तनं दर्शयतीति ॥

प्रकृतमाह **तस्मा**दिति। अरुणाधिकरणस्य गुणवाचित्वतात्पर्यकत्वाभावात् नीलमुत्पलमानयेत्युदाहरणस्यायुक्तत्वाभावात् समानाधिकरणस्थलस्य सर्वस्य विशिष्टार्थपरत्वादित्यर्थः। **तत्तु** पदद्वयाभिहितविशेषणद्वयं तु। धर्मभेदस्येव वस्त्वैक्यस्यापि समानाधिकरणवाक्ये स्वीकार्यत्वात् दोष इति शङ्कते **अभ्युपगच्छतोऽपी**ति। गुणेषु संकल्परूपगुणस्य तदैक्षतेति कण्ठोक्तत्वात् अन्येषां लभ्यत्वात् विशिष्य **सत्यसंकल्पमिश्रे**त्युक्तिः। नामरूपे व्याकरोदिति श्रुतिं स्ववाक्यवत् पठित्वा तदर्थमाह **एवंरूपे**ति। स्वपर्यन्तेति तदर्थः। तिस्रो देवता इति तत्तद्देहावस्थापन्नं महाभूतमुच्यते। स्वपर्यन्ते तस्मिन् नामकरणं नाम तद्विशिष्टस्य स्वस्य नामवाच्यत्वकरणमेव। रूपकरणं नाम सजीवस्यानुप्रवेशेन स्वस्मिन् देहविशिष्टजीवद्वारा तद्रूपसंपादनम्। इदमेव वस्तुत्वम्। नन्वत्र वाक्ये जीवानुप्रवेश एवोक्तः, न स्वानुप्रवेश इत्यत्र विवृणोति **अनेने**ति। जीवमात्रानुप्रवेशविवक्षायां **आत्मने**ति व्यर्थम्। जीवो ह्यात्मैव भवति। अतः **आत्मने**त्यस्य स्वेनेत्यर्थः। स्वमात्रानुप्रवेशे, जीवस्य स्वस्य चैक्येऽपि च जीवेनेति व्यर्थम्। अतो जीवस्य स्वस्य च भेदे सत्येव सामानाधिकरण्यबलात् पदद्वयार्थैक्यमपि स्वीकार्यम्। तत्र, तत् तेज

यदिदं किञ्च । तत् सृष्ट्वा, तदेवानुप्राविशत् । तदनुप्रविश्य, सच्च त्यच्चाभवत्' इति; अत्र, इदं सर्वमिति निर्दिष्टं चेतनाचेतनवस्तु(गी)द्वयं सत्त्यच्छब्दाभ्यां विज्ञानाविज्ञानशब्दाभ्यां च विभज्य निर्दिश्य तद्वस्तुन्यपि ब्रह्मणोऽनुप्रवेशाभिधानात् । अत एवंनामरूपव्याकरणात् सर्वे वाचकाः शब्दा अचिज्जीवविशिष्टपरमात्मवाचिन इत्यवगतम्—इति ।

किञ्च (छा. ६-८-७) 'ऐतदात्म्यमिदं सर्वम्' इति, चेतनमिश्रं प्रपञ्चम् इदं सर्वमिति निर्दिश्य तस्यैष आत्मेति प्रतिपादितम् । एवंच सर्वं चेतनाचेतनं प्रति ब्रह्मण आत्मत्वेन सर्वं सचेतनं जगत् तस्य शरीरं भवति । तथा च श्रुत्यन्तराणि, (यजु. आर. ३-११ 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा', (बृ. ५-७-३) 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरम्, यः पृथिवीमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः' इति प्रारभ्य, 'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरम्, य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः' [इत्यादि], सुबा. ७) 'यः पृथिवीमन्तरे सञ्चरन् (?) यस्य पृथिवी शरीरम् । योऽपोऽन्तरे सञ्चरन् यस्याऽऽपः शरीरम्' इत्यारभ्य, 'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरम्, यमक्षरं न वेद...एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादीनि सचेतनं जगत् तस्य शरीरत्वेन निर्दिश्य तस्यात्मत्वेन परमात्मानमुपदिशन्ति । अतश्चेतनवाचिनोऽपि शब्दाश्चेतनस्याप्यात्मभूतं चेतनशरीरकं परमात्मानमेवाभिदधति, यथा अचेतनदेवादिसंस्थानपिण्डवाचिनः शब्दाः तत्तच्छरीरकजीवात्मन एव वाचकाः, (ताण्ड्यमहाब्राह्मण. २३-६) "चत्वारः पञ्चदशरात्राः ।......देवत्वं गच्छन्ति" इत्यादिषु । देवा भवन्तीत्यर्थः ।

शरीरस्य शरीरिणं प्रति प्रकारत्वात् प्रकारवाचिनां च शब्दानां प्रकारिण्येव पर्यवसानात् शरीरवाचिनां शब्दानां शरीरिपर्यवसानं न्याय्यम् । प्रकारो हि नाम इदमित्थमिति

---

देहेनेत्यादौ तेजआदिशब्दानां विशिष्टपरत्वस्य बुद्धत्वात् तथैवेहापीति संभाव्यते, यदेव कण्ठोक्तं तैत्तिरीयेऽपीति भावः । 'अनेन जीवेने'ति वाक्यमचिद्विशिष्टचिद्विशिष्टवाचित्वे प्रमाणम् । 'सच्च त्यच्च', 'ऐतदात्म्य'मित्यादि तु प्रत्येकं तत्तद्विशिष्टवाचित्वेऽपि । श्रुत्यन्तराणीत्यस्य विशेषणम्, इत्यादि इति, इत्यादीनि इति च । 'चत्वारः पञ्चदशरात्रा' इति प्रकरणारम्भः । पञ्चदशदिनसाध्यकर्मविशेषाश्चत्वार इति तदर्थः । एवमारभ्य, तान् पृथक्पृथक् उपदिश्य प्रकरणावसाने तदनुष्ठायिनां फलमुच्यते, 'देवत्वं गच्छन्ती'ति । कर्मानुष्ठानकाले ते न देवाः । अनुष्ठानकालिकस्य देहस्य च न देवत्वप्राप्तिरस्ति । देहवियोगे ते आत्मानः देवत्वं गच्छन्तीत्युक्तौ च देवा भवन्ति-देवशरीरनियन्तारो भवन्तीत्यर्थ एव । देवशब्दस्य देहमात्रार्थकत्वे तु, ते देवं गच्छन्ति, देवान् गच्छन्तीति वा स्यात् । तथाविधप्रयोगाभावादेव देवादिशब्दा न स्वरसतः पिण्डमात्रवाचिन इत्यपि ज्ञायते ॥

गुणादिवत् द्रव्यस्यापि प्रकारत्वमस्तीति गमयितुं प्रकारो हीति । विशेषणविशिष्ट-

प्रतीयमाने वस्तुनि इत्थमिति प्रतीयमानोंशः। तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दः तस्मिन्नेव पर्यवस्यति। अत एव, गौः, अश्वः, मनुष्यः इत्यादिप्रकारभूताकृतिवाचिनः शब्दाः प्रकारिणि पिण्डेपर्यवसन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्यवस्यन्तीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचिशब्देन सामानाधिकरण्यं मुख्यमेव ॥

ननु—'खण्डो गौः, खण्डः शुक्लः' इति जातिगुणवाचिनामेव पदानां द्रव्यवाचिपदैः सह सामानाधिकरण्यं दृष्टम्। द्रव्याणां तु द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः, यथा 'दण्डी कुण्डली' इति ॥ नैवम्। जातिर्वा गुणो वा द्रव्यं वा नैतेष्वेकमेव सामानाधिकरण्ये प्रयोजकम्; अन्योन्यस्मिन् व्यभिचारात्। यस्य पदार्थस्य, कस्यचित्प्रकारतयैव सद्भावः, तस्य तदपृथक्सिद्धिसिद्धिप्रतीतिभिः तद्वाचिनां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वात् धर्मान्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव। यत्र पुनः पृथक्सिद्धस्य स्वनिष्ठस्यैव द्रव्यस्य कदाचित् क्वचिद् द्रव्यान्तरप्रकारत्वमिष्यते, तत्र मत्वर्थीयप्रत्यय इति निरवद्यम् ॥

तदेवं परमात्मनश्शरीरतया तत्प्रकारत्वाद्विशिष्टजीवस्यापि, (जीवस्य,) जीवनिर्देशविशेषरूपाः अहंत्वमित्यादिशब्दाः परमात्मानमेवाऽऽचक्षत इति, (छा. ६-८-७) "तत् त्वमसि' इति सामानाधिकरण्येनोपसंहृतम्। एवं च सति परमात्मानं प्रति जीवस्य शरीरतयाऽन्वयात् जीवगताः धर्माः परमात्मानं न स्पृशन्ति; यथा स्वशरीरगताः बालत्वयुवत्वस्थविरत्वादयो धर्माः जीवं न स्पृशन्ति। अतः 'तत्त्वमसि' इति सामानाधिकरण्ये तत्पदं जगत्कारणभूतं सत्यसङ्कल्पं सर्व(सकल)कल्याणगुणाकरं निरस्तसमस्तहेयगन्धं परमात्मानमाचष्टे; त्वमिति च तमेव सशरीरजीवशरीरकमाचष्ट इति सामानाधिकरण्यं मुख्यवृत्तम्; प्रकरणाविरोधः, सर्वश्रुत्यविरोधः, ब्रह्मणि निरवद्ये कल्याणैकताने अविद्यादिदोषगन्धाभावश्च।

अतो जीवसामानाधिकरण्यमपि विशेषणभूताज्जीवादन्यत्वमेवापादयतीति विज्ञानमयाज्जीवादन्य एवानन्दमयः परमात्मा ॥

---

विशेष्यरूपे वस्तुनि विशेषणम् अंशः। पिण्डेपर्यवसन्त इति। अपर्यवसन्त इति छेदः। पिण्डमात्रावाचिन इत्यर्थः। पर्यवसन्त इति छेदे, आकृतितः पिण्डपर्यन्तं प्रवृत्ता इत्यर्थः। जातिर्वा गुणो वेति। जातिवाचित्वमेव मत्वर्थीयनिरपेक्षसामानाधिकरण्यप्रयोजकं चेत्, गुणवाचिनि तद्भंगः; खण्डत्वं गौरिति प्रयोगापत्तिश्च। एवं विपरिवर्तेऽपि। अत उभयानुगमार्थं—यत्पदं यत्पदवाच्यव्यक्तेः शक्त्या बोधनक्षमम्, तस्य तेन स्वरसतः सामानाधिकरण्यमिति नियमः। एवञ्च देवो मनुष्यो जात इत्यपि निरूढमिति भावः। ऐक्यस्थापनाय दर्शितं तत्त्वमस्यादिवाक्यं भेदसाधकमेव संपन्नमित्याह अतो जीवसामानाधिकरण्यमपीति।

यदुक्तम्—'तस्यैष एव शारीर आत्मा' इति आनन्दमयस्य शारीरत्वश्रवणात् जीवादन्यत्वं न संभवति—इति—तदयुक्तम्; अस्मिन् प्रकरणे सर्वत्र 'तस्यैष एव शारीर आत्मा। यः पूर्वस्य' इति परमात्मन एव शारीरात्मत्वाभिधानात् ॥ कथम् ॥ 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रज्ञातजीवव्यतिरेकस्य परस्य ब्रह्मण आत्मत्वेन व्यपदेशात् तद्व्यतिरिक्ताकाशादीनामन्नमयपर्यन्तानां तच्छरीरत्वमवगम्यते। (सुबाल. ७) 'यस्य पृथिवी शरीरं...यस्यापश्शरीरं...यस्य तेजः शरीरं...यस्य वायुः शरीरं...यस्याकाशः शरीरं...यस्याक्षरं शरीरं...यस्य मृत्युः शरीरम्, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति सुबालश्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते। अतः (तै. आन. १) 'तस्माद्वा एतस्मादात्मनः' इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः। प्राणमयं प्रकृत्याह, 'तस्यैष एव शारीर आत्मा, यः पूर्वस्य' इति। पूर्वस्यान्नमयस्य यः शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा, स एव(व)तस्य प्राणमयस्यापि शारीर आत्मेत्यर्थः। एवं मनोमयविज्ञानमययोर्द्रष्टव्यम्। आनन्दमये तु 'एष एव' इति निर्देशः तस्यानन्यात्मत्वं दर्शयितुम् ॥ तत् कथम् ॥ विज्ञानमयस्यापि पूर्वोक्तया नीत्या परमात्मैव शारीर आत्मेत्यवगतः। एवं सति विज्ञानमयस्य यः शारीर आत्मा, स एवानन्दमयस्यापि शारीर आत्मेत्युक्ते आनन्दमयस्य अभ्यासावगतपरमात्मभावस्य परमात्मनः स्वयमेवात्मेत्यवगम्यते। एवं च स्वव्यतिरिक्तं चेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकः(क)शारीर आत्मा। अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते। अतो विज्ञानमयाज्जीवादन्य एव परमात्मा

---

'विज्ञानमयादन्य' इति जीवभेदपरं न भवति सामानाधिकरण्येनाभेदश्रुतेः, शारीरत्वश्रवणाच्चेत्यत्र प्रथममेतावता परिहृतम्; अथ द्वितीयं निरसितुमाह यदुक्तमिति। अन्नमयपर्यन्तानामिति। 'आत्मन आकाशः संभूतः' इत्यत्र उत्तरवाक्यरीत्योपादानोपादेयभावावगमात् आकाशपदमन्तर्यामिपर्यन्तार्थकम्। एवमन्नमयपर्यन्ते सिद्धिः। अन्नमयप्राणमययोर्मिथः कार्यकारणभावो नोक्तः; नास्ति च। एवं आकाशस्य आत्मजन्यत्वश्रवणात् स्वोपादानं प्रति आत्मभूतस्य स्वं प्रत्यात्मत्वमावश्यकमिति आकाशं प्रति आत्मत्वे अन्नमयान्तनिरूपितात्मत्वलाभः; न तु प्राणमयादाविति विशिष्योपदेशापेक्षा। पूर्वस्यान्नमयस्येति। अन्नमयपर्यन्तस्येत्यर्थः। अनन्यात्मत्वं दर्शयितुमिति। एवं कथनं हि श्रुतिशैली; यथा, 'पतिं विश्वस्यात्मेश्वरम्' इति, 'स्वे महिम्नि प्रतिष्ठितः' इति च। शाङ्करे तु तस्यैष एवेति वाक्यस्यैवमर्थोऽवर्णि—पूर्वस्य तस्य विज्ञानमयस्य एष शारीर आत्मा, य एष आनन्दमय इति। तदा आनन्दमयं प्रति आत्मतया कस्यचिदकथनात् नैवाक्षेपप्रसक्तिः। इमं क्लिष्टान्वयं विहाय यदि, 'यच्छन्दस्य तच्छन्द एव प्रतिसंबन्धी; एष इति संनिहितानन्दमयवाची; आत्मशब्दस्तु पृथक् शारीरशब्दश्रवणात् तेन आत्मन उक्तत्वात् स्वरूपवाच्येव' इति विभाव्य, 'पूर्वस्य विज्ञानमयस्य

आनन्दमयः ॥ १३ ॥

आह—नायमानन्दमयो जीवादन्यः; विकारशब्दस्य मयट्प्रत्ययस्य श्रवणात्। (अष्टा. ४-३-१४३) 'मयड्वैतयोः' इति प्रकृत्य, (अष्टा ४-३-१४४) 'नित्यं वृद्धशरादिभ्यः' इति विकारार्थे मयट् स्मर्यते। वृद्धश्चायमानन्दशब्दः॥ ननु—प्राचुर्येऽपि मयडस्ति, (अष्टा. ५-४-२१) 'तत्प्रकृतवचने मयट्' इति स्मृतेः; यथा 'अन्नमयो यज्ञः' इति। स एवायं भविष्यति॥ नैवम्—अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम्। अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम्॥ किञ्च—प्राचुर्यार्थत्वेऽपि जीवादन्यत्वं न सिध्यति। तथा हि—आनन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्जनीयम्। आनन्दस्य हि प्राचुर्यं दुःखस्याल्पत्वमवगमयति। दुःखमिश्रत्वमेव हि जीवत्वम्। अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम्॥ किञ्च—लोके मृन्मयं हिरण्मयं दारुमयमित्यादिषु, वेदे च (यजु. ३-५-७) 'पर्णमयी जुहूः' (यजु. ३-८, २) 'शमीमय्यः स्रुचः', (यजु. ३-८, २) 'दर्भमयी रशना' इत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात् स एव प्रथमतरं नियमनिरोहति। जीवस्य चानन्दविकारत्वमस्त्येव। तस्य स्वत आनन्दरूपस्य सतः संसारित्वावस्था तद्विकार एवेति। अतो विकारवाचिनो मयट्प्रत्ययस्य श्रवणादानन्दमयो जीवादनतिरिक्त इति—

तदेतदनुभाष्य परिहरति—

विकारशब्दान्नेति चेन्न प्राचुर्यात् १। १। १४॥

---

यः सर्वात्मा आत्मा, तस्य आत्मा स्वरूपम् एव एवानन्दमयः शरीरगतत्वेन कथ्यमानः' इति वाक्यमिदं व्याख्यायते, तदापि नैव शङ्कावकाशः; आनन्दमयस्यैव चात्मत्वं स्यादिति भवतीत्यवधेयम्॥ १३॥

मा भूत् स्वार्थिकत्वम्, वैयर्थ्यात्; विकारार्थत्वं तु युज्यत इति शंकते आहेति। वृद्धश्चेति। 'वृद्धिरादैच्' इति आकारो वृद्धिसंज्ञः। 'वृद्धिर्यस्याचामादिः, तद् वृद्धम्' इति वृद्धिभूताद्यक्षरघटितः शब्दो वृद्ध इत्युक्तम्। ननु, 'मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः' इति सूत्रे भाषायामिति पठनात् भाषायामेव विकारार्थेऽवयवार्थे च विकल्पापवादतया नित्यमिति मयड् विधीयत इहेति, कथं छन्दसि एतत्प्रसक्तिरिति चेत्—आरम्भसामर्थ्यादेव भाषायां मयटः अणादिप्रत्ययबाधेन नित्यत्वे सिद्धे नित्यमिति वचनमन्यत्राप्यनित्यतया मयट्सूचनार्थम्। अतश्छन्दस्यपि भवतीत्याशयः। अन्नेति। पूर्वाधिकरणे ईक्षणप्रायपाठ उपेक्षितः, मुख्यार्थत्यागः स्यादिति। इह तु प्राचुर्य इव विकारेऽपि मयटो मुख्यत्वात् मुख्यतरत्वाद्वा प्रायपाठो नोपेक्ष्य इति भावः। प्राचुर्यार्थस्वीकारेऽपि दुःखाल्पत्वस्यापि सिद्धौ शुद्धात्मनि दुःखप्रसक्त्यभावात् तद्विकारभूते जीव एव तत् उपपादनीयमिति विकारभूतजीवत्वाचित्वस्यावश्यकत्वे किमिति प्रायपाठोपेक्षेत्याह किञ्चेति। सूत्रे विकारादित्यनुक्त्वा विकारशब्दादिति प्रयोगः मयटो विकारे प्रसिद्धिप्रकर्षज्ञापनार्थं इत्याशयेनाह किञ्च लोके इति।

प्राचुर्यार्थे चेति। यथा मुख्यत्वाभङ्गाय प्रायपाठोपेक्षा, तथा प्राचुर्यरूपैतन्मयडर्थप्रति-

नैतत् युक्तम् ॥ कुतः ॥ प्राचुर्यात्—परस्मिन् ब्रह्मण्यानन्दप्राचुर्यात् । प्राचुर्यार्थे च मयटः संभवात् । एतदुक्तं भवति—शतगुणितोत्तरक्रमेणाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासंभवाद् ब्रह्माश्रयोऽयमानन्द इति निश्चिते सति, तस्मिन् ब्रह्मणि विकारासंभवात् प्राचुर्येऽपि मयड्विधिसंभवाच्चानन्दमयः परं ब्रह्म—इति ।

आनन्त्यात् प्रयोगप्रौढ्या च मयटो विकारार्थत्वमर्थविरोधान्न संभवति । किञ्च औचित्यं प्राणमय एव परित्यक्तम्; तत्र विकारार्थत्वासंभवात् । अतस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमत्तामात्रेण प्राणमयत्वम्; प्राणापानादिषु पञ्चसु वृत्तिषु प्राणवृत्तेः प्राचुर्याद्वा । न च प्राचुर्ये मयट्प्रत्ययस्य प्रसिद्धिर्नास्ति; 'अन्नमयो यज्ञः', शकटमयी यात्रा' इत्यादिषु दर्शनात् ॥

यदुक्तम्—आनन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति—तदसत् । तत्प्रचुरत्वं हि तत्प्रभूतत्वम् । तच्चेतरस्य सत्तां नावगमयति; अपि तु तस्याल्पत्वं निवर्तयति । इतरसद्भावासद्भावौ तु प्रमाणान्तरावसेयौ । इह च प्रमाणान्तरेण तदभावोऽवगम्यते, (छा. ८-२-५) 'अपहतपाप्मा' इत्यादिना । तत्रैतावदेव वक्तव्यम्, ब्रह्मानन्दस्य प्रभूतत्वमन्यानन्दस्याल्पत्वमपेक्ष्य इति । उच्यते च तत्, (तै. आन. ८) 'स एको मानुष आनन्दः' इत्यादिना, जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयदशापन्नः प्रभूत इति ॥

यच्चोक्तम्—जीवस्यानन्दविकारत्वं संभवतीति—तदपि नोपपद्यते; जीवस्य ज्ञाना-

---

पादनप्रवृत्तानन्दमीमांसारूपस्ववाक्यवृन्दसमन्वयाभङ्गायेह प्रायपाठोपेक्षा कार्या मयटः प्राचुर्ये विधयभावेऽपि; संभवति तु प्राचुर्येऽनुशासनानुयोगिनि सुतरामिति भावः । इममेव भावं प्राचुर्यार्थकत्व एव वाक्यानिरोधप्रदर्शनेन स्फुटयति एतदुक्तमिति । प्रायपाठभङ्गः प्रागेवेत्याह किञ्चेति । प्राचुर्याद्वेत्यनेन प्राचुर्ये एव प्रायपाठरक्षेत्यपि सूच्यते; मनोमयविज्ञानमययोरपि तद्विवक्षासंभवात् । अन्नमये तु प्रथमे मा भूत् । अथवा, "द्व्यचश्छन्दसि" इति वेदे द्व्यच्कादेव विकारे मयड्विधानात् अन्यत्र विकारार्थे तत्स्वीकारस्य स्पष्टानुशासनाभावेनागतिकत्वात् अन्नरसमय इत्यत्र द्व्यच्त्वाभावेन अन्नरसशब्दस्यान्नपरिणामविशेषपरतया तत्प्राचुर्यमेव निर्वक्तुं युक्तम् । एवञ्च तत्समानार्थकत्वाय अन्नमय इत्यत्रान्नपदं रसलाक्षणिकमिति तत्रापि प्राचुर्यमेवार्थ इति । तत्प्रभूतत्वम् तस्य प्रकर्षेण भूतत्वम् । उपरि ब्रह्मानन्दस्य प्रभूतत्वमिति प्रयोगात् आनन्दविशिष्टं प्राचुर्यमेवात्र भाष्यकाराभिमतं प्रतीमः इति आनन्दमय इत्यस्य प्रचुरानन्द इत्यर्थः । मयडर्थस्य प्रकृत्यर्थेऽन्वयः । एवं प्रचुरानन्द इत्युक्तौ वा, आनन्देन प्रचुर इत्युक्तौ वा न दुःखाल्पत्वप्रसक्तिः; तस्याशाब्दत्वात् प्रमाणान्तरगम्यत्वात् । स्वनिकरणे स्वनिजातीयस्याल्पत्ववत् स्वाधिकरणनिष्ठस्वजातीयाल्पत्वस्यापि प्राचुर्येण ज्ञापनसंभवात् तन्मात्रस्येह प्रकरणानुसारेण स्वीकारात् । अत एव सामान्यतो गुणान्तराल्पत्वमपि न शङ्क्यम् । विकारार्थत्वमेव सर्वथा न भवति, जीवेऽप्यनन्वयादित्याह यच्चेति । मुख्यविकारार्थ एव विकारार्थमयड्विधिः; न गौणे इति भावः १-१४ ॥

नन्द(न्दैक)स्वरूपस्य केनचिदाकारेण, मृद इव घटाद्याकारेण, परिणामः सकलश्रुतिस्मृतिन्यायविरुद्धः। संसारदशायां तु कर्मणा ज्ञानानन्दौ सङ्कुचिताविप्युपपादयिष्यते। अतश्चानन्दमयो जीवादन्यः परं ब्रह्म ॥ १४ ॥ इतश्च जीवादन्य आनन्दमयः परं ब्रह्म—

तद्धेतुव्यपदेशाच्च ।१।१।१५।

(तै. आन. ७) 'को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति' इति, एष एव जीवान् आनन्दयतीति जीवानामानन्दहेतुरयं व्यपदिश्यते। अतश्चानन्दयितव्याज्जीवात् आनन्दयिताऽयमन्य आनन्दमयः परमात्मेति विज्ञायते। आनन्दमय एवात्र आनन्दशब्देनोच्यत इति चानन्तरमेव वक्ष्यते ॥ १५ ॥

इतश्च जीवादन्य आनन्दमयः—

मान्त्रवर्णिकमेव च गीयते ।१।१।१६॥

'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इति गीयते। तच्च जीवस्वरूपादन्यत् परं ब्रह्म। तथा हि—'ब्रह्मविदाप्नोति परम्' इति जीवस्य प्राप्यतया ब्रह्म निर्दिष्टम्। 'तदेषाऽभ्युक्ता' इति—तत् ब्रह्म अभिमुखीकृत्य—प्रतिपाद्यतया परिगृह्य, ऋगेषा अध्येतृभिरुक्ता। ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रेण क्रियत इत्यर्थः। जीवस्योपासकस्य

---

प्रथमसूत्रे जीवातिशायितयाऽभ्यस्तत्वादानन्दस्य आनन्दमयो न जीव इत्युक्तम्। प्रायपाठादिशङ्कापरिहारेण प्राचुर्यार्थत्वं मयटो द्वितीये। तत्र हेतुः पूर्वोक्तोऽभ्यासः, आनन्दमयस्यान्यानन्दयितृत्वव्यपदेशादिश्चेति तत्रैव सिद्धम्। अथ तदेवानन्दयितृत्वं प्राचुर्यार्थकत्वस्थापकतयोपस्थितं जीवभेदसाधकतयाऽपि वक्तुं सूत्रं **तद्धेत्वि**त्यादि। अत एव हेत्वन्तरापेक्षयाऽस्य प्राथम्यम्। **तद्धेतोः** आनन्दहेतुत्वविशिष्टस्य **व्यपदेशात्**; आनन्दहेतुत्वप्रकारकानन्दमयविशेष्यकबोधहेतुवाक्यादिति सूत्रार्थः। **अन्यात्**—सामान्यसुखानुभवं कुर्यात्। **प्राण्यात्** महासुखमनुभवेत्। **आकाश आनन्दः** अपरिच्छिन्नानन्दः; सर्वव्यापी आनन्दमय इति वा। **आनन्दयाति** आनन्दयति। आनन्दनक्रियाकर्मणः तत्कर्तुश्चैक्यं न भवतीति जीवभेदसिद्धिः। 'अस्मिन्नस्य च' इति सूत्रे मुक्तान् प्रति तस्यैव प्राप्यत्वमुच्यते; इह तु न तावदर्थलाभ इति विशेषः ॥ १५ ॥

एवं मयटः प्राचुर्यार्थकत्वस्थापकतयोपस्थितं सर्वानन्दनत्वमेव जीवभेदसाधकतया निर्दिश्य, अथोपक्रममध्योपसंहारवाक्यस्थहेतून् सूत्रैर्दर्शयति। तत्रोपक्रमे सत्यमितिमन्त्रस्य जीवभिन्नपरत्वात् सत्यब्रह्माभिन्नात्माभिन्नतया सत्याभिन्न आनन्दमयो न जीव इत्याह **मान्त्रे**ति। आपातार्थो न ग्राह्यः; अक्षरावधानेनार्थोऽवधार्यते चेत्, स जीवादन्य एवेति सिध्येदिति ज्ञापयितुं वर्णपदम्। मन्त्रवर्णो हि प्रथमश्रुततत्त्वहितपुरुषार्थवर्णनाय प्रवृत्तः। तत्र सत्यंज्ञानमनन्तमिति अचेतन-बद्धमुक्तनित्यरूपचेतनसर्ववैलक्षण्यम्, उपरि चोपास्यत्वं सर्वकामविशिष्टतया प्राप्यत्वञ्च स दर्शयति। एवं प्रज्ञातजीवभेदं यद् ब्रह्म, तदेव 'तस्माद्वा' इति आत्मत्वेनोक्तं सत्, 'आत्मानन्दमय' इति आनन्दमयत्वेन विशेष्यत इति सिद्धं

प्राप्यं ब्रह्म तस्माद्विलक्षणमेव । अनन्तरं च, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यारभ्योत्तरैर्ब्राह्मणैर्मन्त्रैश्च तदेव विशदीक्रियते । अतो जीवादन्य आनन्दमयः ॥ १६ ॥

अत्राह—यद्यप्युपासकात् प्राप्यस्य भेदेन भवितव्यम्, तथापि न वस्त्वन्तरं जीवात् मान्त्रवर्णिकं ब्रह्म; किंतु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्ध-निर्विशेषचिन्मात्रैकरसं शुद्धं स्वरूपम् । तदेव 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रेण विशोध्यते । तदेव च 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते । अनन्तदेव मान्त्रवर्णिकमिति तस्मादनतिरिक्त आनन्दमय इति । अत उत्तरं पठति—

नेतरोऽनुपपत्तेः ।१।१।१७॥

परमात्मन इतरः जीवशब्दाभिलप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः । कुतः । अनुपपत्तेः । तथाविधस्यात्मनो निरुपाधिकं विपश्चित्त्वं नोपपद्यते । इदमेव हि निरुपाधिकं विपश्चित्त्वम्, 'सोऽकामयत बहु स्यां प्रजायेय' इति सत्यसङ्कल्पत्वप्रदर्शनेन विवरिष्यते । विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम् । पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः । यद्यपि मुक्तस्य विपश्चित्त्वं

जीवादन्यत्वम् । यद्यपि 'ब्रह्मणा सह' इति भोक्तृसाहित्याविवक्षणात् सहश्रुतिः तन्मुखेन भेदं न ज्ञापयेत्; भोग्येषु कामेषु ब्रह्मसाहित्यस्यैव तदर्थत्वात्—अथापि भोग्यत्वभोक्तृत्वप्रयुक्तो भेदोऽस्त्येव; 'आप्नोती' ति पूर्वं प्राप्तृप्राप्यभेदप्रतीत्या च 'अश्नुते' इत्यत्रापि तथेति । १६ ॥

ननु सत्यादिपदानि अनृतजडपरिच्छिन्नव्यावृत्तार्थकानि । उत्तरार्धे च ब्रह्मानुभवः सर्वकामानुभवरूपतया स्तूयते; 'एतस्यैवानन्दस्य... मात्रामुपजीवन्ती'ति सर्वस्याप्यानन्दस्य तदेकदेशत्वात् । अत एवैकस्यैव ब्रह्मानुभवस्य युगपदुपनतसर्वकामानुभवरूपतया सहेति यौगपद्योक्तिः । ब्रह्मणेति ब्रह्मतःप्रयोज्यत्वमुच्यते; तदनुभवस्य तत्प्रयोज्यत्वात् । एवमनुभाव्यस्य, एतद्रूपसर्वकामानुभवप्रचुरस्य मुक्तस्य चानन्त ऐक्यात् आनन्दमयोऽपि मुक्तजीव एव । आनन्दमयशब्दप्रयोगेऽपि निर्विशेष एव तात्पर्यमिति, 'यतोवाच' इति तद्विषयवाक्यत एव व्यक्तम्—इति शंकते अत्राहेति ।

यदि ब्रह्म भवदुक्तमुक्तस्वरूपम्, तर्हि विपश्चित्त्वं न स्यादिति सूत्रार्थः । स्वयम्प्रकाशशुद्धब्रह्ममात्रपरिशेषे मुक्ते ब्रह्मणि विपश्चित्त्वविशेषणं न कथमपि संगच्छते । इदमेव हि विपश्चित्त्वमुपरि, 'सोकामयत' इत्यारभ्य विव्रियत इति नास्मन्मतमुक्तस्यापीदं विपश्चित्त्वम् । अनेनैव विशेषणेन सर्वस्रष्टृत्वादिसंकल्पादिरूपेण सर्ववैशिष्ट्यसिद्ध्या सत्यादिपदान्यपि न निर्विशेषपराणीति मन्त्रवर्णाद्यर्थान्यथाकरणमयुक्तम् । अद्वैतमते तु मुक्तौ दर्शनराहित्यस्यैव सत्त्वात् विपश्चितेत्यस्य विगतदर्शनादिवृत्तिकशुद्धचिद्रूपेणेत्येवार्थ आलोचयितव्यः । एवं विपश्चित्पदार्थं न कश्चित् विपश्चित् संमंस्यते । एवं 'ज्ञानमितिपदं ज्ञानमात्रार्थकम्, ज्ञानगुणकत्वाभावा'दित्यपि विपश्चित्पदविलासितम् । एवं प्रतिवाक्यं प्रत्यक्षरञ्च क्लेशप्राग्भारेण श्रुतिपीडनं कृत इति भावः । यद्यपि मुक्तस्येति । अस्मन्मतावलम्बनेन प्रश्ने अस्मन्मतरीत्यैव समाधान-

संभवति—तथापि तस्यैवात्मनः संसारदशायामविपश्चित्त्वमप्यस्तीति निरुपाधिकं विपश्चित्त्वं नोपपद्यते। निर्विशेषचिन्मात्रतापन्नस्य मुक्तस्य त्रिविधदर्शनाभावात् सुतरां विपश्चित्त्वं न संभवतीति। न केनापि प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति च पूर्वमेवोक्तम्—

'यतो वाचो निवर्तन्ते' इति च वाक्यं यदि वाङ्मनसयोर्ब्रह्मणो निवृत्तिमभिदधीत, न ततो निर्विशेषतां वस्तुनोऽवगमयितुं शक्नुयात्; अपि तु वाङ्मनसयोस्तत्राप्रमाणतां वदेत्। तथा च सति तस्य तुच्छत्वमेवापद्यते। (तै. आन. १) 'ब्रह्मविदाप्नोति' इत्यारभ्य ब्रह्मणो विपश्चित्त्वं जगत्कारणत्वं ज्ञानानन्दैकतानताम्, इतरान् प्रति आनन्दयितृत्वम्, कामादेव चिदचिदात्मकस्य कृत्स्नस्य स्रष्टृत्वं सृज्यवर्गानुप्रवेशकृततदात्मकत्वं भयाभयहेतुत्वं वाय्वादित्यादीनां प्रशासितृत्वं शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वम्, अन्यच्चानेकं प्रतिपाद्य, वाङ्मनसयोः ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यत इति भ्रान्तजल्पितम्। 'यतो वाचो निवर्तन्ते' इति यच्छब्दनिर्दिष्टमर्थम्, 'आनन्दं ब्रह्मणो विद्वान्' इत्यानन्दशब्देन प्रतिनिर्दिश्य, तस्य ब्रह्मसंबन्धित्वं ब्रह्मण इति व्यतिरेकनिर्देशेन प्रतिपाद्य, तदेव वाङ्मनसागोचरं विद्वान् इति तद्वेदनमभिदधद्वाक्यं जरद्गवादिवाक्यवदनर्थकं वाच्यनन्तर्गतं च स्यात्। अतः शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयेयत्तां वक्तुमुद्यम्य तस्येयत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्तिः, 'यतो वाचो निवर्तन्ते' इत्युच्यते। एवमियत्तारहितं ब्रह्मण आनन्दं विद्वान् कुतश्चन न बिभेतीत्युच्यते।

किञ्च अस्य मान्त्रवर्णिकस्य विपश्चितः 'सोऽकामयत' इत्यारभ्य वक्ष्यमाणस्वसङ्कल्पावक्लृप्तजगज्जन्मस्थितिजगदन्तरात्मत्वादेर्मुक्तात्मस्वरूपादन्यत्वं सुस्पष्टमेव ॥ १७ ॥

इतश्चोभयावस्थात् प्रत्यगात्मनोऽन्य आनन्दमयः—

**भेदव्यपदेशाच्च १। १। १८॥**

---

मपि ग्राह्यमिति भावः। **न संभवतीति इति**शब्देन सौत्रपञ्चम्यर्थ उक्तः। **इति चे**ति चकारेण 'न संभवती'ति प्रागुक्तस्यापि समुच्चयः; ईक्षत्यधिकरणान्ते उक्तत्वात्। **जरद्गवादिवाक्यव**दिति। अनन्वितार्थोदाहरणतया **शाबरभाष्य** (१. १. ३२)-दर्शितम्, 'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति भद्रकाणि', 'जरद्गवो गायति मत्तकानि' इत्यादि; तादृशपदजातवदित्यर्थः। **अनर्थकम्**-अर्थरहितम्। **वाचि अनन्तर्गतं**-सदर्थकवाक्यभिन्नं-व्याहतार्थकम्। विपश्चित्त्वानुपपत्तिर्नाम प्रकरणश्रुतसर्वधर्मानुपपत्तिरेवेति ध्येयम्। अत्र सूत्रे चकाराभावः, अस्य पूर्वसूत्रोत्थितशंकापरिहारमात्रार्थत्वेन हेत्वन्तरपरत्वाभावात्। १७.

'**उभयावस्था**दिति। विज्ञानं यज्ञं, विज्ञानं ब्रह्म चेद् इति बद्धावस्थस्य मुक्तावस्थस्य च कीर्तनात् स्वारस्याच्च विज्ञानमयपदं सर्वावस्थग्राहीति भावः। नन्वानन्दमयवाक्य एव, 'विज्ञानमयादन्य इत्यस्य निविष्टत्वात् अस्य भेदव्यपदेशस्य पूर्वमेव हेतुतयोपन्यसनं युक्तमित्याशंकायाम्, अस्य वाक्यस्य

'तस्माद्वा एतस्मादात्मन आकाशः' इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयद्वाक्यम् अन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति, 'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः' इति। अतो जीवाद्भेदस्य व्यपदेशाच्चायं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति ज्ञायते (विज्ञायते) ॥ १८ ॥—इतश्च जीवादन्यः—

कामाच्च नानुमानापेक्षा १। १। १९॥

जीवस्याविद्यापरवशस्य जगत्कारणत्वे ह्यवर्जनीया आनुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा। तथैव हि चतुर्मुखादीनां कारणत्वम्। इह च 'सोऽकामयत बहु स्यां प्रजायेय'—इत्यचित्संसर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनस्सृष्टिः, 'इदं सर्वमसृजत, यदिदं किञ्च' इत्याम्नायते। अतोऽस्यानन्दमयस्य जगत् सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते। ततश्च जीवादन्य आनन्दमयः ॥ १९ ॥ इतश्च—

अस्मिन्नस्य च तद्योगं शास्ति १। १। २०॥

अस्मिन् आनन्दमये अस्य जीवस्य तद्योगम्-आनन्दयोगम्, शास्ति शास्त्रम्, 'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति। रसशब्दाभिधेयानन्दमयलाभादयं जीवशब्दाभिलपनीय आनन्दी भवतीत्युच्यमाने, यल्लाभात् य आनन्दी भवति, स स एवेत्यनुन्मत्तः को ब्रवीतीत्यर्थः (ब्रवीति) ॥

---

तस्माद्वाएतस्मादित्यारम्भात् आत्मेतिपदसत्त्वाच्च तदर्थनिर्णयाय पूर्वसंदर्भे प्रेक्ष्यमाणे, तस्माद्वा एतस्मादिति शब्दयोर्यत्र प्रथमनिर्देशः आत्मशब्दस्य च, तत्पर्यन्ते प्रेक्षिते, तत्र तस्मादित्याद्यर्थावगमाय तत्पूर्वसंदर्भस्य ज्ञेयतया मान्त्रवर्णिकमेव चेति पूर्वमुक्तम्। ततःपूर्वमभ्यासादिकथनं तु आनन्दमयपदगतमयडर्थनिरूपणस्य प्रत्यासन्नत्वात्-इत्यभिसंधायाह तस्माद्वा इत्यादि। अत्र सूत्रे विज्ञानमयशब्दस्य जीवपरत्वमेव, न बुद्धिपरत्वमिति विवक्षितम्। तदिदं प्रागेव प्रसंगाद्भाषितम् ॥ १८.

**स्वकामादेवे**ति। सोऽकामयत, सर्वमसृजत इति निर्देशभङ्गी हि संकल्पातिरिक्तोपकरणनिरपेक्षत्वं सूचयति। जीवस्तु कुलालादिरानुमानिकप्रधानं देहेन्द्रियादिरूपेण परिणतमुपकरणयन्नेव किमपि कुर्यात्। तदस्य कार्योपादानतायै सूक्ष्मचिदचिद्विशिष्टत्वापेक्षायामपि स्रष्टृस्वरूपनिमित्ततायै न देहाद्यपेक्षेति ज्ञायते। अत एव संकल्पार्थमपि न तदपेक्षेति भावः। तथाचानन्दमयो जीवादन्यः देहादिनिरपेक्षसंकल्पकृतसृष्टिकत्वात्, तादृशसंकल्पवत्त्वाद्वेत्यनुमानम्। विश्वामित्रादयस्तु संकल्पार्थं देहापेक्षिणस्त एवेति। ननु सिद्धानां मुनीनां 'संकल्पादेवास्य पितरः समुत्तिष्ठन्त' इति श्रुत्या देहनिरपेक्षसंकल्पमात्राधीनसृष्टयंगीकारादनैकान्त्यमिति चेत्-उच्यते। इतरानपेक्षया काममात्रेण कार्यसिद्धिं दर्शयतोऽस्य सूत्रस्य, आनन्दमयो न जीवः स्वनियतकर्तृकसृष्टिनिरपेक्षसृष्टिकत्वादित्यनुमाने तात्पर्यम्। मुक्तास्तु परसृष्टमध्ये स्वयं विचित्रसृष्टार इति न दोषः ॥ १९.

**एवमानन्दमयः परं ब्रह्मेति निश्चिते सति, 'यदेष आकाश आनन्दः' (बृ. ५-९-२८) 'विज्ञानमानन्दं ब्रह्म' इत्यादिषु आनन्दशब्देनानन्दमय एव परामृश्यते, यथा 'विज्ञानशब्देन विज्ञानमयः। अतएव 'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशः। अत एव च (तै. आन. ८-५) 'आनन्दमयमात्मानमुपसंक्रामति' इति फलनिर्देशश्च। उत्तरे चानुवाके पूर्वानुवाकोक्तानामन्नमयादीनाम् (तै. भृ. २) 'अन्नं ब्रह्मेति व्यजानात्,' (तै. भृ. ३) 'प्राणो ब्रह्मेति व्यजानात्', (तै. भृ. ४ अनु.) 'मनो ब्रह्मेति व्यजानात्', (तै. भृ. ५-१) 'विज्ञानं ब्रह्मेति व्यजानात्' इति प्रतिपादनात् (तै. भृ. ६-१) 'आनन्दो ब्रह्म' इत्यपि आनन्दमयस्यैव प्रतिपादनमिति विज्ञायते; तत एव च तत्रापि, 'आनन्दमयमात्मानमुपसङ्क्रम्य' इत्युपसंहृतम्।**

**अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य परस्य ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनोऽर्थान्तरत्वं सिद्धम्॥ २०॥** इति आनन्दमयाधिकरणम्॥ ६॥

अन्तरधिकरणम्॥ ७॥ (छा. १-६)

**यद्यपि मन्दपुण्यानां जीवानां कामाज्जगत्सृष्टिः अतिशयितानन्दयोगो भयाभयहेतुत्व मित्यादि न संभवति—अथापि विलक्षणपुण्यानामादित्येन्द्रप्रजापतिप्रभृतीनां संभवत्येवेतीमामाशङ्कां निराकरोति—**

## 7. अन्तस्तद्धर्मोपदेशात् १।१।२१।

श्रुतौ रसपदमानन्दवाचि आनन्दमयपरमेवेति दर्शयितुं सूत्रे अस्मिन्निति आनन्दमयवाचिपदस्य रसप्राप्तितया प्रयोगात्, आनन्दादिशब्दस्याप्यानन्दमयपरत्वम्; न तु आनन्दपदस्यानन्दमात्रार्थकतया आनन्दमयशब्दे स्वार्थिकमयडादिकल्पनेति सूत्रकृदाशयोऽवगम्यते। तं स्फुटयति **एवमानन्दमय** इति। 'रसं लब्ध्वा,' 'आनन्दमयमुपसंक्रामति' इत्यनयोरैकरस्यमपि विवक्षितमाह **अतएव चे**ति। आनन्दमयो न जीवः जीवानन्दहेतुभूतस्वविषयकानुभवकत्वादिति सूत्रविवक्षितमनुमानम्॥ २०॥

अचेतन इव चेतनेऽपीक्षणस्य सर्वात्मना ह्यन्यभावेऽपि, शारीरत्व-जीवब्रह्मैक्यश्रवणेऽपि, जीवविलक्षण एव जगत्कारणमिति निरूपितम्। तत्र जीवसामान्यस्य कारणत्वायोगेऽपि जीवविशेषे तद् घटत इत्याक्षेपेणान्तरधिकरणं प्रवृत्तमवतारयति **यद्यपी**ति। ननु अन्तरादित्यविद्यायां कारणत्वप्रस्तावाभावात् कथं कारणविचारे एतदुपक्षेप इति शंकाशमनाभिप्रायेण **कामाज्जगत्सृष्टि**रित्यादि। अयं भावः—सद्विद्यायाम्, 'उत तमादेशमप्राक्ष्यः' इति आदेष्टारं प्रस्तुत्य सर्वकारणत्वात् सर्वादेष्टृत्वमिति उपरि कारणत्वं व्यक्तम्। आनन्दवल्ल्यामपि, 'आत्मन आकाशः' इति प्रस्तुत्यैव कारणत्वमुपक्रान्तम्; पश्चाच्च सृष्टं सर्वं तच्छासनवशमिति भीषाऽस्मादित्यादिना विवृतम्। तादृशश्चेशनमत्रापि, 'तेषां चेष्टे' इति ऊर्ध्वाधोलोकादिसर्वेशनवाक्यतोऽवगम्यत इति स्वसंकल्पाधीनसर्वस्वरूपस्थितिप्रवृत्तिकत्वादयं जगत्कारणमित्यविवादम्। तावता नायं जीवादन्यो भवितुमर्हति; सिद्धान्तिनाऽपि कारणत्वेनाभिमतस्यास्य

**इदमाम्नायते छान्दोग्ये, "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी । तस्यो-**

---

मशरीरत्वादिति पूर्वपक्षी प्रत्यवतिष्ठते । न च ब्रह्मणः शरीरत्वं प्रागेव प्रतिपन्नमिति वाच्यम्-सर्वशरीरिणस्तस्यान्यार्थकृतान्नमयशरीरमादाय शरीरित्वेऽपि स्वार्थतादृशशरीरवत्त्वाभावात्; इह तु, 'तस्य---अक्षिणी' इत्येवं स्वभोगायतनेन्द्रियाश्रयशरीरश्रवणात् जीवत्वसिद्धेः । एवञ्च, 'कामाच्च नानुमानापेक्षा' इत्युक्तमप्यनुपपन्नम्; सशरीरत्वे सिद्धे तस्याऽऽनुमानत्वरूपप्राकृतत्वाभावस्य, कारणत्वं प्रति तदपेक्षणाभावस्य चासंभाव्यत्वात । तस्मादानुमानापेक्षसृष्टिकर्तृतया जीवत्वं स्वीकर्तव्यम् । एवञ्च जीवब्रह्मैक्यादिवचनमपि जाघटीति । अत एव 'स यश्चायं पुरुषे यश्चासावादित्ये' इत्यानन्दवल्ल्युक्तं तस्याक्ष्यादित्यस्थानद्वयस्थित्यभिप्रायमेव स्यादिति । **आदित्येन्द्रप्रजापतिप्रभृतीना**मिति इन्द्रादीनामपि ग्रहणमादित्ये विचारे कृते तुल्यरीत्याऽन्यत्रापि सैव रीतिः सेत्स्यति । एवञ्च कदाचित् कश्चिदीश्वर इत्याशयेन ।

**इदमाम्नायत** इति । उद्गीथविद्याप्रकरणगतत्वादिदमपि वाक्यमुद्गीथे हिरण्मयपुरुषदृष्टिविधिरूपम् । वक्ष्यते च (३-३-७.) भाष्य एव, "उद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरभूतम्" इति । एतद्विद्याया उद्गातृनुष्ठेयत्वञ्चात्रैव श्रुतौ प्रकरणान्ते श्रूयते; फलमपि । तत्र पृथिव्यादिरूपेण ऋचः अग्न्यादिरूपेण साम्नश्च कल्पनां विधाय, सामशब्दे सा अम इति विभागं कृत्वा सा इति पृथिव्यादेः अम इति अग्न्यादेश्च ग्रहणं प्रकल्प्य, एवंभावितयोः ऋक्सामयोः हिरण्मयपुरुषगानरूपत्वम्, 'तस्य ऋक् च साम च गेष्णौ' इत्युक्तम् । अव्युत्पन्नो गेष्णशब्दः प्रस्तावादौ सामावयवे छन्दोगैः प्रयुज्यत इति वदन्ति । तथासति तादृशावयवान्विततया ऋक्सामयोरेतत्त्वनिर्देश इति मन्तव्यम् । एवमादित्यस्थानकहिरण्मयपुरुषविषये । तथा वागादिदृष्टिमृचि प्राणादिदृष्टिं साम्नि चोक्त्वा, सामपदघटकयोः सा अम इति भागयोः वाक्प्राणादिरूपताञ्च प्रकल्प्य एवंभूतर्क्सामगेष्णकत्वमक्ष्यन्तर्वर्तिहिरण्मयपुरुषे दर्शितम् । पूर्वस्य पुरुषस्यादित्यमण्डलोर्ध्ववर्तिसर्वलोककामेशितृत्वम्, अक्षिपुरुषस्य च भूमण्डलाधोलोककामेशितृत्वञ्च विभज्य दर्शितम्, तथातथाऽनुसंधाने तत्तत्फलप्राप्तिवर्णनौचित्याय । एक एव पुरुषः स्थानद्वयेऽपि वर्तमानः । तस्याकारः हिरण्मय.—हिरण्यश्मश्रुरित्यादिदर्शितः । तथा उन्नामकत्वम्, धनलिप्सुवीणागायकगीयमानात्मत्वञ्च वर्णितम् । अत्र हिरण्मयशब्दः हिरण्मयवस्तुसादृश्यविवक्षया । एवं हिरण्यशब्दोऽपि । उज्ज्वलत्वादिरूपं साम्यं विवक्षितम् । हितरमणीयं हिरण्यमित्यपि निरुच्यते । सर्वपाप्मोर्ध्वस्थितत्वात्-उदिति नाम । **अन्तरादित्ये ।** आदित्यशब्दात् ण्यप्रत्यये आदित्यमित्येव रूपम् । आदित्यमण्डले मध्ये इति तदर्थः । 'तस्मिन् यदन्तः' इतिवत् सप्तमी । एकं पदमिति केचित् । **प्रणखात्** नखाग्रात् । कप्यासशब्दस्यार्थषट्कं प्रदर्श्यार्थत्रयं स्वीकृतं **वाक्य**ग्रन्थे—कं पिबतीति कपिः सूर्यः, पद्मनाला च । कपिना सूर्येण आस्यते विकास्यत इति, कपिभूते नाले आस्त इति, के जले प्यास्ते=वर्तत इति च कप्यासमिति । पुण्डरीकविशेषणम् । पुण्डरीकं रक्ताम्भोजम् । सोमपाशब्दवत् कपाशब्दः जलपाय्यर्थको नालवाची; कपीति सप्तम्य-

दिति नाम, स एष सर्वेभ्यः पाप्मभ्य उदितः; उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद। तस्यर्क्च साम च गेष्णौ इत्यधिदैवतम्", "अथाध्यात्मम्—अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, सैवर्क्, तत् साम, तदुक्थम्, तद्यजुः, तद् ब्रह्म। तस्यैतस्य तदेव रूपं यदमुष्य रूपम्; यावमुष्य गेष्णौ तौ गेष्णौ; यन्नाम तन्नाम' इति॥

तत्र संदिह्यते—किमयमक्ष्यादित्यमण्डलान्तर्वर्ती पुरुषः पुण्योपचयनिमित्तैश्वर्यः आदित्यादिशब्दाभिलप्यो जीव एव, आहोस्वित् तदतिरिक्तः परमात्मा—इति। किं युक्तम्?

उपचितपुण्यो जीव एवेति। कुतः? सशरीरत्वश्रवणात्। शरीरसंबन्धो हि जीवानामेव संभवति। कर्मानुगुणप्रियाप्रिययोगाय हि शरीरसंबन्धः। अत एव हि कर्मसंबन्धरहितस्य मोक्षस्य प्राप्यत्वमशरीरत्वेनोच्यते, (छा. ४ ८-१२-१) 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' इति। संभवति च पुण्यातिशयात् ज्ञानाधिक्यम्, शक्त्याधिक्यञ्च। अत एव लोककामेशत्वादि तस्यैवोपपद्यते। तत एव चोपास्यत्वम्; फलदायित्वञ्च; पापक्षपणकरत्वेन मोक्षोपयोगित्वं च। मनुष्येष्वप्युपचितपुण्याः केचित् ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते; ततश्च सिद्धगन्धर्वादयः; ततश्च देवाः; ततश्चेन्द्रादयः। अतो ब्रह्मादिष्वन्यतम एवैकैकस्मिन् कल्पे पुण्यविशेषेण एवम्भूतमैश्वर्यं प्राप्तो जगत्सृष्ट्याद्यपि करोतीति जगत्कारणत्वजगदन्तरात्मत्वादिवाक्यमस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते। अतो न जीवादतिरिक्तः परमात्मा नाम कश्चिदस्ति। एवं च सति—(बृ. ५-८-८) 'अस्थूलमनण्वह्रस्वम्' इत्यादयो जीवात्मनः स्वरूपाभिप्रायाः भवन्ति; मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणि—इति॥

एवं प्राप्तेऽभिधीयते—अन्तस्तद्धर्मोपदेशात्—अन्तरादित्येऽन्तरक्षिणि च यः पुरुषः प्रतीयते, स जीवादन्यः परमात्मैव; कुतः? तद्धर्मोपदेशात्। जीवेष्वसंभवन् तदतिरिक्तस्यैव परमात्मनो धर्मोऽयमपहतपाप्मत्वादिः, (छा. १-६-७) 'स एष सर्वेभ्यः पाप्मभ्य उदितः' इत्यादिनोपदिश्यते। अपहतपाप्मत्वं हि अपहतकर्मत्वम्; कर्मवश्यतागन्धरहितत्वमित्यर्थः।

---

न्तम्; नाले इत्यर्थः; तत्र आसं वर्तमानमित्यपि **नयमयूखमालिकायाम्**। एतदर्थत्रयग्रहणेन 'गम्भीराम्भस्संभूत-सुमृष्टनाल-रविकरविकसितपुण्डरीकदलामलायतेक्षण' इति वेदार्थसंग्रहे वर्णितमिहानुसंधेयम्। अर्थान्तरविचारोऽन्यत्र द्रष्टव्यः। तदत्र सर्वेशितुः एवंभूतशरीरश्रवणात्, पापमात्रहीनत्वश्रवणेन पुण्यमूलकं शरीरमित्यवगमाच्च जीवत्वं स्पष्टम्। शरीरस्यानित्यत्वञ्चेष्टमेव; ईश्वरत्वस्यैवानित्यत्वात्। वेदव्यासप्रवाहवत् ईश्वरप्रवाहस्यैवेष्टत्वादिति सद्विद्यादिसूक्तं कारणमप्ययमेवेति पूर्वपक्षः।

**अपहतपाप्मत्वं ह्यपहतकर्मत्वमिति**। 'नैतं सेतुमहोरात्रे तरतः, न जरा न मृत्युः न शोको न सुकृतम्। न दुष्कृतम्; सर्वे पाप्मानोऽतो निवर्तन्ते' इति दुष्कृतवत् सुकृतस्यापि पाप्मशब्देन संग्रहो दृश्यते। अनिष्टहेतुतया शास्त्रतोऽवगतं यत्, तत् पापम्। पुण्यस्यापि मुमुक्षुविषये तथात्वमक्षतम्।

कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवाः। अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः ॥ तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वम्, सत्यसङ्कल्पत्वादिकम्, सर्वभूतान्तरात्मत्वञ्च तस्यैव धर्मः। यथाह, (छा. ८-१-५) 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इति, तथा (सुबाल. ७) 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति।

(तै. आन. ६) 'सोऽकामयत। बहु स्यां प्रजायेयेति' इत्यादिसत्यसङ्कल्पत्वपूर्वक-समस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्वम्, वाङ्मनसपरिमितिकृतपरिच्छेदर-हितानवधिकातिशयानन्दयोग इत्यादयोऽकर्मसंपाद्याः स्वाभाविका धर्मा: जीवस्य नसंभवन्ति ॥

यत्तु शरीरसंबन्धान्न जीवातिरिक्त इत्युक्तम्—तदसत्। न हि सशरीरत्वं कर्मवश्यतां साधयति, सत्यसङ्कल्पस्येच्छयाऽपि शरीरसंबन्धसंभवात् ॥ अथोच्यते — शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसङ्घातः; तत्सम्बन्धश्चापहतपाप्मनः सत्यसङ्कल्पस्य पुरुषस्ये-च्छया न सम्भवति, अपुरुषार्थत्वात्। कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलो-पभोगायानिच्छतोऽपि तत्संबन्धोऽवर्जनीयः—इति। स्यादेतदेवम्, यदि गुणत्रयमयः प्राकृतोऽस्य देहस्स्यात्; स तु स्वाभिमतः स्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम् ॥

एतदुक्तं भवति—परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणगणाश्च सन्ति। तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्य–निरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौ-कुमार्यलावण्ययौवनाद्यनन्तगुणगणनिधि दिव्यरूपमपि स्वाभाविकमस्ति। तदेवोपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानं करोति अपारकारुण्यसौशील्यवात्सल्यौदार्यजलनिधिः निरस्त-निखिलहेयगन्धोऽपहतपाप्मा परमात्मा परं ब्रह्म पुरुषोत्तमो नारायणः—इति ॥

(तै. भृ. १) 'यतो वा इमानि भूतानि जायन्ते', (छा. ६-२-१) 'सदेव सोम्येद-मग्र आसीत्', (ऐ. १-१-१) 'आत्मा वा इदमेक एवाग्र आसीत्', (महो. १ अ. १) 'एको ह वै नारायण आसीत्, नब्रह्मा नेशानः, इत्यादिषु निखिलजगदेककारणतयाऽवगतस्य परस्य ब्रह्मणः, (तै. आन १) 'सत्यं ज्ञानमनन्तं ब्रह्म', (बृ. ५-६-२८) 'विज्ञानमानन्दं ब्रह्म' इत्यादिष्वेवम्भूतं स्वरूपमित्यवगम्यते। (मन्त्रि) 'निर्गुणम्', (श्वे. ६-१६)

---

गतेत्यनुक्त्वा हतेत्युक्तेः पापवद्भासमानकर्मकरणेऽप्यलेपो ज्ञायते। हतेत्यनुक्त्वा अपहतेत्युक्तिः अत्यन्तदू-रस्थत्वं पाप्मनो दर्शयति। अतः कर्मवश्यतालेशेनापि रहितत्वं स्वरसार्थः। तस्य यत्र बाधः, तत्रोपचारः। अत्रैवम्भूतत्वं हिरण्मयशरीरविशिष्टतादशायामस्य कीर्त्यमानं शरीरस्य कर्मानधीनत्वं ज्ञापयतीति अयं न जीवः।

अवर्जनीय इति। यद्यपि कल्याणतरविग्रहपरिजिघृक्षया कर्माद्यनुष्ठानं शास्त्रानुसारि लोके दृष्टम्-तथापि तत्रापि दुःखलेशस्यावर्जनीयत्वात् अवाप्तसमस्तकामः कथमिदं कामयेतेति भावः।

'निरञ्जनम्', (छा. ८-१) 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः', (श्वे. ६-८) 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', (श्वे. (६-७) 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम्', (श्वे. ६-९) 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः', (यजु. आ. ३-१२ पुरुषसू.) 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते', 'वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात्', (तै. नारा. १. अनु. ८) 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' इत्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतहेयदेहसंबन्धं तन्मूलकर्मवश्यतासंबन्धं च प्रतिषिध्य कल्याणगुणान् कल्याणरूपं च वदन्ति। तदिदं स्वाभाविकमेव रूपमुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणाकारं देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान्। तदिदमाह श्रुतिः, (उ. ना) 'अजायमानो बहुधा विजायते' इति। स्मृतिश्च, (गी ४-६) 'अजोऽपि सन् अव्ययात्मा भूतानामीश्वरोऽपि सन्।, प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया। परित्राणाय साधूनां विनाशाय च दुष्कृताम्' इति। साधवो ह्युपासकाः; तत्परित्राणमेवोद्देश्यम्; आनुषङ्गिकस्तु दुष्कृतां विनाशः, संकल्पमात्रेणापि तदुपपत्तेः। 'प्रकृतिं स्वाम्' इति प्रकृतिः—स्वभावः। स्वमेव स्वभावमास्थाय; न संसारिणां स्वभावमित्यर्थः। आत्ममाययेति, स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः। (वेदनिघ, धर्मवर्गे. २२-श्लो.) 'माया वयुनं ज्ञानम्' इति ज्ञानपर्यायमपि मायाशब्दं नैघण्टुका अधीयते। आह च भगवान् पराशरः, (वि. पु. ६-७-७०) 'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तत् विश्वरूपवैरूप्यं रूपमन्यत् हरेर्महत्॥ समस्तशक्ति रूपाणि तत् करोति जनेश्वर। देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया। जगतामुपकाराय; न सा कर्मनिमित्तजा' इति। महाभारते चावताररूपस्याप्यप्राकृतत्वमुच्यते, (उद्योग) 'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः' इति। अतः परस्यैव ब्रह्मण एवंरूपरूपवत्त्वात् अयमपि तस्यैव धर्मः। अत आदित्यमण्डलाक्ष्यधिकरणः आदित्यादिजीवव्यतिरिक्तः परमात्मैव॥ २१॥

---

समस्ता इति विष्णुपुराणवाक्यं जिज्ञासाधिकरण एव विवृतम्। अयमपि तस्यैव धर्म इति। जन्माद्यधिकरणे कारणत्वमुक्तम्। तत् आनुमानिकेश्वरपक्षे उपादानत्वरूपं न सिध्येदिति शास्त्रयोनित्वाधिकरणप्रवर्तनेनोपादानत्वरूपमपीति ज्ञापितम्। पुरुषार्थत्वं समन्वयाधिकरणे। प्रधानातिरेकिकारणानवगमात् कथं पुरुषार्थतेत्यत्र तदतिरेक ईक्षत्यधिकरणे। आनन्दरूपजीवातिशायितया निरतिशयानन्दत्वमानन्दमयाधिकरणे। ईदृशस्य परमात्मनोऽप्राकृतहिरण्मयपरमगोप्यपुण्डरीकाक्षविग्रहवत्त्वमन्तराधिकरण इति सिद्धं श्रियःपतिरेव ब्रह्मेति। ननु पूर्वाधिकरणत एव ब्रह्म सिद्धम्। अन्यान्यपि वाक्यानि ब्रह्मपरतया अन्तरधिकरणादौ स्थाप्यन्ते। अतः सिद्धान्ते वाक्यानां कारणविषयकत्वेपि पूर्वपक्षे

भेदव्यपदेशाच्चान्यः १ । १ । २२ ॥

आदित्यादिजीवेभ्यो भेदो व्यपदिश्यतेऽस्य परमात्मनः, (बृ. ५-७-९) 'य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति', (बृ. ५-७ २२) 'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' इति। (सुबा. ७-ख) 'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद, यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति चास्यापहतपाप्मनः परमात्मनः सर्वान् जीवान् शरीरत्वेन व्यपदिश्य तेषामन्तरात्मत्वेनैनं व्यपदिशति। अतः सर्वेभ्यो हिरण्यगर्भादिजीवेभ्योऽन्य एव परमात्मेति सिद्धम् ॥ २२ ॥ अन्तरधिकरणम् ॥ ७ ॥

आकाशाधिकरणम् ॥ ८ ॥ (छा. १-९-१)

(तै. भृ. १) 'यतो वा इमानि भूतानि जायन्ते' इति जगत्कारणं ब्रह्मेत्यवगम्यते (१), किं तत् जगत्कारणमित्यपेक्षायाम्, (छा. ६-२-१) 'सदेव सोम्येदमग्र आसीत्', (छा. ६-२-३) 'तत् तेजोऽसृजत', (ऐ. १-१-१) 'आत्मा वा इदमेक एवाग्र आसीत्', (ऐ. १-१-२) 'स इमाँल्लोकानसृजत', (तै. आन. १) 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति साधारणैः शब्दैर्जगत्कारणे निर्दिष्टे ईक्षणविशेषानन्दविशेषरूपविशेषार्थस्वभावात् प्रधानक्षेत्रज्ञा[दि]व्यतिरिक्तं ब्रह्मेत्युक्तम्। इदानीमाकाशादिविशेषशब्दैर्निर्दिश्य जगत्कारणत्वजगदैश्व-

---

न नविनिःथ. । ए। ब्रह्मणः प्राक्सिद्धत्वादेव, 'तद्धर्मोपपत्तेः', 'तल्लिङ्गात्' इति तच्छब्दप्रयोगाज्ञस्य- निनि चेत्—र्गा ि यमद्वैतभाष्ये। अत्र तु पादोऽयमयोगव्यवच्छेदपर एवेष्यते। तद्धर्मेति प्रयोगेऽपि तद्गतमाधारणधर्म्य तत्त्वमाधकत्वायोगात् तन्मात्रधर्मेत्यर्थो वर्णनीयः। स च तदितरावृत्तित्वद्वृत्तिधर्मः। तदितरावृत्तित्वमेव पर्याप्तम्। अतः आदित्याद्यन्तर्वर्ती अयं न जीवः तदवृत्तिधर्मवत्त्वादित्येव सूत्राभिसंहितमिति। स च धर्मः अपहतपाप्मत्वनिरुपाधिकेशितृत्वाप्राकृतविग्रहवत्त्वादि रित्याशयः ॥ २१ ॥

**भेदव्यपदेशाच्चान्यः।** अन्तस्तद्धर्मोपदेशात् भेदव्यपदेशाच्चान्य इत्येकवाक्यताऽर्थसिद्धा। आदित्यरूपदेवताया अपि शब्दैकगम्यत्वात् **नाशब्द**मिति पदानुवृत्तिरिह न फलायेत्याशयेन **अन्य** इत्युक्तम्। इदमेवोपरितनाधिकरणेष्वप्यनुवर्तते। अन्तरादित्ये इत्यत्र आदित्यशब्दस्य हिरण्मयविग्रहाधारत्वानुगुणतया मण्डलार्थकत्वस्वीकारेऽपि इह व्यपत्ययकल्पने मानाभावात् पूर्वापरानुसाराच्चादित्यशब्दः तदधिदेवतावाची। आदित्यशब्दो व्यष्टिजीवपरः। **आत्मनी**ति शुद्धजीवो विवक्ष्यते; **अक्षर**मिति उद्भूतसमष्टिजीवं प्रधानम्; **मृत्यु**रिति अन्तर्लीनजीवम्। एतावता कार्य-कारण-बद्ध-मुक्तसर्वावस्थास्वपि आत्मत्वान्तर्यामित्वं सिध्यति ॥ २२ ॥

साधारणशब्दघटितकारणवाक्येषु लिङ्गात् परमात्मन एव प्रतिपाद्यत्वं स्थापितम्। अत. पादशेषेण अर्थान्तरप्रसिद्धशब्दघटितवाक्येष्वप्ययमेव प्रतिपाद्यत इति स्थाप्यते। तत्र आकाशवायुतेजःक्रममनुसृत्य

यादिवादेऽपि आकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोऽर्थान्तरम् उक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते आकाशस्तल्लिङ्गात् इत्यादिना पादशेषेण—

8. आकाशस्तल्लिङ्गात् १ । १ । २३ ॥

इदमाम्नायते छान्दोग्ये, (छा. १-९-१) 'अस्य लोकस्य का गतिरिति । आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते; आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणम्' इति । तत्र संदेहः—किं प्रसिद्धाकाश एवात्राकाशशब्देनाभिधीयते, उतोक्तलक्षणमेव ब्रह्म इति ।

किं प्राप्तम्? प्रसिद्धाकाश इति । कुतः? शब्दैकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धः शब्देन प्रतीयते, स एव ग्रहीतव्यः । अतः प्रसिद्धाकाश एव चराचरभूतजातस्य कृत्स्नस्य कारणम् । अतस्तस्मादनतिरिक्तं ब्रह्म ॥ नन्वीक्षापूर्वकसृष्ट्यादिभिरचेतनात् जीवाच्च व्यतिरिक्तं

---

आकाशपदघटितवाक्यमादौ विषयः; पूर्वोक्तादित्यपुरुषप्रतिपादकखण्डसमनन्तरखण्डस्थत्वाच्चाकाशस्य । आकाश आनन्दो न स्यादित्युपस्थितत्वाच्च । अचेतने वृत्तेऽथ चेतनप्रस्तावो भविष्यति । **अवगते** इति पाठे न क्लेशः । **अवगम्यत** इति पाठे, **यतोवा** इत्यारभ्य **कारण**मित्यन्तस्यापेक्षाकारत्वम् । **इति साधारणै**रिति हिरण्मयः पुरुष इत्यस्यापि ग्रहणम् । एतत्पादे स्पष्टब्रह्मलिङ्गकेष्वपि वाक्येषु ब्रह्मासिद्धिपूर्वपक्षस्याविशिष्टत्वेऽपि लिङ्गादपि श्रुतेर्बलीयस्त्वेनाक्षेपः इतःप्रभृति । तत्राप्युत्तरोत्तरस्य पूर्वपूर्वापरिहृतयुक्त्या प्रवृत्तिरिति तदनुसारेणापि आकाशादिक्रमः । तत्र कारणत्वोक्तिमद्वाक्यविचारः आद्यद्वये; अन्त्यद्वये कारणत्वाक्षेपकधर्मवद्वाक्यविचार इति पेटिकाद्वयम् । रूढिभञ्जनेनापि निर्वाह आद्यद्वये; रूढ्यर्थापरित्यागेनैव निर्वाहोऽन्त्यद्वय इति च भेदः ।

**का गति**रिति । प्रवाहणस्य राज्ञः संनिधाने शिलकेन साम्न उत्तरोत्तरगतिप्रश्ने—साम्नः स्वर, स्वरस्य प्राणः, तस्यान्नम्, तस्याऽऽपः, तासां द्युलोकः इति प्रत्युच्य दाल्भ्यो विरतः । अथ शिलकेन पृथिवी द्युलोकं प्रति गतित्वेन दर्शिता । तदपि निराकृत्य प्रवाहण, सान्तस्य गतित्वं न भवतीति अनन्तत्वादाकाश एव तस्या अपि गतिरित्युक्त्वा तमाकाशमेवं वर्णयाञ्चकारेति बोध्यम् । **गतिः** उपजीव्यम् । पूर्वमुद्गीथे हिरण्मयपुरुषदृष्टिमिवाकाशदृष्टिं विधातुमयं खण्डः । सिद्धान्ते उभयोरेकत्वेऽपि स्थानाकारादिविशेषणभेदात् तत्तद्दृष्टिर्भिद्यते । अत्राकाशे परमात्मनि अनुसंधेयाः कारणत्व-ज्यायस्त्व-परायणत्व-परोवरीयस्त्वानन्तत्वादयः ।

**उक्तलक्षणमेव ब्रह्मे**ति । एतावता ब्रह्म किञ्चिदस्तीति पूर्वपक्षी मन्यत इति न मन्तव्यम् । कारणवाक्यमाकाशरूपमहाभूतपरतयैव निर्वोढुमर्हम्, उत विलक्षणकिञ्चित्स्वीकारेणैवेति विचारः । अयोगव्यवच्छेदपादो ह्ययम् । पूर्वपक्षियुक्तिः, योगात् रूढिर्बलीयसीति । ननु आत्मन आकाशः संभूत इत्यादिना परमात्मन आकाशादिशरीरकत्वेऽवगते शरीरवाचिनां शरीरिपरतायाः लोकसिद्धत्वात् परमात्मपरत्वे कथं न रूढिरिति चेन्न-अत एव **प्रसिद्धे**तिपदप्रयोगात् । न हि तत्र लोकप्रसिद्धिरस्ति । किञ्च शारीरत्वाव-

ब्रह्मेत्युक्तम् ॥ सत्यमुक्तम्; अयुक्तं तु तत् । तथाहि—'यतो वा इमानि भूतानि जायन्ते...' नतु ब्रह्म इत्युक्ते, कुत इमानि भूतानि जायन्त इत्यादिविशेषापेक्षायाम्, 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यादिना विशेषप्रतीतेः जगज्जन्मादिकारणमाकाश एवेति निश्चिते सति, (छा. ६-२-१) 'सदेव सोम्येदमग्र आसीत्' इत्यादिष्वपि सदादिशब्दाः साधारणाकाराः तमेव विशेषमाकाशमभिदधति । (ऐ. १-१-१) 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिष्वात्मशब्दोऽपि तत्रैव वर्तते । तस्यापि हि चेतनैकान्तत्वं न संभवति; यथा 'मृदात्मको घटः' इति । आप्नोतीत्यात्मेति व्युत्पत्त्या सुतरामाकाशेऽप्यात्मशब्दो वर्तते । अत एवमाकाश एव कारणं ब्रह्मेति निश्चिते सति, ईक्षणादयः तदनुगुणाः गौणा वर्णनीयाः । यदि हि साधारणशब्दैरेव सदादिभिः कारणमभ्यधास्यत, ईक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति निरचेष्यत । आकाशशब्देन तु विशेष एव निश्चित इति नार्थान्तराभावान्निर्णेतव्यमस्ति ॥

ननु (तै. आन. १-२) 'आत्मन आकाशः संभूतः' इत्याकाशस्यापि कार्यत्वं प्रतीयते ॥ सत्यम्; सर्वेषामेवाकाशवाय्वादीनां सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाद्वयमस्ति । तत्राकाशस्य सूक्ष्मावस्था कारणम्; स्थूलावस्था तु कार्यम् । 'आत्मन आकाशः संभूतः' इति स्वस्मादेव सूक्ष्मरूपात् स्वयं स्थूलरूपः संभूत इत्यर्थः । 'सर्वाणि ह वा इमानि भूतान्याकाशादेव

---

गमेऽपि शब्दस्य तावत्पर्यन्ततानां कठिनैवेति । व्युत्पादनमपि इतः परमेव कार्यम् ॥ ननु मृदात्मको घट इत्यादौ आत्मशब्दः स्वरूपवाची । तस्य तादृशसंबन्धिकत्वात् । तथा आत्मन आकाश इत्यादौ निर्वाहेऽपि, 'आत्मा वा इदमेक एव' इति वाक्यं दुर्निर्वहम् । न हि, 'अस्यात्मा एक' इति श्रूयते, किंतु आत्मा इदमेक इति । शंकाया प्रकारान्तरेण निर्वाहमाह आप्नोतीति । सुतरामित्यनेन—आत्मपरत्वेऽपीयं व्युत्पत्तिः सिद्धा; परं तत्र निरुपपदार्थान्तरग्रहणेन विरोधे पर्यवसानं कार्यम् । तत्रापि जीवव्यावृत्तिमार्गो निरीक्ष्यः; आकाशग्रहणे तु न किंचिदपि नेति सूचितम् । गौणा इति । नन्वीक्षतिर्वा गौणः आकाशशब्दो वा । किं विनिगमकमिति चेत्—धर्मिभूतकर्तृवाचिपदं प्रधानम्, अन्यदुपसर्जनमिति, गुणे त्वन्याय्यकल्पनेति । अवस्थाद्वयमस्तीति । सर्वासामप्यवस्थानामेकप्रकृतिद्रव्यनिष्ठत्वेऽपि अवस्थाद्वयसाधारण्येनैवाकाशशब्दप्रवृत्तिरिति विशेष इति भावः । नन्वियं सूक्ष्मावस्था शब्दतन्मात्रात्मा । तत्र श्रुतिरेव प्रमाणम् । तस्यैव श्रुतौ तन्मात्रस्यापि प्रधानादिजन्यत्वे दृश्यमाने कथमाकाशकारणत्वपूर्वपक्षः । प्रधानपक्षस्तु प्रागेव निरस्तः । न च तत्राकाशशब्दादिः । न चात्र, 'सर्वाणि हवा इमानि भूतानि' इति वाय्वादिमहाभूतकारणत्वमेवोच्यत इति वाच्यम्—तथासति जगत्कारणवस्त्वन्तरप्रतिक्षेपाप्रसक्तेः—उच्यते । यतोवा इति वाक्ये जीवन्तीति श्रवणात् तदैकार्थ्याच्च भूतपदं प्राण्यर्थकम् । एवं रूढ्या सर्वकारणत्वे आकाशस्यावगते ईक्षणादिश्रुतिवत् प्रकृतिमहदादिसद्भावश्रुतिरपि तार्किकादिसरण्याऽन्यथा नेया । न च शब्दतन्मात्रश्रुतेरपि तथा नयनमावश्यकम्; तस्याप्याकाशशब्दवाच्यत्वाभ्युपगमेनाविरोधादिति पूर्वपक्ष्याशयः ।

समुत्पद्यन्ते' इति सर्वस्य जगत आकाशादेव प्रभवाप्ययादिश्रवणात् तदेव हि कारणं ब्रह्मेति निश्चितम्। यत एवं प्रसिद्धाकाशादनतिरिक्तं ब्रह्म, अत एव [च] (तै. आन. ७) 'यदेष आकाश आनन्दो न स्यात्', (छा. ८-१४-१) 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्येवमादिनिर्देशोऽप्युपपन्नतरः। अतः प्रसिद्धाकाशादनतिरिक्तं ब्रह्मेति—

एवं प्राप्ते ब्रूमः—आकाशस्तल्लिङ्गात्। आकाशशब्दाभिधेयः प्रसिद्धाकाशात् अचेतनात् अर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव॥ कुतः? तल्लिङ्गात्। निखिलजगदेककारणत्वम्, सर्वस्मात् ज्यायस्त्वम्, परायणत्वम् इत्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते। निखिलकारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य नोपपद्यते; चेतनवस्तुनस्तत्कार्यत्वासंभवात्। परायणत्वं च चेतनानां परमप्राप्यत्वम्। तच्चाचेतनस्य हेयस्य सकलपुरुषार्थविरोधिनो न संभवति। सर्वस्माज्ज्यायस्त्वं च निरुपाधिकं सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयोत्कर्षः। तदप्यचितो नोपपद्यते॥

यदुक्तं—जगत्कारणविशेषाकांक्षायामाकाशशब्देन विशेषसमर्पणात् अन्यत् सर्वं तदनुरूपमेव वर्णनीयमिति—तदयुक्तम्; 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इति प्रसिद्धवन्निर्देशात्। प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्तिमपेक्षते। प्रमाणान्तराणि च, (छा. ६-२-१) 'सदेव सोम्येदमग्र आसीत्' इत्येवमादीन्येव वाक्यानि। तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादितं ब्रह्म आकाशशब्देन प्रसिद्धवन्निर्दिश्यते।

---

अस्तु वा त्रिवृत्कृतात्रिवृत्कृतभेद एवाकाशे, 'आत्मन आकाशः' इत्यत्र विवक्षित इति। **उपपन्नतर** इति। आनन्दमीमांसायां वस्तुष्वप्यानन्दशब्दस्य प्रयोगात् स साधारणः; अनुकूल इत्यर्थकत्वात् विशेषणत्वार्हश्च। अत एव, 'कं ब्रह्म' इत्यत्र, 'तदाकाशञ्चोचुः' इत्याकाशस्य विशेष्यत्वमित्याशयेन तरप्प्रयोगः। ननु 'एको ह वै नारायण आसीत्' इति नारायणशब्दरूढिर्भज्येतेति चेत्-एकतररूढिभङ्गस्यावश्यकत्वे सति धर्मान्तरकल्पनयारूढिभङ्गापेक्षया क्लृप्तेनैव निर्वाहं स्वीकृत्य रूढिभङ्गो ज्यायानिति।

ननु यावत् अतिरिक्तं ब्रह्म न सिद्धम्, तावत् निखिलजगदेककारणत्वादिरूपा धर्मा अप्यसिद्धा एवेति कथं तत्सिद्धवत्कारेण तदाश्रयस्यैव प्रकृतवाक्यार्थत्वं कल्प्येत; कथञ्च श्रुतेर्लिङ्गाद् बाध इति शंकायाम्—पुरोवादिवाक्यतस्तत्सिद्धिं दर्शयितुं पूर्वपक्ष्युक्तमनुवदति **यदुक्त**मिति। **प्रसिद्धव**दिति। **हवै**शब्दस्य पूर्वप्रसिद्धिज्ञापकत्वादिति भावः। एवं सिद्धान्तयुक्तिसूचनार्थमेव तद्धर्मादिति अनुक्त्वा **तल्लिङ्गा**दिति सूत्रितम्। आकाशोऽन्यः **तस्य** अन्यस्य **लिङ्गात्** ज्ञापकादित्यर्थः। पूर्वज्ञातमेव हि लिङ्गं भवति। यथा धूमोऽग्नौ। 'यतो वा इमानि भूतानी'ति वाक्यं चेतनपर्यन्तसर्वकारणत्वानुवादेन ब्रह्मत्वविधायकम्। ततः प्रापकवाक्यजिज्ञासायाम्, प्रकृताकाशवाक्यं हवैशब्दघटिततया प्राप्तानुवादरूपत्वावगमादप्रापकत्वेन निश्चितम्। तथा अपेक्षितचेतनपर्यन्तसर्वकारणत्वरूपार्थस्याकाशेऽनन्वयात् अन्नप्राणमनोविज्ञानेष्विव बाधचिन्तयाऽपि वाक्यमिदं वस्तुसमर्पकं नासीत। अतः सदेवेत्यादिवाक्यान्येवोपजीव्यन्त इति भावः। एवञ्चाकाश-

संभवति च परस्य ब्रह्मणः प्रकाशकत्वादाकाशशब्दाभिधेयत्वम्—आकाशते, आकाशयति च—इति। किञ्च अनेनाकाशशब्देन विशेषसमर्पणक्षमेणापि चेतनांशं प्रति असंभावितकारणभावमचेतनविशेषमभिदधानेन, (छा. ६-२-३) 'तदैक्षत बहु स्यां प्रजायेय', (तै. आन. ६) 'सोऽकामयत। बहु स्यां प्रजायेय' इत्यादि वाक्य[वि]शेषावधारित सार्वज्ञ्यसत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थान्यथाकरणं न प्रमाणपदवीमधिरोहति। एवमपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यं चैकेनानुवादसरूपेणान्यथा कर्तुं न शक्यते।

यत्तु-आत्मशब्दश्चेतनैकान्तो न भवति, 'मृदात्मको घटः' इत्यादिदर्शनादित्युक्तम्—तत्रोच्यते—यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते, तथापि शरीरप्रतिसंबन्धिन्यात्मशब्दस्य प्रयोगप्राचुर्यात्, (ऐ. १-१.) 'आत्मा वा इदमेक एवाग्र आसीत्', (तै. आन.) 'आत्मन आकाशः संभूतः' इत्यादिषु शरीरप्रतिसंबन्धिचेतन एव प्रतीयते। यथा गोशब्दस्यानेकार्थवाचित्वेऽपि प्रयोगप्राचुर्यात् सास्नादिमानेव स्वतः प्रतीयते; अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा—तथा स्वतः प्राप्तं शरीरप्रतिसंबन्धिचेतनाभिधानमेव, (ऐ. १-१-१) 'स ईक्षत लोकान्नु सृजा इति', (तै. आन. १-२) 'सोऽकामयत। बहु स्यां प्रजायेय'

---

शब्दे रूढिभङ्ग एव। तत्र ऐन्द्रद्यधिकरणन्यायेन गौण्या निर्वाहोऽपि संमन्तव्य एव। अत एव खंब्रह्मेत्यत्र खशब्दस्यापरिच्छिन्नरूपार्थग्रहणम्। एवं गगनं विशोक इत्यत्र गगनशब्देऽपि। अपशूद्राधिकरणनयेनाकाशशब्दे योगेनैव निर्वाहात्तु न तावान् क्लेश उद्यत इत्याशयेनाह **संभवति चेति**। ब्रह्मण आकाशशब्दाभिधेयत्वं प्रकाशकत्वादित्यन्वयः। **प्रकाशकत्वं** नाम प्रकाशमानत्वं प्रकाशजनकत्वञ्च। **आ** इत्यस्य समन्तादित्यर्थः। आकाशशब्दः आकाशान्तर्यामिपर्यन्ते मुख्य एवेति तु चराचरसूत्रादावुपर्येव व्युत्पादयिष्यत इति योगादिरेवात्राभिमतः। सति संभवे सोऽर्थोऽपि पाञ्चरात्राधिकरणे आकाशादिशब्देष्वनुमंस्यते। यदि अवश्यमाकाशशब्दरूढिर्न त्याज्या, तर्हि, 'सर्वाणि भूतानि' इत्येतदेव वाय्वादिमात्रपरतया नेयम्; न तु ब्रह्मतद्गतधर्माणां प्रतिपन्नानामपलाप इत्याशयेनाह **किञ्चेति**। एवञ्च रुद्रहिरण्यगर्भादिकारणत्वशंकाऽप्येवं परिहार्येति भावः। तर्हि तथैवास्तु; एवञ्च पूर्वं सामगतित्वेन द्युलोकभूलोकयोः प्रस्तुतत्वादत्रापि तन्मध्यगतान्तरिक्षग्रहणादौचित्यमपीति चेन्न—सान्तस्य गतित्वं निरस्य अनन्तस्य गतित्वं वदन् हि प्रवाहणो न भूताकाशमभिधेष्यति।

न केवलम् ऐक्षतेत्याद्यनेकश्रुतिभङ्गः; आत्मावाइदमित्यादिधर्मिवाचिपदरूढिभङ्गोऽपि पूर्वपक्षे इत्याशयेनाह **यत्त्वित्यादि**। 'तस्माद्वा एतस्मादात्मन' इत्यत्रैव पूर्वम्, 'ज्ञानमनन्तम्,' 'ब्रह्मणा विपश्चिता' इति सर्वज्ञस्यैव प्रकृतत्वेन न स्वपर्यायत्वमात्मशब्दस्येत्यपि ध्येयम्।

कस्मादसद्भाष्येऽनन्तत्वं नोपन्यस्तमिति चेत्-ब्रह्मानंगीकारेण आकाशस्यैव सर्वकारणत्वं शङ्कमानः तमनन्तमेव मन्येत; न तु सिद्धान्त इव तस्य सान्तत्वमित्याशयेन।

इत्यादितत्तद्वाक्यविशेषा एव स्थिरीकुर्वन्ति । एवं वाक्य[वि]शेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं 'सदेव सोम्य' इत्यादिवाक्यसिद्धं ब्रह्मैवाकाशशब्देन प्रसिद्धवत् 'सर्वाणि ह वा इमानि भूतानि' इत्यादिवाक्येन निर्दिश्यत इति सिद्धम् ॥२३॥

इति आकाशाधिकरणम् ॥ ८ ॥

प्राणाधिकरणम् ॥ ९ ॥ (छा. १-१०; ११.)

**9. अत एव प्राणः १ । १ । २४ ॥**

**इदमाम्नायते छान्दोग्ये, (छा. १०-९.) 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता' इति प्रस्तुत्य, (छा. १-११-४, ५) 'कतमा सा देवतेति । प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति; प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता । तां चेदविद्वान् प्रास्तोष्यः, मूर्धा ते व्यपतिष्यत्' इति ॥ अत्र प्राणशब्दोऽप्याकाशशब्दवत् प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात् प्रसिद्धवन्निर्दिष्टात् ।**

**अधिकाशङ्का तु—कृत्स्नस्य भूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात् प्रसिद्ध एव प्राणो जगत्कारणतया निर्देशमर्हति—इति ॥ परिहारस्तु—शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात्, 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इति नोपपद्यत इति । अतः प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राणशब्देनाभिधीयते ।**

---

तथा च **हवै**इति पूर्वप्रसिद्धद्योतनात् वाक्यान्तरप्रसिद्धस्य चेतनपर्यन्तकारणत्वादेर्वाक्यस्वरसार्थस्य ग्रहणात् आकाशः प्रसिद्धाकाशादन्यः ईदृशधर्मवत्त्वेनानूद्यमानत्वादित्युक्तं भवति ॥ २३ ॥

ननु मा भूदाकाशस्य चेतनरूपसर्वभूतकारणत्वम्; प्राणस्य तु स्यात् । चेतनकारणत्वं हि नोत्पादकत्वम् । तस्य देहस्थिति प्रवृत्तिकारणत्वञ्च प्राण एव घटत इति किं ब्रह्मणेत्यधिकाशंकया प्राणाधिकरणोत्थितिः । **इदमाम्नायत** इति । उषस्तिश्चाक्रायणः कस्यचित् राज्ञो यज्ञभूमिं गत्वा प्रस्तावोद्गीथप्रतिहारकर्तॄन् ऋत्विजो भर्त्सयामास, तत्तद्देवतावेदनं विना गाने क्रियमाणे मूर्धा पतिष्यतीति । तेषु भीतेषु राज्ञा बुद्धवता पूजित उषस्तिः तान् अविस्रष्टव्यान् उक्त्वा, तेभ्यो देवतोपदेशं विधाय तत्तत्कर्मणि नियुयुजे । तत्र प्रस्तावदेवता प्रस्तोत्रा ध्येया प्राण इत्युक्ता । तमेवमवर्णयदिति । प्रस्तावो नाम साम्नः प्रथमो भागः । **अभिसंविशन्ति** लीयन्ते । **अभ्युज्जिहते** प्रादुर्भवन्ति । **प्रास्तोष्यः** प्रस्तावभक्तिं अकरिष्यः । **शिलाकाष्ठादिष्विति** । तेषामपि अचेतनविशिष्टचेतनरूपत्वम्, अनेन जीवेनात्मनाऽनुप्रविश्येति वचनसिद्धम् । व्यष्टौ चेतनरहितं किमपि न भवतीति । **चेतनस्वरूपे** इति । ननु भूतशब्दोऽचिद्विशिष्टपर एवेति स्वरूपमात्रे किमिति तदपेक्षेति चेत्-नैवम् । विशिष्टगतविशेषणांश इव विशेष्यांशे प्राणाधीनत्वं नास्तीत्येवात्रोक्तेः । उत्पत्त्यभावेऽपि तत्स्वरूपं तत्स्थितिश्च परमात्माधीनत्वेन पुरोवादिवाक्यावगतमिति स एव प्राण इति भावः । **प्राणयतीति** । 'को ह्येवान्यात् कः प्राण्यात्' इत्यादि

अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेककारणमपहतपाप्मत्वसार्वज्ञ्यसत्यसंकल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाशप्राणादिशब्दाभिधेयमिति सिद्धम् ॥ १४ ॥

इति प्राणाधिकरणम् ॥ ९ ॥ अथ ज्योतिरधिकरणम् ॥ १० ॥ (छा. ३-१३-७)

अतः परं जगत्कारणत्वव्याप्तेन येनकेनापि निरतिशयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तरप्रसिद्धैरप्यभिधीयमानं परं ब्रह्मैवेत्यभिधीयते ज्योतिश्चरणाभिधानात् इत्यादिना—

10. ज्योतिश्चरणाभिधानात् १ । १ । २५ ॥

इदमाम्नायते छान्दोग्ये, (छा. ३-१३-७) 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु, इदं वाव तत्, यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' इति । तत्र संशयः—किमयं ज्योतिःशब्देन निर्दिष्टो निरतिशयदीप्तियुक्तोऽर्थः

---

भाव्यम् । मुख्यप्राणद्वारा प्राणनमात्रमिह न विवक्षितम् : चेतनस्वरूपादौ तदभावात् । प्राणत्वं स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिकत्वमभिमतम् ॥ २४ ॥

साक्षात् कारणत्वाश्रवणेऽपि तद्व्याप्तधर्मबोधकं यद् वाक्यम्, तद्विचार उत्तराधिकरणद्वये । तत्र प्राणवत् अचेतनस्य प्राणसहभूतजाठरज्योतिरभिन्नस्य ज्योतिष इह प्रस्तावः । तत्र पेटिकासंगतिमाह **अतः परमिति इदमाम्नायत** इति । छान्दोग्ये तृतीयद्वादशे गायत्रीविद्या विहिता । सैवम्-भूतपृथिवीशरीरहृदयरूपपादचतुष्टयवद् ब्रह्म गायत्रीतुल्यम् । गायत्र्यामपि छन्दसि पादचतुष्टयस्य क्वचित् प्रसिद्धेः । (वक्ष्यते इदं भाष्य एव ।) एवं षड्विधत्वादपि गायत्रीसादृश्यम् । गायत्रीविशेषस्य प्रतिपादं षडक्षरत्वात् षड्विधत्वम्; ब्रह्मणस्तु भूतरूपपादे वाक्कर्तृकगानकर्मत्वं तत्कर्तृकत्राणकर्मत्वञ्चेति विधाद्वयम्, पृथिवीरूपपादे भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपविधाद्वयम्, शरीरहृदयरूपपादयोश्च प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपविधाद्वयञ्चेत्येवं षड्विधत्वम् । एवं गायत्रीसदृशस्य पुरुषसूक्तोदितमहिमा स्मारितः, "पादोऽस्य" इत्येवं तत्र । अथैवं परिच्छिन्नत्वरूपमिदं सर्वमपरिच्छिन्नस्यौपाधिकमाकाशस्येवेत्युपरि प्रदर्श्य एतद्विद्याफलमपि पूर्णाचलश्रीप्राप्तिभूतमोक्षः प्रत्यपादि । अथ त्रयोदशखण्डे हृदयस्य पञ्च सुषीन् तत्र चक्षुरादीन्द्रियाणि तद्देवताश्च बोधयित्वा स्वर्गलोकद्वारपत्रब्रह्मपुरुषरूपतदुपासनं विहितम् । ततः, "अथ यदतः पर" इति प्रकृतवाक्यम् । अत्र दिवःपरस्य ज्योतिषः कोष्ठेयज्योतिषश्चैक्यमुपदिश्यते । 'अन्तः पुरुषे ज्योति'रिति न केवलपरमात्मग्रहणम्, किंतु वैश्वानरस्य; उपरि, 'तस्यैषा दृष्टिः - तस्यैषा श्रुतिः' इति शरीरे तदुष्णस्पर्शानुभवस्य तद्दर्शनरूपतायाः, कर्णयोः पिधाने अन्तः श्रूयमाणस्य पचनशब्दस्य तदीयस्य श्रवणेन तच्छ्रुततायाश्चोपपादनात् । एवं जाठराग्न्यभिन्नं प्रतीतं दिवि स्थितं ज्योतिः किमिति विचार्यत इह । **दिवः पर** इति ज्योतिर्विशेषणम् । द्युलोकोपरिस्थितमित्यर्थः । पूर्वपक्षे आदित्यादिज्योतिष एव ज्योतिःपदार्थत्वात् विश्वसर्वपदाभ्यां भूम्यन्तरिक्षग्रहणम्; सिद्धान्ते व्यष्टिसमष्टिग्रहणमिति विशेषः । एवं दिव इति प्राकृतलोकः पूर्वपक्षे; सिद्धान्ते नित्यविभूतिरिति । **अनूत्तमेषु**-स्वापेक्षयोत्तमरहितेषु । अतएव सर्वथा**त्तमेषु । अन्तः पुरुषे** शरीरान्तः । **किमयमित्यादि** । अयं निरतिशयदीप्ति-

प्रसिद्धमादित्यादिज्योतिरेव कारणभूतं ब्रह्म, उत समस्तचिदचिद्वस्तुजातविसजातीयः परमकारणभूतोऽमितभाः सर्वज्ञः सत्यसङ्कल्पः पुरुषोत्तम इति । किं युक्तम्? प्रसिद्धमेव ज्योतिरिति ॥ कुतः? प्रसिद्धवन्निर्देशेऽप्याकाशप्राणादिवत् स्ववाक्योपात्त-परमात्मव्याप्तलिङ्गविशेषादर्शनात् परमपुरुषप्रत्यभिज्ञानासंभवात् । कौक्षेयज्योतिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिः कारणत्वव्याप्तनिरतिशयदीप्तियोगाज्जगत्कारणं ब्रह्मेति—

एवं प्राप्ते प्रचक्ष्महे—ज्योतिश्चरणाभिधानात् । द्युसंबन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव । कुतः? (छा. ३-१२-६) 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति अस्यैव द्युसंबन्धिनश्चरणत्वेन सर्वभूताभिधानात् ।

---

युक्तोऽर्थः प्रसिद्धादित्यादिज्योतिरेव भवन् कारणभूतं ब्रह्म भवति, उत पुरुषोत्तमो भवन् कारणभूतं ब्रह्म भवतीत्यर्थः । ज्योतिरिदं कारणब्रह्मैवेति हि सिद्धान्तीष्टमेव । एवमस्य दीप्तिविशेषस्य कारणत्वव्याप्ततायाः सिद्धान्तिसंमतत्वात्, प्रसिद्धज्योतिषि च दीप्तेः प्रत्यक्षत्वात्, अस्तु इदमेव कारणमित्याह पूर्वपक्षी । **परमात्मव्याप्तलिङ्गविशेषादर्शना**दिति । लिङ्गविशेषः **तल्लिङ्गा**दिति दर्शितः आकाशप्राणवाक्यगतः अचेतनविशिष्टसर्वचेतनोत्पत्तिलयहेतुभावः । न च—कारणत्वं परमात्मत्वव्याप्तम्; कारणत्वव्याप्तश्च दीप्तिविशेषः । व्याप्यव्याप्यस्य च सुतरां तद्व्याप्यत्वमिति परमात्मत्वव्याप्तत्वमस्त्येवेति कथं परमात्मत्यागः? **कारणत्वव्याप्ते**ति पूर्वापरभाष्यविरुद्धश्चेदं भाष्यमिति शङ्क्यम्—एवमर्थात् । दीप्तिमत्त्वप्रसिद्धेरेव वाक्यगम्यत्वात् चेतनकारणत्वप्रसिद्धेरबोधनात् दीप्तिबलेन कारणत्वमनुमेयमित्येव सिद्धान्तिना वक्तव्यम् । तदिष्यत एव । एवमनुमितकारणत्वाश्रयस्यास्य दीप्तिमतः सर्वज्ञत्वादिविशिष्टपरमात्मत्वं तु दुरनुमानम्, प्रत्यक्षसिद्धाचेतनत्वेन बाधात् । ज्योतिष्ट्वासंभवाच्च । तद्धि भास्वररूपवत्त्वम् । कथञ्च नीरूपे आत्मनि तत्? ज्योतिःशब्देन स्वयंप्रकाशत्वलक्षणायां परोदिवो दीप्यत इत्येतदनन्वयश्च । अतः कारणे सार्वज्ञ्यादिप्रतिपादकवाक्यान्येवान्यथानेयानीति । अत्र चेतनकारणत्वेत्यनुक्त्वा **लिङ्गविशेषे**ति वचनम् अन्तरादित्यविद्याश्रुतापहतपाप्मत्वसामानाधिकरण्यावसिताप्राकृतशरीरवत्त्वस्यापि संग्रहार्थम् । तच्छ्रवणेपि **प्रसिद्ध**ज्योतिर्न विवक्ष्येत । न चैवमिति भावः । ननु पूर्वसिद्धपरमात्मन्येवेयं (विग्रहे) निरतिशयदीप्तिर्भवतु; तत्राह **कौक्षेये**ति । एवं **यद्दीप्यत** इति प्रत्यक्षदीप्तियोगभङ्गोऽपि सिद्धान्ते भाव्यः । तर्हि दीप्तिरियं कारणत्वव्याप्या मा भूदित्यत्राह **कारणत्वे**ति । सिद्धान्तिनैव व्याप्तेरिष्टत्वेन तदसंमतिकथनायोगादिति भावः । एवञ्च यादृशं कारणत्वं प्रसिद्धज्योतिषः संभावितम्, तादृशमेव सर्वकारणवाक्यविवक्षितमिति किमतिरिक्तेन ब्रह्मणा? निरतिशयोत्कर्षरूपब्रह्मत्वज्ञप्तय एव च कारणत्वलक्षणवर्णनम् । निरतिशयदीप्तिमदेव निरतिशयोत्कृष्टमिति तस्मिन्नेव तत् कारणत्वं संगमनीयम् । 'यस्यादित्यो भामुपयुज्य भाति' इत्यादिभिः सूर्यादेर्जन्यत्वावगमेऽपि समष्टिभूतं त्रिवृत्कृतमत्रिवृत्कृतं वा ज्योतिरेव कारणमिति ।

**ज्योतिश्चरणाभिधानात्** । ज्योतिः प्रकृतं नादित्यादि, 'पादोऽस्य सर्वा भूतानी'ति मन्त्रे सर्वभूतादिरूपपादोक्तेरिति सूत्रार्थः । सर्वभूतादिपादवत्त्वादित्यत्र भूतमात्रस्यापि हेतुत्वं पर्याप्तमित्याशयेन

**एतदुक्तं भवति—यद्यपि, 'अथ यदतः परो दिवो ज्योतिः' इत्यस्मिन् वाक्ये परमपुरुषासाधारणलिङ्गं नोपलभ्यते, तथापि पूर्ववाक्ये द्युसंबन्धितया परमपुरुषस्य निर्देशादिदमपि द्युसंबन्धि ज्योतिः स एवेति प्रत्यभिज्ञायत इति। कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसंधानविधिरिति न कश्चित् दोषः। कौक्षेयज्योतिषश्च तदात्मकत्वं भगवता स्वयमेवोक्तम्, (गी.१५) 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति ॥२५॥**

छन्दोभिधानान्नेतिचेन्न; तथाचेतोर्पणनिगमात्तथा हि दर्शनम् १। १। २६॥

---

पादत्रयं पृथग्भाष्ये नोक्तम्। अथापि विवक्षितमेव। ननु, 'अतो ज्यायांश्च पुरुषः' इति कस्मिंश्चित् पुरुषे भूतादिपादवत्त्वमुक्तञ्चेत्, प्रकृतज्योतिषः किमायातमित्यत्रोपपादयति **एत**दिति। अयमर्थः—ब्रह्मणः चतुष्पात्त्वं षड्विधत्वञ्च प्रागुक्त्वा, 'तावता परिच्छिन्नत्वं न मन्तव्यम्, अपरिच्छिन्ने उपाधिप्रयुक्तत्वात् परिच्छिन्नत्वस्य। अत एव पुरुषसूक्तेऽन्यादृशमस्य चतुष्पात्त्वमतिशयितं श्रूयते, 'पादोऽस्य' इति। क्षरास्त्यानि सर्वाणि भूतान्येकः पादः, दिवि अस्यामृतं त्रिपात्। नन्वक्षरा आत्मानः यदि नित्याः मुक्ताश्च, तर्हि तत्र पादद्वयमेवेति चेन्न—तद्भोग्याप्राकृताचेतनजातस्यैकपादत्वसंभवात्। वस्तुतो नित्याः द्विविधाः 'भूषणास्त्रस्वरूपस्थ'मिति विष्णुपुराणोक्तरीत्या प्राकृतपदार्थाभिमानिनः अनभिमानिनश्च। अतस्तैरुभयैः मुक्तैश्चामृतैः पादत्रयवत्त्वं दिवि परमपदे तस्येति। इदं ज्योतिष आदित्यादेरसंभावितम्। य एवं चतुष्पात्त्वेन श्रुतः पुरुषः स एव, 'यदतःपरोदिव' इत्युच्यते; तस्य चास्य च द्युसंबन्धित्वेनैक्यप्रतीतेः। अत एव ज्योतिःपदे सत्यपि **पर** इति पुल्लिङ्गनिर्देशः तं पुरुषं मनसिकृत्य। यत् ज्योतिरिति प्रसिद्धवन्निर्देशश्च न लोकप्रसिद्धिमनुसृत्य; किंतु तद्वाक्ये पूर्वं प्रसिद्धतया। **अत** इत्यपि अत एव पूर्वोक्तद्युपरामर्शि। एवञ्च विश्वसर्वपदाभ्यामपि प्राकृतसर्वग्रहणाञ्जस्यम्। कथं परमात्मनो ज्योतिष्ट्वं नीरूपस्येति चेत्—पुरुष इति हि प्रागुक्तम्। 'वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसस्तु पारे' इति च तस्यादित्यवर्णत्वश्रवणान्न दोषः; आत्मनो दीप्ति-रूपाद्यभावेपि तद्दिव्यमङ्गलविग्रहे तत्स्थितेः। एवञ्च ज्योतिःपदमिह शक्त्यैव रूढ्यर्थतेजोपरित्यागेन तेजोविशेषरूपदिव्यविग्रहविशिष्टपरमात्मपरम्, सर्वभूतादिचरणवत्त्वेनाभिहितपुरुषरूपार्थबोधकत्वादिति। भाषिष्यते चेदं सर्वमधिकरणान्ते। तथाचेदृशदीप्तिमत्त्वस्यैव कारणत्वव्याप्यतायाः, 'तस्य भासा सर्वमिदं विभाति' इत्याद्यनुसारेण सिद्धान्ते कथनात् सूर्यादिज्योतिष्ट्वस्य कारणत्वव्याप्यत्वानङ्गीकारात् नान्यत्र कारणत्वप्रसक्तिः। अनुमीयमानञ्च कारणत्वमभिन्ननिमित्तोपादानत्वरूपम्। तदविनाभूतसार्वज्ञ्य - सर्वात्मत्वादिकमप्यबाधितं सहानुमितं प्रमाणान्तरप्रतिपन्नञ्चेति सर्वैकरस्यमिति ॥'

एवंतर्हि कौक्षेयज्योतिरैक्यश्रवणं कथमित्यत्र तदपि गीतानुसारेण संगच्छत एवेत्याह **कौक्षेये**ति। सर्वात्मभूतस्येह तन्मात्रात्मत्वकथनं फलार्थं तदनुसंधानविधानार्थमिति भावः। **तदात्मकत्वे**ति; जाठराग्नेः परमात्मान्तर्यामिकत्वेत्यर्थः। फलञ्च श्रुतत्वदृष्टत्वरूपधर्मद्वयविशिष्टप्रकृतकौक्षेयैक्यानुसंधानस्य, 'चक्षुष्यः श्रुतो भवती'ति श्रुतं दर्शनीयरूपवत्त्वं कीर्तिमत्त्वञ्च ॥ २५ ॥

**पूर्वस्मिन् वाक्ये, (छा.३-१२-१) 'गायत्री वा इदं सर्वम्' इति गायत्र्याख्यं छन्दोऽभिधाय, 'तदेतदृचाऽभ्यनूक्तम्' इत्युदाहृतायाः, 'तावानस्य महिमा' इत्यस्या ऋचोऽपि छन्दोविषयत्वात् नात्र परमपुरुषाभिधानमिति चेत् — तन्न;** तथा चेतोर्पणनिगमात्। **न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते; छन्दोमात्रस्य सर्वात्मकत्वानुपपत्तेः; अपि तु ब्रह्मण्ये(ण ए)व गायत्रीचेतोर्पणमिह** निगम्यते—**ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः। संभवति च, 'पादोऽस्य सर्वा भूतानि। त्रिपादस्यामृतं दिवि' इति चतुष्पदो ब्रह्मणश्चतुष्पदया (पदा) गायत्र्या च सादृश्यम्। चतुष्पदा च गायत्री क्वचित् दृश्यते। तत् यथा, "इन्द्रः शचीपतिः। वलेन पीडितः। दुश्च्यवनो वृषा। समित्सु सासहिः" इति।**

---

ननु पूर्वं गायत्र्युपासनं पृथक्फलार्थं विहितम्। अथ द्वारपोपासनम्। अथ चेदं ज्योतिरैक्योपासनं फलान्तरार्थम्। एवं पार्थक्येऽपि द्युसंबन्धित्वबलात् प्रत्यभिज्ञायत इति द्युसंबन्ध्यादित्यवर्णपुरुष एवेह ज्योतिःपदार्थ इति तदा स्यात्, यदि पूर्वं स प्रस्तुतः स्यात्। तदेव न; पूर्वं गायत्र्या एव निरूपणात् तदर्थसाक्षितया गृहीतस्य मन्त्रस्यापि गायत्रीपरत्वस्यावश्यकत्वादित्याशंक्य परिहरति **छन्द** इति सूत्रेण। तावानस्येति मन्त्रात् पूर्वं गायत्रीछन्दस एव प्रस्तुतत्वात् तावानितिमन्त्रोऽपि तद्विषयक एव; न परमात्मपर इति चेत्-न-पूर्वमेव, 'सैषा चतुष्पदा षड्विधा गायत्री' इति वाक्येन **तथा** तत्प्रकारेण=गायत्रीसदृशतया परमात्मनि **चेतोर्पणस्य** ध्यानस्य **निगमात्** प्रक्रान्तपूर्वस्य निगमनात्। **तथा हि दर्शनम्**-छन्दोवाचिशब्दस्य सदृशार्थपरतया प्रयुज्यमानत्वेन दर्शनमन्यत्रापि ह्यस्तीति सूत्रार्थः। गायत्रीपदस्य छन्दोमात्रपरत्वे, तावानस्येत्यत्र इदंशब्दोपि तन्मात्रपर इति वक्तव्यम्; एवञ्च 'पादोस्य' इत्यादि अनन्वितं स्यादिति सूत्राशयः। ननूक्तरीत्या ब्रह्मणश्चतुष्पात्त्वात् गायत्र्याश्च त्रिपात्त्वात् कथं सादृश्यमित्यत्राह **संभवति चेति**। गायत्रीविशेषे चतुष्पात्त्वसत्त्वात् तदभिप्रायकमिदमिति भावः। ननु श्रुतौ भूतपृथिवीशरीरहृदयैः चतुष्पात्त्वं ब्रह्मण्युपवर्ण्य गायत्रीसादृश्ये निगम्यमाने कथमत्र भाष्ये मन्त्रोक्तान्यादृशपादचतुष्केण सादृश्यवर्णनमिति चेत्-अत्र केचित्-'संभवति च चतुष्पदो ब्रह्मण' इत्येतावानेवात्र पाठः। "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति" इत्ययमंशस्तु, पूर्वं **छन्दोमात्रस्ये**ति पदस्य **सर्वात्मकत्वानुपपत्ते**रिति पदस्य च मध्ये स्थितः लेखनमुद्रणप्रमादादत्र पतित इत्याहुः। अन्ये-नेदं सादृश्योपयोगिचतुष्पात्त्वकथनाभिप्रायेण; किंतु यथेदं पुरुषसूक्तोक्तं चतुष्पात्त्वमपरिच्छिन्नत्वज्ञप्तये श्रुताविह स्मारितम्, तद्वद् भाष्येऽप्यपरिच्छिन्नत्वज्ञापनार्थैवेति वदन्ति। अस्तु वा द्विविधचतुष्पात्त्वमपि गायत्रीसादृश्यनियामकतया श्रुत्यभिमतम्। भाष्यकृतो भूतपृथिव्यादिप्रयुक्तचतुष्पात्त्वमेव सादृश्यनियामकमभिमतम्। परंतु तस्य पश्चादेव सूत्रे वक्ष्यमाणत्वात् तावत् मन्त्रोक्तचतुष्पात्त्वमेव नियामकतया बुद्धिमारोहतीति तत् मनसिकृत्य, अस्ति ब्रह्मणश्चतुष्पात्त्वम्, गायत्र्यास्तु कथमिति केनचित् प्रश्ने कृते, तद्बुद्ध्यारूढचतुष्पात्त्वानुवादेन गायत्रीचतुष्पात्त्वमात्रप्रतिबोधनमत्र। अत एव षड्विधत्वं प्रति किमपि नोक्तम्। पूर्वोपनिषद्भागापरिशीलनात् तस्य वक्तव्यत्वानभिमतेः। भूतादिसूत्रानन्तरं तु सर्वं यथावद् ज्ञास्यते।

तथा ह्यन्यत्रापि सादृश्यात् छन्दोभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते, यथा संवर्गविद्यायाम्, (छा. ४-३-८) "ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तः" इत्यारभ्य, "सैषा विराडन्नादी(त्)" इत्युच्यते ॥ २६ ॥ इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते—

भूतादिपादव्यपदेशोपपत्तेश्चैवम् १ । १ । २७ ॥

भूतपृथिवीशरीरहृदयानि निर्दिश्य, (छा. ३-१२-५) 'सैषा चतुष्पदा' इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेये उपपद्यते ॥ २७ ॥

उपदेशभेदान्नेति चेन्न—उभयस्मिन्नप्यविरोधात् १ । १ । २८ ॥

पूर्ववाक्ये, 'त्रिपादस्यामृतं दिवि' इति दिवोऽधिकरणत्वेन निर्देशात्, इह च, 'दिवः पर' इत्यवधित्वेन निर्देशादुपदेशस्य भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन् न प्रत्यभिज्ञायत इति चेत्—तन्न, उभयस्मिन्नपि उपदेशे अर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात्; यथा 'वृक्षाग्रे श्येनः', 'वृक्षाग्रात् परतः श्येनः' इति। तस्मात् परमपुरुष एव निरतिशयतेजस्कः, 'दिवः परो ज्योतिर्दीप्यत' इति प्रतिपाद्यते। (२. यजु. आ. ३, १२. पुरु.) 'एतावानस्य महिमा अतो ज्यायांश्च पुरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य, 'वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसस्तु पारे' इत्यभिहिताप्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्वत्तया स एव ज्योतिश्शब्दाभिधेय इति निरवद्यम् ॥ २८ ॥ इति ज्योतिरधिकरणम् ॥ १० ॥

इन्द्रप्राणाधिकरणम् ॥ ११ ॥ (कौषी. ३)

निरतिशयदीप्तियुक्तं ज्योतिश्शब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं परमपुरुष एवेत्युक्तम्।

---

**भामत्यामप्यत्र** सूत्रे मन्त्रोक्तचतुष्पात्त्वमादायैव गायत्रीसादृश्यं वर्णितम्। त्रिपाच्छब्दार्थस्तत्रोक्तोऽन्यादृश इत्यन्यदेतत्। **गायत्र्या** चेति चकारः, मनोब्रह्म, आकाशोब्रह्म (छा. ३-१८) इत्यादौ चतुष्पात्त्वेन ब्रह्मसादृश्यसारणेन तत्रेवात्रापि पुरुषसूक्तोदितचतुष्पात्त्वं शीघ्रं बुद्ध्यारूढमिति ज्ञापनाय। ब्रह्मणः षाड्विध्यं प्रागेवादर्शि। गायत्र्याः षड्विधत्वञ्च प्रतिपादमक्षरषट्कवत्त्वमिति च।

**पञ्चान्ये** इति। पञ्च प्रथमे अग्न्यादित्यचन्द्रजलरूपाश्चत्वारः तदप्ययस्थानं वायुश्च; अन्ये पञ्च वाक्चक्षुःश्रोत्रमनांसि प्राणश्च। इमे दश। एवं दशसत्त्वात् **कृतं** कृतानामकेन अयेन समाः भवन्ति। **सैषा विराट्**—इमे दश विराड् भवन्ति; विराडाख्ये छन्दसि प्रतिपादमक्षराणां दशत्वात् तत्साम्यात् एषां विराट्त्वम्। पूर्वं कृतनाम्नोऽयस्यान्नस्य च प्रस्तुतत्वात् **सा** कृतरूपा, **एषा** अन्नरूपा च विराट् अग्न्यादिदशकमित्यर्थः। तद्रूपः **अन्नादी** पूर्वं मन्त्रे अन्नादत्वेनोक्तः परमात्मेत्यर्थः ॥ २६ ॥

गायत्रीशब्दस्य ब्रह्मपरत्वमेवेत्यत्र पूर्वं मन्त्रोक्तसर्वात्मकत्वानुपपत्तिरूपयुक्तिरुक्ता। तत्प्रावछुत-भूतादिपादान्वयानुपपत्तिरूपयुक्त्यन्तरमप्युच्यते **भूते**ति सूत्रेण ॥ २७ ॥

**प्राणः**—ज्योतिश्शब्दस्य रूढ्यर्थात्यागेन परमात्मपरत्वमुक्तम्; प्राणादिशब्दानामपि तथात्वमत्रेन्द्र-

इदानीं कारणत्वव्याप्त—अमृतत्वप्राप्त्युपायतयोपास्यत्वेन श्रुतः इन्द्रप्राणादिशब्दाभिधेयोऽपि परमपुरुष एवेत्याह—

## 11. प्राणस्तथाऽनुगमात् १।१।२९॥

कौषीतकिब्राह्मणे प्रतर्दनविद्यायाम्, (३-१) "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन [च] पौरुषेण च" इत्यारभ्य, वरं वृणीष्वेति वक्तारमिन्द्रं प्रति, "त्वमेव मे वरं वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यसे" इति प्रतर्दनेनोक्ते,

---

प्राणाधिकरणे उच्यते। पूर्वं कारणत्वव्याप्तनिरतिशयदीप्तिश्रुतेः परमात्मपरत्वम्; इह मुमुक्षूपास्यत्वरूपताद्दशधर्मश्रुतेः। पूर्वं श्रुतस्य ज्योतिष्ट्वादिधर्मस्यापरमात्मन्यन्वयात् तत्परत्वम्, इहापि त्वाष्ट्रवधादेः तथा। नन्वेवं तत एव गतार्थता स्यात्—नैवम्; आकाशाद्यधिकरणेषु त्रिष्वपि प्रसिद्धवन्निर्देशसत्त्वात् पुरोवादानुसरणं कृतम्; न त्वत्रैवमित्याक्षेपात्। एवं पूर्वं परमात्मधर्माणामुपक्रमश्रुतत्वात् तत्स्वीकारेण चरमश्रुतं कौक्षेयज्योतिरैक्यमन्यथा नीतम्; इहाप्युपक्रमे जीवधर्मश्रवणात् चरमश्रुतानन्दत्वादेरन्यथानयनं स्यादिति तद्दृष्टान्तेन प्रत्यवस्थानात्। अथवा पूर्वमाकाशप्राणवाक्ययोरपरमात्मधर्मो न श्रुतः; ज्योतिर्वाक्ये तु स श्रूयत इत्याशंकायां चरमश्रुत इति सोऽन्यथा नीतः; इहोपक्रम एवापरमात्मधर्मश्रवणमिति वैषम्यमित्याक्षेपः।

**इन्द्रप्राणादिशब्दे**ति। नात्रेन्द्रशब्दस्य परमात्मपरत्वमुच्यते। उपाख्यान एवेन्द्रपदश्रवणात् विद्यामध्ये तदभावात्, यथा-'इन्द्रस्य प्रियं धामोपजगामे'ति। तत्रेन्द्रमात्रमेव तदर्थः। अत **इन्द्रशब्दे**त्यस्येन्द्रवाचकास्मच्छब्देत्यर्थः। इन्द्रप्राणादीनां शब्दा इति विग्रहः। **आदिशब्देन** प्रज्ञात्मग्रहणम्। यद्वा इन्द्रस्य प्राणादि**रिन्द्रप्राणादिः**। आदिपदेनास्मदर्थतत्स्वरूपग्रहणम्। इन्द्रसंबन्धिप्राणस्य इन्द्रस्वात्मनश्च वाचकशब्दाभिधेयोऽपीत्यर्थः। तेन **प्राण**शब्दो **मा**मितिशब्दश्च गृहीतौ भवतः।

**प्रतर्दनविद्याया**मिति। दिवोदासपुत्रः प्रतर्दनः क्षत्रियः स्वयंप्रतापशालित्वात् देवासुरयुद्धरूपाद्धेतोरिन्द्रेणाऽऽहूतः तद्धाम जगाम; तत्र तुष्टेनेन्द्रेण वरदाने प्रार्थितः। अयञ्च स्वहितमिदमिति स्वयमजानन्, मनुष्याय यत् स्यात् हिततमम्, तत् स्वयमेव निर्धार्य देयमिति न्यवेदयत्। मोक्षोपायस्यैव हिततमत्वात्, तस्य सहसाऽनुपदेश्यत्वादिन्द्रः प्रतर्दनमेवापेक्षितं विशिष्य प्रष्टुमादिशत्। तर्हि वरप्रदानप्रतिज्ञा हीयेतेति निरदिशत् प्रतर्दनः। अतः सत्यादचलन् इन्द्रो हिततममुपादिशत्—त्रिशीर्षत्वाष्ट्रादिघातिनमप्यनघं मामुपास्स्व; प्राणोऽस्मि प्रज्ञात्मा; तं मामायुरमृतमित्युपास्स्व; मुख्यप्राणस्तावत् प्राणशब्दवाच्यचक्षुरादीन्द्रियातिशायी। तेन सह शरीरे वसति प्रज्ञारूप आत्मा। प्राणस्य प्रज्ञारूपात्मनश्चेन्द्रियादिकं सर्वं वशेऽस्ति। एवम्भूताचिदधिष्ठानचिदधिष्ठानत्व-प्राणत्व-प्रज्ञात्मत्व-आनन्दत्वाजरत्वामृतत्व-साध्वसाधुकर्मलेपानर्हत्व-साध्वसाधुप्रवर्तकत्व-लोकपालत्व-लोकस्वामित्वेशत्व-स्वात्मत्वशाली स इति। अत्र त्वाष्ट्रहननादिजीवलिङ्गानि अनेकानि उपक्रमे; परमात्मलिङ्गानि अन्ते इति ध्येयम्।

'त्वमेव मे वरं वृणीष्व' इत्यस्य, अहमेव तुभ्यं वरं ददामीति नार्थः। मनुष्याय हिततमं मन्यसे इत्याद्यनन्वयात्; मम हितं त्वमेव कांक्षेः, अर्पयेश्चेत्यर्थः। 'प्राणोऽस्मी'त्यत्र **प्राणशब्दः** प्रबलपरवधौ-

(३-१४) "स होवाच, प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति श्रूयते। तत्र संशयः—किमयं हिततमोपासनकर्मतयेन्द्रप्राणशब्दनिर्दिष्टो जीव एव, उत तदतिरिक्तः परमात्मा—इति। किं युक्तम्? जीव एवेति। कुतः? इन्द्रशब्दस्य जीवविशेष एव प्रसिद्धेः तत्समानाधिकरणस्य प्राणशब्दस्यापि तत्रैव वृत्तेः। अयमिन्द्राभिधानो जीवः प्रतर्दनेन, 'त्वमेव मे वरं वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यसे' इत्युक्तः, "मामुपास्स्व" इति स्वात्मोपासनं हिततममुपदिदेश। हिततमश्चामृतत्वप्राप्त्युपाय एव। जगत्कारणोपासनस्यै-वामृतत्वप्राप्तिहेतुता,(छा.६-१४-२) "तस्य तावदेव चिरम्, यावन्न विमोक्ष्ये, अथ सम्पत्स्ये" इत्यवगता। अतः प्रसिद्धजीवभाव इन्द्र एव कारणं ब्रह्म—

इत्याशङ्कायामभिधीयते—प्राणस्तथानुगमादिति। अयमिन्द्रप्राणशब्दनिर्दिष्टो न जीव-मात्रम्; अपि तु जीवादर्थान्तरभूतं परं ब्रह्म; (३-६२) 'स एष प्राण एव प्रज्ञात्मा आनन्दो-

---

पत्तिकबलायुःसंपत्तिहेतुप्राणविशिष्टत्वमिन्द्रे ख्यापयति। तेन युद्धार्थमाहूतात् स्वस्यान्यूनत्वं ध्वन्यते। प्रज्ञात्मशब्दः तादृशवधाधीनपापलेपप्रतिभटप्रज्ञात्मभावख्यापकः। इन्द्रप्राणशब्दनिर्दिष्ट इति। इन्द्र-वाचकास्मच्छब्द-प्राणवाचि-आयुश्शब्दनिर्दिष्ट इत्यर्थः। इन्द्रशब्दस्येति। उपाख्याने बहुकृत्वः प्रयुक्त-स्येन्द्रशब्दस्य शचीपतिपरत्वात् तत्प्रयुक्तास्मच्छब्दतत्समानाधिकरणशब्दानां तत्परत्वमेव हीति भावः। अस्तु सर्वमिन्द्रविषयम्; किं नश्छिन्नमित्यत्राह हिततमश्चेति। मोक्षहेतूपासनस्यैव हिततमत्वात् कारणस्यैव ध्येयत्वात् प्रकृतोपासनकर्मत्वं कारणत्वसाधकमिति सिद्धान्तिसंप्रतिपन्नम्। इदञ्च प्रसिद्धेन्द्र एव भवितुमर्हति। न च ज्योतिरधिकरणन्यायः; प्राणादिशब्दस्य परमात्मत्वसाधकहेतोस्तत्रेवेह पूर्वं निर्देशाभावात्। न चाकाशाद्यधिकरणनयः; इन्द्रविषयकोपाख्यानरूपोपक्रमविरोधात्। न च "देवता क्षत्रनिन्द्रो यमः पर्जन्यः" इतीन्द्रोत्पत्तिश्रुतिविरोधः; विष्णुरामकृष्णादिप्रादुर्भाववदुपपत्तेरिति भावः। शब्दशक्तिः उपक्रमश्चेत्युभयं परमिह भाष्ये दर्शितम्। त्वाष्ट्रवधादिलिङ्गं पश्चादेव प्रस्तोष्यति।

प्राणस्तथानुगमात्। प्राणोऽस्मीति वाक्ये प्राणशब्दनिर्दिष्ट इन्द्रादन्य एव; तथा—आनन्दत्वादिपरमात्मधर्मान्वयितया प्राणशब्देनैव अनुगमात् उत्तरवाक्ये संबन्धादिति सूत्रार्थः। विद्यामध्ये इन्द्रशब्दाभावात् इन्द्रपदं सूत्रे न प्रयुक्तम्। मदर्थक इत्यनुक्तिस्तु, 'स एष प्राण एव प्रज्ञात्मे'ति वाक्ये ऽस्मच्छब्दाभावात् हेत्वनन्वयात्। एतत्सूत्रानन्तरमिह शङ्कोत्थाने मदर्थविषये सूत्रयिष्यतीति अत्रैवमेव निर्दिष्टव्यम्। अनेन शङ्कान्तरमपि परिहृतम्—प्राणशब्दः प्राणविशिष्टेन्द्रमात्रपरोऽस्तु, यथा त्वाष्ट्रमहनम् इत्यादि विकाख्यातम्। तं मामित्यत्र तु अस्मच्छब्दः तादृशमदन्तर्यामिणमित्यर्थक इति। परिहारप्रकारश्च—आनन्दादिपदघटितवाक्येऽस्मच्छब्दाभावात् प्राणशब्दस्तत्समानाधिकरणोऽन्तर्यामिपर्यन्त इति उपक्रमेऽपि उपासनोपयोग्यर्थदर्शिनि वाक्ये प्राणपदं विशिष्टपरं युक्तमिति। न जीवमात्रमित्यनेन प्राणशब्दस्य प्राणविशिष्टेन्द्रविशिष्टपरमात्मपरत्वं दर्शितम्। अतएवास्य प्राणस्येन्द्रप्राणेति प्रायो व्यवहारः। तथासतीति। पूर्वसूत्रेषु एवं पदाध्याहारापेक्षा नास्ति। कचिदेवं भवति। अत एव वाक्यान्वयादित्यत्र एवमेवेति

ऽजरोऽमृतः' इतीन्द्रप्राणशब्दाभ्यां प्रस्तुतस्यानन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथासत्येवोपपद्यते ॥ २९ ॥

न वक्तुरात्मोपदेशादिति चेत्-अध्यात्मसंबन्ध-
भूमा ह्यस्मिन् १।१।३०॥

यदुक्तम्—इन्द्रप्राणशब्दनिर्दिष्टस्य, 'आनन्दोऽजरोऽमृतः' इत्यनेनैकार्थ्यादिदं परं ब्रह्मेति—तन्नोपपद्यते, 'मामेव विजानीहि', 'प्राणोऽस्मि प्रज्ञात्मा। तं मामायुरमृतमित्युपास्स्व' इति वक्ता हीन्द्रः, 'त्रिशीर्षाणं त्वाष्ट्रमहनम्' इत्येवमादिना त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति। अत उपक्रमे जीवविशेष इत्यवगते सति 'आनन्दोऽजरोऽमृतः' इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इति चेत्—

परिहरति—अध्यात्मसम्बन्धभूमा ह्यस्मिन्—आत्मनि यः संबन्धः सोऽध्यात्मसम्बन्धः। तस्य भूमा-भूयस्त्वम्, बहुत्वमित्यर्थः। आत्मन्याधेयतया संबध्यमानानां बहुत्वेन संबन्धबहुत्वम्। तच्चास्मिन् वक्तरि परमात्मन्येव हि संभवति। 'तत् यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः, एवमेवैताः भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः।

---

अध्याहृतम्। क्वचित् अन्यथेत्यध्याहारोऽपेक्ष्यते यथा, 'अनुपपत्तेः' इत्यादौ। उपपद्यते इति। आनन्दपदस्यानन्दमयार्थकत्वात् आनन्दमीमांसायामतिनिकृष्टानन्दतयोक्ते 'तदनन्वयः; एवमजरामृतशब्दौ स्वरसतो जरामरणात्यन्ताभावविशिष्टव्यक्तिपरौ इति भावः ॥ २९ ॥

प्राणपदस्य परमात्मपरत्वे प्राणोऽस्मीति उत्तमपुरुषः, मामुपास्स्वेति अस्मच्छब्दश्च नान्वेतीति शंकते उत्तरसूत्रेण। वक्तुरात्मोपदेशादित्यस्य स्वापदेशादित्यर्थः। स्वपदमपि प्रयुक्तं वक्तारमेव समर्पयेत्। चेन्नेति सूत्रे नञोऽप्रयोगः स्वात्मोपदेशस्य सिद्धान्तेपीष्टत्वात्। अध्यात्मसंबन्धभूमा अध्यात्मं संबन्धः अध्यात्मसंबन्धः तस्य भूमा बहुत्वम्। वक्तुरात्मोपदेश इति त्वयोच्यते, तस्यात्मनोऽप्यात्मा यः तत्सबंन्धभूमेह श्रूयत इति सूत्रार्थः। एवं ब्रह्मण आत्मशब्देन कथनं वक्ष्यमाणशास्त्रदृष्टेरात्मत्वप्रयुक्तत्वसूचनाय च। इन्द्रसंबन्धबहुत्वमप्यस्ति; त्वाष्ट्रहनन-सालावृकयतिप्रदान-पौलोमहनन-प्रतर्दनसंलापित्वाद्यवगमादित्यत्र विशेषं दर्शयितुं भूयस्त्वमिति भाषितम्। इन्द्रसंबन्धापेक्षया बहुत्वं शब्दार्थः; भूयस्त्वे पर्यवसानमिति ज्ञापनाय पुनरपि बहुत्वमित्यर्थ इति वाच्यार्थ उक्तः। अर्पिता इति अर्पणस्यैकस्यैवोक्ततया बहुत्वं कथमित्यत्राह आत्मनीत्यादि। अस्मिन् इति सौत्रं पदं पूर्वसूत्रप्रस्तुतप्राणवाचि। अत एव भाष्ये, प्रज्ञामात्राः प्राणेऽर्पिता इति वाक्यमात्रोदाहरणम्। चेतनाधारताः किल परमात्मन्येव संभवन्त्यः प्राणे श्रूयन्ते इत्यर्थः। भाष्ये वक्तरि परमात्मनीत्यस्य वक्तृसमानाधिकरणतया प्रतीयमाने परमात्मनि प्राणे इत्यर्थः; त्वदभिमतमिन्द्रसंबन्धबहुत्वमेतदपेक्षयाऽतीव न्यूनम्। अत इदमेकं पर्याप्तमिति भावः। प्राणशब्दद्वयस्यैक्यप्रदर्शनार्थं पूर्वसूत्रोदाहृतस्याप्युदाहरणेन विवरणम्। एतावता मिथोविरोधे भूयसांन्यायेन परमात्मपरतया निर्वाह इत्युक्तं भवति। इदं तु मीमांसापूर्वकाण्ड एव सिद्धम्। अतः,

स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इति भूतमात्राशब्देनाचेतनवस्तुजातमभिधाय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य तमेव, 'आनन्दोऽजरोऽमृतः' इत्युपदिशति । तदेतत् चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूतेऽस्मिन् परमात्मन्येवोपपद्यत इत्यर्थः ॥

अथवा—अध्यात्मसंबन्धभूमा ह्यस्मिन्—परमात्मासाधारणधर्मसंबन्धोऽध्यात्मसंबन्धः । तस्य भूमा बहुत्वं हि अस्मिन् प्रकरणे विद्यते । तथा हि—प्रथमम्, 'त्वमेव मे वरं वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यसे' इति, 'मामुपास्स्व इति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते । तथा, 'एष एव साधु कर्म कारयति तम्, यमेभ्यो लोकेभ्य उन्निनीषति । एष एवासाधु कर्म कारयति तम्, यमधो निनीषति' इति सर्वस्य कर्मणः कारयितृत्वं च परमात्मधर्मः । तथा, 'तत् यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः' इति सर्वाधारत्वं च तस्यैव धर्मः । तथा, 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इत्येतेऽपि परमात्मन एव धर्माः । 'एष लोकाधिपतिरेष सर्वेशः' इति च परमात्मन्येव संभवति । तदेवमध्यात्मसंबन्धभूम्नोऽत्र विद्यमानत्वात् परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः ॥ ३० ॥

कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशः सङ्गच्छते ; तत्राह—

शास्त्रदृष्ट्या तूपदेशो वामदेववत् १ । १ । ३१॥

---

उपक्रमन्यायस्यात्राप्रवृत्तेः सम्यङ्निरूपणाय अवान्तरवाक्यार्थेन महावाक्यार्थनिरोधो न कार्य इति न्यायान्तरमेतदधिकरणशिक्षितमिति दर्शयितुं सूत्रखण्डमन्यथा व्याख्याति अथवेति । पूर्वम् अस्मिन्नित्यस्य परमात्मनीत्यर्थः ; अत्र, प्रकरणे इत्यर्थः । एवञ्च प्रकरणोक्तपरमात्मान्वयिसर्वधर्मकथनमिह; पूर्वं वस्तुसंबन्धः इति विवेकः । अनेकवाक्योपात्तानेकसंबन्धप्रतीत्या संबन्धबहुत्वमप्यस्ति । अधिगत आत्मा यैस्ते अध्यात्मानः; तेषां संबन्धः इति विग्रहस्तु पूर्वयोजनायामपि कर्तुं शक्यः । एवमधिगत आत्मसंबन्धो यैस्ते अध्यात्मसंबन्धाः ; तेषामित्यपि ॥ ३० ॥

एवं प्राणशब्दासच्छब्दयोरपि परमात्मार्थकत्वं साधितम् । आकाशादिशब्दविचारावसरे अन्यार्थरूढस्य कथं परमात्मार्थकतेति प्रकारजिज्ञासा नासीत्, रूढ्यभावे योगः, रूढ्यर्थसंबन्धरूपलक्षणा वा, तत्राजहल्लक्षणा वाऽन्या वेति स्वयं चिन्तनीयमासीत् । तत्र ज्योतिश्शब्दे स्वार्थात्यागेन परमात्मपरतोक्ता, दीप्यत इत्याद्यर्थान्वयाय । तद्वदिहापि त्वाष्ट्रवधकर्तृत्वाद्यन्वयायेन्द्ररूपार्थः स्वीकर्तव्योऽस्ति । परं ज्योतिःपदस्य देहपरत्वात् देहवाचिना देहिग्रहणं लोकानुभवसिद्धम् । इह त्वदेहभूते प्राणेन्द्रादौ कथमुपपत्तिः । विशिष्य चासच्छब्दो वक्तृव्यक्तिमात्रवचनो न परमात्मरूपार्थपरः स्यात् । न च मामित्यत्र योगव्युत्पत्तिः, सर्वनामित्वादित्यत्रोपरितनसूत्रम् । ज्योतिश्शब्दोक्ताप्राकृतविग्रहस्येव चेतनाचेतनसामान्यस्य परमात्मदेहत्वं शास्त्रसंप्रतिपन्नमिति स एव न्याय इहापीति सिद्धान्तिभावः ।

प्रज्ञातजीवभावेनेन्द्रेण, 'मामेव विजानीहि', 'मामुपास्स्व' इत्युपास्यस्य ब्रह्मणः स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः, अपितु शास्त्रेण स्वात्मदृष्टिकृतः। एतदुक्तं भवति—(छा. ६-३-२) 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि', (छा. ६-८-७) 'ऐतदात्म्यमिदं सर्वम्', (यजु. आ. ३-११-२१) 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा', (बृ.५. मां. ६-७-) 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति', (सुबा.७) 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य, जीवात्मवाचिनामहंत्वमादिशब्दानामपि (चिनामपि शब्दानां) परमात्मन्येव पर्यवसानं ज्ञात्वा, 'मामेव विजानीहि', 'मामुपास्स्व' इति स्वात्मशरीरकं परमात्मानमेवोपास्यत्वेनोपदिदेश—इति। वामदेववत्—यथा वामदेवः परस्य ब्रह्मणः सर्वान्तरात्मत्वं सर्वस्य च तच्छरीरत्वं शरीरवाचिनां च शब्दानां शरीरिणि पर्यवसानं पश्यन्, 'अहम्' इति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति; (बृ. ३-४-१०) 'तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे', (ऋक्सं. मं. ४. २६-१) "अहं मनुरभवं सूर्यश्च अहं कक्षीवानृषिरस्मि विप्रः" इत्यादिना। यथा च प्रह्लादः, (वि. पु. १-१९-८५) 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः। मत्तः सर्वमहं सर्वम्, मयि सर्वं सनातने' इत्यादि वदति ॥ ३१ ॥

---

इन्द्रवत् वामदेवस्य तत्रोपदेष्टृत्वाभावात् व्यपदिशतीत्युक्तम्। तद्धेत्यादि। तत् ब्रह्म एतत् उपासकानां सर्वभावापादकं पश्यन् उपासीनः वामदेवः अहं मनुरित्यादिमन्त्रत्रयेण सर्वत्वं स्वस्मिन् प्रतिपेदे अनुसंदधे हीत्यर्थः। बृहदारण्यके अहंमनुरभवं सूर्यश्चेति इतिकरणेन ऋग्वेदसूक्तप्रतीकधारणम्। अत एव, इति मन्त्रानित्युक्तं शाङ्करे। भाष्ये इत्यादिनेति तृतीयया इत्यादिरूपत्वं व्यपदेशे वक्तुं न शक्यते, तद्धैतदित्याद्यारभ्य वामदेवव्यपदेशत्वाभावात्। अतो व्यपदिशतीति वाक्यसमाप्तिः। तद्धैतदित्यादिबृहदारण्यकवाक्यं तत्स्मारणाय स्ववाक्यवत् भाष्यते, वैश्वानराधिकरणे श्रुतिवाक्यमिव। अहंमनुरित्यादिना वामदेवदृष्टसूक्तानुवादः। एवं व्यपदेशस्योपपादनम्। यद्वा इत्यादिनेत्यस्य इत्यादिश्रुतेरित्यर्थः। व्यपदेशो मानमिदम्। तद्धैतदिति बृहदारण्यकवाक्यात् अहंमनुरिति ऋग्वेदाच्चेति तदर्थः। अहंमनुरभवम्; मदन्तरात्मा मनुरूपेणोत्पन्नजीवस्याप्यात्मेत्यर्थः। अत्र मनुरभवमित्यस्य जन्मान्तरेऽहं मनुरासमिति नार्थः; तत्र तद्धैतत्पश्यन्नित्यस्यानुपयोगात्। एतच्छंकापरिहारदार्ढ्यायैव अहंकक्षीवानित्यादिप्रदर्शनम्। तत्रास्मीति वर्तमानप्रयोगात् दीर्घतमसः पुत्रो यः कक्षीवान् तत्समानकालिके वामदेवे तदैक्यस्यान्तर्याम्यैक्येनैवोपपाद्यत्वात्। "अहं मनुरभवं सूर्यश्च अहं कक्षीवान् ऋषिरस्मि विप्रः। अहं कुत्समार्जुनेयं न्युञ्जे अहं कविरुशना पश्यता मा" इति (ऋ.मं. ४. सू. २६-१.) तत्र मन्त्रः। अर्जुन्याः पुत्रः कुत्सः। मनुसूर्यकक्षीवत्कुत्सशुक्राचार्यान्तर्यामी मदन्तर्यामी चैकः। मदन्तर्यामिरूपाहमर्थनियोज्याः सर्वे अहञ्चेति भावः। शास्त्रपदेन स्मृतिमपि क्रोडीकर्तुं यथा च प्रह्लाद इत्यादि ॥ ३१ ॥

अस्मिन् प्रकरणे जीववाचिभिः शब्दैरचिद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणोऽभिधाने कारणं चोद्यपूर्वकमाह—

जीवमुख्यप्राणलिङ्गान्नेति चेन्न—उपासात्रैविध्यात्
आश्रितत्वादिह तद्योगात् १। १। ३२॥

'न वाचं विजिज्ञासीत; वक्तारं विद्यात्', 'त्रिशीर्षाणं त्वाष्ट्रमहनम्; अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्' इत्यादिजीवलिङ्गात्, 'यावद्ध्यस्मिन् शरीरे प्राणो वसति, तावदायुः', 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' इति मुख्यप्राणलिङ्गाच्च नाध्यात्मसंबन्धभूमेति चेत्—न, उपासात्रैविध्यात् हेतोः। उपासनात्रैविध्यमुपदेष्टुं तत्तच्छब्देनाभिधानम्। निखिलकारणभूतस्य ब्रह्मणः स्वरूपेणा(स्वरूपा?)नुसन्धानम्, भोक्तृवर्गशरीरकत्वानुसन्धानम्, भोग्यभोगोपकरणशरीरकत्वानुसन्धानं चेति त्रिविधमनुसंधानमुपदेष्टुमित्यर्थः। तदिदं त्रिविधं ब्रह्मानुसंधानं प्रकरणान्तरेष्वप्याश्रितम्—(तै. आन.) 'सत्यं ज्ञानमनन्तं ब्रह्म,' (तै. भृ. ६) 'आनन्दो ब्रह्म' इत्यादिषु स्वरूपा(पेणा?)नुसन्धानम्; (तै. आन. ६) 'तत् सृष्ट्वा

---

ज्योतिर्दीप्यत इत्यादाविव, प्राज्ञोऽयं विप्र आयातीत्यादाविव च प्राणधर्माणामिन्द्रधर्माणाञ्च विशेषणभूतप्राणेन्द्रान्वये युज्ञाने किमिति पुनः शंकेत्यत्र सूत्राभिप्रायमन्यं दर्शयन्नवतारयति **अस्मिन् प्रकरणे** इति। परमात्मन उपासनाय तदाकाराणामेव कथनीयत्वात् मुमुक्षुभिश्चेतनाचेतनयोरनुपास्यत्वात् तद्धर्मवर्णनं व्यर्थं स्यात्। तदन्यथाकरणे परमात्मरूपधर्म्यन्तरस्वीकारेण तदन्यथाकरणापेक्षया परमात्मधर्मान्यथाकरणं वरमिति शंकितुराशयः। **अरुन्मुखान्** शब्दरहितमुखान् = अविदुषः

**जीवमुख्यप्राणलिङ्गात्** जीवैकान्वयसमर्थात् मुख्य प्राणैकान्वयसमर्थाच्च धर्मात् प्रतिपादितात्। प्राणशब्दस्य परमात्मन्यपि प्राक् निरूढतया तद्व्यावृत्तयेमुख्ये ति। उपदेश इति पूर्वसूत्रपदानन्वय इत्याशयेन तत्पूर्वसूत्रस्थमानयति **नाध्यात्मसंबन्धभूमे**ति। परमात्मैव महावाक्यार्थः, न जीव इति कथमित्यर्थः। **चेन्ने**ति। न जीवप्रधानकोपासनार्थं तत्कथनम्। यथा मुख्यप्राणलिङ्गे सत्यपि तस्य प्राधान्यं नेष्यते; किंतु जीवोपकरणतया तस्य जीवमात्रप्राधान्यम्---तथा जीवस्यापि परमात्मोपसर्जनतया परमात्मप्राधान्यमिष्यतामिति भावः। यदि मुमुक्षूपासने चेतनाचेतनयोरप्रधानतयाऽपि प्रवेशो नोपापत्स्यत, तदा तदुपासनमन्यदभविष्यत्; न चैवमित्याशयेनाह **उपासात्रैविध्या**दिति। तस्य प्रामाणिकत्वं द्रढयितुम **आश्रितत्वा**दिति। स्वरूपानुसंधानं नाम कल्याणगुणादिविशिष्टपरमात्मानुसंधानम्। दिव्यमङ्गलविग्रहवैशिष्ट्यमप्यत्रान्तर्भवतीति **टीका**। **भोक्तृवर्गे**ति वर्गशब्दः कस्यापीन्द्रस्य ग्रहणप्रदर्शनाय। **प्रकरणान्तरे**ष्विति बहुवचनेन, सर्वत्रेत्यनुक्त्या चैतन्नियमाभावेऽपि निर्विवादत्वं ज्ञाप्यते। तत्रानन्दमयाधिकरणस्य पूर्वं वृत्तत्वात् तत्र युज्ञानत्वमाशङ्क्योदाहरति **सत्य**मित्यादिना। सत्यञ्चानृतञ्चेति चेतनाचेतनान्तर्यामित्वमुक्त्वा, 'यद्वै तत् सुकृतं रसो वै सः' इति कार्यवर्गान्तर्यामित्याऽऽनन्दमयं प्रदर्श्य,'यदा ह्येवैष **एतस्मिन्**........प्रतिष्ठाम्' इति विशिष्टध्यानवर्णनात्, आनन्दमयशब्दस्यापि वयोविद्यावलवित्तरूपमानुषानन्दरीत्या प्रियमोदप्रमोदाद्यनेका-

तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च, निलयनं चानिलयनं च, विज्ञानं चाविज्ञानं च, सत्यं चानृतं च सत्यमभवत्' इत्यादिषु भोक्तृशरीरतया, भोग्यभोगोपकरणशरीरतया चानुसन्धानम् । इहापि प्रकरणे तत् त्रिविधमनुसन्धानं युज्यत एवेत्यर्थः ।

एतदुक्तं भवति—यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणां च परमात्मासाधारणधर्मयोगः, तदभिधायिनां शब्दानां परमात्मवाचिशब्दैः सामानाधिकरण्यं वा दृश्यते—तत्र परमात्मनः तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितम्—इति । अतोऽत्रेन्द्रप्राणशब्दनिर्दिष्टो जीवादर्थान्तरभूतः परमात्मैवेति सिद्धम् ॥ ३२ ॥

इति इन्द्रप्राणाधिकरणम् ॥ ११ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य प्रथमः पादः ॥ १ ॥

श्रीमते रामानुजाय नमः ।

* * *

---

नन्दात्मकविभूतिविशिष्टार्थकत्वौचित्याच्च चेतनाचेतनवैशिष्ट्यमुपास्यमिति ज्ञायते इति भावः । श्रुतानामपि जीवधर्माणामन्यार्थत्वकल्पनया जीवप्राणोपासनं बालाकिविद्यायां न स्वीकरिष्यते जगद्वाचित्वाधिकरणे ; तद्वदत्र नेति वैलक्षण्यप्रदर्शनार्थम्, **इह तद्योगादि**त्युक्तम् । 'तं मामायुरमृतमित्युपास्व' इति वाक्येन स्पष्टमेवेन्द्रान्तर्यामित्वप्राणान्तर्यामित्वामृतत्वस्वरूपत्वानि वेद्यतयोक्तानीति भावः । ननु पूर्वमिन्द्रप्राणशब्दो न जीवमात्रपर इति प्राणशब्दार्थेऽपि इन्द्रघटनया विशिष्टपरत्वप्रत्यायनात् कथं ततोऽचिद्विशिष्टपरमात्मोपासनमिति चेत्-प्रणाल्याऽस्त्येवाचिद्वैशिष्ट्यम् । अथवा प्राणशब्दः उपस्थितेन्द्रसंबन्धिप्राणव्यक्त्युपस्थापकः साक्षादेव परमात्मविशेषणमित्येव तत्राप्यभिमतं स्यात् । सर्वथा चिदचितोरुपासने प्रवेश इष्ट एव ॥

एवंतर्हि चेतनाचेतनमात्रोपासनं क्वचिदपि न सिद्ध्येत् ; अन्तर्यामिपर्यन्तस्य शब्दमुख्यार्थत्वे सर्वत्रैव तथात्वसंभवादित्यत्र व्यवस्थां दर्शयितुमाह **एतदि**ति । **धर्मयोगो दृश्यते** इति ; चेतनाचेतनरूपेऽवश्यगृहीतेऽर्थे परमात्मासाधारणधर्मस्यावश्यगृहीतस्याश्रयताप्रतीतिरापाततो भवतीत्यर्थः । तेन आकाशप्राणादिवाक्ये उदाहृते परमात्मधर्मसत्त्वेऽपि योगेनैवाकाशादिपदनिर्वाहात् विशिष्टवाचित्वाभावेऽपि,'विष्णुरेव भूत्वेमान् लोकानभिजयती'त्येवम्प्रायवाक्ये विष्णुसादृश्यादिना निर्वाह्ये कर्त्रादिपदस्य विशिष्टपरत्वाभावेऽपि च न क्षतिः । **प्रतिपिपादयिषितमि**ति । अन्यथा परमात्मधर्मानन्वयेन बोधासंभवात् विशिष्टपरत्वं स्वीकार्यमिति विशिष्टोपासनमेव फलाय ; अन्यत्र तु सत्यामपि शास्त्रव्युत्पत्तौ लोकमूलव्यवहारानुरोधेन चेतनाचेतनमात्रग्रहणेनोपासनमपि फलाय कल्पत इति न कश्चिद् दोष इति भावः । एतत्पादान्तिमाधिकरणेऽस्मिन् एतद्विषये वक्तव्यं शिष्टमनन्तरपादेऽन्तिमे वैश्वानराधिकरणे द्रष्टव्यम् ।

तदेवं जडजीवोभयसाधारणशब्दानां प्रकरणश्रुतधर्मविशेषान्वययोग्यार्थे पर्यवसानात्, अन्यत्र रूढेष्वपि शब्देषु परमात्मधर्मानुसारेण व्युत्पत्त्यन्तरकल्पनात्, रूढ्यर्थस्य श्रुतधर्मान्वयायावश्यकत्वेपि तद्विशिष्टपरमात्मरूपार्थसंभवात्, तादृशार्थग्रहणस्य लोकासिद्धत्वेपि शास्त्रसिद्धशरीरात्मभावतः संभवात् सर्वजगत्कारणं ब्रह्म वेदान्तवेद्यमस्तीति अस्मिन् पादे सिद्धम् । शुभमस्तु ॥ इति प्रथमः पादः ।

प्रथमाध्याये - द्वितीयः पादः

**प्रथमे पादे अधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः केवलकर्मणामल्पास्थिरफलत्वमवगम्य, वेदान्तवाक्येषु चाऽऽपातप्रतीतानन्तस्थिरफलब्रह्मस्वरूपतदुपासनः(न)समुपजातपरमपुरुषार्थलक्षणमोक्षापेक्षः अवधारितपरिनिष्पन्नवस्तुबोधनशब्दशक्तिः वेदान्तवाक्यानां परस्मिन् ब्रह्मणि निश्चितप्रमाणभावः तद्विविकर्तव्यतारूपशारीरकमीमांसाश्रवणमारभेतेत्युक्तं शास्त्रारम्भसिद्धये ।१। अनन्तविचित्रस्थिरत्रसरूपभोक्तृभोग्यभोगोपकरणभोगस्थानलक्षणनिखिलजगदुदयविभव[वि]लयमहानन्दैककारणं परं ब्रह्म, 'यतो वा इमानि' इत्यादिवाक्यं बोधयतीति च प्रत्यपादि ।२। जगदेककारणं परं ब्रह्म सकलेतरप्रमाणाविषयतया शास्त्रैकप्रमाणकमित्यध्यधाम । ३ । शास्त्रप्रमाणकत्वं च ब्रह्मणः प्रवृत्तिनिवृत्त्यन्वयविरहेऽपि स्वरूपेणैव परमपुरुषार्थभूते परस्मिन् ब्रह्मणि वेदान्तवाक्यानां समन्वयान्निरुध्यत इत्यब्रूम ।४। निखिलजगदेककारणतया वेदान्तवेद्यं ब्रह्म च ईक्षणाद्यन्वयात् आनुमानिकप्रधानादर्थान्तरभूत-**

---

उपनिषदां जडजीवविलक्षणब्रह्मपरत्वायोगः संभावितसर्वप्रकारत आशंक्य प्रथमपाद एव व्यवच्छिन्न इति अन्ययोगव्यवच्छेद एव लिपार्थः। अत एव पूर्वपाद एव विलक्षणजगत्कारणत्वाप्रसिद्धेः परिहृतत्वादेव ब्रह्मणः सिद्धतया प्रथमसूत्र इह **प्रसिद्ध**पदम्; उपरि **प्रकरणाच्चे**त्यादिसूत्रञ्च। इममर्थं ज्ञापयितुं प्रथमपादनिरूपितप्रकारान् सर्वान् संकलय्य दर्शयति **प्रथमे** इत्यादिना। **प्रथमेपादे** इत्यस्य प्रतिवाक्यं संबन्धः। यद्वा **तदेव**मित्यन्तिमवाक्यमात्रे **इत्युक्त**मित्यत्र तदन्वयः। तच्छेषभूतानि **अधीतवेद** इत्यादि वाक्यानि। प्रतिवाक्यं 'प्रथमेऽधिकरणे' 'द्वितीये' इति पूरणीयम्। **ब्रह्मणि निश्चितप्रमाणभाव** इति। सिद्धब्रह्मविषयकत्वेऽपि प्रामाण्यहानिर्न भवतीति निश्चितवानित्यर्थः।

**शास्त्रारम्भसिद्धये उक्त**मिति स्वरसप्रयोगे कार्ये व्यत्यस्य प्रयोगः अस्य चतुर्थ्यन्तस्य यथार्हमुत्तरवाक्येऽपि संबन्धाभिप्रायेण। तेन चतुरधिकरण्या उपोद्घातत्वस्य न क्षतिः। उत्तरवाक्ये **चकारो**ऽप्येतदनुषङ्गदर्शी। न चैतद्वाक्ये एतत्प्रयोगमात्रेण प्रथमाधिकरणमात्रमुपोद्घात इति **नयद्युमणौ** मेघनादारिसूरिविमृष्टं युक्तम्-चतुःसूत्र्युपोद्घातत्वस्य बहुसंमतत्वात्। सूत्रभाष्यस्वारस्यमत्र लक्ष्यते। तथा हि अधिकरणचतुष्कस्यांशचतुष्टयस्थापकत्वेऽपि चतुःसूत्र्या एकपेटिकात्वे सूत्रस्वारस्यम्। द्वितीयसूत्रे पूर्वसूत्रैकवाक्यतायै यच्छब्दनिर्देशात्, तृतीयसूत्रे तदर्थविषय एव हेतुमात्रोपन्यासात्, चतुर्थे तत्स्थापकतयैव स्पष्टं समन्वयवचनाच्च हि समन्वयाधीनशास्त्रप्रमाणकत्वसिद्धविवक्षितलक्षणवत्ताप्रतिपादनकब्रह्मजिज्ञासा कार्येति विशिष्टार्थोऽवसीयते। जगत्कारणस्य वेदान्तवेद्यत्वसंभवे विचारप्रवृत्तिः। तत्संभवश्च चतुःसूत्र्यायत्तः। अत एवात्रैव भाष्ये ईक्षत्यधिकरणार्थसंग्रहारम्भे **वेदान्तवेद्यं ब्रह्म चे**ति चतुःसूत्रीसिद्धांशोऽन्ववादि। पूर्वश्च यथा प्रथमाधिकरणे, 'वेदान्ताः ब्रह्मणि प्रमाणभावमनुभवितुमर्हन्ती' ति, तथा द्वितीयादिष्वपि यथार्हम्। तुरीये, 'शास्त्रप्रमाणकत्वं न संभवती'ति पूर्वपक्षोपन्यासरीतिश्चावधेया। एवं सामान्यतः शास्त्रवेद्यत्वसंभवे स्थिते पश्चाद् विशेषविचारः प्रवर्तते। अतएवेक्षत्यधिकरणारम्भ एव, "ब्रह्म जिज्ञास्यमित्युक्तम्। इदानीम्"

श्चेतनविशेष एवेत्युपापीपदाम । ५ । स च स्वाभाविकानवधिकातिशयानन्द-विपश्चित्त्व-निखिलचेतनभयाभयहेतुत्व-सत्यसङ्कल्पत्व - समस्तचेतनाचेतनान्तरात्मत्वादिभिर्बद्धमुक्तोभयावस्थात् जीवशब्दाभिलपनीयाच्चार्थान्तरभूत इति च समार्तिथामहि । ६ । स चाप्राकृताकर्मनिमित्तस्वासाधारणदिव्यरूप इत्युदैरिराम । ७ । आकाशप्राणाद्यचेतनविशेषाभिधायिभिर्जगत्कारणतया प्रसिद्धवन्निर्दिश्यमानः सकलेतरचेतनाचेतनविलक्षणः स एवेति समगरिष्महि । ८-९ । परतत्त्वासाधारणनिरतिशयदीप्तियुक्तज्योतिश्शब्दाभिधेयो द्युसंबन्धितया प्रत्यभिज्ञानात् स एवेत्यातिष्ठामहि । १० । परमकारणासाधारणामृतत्वप्राप्तिहेतुभूतः परमपुरुष एव शास्त्रदृष्टचेन्द्रादिशब्दैरभिधीयत इत्यब्रूमहि । ११ ।

तदेवमतिपतितसकलेतरप्रमाणसंभावनाभूमिः सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेतरसमस्तवस्तुविलक्षणः परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्तम् । अतः परं द्वितीयतृतीयचतुर्थेषु पादेषु—'यद्यपि वेदान्तवेद्यं ब्रह्मैव, तथापि कानिचिद्वेदान्तवाक्यानि प्रधानक्षेत्रज्ञान्तर्भूतवस्तुविशेषस्वरूपप्रतिपादनपराण्येव' इत्याशङ्क्य तन्निरसनमुखेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते । तत्रास्पष्टजीवादि-

---

इत्येवं चतुःसूत्र्या जिज्ञास्यत्वस्थापनम्, अथ जिज्ञासाप्रकारः' इत्यभाषि। वेदान्तसारे च, "ब्रह्म वेदान्ताः प्रतिपादयन्तीत्युक्तम्" इति प्रथमद्व्यर्थं प्रदर्श्य, "शास्त्रैकप्रमाणकत्वात्.........परमपुरुषार्थत्वात् वेदान्ताः प्रतिपादयन्त्येवेति स्थिरीकृतम्। अतः परं पादशेषेण...." इति प्रथमाधिकरणसिद्धस्य शास्त्रारम्भस्यैव मुखान्तरप्राप्ताक्षेपपरिहारेण स्थिरीकरणमुपरीत्यादिवर्णनेन चतुःसूत्र्या उपोद्घातत्वमदर्शि । अतः चेतनाचेतनविलक्षण - परिनिष्पन्न - निमित्तोपादान - निरतिशयपुरुषार्थभूतपरब्रह्मविषयकापातप्रतीतेः शास्त्रजन्याया एव विचारारम्भप्रयोजकत्वात् तदुपपादनार्था चतुःसूत्री। ततो विचारारम्भः। एवंस्थितेऽत्र प्रथमाधिकरणमात्रे 'शास्त्रारम्भसिद्धये' इति कण्ठोक्तिः, प्रथमाधिकरणस्य शास्त्रारम्भमात्रं प्रयोजनम्; ब्रह्माब्रह्मसाधारण्येन सामान्यतो वाक्यस्य सिद्धवस्तुबोधकत्वासंभवशङ्कामात्रपरिहारकत्वात्। द्वितीयाद्यधिकरणानि तु जन्मस्थितिलयहेतुत्वाचिन्त्यचेतनत्वानवधिकपुरुषार्थत्वादिब्रह्मधर्मविशेषस्पर्शित्वात् ब्रह्मविचारतामप्यर्थाल्लभन्त इति ज्ञापयति। उपोद्घातत्वाकारः प्रधानम्। टीकायामप्युक्तमिदम्।

दीप्तियुक्तेत्यस्य अभिधेयेऽन्वयः। हेतुभूत इत्यत्र भावे क्तः। परमकारणासाधारणो हेतुभावो यस्येति बहुव्रीहिः। अतिपतितेति। संभवनाभूमिः संभावनाविषयवर्गः। तदतिपातश्च तदविषयत्वं तदन्यतमत्वाभावः। अत्रापि बहुव्रीहिः। पुरुषोत्तमो नारायण एवेति। सर्वपुरुषातिशयितेक्षणविशेषानन्दमयत्वादिभिः पुरुषोत्तमत्वं सिद्धम्। गतिसामान्य-आदित्यमण्डलान्तर्वर्तिभिन्नानन्दमयत्व-पुण्डरीकाक्षत्व-वैश्वानरैक्य - सौबालशास्त्रदृष्ट्यादिभिर्नारायणत्वञ्च। अतः सूक्ष्मतरमतीनां सर्वव्यस्त्यानाधिकरणपर्यन्ता त्रिपादी एतन्निर्णयाय नापेक्षिता। तथापि तदुक्तिरन्याभिप्रायेणेति भावः।

अस्पष्टेत्युक्त्या प्रथमपादः अस्पष्टतरजीवादिलिङ्गकवाक्यविषय इति ज्ञाप्यत इति, 'अस्पष्टतरम-

लिङ्गकानि वाक्यानि द्वितीये पादे विचार्यन्ते; स्पष्टलिङ्गकानि तृतीये ; तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ॥

सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥ (छा. ३-१४)

## 12. सर्वत्र प्रसिद्धोपदेशात् १। २। १॥

इदमाम्नायते छान्दोग्ये, (छा.३-१४) "अथ खलु क्रतुमयः पुरुषः। यथाक्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति। स क्रतुं कुर्वीत—मनोमयः प्राणशरीरो भारूपः" इत्यादि।

अत्र, स क्रतुं कुर्वीत इति प्रतिपादितस्योपासनस्योपास्यः, मनोमयः प्राणशरीरः इति निर्दिश्यत इति प्रतीयते। तत्र संशयः — किं मनोमयत्वादिगुणकः क्षेत्रज्ञः, उत परमात्मा—इति। किं युक्तम्? क्षेत्रज्ञ इति। कुतः? मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्; परमात्मनस्तु (मुं २-१) 'अप्राणो ह्यमनाः' इति तत्प्रतिषेधाच्च। न च, सर्वं खल्विदं ब्रह्म इति पूर्वनिर्दिष्टं ब्रह्मात्रोपास्यतया संबन्धुं शक्यते; "शान्त उपासीत" इत्युपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मकत्वोपदेशायोपात्तत्वात्। न च, स क्रतुं कुर्वीत इत्युपासनस्योपास्यसाकांक्षत्वात् वाक्यान्तरस्थमपि ब्रह्म संबध्यत इति युक्तं वक्तुम्; स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन

---

स्पष्टं स्पष्टं छायानुसारि च' इति पादचतुष्टयवैलक्षण्यं समग्राहि। स्पष्टब्रह्मलिङ्गकवाक्यविचारः प्रथम इत्युक्तं शाङ्करे। जीवादावसंभावितधर्मैकस्वरसवाक्यविचारः प्रथमे। तत्रापि संभावितधर्मबोधिवाक्यविचारो द्वितीये। जीवादिमात्रगधर्मस्वरसवाक्यं तृतीये। जीवाद्येकस्वरसमाहावाक्यं चतुर्थ इत्युक्तं भवति।

पादान्तरत्वान्नावान्तरसंगतिरिति **कल्पतरुः**। भवति तु-पूर्वाधिकरणे हिततमोपासनस्यैव प्रक्रान्तत्वात् मामुपास्स्वेत्युपक्रमवाक्यस्य, स म आत्मेति विद्यादित्युपसंहारवाक्यस्य च विभिन्नविषयकोपासनपरत्वाशङ्कनायोगादन्यथानयनेऽपि इह, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति वाक्यस्य, 'स क्रतुं कुर्वीत' इत्यादेश्च विभिन्नविषयकत्वं स्वरसप्रतीतमादर्तुं युक्तम्। अत एव, 'अथ खलु' इत्यधिकारान्तरे इति वाक्यभेदशङ्कयोत्थानात् संगतिः। इयञ्चोपासनभेदपक्षे। उपासनैक्यपक्षस्यैव प्रथमयोजनायामपि सत्त्वादेवमुत्थानं भाव्यम्—प्रतर्दनविद्यायां मामितीन्द्रस्येवात्र ब्रह्मण उपासिक्रियान्वयावश्यकत्वाभावात् ब्रह्मज्ञानस्य शान्तावेवोपयोगात् उपक्रमभञ्जनरूपक्लेशस्याप्यभावात् पूर्वाधिकरणवदिहापि महावाक्यप्रतीतार्थपरत्वमेव युक्तमिति जीवोपासनमेव विवक्षितमस्त्विति। द्वितीययोजनायाञ्च महावाक्यानुसारस्य पूर्ववत् युक्तत्वात् पूर्ववत् उपक्रमोऽपि भञ्जनीय इत्येवं भाव्यम्। प्रथमयोजना शाङ्करवर्णिता।

**संबन्धुं** संबन्धयितुम्। **इत्युपासने**ति। स क्रतुं कुर्वीतेति वाक्यविहितमुपासनं 'शान्त उपासीत' इत्यनूद्य तदङ्गतया शान्तिगुणविधानात् तन्निष्पादकं सर्वब्रह्मात्मकत्वज्ञानं जनयितुं सर्वं खल्विदमिति वाक्यमित्यर्थः। एवं भाष्यार्थस्य स्पष्टत्वात् परैरप्येवमेवोक्तत्वात् शान्त उपासीतेत्यस्य शान्तिकाम उपासीतेति नार्थः। **टीकायां** सोऽर्थ उक्तो न भाष्यार्थः। किंतु वक्ष्यमाणोपासनस्य पूर्वमनुवदनमित्यनभ्युपगम्य वक्ष्यमाणजीवात्मोपासनोपयोगिशमरूपेन्द्रियनिग्रहसंपत्त्यर्थस्य भगवदुपासनस्य गीतायां (२-६१)

निराकांक्षत्वात्; मनोमयः प्राणशरीरः इत्यानन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणाममात्रेणो-भयाकाङ्क्षानिवृत्तिसिद्धेः। एवं निश्चिते जीवत्वे 'एतद् ब्रह्म' इत्युपसंहारस्थब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इति।

एवं प्राप्ते ब्रूमः-सर्वत्र प्रसिद्धोपदेशात्—मनोमयत्वादिगुणकः परमात्मा। कुतः? सर्वत्र वेदान्तेषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात्। प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः—यथा,(मु. २-२-८) "मनोमयः प्राणशरीरनेता",(तै. शी. ६) "स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः", (तै. ना. ११) "हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति" (मु.३-१-८) न चक्षुषा गृह्यते नापि वाचा",(?) "मनसा तु विशुद्धेन"—तथा (के.१-२) "प्राणस्य प्राणः", (कौषी.३-२६) अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति", (छा, १-११. ५) "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इत्यादिषु। मनोमयत्वं—विशुद्धेन मनसा ग्राह्यत्वम्। प्राणशरीरत्वं—प्राणस्याप्याधारत्वं नियन्तृत्वञ्च।

एवं च सति, "एष म आत्माऽन्तर्हृदये एतद्ब्रह्म" इति ब्रह्मशब्दोऽपि मुख्य एव भवति। 'अप्राणो ह्यमनाः' इति मनआयत्तं ज्ञानं प्राणायत्तां स्थितिं च ब्रह्मणो निषेधति।

अथवा (छा. ३-१४-१) "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्यत्रै-

---

वर्णनात् तादृशोपासनविधानं शान्तइति वाक्ये स्यादिति कस्यचिदभिप्रायो विचार्यत इति ध्येयम्। **विभक्ति-विपरिणाममात्रेणे**ति। ब्रह्मपदस्यान्वयेऽभिमते तदनुषङ्गः विपरिणाम इत्युभयं कल्प्यम्; ब्रह्मपदे आकांक्षापि कल्प्या; मनोमयादिपदगताकांक्षाया अशान्तिश्च; तदर्थं उपासनस्य तद्विषयकाकांक्षोत्थापनादिदोषोऽपि।

**प्रसिद्धोपदेशात्।** जीवस्यैव मनोमयत्वादि लोकप्रसिद्धमिति पूर्वपक्षी। अप्राणत्वादिविशिष्टस्य ब्रह्मणोऽपि मनोमयत्वादि श्रुतिप्रसिद्धमिति सिद्धान्ती। **हृदा** भक्त्या। **मनीषेति** तृतीयान्तम्; धृत्ये-त्यर्थः। **मनोमय** इत्यत्र मयडर्थो नाश्रयत्वरूपमनोवृत्तिप्राचुर्यम्; किन्तु शुद्धमनोवृत्तिविषयत्वप्राचुर्यम्।

परसंमतेयं रचना प्रकृतोपनिषद्वाक्ये एवं विचारस्यापि संभावितत्वमात्रेण भाष्येऽप्युल्लिखिता। वृत्त्यभिमतां तु वास्तवरचनामाद्रियते **अथवे**ति। कुतो **वृत्तौ** तथोक्तिरिति चेत्, पूर्वापेक्षयोपनिषदैव पूर्व-पक्षस्य ज्यायस्त्वात् सूत्रस्वारस्याच्चेति भाव्यम्। तथा हि—उपासीत, क्रतुं कुर्वीतेति वाक्यद्वयेऽपि विधि-प्रत्यये श्रूयमाणे प्रथमवाक्य एव समानपदश्रुत्या संभवत्युपासनविधाने पदान्तरार्थविधानमयुक्तम्। **यथाक्रतुः** इति उपरितनवाक्यारम्भात् यत्क्रतुरित्यारम्भाभावात् उपास्यमपि ज्ञातम्, तद्गतप्रकारविशेषो बुभोधयिषित इति च ज्ञायते। सूत्रकारश्चाधिकरणारम्भे प्रतिज्ञाघटकपक्षनिर्देशं कृत्वा परमात्मत्वं स्थापयतीति पूर्वापरसर्वा-धिकरणसिद्धम्। अतः **सर्वत्रे**ति पदं प्रतिज्ञाघटकं वाच्यम्। तत् सर्वंखल्विति वाक्यस्य विचार्यत्व एव घटते। मनोमयत्वादिगुणविषये **विवक्षितगुणे**त्येवमुपरि सूत्रणात् अत्र **प्रसिद्ध**पदं न तत्परम्, किंतु **खलुशब्देतिशब्दावगम्यप्रसिद्ध्यभिप्रायमित्यपि** ज्ञायते। न च प्रथमविधेर्विषयविशिष्टोपासनविधायकत्वे

ब्रोपासनं विधीयते—सर्वात्मकं ब्रह्म शान्तस्सन् उपासीतेति। 'स क्रतुं कुर्वीत' इति तस्यैव गुणोपादानार्थोऽनुवादः। उपादेयाश्च गुणा मनोमयत्वादयः; अतः सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः। तत्र संदेहः—किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यते, उत परमात्मा—इति। किं युक्तम्? प्रत्यगात्मेति। कुतः? तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः। सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत्। ब्रह्मादिभावश्च प्रत्यगात्मनः अनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव। परस्य तु ब्रह्मणः सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनो निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो नोपपद्यते। प्रत्यगात्मन्यपि क्वचित्क्वचिद् ब्रह्मशब्दः प्रयुज्यते। अत एव परमात्मा परं ब्रह्मेति परमेश्वरस्य क्वचित् सविशेषणो निर्देशः। प्रत्यगात्मनश्च निर्मुक्तोपाधेर्बृहत्त्वं च विद्यते; (श्वे.५-९) "स चानन्त्याय कल्पते" इति श्रुतेः। अविदुषस्तस्यैव कर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां तज्जलानिति हेतुनिर्देशोऽप्युपपद्यते। तदयमर्थः—अयं जीवात्मा स्वतोऽपरिच्छिन्नस्वरूपत्वेन ब्रह्मभूतः सन् अनाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मनाऽवतिष्ठते—इति।

अत्र प्रतिविधीयते—सर्वत्र प्रसिद्धोपदेशात्—सर्वत्र—(छा. "सर्वं खल्विदम्" इति निर्दिष्टे सर्वस्मिन् जगति ब्रह्मशब्देन तदात्मतया अभि(वि)धीयमानं परं ब्रह्मैव; न प्रत्यगात्मा। कुतः? प्रसिद्धोपदेशात्। "तज्जलानिति" इति हेतुतः सर्वं खल्विदं ब्रह्मेति

---

पूर्वपक्षानुत्थितिरिति वाच्यम्; तदुत्थित्यर्थं स्वरसप्रतीतत्यागायोगात्। तदुत्थितिश्च दर्शितैव भाष्ये।

नोपासनमात्रस्य विधिः; किंतु उपास्यविशिष्टस्येति दर्शयति सर्वात्मकंब्रह्मेति। एतद्वाक्यजातात् सर्वात्मकत्वं नोपास्यतयोपादेयो गुणः, मनोमयत्वादय एव इत्येव ज्ञायते। खलुशब्दसद्भावात् तज्जत्वादिप्रयुक्तसार्वात्म्यप्रसिद्धिमत् ब्रह्मोपासीतेत्यर्थवर्णनात् प्रसिद्धिपर्यन्तस्योपलक्षणतयाऽन्वयः; न तु विशेषणतयेत्याशयो भाव्यः। सार्वात्म्यमपि विधेयमिति पक्षेपि मनोमयत्वादिविधानसंभवः टीकादिषु द्रष्टव्यः; अस्मत्परिष्कारे च। पूर्वोत्तरपक्षद्वयसंमतो वाक्यार्थांशः वाक्यार्थ इत्यन्तेनोक्तः। ननु ब्रह्मशब्दे सति कथं शङ्केत्यत्र तच्छब्दपूर्वभाविसर्वशब्दबलादित्याह तस्यैवेति। समष्टिकार्यकारणसर्वसामानाधिकरण्यं प्रत्यगात्मन्यप्यनुपपन्नमित्यत्र सर्वशब्दार्थं संकोचयति सर्वशब्दनिर्दिष्टंहीति। ननूपास्य प्रत्यगात्मा शुद्धः, तस्य कथं ब्रह्मादिभाव इत्यत्राह ब्रह्मादीति। अनादयः प्रवाहानादयः अज्ञानस्य मूलभूताः कर्मविशेषाः। ननु परमात्मग्रहणे सर्वशब्दासंकोचः, तस्य चेतनाचेतनसर्वभावादित्यत्राह परस्यत्विति। ननु शास्त्रदृष्टेः पूर्वाधिकरणे उक्तत्वात् कथमेवं शंकेति चेत्—तदाक्षेपोऽप्यत्र मन्तव्यः। सर्वभावे सर्वभोगप्राप्तिरिति शंकासद्भावादेव हि, संभोगप्राप्तिरिति गुणसूत्रस्य प्रवृत्तिः। कामं पापप्रतिभटत्वशक्तिसंपन्नमन्विन्द्रवामदेवादिभावः स्यात्, न तु सर्वभाव इति च मन्यते। प्रयुज्यते; 'इदं ब्रह्मायाति', 'निर्दोषं हि समं ब्रह्म' इत्यादौ।

सर्वत्रेति। अनेन सौत्रपदेन सर्वंखल्विति श्रुतसर्वग्रहणम्। आनन्दमय इत्यादिवत् प्रथमान्ता-

प्रसिद्धवदुपदेशात्। ब्रह्मणो जातत्वात् ब्रह्मणि लीनत्वात् ब्रह्माधीनजीवनत्वाच्च हेतोः ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते, यस्माज्जगज्जन्मस्थितिलया वेदान्तेषु प्रसिद्धाः, तदेवात्र ब्रह्मेति प्रतीयते। तच्च परमेव ब्रह्म; तथा हि, (तै. भृ. १) "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद् विजिज्ञासस्व; तद् ब्रह्म" इत्युपक्रम्य, "आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद् ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते। तथा, (श्वे. ६-९) 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते। एवं सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम्। अतः परब्रह्मणो जातत्वात् तस्मिन् प्रलीनत्वात् तेन प्राणनात् तदात्मकतया तादात्म्यमुपपन्नम्। अतः सर्वप्रकारं सर्वशरीरं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वोपासीतेति श्रुतिरेव परस्य ब्रह्मणः सर्वात्मकत्वमुपपाद्य तस्यैवोपासनमुपदिशति। परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतम्। एवम्भूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणः सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते; प्रकारभूतशरीरगतानां दोषाणां प्रकारिणि आत्मनि अप्रसङ्गात्। प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव भवतीति पूर्वमेवोक्तम्।

यदुक्तं जीवस्य सर्वतादात्म्यमुपपद्यत इति—तदसत्ः जीवानां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासंभवात्। मुक्तस्या[प्य]नवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तं न संभवतीति(शारी० ४-४-६) "जगद्व्यापारवर्जम्" इत्यत्र वक्ष्यते। 'जीवकर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां स एव कारणम्' इत्यपि न साधीयः; तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वात्। अतः परमात्मैवाऽत्र ब्रह्मशब्दाभिधेयः। इममेव सूत्रार्थमभियुक्ता बहुमन्वते। यथाह वृत्तिकारः, "सर्वं खल्विति सर्वात्मा ब्रह्मेशः" इति ॥१॥

---

प्रयोगेण सर्वत्रेति सप्तमीनिर्देशेन प्रपञ्चस्य ब्रह्मणश्चैक्यरूपं तादात्म्यं वारयति। इदमिति निर्दिष्टाचेतनदेहतादात्म्यस्य प्रत्यगात्मन्यसंभवात् पूर्वपक्षिणापि सर्वमित्यस्य सर्वत्रात्मतया स्थितमित्येवार्थो वर्णनीयः; स सिद्धान्तिनः चेतनाचेतनसर्वग्रहणेन सम्यग् घटत इति च ज्ञापयति। तथाच सर्वत्र सर्वत्र स्थितं-सर्वात्मा परमात्मा सर्वात्मत्वसर्वजन्मस्थितिलयहेतुत्वरूपप्रसिद्धार्थोपदेशादिति सूत्रार्थः। स्रष्टृत्वमिव सामान्यतो जन्मस्थितिलयहेतुत्वमपि विज्ञानमयान्तव्यावृत्ततया ब्रह्मैकनिष्ठतया च तैत्तिरीयाद्युक्तमिति न जीवे तदुक्तिसंभव इति स्पष्टं दर्शयति तथाहीत्यादिना। परमात्मनि सर्वतादात्म्यस्वीकारे पूर्वपक्षिशंकितमनिष्टं परिहरति एवम्भूतेत्यादिना। यथा जीवस्य देवमनुष्यादितादात्म्ये उच्यमाने तत्तद्देहगतहेयाकारवत्त्वापत्तिर्न भवति, तथैवेति भावः। अथापि तत्प्रयुक्तभोगप्राप्तिरिति चेत्-तत्परिहारोऽन्तिमगुणसूत्रे।

सर्वात्मा ब्रह्मेश इति। सर्वं ब्रह्मेत्यस्य सर्वात्मा ब्रह्मेति पूर्वोत्तरपक्षसंमतोऽर्थः। तत्र पक्षे ईशत्वं

विवक्षितगुणोपपत्तेश्च १। २। २॥

वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते, "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति। मनोमय.—परिशुद्धेन मनसैकेन ग्राह्यः। विवेकविमोकादिसाधनसप्तकानुगृहीत परमात्मोपासन-निर्मलीकृतेन हि मनसा गृह्यते। अनेन हेयप्रत्यनीककल्याणैकतानतया सकलेतरविलक्षण-स्वरूपतोच्यते; मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात्। प्राणशरीरः—जगति सर्वेषां प्राणानां धारकः; प्राणो यस्य शरीरम् आधेयं विधेयं शेषभूतं च स प्राणशरीरः। आधेयत्वविधेय-त्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानी(त्तमि)त्युपपादयिष्यते। भारूपः—भास्वररूपः; अप्रा-कृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः। सत्यसङ्कल्पः—अप्रतिहतसङ्कल्पः। आकाशात्मा—आकाशवत् सूक्ष्मस्वच्छस्वरूपः; सकलेतरकारणभूतस्याऽऽका-शस्या[प्या]त्मभूत इति वा आकाशात्मा; स्वयं च प्रकाशते, अन्यानपि प्रकाशयतीति वा आकाशात्मा। सर्वकर्मा—क्रियत इति कर्म; सर्वं जगद्यस्य कर्म असौ सर्वकर्मा; सर्वा वा क्रिया यस्यासौ सर्वकर्मा। सर्वकाम.—काम्यन्त इति कामाः—भोग्यभोगोपकरणादयः; ते परिशुद्धाः सर्वविधास्तस्य सन्तीत्यर्थः। सर्वगन्धः सर्वरसः—(कठ० १-३-१५) अशब्दमस्पर्शम्" इत्यादिना प्राकृतगन्धरसादिनिषेधादप्राकृताः स्वासाधारणाः निरवद्याः निरतिशयाः कल्याणाः स्वभोग्यभूताः सर्वविधा गन्धरसास्तस्य सन्तीत्यर्थः। सर्वमिदमभ्यात्तः—उक्तं रसपर्यन्तं सर्वमिदं कल्याणगुणजातं स्वीकृतवान्। अभ्यात्तः इति, 'भुक्ता ब्राह्मणाः' इतिवत् कर्तरि क्तः प्रतिपत्तव्यः। अवाकी—वाकः उक्तिः; सोऽस्य नास्तीत्यवाकी। कुत इति? आह—अनादर इति। अवाप्तसमस्तकामत्वेनादर्तव्याभावादादररहितः। अत एव अवाकी—

---

विधेयम्। यद्वा सर्वात्मेति पक्षः, 'अत एव च स ब्रह्म' इति सूत्रात् ब्रह्मशब्दाकर्षः। पूर्वपक्षिणाऽत्र ब्रह्मशब्दस्यार्थान्तरवर्णनात् तदपाकरणाय ईश इति॥ १॥

विवक्षितेरस्य वक्तुमिष्टेत्यर्थे वेदस्यापौरुषेयतया कस्येच्छेत्याक्षेपः प्राप्नोति। तात्पर्यविषयेत्युक्ता-वपि। मनोमयादिपदे वाच्यार्थत्यागेनार्थान्तरं गृह्यत इति भ्रमश्च भवेत्। अत इच्छायाः कार्यपूर्वभावित्वात् तस्य भविष्यत्त्वमत्र विवक्षितम्—यथा कूलं पिपतिषतीत्यत्र पतिष्यतीति इत्याशयेन विवक्षितपदस्य वक्ष्य-माणेत्यर्थमाह वक्ष्यमाणाश्चेति। अत्र सूत्रे उपपत्तेरिति, उपरितनसूत्रे अनुपपत्तेरिति च पदस्वारस्यात् 'मनोमयादिपदार्थभूतानां परमात्मन्यसंभवितया पूर्वपक्ष्यभिमतानामुपपत्तिरत्रोच्यते; अन्येषां सर्वकामत्वादीनां सर्वथा प्रत्यगात्मन्यनुपपत्तिरुपर्युच्यते' इति विभागो लक्ष्यते। तदपेक्षया मनोमयत्व-प्राणशरीरत्वादीनामपि प्रत्यगात्मन्यसंभवपरत्व एवोत्तरसूत्रभाष्यस्वारस्यम्। प्राणशरीरत्वं हि तस्य न भवत्येव। न हि प्राणः शरीरं तस्य। प्राणः शरीरे यस्येति विग्रहः क्लिष्टः। मनोमयत्वमपि न; विशिष्य मनोग्रहणे विशेषा-भावात्। तस्य सर्वेन्द्रियवृत्तिमत्त्वात्। शुद्धस्यैवोपास्यतया ईदृशहेयाकाराणां प्रस्तुततत्क्रतुन्यायविरोधेना-

अजल्पाकः ; परिपूर्णैश्वर्यत्वाद् ब्रह्मादि स्तम्बपर्यन्तं निखिलं जगत् तृणीकृत्य जोषमासीन इत्यर्थः। त एते विवक्षिता गुणाः परमात्मन्येवोपपद्यन्ते ॥ २ ॥

अनुपपत्तेस्तु न शारीरः । १ । २ । ३॥

तमिमं गुणसागरं पर्यालोचयतां खद्योतकल्पस्य शरीरसंबन्धनिबन्धनापरिमितदुःखसंबन्धयोग्यस्य बद्धमुक्तावस्थस्य जीवस्य प्रस्तुतगुणलेशसंबन्धोऽपि नोपपद्यत इति नास्मिन् प्रकरणे शारीरपरिग्रहशङ्का जायत इत्यर्थः ॥ ३ ॥

कर्मकर्तृव्यपदेशाच्च १ । २ । ४॥

"एतमितः प्रेत्याभिसंभवितास्मि" इति प्राप्यतया परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः । अतः प्राप्ता जीव उपासकः, प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते ॥ ४ ॥

शब्दविशेषात् १ । २ । ५ ॥

"एष म आत्माऽन्तर्हृदये" इति शारीरः षष्ठ्या निर्दिष्टः ; उपास्यस्तु प्रथमया। एवं समानप्रकरणे वाजिनां च श्रुतौ शब्दविशेषः श्रूयते जीवपरयोः, (अग्निरहस्य.) "यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा, एवमयमन्तरात्मन् पुरुषो हिरण्मयः ; यथा ज्योतिरधूमम्" इति । अत्र 'अन्तरात्मन्' इति सप्तम्यन्तेन शारीरो निर्दिश्यते ;

---

विवक्षावगमाच्च । मनोग्राह्यत्वरूपार्थे तु प्रीतिरूपापन्नात्यन्तशुद्धमनोवृत्तिविषयताप्राचुर्यं परस्मिन्नेव पुष्कलमित्येवं वक्तव्यगुणोपपत्तिः परमात्मन्येव, न शारीरे इति दृढीकरणमिति । **गुणसागरं** परमात्मानम् , यद्वा गुणसमुदायम् ॥ २-३ ॥

स्वात्मनोऽपि स्वात्मकर्तृकोपासनकर्मत्वस्येष्टत्वात् कर्मकर्तृव्यपदेशः कथं भेदसाधक इत्याक्षेपाभावाय प्राप्तिक्रियाकर्मकर्तृपरतया सूत्रं योजयति **एत**मित्यादिना । **अभिसंभवितास्मि** गन्तास्मि । गच्छतीत्यादौ कर्तृकर्मणोर्भेदस्यावश्यकत्वं हि सर्वेष्टम् । **एत**मिति पराङ्निर्देशोऽप्यत एव घटते । देशविशेषावच्छिन्नप्राप्तिरत्र विवक्षितेति **इतःप्रेत्ये**त्यनेन सिद्धमेव । ननु प्राप्यप्राप्तृभेदोऽस्तु, जीवोपासनस्य किमायातमित्यत्र तत्क्रतुन्यायात् प्राप्योपास्यैक्यं दर्शयितुं **उपासकः, उपास्य**मिति ॥ ४ ॥

नन्वेक एवात्मा । स देहाद्युपाध्यवच्छिन्नो जीव आख्यायते ; अन्यादृशावच्छिन्नं च ब्रह्मेति । तत्र जीवरूपमनुपास्यम् , अन्यरूपमुपास्यमित्येव तत्त्वम् । तथा च सिद्धान्तेऽपि अभिसंभवनरूपगमनकर्मत्वं स्वाभिन्ने ब्रह्मणि औपचारिकमेव देशभेदमादाय वाच्यम् । अतः कर्मकर्तृव्यपदेशो न हेतुरित्याशंकायाम् , सूत्रद्वयेनैकात्म्यवादं निरस्यति । एवं मध्यप्राप्तशंकापरिहारपरत्वादेवात्र सूत्रे चकाराभावः । **प्रथमये**ति । देहप्रदेश एवात्मद्वयस्य श्रुतत्वान्नैक्यमिति भावः । **अन्तरात्म**न्नित्यस्य लुप्तप्रथमान्तत्वे विवक्षितार्थालाभात् लुप्तसप्तम्यन्तत्वं प्रदर्श्य व्युत्पादयति **अत्रे**ति । **अन्तरात्मन्**—शरीरान्तः जीवात्मनि ॥ ५ ॥

'पुरुषो हिरण्मयः' इति प्रथमयोपास्यः। अतः पर एवोपास्यः॥ ५॥

इतश्च शारीरादन्यः—

स्मृतेश्च १।१।६॥

(गी० १४-१५) "सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च", (गी० १५-१९) "यो मामेवमसंमूढो जानाति पुरुषोत्तमम्", (गी० १८-६१) "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया। तमेव शरणं गच्छ" इति शारीरमुपासकम्, परमात्मानं चोपास्यं स्मृतिर्दर्शयति॥ ६॥

अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न-निचाय्यत्वादेवं व्योमवच्च १।२।७॥

अल्पायतनत्वमर्भकौकस्त्वम्; तद्व्यपदेश.–अल्पत्वव्यपदेशः। "एष म आत्माऽन्तर्हृदये" इति अणीयसि हृदयायतने स्थितत्वात्, "अणीयान् व्रीहेर्वा यवाद्वा" इत्यादिनाऽणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नायं परमात्मा; अपितु जीव एव; (मु. १-१-६) "सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः" इत्यादिभिः परमात्मनोऽपरिच्छिन्नत्वागमात्, जीवस्य च आराग्रमात्रत्वव्यपदेशादिति चेत्—

नैतदेवम्; परमात्मैव ह्यणीयानित्येवं निचाय्यत्वेन व्यपदिश्यते। एवं निचाय्यत्वेन—एवं द्रष्टव्यत्वेन, एवमुपास्यत्वेनेति यावत्। न पुनरणीयस्त्वमेवास्य स्वरूपमिति। व्योमवच्चायं व्यपदिश्यते—स्वाभाविकं महत्त्वं चात्रैव व्यपदिश्यते, "ज्यायान् पृथिव्याः ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः" इति। अत उपासनार्थमेवाल्पत्वव्यपदेशः।

---

**इतश्च शारीरादन्य** इति। शरीरे शारीरस्येवान्यस्यापि स्थितिविषये स्मृतेरपि सत्त्वात् नैकात्म्यमित्यर्थः। **स्मृतेश्चे**ति चकारः मध्यप्राप्तशंकापरिहारकपूर्वहेतुसमुच्चयार्थः। **यो मामेव**मिति। **एवम्**—'परमात्मेत्युदाहृतः, यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर.' इति। सर्वान्तर्वर्तित्वेन ईश्वरैकत्वस्य सर्वपदेन प्राणिरूपभूतानेकत्वस्य चावगमादिना भेदसिद्धिः॥ ६॥

प्रधानपूर्वपक्षांशतत्परिहारविषयकमर्भकसूत्रम्। **अर्भक**शब्दोऽल्पपरिमाणार्थकः। **तच्छब्दो**ऽल्पपरिमाणकत्वार्थकः। अल्पपरिमाणस्थानकत्वात् साक्षादल्पपरिमाणकत्वव्यपदेशाच्चेत्यर्थः। **ने**ति; एतद्विद्योपास्यो न परमात्मेत्यर्थः। **चेन्ने**ति। सर्वव्यापिनोऽर्भकौकस्त्वं न साक्षात्। अणीयस्त्वमपि जीवद्वारा। व्रीह्यादयोऽणवः; अणीयान् जीवः। तं प्रति अयमात्मेति अणीयानित्युच्यते। **मे आत्मा अणीयानि**त्युक्त्या तद् व्यक्तम्। **एवं निचाय्यत्वात्** अर्भकौकस्त्वाणीयोजीवान्तरात्मत्वाभ्यामुपास्यत्वात्। ज्यायस्त्वमप्युक्तम्; तत् जीवपक्षे न घटत इत्यप्याह **व्योमवच्चे**ति। **ज्यायान्**। 'प्रशस्यस्य श्रः' इति श्रम्, 'ज्य च' इति ज्यश्च प्रशस्यशब्दात् विधाय, 'वृद्धस्य च' इति वृद्धशब्दादपि ज्यविधानात् वृद्धेश्च परिमाणाधिक्यरूपतया देशपरिमाणाधिक्यस्येह ग्रहणात् महत्तर इत्यर्थः।

तथाहि—"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति सर्वोत्पत्तिप्रलय-कारणत्वेन सर्वस्याऽऽत्मतयाऽनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्मोपासीतेत्युपासनं विधाय, "अथ खलु क्रतुमयः पुरुषः। यथाक्रतुरस्मिल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति" इति यथोपासनं प्राप्यसिद्धिमभिधाय, "स क्रतुं कुर्वीत" इति गुणविधानार्थमुपासनमनूद्य, "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति जगदैश्वर्यविशिष्टस्य स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य, "एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाक-तण्डुलाद्वा" इति उपासकस्य हृदयेऽणीयस्त्वेन तदात्मतयोपास्यस्य परमपुरुषस्योपासनार्थ-मवस्थानमुक्त्वा, "एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्य-

---

ननु,'क्रतुं कुर्वीत मनोमय' इत्याद्युपासनवाक्यात् पृथक्,एष मे इत्यारम्भात् कथमनयोरुपासनार्थत्वम्। एष म आत्माऽन्तर्हृदये इति त्रिः पाठश्च कुतः? 'उपासीत, क्रतुमयः, क्रतुं कुर्वीत' इति त्रिरुपासनं कुत उक्तम्? सर्वकर्मेत्यारभ्य अनादर इत्यन्तं द्विः कुतः पठितम्। अल्पायतनत्वाणीयस्त्वयोरिव मनोमयत्वादीनाञ्च बहूनां गुणानां प्राप्तोपासनविषयब्रह्मानुवादेन विधाने वाक्यभेदश्च। उपासितमनोमय-त्वादिपरब्रह्मधर्मवत्त्वस्य जीवात्मन्ययोगात् **तथाभवतीति** च कथमित्याशंकायां सर्ववाक्यार्थं संगृह्णाति **तथाहीति**। ब्रह्मोपासनस्य प्रथमं विधिः, पश्चात् फलकथनार्थं गुणविधानार्थञ्चानुवादः। सर्वकर्मेत्यादेः द्विः पाठः उपास्यत्वप्राप्यत्वरूपांशद्वयज्ञापनाय। त्रिहृदयावस्थानवचने च प्रथमम् उपासनार्थावस्थानबोध-नार्थम्, द्वितीयं हृदयस्थितिर्न तन्महिमभञ्जिका, हृदयस्थ एव सन् एवम्भूत इति व्युत्पादनार्थम्, तृतीयञ्च तादृशो हन्त कारुण्येन हार्दरूपेणात्र संनिधत्त इति सौलभ्यज्ञापनार्थमित्येवंरीत्या परिहार इहाभिसंहितः। **यथोपासनं प्राप्यसिद्धिमिति**। **क्रतुः** उपासनम्। **तन्मयः** तत्प्रचुरः तत्प्रधानः। **यथाक्रतुरि**त्यादि-वाक्यस्य, 'तं यथायथोपासते तदे(थै)व भवति' इति बहुवचनैकवचनरूपकर्तृभेददर्शि श्रुत्यन्तरानुसारेण उपासिताकारविशिष्टवस्तुप्राप्तिमानित्यर्थः, न तु स्वयमुपासिताकारवानित्येवेति **परिष्कारे** विवृतं द्रष्टव्यम्। अत्र निगमनरूपेण, 'एतमितः प्रेत्याभिसंभवितास्मी'ति वाक्येन उपासितवस्तुप्राप्तिरेवोच्यत इति स एव यथाक्रतुवाक्यार्थः, यत्प्रकारकोपासनवान्—फलभूतप्राप्ययादृशवस्त्ववच्छिन्नोपासनवान्, तादृशवस्त्ववच्छिन्नो भवति—तत्प्राप्तिमान् भवतीति। तत्र **एतमित्यनेन मनोमय** इत्यारभ्य **एतद्ब्रह्मे-**त्यन्तेनोक्तसर्वगुणविशिष्टात्मानं परामृश्य, प्रायणानन्तरेदृशात्मप्राप्त्यनुसंधाननिश्चयवतः प्राप्तौ न संदेह इति कथनात् मनोमयत्वादिगुणानामर्थवादलब्धानामुपासनान्वयावगमात् **टीका**दर्शितरीत्या रात्रिसत्रन्यायेन 'एतस्य क्रतुं कुर्वीते'ति एकेनैव एतत्पदेन सर्वगुणविधानमिति न वाक्यभेददोषोपीत्यपि भाव्यम्। प्रकारान्तरं सर्वमुपनिषद्भाष्यपरिष्कारादौ। न च खलुशब्दसद्भावात् ब्रह्मपदं न द्वितीयान्तमिति मन्तव्यम्; 'इदं किलाव्याजमनोहरं वपुः' इति शाकुन्तल इवोपपत्तेः। **स्वरूपगुणान्=भारूप** इति

नादरः'' इति अन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारं निर्दिश्य, ''एष म आत्माऽन्तर्हृदये एतद् ब्रह्म'' इति एवम्भूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीवयिषयाऽस्मद्धृदये संनिहितमितीदमनुसन्धानं विधाय, ''एतमितः प्रेत्याभिसंभवितास्मि'' इति यथोपासनं प्राप्तिनिश्चयानुसंधानं च विधाय, ''इति यस्य स्यादद्धा न विचिकित्साऽस्ति'' इति एवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहृतम् ।

अत उपासनार्थमर्भकौकस्त्वमणीयस्त्वं च ॥ ७ ॥

संभोगप्राप्तिरिति चेन्न वैशेष्यात् १ । २ । ८॥

जीवस्येव परस्यापि ब्रह्मणः शरीरान्तर्वर्तित्वमभ्युपगतं चेत्, तद्वदेव शरीरसंबन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेत्—तन्न, हेतुवैशेष्यात् । न हि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगहेतुः; अपि तु पुण्यपापरूपकर्मपरवशत्वम् । तत्तु अपहतपाप्मनः परमात्मनो न संभवति । तथा च श्रुतिः, (मुं. ३-१) ''तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन् अन्यो अभिचाकशीति'' इति ॥ ८ ॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥

13. अत्त्रधिकरणम् ॥ २ ॥ (कठ. १-२-२५)

यदि परमात्मा न भोक्ता, एवं तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्याशङ्क्याह—

अत्ता चराचरग्रहणात् । १ । २ । ९॥

कठवल्लीष्वाम्नायते, ''यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः । मृत्युर्यस्योपसेचनम्, क इत्था वेद यत्र सः'' इति । अत्रौदनोपसेचनसूचितोऽत्ता किं जीव एव, उत परमात्मेति

---

दिव्यरूपं धर्माश्च । **निश्चयानुसंधानम्** निश्चयात्मकचिन्तनम् । उपसंहरति **अत उपासनार्थ**मिति । **अर्भकौकस्त्वं** विग्रहद्वारकम् । अणीयस्त्वं जीवद्वारकमित्युभयमुपासनविषय इति भावः ॥ ७ ॥

**संभोगे**ति । समित्येकीकारे । निरन्तरसंश्लेषमूलकभोगः । भोग इह सुखदुःखोभयविषयकः । स एव वा मिश्रभोगः संभोगः ॥ ८ ॥

अवान्तरसंगतिं दर्शयति **यदि परमात्मे**ति । संभोगप्राप्तिसूत्रे भोक्तृत्वाभावस्योक्तत्वादिति भावः ।

**उपसेचनं** ओदने भोज्यत्वाय सिच्यमानं दध्यादि । **क इत्था वेद यत्र सः** । यस्मिन् प्रकारे सोऽत्ता वर्तते, तं प्रकारं क इत्थमिति विशिष्य वेद । एवं वा—नाविरतो दुश्चरितादिति पूर्वमन्त्रे दुराचाराकृत्यकरणादौ सति प्रज्ञानेनाऽस्य प्राप्त्यसंभवस्योक्तत्वादुच्यते, यस्मिन्नुपाये सति स प्राप्यते, यं स उपायत्वेन स्वीकरोति, तं को वेद । उपायस्य लघुत्वे हि ब्रह्मक्षत्रे प्रायः संह्रियमाणतामनवाप्य मुक्तिभाजी भवेतामिति । अतएवाभिज्ञवर्णयोर्विशिष्य ग्रहणम् । वक्ष्यते चैतदर्थो भाष्ये, तत्प्रसादात् ऋते तस्य दुरवबोधत्वमिति । मन्त्रे अत्तृपदाभावात् कथं विषयवाक्यमिदं स्यादित्यत्राह **ओदनोपसेचनसूचित** इति । आनन्दमय,

संदिह्यते । किं युक्तम् ? जीव इति । कुतः ? भोक्तृत्वस्य कर्मनिमित्तत्वात् जीवस्यैव तत्संभवात् ॥

अत्रोच्यते—अत्ता चराचरग्रहणात् । अत्ता परमात्मैव । कुतः ? चराचरग्रहणात् । चराचरस्य कृत्स्नस्यात्तृत्वं हि तस्यैव संभवति । न चेदं कर्मनिमित्तंभोक्तृत्वम्; अपि तु जगज्जन्मस्थितिलयहेतुभूतस्य परस्य ब्रह्मणो विष्णोः संहर्तृत्वम्; (कठ.१-३-९) "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति अत्रैव दर्शनात् । तथा च, "मृत्युर्यस्योपसेचनम्" इति वचनात्, "ब्रह्म च क्षत्रं च" इति कृत्स्नं चराचरं जगदिहादनीयौदनत्वेन गृह्यते । उपसेचनं हि नाम स्वयमद्यमानं सत् अन्यस्या[प्य]दनहेतुः । अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात् तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमिति गम्यते ।

---

इत्यादौ आनन्दमयशब्दार्थ इति पक्षनिर्देशः । अत्रात्तृशब्दाभावात् अत्तृत्वेनावगम्यमान इति पक्षो निर्देष्टव्यः । एतेन परमात्मनोऽत्तृत्वस्य सिद्धान्तेऽनिष्टेः संहर्तृत्वस्यैवेष्टेः कथमत्तृपदेन परमात्मग्रहणमिति निरस्तम् । अत्तृत्वेन प्रतीतेरक्षतेः । एवं प्रयुञ्जानः सूत्रकारः, 'निगीर्य पुनरुद्गिरति त्वदन्यः कः' इत्युक्तरीत्या प्रलये सर्वं भक्षयित्वा उदरे निधाय वटपत्रे शेत इति प्रसिद्ध्या अत्तृत्वमप्यस्तीत्याशयमुद्गिरति । अत्तेत्यनेन, "स यत्यदेवासृजत, तत्तदत्तुमध्रियत; सर्वं वा अत्तीति' (बृ. ३-२-५) इति श्रुतिरपि सूच्यते । तत्संभवादिति । नन्वोदनभोक्तृत्वस्य जीवे संभवेऽपि ब्रह्मक्षत्रभोक्तृत्वं कथम् ? अतः ब्रह्मक्षत्रयोरोदनत्वरूपणवत् ब्रह्मक्षत्रसंबन्धिकिञ्चित्कार्यकर्तरि अत्तृत्वरूपणमात्रमिति चेत्—उच्यते-रूपणोपयोगिसादृश्यमन्तरेणान्तरङ्गेणाकारेण भवदेव ग्राह्यम् । ओदने च भुज्यमाने भोज्यत्वं भोग्यत्वं (संहार्यत्वरूपं) विनाश्यत्वञ्च सन्ति । तत्र पूर्वपूर्वमन्तरङ्गम् । अतो ब्रह्मक्षत्रभोजनकर्ता वा तद्भोगवान् वा भोक्तैव ग्रहीतुमुचितः; न तु संहर्ता । स च जीव एवेति । मृत्योर्भोग्यत्वञ्च भोक्तुर्भोगप्रतिबन्धकप्राणिमारणादिरूपसाहाय्यात् मृत्युक्रियमाणादिति भाव्यम् ।

मृत्यूपसेचनत्वश्रवणात् सर्वब्रह्मक्षत्रतदन्यग्रहणावश्यकतां प्रदर्शयति कृत्स्नस्यात्तृत्वं हीति। भोजनकर्तृत्वं वा भोगवत्त्वं वा नाशकत्वं वा किमप्यस्तु, तत् चराचरविषयकं तस्य भवत्येव; तस्यैव च भवति । न च गलाधःसंयोगानुकूलव्यापारोऽदनम्; अतिव्याप्तेरव्याप्तेश्च । अस्तु वा परिणामविशेषार्थकुक्षिप्रवेशनमदनम्; तदप्यक्षतम्; 'वक्त्राणि ते त्वरमाणा विशन्ति', 'लेलिह्यसे ग्रसमानः समन्तात्' इति विश्वरूपे प्रदर्शनात् । ब्रह्म च क्षत्रञ्चेत्यस्य समष्टिव्यष्टिसर्वोपलक्षकत्वसंभवेऽपि चराचरेत्युक्तिः मृत्योस्तत्रैवोपसेचनत्वसंभवात् । तस्योपसेचनत्वश्रवणात् तन्मूलसंहार्यसर्वग्रहणमावश्यकमिति न कतिपयब्रह्मक्षत्रभोग्यकत्वविवक्षेति भावः । ननु जगत्संहरणकार्यनियुक्तस्य मृत्युञ्जयस्य हरस्य जीवस्यात्र विवक्षा स्यादित्यत्राह अपित्विति । ब्रह्मरुद्रादेरपि संहर्तरि प्रकरणार्थे विष्णौ जाग्रति न तत्त्यागप्रसक्तिः । कामं मृत्युपदेन संहारकत्वात् तस्य ग्रहणमस्तु । अहं यस्योपसेचनमित्यनुक्त्वा मृत्युरिति प्रयोगस्य तुल्यातुल्यसर्वमृत्युग्रहणतात्पर्यकत्वसंभवादिति भावः । अन्तरङ्गाकारस्यैव ग्रहणम् । भुक्तत्वव्यापकं विनश्यत्त्वमिति तत्रैव पर्यवसान-

ईदृशं चादनमुपसंहार एव। तस्मादीदृशं जगदुपसंहारित्वरूपं भोक्तृत्वं परमात्मन एव ॥९॥

प्रकरणाच्च १। २। १०॥

प्रकरणं चेदं परस्यैव ब्रह्मणः—(कठ. १-२-२२) "महान्तं विभुमात्मानं मत्वा धीरो न शोचति", (कठ.१-२-२३) "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते, तेन लभ्यः; तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति हि प्रकृतम्। "क इत्था वेद यत्र सः" इत्यपि हि तत्प्रसादादृते तस्य दुरवबोधत्वमेव पूर्वप्रस्तुतं प्रत्यभिज्ञायते ॥१०॥

अथ स्यात्—नायं ब्रह्मक्षत्रौदनसूचितः पुरुषोऽपहतपाप्मा परमात्मा; अनन्तरम्, (कठ. १-३-१) "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इति कर्मफलभोक्तुरेव सद्वितीयस्याभिधानात्। द्वितीयश्च प्राणः, बुद्धिर्वा स्यात्। ऋतपानं हि कर्मफलभोग एव। स च परमात्मनो न संभवति; बुद्धिप्राणयोस्तु भोक्तुर्जीवस्योपकरणभूतयोर्यथाकथञ्चित् पानेऽन्वयः संभवतीति तयोरन्यतरेण सद्वितीयो जीव एव प्रतिपाद्यते। तदेकप्रकरणत्वात् पूर्वप्रस्तुतोऽत्ताऽपि स एव भवितुमर्हति इति॥ तत्रोच्यते—

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् १। २। ११।

---

मिति विश्वरूपाद्यननुसंधानेऽपि न क्षतिरिति भावेनाह **ईदृशश्चादनमुपसंहार एवेति**। **चराचरग्रहणा**दित्यस्य ब्रह्मक्षत्रपदाभ्यां चराचरोपलक्षणादित्यर्थः। यद्वा उपलक्षणमर्थसिद्धम्। अत्ता परमात्मा उपलक्षितचराचरग्रसनादित्यर्थः ॥ ९ ॥

ननु उत्तरमन्त्रैकवाक्यतैवास्यात्तृमन्त्रस्य किं न स्यात्। किञ्च पूर्वं परमात्मनः प्रकृतत्वेऽपि जीवस्यापि कर्तृत्वेन गृहीतत्वात्, 'नाविरतो दुश्चरितात्' इति तस्य निषिद्धवर्जनादेरुक्त्या, मृत्युमपि वशीकृत्य ब्रह्मक्षत्ररूपमहनीयभक्षणेऽपि प्रवृत्तस्यासुरप्रायस्य यादृशपापराशौ स्थितिः, तं को वेदेति पापप्रसक्तिरेवात्र जीवेऽत्तरि वर्ण्यताम्। समनन्तरमन्त्रे पिबन्ताविति पानकर्तुरुक्तत्वात्। अत्तैव हि पाता भवति। कर्मफलपानबोधनाच्च प्रागपि कर्मनिमित्तभोजनमेव ग्राह्यम्। पिबन्तं निर्दिश्य तेनापिबतोऽप्युपलक्षणात् पिबतः प्राधान्यम्, यथा छत्रिणो यान्ति इत्यादौ छत्र्यादेः। परमात्मग्रहणे च पिबत्प्राधान्यमपैति। अत उपरि परमात्माग्रहणात् इहात्ता जीव एव। तस्य दुश्चरितादिजन्यनरकाद्यनर्थ इहोच्यते; ऋतं पिबन्ताविति च स्वर्गादिहेतुपारवश्यममर्मादितत्प्रयुक्तमिति स्यादिति शंकते **अथस्यादिति**।

**बुद्धिप्राणयोरिति**। ज्ञानोपकरणेषु प्रधानं बुद्धितत्त्वम्, क्रियोपकरणेषु प्राणः। अध्यवसायस्य पूर्वभावित्वात् बुद्धिर्वेति तस्यामादरः; पैङ्गिरहस्यानुसारस्तदेत्याशयाच्च। छायेति स्त्रीलिङ्गाच्च। दम्पती कल्प्येते। दम्पत्योः फलभाक्त्वं श्रुत्यादिप्रसिद्धम्। **गुहांप्रविष्टाविति**। पिबन्तौ जीवपरमात्मानौ गुहाप्रविष्टाभिन्नत्वात्; गुहाप्रविष्टौ आत्मानौ तथाश्रुतत्वादिति सूत्रार्थः। ननु विवक्षातः कारकाणि भवन्तीति

न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टौ ऋतं पिबन्तावित्युच्येते ; अपि तु जीवपरमात्मानौ हि तथा व्यपदिश्येते । कुतः ? तद्दर्शनात् । अस्मिन् प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशो दृश्यते । परमात्मनस्तावत्, (कठ. १-२-१२), 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति'' इति । जीवस्यापि, (कठ.४-७)''या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत'' इति । कर्मफलानि अत्तीत्यदितिर्जीव उच्यते । प्राणेन संभवति—प्राणेन सह वर्तते । देवतामयी इन्द्रियाधीनभोगा । गुहां प्रविश्य तिष्ठन्ती—हृदयपुण्डरीकोदरवर्तिनी । भूतेभिर्व्यजायत—पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधा जायते । एवं च सति, "ऋतं पिबन्तौ" इति व्यपदेशः 'छत्रिणो गच्छन्ति' इतिवत् प्रतिपत्तव्यः । यद्वा—प्रयोज्यप्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते ॥ ११ ॥

विशेषणाच्च १ । २ । १२ ।

अस्मिन् प्रकरणे जीवपरमात्मानावेव उपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते । तथाहि—(कठ. १-१-१८) ''ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति'' इति । ब्रह्मजज्ञो जीवः ; ब्रह्मणो जातत्वात् ज्ञत्वाच्च । तं देवमीड्यं विदित्वा—जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः । तथा, (कठ.१-३-२) "यः सेतुरीजानानामक्षरं ब्रह्म यत् परम् । अभयं तितीर्षतां पारं नाचिकेतं शकेमहि(सि)'' इत्युपास्यः परमात्मोच्यते । नाचिकेतम्—नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः । (कठ.१-३-३) "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्यादिनोपासको जीव उच्यते । तथा, (कठ.१-३-९) विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम्" इति

---

अकर्तर्यपि कारके प्राणादौ कर्तृत्वविवक्षया पिबन्ताविति निर्देशः पूर्वपक्षे उपपद्यते ; न तु सिद्धान्ते; परमात्मन्युपकरणत्वस्याप्यभावादित्यत्राह **एवञ्च सतीति** । किमनया लक्षणया ; पूर्वपक्षादपि सिद्धान्त एवाञ्जस्यम्, कर्तृकारकत्वस्यैव स्वरसत एव परमात्मनि सत्त्वादित्याह **यद्वेति** । ऋतपदेन कर्मफलस्वर्गादेरिव लीलारसस्यापि ग्रहणे तु पानकर्तृत्वमपि परमात्मनो भवति; 'एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगाम्' (मंत्रि) इति श्रवणात् ।

ननु छायातपाविति स्ववाक्ये श्रवणात् अप्रकाशस्वभावस्याचेतनस्य छायापदेन ग्रहणमिति न परमात्मना सद्वितीयत्वं प्रकृतमन्त्रार्थ इत्यत्र, कृत्स्नेऽपि प्रकरणे आत्मनोरेव व्यवहारात् द्वितीयत्वेन तस्यैव ग्रहणं युक्तमित्याशयेन **विशेषणाच्चेति** प्रवृत्तम् । **यः सेतुरिति** । अत्रैश्वर्यकैवल्यापवर्गाणामेतदधीनत्वं पादत्रयविवक्षितं स्यात् । सर्वत्रोभयोरेवोपस्थित्या, उपक्रमेऽपि 'न जायते' इति जीवं प्रतिबोध्य परमात्मनः प्रोक्ततया, पिबन्ताविति कर्तृत्वौचित्यात्, गुहाप्रवेशकण्ठोक्तेश्च तयोरेव बुद्धिस्थत्वे छायाशब्दमात्रेण न तत्त्यागप्रसक्तिः । तर्हि छायाशब्देन कथं स्वप्रकाशजीवग्रहणमित्यत्राह **इहापीति** ।

प्राप्यप्राप्तारावभिधीयेते जीवपरमात्मानौ। इहापि, (कठ. १-३-१) " छायातपौ " इत्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते ॥

अथ स्यात्—(कठ. १-१-२०) ।' येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके " इति जीवस्वरूपयाथात्म्यप्रश्नोपक्रमत्वा(क्रमा)त् सर्वमिदं प्रकरणं जीवपरमिति प्रतीयते—इति ॥ नैतदेवम्। न हि जीवस्य देहातिरिक्तस्यास्तित्वनास्तित्वशङ्कयाऽयं प्रश्नः; तथा सति पूर्ववरद्वयवरणानुपपत्तेः। तथा हि पितुः सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं मन्यमानेन कुमारेण नचिकेतसा आस्तिकाग्रेसरेण स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छता, (कठ. १-२-४) " कस्मै मां दास्यसि " इत्यसकृद् पितरं पृष्टवता, स्वनिर्बन्धरुष्टपितृवचनान्मृत्युसदनं प्रविष्टेन, स्वसदनात् प्रोषुषि यमे तददर्शनात् तत्र तिस्रो रात्रीरुपोषुषा, स्वोपवासभीततत्प्रतिविधानप्रवृत्तमृत्युप्रदत्ते वरत्रये आस्तिक्यातिरेकात् प्रथमेन वरेण स्वात्मानं प्रति पितुः प्रसादो वृतः। एतच्च सर्वं देहातिरिक्तमात्मानमजानतो नोपपद्यते। द्वितीयेन च वरेणोत्तीर्णदेहात्मानुभाव्यफलसाधनभूताऽग्निविद्या वृता। तदपि देहातिरिक्तात्मानभिज्ञस्य न संभवति। अतस्तृतीयेन वरेण यदिदं व्रियते, (कठ. १-१-२० ) " येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद् विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः" इति—अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासन-परावरात्मतत्त्वजिज्ञासया अयं प्रश्नः क्रियते। एवं च " येयं प्रेते " इति न शरीरवियोगमात्राभिप्रायम्; अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायम्। यथा, (बृ. ४-४-१२)"न प्रेत्य संज्ञाऽस्ति" इति। अयमर्थः—मोक्षा-

---

ऋतमन्त्रेऽपीत्यर्थः। **तावेवेति**। पञ्चाग्निशुश्रूषापरिशुद्धान्तःकरणैर्नाचिकेतानुवाकत्रयाध्ययनजन्यतत्त्वहितवेदनैः ब्रह्मविद्भिर्न हि परमात्मानं विहाय प्राणसद्वितीयजीवमात्रवर्णनप्रसक्तिरिति ज्ञापयितुमेवकारः।

ननु त्रिणाचिकेतानां जीवात्मनिरूपणैदम्पर्यमेव: तथैवात्र कठोपनिषद्यपि प्रतीतेः। कामं परमात्मा नापलप्यताम्—अथापि इन्द्रस्योपेन्द्र इव, बलदेवस्य कृष्ण इव च पिबतो जीवस्य सर्वसंभरणार्थं संनिहितः पर इति तदर्थं तत्प्रस्तावेऽपि उपनिषत्प्रधानप्रतिपाद्यो जीव एवेति शंकते **अथ स्यादिति**। **सर्ववेदसेति**। यद्यपि, " अनसन्तान्नपुंसकाच्छन्दसि " इति अन्नन्तात् असन्ताच्च तत्पुरुषात् छन्दस्येव टच्—अथापि अर्थप्रामाणिकत्वाय तत्रत्यपदानुकरणमिदम्। **पितृवचनात्**—पितृवचनपरिपालनार्थं श्रद्धया स्वत एव। **यदिदमिति** वरणक्रियाविशेषणम्। यच्छब्दप्रतिसंबन्धि उपरि **अत्रेति**पदम्। तृतीयवररूपं यद् वरणम्—तदपेक्षितांशबोधकपदजातप्रयोगः, तस्मिन्नित्यर्थः। अस्य **अयं प्रश्नः** इत्यत्रान्वयः। एतत्पदजातप्रयोगाभिप्रेतः प्रायणानन्तरात्मसदसद्भावानुशासनविषयः प्रश्नः मोक्षयाथात्म्यज्ञानार्थपरावरतत्त्वपरोपासनरूपार्थत्रयज्ञानवाञ्छाप्रयुक्त इत्यर्थः। **न प्रेत्य संज्ञाऽस्तीति**—संज्ञेति देवादिदेहैरेकीकारात्मकभ्रमं निर्दिश्य तदभावस्य मैत्रेयीं प्रति कथनात् प्रेत्येति चरमशरीरवियोगो

धिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषयवादिविप्रतिपत्तिनिमित्ता अस्तिनास्त्यात्मिका येयं विचिकित्सा, तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यां जानीयाम् इति।

तथा हि बहुधा विप्रतिपद्यन्ते—केचित् वित्तिमात्रस्याऽऽत्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते। अन्ये वित्तिमात्रस्यैव सतोऽविद्यास्तमयम्। परे पाषाणकल्पस्याऽऽत्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम्। अपरे तु अपहतपाप्मानं परमात्मानमभ्युपगच्छन्तः, तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्य उपाध्यपगमेन तद्भावलक्षणं मोक्षमातिष्ठन्ते। त्रय्यन्तनिष्णातास्तु—निखिलजगदेककारणस्य अशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्य, अनुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्य अनादिकर्मरूपाविद्यातिरोहितस्वरूपस्य अविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते। तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादात् विद्यामिति नचिकेतसा पृष्टो मृत्युः, तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन विविधभोगवितरणप्रलोभनेन चैनं परीक्ष्य योग्यतामभिज्ञाय परावरात्मतत्त्वविज्ञानम्, परमात्मोपासनम्, तत्पदप्राप्तिलक्षणं मोक्षं च, "तं दुर्दर्शं गूढमनुप्रविष्टम्" इत्यारभ्य, "सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम्" इत्यन्तेनोपदिश्य तदपेक्षितांश्च विशेषान् उपदिदेशेति सर्वं समञ्जसम्। अतः परमात्मैवात्तेति सिद्धम्॥ १२॥ इति अत्त्रधिकरणम्॥ २॥

---

ह्यभिमत इति भावः। उपनिषत्सु प्रायपदं प्रायो मोक्षार्थशरीरवियोगपरमेव। यथा, 'उताविद्वानमुं लोकं प्रेत्य', 'एतमितः प्रेत्याभिसंभवितास्मि' इत्यादौ। इहापि पूर्वं 'तरति जन्ममृत्यू' इति, 'स मृत्युपाशान् पुरतः प्रणोद्य', 'येन पुनर्न जायते' इति श्रवणात् उपस्थितं प्रायणं चरमशरीरवियोग एवेति मन्तव्यम्। **विद्यामिति** तिङन्तम्। **अस्तिनास्त्यात्मिके**ति। नास्तीतिपक्षे नाधिको विचारः; अस्तीति पक्षे च किंरूपोऽस्तीति प्रश्नः प्रवर्तते; तत्र वैविध्यमिति **बहुधे**त्युक्तम्। **केचित्** माध्यमिकाः। **अन्ये** शाङ्कराः। **परे** तार्किकाः। **वैशेषिकगुणाः** विशेषगुणाः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाः। **अपरे** भास्करीयाः। यादवप्रकाशपक्षस्तु स्वरूपोच्छित्तिसोदरः। **त्रय्यन्तनिष्णाताः** विशिष्टाद्वैतिनः। **ब्रह्मणः** इति **शरीरतया प्रकारे**त्यनेनान्वितम्। **अनुकूलेति**—अनुकूलमानन्दरूपं अपरिच्छिन्नधर्मभूतज्ञानकं स्वरूपं यस्य तस्येत्यर्थः। **अनुभवमेवे**ति। 'अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः' इति ब्रह्मज्ञानरूपा या श्रुतिसिद्धा सत्ता, तस्याः परां काष्ठामेवेत्येवकाराभिप्रायः। **तत्साधनञ्चे**ति। मुमुक्षुणा मोक्षस्वरूपप्रश्नः क्रियमाणो हि तल्लाभार्थ एव। अतः **एत**दिति मन्त्रस्थं पदं परिप्रश्नकर्तुर्नचिकेतसोऽभिप्रेतप्राप्यप्राप्तृप्रापकत्रितयविषयकमिति भावः। **परीक्ष्ये**ति। तथाच परमपुरुषार्थपरत्वादस्य, परमपुरुषस्य प्रधानप्रतिपाद्यत्वात् तत्परत्वमेव ब्रह्मक्षत्रमन्त्रस्येति भावः। **विशेषान्** वशीकार्यवर्गादीन्। **विशेषाच्चे**त्यस्य आत्मनोर्द्वयोरेवात्र प्रकरणेऽनेकैर्विशेषणैर्विशेषितत्वाच्च ऋतमन्त्रोक्तावपि तावेवेत्यर्थः॥ १२॥

14. अन्तराधिकरणम् ॥ ३ ॥ (छा. ४-१५)

अन्तर उपपत्तेः १।२।१३॥

इदमामनन्ति च्छन्दोगाः(४. १५.)"य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच,एतदमृतमभयम्; एतद्ब्रह्म" इति। तत्र संदेहः—किमयमक्ष्याधारतया निर्दिश्यमानः पुरुषः प्रतिबिम्बात्मा, उत चक्षुरिन्द्रियाधिष्ठाता देवताविशेषः, उत जीवात्मा, अथ परमात्मा इति। किं युक्तम्? प्रतिबिम्बात्मेति। कुतः? प्रसिद्धवन्निर्देशात्; 'दृश्यते' इत्यपरोक्षाभि-

---

तज्जलानिति कारणपरं वाक्यं जीवपरं न भवतीत्युक्तम्; ब्रह्मक्षत्रमन्त्रोपि संहारकारणपरो न तथेत्युक्तम्। अत्र कारणत्वव्याप्यमुक्तप्राप्यत्वविषयकवाक्यस्याऽऽन्यपर्यमपास्यते। पूर्वं 'तं दुर्दर्शम्': 'क इत्था वेद' इति दुर्ज्ञानत्वस्य,'गुहां प्रविष्टौ' इति हृदयप्रविष्टत्वस्य च परमात्मनि उक्ततया, दृश्यमानत्वेनाक्षिस्थत्वेन चोक्तस्तदन्य इति शङ्कयेदमधिकरणम्। उपकोसलविद्यायां लक्ष्यते — सत्यकामे चिरं ब्रह्मचर्यमुषितवान् उपकोसलो गुरौ प्रोषुषि विद्यानवाप्त्या खिन्नः परिचरणप्रीतैः लेताग्निभिः, 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति ब्रह्मविद्याम्, पश्चात् प्रत्येकं स्वस्वाग्निविद्याञ्चोपदिश्य, आचार्यो गतिं वक्तेत्यनुगृहीतः, परावृत्तेनाचार्येण विज्ञाय प्रीतेनाक्षिपुरुषं प्रस्तुत्य मोक्षगतिमुपदिष्ट इति। तत्राचार्योपदेशवाक्यार्थविचारमुखेन पूर्णविद्याविचार इह। अग्न्युपदेशे ब्रह्मशब्देन परमात्मैव गृह्यताम्, मा वा। अथ पृथक्फलाग्निविद्याभिस्तिसृभिर्व्यवधानात् पूर्वविषयकत्वायोगात् आचार्योपदेशे वाक्योपक्रमस्वारस्यादन्य एव ग्राह्य इति पूर्वपक्षी। तदाह **किमय**मित्यादिना।

प्रतिबिम्बवत् दृश्यमानत्वाभावेऽपि अन्यत्र दृश्यस्य देवताविशेषस्याऽऽदित्यस्याक्ष्यन्तर्वर्तित्वमप्यधिष्ठानशक्तिबलात् संभाव्यते; न जीवस्य। शरीरावयवेषु सर्वेषु जीवाधिष्ठितेषु विशिष्याक्षिग्रहणाच्च जीवग्रहणपक्षो न स्वरस इति देवतापक्षस्य द्वितीयकोटितया निर्देशः। पूर्वपक्षोपन्यासे परिवर्तनं तु प्रत्यक्षानन्तरमनुमानम्, ततः शब्द इति प्रमाणक्रमचिन्तया; इतरावयवापेक्षया अक्ष्णो जीवस्थित्यनुमापकत्वसौकर्यचिन्तया च। एवमत्र पौर्वापर्ये न नैर्भर्यम्। कामं प्रतिबिम्बपक्ष एव वा **दृश्यत** इति पदस्वारस्यादाद्रियतामिति ज्ञापयितुमुपरि, **एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामेवान्यतम** इत्यधिकवाक्येनोपसंहारः। अत एवा**धिकरणसारावली** जीवदेवताप्रतिबिम्बरूपान्यादृशक्रमादरणेन प्रतिबिम्बपक्षप्रपञ्चनम्। अक्षिमूलमनुमानत इव प्रजापतिवाक्ये, 'य एषोक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म' इत्येतदानुपूर्व्यैवात्रेव श्रवणात् श्रुतिप्रसिद्ध्या तत्रेवात्रापि जीव इति प्रथमः पक्षः। 'एष उ एव भामनिः; एष हि सर्वेषु लोकेषु भाति' इति अत्र श्रवणात् तस्यादित्य एवान्वयात् तस्यापि श्रुतिप्रसिद्ध्या देवतेति द्वितीयः पक्षः। दृश्यत इति पदस्वारस्यलङ्घने परमात्मन एव ग्राह्यत्वापत्त्या प्रतिबिम्ब एव ग्राह्य इति तृतीयः। **शाङ्करे** इह पूर्वपक्षदर्शितक्रम एव प्रतिरूपविज्ञानात्मदेवतात्मरूप आदृतः; न तु संशयावसरदर्शितः **टीका**नूदितः क्रमः। **भामत्याम्**—देवतादिपूर्वपक्षस्य अन्तस्तद्धर्मोपदेशादिति अन्तरधिकरणेनैव निरस्ततया तदुपमर्देनास्मिन् अन्तराधिकरणे पूर्वपक्षः दृश्यत इत्युपक्रमस्थपदस्वारस्यादिनैव वक्तव्य इति

धानाच्च । जीवात्मा वा । तस्यापि हि चक्षुषि विशेषेण संनिधानात् प्रसिद्धिरुपपद्यते । उन्मीलितं हि चक्षुरुद्वीक्ष्य जीवात्मनः शरीरे स्थितिगती निश्चिन्वन्ति । (बृ ७-५-१) "रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः" इति श्रुतिप्रसिद्धया चक्षुःप्रतिष्ठो देवताविशेषो वा । एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामन्यतमः—

इति प्राप्ते प्रचक्ष्महे—अन्तर उपपत्तेः । अक्ष्यन्तरः परमात्मा । कुतः ? "एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामान्यभिसंयन्ति । एष उ एव वामनीः । एष हि सर्वाणि वामानि नयति । एष उ एव भामनिः । एष हि सर्वेषु लोकेषु भाति "इत्येषां गुणानां परमात्मन्येवोपपत्तेः ॥ १३ ॥

## स्थानादिव्यपदेशाच्च १ । २ । १४ ॥

चक्षुषि स्थितिनियमनादयः परमात्मन एव, (बृ. ५-७-२२) "यश्चक्षुषि तिष्ठन्" इत्येवमादौ व्यपदिश्यन्ते । अतश्च, "य एषोऽक्षिणि पुरुषः" इति स एव प्रतीयते । अतः प्रसिद्धवन्निर्देशश्च परमात्मन्युपपद्यते । तत एव 'दृश्यते' इति साक्षात्कारव्यपदेशोऽपि योगिभिर्दृश्यमानत्वादुपपद्यते ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च १ । २ । १५ ॥

---

छायापुरुष इत्येव पूर्वपक्ष इति निष्कृष्टम् ; तथेह **सारावलावपीत्यलम्** । **संनिधानात् प्रसिद्धिरिति** । चक्षुर्मूलं शीघ्रमवगमात् प्रसिद्धिरित्यर्थः । दृशेरुपलब्धिपर्यायत्वादानुमानिकमपि दर्शनं भवतीत्याशयः । **रश्मिभिरिति** । अत्र **अस्मिन्** इत्यस्याक्षिपुरुषे इत्यर्थेऽपि अक्षिणीति पर्यवसानं वाच्यम् ।

**वामानि** कल्याणानि । **एषां गुणानामिति** । ननु उपरितनबह्वनुरोधेनोपक्रमस्थं नेयमिति इन्द्रप्राणाधिकरणादौ सिद्धमिति कोऽत्र विशेष इति चेत्—तत्रोपक्रमप्रतीतार्थात्यागेनैव निर्वाहात् ब्रह्मपरत्वं युक्तम्, न त्विह, दर्शनभङ्गादिति शंकायाम्, दर्शनमपि योगिकर्तृकमिहापि घटत इति नोत्तरान्यथाकरणं युक्तमित्युच्यते । न च प्रतिबिम्बोऽप्येकेन दृश्यमानः परेण दृश्यते, तथा च **एष दृश्यते** इत्येतत्स्वारस्यं न लक्ष्यते । स्वारस्यभङ्गेऽप्युत्तरबह्वनुसार एव कार्य इति च तदुपपादनमेतधिकरणार्थः ।

ननु योगिभिर्वा कथं दर्शनं चक्षुषि, हृदय एव तत्प्रसिद्धेरित्यत्रोत्तरं सूत्रम् । **स्थानं** स्थितिः । तिष्ठन्निति कथितेयम् । देशपरत्वे स्थानत्वादीति स्यात् । **अनवस्थितेरिति** उपरि व्यतिरेकाच्च स्थितिरेवार्थः ।

उपक्रमानुसार इति चायुक्तम् । अग्निकर्तृकब्रह्मोपदेशस्यैवोपक्रमोपक्रमत्वादित्याशयेनोपरि सूत्रम् । ननु तत्रोक्तस्य प्राणस्य सुखस्याकाशस्य चाक्षिण्यदृश्यत्वादपुरुषत्वाच्च कथं तत् एतच्चैकविषयमिति शङ्कानुन्मेषाय **सुखविशिष्टेत्युक्तम्** । **कशब्दः** विशिष्टपर इति भावः । प्राणविशिष्टेत्युक्तौ जीवव्यावृत्त्यसिद्धिरिति तदुपेक्षा । सुखेन **विशिष्टः** अतिशयित इत्यर्थात् अपरिच्छिन्नसुखवत्त्वस्य तत्र श्रुतस्योक्त्या जीवव्यावृत्तिः । उत्तरसूत्रे **अतएवेति** प्रयोगसौकर्याय चैवम् । **एवकारः** आनन्दमयाधिकरणप्रसिद्धमिदमेकं पर्याप्तमिति

इतश्चास्याधारः पुरुषोत्तमः ; (४-१०-५) " 'कं ब्रह्म खं ब्रह्म" इति प्रकृतस्य सुखविशिष्टस्य ब्रह्मणः उपासनस्थानविधानार्थं संयद्वामत्वादिगुणविधानार्थश्च, 'य एषोऽक्षिणि पुरुषः' इत्यभिधानात् । एवकारो नैरपेक्ष्यं हेतोर्द्योतयति ।

नन्वग्निविद्याव्यवधानात्, 'कं ब्रह्म' इति प्रकृतं ब्रह्म नेह संनिधत्ते । तथा हि— अग्नयः, "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति ब्रह्मविद्यामुपदिश्य, "अथ हैनं गार्हपत्योऽनुशशास" इत्यारभ्याग्नीनामुपासनमुपदिदिशुः । न चाग्निविद्या ब्रह्मविद्याङ्गमिति शक्यं वक्तुम् ; ब्रह्मविद्याफलानन्तर्गत-तद्विरोधि-सर्वायुःप्राप्ति-सन्तत्यविच्छेदादिफलश्रवणात् ।

उच्यते—"प्राणो ब्रह्म", 'एतदमृतमभयमेतद्ब्रह्म' इति उभयत्र ब्रह्मसंशब्दनात्, "आचार्यस्तु ते गतिं वक्ता" इत्यग्निवचनाच्च गत्युपदेशात्पूर्वं ब्रह्मविद्याया असमाप्तेः तन्मध्यगताऽग्निविद्या ब्रह्मविद्याङ्गमिति निश्चीयते ; "अथ हैनं गार्हपत्योऽनुशशास" इति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेशाच्च । किञ्च, "व्याधिभिः प्रतिपूर्णोऽस्मि" इति ब्रह्मप्राप्तिव्यतिरिक्तनानाविधकर्मोपहतिपूर्वक-गर्भजन्मजरामरणादिभवभयोपतप्ताय उपकोसलाय, "एषा सोम्य! ते अस्मद्विद्या चाऽऽत्मविद्या च" इति समुच्चित्योपदेशात् मोक्षैकफलात्मविद्याङ्गत्वमग्निविद्यायाः प्रतीयते । एवञ्चाङ्गत्वेऽवगते सति फलानुकीर्तनमर्थवाद इति गम्यते । न चात्र मोक्षविरोधिफलं किञ्चिच्छ्रूयते, "अपहते पापकृत्याम्, लोकी भवति, सर्वमायुरेति, ज्योग् जीवति ; नास्यावरपुरुषाः क्षीयन्ते ; उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च" इत्यमीषां फलानां मोक्षाधिकृतस्यानुगुणत्वात् । अपहते पापकृत्याम्—ब्रह्मप्राप्तिविरोधि पापं कर्मापहन्ति । लोकी भवति—तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोति । सर्वमायुरेति-ब्रह्मोपासनसमाप्तेर्यावदायुरपेक्षितम्, तत् सर्वमेति । ज्योग्जीवति—व्याध्यादिभिरनुपहतो यावद्ब्रह्मप्राप्ति जीवति । नास्यावरपुरुषाः क्षीयन्ते—अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयोऽपि ब्रह्मविद एव भवन्ति । (मु. ३-२-९) "नास्याब्रह्मवित् कुले भवति" इति च श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयते । उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च—वयम् अग्नयः तम् एनमुपभुञ्जामः-यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपा-

---

सूचयति । ब्रह्मशब्दादित्युक्तौ तस्यात्र वाक्येऽपि सत्त्वात् पूर्ववाक्यस्थ एवेति न ज्ञायेतेति तदनुक्तिः । अग्निविद्यायाः व्यवधायकत्वशङ्कापरिहारार्थश्चैवकारः । अत एव तद्विषयं भाष्यमिहोपरि । एवं, 'गतिं वक्ता' इत्यग्निवाक्यात् गतिमात्रमेव पूर्वविद्यासंबन्धि ; अन्यत्तु ततोऽन्यदेवेति शङ्कापरिहारकश्च । सूत्रे चकारः अक्षिवाक्यात् पूर्वम्, 'यथा पुष्करपलाशे आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते' इति सर्वपापाश्लेषवचनरूपहेत्वन्तरं समुच्चिनोति ।

एकविद्यामध्यपातित्वफलान्तरविमुखोपदेश्यकत्वाभ्यामग्निविद्याया न पृथक्फलार्थत्वमित्याह **उच्यत** इति ।

अस्मन्मते अर्थवादे वाच्यार्थेपि तात्पर्यस्येष्टत्वात् कथं श्रुतत्याग इत्यत्राह **नचात्रेति** । **अस्मिंश्च लोकेऽमुष्मिंश्चेति** । अनेकलोकलभ्यानेकजन्मकत्वेऽपि न विद्याभङ्ग इति भावः ।

लयात्म इति। अतोऽग्निविद्यायाः ब्रह्मविद्याङ्गत्वेन तत्संनिधानाविरोधात् सुखविशिष्टं प्रकृतमेव ब्रह्मेहोपासनस्थानविधानार्थं गुणविधानार्थश्चोच्यते ॥

ननु, "आचार्यस्तु ते गतिं वक्ता" इति गतिमात्रपरिशेषणादाचार्येण गतिरेवोपदेश्येति गम्यते ; तत् कथं स्थानगुणविध्यर्थतोच्यते ? ॥ तदभिधीयते—"आचार्यस्तु ते गतिं वक्ता" इत्यस्यायमभिप्रायः—ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलाभादनाश्वांसमुपकोसलमुज्जीवयितुं स्वपरिचरणप्रीताः गार्हपत्यादयो गुरोरग्नयः तस्मै ब्रह्मस्वरूपमात्रं तदङ्गभूतां चाग्निविद्यामुपदिश्य,(छा. ४-९-३) "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इति श्रुत्यर्थमालोच्य, 'साधुतमत्वप्राप्त्यर्थमाचार्य एवास्य संयद्वामत्वादिगुणकं ब्रह्म, तदुपासनस्थानमर्चिरादिकां च गतिमुपदिशतु' इति मत्वा, 'आचार्यस्तु ते गतिं वक्ता' इत्यवोचन् । गतिग्रहणमुपदेश्यविद्याशेषप्रदर्शनार्थम् । अत एवाचार्योऽपि, (छा. ४-१४-३) "अहं तु ते तद् वक्ष्यामि—यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य संयद्वामत्वादिकल्याणगुणविशिष्टं ब्रह्म अक्षिस्थानोपास्यमर्चिरादिकां च गतिमुपदिदेश । अतः, 'कं ब्रह्म खं ब्रह्म' इति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽत्राभिधानात् अयमक्ष्याधारः परमात्मा ॥ १५ ॥

ननु च "कं ब्रह्म खं ब्रह्म" इति परं ब्रह्माभिहितमिति कथमवगम्यते, यस्येहाक्ष्याधारतयाऽभिधानं ब्रूषे ; यावता "कं ब्रह्म खं ब्रह्म" इति प्रसिद्धाकाशलौकिकसुखयोरेव

---

**तदभिधीयत** इति । गतेरग्निभिः सर्वात्मना स्वयमनुक्तत्वात् विशिष्य निर्देशः । अयमत्र संदर्भार्थः—अग्निविद्यामात्मविद्याञ्च श्रुत्वोपकोसलो मेने—अनेकलोकानेकजन्मानन्तायुस्साध्यता आत्मविद्यायाः अग्निविद्योपदेशतः प्रतीयते । एवंसति व्याधिभिः प्रतिपूर्णस्य नानात्ययकामभूमोपप्लुतस्य मे कदा मोक्षः ? पुण्यपापफलानुभवानन्तरमिति चेत्—अनादिकालार्जितानामनन्तानां कथमनुभवावसानम् ? प्रामादिकपापराशेरपि दुष्परिहरत्वे का कथा बुद्धिपूर्वाणाम् ? यथावदुपासनानुष्ठानेप्युत्तरं शव्यकर्म यथावन्न चर्येत चेत्—ततोपि स्याद् विलम्ब इत्यादि । तत्र—नैवं त्वरितव्यम् । अस्मदुक्तग्रहणमात्रेण ते गतिर्न भवति । आचार्य एव तु तां वक्ता । आत्मविद्याशेषभूतेयमग्निविद्येति प्रदर्शनार्थमात्मविद्याऽप्यस्माभिरीषद् दर्शितेति अग्न्युक्त्याशयः । आचार्योपदेशरीतिदर्शनादुन्नेयमिदं सर्वम् ।

**प्रोषुषि** कृतप्रवासे सति । **अनाश्वांसम्** । 'उपेयिवान् अनाश्वान्....' इति सूत्रात् नञ्पूर्वादश्नातेरिदं रूपम् । अभुक्तवन्तमित्यर्थः । 'व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामि' इत्युक्त्वा हि सोऽनशितुमेव दध्रे । **साधिष्ठमि**ति ; साधुतमत्वमित्यर्थः । इष्ठन्नन्तसाधुशब्दरूपसाधिष्ठशब्दात भावार्थे अण्प्रत्यये नैपुणमितिवत् साधिष्ठमिति रूपम् । **अत्र** आचार्यवाक्ये १-१५ ॥

—उपक्रमोपक्रमस्यापि न ब्रह्मविद्यापरत्वमिति शङ्कते **ननुचे**ति । **ब्रह्माभिहितमितीति** ; ब्रह्मैव स्वप्रधानविद्यान्वयितयाऽभिहितमित्यर्थः । **यावते**ति । प्रत्युतेति यावत् । **प्रसिद्धे**ति ; खकशब्दार्थ-

ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति ; (छा. ७-१-५ ; ७-३-२) " नाम ब्रह्म " " मनो ब्रह्म " इत्यादिवचनसारूप्यात् ॥ तत्राह—

अत एव च स ब्रह्म । १ । २ । १६ ॥

यतस्तत्र, "यदेव कं तदेव खम्" इति सुखविशिष्टस्याऽऽकाशस्याभिधानम्, अत एव खशब्दाभिधेयः सः आकाशः परं ब्रह्म। एतदुक्तं भवति—अग्निभिः " प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म " इत्युक्ते उपकोसल उवाच, " विजानाम्यहं यत् प्राणो ब्रह्म ; कं च तु खं च न विजानामि " इति ।

अस्यायमभिप्रायः—न तावत् प्राणादिप्रतीकोपासनमग्निभिरभिहितम् ; जन्मजरामरणादिभवभयभीतस्य मुमुक्षोर्ब्रह्मो[र्ममो]पदेशाय प्रवृत्तत्वात् । अतो ब्रह्मैवोपास्यमुपदिष्टम् ।

---

त्या प्रसिद्धयोरित्यर्थः । **नामब्रह्मे**ति । ननु तत्र, नाम ब्रह्मेत्युपासीत इति इतिकरणादारोपप्रतीतेर्दृष्टिविधिः, न त्वत्रैवमिति चेत्—न ; इतिकरणेऽपि, आत्मेत्येवोपासीतेत्यत्र दृष्टिविध्यभावात् । तस्मादभेदस्य बाधे आरोप इति प्रसिद्धमेतदिति हृदयम् ।

**अतएवे**त्यस्य सुखविशिष्टाभिधानादेवेत्यर्थः। पूर्वं सुखविशिष्टब्रह्माभिधानं कंब्रह्मेति। अत्र यदेव कं तदेव खमिति सुखविशिष्टखाभिधानं विवक्षितम्। खे सुखविशिष्टत्वलाभश्च खशब्दस्य कशब्देन विशेषितत्वात्। खशब्दस्याकाशपरत्वमेवमवगतम् । तत् तदाकाशमिति सुखरूपाकाशानुवादाच्च ज्ञायते। न च भूताकाशस्य सुखरूपत्वसंभवः। अतः स आकाशशब्दार्थो ब्रह्मैव। आकाशशब्दः खशब्दश्चापरिच्छिन्नमिति गौणार्थपर इति सूत्रार्थः। **चकारः**, एषा सोम्य तेऽस्मद्विद्या चाऽऽत्मविद्या च' इति अग्निभिरस्या आत्मविद्यात्वकथनादपि न दृष्टिविधित्वमिति बोधनाय। तमात्मशब्दं मनसिकृत्यैव गुरुः, 'एष आत्मे'ति होवाच। ननु कंब्रह्मेत्यतोपि पूर्वं, प्राणो ब्रह्मेति प्राणवायौ ब्रह्मपदप्रयोगात् सर्वमिदमब्रह्मणि ब्रह्मबोधकमेव स्यादित्याशङ्काऽप्यर्थात् सूत्रकारेण शमिता। स इति पुंलिङ्गनिर्देशः प्राणस्यापि ग्राहकः। सुखविशिष्टस्याभिधानादत्र मुख्यब्रह्मण एव ग्राह्यतया प्राणोऽपि मुख्यब्रह्मैवेति। ननु कस्य खस्य चैकब्रह्मत्वेन दृष्टिकरणादेव मिथऐक्यमारोपितमग्निभिरुक्तमस्तु इत्यत्र आशयं विवृणोति **एतदुक्तं भव**तीति। नन्वेकस्य ज्ञातत्वमन्यस्याज्ञातत्वञ्च केनाभिप्रायेणोक्तवानित्यत्र विशदयति **अस्यायमभिप्राय** इति। एतद्वाक्यमध्ये **मुमुक्षोर्ममोपदेशाये**ति कश्चित् पाठः। मुमुक्षोर्ब्रह्मोपदेशायेति पाठान्तरम्। द्वितीयपाठ एव टीकानुकूल इव। तदा **इत्युक्तवान्**, **इत्युक्तवा**निति वाक्यद्वयसमापनं सुलभम्। परंतु **अस्यायमभिप्राय** इति पदत्रयमनपेक्षितम्। प्रथमपाठे, **उपपद्यतइति** इत्यन्तेन **ब्रह्मणःस्यादिति** इत्यन्तेन चाभिप्रायाकारसमर्पणम्। तदुपरि अत इति पूरयित्वा उक्तवानिति वाक्यं पृथक्कार्यम्। अथवा **अस्ये**त्यस्य उक्तश्रुतिवाक्यस्येत्यर्थः ; न तु उपकोसलस्येति। उपकोसलस्येममाशयमित्युत्तरवाक्यैकरूप्यं नावश्यकम्। श्रुतिवाक्यञ्च **सहोवाचे**त्यादि, **नविजाना**मीत्यन्तमिष्टम् ; एवं 'सहोवाचे' त्यस्यात्र घटनात् **उक्तवानि**ति तदर्थस्यापि घटनेन विवरणमिति। यद्वा **उपपद्यतइति**, **ब्रह्मणःस्यादिति** इत्येतदुभयानन्तरम्, येनाभि-

प्रसिद्धैः प्राणादिभिः समानाधिकरणं ब्रह्म निर्दिष्टम् । तेषु च प्राणविशिष्टत्वं जगद्विधरणयोगेन वा प्राणशरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति, "विजानाम्यहं यत् प्राणो ब्रह्म" इत्युक्तवान् । तथा सुखाकाशयोरपि ब्रह्मणः शरीरतया तन्नियाम्यत्वेन विशेषणत्वम्, उतान्योन्यव्यवच्छेदकतया निरतिशयानन्दरूपब्रह्मस्वरूपसमर्पणपरत्वेन वा ; तत्र पृथग्भूतयोः शरीरतया विशेषणत्वे वैषयिकसुख-भूताकाशयोर्नियामकत्वं ब्रह्मणः स्यादिति स्वरूपावगतिर्न स्यात् । अन्योन्यव्यवच्छेदकत्वे अपरिच्छिन्नानन्दैकस्वरूपत्वं ब्रह्मणः स्यादित्यन्यतरप्रकारनिर्दिधारयिषया, "कं च तु खं च न विजानामि" इत्युक्तवान् ।

उपकोसलस्येममाशयं जानन्तोऽग्नयः," यद्वाव कं तदेव खम्, यदेव खं तदेव कम्" इत्यूचिरे । ब्रह्मणः सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः । अतः प्राणशरीरतया प्राणविशिष्टं यद् ब्रह्म, तदेवापरिच्छिन्नसुखरूपं चेति निगमितम्, "प्राणं च हास्मै तदाकाशं चोचुः" इति ।

---

प्रायेणेति पूरणीयम् । यच्छब्दप्रतिसंबन्धि च अयमभिप्राय इत्यत्र अयमिति पदम्। एवञ्च अस्येत्यस्य उपकोसलस्येत्यर्थः । पाठो वा निरीक्ष्यः । ब्रह्मोपदेशायेति हेतौ ब्रह्मघटनञ्च व्यर्थम् अस्वरसञ्च । उपरि साध्यकोटिनिविष्टं च तत् । प्राणविशिष्टत्वमिति । ननु विधरणयोगपक्षे प्राणत्वमेव ; न तु प्राणविशिष्टत्वमिति चेत्—प्राणपदविशेषितत्वमिति तदर्थः । तादात्म्येन वा प्राणस्य विशेषणत्वम् ; उपरि तथा व्यवहारात् । सुखाकाशयोरिति । कखशब्दार्थयोरित्यर्थः । समर्पणपरत्वेन समर्पणार्थत्वेन । निर्दिधारयिषयेति । ननु कं ब्रह्म खं ब्रह्मेति पृथक् ब्रह्मपदप्रयोगे सति अन्येन्यविशेष्यविशेषणभावपक्षः कथमुपकोसलेन भाव्येतेति चेत्—यदि पृथग्ब्रह्मशब्दप्रयोगेऽन्योन्यविशेषणत्वासंभवः, तर्हि अग्निभिः कथमन्योन्यविशेषणत्वे स्वाभिमते सति पृथक्तत्पदप्रयोग इति चिन्त्यताम् । अयं वा पक्षोऽस्तु, अन्यो वा । अर्थानिर्धारणेन तस्य प्रश्नः,विशेष्यविशेषणभावप्रतिबोधनेनोत्तरमित्येतावदलम् । शेषं परिष्कारे । न च यद्वाव कं तदेव खमित्यस्य, योऽसौ सोहम्, योहं सोसौ,' इत्यत्रेव कान्तर्यामिखान्तर्याम्यैक्यबोधकत्वमेवास्तु ; किमिति खपदस्यापरिच्छिन्ने गौणी वृत्तिरिति शंक्यम्—तथासति कखपदयोर्मूर्धेन्द्रियाद्यनेकार्थकतयाऽर्थानिर्धारणतादवस्थ्यात् । तथासति प्राण एव कम्, प्राण एव खमित्युत्तरदानसंभवाच्च । सुखरूपत्वमेवापरिच्छिन्नमिति । ननु कमिति जीवोऽपि गृह्येतेति तद्वारणायापरिच्छिन्नमिति ; जीवस्य परिच्छिन्नत्वाद्वारणम् । अपरिच्छिन्नं कालादिकमपि ; कमित्यनेन तद्वारणम् । कं सत् स्वरूपेणापरिच्छिन्नं ब्रह्मैव, अपरिच्छिन्नं सत् कं च तदेवेति वक्तुं युक्तम् । तथाचापरिच्छिन्नमिति अनन्तमितिवत् ब्रह्मस्वरूपमुच्यते । अन्यथा तस्य सुखविशेषणत्वे अपरिच्छिन्नेत्यस्य विशेष्यतानर्हत्वेन यदेव खं तदेव कमिति निरूपणायोगात् । अतः सुखगतापरिच्छिन्नत्वं कथं लभ्यते । एवमपरिच्छिन्नसुखेति भाषणमपि कथमिति चेत्—न—सुखविशिष्टं प्रति अपरिच्छिन्नेत्यस्य विशेषणताया अप्यग्निभिर्दर्शिततया विशिष्टान्वयिनो विशेषणान्वयस्याप्यक्षततया तल्लाभात् । अतएवाग्निभिः कंखंब्रह्मेत्यनुक्त्वा कंब्रह्म खंब्रह्मेति ब्रह्मपदावर्तनम् । कमपि विशेष्यम् ; खमपि विशेष्यम् । कस्य विशेष्यत्वे अपरिच्छिन्नत्वस्य सुखेऽपि

अतः, "कं ब्रह्म खं ब्रह्म" इत्यत्रापरिच्छिन्नसुखं ब्रह्म प्रतिपादितमिति परं ब्रह्मैव तत्र प्रकृतम् ; तदेव चात्राक्ष्याधारतयाऽभिधीयत इत्यक्ष्याधारः परमात्मा ॥ १६ ॥

श्रुतोपनिषत्कगत्यभिधानाच्च। १। २। १७॥

श्रुतोपनिषत्कस्य—अधिगतपरमपुरुषयाथात्म्यस्यानुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमाना अर्चिरादिका गतिर्या, तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोसलाय अक्षिपुरुषं श्रुतवते "तेऽर्चिषमेवाभिसंभवन्ति, अर्चिषोऽहः, अह्न आपूर्यमाणपक्षम्" इत्यारभ्य "चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति। एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इत्यन्तेनोपदिशति। अतोऽप्ययमक्षिपुरुषः परमात्मा ॥ १७ ॥

अनवस्थितेरसंभवाच्चनेतरः १। २। १८ ॥

प्रतिबिम्बादीनामक्षिणि नियमेनानवस्थानात्, अमृतत्वादीनां च निरुपाधिकानां तेष्वसंभवान्न परमात्मन इतरः छायादिः अक्षिपुरुषो भवितुमर्हति। प्रतिबिम्बस्य तावत् पुरुषान्तरसंनिधानायत्तत्वान्न नियमेनावस्थानसंभवः। जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति, चक्षुषि नावस्थानम्। देवतायाश्च, "रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः" इति रश्मिद्वारेणावस्थानवचनात् देशान्तरावस्थितस्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुष्यवस्थानम्। सर्वेषामेवैषां निरुपाधिकामृतत्वादयो न संभवन्त्येव। तस्मादक्षिपुरुषः परमात्मा ॥ इति अन्तराधिकरणम् ॥ ३ ॥

15. अन्तर्याम्यधिकरणम् ॥ ४ ॥(बृ. का. ५-७, मा. ६-७)

(शारी. १-२-१४) "स्थानादिव्यपदेशाच्च" इत्यत्र, (बृ. ५-७-१८) "यश्चक्षुषि

लाभः। सुखस्य विशेष्यत्वे, अपरिच्छिन्ने विभुनि सुखान्वयात् सुखस्य सर्वप्रदेशावच्छिन्नत्वरूपव्याप्यवृत्तित्वलाभः। उभयथाऽप्यपरिच्छिन्नत्वं सुखस्येति भाष्याशयात्। शांकरे तु कंखंब्रह्मेति प्रयोगे गुणिवत् गुणस्य ध्येयत्वं न सिद्ध्येदिति ब्रह्मपदावृत्तिरित्युक्तम्। अलमधिकेन ॥ १६ ॥

श्रुतोपनिषत्केति सूत्रं अग्न्युपदिष्टस्याचार्योपदिष्टस्य चोभयस्य ब्रह्मविषयकत्वस्थापकम् : गतेराचार्योपदिष्टेन संबन्धः आनन्तर्यात्। पूर्वेण संबन्धस्तु आचार्यस्तु ते गतिं वक्तेत्युक्तत्वात्। अतश्चोभयमेकमिति। अत्रोपनिषत्पदं ब्रह्मविद्यापरम्। न तच्छ्रवणमात्रेण गतिलाभः; अतः श्रुतोपनिषत्कस्येति षष्ठ्यर्थः अनुसंधेयानुसंधातृभावः। न च प्रतिबिम्बादिध्यानेऽपि वचनबलात् तदिष्टिरिति वाच्यम्—तत्क्रतुनयविरोधात् ; 'नान्यः पन्थाः' इति निषेधाच्चेति भावः ॥ १७ ॥

असंभवाच्चेत्यस्यार्थमाह सर्वेषामेवैषामिति। दार्ढ्याय व्यतिरेकमुखेनार्थवर्णनपरत्वात् सूत्रस्य न वैयर्थ्यम्। प्रतिबिम्बपक्षे तदातदा भिन्नपुरुषप्रतिबिम्बनात् कस्य वा ध्यानमित्यव्यवस्था। चाक्षुषरश्मिः प्रतिघातवशात् परावृत्तो बिम्बमेव गृह्णातीति वस्तुनः प्रतिबिम्बस्यैव कस्यचिदसंभवश्चेत्यपि ध्येयम् ॥ १८॥

अथ कारणत्वव्याप्यान्तर्यामित्वपरवाक्यविषयकमधिकरणम्। अवान्तरसंगतिमाह स्थानादीति।

तिष्ठन्" इत्यादिना प्रतिपाद्यमानं चक्षुषि स्थितिनियमनादिकं परमात्मन एवेति सिद्धं कृत्वा अक्षिपुरुषस्य परमात्मत्वं साधितम्। इदानीं तदेव समर्थयते—

अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्। १। २। १९॥

काण्वाः माध्यन्दिनाश्च वाजसनेयिनः समामनन्ति, (बृ. ५-७-६) "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः" इति। एवमम्ब्वग्न्यन्तरिक्षवायु-द्यु-आदित्यदिक्चन्द्रतारकाकाशतमस्तेजस्सु दैवेषु च(?), सर्वेषु भूतेषु, प्राणवाक्चक्षुश्श्रोत्रमनस्त्वग्विज्ञानरेतस्सु आत्मात्मीयेषु च तिष्ठन्तं तत्तदन्तरभूतं तत्तदवेद्यं तत्तच्छरीरकं तत्तत् यमयन्तं कञ्चिन्निर्दिश्य, "एष त आत्माऽन्तर्याम्यमृतः" इत्युपदिश्यते। माध्यन्दिनपाठे तु—'यः सर्वेषु लोकेषु तिष्ठन्' 'यः सर्वेषु वेदेषु,' 'यः सर्वेषु यज्ञेषु' इति च पर्यायाः, "यो विज्ञाने तिष्ठन्" इत्यस्य पर्यायस्य स्थाने, "य आत्मनि तिष्ठन्" इति पर्यायः, "स त आत्माऽन्तर्याम्यमृतः" इति च विशेषः। तत्र संशय्यते—किमयमन्तर्यामी प्रत्यगात्मा, उत परमात्मा—इति। किं युक्तम्? प्रत्यगात्मेति। कुतः? वाक्यशेषे, "द्रष्टा श्रोता" इति करणायत्तज्ञानताश्रुतेः;

---

**परमात्मन एवेति**। नेदमधिकरणं परमात्मनोऽनन्तर्यामित्वशंकापरिहारकम्; सुबालतैत्तिरीयादिप्रसिद्धताया वक्ष्यमाणत्वात्। अन्ययोगव्यवच्छेदपादे वाक्यान्तरप्रमितपरमात्मधर्मापलापस्यानावश्यकत्वाच्च। किंतु बृहदारण्यकान्तर्यामिब्राह्मणं परमात्मनोऽन्तर्यामित्वप्रतिपादकतयोदाहर्तुं शक्यं न वेति विचारपरमेव। तथा च चक्षुरन्तर्यामित्वमन्यस्याप्यवगम्यत इति पूर्वपक्षः। **वाजसनेयिन**इति। 'अन्नं वै वाजः' इति श्रुतिः। तस्य **सनिः** दानं यस्य महर्षेः, स वाजसनिः; तस्य पुत्रो वाजसनेयो याज्ञवल्क्यः; तत्प्रवक्तृकशाखाध्यायिन इत्यर्थः। इम एव वाजिनः, वाजसंबन्धात्; वाजिरूपधरादित्याध्यापितवेदाध्यायित्वाद्वा। **वायुद्यु-आदित्येति** भाष्यपाठः, श्रुत्युक्तेषु द्युमात्रस्य त्यागे कारणाभावात्। **चन्द्रतारक**पर्याय एकः। **विशेष** इति। पर्यायाधिक्यम्, विज्ञानपदस्थाने आत्मपदम्, **एष** इत्यत्र **स** इति च विशेष इत्यर्थः। प्रधानयुक्तिमाह **वाक्यशेषे** इति। अन्ते अन्तर्यामी विशेषितः, "अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता, नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता, नान्योऽतोऽस्ति मन्ता, नान्योऽतोऽस्ति विज्ञाता" इति अदृष्टत्वविशिष्टद्रष्टृत्वादिना द्रष्ट्रन्तरराहित्यादिना च। तदुभयं परमात्मनि न घटते। दर्शनं हि नाम चक्षुरिन्द्रियजन्यज्ञानम्। एवं तत्तदिन्द्रियजन्यज्ञानवत्त्वरूपस्य द्रष्टृत्वादेः करणनिरपेक्षे परस्मिन्नयोगात् इदमन्तर्यामिब्राह्मणं न तद्विषयकम्। न च—विषयमुखेनैव दर्शनादिपदार्थो निरुच्यताम्, न करणमुखेन; तथाच दर्शनं रूपसाक्षात्कारः, श्रवणं शब्दसाक्षात्कार इत्येवंभूतं ज्ञानं परमात्मनि निर्बाधमिति-वाच्यम्—तथासति द्रष्ट्रन्तरनिषेधायोगात्; रूपादिसाक्षात्कर्तुः परमात्मनोऽन्यस्य जीवजातस्य तादृशस्य सत्त्वात्। करणायत्तज्ञानतया निर्वचने तु द्रष्ट्रादिपदैः जीवजातग्रहणात् तदन्यः करणविशेषायत्तज्ञानविशेषवान् न भवतीति सुवचम्। न हि जीवातिरिक्तस्य ज्ञानं करणायत्तमस्तीति विशिष्टार्थः।

एवं द्रष्टुरेवान्तर्यामित्वोपदेशात्, "नान्योऽतोऽस्ति द्रष्टा" इति द्रष्ट्रन्तरनिषेधाच्चेति—

एवं प्राप्तेऽभिधीयते—अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्। अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्यामी अपहतपाप्मा परमात्मा नारायणः। काण्वपाठसिद्धेभ्योऽधिदैवादिमद्भ्यो वाक्येभ्योऽधिकानि अधिलोकादिमन्ति वाक्यानि माध्यन्दिनपाठे सन्तीति ज्ञापनार्थमधिदैवाधिलोकादिष्वित्युभयोरुपादानम्। तदेवमुभयेष्वपि वाक्येष्वन्तर्यामी परमात्मेत्यर्थः। कुतः? तद्धर्मव्यपदेशात्। परमात्मधर्मो ह्ययम्, यदेक एव सन्

---

**निषेधाच्चेति** इति इतिशब्दः प्रकारवचनः। तेन वक्तव्यशेषग्रहणम्—याज्ञवल्क्यं प्रति उद्दालकप्रश्नोऽद्धयविषयकः, 'वेत्थ नु त्वं....तत् सूत्रम्, येनायञ्च लोकः....संदृब्धानि भवन्ति' इत्युक्तसूत्रविषयकः, 'वेत्थ नु त्वं....तमन्तर्यामिणम्, य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इत्युक्तान्तर्यामिविषयकश्चेति। तत्र सूत्रं वायुरेवेति, यथा, 'वायुर्वै गौतम! तत् सूत्रम्; वायुना वै गौतम! सूत्रेणायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति' इत्येकेनैव वाक्येनोत्तरयति, न तथा अन्तर्यामिविषये; अपितु पृथिव्यबादिभेदेन पृथक्पृथगाह। अतः, यः काञ्च्यां स ते पुत्रः; यो वेंकटे स ते पुत्र इत्युक्तौ पुत्रभेदस्येवात्रान्तर्यामिभेदस्य प्रतीतिः। तथा सुबालोपनिषदीव नेह, एष सर्वभूतान्तरात्मेति सकृत्पाठोऽस्ति; किंतु 'एष त आत्माऽन्तर्याम्यमृत' इति प्रतिपर्यायमावर्तते। तेन तत्तदन्तर्यामी अन्य इति ज्ञायते। न च सर्वत्र **ते अन्तर्यामी**ति कथनात्, उद्दालकरूपजीवातिरिक्तत्वावगमात्, अनेकेषां तदेकान्तर्यामित्वायोगाच्च एकः सर्वान्तर्यामी विवक्षित इति शक्यम्—**ते** इत्यस्य त्वत्पृष्ट इत्यप्यर्थसंभवात्। सर्वान्तर्यामी काममन्योऽस्तु, त्वया पृष्टस्त्वयमिति। तवान्तर्यामीत्यर्थस्यानपेक्षितत्वाच्च। 'आत्मनि तिष्ठन्' इति आत्मशब्दश्च शरीरादिपरः स्यात्। प्रश्नवाक्ये, 'तमन्तर्यामिणम्, यः' इत्येकवचनं च जात्यभिप्रायकमिति पूर्वपक्षशेषः।

**अधिदैवाधिलोकादिपदे**ति। **अधिदैवमधिलोकमिति** शब्दपरम्। अधिदैवताधिलोकशब्दौ आदी अधिभूतादिशब्दान्वितपर्यायतः प्राग्भूतौ येषु वाक्येषु, तेषूक्तोऽन्तर्यामीत्यर्थः। येषु इत्यस्य अधिदैवादावन्वयः। वाक्यघटकान्तर्यामिशब्दार्थ इत्यर्थवर्णने तु अन्तर्यामिपदलक्ष्यस्यान्तर्यामिशब्दार्थरूपार्थैकदेशे शब्दे सप्तम्यर्थघटकत्वान्वयः स्यादिति तत्त्यागः। 'अधिगतं दैवमवयवितया यैः, अधिगतो लोकस्तथा यैः, ते अधिदैवा अधिलोकाश्च पदार्थाः; ते आदयो येषां तेषु वस्तुषु इत्यर्थस्य विवक्षितत्वे आदिपदं विनैव प्रयोगः कृतः स्यात्। अतः तत्तत्पदचिह्नवाक्यान्येव सूत्रकारविवक्षितानीत्याशयः। तत्तत्पदचिह्नितत्वञ्च पृथिव्यादिसर्वदैवपर्यायोक्त्यनन्तरम्, इत्यधिदैवतम्, इत्यधिभूतमित्युपसंहारात्। **ज्ञापनार्थ**मिति। तेन 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन सर्वग्रहणस्याभिमतत्वावगमात् शाखाद्वयानुक्तं सुबालोपनिषदाद्युक्तमप्येतदन्तर्यामित्वमिति न परिच्छिन्नशक्तिकः जीवविशेषो विधिशिवादिर्ग्राह्य इति सूत्रकारेणार्थात् ज्ञापितं भवति। **तद्धर्मे**ति सौत्रपदेन सुबालतैत्तिरीयादिप्रसिद्धपरमात्मगतसर्वान्तरात्मत्व-स्वाभाविकामृतत्व-तादृश-द्रष्टृत्व-स्वभिन्ननियन्तृकत्वाभाव-श्रोतृजीवनिरूपितात्मत्वरूपाणां धर्माणां ग्रहणं भाष्येक्रमेण ज्ञाप्यते।

सर्वलोक-सर्वभूत-सर्वदेवादीन्नियमयतीति । तथा ह्युद्दालकप्रश्नः—"य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति" इत्युपक्रम्य, "तमन्तर्यामिणं ब्रूहि" इति । तस्य चोत्तरम्, "यः पृथिव्यां तिष्ठन्" इत्यारभ्योक्तम् । तदेतत् सर्वान् लोकान् सर्वाणि च(?)भूतानि सर्वान् देवान् सर्वान् वेदान् सर्वांश्च यज्ञान् अन्तः प्रविश्य सर्वप्रकारनियमनम्, सर्वशरीरतया सर्वस्यात्मत्वं च सर्वज्ञात् सत्यसङ्कल्पात् पुरुषोत्तमादन्यस्य न संभवति । तथा हि (तै. आर. ११-२०) "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा", (तै. आन. ६), "तत् सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादीन्यौपनिषदानि वाक्यानि परमात्मन एव सर्वस्य प्रशासितृत्वं सर्वस्याऽऽत्मत्वमित्यादीनि वदन्ति । तथा सुबालोपनिषदि, (७) "नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते । दिव्यो देव एको नारायणः । चक्षुश्च द्रष्टव्यं च नारायणः । श्रोत्रं च श्रोतव्यं च नारायणः" इत्यारभ्य, "अन्तश्शरीरे निहितो गुहायामज एको नित्यः । यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद, यस्यापश्शरीरम्" इत्यादि । "यस्य मृत्युः शरीरं यो मृत्युमन्तरे सञ्चरन् यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति परस्यैव ब्रह्मणः सर्वात्मत्वं सर्वशरीरत्वं सर्वस्य नियन्तृत्वं च प्रतिपाद्यते ।

**स्वाभाविकं चामृतत्वं परमात्मन एव धर्मः ।**

**न च परस्यात्मनः करणायत्तं द्रष्टृत्वादिकम्; अपितु स्वभावत एव सर्वज्ञत्वात् सत्य-**

---

**उद्दालकप्रश्न**इति । प्रश्नवाक्ये एकस्यान्तर्यामिणः सर्वसंबन्धिन एवावगमात् उत्तरवाक्यानि तद्विशदार्थानि न नानान्तर्यामिपराणीति भावः । यच्छब्दावृत्तिस्तु, यः पृथिव्यां तिष्ठन्, यं पृथिवी न वेदेत्येवमेकैक-पर्यायेऽप्यस्ति । 'एष त' इति एतच्छब्दावृत्तिरपि न भेदिका । यस्त्वया पृष्टोऽन्तर्यामी स एषः, एषः इति एकस्मिन्नेव सर्वतत्तच्छरीरकत्वरूपैतत्त्वस्यान्वयसंभवात् । सूत्रविषय इवान्तर्यामिविषये वाक्यैक्यं कुतो नेति चेत्-प्राणस्य सूत्रस्य प्राणनकारित्वं यथा कतिपयनिरूपितम्, तथान्तर्यामित्वमपि परिच्छिन्न-मिति प्रतीत्यपनोदनाय । **स्वाभाविकश्चामृतत्व**मिति । किं सूत्रमिति प्रश्ने प्राणः सूत्रमितिवत्, कोऽन्तर्यामीति प्रश्ने अन्तर्यामिव्यक्तिनिर्देशमात्रमपर्याप्तम् । जीवो वाऽन्यो वा; अन्यत्वे कथं तत्तच्छरीर-विश्लेषे तस्य मरणाभाव इत्यादिशंकायाम्, जीवासंभावितत्वज्ञापनायान्तर्यामिशब्दार्थविवरणपूर्वकम् **अमृत** इति प्रत्युत्तरणात् स्वाभाविकमेवामृतत्वं जीवव्यावृत्तं विवक्षितमिति ज्ञायते । श्रुत्यन्तरप्रसिद्धश्च तदिति भावः ।

द्रष्टृत्वादेरपि स्वाभाविकत्वं विवक्षितुमाह **न चे**ति । यद्वा नन्वेवंसति परमात्मनः चक्षुरादिजन्य-दर्शनादिकमेष्टव्यं भवति, अन्यथा द्रष्टेत्याद्यनन्वयादित्यत्र, नेष्यत एवेति प्रतिवक्ति **न चे**ति । एतेन पूर्वपक्षिणैव परमात्मनि करणजन्यज्ञानाभावस्योक्तत्वेन किमित्यप्रसक्तप्रतिषेध इहेति शंका शमिता । **आदि**पदेन मन्तृत्वादिग्रहणम् । **स्वभावत** इति द्रष्टृत्वाद्यन्वयि, **स्वत** इति सर्वज्ञत्वाद्यन्वयीति **टीकेष्टम्** ।

सङ्कल्पत्वाच्च स्वत एव। तथा च श्रुतिः, (श्वे. ३-१९) “पश्यत्यचक्षुः स शृणोत्यकर्णः। अपाणिपादो जवनो ग्रहीता' इति। न च दर्शनश्रवणादिशब्दाः चक्षुरादिकरणजन्मनो ज्ञानस्य वाचकाः; अपितु रूपादिसाक्षात्कारस्य। स च रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्मा; परस्य तु स्वत एव। “नान्योऽतोऽस्ति द्रष्टा”

पूर्वं स्वाभाविकपदप्रयोगमनुसृत्यैवम्। उपरितनवाक्येषु **स्वत एवेति** पदमनुसृत्य स्वरसान्वयोऽपि भवति—स्वाभाविकसर्वज्ञत्वसत्यसंकल्पत्वाश्रयत्वात् द्रष्टृत्वादिकं स्वत एव, न तु करणायत्तमिति। ननु द्रष्टृत्वादिकं न करणायत्तमिति वाक्यं जननी वन्ध्येतिवत् व्याहतमित्यत्राह **न च दर्शनेति**। **रूपादीति**। रूपशब्दरसगन्धादिसाक्षात्कारस्यैव वाचका इत्यर्थः। अन्यथा—पश्यति शृणोति इति पूर्ववाक्यार्थासंभवः; नित्यमुक्तकर्तृकदर्शनाद्यनिर्वाहश्चेति भावः।

ननु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यत्र कथम्, तत्र रूपाभावात्, शब्दानात्मकत्वाच्चेति चेत्—पूर्वपक्षेपि तुल्यमेतत्; चक्षुःश्रोत्रजन्यज्ञानाविषयत्वात्। साक्षात्कारसामान्यं दर्शनम्, शब्दसाक्षात्कारजन्यार्थबोधश्च श्रवणमिति तत्र विवक्षितमुभयोरपि। अत्र तु स्वरसार्थे बाधकाभावान्न तथोच्यते। ननु अदृष्टः अश्रुतः इत्यस्य रूपसाक्षात्काराविषयत्वं शब्दसाक्षात्काराविषयत्वमित्यर्थः स्यात्॥ स्यात्; अनन्वयाभावात्॥ तर्हि तेन नीरूपत्वं शब्दानात्मकत्वञ्च सिद्ध्येत्। तत्र शब्दानात्मकत्वमप्रसक्तप्रतिषेधः स्यात्। **विनाऽपि** शास्त्रं यत् दृष्टं श्रुतञ्च भवति जीवात्मस्वरूपमानुमानिकप्रकृत्यादि च, तद्वैलक्षण्यकथनं तु युक्तम्। अतस्तत्र द्रष्टव्यः श्रोतव्य इत्यत्रेवार्थस्वीकारे द्रष्टा श्रोतेत्यत्रापि ऐकरूप्यं रक्षणीयम्। अस्तु काममिति चेत्—स्वाभाविकज्ञानं हि परस्य; कथं तस्य शब्दजन्यबोधाश्रयत्वमिति—उच्यते। स्वाभाविकं ज्ञानमीश्वरस्य सर्वविषयकमस्त्येव। शब्दसंपाद्यज्ञानस्य शब्दं विनैव भावात् शब्दजन्यज्ञानसजातीयज्ञानवत्त्वेन श्रोतृत्वोक्तिः। साजात्यं समानविषयकत्वरूपेण। एवमेव **मन्ते**त्यादीनां निर्वाहः; सर्वत्र साक्षात्कारस्यैवात्रेष्टेः।—सर्वमिदमभिप्रेत्य भाष्ये श्रवणं शब्दसाक्षात्कार इत्यनुक्त्वा **रूपादी**त्यादिपदेन श्रोतेत्येतद्धात्वर्थज्ञानविषयं निर्दिश्य यस्य कस्यापि विषयत्वेऽपि ज्ञानं परमात्मनः साक्षात्काररूपमेवेति दर्शितम्। तथाच **न च दर्शने**त्यादिभाष्यं लोकप्रयुक्तदर्शनश्रवणादिशब्दविषयकं चेत्, **रूपादी**त्यादिपदेन शब्दरसादिग्रहणम्। इहेत्यध्याहारेण द्रष्टा श्रोता मन्ता विज्ञातेति प्रकृतपदविषयकं चेत्, रूपादीत्यादिपदं श्रवणमननविज्ञानविषयपरमिति। तथा च सर्वैर्द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्योऽपि अन्यैरदृष्टोऽश्रुतोऽमतोऽविज्ञातः सन् अन्यदृष्टश्रुतादिविषयसाक्षात्काररूपज्ञानवानिति विशिष्टार्थः। तत्तत्पर्याये,' न वेद' 'यमयति' इत्युक्तार्थद्वयकथनमेवम्। ब्रह्मविद्भिः कतिपयैः श्रवणमनननिध्यानदर्शनविषयीकृतत्वेऽपि कार्त्स्न्येन तद्विरहादेवमुक्तिः। सुसूक्ष्ममिति श्रुत्या अचेतनतश्चेतनतश्चाग्राह्यत्वातिशयोऽस्यैवेति अतिशयेनादृष्टत्वादिकमत्रैवेति मन्तव्यम्।

**नान्य** इति वाक्यस्य सिद्धान्ते निर्वाहासंभवं परिहरति **नान्य** इति। अन्यशब्दस्य सदृशभूतालोकन्मीमांसादिशास्त्रसिद्धत्वात् एतत्सदृशद्रष्टा नान्य इत्यर्थस्यैवावगमात् जीवानां बहुत्वात्परस्मा

इत्येतदपि, पूर्ववाक्योदितात् नियन्तुर्द्रष्टुरन्यो द्रष्टा नास्तीति वदति। "यं पृथिवी न वेद," "यमात्मा न वेद" इत्येवमादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव नियमयतीति यत् पूर्वमुक्तम्, तदेव "अदृष्टो द्रष्टा, अश्रुतः श्रोता' इति निगमय्य, 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना तस्य नियन्तुर्नियन्त्रन्तरं निषिध्यते ॥

"एष त आत्मा" "स त आत्मा" इति च ते इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदिश्यमानोऽन्तर्यामी न प्रत्यगात्मा भवितुमर्हति ॥ १९ ॥

**न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च १। २। २०॥**

स्मार्तं प्रधानम्। शारीरः जीवः। स्मार्तं च शारीरश्च नान्तर्यामी; अतद्धर्माभिलापात्—तयोरसंभावितधर्माभिलापात्। स्वभावत एव सर्वस्य द्रष्टृत्वम्, सर्वस्य नियन्तृत्वम्, सर्वस्याऽऽत्मत्वम्, स्वत एवामृतत्वं च तयोर्न संभावनागन्धमर्हति। एतदुक्तं भवति—यथा स्मार्तमचेतनं सर्वज्ञत्वनियन्तृत्वसर्वात्मत्वादिकं नार्हति, तथा जीवोऽपि, अतद्धर्मत्वात् इति। अमीषां गुणानां परमात्मन्यन्वयः, प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः ॥२०॥

निरपेक्षं च हेत्वन्तरमाह—

**उभयेऽपि हि भेदेनैनमधीयते १। २। २१ ॥**

उभये—माध्यन्दिनाः काण्वाश्च, अन्तर्यामिणो नियाम्यत्वेन वागादिभिरचेतनैः समम् एनं शारीरमपि विभज्याधीयते— "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न

---

सत्त्वेपि न विरोधः। सादृश्यञ्च प्रकृतं ग्राह्यम्। अदृष्टत्वविशिष्टद्रष्टृत्वस्य प्रागुक्ततया तादृशद्रष्टृत्वेन साजात्यमपि भवेत्। तदपेक्षया अत इति पदस्य प्रकृतादन्तर्यामिणो नियन्तुरित्यर्थस्य वर्णनमेवोचितमिति तत्पदोपस्थापित-प्रधानप्रकृतनियन्तृत्वरूपसादृश्यमेव विवक्ष्यते। नियन्तृत्वविशिष्टद्रष्टृत्वादिमान् अन्यः कोपि नास्तीत्यर्थः। नियन्त्रन्तरनिषेधे पर्यवसानमिति भावः। ते इति शब्दस्य त्वत्पृष्ट इत्यर्थः क्लिष्टः; त्वन्निरूपितात्मत्वाश्रय इत्येव स्वरसार्थः। तेन सर्वपर्यायोक्तान्तर्याम्यैक्यं ज्ञाप्यते; तवेव तत्तज्जीवस्य स्वयमन्तर्यामित्वाभावोऽनुभवसिद्ध इति च ज्ञाप्यते आत्मादीति ;आत्मादिरूपेत्यर्थः।—१९

यथा स्मार्तमिति। अदृष्ट इति पदस्य दृष्टभिन्नो यो दृष्टसजातीयः तदर्थकत्वौचित्यात् अचेतनत्वेन सजातीयः घटादिकारणभूतश्चाव्यक्तादिरेवार्थः किंन स्वीक्रियते। तथा द्रष्ट्रादिपदैर्जीवोऽपि न ग्राह्य इतिभावः। एतदनन्वयसूचनार्थमेव अतद्धर्मस्याभिलापादिति व्याख्यातम्; न तु तद्धर्माभिलापाभावादिति। तथा हि सति तद्धर्माभिलापासंभवादित्यर्थः क्लेशेन वर्णनीयः स्यात्। अतद्धर्मादित्यनुक्त्वा अभिलापशब्दस्याधिकस्य प्रयोगाच्च, 'नानुमानमतच्छब्दात्' इत्यत्रेवाव्ययीभावो नादृतः॥ पूर्वसूत्रोक्तधर्माणामेवात्रापि धर्मपदेन ग्रहणात् पौनरुक्त्यमित्यत्राह अमीषामिति जीवव्यावृत्तद्रष्टृत्वादिविशेषावगमनार्थमिदंसूत्रम्।-२०

निरपेक्षश्चेति। पृथिव्याद्येकैकपर्यायस्य पर्यायान्तरनिरपेक्षतया न परमात्मत्वसाधकता, अचेतनैकैकान्तरात्मत्वस्य जीवेऽपि संभवात् सर्वान्तर्यामित्वोक्त्यैव तस्य व्यावर्तनीयत्वात्। 'य आत्मनि तिष्ठन्'

भूतयोनेरक्षरस्य सर्वज्ञत्वादिः प्रतिपाद्यते। पश्चात्, 'अक्षरात्परतः परः' इति च प्रकृतमदृश्यत्वादिगुणकं भूतयोन्यक्षरं सर्वज्ञमेव परत्वेन व्यपदिश्यते। अतः, 'अक्षरात्परतः परः' इत्यक्षरशब्दः पञ्चम्यन्तः प्रकृतमदृश्यत्वादिगुणकमक्षरं नाभिधत्ते; तस्य सर्वज्ञस्य विश्वयोनेः सर्वस्मात्परत्वेन तस्मादन्यस्य परत्वासंभवात्। अतोऽत्राक्षरशब्दो भूतसूक्ष्ममचेतनं ब्रूते ॥ २२ ॥ इतश्च न प्रधानपुरुषौ—

विशेषणभेदव्यपदेशाभ्यां च नेतरौ १। २। २३ ॥

विशिनष्टि हि प्रकरणम्, प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरं [व्यावर्तयतीत्यर्थः] एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनादिभिः [व्यावर्तयतीत्यर्थः ? ]। तथा ताभ्यामक्षरस्य भेदश्च व्यपदिश्यते, "अक्षरात्परतः परः" इत्यादिना ॥

तथा हि— "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह" इति सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता। परविद्यैव च सर्वविद्याप्रतिष्ठा। तामिमां सर्वविद्याप्रतिष्ठां विद्यां चतुर्मुखाथर्वादिगुरुपरम्परयाऽङ्गिरसा प्राप्तां जिज्ञासुः शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति।

---

सर्वज्ञत्वादिः प्रतिपाद्यत इति। 'यः सर्वज्ञ' इति वाक्योपात्तस्य तपसः विश्वोत्पत्तेश्च पूर्ववाक्यसिद्धत्वादत्र सर्वज्ञत्वमेवाप्राप्तमिति तद्विधान एव वाक्यतात्पर्यम्; तदपि यच्छब्देनाक्षरमनूद्योच्यते इति अक्षरं परमेवेति। नन्वक्षरस्य सर्वज्ञत्वे, अक्षरात् परत इति वाक्येन तदधिकवस्तुसिद्ध्यापत्तिः। तत् सर्वज्ञः कथं पर इत्यत्राह अत इति। कारणवस्तुतोऽधिकस्य कस्यचिदभावात् तदनुरोधेन तत्रत्याक्षरपदस्य प्रकृतिपरत्वम्। एवमपि प्रथममक्षरं स एव। उपक्रमे स्वरसार्थस्यात्याज्यत्वात्, 'येनाक्षरं पुरुषं वेद सत्यम्' इति पुरुषोत्तमे अक्षरशब्दप्रयोगाच्चेति। तथा च सूत्रे धर्मपदेन सर्वज्ञ इत्युक्तसर्वज्ञत्वम् ज्ञानमयं तप इत्युक्तसत्यसंकल्पत्वम् एतदुपष्टम्भबलसिद्धानि निरतिशयनित्यत्वविभुत्वसर्वगतत्वसुसूक्ष्मत्वभूतयोनित्वानि निमित्तत्वम् अभिमन्यत इत्युक्तप्राप्यत्वञ्च विवक्षितुमर्हाणि ॥ २२ ॥

पूर्वसूत्रे धर्मपदेन साक्षात् धर्मतयाऽवगतानां सर्वज्ञत्वादीनां व्यावर्तकधर्माणां ग्रहणात् भेदव्यपदेशपदेन च भेदत्वेन भेदबोधकशब्दग्रहणात्, विशेषणपदं प्राकरणिकतत्तद्वाक्यावगतानामर्थविशेषाणां बलेन प्रकरणिनः प्रकृतिपुरुषव्यावृत्तिलाभपरम्। अपेक्षितव्यावृत्तिपर्यवसानहेतुभूतात् तत्तद्वस्तुनिष्ठतत्तद्धर्मकलापादिति यावत्। विद्यायाः ब्रह्मविषयकत्वं सर्वविद्याप्रतिष्ठात्वं श्रवणनिध्यानात्मना द्वैविध्यं विवेकादिनिष्पाद्यत्वं फलाभिसंधिरहितकर्माङ्गकत्वं विश्वस्रष्टृ-विश्वरूप-परमव्योमप्रतिष्ठित-परमपुरुष-तत्कल्याणगुणादिविषयकत्वं प्रणवकरणकत्वं भक्तिरूपत्वं परमात्मप्रसादहेतुत्वं प्रकृतिबन्धविमोकहेतुत्वं परमपुरुषपरमसाम्यापन्नानन्दवहत्वं चेति विशेषा इह भाष्यन्ते। न हि प्रकृतिविद्यायाः इमे धर्मा भवितुमर्हन्तीति अत्र प्रतिपाद्यमक्षरं ब्रह्मैव। व्यावर्तयतीत्यर्थ इति पाठो न टीकाकारदृष्ट इति टीकागमनिकयैव स्पष्टम्। अस्तु वा एकविज्ञानेति पदात् पश्चात्; न ततः प्राक्। तदा प्रकरणमित्यत्र वाक्यच्छेदः (भावप्र.)।

ब्रह्मविद्यायाः सर्वविद्याश्रयत्वाद् ब्रह्मविज्ञानेन सर्वं विज्ञातं भवतीति कृत्वा ब्रह्मस्वरूपमनेन पृष्टम्। तस्मै स होवाच, 'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवापरा च' इति। ब्रह्मप्रेप्सुना द्वे विद्ये वेदितव्ये—ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः। तत्र परोक्षं शास्त्रजन्यं ज्ञानम्; अपरोक्षं योगजन्यम्। तयोर्ब्रह्मप्राप्त्युपायभूतम् अपरोक्षज्ञानम्। तच्च भक्तिरूपापन्नम्; (मु. ३-२-३) 'यमेवैष वृणुते तेन लभ्यः" इति अत्रैव विशेष्यमाणत्वात्। तदुपायश्च आगमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम्, (बृ. ६-४-२२) "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः। आह च भगवान् पराशरः, 'तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने! आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते" इति।

(मु. १-१-५) "तत्रापरा, ऋग्वेदो यजुर्वेदः" इत्यादिना, "धर्मशास्त्राणि" इत्यन्तेन आगमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तम्; साङ्गस्य सेतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुत्वात्। "अथ परा यया तदक्षरमधिगम्यते" इत्युपासनाख्यं ब्रह्मसाक्षात्कारलक्षणं भक्तिरूपापन्नं ज्ञानम्। 'यत्तदद्रेश्यमग्राह्यम्' इत्यादिना परोक्षापरोक्षरूपज्ञानद्वयविषयस्य परस्य ब्रह्मणः स्वरूपमुच्यते।

---

'सर्वविद्याश्रयत्वादित्याश्रयशब्देन प्रतिष्ठाशब्दार्थ उक्तः। ज्ञातव्ये ब्रह्मणि कृत्स्नज्ञातव्यान्तर्भावात् ब्रह्मज्ञाने कृत्स्नविषयज्ञानानि अन्तर्भूतानीत्यर्थः' इति **टीका**। तथाच सर्वविद्याश्रयत्वं नाम स्वान्तर्गतसर्वविद्याकत्वम्; सर्वविषयकत्वमिति यावत्। कथं ब्रह्मविषयकज्ञानस्य प्रकृतिपुरुषविषयकत्वम्, तत्त्वभेदादिति शंकापरिहाराय **कृत्स्नज्ञातव्यान्तर्भावादित्युक्तम्**। सूक्ष्मचिदचिद्विशिष्टब्रह्मण एवात्राक्षरशब्दविवक्षिततया कारणविषयकस्य कार्यविषयकत्वमप्यस्तीत्युक्तं भवति। अपरविद्याभूतस्य सर्वस्य शास्त्रस्य निष्ठा नारायण इति, तावच्छास्त्रमुखेन ब्रह्मज्ञाने सर्वार्थज्ञानमन्तर्भूतं फलवत्तया प्रतिष्ठितश्च भवति, ब्रह्मविद्यामाश्रित्य तदुपकारकतयैव विद्यान्तराणामिष्टेरित्याद्याशयोऽपि गम्य इह। **द्वे विद्ये वेदितव्ये**—द्वे ज्ञाने प्राप्तव्ये। **अत्रैव**—कठोपनिषदीवात्र मुण्डके षष्ठखण्डेपि। **विवेकादि....नुगृहीत**मिति। विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षसहकृतमित्यर्थः। अत्र, 'भैक्षचर्यां चरन्तः', 'निर्वेदमायात्,' 'वेदान्तविज्ञानसुनिश्चितार्थाः', 'तान्याचरथ नित्यं सत्यकामाः', 'सत्येन लभ्यः', 'नायमात्मा बलहीनेन लभ्यः' इत्यादिवाक्यजातमभिप्रेतम्। **तमेत**मिति बृहदारण्यके; अत्र वेदानुवचनेनेति श्रवण-अभ्यासादिज्ञानगर्भाध्ययनम्, यज्ञेनेति पञ्चमहायज्ञज्योतिष्टोमादि, तपसाऽनाशकेनेति कल्याणानवसादादि चेति विवेकादिलाभो भाव्यः। **विवेकाच्चे**ति; विवेकादिजन्यश्चेत्यर्थः। **धर्मशास्त्राणि, सेतिहास...इत्यादिभाष्यात्** उपनिषद्वाक्यपाठोऽन्यादृशोऽभिप्रेत इति ज्ञायते। **टीका**वाक्यानि च कानिचिदत्राधिकरणेऽन्यादृशमुण्डकपाठं ज्ञापयन्ति। एवं **भाष्यटीकादर्शनेनान्विष्य** उपनिषद्भाष्येष्वगृहीतान्यपि **भावप्रकाशिकातोऽधिगम्यास्मदीयपरिष्कारेण** सहोपनिषदि अस्माभिः

"यथोर्णनाभिः सृजते गृह्णते च" इत्यादिना यथोक्तस्वरूपात् परस्माद्ब्रह्मणोऽक्षरात् कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्योत्पत्तिरुक्ता; विश्वमिति वचनात्; नाचेतनमात्रस्य। "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्" इति ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते। तपसा-ज्ञानेन; (मु. १-१-९) "यस्य ज्ञानमयं तपः" इति वक्ष्यमाणत्वात्। चीयते उपचीयते। 'बहु स्याम्' इति सङ्कल्परूपेण ज्ञानेन ब्रह्म सृष्ट्युन्मुखं भवतीत्यर्थः। ततोऽन्नमभिजायते—अद्यत इत्यन्नम्। विश्वस्य भोक्तृवर्गस्य भोग्यभूतं भूतसूक्ष्ममव्याकृतं परस्माद्ब्रह्मणो जायत इत्यर्थः। प्राणमनःप्रभृति च स्वर्गापवर्गरूपफलसाधनभूतकर्मपर्यन्तं सर्वं विकारजातं तस्मादेव जायते। "यः सर्वज्ञः सर्ववित्" इत्यादिना सृष्ट्युपकरणभूतं सार्वज्ञ्यसत्यसङ्कल्पत्वादिकमुक्तम्। सर्वज्ञात् सत्यसङ्कल्पात् परस्माद्ब्रह्मणोऽक्षरात् एतत् कार्याकारं ब्रह्म नामरूपविभक्तं भोक्तृभोग्यरूपं च जायते।

(मु. १-२-१) "तदेतत् सत्यम्" इति परस्य ब्रह्मणो निरुपाधिकसत्यत्वमुच्यते। "मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा संततानि। तान्याचरत(थ) नियतं सत्यकामाः" इति—सार्वज्ञ्यसत्यसङ्कल्पत्वादिकल्याणगुणाकरमक्षरं पुरुषं स्वतस्सत्यं नित्यं कामयमानाः तत्प्राप्तये फलान्तरेभ्यो विरक्ताः ऋग्यजुस्सामाथर्वसु कविभिर्दृष्टानि

---

कृत्स्नकार्याणि तत्रैव द्रष्टव्यानि। यथोर्णनाभिरिति। ऊर्णनाभिर्यथा स्वशरीरांशात् तन्तुं सृजति, तथा सोऽभिध्याय शरीरात् स्वात् तमसः प्रजाः सृजति इति प्रपञ्चदृश्यमानावस्थापूर्वावस्थाश्रयत्वं सूक्ष्मचेतनाचेतनांश एवेति ज्ञाप्यते प्रथमदृष्टान्तेन; पृथिव्यामोषधय इत्यनेन सूक्ष्मस्थूलविशिष्टत्वरूपावस्थाग्रहणे साक्षादेव कार्यकारणभाव इति; सतः पुरुषात् केशलोमानीत्यनेन (संकल्पत इव) स्वरूपसत्तयाऽपि कारणत्वमिति विवेकः। तत्त्वत्रयस्य मिलितस्य कारणत्वात् तदनुरूपदृष्टान्तत्रयमित्यपि ध्येयम्। चीयते ब्रह्म। ब्रह्मपदं पूर्वपक्ष इव न प्रकृतिपरम्; किंतु मुख्यार्थम्। अन्नं प्रकृतिः, यथा प्रश्नोपनिषदि रयिरिति। मुख्यान्नस्य, पृथिव्या वा ग्रहणे, 'अन्नात् प्राणो मनः' इति न घटेत। सत्यं भोक्तृदेहिवर्गः। कर्मसु लोका अमृतश्चेत्यन्वयः। अमृतस्य नित्यविभूते र्मोक्षस्य वा तत्र शरीरग्रहादेर्वा प्रकृतिकार्यत्वाभावात् लोकरूपस्वर्गादि-अपवर्गरूपामृतोभयसाधनकर्माणि प्रकृतिकार्याणीत्याह स्वर्गेति। उक्तमिति। एतदेवाज्ञातमत्र ज्ञापितमित्यर्थः। एतदिति व्याख्येयम्; कार्याकारमिति व्याख्यानम्। ब्रह्मशब्दः; 'स्याच्चैकस्य ब्रह्मशब्दवत्' इति सूत्रे,' प्रधाने गौणतया प्रयुक्तः' इति भाषितत्वात् प्रधानपरः। परमात्मनो विशिष्टवेषेण कार्यत्वज्ञापकं सत् परमात्मपरमेव वा; एतदित्यादिना विशिष्टलाभात्। नामरूपमिति अर्शआद्यच्। अन्नशब्दः कर्तरि कर्मणि च क्तप्रत्ययात् भोक्तारं भोग्यञ्च वदति। अथवा भोक्तृ भोग्यरूपमिति पूर्ववत्। अन्नपदं पृथिवीपरं तत्कार्यदेहिघटादिभोक्तृभोग्यविश्रान्तमिति वा।

द्वितीयखण्डार्थमादाय विशेषणं दर्शयितुमाह तदेतत् सत्यमिति। त्रेतायाम् अग्नित्रये। सत्यकामा इति। इत्यनेनेत्यर्थः। आचरतेतीति। अभिधायेति वक्ष्यमाणस्येदमपि कर्म-

वर्णाश्रमोचितानि त्रेताग्निषु बहुधा संततानि कर्माण्याचरतेति—(मु. १-२-१) "एष वः पन्थाः" इत्यारभ्य (मु. १-२-५) "एष वः पुण्यः सुकृतो ब्रह्मलोकः" इत्यन्तेन कर्मानुष्ठानप्रकारम्, श्रुतिस्मृतिचोदितेषु कर्मसु एकतरकर्मवैधुर्येऽपीतरेषामनुष्ठितानामपि निष्फलत्वम्, अयथानुष्ठितस्य चाननुष्ठितसमत्वमभिधाय,(मु. १-२-७)"प्लवा ह्येते अदृढा यज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढाः जरामृत्यू ते पुनरेवापियन्ति" इत्यादिना फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया चावरं कर्माचरतां पुनरावृत्तिमुक्त्वा, "तपःश्रद्धे ये ह्युपवसन्ति" इत्यादिना पुनरपि फलाभिसन्धिरहितं ज्ञानिनाऽनुष्ठितं कर्म ब्रह्मप्राप्तये भवतीति प्रशस्य, "परीक्ष्य लोकान्" इत्यादिना केवलकर्मफलेषु विरक्तस्य यथोदितकर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्य च आचार्योपसदनं विधाय,—(मु. २-१-१) 'तदेतत् सत्यम्; यथा सुदीप्तात्' इत्यादिना, 'सोऽविद्याग्रन्थिं विकिरतीह सोम्य' इत्यन्तेन पूर्वोक्तस्याक्षरस्य भूतयोनेः परस्य ब्रह्मणः परमपुरुषस्यानुक्तैः स्वरूपगुणैः सह सर्वभूतान्तरात्मतया विश्वशरीरत्वेन विश्वरूपत्वं तस्माद्विश्वसृष्टिं च विस्पष्टमभिधाय, "आविः संनिहितम्"

---

'एष वः पन्था इत्यस्यैतन्मन्त्रान्तर्गतत्वेपि उपर्यन्वयकथनम् उपर्यपि, एष वः पन्था इति वाक्यसत्त्वात् तदेकार्थत्वाय। काम्यकर्मणां यथावदनुष्ठाने नैष्फल्यं ह्युच्यते। निष्कामकर्मणां नेहाभिक्रमनाशोस्तीति वचनान्नैष्फल्यं न विद्यते। अथवा-व इति काम्यकर्मग्राहिण एव चेद् ग्राह्याः, तर्हि तान्याचरतेति पूर्वं निष्कामकर्मसु प्रेरणं केषाम्? ये प्रेर्यन्ते, त एव व इति ग्राह्या भवन्तु। एवञ्च मन्त्रे भागस्य कस्य चिन्न पृथक्कारः। उपरि,' एष वःपुण्यः ' इति तु इदानीं तैरनुष्ठितजन्यफलकथनं हेयत्वाय। यद्वा तत्र एष इत्यादि नोपदेष्टृवाक्यम्; किंतु, 'प्रियां वाचमभिवदन्त्यः' इत्युक्ताहुतिकर्तृकवादानुकार एव। न च भाष्यविरोधः; **इत्यारभ्येत्यस्य** इति निष्कामकर्मप्रस्तावं पूर्वं कृत्वेत्यर्थः। अत्र, **तान्याचरत नित्यं सत्यकामाः एष वः पन्था इत्यारभ्य** इति विशिष्टलेखनमेव चिकीर्षितम्। मध्ये सत्यकामा इत्यन्तस्य विवरणाय तु तत्र **इतिशब्दं** प्रयुज्य स्थित्वा तदर्थमुक्त्वा पुनः **इतिशब्देन** तत् समाप्य शेषवाक्योदाहरणेन, **इत्यारभ्येत्युक्तिरिति** स्यात्। एवं तु चिन्तने **आचरतेति** इत्यस्य उपरि **अभिधायेत्यत्र** नान्वयः; अतएव टीकायाम् **उच्यत** इति पूर्वपदानुषङ्गः कृतः। एवञ्च इत्यारभ्य इत्यस्य इति निष्कामकर्मप्रस्तावं कृत्वेत्यर्थः। **अष्टादशेति**। षोडश ऋत्विजः पत्नी यजमानश्चाष्टादश; ते **यज्ञरूपाः** यज्ञनिरूपकाः। अर्थान्तरमन्यत्र द्रष्टव्यम्। **तपःश्रद्धे**। अनियमाधिकरणभाष्ये वाक्यान्तरे **तपश्शब्दस्य** ब्रह्मपरत्वमुक्तम्, तद्वदिहापि। अस्तु वा निष्कामकर्मैव प्रकृतभाष्यस्वारस्यात् तदर्थः। त्रेताग्निकार्यकर्मजातप्रस्तावः विस्तरेण गृहस्थेषु सकामानामपि सत्त्वात्। **तप** इत्यादिना निष्कामगृहस्थकथनम्। **ज्ञानं जिज्ञासमानस्येति**; उपायभूतं ज्ञानमेवंरूपं वा ऽन्यरूपं वेति स्वयमेव वा विवादबलाद्वा संदिह्य विचारयितुमिच्छत इत्यर्थः।

तृतीयखण्डार्थमाह **तदेतदिति**। **स्वरूपगुणैरिति**। स्वरूपात्मकैः स्वरूपनिरूपकैः अमूर्तत्व-अजत्वाप्राणत्वामनस्कत्वादिभिर्गुणैरित्यर्थः। चतुर्थखण्डार्थमाह **आविरिति**। आविर्भूय संनिहितमित्यर्थः।

इत्यादिना तस्यैवाक्षरस्याव्याकृतात्परतोऽपि पुरुषात् परभूतस्य परस्य ब्रह्मणः परमव्योम्नि प्रतिष्ठितस्यानवधिकातिशयानन्दस्वरूपस्य हृदयगुहायामुपासनप्रकारम् उपासनस्य च परभक्तिरूपत्वम्, उपासीनस्याविद्याविमोकपूर्वकं ब्रह्मसमं ब्रह्मानुभवफलं चोपदिश्योपसंहृतम् ।

अत एवं विशेषणाद् भेदव्यपदेशाच्च नास्मिन् प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते । भेदव्यपदेशोऽपि हि ताभ्यां परस्य ब्रह्मणोऽत्र विद्यते, (मु.२-२-१) ' दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः " इत्यादिभिः । अक्षराद्व्याकृतात् परो यः समष्टिपुरुषः, तस्मादपि परभूतोऽदृश्यत्वादिगुणकोऽक्षरशब्दाभिहितः परमात्मेत्यर्थः । अश्नुत इति वा, न क्षरतीति वा अक्षरम् । तत् अव्याकृतेऽपि स्वविकारव्याप्तया वा महदादिवत् नामान्तराभिलापयोग्यक्षरणाभावाद्वा अक्षरत्वं कथञ्चिदुपपद्यते ॥ २३ ॥

रूपोपन्यासाच्च १ । २ । २४ ॥

(मु. २-१-४) " अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाक् विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा " इतीदृशं रूपं सर्वभूतान्तरात्मनः परमात्मन एव संभवति ; अतश्च परमात्मा ॥ २४ ॥

इति अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥

---

**उपासनप्रकारम्** प्रणवो धनुः—शरवत् तन्मयो भवेदित्युक्तम् । **परभक्तिरूपत्व**मिति, पञ्चमखण्डे जुष्टं यदा पश्यति, ज्ञानप्रसादेन इत्युक्तमभिप्रेत्य । षष्ठखण्डे नामरूपाद् विमुक्तः , ब्रह्मैव भवति, पुरुषमुपैति दिव्यम् इत्याद्यर्थ उच्यते उपरि **ब्रह्मसम**मिति । ब्रह्मैवेत्येवकारस्य साम्यार्थकत्वात् । परमंसाम्यमिति वचनं तु पञ्चमखण्डस्थम् । एवं विशेषणपदार्थमुपवर्ण्य सूत्रस्य विशिष्टार्थं स्मारयति **अत** इति ।

भेदव्यपदेशं विवृणोति **भेदेति** । **आदिना**, 'अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमित्यादिग्रहणम् । **ताभ्या** मिति । यथा प्रकरणे सर्वज्ञत्वादिधर्मोक्तिः विशेषणञ्च प्रकृतिपुरुषोभयभेदसाधकम् , तथा भेदव्यपदेशोऽपि, अक्षरात् परो यो जीवः तस्मात् परत्वं ह्युच्यमानं नाक्षर एवाऽऽनेतुं युक्तम् ; शिरोवेष्टनवैयर्थ्यादिति भावः । परशब्देन भेदकथनं हि सुसूक्ष्ममिति प्रागुक्तविवरणायोत्कर्षगर्भभेदकथनमेवेति नतरामक्षरे प्रधाने अक्षरपरपरत्वमित्यपि ध्येयम् । परतःपदं विशेष्यसाकांक्षत्वादक्षरपदविशेषणमिति पूर्वपक्षी । परत्वस्यावधिसापेक्षत्वात् अक्षरगतपरत्वस्यानाकांक्षितत्वात् अक्षरादित्येतदनन्तरं तत्पदसत्त्वाच्च अक्षरात् परं यत् तस्मादित्यर्थ एवोचित इति सिद्धान्ती । **अश्नुत** इति । " अक्षरं न क्षरं विद्यात् अश्नोतेर्वा सरोऽक्षरम्"इति द्विविधव्युत्पत्तिर्महाभाष्ये वर्णग्रहणार्थं दर्शिता । **नामान्तराभिलापे**ति । सततपरिणामशीलायां प्रकृतौ प्रलयदशाभाविपरिणामानां समानां न हि नामान्तराणि सन्ति, यान्यादाय, महन्नष्टम् अहङ्कारो नष्ट इतिवत् क्षरणव्यवहारः स्यादिति ॥ २३ ॥

अग्निरिह द्युलोकः । **पद्भ्याम्** ; पादावित्यर्थः ॥ २४ ॥

(17. वैश्वानराधिकरणम् ॥ ६ ॥ (छा. ५.११ ; अग्नि 10-5-6.)

**वैश्वानरः साधारणशब्दविशेषात् १। २। २५॥**

**इदमामनन्ति छन्दोगाः, (छा. ५-११-६) "आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि ; तमेव नो ब्रूहि" इति प्रक्रम्य, (छा. ५-१८-१) "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति । तत्र संदेहः—किमयं वैश्वानर आत्मा परमात्मेति शक्यनिर्णयः, उत नेति । किं प्राप्तम् ? अशक्यनिर्णय इति । कुतः ? वैश्वानरशब्दस्य**

---

पूर्वाधिकरणे प्रधानं जीव इति द्वयोरपि कोट्योः वाक्यविशेषे व्यवस्थया स्वीकारेण पूर्वपक्षवर्णनानुकूलं वाक्यं विषयः ; अथानेककोट्यव्यवस्थापूर्वपक्षानुकूलं वाक्यं विचार्यते । कारणत्वव्याप्य विश्वरूपकण्ठोक्तिमद्वाक्यघटितवाक्यं पूर्वं विषयः ; अथ तद्रूपपर्यवसायि वाक्यजातं विषयः । पुण्यपापे विधूयेति तत्रैव, अत्रापि, सर्वे पाप्मानः प्रदूयन्त इत्यस्ति। एवमुपस्थितवाक्यविचार इति संगतिः । ननु त्रैलोक्यशरीरकत्वस्य परमात्मनि प्रागुक्तत्वात् , तस्यात्र लाभे सति कथमपरमात्मत्वशंकेति चेत्—यद्यपि सर्वान्तरात्मत्वमन्यस्यासंभावितम्—अथापि द्युप्रभृतौ मूर्धत्वाद्यभावेन कल्पनामात्रतया परमात्मानं प्रतीव अन्यत् प्रत्यपि तत् शक्यं कल्पयितुमित्याक्षेपेण शङ्केति ध्येयम् । **आत्मानमेवेम**मिति; अस्माभिरुपास्यमानमात्मानमेवेत्यर्थः । संप्रतीत्यस्य ऋजु=सम्यक् इत्यर्थो वेदवाक्यादौ प्रसिद्ध इह ग्राह्यः । **तमेव नो ब्रूहि** ; न तु धनापेक्षाऽस्माकमिति भावः । **प्रादेशा**दिपदार्थ उपरि वक्ष्यते । सर्वत्राधिकरणे एककोटिनिर्णयेनैव पूर्वपक्षः प्रवर्तते; इह तु न तथा । कथं तर्हि संदेहस्य पूर्वपक्षस्य च भेद इति चेत्-शक्यनिर्णयत्वाशक्यनिर्णयत्वरूपकोटिद्वयक इह संदेहः । तत्राशक्यनिर्णयत्वकल्पेन पूर्वपक्षः, परेणोत्तरमिति । तदाह **तत्र संदेह** इति । नन्वेवमशक्यनिर्णयत्वे उपासनं किंविषयकतयाऽनुष्ठेयम् ? यथारुचीति चेत्-तदयुक्तम् । सकृत् प्रयुक्तः शब्दः सकृदेवार्थं गमयतीति एकस्यैवार्थस्य प्रामाणिकतया अन्यथाऽनुष्ठानस्य नैष्फल्यध्रौव्यादिति चेत्-सत्यम्-न वयं वैश्वानरविद्यायां योपि कोऽप्युपास्यो भवतीति ब्रूमः ; एक एवोपास्यः, परं स वैश्वानरविद्यारूपप्रकृतवाक्यजातमात्रेण दुर्निर्णयः इत्येव । तेन वचनान्तरेण वा पारम्परिकोपदेशेन वा व्यक्तिनिर्णयोऽनुष्ठानाय भविष्यतीति । सिद्धान्तस्तु इतरनिरपेक्षमित एव निर्णय इति ।

**किं प्राप्तम् | अशक्यनिर्णय इती**ति । अयं भावः—प्राचीनशालादयः पञ्च उद्दालकषष्ठाः अश्वपतिमुपसद्य निर्णयमलभन्तेति अत्र गम्यते । भूमज्यायस्त्वाधिकरणवक्ष्यमाणरीत्या सर्वांशमेलनेनैकमुपासनमिति कामं निर्णीयेत ; न तूपास्यव्यक्तिनिर्णयः । न च, 'को न आत्मा किं ब्रह्मे' ति उपक्रमवाक्य एव वैश्वानरविद्योपास्यस्याऽऽत्मत्वब्रह्मत्वयोः स्पष्टत्वात् न तद्विषये संदेहप्रसक्तिः; पूर्वपादेन ब्रह्मतत्त्वस्य, अन्तर्याम्यधिकरणेनात्मत्वस्य चावगमितत्वादिति वाच्यम्—प्रश्नार्थस्य विवेचनीयत्वात् । ब्रह्मण आत्मनश्चैकत्वात् क आत्मा किं ब्रह्मेति कथं **द्वय**प्रश्नः , व्यक्तिनिर्धारणे सति च क इति कथं प्रश्नः । अतोऽयमर्थः—**न आत्मे**त्यस्यास्मदन्तर्यामीति नार्थः ; अस्मदुपासनीयवैश्वानरात्मेत्यर्थः । स कः ; आदित्यादिष्वन्यतमो वाऽन्यो वा । **किं ब्रह्म**—ब्रह्म वाऽन्यद्वा; मुख्यगौणब्रह्मणोर्मध्ये किं ब्रह्मेदमिति । न तु

चतुर्ष्वर्थेषु प्रयोगदर्शनात्—जाठराग्नौ तावत्, (बृ. ७-९-१) अयमग्निर्वैश्वानरः, येनेदमन्नं पच्यते, यदिदमद्यते। तस्यैष घोषो भवति, यावदेतत् कर्णावपिधाय शृणोति। स यदोत्क्रमिष्यन् भवति, नैनं घोषं शृणोति" इति। महाभूततृतीये च (ऋं. सं. १०-८८-१२) 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इति। देवतायां च, (यजु. का. १-५-११; ऋ. मं. १-९८-१) "वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः" इति। परमात्मनि च, (यजु. अष्ट. ३ प्रश्न-११ अनु ८) "तदात्मन्येव हृदय्येऽग्नौ वैश्वानरे प्रास्यत्" इति, (प्रश्न. १-७) "स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते" इति च। वाक्योपक्रमादिषूपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानीति॥

एवं प्राप्तेऽभिधीयते—वैश्वानरः साधारणशब्दविशेषात्। **वैश्वानरः पर एवात्मा। कुतः? साधारणशब्दविशेषात्।** विशेष्यत इति विशेषः—साधारणस्य वैश्वानरशब्दस्य परमात्मा-

---

ब्रह्म कीदृशमित्यर्थः॥ किं शब्दबलान्निर्णयः, तदर्थान्वयिधर्मलिङ्गबलाद्वा। लिङ्गं हि सामर्थ्यं धर्मस्यान्वययोग्यता। नाद्य इत्युच्यते **वैश्वानरशब्दस्ये**ति। अन्त्ये वक्ष्यति **वाक्योपक्रमादि**ष्विति। नन्वत्रात्मशब्द एव गृह्यताम्—उदाहृतेषु वचनेषु परमात्मवाक्य एव ह्यात्मशब्दो दृश्यते। तद्वचनं तदितरव्यावृत्त्यर्थमेव। 'आत्मानं वैश्वानरम्' इति च विशिष्यात्मशब्दप्रयोगो मुहुरिति चेत्-न; 'सर्वेष्वात्मस्वन्नमत्ति' इति अत्रैवात्मशब्दस्य साधारणत्वावगमात् देवतादीनामप्यात्मत्वस्याक्षतेः। वस्तुतो वैश्वानरस्योपास्यस्यात्मनि प्राणाहुत्यर्थं भावनीयत्वस्योपरि वक्ष्यमाणत्वात् स्वात्मतया भाव्यत्वरूपातिशयादरेणैव मुहुरात्मशब्दप्रयोग इति नैष परमात्मन्यनिर्णायक इति। **भुवनाय** भुवनोपकाराय देवाः वैश्वानरमग्निं अह्नां केतुं सूर्यत्वेनाकल्पयन्नित्यर्थः। **सुमतौ स्याम**—शोभनमतिविषयीभवेम। **हिक**मित्यव्ययं (हीत्यर्थकं) प्रसिद्ध्यर्थकम्। **अभिश्रीः**। 'श्रियमिच्छेत् हुताशनात्'। **तदात्मनी**ति। अत्र हिरण्यस्य कनकत्वं परमात्मसंबन्धात् स्रष्टृत्वादुच्यते। **तत्** हिरण्मयम्; **हृदय्ये** हृदयपुण्डरीकवर्तिनि। शेषं **परिष्कारे। स एष** इति; आदित्य इत्यर्थः। अस्मिन् विश्वरूपत्वस्य विभिन्नवस्त्वैक्यस्य च श्रवणात् परमात्मविषयमिदं वाक्यम्। **वाक्योपक्रमे**ति; वाक्यजातरूपविद्योपक्रमेत्यर्थः। उपक्रमस्थलिङ्गं; 'को न आत्मा किं ब्रह्म' इति आत्मब्रह्मविषयकप्रश्नरूपम्; मध्यगतं लिङ्गम् आदित्यादेर्मूर्धादित्वम्; अन्तस्थं सर्वगतान्नादन-सर्वपाप्मदवनादि। आदित्यादिप्रत्येकोपासनफलतया किञ्चिदन्नादनं ह्युक्तम्, कृत्स्नोपासने सर्वान्नादनं युक्तमेव; न त्विदं ब्रह्मानुभवरूपम्। पाप्मदाहस्तु प्राणाग्निहोत्रफलम्; नोपासनस्य। अतो न संसारनिवृत्तिरूप इत्येवं भाव्यम्। अन्यथा द्युलोकादिपरिच्छिन्नत्व-प्राकृतपदार्थरूपमूर्धादिमत्त्व-प्राणाहुत्याधारत्वादीनां न समन्वय इति।

**साधारणेति** सौत्रपदेन शब्दसाधारण्यं पूर्वपक्षहेतुरिति ज्ञायते। साधारण्यञ्चानिश्चयस्यैव प्रयोजकमिति अशक्यनिर्णयत्वं **शङ्कितम्**। विशेषान्तरबलेन तस्य शब्दस्य विशेषवाचित्वनिश्चयः। **विशेषादि**ति। विशेष्यत इति **कर्मणि व्युत्पादने विशेषः** विशेष्यमाण इत्यर्थः स्यात्। तर्हि तस्य

साधारणैर्धर्मैर्विशेष्यमाणत्वादित्यर्थः । तथाहि—औपमन्यवादयः पञ्च [इमे] महर्षयः समेत्य, 'को न आत्मा ; किं ब्रह्म ' इति विचार्य, ' उद्दालको ह वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति, तं हन्ताभ्यागच्छाम' इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः । स चोद्दालकः एतान् वैश्वानरात्मजिज्ञासून् अभिलक्ष्य, आत्मनश्च तत्राकृत्स्नवेदित्वं मत्वा, तान् होवाच, ' अश्वपतिर्वै भगवन्तोऽयं केकयः संप्रतीममात्मानं वैश्वानरमध्येति, तं हन्ताभ्यागच्छाम' इति । ते चोद्दालकषष्ठाः तमश्वपतिमभ्याजग्मुः । स च तान् महर्षीन् यथार्हं पृथगभ्यर्च्य, "न मे स्तेनः" इत्यादिना, "यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इत्यन्तेन आत्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य, 'यावदेकैकस्मा ऋत्विजे धनं दास्यामि, तावद् भगवद्भ्यो दास्यामि वसन्तु भगवन्तः ' इत्यवोचत् । ते च मुमुक्षवो वैश्वानरमात्मानं जिज्ञासमानाः तमेवाऽऽत्मानमस्माकं ब्रूहीत्यवोचन् । तदेवं 'को न आत्मा, किं ब्रह्म' इति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैः तज्ज्ञमन्विच्छद्भिः वैश्वानरात्मज्ञसकाशमागम्य पृच्छ्यमानो वैश्वानरात्मा परमात्मेति विज्ञायते । आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात् सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवाभिधत्त इति विज्ञायते । किञ्च 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति', ' तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति च वक्ष्यमाणं वैश्वानरात्मविज्ञानफलं वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ॥ २५ ॥

---

साधारणशब्दं प्रति विशेषणत्वात् पूर्वनिपातः स्यादिति चेन्न—वृक्षविशेष इत्यादेरिव एवमेव प्रयोक्तव्यत्वात् । साधारणशब्दो नाम नानार्थशब्दः ; तद्विशेषो नाम अर्थविशेषशक्तत्वविशिष्टशब्द इति । यद्वा **विशेष्यमाणत्वादिति** भाष्यानुसारेण विशेष्यत इति भावे व्युत्पादनस्वीकारात् विशेषणक्रियैव **विशेषः** । वैश्वानरशब्दार्थः परमात्मा तदन्वयार्हधर्मवत्तयोच्यमानत्वादिति विशिष्टार्थः । महर्षीणां वैशिष्ट्यम्, तदुपसन्नगौतममहर्षिज्ञानातिशयः, केकयराजस्य विद्यार्थकर्मानुष्ठानम्, एषां धनवैतृष्ण्यम्, विद्यार्थोपनयनवाञ्छयोपसर्पणमितीदं सर्वं ब्रह्मात्मविषयकविचारप्रक्रमवत् ब्रह्मविद्यात्वसाधकमित्यभिप्रायेणोपक्रमार्थं संगृह्णाति **औपमन्यवादय** इति । ' न मे स्तेन' इति श्लोकः राज्ञा नाहङ्कारेण प्रयुक्तः; किंतु कदा चिदिमे अन्यथाशङ्कया न प्रतिजिघृक्षेयुरिति मत्वा तत्त्वावेदनाय। तेनान्यदप्यर्थसिद्धमित्याह **ब्रह्मविद्भिरपीति । तदेव**मिति। अयं भावः—को न आत्मेत्यादिवाक्यार्थस्तावत् यः कश्चिदस्तु । आत्मब्रह्मशब्दप्रयोगः, वैश्वानरस्यात्मत्वं ब्रह्मत्वञ्च यथासंप्रदायं स्वयं निश्चित्य आदित्यादीनामेवोपास्यमानत्वात् एषाञ्चानन्तर्यामित्वादब्रह्मत्वाच्च, कथञ्चिदात्मत्वादि किमेष्वेकत्र भाव्यम् अन्यत्र वेति कृतामेषां जिज्ञासां दर्शयति। तत्प्रयुक्तब्रह्मशब्दस्थाने वैश्वानरशब्दप्रयोगश्च तत्त्वं बोधयतीति। एवञ्च **न आत्मे**त्यस्य अस्मदन्तर्यामी किमादित्यः अन्यो वेत्यर्थेऽपि न दोषः । **विज्ञानफल**मिति। ' सर्वेष्वात्मस्वन्न ' मिति न पृथगुपासन-

इतश्च वैश्वानरः परमात्मा—

स्मर्यमाणमनुमानं स्यादिति ।१।२।२६॥

द्युप्रभृति पृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिश्यते । तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम् । तदिह तदेवेदमिति स्मर्यमाणं प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे अनुमानं—लिङ्गमित्यर्थः । इतिशब्दः प्रकारवचनः । इत्थंभूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात् । श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धम् । यथा आथर्वणे, (मु. २-१-४) 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाक् विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति । अग्निरिह द्युलोकः, (बृ. ८-२-९) 'असौ वै लोकोऽग्निः' इति श्रुतेः । स्मरन्ति च मुनयः (?) "द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे । दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता" इति । यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः' इति च ।

---

जन्यान्नमाहारः : तेषां निन्द्यत्वात् । आत्मस्वन्नमिति सर्वात्मान्तर्वर्त्यन्नकथनाच्च तद् ब्रह्मैव । 'प्रदूयन्ते' इत्येतदनन्तरं, 'य एवं विद्वानग्निहोत्रं जुहोती' ति वाक्यशेषः । तत्र प्राणाग्निहोत्रमात्रस्य नेदं फलम् असामञ्जस्यात् । विद्याङ्गभूताग्निहोत्रव्यक्तिफलमित्यपि न ; अङ्गत्वादेव फलान्तरानपेक्षणात् । विद्याया घटने विद्याफलत्वस्यैव सम्यक्त्वात् । न च विद्याकर्मोभयफलत्वम् , केवलविद्याया अपि पाप्मदाहकत्वस्यान्यत्र श्रुतत्वात् । तस्मादङ्गिफलस्याङ्गेऽध्यारोपेण स्तुतिः, अग्निहोत्रस्यैवमननुष्ठाने नेयं विद्या कल्पत इति ज्ञापनायेति विद्वानिपदार्थ एव नैर्भर्यम् । अत एव, 'य इदमविद्वानग्निहोत्रं जुहोति' इति अवैदुष्यनिन्दनपूर्वं वैदुष्यविधानमिति भावः । ॥ २५ ॥

हेत्वन्तरमाह **स्मर्यमाण**मिति । ननु श्रूयमाणमिति वक्तव्ये **स्मर्यमाण**मिति कुतः ; पूर्वाधिकरणे हि श्रुतिर्दर्शिता ; **अनुमान**मिति पदे च सति पुनः किमिति हेत्वर्थक **इति**शब्दः; **स्या**दिति च व्यर्थमिति शङ्कायाम्—यथावस्थितार्थं परभाष्यव्याहृतं दर्शयति **द्युप्रभृती**त्यादिना । अग्निर्मूर्धेति पूर्वमन्त्र इवात्र एकेन वाक्येन परमात्मावयवतया सर्वाकथनात् विशिष्टरूपश्रवणमिह नास्ति । श्रुतरूपाणामेतत्सर्ववाक्यसमाहारेणार्थचिन्तायां तदुपस्थितिर्जायत इति **स्मर्यमाण**मित्युक्तम् । **इति** इति इहावगम्यमानप्रकारपरम् : एवं ग्रहणस्मरणसहभावात् प्रत्यभिज्ञानम् । **स्या**दिति च अग्न्यादेरपि द्युमूर्धकत्वादिकल्पनासंभवादनेन रूपेण कथं परमात्मसिद्धिरिति शंकापरिहाराय । यद्यपि मूर्धत्वादि कल्पनामात्रम्--अथापि द्युप्रभृतेः परमात्मानं प्रति शरीरतया तस्य चात्मतया तं प्रति तस्यावयवभावकल्पना घटते । अग्न्यादिकं प्रति तु अशरीरमेव सर्वमिति तत्र तत्कल्पनौचित्यं नास्तीति । इदं दर्शयितुमेव, अग्निर्मूर्धेति मन्त्रे, 'ह्येष सर्वभूतान्तरात्मा' इत्युपपादनमिति ।

इह च द्युप्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते। तथा हि—तैरौपमन्यवप्रभृतिभिर्महर्षिभिः, 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि, तमेव नो ब्रूहि' इति पृष्टः केकयः तेभ्यो वैश्वानरात्मानमुपदिदिक्षुः, विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मनि एतैः किञ्चित् ज्ञातं किञ्चिदज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तान् एकैकं पप्रच्छ। तत्र 'औपमन्यव! कं त्वमात्मानमुपास्से' इति पृष्टे, 'दिवमेव भगवो राजन्' इति तेन चोक्ते, दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन् वैश्वानरस्य द्यौर्मूर्धेति चोपदिशन् तस्याः वैश्वानरांशभूताया दिवः सुतेजा इति गुणनामधेयं प्राचिरूयपत्। एवं सत्ययज्ञादिभिरादित्यवाय्वाकाशाप्पृथिवीनामेकैकेनैकैकमुपास्यमानतया कथितानां विश्वरूपः, पृथग्वर्त्मा, बहुलः, रयिः, प्रतिष्ठा इत्येकैकगुणनामधेयानि, वैश्वानरात्मनश्चक्षुःप्राणसंदेहवस्तिपादावयवत्वं चोपदिष्टम्। संदेहः मध्यकाय उच्यते। अत एवम्भूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव ॥ २६ ॥

पुनरप्यनिर्णयमेवाशंक्य परिहरति—

शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न-तथादृष्ट्युपदेशात्; असंभवात्; पुरुषमपि चैनमधीयते १। २। २७॥

यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति—तन्न, शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च जाठरस्याप्यग्नेरिह प्रतीयमानत्वात्। शब्दस्तावत् वाजिनां वैश्वानरविद्याप्रकरणे, (अग्निरहस्य १०-५-६. ११)" स एषोऽग्निर्वैश्वानरः" इति वैश्वानरसमानाधिकरणतयाऽग्निरिति श्रूयते। अस्मिन् प्रकरणे च, (छा ५-१८-२) 'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' इति वैश्वानरस्य हृदयादिस्थस्याग्नित्रयकल्पनं क्रियते। (छा. ५-१९-१) "तद्यद्भक्तं प्रथममागच्छेत् तत् होमीयम्। स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहा"

---

**गुणनामधेयम्**। अवयवार्थमुखेनान्वर्थं नाम। **एकैक**मिति क्रियाविशेषणम्। **बहुलः** विपुलांशः। **रयिः**। रयसंपन्नं हि जलम्; तत एव धनतुल्यमिति वा रयिः। **वस्तिः** मूत्रस्थानम्; तत्स्थमूत्रमिह। **संदेहो मध्यकाय** इति। तस्योत्तराधरैकीकारकांशत्वात्। समित्येकीकारे। एकत्वमपृथग्भावः। १-२६

पूर्वसूत्रे **स्यादि**ति पदाभिप्रेतं सूत्रद्वयेन शंकापरिहारमुखेन विशदीक्रियते। तत्र शब्दादिसूत्रमिदमपि नास्याः विद्यायाः जाठराग्निविषयकत्वावधारणेन शङ्कया प्रवृत्तम्। तथा सति पूर्वपक्षप्रक्रमविरोधात्, उत्तरसूत्रविरोधाच्चेति अनिर्णयपरतयैवावतारयति **पुनरपी**ति। अग्निरहस्यस्थं विशेषमवलम्ब्य पूर्वपक्षः। तत्र नात्मब्रह्मशब्दोपक्रमः,"वैश्वानरं ह भगवान् संप्रति वेद; तं नो ब्रूहि" इत्येवोपक्रमात्। वैश्वानरशब्दः साधारणोऽपि असाधारणशब्दान्तरसमानाधिकरणत्वाज्जाठरे पर्यवस्यति; तत्रैव,'स एषोऽग्निर्वैश्वानरः' इत्यग्निशब्दात्। अग्निशब्दस्य परमात्मव्यावर्तकत्वं स्पष्टम्। भूतादिव्यावृत्तिः आदिपदग्राह्यहेतुबलात्। तौ च हेतू त्रेताग्निकल्पनं प्राणाहुत्याधारत्वञ्च। तदुभयं प्रकृतच्छान्दोग्यवाक्यावगतमिति **आदि**पदेनैव ज्ञाप्यते; न कण्ठोक्त्या। यद्यपि हृदयादेरेव गार्हपत्याद्यग्निता श्रूयते—अथापि सारूप्यौचित्यात् हृदयादेः गार्हपत्यादिस्थान-

इत्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्यावगम्यते । तथा वैश्वानरस्यास्मिन् पुरुषेऽन्तः प्रतिष्ठानं वाजसनेयिनः समामनन्ति, (अग्नि.) "स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद" इति । अतोऽग्निशब्दसामानाधिकरण्यात्, अग्नित्रेतापरिकल्पनात्, प्राणाहुत्याधारभावात्, अन्तःप्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयत इति नैकान्ततः परमात्मत्वमिति चेत्—

नन्न, तथादृष्ट्युपदेशात्—**पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणो वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात् । अग्निशब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते; अपितु जाठराग्निविशिष्टः परमात्मा । कथमिदमवगम्यत इति चेत्**-असंभवात्-**जाठरस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात् । त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्निशब्दो जाठरशरीरतया तद्विशिष्टं परमात्मानमेवाभिदधातीत्यर्थः । यथोक्तं भगवता, (गी. १५-१४) "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति ; जाठरानलशरीरो भूत्वेत्यर्थः । अतस्तद्विशिष्टयोपासनमत्रोपदिश्यते । किञ्च** पुरुषमपि चैनमधीयते **वाजसनेयिनः,** "स एषोऽग्निर्वैश्वानरः यत् पुरुषः" **इति । न हि जाठरस्य केवलस्य पुरुषत्वम् । परमात्मन एव हि निरुपाधिकं पुरुषत्वम् ; यथा, (पुरुषसू.) "सहस्रशीर्षा पुरुषः...पुरुष एवेदं सर्वम्" इत्यादौ ॥ २७ ॥**

अत एव न देवता भूतञ्च ।१।२।२८॥

---

त्वकल्पनया तद्व्याप्तजाठराग्न्यंशस्य वेदिकाग्नित्वकल्पनं युक्तम् । एवं कल्पनञ्च आहुत्याधारत्वाय । प्राणाहुत्याधारता च जाठर एव प्रसिद्धा । किं छान्दोग्यं प्रति गमनेन ; अत्रैवाग्निशब्दार्थनिर्णायकलिंगमस्ति शरीरान्तःप्रतिष्ठानम् । तदेवं जाठरपरत्वे प्रतीयमाने, आत्मब्रह्मशब्दादिना कथं ब्रह्मविषयत्वनिर्णय इति पूर्वपक्षः । **तथादृष्ट्युपदेशात्**-जाठराग्निशरीरकतया परमात्मोपासनस्याभिमतत्वात् । त्रैलोक्यशरीरकत्वं श्रुतिद्वयसिद्धं ब्रह्मपरत्वसाधकमित्याह **असंभवादि**ति । नन्वग्निशब्दस्यानेकलिङ्गोपष्टब्धस्य केवललिङ्गेन कथं बाध इत्यत्र तत्रश्रुतावेव श्रूयमाणं परमात्मशब्दमेव दर्शयति **पुरुषमपिचे**ति । अधीयते शतपथिन इति मन्त्रार्थः । **पूर्वोक्तस्ये**ति । **स एषोग्नि**रिति **तदेत**च्छब्दाभ्यां पूर्वं तत्तदनूदित स्वोपदिष्टसर्वांशसिद्धत्रैलोक्यशरीरकत्वस्य परामर्शात् इन्द्रप्राणाधिकरणोक्तरीत्या अग्निशब्दस्याग्निविशिष्टपरत्वावगमादिति भावः । कथञ्चित् अग्निदेवतायां तेजोभूते च व्यापित्वमात्रमादाय त्रैलोक्यशरीरकत्वं कल्प्येत ; जाठरे तत् पुनरात्मसंभवीत्याशयेनोक्तम् **असंभवा**दिति पदं व्याख्यातुमुत्थापयति **कथ**मिति । सर्वजठरवर्तित्वादत्रापि तत् भवेदिति पूर्वपक्षी मन्यते ॥ २७

अपरिच्छिन्नत्वात् त्रैलोक्यशरीरकत्वं देवतायां भूते च भवतीत्यधिकाशङ्कायामाह **अत एवे**ति । देवतायाः परिच्छिन्नत्वे तन्नियमनगुणोऽपि परिच्छिन्नः । तेजोधातौ तु स्वरूपतोऽप्यपरिच्छेद इति तत्र

**उक्तेभ्य एव हेतुभ्यो देवतायाश्च, तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः ॥२८॥**

**साक्षादप्यविरोधं जैमिनिः ।१।२।२९॥**

वैश्वानरसमानाधिकरणस्याग्निशब्दस्य जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वम्, तथैव परमात्मन उपास्यत्वं चोक्तम्। जैमिनिस्त्वाचार्यः, वैश्वानरशब्दवदग्निशब्दस्यापि परमात्मन एव साक्षात् अव्यवधानेन वाचकत्वे न कश्चिद्विरोधः इति मन्यते ॥

एतदुक्तं भवति—यथा वैश्वानरशब्दः साधारणोऽपि परमात्मासाधारणधर्मविशेषितो विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाभिदधातीति निश्चीयते - एवमग्निशब्दोऽप्यग्रनयनादिना येनैव गुणेन योगात् ज्वलने वर्तते, तस्यैव गुणस्य निरुपाधिकस्य

---

क्रमः। नियमनं न सार्वकालिकम्; व्यापित्वमात्रं न शरीरत्वसाधनपर्याप्तम्; परमात्मशरीरत्वं त्रैलोक्ये क्लृप्तम्; मूर्धत्वादिमात्रं शरीरावयवेषु कल्प्यत इति लाघवं सिद्धान्ते इति भावः। अग्निशब्दस्यार्थत्रयपरत्वसंभवेऽपि जाठराग्निग्रहणेन तच्छरीरकत्वमेव विवक्षितम्-अन्यमात्रसाधारणधर्माभावात्। प्राणाहुत्याधारत्वादेश्चान्यत्राभावादित्यपि **अत एवेति** सूत्रविवक्षितम्। २८

एवं विशिष्टवाचित्वपक्षमुक्त्वा जैमिन्यभिमतं पक्षान्तरमाह **साक्षादपीति। वैश्वानरशब्दवदिति।** वैश्वानरशब्दस्यार्थचतुष्टयसाधारणत्वं हि पूर्वपक्ष एव विदितम्। तत्र च न शरीरात्मभावो विवक्षित इति परमात्मनः तच्छब्दार्थत्वविषये न विवाद इति भावः। ननु,'नरे संज्ञायाम्' इत्यनुशासनात् दीर्घे विश्वानरशब्दनिष्पत्तौ विश्वानर एव वैश्वानर इति तस्य संज्ञात्वावगमात् रूढ्या अग्निपरत्वं परमात्मपरत्वञ्चेति तद्वदेवाग्निशब्दस्य साक्षात् तदर्थकत्वे एकपदवैयर्थ्यम्, किञ्चाग्निशब्दस्य परमात्मनि रूढौ प्रमाणं न किञ्चिदस्तीति कथं वैश्वानरपदतुल्यतेत्यत्राह **एतदुक्तं भवतीति।** अयं भावः—संज्ञायामित्युक्तावपि नानार्थकल्पने प्रमाणाभावात् योगार्थनिरुक्तिदर्शनाच्चैकरूपयोगार्थग्रहणेन तन्मुखेन यत्रयत्र प्रसिद्धिः तत्तन्मात्रबोधनमेवेष्यते। अत एव मीमांसकैः पङ्कजादिपदेऽपि योगार्थस्य प्राचीनप्रयोगवशान्नियन्त्रणमेव रूढिरित्युक्तम्। अतो वैश्वानरपदे योगव्युत्पत्तिरस्त्येव। तद्वत् अग्निपदमपि योगेन परमात्मानं साक्षादभिधत्त इति। निरुक्तिरुभयत्र टीकायामनूदिता—"वैश्वानरः कस्मात्? विश्वान् नरान् नयति; विश्व एनं नरा नयन्तीति वा। विश्वानर एव वैश्वानरः। राक्षसो वायस इतिवत्। रक्ष एव राक्षसः, वय एव हि वायसः" इति, "अग्निः कस्मात्? अग्रणीर्भवति, अग्रं नीयते, अग्रं नयति नमयति, संनमनोक्तौ प्रसन्नो भवति" इति च। विश्वेषां वा अयं नर इति विश्वानर इति **शांकरभाष्ये। नरः-नेतेति कल्पतरुः। नेतृत्वादिने**त्यादिपदेन नेयत्वविवक्षा। पूर्वपक्षे अग्निशब्दस्तेजसि रूढः, वैश्वानरपदं यौगिकम्। सिद्धान्ते जैमिनिमते उभयं यौगिकम्।

नन्वस्य बादरायणसंमतत्वं पश्चात्सूत्रणात् ज्ञायते। एवञ्च "तथादृष्ट्युपदेशात्' इति स्वयं न वक्तव्यम्। न च विकल्पो युक्तः; सकृत्प्रयुक्ते शब्देऽर्थद्वयायोगादिति चेत्—उच्यते। इन्द्रप्राणाधिकरणे अन्यलिङ्गसद्भावे तदन्वयानुरोधाय रूढ्यर्थस्यावश्यकताया उक्तत्वात् इहापि प्राणाहुत्याधारत्वान्तःप्रतिष्ठानान्वयाय जाठराग्निर्ग्राह्य इति तयोस्तच्छरीरकपरमात्मार्थकत्वमिति बादरायण आह। जैमिनिस्तु—

काष्ठागतस्य परमात्मनि संभवादस्मिन् प्रकरणे परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभिधत्ते इति ॥ २९ ॥

" यस्त्वेतमेवं प्रादेशमात्रमभिविमानम् " इति अपरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेशसंबन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते ? तत्राह—

अभिव्यक्तेरित्याश्मरथ्यः । १ । २ । ३० ॥

---

रूढ्यर्थस्यावश्यकत्वात् अग्नि इति पदात् योगार्थस्य निरुक्त्याद्यभावेनास्फूर्त्या वा, व्युत्पत्तिनिमित्तमिदम्, न तु प्रवृत्तिनिमित्तमिति योगार्थस्योपेक्ष्यत्वाद्वा, 'मामुपास्स्व' 'मत्तः' इत्यादाविव सर्वनामतया विलक्षणव्यक्त्यर्थकत्वाद्वा, रूढ्यर्थस्यैव निपुणतरैर्निर्णीतत्वाद्वा भवति। प्रकृते शब्दादिहेतुचतुष्टयं पूर्वपक्ष्युक्तम्। तत्र शब्दोऽप्रयोजकः; योगादेव ज्वलनवचनात् परमात्मन्यपि तत्संभवात्। न च पुरःस्फुरितज्वलनव्यक्तित्यागो दोष इति वाच्यम्-योगार्थविचारे निरतिशयस्य पुष्कलस्याग्रनेतृत्वस्यैव पुरःस्फूर्तिकतया तत्त्यागरूपदोषस्य ज्वलनग्रहणपक्षे सत्त्वात्। वेनाग्निकल्पनमप्यसाधकम्; तस्य, 'अयमग्निर्वैश्वानरः' इति वाक्यं यत्र श्रुतौ, तत्राभावेन तन्मूलकतया ज्वलनविवक्षाया अप्रसक्तेः, एवं प्राणाहुत्याधारत्वमपि। अन्तःप्रतिष्ठानं तु जाठराग्न्यवस्थानमेवेति न सिद्धम्-तत्रान्यादृशं प्रादेशमात्रत्वमुपवर्ण्य विश्वरूपस्य परमात्मन एवोपासकशरीरे स्थितत्वस्य वर्णितत्वादन्तःप्रतिष्ठितमिति पदस्य तदर्थकत्वसंभवात्। होमशब्दस्याग्न्यधिकरणकप्रक्षेप इत्यर्थाभावात् आहुत्याधारतयाऽग्नेरेवापेक्षेति नियमस्य मीमांसकैरस्वीकाराच्च। यद्यपि प्राणाहुतेरग्निहोत्रत्वकीर्तनात् अत्राग्न्यधिकरणकत्वस्यावश्यकता—तथापि हृदयादेर्गार्हपत्यत्वकल्पनैव पर्याप्तेति जाठरस्यैवाधारत्वं भावनीयमिति न नियमः। आत्मनि हैवास्य वैश्वानरे हुतं भवतीति च हुताधारत्वं परमात्मन एवोक्तम्। अतोऽनन्यथासिद्धं लिंगमपि नास्ति। अतो योग एवास्त्विति। एवञ्च पूर्वं तथादृष्ट्युपदेशादित्युक्तमिन्द्रप्राणाधिकरणार्थस्मारकमात्रम्, शब्दस्य लिङ्गस्य चानन्यथासिद्धत्वेऽपि समाधानस्योक्तत्वान्नाक्षेपावसर इति ज्ञापनायेति-मन्यते। बादरायणाशयस्तु—उपासकानुपासकसर्वकर्तृकस्यापि आहुतिविशेषस्य प्राणाग्निहोत्रत्वेन प्रसिद्ध्यतिशयात् जाठराग्नौ होमादेव तथाव्यवहारात् तस्याधारत्वमवर्जनीयमिति तदनुपेक्षया तद्विशिष्टार्थकत्वमेव ज्यायः। यत्रैवं गमकं किमपि नास्ति, तत्र जैमिन्युक्तरीतिः; यथा आकाशप्राणादिशब्देषु। सत्यामपि, 'गायति च त्रायते च' इति व्युत्पत्तौ सादृश्यनियामकाकारोक्तिमनुरुध्य गायत्रीशब्दस्य योगव्युत्पत्तिमन्तर्यामिरूढिञ्च विहाय गायत्रीसदृशार्थकत्वमपि स्वीकृतं ज्योतिरधिकरणे इत्यप्यवधेयमिति। २९ ॥

ननु तेजोभूतग्रहणपक्ष एव त्रिवृत्कृततेजोविकारद्युलोकादिसर्वपरिच्छिन्नत्ववर्णनं घटते। तस्य तदर्हत्वात्; अग्निदेवताग्रहणपक्ष एव प्राकृतद्युलोकादिमूर्धादिमत्त्वं संगच्छते; जाठरग्रहण एवोरःप्रभृतेर्वेद्यादित्वकल्पनया होमविधानं युज्यते। परमात्मनोऽपरिच्छिन्नत्वात्, अप्राकृतमूर्धादिमत्त्वात्, सर्वव्यापिनो होमसंपाद्यहुताधारत्वाभावाच्चेत्याक्षेपाणां परिहारायोपरि सूत्राणि। तत्रान्तिमाक्षेपपरिहारः सूत्रद्वयेनेति विवेकः। न तु शाङ्कर इवैकस्यैवाक्षेपस्य तत्तदृष्यभिमतनानापरिहारप्रकारप्रदर्शनार्थानि सूत्राणि। ऋषिनामनिर्देशस्तु गौरवार्थः; न तु स्वासंमतिसूचकः। **अभिव्यक्तेरि**ति; अपरिच्छिन्नस्य परिच्छिन्नत्वे सत्येव धारणासौकर्या-

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मनः इत्याश्मरथ्य आचार्यो मन्यते। द्यौर्मूर्धा, आदित्यश्चक्षुः, वायुः प्राणः, आकाशो मध्यकायः, आपो वस्तिः, पृथिवी पादौ इति द्युप्रभृतिप्रदेशसंबन्धिन्या मात्रया परिच्छिन्नत्वम् कृत्स्नमभिव्याप्तवतो विगतमानस्य ह्यभिव्यक्तेरेव हेतोर्भवति ॥ ३० ॥

मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति चेत्—तत्राह—

अनुस्मृतेर्बादरिः । १ । २ । ३१ ॥

तथोपासनार्थमिति बादरिराचार्यो मन्यते । "यस्त्वेतमेवमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति ब्रह्मप्राप्तये ह्युपासनमुपदिश्यते । एतमेवमिति; उक्तप्रकारेण पुरुषाकारमित्यर्थः । सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यद् अन्नं भोग्यं तदत्ति—सर्वत्र वर्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति । यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते, तत् मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते ॥ ३१ ॥

यदि परमात्मा वैश्वानरः, कथं तदुरःप्रभृतीनां वेद्यादित्वोपदेशः, यावता जाठराग्निपरिग्रह एवैतदुपपद्यत इत्यत्राह—

संपत्तेरिति जैमिनिः; तथा हि दर्शयति । १ । २ । ३२ ॥

अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समाराधनभूतायाः उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसंपादनाय अयमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते । तथा हि परमात्मोपासनोचितमेव फलम्, प्राणाहुत्याः अग्निहोत्रसम्पत्तिश्च दर्शयतीयं श्रुतिः, (छा.५.२४) "स य इदमविद्वानग्निहोत्रं जुहोति, यथा अङ्गारानपोह्य भस्मनि जुहुयात्, तादृक् तत् स्यात् । अथ य एतदेवं विद्वानग्निहोत्रं जुहोति, तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति । तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति ॥ ३२

आमनन्ति चैनमस्मिन् १.२.३३

एनं परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरम् अस्मिन् उपासकशरीरे प्राणाहुत्याधारत्वाय आमनन्ति च, "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इत्यादिना ।

---

दित्यर्थः । अनुस्मृतेरिति; मूर्धत्वादिकल्पनायामेवानुस्यूतस्मृतिनिष्पत्तेरित्यर्थः । संपत्तेरिति; अग्निहोत्रस्य वेद्यादिसापेक्षत्वात् केषाञ्चित् वेद्यादित्वकल्पनायां सत्यामेव प्राणाहुतेरग्निहोत्रत्वस्य संपत्तेः संपादनसंभवात्—कल्पनौचित्यादित्यर्थः । यदि होमः परमपुरुषस्याराधनाय, तर्हि कुत इह जाठरे होम इत्यत्राह आमनन्ति चैनमस्मिन् इति । उपासकशरीरे द्युप्रभृत्यवयवकपरमात्मसंनिधानस्य भाव्यमानत्वात् अत्र

अयमर्थः—" यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय, "सर्वेषु लोकेषु" इत्यादिना ब्रह्मप्राप्तिश्च फलमुपदिश्य, अस्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रम्, "तस्य ह वा एतस्य" इत्यादिनोपदिशति; यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरः, तस्यावयवभूतान् अग्न्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयान् उपासकशरीरे मूर्धादिपादान्तेषु संपादयति। मूर्धैव सुतेजाः—उपासकस्य मूर्धैव सुतेजाः परमात्ममूर्धभूता द्यौरित्यर्थः। चक्षुर्विश्वरूपः—आदित्य इत्यर्थः। प्राणः पृथग्वर्त्मा—वायुरित्यर्थः। संदेहो बहुलः—उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः। बस्तिरेव रयिः -अस्य बस्तिरेव तदवयवभूता आप इत्यर्थः। पृथिव्येव पादौ—अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः। एवमुपासकः स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं संनिहितमनुसन्धाय स्वकीयानि उरोलोमहृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिर्बर्हिर्गार्हपत्य-अन्वाहार्यपचनाहवनीयान् अग्निहोत्रोपकरणभूतान् परिकल्प्य, प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्य, एवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति, 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः' इत्यादिनोपदिश्यते। अतः परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम् ॥ ३३ ॥ इति वैश्वानराधिकरणम् ॥ ६ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

क्रियमाणा आहुतिस्तदाराधनमेवेति भावः। अत्र छान्दोग्यानुसारेण प्रादेशमात्रत्वं द्युप्रभृतिपदार्थरूपप्रदेश-(अवयव) कृतपरिच्छेदवत्त्वम्। एतत्पदार्थरूपपरमात्ममूर्धादिपादान्तावयवत्वभावना उपासकमूर्धादिपादान्ते छान्दोग्ये प्रतीयमाना। अग्निरहस्ये तु उपासकमूर्धादिचुबुकान्तकतिपयपदार्थग्रहणेन परमात्ममूर्धादिपादान्तभावना दर्शिता। तदा प्रादेशो नाम प्रसारिताङ्गुष्ठकनिष्ठिकान्तरालरूपं परिमाणमिति, तत् मूर्धचुबुकान्तरालस्यास्तीति तत्र परमात्मावयवभावनाकृतं तस्य प्रादेशमात्रत्वम्। न च छान्दोग्येऽपि अस्यैव विवक्षा; तस्य ह वा एतस्य वैश्वानरस्य मूर्धैव सुतेजाः इत्यादिवाक्यवैयर्थ्यात्। सुतेजआदिशब्दवाच्य आदित्यादिः वैश्वानरस्य मूर्धादिरेव, न तु पूर्णवैश्वानर इत्यर्थो हि प्रागेवावगतः। उत्तरैकरस्याच्च भाष्योक्तं श्रेयः। उर एव वेदिरित्यादौ उपासकोरःप्रभृतेरेव ग्रहणात् मूर्धादिपदस्यापि तन्मूर्धादिपरत्वौचित्यात्। अनयोश्च भावनयोर्विरोधात् व्रीहियवयोरिव विकल्प इत्यादि अन्यत्र द्रष्टव्यम्। भावनाद्वयमप्यन्निमसूत्रविवक्षितम् ॥ श्रीः ॥

इति भाष्यार्थदर्पणे प्रथमाध्यायद्वितीयपादः

## द्युभ्वाद्यायतनं स्वशब्दात् १-३-१

आथर्वणिका अधीयते (मु.) "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" इति। तत्र संशयः, किमयं द्युपृथिव्यादीनामायतनत्वेन श्रूयमाणो जीवः, उत परमात्मेति। किं युक्तम्? जीव इति। कुतः? "अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः" इति परस्मिन् श्लोके पूर्ववाक्यप्रस्तुतं द्युपृथिव्याद्यायतनं यत्रेति पुनरपि सप्तम्यन्तेन परामृश्य तस्य नाड्याधारत्वमुक्त्वा, पुनरपि, "स एषोऽन्तश्चरते बहुधा जायमानः" इति तस्य बहुधाजायमानत्वं चोच्यते। नाडीसंबन्धः देवादिरूपेण बहुधाजायमानत्वं च जीवस्यैव धर्मः। अस्मिन्नपि श्लोके, "ओतं मनः सह प्राणैश्च सर्वैः" इति प्राणपञ्चकस्य मनसश्चाऽऽ-

---

### भाष्यार्थदर्पणः १. ३.

अन्ययोगव्यवच्छेदार्थायां त्रिपाद्यां पूर्वस्मिन् पादे अस्पष्टजीवादिलिङ्गकानि वाक्यानि जीवादि-परत्वनिषेधेन परमात्मपरतया स्थापितानि। तत्रादृश्यत्वादिगुणकाधिकरणे मुण्डकोपनिषत् परमात्मपरेति न्यरूपि । तत्र रूपोपन्यासे हेतुतयोक्ते तस्य रूपस्यापरमात्मविषयेऽपि श्रवणमस्तीति अस्पष्टजीवादिलिङ्गक-वैश्वानरविद्याविचारः तदनन्तरं प्रवृत्तः । अस्पष्टजीवादिलिङ्गकवाक्यविचारे एवमवसिते स्पष्टजीवादिलिङ्ग-कवाक्यविचार इदानीमारभ्यते । तत्र पूर्वप्रसक्तमुण्डकोपनिषदेव स्पष्टजीवलिङ्गदर्शनात् सैव प्रथमं गृह्यते । नैतावता प्राक्स्थापितार्थात्यन्तप्रतिषेधः ; 'मुण्डके प्रथमखण्डत्रयस्य परमात्मपरत्वं काममस्तु; उपरितनभागो जीवपर एव ; जीवलिङ्गस्य स्पष्टत्वात्' इतीह शङ्का । तन्निषेधेन परमात्मपरत्वस्थापनार्थं परमात्मपरत्वको-ट्युल्लेखोपयोगिवाक्यांशज्ञापनं सूत्रकारेण प्रथमं द्युभ्वाद्यायतनमिति कृतम् । अतस्तद्वाक्यं गृह्णाति **आथर्वणिका** इति । अदृश्यत्वादिगुणकाधिकरणे तदनन्तरमेव वा नैष विचारो युक्तः, स्पष्टजीवलिङ्गविषयत्वात् ; पूर्वभागे विवादाभावाच्च। वैश्वानराधिकरणे आत्मनो ब्रह्मत्वे गमकसत्त्ववत् अत्र ब्रह्मभिन्नत्व एव गमकसत्त्वात् नात्मना-त्मा परमात्मेति शङ्क्येत, उत्तरसंगतिरपि सुस्पष्टा । मुण्डके कारणोपक्रमात् अत्र ओतत्ववचनाच्च निषिद्धवाक्यं कारणविषयमेव । ननूत्तरमन्त्रे स्पष्टजीवलिङ्गसद्भावे ततःप्रभृति जीवपरत्वमस्तु । पूर्वमन्त्रस्तु पूर्वपरमात्म-प्रकरणान्वितः स्यादित्यत्र, अस्यापि जीवपरत्वे स्पष्टतां दर्शयति **अस्मिन्नपी**ति। अत्र द्युप्रभृत्याश्रयत्वं पूर्वं प्रतीतम्, मनःप्रभृत्युपकरणाश्रयत्वं पश्चात् । अत्रोपक्रमानुसारेण परमात्मपरत्वं चेदिष्यते, अराइवेति मन्त्रे उपक्रमानुरोधेन जीवपरत्वमिष्ट्वा, 'स्वस्ति वः पाराय' इत्युपसंहारोऽन्यथा नेयः । एवञ्च ओतं मनः सहेत्यारभ्योत्तरमन्त्रान्तैर्बहुभिरवगमितो जीव एव, यस्मिन् द्यौरित्युपक्रमभागेऽपि बह्वनुरोधाय ग्राह्य इति सूचनार्थं भाष्ये प्रथमत उत्तरमन्त्रग्रहणम् । पूर्वमन्त्रस्य संशयवहत्वाच्च । इदमप्यत्राभिप्रेतम्-यस्मिन् द्यौरिति यच्छब्दः पूर्वप्रकृतपरो युक्तः । पूर्वञ्च, 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते', 'आत्मानमरणिं कृत्वा देवं पश्येन्निगूढवत्' इति जीवदेवौ प्रकृतौ । तत्र जीवस्यैवात्मशब्देन निर्देशात् इहापि श्लोकद्वये

श्रयत्वमुच्यमानं जीवधर्म एव। एवं जीवत्वे निश्चिते सति द्युपृथिव्याद्यायतनत्वादिकं यथा-कथञ्चिन् सङ्गमयितव्यम्—इति ॥

एवं प्राप्ते प्रचक्ष्महे-द्युभ्वाद्यायतनं स्वशब्दात्। द्युपृथिव्यादीनामायतनं परं ब्रह्म ; कुतः ? स्वशब्दात्-परब्रह्मासाधारणशब्दात्। "अमृतस्यैष सेतुः" इति परस्य ब्रह्मणोऽसाधारणः शब्दः। पु.सू. "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति सर्वत्रोपनिषत्सु स एवामृतत्वप्राप्तिहेतुः श्रूयते। सिनोतेश्च बन्धनार्थात् (र्थत्वात्) सेतुः। अमृतस्य प्रापक इत्यर्थः। सेतुरिव वा सेतुः। नद्यादिषु सेतुर्हि कूलस्य प्रतिलम्भकः ; संसारार्णवपारभूतस्यामृतस्यैष प्रतिलम्भक इत्यर्थः। आत्मशब्दश्च निरुपाधिकः परस्मिन् ब्रह्मणि मुख्यवृत्तः; आप्नोतीति

---

तात्त्विक एव निरूपणीयः। अतः चतुर्थखण्डमारभ्य जीव एव प्राधान्येनोच्यते ; आत्मशब्देन [illegible] ब्रह्मनिर्णयाय यत्नवत्त्वादिधर्मभेदरूपलिङ्गगम्यत्वादिति। **आयतनत्वादिक**मित्यादिपदेन [illegible] **यथाकथञ्चि**दिति। भोगस्थानत्वादिनेत्यर्थः। जीवात्मनोऽमृतसेतुत्वमप्युपपन्नम् ; [illegible] सेतोः [illegible]च। पारवान् हि सेतुः ; न तु पारमेव सेतुरिति ॥

नन्वेवं [illegible] सर्वलोकोपलक्षणत्वज्ञापनाय, जीवस्यैकदा द्युभूरूपानेकदे-[illegible] च, इहात्मशब्दो जीवे स्वरस इति पूर्वपक्ष्याशयात् **स्वशब्दा**दिति सौत्रपदस्य अमृतसेतु-[illegible] **अमृतस्ये**ति। **अमृतत्वप्राप्ती**त्यनेन, 'अमृत इह भवती'त्यत्रामृतत्वप्राप्तिहेतुत्वश्रवणात् अत्र अमृतस्यसेतुरितीदममृतपदममृतत्वपरमेव शांकरोक्तरीत्याऽस्तु। एवञ्च प्राप्यप्रापकभेदोऽप्यस्तीति सूच्यते। वस्तुत इहामृतपदं नामृतत्वपरमिति **पारभूतस्यामृतस्ये**त्युपरितनभाष्येण ज्ञापितम्। ननु स्वस्यैव स्वयं कथं सेतुरिति चेत्-अमृतपदं नित्यविभूतिपरमस्तु ; मुक्तजीवस्वरूपपरं वा। अस्तु वा, 'ब्रह्मैवेदममृतंपुरस्तात्' इति वक्ष्यमाणानुरोधात् स्वपरमेव। अत्र भेदाविवक्षणात्। पारवत्त्वमृद्दार्वादिमयत्वरूपसेतुत्वस्यात्र बाधेन पूर्व-[illegible] भेदस्यापि त्यागात्। तर्हि कथं सेतुशब्दप्रयोग इति चेत्—योगेन गौण्या वृत्त्या वा पक्षद्वयेन समाधानम्। तदाह **सिनोते**रिति। षिञ्बन्धने। बन्धनं संबन्धनं प्रापणमिति। ननु गतिनिरोधो बन्धनमित्येव प्रसिद्धिः। सेतुश्च जलगतिनिरोधकः। न चायममृतस्य निरोधको भवति। किञ्चास्फुटावय-वार्थानां पदानां रूढिभङ्गेन योगार्थेन निर्वाहो न युक्तः ; गौर्वाहीक इत्यादौ गमनरूपयोगार्थास्वीकारात् ; गन्तृषु सर्वेषु गोशब्दाप्रयोगात्। तथेहापि पादबन्धनादौ सेतुशब्दाप्रयोगादयोग इति शंकायां गौणीमेव वृत्तिं पूर्वपक्षिसिद्धान्त्युभयस्वीकार्यां दर्शयति **सेतुरिवे**ति। मूले **स्व**शब्दादित्यस्य स्वबोधकात् शब्दादित्यर्थः। स्वजीवोभयसाधारणशब्दत्वे परमात्मस्वरूपसाध्यसाधकत्वायोगात् स्वासाधारणशब्दादित्यर्थपर्यवसानं प्रागेव [illegible]। अनेन सौत्रपदेन अमृतपदस्यार्थभूतं यत् [illegible], तस्यैव सेतुपदेनापि शब्दनात् प्राप्यप्रापकभेदस्या-[illegible] इत्याशयेन अमृतसेतुपदपरतया व्याख्याय आत्मशब्दस्य जीवस्वरसत्वमति-[illegible] तत्परतयाऽपि व्याख्याति **आत्मशब्दश्चे**ति। **निरुपाधिक** इति। अस्य, तस्येति किञ्चिन्मात्राविशे-षित इत्यर्थः। [illegible] आतिविशेषविवक्षा कार्येत्याशयेनाह **नियन्तृत्वे-**

ह्यात्मा। स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिस्तस्यैव संभवति। अतः सोऽपि तस्यैव शब्दः। "यः सर्वज्ञः सर्ववित्" इत्यादयश्चोपरितनाः परस्यैव ब्रह्मणश्शब्दाः। नाड्याधारत्वं तस्यापि संभवति; (तै.ना.) "संततं सिराभिस्तु लम्बत्याकोशसंनिभम्" इत्यारभ्य, "तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः" इति श्रवणात्। "बहुधा जायमानः" इत्यपि परस्मिन् ब्रह्मणि सङ्गच्छते; (तै-उ.ना.) "अजायमानो बहुधा विजायते। तस्य धीराः परिजानन्ति योनिम्" इति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयरूपसंस्थानगुणकर्मसमन्वितः स्वकीयं स्वभावमजहदेव स्वेच्छया बहुधा विजायते परः पुरुष इत्यभिधानात्। स्मृतिरपि, (गी.४.) "अजोऽपि सन् अव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया" इति। मनःप्रभृतिजीवोपकरणाधारत्वं च सर्वाधारस्य परस्यैवोपपद्यते॥ १॥

इतश्च परमपुरुषः—

**मुक्तोपसृप्यव्यपदेशाच्च १। ३। २॥**

अयं द्युपृथिव्याद्यायतनभूतः पुरुषः संसारबन्धान्मुक्तैरपि प्राप्यतया व्यपदिश्यते, (मु.३.१.३.) "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म योनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति", (मु.३-२.४.) "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्" इति। संसारबन्धनाद्विमुक्ता एव हि विधूतपुण्यपापाः निरञ्जना नामरूपाभ्यां विनिर्मुक्ताश्च।

---

नेति। पूर्वं, शरो ह्यात्मा इत्यत्र स्वरसार्थभङ्गेऽपि इह द्युपृथिव्यादिसमभिव्याहारात् एकशब्दाच्च सर्वनिरूपिताऽऽत्मत्वमेव सुप्रतिपन्नमिति भावः। चतुर्थमुण्डकगतान् अन्यांश्च शब्दानाह यःसर्वज्ञ इति। द्युभ्वाद्यायतनमित्यस्य यस्मिन्निति वाक्येन द्युलोकाद्याधारत्वेन निर्दिष्ट इत्यर्थः। स्पष्टजीवलिङ्गानां परमात्मन्यपि घटनां दर्शयति **नाडीति।** **संततमिति।** **सिराभिः** नाडीभिः **संततं** व्याप्तं हृदयम् **आकोशसंनिभम्** ईषद्विकसितपद्मतुल्यं लम्बत इत्यर्थः। **व्यवस्थित** इति पदानुरोधात् **चरत** इत्यस्य तिष्ठतीत्यर्थः। **जीवोपकरणेति।** मनःप्रभृतेर्जीवेन सहोपकरणोपकरणिभावः संबन्धो वाच्यः। परमात्मनस्तु द्युभ्वाद्यविशेषं मनःप्रभृतिनाप्येकरूप एव संबन्ध इत्यौचित्यमपि। न हीन्द्रियाधारत्वं जीवस्यास्तीति॥ (१)

पञ्चमे षष्ठे च खण्डे परमात्मन एव प्रतिपादनात् चतुर्थस्यापि तत्परत्वमेवेति वक्तुं द्वितीयसूत्रम्। पूर्वसूत्रोदाहृतमन्त्रद्वयगतं, 'अमृतस्यैष सेतुः', 'स्वस्ति वः पाराय तमसः परस्तात्' इति वाक्यद्वयं प्रकृतपञ्चमषष्ठखण्डवाक्यसमानार्थकं भवतीति द्युभ्वाद्यायतनस्य मुक्तोपसृप्यत्वव्यपदेशोऽस्तीति भावः। एवञ्च सूत्रार्थः—मुक्तोपसृप्यस्य उपरि व्यपदेशात् औचित्यादस्य तदैक्यमिति वा, मुक्तोपसृप्यस्य उपरि वक्ष्यमाणत्वात् द्युमन्त्रादौ अन्तिमपादेन व्यपदेशादिति वा भवितुमर्हति। यस्मिन् द्यौरिति बद्धावस्थो जीव उच्यते; अमृतस्येति स एव शुद्धावस्थः; एकं जानथेत्यादिना च निर्विशेषज्ञानान्मुक्तिः इत्यद्वैतमतिनिरासकं मुक्तोपसृप्यसूत्रमिति ज्ञापनाय तदर्थं विशदयति **संसारे**त्यादिना। (२)

(विमुक्ताश्च ) पुण्यपापनिबन्धनाचित्संसर्गप्रयुक्तनामरूपभाक्त्वमेव हि संसारः । अतो विधूत-पुण्यपापैः निरञ्जनैः प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा परमं साम्यमापन्नैः प्राप्यतया निर्दिष्टो द्युपृथिव्याद्यायतनभूतः पुरुषः परं ब्रह्मैव ॥ २ ॥

परब्रह्मासाधारणशब्दादिभिः परमेव ब्रह्मेति प्रसाध्य, प्रत्यगात्मासाधारणशब्दाभावा-च्चायं पर एवेत्याह—

नानुमानमतच्छब्दात् प्राणभृच्च । १ । ३ । ३ ।

यथाऽस्मिन् प्रकरणे [प्रधान]प्रतिपादकशब्दाभावात् प्रधानं न प्रतिपाद्यम्, एवं प्राणभृदपीत्यर्थः । अनुमीयत इत्यनुमानं परोक्तं प्रधानमुच्यते; अनुमानप्रमितत्वादानुमानमिति वा । अतच्छब्दात् तद्वाचिशब्दाभावादित्यर्थः । 'अर्थाभावे यदव्ययम्' इत्यव्ययीभावः॥३॥

इतश्चायं न प्रत्यगात्मा —

भेदव्यपदेशात् । १ । ३ । ४ ।

(३) "समाने वृक्षे पुरुषो निमग्नो अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्य-मीशमस्य महिमानमिति वीतशोकः" इत्यादिभिर्जीवाद्विलक्षणत्वेनायं व्यपदिश्यते । अनीशया भोग्यभूतया प्रकृत्या मुह्यमानः शोचति जीवः । अयं यदा स्वस्मादन्यं सर्वस्येशं प्रीयमाणम्, अस्य ईश्वरस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति; तदा वीतशोको भवति ॥ ४ ॥

---

कारणे कथयेति इति नाभिद्विसत्त्वात् द्युभ्वाद्यायतनत्वेन मूलप्रकृतिरेव कस्मान्न गृह्यते ? आत्मान-मिति उपनिषच्छ्रवणतस्तत्र इति चेत्—तथैव अमृतस्यैष इत्याद्यनन्वयात् जीवोपि न ग्राह्य इत्याविष्कर्तुं तृतीयसूत्रम् । तदवतारयति परेति । शब्दाभावादिति । यस्मिन्नित्यस्य प्रधानपरत्वे आत्मानमित्याद्यन-न्वयात् न तस्य प्रधानप्रतिपादकत्वमिति भावः । अतच्छब्दादित्यत्र तत्पुरुषस्वीकारेण अतस्य शब्दात् प्रधाना-द्भिन्नपरमात्मप्रतिपादकशब्दादित्यर्थवर्णने स्वशब्दादित्यादिपूर्वोक्ताविशेषः स्यादिति सूत्रस्यास्य, जीवम-ङ्गीकृत्यैव परमात्मसंसर्गोऽप्यत्र इति व्यतिरेकमुखेन पूर्वोक्तार्थस्थापनपरत्वौचित्याय तच्छब्दाभावादित्यर्थ उक्तः । अर्थाभावे यदव्ययमिति । विभक्त्यर्थादिपरस्याव्ययस्येव अर्थाभावपरस्याप्यव्ययस्य सुबन्तेनाव्ययी-भावसमासविधानात् अतच्छब्दादित्यव्ययीभावः; न तु भिन्नार्थकेन नञा, 'नञ्' इति सूत्रविहितस्तत्पु-रुषसमास इत्यर्थः । तर्हि कथं निर्मक्षिकमित्यत्रेव अम्भावो नेति चेत्—सुपोऽम्भावः पञ्चमीविभक्तिव्य-तिरेके; न त्विह पञ्चम्यामिति । पूर्वपादाधिकरणेष्विवात्रापि द्युभ्वाद्यायतनमिति पक्षनिर्देशे परमात्मेति साध्यं स्वरससिद्धम् । पूर्वसूत्रेऽपि । अत्र न प्राणभृदिति साध्यम् ॥ ३

ननु समाने वृक्षे इति मन्त्रे जीवस्य प्राधान्येन निर्देशात् तदनन्तरः, यदा पश्य इति मन्त्रोऽपि जीवतत्पर एवास्तु इत्याशङ्कायां सोऽपि जीवभिन्नत्वेन परमात्मवचनेदम्पर इत्याह भेदव्यपदेशादिति । समाने—एकस्मिन् । इति महिमानम्—उक्तनियमनान्वितव्याप्तिम् । ४

प्रकरणात् ।१।३।५॥

**प्रकरणं चेदं परस्य ब्रह्मण इति, (शारी. १-२-२१) "अदृश्यत्वादिगुणको धर्मोक्तेः" इत्यत्रैव प्रतिपादि (प्रदर्शि)तम् । नाडीसंबन्ध-बहुधाजायमानत्व-मनःप्राणाधारत्वैश्च प्रकरणविच्छेदाशङ्कामात्रमत्र पर्यहार्ष्म ॥ ५ ॥**

स्थित्यदनाभ्यां च ।१।३।६॥

**(मु. ३.२.) "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति" इत्येकस्य कर्मफलादनम्, अन्यस्य च कर्मफलमनश्नत एव दीप्यमानतया शरीरान्तस्स्थितिमात्रं प्रतिपाद्यते। तत्र कर्मफलमनश्नन्**

---

ननु प्रतिमन्त्रं जीवपरमात्मोभयकथनेऽपि परमात्मपरत्वमेवेति कुतः। प्रजापतिवाक्ये जीवपरे तच्छेषतया, 'परं ज्योतिरुपसंपद्य' इति परमात्मनिर्देशवदेवात्रापि स्यादित्यत्र प्रवृत्तं **प्रकरणा**दिति सूत्रम्। अदृश्यत्वगुणकाधिकरणे मुण्डकत्रयस्य परमात्मपरत्वं निर्णीतम्। तदेकप्रकरणभूतेऽत्र परमात्मप्राधान्यवारकं किमपि नास्ति; आन्तं परमात्मानुवृत्तेर्विषयाभेदाभावादिति।

ननु समाने वृक्षे इति मन्त्रात्पूर्वस्मिन् 'द्वासुपर्णा' इति मन्त्रे न परमात्मा कथ्यते; किन्तु बुद्धिर्जीवश्च। तत्र जीवस्य प्राधान्यम्; तथैवोपर्यपि जीवप्राधान्यं स्यादित्यत्राह **स्थित्यदनाभ्याञ्चे**ति। द्वौ सुपर्णौ सयुजौ सखायौ। सुपर्णौ शोभनपक्षवन्तौ। परमात्मनः पक्षौ ज्ञानं शक्तिश्च। जीवस्य कर्म विद्या च। **सयुजौ**। युज्यत इति युक् गुणः अपहतपाप्मत्वादिः। स उभयोः समानः। युगिति भोग्यं वा। एकभोग्यकत्वं सायुज्यम्। अथवा अत्र समानगुणकत्वं स्वरसम्। 'सायुज्यमाप्नोती'त्यादौ समानभोग्यकत्वं स्वरसम्। **पिप्पलं** पिप्पलवृक्षभूतशरीरफलम्; कर्मफलमिति यावत्। सूत्रे स्थितिशब्दस्य घित्वात् पूर्वत्वेऽपि श्रुत्यनुरोधेन अदनञ्च स्थितिश्चेति विग्रहमभिप्रेत्य श्रुतिक्रमेण विवरणं भाष्ये। परिष्वङ्गरूपस्थितेरुभयसाधारण्यादनुपयोगात् अशनरूपव्यापाराभावविशिष्टोज्ज्वलस्थितिरिहाभिप्रेतेत्याशयेन **अन्यस्यचे**त्यादि।स्थितेश्चेति वक्तव्ये **स्थित्यदना**भ्यामिति कुतः। न ह्यदनं द्युभ्वाद्यायतनरूपपक्षनिष्ठम्, न च परमात्मत्वसाधकम् इति चेत्—अत्र सूत्रे सुपर्णौ जीवपरमात्मानौ अदनाभिकाशनकर्तृत्वादित्यनुमानं विवक्षितम्। तच्च मन्त्रोऽयं बुद्धिजीवपरः पैङ्गिरहस्ये तथाव्याख्यातत्वादित्याक्षेपपरिहारार्थम्। तत्र हि, "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्; अनश्नन्नन्यो अभिचाकशीति इति ज्ञः। तावेतौ सत्त्वक्षेत्रज्ञौ" इति वाक्येन तृतीयपादस्य सत्त्वरूपान्तःकरणपरत्वं तुरीयपादस्य जीवपरत्वञ्च स्पष्टमुक्तमित्याक्षेप्तुराशयः। बुद्धेरन्तःकरणपदवाच्यायाः अदनकरणत्वेऽपि कर्तृत्वायोगात् अत्तीति कर्तुरुक्ततया तृतीयपादो जीवपर एव। सत्त्वपदञ्च जन्तौ प्रसिद्धम्। ज्ञक्षेत्रज्ञशब्दौ च, 'ज्ञाज्ञौ', 'सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः' इति परमात्मनि प्रयुक्तावेवेति न पैङ्गिरहस्यविरोध इति समाधातुराशयः। एवं जीवपरोभयपरत्वे सति मन्त्रस्यास्य ऋतंपिबन्ताविति मन्त्रस्येव उत्कृष्टपरमात्मेदम्परत्वावगमात् तदेकवाक्यतया पूर्वापरमन्त्राणामपि ब्रह्मपरतेति सूत्राशयः।

दीप्यमान एव सर्वज्ञोऽमृतसेतुः सर्वात्मा द्युभ्वाद्यायतनं भवितुमर्हति; न पुनः कर्मफलमदन् शोचन् प्रत्यगात्मा । अतो द्युभ्वाद्यायतनं परमात्मेति सिद्धम् ॥ इति द्युभ्वाद्यधिकरणम् ॥ १ ॥

१०. भूमाधिकरणम् ॥ १.३.२. (छा. ७.)

**भूमा संप्रसादादध्युपदेशात् । १ । ३ । ७ ॥**

**इदमामनन्ति छन्दोगाः, (छा. ७-२४-१) "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा । अथ यत्रान्यत् पश्यति अन्यच्छृणोति अन्यद्विजानाति, तदल्पम्" इति । अत्रायं भूमशब्दो भावप्रत्ययान्तो व्युत्पाद्यते । तथा हि—पृथ्वादिषु बहुशब्दः पठ्यते ; ततः (अष्टा ५.१.१२२.) "पृथ्वादिभ्य इमनिज् वा" इति इमनिच्प्रत्यये कृते**

---

तथा च द्युभ्वाद्यधिकरणविषयवाक्यं तत्खण्डगत-परमात्मपरशब्दैकवाक्यतया, मुक्तोपसृप्यपरपञ्चमषष्ठखण्डैकवाक्यतया, जीवत्वनिश्चायकशब्दाभावात्, जीवभिन्नतया परमात्मप्रतिपादनार्थमन्त्रैकवाक्यतया, पूर्वमुण्डकत्रयैकवाक्यतया, स्थित्यदनकर्तृपरत्वसिद्धपरजीवैकार्थकभाव-परप्रतिपादनेदम्परवाक्यैकवाक्यतया च परमात्मपरमेव, न जीवपरमिति सिद्धम् ॥ १.३.१.

पूर्वाधिकरणे परमात्मप्रकरणाविच्छेदात् परमात्मपरत्वं मुण्डकोत्तरभागस्योक्तम् ; तद्वत भूमविद्योत्तरभागस्यापि जीवप्रकरणाविच्छेदात् जीवपरत्वमाशङ्क्यते । पूर्वं स्पष्टजीवलिङ्गमन्यथाकृत्य परमात्मपरत्वमुक्तम् ; अत्र तु स्पष्टजीवलिङ्गान्यथाकरणासंभवेऽपि परमात्मपरत्वमुच्यत इति संगतिः ।

सनत्कुमारः आत्मजिज्ञासयोपसन्नं नारदं नामब्रह्मोपासनमुपदिशन् , नामतो भूयसि तेन पृष्टे वाचमुपदिश्य उत्तरोत्तरं नामादिभ्यो भूयसां वाक्संकल्पचित्तध्यानविज्ञानबलान्नजलतेजआकाशस्मरणाशाप्राणान् क्रमेण निर्दिश्य, प्राणशब्दार्थो जीव इत्युपपाद्य, तदुपासकस्यातिवादित्वेन प्रशस्य, ततः सत्य-विज्ञान-मति-श्रद्धा-निष्ठा-कृति-सुख-भूम-जिज्ञास्यत्वेन प्रास्तौषीत् । तत्रान्ते उक्तो भूमा जीवः परो वेति विचार्यते । तत्र निष्कर्षकशब्दतया गुणवाचिनो भूमशब्दस्य गुणिवाचित्वस्यैवाभावे कथं जीवपरसंदेह इति शङ्कापरिहाराय धर्मिपरत्वमुपपादयितुं तदुचितविषयवाक्यं प्रदर्शयति **यत्र नान्यदिति** । यत्रानुभूयमाने सति नान्यत् शृणोतीत्यर्थः । विस्तर उपरि भाष्ये । **अत्रायं भूमशब्द** इति । ननु सर्वत्र भूमशब्दस्य भावप्रत्ययान्तत्वात् **अत्रायमिति** किमर्थमिति चेत्—**भूमशब्द** इत्यस्य **व्युत्पाद्यत** इत्यत्रैव **धर्मिपरश्च निश्चीयते** इत्यत्राप्यन्वयस्य विवक्षितत्वात् अत्रत्यभूमशब्दस्यैव धर्मिपरतया तदुपपत्तेः । अथवा **अत्रायमिति** धर्मिनिरूपणगतः सुखशब्दसमानाधिकरणश्च सन्नपीत्यर्थः । व्युत्पत्तेर्भावविषयत्वेऽपि प्रकृते धर्मिपरोऽयमिति विशिष्टार्थः । **पृथ्वादिषु** । पृथ्वादिभ्य इमनिज्वेति सूत्रे आदिपदविवक्षितेषु । **ततः** पठ्यमानत्वादित्यर्थः । अस्य **कृते** इत्यत्रान्वयः । **बहोर्लोपो भू च बहोः** । बहुशब्दात् परस्य इमनिचो लोपः स्यात् ; बहुशब्दस्य च भू इत्यादेश इति सूत्रार्थः । तत्र, 'आदेः परस्य' इति सूत्रात् परस्य विहितं कार्यं तदादेर्भवतीति आद्यक्षरस्य इकारस्य परं लोपे भूमेति निष्पद्यते । प्रकृते**र्विकारः** भू इत्यादेशः ; प्रत्ययस्य **विकार** आद्यक्षरलोपः । इमनिचो भावार्थकत्वम् , 'तस्य भावस्त्वतलौ' इति सूत्रात् ,

(अष्टा. ६-४-१५८) "बहोर्लोपो भू च बहोः" इति प्रकृतिप्रत्यययोर्विकारे भूमेति भवति। भूमा-बहुत्वमित्यर्थः। अत्र चायं बहुशब्दो वैपुल्यवाची; न संख्यावाची; "यत्रान्यत् पश्यति...तदल्पम्" इत्यल्पप्रतियोगित्वश्रवणात्। अल्पशब्दनिर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वादेव धर्मिपरश्च निश्चीयते; न धर्ममात्रपरः। तदेवं भूमेति विपुल इत्यर्थः। वैपुल्यविशेष्यश्चेह आत्मेत्यवगतः; (छा. ७-१-३.) "तरति शोकमात्मवित्" इति प्रक्रम्य भूमविज्ञानमुपदिश्य, (छा. ७-२५-२.) "आत्मैवेदं सर्वम्" इति तस्यैवोपसंहारात्। अत्र संशय्यते —किमयं भूमगुणविशिष्टः प्रत्यगात्मा, उत परमात्मा—इति।

किं युक्तम्? प्रत्यागात्मेति। कुतः? (छा. ७-१-३.) "श्रुतं ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्मविदिति" इत्यात्मजिज्ञासयोपसेदुषे नारदाय नामादिप्राणपर्यन्तेषु उपास्यतयोपदिष्टेषु, (छा. ७-१-५.) "अस्ति भगवो नाम्नो भूयः", (छा. ७-२-२.) "अस्ति भगवो वाचो भूयः" इत्यादयः प्रश्नाः, (छा. ७-२-१.) "वाग् वाव नाम्नो भूयसी", (छा. ७-३-१.) "मनो वाव वाचो भूयः" इत्यादीनि च प्रतिवचनानि प्राणात्प्राचीनेषु दृश्यन्ते; प्राणे तु न पश्यामः। अतः प्राणपर्यन्त एवायमात्मोपदेश इति प्रतीयते। तेनेह प्राणशब्दनिर्दिष्टः प्राणसहचारी प्रत्यगात्मैव; न वायुविशेषमात्रम्। (छा. ७-१५-१) "प्राणो ह पिता प्राणो ह माता" इत्यादयश्च प्राणस्य चेतनतामवगमयन्ति। (छा.७-१५-२.) "पितृहा......मातृहा" इत्यादिना सप्राणेषु पितृप्रभृतिषु उपमर्दकारिणि हिंसकत्वनिमित्तोपक्रोशवचनात्, तेष्वेव विगतप्राणेष्वत्यन्तोपमर्दकारिण्यपि उपक्रोशाभाववचनाच्च हिंसायोग्यश्चेतन एव प्राणशब्दनिर्दिष्टः, अप्राणेषु स्थावरेष्वपि चेतनेषु उपमर्दभावाभावयोः हिंसातदभावदर्शनात् अयं हिंसायोग्यतया निर्दिष्टः प्राणः प्रत्यगात्मैवेति निश्चीयते। अत

---

'तस्य भावः' इत्येतदनुवृत्त्या सिद्धम्। **अत्रचायमि**ति। एतत्प्रकरणे च भूमशब्दघटक इत्यर्थः। न च सर्वत्रैव भूमशब्दघटकस्य बहुशब्दस्य विपुलार्थकत्वात्, अत्रेति पदम्, उपरि अल्पप्रतियोगित्वश्रवणादिति हेतूपन्यासश्च न युज्यत इति शङ्क्यम्—तत्सृष्टिपेटिकायां (मी. १-४-२७) भूमेति बहुत्वरूपसंख्यापरतया जैमिनिप्रयोगात्। **परत्वादेवे**ति। यो वै भूमा तत् सुखमिति पूर्ववाक्यपर्यालोचने तु सुतरामिति भावः।

**भगवद्दृशेभ्यः** भगवत्तुल्येभ्य; भवादृशेभ्य इति यावत्। **तेन** आत्मोपदेशस्य प्राणे समापनेन। सिद्धान्ते प्राणपर एवास्तु इत्यत्र तत्रापि जीवपरत्वसाधकं दर्शयति **प्राणो ह पिते**ति। **उपक्रोशाभाववचना**दिति। 'यद्यप्येनान् उत्क्रान्तप्राणान् शूलेन समासं व्यतिसंदहेत्, नैनं ब्रूयुः पितृहाऽसी'त्यादिवाक्येनेत्यादिः। **समासं** सम्यक्प्रक्षिप्येत्यर्थः। णमुलन्तम्। ननु पञ्चवृत्तिप्राणसद्भावे हिंसावादः, न चेतनसद्भावे इत्यत्र तादृशप्राणरहितस्थलेऽपि हिंसा प्रमाणान्तरसिद्धेति दर्शयति **अप्राणे**ष्विति। पञ्चवृत्तिप्राणरहितेष्वित्यर्थः। **दर्शना**दिति। सजीववृक्षलतादिच्छेदस्यापि शास्त्रैर्निषिद्धत्वादिति भावः। न चापञ्चवृत्तिप्राणस्याप्यभावे न हिंसेत्येवास्त्विति वाच्यम्; अदृश्यमानप्राणनिबन्धनत्ववत् चेतननिबन्धनत्वस्यापि सुस्वीकरत्वात्। तथा हिंसा

एव च अर (छा.७.१५.१.) नाभिदृष्टान्ताद्युपन्यासेन प्राणशब्दनिर्दिष्टः पर इति न भ्रमितव्यम्; परस्य हिंसाप्रसङ्गाभावात्; जीवादितरस्य तद्भोग्यभोगोपकरणभूतस्य कृत्स्नस्याचिद्वस्तुनो जीवायत्तस्थितित्वेन प्रत्यगात्मन्येवारनाभिदृष्टान्तोपपत्तेश्च।

अयमेव च प्राणशब्दनिर्दिष्टो भूमा: 'अस्ति भगवः प्राणाद् भूयः' इति प्रश्नस्य, 'अदो वाव प्राणाद् भूयः' इति प्रतिवचनस्य चाभावाद्, भूमसंशब्दनात्प्रक्प्राणप्रकरणस्याविच्छेदात्। किञ्च प्राणवेदिनोऽतिवादित्वमुक्त्वा तमेव, "एष तु वा अतिवदति" इति प्रत्यभिज्ञाप्य "यः सत्येनातिवदति" इति तस्य सत्यवदनं प्राणोपासनाङ्गतयोपदिश्य, उपादेयस्य सत्यवदनस्य शेषितया पूर्वनिर्दिष्टप्राणयाथात्म्यविज्ञानं "यदा वै विजानाति, अथ सत्यं वदति" इत्युपदिश्य, तत्सिद्ध्यर्थं च मननश्रद्धानिष्ठाप्रयत्नान् उपदिश्य, तदारम्भाय च प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य सुखरूपताज्ञानमुपदिश्य, तस्य च सुखस्य विपुलता, "भूमा त्वेव विजिज्ञासितव्यः" इत्युपदिश्यते। तदेवं प्रत्यगात्मन एवाविद्याविमुक्तं रूपं विपुलसुखमित्युपदिष्टमिति. "तरति शोकमात्मवित्" इत्युपक्रमाविरोधश्च। अतो भूमगुणविशिष्टः प्रत्यगात्मा। यत एवं भूमगुणविशिष्टः प्रत्यगात्मा, अत एवाहमर्थे प्रत्यगात्मनि, (छा.७.२५.) "अहमेवाधस्तादहमुपरिष्टात्" इत्यारभ्य, "अहमेवेदं सर्वम्" इति प्रत्यगात्मनो वैभव-(वैपुल्य) मुपदिशति। एवं प्रत्यगात्मत्वे निश्चिते सति तदनुगुणतया वाक्यशेषो नेतव्य इति॥

एवं प्राप्तेऽभिधीयते—भूमा संप्रसादादध्युपदेशात्। भूमगुणविशिष्टो न प्रत्यगात्मा;

---

च दु.खहेतुव्यापारः। पित्रादिपदानां चेतनपरत्वञ्च प्रसिद्धमेवेति। दृष्टान्तादीति। 'यथा वा अरा नाभौ समर्पिताः, एवमस्मिन् प्राणे सर्वं समर्पितम्' इत्युपन्यासेनेत्यर्थः। आदिपदेन प्राणे इति एकवचनान्तनिर्देशो विवक्षितः। एवं प्राणशब्दो जीवपर इति स्थापितम्। इदं सिद्धान्तिनोऽपीष्टम्। अथ तस्य भूमैक्यं दर्शयति पूर्वपक्षी अयमेवचेति। भूय इति विपुलतरप्रश्नः उपर्युपरिकृतः प्राणे विश्रान्तः। अतः स विपुलकाष्ठां गत इति स एव भूमशब्दार्हः। भूयश्शब्दप्रयोगं पूर्वकृतमनुरुध्य हि भूमशब्देनात्र तत्त्वकथनम्॥ प्रकरणविच्छेदवादिसिद्धान्त्याशयं निरसितुमाह किञ्चेति। यदि प्राणोपासकेऽतिवादित्वमनुक्त्वा सत्यविषयेऽतिवाद उक्तः स्यात्, तदा प्रकरणविच्छेदः स्यात्; न त्विदानीमिति भावः। नन्वणोर्जीवस्य विपुलत्वरूपभूमा बाधित इति न तदैक्यमित्यत्राह तस्यचेति। नात्र परिमाणरूपं वैपुल्यं विवक्षितमिति, यो वै भूमा तत् सुखमिति सुखसामानाधिकरण्यनिर्देशादेव ज्ञायत इति सुखरूपतोत्कर्ष एव विवक्षित इति भावः। परमात्मवेदनाभावे कथं शोकतरणमित्यत्राह तदेवमिति। न ह्यैश्वर्यानुभव इव कैवल्यानुभवो दुःखसंभिन्नः इति भावः। कैवल्ये वस्त्वन्तरानुभवाभावात्, यत्र नान्यत् पश्यतीत्यादिकमप्युपपन्नम्। तदत्रोपक्रमोपसंहाराभ्यामात्मप्रतिपादनार्थत्वावगमात् मध्ये प्राणस्यात्मत्वावधारणात् स जीव एव भूमा। प्रश्नप्रतिवचनशैल्याः प्राणे विश्रमात् स एव भूमा। तदुपासकेऽतिवादित्ववचनाच्च। सत्यप्रस्तावस्तु सत्यवदनाङ्गकत्वात् तदुपासनस्येति पूर्वपक्षसारः। एतदंशत्रयमधिकरणसारावलौ श्लोकत्रयेण विमृष्टम्।

अपितु परमात्मा। कुतः? संप्रसादादध्युपदेशात्—संप्रसादः प्रत्यगात्मा; (छा.७.१६) "एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्युपनिषत्प्रसिद्धेः—संप्रसादात् प्रत्यगात्मनोऽधिकतया भूमविशिष्टस्य सत्यशब्दाभिधेयस्योपदेशादित्यर्थः। सत्यशब्दाभिधेयं च परं ब्रह्म। एतदुक्तं भवति—यथा नामादिषु प्राणपर्यन्तेषु पूर्वपूर्वाधिकतयोत्तरोत्तराभिधानात् पूर्वेभ्य उत्तरेषामर्थान्तरत्वम्, एवं प्राणशब्दनिर्दिष्टात् प्रत्यगात्मनोऽधिकतया निर्दिष्टः सत्यशब्दाभिधेयः तस्मादर्थान्तरभूत एव; सत्यशब्दनिर्दिष्ट एव भूमेति सत्याख्यं परं ब्रह्मैव भूमेत्युपदिश्यते—इति। तदाह वृत्तिकारः, "भूमा त्वेवेति भूमा ब्रह्म; नामादिपरम्परया आत्मन ऊर्ध्वमस्योपदेशात्" इति। प्राणशब्दनिर्दिष्टादधिकतया सत्यस्योपदेशः कथमवगम्यत इति चेत्—'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इति प्राणविदोऽतिवादित्वमुक्त्वा, 'एष तु वा अतिवदति, यः सत्येनातिवदति' इति सत्यवेदित्वेनातिवादिनं तुशब्देन पूर्वस्मादतिवादिनो व्यावर्तयति। अत एव, 'एष तु वा अतिवदति' इत्यत्र प्राणातिवादिनो न प्रत्यभिज्ञा। अतोऽस्यातिवादित्वनिमित्तं सत्यं पूर्वातिवादित्वनिमित्तात् प्राणादधिकमिति विज्ञायते।

ननु च प्राणवेदिन एव सत्यवदनमङ्गत्वेनोपदिष्टम्; अतः प्राणप्रकरणाविच्छेद इत्युक्तम्॥ नैतद्युक्तम्—तुशब्देन ह्यतिवाद्येवान्यः प्रतीयते, न तु तस्यैवातिवादिनः सत्यवदनाङ्गविशिष्टतामात्रम्। "एष तु वा अग्निहोत्री, यः सत्यं वदति" इत्यादिषु अग्निहोत्र्यन्तराप्रतीतेः, प्रतीतस्यैवाग्निहोत्रिणः सत्यवदनाङ्गविधानमिति क्लिष्टा गतिराश्रीयते; अत्र तु अतिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयं परं ब्रह्म प्रतीयते। सत्यशब्दश्च (तै. आनं १) "सत्यं

---

सूत्रे अधिशब्द उपरीत्यर्थकः। अधिकशब्दोऽपि तत एवाऽऽगतः। भूम्नि प्राणादधिकत्वस्योपनिषत्तोऽनवगमात् सत्यशब्दाभिधेयस्येति पूरितम्। सत्यशब्दवाच्यं विपुलतमं विपुलतरप्राणाधिकत्वेनोपदिष्टत्वात्। सत्यशब्दवाच्यश्च परमात्मा। अतः भूमा परमात्मा आत्माधिकत्वेनोपदिष्टसत्याभिन्नत्वादित्युक्तं भवति। अर्थान्तरभूतएवेति। अतिवादविषयभूतस्य जीवात्मन एव यथार्थोक्तिविषयता सत्यत्वमिति नेत्यर्थः। शांकरे-संप्रसादशब्दः कालुष्याभावदशारूपसुषुप्तिवाची, अन्येन्द्रियादिषु उपरतेषु जाग्रन् यः प्राणः, तस्य सुषुप्तिसंबन्धित्वात् प्राणपरः। भूमविद्यायां प्राणशब्देन मुख्यप्राण एवोच्यते। एवञ्च संप्रसादादधि-प्राणाधिकतया आत्मन उपदेशात् इत्यर्थो वर्णितः। ईदृशार्थासंभवः सू° पूर्वपक्षे प्राणशब्दार्थशोधनेनैव ज्ञापितप्रायः। तत्र वृत्तिविरोधमपि दर्शयति तदाह वृत्तिकार इति। तुशब्देनेति। एषत्वेतच्छब्दस्य पूर्वोक्तपरत्वं वारयन् तुशब्दः यच्छब्दप्रतिसंबन्धितां दर्शयति। अग्निहोत्र्यन्तराप्रतीतेरिति। एकस्यैवाग्निहोत्रस्य विहितत्वात् तस्यानग्निहोत्रताया दुर्वचत्वात् तदनुष्ठातृनिरिक्तस्याग्निहोत्रिणोऽप्रसिद्धत्वादित्यर्थः। अबाधितार्थसामान्यरूपस्य सत्यशब्दार्थस्य प्राणादिसाधारणत्वात् अतिवादाप्रयोजकत्वाच्चार्थान्तरं प्रसिद्धमाह सत्यशब्द—इति। ननु प्राणोपासकस्याप्यतिवादित्वस्य प्रागुक्तत्वात् तस्य कथं तुशब्देन

ज्ञानमनन्तं ब्रह्म" इत्यादिषु परस्मिन् ब्रह्मणि प्रयुक्तः। अतस्तन्निष्ठस्यातिवादिनः पूर्वस्मादधिकत्वं गम्यमानं वाक्यस्वरससिद्धमन्यत्वं न बाधितव्यम्। अतिवादित्वं हि वस्त्वन्तरात् पुरुषार्थतयाऽतिक्रान्तस्वोपास्यवस्तुवादित्वम्; नामाद्याशापर्यन्तोपास्यवस्त्वतिक्रान्त-स्वोपास्यप्राणशब्दनिर्दिष्टप्रत्यगात्मवादित्वात् प्राणविदोऽतिवादित्वम्। तस्यापि सातिशयपुरुषार्थत्वात् निरतिशयपुरुषार्थतयोपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमिति, "एष तु वा अतिवदति यः सत्येनातिवदति" इत्युक्तम्। सत्येनेति इत्थम्भूतलक्षणे तृतीया। सत्येन परेण ब्रह्मणोपास्येनोपलक्षितो योऽतिवदतीत्यर्थः। अत एवैवं शिष्यः प्रार्थयते, "सोऽहं भगवः सत्येनातिवदानि" इति; आचार्यश्च "सत्यं त्वेव विजिज्ञासितव्यम्" इत्याह।

"आत्मनः प्राणः" इति च प्राणशब्दनिर्दिष्टस्याऽऽत्मन उत्पत्तिरुच्यते। अतः, "तरति शोकमात्मवित्" इति प्रक्रान्त आत्मा प्राणशब्दनिर्दिष्टादन्य इति गम्यते।

यदुक्तम्—'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नस्य, 'अदो वाव प्राणाद्भूयः' इति प्रतिवचनस्य चादर्शनात् प्रक्रान्त आत्मोपदेशः प्राणोपदेशपर्यवसानो गम्यत इति—तदयुक्तम्; न हि प्रश्नप्रतिवचनाभ्यामेवार्थान्तरत्वं गम्यते; प्रमाणान्तरेणापि तत्संभवात्। उक्तञ्च प्रमाणान्तरम्। अस्ति भगवः प्राणाद् भूयः इत्यपृच्छतोऽयमभिप्रायः—नामादिषु आशान्तेष्वचेतनेषु पुरुषार्थभूयस्तया पूर्वपूर्वमतिक्रान्तेष्वप्युत्तरोत्तरेषूपदिष्टेषु तत्तद्वेदिन आचार्येणातिवादित्वं नोक्तम्; प्राणशब्दनिर्दिष्टप्रत्यगात्मयाथात्म्यवेदिनस्तु पुरुषार्थभूयस्त्वातिशयं मन्वानेन, "स वा एष एवं पश्यन् एवं मन्वान एवं विजानन्नतिवादी भवति" इति अतिक्रान्तवस्तुवादित्वमुक्तम्। अतोऽत्रैवाऽऽत्मोपदेशः समाप्तः—[इति ?]। इति मत्वा

---

अवच्छेदं शङ्कय त्वत्राह अतिवादित्वं हीति। ननु ब्रह्मणः सत्यशब्दार्थत्वे तस्यातिवदनकर्मत्वात् सत्यमिति द्वितीयैव युक्ता, न तृतीया। अस्माकं तु, 'यदा वै विजानाति अथ सत्यं वदती'ति श्रुतं यत् सत्यवदनम्, तस्य सत्यशब्दार्थत्वात् अतिवादं प्रति सत्यवदनमङ्गतया तृतीयया विधीयते। अन्ततः प्राणोपासनाङ्गत्वपर्यवसानमिति पूर्वपक्षाशये सत्याह सत्येनेतीति। ननु परस्योच्चमनद्वारा द्वैधीभावं प्रतीव ब्रह्मणोऽप्युपासनद्वारा अतिवादं प्रति करणत्वसंभवात् कारकविभक्तिरेवास्तु इति चेत्—सत्यम्—पूर्वपक्षिणा सत्यवदनस्य प्राणोपासनाङ्गत्वस्येष्टत्वात् अतिवादाङ्गत्वाभावात् तद्वारणाय सत्यवदनोपलक्षितोऽतिवदतीति उपलक्षणतृतीयैव वक्तव्या; तस्या इहाप्यविशेष इति ज्ञापनायैवमुक्तम्। एवं पुरुषविशेषणत्वे चोपासनरूपविशेषणस्य स्पष्टं लाभ इति। अतिवादान्तरस्याविवक्षितत्वे, सत्यवदनस्याङ्गत्वे विधित्सिते, यः सत्यं वदतीति प्रयोग एव स्वरसः; यथाऽग्निहोत्रवाक्ये इति च ध्येयम्। अतएवेत्यस्य प्रार्थयते, आहेत्युभयत्रान्वयः।

प्रक्रान्तस्यात्मनः प्राणभिन्नत्वादपि प्राणो न भूमेत्याह आत्मन इति। तथाच संप्रसाददधिकतया प्रक्रान्तात्मन उपदेशादित्यपि तत्रार्थः। एवञ्च प्राणातिरिक्तत्वे प्रक्रान्तात्मनि ज्ञाते तस्यात्र प्रकरणे कुत्रोपदेशारम्भ इत्यन्वेषणे, तुशब्दं दृष्ट्वा सत्यप्रस्तावप्रभृति तदुपदेश इत्यवगम्यत इति भावः। एवं ज्ञापनायैव

शिष्यो भूयो न पप्रच्छ - आचार्यस्तु इदमपि सातिशयं मत्वा निरतिशयपुरुषार्थभूतं सत्यशब्दाभिधेयं परं ब्रह्म, "एष तु वा अतिवदति, यः सत्येनातिवदति" इति स्वयमेवोपचिक्षेप। शिष्योऽपि परमपुरुषार्थरूपे परस्मिन् ब्रह्मण्युपक्षिप्ते तत्स्वरूपतदुपासनयाथात्म्यबुभुत्सया, "सोऽहं भगवः सत्येनातिवदानि" इति प्रार्थयामास।

ततो ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये ब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनम्, "सत्यं त्वेव विजिज्ञासितव्यम्" इत्युपदिश्य, तदुपायभूतं ब्रह्ममननम्, "मतिस्त्वेव विजिज्ञासितव्या" इत्युपदिश्य, श्रवणप्रतिष्ठार्थत्वान्मननस्य, मननोपदेशेन श्रवणमर्थसिद्धं मत्वा, श्रवणोपायभूतां ब्रह्मणि श्रद्धाम् "श्रद्धा त्वेव विजिज्ञासितव्या" इत्युपदिश्य, तदुपायभूतां च तन्निष्ठाम्, "निष्ठा त्वेव विजिज्ञासितव्या" इत्युपदिश्य, तदुपायभूतां च तदुद्योगप्रयत्नरूपां कृतिमपि, "कृतिस्त्वेव विजिज्ञासितव्या" इत्युपदिश्य, श्रवणाद्युपक्रमरूपकृतिसिद्धये प्राप्यभूतस्य सत्यशब्दाभिहितस्य ब्रह्मणः सुखरूपता ज्ञातव्येति, "सुखं त्वेव विजिज्ञासितव्यम्" इत्युपदिश्य, निरतिशयविपुलमेव सुखं परमपुरुषार्थरूपं भवतीति तस्यैव ब्रह्मणः सुखरूपस्य निरतिशयविपुलता ज्ञातव्येति, "भूमा त्वेव विजिज्ञासितव्यः" इत्युपदिश्य, निरतिशयविपुलसुखरूपस्य ब्रह्मणो लक्षणमिदमुच्यते, "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा" इति—

अयमर्थः—अनवधिकातिशयसुखरूपे ब्रह्मण्यनुभूयमाने ततोऽन्यत् किमपि न पश्यत्ययमनुभविता; ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वाच्च कृत्स्नस्य वस्तुजातस्य। अत ऐश्वर्यापरपर्यायविभूतिगुणविशिष्टं निरतिशयसुखरूपं ब्रह्मानुभवन् तद्व्यतिरिक्तस्य वस्तुनोऽभावादेव किमप्यन्यन्न पश्यति। अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दुःखं च न पश्यति। तदेव हि सुखम्, यत् अनुभूयमानं पुरुषानुकूलं भवति॥

---

सत्यशब्दार्थविचारमध्ये एतद्ग्रन्थप्रवृत्तिः। **श्रद्धा** त्वरा। **निष्ठा** व्यवसायः। **उद्योगप्रयत्नरूपामिति**; व्यवसायोत्पत्तिप्रतिबन्धकरजस्तमोहेतुपापनिबर्हणसद्धर्माचरणादिविषयकप्रयत्नरूपामित्यर्थः। **विपुलतेति** भूमशब्दवाच्यार्थ उक्तः। सुखपदसामानाधिकरण्यात् विपुलमित्येवार्थः। भूमशब्दार्थवैपुल्योपपादकं **यत्र नान्यदिति** वाक्यम्। ब्रह्मानुभवकालेऽन्यश्रवणादेरपि भावात् कथं तन्निषेध इत्यत्र तदर्थमाह **अयमर्थ** इति विपुलसुखरूपत्वोक्त्या सुखत्व एव वैपुल्यं विवक्षितमिति न; सुखरूपस्य ब्रह्मणो वैपुल्यस्योक्तत्वात्। भूमा वैपुल्यं महिमेति पर्यायाः। 'गोअश्वमिति महिमेत्याचक्षते' इति ऐश्वर्ये महिमशब्दमत्रैव श्रुतिर्वदति। ऐश्वर्यगुणश्च भूमा। अतः तद्विशिष्टो महानात्मा भूमशब्दार्थः। आत्मशब्दार्थघटकमात्मत्वमपि शोध्यमानमेवंरूपं स्यात्। एवं विशिष्टस्य सुखत्वोक्तौ सर्वं सुखमिति सिद्ध्यति। ब्रह्मणो निरतिशयसुखशालित्वमप्येवमैश्वर्यादिवैशिष्ट्यादेव। एवंच अत्र **भूमनि** सर्वविशिष्टे अनुभूयमाने तदनन्तर्गतवस्त्वभावात् नान्यत् पश्यतीत्युपपन्नम्। इद**मैश्वर्यापरपर्यायविभूतिगुणविशिष्ट**मिति पदेन ज्ञापितम्। **अन्तर्गतत्वाच्चे**-

ननु चेत्थमेव जगत् ब्रह्मणोऽन्यतयाऽनुभूयमानं दुःखरूपं परिमितसुखरूपं च भवत् कथमिव ब्रह्मविभूतित्वेन तदात्मकतयाऽनुभूयमानं सुखरूपमेव भवेत् ॥ उच्यते — कर्मवश्यानां क्षेत्रज्ञानां ब्रह्मणोऽन्यत्वेनानुभूयमानं कृत्स्नं जगत् तत्तत्कर्मानुरूपं दुःखं च परिमितसुखं च भवति। अतो ब्रह्मणोऽन्यतया परिमितसुखत्वेन दुःखत्वेन च जगदनुभवस्य कर्मनिमित्तत्वात् कर्मरूपाविद्याविमुक्तस्य तदेव जगत् विभूतिगुणविशिष्टब्रह्मानुभवान्तर्गतं सुखमेव भवति; यथा पित्तोपहतेन पीयमानं पयः पित्ततारतम्येनाल्पसुखं विपरीतं च भवति; तदेव पयः पित्तानुपहतस्य सुखायैव भवति—यथैव(था च)राजपुत्रस्य पितुर्लीलोपकरणमतयान्येनानुसन्धीयमानं प्रियत्वमनुपगतं तथात्वानुसन्धाने प्रियतमं भवति—तथा निरतिशयानन्दस्वरूपस्य ब्रह्मणोऽनवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य लीलोपकरणं तदात्मकं चानुसन्धीयमानं जगत् निरतिशयप्रीतये भवत्येव। अतो जगदैश्वर्यविशिष्टमनवधिकातिशयसुखरूपं ब्रह्मानुभवन् ततोऽन्यत् किमपि न पश्यति, दुःखं च न पश्यति।

एवमेवोपपादयति वाक्यशेषः, "स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः। स स्वराड् भवति; तस्य सर्वेषु लोकेषु कामचारो भवति। अथ येऽन्यथाऽतो विदुरन्यराजानः, ते क्षय्यलोका भवन्ति; तेषां सर्वेषु लोकेष्वकामचारो भवति" इति। स्वराट् अकर्मवश्यः। अन्यराजानः कर्मवश्याः। तथा, (७-२६) "न पश्यो मृत्युं पश्यति, न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च। निरतिशयसुखरूपत्वं च ब्रह्मणः, (शारी.१.१.६) "आनन्दमयोऽभ्यासात्" इत्यत्र प्रपञ्चितम्। अतः प्राणशब्दनिर्दिष्टात्प्रत्यगात्मनोऽर्थान्तरभूतस्य सत्यशब्दाभिधेयस्य ब्रह्मणो भूमेत्युपदेशाद् भूमा परं ब्रह्म ॥ ७ ॥

## धर्मोपपत्तेश्च १। ३। ८।

अस्य भूम्नो ये धर्मा आम्नायन्ते; तेऽपि परस्मिन्नेवोपपद्यन्ते। "तदमृतम्" इति स्वाभाविकममृतत्वम्, "स्वे महिम्नि" इत्यनन्याधारत्वम्, "स एवाधस्तात्" इत्यादि "स एवेदं सर्वम्" इति सर्वात्मकत्वम्, "आत्मतः प्राणः" इत्यादि प्राणप्रभृतेः

निचकारेणार्थान्तरमपि दर्श्यते—यत्रनान्यदिति वाक्यस्य नाद्वैतपक्षे स्वारस्यम्; तन्मते ब्रह्मज्ञाने सर्वनिवृत्त्या अन्यश्रवणादिमात्राभाववचनायोगात्। अनेन ब्रह्म-तदनुभव-तत्कर्तृ-तदन्यसर्वसद्भावः, अथाप्यन्याश्रवणादिकञ्चावगम्यते। न हि नान्यदस्तीति श्रूयते। अत एवं वक्तव्यम्—यथा पुरुषार्थान्तरानुभवप्रवृत्तः तदतिशयितपुरुषार्थसद्भावमवगम्य तच्छ्रवणादौ प्रवर्तते; न तथा ब्रह्म अनुभूय; तदधिकसुखाभावात्। अतः समुद्रे गोष्पदस्येव सर्वस्य सुखस्यात्रान्तर्भावात् नान्यत् पश्यतीति। इममर्थं चकारेण ज्ञापयता विभूतिविशिष्टब्रह्मानुभवस्यैव मोक्षत्वात् भूमशब्दार्थशोधनलभ्यार्थत्वारस्यदृष्ट्या चार्थान्तरं कण्ठोक्तम्। जगदैश्वर्यविशिष्टमिति च भूमशब्दार्थाभिप्रायेण ॥ ७ ॥ इत्यादीति। इत्येतन्मूलकमित्यर्थः।

सर्वस्योत्पादकत्वमित्यादयो हि धर्माः परमात्मन एव। यत्तु "अहमेवाधस्तात्" इत्यादिना सर्वात्मकत्वमुपदिष्टम्, तद् भूमविशिष्टस्य ब्रह्मणोऽहङ्ग्रहेणोपासनमुपदिश्यते; "अथातोऽहङ्कारादेशः" इत्यहङ्ग्रहोपदेशोपक्रमात्। अहमर्थस्य प्रत्यगात्मनोऽपि ह्यात्मा परमात्मेत्यन्तर्यामिब्राह्मणादिषूक्तम्। अतः प्रत्यगर्थस्य परमात्मपर्यवसानादहंशब्दोऽपि परमात्मपर्यवसायीति प्रत्यगात्मशरीरकत्वेन परमात्मानुसन्धानार्थोऽयमहङ्ग्रहोपदेशः। परमात्मनः सर्वशरीरतया सर्वात्मत्वात् प्रत्यगात्मनोऽप्यात्मा परमात्मा। तदेव, "अथात आत्मादेशः" इत्यादिना "आत्मैवेदं सर्वम्" इत्यन्तेनोच्यते। एतदेवोपपादयितुं प्रत्यगात्मनोऽप्यात्मभूतात् परमात्मनः सर्वस्योत्पत्तिरुच्यते, "तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आकाशः" इत्यादिना। उपासकस्यान्तर्यामितयाऽवस्थितात् परमात्मनः सर्वस्योत्पत्तिरित्यर्थः। अतः परमात्मनः प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमहङ्ग्रहोपासनं कर्तव्यम्। तस्माद् भूमविशिष्टः परमात्मेति सिद्धम् ॥ ८ ॥ इति भूमाधिकरणम् ॥ २ ॥

## २०. अक्षराधिकरणम् १-३-३ (बृहदारण्यकम् ५-८)

## अक्षरमम्बरान्तधृतेः ।१।३।९॥

वाजसनेयिनो गार्गीप्रश्ने समामनन्ति, (बृ. ५-८-८) "स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु अह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्" इत्यादि। तत्र संशयः—किमेतदक्षरं प्रधानम्, जीवो वा, उत परमात्मेति। किं युक्तम्? प्रधानमिति। कुतः? "अक्षरात्परतः परः" इत्यादिष्वक्षरशब्दस्य प्रधाने प्रयोगदर्शनात्; अस्थूलत्वादीनां च तत्र समन्वयात्। "यया तदक्षरमधिगम्यते" इत्यादिषु परस्मिन्नप्यक्षरशब्दो दृश्यत इति चेत्-न,

---

अहंग्रहेण अहमिति बुद्ध्या ब्रह्मणोऽपि ग्रहणेन। ननु जीवब्रह्मणोर्भेदे सति यथातत्त्वमुपासनं कार्यम्, किमनेनाहंग्रहोपासनेनेत्यत्रोक्तं प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमिति। पृथक्त्वेनैवोपासने राजभृत्यवासनया शरीरात्मभावः सर्वप्रकारपारतन्त्र्यं बुद्धौ दृढनिरूढं न स्यात्; शेष्यतिशयाधानार्थता स्वस्य स्वरूपमिति धीदार्ढ्यञ्च न स्यादिति भावः। धर्मोपपत्तेश्चेत्यस्य अमृतत्वादिधर्माणां तत्रैवोपपत्तेः, अहंग्रहेऽनुपपत्त्यभावाच्चेत्यर्थः। भूमा यदि परमात्मा न भवेत्, अमृतत्वादिमान्न भवेदित्येकोऽर्थः। भूमा यदि जीवो न भवेत्, अहमिति न गृह्येतेति तु न; अहंग्रहस्याजीवत्वेऽप्युपपत्तेरित्यन्योऽर्थः ॥८॥

पूर्वाधिकरणे प्राणशब्दस्वरसार्थत्यागवत् अक्षरशब्दस्वरसार्थो न त्याज्यः। तथा भूमसुखशब्दमुख्यार्थग्रहणवत् अक्षरशब्दस्वरसार्थो ग्राह्यः। एवं पूर्वाधिकरणे जीवादधिकत्वे प्रमाणसत्त्वात् भूम्नः परमात्मत्वे स्वीकृतेऽपि अत्र तथा प्रमाणाभावात् अक्षरं न परमात्मा, प्रत्युत निकृष्टं प्रधानमेवेति शङ्कया संगतिः। अदृश्यत्वादिगुणकाधिकरणे प्रथममक्षरं परं ब्रह्म, 'अक्षरात् परतः पर' इत्यत्र तु अक्षरशब्दार्थो जीवः प्रधानमेव वेत्युक्तम्। तत् त्रिष्वपि तच्छब्दप्रसिद्धौ कतमग्रहणमिहेत्यत्र, न

प्रमाणान्तरप्रसिद्धश्रुतिप्रसिद्धयोः प्रमाणान्तरप्रसिद्धस्य प्रथमप्रतीतेः ; प्रतीतपरिग्रहे विरोधाभावात् । किञ्च "यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्याः" इत्यारभ्य सर्वस्य कालत्रितयवर्तिनः कारणभूताकाशाधारत्वं प्रतिपादिते, "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इत्याकाशस्यापि कारणं तदाधारभूतं किमिति पृष्टे प्रत्युच्यमानमक्षरं सर्वविकारकारणतया तदाधारभूतं प्रमाणान्तरप्रसिद्धं प्रधानमिति प्रतीयते । अतोऽक्षरं प्रधानम्—

इति प्राप्ते उच्यते—अक्षरमम्बरान्तधृतेः—अक्षरं परं ब्रह्म ; कुतः ? अम्बरान्तधृतेः ; अम्बरस्य आकाशस्य अन्तः—पारभूतम् अव्याकृतमम्बरान्तः; तस्य धृतेः । तदाधारतयाऽस्याक्षरस्योपदेशादिति यावत् । अयमर्थः—"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इत्यत्राकाशशब्दनिर्दिष्टं न वायुमदम्बरम् , अपितु तत्पारभूतमव्याकृतम् , अतस्तस्याव्याकृतस्याप्याधारत्वेनोच्य-

---

मानत्वेनेत्यर्थः पूर्वपक्षी । प्रथमप्रतीतेरिति । प्रत्यक्षोपजीवि अनुमानम् , प्रत्यक्षानुमानोभयोपजीवी शब्दः । प्रधानञ्चानुमानिकम् । उपजीव्यप्रमाणसिद्धस्य ग्रहणसंभवे उपजीवकप्रमाणसिद्धग्रहणं न युक्तम् । तत्प्रतीतेः प्रथमत्वादिति भावः । विरोधाभावादिति । ननु, एतस्य वा अक्षरस्य प्रशासने गार्गि, अदृष्टं द्रष्टृ इति च प्रशासितृत्वद्रष्टृत्वादिषु अक्षरे श्राव्यमाणेषु प्रधानपरत्वे कथमविरोध इति चेत्—अयमाशयः—यावत्यंशे कथिते प्रश्नस्योत्तरं भवितुमर्हति, तदधिकं तत्त्वं याज्ञवल्क्यो न ब्रवीति, अत एव पूर्वनिरुक्तोत्तरोत्तरगार्गीप्रश्नावकाशः । तदत्र यदि प्रधानकथनमात्रेण प्रश्नः समाहितो भवेत् , नैव परतत्त्वं स वक्तुमर्हति । न च प्रथमगार्गीप्रश्नमालायामन्ते याज्ञवल्क्येन देवताप्रस्तावकरणात् देवताकं भवितुमर्हतीति मन्तव्यम् । तत्रापि देवताप्रश्नानवगतेः । प्रष्टव्यतया पूर्वासिमासेव सा परतः पृच्छतीत्यत्र प्रमाणाभावाच्च । रीत्यन्तरस्यैवावगमाच्च । (परिष्कारो द्रष्टव्यः)। तदत्र भूताकाशतत्कारणप्रधानोभयकथनेनैव प्रश्नद्वयसमाधानसंभवे तदुपरितनं परतत्त्वं न महर्षिर्वदिष्यतीति अक्षरं प्रधानमिति निश्चिते, पश्चात् स्वयं किञ्चित् तेन कथ्यमानं प्रशासनद्रष्टृत्वादिकं प्रधान एव चेतनत्वारोपेण, 'यथेन बीजं प्रतिसंजहार' इत्यादाविव भवितुमर्हति । 'कामः संकल्पो विचिकित्सा—सर्वं मन एव' इत्यादिरीत्या च मनोरूपप्रधाने मन्तृत्वद्रष्टृत्वादिकं सुवचम् । सांख्यमते हि बुद्धेरेव द्रष्टृत्वादिकम् । अक्षरं जीव इति पक्षे तु नैवं क्लेशोऽपीति । ननु वर्णात्मकमक्षरं प्रत्यक्षप्रमाणसिद्धं विहायानुमानिकप्रधानग्रहणमपि न युक्तमित्यत्र, तत्पक्षे शांकरे विरोधप्रद्योपयोगिहेतुमुपन्यस्यति किञ्चेति । स्फोटस्य त्वप्रसिद्धत्वादप्रामाणिकत्वाच्च न तमादाय पूर्वपक्षप्रसक्तिः ।

प्राणस्य भूतत्वे वाक्यानामनन्वयवत् अत्राक्षरस्यापरमात्मत्वे वाक्यानन्वय एवेत्याशयेन सिद्धान्त उच्यते । तत्र प्रधानस्याम्बरान्तपदेनोक्तिः अम्बरमाकाशशब्दार्थतया गृहीत्वा पूर्वपक्षः प्रवृत्त इति ज्ञापनाय । अन्तः अवधिः पूर्वावधिः कारणम् । अहङ्कारादीनामपि कार्यवर्गेनिविष्टतया तद्ग्रहणाय पारभूतमिति व्याख्यातम् । अम्बरस्य स्वकारणपरम्परया ऽन्ततो यत् लयस्थानम् , सोऽम्बरान्त इति वा । तस्य धृतेः तदाधारत्वादित्यर्थः ।

मानमक्षरं नाव्याकृतं भवितुमर्हति— इति ॥ नन्वाकाशशब्दनिर्दिष्टो न वायुमानिति कथमवगम्यते ॥ उच्यते । "यदूर्ध्वं गार्गि दिवो यदर्वा(वा)क् पृथिव्याः, यदन्तरा द्यावापृथिवी इमे, यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते, आकाश एव तदोतं च प्रोतं च" इत्युक्ते[ः?] त्रैकाल्यवर्तिनो विकारजातस्याधारतया निर्दिष्ट आकाशो न वायुमदाकाशो भवितुमर्हति ; तस्यापि विकारान्तर्गतत्वात् । अतोऽत्राकाशशब्दनिर्दिष्टं भूतसूक्ष्ममिति प्रतीयते । ततस्तस्यापि भूतसूक्ष्मस्याधारभूतं किमिति पृच्छ्यते, "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इति । अतस्तदाधारतया निर्दिश्यमानमक्षरं न प्रधानं भवितुमर्हति ।

यत्तु—श्रुतिप्रसिद्धात् प्रमाणान्तरप्रसिद्धं प्रथमं प्रतीयत इति—तन्न, अक्षरशब्दस्यावयवशक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात् । सम्बन्धग्रहणदशायामर्थस्वरूपं येन प्रमाणेनावगम्यते, न तत् प्रतिपादनदशायामपेक्षणीयम् ॥ ९ ॥

एवं तर्ह्यक्षरशब्दनिर्दिष्टो जीवोऽस्तुः तस्य, भूतसूक्ष्मपर्यन्तस्य कृत्स्नस्याचिद्वस्तुन आधारत्वोपपत्तेः; अस्थूलत्वाद्युच्यमानविशेषणोपपत्तेश्च; (सुबा. २) "अव्यक्तमक्षरे लीयते"

---

प्रमाणान्तरप्रसिद्धस्य प्रथमं ग्रहणमिति पक्षेऽपि विरोधादत्र ग्रहणासंभव इति प्रधानपरत्वं निरस्तमेव । स पक्षोऽप्यनुपपन्न इति व्युत्पादयितुं तमनुवदति **यत्त्विति** । **अक्षरशब्दस्येति** । प्रधानत्वेन रूपेण तस्याक्षरशब्दवाच्यत्वे प्रधानत्वेन रूपेण तद्ग्राहकानुमानापेक्षा शक्तिग्रहकाले स्यात् । क्षरणशून्यत्वेन रूपेण किञ्चिद्वस्तुबोधकत्वादस्य यौगिकशब्दस्य न शक्तिग्रहकालेऽपि प्रधानग्रहणावश्यकता । यत्रैकं पदं प्रमाणान्तरप्रसिद्धश्रुतिप्रसिद्धानेकार्थरूढम्, तत्रापि प्रमाणान्तरसिद्धं प्रथमं ग्राह्यमित्यत्र न युक्तिरस्ति । न हि तत्र पदजन्यपदार्थोपस्थितौ प्रमाणान्तरमुपयुज्यते; तस्याः संस्कारमात्रजन्यत्वात् । संस्कारपाटवस्य चानुभवाभ्यासाधीनतया प्रमाणप्राथम्यस्य तत्रानुपयोगात् । नापि शाब्दबोधे तदपेक्षा । शाब्दबोधस्य शब्दमात्रजन्यत्वात् । न ह्युभयप्रमाणजन्यमेकं ज्ञानम् । न च—गां शृङ्गे गृहीत्वा कश्चिद् गोशब्दं व्युत्पादयति चेत्, सैव गौः सर्वत्र गोशब्दतः प्रथमं गृह्यते । अतः अस्यायमर्थ इति शक्तिविषयकप्राथमिकग्रहकाले अस्येत्येतज्ज्ञानाय प्रमाणान्तरापेक्षायामपि न पश्चात् तस्य कश्चिदप्युपयोगः । सामान्यं पदार्थः, विशेषो वाक्यार्थ इति न्यायेनाविशेषेण सर्वोपस्थितौ अन्वयार्हव्यक्तिग्रहणेन शाब्दबोध इत्यर्थः । एवमत्र प्रकृतितत्त्वग्रहणासंभवः स्थितः ; तावन्मात्रेण गार्गीप्रश्नसमाधानायोगात् । प्रशासनादेर्गौणतया नयनञ्च क्लिष्टमिति स्पष्टमेव ॥ ९ ॥

ननु, 'अरा इव रथनाभौ प्राणे सर्वं समर्पितम्' इति भूमविद्यावाक्येन जीवतत्त्वस्य सर्वाधारत्वावगमात् तदेवाक्षरमस्तु इति उत्तरसूत्रमवतारयितुं शङ्कते **एवंतर्हीति** । **अव्यक्तमक्षरे** इति । नन्वव्यक्ताक्षरतमसामत्रोक्तानामचित्प्रभेदत्वात् कथमिदमक्षरशब्दस्य चेतनवाचित्वे प्रमाणमिति चेत्—उच्यते—मूलप्रकृतेः काष्ठाभूतावस्था तमःपदविवक्षिता । तत्रापि जीवसमष्टिर्निविष्टैवास्ति । परन्तु

(मुण्ड. ७) "यस्याव्यक्तं शरीरं...यस्याक्षरं शरीरं" (गी. १५) "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्यादिषु प्रत्यगात्मन्यप्यक्षरशब्दप्रयोगदर्शनात् इत्यत्रोत्तरम्—

सा च प्रशासनात् । १ । ३ । १० ॥

सा चाम्बरान्तधृतिरस्याक्षरस्य प्रशासनादेव भवतीत्युपदिश्यते, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति" इत्यादिना। प्रशासनम् प्रकृष्टं शासनम्। न चेदृशं स्वशासनाधीनं सर्ववस्तुविधरणं बद्धमुक्तोभयावस्थस्यापि प्रत्यगात्मनः संभवति। अतः पुरुषोत्तम एव प्रशासित्रक्षरम्॥ १० ॥

अन्यभावव्यावृत्तेश्च । १ । ३ । ११ ॥

अन्यभाव—अन्यत्वम्, प्रधानादिभावः। अस्याक्षरस्य परमपुरुषादन्यत्वं वाक्यशेषे व्यावर्त्यते, "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ। नान्यदतोऽस्ति द्रष्टृ, नान्यदतोऽस्ति श्रोतृ, नान्यदतोऽस्ति मन्तृ, नान्यदतोऽस्ति विज्ञातृ। एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति। अत्र द्रष्टृत्वश्रोतृत्वाद्युपदेशादस्याक्षरस्याचेतनभूतप्रधानभावो व्यावर्त्यते; अन्यैरदृष्टस्यैव सतः, सर्वस्य द्रष्टृत्वाद्युपदेशाच्च प्रत्यगात्मभावो व्यावर्त्यते। अत इयमन्यभावव्यावृत्तिरस्याक्षरस्य परमपुरुषतां द्रढयति।

---

अन्तर्भूतजीवतत्त्वकं तत्तदेव किञ्चिदुन्मग्नजीवतत्त्वकं यदा भवति, तदा अक्षरमिति व्यपदिश्यते। अतोऽक्षरशब्दार्थो जीवमुखेनैव बोध्यः। तदनन्तरावस्थायामव्यक्तमिति नाम; तदनन्तरस्य महन्नाम्नो बुद्धितत्त्वस्याध्यवसायात्मकत्वप्रसिद्धव्यापारतया व्यक्तपदवाच्यत्वेन तत्संनिकृष्टतत्त्वरूपत्वात्। अक्षरावस्थाया अपि तमोवस्थादशायां क्षरणात् न साक्षादक्षरत्वम्, किंत्वक्षरजीवोन्मज्जकत्वादेवेत्याशय इति। कूटस्थोऽक्षर इति च जीववाचित्वं साक्षादवगतम्। ननु कथं प्रकृतितत्त्वाधारत्वं जीवतत्त्वस्य; न हि व्यष्टिजीवं प्रति देवाद्याकारस्य देहत्ववत् प्रकृतेर्देहत्वे प्रमाणमस्ति। जीवसमष्टेरनेकजीवरूपतया एकस्यानेकात्मकत्वायोगाच्च। तदा जीवचैतन्यतन्त्रताभावाच्च। अतः कस्मिन्नु खलु आकाश ओतः प्रोतश्चेति प्रश्नः न जीवमादाय समाधेय इति चेत्—एतस्य वा अक्षरस्य प्रशासने गार्गीत्यादिना उपरि कार्यावस्थायामेवाक्षरस्य धारकत्ववचनात् तदवस्थप्रकृतिधारणस्वरूपयोग्यतामादायैव ओतत्वप्रोतत्ववचनमिति पूर्वपक्षितात्पर्यात्।

**सा च** प्रकृतितत्त्वधृतिरपि प्रशासनाधीनैव विवक्षिता; तादृशधृतेरेव सूर्याचन्द्रमःप्रभृतिषु उपर्युपपादनात्। न च प्रकृतिं जीवस्तथा धारयति, नापि च सूर्यादिकमपि स तथा धारयति; सूर्यादीनां पतनाभावं प्रति तदन्तर्वर्तिजीवसंकल्पस्याहेतुत्वात्। प्रकृष्टश्च शासनं दण्डभूतः प्रयत्नः, अप्रतिहतः संकल्पो वा; न स जीवस्य। कथञ्चित् प्रकृतौ जीवे चाधारत्वरूपधृतेः संभवेऽपि स्वशासनाधीनधृतिरूपव्यक्तिविशेषस्यैव हेतुत्वात् न पूर्वोक्तहेतुरनैकान्तिक इति प्रकृतसूत्रविवक्षितम्। अतोऽत्राक्षरं न जीवः॥ १० ॥

एवं वा अन्यभावव्यावृत्तिः। अन्यस्य सद्भावव्यावृत्तिरन्यभावव्यावृत्तिः ; यथैतदक्षरमन्यैरदृष्टं सत् अन्येषां द्रष्टृ च सत् स्वव्यतिरिक्तस्य समस्तस्याधारभूतम्, एवमनेनादृष्टमेतस्य द्रष्टृ च सत् एतस्याधारभूतमन्यन्नास्तीति वदन्, "नान्यदतोऽस्ति द्रष्टृ" इत्यादिवाक्यशेषः अन्यस्य सद्भावं व्यावर्तयन् अस्याक्षरस्य प्रधानभावं प्रत्यगात्मभावं च प्रतिषेधति।

किञ्च, "एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति ; यजमानं देवाः; दर्वीं पितरोऽन्वायत्ताः" इति, श्रौतं स्मार्तं च यागदानहोमादिकं सर्वं कर्म यस्याऽऽज्ञया प्रवर्तते, तदक्षरं परब्रह्मभूतः पुरुषोत्तम एवेति विज्ञायते। अपि च, "यो वा एतदक्षरं गार्गि अविदित्वाऽस्मिन् लोके जुहोति, यजते, तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद्भवति। यो वा एतदक्षरं गार्गि अविदित्वाऽस्माल्लोकात् प्रैति, स कृपणः। अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः" इति यदज्ञानात् संसारप्राप्तिः, यज्ज्ञानाच्चामृतत्वप्राप्तिः, तदक्षरं परं ब्रह्मैवेति सिद्धम्. ११. इति अक्षराधिकरणम् ॥ ३ ॥

२१. ईक्षतिकर्माधिकरणम् १.३.४. (प्रश्न. ५.)

## ईक्षतिकर्म व्यपदेशात् सः १.३. १२

आथर्वणिकाः सत्यकामप्रश्नेऽधीयते, (प्र.५.५.) "यः पुनरेतं त्रिमात्रेण ओमित्येतेनै-

---

अदृष्टं द्रष्टृ इत्येतद्व्याख्यानपरतया सूत्रं योजयित्वा, 'नान्यदतोऽस्ति द्रष्टृ' इत्येतद्व्याख्यानपरतयाऽपि योजयति **एवंवे**ति। परमात्मनोऽन्यस्य द्रष्टुर्जीवस्य वर्तमानत्वात् यथाश्रुतानिर्वाहात् विवक्षितमर्थं दर्शयति **यथैत**दित्यादिना। अन्यपदस्य सदृशभूतान्यपरत्वस्यान्तर्याम्यधिकरण एवोक्तत्वात् एतत्सदृशमेतदन्यद् द्रष्टृ नास्तीति श्रुत्यर्थः। सादृश्यञ्चादृष्टत्वविशिष्टद्रष्टृत्वरूपं स्वव्यतिरिक्तसमस्ताधारत्वरूपञ्च पूर्ववाक्यप्रतिपन्नम्। अन्तर्याम्यधिकरणे अन्तर्नियन्तृत्वस्यैव प्रस्तुतत्वात् नियन्तृत्वरूपं सादृश्यमुक्तम्; अत्र त्विदं प्रस्तुतमिति विशेषः। शेषं तत्रैव द्रष्टव्यम्। **अनेनादृष्ट**मिति। स्वव्यतिरिक्तादृष्टत्व- स्वव्यतिरिक्तद्रष्टृत्व-स्वव्यतिरिक्तसर्वाधारत्वरूपसादृश्ये स्वपदेन परमात्मग्रहणे तेषां धर्माणां परमात्मन्यन्वयो निर्बाधः। अत्रैतत्समन्वयाय व्यतिरिक्तपदेन येषामर्थानां ग्रहणं क्रियते, तेषामेव स्वपदेन ग्रहणे तु नान्यत्र तावददृष्टत्व-तावद्द्रष्टृत्व-तावदाधारत्वानि सन्तीत्येतावदेवात्र वक्तव्यम्। एवं स्थिते किमिति परमात्मादृष्टत्व-परमात्मद्रष्टृत्व-परमात्माधारत्वरूपधर्मशालिवस्तुनिषेध इहोच्यत इति चेत्—**अनेन, एतस्य, एतस्ये**तिपदानां व्यतिरिक्तजगत्परत्वमेवास्तु। अतो न दोषः। अथवा परमात्माधिकनिषेधस्यापि ज्ञापनार्थमेवैवमुक्तम्। सौत्रचकारविवक्षितं हेतुद्वयमन्यदाह **किञ्चे**त्यादिना। धृतिप्रयोजकशासनवत्त्वं प्रागुक्तम्, धृतिविशेषस्य हेतुत्वमिति ज्ञापनाय। अत्र सर्वप्रवृत्तिप्रयोजकशासनं पृथग्धेतुरुच्यते; तथा संसारापवर्गप्रयोजकाज्ञानतत्त्वज्ञानविषयत्वविशेषोऽपि हेतुः। **कृपणः** शोच्यः, संसारमग्नत्वात्। **ब्राह्मणः** ब्रह्मानुभवशाली। अक्षरवेदिनो ब्रह्मानुभावित्वोक्त्याऽप्यक्षरं ब्रह्मेति ज्ञायते; तदाह **अक्षरं परं ब्रह्मैवे**ति. ११.

एवं गार्गीप्रश्नोत्तरे अक्षरशब्दस्य परब्रह्मपरत्वे निर्धारिते, प्रश्नोपनिषदि गार्ग्यप्रश्नोत्तरे एतत्सच्छाय-

त्र क्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये संपन्नः, यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं हवै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्; स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते " इति । अत्र ध्यायतीक्षतिशब्दावेकविषयौ, ध्यानफलत्वादीक्षणस्य; (छा.३.१४.) " यथाक्रतुरस्मिन् लोके पुरुषः " इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वात्, "परंपुरुषम् " इति उभयत्र कर्मभूतस्यार्थस्य प्रत्यभिज्ञानाच्च ।

तत्र संशय्यते—किमिह, " परं पुरुषम् " इति निर्दिष्टः जीवसमष्टिरूपोऽण्डाधिपतिः चतुर्मुखः, उत सर्वेश्वरः पुरुषोत्तमः इति । किं युक्तम्? समष्टिक्षेत्रज्ञ इति । कुतः? " स यो ह वै तद्भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत, कतमं वाव स तेन लोकं जयति " इति प्रक्रम्य एकमात्रप्रणवमुपासीनस्य मनुष्यलोकप्राप्तिमभिधाय, द्विमात्रमुपासीनस्य अन्तरिक्षलोकप्राप्तिमभिधाय, त्रिमात्रमुपासीनस्य प्राप्यतयाऽभिधीयमानो ब्रह्मलोकोऽन्तरिक्षात्परो जीवसमष्टिरूपस्य चतुर्मुखस्य लोक इति विज्ञायते; तद्गतेन चेक्ष्यमाणः तल्लोकाधिपतिश्चतुर्मुख एव । " एतस्माज्जीवघनात्परात्परम् " इति च देहेन्द्रियादिभ्यः परात् देहेन्द्रियादिभिस्सह घनीभूतात् जीवव्यष्टिपुरुषात् ब्रह्मलोकवासिनः समष्टिपुरुषस्य चतुर्मुखस्य परत्वेनोपपद्यते । अतोऽत्र निर्दिश्यमानः परः पुरुषः समष्टिपुरुषश्चतुर्मुख एव । एवं चतुर्मुखत्वे निश्चिते अजरत्वादयो यथा कथञ्चिन्नेतव्याः—

---

तत्रोपस्थिते।(४ ' स यो हवै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते. ......स सर्वज्ञः सर्वो भवति' इति वाक्येऽक्षरं परं ब्रह्मेत्यवधारितम् । अथ तदनन्तरे सत्यकामप्रश्ने ओंकाररूपाक्षरध्यातृप्राप्यलोकजिज्ञासायामुत्तरमुच्यमानं पूर्वोक्षरविश्रान्तम्, उत तस्य प्रागेवोक्ततया तदन्यविषयकमिति विशये—वाक्यस्वारस्यपर्यालोचनयैवार्थस्य निर्धार्यत्वात्, पूर्वं गार्गीप्रश्ने आकाशपदस्य प्रसिद्धाकाशपरत्वेऽनुपपत्तिवत् अत्रान्तरिक्षपदस्य प्रसिद्ध-स्वर्गार्वाचीनलोकपरत्वेऽनुपपत्तेरभावात् एतदुत्तरं परब्रह्मेतरविषयकमित्युत्थितेः संगतिः पादोदरः सर्पः । स सामभिरिति । सः एवं विनिर्मुक्त एव । ऋचां यजुषाञ्चायो यत्किञ्चिल्लोकनेतृत्वं प्रागुक्तम्; तथाऽत्र साम्नामेतदुच्यते । अत्र सूत्रे ईक्षतिकर्मण एव परमात्मत्वसाधनात् ध्यायतिकर्म तदन्यदिति सिद्धान्तिशिरोमणिमतिरेव; अथवा ईक्षतिकर्मव्यपदेशादिति ऐकपद्याश्रयणे ध्यायतिकर्मण ईक्षतिकर्मत्वेन व्यपदिष्टत्वादुभयमेवं सिद्ध्यतीति स्थाप्यत इति तयोर्भेदस्वीकारेण पूर्वपक्ष इति शांकररीतिर्मन्येत । तदुभयं निरस्यितुमाह अत्र ध्यायतीति । ननु तत्क्रतुन्याये सत्यपि इन्द्राद्यन्तर्यामित्वेनोपासने परब्रह्मप्राप्तिवत् अत्र चतुर्मुखान्तर्यामितयोपासने परब्रह्मप्राप्तिरिति स्यादित्यतो हेत्वन्तरमाह परमिति । न च परात् परमित्यस्य केवलं परमित्यस्य च भेद इति शक्यम्—परमित्यस्यैव परात् परमिति, पुरुषमित्यस्यैव पुरिशयं पुरुषमिति च विवरणमितरेकरस्यसंभवे तत्त्यागायोगात् । परत्वेनेति । न च चतुर्मुखोऽपि व्यष्टिजीव एवेति वाच्यम्—अत्र ब्रह्मलोकश्चतुर्मुखलोक इति सिद्धे, तत्र चतुर्मुखस्यैव परत्वात, तस्य कथं जीवघनात् परत्वमिति शङ्कायां घनशब्दस्य मूर्त्यर्थकत्वात् मूर्तजीवरूपव्यष्ट्यपेक्षया जीवसमष्टेः परत्वं कारणत्वात्,

इति प्राप्ते प्रचक्ष्महे-ईक्षतिकर्म व्यपदेशात् सः। ईक्षतिकर्म स परमात्मा। कुतः? व्यपदेशात्। व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन। तथा हि ईक्षतिकर्मविषयतयोदाहृते श्लोके, "तमोङ्कारेणैवायनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं च" इति। परं शान्तमजरमभयममृतमिति हि परमात्मन एवैतद्रूपम्;(छा.४.१५.)"एतदमृतमभयमेतद्ब्रह्म" इत्येवमादिश्रुतिभ्यः। "एतस्मात् जीवघनात्परात्परम्" इति च परमात्मन एव व्यपदेशः; न चतुर्मुखस्य; तस्यापि जीवघनशब्दगृहीतत्वात्। यस्य हि कर्मनिमित्तं देहित्वम्, स जीवघन इत्युच्यते: चतुर्मुखस्यापि तच्छ्रूयते (श्वे.६.१८) "यो ब्रह्माणं विदधाति पूर्वम्" इत्यादौ।

यत् पुनरुक्तम्—अन्तरिक्षलोकस्योपरि निर्दिश्यमानो ब्रह्मलोकः चतुर्मुखलोक इति प्रतीयते; अतस्तत्रस्थश्चतुर्मुख इति—तदयुक्तम्; "यत्तच्छान्तमजरममृतमभयम्" इत्यादिनेक्षतिकर्मणः परमात्मत्वे निश्चिते सति, ईक्षितुः स्थानतया निर्दिष्टो ब्रह्मलोको न क्षयिष्णुश्चतुर्मुखलोको भवितुमर्हति। किञ्च "यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं ह वै स पाप्मना विनिर्मुक्तः; स

---

तदाश्रयपुरुषश्च चतुर्मुख इति तस्यापि तद्द्वारा परत्वविवक्षणात्। तल्लोकग्रहणकारणञ्च—तस्य अन्तरिक्षसंनिकृष्टत्वात्, पूर्वलोकवत् प्राकृतत्वात्, भोगलोकसहकारमुपेक्ष्य मोक्षलोकग्रहणायोगाच्च; अग्रचप्रायन्यायात्। तथा मनुस्मृतौ (२-७६) भूर्भुवः स्वरिति व्याहृतित्रयस्य वेदत्रयजन्यत्वमुक्तम्। अत्र वेदत्रयसाध्यतयोक्तं नयनं तद्व्याहृतित्रयार्थभूतप्राकृतलोकविषयकमेव युक्तम्। पृथिव्यन्तरिक्षं द्यौरिति च प्रसिद्धमिदमेव लोकत्रयमित्येवं भाव्यम्।

**ईक्षतिकर्म स परमात्मे**ति। अत्र **सः** इति सौत्रपदस्य परमात्मेति व्याख्यानम्। इदं साध्यसमर्पकम्। न च प्रथमाधिकरणादावपि साध्यस्य वक्तव्यत्वादत्र परं कुत इति शंक्यम्—अत्र वा वक्तव्यम्, तत्र वेति न कश्चिद्विशेषः इति न्यायेनोपपत्तेः, अस्यैव पूर्वापराधिकरणेष्वप्याकर्षात्। यथा, 'भेदव्यपदेशाच्चान्यः', 'अत एव च स ब्रह्म' इति सूत्रगतयोरन्यपदब्रह्मपदयोः तत्तत्पादे सभेव। अथवा **ईक्षतिकर्म सः** इति भाष्ये पक्षनिर्देशः; **परमात्मे**ति अर्थप्राप्तसाध्यपूरणम्। **स** इत्यस्य पूर्ववाक्योक्तपरपुरुष इत्यर्थः। तेन ध्यायतिकर्मतया निर्दिष्टपरपुरुषाभिन्नः ईक्षतिकर्मभूतः परात्परः पुरुष इति पक्षनिर्देशात् ध्यायतीक्षतिकर्मणोर्भिन्नत्वशंका सूत्रतो व्यावर्त्यते। तदेतत् प्रागेव भाष्ये प्रत्यक्षोति। **परञ्चे**ति इत्येतदनन्तरम् अस्तीति शेषः। **जीवघनात् परात् पर**मित्यस्य, 'अक्षरात् परतः परः' इत्यत्रेव वद्धात् क्षरात् परो योऽक्षरः मुक्तः तस्मात् परं पुरुषोत्तममित्यर्थो युक्तः। पूर्वपक्षे तु पराज्जीवघन इति परिवर्त्यान्वयः कर्तव्य आसीत्। **ईक्षितुः स्थानतये**ति। **तत्रस्थश्चतुर्मुख** इति प्रागुक्ततया ईक्षितस्य ईक्ष्यमाणस्य वा स्थानतयेति, तत्स्थानतयेति वा वक्तव्ये **ईक्षितु**रिति कथमिति चेत्र-**तद्गतेन चेक्ष्यमाण** इति पूर्वपक्षे उक्ततया एवमप्युक्तिसंभवात्। ननु यत्तच्छान्तमजरममृतमभयं परञ्चेति वाक्यस्य खण्डान्ते वर्तमानत्वात् पूर्वं चतुर्मुखलोकं प्राप्तस्य पश्चात् तत्रोपासनबलात् 'ब्रह्मणा सह ते सर्वे' इति न्यायेन क्रमभावी परब्रह्मलाभ उच्यताम्। अत ईक्षतिकर्म चतुर्मुख एवेत्यत्र, उपक्रमस्थं हेतुं दर्शयति **किञ्चे**ति। चतुर्मुखलोकं पूर्वं गच्छति;

मामभिरुन्नीयते ब्रह्मलोकम्" इति सर्वपापाभिनिर्मुक्तस्य प्राप्यतयोच्यमानं न चतुर्मुखस्थानम्। अत एव चोदाहरणश्लोके इममेव ब्रह्मलोकमधिकृत्य श्रूयते, "यत्तत् कवयो वेदयन्ते" इति। कवयः सूरयः। सूरिभिर्दृश्यं च वैष्णवं पदमेव; (सुबा.६.) "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्येवमादिभ्यः। न चान्तरिक्षात्परश्चतुर्मुखलोकः,मध्ये स्वर्गलोकादीनां बहूनां सद्भावात्।

अतः, "एतद्वै सत्यकाम! परं चापरं च ब्रह्म, यदोङ्कारः। तस्माद्विद्वानेतेनैवायनेनैकतरमन्वेति" इति प्रतिवचने,यत् अपरं कार्यं ब्रह्म निर्दिष्टम्, तत् ऐहिकामुष्मिकत्वेन द्विधा विभज्य एकमात्रं प्रणवमुपासीनानामैहिकं मनुष्यलोकावाप्तिरूपं फलमभिधाय, द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलं चाभिधाय, त्रिमात्रेण परब्रह्मवाचिना प्रणवेन परं पुरुषं ध्यायतां परमेव ब्रह्म प्राप्यतयोपदिशतीति सर्वं समञ्जसम्। अत ईक्षतिकर्म परमात्मा॥

इति ईक्षतिकर्माधिकरणम् १-३.४-

२२- दहराधिकरणम् १.३.५ (छा ८.)

## दहर उत्तरेभ्यः । १ । ३ । १३ ॥

इदमामनन्ति च्छन्दोगाः (छा.८) "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म,

---

पश्चात् परं ब्रह्मेति पक्षे तदिति चतुर्मुखलोकस्यैव ग्राह्यतया यत्तत्कवय इति तद्विशेषणमनन्वितमिति हेत्वन्तरमप्याह अत एव चेति। उदाहरणेतिपदेन श्लोकस्यास्यात्रोपनिषदि अपूर्वत्वाभावात्, खण्डान्तरस्थत्वेन दौर्बल्यवर्णनमप्ययुक्तमिति सूच्यते। बहूनामिति। सप्तलोकीव्यवहारोऽपि हि प्रसिद्धः। लोकान्तरग्रहणे ब्रह्मलोकपदघटकब्रह्मपदानन्वय इति तेषां त्यागे, पूर्वोक्तयुक्तिभिश्चतुर्मुखलोकोऽपि त्याज्य एव। लोकान्तराणामप्योंकारप्राप्यत्वाय यदि अन्तरिक्षपदं तदुपलक्षणम्, तदा उपलक्ष्यतावच्छेदकं प्राकृतामुष्मिकलोकत्वमेवेति तेनैव चतुर्मुखलोकक्रोडीकारात् तदन्यो ब्रह्मलोकः परब्रह्मलोक एवेत्याह अत इति। अन्यथा परंचापरंचब्रह्मेति उपक्रमे परब्रह्मकीर्तनविरोधोऽपीति दर्शयितुमुपक्रमवाक्यमप्युपात्तम्। सर्वं समञ्जसमिति। प्राकृतलोकभोगलोकसाहचर्यादिकं वस्तुविरोधात् न पूर्वपक्षसाधकम्। गार्ग्यप्रश्ने पूर्वमक्षरप्राप्तिरुक्तत्वेऽपि किं सा प्राप्तिरेव ओंकारसाध्या, उतान्यापीति सत्यकामप्रश्नावकाशात् तत्र मात्राभेदे फलभेदस्य प्रदर्शनेन त्रिमात्रेणैव तत्प्राप्तिकथनमिह घटते। मनुस्मृतौ प्राकृतलोकत्रयस्य वेदत्रयजन्यत्वकथनेऽपि तत्राकाराद्यक्षराणां वेदानाञ्च संबन्ध उक्तः, इह तु मात्राणामिति वैलक्षण्यवत् इदमपि वैलक्षण्यं युक्तमित्याशयः॥. १२.

पूर्वाधिकरणे सूर्यद्वारकब्रह्मलोकप्राप्तिपूर्वकामृताभयपरब्रह्मानुभवप्रतिपादकसत्यकामप्रश्नविचारः कृतः। अथ तथैव दिव्य-ब्रह्मलोक-अमृताभयप्राप्तिपरा दहरविद्या विचार्यते; तथा किमाकाशशब्दार्थः उपास्यं ब्रह्म, उत तदन्तर्वर्तीति संशये पूर्वमन्तरिक्षपदस्य प्राकृतसर्वलोकोपलक्षणत्वमपि स्वीकृत्य यदि तदुपरिस्थितस्य परब्रह्मत्वमुक्तम्, तर्हि सुतरामाकाशपदस्य प्रसिद्धार्थापरित्यागेन तदुपरिस्थितस्य परब्रह्मत्वस्वीकरणं घटत इति शंकेति संगतिः। दहरम् अल्पम्। सूत्रे आकाश इति विशेष्यपदं विहाय दहर इति निर्देशः 'यावान्

दहरोऽस्मिन्नन्तराकाशः, तस्मिन् यदन्तः, तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् " इति । तत्र संदेहः—किमसौ हृदयपुण्डरीकमध्यवर्ती दहराकाशो महाभूतविशेषः, उत प्रत्यगात्मा, अथ परमात्मा इति । किं तावत् युक्तम् ? महाभूतविशेष इति । कुतः ? आकाशशब्दस्य भूताकाशे ब्रह्मणि च प्रसिद्धत्वेऽपि भूताकाशे प्रसिद्धिप्रकर्षात् ; तस्मिन् यदन्तः तदन्वेष्टव्यम् " इत्यन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्च—

इत्येवं प्राप्तेऽभिधीयते—दहर उत्तरेभ्यः । दहराकाशः परं ब्रह्म ; कुतः ? उत्तरेभ्यो वाक्यगतेभ्यो हेतुभ्यः । " एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः " इति निरुपाधिकात्मत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वं चेति दहराकाशे श्रूयमाणा गुणाः दहराकाशं परं ब्रह्मेति ज्ञापयन्ति । (छा.८.१.६) " अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति " इत्यादिना, (८.२.१०) " यं कामं कामयते, सोऽस्य सङ्कल्पादेव समुत्तिष्ठति ; तेन सम्पन्नो महीयते " इत्यन्तेन दहराकाशवेदिनः सत्यसङ्कल्पत्वप्राप्तिश्चोच्यमाना दहराकाशं परं ब्रह्मेत्यवगमयति ।

" यावान् वा अयमाकाशः, तावानेषोऽन्तर्हृदय आकाशः " इत्युपमानोपमेयभावश्च दहराकाशस्य भूताकाशत्वे नोपपद्यते ॥ हृदयावच्छेदनिबन्धनः उपमानोपमेयभाव इति चेत्—तथासति हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रयत्वं नोपपद्यते ॥ ननु च दहराकाशस्य परमात्मत्वेऽपि बाह्याकाशोपमेयत्वं न संभवति ; (छा.३.१४) " ज्यायान् पृथिव्याः ज्याया-

---

वा अयमाकाशः' इति वाक्यस्थाकाशपदग्रहणभ्रमव्यवच्छेदार्थः । **अन्वेष्टव्यम्** मन्तव्यम् । **विजिज्ञासितव्यम्** निदिध्यासितव्यम् । सन् भोग्यत्वसूचनार्थः । **उत्तरेभ्य** इति सूत्रे प्रयोगः,—' तस्मिन् यदन्तस्तदन्वेष्टव्यम् ' इति पूर्ववाक्यस्य पूर्वपक्ष्यनुकूलतया प्रतीयमानत्वेऽपि उत्तरवाक्यानि सिद्धान्त्यनुकूलानीति ज्ञापयितुम् । **वाक्यगतेभ्य** इति । वाक्यशेषगतेभ्य इति **शाङ्करम्** । **हेतवश्च** बाह्याकाशोपमेयत्वद्युपृथिव्याद्याधारत्वापहतपाप्मत्वादयः । ननु तस्मिन् यदन्तरिति यच्छब्दनिर्दिष्टम् ब्रह्मैव । तदेव, ' एष आत्मा ' ' य इहात्मान ' मिति आत्मशब्देन निर्दिश्यताम्, आकाश एव निर्दिष्ट इति कुत इत्यत्र, यावान् वा अयमिति पूर्ववाक्यानुपपत्तिं दर्शयति **यावान्वा** इति । **हृदयावच्छेदे**ति । नन्वस्य पूर्वपक्षिण उपमेयपराकाशशब्दस्यापि भूताकाशार्थकत्वाभिमतौ वाक्यकृत्यं किं दर्शितं भवति ? एवं हि सति भूताकाशगतं द्यावापृथिव्यादिवस्तुजातमेवान्वेष्टव्यमिति वक्तव्यं स्यात् । तस्यैव तत्र समाहितत्वोक्तेरिति चेत्—' यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम् ' इति वाक्यमिह लोकेऽननुभाव्यं सर्वं ब्रुवत् परमात्मानमपि क्रोडीकरोति । द्यावापृथिव्यादिकमपि भोग्यत्वाभिप्रायेणैवात्र कथ्यत इति तदाशयः । अनेनैवाशयेन **अथस्या**दिति उपरि शङ्किष्यते, परिहरिष्यते चायं विस्तरेण । **सर्वाश्रयत्व**मिति । न तावदिदं वाक्यमाकाशद्वयैक्यमात्रपरम्, तर्हि योऽयं, स एष इत्येव प्रयोगसंभवात् **यावान्—तावा**नित्ययोगात् ।

नन्तरिक्षात् " इत्यादौ सर्वस्माज्ज्यायस्त्वश्रवणात् ॥ नैवम् । दहराकाशस्य हृदयपुण्डरीकमध्यवर्तित्वप्रयुक्ताल्पत्वनिवृत्तिपरत्वादस्य वाक्यस्य; यथा अधिकजवेऽपि सवितरि 'इषुवद्गच्छति सविता' इति वचनं गतिमान्द्यनिवृत्तिपरम् ॥

अथ स्यात्—"एष आत्माऽपहतपाप्मा" इत्यादिना दहराकाशो न निर्दिश्यते; "दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इति दहराकाशान्तर्वर्तिनः ततोऽन्यस्यान्वेष्टव्यत्वेन प्रकृतत्वात्, इह "एष आत्माऽपहतपाप्मा" इति तस्यैवान्वेष्टव्यस्य निर्देष्टुं युक्तत्वात् ॥ स्यादेतदेवम्, यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न व्यभक्ष्यत्; व्यभाक्षीत्तु सा। तथा हि—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इति ब्रह्मपुरशब्देन उपास्यतया संनिहितपरब्रह्मणः पुरत्वेनोपासकशरीरं निर्दिश्य, तन्मध्यवर्ति च तदवयवभूतं पुण्डरीकाकारमल्पपरिमाणं हृदयं परस्य ब्रह्मणो वेश्मतयाऽभिधाय, सर्वज्ञं सर्वशक्तिमाश्रितवात्सल्यैकजलधिमुपासकानुग्रहाय तस्मिन् वेश्मनि संनिहितं सूक्ष्मतया ध्येयं दहराकाशशब्देन निर्दिश्य, तदन्तर्वर्ति चापहतपाप्मत्वादि स्वभावतो निरस्तनिखिलहेयत्वं सत्यकामत्वादिस्वाभाविकानवधिकातिशयकल्याणगुणजातं च ध्येयं "तदन्वेष्टव्यम्" इत्युपदिश्यते। अत्र तदन्वेष्टव्यम् इति तच्छब्देन दहराकाशं तदन्तर्वर्तिगुणजातं च परामृश्य तदुभयमन्वेष्टव्यमित्युपदिश्यते—"यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" इत्यनूद्य, तस्मिन् दहरपुण्डरीकवेश्मनि यो दहराकाशः यच्च तदन्तर्वर्तिगुणजातम्, तदुभयमन्वेष्टव्यमिति विधीयत इत्यर्थः ॥ दहराकाशशब्दनिर्दिष्टस्य परब्रह्मत्वम्, "तस्मिन् यदन्तः" इति निर्दिष्टस्य च तद्गुणत्वम्, तच्छब्देनोभयं परामृश्योभयस्याप्यन्वेष्टव्यतया विधानं च कथमवगम्यत इति चेत्—तदवहितमनाश्शृणु— "यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः" इति दहराकाशस्यातिमहत्तामभिधाय, "उभे अस्मिन् द्यावा-

---

अतः साम्यविवक्षा, यदि स्वच्छत्वसूक्ष्मत्वादिनैव साम्यं स्यात्, तर्हि औपाधिकभेदमादायापि निर्वाहः स्यात्, सर्वाश्रयत्वविवक्षणात्तु पूर्णाकाशस्यैव अन्तर्हृदय आकाश इत्यत्रापि ग्राह्यतया भेदाभावान्नोपमानोपमेयभाव इति भावः। **इषुवदि**ति। "क्षिप्तेषुरिव सर्पति" (२.८.१०) इति श्रीविष्णुपुराणम्। नन्वाकाशान्तर्वर्तिन एवान्वेष्टव्यत्वे स्पष्टमुच्यमाने आकाशस्यान्वेष्टव्यत्वमुच्यत इति कथं विरुद्धमुच्यत इत्यत्राह **अत्रे**ति। तदन्वेष्टव्यमिति तच्छब्दः, स च तच्च तदित्येकशेषेणोभयग्राहीति भावः। इममर्थं स्पष्टयितुं यो दहराकाश इति यच्छब्दघटनेन स्ववाक्यमेव व्याख्याति **यदिद**मिति। व्युत्पादनार्थमेतावत्; न यच्छब्दोऽध्याहर्तव्य इति निर्बन्धः॥ क्लेश एष किमर्थः; असदुक्तरीतौ को दोष इति पूर्वपक्षी शंकते **दहराकाशे**ति। उपमानोपमेयभावायोगात् प्रथम आकाशः न भूताकाश इति प्रागेवोक्तम्। 'उभे अस्मिन्', 'सर्वं तदस्मिन्' इति **अस्मि**न्नित्यनेन स एव गृह्यत इति स्पष्टम्। अतः सर्वमिति शब्देन परमात्मकोडीकारो न भवति। **अस्मि**न्निति निर्दिष्टमेवोपरि, 'नास्य जरयैतज्जीर्यति' इति **एत**त्पदेन

पृथिवी अन्तरेव समाहिते ; उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि " इति प्रकृतमेव दहराकाशम् अस्मिन्निति निर्दिश्य तस्य सर्वजगदाधारत्वमभिधाय, " यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम् " इति पुनरपि अस्मिन्निति तमेव दहराकाशं परामृश्य, तस्मिन् अस्य उपासकस्येह लोके यद्भोग्यजातमस्ति, यच्च मनोरथमात्रगोचरमिह नास्ति, सर्वं तत् भोग्यजातमस्मिन् दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्याभिधाय, तस्य दहराकाशस्य देहावयवभूतहृदयान्तर्वर्तित्वेऽपि देहस्य जराप्रध्वंसादौ सत्यपि परमकारणतयाऽतिसूक्ष्मत्वेन निर्विकारत्वमुक्त्वा, तत एव, " एतत् सत्यं ब्रह्म पुरम् " इति तमेव दहराकाशं सत्यभूतं ब्रह्माख्यं पुरं निखिलजगदावासभूतमित्युपपाद्य, " अस्मिन् कामाः समाहिताः " इति दहराकाशमस्मिन्निति निर्दिश्य, काम्यभूतांश्च गुणान् कामा इति निर्दिश्य तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा, तदेव दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्याऽऽत्मत्वं च, " एष आत्माऽपहतपाप्मा " इत्यादिना " सत्यसङ्कल्पः " इत्यन्तेन स्फुटीकृत्य, " यथा ह्येवेह प्रजा अन्वाविशन्ति " इत्यारभ्य, " तेषां सर्वेषु लोकेष्वकामचारो भवति " इत्यन्तेन तदिदं गुणाष्टकं तद्विशिष्टं दहराकाशशब्दनिर्दिष्टमात्मानं चाविदुषामेतद्व्यतिरिक्तभोग्यसिद्ध्ये च कर्म कुर्वतामन्तवत्फलावाप्तिमसत्यसङ्कल्पत्वं चाभिधाय, " अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति" इत्यादिना दहराकाशशब्दनिर्दिष्टमात्मानं तदन्तवर्तिनश्च काम्यभूतान् अपहतपाप्मत्वादिकान् गुणान् विजानतामुदारगुणसागरस्य तस्य परमपुरुषस्य प्रसादादेव सर्वकामावाप्तिः सत्यसङ्कल्पता चोच्यते।

---

ग्राह्यम् । एतत् सत्यं ब्रह्म पुरमिति च तस्य ब्रह्मत्वं स्पष्टमुक्तम् । एष दहराकाश एव, 'अस्मिन् कामाः' इति वाक्ये **अस्मिन्निति** निर्दिश्यते । अतोऽन्वेष्टव्यानां कामानां तदाधारस्य च विभागः श्रुत्यैव कृत इति भावः । **तस्मिन्** भूताकाशोपमेयतया दर्शिते । **अस्मिन्** द्यावापृथिव्याद्याधारतयोक्ते । अस्य वाक्यस्य भोग्यत्वेन सर्वनिर्देशकत्वाभावे **अस्येति** श्रुतिगतं पदं व्यर्थं स्यादित्याशयेन **भोग्यजात**मित्युक्तम् । **काम्यभूतांश्च गुणा**निति । न च सर्वस्य प्राक् भोग्यत्वेन कीर्तनात् **कामा** इति पदमविशेषेण द्यावापृथिव्यादिसर्वपरमेवास्त्विति शंक्यम्—'त इमे सत्याः कामा अनृतापिधाना' इत्युक्त्या पिहितानामेव कामपदग्राह्यत्वात् । एषाञ्च स्पष्टदृष्टानामतथात्वात् । कथञ्चित् परमात्मसंबन्धित्वाकारेण काम्यमानतया हेयत्वाभावेन सत्यकामशब्दार्थान्तर्भावसंमतावपि अपहतपाप्मत्वादिश्रूयमाणगुणत्यागायोगेन कामशब्देन सर्वग्रहणं चिकीर्षितमिति । ननु **यदन्त**रित्येव परमात्मोच्यते ; दहरस्तु भूताकाश एव । दहरस्य कथं परमात्माधारत्वमिति शंकायाम्, तस्य बाह्याकाशैक्यात् द्यावापृथिव्यादिसर्वाधारत्ववत् परमात्माधारत्वमपि संभवतीति उपर्युपन्यस्तम् । अथ शरीरनाशे अन्तर्वर्तिनः परमात्मनो नाशशंकाम्, 'एतत् सत्यं ब्रह्मपुरम् ; अस्मिन् कामाः समाहिताः' इत्यनेन आकाशस्यैव ब्रह्मपुरत्वात् शरीरस्य जीर्यतस्तथात्वाभावात् आकाश एवोक्तानां कामानां समाधानान्न दोष इति परिहृत्य, 'किं तदत्र विद्यत' इति प्राक् पृष्टं

अतो दहराकाशः परं ब्रह्म, तदन्तर्वर्ति चापहतपाप्मत्वादि काम्यगुणजातम्, तदुभयमन्वेष्टव्यं विजिज्ञासितव्यमिति चोच्यत इति निश्चीयते। तदेतद् वाक्यकारोऽपि स्पष्टयति, "तस्मिन् यदन्तरिति कामव्यपदेशः" इत्यादिना।

अत एतेभ्यो हेतुभ्यो दहराकाशः परमेव ब्रह्म ॥ १३ ॥

इतश्च दहराकाशः परं ब्रह्म—

गतिशब्दाभ्याम्: तथाहि दृष्टम्; लिङ्गं च । १ । ३ । १४ ॥

(८.३.) "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति; अनृतेन हि प्रत्यूढाः" इति प्रकृतं दहराकाशं निर्दिश्य तत्राहरहः सर्वेषां क्षेत्रज्ञानां गमनम्, गन्तव्यस्य तस्य दहराकाशस्य ब्रह्मलोकशब्दनिर्देशश्च दहराकाशस्य परब्रह्मतां गमयतः ॥ कथमनयोरस्य परब्रह्मत्वसाधकत्वमित्यत आह तथाहि दृष्टम् इति। परस्मिन् ब्रह्मणि सर्वेषां क्षेत्रज्ञानामहरहस्सुषुप्तिकाले गमनमन्यत्राभिधीयमानं दृष्टम्—(छा.६.९) "एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः, सति संपत्स्यामह इति" इति, (छा.६.१०) "सत आगम्य न विदुः, सत आगच्छामह इति" इति च। तथा ब्रह्मलोकशब्दश्च परस्मिन् ब्रह्मणि दृष्टः, (बृ.६.३३) "एष ब्रह्मलोकः सम्राडिति होवाच" इति। मा भूदन्यत्र ब्रह्मणि गमनदर्शनम्; एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञानां प्रलयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिकालेऽवस्थानं श्रूयमाणम्

---

विशदीक्रियते एव आत्मेतीत्यस्तु। अस्तु वा, 'एतत् सत्यं ब्रह्मपुरमिति वाक्यमपि परमात्मपरमिति। सर्वथा यदन्तरिति परमात्मैवोच्यतामित्याशंकायाम्, संप्रदायमपि प्राक्तनमत्र दर्शयति तदेतत् वाक्यकारोऽपीति। यावान् वा इति वाक्यस्य भूताकाशपरत्वं द्यावापृथिव्यादीनां भूताकाशाधेयत्ववर्णनञ्चाक्षरसमसंभवि च। न हि आकाशस्य सर्वाधारत्वमस्ति। तदसिद्धौ, तन्न्यायेन परमात्माधारत्वमपि भवितुमर्हतीति वर्णनमयुक्तमेव। आकाशस्याप्यनित्यतया देहवत् आत्माधारत्वायोग एवेत्यादिकमत्र हृद्गतम् ॥ १३

'अत्र ह्यस्यैते सत्याः कामा अनृतापिधानाः' इति वाक्ये अत्रेति कामाधारं निर्दिश्य तस्य हिरण्यनिध्युपमेयस्य ब्रह्मलोकत्वाभिधानादपि कामाधार आकाश एव परमात्मा; न तु तदन्तर्वर्तीत्याहानन्तरसूत्रेण। ब्रह्मलोकशब्दः ब्रह्माधारहार्दाकाशपर एवास्तु इत्यत्र गतिवचनं गतिपरश्रुत्यन्तरैकरस्यं ब्रह्मलोकशब्दश्रवणं ब्रह्मलोकपदे कर्मधारयौचित्यं हिरण्यनिध्युपमेयत्वौचित्यञ्चात्र समाधानरूपतया विवक्षितम्। एतमिति निर्दिष्टः कामाधारः परमात्मा सर्वप्रजागतिकर्मत्वेन निर्दिष्टत्वात् सद्वत्; ब्रह्मलोकशब्दवाच्यत्वात्, एषब्रह्मलोक इत्यत्रैतच्छब्दार्थवदिति प्रयोगः। संपत्स्यामह इत्यस्य गत्यर्थकत्वज्ञापनाय 'सत आगम्य'ति वाक्यमप्युपात्तम्। सम्राट् हे राजन् जनक। ननु श्रुत्यन्तरदर्शनमात्रेणात्राप्येवमिति कुत इति चेन्—औचित्यादेव। उभयस्यान्वयव्यतिरेकाभ्यां हेतुत्वमपि भवतीत्याह लिङ्गमिति। प्रलयकालिकसर्वप्रजाधारवदिति दृष्टान्तः। यः परमात्मा न भवति, न स लयाधारो भवतीति

अस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्। तथा ब्रह्मलोकशब्दश्च समानाधिकरणवृत्त्याऽस्मिन् दहराकाशे प्रयुज्यमानः अस्य ब्रह्मत्वे प्रयोगान्तरनिरपेक्षं पर्याप्तं लिङ्गमित्याह लिङ्गं चेति। निषादस्थपतिन्यायाच्च षष्ठीसमासात् समानाधिकरणसमासो न्याय्यः।

अथवा,—“अहरहर्गच्छन्त्यः” इति न सुषुप्तिविषयं गमनमुच्यते; अपितु अन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपरि अहरहर्गच्छन्त्यः सर्वस्मिन् काले वर्तमानाः तमजानन्त्यः तं न विन्दन्ति—न लभन्ते; यथा हिरण्यनिधिं निहितं तत्स्थानमजानानाः तदुपरि सर्वदा वर्तमाना अपि न लभन्ते, तद्वदित्यर्थः। सेयमेवमन्तरात्मत्वेन स्थितस्य दहराकाशस्योपरि तन्नियमितानां सर्वासां प्रजानामजानतीनां सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति। तथा ह्यन्यत्र परस्य ब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वनियाम्याभिः स्वस्मिन् वर्तमानाभिः प्रजाभिरवेदनं दृष्टम्। यथा अन्तर्यामिब्राह्मणे, (बृ.मा.६.७) “य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति” इति,(बृ.५.७) “अदृष्टो द्रष्टा अश्रुतः श्रोता” इति च। मा भूदन्यत्र दर्शनम्; स्वयमेव त्विदं निधिदृष्टान्तावगतपरमपुरुषार्थभावस्यास्य हृदयस्थस्योपरि तदाधारतया अहरहः सर्वदा सर्वासां प्रजानामजानतीनां गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गम् ॥ १४ ॥

इतश्च दहराकाशः परं ब्रह्म—

---

व्यतिरेकोऽपि विवक्षितः। अयं ब्रह्मलोकशब्दः परमात्मपरः तदर्थस्वरससमासकत्वात्; यो यदर्थस्वरससमासकः स तत्परः; यथा निषादस्थपतिशब्दः। **न्याय्य** इति। भेदगर्भसंबन्धे विशेषस्य विलम्बितप्रतीतिकत्वात्; उत्तरपदश्रुतविभक्तेरेव पूर्वपदे ग्रहणे लाघवाच्च अत्र निषादरूपः स्थपतिर्गृह्यते। **स्थपतिः** राजा शिल्पी च। तद्वत् ब्रह्मरूपो लोकः; आत्मानमेव लोकमुपासीतेति श्रुतेः॥

**गतिशब्दाभ्या**मित्यत्र गतिशब्दस्य चरणक्रियारूपार्थविवक्षया कृत्स्नं सूत्रं व्याख्याय दृष्टान्तावगतपुरुषार्थत्वानुरूपं प्राप्तिः स्थितिरित्यर्थविवक्षयाऽपि व्याख्याति **अथवे**ति। पूर्वम् अहरहरित्यस्य अहोरात्रान्तर्गतनिद्राकालमात्रपरत्वम्; इदानीं पूर्णाहोरात्रपरत्वमेव। विषयवाक्यं तु तदेव। दृष्टमित्यत्र परं स्थितिपरं वाक्यान्तरमुदाहर्तव्यम्। शब्दशक्त्याख्या तु नान्या। **दृष्टं** श्रुतम्। ननु प्रजाशब्दस्य देहविशिष्टजीवपरत्वात् हृदयमेव जीवस्थित्याधारत्वेनोक्तमस्तु, हार्दाकाशो वा; न तु हृदयस्थः परमात्मेत्यत्र बाधकं दर्शयति **निधिदृष्टान्ते**ति। तदिह सर्वप्रजाधारपरमात्माभिप्रेतत्वात् एष कामाधारः परमात्मा, न भूताकाश इत्युक्तं भवति। एवमेकैकं सूत्रमपि अन्तर्वर्तिनः परमात्मत्वनिषेधेनाकाशे तत्स्थापकं योजनीयम् ॥ १४

अनन्तरम्, ‘स वा एष आत्मा हृदी’ति वाक्येन हृदयशब्दनिर्वचनेन हृदाधारकस्य परमात्मत्वमुक्तम्। तेन, ‘पुण्डरीकं वेश्म; दहरोऽस्मिन् अन्तराकाश’ इति हृदाधारकः प्रतीत आकाशः पर इति सिद्धम्। तमेव, ‘अथ य आत्मा’ इति परामृश्य सेतुत्वादिकमुपरि कथ्यते इति नान्तर्वर्तिनः

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः । १ । ३ । १५ ।

"अथ य आत्मा" इति प्रकृतं दहराकाशं निर्दिश्य, "स सेतुर्विधृतिरेषां लोकानामसंभेदाय" इति अस्मिन् जगद्विधरणं श्रूयमाणं दहराकाशस्य परब्रह्मतां गमयति ; जगद्विधरणं हि परस्य ब्रह्मणो महिमा ; (बृ.६.४) "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति, (बृ.५.८) "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिभ्यः । स चायं तस्य परस्य ब्रह्मणो धृत्याख्यो महिमाऽस्मिन् दहराकाशे उपलभ्यते । अतो दहराकाशः परं ब्रह्म ॥ १५ ॥

प्रसिद्धेश्च । १ । ३ । १६ ॥

आकाशशब्दश्च परस्मिन् ब्रह्मणि प्रसिद्धः, (तै.आनं) "को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्", (छा.१.९.) "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिषु । अपहतपाप्मत्वादिगुणसनाथा प्रसिद्धिर्भूताकाशप्रसिद्धेर्बलीयसीत्यभिप्रायः । १६॥

---

परमात्मत्वम्, किंत्वाकाशस्येत्याह **धृतेश्चेति** । **अस्य** परमात्मनो **महिम**भूतायाः धृतेः **अस्मिन्** दहराकाशे श्रुतेरिति सूत्रार्थः । दहराकाशः परमात्मा उक्तधृत्याश्रयत्वादिति । धृत्याश्रयस्य परमात्मत्वे प्रमाणमाह **एष सर्वेश्वर** इत्यादि । **असंभेदः** असांकर्यम् ; परस्परासंघर्षः, तत्तत्स्वभावव्यवस्था च । "सामान्यात्तु" इति सूत्रभाष्ये द्रष्टव्यम् । श्रुतौ विधृतिपदे कर्तरि क्तिच् । सूत्रे तु भावे क्तिनेव । शांकरे धृतेरिति पञ्चमी । **महिम्न** इत्यादिर्धृतिसाधकहेतूपन्यासः । अस्य महिम्न इति समानाधिकरणम् । धृतिरूपमहिम्नः परमात्मनि श्रुत्यन्तरेषूपलब्धेरिति तदुक्तोऽर्थः । अत्र त्वेक एवान्वयः । बृहदारण्यके, 'य एषोऽन्तर्हृदय आकाशः, तस्मिन् शेते सर्वस्य वशी—एष सेतुर्विधरणः' इति आकाशे शयाने धृतिश्रवणात् इहाप्याकाशान्तर्वर्तिनः सेति शंकाशमनाय **महिम्नोस्यास्मिन्** इत्युक्तम् । तत्राकाशशयनिष्ठत्वेनोक्तैव इहाकाशनिष्ठत्वेनोक्तेति आकाश एव परमात्मेति भावः ॥ १५

**प्रसिद्धेश्च** । ननु किमर्थमिदं सूत्रम् । पूर्वपक्षिणैव तदिष्टेः ; प्रागेव, आकाशस्तल्लिङ्गादित्यत्र सिद्धत्वादिति चेत्—आकाशशब्दस्य परमात्मपरत्वे सिंहमाणवकन्यायेन न गौणता, योगसंभवादिति ज्ञापनार्थम् । तेन, 'सकृद्विभातो ह्येष ब्रह्मलोकः' इत्युपरितनवाक्ये **विभात**पदेनाकाशशब्दावयवार्थाविष्करणात् योगार्थग्राहकप्रमाणबलादपि दहराकाशः परमात्मेति सूत्रविवक्षितमिति ध्येयम् । अपहतपाप्मत्वादिगुणश्रवणात् रूढ्यर्थे त्यक्ते अवयवार्थे चादृते जीवपरत्वशंका नोन्मिषति, तत्र प्रसिद्ध्यभावादिति चात्राभिप्रेतं भवति । एतदर्थमेव जीवपरत्वशंकागर्भसूत्रतः समनन्तरपूर्वमस्य हेतोः प्रस्तावः ॥

दहराकाशो जीव इति शंकितुः किं तदन्तर्वर्ति परं ब्रह्मेति विवक्षितम्, उत जीवगुणजातमेवेति । नाद्यः ; पूर्वमाकाशशब्देन प्रस्तुते कामाधार एव एष आत्मेत्यादिसर्वसमन्वयस्य कथितत्वात् तदयोगात् ।

एवं तावत् दहराकाशस्य भूताकाशत्वं प्रतिक्षिप्तम् । अथेदानीं दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमते—

इतरपरामर्शात् स इति चेन्नासंभवात् । १ । ३ । १७ ॥

यदुक्तं—वाक्यशेषवशात् दहराकाशः परं ब्रह्मेति—तदयुक्तम्, वाक्यशेषे परस्मादितरस्य जीवस्यैव साक्षात्परामर्शात्, "अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, एष आत्मेति होवाच, एतदमृतमभयमेतद्ब्रह्म" इति। यद्यपि, 'दहरोऽस्मिन्नन्तराकाशः' इति हृदयपुण्डरीकमध्यवर्तितयोपदिष्टस्याकाशस्योपमानोपमेयभावाद्यसंभवाद् भूताकाशत्वं न संभवति, तथापि वाक्यशेषवशात् प्रत्यगात्मत्वं युक्तमाश्रयितुम्। आकाशशब्दोऽपि प्रकाशादियोगाज्जीव एव वर्तिष्यत इति चेत्—अत्रोत्तरं नासंभवात् इति। नायं जीवः; न ह्यपहतपाप्मत्वादयो गुणा जीवे संभवन्ति ॥ १७ ॥

उत्तराच्चेत् आविर्भूतस्वरूपस्तु । १ । ३ । १८ ॥

उत्तरात् प्रजापतिवाक्यात् जीवस्यैवापहतपाप्मत्वादिगुणयोगो निश्चीयत इति चेत्—

एतदुक्तं भवति—प्रजापतिवाक्यं जीवपरमेव। तथा हि, (छा.८.७) "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः, सोऽन्वेष्टव्यः; स विजिज्ञासितव्यः। स सर्वांश्च लोकान् आप्नोति सर्वांश्च कामान्, यस्तमात्मानमनुविद्य विजानाति" इति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्य अन्वेष्टव्यात्मस्वरूपजिज्ञासया प्रजापतिमुपसेदुषे मघवते प्रजापतिः जागरितस्वप्नसुषुप्त्यवस्थं जीवात्मानं सशरीरं क्रमेण शुश्रूषुयोग्यतापरीचिक्षिषयोपदिश्य, तत्रतत्र भोग्यमपश्यते परिशुद्धात्मस्वरूपोपदेशयोग्याय तस्मै मघवते, (८.१२) "मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना; तदस्यामृतस्याशरीरस्याऽऽत्मनोऽधिष्ठानम्" इति शरीरस्याधिष्ठानतामात्मनश्चाधिष्ठातृताम्, अशरीरस्य च तस्यामृतत्वस्वरूपतां चोक्त्वा, "न ह वै सशरीरस्य सतः प्रियप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति कर्मारब्धशरीरयोगिनस्तदनुगुण-

---

नान्य इत्याह न ह्यपहतेति। न हि हृदयवर्तिनि बद्धे अपहतपाप्मत्वादि संभवति। उत्तरसूत्रगतशंकानुरोधेनात्रापहतपाप्मत्वादिगुणासंभवमात्रविवक्षा कृता; इतरपरामर्शः कथमुपपद्यत इति चेत्—उपरि सूत्रकृदेव वक्ष्यति ॥ १७.

इति चेदित्यन्तस्य एतदित्यादिना इति चेदिति इत्यन्तेन विवरणम्। मघवते। विरोचनस्याप्युपसन्नत्वेऽपि जागरितावस्थोपदेशत एव तृप्तनया तस्य निवृत्तत्वात् तदनुक्तिः। मुक्तस्यापि 'जक्षत् क्रीडन् रममाणः' इति अत्रैव शरीरसद्भावस्य वक्ष्यमाणत्वात् कर्मारब्धेति विशेषितम्। जक्षत् हसन् भक्षयन् वा। रममाणः। भगवदनुभवकैङ्कर्यव्याप्त्येति शेष.। परमपदे ज्ञात्ययोगात् अवतरणदशाया-

सुखदुःखभागित्वरूपानर्थं तद्विमोक्षे च तदभावमभिधाय, "एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति जीवात्मनः स्वरूपमेव शरीरवियुक्तमुपदिदेश। "स उत्तमः पुरुषः। स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्" इति प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वम्, निवृत्ततिरोधानस्य परं ज्योतिरुपसंपन्नस्यास्य प्रत्यगात्मनो ब्रह्मलोके यथेष्टभोगावाप्तिम्, प्रियाप्रियाविपुक्त-कर्मनिमित्तशरीराद्यपुरुषार्थाननुसन्धानं चाभिधाय, "स यथा प्रयोग्यः आचरणे युक्तः, एवमस्मिन् शरीरे प्राणो युक्तः" इति यथोक्तस्वरूपस्यैव संसारदशायां कर्मतन्त्वं शरीरयोगं युग्यशकटयोगदृष्टान्तेनाभिधाय, "अथ यत्रैतत् आकाशमनु विषण्णं चक्षुः स चाक्षुषः पुरुषः, दर्शनाय चक्षुः। अथ यो वेद, इदं जिघ्राणीति, स आत्मा, गन्धाय घ्राणम्। अथ यो वेद इदमभिव्याहराणीति, स आत्मा, अभिव्याहाराय वाक्। अथ यो वेदेदं शृणवानीति, स आत्मा; श्रवणाय श्रोत्रम्। अथ यो वेदेदं मन्वानीति, स आत्मा; मनोऽस्य दिव्यं चक्षुः" इति चक्षुरादीनां करणत्वं रूपादीनां ज्ञेयत्वम्, अस्य च ज्ञातृत्वं प्रदर्श्य, तत एव शरीरेन्द्रियेभ्योऽस्य व्यतिरेकमुपपाद्य, "स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके" इति तस्यैव विधूत-कर्मनिमित्तशरीरेन्द्रियस्य मनश्शब्दाभिहितेन दिव्येन स्वाभाविकेन ज्ञानेन सर्वकामानुभवमुक्त्वा, "तं वा एतं देवा आत्मानमुपासते। तस्मात् तेषां सर्वे च लोका आत्ताः, सर्वे च कामाः" इति एवंविधमात्मानं ज्ञानिनो जानन्तीत्यभिधाय, "सर्वांश्च लोकान् आप्नोति सर्वांश्च कामान्, यस्तमात्मानमनुविद्य विजानाति—इति ह प्रजापतिरुवाच" इति एवंविधमात्मानं विदुषः सर्वलोकसर्वकामावाप्त्युपलक्षितं ब्रह्मानुभवं फलमभिधायोपसंहृतम्। अतस्तत्रापहतपाप्मत्वादिगुणको ज्ञातव्यतया प्रक्रान्तो जीव एवेत्यवगतम्। अतो जीवस्यापहतपाप्मत्वादयः संभवन्ति। अतो दहरवाक्यशेषे श्रूयमाणस्य जीवस्यापहतपाप्मत्वादिगुणसंभवात्स एव दहराकाश इति निश्चीयते—इति चेत्-इति।

तत्राह—आविर्भूतस्वरूपस्तु इति। पूर्वमनृततिरोहितापहतपाप्मत्वादिगुणकस्वस्वरूपः पश्चाद्विमुक्तकर्मबन्धः शरीरात् समुत्थितः परं ज्योतिरुपसंपन्नः आविर्भूतस्वरूपः सन् अपहतपाप्मत्वादिगुणविशिष्टस्तत्र प्रजापतिवाक्येऽभिधीयते; दहरवाक्ये तु अतिरोहितस्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते। आविर्भूतस्वरूपस्यापि जीवस्यासंभावनीयाः

---

मन्वैषमन्वप। स्त्रीभिरित्यादेः नोपजनमित्युत्तरत्रान्वयोऽपि स्यात्। **उपजनम्** कर्मकृतजननयुक्तम्; बन्धुजनसमीपस्थमिति वा; जनजन्यमिति वा। **प्रयोग्यः** युग्यः अश्वादिः। **आचरणे** चरणसाधने शकटे। **प्राणः** प्राणभृत्। **यत्र** यस्मिन् जीवे। **आकाशमनु**-आलोकरूपसहकारिकारणमनुसृत्य। **चाक्षुषः** चक्षुष्करणकः। **दिव्यम्** उत्कृष्टम्। **अतिरोहितस्वभावेति**। हृद्गतत्वे सत्येव, 'अभिचाकशीती'तिवत्

सेतुत्वसर्वलोकविधरणत्वादयः सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोर्नियन्तृत्वं दहराकाशस्य परब्रह्मतां साधयन्ति। सेतुत्वसर्वलोकविधरणत्वादय आविर्भूतस्वरूपस्यापि न संभवन्तीति (शारी.४.४.१७) "जगद्व्यापारवर्जम्" इत्यत्रोपपादयिष्यामः ॥ १८ ॥

यद्येवम्, दहरवाक्ये (छा.८.३.४) "अथ य एष संप्रसादः" इत्यादिना जीवप्रस्तावः किमर्थः इति चेत्—तत्राह—

अन्यार्थश्च परामर्शः ।१।३।१९॥

दहराकाशस्यैव अपहतपाप्मत्वजगद्विधरणत्वादिवत्, मुक्तस्य तदुपसंपत्त्या अपहतपाप्मत्वादिकल्याणगुणविशिष्टस्वाभाविकरूपप्राप्तिकथनेन, तद्धेतुत्वरूपं परमपुरुषासाधारणं गुणमुपदेष्टुं प्रजापतिवाक्योक्तस्य जीवस्यात्र परामर्शः। प्रजापतिवाक्ये च मुक्तात्मस्वरूपयाथात्म्यविज्ञानं दहरविद्योपयोगितयोक्तम्; ब्रह्मप्रेप्सोर्हि जीवात्मनःस्वरूपं च ज्ञातव्यमेव; स्वयमपि कल्याणगुण एव सन् अनवधिकातिशयासंख्येयकल्याणगुणगणं परं ब्रह्मानुभविष्यतीति ब्रह्मोपासनफलान्तर्गतत्वात् स्वरूपयाथात्म्यविज्ञानस्य। (छा-१२.६) "सर्वांश्च लोकान् आप्नोति सर्वांश्च कामान्", (१२.३) "स तत्र पर्येति जक्षत् क्रीडन्" इत्यादिकं प्रजापतिवाक्ये कीर्त्यमानं फलमपि दहरविद्याफलमेव ॥ १९ ॥

अल्पश्रुतेरिति चेत्—तदुक्तम् ।१।३।२०॥

---

आकाशत्वश्रवणात् सर्वाधारत्वादिकथनाच्चातिरोहितत्वमवगम्यते। सेतुत्वेति। सेतुर्विधृतिरिति वाक्ये सेतुशब्दविवरणं विधृतिरिति। अतः सेतुत्वरूपविधरणत्वेत्यर्थः। अमृतस्यैष सेतुरित्यत्रैवार्थान्तरविवक्षा वा। आदिपदेन अन्धत्वविद्धत्वोपतापित्वानां निवर्तकत्वं नित्यप्रकाशाविष्कारकत्वमित्युक्तधर्मग्रहणम्। निर्वचनेति—सत् ति यम् इति विभज्य सत् चेतनम्, ति अचेतनम्, तदुभययन्तृ यम् इति कथनात्। जीवे भविष्यद्दशैवात्रापि दर्शिताऽस्तु इत्यत्राह सेतुत्वेति ॥ १८.

उत्तरसूत्रमवतारयति यद्येवमिति। ननु प्रधानतयैकस्य पदार्थस्य निरूपणे मध्ये तदुपयोगितया इतरप्रस्तावस्य शतशो दर्शनात्, 'कथमितरपरामर्शः' इति कोऽयमाक्षेपः? किमर्थं वा पृथगिदं सूत्रमिति चेत्—उच्यते-सेतुत्वाद्यन्वययोग्यस्य जीवातिरिक्तस्यात्मपदार्थत्वे, अत्र, 'अथ य एष संप्रसादः इति यच्छब्देन जीवं निर्दिश्य, 'एष आत्मेति होवाच एतदमृत'मिति एतच्छब्देन तत्प्रति संबन्धिना जीवैक्यमुच्यमानं दुर्निर्वहमिति शंकितुराशयः। अत एव परामर्शपदम्। शंकान्तरपरिहारपरतयापि सूत्रं भाष्ये व्याख्यास्यते। तच्च—यदि प्रजापतिवाक्यं दहरविद्याङ्गभूतजीवात्मोपासनविधायकम्, तर्हि कथं प्रजापतिवाक्ये तदुपासनत एव परज्योतिःप्राप्तिरूपफलोपन्यास इत्येवंरूपम्। उपदेष्टुमिति। अथ यएष इति वाक्यस्य, एष संप्रसादः परं ज्योतिरुपसंपद्य स्वेन रूपेण योऽभिनिष्पद्यते—यद्रूपः अपहतपाप्मत्वादिप्रागुक्ताकारविशिष्टयद्भावमापन्नः भवति, एष परमात्मेति रीत्याऽर्थो भाव्यः। य एष इत्येकीकरणे तु, एषआत्मेत्यत्र एतच्छब्दः एतदन्तर्याम्यर्थक इति भावः। सूत्रस्यार्थान्तरविवक्षयाऽऽह प्रजापतिवाक्ये चेति॥ १९.

" दहरोऽस्मिन् " इत्यल्पपरिमाणश्रुतिः आराग्रोपमितस्य जीवस्यैवोपपद्यते, न तु सर्वस्माज्ज्यायसो ब्रह्मण इति चेत्—तत्र यत् उत्तरं वक्तव्यम्, तत् पूर्वमेवोक्तम्, (शारी.१.२.७) " निचाय्यत्वादेवम् " इत्यनेन। अतो दहराकाशः अनाघ्राताविद्याद्यशेषदोषगन्धः स्वाभाविकनिरतिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यपरिमितोदारगुणसागरः पुरुषोत्तम एव। प्रजापतिवाक्यनिर्दिष्टस्तु, (८.१०.२) " घ्नन्ति त्वेवैनं विच्छादयन्ति " इत्येवमादिभिरवगतकर्मनिमित्तदेहपरिग्रहः पश्चात् परं ज्योतिरुपसंपद्य आविर्भूतापहतपाप्मत्वादिगुणकस्वस्वरूप इति न [स] दहराकाशः ॥ २०

इतश्चैतदेवम्—

अनुकृतेस्तस्य च । १ । ३ । २१ ॥

तस्य दहराकाशस्य परस्य ब्रह्मणः अनुकारात् अयमपहतपाप्मत्वादिगुणको विमुक्तबन्धः प्रत्यगात्मा; न दहराकाशः। तदनुकारः—तत्साम्यम्। तथा हि प्रत्यगात्मनो विमुक्तस्य परब्रह्मानुकारः श्रूयते, (.३.१.३) " यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति " इति। अतोऽनुकर्ता प्रजापतिवाक्यनिर्दिष्टः, अनुकार्यं ब्रह्म दहराकाशः ॥ २१ ॥

अपि स्मर्यते । १ । ३ । २२ ॥

संसारिणोऽपि मुक्तावस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारः स्मर्यते,(गी.१४.२)

---

प्रथमश्रुतदहरत्वानुसारेण जीव एव दहराकाश इति स्वीकृत्योत्तरं सर्वमन्यथा नेयमिति शंकते **अल्पेति**। **तदुक्तमिति**। ननु उक्तस्य पुनर्वचनं किमर्थमिति चेत्—अधिकाशंकापरिहारार्थम्। दहरत्वमत्रोपक्रमे श्रुतम्, तथा अन्तर्वर्तिन एवान्वेष्टव्यत्वादाकाशस्यानुपास्यत्वात् दहरत्वं नोपासनार्थमित्यधिकाशंका। **उत्तरेभ्य** इति बहुवचनेन बहुधर्मान्वयस्य कथिततया बह्वर्थमेकमुपक्रमस्थमप्यन्यथा कार्यमिति परिहारः। ननु प्रजापतिवाक्यमपि दहरविद्येव परमात्मपरं भवतु; केवलमाख्यायिकामुखेनोक्तार्थविशदीकरणायैव तत् प्रवृत्तमिति शंकां परिहरति **प्रजापतिवाक्येति** ॥ २०.

ननु किमित्येवं जीवपरभेदस्वीकारेण कलहः? अथ य एष संप्रसादः—एष आत्मेति होवाच' इति उभयैक्यस्य कण्ठोक्तत्वात् स्वस्वरूपापत्तौ दहरजीवः पर एवेति स्यादिति शंकां बहुश्रुतिस्मृतिविरोधप्रदर्शनेन परिहर्तुमुपरि सूत्रद्वयम्। तदवतारयति **इतश्चेति**। मुखं पद्ममनुकरोतीत्यादिप्रयोगात् **अनुकरोति** इत्यस्य समो भवतीत्यर्थ इति **अनुकारः साम्य**मित्युक्तमिह। कृञर्थस्यापि रक्षणाय, 'जक्षन् क्रीडन्' इत्युक्तजक्षणादिक्रियापरं वाक्यं दहरविद्यास्थमेव दर्शितं **सारे**। उत्तरसूत्रस्य स्मृतिविषयकत्वात् अस्य सर्वश्रुतिविषयकत्वं युक्तमिति मुण्डकग्रहणमिह। मुक्तस्य तत्साम्यापत्तिपूर्वकतदभिप्रायानुविधायिकार्यवत्त्वस्य प्रकृताप्रकृतसर्वसमधिगतत्वाच्च तदैक्यसंभावनागन्ध इत्यर्थः ॥ २१.

**अपि स्मर्यत** इत्येतत्सूत्रानुसारात् **संसारिणोऽपी**त्यत्रत्यः **अपिशब्दः, स्मर्यते** इत्यत्रान्वेति।

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इति ॥

केचित्—'अनुकृतेस्तस्य च', 'अपि स्मर्यते' इति सूत्रद्वयमधिकरणान्तरम्, (मुं.२.२.२०) "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इत्यस्याः श्रुतेः परब्रह्मपरत्वनिर्णयाय प्रवृत्तं वदन्ति। तत्तु, (शारी.१.२.५) "अदृश्यत्वादिगुणको धर्मोक्तेः", (शारी.१.३.१) द्युभ्वाद्यायतनं स्वशब्दात्, इत्यधिकरणद्वयेन तस्य प्रकरणस्य परब्रह्मविषयत्वप्रतिपादनात्, (शारी.१.१.१०)ज्योतिश्चरणाभिधानात्" इत्यादिषु परस्य ब्रह्मणो भारूपत्वावगतेश्च पूर्वपक्षानुत्थानादयुक्तम्; सूत्राक्षरवैरूप्यं च (स्याच्च) ॥ ११ ॥ २२ ॥

इति दहराधिकरणम् ॥ ५ ॥

प्रमिताधिकरणम् १.३.६. (कठवल्ली)

## शब्दादेव प्रमितः । १ । ३ । २३ ॥

कठवल्लीषु श्रूयते, (२.४.१२) "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते। एतद्वै तत्", (.२.४.१३) "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः। एतद्वै तत्", (२.६-१७) अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः। तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण। तं विद्याच्छुक्रममृतम्" इति। तत्र संदिह्यते—किमयमङ्गुष्ठमात्रप्रमितः प्रत्यगात्मा, उत परमात्मेति। किं युक्तम्? प्रत्यगात्मेति। कुतः? जीवस्यान्यत्राङ्गुष्ठमात्रत्वश्रुतेः, (श्वे.५.८.७)

---

पूर्वसूत्रभाष्ये विमुक्तस्येति श्रवणात् इहापि **संसारिणो विमुक्तावस्थाया**मिति पाठः स्याद्वा ॥ २२.

शांकरयोजनां निरस्यति **केचि**दिति। 'न तत्र सूर्य' इति मन्त्रस्य द्युभ्वाद्यधिकरणविचारितवाक्यघटकत्वात् तदधिकरणमपि गृहीतम्। पूर्वपक्षस्य कथञ्चिदुत्थापनेऽपि तत्परिहारकांशस्येषदपि सूत्रादलाभात् तदयुक्तमित्याह **सूत्राक्षरे**ति। **वैरूप्या**दित्यनेन सूर्यादेस्तदनुकारित्वात् तदपि ज्योतिरेव, न तु परमात्मेति पूर्वपक्ष एव सूत्रादुच्येतापीति ज्ञाप्यते। अनुमानादिति नास्ति, किंतु अनुकृतेरिति। ज्योतिरादिपदमपि न। अतो न तन्मन्त्रप्रत्यभिज्ञा। अधिकरणारम्भसूत्रे च प्रतिज्ञाखण्डेन भाव्यम्; चकारोऽपि न घटते। तस्येति च पूर्वप्रकृतपरम्। एतदपेक्षया ज्योतिर्दर्शनादिति सूत्रे एतद्विचारो युज्यते। अस्य मन्त्रस्य कठोपनिषदि श्वेताश्वतरे च सत्त्वात् किमिति मुण्डके परं विशिष्य शंकोत्थानम्। अन्यत्र निर्णयस्य जातत्वे स एवार्थ इहापि भविष्यतीत्यादि विमृश्यम् ॥ १. ३. ५.

उपासनार्थमल्पपरिमाणस्य परमात्मनि भावनेऽपि अङ्गुष्ठमात्रत्वं प्रसिद्धिबलात् जीवात्मन्येव युक्तमिति शंकया प्रमिताधिकरणारम्भः। कठवल्लीगतस्याङ्गुष्ठमात्रमन्त्रस्य परमात्मपरत्वेष्टौ जीवमात्रे तत्प्रसिद्धिभङ्गः स्यादिति मन्त्रत्रयमपि विचारविषयीकृतम्। **अङ्गुष्ठमात्रः प्रमित** इति पाठो वा। अङ्गुष्ठमात्रश्चासौ प्रमितश्चेति कर्मधारयो वा। अङ्गुष्ठमात्रपरिमित इति **शांकरम्**। अङ्गुष्ठमात्रहृदयप्रमित इत्यर्थो

**प्राणाधिपः संचरति स्वकर्मभिः। अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः" इति। न चान्यत्रोपासनार्थतयाऽपि परमात्मनोऽङ्गुष्ठमात्रत्वं श्रूयते। एवं निश्चिते जीवत्वे ईशानत्वं शरीरेन्द्रियभोग्यभोगोपकरणापेक्षयाऽपि भविष्यति—**

---

वा। जीवे प्रसिद्धिं श्वेताश्वतरवाक्ये दर्शयति **प्राणाधिप** इति। एवं तत्र प्रसिद्धिं भूतभव्येशानत्वं च दृष्ट्वा जीवः परो वेति संदिहानो विचारे प्रवर्तत इति भावः। श्वेताश्वतरे पूर्वं परमात्मानं प्रतिपाद्य जीवात्मनिरूपणार्थप्रवृत्तं मन्त्रजातमेवम्—गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता। स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः। अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहङ्कारसमन्वितो यः। बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः' इत्यादि। अत इदमल्पपरिमाणं जीवस्यैवेति भावः। ननूपासनार्थमल्पपरिमाणं परमात्मनः प्रागुक्तमित्यत्राह **न चेति**। सत्यं दहरपरिमाणं तथा, न त्वङ्गुष्ठमात्रत्वम्; उपासनप्रकरणे एतददर्शनादित्यर्थः। ननु श्वेताश्वतर एव परमात्मनीदं श्रूयते. 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः। हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ती'ति; तत्र पूर्वं पश्चाच्च पुरुषसूक्तप्रत्यभिज्ञानेन परमात्मपरत्वनिर्णयादिति चेत्—अत्र पूर्वार्धं कठवल्लीतृतीयमन्त्राविशिष्टम्। उत्तरार्धे च **अभिक्लृप्तः** इति भूतकालनिर्देशात्, यो जीवात्मा ज्ञानयोगेन गृहीतः, **एतद्विदुः** एतज्जीवप्रकारकपरमात्मवेदनं ये लभन्ते, अमृतास्ते भवन्तीत्यर्थो वर्णनीयः। एवम्, "अङ्गुष्ठमात्रः पुरुषः अङ्गुष्ठं च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्" इति तैत्तिरीयमन्त्रोऽपि न परमात्मनोऽङ्गुष्ठमात्रत्वसाधकः; चकारश्रवणात् जीवः परमात्मा च प्रीणातीत्यर्थवर्णनसंभवात्। अङ्गुष्ठं च समाश्रित इत्यस्याङ्गुष्ठमात्रजीवाश्रित इत्यर्थस्य युक्तत्वात्। पूर्वोदाहृतश्वेताश्वतरमन्त्रयोस्तु गुणान्वयत्वादिरेकैकोऽपि धर्मो जीवैकगतः प्रतीत इति अङ्गुष्ठमात्रत्वमपि जीवासाधारणमिति ज्ञायते॥ कथं तस्याङ्गुष्ठमात्रत्वम्, आराग्रमात्र इति तत्रैवाणुत्वकथनात्; तत्रानन्तरेण वालाग्रेत्यादिनाऽत्यन्ताणुत्वकथनाच्च। यदि हृदयपरिमितत्वमङ्गुष्ठमात्रत्वम्, तद् दहराकाशेऽपि समानमिति चेत्—न तत्र हृदयमितत्वं विवक्षितम्, सर्वजन्तुहृदयस्याङ्गुष्ठमात्रत्वाभावात्। तदत्र, 'अथ सत्यवतःकायात् पाशबद्धं वशं गतम्। अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इति महाभारते (व. १५.) यमनिष्कृष्यमाणस्य पुरुषस्याङ्गुष्ठमात्रत्वकथनात् पाशबद्धस्य परमात्मवशयमवश्यस्य तत्कृष्यमाणस्य सूक्ष्मदेहप्राणेन्द्रियसंघातरूपस्याङ्गुष्ठमात्रत्वमवसीयते। उत्क्रमणकाले च तेजोंशप्राधान्येन प्रयोगस्य, "प्राणस्तेजसि", "प्राणस्तेजसा युक्तः" इत्यादौ दर्शनात्, 'ज्योतिरिवाधूमकः' इति चोपपद्यते। अथवाऽत्र श्वेताश्वतरमन्त्रे बुद्धेर्गुणेन परिमाणेनाङ्गुष्ठमात्रः, आत्मगुणेन च आराग्रमात्र इति विभजनात् अङ्गुष्ठमात्रशब्दः अङ्गुष्ठपरिमाणबुद्ध्युपकरणकजीवपरः। परमात्मनश्चौपाधिकमुपास्यं परिमाणं हृदयपुण्डरीकसंबन्धि; न बुद्धिसंबन्धि। एवमङ्गुष्ठपरिमाणार्हतया जीव एवाङ्गुष्ठमात्रपदमुख्यार्थ इति, शब्दादस्मात् जीवपरा एवेमे मन्त्राः। भूतभव्येशान इति च न परमात्मासाधारणः शब्दः, तन्नियाम्यस्य चतुर्मुखादेरपि तदीशानत्वसत्त्वात्, अतो लिङ्गमिदं जीवत्वनिषेधाय स्यात्। श्रुत्या च लिङ्गं बाध्यम्। अतो जीवमेव

इति प्राप्ते ब्रूमः—शब्दादेव प्रमितः । अङ्गुष्ठ[मात्र]प्रमितः परमात्मा ; कुतः ? "ईशानो भूतभव्यस्य" इति शब्दादेव ; न च भूतभव्यस्य सर्वस्येशितृत्वं कर्मपरवशस्य जीवस्योपपद्यते ॥ २३ ॥

कथं तर्हि परमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्राह—

**हृद्यपेक्षया तु मनुष्याधिकारत्वात् ।१।३।२४॥**

परमात्मनः उपासनार्थमुपासकहृदये वर्तमानत्वात्, उपासकहृदयस्याङ्गुष्ठप्रमाणत्वात् तदपेक्षयेदमङ्गुष्ठप्रमितत्वमुपपद्यते । जीवस्याप्यङ्गुष्ठप्रमितत्वं हृदयान्तर्वर्तित्वात् तदपेक्षमेव ; तस्याऽऽराग्रमात्रत्वश्रुतेः । मनुष्याणामेवोपासकत्वसंभावनया शास्त्रस्य मनुष्याधिकारत्वात् मनुष्यहृदयस्य च तत्तदङ्गुष्ठप्रमितत्वात् खरतुरगभुजगादीनामनङ्गुष्ठप्रमितत्वेऽपि न कश्चिद्दोषः ।

स्थितं तावदुत्तरत्र समापयिष्यते ॥ २४ ॥

२४ एतद्गर्भे देवताधिकरणम् १.३.७

**तदुपर्यपि बादरायणः संभवात् ॥ १ । ३ । २५ ॥**

---

गृहीत्वा कतिपयभूतभव्यदेहादिनिरूपितेशानत्वपरतया तत् योज्यमिति पूर्वपक्ष्याशयः । सिद्धान्त्याशयस्तु—रूढस्य, यौगिकस्य, पदसंघातरूपस्य वा, श्रवणमात्रेण विवक्षितार्थप्रतिपादनार्हस्य सर्वस्य श्रुतिरूपशब्दत्वात्, 'ईशानो भूतभव्यस्ये'त्ययं स्वरसतो निरुपाधिकसर्वभूतभव्येशानत्वरूपपरमात्मासाधारणधर्मबोधी श्रुतिरूपशब्द एव ; न तु त्वदुक्तस्तथेति शब्दादेव मन्त्रस्य परमात्मपरत्वम् । सूक्ष्मदेहस्याङ्गुष्ठमात्रत्वे च न किञ्चित् प्रमाणम् । भारतवाक्ये अङ्गुष्ठपरिमाणहृदयनिविष्टं जीवं कायादुच्चकर्ष सूक्ष्मदेहे पाशबन्धेनेत्यर्थवर्णनसंभवात् । अङ्गुष्ठमात्रप्रयोगस्थले 'मध्य आत्मनि', 'हृदये संनिविष्टः' इति हृदयनिविष्टत्वनिबन्धनमङ्गुष्ठमात्रत्वमित्यावेदनात् न बुद्ध्यवच्छेदकृतं तत् ; किंतु हृदयावच्छेदप्रयुक्तमेव । तच्च जीवात् परमात्मन्येवोपपन्नतरम् ; दहर इत्यादिवाक्यावगतञ्च । अङ्गुष्ठस्येव मात्रा परिमाणं यस्य हृदयनिविष्टवेषेण, सोऽङ्गुष्ठमात्र इत्युभयसाधारणं वा स्यात् । एवञ्चान्यश्वेताश्वतरतैत्तिरीयादिमन्त्रेष्वर्थः क्लेशं विनैव वाच्य इति ॥

सर्वत्र प्राणिदेहे हृदयस्याङ्गुष्ठमात्रत्वाभावात् कथं हृदयमादाय परमात्मपरतया तच्छब्दनिर्वाह इति शङ्कते **कथं तर्हीति** । **हृद्यपेक्षया** हृदये वर्तमानत्वमुपजीव्य । हृदीति सप्तमीनिर्देशः, 'हृदि ह्ययमात्मा', 'प्राणेषु हृद्यन्तर्ज्योतिः' इति श्रुतिसूचनेन जीवेऽपीदमेवाङ्गुष्ठमात्रत्वं सुवचमिति ज्ञापनाय । तुशब्दः प्रकारान्तरेणाङ्गुष्ठमात्रत्वव्यवच्छेदकः । **खरतुरगादीनामिति** । हृदयस्येति शेषः । **अनङ्गुष्ठप्रमितत्वेपीति** । अङ्गुष्ठपरिमाणस्यैकरूपत्वाभावात् हृदयस्यैकाङ्गुष्ठमादाय परिमाणवर्णनायोगात् तत्तदङ्गुष्ठमादाय तत्तद्धृदयपरिमाणं वाच्यम्—न च खरादीनामङ्गुष्ठोऽस्ति, यन्मात्रता तत्र वर्ण्येत । अङ्गुष्ठपदेन अरत्न्यादिपदेनेव नियतपरिमाणविशेषग्रहणेऽपि खरादिहृदयमधिकपरिमाणं तन्मात्रं न भवतीति भावः । **स्थितं तावदुत्तरत्र समापयिष्यते** इति । प्रमिताधिकरणनिरूपणीयमेतावति संप्रति स्थाप्यमानं प्रासङ्गिकाधिकरणत्रयसमाप्तौ बुद्धिस्थं भवत् पूर्णनिरूपणविषयीभविष्यतीत्यर्थः ॥

परस्य ब्रह्मणोऽङ्गुष्ठप्रमितत्वोपपत्तये मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्तम्। तत्प्रसङ्गेनेदमिदानीं ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्ति नास्तीति विचार्यते। किं तावद्युक्तम्? नास्ति देवादीनामधिकार इति। कुतः? सामर्थ्याभावात्। न ह्यशरीराणां देवादीनां विवेकविमोकादिसाधनसप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमस्ति। न च देवादीनां सशरीरत्वे प्रमाणमुपलभामहे। यद्यपि परिनिष्पन्नेऽपि वस्तुनि व्युत्पत्तिसंभावनया वेदान्तवाक्यानि परे ब्रह्मणि प्रमाणभावमनुभवन्ति—तथापि देवादीनां विग्रहवत्त्वप्रतिपादनपरं न किंचिदपि वाक्यमुपलभ्यते। मन्त्रार्थवादास्तु कर्मविधिशेषतयाऽन्यपरत्वात् न देवादिविग्रहसाधने प्रभवन्ति। कर्मविधयश्च स्वापेक्षितोद्देश्यकारकत्वातिरेकि देवतागतं किमपि न साधयन्ति।

---

तत्प्रसङ्गेनेति। स्पष्टान्यलिङ्गकवाक्यान्यपि यानि ब्रह्मपरत्वेन स्थाप्यानि, तादृशवाक्यविचारात्मनि पादे अधिकारविचारस्य हि न मुख्या संगतिरस्ति। न च प्रसंगसंभवेऽपि स्वस्थाने निरूपणप्रतीक्षणं युक्तमिति वाच्यम्—स्थानस्यान्यस्याभावात्। तृतीयचतुर्थे यतिविधुरादीनामधिकारविचारात् तदेव स्थानमिति चेन्न-तत्राधिकारविचाराभावात्। यत्यादिक्रियमाणाश्रमधर्मस्य ब्रह्मविद्याङ्गत्वसंभवासंभवविचारस्यैव तत्र करणात्। संगतेः प्रसंगमात्रत्वेऽपि अत्राध्याये एतद्विचारो युज्यते। देवतानां सिद्धौ, काम्यकर्माराध्यत्वकारणत्वानुग्राहकत्वादेः नानासृष्टिप्रलयहेतुत्व-अपौरुषेयवेदप्रवर्तकत्व-शूद्रादियथार्हानुग्राहकत्वादेश्च सिद्ध्याऽतिशयलाभात्। मनुष्येति पदप्रयोगात् जैमिनिसंमतो देवानामनधिकारो भवत्संमत इति, जैमिन्यसंमतः शूद्राधिकारो भवत्संमत इति च ज्ञायत इति प्रश्ने, बादरायणोऽधिकरणत्रयं प्रवर्तयति तत्खण्डनाय। तत्र देवताविषयमधिकरणद्वयम्, शूद्रविषयमन्त्यम्॥ विवेकविमोकादि लघुसिद्धान्ते। प्रतिपादनपरम्—आपातप्रतीतौ सत्यामपि तद्बोधनतात्पर्यकम्॥

वेदो द्विविधः विधिः, अविधिश्चेति। अविधिर्द्विविधः मन्त्रोऽर्थवादश्चेति। अविधित एव प्रायेण विग्रहादिसिद्धिः सिद्धान्त्यभिमतेति तन्निरासं प्रथमं करोति मन्त्रेति। प्रयोगसमवेतार्थस्मारकाः मन्त्राः। अनुष्ठानसंबन्धी अर्थो यद्यपि देवता-तथापि तस्याः विधिवाक्यावगतायाः स्मरणमेवैतत्कार्यम्; न त्वपूर्वविग्रहादिबोधनम्। अर्थवादाश्च विधिवाक्यावगतानां कर्मणां प्राशस्त्यमेव लक्षयन्तो न वाच्यार्थतात्पर्यका इति। किमपीति। देवतोद्देश्यकद्रव्यत्यागस्यैव यागरूपतया उद्देश्यत्वांशाभावे विध्यसिद्धिरिति तावन्मात्रविवक्षा; देवता किं किञ्चिदर्थभूता उत शब्द एव, अर्थरूपत्वेऽपि चेतना अचेतना वा, चेतनत्वेपि सविग्रहा अन्यादृशी वेत्यादिकमनपेक्षितमिति न तत्र विधेर्व्यापार इति भावः। देवतात्वं नाम त्यज्यमानद्रव्योद्देश्यत्वमात्रमिति ज्ञापनायात्र देवतापदप्रयोगः। इदञ्च देवपितृसुरादिसाधारणं यथाविधि। मनुष्याधिकारत्वादिति सौत्रपदे अधिकारशब्देन सामर्थ्यं प्राधान्येन विवक्षितम्; खरतुरगादीनामपि सुखार्थित्वसत्त्वेन सार्वकालिकसुखार्थित्वस्यापि सर्वात्मना तेषु प्रतिषेधायोगेन तद्व्यावृत्ताधिकारस्यैव वक्तव्यत्वात्। अपरिच्छिन्नब्रह्मोपासनसामर्थ्यविरहेण हृदवच्छिन्नतदुपासनं विधीयते सामर्थ्यसंपत्तये इति सामर्थ्यस्यैव प्रकृतत्वाच्च। अतः देवादिषु सामर्थ्यं पूर्वं निराकृतम्; अथ अर्थित्वमपि निरस्यति अत

**अत एव तासामर्थित्वमपि न संभवति। अतः सामर्थ्यार्थित्वयोरभावात् देवादीनामनधिकार इति—**

**एवं प्राप्ते प्रचक्ष्महे—**तदुपर्यपि बादरायणः संभवात्। तदुपर्यपि—तत् **ब्रह्मोपासनम्,** उपरि **देवादिष्वपि संभवतीति भगवान् बादरायणो मन्यते, तेषामर्थित्वसामर्थ्ययोः** संभवात्। **अर्थित्वं तावत् आध्यात्मिकादिदुर्विषहदुःखाभितापात्, परस्मिन् ब्रह्मणि च निरस्तनिखिलदोषगन्धेऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणे निरतिशयभोग्यत्वादिज्ञानाच्च संभवति। सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया संभवति।**

**देहेन्द्रियादिमत्त्वं च ब्रह्मादीनां सकलोपनिषत्सु सृष्टिप्रकरणेषु उपासनप्रकरणेषु च श्रूयते। तथा हि, (छा.६.२.१) "सदेव सोम्येदमग्र आसीत्...तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत" इत्यारभ्य सर्वमचेतनं तेजोऽबन्नप्रमुखावस्थाविशेषवत् व्याकृत्य, (छा. ६.३.२) "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति संकल्प्य ब्रह्मादिस्थावरान्तं चतुर्विधं भूतजातं तत्तत्कर्मोचितशरीरं तदुचितनामभाक् च अयमकरोदित्युक्तम्। एवं सर्वत्र सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विधा सृष्टिराम्नायते। देवादिभेदश्च तत्तत्कर्मानुगुण-ब्रह्मलोकप्रभृतिचतुर्दशलोकस्थफलभोगयोग्यदेहेन्द्रियादियोगायत्तः; आत्मनां स्वतो देवादित्वाभावात्। तथा, (छा ८.७.) "तद्धोभये देवासुरा अनुबुबुधिरे। ते होचुः।...इन्द्रो हवै देवानामभिप्रवव्राज, विरोचनोऽसुराणाम्। तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः। तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः। तौ ह प्रजापतिरुवाच" इत्यादिना स्पष्टमेव शरीरेन्द्रियवत्त्वं देवादीनां प्रतीयते॥ कर्मविधिशेषभूतमन्त्रार्थवादेष्वपि, (तै. अ.२. ६. ७) वज्रहस्तः पुरन्दरः", (तै. कां २. ४. १२) "तेनेन्द्रो वज्रमुदयच्छत्" इत्यादिभिः प्रतीयमानं विग्रहादिमत्त्वं प्रमाणान्तराविरुद्धं तत्प्रमेयमेव।**

---

**एवेति।** उपासने सामर्थ्यं सर्वत्रैकरूपम्; अर्थित्वं तु मधुविद्यादिभेदेन भिन्नमपीति वैषम्यादिदं पृथगुक्तम्। **अत एव-**शरीरस्यैवाभावादेव। सशरीरत्वे हि तापत्रयाभिहतिरस्ति, न वेति विचारप्रसक्तिरिति भावः॥

सूत्रे **तदिति** पृथक्पदम्। **उपरि** इति पदं देवादिषु सामर्थ्यातिशयमपि सूचयति। **बादरायण-**पदं जैमिनेर्याहशताहशत्वेपि तत्र कतिपयमीमांसकर्षिविवादसद्भावसूचनाय। **उपरीति** अतिशयप्रदर्शनात् महाभोगमग्नानां तेषामर्थित्वप्रसक्तिरेव नेति शंका स्यादिति प्रथमतोऽर्थित्वं साधयति **अर्थित्वं ताव-**दिति। अर्थवादो द्विविधः कर्मविधिशेषस्तदन्यश्च। तत्रोत्तरत्र कर्मस्तुत्यर्थत्वनिबन्धनस्यान्यपरत्वस्य वर्णनायोगात् आदौ तमादाय साधयति **सदेवेति। चतुर्विधमिति।** चातुर्विध्यस्य देवसृष्टिसाधकस्य सद्विद्यायामकीर्तनेऽपि सृष्टिवाक्यान्तरानुरोधात्, 'सर्वाः प्रजाः' इति तावतां विवक्षेति भावः। **सर्वत्र सृष्टिवाक्येषु**-विद्यान्तरशाखान्तरवेदान्तरगतसृष्टिवाक्येषु। **शरीरेन्द्रियवत्त्वमि**त्येतत् उपासनप्रवृत्तिमत्त्वाद्युपलक्षणम्। **तत्प्रमेयमेव**—अभिमत-तज्जन्यबोधविषय एव। तत्र तात्पर्याभावकल्पनया शुद्धदेवतास्वरूपकर्मप्राशस्त्य-

न च अनुष्ठेयार्थप्रकाशन-स्तुतिपरत्वाभ्याम्, प्रतीयमानार्थान्तराविवक्षा शक्यते वक्तुम्; स्तुत्याद्युपयोगित्वात्; तेन विना स्तुत्याद्यनुपपत्तेश्च। गुणकथनेन हि स्तुतित्वम्। गुणानाममद्भावे स्तुतित्वमेव हीयेत। न चासता गुणेन कथितेन प्ररोचना जायते। अतः कर्म प्ररोचयन्तो गुणसद्भावं बोधयन्त्येवार्थवादाः। मन्त्राश्च कर्मसु विनियुक्तास्तत्रतत्र किञ्चित्करत्वायानुष्ठेयमर्थं प्रकाशयन्तो देवादिगतविग्रहादिगुणविशेषमभिदधत एव तत्र किञ्चित्कुर्वन्तिः अन्यथा इन्द्रादिस्मृत्यनुपपत्तेः। न च निर्विशेषा देवता धियमधिरोहति।

तत्र प्रमाणान्तराप्राप्तान् गुणान् स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्तिः गुणविशिष्टं वा प्रकाशयन्ति; प्राप्तांश्चानूद्य तैः प्ररोचनप्रकाशने कुर्वन्ति; विरुद्धत्वे तु तद्वाचिभिः शब्दैरविरुद्धान् गुणान् लक्षयित्वा कुर्वन्ति।

---

मात्रस्याङ्गिकत्वेन तावन्मात्रबोधकल्पना न युक्तेति भावः। **अनुष्ठेयार्थेति**; अनुष्ठानान्वयिदेवतादिरूपार्थेत्यर्थः। **स्तुतिपरत्वेति**। मन्त्रेषु गुणकथनात् स्तुतिसिद्धावपि न तत्परत्वम्। तत् अर्थवादेष्वेव। **स्तुत्यादी**त्यादिना अर्थस्मरणग्रहणम्। स्तुत्यंशविवरणं **गुणे**त्यादिना; आदिपदार्थविवरणं **मन्त्राश्चे**त्यादिना। व्यतिरेकांशाभावेऽपि क्वचित् कारणत्वमस्ति, यथा ज्योतिष्टोमे स्वर्गं प्रति; न तथा प्रकृते; किंतु तदभावे तदभाव इति व्यतिरेकोऽपीत्याह **तेन विनेति**। **स्तुतित्वं** वाक्यस्य स्तुतिरूपत्वम्। न च कर्मार्थवादस्य कर्मविषयस्तुतिरूपतायां देवतागुणविग्रहवर्णनस्य क उपयोग इति शंक्यम्— कर्मार्थवादस्यैव देवताप्रतिपादकस्यात्र विषयत्वात्। वायुर्वै क्षेपिष्ठा देवतेति हि वायव्ययागार्थवादः। तस्य वायुदेवतास्तुतिमूलमेव कर्मप्राशस्त्यबोधकत्वात् वायुप्राशस्त्याभावे तदसिद्धेः। ननु गुणाः कथनीया इति सत्यम्; तावता तेषां तत्त्वतः सद्भावो नापेक्षित इत्यत्राह **गुणानामिति**। ननु विद्यमानगुणकथनं स्तुतिरिति न लक्षणम्; किंतु गुणकथनमित्येतावदेवेत्यत्राह **न चासतेति**। कथितगुणासद्भावज्ञाने रुचिर्न भवतीत्यर्थः। त्वदुपपादनसरण्या चासद्भावस्य निश्चितत्वान्न कश्चित् कर्मणि प्रवर्तेतेति भावः। **बोधयन्त्येवेति**। बोधितश्च स्वतःप्रामाण्यादबाधित इति। ननु मन्त्रार्थवादानां गुणादिविषयप्रमितिजनकत्वं नानुगतम्। ज्ञातविषयेऽनधिगतार्थगन्तृत्वायेगात्; बाधितविषयस्थले बोधस्यैवायोगाच्च। अतः मन्त्राणां देवतास्मारकत्वं अर्थवादानाञ्च प्ररोचकत्वमित्येतावदेव स्वीकार्यमित्यत्राह **तत्रेति**। **तत्र** गुणादिसद्भावस्यावश्यकत्वे सति। **प्ररोचयन्ति** अर्थवादाः। **बोधयित्वे**त्यन्तस्य **गुणविशिष्टमिति** वाक्येऽप्यन्वयः। **गुणविशिष्टं** बोध्यमानगुणविशिष्टदेवतां तादृशदेवतारूपगुणविशिष्टं कर्म वा **प्रकाशयन्ति** स्मारयन्ति मन्त्राः। **अनूद्येति**। अप्राप्तत्वे प्रमापकत्वम्, प्राप्तत्वे अनुवादत्वम्। याथार्थ्यं तु सर्वत्राविशिष्टमिति भावः। 'आदित्यो यूपः' इत्यादौ कथं याथार्थ्यमित्यत्र लक्षणयेत्याह **विरुद्धत्वे त्विति**। **कुर्वन्ति** अर्थवादाः मन्त्राश्च यथाक्रमं प्ररोचनं प्रकाशनञ्च। नन्वग्न्यादिदेवतास्थले दृश्यमानवह्न्यादिरूपार्थस्यैवाग्न्यादित्वात् स धियमधिरोहत्येवेति किमर्थं विग्रहादि स्वीकर्तव्यम्; स्वीकृतं वा किमित्यनु-

**कर्मविधेश्च देवताया ऐश्वर्यमपेक्षितमेव। कामिनः कर्तव्यतया कर्म विधीयमानं स्वयं क्षणप्रध्वंसि कालान्तरभाविनः फलस्य स्वर्गादेः साधकमपेक्षते। मन्त्रार्थवादयोश्च** (तै.का. २-१) **"वायुर्वै क्षेपिष्ठा देवता। वायुमेव स्वेन भागधेयेनोपधावति। स एवैनं भूतिं गमयति"** (तै. अ. २) **" यदनेन हविषाऽऽशास्ते, तदश्यात्। तदृध्यात्। तदस्मै देवा राधन्ताम्" इत्यादिषु देवतायाः कर्मणाऽऽराधितायाः फलदायित्वं तदनुगुणं चैश्वर्यं प्रतीयमानमपेक्षितत्वेन वाक्यार्थे समन्वीयते॥ देवपूजाभिधायिनो यजिधातोश्च यागाख्यं कर्म स्वाराध्यदेवताप्रधानं प्रतीयते॥ तदेवं कृत्स्नवाक्यपर्यालोचनया वाक्यादेव विध्यपेक्षितं सर्वमवगतमिति नापूर्वादिकं व्युत्पत्तिसमयानवगतं कर्मविधिष्वभिधेयतया, कल्प्यतया वाऽऽश्रयितव्यम्॥**

**तथा सङ्कीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुराणेषु ब्रह्मादीनां देवासुरप्रभृतीनाञ्च देहेन्द्रियादयः, स्वभावभेदाः, स्थानानि, भोगाः, कृत्यानि चेत्येवमादयः सुव्यक्ताः**

---

संधेयमित्यत्राह **कर्मविधेश्चेति**। इदञ्च फलाधिकरणे वक्ष्यमाणं प्रकृतोपयोगात् प्रतिबोधितम्। शंकापरिहारस्त्वेवमपि भवति-यथा मन्त्रार्थवादाभावेऽपि विधिबलादेव स्तुतिस्मरणयोर्लाभेऽपि तत्स्थित्यन्यथानुपपत्त्या तन्मूलस्तुतिस्मरणयोरेव कार्यकरत्वमिति नियमादृष्टकल्पना, तथा गुणविग्रहादिवर्णनात् तद्ग्रहणमूलकयोरेवाभ्युदयकरत्वमिति कल्पना कार्येति। **यत्** फलं **आशास्ते** अपेक्षते। **अश्यात्** यजमानः। ऋद्ध्यात् तत्फलमभिवर्धताम्। **राधन्तां** साधयन्तु। देवतैश्वर्यश्रवणस्थले परं तदन्यथानुपपत्त्या देवताप्रीतिकल्पनेति न; यजिधातुना सर्वत्र प्रीतेः कण्ठोक्तत्वमपीत्याह **देवेति**। ननु दानतपःप्रभृतिषु देवतानुद्देश्यकेषु कार्येषु देवताप्रीत्यभावात् कथं क्षणभङ्गुरेभ्यस्तेभ्यः फलम्। तत्र चेत् अपूर्वमवश्यम्—अविशेषात् सर्वत्र तथेति चेत्—अत्रैवं मन्तुमर्हसि—श्रुतायाः प्रीतेरपि द्वारत्वात् यागजन्यप्रीतिजन्यापूर्वतः तत्र फलम्। एवञ्च प्रीतेरपि क्षणभङ्गुरत्वेऽपि प्रीत्याश्रयस्यापायेऽपि न क्षतिः। प्रीत्यश्रवणे तु कर्मत एव साक्षादपूर्वमिति। वस्तुतः, 'द्रव्ययज्ञाः तपोयज्ञाः' इति सर्वेषां यज्ञत्वश्रवणात् सर्वं देवताराधनमेव। विशेषाश्रवणे साक्षादीश्वर एव शासिता प्रीणनीयः, विशेषश्रवणे तन्मुखेनेश्वर इति प्रीत्यैव फलसिद्धौ अपूर्वकल्पनं प्राक्तनासंमततया नूनमपूर्वमेवेत्याशयेनोपसंहरति **तदेवमिति**। **अपूर्वादिक**मित्यादिपदेन क्रियाशक्तिग्रहः। गामानयेति व्युत्पत्तिग्राहकवाक्यानवगतमपूर्वं वेदे लिङभिधेयं प्राभाकराः मन्यन्ते, भाट्टास्तु व्युत्पत्त्यनुरोधेन प्रवर्तनैवार्थ इति वदन्तोऽपि अपूर्वं कल्पयन्ति। तदुभयं निरस्यति **व्युत्पत्तीत्यादिना**। तदिदं **जिज्ञासाधिकरणभाष्यान्ते**ऽप्युक्तमेव॥

एवं श्रुतिप्रमाणमुपन्यस्तम्; स्मृतिमपि दर्शयति **तथेति**। स्मृत्युक्तांशप्रतिपादकवाक्यानि न तादृशानुपूर्व्या वेदे एकत्र द्रष्टुं शक्यानि; संकीर्णत्वात्। अतस्तदध्यापनेन तद्बोधनं दुष्करमिति संकल्प्य दर्शयितुं स्मृतय इति भावः। अनेन **संकीर्ण**पदेन स्मृतीनां कदाप्यनधीयमान-नित्यानुमेयवेदमूलकत्वं किञ्चित्कालाधीतत्वेऽपि कार्त्स्न्येनोत्सन्नकिञ्चिच्छाखामूलकत्वं यद्वाऽधीयमानशाखास्वेवानवधानवशात् तत्रतत्राध्ययनभ्रष्टवाक्यमूलकत्वमितीदृशपक्षव्यवच्छेदः, विप्रकीर्णत्वात्तु वाक्यानामधीयमानानेक-

**प्रतिपाद्यन्ते । अतो विग्रहादिमत्त्वात् देवादीनामप्यधिकारोऽस्त्येव ॥ २५ ॥**

**विरोधः कर्मणीति चेन्न अनेकप्रतिपत्तेर्दर्शनात्** । १ । ३ । २६ ॥

**देवादीनां विग्रहादिमत्त्वाभ्युपगमे कर्मणि विरोधः प्रसज्यते ; बहुषु यागेषु युगपदेकस्येन्द्रस्य, विग्रहवत्त्वे (वतः)** (तै. आ. ३-५) "**अग्निमग्न आवह**", (तै. आ. १-२) "**इन्द्रागच्छ हरिव आगच्छ**" **इत्यादिना आहूतस्य [तस्य] संनिधानानुपपत्तेः । दर्शयति चाग्न्यादीनां तत्रतत्राऽऽगमनम्**, (तै. कां. १-६) "**कस्य वा ह देवा यज्ञमागच्छन्ति, कस्य वा न, बहूनां यजमानानाम् । यो वै देवताः पूर्वः परिगृह्णाति, स एनाः श्वोभूते यजते**" **इति । अतो विग्रहादिमत्त्वे कर्मणि विरोधः प्रसज्यत इति चेत्—तन्न**—अनेकप्रतिपत्तेर्दर्शनात् । **दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः** ॥ २६ ॥

**शब्द इति चेन्न—अतः प्रभवात् प्रत्यक्षानुमानाभ्याम्** । १ । ३ । २७ ॥

विरोध इति वर्तते । **मा भूत् कर्मणि विरोधः, अनेकशरीरप्रतिपत्तेः । शब्दे तु वैदिके**

---

शाखान्तर्गतानामेवार्थनिष्कर्षः अस्मादृशैः समाहारेण दुष्कर इति स्मृतीर्निबबन्धुरिति पक्षस्वीकारश्च ज्ञापितो भवति ॥ २५ ॥

ननु मन्त्रार्थवादोक्तसर्वस्वीकारे देवताः सविग्रहाः यत्रयत्राहूताः तत्रतत्र संनिधाय हविरादाय प्रीताः फलं प्रददते इत्यभ्युपगन्तव्यम् । नैतत् युक्तम्, युगपदेकस्यानेकदेशक्रियमाणकर्मसंनिधानस्य दुर्वचत्वात् । अतः, "विग्रहो हविरादानं युगपत्कर्मसंनिधिः । प्रीतिः फलप्रदानञ्च देवतानां न विद्यते" इति मीमांसकोक्तमेव सम्यगिति शंकामनूद्य परिहरति **विरोध** इति सूत्रेण । **विग्रहवत्त्वे** इति, **तस्य** इति च पाठे इन्द्रस्य विग्रहवत्त्वे, बहुषु यागेषु युगपदेकस्य........आहूतस्य तस्य संनिधानानुपपत्तेरिति योजना कार्या । विग्रहवत्त्वस्वीकारे आह्वानस्यापि यथार्थत्वमङ्गीकार्यमिति ज्ञापनाय **आहूतस्ये**त्यत्रापि तदन्वयः । **विग्रहवतः** इति तालकोशे पाठान्तरम् ; **तस्ये**ति च न । **अग्निमग्न आवह** इति वाक्यग्रहणमावहनारम्भवाक्यत्वात् अग्ने इति संबुद्धिग्रहाय । **इत्यादिने**त्यादिपदविवक्षितम् इन्द्रमावहेति वाक्यमिहोपयुज्यते । आहुत्याधारभूताग्ने ! त्वमाह्वयेति आज्यभागप्रथमदेवताभूताग्निप्रभृति-अङ्गप्रधानान्वयिसर्वदर्शपूर्णमासदेवताह्वानमन्त्रोच्यते । 'इन्द्र ! आगच्छे'ति मन्त्रः सुब्रह्मण्यानिगदः ज्योतिष्टोमे सवनमुखीयैन्द्रयागाभ्यासाङ्गभूतः (पू. मी. ९. १-१५) । एवं देवताह्वानस्थले युगपत् तत्संनिधानायोगात् विरोध उक्तः । यत्र नाह्वानममूषाम् ; अग्निरेव हव्यमूढ्वाऽमुं लोकं नयतीति, तत्रापि विरोधः, एकेनाग्निना सविग्रहेण कतिपयश्रोत्रियुक्तेनापि सर्वत्र संनिधाय स्वविग्रहेण हविर्वहनासंभवादिति ध्येयम् । **कर्मणि विरोधो** नाम कर्मसु आगमनहविर्वहनप्रतिपादकवाक्यार्थासामञ्जस्यम्, कर्मस्विन्द्रादिदेवतासंबन्धासंभवो वा । पूर्वः=पूर्वदिनस्थः। **सौभरी**ति । अयमृषिः पञ्चाशतं राजकन्याः परिणीय तावद्रूपग्रहणेन प्रत्येकं ताभिर्विजहारेति श्रीविष्णुपुराणे (४-२) । योगिनामप्येवं यदि, किमु वक्तव्यमाजानसिद्धानां देवानामिति भावः । **'कस्य वाह'** इति वाक्येनानेकशरीरपरिग्रहाशक्तिर्ज्ञायत इति चेन्न-तस्य पूर्वाह्वानविधानार्थतयाऽन्यपरत्वात् ॥

**विरोधः प्रसज्यते ; अनित्यार्थसंयोगात् । विग्रहवत्त्वे हि सावयवत्वेनेन्द्रादेरर्थस्यानित्यत्वमनिवार्यम् । ततो देवदत्तादिशब्दवत् इन्द्राद्यर्थजन्मनः प्राक्, विनाशादूर्ध्वं चेन्द्रादिशब्दानां वैदिकानामर्थशून्यत्वम्, अनित्यत्वं वा वेदस्य स्यादिति चेत्—**

**तन्न ;** अतः प्रभवात्—**अस्मादिन्द्रादिशब्दादेव पुनःपुनरिन्द्राद्यर्थस्य प्रभवात् । एतदुक्तं भवति— न हि देवदत्तादिशब्दवत् इन्द्रादिशब्दाः वैदिकाः व्यक्तिविशेषमात्रे संकेतपूर्वकाः प्रवृत्ताः ; अपि तु स्वभावत एव गवादिशब्दवत् आकृतिविशेषवाचित्वेन । ततश्चैकस्यामिन्द्रव्यक्तौ विनष्टायाम्, अत एव वैदिकादिन्द्रशब्दात् मनसि विपरिवर्तमानात् अवगततद्वाच्यभूतेन्द्राद्यर्थाकारो धाता तदाकारमेवापरमिन्द्रं सृजति ; यथा कुलालो घटशब्दान्मनसि विपरिवर्तमानात् तदाकारमेव घटम्—इति । कथमिदमवगम्यते ?** प्रत्यक्षानुमानाभ्याम् । **श्रुतिस्मृतिभ्यामित्यर्थः ।**

---

**वैदिके विरोध** इति । अपौरुषेये वेदे इन्द्रादिशब्दनिवेशासंभव इत्यर्थः । **विग्रहवत्त्वे** हीति । यदि देवताश्चेतनव्यक्तीः परमभ्युपगम्य विग्रहादिकं नाभ्युपगम्येत, तदा विग्रहायुधादिप्रतिपादकवाक्यराशिप्रतीतार्थपरित्यागः स्यादिति अनेकप्रतिपत्तिवादिभिः इन्द्रादिदेवताविग्रहोऽपि इन्द्रादिशब्दार्थ एषितव्यः । विग्रहाश्च सावयवत्वादवश्यमनित्या इति भावः । **विनाशा**दित्यत्र इन्द्राद्यर्थस्येति विभज्यानुषङ्गः । **ऊर्ध्वं** पश्चात् । **अर्थशून्यत्वम् ।** अतस्तदा (पूर्वं पश्चाच्च) इन्द्र आगच्छेति प्रयोगायोगः ; कर्मवैगुण्यञ्चेति । ननु तदभावे तदुपलक्षितव्यक्ति-तदन्तर्यामिविवक्षया तत्प्रयोगोऽस्तु ; मा भूद्वा कर्तुरभाव इवोद्देश्यव्यक्त्यभावेऽपि कर्मानुष्ठानमित्यत्र दोषान्तरमाह **अनित्यत्वं वे**ति । इन्द्रोत्पत्त्यनन्तरमेवेन्द्रसंज्ञाया उदितत्वादिति भावः । एवम् 'इन्द्रो वज्रमुदयच्छत्' इति भूतकालिकक्रियानिर्देशस्तदुत्पत्त्यनन्तरमेव स्यादिति वेदस्यानादित्वभङ्ग इति । एतेन कथमर्थानित्यत्वे वेदानित्यत्वम् ; भूतभविष्यदर्थविषयकस्यापि शब्दस्य संभवात् । एवमेवंगुणाकारविशिष्टस्येदमिदं नाम कार्यमिति यदि कश्चित् विधिरस्ति, तथाविधश्च वस्तु अनादावपि संसारे यद्येकमेव भवति, तावता तन्नाम्नो वैदिकस्य कथमनित्यत्वमिति शंका निरस्ता । विग्रहवदिन्द्रादिव्यापाराणां भूतानां निर्देशेन तदनन्तरमेव तद्वाक्योत्पत्तेरेष्टव्यत्वादिति । **अतः** इन्द्रादिशब्दात् **प्रभवात्** इन्द्रादेरुत्पत्तेः कथमर्थं प्रति शब्दस्य कारणत्वम् ? कथञ्च शंकापरिहारः ? शब्दादर्थोत्पत्तिस्वीकारे हि शब्दस्य कञ्चित्कालमर्थशून्यत्वमेवायातम् । तथा लोके चतुर्विधभूतजातान्तर्गततत्तद्व्यक्तिप्रभवस्यापि वेदाभिज्ञतानिबन्धनब्रह्मसंकल्पाधीनत्वात् कथमनित्यत्वपरिहारः इत्याशंकायाम्, इन्द्रादिशब्दानां स्थानविशेष-अधिकारिविशेषपरम्परागतानुगताकारवाचित्वप्रतिपादनमुखेनोपपादयति **एतदि**ति । **स्वभावत एवे**ति । तथाच जैमिनिः 'औत्पत्तिकः शब्दस्यार्थेन संबन्धः' इति । **औत्पत्तिकः** नैसर्गिकः ; अनादिरिति यावत् । देवदत्तस्त्वेकैव व्यक्तिरिति तस्यार्थस्यानित्यत्वात् तेन तच्छब्दस्य संबन्धः पुरुषसंकेतकल्पितः । नन्वीश्वरस्य नित्यसर्वज्ञस्य किमितीन्द्रशब्दस्मरणपूर्वं तदर्थानुसंधानमित्यत्रोक्तं **धाते**ति । धाता **चतुर्मुखः** अधीतवेदशब्दानुसंधानैकावगम्यार्थगतविशेष इति । तथा चेन्द्रशब्दतद्घटितविप्रकीर्णानेकवाक्यसमाहारेण ईदृशज्ञानशक्त्यैश्वर्यसंपन्न इत्येवं तत्तद्देवतागतसर्वविशेषानुसंधानेन तत्तद्देवतासृष्टिर्धात्रा

श्रुतिस्तावत्, (तै. अ. २. ६.) " वेदेन रूपे व्याकरोत् सतासती प्रजापतिः " इति ; तथा, (तै. अ. २. २.) " स भूरिति व्याहरत्, स भूमिमसृजत । स भुव इति व्याहरत्, सोऽन्तरिक्षमसृजत " इत्यादिः । वाचकशब्दपूर्वकं तत्तदर्थसंस्थानं स्मरन् तत्तत्संस्थानविशिष्टं तंतमर्थं सृष्टवानित्यर्थः । स्मृतिरपि, (भा. शां. २३१.) "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः " इति, (म. १. २१.) " सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे " इति । संस्थाः संस्थानानि ; रूपाणीति यावत् । तथा, (वि. पु. १. ५. ६३) " नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः " इति । अतो देवादीनां विग्रहवत्त्वेऽपि वैदिकशब्दानामानर्थक्यं वेदस्यादिमत्त्वं च न प्रसज्यते ॥ २७ ॥

अत एव च नित्यत्वम् । १ । ३ । २८ ॥

यत एवेन्द्रवसिष्ठादिशब्दानां देवर्षिवाचिनां तत्तदाकारवाचित्वम्, तत्तच्छब्देन

---

क्रियत इति अर्थज्ञानोत्पादकशब्दज्ञानविषयत्वेनेन्द्रादिवैदिकशब्दस्य वस्तूत्पत्तिप्रयोजकतया अतःप्रभवादित्युच्यत इति भावः । एवं शब्दमूलकत्वे सत्येवाकृतिविशेषवाचित्वमिन्द्रादिशब्दस्य स्यादिति तत्र प्रमाणं श्रुतिस्मृतिरूपमुपन्यस्यते **प्रत्यक्षानुमानाभ्याम**िति । अधीयमानो वेदः श्रोत्रेण प्रत्यक्षेण गृह्यत इति प्रत्यक्षः । स्मृतेः समानार्थकश्रुत्यनुमापकतया प्रमाणत्वात् अनुमानपदेन स्मृतिरुच्यते । **वेदेन** तत्तद्वस्तुप्रतिपादकवेदभागतदर्थानुसंधानेन । **सतासती** सदसती-चेतनाचेतने **रूपे** वस्तुनी **व्याकरोत्** व्यष्टिरूपेणासृजत् । **व्याहरत्** अधीतशब्दमावर्तयत् सृज्यार्थगतविशेषाणामनुसंधानाय । **संस्थाः** आकृतीः । **आनर्थक्यम्** अर्थशून्यत्वम् । यथा गां ददाति, व्रीहीन् प्रोक्षतीत्येवं वैदिकशब्दोच्यमानानां गोव्रीह्यादिव्यक्तीनां देशकालभेदेन भिन्नत्वेपि विनाशित्वेऽपि गोत्वव्रीहित्वाद्याकृतिवाचितया तेषां शब्दानां नार्थशून्यत्वम्, तथैवेन्द्रादिदेवताशब्दानामपि तत्तदाकारवाचित्वात् एकव्यक्तिनाशेऽप्यपरव्यक्तिसद्भावात् नार्थशून्यत्वम्, न वा यागादावाह्वानभंगः । प्रलये कथमर्थाः सन्तीति चेत्-कथं शब्दाः सन्तीति तुल्यम् । शेषमनन्तरसूत्रे ॥ २७ ॥

पूर्वमीमांसायाम्, " वेदांश्चैके संनिकर्षं पुरुषाख्याः ", " अनित्यदर्शनाच्च " इति सूत्रद्वयेन, काठकं कालापकमित्येवं पुरुषकृतत्वावगमात्, " बबरः प्रावाहणिरकामयत " इत्यनित्यार्थप्रतिपादनाच्च वेदानां पौरुषेयत्वमाशंक्य परिहृतम् । तत्र, " उक्तं तु शब्दपूर्वत्वम् " इति सूत्रम्, ' लिङ्गदर्शनाच्च ' (१-१-२३) इति सूत्रोक्तवेदनित्यत्वादिप्रदर्शनेनापौरुषेयत्वप्रतिपादकम्, ' अतः प्रभवात् ' इति प्रकृतबादरायणसूत्रार्थग्राहकमपि स्यात्, लिङ्गदर्शनसूत्रे अस्यापि विवक्षितत्वसंभवात् । अनन्तरे च, 'आख्या प्रवचनात्' इति सूत्रे वेदविभागानन्तरकालिकाऽऽद्यप्रवचनकारितया कठादेर्मुख्यतया काठकादिसमाख्यायाः कठादिप्रवचननिबन्धनत्वबोधनात् कठादीनामनित्यत्वे कथमनित्यार्थसंयोगस्य परिहार इति शंकायां कठादिशब्दानामाकृतिवाचित्वस्वीकारेणैव परिहारः कार्यः । अतः, ' उक्तं तु शब्दपूर्वत्वम् '

तत्तदर्थस्मृतिपूर्विका च तत्तदर्थसृष्टिः, तत एव(—) "मन्त्रकृतो वृणीते", (तै. अ. ७-१) "नम ऋषिभ्यो मन्त्रकृद्भ्यः", (तै. कां. ५-२-३) "अयं सो अग्निरिति विश्वामित्रस्य सूक्तं भवति" इत्यादिभिर्वसिष्ठादीनां मन्त्रकृत्त्वकाण्डकृत्त्वऋषित्वादौ प्रतीयमानेऽपि वेदस्य नित्यत्वमुपपद्यते। एभिरेव, "मन्त्रकृतो वृणीते" इत्यादिभिर्वेदशब्दैः तत्तत्काण्ड-सूक्त-मन्त्रकृतामृषीणामाकृतिशक्त्यादिकं परामृश्य तत्तदाकारान् तत्तच्छक्तियुक्तांश्च सृष्ट्वा प्रजापतिः तानेव तत्तन्मन्त्रादिकरणे नियुङ्क्ते। तेऽपि प्रजापतिना आहितशक्तयः तत्तदनुगुणं

---

इत्यत्र सोऽप्यर्थोऽभिमतः। एवञ्च योंऽशोऽनित्योऽर्थ इव प्रतीयते वेदे, स सर्वः देवदत्तादिवन्नानित्यः। अतो न तद्वाचिशब्दानां सांकेतिकत्वम्। तस्मात् इन्द्रादिदेवतावाचिनां कठवसिष्ठविश्वामित्रादिमहर्षि-वाचिनाम्, अन्येषाञ्चैवंविधानामाकृतिवाचित्वमेव। कठवसिष्ठादयोऽपि प्रवाहरूपेण तत्तद्व्यवस्थितकार्य-निर्वहणाय ब्रह्मणा प्रतिकल्पं यथापूर्वं सृज्यमानाः समानधर्माण इति। बबरः प्रावाहणिरित्यादि यत् मीमांसकोद्धृतं वाक्यम्, तत्र तैः 'परंतु श्रुतिसामान्यमात्रम्' (३१) इति सूत्रे एवं परिहार उक्तः, 'न बबरो नाम कश्चित् पुरुष उच्यते, यः प्रवाहणस्य पुत्र इति। अप्रसिद्धेः। किंतु प्रकृष्टवहनकर्ता सामान्येन प्रावाहणिरित्युच्यते। बबर इति वहनशब्दानुकरणम्' इति। इन्द्रकठादिवत् ऋतुलिङ्गन्यायेन प्रतियुगमनुवर्तमाना एव बबरादयः प्रवाहनित्या इति एकरूपमेव समाधानमसति बाधे स्वीकर्तुं युक्तम्। क्लिष्टार्थवर्णनं तु अगतिकविषयमिति बादरायणस्याभिसंधिः। तदत्र सर्वविधस्यानित्यार्थसंयोगनिबन्ध-नस्य पूर्वपक्षस्य **अतःप्रभवा**दिति समाधिः सूत्रित इति। एतदभिप्रायेण **इन्द्रवसिष्ठादिशब्दाना**मिति पूर्वं वसिष्ठादेरिन्द्रेण सह ग्रहणम्। वेदप्रतिपादितानामर्थानां वेदार्थानुसंधानपूर्वकसृष्टिविषयत्वादेव वसिष्ठादी-नामपि मन्त्रकृत इत्यादिवाक्याधीनोत्पत्तिकत्वात् वसिष्ठादितः प्रागपि तत्सत्त्वात् तन्नित्यत्वमित्यर्थः॥

ननु किमर्थमिदं सूत्रम्, वेदनित्यत्वस्य पूर्वमीमांसायामेव सिद्धत्वात्; मन्त्रकृतो वृणीत इत्यादीनां निर्वाहस्य तत्रैव कृतप्रायत्वात्; वसिष्ठादिशब्दानामाकृतिवचनत्वस्यापि तत्रैव सिद्धत्वात्। मीमांसकैर्देव-तापलपात्तु तत्रापि गवादिविषयन्यायमवतार्य तदनित्यत्वशंकापरिहरणार्थं पूर्वसूत्रं परमावश्यकमासीत्। न च वेदो नित्यः जगदुत्पत्तिहेतुत्वात् ईश्वरवदित्यनुमानतोऽपि नित्यत्वं साधयितुमिदमिति भामत्युक्तं युक्तम्—अनित्यत्वभङ्गभियैवेन्द्रादेर्विग्रहाभावपूर्वपक्षस्य प्राक् कृततया अतःप्रभवादिति तत्परिहारहेतूक्तौ ततो वेदनित्यत्वस्य तत्रैव सिद्ध्या पृथक्सूत्रकार्याभावादिति चेत्—उच्यते-मन्त्रार्थवादवाच्यार्थश्रद्धया देवादेर्विग्रहादिमतोऽङ्गीकारे, मन्त्रकृतो वृणीते इत्यादिप्रतीतवाच्यार्थश्रद्धया मन्त्रसूक्तादीनामपि कृतत्व-मप्येष्टव्यमिति नित्यत्वभङ्गः। मीमांसकैस्तु वरणादिविधानमात्रे तात्पर्यमिति यथाश्रुतार्थः उपेक्ष्येत, न वेदान्तिभिरिति शंकापरिहारार्थमिदम्। मन्त्रकृतो वृणीत इत्यादिवाक्यत एव चिन्तितात् वसिष्ठादेः प्रभवात् वसिष्ठादौ मन्त्रनिर्मातृत्वायोगात् तदाविष्कर्तृत्वमेव वक्तव्यमिति नानित्यत्वप्रसक्तिः; प्रत्युत नित्यत्वमेवेति समाधिः। **मन्त्रादिकरणे** मन्त्राद्याविष्करणे।

सूत्रे **एवकारेण** वर्णनित्यत्वेन, वेदाध्ययनं सर्वं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वात् अधुनातनाध्ययन-

तपस्तप्त्वा नित्यसिद्धान् पूर्वपूर्ववमिष्टादिदृष्टान् तानेव मन्त्रादीन् अनधीत्यैव स्वरतो वर्णतश्चास्खलितान् पश्यन्ति। अतश्च वेदानां नित्यत्वम्, एषां च मन्त्रकृत्त्वमुपपद्यते ॥ २८ ॥

अथ स्यात्—नैमित्तिकप्रलयादिषु इन्द्राद्युत्पत्तौ वेदशब्देभ्यः पूर्वपूर्वेन्द्रादिस्मरणेन प्रजापतिना देवादिसृष्टिरुपपद्यतां नाम; प्राकृतप्रलये तु स्रष्टुः प्रजापतेः, भूताद्यहङ्कारपरि-

---

वदित्यनुमानेन च वेदनित्यत्वं मीमांसकोक्तं निरस्यते। नित्यवर्णसमुदायात्मत्वस्य हेतुत्वे काव्यादेरपि नित्यत्वप्रसंगः। काव्यादौ तद्धेतुरिव द्वितीयहेतुरपि, चतुर्मुखकर्तृकाध्ययने तपोबलसाक्षात्कृतवेदमहर्षिविशेषकारितच्छिष्यकर्तृकाध्ययने च व्यभिचरति इति। तथाऽयमेवकारः मीमांसकान् प्रति कठवसिष्ठाद्यनित्यार्थसंयोगादनित्यत्वे शंकिते यत् समाधानं तैर्वर्णनीयम्, तदेव देवादिसर्वविषयेऽप्यस्माभिरिति ज्ञापनार्थश्च। पूर्वसूत्रसिद्धस्यार्थशून्यत्वाभाववत्त्वस्य समुच्चायकश्चकारः। नित्यत्वमिदं वेदानां कीदृशमित्यनन्तरसूत्रभाष्ये विशदम्। वेदनित्यत्वस्य प्राधान्येनोक्तावपि वक्तव्यमन्यदपि नित्यत्वमत्र सूत्रेऽभिसंहितमेव। 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति हि जैमिनिना शब्दार्थयोः संबन्धः नित्य इत्युक्तम्। शब्दस्य वा अर्थस्य वा यद्यनित्यता, कथं संबन्धो नित्यः स्यादिति कृत्वा शब्दस्य वर्णात्मकस्य नित्यत्वमिवार्थस्यापि नित्यत्वम् आकृतेरेव वाच्यत्वादित्युक्तम्। देवदत्तादियदृच्छाशब्दानां व्यक्तिविशेषरूपानित्यार्थविषये संकेत एवेति न तत्र संबन्धस्यौत्पत्तिकतेति। अत्र पूर्वमिन्द्रादेर्विग्रहवत्त्वेनानित्यतया शब्दार्थसंबन्धस्याप्यनित्यता प्राप्ता; अथ वसिष्ठादिकृततया शब्दानित्यता च प्राप्ता। तत्र वैदिकशब्दानुसंधानाधीनपूर्वेन्द्रवसिष्ठाद्यर्थानुसंधानपूर्वकसृष्टिविषयत्वस्येन्द्रवसिष्ठादौ वर्णनात् शब्दस्यार्थस्य च तस्यतस्य पूर्वपूर्वसद्भावसिद्ध्या शब्दोऽर्थस्तत्संबन्धश्च नित्य इति निश्चीयत इति सर्वनित्यत्वमेतत्सूत्राभिसंहितं भवितुमर्हतीति। एवमपि भाष्ये वेदमात्रनित्यत्ववचनात् अर्थस्य कादाचित्कत्वेऽपि शब्दार्थसंबन्धस्यानित्यता न भवति; बोध्यबोधकभावस्यैव संबन्धत्वात् वस्त्वभावेऽपि ज्ञानघटितस्य तस्य संबन्धस्यानपायात्। इन्द्रादेरनित्यत्वे तु तदभावकाले तदाह्वानयागानुष्ठानाद्यभावप्रसंग इति परं दोषः स्यात्; न संबन्धस्यानित्यत्वम्। तथा अतीततयेन्द्रादिकार्यप्रतिपादकवेदभागस्य तत्कार्यपश्चात्कालिकतया वेदनित्यत्वभङ्गश्च दोषः स्यादित्याशय उन्नीयते। ननु केयमाकृतिः, यस्य शब्दार्थ उच्यते। नैषा जातिः; आकृत्यतिरिक्तनित्यजातिसद्भावे मानाभावात्। नित्यचेतनाचेतनवस्तुषु जातेरपरिगणनात्। नापि संस्थानम्; 'नामरूपे व्याकरवाणि', 'संस्थाश्च निर्ममे' इत्यादिप्रमाण-प्रत्यक्षाद्यनुमतत्वेऽपि तस्यानित्यत्वेनार्थनित्यत्वस्यासिद्धेरिति चेत्-संस्थानमेवाकृतिः; प्रतिव्यक्ति तस्य भिन्नत्वेऽपि सौसादृश्यादेकत्ववादः; नित्यत्वञ्च प्रवाहनित्यत्वादेव वर्णविषये वेदविषयेऽपि च सिद्धान्ते। एवं नाकृतिमात्रे शक्तिः; किंतु धर्मिपर्यन्ते। अयमेव चास्मन्मते आकृत्यधिकरणार्थ इत्यलम्॥

पूर्वसूत्रे अत एवेत्येवकारेण गुर्वध्ययनपूर्वकत्वसाधकाध्ययनत्वादिहेतुदूषणमभिसंहितं न युक्तम्; लोकव्यवहारस्य प्रवाहानित्यताया अवश्योपेयत्वात्; अथवा देवादिर्न स्वीकार्यः इत्याशयेन शंकते अथ स्यादिति। नैमित्तिकप्रलयः चतुर्मुखदैनन्दिनसुप्वापसामयिकः प्रलयः। आदिपदेन मन्वन्तरभेदग्रहणम्, तदाऽपीन्द्रादिभेदात्। प्राकृतप्रलयः व्यष्टिसमष्टिरूपस्य सर्वस्य प्रकृतौ पर्यन्ते लयः। भूतेति। चतुर्मुख-

णामशब्दस्य च विनष्टत्वात् कथं प्रजापतेः शब्दपूर्विका सृष्टिरुपपद्यते ? कथन्तरां विनष्टस्य वेदस्य नित्यत्वम् ? अतो वेदनित्यत्ववादिना देवादीनां विग्रहवत्त्वाभ्युपगमेऽपि लोकव्यवहारस्य प्रवाहानादिताऽऽश्रयणीयेति । अत्रोत्तरं पठति—

समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ १ । ३ । २९ ॥

कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि पूर्वोक्तात् समाननामरूपत्वादेव न कश्चिद्विरोधः । तथा हि—स भगवान् पुरुषोत्तमः प्रलयावसानसमये पूर्वसंस्थानं जगत् स्मरन्, (छा. ६-२-३) "बहु स्याम्" इति संकल्प्य, भोग्यभोक्तृजातं स्वस्मिन् शक्तिमात्रावशेषं प्रलीनं विभज्य, महदादि ब्रह्माण्डं (ण्ड ?) हिरण्यगर्भपर्यन्तं यथापूर्वं सृष्ट्वा, वेदांश्च पूर्वानुपूर्वीविशेषसंस्थितान् आविष्कृत्य हिरण्यगर्भायोपदिश्य, पूर्ववदेव देवाद्याकारजगत्सर्गे तं नियुज्य स्वयमपि तदन्त-

---

प्रलयेऽपि वेदः कुतो न स्यादिति न; शंकनीयम्, वर्णानां महाभूतकार्यत्वात्। महाभूतानामादिः कारणं योऽहङ्कारः तत्परिणामस्य शब्दतन्मात्रस्य लयानन्तरं शब्दसद्भावकथनायोगात् न तदा वर्णाः । तत्र सृष्टौ प्रत्युच्चारणं वर्णा उत्पद्यन्ते इति तार्किकपक्षो वा स्यात्, सृष्ट्यारम्भे वर्ण एकैक उत्पन्नः आप्रलयम-वतिष्ठते, तत्तदुच्चारणभेदेनाभिव्यज्यते परमिति पक्षो वा; न सर्वथा प्रलये वर्णसद्भावः । वर्णव्यक्तिभेदपक्षे सृष्टिकाले वर्णानां प्रवाहानादिता, वर्णैक्यपक्षे स्वरूपेण स्थिरतेत्येतावानेव विशेषः । सर्वथा वेदान्तिमते प्रलये वर्णविनाशात् कथं वेदस्य नित्यता, कथञ्च तत्पूर्विका सृष्टिरिति । अभ्युपगमेऽपीति; विग्रहान-भ्युपगन्तृमीमांसकपक्ष इव अभ्युपगमपक्षेऽपीत्यर्थः । प्रवाहानादितानाश्रयणे विग्रहासिद्धिरपीति । प्रवाहानादिता—'न कदाचिदनीदृशं जगत्' इति भूम्यादीनां लोकानाञ्चाविनाशेन व्यवहारस्य नित्यानुवृत्तिः । ननु काममेवमस्तु; प्रकृताधिकरणसाधनीयं देवादेर्विग्रहवत्त्वं तु सिद्धमेवेति चेत्—उच्यते—महाभूतादिसृष्टिप्रलयपरसर्ववाक्ययथाश्रुतार्थत्यागात् वरं देवादिविग्रहप्रतिपादकवाक्यमात्रापातार्थ-त्यागः इति कस्यचित् शङ्का । तथा अयुक्तश्च वेदनित्यत्वस्वीकारः सृष्टिप्रलयस्वीकारविरुद्धत्वात् तस्य । अत एव अतः प्रभवादित्युक्तहेतुरपि भग्न इति पूर्वपक्ष्याशयः ।

आवृत्तौ पुनः प्राकृतसृष्टौ । सूत्रे चकारः प्रथमः अतःप्रभवरूपहेतुसमुच्चायकः; अवधारणार्थो वा; पूर्वोत्तरसर्गगतवस्तुनोः समाननामरूपत्वस्य प्रागेव ज्ञातताप्रदर्शको वा । अयं भावः—प्राकृतसृष्ट्यारम्भेऽपि परमात्मसृष्टेन ब्रह्मणा तदुपदिष्टवेदवाक्यमूलकमेवेन्द्रादिः सृज्यत इति नात.-प्रभवस्य भङ्गः । अथापि चतुर्मुखरूपदेवताविषये स हेतुर्दुर्वचः; परमात्मना सर्वज्ञेन वेदवाक्यविमर्शं विनैव चतुर्मुखत्वौपयिकगुणविभवादेर्ज्ञाततया वेदोपजीवनं विनैव तत्सृष्ट्युपपत्तेः । तावता प्रकृते न कश्चि-द्विरोधः। अतःप्रभवस्य हेतुत्वकथनं हि, इन्द्रादिशब्दाः न व्यक्तिवचनाः, किंतु इन्द्रादिप्रवाहानुवृत्तेन्द्रत्वादि-रूपसामान्यवचना इति ज्ञापनार्थम् । तदिदं समाननामरूपकत्वं चतुर्मुखशतमखादौ सर्वलाक्षतमिति स एव हेतुर्विवक्षितः। स एव हि हेतुः वेदस्यार्थशून्यत्वमनित्यार्थसंयोगञ्च वारयति; 'इन्द्रो वज्रमुदयच्छत्' इत्यादि-भूतकालनिर्देशस्य पूर्वपूर्वेन्द्रादिक्रियाग्रहणेन निर्वहणाच्च वेदनित्यत्वस्याप्यभङ्गं दर्शयतीति । तदन्तरात्म-

हात्मतयाऽवतस्थे । अतो यथोक्तं सर्वमुपपन्नम् ।

एतदेव च वेदस्यापौरुषेयत्वं नित्यत्वं च, यत्—पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्य[माण]त्वम्; तदस्मासु सर्वेश्वरेऽपि समानम् । इयांस्तु विशेषः—संस्कारानपेक्षमेव स्वयमेवानुसंधत्ते पुरुषोत्तमः ।

---

तयाऽवतस्थे इति भाषणम् क्वचिदीश्वरेणैव सर्वसृष्टिवचनं ब्रह्मान्तर्यामितया स्थित्वा स्रष्टृत्वपरमिति ज्ञापनार्थम्; इन्द्रत्वाकारानुवृत्त्यन्यथाभावः कदाचिद् ब्रह्मणो भ्रान्तिवशात् स्यादिति संशयपरिहारार्थञ्च ।

नन्वास्तामेतत्—महापुरुषेणाभ्यमूलकग्रहणं विनैव वेदोपदेशात् स्यादयं पौरुषेय एव, प्रलये विनाशाङ्गीकारादनित्यश्चेत्यत्र—नास्माभिस्तार्किकवत् पौरुषेयत्वमिष्यते, नापि मीमांसकमतप्रकारं नित्यत्वमित्याशयेन वेदान्तिमतं दर्शयति **एतदेव चेति** । **एतत्—यदि**त्यादिना वक्ष्यमाणम् । **एव**कारः परोक्तप्रकारव्यवच्छेदार्थः । **च**कारः स्वाभिमतस्य तदभिमतत्वप्रकाशनार्थः । तथाहि—न तावत् पुरुषोच्चारितत्वमात्रं पौरुषेयत्वम् । अद्यतनशिष्याध्यापकाद्युच्चारणमादायापि वेदस्य पौरुषेयत्वापत्तेः । अत. पुरुषसंकल्पाधीनापूर्वक्रमविशिष्टोच्चारणविषयत्वं पौरुषेयत्वम् । इदं वेदेऽस्तीत्यत्र न प्रमाणम्; ईश्वरस्य पूर्वसृष्टिप्रचरितवेदोपस्थितौ सत्यां तं विहायापूर्वनिर्माणमेव तेन क्रियत इत्यत्र प्रमाणाभावात् । पुण्यपापानुरूपफलप्रदेनेश्वरेणाव्यवस्थया पुण्यस्य कदाचित् पापत्वं पापस्य कदाचित् पुण्यत्वञ्च परिकल्प्य लोकक्षोभो नैव क्रियत इति हि तत्तत्पुण्यपापविशेषहेतुकर्मकरणप्रकारोऽप्येकरूप एव सर्वदा भवितुमर्हति । अतः अङ्गान्तराणामिव मन्त्राणामपि अङ्गभूतानामानुपूर्व्यैकत्वे स्थिते, तद्वदेव ब्राह्मणभागस्यापि समानानुपूर्वीकत्वमेव लाघवादिति पर्यालोच्यते । अत ईश्वरकृतः प्रतिसर्गारम्भमुपदेशः पूर्वक्रमविशिष्टोच्चारणरूप एवेति न पौरुषेयतेति । तथा मीमांसकसंमतं वर्णनित्यत्वं पदनित्यत्वं वा यदि वेदनित्यत्वसाधकम्, तदा रघुवंशादेरप्यपौरुषेयत्वप्रसंगः; वैदिकलौकिकपदैक्यस्य प्रामाणिकत्वात् । आनुपूर्वीनित्यत्वमिति चेत्—नित्यानां विभूनां वर्णानां तन्मते सर्वकालसर्वदेशस्थतया कालकृतं देशकृतं वा न ह्यानुपूर्व्यमस्ति; किं तु तदुच्चारणानुपूर्व्यमेव वक्तव्यम् । उच्चारणक्रिया च भिन्नभिन्नेति कथं तन्नित्यता? अतः पूर्वोच्चारणोत्तरोच्चारणयोः साजात्यमेव वाच्यम् । तदिदं वर्णादीनामनित्यत्वपक्षेऽपि घटते इति किं तन्नित्यत्वसमर्थनव्यसनेनेति । **क्रमजनितसंस्कारेणे**ति; क्रमज्ञानजन्यसंस्कारेणेत्यर्थः । **तमेवे**त्येवकारस्य स्मृत्वैवेत्यन्वयः । **तेनैव क्रमेणे**ति । तत्सजातीयेन क्रमेणेत्यर्थः । पूर्वोच्चारणक्रमज्ञानाधीनसंस्कारजन्यस्मृतिमात्राधीन-पूर्वक्रमसजातीयक्रमविशिष्टोच्चारणविषयत्वमित्युक्तं भवति । अत्र स्मृतेः पूर्वानुभवजन्यसंस्कारजन्यतायाः सिद्धत्वात् तन्निवेशस्यानावश्यकत्वेऽपि तत्कथनं नात्र स्मृतिप्रमोषः, सर्वांशस्मरणस्यानुभवसिद्धत्वादित्यावेदनाय । संस्कारजन्यत्वपर्यन्तस्य निवेशस्त्याज्यश्च । निवेशे ईश्वरोच्चारणमादाय समन्वयायोगात् । वक्ष्यति हि **संस्कारानपेक्षमेवे**त्यादि । संस्काराधीनस्मरणमूलकोच्चारणस्येश्वरेऽभावात् कथं **समान**मित्युच्यत इत्याशंकां परिहर्तुं हि **इयांस्त्वि**ति । एवञ्च **तदस्मासु** इत्यत्र **तदि**त्यस्य पूर्वक्रमज्ञानपूर्वकत्वनियततादृशक्रमविशिष्टोच्चारणविषयत्वमित्येतावानेवार्थ इति भावः । **अनुसंधत्त** इति । अनुसंधानञ्चेदं न स्मरणम्;

कुत इदं यथोक्तमवगम्यत इति चेत्, तत्राह—दर्शनात् स्मृतेश्च । दर्शनं तावत्, (श्वे. ६-१८) "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति । स्मृतिरपि मानवी, (मनु. ५-८-८, ९) 'आसीदिदं तमोभूतम्" इत्यारभ्य, "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमपा(वा)सृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति । तथा पौराणिकी, (नारसिं. ३-१) "तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत । तस्मिन् पद्मे महाभाग! वेदवेदाङ्गपारगः । ब्रह्मोत्पन्नः, स तेनोक्तः, प्रजाः सृज महामते ।", तथा, (वराह. पु. १०) "परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः" इति । तथा (वराह पु. २) "आदिसर्गमहं वक्ष्ये" इत्यारभ्योच्यते—"सृष्ट्वा नारं तोयमन्तस्स्थितोऽहं येन स्यान्मे नाम नारायणेति । कल्पेकल्पे तत्र शयामि भूयः सुप्तस्य मे नाभिजं स्यात् यथाऽब्जम् ॥ एवंभूतस्य मे देवि नाभिपद्मे चतुर्मुखः । उत्पन्नः; स मया चोक्तः प्रजाः सृज महामते" इति ॥

अतो देवादीनामप्यर्थित्वसामर्थ्ययोगाद् ब्रह्मविद्यायामधिकारोऽस्तीति सिद्धम् ॥२६॥

इति देवताधिकरणम् ॥ ७ ॥

---

नित्यप्रत्यक्षरूपेश्वरज्ञाने स्मरणत्वस्य दुर्वचत्वात् । किंतु स्वपूर्वकालावच्छिन्नग्रहणविषयविषयकोत्तरकालावच्छिन्नग्रहणमात्रम् । स्वपदं कालपरम् । उत्तरेति स्पाष्ट्यायोक्तम् ।

नन्वपौरुषेयत्वं पौरुषेयत्वाभावः; नित्यत्वमुत्पत्तिविनाशाभावः । एतदुभयं मिथो भिन्नम् । एतदुभयभिन्नञ्च उच्चारणविषयत्वम् । तत् कथं त्रयाणामैक्यभाषणमिति चेत्—भावान्ताराभाववादे शोधने सर्वमेकीभवतीत्याशयात् । तथा हि—पौरुषेयत्वं पुरुषसंकल्पाधीनापूर्वक्रमविशिष्टोच्चारणविषयत्वम् । तदभावोऽपौरुषेयत्वम् । क्रमस्यापूर्वत्वञ्च पूर्वक्लृप्तक्रमोऽयमिति ज्ञानानधीनत्वम् । द्वयोः पुरुषयोः समानानुपूर्वीकप्रयोगेऽपि परस्परज्ञानाभावे तयोः स्वातन्त्र्यं ह्यावश्यकम् । अत्र पूर्वक्लृप्तक्रमत्वज्ञानानधीनक्रमविशिष्टोच्चारणविषयत्वाभाव इति नञर्थद्वयनिवेशं विनैव पूर्वोच्चारणक्रमज्ञानमूलकताद्दशक्रमविशिष्टोच्चारणकर्मत्वमपौरुषेयत्वमित्युक्तौ रघुवंशादेर्द्वितीयोच्चारणमादाय तस्याप्यपौरुषेयत्वापत्तिरिति नञर्थद्वयनिवेशः । इदमत्र भाष्ये तमेवेति एवकारेण दर्शितम्; तस्य स्मृतवेत्यत्रान्वयस्वीकारात् । उच्चारणविषयत्वाभावस्य घटपटादावपि सत्त्वात् तदपौरुषेयत्ववारणाय पूर्वक्रमस्मरणमात्राधीनताद्दशक्रमकोच्चारणविषयत्वमपौरुषेयत्वमिति वक्तव्यम् । तच्च स्वकीयक्रमत्वव्यापकपूर्वक्रमसजातीयत्वप्रकारकबुद्धिविषयताकोच्चारणविषयत्वम् । स्वम्—उच्चारणम् । उच्चारणक्रमो वेदीयः सर्वोऽपि पूर्वोच्चारणक्रमसजातीयत्वेन बुद्ध्यमान एवास्तीत्युक्तं भवति । एवं नित्यत्वमित्यत्र प्रकृते अनादित्वस्योपपाद्यमानत्वात् नित्यत्वमादिरहितत्वं कारणरहितत्वं पुरुषरूपकारणाभावोऽपौरुषेयत्वमेवेति त्रयमेकमेवेति ।

कुतइदमिति । इदम् प्रथमेन्द्रादिसृष्टेरपि ब्रह्मणैव वेदमूलकमेव क्रियमाणत्वम्, पूर्वकल्पस्थस्य वेदस्यैव तस्मै सर्वेश्वरेणोपदिश्यमानत्वञ्च । प्रहिणोतीति पदात् वेदस्य पूर्वस्थितत्वसिद्धिः । वीर्यं जीवसमष्टिम् ॥

२५. मध्वधिकरणम् १-३-८ (छा. ३-१)

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ १ । ३ । ३० ॥

ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्तीत्युक्तम्; इदमिदानीं चिन्त्यते—येषूपासनेषु या देवता एवोपास्याः, तेषु तासामधिकारोऽस्ति, न—इति । किं प्राप्तम्? नास्त्यधिकारस्तेषु मध्वादिष्विति जैमिनिर्मन्यते । कुतः? असंभवात्—न ह्यादित्यवस्वादिभिरुपास्याः आदित्यव-

---

देवादीनां विग्रहादिमत्त्वादर्थित्वादिसंभवाद् ब्रह्मविद्यायामधिकारोऽस्तीति पूर्वाधिकरणेन स्थापितम् । अथ क्वचित् न भवतीति विशेषाक्षेपः । ननु क्वचिदिति का विद्या गृह्यते? मधुविद्यादिरिति चेत्—तस्याः ब्रह्मविद्यात्वं पूर्वपक्षीष्टं वा न वा । आद्ये, ब्रह्मण उपास्यत्वाराध्यत्वावगतौ अनधिकारशंका न भवति । अन्त्ये, ब्रह्मविद्याधिकारस्यैव प्रसक्तत्वादन्यत्र तत्सत्त्वासत्त्वविचार इह न युक्तः । अस्तु तर्हि ब्रह्मविद्यात्वेऽपि मधुविद्यादौ नाधिकार इत्येव पूर्वपक्ष इति चेन्न—तथा भाष्येऽधिकरणरचनाया अभावात् । ब्रह्मविद्यात्वे हि सति प्रतर्दनविद्याऽथर्वशिरोविद्यादौ इन्द्ररुद्रादिना ब्रह्मविशेषणतया स्वोपासनवत्, सद्विद्यादिष्वपि अहं ब्रह्मास्मीति स्वशरीरकब्रह्मोपसनवच्च वस्वादेना मधुविद्यानुष्ठानसंभवात् विचार एव न भवति । ब्रह्मविद्यात्वस्थापनमेव यद्यधिकरणकृत्यम्, तर्हि आनन्दमयाद्यधिकरणेष्विव, 'मध्वादित्यादिः संभवात्' इत्येव सूत्रयितव्यम् । तेन ब्रह्मविद्यात्वे स्थापिते प्रतर्दनविद्यादिष्विव देवाधिकारस्य सिद्धेः । अतोऽत्र **अनधिकार**मिति अधिकारतदभावचिन्ता कथमिति चेत्—उच्यते—पूर्वपक्षे मधुविद्यादेरब्रह्मविद्यात्वेऽपि सिद्धान्ते ब्रह्मविद्यात्वात्, 'पूर्वं ब्रह्मविद्यायामधिकारः सामान्येनोक्तः; अथ ब्रह्मविद्याविशेषेऽपि तत्स्थापनं क्रियत' इत्युक्तेर्नासंगतत्वम् । 'मध्वादित्यादिः संभवात्' इति यद्यपि सूत्रयितुं शक्यम्—अथापि तथा सूत्रणस्याधिकारप्रस्तावे इहायोगात् अन्यत्रैव तथा कार्यम् । तदपेक्षया, "न देवता देवतान्तराभावात्" इति जैमिन्युक्तांशपरीक्षणमर्थात् कृतं भवतीति अनधिकारपूर्वपक्षेणाधिकरणरचना । अनेन—पूर्वाधिकरणे देवानां विग्रहाद्यभावप्रयुक्तानधिकारपूर्वपक्षः न साक्षाज्जैमिनिकृतः; किंतु तदनुयाय्यर्वाग्जनकृत इति ज्ञापितं भवति । तदत्राब्रह्मविद्यात्वात् स्वस्य स्वोपास्यत्व-स्वाराध्यत्व-स्वसंप्रदानकफलप्रदानानामसंभवात् अब्रह्मात्मकस्वविषयकोपासने देवतानामनधिकार इति पूर्वपक्षः । ब्रह्मविद्यात्वात् ब्रह्मणि स्वाराध्यत्वादिसंभवादधिकारभाव इति सिद्धान्तः । ननु स्वस्य स्वोपास्यत्वं कुतो न? स्वात्मोपासनस्येष्टत्वादिति चेन्न—उपासनस्योत्कृष्टवस्तुविषयकत्वात् देहविशिष्टेन निकृष्टेन शुद्धस्वस्वरूपात्मकोत्कृष्टवस्तूपासनं तत्र क्रियते; अत्र तु वस्वादिना वस्वादिविग्रहविशिष्टोपासनमेव कार्यमिति वैषम्यात् । न च ब्रह्मविद्यात्वेऽपि वस्वादिना वस्वादिपदप्राप्तिरूपफलस्य लब्धत्वात् तदर्थित्वाभावात् अनधिकार इत्येव पूर्वपक्षोऽस्तु इति वाच्यम्—अब्रह्मविद्यात्वे सत्येव तदंशस्यापि पूर्वपक्षे घटनसंभवात् । ब्रह्मविद्यात्वे हि आराध्याद् ब्रह्मणः प्राप्तचरस्यापि फलस्य सजातीयस्य प्राप्तीच्छयाऽधिकारः सुवचः । अब्रह्मविद्यात्वे तु वस्वादिमात्रोपासनरूपत्वात् देवतोपासनानामुपासितदेवतानुग्रहलभ्यफलकत्वस्य प्राक् सिद्धतया तदनुग्रहार्हाधिकारिविषयकत्वयैवोपासनविधिचारितार्थ्यात् स्वोपासनमूलस्वप्राप्तफलप्राप्तीच्छा न भवतीति ना-

स्वादयोऽन्ये संभवन्ति । न च वस्वादीनां सतां वस्वादित्वं प्राप्यं भवति; प्राप्तत्वात् ।

मधुविद्यायाम्-ऋग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यस्य रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्धमधुव्यपदेशस्यादित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वं वस्वादित्वं च प्राप्यं श्रूयते, (छा. ३-१-१) "असौ वा आदित्यो देवमधु" इत्युपक्रम्य, (छा. ३-६-१) तद् यत् प्रथमममृतं तद् वसव उपजीवन्ति" इत्युक्त्वा, स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति" इत्यादिना ॥ ३० ॥

ज्योतिषि भावाच्च ॥ १ । ३ । ३१ ॥

(बृ. ६-४.१६) "तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषि परस्मिन्

---

धिकारप्रसक्तिरिति। एवं पूर्वपक्षे कृते मोक्षरूपफलस्याप्यलोच्यमानतया तस्य ब्रह्मोपासनमन्तरेणायोगात् ब्रह्मविषयकमुपासनमिति आन्तरालिकफलस्यापि तन्मूलकप्राप्तीच्छया सामग्र्येणाधिकारः स्थाप्यत इति निष्कर्षः। **अन्ये संभवन्तीति**। पूर्वकल्पस्थितवस्वादीनां नष्टत्वेनाराध्यत्वायोगात्, देवतोपासनानां देवताराधनरूपत्वस्यावश्यकत्वादिति भावः। **वस्वादित्वमिति**। मधुविद्यानिष्ठस्य क्रमेण वसुरुद्रादित्यादिपदप्राप्तिरलोच्यते। न चैकस्मिन् कल्प एव वसुभूतस्य रुद्रपदप्राप्तिरस्ति। उपास्याश्च वस्वादयः। न च वसुरेव वसुपदं दातुं प्रभवति। अतो वस्वादिसायुज्यमेवात्र विवक्षितम्। वसुश्च स्वसायुज्यमुपासकाय ददाति। तदत्र वसोरेव सतः वस्वादिसर्वसायुज्यापेक्षिणोऽपि कथं स्वस्मात् तल्लाभ इति भावः।

तेषामुपास्यत्वं तत्प्राप्तिःफलत्वञ्च प्रकृतमधुविद्याप्रपञ्चकार्थप्रदर्शनेनोपपादयति **मध्विति**। आदित्यस्य मधुत्वं तद्रश्मीनां मधुनाडीत्वं वेदानां पुष्पत्वं वेदमन्त्राणां भ्रमरत्वं वेदविध्यन्वितद्रव्याणां पुष्परसत्वञ्च तत्र रूपितम्। 'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते' इति हूयमानद्रव्याणां रश्मिद्वारा सूर्यप्राप्तिरपि प्रमाणसिद्धा। तदत्र मधुकराः पुष्पेभ्यो रसं मधुनाडीद्वारा मधुनि यथा निक्षिपन्ति, तथा वैदिकमन्त्राः वेदाख्यपुष्पगतं तत्तत्कर्मान्विताहुतिद्रव्यात्मकरसं रश्मिद्वारा नीत्वा आदित्ये निक्षिपन्ति। एवमृग्यजुस्सामाथर्व-ब्रह्मभागात्मकपुष्पगतरसाः यशइन्द्रियादिफलरूपेण परिणताः ऋग्यजुस्सामाथर्वमन्त्र-आदेशात्मकभ्रमरनीताः आदित्यस्य प्राग्दक्षिणप्रत्यगुत्तरोर्ध्वभागेषु पञ्चसु रोहित—शुक्ल-कृष्ण-अतिशयितकृष्ण-प्रस्फुरद्भागरूपपञ्चांशात्मनाऽवतिष्ठन्ते। तेषां यथाक्रमं वसुरुद्रादित्यमरुत्साध्याः यथावसरं दर्शनात्मकभोगभाज.। एवं वस्वादिभोग्यतयाऽऽदित्यमधूपासकानां वस्वादित्वप्राप्तिपूर्वकतादृशानुभवः फलमिति तत्रोक्तम्। इह गहनमुपनिषद्वाक्यार्थतत्त्वं विशदं **परिष्कार** एव द्रष्टव्यम्। सूत्रार्थस्तु मधुविद्यादिषु वस्वादीनां वस्वाद्युपासकत्वाराधकत्वानुप्राह्यत्वासंभवात् अनधिकारं जैमिनिर्मन्यते, "न देवता देवतान्तराभावात्" इति तदुक्तेरिति ॥ ३० ॥

मधुविद्याया अब्रह्मविद्यात्वं पूर्वपक्षीष्टमित्येतद् विशदयितुं पूर्वपक्षसूत्रान्तरम् **ज्योतिषीति**। **ज्योतिः** परं ब्रह्म। तद्विषय एवोपासनभावात्। देवा एव ज्योतिरुपासते, देवा ज्योतिरेवोपासते, देवाः ज्योतिरुपासत एवेत्यर्थत्रयं तंदेवा इति वाक्यस्य संभावितम्। तत्र प्रथमो न युक्तः; मनुष्याणामप्युपास-

ब्रह्मणि उपासनं देवानां श्रूयते । देवमनुष्योभयसाधारणे परब्रह्मोपासने देवानामुपासकत्व-कथनं देवानामितरोपासननिवृत्तिं द्योतयति । अत एषु वस्वादीनामनधिकारः ॥ ३१ ॥

इति प्राप्तेऽभिधीयते—

भावं तु बादरायणः; अस्ति हि ॥ १ । ३ । ३२ ॥

आदित्यवस्वादीनामपि तेष्वधिकारभावं भगवान् बादरायणो मन्यते । अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्वप्राप्तिपूर्वकब्रह्मप्रेप्सासंभवः । इदानीं वस्वादीनामपि सतां कल्पान्तरेऽपि वस्वादित्वप्राप्तिश्चापेक्षिता भवति। अत्र हि कार्यकारणोभयावस्थब्रह्मोपासनं विधीयते, "असौ वा आदित्यो देवमधु" इत्यारभ्य, (छा. ३-११-१) "अथ तत ऊर्ध्व उदेत्य" इत्यतः प्राक् आदित्यवस्वादिकार्यविशेषावस्थं ब्रह्म उपास्यमुपदिश्यते; "अथ तत ऊर्ध्व उदेत्य" इत्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव

---

कत्वात् । तृतीयोऽपि न; अनुपासकानामपि देवानां सत्त्वात् । अतो मध्यम एवार्थ इति ब्रह्मेतरानुपासकत्वसिद्ध्या अत्राब्रह्मविद्यायामनधिकार एवेत्यर्थः । ननु एतद्विद्यान्ते, 'मा विराधिषि ब्रह्मणा' 'सकृद्दिवा हैवास्मै भवति, य एतामेवं ब्रह्मोपनिषदं वेद' इति एतदुपासकस्य ब्रह्मप्रियत्व-ज्ञानाविर्भावयोः, एतद्विद्याया ब्रह्मविद्यात्वस्य च श्रवणे सति कथमब्रह्मविद्येति पूर्वपक्षः । अतः प्रतर्दनविद्यादितुल्यत्वाद्विद्यात्वमेवेति चेत्—उच्यते-तद्वाक्यस्यार्थान्तरपरत्वं पूर्वपक्षी मन्यते ॥ कथम् । इत्थम् ॥ अत्र ब्रह्मशब्दो वेदपरः । तदयमर्थः वस्वादिप्राप्तिफलबोधनानन्तरं श्रूयमाणस्य, 'अथततऊर्ध्व' इति वाक्यस्य—लोके सूर्यस्योदयास्तमयव्यवहारे क्रियमाणेऽपि वस्तुगत्या नोदयः, नास्तमयः; यद्देशावच्छेदेनोदितत्वप्रतीतिः, तद्देशे स्थितैस्तस्योक्तत्वेनानुभूयमानत्वात् । अत उदयास्तमयरहित एव सूर्यः । एवं तत्त्वग्रहे सत्येव ब्रह्मणा वेदेनास्मदाशयस्याविरोधः स्यात् । एवं यो वेदगुह्यं जानाति, तस्य सूर्यो नोदेति नास्तमेति । उदयास्तमयबुद्धिं स तत्त्ववित्र भजत इति । एष एवार्थः श्रीविष्णुपुराणे उपबृंहितः, "दिवसस्य रविर्मध्ये सर्वकालं व्यवस्थितः । नैवास्तमनमर्कस्य नोदयः सर्वदा सतः" इति । एवमधिकाशङ्कया प्रवृत्तः पूर्वपक्ष इति ध्येयम् ॥ ३१ ॥

स्वावस्थेति; वस्वादिशरीरकेत्यर्थः । ब्रह्मप्राप्तिरूपफलस्य, विद्यायाः ब्रह्मोपनिषत्त्वस्य च श्रवणात् उपासनस्य ब्रह्मविषयकत्वमावश्यकम् । तत्र वस्वादिभुज्यमानमधुरूप आदित्य इति वा आदित्यरूपमधुभोक्तारो वस्वादय इति वोपासनसंभवात् अविशेषात् 'आदित्यः', 'वसव' इत्युभये ब्रह्मात्मकत्वेनोपास्यन्त इति भावः । प्राप्तिपूर्वकेत्येतत् ब्रह्मप्रेप्सेत्यत्र सन्प्रकृत्यर्थप्राप्तिक्रियाविशेषणम् । ब्रह्मप्राप्तिरूपफलविवक्षायां प्रमाणं दर्शयति अत्र हीति । तत्फलाविवक्षायां कारणावस्थब्रह्मोपासनविधानं व्यर्थम्, तस्यांशस्य कार्यवस्वादिप्राप्तावनुपयोगादिति भावः । कारणावस्थमेवेति । अत्रादित्यरूपकार्यावस्थब्रह्मोपासनवत् पूर्वं वस्वादिकार्यावस्थब्रह्मोपासनस्य भाष्ये उक्तत्वेऽपि आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेवेति भाष्यस्वारस्यात् आदित्यविषय एव कारणवस्थोपासनं ज्ञायते । अतः, 'तत ऊर्ध्व' इति श्रुतौ आदित्यमात्रविषयकत्वं प्रतीतमुपपन्नम् । टीकायां तु वस्वादिविषयेपि कारणावस्थोपासनमिष्टमिव । कारणावस्थमित्यत्र च

ब्रह्म उपास्यमुपदिश्यते । तदेवं कार्यकारणोभयावस्थं ब्रह्मोपासीनः कल्पान्तरे वस्वादित्वं प्राप्य तदन्ते कारणं परं ब्रह्मैवाप्नोति । (छा. ३-११-३) "न ह वा अस्मा उदेति, न निम्रोचति ; सकृद्दिवा हैवास्मै भवति, य एतामेवं ब्रह्मोपनिषदं वेद" इति कृत्स्नायाः मधुविद्यायाः ब्रह्मोपनिषत्त्वश्रवणाद् ब्रह्मप्राप्तिपर्यन्तवस्वादित्वफलस्य श्रवणाच्च वस्वादिभोग्य-भूतादित्यांशस्य विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते । अत एवंविधमुपासन-मादित्यवस्वादीनामपि संभवति । एवञ्च ब्रह्मण एवोपास्यत्वात्, (बृ. ६-४-१६) "तं देवा ज्योतिषां ज्योतिः" इत्यपि उपपद्यते । तदाह वृत्तिकारः, "अस्ति हि मध्वादिषु संभवः ; ब्रह्मण एव सर्वत्र निचाय्यत्वात्" इति ॥ ३२ ॥ इति मध्वधिकरणम् ॥ ८ ॥

---

आदित्यस्य कारणदशा आदित्यरूपेण सृष्टेः पूर्वस्थिता सूक्ष्मजीवदशा विवक्षिता **टीकायाम्** । 'ऊर्ध्वः' इति श्रुत्यनुसारात् आदित्यभावपश्चाद्भावि-तदीयमुक्त्यवस्था **उपनिषद्भाष्याद्य**भिमता । स्वाप्ययसूत्र-**टीकायाम्**, "कारणावस्थत्वं........महाप्रलये मुक्तौ च समानम्" इत्युक्तत्वात् मुक्त्यवस्थैव टीकाया-मप्यभिमता स्यात् । अत्रेदं बोध्यम्-'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता ; एकल एव मध्ये स्थाता' इति श्रुतिवाक्यम् । अस्यात्र विवक्षितोऽर्थ एवम्—आदित्यः स्वदशायामुदयास्तमयकार्यनिर्वर्तको भूत्वा **ऊर्ध्वः** पश्चात्कालावच्छिन्नः **उदेत्य** कार्यदशातो निष्क्रम्य उदयास्तमयौ न करोति । एकाकार एव सर्वबन्धमुक्तो वर्तत इति । एवमुपासकविषयताऽपि भवितुमर्हति । पूर्वम् अभिसंविशति उदेतीति उपा-सकगतोदयास्तमययोरुक्तत्वात् उपासकः वस्वादिर्भूत्वा फलानुभवं विधायाथ ऊर्ध्वं उदेत्य पूर्वोक्तोदयास्त-मयरहितो भवतीति । एवं सति इदं वाक्यं मुक्तिरूपफलपरं स्यात् । परं तत् पश्चात् कथयिष्यत इति अत्र न विवक्ष्यत इव । तथापि पूर्वपक्षिणा विष्णुपुराणानुसारेणोक्तोऽर्थः कस्मान्न स्वीक्रियत इति चेत्—पूर्वोपात्तश्लोकापेक्षया श्लोकान्तरस्य तत्र स्थितस्य, "नोदेता नास्तमेता च कदाचिच्छक्तिरूपधृत् । विष्णु-र्विष्णोः पृथक् तस्य गणः सप्तविधोऽप्ययम्" इत्यस्य श्रुतिगतपदघटितत्वेनैतत्प्रत्यभिज्ञानादुपबृंहणत्वं श्रेयः इति । तथाचायं श्रुत्यर्थः—आदित्यान्तर्गतो विष्णुः कार्यावस्थः ऊर्ध्वं उदेत्य उपरि परमपदे परवासुदेव-रूपेण प्राकृतकार्याव्यापृततया स्थितः उदयास्तमयरहित इति । एवञ्च भाष्ये **कार्यावस्थ**मिति आदित्यमण्ड-लान्तर्गतविष्णुरूपग्रहणम् ; **ऊर्ध्व** इति वाक्ये तत्कारणभूतवासुदेवरूपग्रहणमिति सुवचम् । एव-मुपबृंहणानुसारेणैवाधिकाशङ्कापरिहारात् सिद्धं ब्रह्मविद्यात्वम् । ब्रह्मशब्दश्च स्वरसात् सत्यपदसामानाधि-करण्याच्च परब्रह्मपर एवेति न पूर्वपक्ष्युक्तार्थप्रसक्तिरिति । **कार्यकारणोभयावस्थं** ब्रह्मेत्यादि सर्वं भाष्य-मेवमर्थस्वीकारेऽपि न विरुध्यते । **आदित्यांशस्ये**ति आदित्यीयप्राग्दक्षिणादिभागस्येत्यर्थः । **नहवा** इति । **अस्मै** उपासकाय सूर्यो नोदेति नास्तमेति । अहरादिकालपरिच्छेदो मुक्तस्य नास्ति । **सकृद्दिवा भवति** मुक्ते ज्ञानप्रकाशस्याविर्भूतस्य नैव भङ्ग इत्यर्थः ॥ **शांकरादिभाष्यं वृत्तिविरुद्ध**मिति दर्शयितुमाह **तदाहे**ति । शांकरे मध्वधिकरणं न पृथक् । देवताधिकरणमेकमेव सर्वम् । मधुविद्यादावेवानधिकारस्य सूत्रनिर्दिष्टत्वेऽपि तत्रैव सर्वत्रानधिकारः विग्रहाद्यभावादित्येव जैमिनिरिति—**ज्योतिषि भावादित्यत्र**

२६. अपशूद्राधिकरणम् १-३-९. (छा. ४)

## शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ १ । ३ । ३३ ॥

ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति, न वेति विचार्यते । किं युक्तम्? अस्तीति । कुतः? अर्थित्वसामर्थ्यप्रयुक्तत्वादधिकारस्य, शूद्रस्यापि तत्संभवात् । यद्यप्यग्निविद्यासाध्येषु

ज्योतिःपदं मण्डलपरम् । अचेतने मण्डलेऽपि आदित्यादिपदप्रयोगात् चेतन एवादित्य इत्यत्र न प्रमाणमिति—**भावं तु** इति सूत्रेण देवानां विग्रहादिमत्त्वाधिकारित्वादिस्थापनेनेति च तदुक्तम् । सर्वमिदं सूत्रस्वारस्यविरुद्धं पुनरुक्तञ्च । मधुविद्यायां देवानामनधिकार एव सिद्धान्तोऽपि शाङ्करेष्टः । स च वृत्तिविरुद्धः । न केवलमेतावत् । **शांकरोपनिषद्भाष्ये** 'अथ तत ऊर्ध्वं' इत्यादिवाक्यजातं मधुविद्यानिष्ठस्य मुक्त्याविर्भावपरमेव व्याख्यातम् । **आनन्दगिरिणा** च, "क्रमेण मुक्तिफलपर्यवसायित्वं तस्या दर्शयितुमनन्तरवाक्यमवरूथ्याह" इत्यवतारितम् । **ब्रह्मणा** इत्यस्य शुद्धब्रह्मपरत्वमेवाभिमतम् । परन्तु तन्मते वस्वादिप्राप्तिरूपमिथ्याफल मुख्यमुक्तिरूपसत्यफलयोरेकविद्यासंपाद्यत्वायोगात् अन्यादृशक्रममुक्तिरिष्टा । अतस्तदनुसारेण **ब्रह्मोपनिषद**मित्यस्य उभयविद्यासाधारण्याय वेदगुह्यमित्यर्थो वर्णनीय आसीत् । तथाच ब्रह्मशब्दयोरैकार्थ्याभावोऽपि दोषः । तथा सर्वमिदं वृत्तिविरुद्धम्, मधुविद्यारूपोपासनस्य मुक्त्यर्थब्रह्मोपासनरूपताया एव तत्र स्पष्टं कीर्तनादिति ॥

नन्वेवमधिकरणद्वयेन देवताधिकारनिर्णयस्य क्रियमाणस्य किं फलम्; अस्मदीयप्रवृत्तौ एतदनुपयोगात् । देवताकर्तृकोपासनप्रवृत्तेः स्वतस्सिद्धतयाऽधिकरणानपेक्षणादिति चेत्—सर्वदेवतास्रष्टृत्वतदुपास्यत्वतदनुग्राहकत्वादिरूपब्रह्मगतबृहत्त्वसिद्धिः फलम् । इन्द्राद्यन्तर्यामितयोपासनानां विधीयमानानां विषयतत्त्वनिर्णयः, तद्विषयासत्यत्वे तथोपासनविधावप्यर्थवादत्वधीमूलानाश्वासस्य निवृत्तिरित्यादि भाव्यम् ॥ ३२ ॥

**मनुष्याधिकारत्वा**दित्यत्र मनुष्यशब्दस्येतरोपलक्षकत्वमुक्तम्; संकुचितत्वमप्यावश्यकमिति ज्ञाप्यते । अध्ययनं विना प्रकारान्तरप्राप्तं ज्ञानं यदि देवानामधिकारसंपादकम्, शूद्राणामपि तथा स्यादिति पूर्वपक्षोत्थानम् । अत्र संवर्गविद्यागतशूद्रशब्दार्थशोधनस्यैव सूत्रे क्रियमाणतया तद्विद्यामात्रे शूद्राधिकार एव पूर्वपक्षयितव्यः; न तु पूर्वतन्त्रसिद्धस्यानधिकारस्य सामान्येनाक्षेप इति न मन्तव्यम्—अधिकरणान्ते सामान्यतःशूद्रानधिकारसाधकप्रमाणानामपि सूत्रैरुपन्यासात् सामान्यतः पूर्वपक्षस्यैव सूत्रकृदिष्टत्वादित्याशयेन विचाराकारं दर्शयति **ब्रह्मविद्याया**मिति । पूर्वतन्त्रे, "अपिवा वेदनिर्देशादपशूद्राणां प्रतीयेत" इति अपशूद्राणामेवाधिकारसमर्थनात् कथमेवमित्यत्र तदनूद्य निरसनेनाधिकाशंकां व्युत्पादयति **यद्यपी**त्यादिना । **अग्निः** आहवनीयादिराधानजनितः; **विद्या** अध्ययनजन्यमर्थज्ञानम् । **अनग्निविद्यत्वा**दिति । 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिभिः शूद्रातिरिक्तान् प्रत्येवाधानविधानात्, 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिना त्रैवर्णिकानामेवोपनयनं विधाय, तमध्यापयेदिति तेषामेवाध्ययने विनियोगाच्चेति भावः । **यद्यपी**त्यनेन कर्मस्वधिकारोप्याशंकितुं शक्यत इति सूच्यते—यस्य हि आहवनीयादिवैदिका-

कर्मसु अनग्निविद्यत्वात् शूद्रस्यानधिकारः—तथापि मनोवृत्तिमात्रत्वाद्ब्रह्मोपासनस्य, तत्राधिकारोऽस्त्येव। शास्त्रीयक्रियापेक्षत्वेऽप्युपासनस्य, तत्तद्वर्णाश्रमोचितक्रियाया एवापेक्षितत्वात् शूद्रस्यापि स्ववर्णोचितपूर्ववर्णशुश्रूषैव क्रिया भविष्यति। (तै. का. ७-१-१) "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इत्यपि, अग्निविद्यासाध्ययज्ञादिकर्मानधिकार एव न्यायसिद्धोऽनूद्यते।

ननु अनधीतवेदस्याश्रुतवेदान्तस्य ब्रह्मस्वरूपतदुपासनप्रकारानभिज्ञस्य कथं ब्रह्मोपासनं संभवति? उच्यते—अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापि इतिहासपुराणश्रवणेनापि

---

वैदिकोभयविधाग्निप्रसक्तिः, तद्विषये, 'यदाहवनीये जुहोति' इति वाक्येन वैदिको नियम्यताम्। यस्य खल्ववैदिक एवाग्निः,तस्य नाहवनीयादिप्रसक्तिरिति लौकिक एवाग्नौ भवतु कर्म। विद्याविषये तु अध्ययनजन्यार्थज्ञानमात्रस्याङ्गत्वग्राहकवाक्याभावात् ,प्रत्यवायपरिहारार्थं कैश्चिदध्ययने कृते तदधीनज्ञानस्यार्थात् तत्कृतकर्माचरणे उपयोगेऽपि अन्ये प्रकारान्तरलब्धज्ञानेनापि कर्म कर्तुमर्हन्तीति रीत्या शङ्कासंभवात्। **मनोवृत्तिमात्रत्वा**दिति। अग्निसाध्यांशाभावात्, मनोवृत्तेः स्वयं ज्ञानतया ज्ञानरूपविद्यासाध्यत्वाभावाच्चेत्यर्थः। ननु प्रधानांशेऽग्निविद्यानपेक्षायामपि तदङ्गकर्मविषयेऽस्त्येव तदपेक्षेत्यत्राह **शास्त्रीये**ति। युक्तिसिद्धस्योपासने शूद्राधिकारस्योपष्टम्भकं कर्मकाण्डवाक्यमप्यस्तीत्याह **तस्मा**दिति। यद्यपि वाक्यमिदं **तस्मा**दिति हेतूपन्यासात् न यज्ञेऽनधिकारविधायकम्; किंत्वाधानाध्ययनविध्यविषयतया शूद्रस्याग्निविद्याविरहप्रयुक्तस्यानधिकारस्य सिद्धस्यानुवादमात्रम्। अतः कथमुपासनानधिकारवारकं स्यादिति मन्येत-अथापि न्यायप्राप्तानुवादत्वेऽपि अवयुत्यानुवादत्वकल्पने मानाभावात् अत्रत्ययज्ञशब्दः, 'कर्मवारणविषय एव न्यायोऽपि प्रवर्तते, न विद्यावारणविषये' इत्यर्थसूचकः सन् विद्याधिकारज्ञापक इति भावः। एवमभिप्रेत्योक्तम्, **यज्ञादिकर्मानधिकार एव न्यायसिद्ध** इति।

प्रधानमुपासनमपि विद्यासापेक्षमेव, योगादेर्मनोवृत्तिरूपस्यापि ध्येयार्थोपदेशजविद्यापेक्षत्वदर्शनादिति शंकते **नन्वि**ति। **अश्रुतवेदान्तस्य** श्रोतव्यो मन्तव्य इत्युक्तार्थश्रवणरहितस्य। **वाक्यस्या**पीत्यपिना वेदाधायन-वेदान्तार्थश्रवणसंभवोऽपि ज्ञाप्यते। तदेवम्—यज्ञेऽनधिकारः अग्न्यभावादित्युक्तमात्रेयेण; वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिवाक्यैः त्रैवर्णिककर्तृकतयैवाधानस्य विहितत्वादिति तदाशयः। बादरिस्तु ब्राह्मणादिकर्तृकाधाने वसन्तादिकालविधानं तैर्वाक्यैर्मन्यते स्म। तदा, 'य एवं विद्वानग्निमाधत्ते' इति वाक्यमाधानविधायकम्। तदविशेषात् शूद्रमप्यधिकरिष्यति। तत्र जैमिनिनोक्तम्, किमनेन विचारेण; आधानेऽनधिकारोऽपि यज्ञादिष्विवाध्ययनजन्यज्ञानाभावादेवेति। 'अष्टवर्षं ब्राह्मणमुपनयीत', 'तमध्यापयेत्' इति ब्राह्मणादीनामेवोपनयनविधानात् अध्ययने विनियोगाच्चेति तदाशयः। अत्र ब्रूमः-अष्टवर्षादिवाक्यमपि ब्राह्मणादेरुपनयनकालविधायकमेव। अतः 'स्वाध्यायोऽध्येतव्य' इति वाक्यं सर्वार्थेऽध्ययनविधायकम्। अतः कालनियमं विना शूद्रमधिकरिष्यत्यध्ययनविधिः। तथा पठनादिकमपि अर्थज्ञानाय पर्याप्तम्। एवं वेदान्तवाक्यश्रवणमपि युक्तम्—गार्गीमैत्रेयीप्रभृतीनां स्त्रीणामुपासनाधिकारावगमेनोपनयनादेरनपेक्षितत्वावसायादिति। विध्यधीनज्ञानस्यैव विहितानुष्ठाने उपयोग इति पक्षेऽपि स्वेष्टसिद्धिं दर्शयति **इति**-

ब्रह्मस्वरूपतदुपासनज्ञानं संभवति । अस्ति च शूद्रस्यापि इतिहासपुराणश्रवणानुज्ञा, (भा. शा. मो ?) "श्रावयेत् चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः" इत्यादौ । दृश्यन्ते चेतिहासपुराणेषु विदुरादयो ब्रह्मनिष्ठाः । तथोपनिषत्स्वपि संवर्गविद्यायां शूद्रस्यापि ब्रह्मविद्याधिकारः प्रतीयते—शुश्रूषुं हि जानश्रुतिमाचार्यो रैक्वः शूद्रेत्यामन्त्र्य तस्मै ब्रह्मविद्यामुपदिशति, (छा. ४-२-५) "आजहारेमाः शूद्र! अनेनैव मुखेनालापयिष्यथाः" इत्यादिना ।

अतः शूद्रस्याप्यधिकारः संभवति—

इति प्राप्ते उच्यते—न शूद्रस्याधिकारः संभवति, सामर्थ्याभावात् । न हि ब्रह्मस्वरूपतदुपासनप्रकारमजानतः तदङ्गभूतवेदानुवचनयज्ञादिष्वनधिकृतस्य उपासनोपसंहारसामर्थ्यसंभवः । असमर्थस्य चार्थित्वसद्भावेऽप्यधिकारो न संभवति । असामर्थ्यं च वेदाध्ययनाभावात् । यथैव हि त्रैवर्णिकविषयाध्ययनविधिसिद्धस्वाध्यायसंपाद्यज्ञानलाभेन कर्मविषयो

---

द्दासेति । इतिहासादिजन्यज्ञानस्य वैदिकोपासनाङ्गत्वे गमकं दर्शयति तथेति । संवर्गविद्यायामिति । वायुर्वाव संवर्ग इत्यादिनोपदेक्ष्यमाणसंवर्गविद्याशेषभूते पूर्वोपाख्याने इत्यर्थः । आजहार—आजहर्थ । इमाः गाः कन्याश्च । अनेनैव मुखेन पुष्कलधनप्रदानद्वारैव । आलापयिष्यथाः मामुपदेष्टारं करिष्यसे ।

एवं शूद्रस्य सर्वविद्याधिकारपूर्वपक्षे प्राप्ते सूत्रकृत् जैमिन्यपशूद्राधिकरणेनैव सर्वं समाहितमित्याशयमाविष्कर्तुं स्वयमादौ उपनिषदि शूद्राधिकारप्रतीतिशंकापरिहारमालभकरोत् शुगस्येत्यादिना । अतः सूत्रकृदभिप्रेतमधिकाशङ्कापरिहारं पूर्वं प्रदर्श्य पश्चात् सूत्रार्थं वक्ष्यन् आरभते न शूद्रस्येति । सामर्थ्यं त्रिविधम्—ज्ञानं शक्तिः शास्त्रानुमतिश्चेति । तत्र शास्त्रानुमत्यभावे युक्तिर्जैमिनिदर्शिता । प्रमाणमपि दर्शयिष्यति । ज्ञानमपि नेति जैमिन्याशयमनुरुध्याह न हीति । यागादिष्वनधिकृतस्येति कथनम्—येन न्यायेन यज्ञादावनधिकारः, तेनैवोपासनेऽपीति ज्ञापनार्थम् ।

यथैव हीति । अयमर्थः—यज्ञादीनामग्निविद्यासापेक्षत्वेऽपि अग्न्यर्थाधान—विद्यार्थाध्ययनप्रेरकत्वं नास्ति; आधानविधेरध्ययनविधेश्च स्वतन्त्रत्वात्, किञ्चित्प्रकरणावृत्तित्वात् । आधाने शूद्रस्यानधिकारश्च ब्राह्मणादीन् प्रत्येव तद्विधानात्, अध्ययनजन्यज्ञानाभावाच्च । न चाहवनीयाद्यभावेऽप्यन्यत्राहुतिः कर्तुं साम्प्रतम्; विष्णुक्रमाज्यावेक्षणाद्यङ्गवैकल्य इव काम्यस्य नैष्फल्यात् । विष्णुक्रमाद्यसमर्थब्राह्मणादेरिव आहवनीयसंपत्त्यनर्हस्य शूद्रस्याप्यनधिकारस्यैव युक्तत्वात् । न हि, आहवनीये त्रैवर्णिको जुहोतीति वर्णविशेषश्रवणमस्ति । एवं यज्ञानधिकारेऽपि अनग्निसाध्ये कर्मणि कस्मान्नाधिकारः ? उच्यते । विहिताध्ययनजन्यज्ञानस्येवोपायान्तरजन्यज्ञानस्यापि समानविषयकत्वेन अनुष्ठानसिध्यर्थं पुंसां तद्विषयज्ञानोपायं किं स्वयमाक्षिपन्ति=कल्पयन्ति, किं वा सिद्धज्ञानपुरुषग्रहणेन चरितार्थाः विधयः' इति विचारे, आद्यः पक्षो न युक्तः, आक्षेपं विनैव विधिवैयर्थ्यपरिहारे तत्कल्पनानुपपत्तेः । सन्ति च तैरनाक्षेपेऽपि सिद्धज्ञानाः पुरुषाः अध्ययनोपनयनविधिप्रवर्तिताः । ते च लब्धज्ञानकार्याकांक्षाः, विधयश्च ज्ञानाकांक्षा इत्युभयाकांक्षया तन्मेलनम् । ते च त्रैवर्णिका एवेति न शूद्रस्यावसरः । अध्ययनस्य प्रत्यवायपरिहारार्थमेव कृतत्वेऽपि तदधीनार्थ-

ज्ञानतदुपायादीन् अपरान् न स्वीकुर्वन्ति, तथा ब्रह्मोपासनविधयोऽपि। अतोऽध्ययनविधिसिद्धस्वाध्यायाधिगतज्ञानस्यैव ब्रह्मोपासनोपायत्वात् शूद्रस्य ब्रह्मोपासनसामर्थ्यासंभवः।

इतिहासपुराणे अपि वेदोपबृंहणं कुर्वती एवोपायभावमनुभवतः; न स्वातन्त्र्येण। शूद्रस्येतिहासपुराणश्रवणानुज्ञानं पापक्षयादिफलार्थम्; नोपासनार्थम्। विदुरादयस्तु भवान्तराधिगतज्ञानाप्रमोषात् ज्ञानवन्तः प्रारब्धकर्मवशाच्चेदृशजन्मयोगिन इति तेषां ब्रह्मनिष्ठत्वम्।

यत्तु—संवर्गविद्यायां शुश्रूषोः शूद्रेति संबोधनं शूद्रस्याधिकारं सूचयतीति—तत्रेत्याह—शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि। शुश्रूषोर्जानश्रुतेः पौत्रायणस्य ब्रह्म-

---

ज्ञानस्य लब्धस्योपयोगाकांक्षा तावत् भवत्येव। न च पाठाद्युपायजन्यार्थज्ञानवन्तं शूद्रमप्यविशेषेण कर्मविधयः किं न गृह्णीयुरिति शंक्यम्—तस्य पाठादौ प्रवृत्तिः प्रथमं यादृशलौकिककार्योद्देशेन; तेनैव शान्ताकांक्षतया कर्मविध्यन्वयायोगात्। अध्ययनं तु विहितत्वात् लौकिककार्यानुद्देशेनैव कृतमिति तदधीनार्थज्ञानस्य कार्यापेक्षायां साकांक्षविधिसंबन्धः कल्प्यत इति न्याय्यम्। वैदिककर्मविध्यपेक्षिते सति ज्ञाने, वैदिकाध्ययनविधिविषयपुरुषनिष्ठस्य ज्ञानस्य ग्रहणे संनिकर्षाच्च। किञ्च शूद्रस्य वेदश्रवणपठनादेर्निषिद्धत्वेन तदधीनज्ञानस्य दुष्टत्वेन निर्दोषसाकांक्षाध्ययनजज्ञानलाभेन कृतार्थाः विधयः तद् ज्ञानं न स्वीकुर्युः, निषिद्धस्याङ्गत्वायोगात्। न चैवं देवतानामध्ययनजन्यज्ञानं नास्तीति मन्तव्यम्; जन्मान्तरकृताध्ययनजन्यज्ञानाप्रमोषस्य तत्र स्वीकारेण तज्ज्ञानस्याध्ययनाधीनत्वानपायात्। तपोबलसाक्षात्कृतवेदजन्यज्ञानं तर्हि नाङ्गं स्यादिति चेन्न-विधिबलप्रेरितपुरुषसंपादितस्या ज्ञानस्याविशेषेण ग्राह्यत्वात्। विधेश्च भगवदनुग्रहार्थतया तदनुग्रहाधीनवेदसाक्षात्काराणां तदनुग्रहमूलं वेदजन्यज्ञानं कर्माङ्गं भवितुमर्हतीति तु स्यात, न निषेधोल्लङ्घिपुरुषकृतपाठादिजन्यज्ञानमपि तथा। एवमनग्निसाध्येऽपि समन्त्रके कर्मणि नाधिकारप्रसक्तिः; अध्ययनातिरिक्तोपायलब्धानां मन्त्राणां व्यर्थत्वस्य, अनर्थप्रदत्वस्य च स्मृतत्वात्। एवञ्चोपासनेऽपि शूद्रस्य नाधिकारः, प्रतिविद्यं मन्त्रसद्भावात्॥ यत्र तान्त्रिकमन्त्रे शूद्रस्याधिकारः, तदङ्गकतान्त्रिकोपासनं तस्यास्तु इति चेत्-काममस्तु; वैदिकोपासनविषय एवात्र विचारस्य क्रियमाणत्वादिति। **ज्ञानतदुपायादीन् अपरान्**—वेदग्रहणार्थविध्यविषयपुरुषनिष्ठज्ञान-तदर्थविचार-पठन-पाठनादीन्।

अननुमतवेदश्रवणाधीनज्ञानस्यानुपयोगेऽपि अनुमतेतिहासादिमूलज्ञानस्याङ्गत्वसंभवादधिक्रियतामित्यत्राह **इतिहासेति**। वेदं समुपबृंहयेदिति श्रवणात् वेदजनितज्ञानपौष्कल्यसंपादनद्वारैव इतिहासादिजन्यज्ञानस्य कर्माङ्गत्वावसायात् शूद्रे तदभावात् तस्य तज्ज्ञानं न कर्माङ्गम्। न च तर्हि श्रवणविधिवैयर्थ्यम्-पापक्षय-तादात्विकभगवदनुभव-भक्त्युद्रेक-तन्मूलानेककैङ्कर्याद्यनेकफलदर्शनेन अनधीतवेदत्रैवर्णिकक्रियमाणेतिहासादिश्रवणस्येव साफल्यात्।

संवर्गविद्यागतः शूद्रशब्दः न तद्विद्याविशेषेऽपि शूद्राधिकारसंपादनासमर्थः; कुत एव सर्वत्र तदधिकारगमकता तस्येत्याशयेन तमंशमनूद्य खण्डयति **यत्त्वित्यादिना**। सूत्रार्थस्तु—**अस्य** जानश्रुतेः हंसकर्तृकस्वानादरश्रवणाज्जाता शुक् तदैव रैक्वं प्रति आद्रवणात् ज्ञाता, **हि** यस्मात् रैक्वेण शूद्रेत्यामन्त्र-

**ज्ञानवैकल्येन** हंसोक्तानादरवाक्यश्रवणात् तदैव ब्रह्मविदो रैक्वस्य सकाशं प्रति आद्रवणात् शुक् अस्य मज्जातेति हि सूच्यते ; अतः स शूद्रेत्यामन्त्र्यते ; न चतुर्थवर्णत्वेन । शोचतीति हि शूद्रः ; (उणादि. १७६) "शुचेर्दश्च" इति रक्(र)प्रत्यये धातोश्च दीर्घे चकारस्य च दकारे शूद्र इति भवति । अतः शोचितृत्वमेवास्य शूद्रशब्दप्रयोगेण सूच्यते ; न जातियोगः ।

जानश्रुतिः किल पौत्रायणो बहुद्रव्यप्रदो बह्वन्नप्रदश्च बभूव । तस्य धार्मिकाग्रेसरस्य धर्मेण प्रीतयोः कयोश्चिन्महात्मनोः, अस्य ब्रह्मजिज्ञासामुत्पिपादयिषतोः हंसरूपेण निशाया-मस्याविदूरे गच्छतोरन्यतर इतरमुवाच—(छा. ४-१-२) "भो भोऽयि भल्लाक्ष! भल्लाक्ष! जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततम् । तन्मा प्रसाङ्क्षीः। तत् त्वा मा प्रधाक्षीत्" इति । एवं जानश्रुतिप्रशंसारूपं वाक्यमुपश्रुत्य परो हंसः प्रत्युवाच—"कम्वरे एन-मेतत्सन्तं सयुग्वानमिव रैक्वमात्थ" इति । कं सन्तमेनं जानश्रुतिं सयुग्वानं रैक्वं ब्रह्मज्ञमिव गुणश्रेष्ठमेतदात्थ ; स ब्रह्मज्ञो रैक्व एव लोके गुणवत्तरः ; महता धर्मेण संयुक्तस्या-प्यस्य जानश्रुतेरब्रह्मज्ञस्य को गुणः ; यद्गुणजनितं तेजो रैक्वतेज इव मां दहेदित्यर्थः । एवमुक्तेन परेण, कोऽसौ रैक्व इति पृष्टः, 'लोके यत् किंचित् साध्वनुष्ठितं कर्म,

---

णेन **सूच्यते** ज्ञाप्यते, अतः संवर्गविद्यागतः शूद्रशब्दः न जातिवचनः, किंतु जानश्रुतिगतशोकवचन इति । शुचं प्रति अनादरश्रवणं कारकहेतुः ; आद्रवणं ज्ञापकहेतुः । प्रथमतच्छब्दः हंसपरामर्शी ; द्वितीयो रैक्वस्य । **तदा** इति वा छेदः । **सूच्यते** इत्यत्र रैक्वेणेति शूद्रेत्यामन्त्रणेनेति वा कर्त्रध्याहारः । जातिपुरस्कारेण शूद्रेत्यामन्त्रणं व्यर्थम् ; निकर्षद्योतनेन निन्दापर्यवसानादयुक्तञ्च । उपदेशमनिच्छन् निन्दत्येवेति चेन्न-शूद्रस्याप्यधिकारवादिपूर्वपक्षिमते तज्जात्युल्लेखमात्रेण उपदेशासंमतिद्योतनायोगात् । तथासति पुनरागमनायोगाच्च । 'अह हारेत्वा शूद्र तवैव सह गोभिरस्तु' इति प्रथमं शूद्रपदप्रयोगस्य तथा निर्वाहेऽपि, 'आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः' इत्युपदेशोद्योगावसरे तत्प्रयोगाच्च । शोकप्रदर्शने तु, 'त्वं पात्रमिति जानामि' इति ज्ञापनात् तस्य विद्याप्राप्त्यसंभवशंकानिवर्तनेन पुनरागमन-प्रवृत्तिसंधुक्षणात् सार्थत्वम् । अतोऽवश्यं यौगिकमेव शूद्रपदमित्यर्थं सूचयितुं सूत्रे **सूच्यत** इत्यधिकांशघटनम् । शूद्रशब्दस्य शुचा द्रवतीत्यर्थमुक्त्वा **तदाद्रवणा**दिति सौत्रपदेन स उच्यत इति **शांकरे** दर्शितम् । अन्यथैव व्याकरणव्युत्पत्तिरिति तदुपेक्षया योगार्थमन्यं दर्शयति **शोचतीति** हीति । **रक् प्रत्यये** इति पाठः । **रप्रत्यय** इति पाठे तु ककारस्य लोपमालोच्योपेक्षेति मन्तव्यम् । 'सुसेरक्' इत्येव पूर्वं सूत्रदर्शनात् । शुचेर्दश्चेति सूत्रे चकारेण रक् प्रत्ययः, अदेर्दीर्घश्चेति सूत्रात् उपधादीर्घश्च गृह्यते ।

सूत्रार्थवैशद्याय वक्ष्यमाणसूत्रार्थवैशद्याय चोपाख्यानं संगृह्णाति **जानश्रुतिः किले**ति । **भल्लाक्ष** भल्लायुधसमनेत्र! **दिवा समम्** अहःकालतुल्यम् । तन्मा प्रसांक्षीः । तत्सङ्गं माप्नुहि-तत्समीपं न गच्छेः । मा प्रधाक्षीत्—मा दहेत् । **कम्वरे** । कम् उ अरे इति छेदः । **कं सन्तं** कीदृशमहिमयुक्तम् । **सयुग्वानम्** । युग्वा शकटम् ; तद्युक्तम् । **एतदात्थ** । एतदिति वचनक्रियाविशेषणम् । एतेन वचनेन

यच्च सर्वचेतनगतं विज्ञानम्, तदुभयं यदीयज्ञानकर्मान्तर्भूतम्, स रैक्व' इत्याह। तदेतत् हंसवाक्यं ब्रह्मज्ञानविधुरतया आत्मनिन्दागर्भं तद्वत्तया च रैक्वप्रशंसारूपं जानश्रुतिरुपश्रुत्य, तत्क्षणादेव क्षत्तारं रैक्वान्वेषणाय प्रेषयन् तस्मिन् विदित्वा आगते, स्वयमपि, रैक्वमुपसद्य गवां षट्छतं निष्कमश्वतरीरथं च रैक्वायोपहृत्य रैक्वं प्रार्थयामास, "अनु मे एतां भगवो देवतां शाधि, यां देवतामुपास्से" इति। त्वदुपास्यां परां देवतां ममा(माम)नुशाधीत्यर्थः। स च रैक्वः स्वयोगमहिमविदितलोकत्रयो जानश्रुतेर्ब्रह्मज्ञानविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणेन शोकाविष्टतां तदनन्तरमेव ब्रह्मजिज्ञासया उद्योगं च विदित्वा अस्य ब्रह्मविद्यायोग्यतामभिज्ञाय, चिरकालसेवां विना द्रव्यप्रदानेन शुश्रूषमाणस्यास्य यावच्छक्तिप्रदानेन ब्रह्मविद्या प्रतिष्ठिता भवतीति मत्वा तमनुगृह्णन्, तस्य शोकाविष्टतामुपदेशयोग्यताख्यापिकां शूद्रशब्देनाऽऽमन्त्रणेन ज्ञापयन्निदमाह, (छा.४-२-३) "अह हारेत्वा शूद्र! तवैव सह गोभिरस्तु" इति। सह गोभिरयं रथस्तवैवास्तु; नैतावता मह्यं दत्तेन ब्रह्मजिज्ञासया शोकाविष्टस्य तव ब्रह्मविद्या प्रतिष्ठिता भवतीत्यर्थः। स च जानश्रुतिर्भूयोऽपि स्वशक्त्यनुगुणमेव गवादिकं धनं कन्यां च प्रदायोपससाद। स रैक्वः पुनरपि तस्य योग्यतामेव ख्यापयन् शूद्रशब्देनामन्त्र्याह—(छा. ४-२-५) "आजहारेमाः शूद्र! अनेनैव मुखेनाऽऽलापयिष्यथाः" इति। इमानि धनानि शक्त्यनुगुणानि आजहर्थ; अनेनैव द्वारेण, चिरसेवया विनाऽपि, मां त्वदभिलषितं ब्रह्मोपदेशरूपवाक्यमालापयिष्यसीत्युक्त्वा तस्मा उपदिदेश। अतः शूद्रशब्देन विद्योपदेशयोग्यताख्यापनार्थं शोक एवास्य सूचितः; न चतुर्थवर्णत्वम् ॥ ३३ ॥

क्षत्रियत्वगतेश्च । १ । ३ । ३४ ॥

"बहुदायी" इति दानपतित्वेन, "बहुपाक्यः" इत्यादिना, "सर्वत एव मे अन्नमत्स्यन्ति" इत्यन्तेन बहुतरपक्वान्नप्रदायित्वप्रतीतेः, "स ह संजिहान एव क्षत्तारमुवाच" इति क्षत्तृप्रेषणात्, बहुग्रामप्रदानावगतजनपदाधिपत्याच्चास्य जानश्रुतेः क्षत्रियत्वप्रतीतेश्च न चतुर्थवर्णत्वम् ॥ ३४ ॥

---

ब्रवीषीत्यर्थः। **लोके यत्किञ्चिदिति** भाष्यवाक्येन "यत्किञ्च प्रजाः साधु कुर्वन्ति सर्वं तमभिसमेति, यस्तद् वेद यत् स वेद" इति श्रुत्यर्थ उक्तः। विवृतमिदं **लघुसिद्धान्त** एव। **शुश्रूषमाणस्य** ब्रह्मविद्यां श्रोतुमिच्छतः। **प्रदानेन** प्रदानेनैव। गुरुशुश्रूषया विद्या पुष्कलेन धनेन वेति शास्त्रादिति भावः। **अह हारेत्वा**। अहेत्यव्ययम्। **हारेत्वा** हारेण सहितः इत्वा रथः। निष्कमश्वतरीरथमिति निष्कस्यानीतस्य हारशब्देन निर्देशः। निष्करुचकपदकशब्दाः पर्याया इति **परिमले** ॥ ३३ ॥

अयं शूद्रशब्दः शोकाश्रयवचनः, न जातिवचनः; उपदेशकालिकामन्त्रणशब्दत्वादित्युक्तमधस्तात्; अथ क्षत्रियवाचित्वादिति हेत्वन्तरविवक्षयाऽऽह **क्षत्रियत्वेति**। जानश्रुतिः क्षत्रियः बहुदायित्वादेरिति तत्साधनम्। **पक्वान्नेति**। शूद्रस्य पक्वान्नदानं निषिद्धम्; आमं शूद्रस्य पक्वान्नमिति तत्स्थाने

तदेवमुपक्रमगताख्यायिकायां क्षत्रियत्वप्रतीतिरुक्ता ; उपसंहारगताख्यायिकायामपि क्षत्रियत्वमस्य प्रतीयत इत्याह—

**उत्तरत्र चैत्ररथेन लिङ्गात् । १ । ३ । ३५ ॥**

**अस्य जानश्रुतेरुपदिश्यमानायामस्यामेव संवर्गविद्यायामुत्तरत्र कीर्त्यमानेन अभिप्रतारि-नाम्ना चैत्ररथेन क्षत्रियेण अस्य क्षत्रियत्वं गम्यते ॥ कथम् ?** (छा. ४-३-५) **"अथ ह शौनकं च कापेयम् अभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इत्यादिना,** (छ. ४-३-७) **"ब्रह्मचारिन्निदमुपास्महे" इत्यन्तेन कापेयाभिप्रतारिणोः, भिक्षमाणस्य ब्रह्म-चारिणश्च संवर्गविद्यासंबन्धित्वं प्रतीयते । तेषु चाभिप्रतारी क्षत्रियः, इतरौ ब्राह्मणौ ; अतोऽस्यां विद्यायां ब्राह्मणस्य, तदितरेषु च क्षत्रियस्यैवान्वयो दृश्यते ; न शूद्रस्य । अतो-ऽस्यां विद्यायामन्वितात् रैक्वाद् ब्राह्मणादन्यस्य जानश्रुतेरपि क्षत्रियत्वमेव युक्तम् ; न चतुर्थ-वर्णत्वम् । नन्वस्मिन् प्रकरणे अभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च न श्रुतम् ; तत् कथ-मस्याभिप्रतारिणश्चैत्ररथत्वम्, कथं वा क्षत्रियत्वम् ? तत्राह** लिङ्गात् **इति । "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिम्" इत्यभिप्रतारिणः कापेयसाहचर्याल्लिङ्गात् अस्याभि-प्रतारिणः कापेयसंबन्धः प्रतीयते ; अन्यत्र च,** (ताण्ड्य. महाब्रा. २०-१२-५) **"एतेन वै चि(चै)त्ररथं कापेया अयाजयन्" इति कापेयसंबन्धिनः चि(चै)त्ररथत्वं श्रूयते ; तथा चैत्र-रथस्य क्षत्रियत्वम्, "तस्माच्चैत्ररथीनामेकः** (रथो नामैकः) **क्षत्रपतिरजायत" इति ; अतो-ऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च गम्यते ॥ ३५ ॥**

---

आमस्यैव ततो ग्राह्यत्वात् । **क्षत्तृप्रेषणा**दिति । वैश्यात् ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते । जीविका-वृत्तिरेतस्य राजान्तःपुररक्षणमिति तस्य राजपरिचरत्वावगमादिति भावः ॥ ३४ ॥

**उत्तरत्रे**ति । संवर्गविद्यापूर्वभागश्रुतजानश्रुतिः क्षत्रियः संवर्गविद्यागतत्वे सति ब्राह्मणभिन्नत्वात् तदुत्तरभागश्रुताभिप्रतारिवत् । अभिप्रतारी क्षत्रियः चैत्ररथत्वात् । स चित्ररथान्वयभवः कापेययाज्यत्वात् । चैत्ररथः क्षत्रियः तथाश्रूयमाणत्वादित्येवमनुमानानि ग्राह्याणि । **परिविष्यमाणौ** भोजनार्थमुपविष्टौ सूदकर्तृ-कान्नादिपरिवेषणोद्देश्यभूतौ । एतदुपाख्यानविषयः संवर्गविद्यास्वरूपञ्चोपनिषत्त एवावगन्तव्यम् । कापेया अयाजयन्निति याजकत्वात् कापेयस्य ब्राह्मण्यम् । चैत्ररथस्य याज्यत्वेपि क्षत्रियत्वनिर्णयासंभवादुपरितन-वाक्यं दर्शयितुमाह **तथा चैत्ररथस्ये**ति । "चैत्ररथीनामेकः' इति (ताण्ड्यब्राह्मण) शुद्धपाठः ; न तु चैत्ररथो नामैक इति । चैत्ररथ इत्यस्यानामत्वाच्च । चित्ररथ इत्यस्यैव नामत्वात् । "एतेन वै चित्ररथं कापेया अयाजयन् । तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वन् । तस्माच्चैत्ररथीनामेकः क्षत्रपतिर्जायते । नुलुम्ब इव द्वितीयः" इति तत्रानुपूर्वी । **एतेन** द्विरात्रेण । **कापेयाः** कपिगोत्रोत्पन्ना महर्षयः । **चैत्ररथीनां** चित्ररथपुत्राणां मध्ये । **नुलुम्बः** (अनुलम्बः ?) अनुचरः । पूर्वमाङ्गिरसो द्विरात्र उक्तः ; अयं चैत्ररथो **द्विरात्रः** । **चित्ररथानुष्ठितत्वाच्चैत्ररथः** । अभिप्रतारी चित्ररथयाजककापेययाज्यत्वात् चित्ररथवंश्य इति

तदेवं न्यायविरोधिनि शूद्रस्याधिकारे लिङ्गं नोपलभ्यत इत्युक्तम्ः इदानीं न्यायसिद्धः शूद्रस्यानधिकारः श्रुतिस्मृतिभिरनुगृह्यत इत्याह—

संस्कारपरामर्शात् तदभावाभिलापाच्च । १ । ३ । ३६ ॥ (शत ब्रा. ११-५

ब्रह्मविद्योपदेशप्रदेशेषूपनयनसंस्कारः परामृश्यते, (छा. ४-४-५) "उप त्वा नेष्ये", (आप. श्रौ.) "तं होपनिन्ये" इत्यादिषु । शूद्रस्य चोपनयनादिसंस्काराभावोऽभिलप्यते—(मनु. १०-१२६) "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति", (—?) "चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति" इत्यादिषु ॥ ३६ ॥

तदभावनिर्धारणे च प्रवृत्तेः । १ । ३ । ३७ ॥

(छा. ४-४-५) "नैतदब्राह्मणो विवक्तुमर्हति । समिधं सोम्याहर" इति शुश्रूषोर्जा-

---

चैत्ररथः । नन्वप्रयोजकोऽयं सौत्रो हेतुः ; उत्तरत्र कस्यचित् क्षत्रियत्वे पूर्वत्रापि तथेति नियमासिद्धेः । अन्यथा यथायथं कापेयत्वचैत्ररथत्वादेरप्यापत्तेरिति चेत्-अभ्युच्चययुक्तिरियम् ; पूर्वसूत्रेणैव क्षत्रियत्वसिद्धेः॥

**न्यायविरोधिनी** यनेन विधिमूलवेदग्रहणाधीनज्ञानाभावान्नाधिकार इति जैमिनिदर्शितमप्रधृष्यमिति ज्ञाप्यते । नन्वष्टवर्षं ब्राह्मणमुपनयीतेत्यत्र ब्राह्मणोद्देशेनाष्टवर्षत्वविधानमेव युक्तम्—अष्टवर्षत्वब्राह्मणत्वोभयस्य पदद्वयोपात्तस्योद्देश्यनिवेशे वाक्यभेदात् । अतः कालविधिरेवायमिति चेन्न-तमध्यापयेदित्यत्र तच्छब्देन एकेनाष्टवर्षत्वब्राह्मणत्वोभयविशिष्टस्याध्ययने विनियोगात् उपनयनेऽपि तदंशस्यार्थसिद्धतायाः मीमांसकैरुक्तत्वात् । अस्मन्मते तु समानाधिकरणपदैरेकविशिष्टार्थप्रत्यायनस्वीकारात् कारकद्वयस्य पृथक्क्रियान्वयाभावात् नैव वाक्यभेदप्रसक्तिः । अतः स्वाध्यायोऽध्येतव्य इति वाक्यमुपनीतत्रैवर्णिकान्वयेन प्रत्यक्षश्रुतेन शान्ताकांक्षत्वात् नान्यस्य कर्तृत्वमाक्षिपति । जैमिनिनैव, 'तथाचान्यार्थदर्शनम्' इति बहूनि गमकानि सूचितानि । 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति च सर्वांशानधिकारमेव हेतुं कृत्वा प्रकृतयज्ञकर्तृत्वाभावानुवादः ॥

प्रथमादिसूत्रं पूर्वपक्षिदर्शितगमकासिद्धिदर्शकम् । इदम्, उपरितनञ्च सूत्रमुपनिषत्सु शूद्राधिकारप्रतीतिशंकाया उपनिषदमादायैव परिहारकम् । अथ सामान्यतः सर्वत्र तदधिकारवारकप्रमाणोपन्यास इति विवेकः । ब्रह्मविद्या नोपनयनसापेक्षा स्त्रीषु तद्दृष्टेरिति शङ्का, ब्रह्मविद्या प्रथमोपनयनमिव उपनयनान्तरमप्यपेक्षत इति निरूप्यात्र परिह्रियते । **पातकम्**-संस्काराध्ययनाद्यभावप्रयुक्तम्; वृथामांसोच्छिष्टभक्षणादिप्रयुक्तं वा । न च, 'तान् हानुपनीयैव प्रोवाच' इति अनुपनीयैव ब्रह्मविद्याप्रवचनमपि श्रूयत इति शंक्यम्-उच्चवर्णोपनयनं नीचवर्णेन न कार्यमित्यस्य तत्रैव व्यक्तत्वात्, अन्यविषये तदावश्यकत्वावसायात् । **अनुपनीय** शुश्रूषादिप्रयोजकगुरुशिष्यभावहेतुं संस्कारविशेषमकृत्वा । 'न च संस्कारमर्हति' इत्यत्र **संस्कार**पदमविशेषात् प्राथमिकोपनयनब्रह्मविद्योपनयनोभयविषयकम्; असंकोचात् । अनेन वचनेन, अष्टवर्षत्वादिव्यवस्थां विना शूद्रस्याप्युपनयनमस्त्विति पूर्वकृता शङ्कापि परिहृता । एवमुत्तरसूत्रेऽपि ॥३६॥

**नैतदब्राह्मण** इति । नाहं गोत्रं वेदेति ह्युक्तमुपनेयेन सत्यकामेन । तेन, गोत्रमस्ति, तन्न

बालस्य शूद्रत्वाभावनिर्धारणे सत्येव विद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः ॥ ३७ ॥

श्रवणाध्ययनार्थप्रतिषेधात् । १ । ३ । ३८ ॥(नरसिं॰ स्तु॰ ॥॰ ?)

शूद्रस्य वेदश्रवण-तदध्ययन-तदर्थानुष्ठानानि प्रतिषिध्यन्ते, (—?) "पद्यु ह वा एतच्छमशानं यच्छूद्रः। तस्माच्छूद्रसमीपे नाध्येतव्यम्", (—?) "तस्माच्छूद्रो बहुपशुरयज्ञीयः" इति। बहुपशुः पशुसदृश इत्यर्थः। अनुपशृण्वतोऽध्ययन-तदर्थज्ञान-तदर्थानुष्ठानानि न संभवन्ति। अतः तान्यपि प्रतिषिद्धान्येव ॥ ३८ ॥

स्मृतेश्च । १ । ३ । ३९ ॥

स्मर्यते च श्रवणादिनिषेधः, (गौत. ध. १२-३) "अथ हास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः" इति, (—?) "न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्" इति च। अतः शूद्रस्यानधिकार इति सिद्धम् ॥ ३९ ॥

ये तु—निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः; अन्यत् सर्वं मिथ्याभूतम्; बन्धश्चापारमार्थिकः; स च वाक्यजन्यवस्तुयाथात्म्यज्ञानमात्रनिवर्त्यः; तन्निवृत्तिरेव मोक्षः—इति वदन्ति—तैर्ब्रह्मज्ञाने शूद्रादेरनधिकारो वक्तुं न शक्यते; अनुपनीतस्य अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापि यस्मात् कस्मादपि, 'निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः; अन्यत् सर्वं तस्मिन् परिकल्पितं मिथ्याभूतम्' इति वाक्यात् वस्तुयाथात्म्यज्ञानोत्पत्तेः; तावतैव बन्धनिवृत्तेश्च। न च तत्त्वमस्यादिवाक्येनैव ज्ञानोत्पत्तिः कार्या, न वाक्यान्तरेणेति नियन्तुं शक्यम्; ज्ञानस्यापुरुषतन्त्रत्वात्; सत्यां सामग्र्यामनिच्छतोऽपि ज्ञानोत्पत्तेः। न च वेदवाक्यादेव वस्तुयाथात्म्यज्ञाने सति बन्धनिवृत्तिर्भवतीति शक्यं वक्तुम्; येनकेनापि वस्तुयाथात्म्यज्ञाने सति भ्रान्तिनिवृत्तेः। पौरुषेयादपि, निर्विशेषचिन्मात्रं ब्रह्म परमार्थः; अन्यत् सर्वं मिथ्याभूतमिति वाक्यात् ज्ञानोत्पत्तेस्तावतैव भ्रमनिवृत्तेश्च। यथा पौरुषेयादप्याप्तवाक्यात् शुक्तिकारजतादिभ्रान्तिर्ब्राह्मणस्य शूद्रादेरपि निवर्तते—तद्वदेव शूद्रस्यापि वेदवित्संप्रदायागत-

जानामीत्येवोक्तमिति ज्ञायते; न तु गोत्रमेव नास्तीति। सेयं वचनव्यक्तिरब्राह्मणे गोत्राभावान्न संभवतीत्यर्थः। 'किंगोत्रो नु' इति प्रश्नात् गोत्ररहितो नोपदेष्टव्य इति ज्ञायते। शूद्रश्च गोत्ररहितः। एवमशूद्रत्वं निर्धार्य तस्य शिष्यत्वकरणात् न शूद्रस्याधिकार इति। अस्तु तर्हि उपनयनं विनैवाध्यापनम्; स्वत एव वा वेदपाठोऽनुमतः स्यादित्यत्राह **श्रवणेति**। **पद्यु** पादयुक्तम् जङ्गममिति यावत्। बहुपशुरित्यत्र बहुच्प्रत्ययः। **अनुपशृण्वत** इति। यः समीपे स्थित्वाऽपि श्रोतुं नार्हति; स कथं श्रावयितव्यः स्यात्, कथंतरां बोधयितव्यः, कथंतमाञ्चानुष्ठापयितव्यः। श्रुतिर्हि सा; न सा श्रवणादन्येनोपायेन प्राप्नोति। सूत्रे **अर्थशब्दः** अध्ययनफलपरः। तत्फलञ्चार्थज्ञानमनुष्ठानञ्च। तदुभयम् 'बहुपशुः' '**अयज्ञीयः**' इति पदाभ्यां क्रमेण प्रतिषिद्धमिति द्वयमपि भाषितम्।

वाक्यात् वस्तुयाथात्म्यज्ञानेन जगद्भ्रमनिवृत्तिरपि भविष्यति । "न चास्योपदिशेद्धर्मम्" इत्यादिना, वेदविदः शूद्रादिभ्यो न वदन्तीति च न शक्यं वक्तुम् ; तत्त्वमस्यादिवाक्यावगतब्रह्मात्मभावानां वेदशिरसि वर्तमानतया दग्धाखिलाधिकारत्वेन निषेधशास्त्रकिङ्करत्वाभावात् । अतिक्रान्तनिषेधैर्वा कैश्चिदुक्तात् वाक्यात् शूद्रादेः ज्ञानमुत्पद्यत एव । न च वाच्यम्—शुक्तिकादौ रजतादिभ्रमनिवृत्तिवत् पौरुषेयवाक्यजन्यतत्त्वज्ञानसमनन्तरं शूद्रस्य जगद्भ्रमो न निवर्तत इति ; तत्त्वमस्यादिवाक्यश्रवणसमनन्तरं ब्राह्मणस्यापि जगद्भ्रमानिवृत्तेः ॥ निदिध्यासनेन द्वैतवासनायां निरस्तायामेव तत्त्वमस्यादिवाक्यं निवर्तकज्ञानमुत्पादयतीति चेत्—पौरुषेयमपि वाक्यं शूद्रादेस्तथैवेति न कश्चिद्विशेषः। 'निदिध्यासनं हि नाम ब्रह्मात्मभावाभिधायि वाक्यं यदर्थप्रतिपादनयोग्यम्, तदर्थभावना। सैव विपरीतवासनां निवर्तयति इति दृष्टार्थत्वं निदिध्यासनविधेर्ब्रूषे। वेदानुवचनादीन्यपि विविदिषोत्पत्तावेवोपयुज्यन्ते-इति शूद्रस्यापि विविदिषायां जातायां पौरुषेयवाक्यात् निदिध्यासनादिभिर्विपरीतवासनायां निरस्तायां ज्ञानमुत्पत्स्यते ; तेनैवापारमार्थिको बन्धो निवर्तिष्यते ।

अथवा तर्कानुगृहीतात् प्रत्यक्षादनुमानाच्च निर्विशेषस्वप्रकाशचिन्मात्रप्रत्यग्वस्तुनि अज्ञानसाक्षित्वं तत्कृतविविधविचित्रज्ञातृज्ञेयविकल्परूपं कृत्स्नं जगच्चाध्यस्तमिति निश्चित्य, एवम्भूतपरिशुद्धप्रत्यग्वस्तुनि अनवरतभावनया विपरीतवासनां निरस्य तदेव प्रत्यग्वस्तु साक्षात्कृत्य शूद्रादयोऽपि विमोक्ष्यन्त इति मिथ्याभूतविचित्रैश्वर्यविचित्रसृष्ट्याद्यलौकिकानन्तविशेषावलम्बिना वेदान्तवाक्येन न किञ्चित्प्रयोजनमिह दृश्यत इति शूद्रादीनामेव ब्रह्मविद्यायामधिकारः सुशोभनः । अनेनैव न्यायेन ब्राह्मणादीनामपि ब्रह्मवेदनसिद्धेरुपनिषच्च तपस्विनी दत्तजलाञ्जलिस्स्यात् ।

न च वाच्यम्—नैसर्गिकलोकव्यवहारे आभ्यतोऽस्य केनचित्, अयं लौकिकव्यवहारो भ्रमः, परमार्थस्त्वेवमिति समर्पिते सत्येव प्रत्यक्षानुमानवृत्तबुभुत्सा जायत इति तत्समर्पिका श्रुतिरप्यास्थेयेति ; यतो भवभयभीतानां साङ्ख्यादय एव प्रत्यक्षानुमानाभ्यां वस्तुनिरूपणं कुर्वन्तः प्रत्यक्षानुमानवृत्तबुभुत्सां जनयन्ति ; बुभुत्सायां च जातायां प्रत्यक्षानुमानाभ्यामेव विविक्तस्वभावाभ्याम्, 'नित्यशुद्धस्वप्रकाशाद्वितीयकूटस्थचैतन्यमेव मत्, अन्यत् सर्वं तस्मिन्

---

किङ्करत्वाभावादिति । "दग्धाखिलाधिकारत्वात् ब्रह्मज्ञानाग्निना मुनिः । वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद् वेदकिङ्करः" इति हि तदीयनैष्कर्म्यसिद्धौ । उक्ताद्वाक्यादिति ; तत्त्वमसिवाक्याद्वा तस्याध्ययनविधिविषयपुरुष एव कार्यकरत्वेऽपि अन्यस्मादपि वा लौकिकादित्यर्थः । तदर्थभावनेति । न तु विधिविहितं संकल्प्य कर्तव्यं किञ्चिद् भवन्मते इति भावः ।

यत्किञ्चिद्वाक्यजन्यमेव ज्ञानं मुक्तिहेतुरित्यपि नियन्तुमशक्यम् । अतो मानान्तराधीनज्ञानादपि मुक्तिः स्यादित्याह अथवेति । प्रत्यक्षादिति । प्रत्यक्षस्य सन्मात्रग्राहित्वं हि तर्केण साधितं तैरधस्तात् ।

अध्यस्तम्' इति सुविवेचम्। एवम्भूते स्वप्रकाशे वस्तुनि श्रुतिसमधिगम्यं विशेषान्तरं च नाभ्युपगम्यते; अध्यस्तातद्रूपनिवर्तिनी हि श्रुतिरपि त्वन्मते। न च सत आत्मनः आनन्दरूपताज्ञानायोपनिषदास्थेया, चिद्रूपताया एव सकलेतरातद्रूपव्यावृत्ताया आनन्दरूपत्वात्॥

यस्य तु—मोक्षसाधनतया वेदान्तवाक्यैर्विहितं ज्ञानमुपासनरूपम्; तच्च परब्रह्मभूतपरमपुरुषप्रीणनम्; तच्च शास्त्रैकसमधिगम्यम्; उपासनशास्त्रं चोपनयनादिसंस्कृताधीतस्वाध्यायजनितं ज्ञानं विवेकविमोकादिसाधनानुगृहीतमेव स्वोपायतया स्वीकरोति; एवंरूपोपासनप्रीतः पुरुषोत्तमः उपासकं स्वाभाविकात्मयाथात्म्यज्ञानदानेन कर्मजनिताज्ञानं नाशयन् बन्धान्मोचयति—इति पक्षः, तस्य यथोक्तया नीत्या शूद्रादेरनधिकार उपपद्यते॥

इति अपशूद्राधिकरणम्॥ ९॥

प्रमिताधिकरण ६. शेषः

तदेवं प्रसक्तानुप्रसक्ताधिकारकथां परिसमाप्य प्रकृतस्याङ्गुष्ठप्रमितस्य भूतभव्येशितृत्वावगतपरब्रह्मभावोत्तम्भनं हेत्वन्तरमाह—

**कम्पनात्॥ १। ३। ४०**

(कठ. २-४-१२) "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति", (कठ. २-६-१७) अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा" इत्यनयोर्वाक्ययोर्मध्ये, (कठ. २-६-२) "यदिदं किञ्च जगत् सर्वं प्राण एजति निस्सृतम्। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति। भयादस्याग्निस्तपति भयात् तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति कृत्स्नस्य जगतोऽग्निसूर्यादीनां चास्मिन् अङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निस्सृतानां तस्मात् सञ्जातमहाभयनिमित्तम् एजनं—कम्पनं श्रूयते। तच्छासनाति-

---

अनुमानञ्च जगन्मिथ्या दृश्यत्वादित्यादि। **सुविवेचमिति**। तथा हि तैरुक्तमिति तद्दृशेति भावः। ननु तादृशनिरूपणस्यानुपपन्नत्वनिश्चये का गतिरिति चेत्-वेदादद्वैतज्ञानोत्पत्तिनिरूपणप्रकारस्याप्यनुपपन्नत्वे का गतिरिति भावयताम्। **जगच्चाध्यस्तमितीति**; जगदध्यस्तमिति चेत्यन्वयः। **चः** साक्षित्वसमुच्चये।

स्वपक्षे अपशूद्राधिकरणस्यास्य सामञ्जस्यं सम्यग्दर्शयति **यस्यत्विति**। अस्य **पक्ष** इत्यत्रान्वयः॥

प्रमिताधिकरणं सूत्रचतुष्टयात्मकम्। तत्र द्वितीयसूत्रोपरि प्रसक्तमधिकरणत्रयम्। तदवसाने शिष्टं सूत्रद्वयं व्याख्यातुमवतारयति **तदेवमिति**। कम्पनाच्चेति चकाराप्रयोगः अपशूद्राधिकरणनिवेशभ्रमव्यावृत्त्यर्थः। यद्वा, 'अव्यक्तात् तु परः पुरुषः' इति प्रकृत्यधिकजीववचनादङ्गुष्ठमात्रो जीव इति शंकायां तत्पूर्वश्रुतमन्त्रसिद्धं परमात्मपरत्वमित्याह **कम्पनादिति**। **प्राण एजति निःसृतम्**। **प्राणे** इति सप्तम्या आधारत्वकथनात् पदत्रयेण प्राणस्य लयाधारत्व-स्थितिप्रवृत्तिहेतुत्वोत्पत्तिहेतुत्वलाभः। **महद्भयं वज्रमुद्यतमित्यस्य एतदित्येतद्विशेषणत्वे** विभक्तौ लक्षणा यद्यपि नास्ति, अथापि तन्मात्रस्योपास्याकारत्वाभावात्,

वृत्तौ किं भविष्यतीति महतो भयात्, वज्रादिवोद्यतात्, कृत्स्नं जगत् कम्पत इत्यर्थः। (कठ. २-६-३) "भयादस्याग्निस्तपति" इत्यनेनैकार्थ्यात् "महद्भयं वज्रमुद्यतम्" इति पञ्चम्यर्थे प्रथमा। अयञ्च परस्य ब्रह्मणः स्वभावः; (बृ. ५-८-९) एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" (तै. आनं. ८) "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति परस्य ब्रह्मणः पुरुषोत्तमस्यैवंविधैश्वर्यावगतेः॥

इतश्चाङ्गुष्ठप्रमितः पुरुषोत्तमः—

ज्योतिर्दर्शनात् १। ३। ४१॥

तयोरेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये परब्रह्मासाधारणं सर्वतेजसां छादकं सर्वतेजसां कारणभूतमनुग्राहकं चाङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यते—(कठ. २-१-११) "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति। अयमेव श्लोक आथर्वणे (मुं. ४-११) परं ब्रह्माधिकृत्य श्रूयते। परञ्ज्योतिष्ट्वं च सर्वत्र परस्य ब्रह्मणः श्रूयते। यथा—(छा. ८-१२-२) "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते", (बृ. ६-४-१६) "तं देवा ज्योतिषां

---

एजतीत्यत्र हेतोर्वक्तव्यत्वाच्च, भयादस्येति श्रुत्यन्तरशैल्या च **उद्यतात् वज्रादिव महतो भयादिति** व्याख्यातम्॥ ४०॥

नन्वङ्गुष्ठप्रमितविषयमन्त्रत्रये द्वयं चतुर्थवल्लीस्थम्; तृतीयः षष्ठवल्ल्यन्तगतः। षष्ठवल्लीप्रथमश्रुतस्य, 'यदिदं किञ्च जगत्' इति मन्त्रस्यानुसारेण परमात्मपरत्वमत्रोक्तम्। पञ्चमवल्ल्यन्तश्रुतस्य, 'न तत्र सूर्यः' इतिमन्त्रस्यानुरोधेन जीवपरत्वमेव कस्मान्न भवति। न ह्ययं परमात्मपरो भवितुमर्हति; अत्र पूर्वार्धस्य परमात्मप्रकाशकत्वं सूर्यादीनां नास्तीत्यर्थवर्णनेऽपि उत्तरार्धस्यार्थो हि दुर्वचः। परमात्मज्ञाने सत्येव सूर्यादिज्ञानं भवतीति न हि वक्तुं शक्यते। अतो जीवपरत्वमेव। अर्थस्तु—'नतद्भासयते सूर्यः' इति गीतारीत्या आत्मप्रकाशकत्वं सूर्यादेर्नास्तीतीति पूर्वार्धं पूर्ववत् सुगमम्। उत्तरार्धार्थश्च—प्रत्यगात्मानं प्रकाशमानमनुसृत्यैव सूर्यादिर्भाति; अहं सूर्यं जानामीति अहमर्थग्रहणेन सहैव सूर्यादेर्ग्रहणात्। 'तस्य भासा सर्वमिदं विभाती'त्यस्य च प्रत्यगात्मगतधर्मभूतज्ञानेन सूर्यादि प्रकाश्यते, न ज्ञानाभावे तत्प्रकाश इति—इत्याशङ्कायां प्रवृत्तं सूत्रमवतारयति **इतश्चेति**। एवमाशङ्कापरिहारार्थत्वादेव सूत्रे चकाराप्रयोगः। **तयोरेव** कम्पनादिति सूत्रदर्शितयोरेव। **यदिदमिति**। यत् किञ्च जगत्, इदं सर्वमित्यन्वयः। **जगत्** जङ्गमम्। सूत्रे **ज्योतिः**पदप्रयोगः—नतत्रेति मन्त्रे न परमात्मस्वरूपमात्रग्रहणम्; किन्तु ज्योतिषः ज्योतिरधिकरणविषयवाक्यादिप्रसिद्धस्य तद्दिव्यमङ्गलविग्रहस्य ग्रहणम्; अङ्गुष्ठमात्रमन्त्र एवात्र, 'ज्योतिरिवाधूमकः' इति ज्योतिर्दर्शनादपि तत्तुल्यज्योतिर्ग्रहणमेव युक्तम्। 'न तत्र सूर्यः' इति मन्त्रेऽपि ज्योतिषामेव निर्देशदर्शनात् घटादेरज्योतिषो निर्देशाभावादपि तथेति ज्ञापनार्थः। यदि जीवात्मप्रकाशेन सह सूर्यादिप्रकाशोऽत्र विवक्षितः, स घटपटादेरपि तुल्य इति किं ज्योतिषामेव

ज्योतिरायुर्होपासतेऽमृतम्", (छा. ३-१३-७) "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिषु। अतः अङ्गुष्ठप्रमितः परं ब्रह्म ॥ ४१ ॥ इति प्रमिताधिकरणशेषः ॥ ६ ॥

२७. अर्थान्तरत्वादिव्यपदेशाधिकरणम् १-३-१० (छा. ८-१४)

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् १। ३। ४२॥

छान्दोग्ये श्रूयते, (छा. ८-१४-१) "आकाशो वै नाम नामरूपयोर्निर्वहिता, ते यदन्तरा। तद्ब्रह्म तदमृतं स आत्मा" इति। तत्र संशयः—किमयमाकाशशब्दनिर्दिष्टो मुक्तात्मा, उत परमात्मा—इति। किं युक्तम्? मुक्तात्मेति। कुतः?। (छा. ८-१३-१) "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति मुक्तस्यानन्तरप्रकृतत्वात्; "ते यदन्तरा" इति च नामरूपविनिर्मुक्तस्य तस्याभिधानात्। "नामरूपयोर्निर्वहिता" इति च स एव पूर्वावस्थयोपलिलक्षयिषितः। स एव हि देवादिरूपाणि नामानि च पूर्वमबिभः(भृत)। तस्यैव नामरूपविनि-

---

ग्रहणेन। पूर्वार्धस्य सूर्याद्यभास्य इत्यर्थवर्णनमपि क्लिष्टम्; सूर्याद्यभानहेतुत्वस्यैव शब्दार्थत्वात्। अतोऽयमर्थः—परमात्मदिव्यविग्रहस्य कोटिसूर्यप्रकाशस्य पुरस्तात् सूर्यादिर्न प्रकाशते, सूर्यस्य पुर इव चन्द्रादिः। 'चक्षोः सूर्यो अजायत' इतिरीत्या तत एव ज्योतींषि जायन्ते। अप्राकृतज्योतिःसंबन्धात् प्राकृतज्योतिरुत्पत्तिर्यथाप्रमाणमेष्टव्या। सूर्यमण्डलान्तर्वर्ति हिरण्मयपुरुषानुगृहीत एव सूर्यः, तदधीनप्रकाशा अन्ये च प्रकाशन्त इति। तदिह ज्योतिषो विग्रहस्यैव ग्रहणमिति परमात्मैवाङ्गुष्ठमात्र इति अङ्गुष्ठमात्रः परमात्मा तज्ज्योतिःपरमन्त्रैकवाक्यभूतवाक्यार्थत्वादित्युक्तं भवति ॥ ४१ ॥

पूर्वाधिकरणान्तिमसूत्रविषयवाक्ये 'नतत्रसूर्यः' इत्यत्र ज्योतिर्ग्रहणबलेन जीवात्मरूपार्थत्यागेऽपि प्रकृतच्छान्दोग्यवाक्ये जीवग्रहणमेव; आकाशशब्दस्य दिव्यमङ्गलविग्रहे प्रसिद्ध्यभावात् प्रकाशमान इत्यर्थमादायैव परमात्मपरतायाः वाच्यतया तस्य जीवात्मन्यपि संभवात्; जीवपरत्वे पूर्ववाक्यप्रधानार्थग्रहणादिरूपयुक्तिसद्भावाच्चेत्युत्थितेः संगतिः। दहरविद्याशेषत्वविमर्शस्य भाष्ये क्रियमाणत्वात् दहराधिकरणमाद्याधिकरणमाद्यापि संगतिं ब्रूयुः। **रोमाणि विधूय**-रोमाणि गात्रधूननेन निष्क्रान्तधूलीनि कृत्वा। अथवा निष्कास्यानि दुर्बलरोमाणि निरस्य। एवमुक्तं **सारे** वृद्धिह्राससूत्रे। अश्वो रोमाणीव पापं विधूय, चन्द्रो राहोर्मुखात् स्वात्मानं प्रमुच्येव अहं प्रमुच्यत शरीरं धूत्वेत्यन्वयक्रमः। स्थूलसूक्ष्मद्विविधशरीरधूननमप्यत्र ग्राह्यम्। **अकृतम्** अनादिमिति ब्रह्मलोकविशेषणम्। **प्रकृतत्वात्** कर्तृतया प्राधान्येन निर्दिष्टत्वात्। ब्रह्मणस्तु अप्रधानलोकविशेषणतयाऽत्यन्तोपसर्जनत्वमिति भावः। **ते** नामरूपे **अन्तरा** विहायेत्यर्थः। तदाह—**नामरूपविनिर्मुक्तस्येति**। 'अन्तराऽन्तरेण युक्ते' इति सूत्रे अन्तराशब्दस्य मध्यवाचित्वमेव दर्शितम्; न तु विनार्थकत्वम्। तथापि नामरूपयोर्मध्ये इत्यस्य नामरूपरहितस्थले इत्यर्थे सति तन्निर्मुक्तमिति विनार्थ एव पर्यवसानम्। **तस्येति**। आकाशस्येत्यर्थः। ननु आकाश इति पुल्लिङ्गानुसारात्, ते योऽन्तरेति वक्तव्ये यदन्तरेति श्रवणात् पूर्वपरामर्शकत्वं यच्छब्दस्य नास्तीति ज्ञायते। अतः आकाशः नामरूप-

मुक्ता साम्प्रतिकी अवस्था, "तद्ब्रह्म तदमृतम्" इत्युच्यते। आकाशशब्दश्च तस्मिन्नपि असङ्कुचितप्रकाशयोगादुपपद्यते॥ ननु दहरवाक्यशेषत्वादस्य स एव दहराकाशोऽयमिति प्रतीयते; तस्य च परमात्मत्वं निर्णीतम्॥ नैवम्—प्रजापतिवाक्यव्यवधानात्। प्रजापतिवाक्ये च प्रत्यगात्मनो मुक्त्यवस्थान्तं रूपमभिहितम्; अनन्तरं च, "विधूय पापम्" इति स एव मुक्तावस्थः प्रस्तुतः। अतोऽत्राकाशो मुक्तात्मा—

इति प्राप्ते उच्यते—आकाशोऽर्थान्तरत्वादिव्यपदेशात्—इति। आकाशः परं ब्रह्म; कुतः? अर्थान्तरत्वादिव्यपदेशात्। अर्थान्तरत्वव्यपदेशस्तावत्—"आकाशो ह वै नामरूपयोर्निर्वहिता" इति नामरूपयोर्निर्वोढृत्वं बद्धमुक्तोभयावस्थात् प्रत्यगात्मनोऽर्थान्तरत्वमाकाशस्योपपादयति। बद्धावस्थः स्वयं कर्मवशात् नामरूपे भजमानो न नामरूपे निर्वोढुं शक्नुयात्; मुक्तावस्थस्य जगद्व्यापारासंभवात् नतरां नामरूपनिर्वोढृत्वम्; ईश्वरस्य तु सकलजगन्निर्माणधुरन्धरस्य नामरूपयोर्निर्वोढृत्वं श्रुत्यैव प्रतिपन्नम्, (छा. ६-३-२) "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि", (मु. १-१-९) "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते", (पु. सू.) "सर्वाणि रूपाणि विचित्य धीरो

---

निर्वोढा जीव एवास्तु। तन्निर्मुक्तं यत् तद्ब्रह्मेति ततोऽन्यस्यैव ग्रहणम्। अथवा ते नामरूपे यद् ब्रह्म चान्तरा मध्ये नामरूपनिर्वोढा भवत्याकाशः, तद् ब्रह्मेति वा स्यादर्थः। तत् कथमिदं ब्रह्माऽऽकाशः? कथञ्चास्य वाक्यस्य सर्वस्य जीवपरत्वशङ्केति चेत्—उच्यते। नामरूपनिर्वोढा आकाशो जीवः; यत् यस्मात् कारणात् ते नामरूपे अन्तरा मुक्तवान् भवति, तत् तस्माद् ब्रह्म भवतीत्यर्थ इह विवक्षितः। सिद्धान्ते एतदर्थस्त्वन्यः। अतः पदद्वयोपात्तैक्यसंभवे भेदकल्पना न युक्ता अन्यथा आकाशपरामर्शस्य वैयर्थ्यञ्चेति भावः। एवंशङ्कापरिहारायैव तस्येत्युक्तम्। निर्वहिता बद्धावस्थायां निःशेषेण वोढा। न च निर्वहणं नितरां वहनमित्यप्रसिद्धोऽर्थ इति वाच्यम्—प्रजापतिवाक्यरूपपूर्वप्रकरणैकरस्याय पदस्यास्य अवयवार्थग्रहणे विरोधाभावात्। अन्यथा आकाशशब्दो भूताकाशपर एव किं न स्यादिति भावः। सांप्रतिकी संप्रति निरूप्यमाणा; प्रकृतखण्डप्रतिपाद्येत्यर्थः। उच्यत इति। अयं भावः—वाक्यैकवाक्यतास्थले तत्तद्वाक्यार्थं पृथक्पृथगवधार्य एकवाक्यता परिशीलनीया। तत्र स्ववाक्यार्थावधारणकाले स्वरसप्रतीतोऽर्थो यद्येकवाक्यताभञ्जकः स्यात्, तदैवार्थान्तरं पर्यालोचनीयम्। इह च निर्वहण-नामरूपशून्यत्व ब्रह्मत्वादीनि परब्रह्मपरतामेव प्रत्याययन्ति; आकाशशब्दप्रसिद्धिश्च रक्षन्तीति न जीवपरत्वमिति। नतरामिति। वोढृत्वमपि हि मुक्ते नास्तीति भावः। यस्मादिति। अनेन श्रुतौ यदिति न तच्छब्दप्रतिसंबन्धि; किंतु निर्वोढृत्वे हेतुसमर्पकं यस्मादित्यर्थकमिति स्पष्टम्। ननु व्याकरवाणीत्याद्यनुसारेण कर्तृत्वं नामरूपोत्पादकत्वमित्यर्थोऽपि न युक्तः; उत्पादके मातापित्रादौ निर्वोढृशब्दाप्रयोगात्। अयं देशनिर्वाहक इत्यादौ सत्ताविशेषप्रयोजकत्वरूपमेव तत् दृष्टम्। तत् प्राणेन्द्रियादिसंघातमध्ये जीवेऽपि तुल्यम्। तदुत्क्रान्तौ नामरूपापायादिति चेन्न-सत्ताविशेषप्रयोजक-

नामानि कृत्वाऽभिवदन् यदास्ते" इत्यादिषु। अतो निर्वाह्यनामरूपात् प्रत्यगात्मनो नामरूपयोर्निर्वोढाऽयमाकाशोऽर्थान्तरभूतः परमेव ब्रह्म। तदेवोपपादयति, "ते यदन्तरा" इति। यस्मादयमाकाशो नामरूपे अन्तरा—ताभ्यामस्पृष्टोऽर्थान्तरभूतः—तस्मात् तयोः निर्वोढा [निर्वहिता?] अपहतपाप्मत्वात् सत्यसङ्कल्पत्वाच्च निर्वहिते(निर्वोढे)त्यर्थः। आदिशब्देन ब्रह्मत्वात्मत्वामृतत्वानि गृह्यन्ते। निरुपाधिकबृहत्त्वादयो हि परमात्मन एव संभवन्ति; तेनात्राकाशः परमेव ब्रह्म। यत् पुनरुक्तम्, "धूत्वा शरीरम्" इति मुक्तोऽनन्तरप्रकृतः इति—तन्न; "ब्रह्मलोकमभिसंभवामि" इति परस्यैव ब्रह्मणोऽनन्तरप्रकृतत्वात्। यद्यपि अभिसंभवितुर्मुक्तस्याभिसंभाव्यतया परं ब्रह्म निर्दिष्टम्, तथापि अभिसंभवितुर्मुक्तस्य नामरूपनिर्वोढृत्वाद्यसंभवादभिसंभाव्यं परमेव ब्रह्म तत्र प्रत्येतव्यम्।

किञ्च आकाशशब्देन प्रकृतस्य दहराकाशस्यात्र प्रत्यभिज्ञानात्, प्रजापतिवाक्यस्याप्युपासकस्वरूपकथनार्थत्वात् उपास्य एव दहराकाशः प्राप्यतयेहोपसंहियत इति युक्तम्। आकाशशब्दश्च प्रत्यगात्मनि न क्वचित् दृष्टचरः। अतोऽत्राकाशः परं ब्रह्म ॥ ४२ ॥

अथ स्यात्—प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव नास्ति; ऐक्योपदेशात्, द्वैतप्रतिषेधाच्च। शुद्धावस्थ एव हि प्रत्यगात्मा, परमात्मा परं ब्रह्म परमेश्वर इति च व्यपदिश्यते;

---

बुद्धिपूर्वव्यापारस्यैव निर्वाहरूपत्वात् तस्य जीवे नामरूपविषये अभावात्। अर्थान्तरत्वं भिन्नवस्तुत्वं जीवावृत्तिर्निर्वोढृत्वादिधर्मः। नामरूपभजनानर्हत्वरूपस्वातन्त्र्यं ते यदन्तरेत्यत्र विवक्षितम्। नामरूपवहनतदभावोभयकीर्तनात् जीवग्रहणं युक्तमिति पूर्वपक्ष्यभिप्रायं परासितुं अर्थान्तरत्वपदेन विशिष्य तद्वास्तवार्थो विवक्षितः; ब्रह्मादिशब्दः परमात्मनि स्वरस इति पूर्वपक्ष्येव जानातीति ज्ञापयितुमादिना तद्ग्रहणम्। पूर्ववाक्यप्रस्तुतस्य कर्तुरेव ग्रहणमिति तदा कथञ्चित् स्यात्, यदि स इति तच्छब्दः श्रूयेत; अत्राकाश इति शब्दान्तरप्रयोगादर्थान्तरत्वमेव युक्तमिति सूत्रेऽर्थान्तरत्वपदस्येममप्यर्थं मनसिकृत्याह तत्रप्रत्येतव्यमिति। वैनामेति प्रसिद्धिः पूर्वप्रकृतविषये हि युक्तेत्यत्राह किञ्चेति। प्रजापतिवाक्ये आख्यायिकासमाप्त्याऽवान्तरप्रकरणं विच्छिन्नमिति स्पष्टम्। अतः तदुत्तरस्य महापकारणात् परमात्मपरत्वमिति भावः। इह आकाशवाक्ये। न क्वचिदिति। 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते' इत्यत्रापि आकाशशब्दः भूताकाशपर एव; न जीवपर इति भावः ॥ ४२ ॥

उत्तरमूलद्वयमवतारयति अथस्यादिति। ननु मुक्तः परमात्मा वेति भेदनिश्चयपूर्वकविचारार्थेऽधिकरणे अभेदशङ्कारूपपूर्वपक्षस्य का प्रसक्तिः। अयमंशोऽपि विचार्यश्चेत्-तर्हि पृथगधिकरणं भवतु। छान्दोग्यविचारमध्ये बृहदारण्यकवाक्यविचारपरैतदनन्वयाच्च परमत इव पृथगधिकरणत्वं युक्तम्। कारणवाक्यसमन्वयार्थेषु अधिकरणेषु एवमैक्यानैक्यविचारस्य पृथगवसरो न भवतीति चेत्—यत्र भवति, तत्र निवेश्यतामिति—उच्यते। फलफलिभावे उपयोगाभावेऽपि प्रासङ्गिकोऽयं विचारः। जीवब्रह्मभेदसिद्धान्ती बादरायणः अभेदपक्षस्य प्राधान्येन विचारानर्हतां फल्गुतामध्यवस्यन् यत्रयत्रोपनिषद्वाक्ये संशयाङ्कुरः संभाव्यते, तत्रतत्र

अतः प्रकृतान्मुक्तात्मनोऽभिसंभवितुरर्थान्तरमभिसंभाव्यो ब्रह्मलोकः ; अतो नामरूपयोः निर्वहिता आकाशोऽपि स एव भवितुमर्हति—इति। अत उत्तरं पठति—

सुषुप्त्युत्क्रान्त्योर्भेदेन १। ३। ४३॥

व्यपदेशादिति वर्तते। सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तरत्वेन परमात्मनो व्यपदेशात् प्रत्यगात्मनोऽर्थान्तरभूतः परमात्माऽस्त्येव। तथा हि वाजसनेयके, (बृ. ६-३-७) "कतम आत्मेति। योऽयं विज्ञानमयः प्राणेषु" इति प्रकृतस्य प्रत्यगात्मनः सुषुप्त्यवस्थायाम् अकिञ्चिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते—(बृ. ६-३-२१) "प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्" इति। तथोत्क्रान्तावपि,(बृ. ६-३-३५) "प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन् याति" इति। न च स्वपतः उत्क्रामतो वाऽकिञ्चिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गान्वारोहौ संभवतः। न च क्षेत्रज्ञान्तरेण ; तस्यापि सर्वज्ञत्वासंभवात् ॥ ४३ ॥

इतश्च प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याह—

पत्यादिशब्देभ्यः १। ३। ४४॥

अयं परिष्वञ्जकः परमात्मा उत्तरत्र पत्यादिशब्दैर्व्यपदिश्यते, (बृ. ६-४-२२) "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः। स न साधुना कर्मणा भूयान्, नो एवासाधुना कनीयान्। एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः एष सेतुर्विधरण एषां लोकानामसंभेदाय।

---

विनैवालस्यं गुणसूत्रैरेव भेदं स्थापयति ; यथा सर्वत्रप्रसिद्ध्यधिकरणे, दहराधिकरणे च। अत्र बृहदारण्यकवाक्योपन्यासश्च तटस्थशङ्कानुसारेण। एवमियं शङ्का—नन्वर्थान्तरत्वादीत्ययुक्तम् ; मुक्तादीश्वरस्यार्थान्तरत्वाभावात्। एक एवात्मा। तस्य बद्धावस्था, मुक्तावस्था, ईश्वरावस्थेत्यवस्थात्रयम्। आकाशवाक्ये मुक्तावस्थानिरूपणं वा इतरावस्थानिरूपणं वेति विचार. क्रियत इति चेत्-काममस्तु। तत्रार्थान्तरत्वकथनं न घटते। अत एव अवस्थारूपं ब्रह्मत्वादि मुक्तात्मन्यपि सुस्थम्। न तु तदवस्थापन्नस्य कारणत्वमिष्यते। ऐक्यसाधकवाक्यश्च, 'य एष संप्रसादः-एष आत्मेति होवाच'इति दहरविद्यागतमिव बृहदारण्यकगतमप्यन्यत्। छान्दोग्यविद्यायाः अस्याः याज्ञवल्क्योपदिश्यमानप्रकृतसूत्रद्वयविषयवाक्यविद्यायाश्च दहरविद्यात्वेन कामाद्यधिकरणरीत्या एकतया तत्रत्यैक्यबोधकवाक्यमुपस्थिततरं शंकां जनयति। तत्र हि, "स वा एष महानज आत्मा योऽयं विज्ञानमयः" इत्यैक्यं स्पष्टमुक्तमिति। एवं बृहदारण्यकमूलशंकायां तद्वाक्यपूर्वापरग्रहणेनैव भेदं स्थापयति सूत्रकारः। विभिन्नोपनिषद्गतयोरपि वाक्ययोरेकविद्यानिविष्टत्वादप्यैक्याधिकरणविचारार्थत्वं युक्तम् ; किमुतैवं शंकायाम्। ऐक्योपदेशात् ; पूर्वोक्तबृहदारण्यकवाक्यादिषु। उपष्टम्भकतयाऽन्यदप्याह द्वैतेति॥

ऐक्यश्रुतिपूर्ववाक्यमादाय विरोधं प्रदर्श्य उत्तरवाक्यतोऽपि दर्शयति पत्यादीति।। वशी, ईशान इति पदद्वयं प्रथमश्रुतं विहाय पतिपदग्रहणं तस्य द्विः प्रयुक्ततया भेदकधर्मेष्वादरातिशयः श्रुते

**तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति...एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति", (बृ. ६-४-२४) "स वा एष महान् अज आत्माऽन्नादो वसुदानः", (बृ. ६-४-२५) "अजरोऽमरोऽमृतोऽभयो ब्रह्म" इति। एते च पतित्वजगद्विधरणत्वसर्वेश्वरत्वादयः प्रत्यगात्मनि मुक्तावस्थेऽपि न कथञ्चित् संभवन्ति। अतो मुक्तात्मनोऽर्थान्तरभूतो नामरूपयोर्निर्वहिताऽऽकाशः। ऐक्योपदेशस्तु सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन तदात्मकत्वायत्त इति, (छा. ३-१४-१) "सर्वं खल्विदं ब्रह्म तज्जलान्" इत्यादिभिर्वाक्यैः प्रतिपाद्यत इति पूर्वमेव समर्थितम्। द्वैतप्रतिषेधश्च तत एवेत्यनवद्यम् ॥ ४३ ॥**

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १० ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य तृतीयः पादः ॥



---

स्मीति ज्ञापनार्थम्। **अन्नादः**। आर्षो दीर्घः। ननु मुक्त्यवस्थायां भेद इह कस्मात् सूत्रकारेण नोक्त.-इति शंकायाम्—बृहदारण्यकवाक्यमादाय शंकायाः बृहदारण्यकवाक्यत एव परिहारः कर्तव्य इत्याशयादेतावदेवोक्तम्। मुक्त्यवस्थायामपि भेदः छान्दोग्यदहरविद्यायामेव व्यक्तः। तेन तत्रत्याभेदवाक्यस्यान्यथानिर्वाहोऽपि सिद्धः। सूत्रितञ्च, 'अनुकृतेस्तस्य च'इति प्रागेव। आस्तामेतत्। यावदिहोक्तम्, तावताऽपि तदापि भेदः सिद्धयत्येवेत्याशयेनाह **एतेचे**ति। आकाशवाक्यस्य मुक्त्यवस्थाविषयकत्ववादिना आत्मैक्यस्वीकारे एवं भेदनिर्देशो न घटते। पूर्वं भिन्नयोरेव पश्चादैक्यमिति चेत्—'अन्यद् द्रव्यं हि नैति तद्व्रव्यताम्' इतिन्यायात् तथापि न भवति। न चाभिन्नस्यैव भेदः प्रवाहनित्योपाधिकृतो मुक्तावपीति शंक्यम्; इतरव्यपदेशाधिकरणपूर्वपक्षापरिहारप्रसंगादिति भावः। **ततएवे**ति। 'द्वैतमिव भवति' इत्यस्य ऐक्याभाव-इव भवतीत्यर्थः। ऐक्यस्य ब्रह्मान्तर्यामिकत्वरूपत्वात् तदभावरूप एव भेदो निरस्यते पूर्वोक्तैक्यस्थापनार्थम्। न तु तत्तद्वस्तूनां तदन्तर्यामित्वस्य च अपलापपर्यवसाय्यर्थवर्णनं मृषावाद्युक्तं युक्तम्। न चाखिलहेयप्रत्यनीके सकलहेयास्पदत्वापादको भास्करादिनिर्वाहोऽपि युक्त इति भावः। तथाचैकात्म्यासंभवात् मुक्तब्रह्मणोरपि भेदस्यावश्यकतया प्रकृतमाकाशवाक्यं मुक्तजीवपरम्, उत परमात्मपरमिति विचारो घटते। अत्र पूर्वपक्षे निर्वहितेत्यस्यार्थान्तरवर्णनात् जीवे कारणत्वशंकायाः साक्षादभावेऽपि जीवस्यैव ब्रह्मत्वामृतत्वादिसिद्धौ अन्यस्यैव ब्रह्मत्वादीति पूर्वसिद्धब्रह्मस्थापनप्रकारेऽनाश्वासावसरो भवतीत्येषोऽपि विचार इह प्रसक्त आसीत् ॥

तदेवं विस्पष्टजीवलिङ्गक-जगत्कारणविषयवाक्यानामपि सिद्धं तद्विलक्षणब्रह्मपरत्वम् ॥ श्री. ॥

इति अभिनवदेशिक-श्रीवात्स्यसचक्रवर्ति-वीरराघवाचार्यविरचिते

**भाष्यार्थदर्पणे प्रथमाध्यायतृतीयपादः ॥**

श्रीमते रामानुजाय नमः

प्रथमाध्याये चतुर्थः पादः

२८. आनुमानिकाधिकरणम् १-४-१. (कठ. ३)

**आनुमानिकमप्येकेषामिति चेन्न-शरीररूपकविन्यस्त-गृहीतेः दर्शयति च । १ । ४ । १ ॥**

**उक्तं परमपुरुषार्थलक्षणमोक्षसाधनतया जिज्ञास्यं जगज्जन्मादिकारणं ब्रह्म अचिद्वस्तुनः प्रधानादेः चेतनाच्च बद्धमुक्तोभयावस्थात् विलक्षणं निरस्तसमस्तहेयगन्धं सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं समस्तकल्याणगुणात्मकं सर्वान्तरात्मभूतं निरङ्कुशैश्वर्यमिति । इदानीं कापिलतन्त्रसिद्धाब्रह्मात्मकप्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारी-**

---

**भाष्यार्थदर्पणः १. ४.**

प्रणवाकारत्वस्य भाष्ये स्थापकेन मध्यमाक्षरेणावतरणमारभते **उक्त**मिति। परब्रह्मान्यविषये लिङ्गमस्पष्टं स्पष्टञ्चोपलभ्य कृतं कतिपयोपनिषद्वाक्यान्यपरत्ववर्णनं पूर्वत्र पराकृतम्। अन्यदेव कण्ठोक्तं यत्र लक्ष्यते, तस्य वाक्यजातस्याप्यन्यपरत्वासंभवः क्वचिदिति चतुर्थे पादे प्रतिपाद्यते । न केवलमेतत् ; प्रतिपादितब्रह्मनिषेधस्याप्यवगम्यमानत्वात् परमतमेवात्र संमतमित्यप्याशङ्क्यते । अत इहान्ययोगव्यवच्छेदार्थेऽपि पादे ब्रह्मप्रतिपादकतया पूर्वं स्थापितेष्वपि वाक्येषु तत्परत्वनिर्णये शैथिल्यमधिकमापाद्यते, ब्रह्मनिषेधस्य क्वचिदवगमात्। अन्ययोगशंकया प्रवृत्तेऽपि पादेऽन्ययोगव्यवच्छेदं पूर्वकृतमवधूयायोगशंकैव अत एव कारणत्वाधिकरणादिषु स्पष्टं भविष्यति।

तत्रादौ ब्रह्मनिषेधादिवशादब्रह्मात्मकप्रकृतिपर एव कश्चित् कठोपनिषद्भाग इति प्रत्यवस्थानम् । पूर्वमत्त्रधिकरणप्रमिताधिकरणाभ्यां ब्रह्मपरतया स्थापितौ कौचिद् भागौ । भागान्तरे इह शङ्का । एवं सांख्यतन्त्रसिद्धतत्त्वक्रमपरतयेव प्रतीयमानं वाक्यमत्र विषयः । पूर्वपादान्तिमेऽर्थान्तरत्वाधिकरणे मुक्तादप्यर्थान्तरत्वं ब्रह्मण्युक्तम् । परस्य निषेधात् तन्न युक्तमित्याक्षेपोऽवान्तरसंगतिः ।

सूत्रे **आनुमानिकमपी**त्यपिना ब्रह्मकारणत्वसमुच्चयादन्ययोगव्यवच्छेद एवेह चिकीर्षितः, नायोगव्यवच्छेद इति ज्ञाप्यते। ननु पूर्वं पादद्वयमप्येतादृशमेवेति द्वितीयपादारम्भ एवैतदवगमयितव्यम्; न त्वत्र। प्रत्युत अत्रैवैवंनिर्देशात् पूर्वयोरन्ययोगव्यवच्छेदपरत्वाभाव एव मन्येतेति चेन्न—द्वितीयपादारम्भेऽन्ययोगव्यवच्छेदस्य सूत्राभिमतताया: प्रदर्शितत्वात् । अत्रायमपि: अस्यापि तथात्वं दर्शयतीत्येतावदेवावगन्तव्यम् । यद्वा कारणत्वाधिकरणादौ अयोगशङ्कायाः करिष्यमाणत्वात् पादोऽयमारम्भेऽन्ययोगपरः पश्चादयोगपर इति विशेषसद्भावादारम्भे **अपि**शब्दः । अथवा **आनुमानिकमपी**त्यस्य आनुमानिकमपि कण्ठोक्तमित्यर्थः। तेन ‘ पूर्वपादयोरिव लिङ्गमात्रेण नोन्नयः ; कण्ठोक्तिरप्यस्ती’ति ज्ञापयता ‘प्रधानपुरुषादि-**प्रतिपादनमुखेन....प्रतिपादनच्छायानुसारीणि** ’ इति भाष्यदर्शितार्थप्रदर्शनम्। **एकेषा**मिति षष्ठ्यर्थः कण्ठोक्तत्वपर्यवसायी। एतत्पादविषयवाक्येषु प्रधानं कारणमिति प्रतिपादनमपि क्वचित्। क्वचित् सांख्योक्त-

ष्यपि कानिचित् वाक्यानि कासुचिच्छाखासु सन्तीत्याशङ्क्य ब्रह्मैककारणत्वस्थैर्म्ने तन्निराक्रियते । कठवल्लीष्वाम्नायते—(कठ. ३-१०) "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति । तत्र संदेहः—किं कापिलतन्त्रसिद्धमत्रयात्मकं प्रधानमिहाव्यक्तशब्देनोच्यते, उत न—इति । किं युक्तम्? प्रधानमिति । कुतः? 'महतः परमव्यक्तमव्यक्तात् पुरुषः परः" इति तन्त्रसिद्धतत्त्वप्रक्रियाप्रत्यभिज्ञानेन तस्यैव प्रतीतेः; "पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च । अतोऽव्यक्तं कारणमिति प्राप्तम् । तदिदमुक्तम्—आनुमानिकमप्येकेषामिति चेत् इति—एकेषां शाखिनां शाखास्वानुमानिकं प्रधानमपि कारणमाम्नायत इति चेत्—

अत्रोत्तरम्—नेति । नाव्यक्तशब्देनात्रयात्मकं प्रधानमिहाभिधीयते । कुतः? शरीररूपकविन्यस्तगृहीतेः—शरीराख्य-रूपकविन्यस्तस्य अव्यक्तशब्देन गृहीतेः—आत्मशरीरबुद्धिमनइन्द्रियविषयेषु रथिरथादिभावेन रूपितेषु रथरूपणेन विन्यस्तस्य शरीरस्यात्राव्यक्तशब्देन ग्रहणादित्यर्थः । एतदुक्तं भवति—पूर्वत्र हि, (कठ. १-३-३) "आत्मानं रथिनं विद्धि शरीरं रथमेव च । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयां-

---

प्रधानादितत्त्वानां बहूनां कयाऽपि रीत्या स्पष्टं कथनात् प्रधानकारणत्वमेवाभिमतमिति ज्ञायते इत्याशयः । तत् आशंकनम् ।

**इन्द्रियेभ्य** इत्यादि । शाङ्कर इव महतः परमिति मन्त्र एव प्रधानविषयवाक्यम् । पूर्वपक्षिणा तन्मात्रस्य सम्यगुपपादनात् । इन्द्रियेभ्य इत्यादिकं सिद्धान्तकथनोपयुक्तम् । सांख्याभिमतपदार्थास्तत्रापि सन्तीति तत्पठनम् । अत्र पूर्वपक्षे परत्वं क्वचित् कारणत्वात्, क्वचित् प्रकारान्तरादिति यथायथं भाव्यम् । महतः कारणमव्यक्तं ततः परम् । अव्यक्तस्याचेतनस्य परार्थत्वात् चेतनः पुरुषः ततः परः । बुद्धिशब्दोऽहङ्कारपर इह भाव्यः; मनसः स कारणमिति परः। ततश्च महान् परः । महत आत्मत्वं व्यापित्वात्; आत्मत्वेनाभिमन्यमानत्वाच्च । महदात्मनोर्भेदाग्रहात् किल तन्मते संसारः । महदात्मनोर्मध्ये महत एव विशेष्यत्वम्, अशब्दमस्पर्शं—महतः परं ध्रुवमिति वाक्यादपि ज्ञायते । तच्च प्रधाने स्वरसं वाक्यम् । इन्द्रियार्थमनसां मुख्यकार्यकारणभावाभावेऽपि इन्द्रियाणां पृथिव्यादिपदार्थैराप्यायितत्वात् अर्थानां मनोधीनप्रवृत्तिनिष्पाद्यत्वाच्च प्रयोजकत्वनिबन्धनं परत्वमिति । **प्रधानमिती**ति । प्रधानमुच्यत इति युक्तमित्यर्थः । **आम्नायते** इति । साक्षात् कथ्यते; न तु लिङ्गबलात् कल्प्यत इति पूर्वपादत इह विशेषः ।

रूपकं यथा, तथा विन्यस्तं **रूपकविन्यस्तम्** । रूपकत्वं रूपवत्तापादकत्वम् । शरीरादीनि रथादिभिः स्वगतरूपेण रथत्वादिना रूपवत्तयाऽऽपाद्यन्त इति रथादीनां रूपकत्वम् । रूपवत् करोतीति रूपकम् । शरीराभिन्नं तत् रूपकविन्यस्तं शरीररूपकविन्यस्तम् । कथं शरीरस्य विशेषणत्वम्, येन पूर्वनिपात इति चेत्—सामान्यविशेषभावात् । रथिरथादीनि बहून्यत्र रूपकविन्यस्तानि सन्तीति तत्र

स्तेषु गोचरान्" इत्यादिना, "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यन्तेन संसाराध्वनः पारं वैष्णवं पदं प्रेप्सन्तमुपासकं रथित्वेन, तच्छरीरादीनि च रथरथाङ्गत्वेन रूपयित्वा, 'यस्यैते रथादयो वशे तिष्ठन्ति, स एवाध्वनः पारं वैष्णवं पदमाप्नोति' इत्युक्त्वा, तेषु रथादिरूपितशरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि, तान्युच्यन्ते, "इन्द्रियेभ्यः पराः" इत्यादिना। तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यः गोचरत्वेन रूपिताः विषयाः वशीकार्यत्वे पराः; वश्येन्द्रियस्यापि विषयसंनिधाविन्द्रियाणां दुर्निग्रहत्वात्। तेभ्योऽपि परं प्रग्रहरूपितं मनः; मनसि विषयप्रवणे विषयासन्निधानस्याप्यकिञ्चित्करत्वात्। तस्मादपि सारथित्वरूपिता बुद्धिः परा; अध्यवसायाभावे मनसोऽप्यकिञ्चित्करत्वात्। तस्या अपि रथित्वरूपित आत्मा कर्तृत्वेन प्राधान्यात् परः; सर्वस्य चास्यात्मेच्छायत्तत्वात् आत्मैव महानिति च विशेष्यते। तस्मादपि रथरूपितं शरीरं परम्, तदायत्तत्वात् जीवात्मनः सकलपुरुषार्थसाधनप्रवृत्तीनाम्। तस्मादपि परः सर्वान्तरात्मभूतोऽन्तर्यामी अध्वनः पारभूतः परमपुरुषः; यथोक्तस्याऽऽत्मपर्यन्तस्य समस्तस्य तत्सङ्कल्पायत्तप्रवृत्तित्वात्। स खल्वन्तर्यामितयोपासनस्यापि निर्वर्तकः। (शारी. २-३-४०) "परात्तु तच्छ्रुतेः" इति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते। वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव। तदिदमुच्यते, "पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति। तथा चान्तर्यामिब्राह्मणे, (बृ. मा. ७-६) "य आत्मनि तिष्ठन्" इत्यादिभिः सर्वं साक्षात्कुर्वन् सर्वं नियमयतीत्युक्त्वा, "नान्योऽतोऽस्ति द्रष्टा" इति नियन्त्रन्तरं निषिध्यते। भगवद्गीतासु च, (गी. १८-१४) "अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्। विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्" इति। दैवमत्र पुरुषोत्तम एव; (गी. १५-१४) "सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च" इति वचनात्। तस्य च वशीकरणं तच्छरणागतिरेव। यथाह, (गी. १८. ६१,६२) "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया। तमेव शरणं गच्छ" इति। तदेवम्, "आत्मानं

---

सामान्ये शरीराख्यनि[illegible]ग्रहणात् घटद्रव्यमित्यत्रेव समास उचित एव। **रथाङ्गत्वेन**—रथापेक्षितसारथिहयप्रग्रहत्वादिना। सारथिभूता बुद्धिश्च न महत्तत्त्वम्; किन्तु विषयादौ हेयत्वाद्यध्यवसायः। **प्रग्रहो** रश्मिः। **वशीकार्यत्वे पराः**-प्रथमं वशीकार्याः—इन्द्रियासंनिहिताः कार्याः। मनसो वशीकरणं विषयतो निवर्तनम्। बुद्धेरध्यवसायस्य वशीकरणं दोषचिन्तनानुवृत्तिसंपादनम्। आत्मनो वशीकरणम् अध्यवसायार्थेच्छादिसंपादनम्। **महानिति च विशेष्यत** इति चकारेण पर इत्येतत्समुच्चयः। महत्त्वमात्मनः कर्तृत्वात् इच्छाद्यदृष्टादिपरिकरवत्त्वाच्च। **तदायत्तत्वादिति**। शरीरमाद्यं खलु धर्मसाधनमिति भावः। स्वपरिगृहीतशरीरगतसत्त्वादिगुणानुगुणा चात्मनः प्रवृत्तिः। शरीरवशीकरणञ्च अदुष्टान्नग्रहणादिना शोधनम्। **वशीकार्येति**। वशीकार्याः ये उपासनोपायाः तेषु काष्ठात्वात् अवधित्वात् काष्ठेति, परम

रथिनं विद्धि" इत्यादिना रथ्यादिरूपकविन्यस्ता इन्द्रियादयः, "इन्द्रियेभ्यः परा ह्यर्थाः" इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते, न रथरूपितं शरीरमिति परिशेषात् तत् अव्यक्तशब्देनोच्यत इति निश्चीयते। अतः कापिलतन्त्रसिद्धस्य प्रधानस्य प्रसङ्ग एव नास्ति।

न चात्र तत्तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञा, "इन्द्रियेभ्यः परा ह्यर्थाः" इतीन्द्रियेभ्योऽर्थानां शब्दादीनां परत्वकीर्तनात्। न हि शब्दादय इन्द्रियाणां कारणभूतास्तद्दर्शने। "अर्थेभ्यश्च परं मनः" इत्यपि न तत्तन्त्रसङ्गतम्; अकारणत्वादेव। तथा, "बुद्धेरात्मा महान् परः" इत्यप्यसङ्गतम्; बुद्धिशब्देव महत्तत्त्वस्याभिधानाभ्युपगमात्। न हि महतो महान् परःसंभवति। महत आत्मशब्देन विशेषणं च न सङ्गच्छते। अतो रूपकविन्यस्तानामेव ग्रहणम्।

दर्शयति च तदेव, "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥ "यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेत् ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि" इति। अजितबाह्याभ्यन्तरकरणैरस्य परमपुरुषस्य दुर्दर्शत्वमभिधाय हयादिरूपितानामिन्द्रियादीनां वशीकारप्रकारोऽयमुच्यते। यच्छेद्वाङ्मनसी। वाचं मनसि नियच्छेत्—वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थः। वाक्छब्दे द्वितीयायाः, (अष्टा. ६-१-३६) "सुपां सुलुक्" इति लुक्। मनसी इति सप्तम्याश्छान्दसो दीर्घः। तद्यच्छेत् ज्ञान आत्मनि। तत् मनो बुद्धौ नियच्छेत्। ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते। ज्ञान आत्मनि इति व्यधिकरणे सप्तम्यौ। आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः। ज्ञानमात्मनि महति नियच्छेत् बुद्धिं कर्तरि महत्यात्मनि नियच्छेत्। तद्यच्छेत् शान्त आत्मनि—तं कर्तारं परस्मिन् ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत्। व्यत्ययेन तदिति नपुंसकलिङ्गता। एवम्भूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः॥ १॥

---

प्राप्यत्वात् परा गतिरिति चोच्यते। **रथ्यादिरूपकविन्यस्ता इन्द्रियादय** इति। इन्द्रियस्य रथित्वाभावेपि आत्मानं रथिनमिति वाक्ये रथिन आदित्वात् इन्द्रियेभ्य इति वाक्ये चेन्द्रियाणामादित्वात् एवमुक्तिः। **एतदुक्तं भवतीत्यारब्धस्य इतिनिश्चीयत** इत्यत्र वा **दर्शयति चे**ति खण्डग्रहणात् प्राग्वा समाप्तिः।

एवं पूर्वसंदर्भानुसारात् विषयवाक्यवास्तवार्थ उक्तः। पूर्वपक्ष्युक्तस्यार्थस्य प्रकृतवाक्यार्थत्वासंभवादपि नैवमित्याह **न चात्रे**ति। उत्तरवाक्यानुसाराच्चैवमिति दर्शयिष्यति **दर्शयति चे**ति खण्डव्याख्याने। **शान्ते** कामक्रोधादिषडूर्मिमुखहेयप्रत्यनीके। **नियच्छेत्** परमात्ममात्मस्य शेषं कुर्यात्। अत्र मन्त्रे विषयाणां शरीरस्य च परित्यागः, 'इन्द्रियाणि विषयेषु नियच्छेत्, आत्मानञ्च शरीरे' इत्युक्त्यसंभवात्। **एवम्भूतेनेति**। अनेन रथेन रथी भक्तिरूपाध्वनः काष्ठां याति। विष्णोः पदमप्यध्वपारभूतम्; तदुपरि लोकाभावात्॥ १॥

अव्यक्तशब्देन कथं व्यक्तस्य शरीरस्याभिधानम्? तत्राह—

सूक्ष्मं तु तदर्हत्वात् ॥ १ । ४ । २ ॥

भूतसूक्ष्ममव्याकृतं हि अवस्थाविशेषमापन्नं शरीरं भवति। तदव्याकृतमिह शरीरावस्थमव्यक्तशब्देनोच्यते। तदर्हत्वात्—तस्याव्याकृतस्याचिद्वस्तुन एव विकारापन्नस्य रथवत् पुरुषार्थसाधनप्रवृत्त्यर्हत्वात् ॥ २ ॥

यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते; कापिलतन्त्रसिद्धोपादाने कः प्रद्वेषः; तत्रापि हि भूतकारणमेवाव्यक्तमित्युच्यते; तत्राह—

तदधीनत्वादर्थवत् ॥ १ । ४ । ३ ॥

परमकारणभूतपरमपुरुषाधीनत्वात् प्रयोजनवत् भूतसूक्ष्मम्। एतदुक्तं भवति—न वयमव्यक्तं तत्परिणामविशेषांश्च स्वरूपेण नाभ्युपगच्छामः; अपितु परमपुरुषशरीरतया तदात्मकत्वविरहेण। तदात्मकत्वेनैव हि प्रकृत्यादयः स्वप्रयोजनं साधयन्ति; अन्यथा स्वरूपस्थितिप्रवृत्तिभेदाः तेषां न स्युः; तथाऽनभ्युपगमादेव तन्त्रसिद्धप्रक्रियानिरसनम्—इति। श्रुतिस्मृत्योर्हि जगदुत्पत्तिप्रलयवादेषु परमपुरुषमहिमवादेषु च प्रकृतिविकृतिपुरुषास्तदात्मकाः संकीर्त्यन्ते; यथा, (सुबाल. २.) "पृथिव्यप्सु लीयते" इत्यारभ्य, "तन्मात्राणि भूतादौ लीयन्ते। भूतादिर्महति लीयते। महानव्यक्ते लीयते। अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते। तमः परे देवे एकीभवति"; तथा, (सुबाल ७) "यस्य पृथिवी शरीरं यस्यापश्शरीरं यस्य तेजश्शरीरं यस्य वायुः शरीरं यस्याकाशश्शरीरं यस्याहङ्कारश्शरीरं यस्य बुद्धिश्शरीरं यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम्, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः"; तथा (गी. ७-४-७) "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगत्॥ एतद्योनीनि भूतानि सर्वाणीत्युपधारय। अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥ मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति; (वि. १-२-१८) व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः

---

सूक्ष्मम्-अव्यक्तं हि शरीरीयसूक्ष्मावस्थाविशिष्टम्। तस्मादभेदात् अव्यक्तपदेन शरीरं गृह्यते। ननु शरीरपदेनैवाव्यक्तं गृह्यताम्; प्रकृतिसंबन्धस्यैवात्मनो मुख्यप्रतिबन्धकत्वात्॥ नैवम्; शरीरस्यैव प्रकृतविवक्षितपुरुषार्थसाधनार्हत्वादिति सूत्रार्थः। सूक्ष्मपदेन, प्रधानस्येव शरीरस्यापि सत्त्वरजस्तमस्तारतम्यादिबहुदुर्ग्रहाकारवत्तया सूक्ष्मत्वात् व्यक्तत्वाभावादव्यक्तपदप्रयोग उचित इत्यपि ज्ञाप्यते ॥ २ ॥

ननु प्रधानं श्रौतं वा भवतु, आनुमानिकं वा। प्रकृतवाक्यस्य रूपकविन्यस्तपरत्वेऽपि शरीरादेः प्रधानकारणकत्वस्य भवतोऽपीष्टत्वे ब्रह्मकारणकत्वभङ्ग एवेति सिद्धं नः समीहितमिति शंकते यदीति। अर्थवत् कार्यकरम्। आनुमानिकं ह्यब्रह्मात्मकम्; न च तथाभूतस्य कार्यकरत्वसंभवः। अतः प्रधान-

काल एव च" इति, (वि. ६-४-३९) "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि। परमात्मा च सर्वेषामाधारः परमेश्वरः" इति च ॥३॥

ज्ञेयत्वावचनाच्च । १ । ४ । ४ ॥

यदि तन्त्रसिद्धमिहाव्यक्तमविवक्षिष्यत्, ज्ञेयत्वमवक्ष्यत्; व्यक्ताव्यक्तज्ञविज्ञानात् मोक्षं वदद्भिस्तान्त्रिकैः तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात्। न चास्य ज्ञेयत्वमुच्यते; अतो न तन्त्रसिद्धस्येह ग्रहणम् ॥ ४ ॥

वदतीति चेन्न प्राज्ञो हि प्रकरणात् । १ । ४ । ५ ॥

(कठ.१-३-१५) "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते" इति अव्यक्तस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरिति चेत्—तन्न। प्राज्ञः परमपुरुष एव ह्यत्र श्लोके निचाय्यत्वेन प्रतिपाद्यते; "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्", "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति प्राज्ञस्यैव प्रकृतत्वात्। अत एव, "पुरुषान्न परं किञ्चित्" इति न पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधः। तस्य च परमपुरुषस्याशब्दत्वादयो धर्माः, (मु. १-६) "यत्त-

---

कारणकत्वस्य प्रधानविशिष्टब्रह्मकारणकत्वरूपत्वान्न मतद्वैक्यमिति। दीपसारयोस्त्वन्यथाऽवतार्य व्याख्यातम्। तद् यथा—'इन्द्रियेभ्यः परा' इति मन्त्रे यदि रूपकविन्यस्तानामेव ग्रहणम्, कुतस्तर्हि अतथाभूतस्य पुरुषस्य प्रस्ताव इत्यत्राह तदधीनत्वादिति। सर्वस्यापि रूपकविन्यस्तस्य परमपुरुषाधीनतयैव प्रयोजनवत्त्वमिति दर्शयितुमिति भावः ॥ ३ ॥

नन्वास्तामात्मादीनां रथित्वादिना पूर्वं रूपणम्। अत्रापि तद्ग्रहणमेवेति कुतः। अन्यथा परत्वोपपादनं न भवतीति चेत्—नैवम्। सांख्यमते इन्द्रियाद्युपासकापेक्षया अर्थाद्युपासकेऽधिककालफलानुभवस्य संमततया तन्निबन्धनस्य परत्वस्य विवक्षासंभवात्। स्मर्यते हि, 'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः। भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः। बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः। पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः। पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते' इति। अभिमानोऽहंकारः। बुद्धिर्महान्। पुरुषो जीवः। अत एवात्र श्रुतावपि पुरुषपदं जीवपरमेव। न च मनसोऽर्थोपासनाधिकफलहेतुत्वमत्र न स्मृतमिति वाच्यम्—अस्मरणेऽपि श्रुतेस्तादृशफलसद्भावाभिमतिसंभवादित्यत्राह ज्ञेयत्वेति। न ह्यत्र प्रकरणे सांख्यपदार्थानां ज्ञेयत्वमुपास्यत्वं फलार्थमुच्यते इत्यर्थः। नचिकेतसो मुमुक्षुत्वादपि नान्यफलकथनसंभवः। आनन्दमयाधिकरणे, हेयत्वावचनाच्चेत्युक्तम्। अत्र पुरुषार्थत्वबुद्ध्या ज्ञेयत्वेति। तथा, 'तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्' (ईश्व. का. २) इति प्रकृतिपुरुषान्यत्वाध्यवसायलाभार्थं व्यक्तानामव्यक्तस्य ज्ञस्य च विज्ञानं सांख्येष्टमप्यत्र नोच्यते। अतः रूपितवस्तुनिरूपणप्रकरणमध्यपातित्वात् ज्ञेयत्वावचनाच्च रूपकविन्यस्तविषयकमेवेदम् ॥ ४ ॥

दद्रेश्यमग्राह्यम्" इत्यादिश्रुतिप्रसिद्धाः। "महतः परम्" इत्यपि, "बुद्धेरात्मा महान् परः" इति पूर्वप्रकृताज्जीवात्मनः परत्वमेवोच्यते ॥ ५ ॥

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च । १ । ४ । ६ ॥

अस्मिन् प्रकरणे ह्युपायोपेयोपेतॄणां त्रयाणामेव चैवमुपन्यासः—ज्ञेयत्वेनोपन्यासः, तद्विषयश्च प्रश्नो दृश्यते; नान्यस्याव्यक्तादेः। तथा हि नचिकेता मुमुक्षुस्सन् मृत्युप्रदत्ते वरत्रये प्रथमेन वरेणाऽऽत्मनः पुरुषार्थयोग्यतापादिनीमात्मनि पितुः सुमनस्कतां प्रतिलभ्य, द्वितीयेन वरेण मोक्षोपायभूतां नाचिकेताग्निविद्यां वव्रे—(कठ. १-१-१६) "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्। स्वर्गलोका अमृतत्वं भजन्ते एतद् द्वितीयेन वृणे वरेण" इति। स्वर्गशब्देनात्र परमपुरुषार्थलक्षणो मोक्षोऽभिधीयते, "अमृतत्वं भजन्ते" इति तत्रस्थस्य जननमरणाभावश्रवणात्; उत्तरत्र क्षयिफलकर्मनिन्दादर्शनाच्च; (कठ. १-१-१७) "त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत् तरति जन्ममृत्यू" इति च प्रतिवचनात्। तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेण उपेयस्वरूपमुपेतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूपं च पृष्टम्—(कठ. १-१-२०) "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः" इति। एवं मोक्षे पृष्टे, तदुपदेशयोग्यतां परीक्ष्योपदिदेश. (कठ. १-२-१२) "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति। तदेवं सामान्येनोपदिष्टे, नचिकेताः प्रीतस्सन् "देवं मत्वा" इत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्य, "अध्यात्मयोगाधि-

---

आत्मन इत्यनुक्त्वा महत इत्युक्त्या महत्तत्त्वमेव ग्राह्यमित्यत्राह महतः परमित्यपीति। मुक्त्यर्थाध्यवसायोपयोगिशास्त्रार्थज्ञानादिमहत्त्वविशिष्टवेषेणाप्यस्य तादात्विकशरीरापेक्षया निकृष्टत्वं विवक्षित्वा महत्पदप्रयोग इति भावः ॥ ५ ॥

ननु, 'या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य' इति सांख्योक्त्या प्रकृतिदर्शनं पुरुषदर्शनञ्च मोक्षायापेक्षितम्। अतः प्रकृतिपुरुषद्वयमेव कृत्स्नप्रकरणार्थः स्यादित्यत्राह त्रयाणामेव चेति। प्रधानमिह नोच्यते। जीवात्मकपुरुषः, तदतिरिक्तः परमपुरुषः, तत्प्राप्त्युपायभूतविज्ञानञ्चेति त्रयमेवोच्यते। अतो जीवातिरिक्तापलापो दुष्कर इति। त्रयाणामिति न वरत्रयविवक्षा; तावता प्रकृतिज्ञेयत्वनिषेधासिद्धेः। मोक्षार्थेनैव प्रकृतिज्ञेयत्वकथनसंभवात्। प्राप्यप्राप्तृप्रापकाणां त्रयाणामेव तृतीयप्रश्नोत्तरावसरे उपन्यासः, अत एव तृतीयप्रश्नोऽपि त्रितयविषयक एवेति सूत्रार्थः। ननु यथा 'येयं प्रेते' इति तृतीयवरे पृष्टे, तं दुर्दर्शमित्यादिना चोपन्यासे सत्यपि, वरत्रयातिरेकेण अन्यत्रधर्मादिति प्रश्नान्तरम्, तथा मृत्युना तदपृष्टमपि प्रधानमुपन्यस्यतामित्यत्र, पूर्वपृष्टस्यैव पुनर्वैशद्याय प्रश्नात् उपन्यस्तमपि नान्यदित्याह तदेवं सामान्येनेति। ननु प्राप्य-प्राप्तृ-प्राप्त्युपाय-तत्फल-प्राप्तिविरोधिरूपार्थपञ्चके येयंप्रेत इति मोक्षे फले पृष्टे उपन्यसनीये, तच्छेषतया प्राप्यप्राप्तुपायानामिव प्राप्तिविरोधिनोऽप्युपन्यासे को दोषः? अतः, 'अशब्द-

गमेन " इति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च, " मत्वा धीरो हर्षशोकौ जहाति " इति निर्दिष्टस्य ब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ, (कठ. १-२-१४) "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद" इति। एवं सकलेतर-अतीतानागतवर्तमानसाध्य-साधन-साधकविलक्षणे त्रये पृष्टे, प्रथमं प्रणवं प्रशस्य तद्वाच्यं प्राप्यस्वरूपं तदन्तर्गतं च प्राप्तृस्वरूपं वाचकरूपं चोपायं पुनरपि सामान्येन ख्यापयन् प्रणवं तावदुपदिदेश, "सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं संग्रहेण ब्रवीमि॥ ओमित्येतत्" इति। एवमुपदिश्य पुनरपि प्रणवं प्रशस्य प्रथमं तावत् प्राप्तुः प्रत्यगात्मनस्स्वरूपमाह, " न जायते म्रियते वा विपश्चित् " इत्यादिना। प्राप्यस्य परस्य ब्रह्मणो विष्णोः स्वरूपम्, "अणोरणीयान्" इत्यादिना, "क इत्था वेद यत्र सः" "इत्यन्तेनोपदिशन् मध्ये, " नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन " इत्यादिनोपायभूतस्योपासनस्य भक्तिरूपतामप्याह। (कठ. १-३-१) "ऋतं पिबन्तौ" इति चोपास्यस्योपासकेन सहावस्थानात् सूपासतामुक्त्वा, "आत्मानं रथिनं विद्धि" इत्यादिना, " दुर्गं पथस्तत् कवयो वदन्ति" इत्यन्तेनोपासनप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय, " अशब्दमस्पर्शम् " इत्यादिनोपसंहृतम्। अतस्त्रयाणामेवात्र ज्ञेयत्वेनोपन्यासः प्रश्नश्च। तस्मान्नेह तान्त्रिकस्याव्यक्तस्य ग्रहणम्॥

---

मस्पर्शम्—मृत्युमुखात् प्रमुच्यते' इति तत् कथ्यताम्, हर्षशोकौ जहातीत्येतद्विवरणरूपतया-इत्याशङ्कायाम्-अन्यत्रधर्मादिति पुनःप्रश्नरीतिर्न प्रकृतिं स्पृशतीति दर्शयति **पुनः पप्रच्छ अन्यत्रधर्मादि**त्यादिना। धर्माधर्मतत्फलविलक्षणस्य पृष्टत्वात् धर्माधर्मतत्फलरूपं प्राप्तिविरोधि न पृच्छ्यत इति व्यक्तम्। प्रकृतिप्राकृतानां हेयानां ज्ञातत्वात् तदतिरिक्तमेव जिज्ञासते नचिकेता इति भावः। **एवं सकले**ति। यत्र मोक्षस्वरूपे स्थितं कार्यजातं 'हर्षशोकौ जहाती'ति त्याज्यतयोक्तहर्षशोककारणभूतधर्माधर्मात्मकं तत्कार्यानित्यफलात्मकञ्च न भवति, तद् वदेति परिपृष्टः, अत्र तत्साधकस्य प्राप्तुः प्राप्यस्य प्राप्त्युपायस्य च संगृहीतस्य वैशद्यविधानप्रश्न एव तात्पर्यम्। अत एवोपरि, 'एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते', 'न जायते म्रियते वा', 'अणोरणीयान्' इति त्रयाणामेवोपन्यासः। व्यक्ताव्यक्तज्ञानस्य वक्तव्यत्वे तु सशब्दं सस्पर्शं सरूपमित्यपि निर्दिश्येतेति भावः। **अन्यत्रधर्मा**दिति मन्त्रार्थस्तु-हर्षशोककारणभूतधर्माधर्मभूतभवद्भविष्यत्तत्फलानात्मकं पृष्टपूर्वं मोक्षतत्त्वं किञ्चिदुपदिष्टं यथा त्वं **पश्यसि** विशदं साक्षात्करोषि, तथा मे **वद** व्यक्तं ब्रूहीति। त्रयस्यात्र विशिष्यानिर्देशेऽपि एवं प्रश्नस्य विलक्षणत्रयप्रश्न एव पर्यवसानात् **विलक्षणे त्रये पृष्टे** इति भाषितम्। **तपांसि** तपःप्रतिपादकारण्यकभागाः। **भक्तिरूपतामपी**ति। प्राप्यस्य सिद्धोपायत्वरूपप्रापकत्वशेषतया तामप्याहेति भावः। **उपसंहृत**मिति। देवं मत्वेत्युक्तं मननमेव, अक्रतुः पश्यति, यमेवैष वृणुते, यस्तु विज्ञानवान् भवति, निचाय्य तम् इति

महद्वच्च । १ । ४ । ७ ॥

यथा, " बुद्धेरात्मा महान् परः " इत्यत्रात्मशब्दसामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यते, एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् ॥

इति आनुमानिकाधिकरणम् ॥ १ ॥

२९. चमसाधिकरणम् १-४-२ (श्वे. ४)

चमसवदविशेषात् । १ । ४ । ८ ॥

अत्रापि तन्त्रसिद्धप्रक्रिया निरस्यते ; न ब्रह्मात्मकानां प्रकृतिमहदहङ्कारादीनां स्वरूपम् ; श्रुतिस्मृतिभ्यां ब्रह्मात्मकानां तेषां प्रतिपादनात् ।

यथा आथर्वणिका अधीयते (मंत्रि. १) "विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् । ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः। सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत् । गौरनाद्यन्तवती सा जनित्री भूतभाविनी । सिताऽसिता च रक्ता च सर्वकामदुघा विभोः। पिबन्त्येनामविषमामविज्ञाताः कुमारकाः। एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगाम् । ध्यानक्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसभं विभुः । सर्वसाधारणीं दोग्ध्रीं पीड्यमानां तु यज्वभिः ", (२-५) " चतुर्विंशतिसङ्ख्यातमव्यक्तं व्यक्तमुच्यते " इति । अत्र प्रकृत्यादीनां स्वरूपमभि-

---

पदैर्विव्रियते इति तत्कर्म ब्रह्मैव । प्रकृतिपरत्वे महतः परं ध्रुवमिति ध्रुवत्वेन प्रशंसनमप्यनुपयुक्तमिति च ध्येयम् ॥ ६ ॥

आत्मशब्दसामानाधिकरण्यादिति । बुद्धिशब्दस्य सांख्यमते महत्तत्त्वपरत्वात् तद्ग्रहणे ततः परत्वं महति दुर्वचम् । बुद्धिशब्दस्यार्थान्तरवर्णने च सांख्यप्रसिद्धित्यागः ; आत्मशब्दरूढित्यागश्च । अस्माकं तु महच्छब्दशक्यार्थत्यागो नास्ति ; तस्य सांख्यमहन्मात्रवाचित्वाभावात् । अत एवात्मनोऽन्यत्वात् पुरुषः श्रुतः पर एवेति नात्राब्रह्मात्मकं किञ्चिदुच्यते । एवमुपक्रमे बह्वन्यथाकरणात् वरमव्यक्तपदस्य परमोपक्रमस्थशरीरपदाभिहितार्थपरतयैकरस्यादरणमिति भावः ॥ ७ ॥

मा भूत् महदव्यक्तादिशब्दानां सांख्यप्रसिद्धार्थासंभवात् कठोपनिषदः सांख्यपरत्वम् ; यत्र प्रधानपरत्वं सिद्धान्तिनोऽपीष्टम् , तत एव सांख्यपरत्वमुपनिषदः प्रदर्शयाम इति शङ्कयाऽधिकरणान्तरारम्भः । सांख्यैरनुमानत एव प्रकृतिमहदहङ्कारादेः साधनात् अनुमानस्य चाप्रतिष्ठानात् तदस्वीकारेण भूतभौतिकमात्रमद्वैतिष्वपि केचिदभ्युपयन्ति । तथा तन्निरासो दुष्कर इति दर्शयितुमाह **न ब्रह्मात्मकाना**मित्यादि । इदमत्राद्वैतखण्डनावसरे **श्रुतिप्रसिद्धाया** इति पदेन सूचयिष्यते । **अष्टरूपाम्** प्रकृतिमहदहङ्कारतन्मात्ररूपाम् एषां द्वितीयान्तानां **पिबन्त्येना**मित्यत्रान्वयः । **ध्यायते** संकल्पविषयीक्रियते । **अध्यासिता** अधिष्ठिता । **तन्यते** पञ्चभूतरूपेण । **प्रेर्यते** व्यष्ट्यर्थम् । **सूयते** इति कर्तरिप्रयोगः ; पुरुषार्थभूतं जगदुत्पादयतीत्यर्थः । **असिता** कृष्णा । **अविषमाम्** कर्मानुगुणमविशेषेण सर्वजीवार्थाम् । **अविज्ञाताः** विज्ञानरहिताः । कर्तरिक्तः । **यज्वभिः** कर्मिभिः । **चतुरि**ति । अव्यक्तं प्रधानं महदादि व्यक्तञ्च मिलितं

हितम् । यदात्मकाश्चैते प्रकृत्यादयः, स परमपुरुषोऽपि, (२-४) "तं षड्विंशकमित्याहुः सप्तविंशमथापरे । पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदुः" इति प्रतिपाद्यते ।

अपरे चाथर्वणिकाः, (गर्भोप.) "अष्टौ प्रकृतयः षोडश विकाराः" इत्यधीयते ।

श्वेताश्वतराश्चैवं प्रकृतिपुरुषेश्वरस्वरूपमामनन्ति, (श्वे. १-८-१०) संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः । अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता । अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ॥ क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः । तस्याभिध्यानात् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः", (श्वे. ४-९-१०) "छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" इति । तथोत्तरत्रापि, (श्वे. ६-१६) "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" इति ।

स्मृतिरपि, (गी.)(१३-१९-२१) "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् । कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते । पुरुषः प्रकृतिस्थोऽपि भुङ्क्ते प्रकृतिजान् गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु", (१४-५) "सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः । निबध्नन्ति

---

चतुर्विंशतिसंख्यमित्यर्थः । **परमपुरुषोपीति** । पूर्ववाक्येऽप्यधिष्ठाता कश्चिदुक्त एव । परन्तु अप्रधानतया । एवं तत्र स जीवविलक्षण इति न ज्ञातम् । अत्र पृथक्संख्यानात् स्पष्टं तदवगम इति भावः । **षड्विंशम्** । कालरूपद्रव्यस्य पृथग्गणनादेवम् । **निर्गुणं** सत्त्वरजस्तमोगुणावश्यम् । **सांख्यम्** जीवाधिकत्वेन संख्येयम् । **षोडश** पञ्च भूतानि एकादशेन्द्रियाणि च । **क्षरम्** क्षरणस्वभावं व्यक्ताव्यक्तमचेतनम् अक्षरञ्च चेतनम् । **अकर्ता** । 'तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्' इति हि गीतम् । **त्रयम्** उक्तं त्रयं भिन्नभिन्नत्वेन **विन्दते** जानाति, तदा **ब्रह्म भवति**-मुक्तो भवति । यद्वा त्रिविधं ब्रह्ममेतदिति वक्ष्यमाणत्वात् यदा त्रयं ब्रह्म जानाति, तदा **एतत्** 'मुच्यते सर्वपाशैः' इति पूर्वमन्त्रोक्तं फलं भवतीत्यर्थः । **हरः** भोगाय सर्वहरणपरः जीवः । **अभिध्यानात्** संशीलनात् । **योजनात्** धारणाध्यानरूपात् । **तत्त्वभावात्** तत्त्वाविर्भावात् । **भूयः** पुनः **अन्ते च तत्त्वभावात्** अन्तिमप्रत्ययाच्च क्रमजातात् । **अस्मादिति** । **अस्मात् तस्मिन्** इति पदद्वयोक्तस्य मायाभिन्नत्वस्य वाक्ये स्वरसतः प्रतीतेः स्त्रीलिङ्गाभावाच्च पूर्वार्धोक्तं वेदवैदिककर्मजातं तत्पदद्वयार्थः । वेदो वैदिककर्म च मायिकर्तृकसृष्टिविषयस्य विश्वस्य प्रभवः ; 'अतः प्रभवात्' इति हि सूत्रम् । **तत्र** जीवाश्च निरुद्धा इत्यर्थः। **अवयवभूतैः** अंशभूतैः शरीरभूतैर्जीवैः। **गुणेशः** सकलकल्याणगुणः ; सत्त्वरजस्तमोगुणनियन्ता वा। संसारात् मोक्षः, तस्य **स्थितिः** स्थैर्यम् ; तत्र, यद्वा संसारमोक्षे संसारस्थितिरूपे बन्धे च हेतुः । **कार्येति** । शरीरेन्द्रियाधीनव्यापाराणामाश्रयतया हेतुः प्रकृतिः । **सूयते** जन्मति ।

महाबाहो देहे देहिनमव्ययम्"; तथा (९-७-१०) "सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्। कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः। भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्॥ ....मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते" इति।

तस्मादब्रह्मात्मकत्वेन कापिलतन्त्रसिद्धाः प्रकृत्यादयो निरस्यन्ते।

श्वेताश्वतरोपनिषदि श्रूयते, (श्वे. ४-५) "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति। तत्र सन्देहः—किमस्मिन् मन्त्रे केवला तन्त्रसिद्धा प्रकृतिरभिधीयते, उत ब्रह्मात्मिका—इति। किं युक्तम्? केवलेति। कुतः? "अजामेकाम्" इति अस्याः प्रकृतेरकार्यत्वश्रवणात्, "बह्वीः प्रजाः सृजमानां सरूपाः" इति स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्टृत्वश्रवणाच्च इति।

एवं प्राप्तेऽभिधीयते—चमसवदविशेषात्। [नात्र तन्त्रसिद्धा प्रकृतिरभिधीयते;] न जायत इत्यजेत्यजात्वमात्रप्रतिपादनात् तन्त्रसिद्धाब्रह्मात्मकाजाग्रहणे विशेषाप्रतीतेः। चमसवत्। यथा, (बृ. ४-१) "अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" इत्यस्मिन् मन्त्रे चमसस्य भक्षणसाधनत्वमात्रं चमसशब्देन प्रतीयत इति न तावन्मात्रेण चमसविशेषप्रतीतिः;

---

अथाधिकरणरचनामारभते श्वेतेति। श्वेताश्वतरवाक्यं विषयः। सरूपं तैत्तिरीयवाक्यं तु सिद्धान्ती स्वपक्षानुकूलतया दर्शयिष्यति। न चोभयमेव विषयवाक्यं भवतु; विपरिवर्तो वेति शङ्क्यम्-श्वेताश्वतरीयस्य स्वपक्षानुकूलत्वमिति पूर्वपक्ष्याशयात्। व्यक्तीभविष्यतीदम्। केवला अब्रह्मात्मिका। अकार्यत्वेति। अजेतिपदादकार्यत्वं स्पष्टमवगम्यते। ब्रह्मात्मकत्वे च तत्कार्यत्वमावश्यकम्-अत्र 'अतश्च विश्वा ओषधयो रसाश्च येनैष भूतस्तिष्ठत्यन्तरात्मा' इति अन्तरात्मतायाः कार्यतां प्रति प्रयोजकत्वश्रवणात्। लोके च मृन्मयं हिरण्मयम्, मृदात्मकं हिरण्यात्मकमिति उपादानमेवात्मत्वेन प्रतिपन्नमिति भावः। तैत्तिरीये अजाया अपि जातत्वोक्तिरस्ति; नेहेति एतद्वाक्यग्रहणम्। तैत्तिरीये जनयन्तीमिति पदम्, अत्र तु सृजमानामिति। सृजिधातुश्च स्वतन्त्रकर्तृविषय एव प्रयुज्यत इति प्रकृतेः स्वातन्त्र्यं स्पष्टम्। शानचा च सृष्टिफलस्य परगामित्वाभावज्ञापनात् प्रकृतेः परमात्मशेषत्वं नास्तीति ज्ञायते इति पूर्वपक्ष्याशयः।

नात्रेत्यादि प्रतिज्ञावाक्यं क्वाचित्कं टीकाकृद्दृष्टमपि स्वरसमिति भावप्रकाशिकायाम्। चमसः साधर्म्यदृष्टान्तः। स्ववाक्यतोऽर्थविशेषनिर्धारणायोग उभयत्र तुल्यः। तदाह यथेति। साधनत्वमात्रमिति। न तु शिर एवेह चमस इति व्यक्तिविशेषावगम इत्यर्थः। ननु सोमरसग्रहणार्थमुपयुक्तेषु पात्रेषु केषाञ्चित् ग्रहनामकत्वम्, अन्येषाञ्च चमसनामकत्वं प्रसिद्धम्। तस्य चमसस्य ग्रहणप्रसक्तौ, 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न'इति तद्वार्यते। तस्योर्ध्वबिलतिर्यग्बुध्नवत्त्वात्। अतः तत्र यथा लक्ष्यार्थविशेषप्रतीतिः, तथाऽत्र विशेषप्रतीतिर्नास्तीति वैधर्म्यदृष्टान्त एव स्यादिति चेन्न—मीमांसकैः

यौगिकशब्दानामर्थप्रकरणादिभिर्विनाऽर्थविशेषनिश्चयायोगात् । तत्र यथा, "इदं तच्छिरः ; एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" इत्यादिना वाक्यशेषेण शिरसश्चमसत्वनिश्चयः ; तथाऽत्राप्यर्थप्रकरणादिभिरेवाजा निर्णेतव्या । न चात्र तन्त्रसिद्धाजाग्रहणहेतवोऽर्थप्रकरणादयो दृश्यन्ते । न चास्याः स्वातन्त्र्येण स्रष्टृत्वं प्रतीयते ; "बह्वीः प्रजाः सृजमानाम्" इति स्रष्टृत्वमात्रप्रतीतेः । अतोऽनेन मन्त्रेण नात्रह्मात्मिकाऽजाऽभिधीयते ॥

ब्रह्मात्मकाजाग्रहण एव विशेषहेतुरस्तीत्याह—

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके । १ । ४ । ९ ॥

तुशब्दोऽवधारणार्थः ; ज्योतिरुपक्रमैवैषाऽजा । ज्योतिः ब्रह्म ; (बृ. ६-४-१६) "तं देवा ज्योतिषां ज्योतिः", (छा. ३-१३-७) "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिश्रुतिप्रसिद्धेः । ज्योतिरुपक्रमा ब्रह्मकारणिकेत्यर्थः । तथा ह्यधीयत एके—हीति हेतौ ; यस्मादस्या अजाया ब्रह्मकारणकत्वमेके शाखिनः तैत्तिरीया अधीयते, (तै-नारा. १२) "अणोरणीयान् महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः" इति हृदयगुहायामुपास्यत्वेन संनिहितं ब्रह्माभिधाय, "सप्त प्राणाः प्रभवन्ति तस्मात्" इत्यादिना सर्वेषां लोकानां ब्रह्मादीनां च तत उत्पत्तिमभिधाय, सर्वकारणीभूताऽजा तत उत्पन्नाऽभिधीयते, "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति । सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदात्मकत्वोपदेशे प्रक्रियमाणेऽभिधीयमानत्वात् प्राणसमुद्रपर्वतादिवदेषाऽप्यजा बह्वीनां सरूपाणां

---

चमसशब्दो न रूढः, किंतु यौगिकः ; चमु भक्षण इति धातोरसुच्प्रत्यये भक्षणसाधनरूपार्थे निष्पन्न इत्युक्तत्वात् पात्रविशेषमात्रवाचित्वाभावात् । यद्यपि अर्वाग्बिलत्वादिना ऊर्ध्वबिलादिव्यावृत्तिः, अथाप्यभिमतविशेषपर्यवसानं न भवति, द्वारपिधानेन भोज्यपेयावस्थापनायाऽर्वाग्बिलपात्राणामपि भक्षणार्थाना संभवादिति । **यौगिकशब्दानाम**िति । अत्र यौगिकपदप्रयोगः चमसपदं यौगिकमिति प्रकृताभिप्रायेण । शक्तिविशेषरूढव्यतिरिक्तानामिति विवक्षितम् । वैधर्म्यदृष्टान्ततामपि दर्शयति **तत्र यथे**ति । **स्रष्टृत्वमात्रे**ति । सांख्यमते कर्तृत्वं प्रकृतेर्वा जीवस्य वा । आद्ये, उत्तरार्धवाक्यद्वयप्रतीतकर्तृत्वद्वयमसुख्यं स्यात् । अन्त्ये, प्रकृतेः कुतः स्वातन्त्र्यम् । सत्यपि कर्तृत्वे पराधीनकर्तृत्वस्यापि संभवान्न विशेषलाभः । शानच्च न साधकः ; प्रकृतेरचेतनायाः सर्वथैव जीवार्थतया कर्त्रभिप्रायफलायोगात् ॥ ८ ॥

अब्रह्मात्मकत्वरूपविशेषावधारणं नास्तीत्युक्तम् । अथ चमस इव ब्रह्मात्मकत्वरूपविशेषावधारणमस्तीति वक्तुं सूत्रान्तरम् । ज्योतिरात्मिकेत्यनुक्त्वा **ज्योतिरुपक्रमे**ति कथनं तदात्मकत्वे तज्जन्यत्वापत्तिरिति पूर्वपक्षे इष्टापत्तिप्रदर्शनार्थम् । श्वेताश्वतरे उपक्रमे देवात्मशक्तिमित्यादिना तदात्मकत्वावगमेपि तज्जन्यत्वकण्ठोक्त्यभावात् अजाशब्दबलेनाजन्यत्वरक्षणाय तदनात्मकत्वावश्यकतायाः पूर्वपक्ष्युक्तत्वात् जन्यत्वप्रत्यायकं तैत्तिरीयं दर्शयति **तथाही**ति । तत्र, सप्त प्राणाः प्रभवन्तीत्यादिना सर्वो-

प्रजानां स्रष्ट्री कर्मवश्येनाऽऽत्मना भुज्यमाना अन्येन विदुषाऽऽत्मना त्यज्यमाना च ब्रह्मात्मिकाऽवगन्तव्येत्यर्थः । अतो वाक्यशेषात् चमसविशेषवत् शाखान्तरीयादेतत्सरूपात् प्रत्यभिज्ञायमानार्थात् वाक्यात् नियमिताऽजा ब्रह्मात्मिकेति निश्चीयते । इहापि प्रकरणोपक्रमे, (श्वे. १-१) "किं कारणं ब्रह्म" इत्यारभ्य, (श्वे. १-३) "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निरूढाम्" इति परब्रह्मशक्तिरूपाया अजाया अवगतेः, उपरिष्टाच्च, (श्वे.४-१०, ११) अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः ॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ......यो योनिं (?) योनिमधितिष्ठत्येकः" इति च तस्या एव प्रतीतेर्नास्मिन् मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्तिगन्धः ॥ ९ ॥

कथं तर्हि ज्योतिरुपक्रमाया लोहितशुक्लकृष्णरूपाया अस्याः प्रकृतेरजात्वम्, अजाया वा कथं ज्योतिरुपक्रमात्वमित्यत्राह---

कल्पनोपदेशाच्च मध्वादिवदविरोधः । १ । ४ । १० ॥

प्रसक्ताशङ्कानिवृत्त्यर्थश्चशब्दः । अस्याः प्रकृतेरजात्वं ज्योतिरुपक्रमात्वं च न विरुध्यते । कुतः ? कल्पनोपदेशात् । कल्पनं क्लृप्तिः ; सृष्टिः । जगत्सृष्ट्युपदेशादित्यर्थः । यथा (तै. नारा. १-१३) "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति कल्पनं सृष्टिः । अत्रापि, (श्वे. ४-९) "अस्मान्मायी सृजते विश्वमेतत्" इति जगत्सृष्टिरुपदिश्यते । स्वेनाविभक्तादस्मात् सूक्ष्मावस्थात् कारणान्मायी सर्वेश्वरः सर्वं जगत् सृजतीत्यर्थः । अनेन कल्पनोपदेशेनास्याः प्रकृतेः कार्यकारणरूपेणावस्थाद्वयान्वयोऽवगम्यते । सा हि प्रलयवेलायां ब्रह्मतापन्ना अविभक्तनामरूपा सूक्ष्मरूपेणावतिष्ठते ; सृष्टिवेलायां तु उद्भूतसत्त्वादिगुणा विभक्तनामरूपा व्यक्तादिशब्दवाच्या तेजोबन्नादिरूपेण च परिणता लोहितशुक्लकृष्णाकारा

---

त्पत्तिवर्णनमारभ्य, ब्रह्मा देवानाम्, अजामेकाम्, हंसः शुचिषत् इति बहून् प्रस्तुत्य, 'यस्माज्जाता न परा नैव किञ्चनास' इति तेषामपि तज्जन्यत्वस्य तदजन्याभावस्य च कथनात् अजायामपि तदुपक्रमत्वमवश्याभ्युपेयमिति भावः । तदात्मकत्वतदुत्पन्नत्वोभयं तैत्तिरीयसिद्धम् । तदात्मकत्वं तु श्वेताश्वतरेऽपीत्याह इहापीति । अतस्तदुत्पन्नत्वानिष्टावपि तदात्मकत्वं दुरपलपमिति भावः । योनिर्योनिमिति पाठ एव टीकासंमतश्च । उपनिषद्भाष्ये योनिंयोनिमिति । तत्तत्कार्योपादानं सर्वमित्यर्थः ॥ ९ ॥

अजात्वश्रवणादसंभवि ज्योतिरुपक्रमात्वमिति शंकते कथं तर्हीति । लोहितशुक्लकृष्णेत्यस्य रजस्सत्त्वतमोगुणेति पूर्वपक्ष्यभिमतोऽर्थः । सृष्टिस्थितिसंहाररूपार्थक्रमानुसारी गुणपाठक्रमः । तेजोबन्नरूपपरिणामार्हत्वार्थेऽपि न दोषः । सिद्धान्ते द्वितीयार्थग्रहणे जन्यत्वोपपादनं सुकरमिति तदिष्टिः । कल्पनाशब्दस्य भ्रान्तिज्ञानपरतां व्युदस्यति सृष्टिरिति । संज्ञामूर्तिक्लृप्तिरिति क्लृप्तिरेव कल्पना । मूलप्रकृतिद्रव्य एव महदादिपृथिव्यन्तानामवस्थानामुत्पत्त्या तत्तदवस्थस्य तस्य परमात्मजन्यत्वं निराबाधम् । यदा च महान् प्रकृतौ लीयते, तदा वैषम्यावस्थां विहाय साम्यावस्थां प्राप्नोतीति सापि साम्यावस्था जायमानैवेति

चावतिष्ठते। अतः कारणावस्थाऽजा, कार्यावस्था ज्योतिरुपक्रमेति न विरोधः। मध्वादि-वत्—यथेश्वरेण आदित्यस्य कारणावस्थायामेकस्यैवावस्थितस्य कार्यावस्थायामृग्यजुस्सा-माथर्वप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयतया वस्वादिदेवताभोग्यत्वाय मधुत्वकल्पनमुदयास्तमय-कल्पनं च न विरुध्यते। तदुक्तं मधुविद्यायाम्, (छा. ३-१-१) 'असौ वा आदित्यो देवमधु" इत्यारभ्य, (छा. ३-११-१) "अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता; एकल एव मध्ये स्थाता" इत्यन्तेन। एकल. एकस्वभावः। अतोऽनेन मन्त्रेण ब्रह्मात्मिका-ऽजैवाभिधीयते, न कापिलतन्त्रसिद्धेति सिद्धम्॥

अन्ये तु—अस्मिन् मन्त्रे, 'तेजोबन्नलक्षणाऽजैकाभिधीयते' इति ब्रुवते। ते प्रष्टव्याः—किं तेजोबन्नान्येव तेजोबन्नात्मिकाऽजैका; उत तेजोबन्नरूपं ब्रह्मैव; किं वा तेजोबन्नकारणभूता काचित्—इति। प्रथमे कल्पे तेजोबन्नानामनेकत्वात्, "अजामेकाम्" इति विरुध्यते। न च वाच्यम्-तेजोबन्नानामनेकत्वेऽपि त्रिवृत्करणेनैकतापत्तिरिति; त्रिवृत्करणेऽपि बहुत्वानपग-मात्; (छा. ६-३-२) "इमास्तिस्रो देवताः" (छा. ६-३-३) "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति प्रत्येकं त्रिवृत्करणोपदेशात्। द्वितीयः कल्पो विकल्प्यः—किं तेजोबन्न-

---

तत्र परमात्मैव कारणमिति प्रकृतिरपि ज्योतिरुपक्रमैव। तस्याः साम्यावस्थायाः महत्त्वावस्थानन्तरभावि-त्वेऽपि महत्त्वावस्थापूर्भाव्यवस्थाजातीयत्वात् महज्जन्यत्वायोगेऽपि परमात्मजन्यत्वं भवत्येव। न हि प्रकृतिगतावस्थाया अनादित्वम्; येनाजन्यत्वं स्यात्। सृष्टिश्रुतिविरोधात्। तर्हि अजेति कथमुक्तमिति चेत्—उपादानकारणविरहात्। **रसाश्रयतया—मधुत्वकल्पनं** रसाश्रयत्वरूपमधुत्वसंपादनम्। पूर्वं पश्चाच्च रसानाश्रयस्याऽऽदित्यजीवस्य रसाश्रयत्व-वस्वादिदृश्यमानत्वादृश्यमानत्वानि वस्वादिभोग्यत्वाय यथा परमात्मा घटयति, तथा सर्वजीवभोग्यत्वाद्यर्थं प्रकृतौ अवस्थाः घटयति स इत्यर्थः। सृष्टिकालिकतदितर-कालिक-कर्माधीनस्वाभाविकावस्थाभेदत्वरूपसाम्यघटनाय मधुपर्यन्तगमनम्। एकस्यैवेत्युक्तविवरणाय अथ तत इति वाक्यम्।

शाङ्करे सांख्यप्रकृतिरजेत्याशंक्य प्रथमसूत्रे अर्वाग्बिलत्वादिविशिष्ट-भक्षणसाधननानोपकरणसाधारण-त्वात् अर्वाग्बिलवाक्यस्य ततो यथा न विशेषप्रतिपत्तिः, तथा बहुप्रजाजनकयत्किञ्चित्परत्वसंभवात् अजेयं प्रकृतिरेवेति न प्रतिपत्तिरित्युक्त्वा, तत्र वाक्यान्तरात् शिरोरूपचमसप्रतीतिवत् ज्योतिरबन्नत्रयग्रहणं लोहितशुक्लकृष्णामित्यतोऽवगम्यत इति उत्तरसूत्रस्यार्थम्, "यदग्ने रोहितं रूपमिति श्रुतिप्रदर्शनेनोपवर्ण्य श्वेताश्वतरेपि देवात्मशक्तिरूपैवाजाऽवगम्यत इत्यप्यभिधाय, तस्याः लोहितादिरूपाया अजात्वं छागस्त्री-सादृश्यादारोपितमिति कल्पनासूत्रार्थो वर्णितः। तत्र प्रकृतेरप्रामाणिकत्वाभावात् अजापदेनान्यग्रहणमिति न कथनीयम्, अजात्वारोपोऽपि नापेक्षित इति वक्तुमाह **अन्येत्विति**। तेजोबन्नत्रयग्रहणे एकत्वं बाधितम्। 'तत् तेजोऽसृजते'ति सद्विद्यायाः प्रदर्शितत्वात् तेजोबन्नकल्पनाधिष्ठानस्य ब्रह्मणः सेत्युक्तस्य अजापदेन ग्रहणे तेजोबन्नेष्वजात्वकल्पनं त्यक्तं भवति। ब्रह्मणि तत्कल्पनञ्चायुक्तम्। उत्तराधीनन्वयश्च

रूपेण विकृतं ब्रह्मैवाजैका, किं वा स्वरूपेणावस्थितमविकृतमिति । प्रथमः कल्पो बहुत्वानपायादेव निरस्तः । द्वितीयेऽपि, "लोहितशुक्लकृष्णाम्" इति विरुध्यते । स्वरूपेणावस्थितं ब्रह्म तेजोबन्नलक्षणमिति वक्तुमपि न शक्यते । तृतीये कल्पेऽपि, अजाशब्देन तेजोबन्नानि निर्दिश्य तैस्तत्कारणावस्था उपस्थापनीयेत्यास्थेयम् । ततो वरमजाशब्देन तेजोबन्नकारणावस्थायाः श्रुतिप्रसिद्धाया एवाभिधानम् ॥ यत् पुनः—अस्याः प्रकृतेरजाशब्देन छागत्वपरिकल्पनमुपदिश्यत इति—तदप्यसङ्गतम्; निष्प्रयोजनत्वात् । यथा, (कठ. १-३-३) "आत्मानं रथिनं विद्धि" इत्यादिषु ब्रह्मप्राप्त्युपायताख्यापनाय शरीरादिषु रथादिरूपणं क्रियते, यथा चाऽऽदित्ये वस्वादीनां भोग्यत्वख्यापनाय मधुत्वकल्पनं क्रियते, तद्वदस्यां प्रकृतौ छागत्वपरिकल्पनं क्वोपयुज्यते ? न केवलमुपयोगाभाव एव; विरोधश्च । कृत्स्नजगत्कारणभूतायाः स्वस्मिन् अनादिकालसंबद्धानां सर्वेषामेव चेतनानां निखिलसुखदुःखोपभोगापवर्गसाधनभूताया अचेतनायाः अत्यल्पप्रजासर्गकर-आगन्तुकसंगमचेतनविशेषकरूपात्यल्पप्रयोजनसाधन-स्वपरित्यागाहेतुभूत - स्वसंबन्धिपरित्यागसमर्थचेतनविशेषरूपच्छागस्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव । "अजामेकाम्", "अजो ह्येकः", 'अजोऽन्यः" इत्यत्राजाशब्दस्य विरूपार्थपरिकल्पनं च न शोभनम् । सर्वत्र च्छागत्वं परिकल्प्यत इति चेत्, "जहात्येनां भुक्तभोगामजोऽन्यः" इति विदुष आत्यन्तिकप्रकृतिपरित्यागं कुर्वतः अनेन वाऽन्येन वा पुनरपि संबन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् ॥ १० ॥

॥ इति चमसाधिकरणम् ॥ २ ॥

---

स्पष्टो ब्रह्मपक्षे । अविद्यादिशब्दवाच्यदेवशक्तिरजेति पक्षेऽपि प्रकृतिव्यतिरिक्तेऽजात्वकल्पनस्य तदिष्टत्वात् अजाशब्देनाजात्वारोपविषयतेजोबन्नानि गृहीत्वा तत्र लोहितशुक्लकृष्णवर्णान्वयमपि स्वीकृत्य, अथ एकत्वान्वयायाजापदेनैव तेजआदिमुखेनाविद्याशक्तेरपि ग्रहणमिति वर्णनापेक्षया साक्षात् प्रकृतावेवाजात्वकल्पनं वरम् । वस्तुतः कल्पनाऽपि न ; 'अजोपि सन्नव्ययात्मा', 'ज्ञाज्ञौ द्वावजौ', 'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्' इत्यादिपरश्शतप्रयोगसत्त्वेन जायमानत्वाभावरूपाजशब्दार्थविवक्षया चमसवत् यौगिकत्वसंभवेऽनन्वितार्थान्तरग्रहणस्यानावश्यकत्वात्, मुक्तादौ हेयच्छागत्वकल्पनानुपपत्तेश्चेति समाधानसारः । ननु 'द्वा सुपर्णा सयुजा' इति अनन्तरमन्त्रे पक्षित्वादिकल्पन इव केवलमर्थावगतिवैशद्यमेवास्तु ; तत्राह विरोधश्चेति । तत्र वृक्षपिप्पलादिशब्देष्विवात्राजाशब्दे यौगिकार्थास्फूर्तिर्नास्तीत्यपि ध्येयम् । विरोधं साधयति कृत्स्नेति । स्वस्मिन् इति क्लीबनिर्देशः, 'स्वो ज्ञातावात्मनि स्वम्' इति कोशानुसारात् । अनेन वाऽन्येन वेति पुंलिङ्गता चेतनविशेषेति पदानुरोधात् ॥ १० ॥

सांख्योक्तप्रकृत्यादिकमङ्गीकृत्याब्रह्मात्मकत्वं निरस्तम् । पञ्चविंशतिसंख्यया तत्त्वपरिगणनात् तदतिरिक्तं नेष्यत इति बृहदारण्यकमादाय शङ्कयाऽधिकरणान्तरम् । ननु पञ्चजनशब्दो मनुष्ये रूढः, 'स्युः पुमांसः पञ्चजनाः' इति । अतः निषादपञ्चमाः चत्वारो वर्णाः पञ्चजनाः । चत्वारो वर्णाः संकर-

30. संख्योपसंग्रहाधिकरणम् 1-4-3 (बृ. ६. 4-17. मा. 7-2)

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ १ । ४ । ११ ॥

वाजसनेयिनः समामनन्ति, (बृ. ६-४-१७) "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्" इति । किमयं मन्त्रः कापिलतन्त्रसिद्धतत्त्वप्रतिपादनपरः, उत नेति संदिह्यते । किं युक्तम्? तन्त्रसिद्धतत्त्वप्रतिपादनपर इति । कुतः? पञ्चशब्दविशेषितात् पञ्चजनशब्दात् पञ्चविंशतितत्त्वप्रतीतेः । एतदुक्तं भवति—"पञ्चजनाः" इति समासः समाहारविषयः । पञ्चानां जनानां समूहाः पञ्चजनाः; पञ्चपूल्य इतिवत् । पञ्चजना इति लिङ्गव्यत्ययश्छान्दसः । ते च समूहाः कतीत्यपेक्षायां पञ्चजनशब्दविशेषणेन प्रथमेन पञ्चशब्देन समूहाः पञ्चेति प्रतीयन्ते; यथा पञ्च पञ्चपूल्य इति । अतः "पञ्च पञ्चजनाः" इति पञ्चविंशतिपदार्थावगतौ, ते कतमे इत्यपेक्षायां मोक्षाधिकारात् मुमुक्षुभिः ज्ञातव्यतया स्मृतिप्रसिद्धाः प्रकृत्यादय एव ज्ञायन्ते । (सां. का.) "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति हि कापिलानां प्रसिद्धिः । अतस्तन्त्रसिद्धतत्त्वप्रतिपादनपरः—

इति प्राप्ते प्रचक्ष्महे—न सङ्ख्योपसंग्रहादपि—इति । "पञ्चजनाः" इति पञ्चविंशतिसङ्ख्योपसङ्ग्रहादपि न तन्त्रसिद्धतत्त्वप्रतीतिः। कुतः? नानाभावात्—एषां पञ्चसङ्ख्याविशेषितानां पञ्चजनानां तन्त्रसिद्धेभ्यस्तत्त्वेभ्यः पृथग्भावात्—"यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति एतेषां यच्छब्दनिर्दिष्टब्रह्माश्रयतया ब्रह्मात्मकत्वं हि प्रतीयते । "तमेव-

---

जातिश्चेति वा । गन्धर्वाः पितरो देवा असुरा रक्षांसि च वा पञ्चजनाः । तत् कथं सांख्योक्तमेवेत्यत्र विवृणोति एतदुक्तमिति । **मोक्षाधिकारादिति** । गन्धर्वादिग्रहणे पञ्चेति व्यर्थम् । व्यक्ताव्यक्तविलक्षणात्मज्ञानादेव मोक्ष इति तत्र मनुष्यादिकतिपयमात्रप्रतिष्ठाज्ञानमनपेक्षितत्वादग्राह्यम् । अत एवेन्द्रियपरत्वेन संकोचोऽप्ययुक्तः । सर्वविषयकत्वलाभाय पञ्चजना इति लिङ्गव्यत्ययोऽपि सोढव्यः। न च यस्मिन्निति, आकाश इति च पञ्चविंशत्यतिरिक्ततत्त्वकथनात्र सांख्यमतमिहेति मन्तव्यम्; संख्यानिर्देशस्वारस्यादधिकाभावसिद्ध्या तदनुगुणार्थवर्णनसंभवात् । कथम्? इत्थम् । प्रकृतेः सत्त्वरजस्तमस्त्रयरूपतया सप्तविंशतौ तत्त्वेषु आत्मन आकाशस्य च पृथग्वचनात् अवशिष्टानि पञ्चविंशतिरिति । अथवा यस्मिन् आत्मनि पञ्चविंशतिस्तत्त्वानि प्रतिष्ठितानीत्यस्य, व्यक्ताव्यक्तविलक्षणतया ज्ञस्यात्मनो विज्ञाने व्यावर्त्यतया अचेतनानां स्वरूपतः स्वस्य च विषयतया पञ्चविंशतिर्विषय इत्यर्थः । चैतन्यरूपस्यात्मनः स्वस्वेतरसर्वप्रकाशकत्वात् । अत एव तत्रात्मनि **आकाशः** प्रकाशरूपता च प्रतिष्ठितेत्यर्थः । तमात्मानं ब्रह्मामृतं विद्वान् **अन्यः** प्रकृत्यादिविविक्तः अमृतो भवतीति श्रुत्यर्थ इति ।

**नानाशब्दः** पृथक्पर्यायः; पृथग्विनानानाभिरित्युक्तेः । पृथग्भावश्च ब्रह्मात्मकत्वं यस्मिन्निति दर्शितम् । प्रकृतेर्मिलित्वेन गणनञ्चाप्रसिद्धम् । सत्त्वादीनामद्रव्यत्वादप्ययुक्तमिदम् । यज्ज्ञाने सर्वमन्तर्गत-

मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्" इत्यत्र तमिति परामर्शेन यच्छब्दनिर्दिष्टं ब्रह्मेत्यवगम्यते। अतस्तेभ्यः पृथग्भूताः पञ्चजना इति न तन्त्रसिद्धा एते। अतिरेकाच्च। तन्त्रसिद्धेभ्यस्तत्त्वेभ्योऽत्र तत्त्वातिरेकोऽपि भवति; यच्छब्दनिर्दिष्ट आत्मा आकाशश्चात्रातिरिच्येते। अतः (मन्त्रि.) "तं षड्विंशकमित्याहुः सप्तविंशमथापरे" इति श्रुतिप्रसिद्धसर्वतत्त्वाश्रयभूतः सर्वेश्वरेश्वरः परमपुरुषोऽत्राभिधीयते॥ 'न सङ्ख्योपसंग्रहादपि' इति अपिशब्दस्य, "पञ्च पञ्चजनाः" इत्यत्र पञ्चविंशतितत्त्वप्रतिपत्तिरेव न संभवतीत्यभिप्रायः। कथम्? पञ्चभिरारब्धसमूहपञ्चकासंभवात्। न हि तन्त्रसिद्धतत्त्वेषु पञ्चसुपञ्चसु अनुगतं तत्सङ्ख्यानिवेशनिमित्तं जात्याद्यस्ति; न च वाच्यम्—पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, पञ्च महाभूतानि, पञ्च तन्मात्राणि, अवशिष्टानि पञ्च इत्यवान्तरसङ्ख्यानिवेशनिमित्तमस्त्येव—इति; आकाशस्य पृथङ्निर्देशेन पञ्चभिरारब्धमहाभूतसमूहासिद्धेः। अतः, "पञ्चजनाः" इत्ययं समासो न समाहारविषयः; अयं तु, (अष्टा. २-१-१०) "दिक्सङ्ख्ये संज्ञायाम्" इति संज्ञाविषयः। अन्यथा पञ्चजनाः इति लिङ्गव्यत्ययश्च। पञ्चजना नाम केचित् सन्ति; ते च पञ्चसङ्ख्यया विशेष्यन्ते, पञ्च पञ्चजनाः इति; सप्त सप्तर्षय इतिवत्॥

के पुनस्ते पञ्चजनाः इत्यत आह—

प्राणादयो वाक्यशेषात् १। ४। १२॥

(बृ. मा. ७-२) "प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति वाक्यशेषाद्ब्रह्माश्रयाः प्राणादय एव पञ्च पञ्चजनाः इति विज्ञायन्ते॥ १२॥

अथ स्यात्—काण्वानां माध्यन्दिनानां च, "यस्मिन् पञ्च पञ्चजनाः" इत्ययं

---

मित्याद्यर्थवर्णनञ्च क्लिष्टम्। अस्मन्मते तत्त्वानां सप्तविंशतित्वात् ब्रह्म-भूताकाशव्यतिरिक्तानि सन्ति तत्त्वानि पञ्चविंशतिः। आकाशशब्दः परमाकाशभूतनित्यविभूतिपरः सन् लीलाविभूतिभोगविभूत्युभयप्रतिष्ठाभूतब्रह्मप्रतिपादनार्थश्च स्यात्। अतः संख्योपसंग्रहे सांख्यमतबाध एव। लिङ्गविरोधाच्च संख्योपसंग्रहो न युक्तः। न च पञ्च पञ्चाशत इत्यादाविव पञ्चपञ्चेति जनशब्दात् पृथक्कृत्य पञ्चविंशतिसंख्यासंपादनं युक्तम्; पञ्चत्वरूपधर्मे पञ्चत्वान्वयाभावात्; द्रव्य एव तदन्वयात्। पञ्चपञ्चाशत इत्यत्र सहस्रसंवत्सरमिति गणनानुसारेण क्लेशसहनात्। 'पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामि' इति पञ्चजनशब्दस्य समस्तस्यैव दर्शनाच्च। अत एव देवाः पितरो गन्धर्वा दैत्या दानवाः राक्षसा भूताः प्रेताः पिशाचाः चत्वारो वर्णाः षडनुलोमाः षट् प्रतिलोमाः इति जनशब्दस्वारस्यमनपोह्य पञ्चविंशतिग्रहणमपि न; एकैकपञ्चकमालानुगतधर्माभावात्। अतोऽनुशासनानुरोधात् संज्ञात्वमेव। अनेकार्थसंशयास्पदस्य पदस्य पूर्वापरदर्शितैकरस्येनार्थवर्णनं युक्तमिति च प्राणादय एव पञ्चजना इति। जनत्वस्य जायमानत्वरूपस्य सर्वसाधारणत्वेऽपि केषाञ्चित् सप्तर्षित्ववत् केषाञ्चित् पञ्चजनत्वमिष्यते। **आकाशस्येत्युपलक्षणम्**, आत्मनोपि पृथङ्निर्देशात्। **सप्तेति**। 'अत्र सप्तजना नाम मुनयः संशितव्रताः। सप्तैवासन्' इति रा. कि. १३-१८॥

मन्त्रः समानः ; "प्राणस्य प्राणम्" इत्यादिवाक्यशेषे काण्वानाम् (६-४-१८) अन्नस्य पाठो न विद्यते ; तेषां पञ्च पञ्चजनाः प्राणादय इति न शक्यं वक्तुम्—इति ॥ अत्रोत्तरम्—

ज्योतिषैकेषामसत्यन्ने । १ । ४ । १३ ॥

एकेषां काण्वानां पाठे असति अन्ने ज्योतिषा पञ्चजनाः इन्द्रियाणीति ज्ञायन्ते । तेषां वाक्यशेषः प्रदर्शनार्थः । एतदुक्तं भवति—"यस्मिन् पञ्च पञ्चजनाः" इत्यस्मात् पूर्वस्मिन् मन्त्रे, "तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषां ज्योतिष्ट्वेन ब्रह्मण्यभिधीयमाने, ब्रह्माधीनस्वकार्याणि कानिचित् ज्योतींषि प्रतिपन्नानि ; तानि च विषयाणां प्रकाशकानीन्द्रियाणीति, "यस्मिन् पञ्च पञ्चजनाः" इत्यनिर्धारितविशेषनिर्देशेनावगम्यन्ते—इति ॥ "प्राणस्य" इति प्राणशब्देन स्पर्शनेन्द्रियं गृह्यते, वायुसंबन्धित्वात् स्पर्शनेन्द्रियस्य । मुख्यप्राणस्य ज्योतिश्शब्देन प्रदर्शनायोगात् । चक्षुष इति चक्षुरिन्द्रियम् ; श्रोत्रस्येति श्रोत्रेन्द्रियम् ; अन्नस्येति घ्राणरसनयोस्तन्त्रेणोपादानम् ; अन्नशब्दोदितपृथिवीसंबन्धित्वाद् घ्राणेन्द्रियमनेन गृह्यते ; अद्यतेऽनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते ; मनस इति मनः । घ्राणरसनयोस्तन्त्रेणोपादानमिति पञ्चत्वमप्यविरुद्धम् । प्रकाशकानि मनःपर्यन्तानीन्द्रियाणि पञ्चजनशब्दनिर्दिष्टानि । तदविरोधाय घ्राणरसनयोस्तन्त्रेणोपादानम् । तदेवम्, "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति पञ्चजनशब्दनिर्दिष्टानीन्द्रियाणि आकाशशब्दप्रदर्शितानि महाभूतानि च ब्रह्मणि प्रतिष्ठितानीति सर्वतत्त्वानां ब्रह्माश्रयत्वप्रदिपादनान्न तन्त्रसिद्धपञ्चविंशतितत्त्वप्रसङ्गः । अतः सर्वत्र वेदान्ते सङ्ख्योपसङ्ग्रहे, तदभावे वा, न कापिलतन्त्रसिद्धतत्त्वप्रतीतिरिति स्थितम्(सिद्धम्)॥

इति सङ्ख्योपसंग्रहाधिकरणम् ॥ ३ ॥

---

**न शक्यं वक्तुमिति** । पञ्चजनशब्दार्थवर्णनार्थं चेत् प्राणवाक्यम्, तर्हि काण्वपाठेऽपि पञ्चकं श्रूयेत । तदभावान्नायमर्थ इति शङ्का ।

**ज्योतिषा** ज्योतिषामिति ज्योतिश्शब्देन । **प्रदर्शनार्थः** - अन्यस्याप्युपलक्षकः । अत्र आयुःशब्देन प्राणवायुग्रहणात् तत्सहचरितानि ज्योतींषि न सूर्यादीनि ; किंतु इन्द्रियाण्येव । कानि तानीति जिज्ञासायाम् प्राणादिवाक्यं ज्योतिर्निर्णायकम् । अत एव प्राणशब्द इह न प्राणवायुपरः । प्राणसञ्चारस्थले एव सर्वत्रैव त्वगिन्द्रियं कार्यकरमिति तत् प्राण इत्युच्यते । ज्योतिषां ज्ञानेन्द्रियाणां मध्ये बहिरिन्द्रियमात्रग्रहणे मनःपाठविरोधात् सर्वग्रहणे च पञ्चत्वविरोधात् षट्सु पञ्चत्वसंपत्तये अन्नपदेनैकेन घ्राणरसनयोः क्रोडीकारः । घ्राणे पृथिव्याप्यायितत्वस्य रसने पृथिवीरूपान्नादनसाधनत्वस्य च स्थितस्य भाष्ये प्रदर्शनमुभयानुगतैकधर्मोपलक्षणार्थम् । स धर्मोऽन्नग्राहित्वम् । आघ्राणस्याप्यदनतुल्यत्वात् । अत एव घ्रातस्य वस्तुनो न नैवेद्यता । एवमृतुषट्के पञ्चत्वव्यवहारवत् इन्द्रियषट्के पञ्चत्वव्यवहार इति । श्रुतिषु मुमुक्षूपयोगितया वाक्प्राणचक्षुश्श्रोत्रमनांसि पञ्च अत्यादरेण निर्दिश्यन्त इति परिष्कारादाववोचाम ।

## 31. कारणत्वाधिकरणम् १-४-४ (तै. आनं. बृ. ३-४)

### कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः । १ । ४ । १४ ॥

**पुनः प्रधानकारणवादी प्रत्यवतिष्ठते—न वेदान्तेष्वेकस्मात् सृष्टिराम्नायते इति जगतो ब्रह्मैककारणत्वं न युज्यते वक्तुम्। तथाहि—(छा. ६-२-१) "सदेव सोम्येदमग्र आसीत्" इति सत्पूर्विका सृष्टिराम्नायते; (तै. आनं. ७) असद्वा इदमग्र आसीत्" इत्यसत्पूर्विका च;**

---

तेषामत्र पञ्चजनत्वं नेष्यते, ज्योतिश्शब्दैकरस्यभङ्गो मा भूदिति ॥ १३ ॥

पूर्वपादद्वयस्येवास्यापि अन्ययोगव्यवच्छेदपरत्वम्, 'आनुमानिकमपी'ति **अपि**शब्देन सूचितम्। तत् एतावत्पर्यन्तम्। इतःपरमयोगव्यवच्छेद एव प्रबलपूर्वपक्षप्राप्त्या कर्तव्यो भवतीति सूत्रस्वारस्यादेव ज्ञायते। ईक्षत्यधिकरणानन्दमयाधिकरणादौ कारणं यथा व्यपदिष्टम्, तथा तत्र शक्यं स्वीकर्तुमित्याक्षेपे हि यथाव्यपदिष्टमेवोच्यत इत्युपपादनं प्राप्तावसरम्। तदनुगुणं पूर्वपक्षं प्रवर्तयति **न वेदान्तेष्वि**त्यादिना। न चायं विचारः प्रथमपाद एवास्त्विति वाच्यम्—परमतच्छायानुसारिवाक्यविषयकत्वादत्रैव संगतेः। अनेन सूच्यते, अन्ययोगशंकिनामपि ब्रह्मकारणकत्वानाश्वासविधानैर्भर्यादयोगशंकापर्यवसानमेवेति। अयोगान्ययोगविभजनं प्रायिकम्; अस्पष्टस्पष्टेत्यादिविभाग एवेष्ट इत्यप्याहुः। यद्यपि, 'केचिदाहुः असदेवेदमग्र आसीदिति....कुतस्तु खलु सोम्यैवं स्यादिति होवाच, कथमसतः सज्जायेतेति। सत्त्वेव सोम्येदमग्र आसीत्' इति असत्पक्षखण्डनपूर्वकसत्पक्षस्थापनात् मिथोव्याहतार्थवादित्वमेवेत्यप्रामाण्यं वेदान्तवाक्यानां वक्तुं न साम्प्रतम्; कृत्स्नप्रामाण्यस्य पूर्वमीमांसायामेव स्थितत्वात्—अथापि ब्रह्मकारणकत्वावधारणं न भवतीत्यर्थः। तर्हि संशयेऽप्यप्रामाण्यमेवेत्यत्राह **प्रत्युते**ति। स्मृतिन्यायसहकारेण प्रधानकारणकत्वपरत्वमुपरितनाध्याये उद्भावयिष्यते। इह तु श्रुतिवाक्यमादायैव तदवस्थापनमाशंक्यते। अयं पूर्वपक्ष्याशयः—

ईक्षत्यधिकरणे सत्पदं सामान्यत्वात् चेतनविशेषे पर्यवस्यतीत्युक्तम्। तदा सत्पदस्य कोऽर्थः? अबाधितमिति वा, वर्तमानमिति वा; अर्थक्रियाकारीति वा। सर्वोऽपि न; सत्पदविवक्षितार्थभिन्नत्वस्यैवासत्पदेन विवक्षणीयतया, असदेवेदमग्र आसीदित्यत्र तथोक्तौ मिथोव्याघातात्; बाधिते अवर्तमाने अकारणे च 'इदमासीत्' इति दृश्यमानजगत्तादात्म्यायोगाच्च। अतः सदसच्छब्दार्थनिर्णयः अव्याकृतशब्दानुसारेणैव कार्यः। व्याकृतत्वं नामरूपभाक्त्वम्, तदभावोऽव्याकृतत्वम्। अव्याकृते, 'तन्नामरूपाभ्यामेव व्याक्रियत' इति पश्चान्नामरूपभाक्त्वं कथ्यते। न च निर्विकारे ब्रह्मणि नामरूपप्रसक्तिः। अतः परिणामास्पदं प्रधानमेवाव्याकृतम्। व्याक्रियतेत्यत्र कर्त्रन्तरानिर्देशात् कर्मकर्तरिप्रयोग इति चेतननिरपेक्षत्वमप्यवगम्यते। 'तदात्मानं स्वयमकुरुते'ति श्रुत्यन्तरेण च कर्त्रन्तरराहित्यं स्पष्टमवगमितम्। एवमव्यक्ताव्याकृतशब्दार्थेऽवधारिते असत्पदमपि नामरूपविभागराहित्यपर**मेव**। **सदित्यस्य** नामरूपविभागवदित्येवार्थः। न च सदेव सोम्येदमिति प्रलये तदयोग इति वाच्यम्—'असद्वा इदमग्र आसीत् ततो वै सदजायत' इति असतः सदुत्पत्तेः ततः प्रपञ्चोत्पत्तेश्च कथनात् तादृशमध्यदशाया एव सद्विद्यावाक्यार्थत्वौचित्यात्। तेजआदिसृष्टेरेवोपरि कथनाच्च सत्पदेन महदादिकार्यविवक्षा खलु युक्तैव। एवञ्च

अन्यत्र, (छा. ३-१९-१) "असदेवेदमग्र आसीत्। तत् सदासीत्। तत् समभवत्" इति च। अतो वेदान्तेषु स्रष्टुरव्यवस्थितेः जगतो ब्रह्मैककारणत्वं न निश्चेतुं शक्यम्; प्रत्युत प्रधान-कारणत्वमेव निश्चेतुं शक्यते। (बृ. ३-४-७) "तद्धेदं तर्ह्यव्याकृतमासीत्" इति अव्याकृते प्रधाने जगतः प्रलयमभिधाय, "तन्नामरूपाभ्यामेव व्याक्रियत" इत्यव्याकृतादेव जगतः सृष्टिश्चाभिधीयते। अव्याकृतं ह्यव्यक्तम्। नामरूपाभ्यां न व्याक्रियते—न व्यज्यत इत्यर्थः। अव्यक्तं प्रधानमेव। अस्य च स्वरूपनित्यत्वेन परिणामाश्रयत्वेन च जगत्कारणवादिवाक्य-गतौ सदसच्छब्दौ ब्रह्मणीव अस्मिन् न विरोत्स्येते। एवमव्याकृतकारणत्वे निश्चिते सति, ईक्षणादयः कारणगताः सृष्ट्यौन्मुख्याभिप्रायेण योजयितव्याः। ब्रह्मात्मशब्दावपि बृहत्त्व-व्यापित्वाभ्यां प्रधान एव वर्तेते। अतः स्मृतिन्यायप्रसिद्धं प्रधानमेव जगत्कारणं वेदान्त-वाक्यैः प्रतिपाद्यते—

इति प्राप्ते प्रचक्ष्महे—कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः—चशब्दः तु-शब्दार्थे। सर्वज्ञात् सर्वेश्वरात् सत्यसङ्कल्पात् निरस्तनिखिलदोषगन्धात् परस्मात् ब्रह्मण एव जगदुत्पद्यत इति निश्चेतुं शक्यते। कुतः? आकाशादिषु कारणत्वेन यथाव्यपदिष्ट-

---

परिणामार्हद्रव्यैक्यमादायैव एकविज्ञानेन सर्वविज्ञानस्योपपादनीयत्वात् चेतनस्य च तदसंभवात् तर्कानु-गृहीतसदसदव्याकृतश्रुत्यनुरोधेन तदननुगृहीत-ब्रह्मात्मादिकारणपरवाक्यानामन्यथाकरणमेव युक्तम्। 'कथमसतः सज्जायेते'ति श्रुतिस्तु सिद्धान्तिनेव पूर्वपक्षिणाऽपि असत्कार्यवादनिरासपरतयैव व्याख्ये-येत्यन्यदेतदिति पूर्वपक्ष्याशयः।

**स्रष्टुरव्यवस्थितेरि**ति। एकरूपेण सृष्टिकारणनिरूपणाभावादित्यर्थः। स्रष्टृपरमात्मैकनिरूपण-मिति व्यवस्थाया अभावादिति वा। **न व्याक्रियते न व्यज्यत** इति। सांख्यमते व्याकृतिरूपोत्पत्तिरभि-व्यक्तिश्चैकैव। **स्वरूपनित्यत्वेने**ति। द्रव्यसत्तामात्रेण सदिति व्यवहारः, कार्यावस्थायास्तु तदानीम-भावादसदिति। यद्वा भोगार्थपरिणामाश्रयत्वात् सदिति,तदभावदशापन्नस्वरूपमादाय चासदिति। **ब्रह्मणीवे**ति वैधर्म्यदृष्टान्तः; निर्विकारे ब्रह्मणि परिणामरूपोत्तरावस्था-तत्पूर्वावस्थारूपे सदसत्त्वे दुर्वचे इति। **प्रधान एवे**ति। चेतने उपादानत्वायोगात् अवश्यस्वीकार्य-क्लृप्तद्रव्यत एव निर्वाहाच्चेति भावः। **स्मृति-न्यायप्रसिद्धमि**ति। एवं तर्कोपबृंहितश्रुतिपक्षानुकूलौ कापिलस्मृतितत्कथितन्यायौ इति भावः।

**चशब्दस्तुशब्दार्थ** इति। उपास्यत्वप्राप्यत्वाभ्यामिवाऽऽकाशादिकारणत्वेनाप्युक्तेरित्यर्थसंभवेऽपि अपेक्षितत्वात् त्वर्थः स्वीकृतः। ब्रह्मविदाप्नोति परमित्यादि हि कारणत्वप्रस्तावं विनैव सत्यत्वविपश्चित्त्वादि-रूपेण ब्रह्म निरूप्य तस्योपास्यत्वं प्राप्यत्वञ्चाह। तत्रोपक्रमनिर्णीतं तत्त्वमेव तस्माद्वा एतस्मादात्मन इति उपा-दानत्वेनोक्तम्; एवमानन्दमय आत्मैव सोऽकामयतेति वाक्येपि। **आकाशादिषु** इति सौत्रपदस्य आका-शादीन् प्रतीत्यर्थः। आकाशादिपदचिह्नितवाक्येष्विति **दीपो**क्तार्थश्च। **आदिना**, 'तत् तेजोऽसृजत', 'एतस्माज्जायते प्राणः' इत्यादिग्रहणम्॥ १४॥

स्योक्तेः—सर्वज्ञत्वादिविशिष्टत्वेन, 'जन्माद्यस्य यतः" इत्येवमादिषु प्रतिपादितं ब्रह्म यथाव्यपदिष्टमित्युच्यते । तस्यैकस्यैवाकाशादिषु कारणत्वेनोक्तेः । (तै. आनं. १) "तस्माद्वा एतस्मादात्मन आकाशः संभूतः", (छा. ६-७) "तत् तेजोऽसृजत" इत्यादिषु सर्वज्ञं ब्रह्मैव कारणत्वेनोच्यते । तथा हि—"सत्यं ज्ञानमनन्तं ब्रह्म...सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति प्रकृतं विपश्चिदेव ब्रह्म, "तस्माद्वा एतस्मात्" इति परामृश्यते । तथा "तदैक्षत बहु स्याम्" इति निर्दिष्टं सर्वज्ञं ब्रह्मैव, "तत् तेजोऽसृजत" इति परामृश्यते । एवं सर्वत्र सृष्टिवाक्येषु द्रष्टव्यम् । अतो ब्रह्मैककारणं जगदिति निश्चीयते ॥१४॥

ननु "असद्वा इदमग्र आसीत्" इति असदेव कारणत्वेन व्यपदिश्यते; तत् कथमिव सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मण एव कारणत्वं निश्चीयत इति । अत आह—

समाकर्षात् । १ । ४ । १५ ॥

"असद्वा इदमग्र आसीत्" इत्यत्रापि विपश्चिदानन्दमयं सत्यसङ्कल्पं ब्रह्मैव समाकृष्यते ॥ कथम्! ॥ "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः", "सोऽकामयत । बहु स्यां प्रजायेयेति । ...स इदं सर्वमसृजत, यदिदं किंच । तत् सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादिना ब्राह्मणेनाऽऽनन्दमयं ब्रह्म सत्यसङ्कल्पं सर्वस्य स्रष्टृ सर्वानुप्रवेशेन सर्वात्मभूतमभिधाय, "तदप्येष श्लोको भवति" इति उक्तस्यार्थस्य सर्वस्य साक्षित्वेन ह्युदाहृतोऽयं श्लोकः, "असद्वा इदमग्र आसीत्" इति । तथोत्तरत्र, "भीषाऽस्माद्वातः पवते" इत्यादिना तदेव ब्रह्म समाकृष्य सर्वस्य प्रशासितृत्व-निरतिशयानन्दत्वादयोऽभिधीयन्ते । अतोऽयं मन्त्रस्तद्विषय एव । तदानीं नामरूपविभागाभावेन तत्सम्बन्धितयाऽस्तित्वाभावात् ब्रह्मैवासच्छब्देनोच्यते ॥ (छा. ३-१९-१) "असदेवेदमग्र आसीत्" इत्यत्राप्ययमेव निर्वाहः ॥ यदुक्तम्, "तद्धेदं तर्ह्यव्याकृतमासीत्" इति प्रधानमेव जग-

---

ननु तर्कोपबृंहितासदव्याकृतश्रुतिप्राबल्यमुक्तमित्यत्र समाकर्षादिति सूत्रम् । असदादिश्रुतिस्थलेऽपि चेतनस्यैव पूर्वोत्तरसंदर्भानुसारेण ग्राह्यतया यथाव्यपदिष्टमेव सर्वत्र विवक्षितमिति । कथमवस्थानाश्रयस्योपादानत्वमिति चेत्—सर्वश्रुत्युक्तार्थापरित्यागाय परम्परया तदाश्रयत्वमिष्ट्वा निर्वहणीयमिति पूर्वोत्तरबह्वधिकरणज्ञेयमेतत् । एवञ्च कर्मकर्तरिप्रयोगः, आत्मानं स्वयमकुरुतेत्यादिकमपि निरूढम् । एवं प्रमेयेऽवधारिते सत्पदस्य नानार्थत्वात् सदेवेत्यत्र सत्पदेन असदेवेति पदघटकसत्पदार्थ एव स्वीकर्तव्य इति न निर्बन्धः । 'कथमसतः सज्जायेते'त्यत्रेव योग्यार्थग्रहणसंभवात् । तत्र सदसच्छब्दौ अव्याकृतशब्दवत् सूक्ष्मचेतनाचेतनविशिष्टवचनौ भवितुमर्हतः । इदमसच्छब्दविषये, (१३. १२) 'न सत् तन्नासदुच्यते' इति गीतावाक्ये भाषितम् । सदसच्छब्दौ यथाक्रमं चेतनाचेतनपरतयाऽपि प्रसिद्धौ । तमसोऽक्षरोत्पत्तिरपि ततो वै सदजायतेत्यत्रोक्ता स्यात् । युक्तं तु सर्वत्र चिदचिदुभयग्रहणम् । श्लोको भवतीति इतिशब्दस्य उदाहृत इत्यत्रान्वयः । आसीदितीत्यस्य अयमित्यत्र । पश्यन् चक्षुरिति चेतनाचेतनोभयान्तर्या-

त्कारणत्वेनाभिधीयत इति---नेत्युच्यते। तत्राप्यव्याकृतशब्देनाव्याकृतशरीरं ब्रह्मैवाभिधीयते; (बृ. ३-४ ७) "स एष इह प्रविष्ट आ नखाग्रेभ्यः पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः। आत्मेत्येवोपासीत" इत्यत्र, स एषः इति तच्छब्देनाव्याकृतशब्दनिर्दिष्टस्यान्तःप्रविश्य प्रशासितृत्वेनानुकर्षात्; "तत् सृष्ट्वा तदेवानुप्राविशत्", (छा. ६-३-२) "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति स्रष्टुः सर्वज्ञस्य परस्य ब्रह्मणः कार्यानुप्रवेशनामरूपव्याकरणप्रसिद्धेश्च। (तै.आ.१-३-२१) "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति नियमनार्थत्वादनुप्रवेशस्य प्रधानस्याचेतनस्यैवंरूपोऽनुप्रवेशो न संभवति। अतः अव्याकृतम् अव्याकृतशरीरं ब्रह्म—तन्नामरूपाभ्यां व्याक्रियत इति तदेवाविभक्तनामरूपं ब्रह्म सर्वज्ञं सत्यसङ्कल्पं स्वेनैव विभक्तनामरूपं 'स्वयमेव व्याक्रियते'त्युच्यते। एवं च सति-ईक्षणादयो मुख्या एव भवन्ति। ब्रह्मात्मशब्दावपि निरतिशयबृहत्त्वनियमनार्थव्यापित्वाभावेन प्रधाने न कथंचिदुपपद्येते। अतो ब्रह्मैककारणं जगदिति स्थितम्॥ इति कारणत्वाधिकरणम्॥ ४॥

३२. जगद्वाचित्वाधिकरणम् १-४-५ (कौषी. ४)

## जगद्वाचित्वात्। १। ४। १६॥

पुनरपि साङ्ख्यः प्रत्यवतिष्ठते—यद्यपि वेदान्तवाक्यानि चेतनं जगत्कारणत्वेन प्रतिपादयन्ति—तथापि तन्त्रसिद्धप्रधानपुरुषातिरिक्तं वस्तु जगत्कारणं वेद्यतया न तेभ्यः प्रतीयते। तथा हि भोक्तारमेव पुरुषं कारणं वेद्यतयाऽधीयते कौषीतकिनो बालाकयजात-

---

मित्वमुच्यते। **नेति**। तन्नेत्यर्थः। **एवंरूपः** नियमनविशिष्टः। **अव्याकृतशरीरमिति**। इदं तर्ह्यव्याकृतमासीदित्यस्य इदं जगदग्रे नामरूपव्याकरणक्रियाजन्यफलानाश्रयवस्तु आसीदित्यर्थः। तद् वस्तु पश्चात तत्फलाश्रय आसीदित्युपरितनवाक्यस्यार्थः। तद्वाक्यानुसारेण योगव्युत्पत्त्यैव श्रुतिनिर्वाहे संभवति अव्याकृतपदस्य प्रधाने रूढिर्न संमन्तव्या। अतोऽस्य वाक्यस्य न प्रधानशरीरकमिति शब्दार्थवर्णनैदम्पर्यम्; किंतु भवता व्याकरणकर्मत्वाभाववत्तया यदभिमतम्. तच्छरीरकं ब्रह्मैव तथाभूततयाऽस्माभिरिष्यते। तच्च वस्तुतः सूक्ष्मचिदचिद्विशिष्टब्रह्मैवेति तदुभयविशिष्टब्रह्मैव व्याकरणफलराहित्यमुखेनाव्याकृतपदेनोच्यते इति। आत्माधिकरणभाष्यमप्यत्रानुसंधेयम्। 'नामरूपविभागाभावेन तत्संबन्धितयाऽस्तित्वाभावात् ब्रह्मैवासच्छब्देनोच्यते' इति असच्छब्दार्थवर्णनपरपूर्वभाष्यरीतिरव्याकृतपदेऽपि भाव्या॥ १५॥

ईक्षत्यधिकरणपूर्वपक्ष्यनुयायिनिरासः कृतः। आनन्दमयाधिकरणपूर्वपक्ष्यनुयायिनिरास आरभ्यते। पूर्ववत् अयोगव्यवच्छेदपरत्वाशयेन **यद्यपि वेदान्तवाक्यानीति** सामान्यनिर्देशः। बालाकिविद्यामात्रस्य जीवपरत्वशंकेति सुवचत्वेऽपि अयोगव्यवच्छेदस्य प्रस्तुतत्वादेकरीत्यादरणम्। ब्रह्म ते ब्रवाणीत्यारभ्य ब्रह्मणस्तस्यैव कर्मसंबन्धकथनात् जीवब्रह्माभेदावगमादपि तथा। बृहदारण्यकेऽपि बालाकिसंवादसद्भावेऽपि जगद्वाचिविषयवाक्यस्य कौषितकिस्थत्वात् तदेव प्रधानविषयवाक्यम्। बालाकिना आदित्यगतपुरुषस्य ब्रह्मत्वे कथिते अजातशत्रुणा तन्निरासे चन्द्रमस्स्थः पुरुषस्तेनोपन्यस्तः। एवं क्रमेणानेकेषु

शत्रुसंवादे, (कौषी. ४-४) "ब्रह्म ते ब्रवाणि" इत्युपक्रम्य, "यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत्कर्म, स वै वेदितव्यः" इति। उपक्रमे वक्तव्यतया बालाकिनोपक्षिप्तं ब्रह्माजानते तस्मा एवाजातशत्रुणा, "स वै वेदितव्यः" इति ब्रह्मोपदिश्यते। "यस्य वैतत्कर्म" इति कर्मसंबन्धात् प्रकृत्यध्यक्षो भोक्ता पुरुषो वेदितव्यतयोपदिष्टं ब्रह्मेति निश्चीयते; नार्थान्तरम्; तस्य कर्मसंबन्धानभ्युपगमात्। कर्म च पुण्यापुण्यलक्षणं क्षेत्रज्ञस्यैव संभवति। न च वाच्यम्—क्रियत इति कर्मेति व्युत्पत्त्या प्रत्यक्षादिप्रमाणोपस्थापितं जगत् एतत्कर्मेति निर्दिश्यते; यस्यैतत् कृत्स्नं जगत् कर्म, स वेदितव्य इति क्षेत्रज्ञादर्थान्तरमेव प्रतीयते—इति; "यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत्कर्म" इति पृथङ्निर्देशवैयर्थ्यात्। कर्मशब्दस्य च लोकवेदयोः पुण्यपापरूप एव कर्मणि प्रसिद्धेः। तत्तद्भोक्तृकर्मनिमित्तत्वाज्जगदुत्पत्तेः, एतेषां पुरुषाणां कर्तेति च भोक्तुरेवोपपद्यते। तदयमर्थः—एतेषामादित्यमण्डलाद्यधिकरणानां क्षेत्रज्ञभोग्यभोगोपकरणभूतानां पुरुषाणां यः कारणभूतः, एतत्कारणभावहेतुभूतं पुण्यापुण्यलक्षणं च कर्म यस्य, स वै वेदितव्यः—तत्स्वरूपं प्रकृतेर्विविक्तं वेदितव्यम्—इति। तथोत्तरत्र,(३०)"तौ ह सुप्तं पुरुषमीयतुः...तं यष्ट्या विचिक्षेप" इति सुप्तपुरुषागमनयष्टिघातोत्थापनादीनि च भोक्तृप्रतिपादन एव लिङ्गानि। तथोपरिष्टादपि भोक्तैव प्रतिपाद्यते,(४४)" तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा स्वाः श्रेष्ठिनं भुञ्जन्ति(भुञ्जते)

---

पुरुषेषु ब्रह्मतया तेनोपन्यस्तेषु अजातशत्रुणा च निरस्तेषु बालाकिमेवाजातशत्रुः प्रतिबोधयति, 'यो वै बालाके एतेषां पुरुषाणां कर्ते'त्यादिना। स कर्ता जीवः, कर्मवत्त्वोत्थाप्यमानत्वभोक्तृत्वसुषुप्त्याधारत्वानां क्रमेण वर्णितानां तत्रैवान्वयादिति पूर्वपक्षः। **अनभ्युपगमा**दिति। ब्रह्मजीवैक्ये तु स स्यात्; तत्तु नेष्टमिति भावः। सिद्धान्त्यभिमतमर्थमाशंक्य परिहरति **न च वाच्य**मिति। **पृथङ्निर्देशे**ति। पूर्वमुत्तरं वा वाक्यमेकं परमात्मबोधनायालमिति भावः। दोषान्तरमाह **कर्मशब्दस्ये**ति। प्रसिद्ध्यतिशय एव हि सर्वत्र रूढिस्थापक.। सोऽत्रापि समानः—'तौ ह यदूचतुः, कर्म हैव तदूचतु—कर्म हैव तत् प्रशशंसतुः। पुण्यो वै पुण्येन कर्मणा भवति; पापः पापेन' (बृ. ५-२-१३), 'नाभुक्तं क्षीयते कर्म' इत्यादिभ्यः। ननु, 'तद् यथेह कर्मचितः' इति लौकिककर्मण्यपि प्रयोगोऽस्ति। क्रियासामान्यं कर्म च तार्किका भूरि व्यवहरन्ति। शाब्दिकाश्च कर्मकारकमिति शङ्कापरिहाराय **लोकवेदयो**रिति पुण्यादौ प्रसिद्ध्यतिशयो दर्शितः। जीवस्य कर्तृत्वासंभवं परिहरति **तत**दिति। **तत्कारणभावहेतुभूत**मित्यनेन **एतत्कर्मे**ति समस्तं सत् एतत्पुरुषजातसंबन्धिकर्म भोगोपकरणभूततत्तत्पुरुषोत्पत्तिप्रयोजकं कर्मेत्यर्थकमिति सूच्यत इव। पृथक्पदत्वेपि प्रकृतपुरुषजातोपस्थितिद्वारा तत्कारणतया बुद्धिस्थे तत्कारणमेव परामृश्यते। **यष्टी**ति। यष्ट्या विचिक्षेपेति कौषीतकयुक्तम्। पाणिनापेषं बोधयाञ्चकारेति बृहदारण्यके। **स्वैः** ज्ञातिभिः। **भुञ्जते** अनुभवन्ति। **भुञ्जन्ती**ति पाठे परिपालयन्तीति। उपर्यर्थानुवादादयथापाठः। ननु सुषुप्तोत्थापितस्याधारतया कस्यचित् प्रतिपादनादतिरिक्तं ब्रह्म स्वीकर्तव्यमित्यत्र, तस्यापि वाक्यजातस्य स्वानुकूलत्वमाह

एवमेवैष (?) प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते ; एवमेवैत आत्मान एनं (?) भुञ्जन्ति " इति । तथा (३५) "क्वैष एतद्बालाके पुरुषोऽशयिष्ट ? क्व वा एतदभूत् ? कुत एतदागात् ?" इति पृष्टमर्थमजानते तस्मै स्वयमेवाजातशत्रुरुवाच, "हिता नाम हृदयस्य नाड्यः...तासु तदा भवति, यदा सुप्तः स्वप्नं न कथंचन पश्यति अथास्मिन् प्राण एवैकधा भवति । तदैनं वाक् सर्वैर्नामभिः सहाप्येति...मनः सर्वैर्ध्यानैः सहाप्येति । स यदा प्रतिबुध्यते, यथाऽग्नेः[ज्वलतः सर्वा दिशो] विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते ; प्राणेभ्यो देवाः ; देवेभ्यो लोकाः" इति । सुषुप्त्याधारतया, स्वप्नसुषुप्तिजागरितावस्थासु वर्तमानं वागादिकरणाप्ययोद्गमस्थानमेव जीवात्मानम्, "अथास्मिन् प्राण एवैकधा भवति" इत्युक्तवान् । अस्मिन् जीवात्मनि । प्राणभृत्त्वनिबन्धनोऽयं प्राणशब्दः ; "स यदा प्रतिबुध्यते" इति प्राणशब्दनिर्दिष्टस्य प्रबोधश्रवणात् । मुख्यप्राणस्येश्वरस्य च सुषुप्तिप्रबोधयोरसंभवात् । अथवा "अस्मिन् प्राणे" इति व्यधिकरणे सप्तम्यौ ; अस्मिन् आत्मनि वर्तमाने प्राण

---

तथाकेत्यादिना । अस्मिन् प्राण इति न परमात्मपरम् ; पूर्वोत्तरवाक्यार्थसंबद्धजीवपरामर्शित्वात्, शयनप्रबोधरूपपूर्वोत्तरार्थयोः परमात्मन्यनन्वयादित्यर्थः । 'क्वैष ' इत्यादिवाक्यजातस्य पूर्वपक्षेऽर्थस्तावत्—

एष जीवः क्वाशयिष्टेत्यस्य नाडीषु इत्युत्तरं समानं सिद्धान्तेऽपि । क्व वा एतदभूदित्यत्र एष इत्यनुवृत्तेरनावश्यकत्वात् एतत् इति पदस्वारस्याच्च करणजातं कुत्राभूदित्येव प्रश्नः । एवमेव कुत एतदागादित्यत्रापि । अत्र शयनाधारप्रश्नस्य स्वप्नाधारप्रश्नरूपत्वे, तासु तदा भवतीत्यस्य स्वप्नाधारतया नाडीनिर्देशपरत्वात्, 'यदा सुप्तः स्वप्नं न कथञ्चन पश्यती 'त्यग्रिमवाक्यस्यात्रान्वयासंभवात् तदुपरितनेन अथास्मिन्नित्यनेनैवान्वयो वाच्यः । तदा, यदाशब्दघटितवाक्यार्थकर्तुरेव अथेतिवाक्यार्थेपि कर्तृत्वमुचितमिति अस्मिन्निति सप्तम्यन्तेन जीवग्रहणं न स्यात् । अतः पूर्वपक्षी एवमाह—प्रथमप्रश्नः सुषुप्त्याधारप्रश्न एव । यदासुप्त इति वाक्यस्य चाधस्तादेवान्वयः । एवञ्च अथास्मिन्निति वाक्ये करणग्रामस्यैव कर्तृत्वं प्रश्नानुसारि युक्तमिति । इदं तृतीयसूत्रभाष्येऽनुवादबलादवसेयम् । तर्हि इह स्वप्नसुषुप्तिजागरितावस्थासु इति स्वप्नकथनं कथमिति चेत् ; 'यदा स्वप्नं न 'ति निषेधबलात् पूर्वं स्वप्नसंबन्धस्याप्यवगमात् तस्यापि कथनम् ।

सुषुप्त्याधारतयेत्यस्य उक्तवानित्यत्रान्वयः । सुषुप्तिः करणग्रामाप्ययः । सुषुप्त्यवस्थानुवृत्तिकथनं हिता नाम नाड्य इत्यारभ्य । 'स यदा प्रतिबुध्यत ' इत्यारभ्य जागरितावस्थायाः । बृहदारण्यके एतद्द्वयस्यैवोक्त्याऽत्रापि स्वप्नप्रस्तावो नेति युक्तम् । प्राणशब्दश्च न प्रथमान्तः ; सुषुप्तौ तस्य कार्यकरत्वेनाप्ययासंभावात् । अतः करणजातमेवैकधाभवनकर्तृ । तदिदं, तदैनं वागिति विवरणवाक्यवशात् ज्ञायते । एतद्विवरणरूपत्वाभावे च वागाद्यप्ययकथनमप्रस्तुतप्रस्तावः स्यात् । तर्हि, 'एतस्मादात्मनः प्राणाः' इति प्राणानां निष्क्रमणवर्णनं कथम्, तेषां लयाभावादिति चेत्-न ; बहुवचनबलात् तत्तेन्द्रियप्रवृत्त्यनुकूलप्राणव्यापाराणामेव ग्रहणात् तदप्ययस्य सुषुप्ताविष्टत्वात् । अत्र तु प्राणशब्द एकवचनान्त इति ।। व्यधिकरणत्वे अस्मिन्निति परमात्मैव गृह्यतामिति चेन्न-तस्यासिद्धेः । तस्याप्रकृतत्वाच्च । तत्र 'स यदा प्रति-

एवैकधा भवति वागादिकरणग्राम इति । प्राणशब्दस्य मुख्यप्राणपरत्वेऽपि जीव एवास्मिन् प्रकरणे प्रतिपाद्यते; स्वतः प्राणस्य जीवोपकरणत्वात् । अतो वक्तव्यतयोपक्रान्तं ब्रह्म पुरुष एवेति तद्व्यतिरिक्तेश्वरासिद्धेः, (द्विः ।) कारणगताश्चेक्षणादयश्चेतनधर्मा अस्मिन्नेवोपपद्यन्त इति एतदधिष्ठितं प्रधानमेव जगत्कारणम्—

इति प्राप्ते प्रचक्ष्महे —जगद्वाचित्वात् । अत्र पुण्यापुण्यपरवशः क्षुद्रः क्षेत्रज्ञः स्वस्मिन् प्रकृतिधर्माध्यासेन तत्परिणामहेतुभूतः पुरुषो नाभिधीयते; अपितु निरस्तसमस्ताविद्यादिदोषगन्धोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणनिधिर्निखिलजगदेककारणभूतः पुरुषोत्तमोऽभिधीयते । कुतः? "यस्य वैतत् कर्म" इत्यत्रैतच्छब्दान्वितस्य कर्मशब्दस्य परमपुरुषकार्यभूतजगद्वाचित्वात् । एतच्छब्दो ह्यर्थप्रकरणादिभिरसङ्कुचितवृत्तिरविशेषेण प्रत्यक्षादिप्रमाणोपस्थापितनिखिलचिदचिन्मिश्रजगद्विषयः । न च पुण्यापुण्यलक्षणं कर्मात्र कर्मशब्दाभिधेयम् । "ब्रह्म ते ब्रवाणि" इत्युपक्रम्य ब्रह्मत्वेन बालाकिना निर्दिष्टानामादित्यमण्डलाद्यधिकरणानां पुरुषाणामब्रह्मत्वेन,(२५)"मृषा वै खलु मा संवादयिष्ठाः" इति तमब्रह्मवादिनमपोद्य तेनाविदितब्रह्मज्ञानायाजातशत्रुणेदं वाक्यमवतारितम्, "यो वै बालाके" इत्यादि । पुण्यापुण्यलक्षणकर्मसंबन्धिनः आदित्याद्यधिकरणाः तत्सजातीयाश्च पुरुषाः तेनैव विदिता इति तदविदितपुरुषविशेषज्ञापनपरोऽयं कर्मशब्दो न पुण्यापुण्यमात्रवाची; क्रियामात्रवाची वा; अपि तु कृत्स्नस्य जगतः कार्यत्ववाची । एवमेव खल्वविदितोऽर्थ उपदिष्टो भवति । पुरुषस्य कर्मसंबन्धोपल-

---

बुध्यते' इति भाविप्रतिबोधत्वासंभवस्योक्तत्वाच्च । एवं प्राणप्रस्तावमात्रेणाजातशत्रुप्रतिपिपादयिषितः प्राण एवेति परोक्तपूर्वपक्षान्तरं तु न; तस्य कर्तृत्व-कर्मवत्त्व-यष्टिघातोत्थाप्यत्व-शयितत्व-सुप्तिसुषुप्तिमत्त्वाद्यसंभवात् जीवोपकरणतयैव तस्य निरूप्यत्वादित्यभिप्रेत्याह **प्राणशब्दस्येति** ।

**प्रकृतिधर्माध्यासेनेत्यनेन** पुरुषस्य सांख्यमते कर्तृत्वं मात्रयापि न भवति, कुत एवाऽऽदित्यादिपुरुषकर्तृत्वमिति ज्ञाप्यते । **एतच्छब्दान्वितस्येत्यनेन कार्यभूतेत्यनेन** च, अन्विताभिधानविधया विशिष्टपरत्वम्; तत्र **एतच्छब्दो** जगद्वाची, **कर्मशब्दः** कार्यवाचीति ज्ञापितम् । तत् स्पष्टयति **एतच्छब्दो** हीति । अत्र **कर्मशब्देत्यनेन** तस्य पुण्यापुण्यरूढत्वेऽप्यत्र बाधादग्रहणमिति ज्ञाप्यते । **मृषा वै किल मा संवादयिष्ठाः**—त्वदुक्तं मिथ्या; मा मत्संवादमत्र कारयेत्यर्थः । **पुण्यापुण्यमात्रेति** मात्रशब्दः कार्यसामान्यवाचित्वे पुण्यापुण्ययोरपि तदन्तर्गततया वाच्यत्वं स्यादित्याशयेन । पुण्यापुण्यकर्मणोः परं पृथग् रूढिर्न युक्ता । व्यक्तिवचनानामर्थप्रकरणादिभिर्विशेषे पर्यवसानसंभवात् क्रियासामान्ये क्लृप्तरूढ्यैव निर्वाहात् । उपचितपुण्यहिरण्यगर्भादिजीवविशेषस्य च आदित्यादिपुरुषनिर्माणविषये अदृष्टार्थकर्मातिरिक्तलौकिकक्रियाया अपि संभवेन तत्त्यागे कारणाभावेन क्रियासामान्यग्रहणमेव युक्तम् । अस्तु तथैवेति चेन्न-परमपुरुषस्यापि क्रियासंभवेन कर्मशब्देन तदवारणात् । वस्तुत एतच्छब्दो जगद्वाची तमप्यर्थं बाधत इत्याशयेनाह **क्रियामात्रवाची वेति** । स-इत्यस्य कर्मविशिष्टवाचिनः कर्तृयथाव-

क्षितस्वाभाविकस्वरूपस्याज्ञातस्य वेदितव्यत्वोपदेशे च लक्षणा; कर्मसंबन्धमात्रस्यैव वेदितव्यस्वरूपलक्षणत्वात्, यस्य कर्म स वेदितव्य इत्येतावतैव तत्सिद्धेः, "यस्य वैतत् कर्म" इत्येतच्छब्दवैयर्थ्यं च। 'य एतेषां कर्ता यस्य वैतत् कर्म' इति पृथङ्निर्देशस्य चायमभिप्रायः—ये त्वया ब्रह्मत्वेन निर्दिष्टाः पुरुषाः, तेषां यः कर्ता—ते यत्कार्यभूताः—किं विशिष्याभिधीयते, कृत्स्नं जगद् यस्य कार्यम्—उत्कृष्टा अपकृष्टाश्चेतना अचेतनाश्च सर्वे पदार्थाः यत्कार्यत्वे तुल्याः, स परमकारणभूतः पुरुषोत्तमो वेदितव्यः—इति। जगदुत्पत्तेर्जीवकर्मनिबन्धनत्वेऽपि न जीवः स्वभोग्यभोगोपकरणादेः स्वयमुत्पादकः, अपि तु स्वकर्मानुगुण्येनेश्वरसृष्टं सर्वं भुङ्क्ते। अतो न तस्य पुरुषान् प्रति कर्तृत्वमुपपद्यते। अतः सर्ववेदान्तेषु परमकारणतया प्रसिद्धं परं ब्रह्मैवात्र वेदितव्यतयोपदिश्यते ॥ १६ ॥

---

स्थितस्वरूपमित्यर्थे दोषः लक्षणेति। जीवस्वरूपस्य विवक्षितत्वे च सुषुप्तजीवस्वरूपस्येव आदित्यादिपुरुषभावोपलक्षितस्वरूपस्यैव तथात्वसंभवेन तत्कर्तृत्वादिनोपलक्षणं व्यर्थम्। लक्षणत्वात् ज्ञापकत्वात्। एतच्छब्दवैयर्थ्यञ्चेति। पक्षान्तराभावात् वाशब्दानन्वयोऽपि बोध्यः। सिद्धान्ते तु उक्तावरपुरुषमात्रकर्तृत्वव्युदासेन सर्वजगत्कर्तृत्वोक्तिः। पूर्ववाक्येनैवोपलक्षितस्वरूपसिद्ध्या एतद्वाक्यस्य पूर्ववाक्यस्य वा त्वन्मतेऽपि वैयर्थ्यञ्च। स्वपक्षे वाक्यवैयर्थ्यं परिहरति य एतेषामिति। प्रथमवाक्ये यच्छब्दार्थस्य प्राधान्यम्, द्वितीयवाक्ये कर्मण इति वैषम्यमकिञ्चित्करम्; प्रथममपि, 'यस्यैते पुरुषाः कार्यभूताः' इत्येतत्पर्यवसाय्येवेति दर्शयितुं ते यत्कार्यभूताः इति विवृतम्। कर्मशब्दस्य पुण्यापुण्यकर्मार्थकत्वं दुर्ग्रहम्; पुरुषाणां कर्तेति प्रथमगृहीतकर्तृत्वविरोधात्। न हि वस्तुहेतुपुण्यकर्तरि वस्तुकर्तृत्वव्यवहारः; नतरां पापकर्तरि। किं बहुना; लौकिकबीजावापकर्ताऽपि नाङ्कुरकर्तृत्वेन व्यवह्रियते। अतोऽदृष्टाद्वारककृतिसाक्षाद्विधेयविषय एव कर्तृत्वमित्याह जगदुत्पत्तेरिति। जगद्वाचित्वादिति सूत्रस्य एतच्छब्दस्य जगद्वाचित्वात् तत्समानाधिकरणं कर्मपदं कार्यार्थकम्, न पुण्यापुण्यार्थकमिति स इति पदं जीवातिरिक्तपरमेवेत्यर्थः। एतत्कर्मेति समस्तपदत्वम्, षष्ठीसमासकल्पनम्, एतस्य कर्मेति षष्ठ्यर्थपरम्परासंबन्धवर्णनञ्च क्लिष्टम्। पुरुषाणामिति षष्ठीकथितं कृतिकर्मत्वमेव पुरःस्फूर्तिकं समन्वितञ्चेति भावः। एतेन—यच्छब्दः प्राणवाची, कर्मशब्दः चेष्टार्थकः; प्राणचेष्टारूपलौकिकालौकिकनानाकर्माधीनोत्पत्तिस्थितिकत्वादादित्यादिदेवानामपि, तं 'स वै वेदितव्य' इति प्रस्तुत्य तदुपकरणकः तद्विलक्षणो जीव उपदिश्यते इति पक्षोऽपि एतत्कर्मेत्येतदर्थशोधनेन सूत्रकारेण निरस्तः। इदमपि, 'न तस्य पुरुषान् प्रति कर्तृत्वमुपपद्यते' इति निगमनभाष्येण, 'न क्रियामात्रवाची' इति पूर्वभाष्येण च ज्ञापितम् ॥ १६ ॥

इन्द्रप्राणाधिकरणे परमात्मलिङ्गभूयस्त्वे सति तदविरोधेन जीवादिलिङ्गानामन्यथानिर्वाहः कार्य इत्युक्तम्। अत्र बालाकिविद्यायां परमात्मलिङ्गभूयस्त्वमेव न, जीवस्यैव कर्मादिशब्दार्थान्वयबलेन ग्राह्यत्वात् तस्यैव ब्रह्मत्वावगमात्; कर्मशब्दादेः पुण्यादिरूढतया परमात्मलिङ्गासमर्पकत्वादित्याक्षेपे तत्परिहारः प्रथमसूत्रेण कृतः। एवञ्च जीवादिलिङ्गं पूर्वोक्तरीत्या निर्वोढव्यमिति सिद्धम्। तत्र कञ्चिद्विशेषं दर्शयितु

जीवमुख्यप्राणलिङ्गान्नेति चेत्—तद्व्याख्यातम् । १ । ४ । १७ ॥

अथ यदुक्तम्—जीवलिङ्गात् मुख्यप्राणसंकीर्तनाच्च लिङ्गात् भोक्त्रैवास्मिन् प्रकरणे प्रतिपाद्यते ; न परमात्मेति—तद्व्याख्यातम्—तस्य निर्वाहः प्रतर्दनविद्यायामभिहितः। एतदुक्तं भवति—यत्रोपक्रमोपसंहारपर्यालोचनया ब्रह्मपरं वाक्यमिति निश्चितम्, तत्रान्यलिङ्गानि तदनुरोधेन वर्णनीयानीति तत्र प्रतिपादितम् । अत्राप्युपक्रमे, 'ब्रह्म ते ब्रवाणि' इति ब्रह्म उपक्षिप्तम् ; मध्ये च, "यस्य वैतत्कर्म" इति निर्दिष्टं न पुरुषमात्रम् ; अपि तु निखिलजगदेककारणं ब्रह्मैवेत्युक्तम् । उपसंहारे च, "सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति, य एवं वेद" इति ब्रह्मोपासनैकान्तं सर्वपापापहतिपूर्वकं स्वाराज्यं च फलं श्रुतम् ; अतोऽस्य वाक्यस्य ब्रह्मपरत्वनिश्चयेन जीवमुख्यप्राणलिङ्गान्यपि तत्परतया वर्णनीयानि इति ॥ १७ ॥

प्रातर्दने तूपासात्रैविध्येन जीवमुख्यप्राणलिङ्गानां ब्रह्मपरत्वमुक्तम् ; अत्रापि "अथास्मिन् प्राण एवैकधा भवति" इति, सामानाधिकरण्यसंभवे वैयधिकरण्यसमाश्रयणायोगात्

---

शङ्कोत्तररूपेण इन्द्रप्राणाधिकरणोक्तार्थं स्मारयति जीवेतिसूत्रेण । जीवलिङ्गमिह यष्टिघातोत्थान—सुप्तिसुषुप्तिजागरितावस्थानुगमादि । श्रेष्ठिदृष्टान्तवाक्ये जीवलिङ्गाभावात् भोगस्य कर्मानधीनस्य परमात्मन्यपि सत्त्वादुपेक्ष्यम् । प्राणलिङ्गमायुर्बलादिकं प्रतर्दनविद्यायाम् ; अत्र तु, 'अथास्मिन् प्राणे' इति प्राणशब्दसंकीर्तनाधिकस्याभावात् तदेव प्रकृते लिङ्गमित्याह प्राणसंकीर्तनाच्चेति । तर्हि लिङ्गादिति कुत उक्तमिति चेत्-प्राणशब्दो मुख्यप्राणपरः 'अस्मिन् प्राणे 'इति जीवनिष्ठस्वरूपधर्मान्वयलिङ्गादिति गमयितुम् । उक्तमित्यनुक्त्वा व्याख्यातमिति शब्दप्रयोगः तत्र नानाप्रकारसंभवप्रदर्शनस्य सूत्र एव सम्यक्कृतत्वात् । तर्हि कतरः प्रकार इहेति शङ्कायाम्, तदुपपादनार्थमुपरि सूत्रम् । अन्यसंबन्धिलिङ्गं विशेषणतयोपलक्षणतया वाऽन्यस्य तत्तत्र परमात्मसंबन्धसत्त्वान्न व्याहन्यते ; अत्र तु उपलक्षणत्वमेवेति निष्कर्षः । उपासात्रैविध्यमेव तत्र सूत्राभिप्रेतमिति आपाततो मन्येरन् । तन्मतिनिरासाय तत्र सूत्रे एतदुक्तंभवतीत्यारभ्योक्तमेवेहापि दर्शयति एतदुक्तंभवतीति । अत्र परमात्मलिङ्गभूयस्त्वमाह अत्रापीति । स्वाराज्यम् अकर्मवश्यत्वम् । श्रैष्ठ्यमाधिपत्यञ्च सत्यसंकल्पत्वानुक्तमवतारदशायामिति अप्राधान्यात् चकारेण गृहीतम् ॥ १७ ॥

ननु तत्परतया वर्णनं किंरूपम् ? तत्र हि पूर्वमुपासात्रैविध्यमुक्त्वा ' इह तद्योगात् ' इत्यनेन, ' संभवात् तत्स्वीकारः ; अन्यथा प्रकारान्तरेण निर्वाह 'इति दर्शितम् । तदत्रोपासात्रैविध्यं भवति, न वेति विमर्शे ' अस्मिन् प्राणे 'इत्यत्र तत्संभावनाऽस्ति, न तु जीवविषये ; जीववाचिपदस्य परमात्मवाचिपदसामानाधिकरण्येन प्रयोगस्य वा, जीवे परमात्मगुणान्वयस्य वाऽत्र प्रघट्टेऽनुपलम्भात् । अतोऽत्र कीदृशो निर्वाह इति प्रश्नः प्राप्तः । तमवतारिकया दर्शयति प्रातर्दनेहीत्यादिना । अत्र किं वाक्यमारभ्यावतरणग्रन्थत्वं टीकेष्टमिति विचार्य निर्धार्यम् । समाश्रयणायोगादिति । एकधाभवतीत्यस्य पूर्वप्रकृतजीवकर्तृकत्वस्यावश्यकतया अस्मिन्निति जीवनिर्देशायोगात् अस्मिन्नित्यस्य पुरुषाणांकर्तेत्यादिनोक्ते जीव-

**ब्रह्मण्येव प्राणशब्दप्रयोगनिश्चयेन च प्राणशरीरकब्रह्मोपासनार्थं प्राणसंकीर्तनं लिङ्गं युज्यते ; जीवलिङ्गानां पुनः कथं** ब्रह्मपरत्वमित्यत्राह—

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्याम् अपि चैवमेके । १ । ४ । १८ ॥

**तुशब्दो जीवसंकीर्तनेन वाक्यस्य तत्परत्वसंभावनाव्यावृत्त्यर्थः ।** अन्यार्थं—**जीवसंकीर्तनं जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थमिति जैमिनिराचार्यो मन्यते । कुतः?** प्रश्नव्याख्यानाभ्याम् । **प्रश्नस्तावत्, "तौ ह सुप्तं पुरुषमीयतुः" इत्यादिना सुप्तस्य प्रबुद्धप्राणस्यैव प्राणनामभिः आमन्त्रणाश्रवण-यष्टिघातोत्थापनाभ्यां प्राणादिव्यतिरिक्तं जीवं प्रतिबोध्य, पुनः जीवव्यतिरिक्तब्रह्मप्रतिबोधनपरो दृश्यते, "क्वैष एतद् बालाके! पुरुषोऽशयिष्ट, क्व वा**

---

विलक्षणे इत्यर्थमंभवात् परमात्मग्रहणे सिद्धे, परमात्मनि वर्तमाने प्राणे इत्यर्थस्य क्रियाया अश्रवणात् कारकसप्तमीविभक्त्ययोगेनास्वरसत्वादित्यर्थः । **निश्चयेन चेति** । योगेन अपर्यवसानवृत्त्या च प्रयोगस्य तत्रतत्र निश्चितत्वेन चेत्यर्थः । **युज्यत** इत्यनेन, 'यःप्राणेन प्राणिती'त्यत्रैव वा प्राणयतीति वा योगव्युत्पत्तेरिवापर्यवसानवृत्तेरप्यबाधो ज्ञाप्यते । **कथं ब्रह्मपरत्व**मिति । सर्वात्मना नेत्यर्थः । तथाच जीवविषये विशिष्टोपासनस्य दुर्वचत्वात् प्रकरणे प्रतर्दनविद्यायामुपक्रममात्रे जीवलिङ्गश्रवणात् अत्रादिमध्यान्तेषु सर्वत्र तद्दर्शनात् जीवपरत्वमावश्यकमिति प्राणनिरूपणमपि तदुपकरणतयैव भवत्विति शंकितुराशयः ।

जीवस्य ब्रह्मत्वं बालाकिमतम् । अतिरिक्ते ब्रह्मत्वनिरूपणार्थमेव जीवस्य यष्टिघातोत्थापनादिकं क्रियते । अतः अध्यात्मशास्त्रे देहादिप्रतिपादनवत् ज्ञातव्यव्यतिरेकप्रतियोगिसमर्पणार्थं जीवसंकीर्तनम्, न तूपास्याकारसमर्पकमिति जैमिन्याशयः । अत्र भाष्ये जीवसंकीर्तनस्यैवान्यार्थत्ववर्णनात् प्राणसंकीर्तनस्य विशिष्टोपासनार्थत्वयोगः अवतारिकायामुक्तः इष्ट इति ज्ञायते ॥ पृष्टसमाधानमात्रमुक्तम् । प्राणविशिष्टोपासनमप्यविवक्षितमेव । न हि 'य एषोन्तर्हृदय आकाशः तस्मिन् शेते'इत्यत्राकाशशरीरकब्रह्मविवक्षा । अतः प्राणाकाशशब्दौ अविशेषात् परमात्मव्यक्तिमात्रसमर्पकावित्यभिमतमिति निर्वाहान्तरम् । **प्रबुद्धप्राणस्ये**त्यादिकं जैमिन्यभिमतदृष्टान्तज्ञापनाय । अत्र हि सुप्तपुरुषसमीपमागम्य, 'बृहन् पाण्डरवासः सोमराजन्'इत्यामन्त्रणं कृतम् । एवमामन्त्रणानुत्थानवर्णनस्य किञ्चित् प्रयोजनं वर्णनीयम् । यथाश्रुते इदं न भवति । अतः प्राणवायोः ज्यैष्ठ्यसत्त्वात्, शुक्लवर्णतया प्रसिद्धपाथोवस्त्रकत्वस्य आपोवास इत्युक्तत्वात् सप्ताचब्राह्मणे (बृ. ३-५) प्राणस्य सोमराजशब्दवाच्यचन्द्रसंबन्धप्रतीतेश्च प्राणस्यैवेदमामन्त्रणम् । यत एवमामन्त्रणेऽपि सुप्तो नोत्तिष्ठति । अतः स प्राणातिरिक्त इति ज्ञायते । स एव चेत् जीवः, तस्य प्रबुद्धतया चैतन्यवत्तया आमन्त्रणश्रवणमावश्यकम् । अतः सोऽचेतनः, अन्य एव चेतन इति निश्चीयते । प्राणस्य प्रबुद्धता चोच्छ्वासनिश्वासदर्शनात् प्रत्यक्षा । प्रश्नोपनिषदि च, "प्राणाग्नय एव जाग्रति" इति सुषुप्तिकाले जाठराग्नेरिव प्राणवायोर्जागरणमुक्तम् । तदेवं प्राणनिरूपणं यथा प्राणातिरिक्ततया जीवनिरूपणार्थम्, तथा जीवनिरूपणमपि तदतिरिक्ततया परमात्मनिरूपणार्थमेवेति ।

एतदभूत् कुत एतदागात्" इति। व्याख्यानमपि, "यदा सुप्तः स्वप्नं न कथञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति। एतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्ते; प्राणेभ्यो देवाः; देवेभ्यो लोकाः" इति जीवादर्थान्तरभूतपरमात्मपरमेव। सुषुप्तस्य हि जीवस्य यत्रोपरतस्य जागरितस्वप्नदशासंबन्धिविविधसुखदुःखानुभवकालुष्यविरहेण संप्रसन्नस्य स्वस्थतापत्तिः, पुनरप्यस्य यस्माद्भोगाय निष्क्रमणम्, सोऽयं परमात्मा। तथा हि (छा. ६-८-१) "सता सोम्य तदा संपन्नो भवति", (बृ. ६-३-२१) "प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति सुषुप्त्याधारतया प्रसिद्धो जीवादर्थान्तरभूतः प्राज्ञः परमात्मा। अतः प्रश्नप्रतिवचनाभ्यां जीवसंकीर्तनं जीवादर्थान्तरभूतपरमात्मप्रतिपादनार्थमिति निश्चीयते।

यदुक्तम्—प्रश्नव्याख्याने जीवपरे; सुषुप्तिस्थानं च नाड्य एव; करणग्रामश्च प्राणशब्दनिर्दिष्टे जीव एवैकधा भवति—इति—तदयुक्तम्; नाडीनां स्वप्नस्थानत्वात्; उक्तरीत्या ब्रह्मण एव सुषुप्तिस्थानत्वात्, प्राणशब्दनिर्दिष्टे ब्रह्मण्येव जीवस्य तदुपकरणभूतवागादिकरणग्रामस्य चैकतापत्तिविभागवचनाच्च।

---

**यदा सुप्त** इत्यारभ्य वाक्यपाठादिदं पूर्ववाक्यान्वयि न भवतीति ज्ञाप्यते। 'हिता नाम नाड्य' इत्यादिवाक्यजातस्य पूर्वपक्षुक्तमर्थं दूषयितुमनुवदति **यदुक्तमिति**। **नाड्य एवेति**। न तु परमात्माऽपीति तदाशयः। **नाडीनां स्वप्नस्थानत्वादिति**। यद्यपि बृहदारण्यके इह च सुषुप्तौ नाडीप्रस्तावोऽस्ति। सुबालोपनिषदि च नाडीनां सुषुप्तिस्थानत्वमप्युक्तं प्रदेशभेदेन। 'तदभावो नाडीषु' इति च सूत्रम्—अथापि इह नाडीप्रस्तावः स्वप्नाधारतयैवेति भाष्याशयः। स्वप्न एव नाडीनां साक्षादाधारत्वात्। अन्यथा 'अथास्मिन्' इति अथशब्दोऽपि न स्वरसः, 'यदा सुप्तः स्वप्नं न' इति वाक्यस्योत्तरान्वयस्यास्वरसं चेति। 'अथ यदा स्वप्नं न पश्यति, तदाऽस्मिन् प्राणे एकधा भवती'त्यन्वयः। तत्रैकधाभवनकर्तृत्वं जीवस्यैवोचितम्, संदर्भात्; न तु करणजातस्य; एतच्छब्देन तदुपस्थापनायोगाच्च; अप्रस्तुतत्वात्। एतदिति पदं तु 'क्वैष एतद् बालाके पुरुषोऽशयिष्ट' इति पूर्ववाक्ये एतत्पदमिव क्रियाविशेषणम्। इदं जीवकर्तृकत्वम्, 'क्वैष तदाऽभूत्' इति बृहदारण्यके एष इति जीवनिर्देशात् व्यक्तम्। वागादिकरणग्रामवर्णनञ्च जीवाप्ययस्य सुषुप्तिरूपस्य वैशद्यविवक्षया। वाक् स्वकीयनामव्यवहारशक्त्या सहाप्येति, चक्षुरादि च रूपादिदर्शनशक्तिसहिततयेति। एतस्मादात्मनः प्राणा इति जागरवर्णनवाक्येऽपि **आत्मन** इति परमात्मैव गृह्यते। **प्राणाः** जीवात्मानः; देवाः इन्द्रियाणि; लोकाः तत्कार्याणि दर्शनादीनि। शयनभवनाऽऽगमनविषयप्रश्नत्रयस्य स्वप्नसुष्वापजागररूपविभिन्नविषयत्वं युक्तम्। बृहदारण्यके प्रश्नद्वये सत्यपि अत्र प्रश्नत्रयात्। अत्र बालाकिना सुप्तपुरुषस्यापि ब्रह्मतयोपास्यत्वस्य विशिष्योक्तत्वात् तद्वैलक्षण्यज्ञप्तयेऽत्र परं स्वप्नप्रस्तावः। बृहदारण्यकेऽपि स्वप्नप्रस्तावोऽस्त्येव; परं सुषुप्तेरूर्ध्वं जागरवर्णनावसरे; अत्र तु प्रागिति विशेषः।

अपि चैवमेके —वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे सुषुप्तात् विज्ञानमयाद् भेदेन तदाश्रयभूतं परमात्मानमामनन्ति, (बृ. ४-१-१६-१७) "य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत् कुत एतदागात्,...यत्रैष एतत् सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः, तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशः, तस्मिञ्छेते" इति। आकाशशब्दश्च परमात्मनि प्रसिद्धः, (छा. ८-१-१) "दहरोऽस्मिन्नन्तराकाशः" इति।

अतोऽत्र जीवसंकीर्तनं तस्मादर्थान्तरभूतस्य प्राज्ञस्य परस्य ब्रह्मणः प्रतिबोधनार्थमित्यवगम्यते। तस्मादस्मिन् वाक्ये पुरुषादर्थान्तरभूतस्य निखिलजगत्कारणस्य परस्यैव ब्रह्मणो

---

जीवव्यतिरेकप्रदर्शनार्थं जीवनिरूपणमिति यत् जैमिन्युक्तम्, तद् बृहदारण्यके जीवव्यतिरेकस्य स्पष्टमवगमात् दृढीकृतमिति दर्शयितुमाह **अपि चैवमेके** इति। **एवं** जीवाधारतया जीवभिन्नत्वेन। **यत्रे**त्यादि। **यत्र** यदा। य एष विज्ञानमयः पुरुषः, एष जीवः—यदा **सुप्तोऽभूत्** सुषुप्तो भवति, तदा **प्राणानाम्**-इन्द्रियाणां यत् कार्यं विज्ञानम्, तेन सर्वेण सह विज्ञानं मनः धर्मभूतज्ञानं वाऽऽदाय—इन्द्रियाणि धर्मभूतज्ञानञ्चोपरतानि कृत्वा **आकाशे** परमात्मनि हार्दे शेते इत्यर्थः। जीवस्यात्र कर्तृत्वम्, न करणजातस्य; परमात्मन एवाधारत्वम्, न जीवादेरिति स्पष्टमत्र। **जैमिनि**पदप्रयोगो गौरवात्; यद्वा तस्य 'साक्षादप्यविरोधं जैमिनिः' इति साक्षान्निर्वाहपक्षपातित्वात् प्राणशब्देऽपि विशिष्टपरत्वं नेष्टमिति द्योतनं स्यात् तत्प्रयोगफलम्। तर्हि जैमिनिपक्षस्य स्वाभिमतत्वे, 'जीवमुख्यप्राणलिङ्गान्नेति चेत्-अन्यार्थं प्रश्नव्याख्यानाभ्यामपि चैवमेके' इति एकमेव सूत्रं युक्तम्। सूत्रभेदात् विशिष्टोपासनमेव व्यासाभिमतमिति वक्तव्यम्। तस्य जीवविषये दुर्वचत्वेऽपि प्राणविषयेऽपि यदि तन्नेष्यते, सूत्रभेदः सर्वथाऽनुपपन्न इति चेत्—यथा प्रातर्दने, मामुपास्स्व आयुरिति इति प्राणेन्द्रविशिष्टतयोपासनं कण्ठोक्तम्, न तथाऽत्र। 'स वै वेदितव्य' इति जगत्कारणत्वेनोपासनस्यैव श्रवणात्। 'अस्मिन् प्राण' इति वाक्यमपि जीवव्यतिरेकप्रदर्शकवाक्यमध्यनिविष्टं न प्राणान्तर्यामित्वाकारस्योपास्यतामवश्यं स्थापयेत्। प्राणसंकीर्तनेऽपि प्राणप्राधान्यं पूर्वपक्षे नास्ति; तथा सिद्धान्ते प्राणस्योपास्यत्वमपि न। **तद् व्याख्यात**मिति प्रयोगस्तु अन्यार्थत्वांशस्यापि तत्रैवोक्तत्वज्ञापनाय। तद्विवक्षितांशवैशद्याय च तृतीयं सूत्रमिदम्। **अधिकरणसारावल्याद्यर्थ**वर्णनं कौषीतकि**परिष्कारे** द्रष्टव्यम्। अस्तु वा प्राणविशिष्टोपासनमत्र; जीवविशिष्टोपासनवर्णनं पुनर्भाष्यटीकासारावल्याद्यनभिमतमेव।

तत्र तत्र श्रुतौ प्रायः प्राणवाक्चक्षुःश्रोत्रमनसां समाहारस्य दर्शनात् इह वाक्त्वक्चक्षुः श्रोत्रमनसामप्यये कथ्यमाने प्रयुक्तः 'अस्मिन् प्राणे' इति प्राणशब्दः मुख्यप्राणमुखेन परमात्मपर एव युक्तः। यद्यपि जीवस्य मुख्यप्राणो न लयस्थानम्, अथापि जैववागादिलयस्थानतामात्रेण तदुक्तिः। वागादीनां तत्र लयो नाम वागादिकार्योपयोगिमुख्यप्राणव्यापारस्याभावात् उच्छ्वासनिश्वासमात्रसत्त्वादुपपद्यते। एवं मुख्यप्राणग्रहणे औचित्यादेव बृहदारण्यकेऽत्र सुषुप्तौ, 'गृहीत एव प्राणो भवति, गृहीता वाक्' इत्यत्र मुख्यप्राणस्य शरीरस्थित्युपवेशाङ्गचलनाद्यौपयिकचेष्टानिरोधभाजः सुग्रहतया न प्राणशब्दस्य

वेदितव्यतयाऽभिधानात् न तन्त्रसिद्धस्य पुरुषस्य, तदधिष्ठितस्य वा प्रधानस्य कारणत्वं क्वचिदपि वेदान्ते प्रतीयत इति स्थितम् (सिद्धम्) ॥ १८ ॥ इति जगद्वाचित्वाधिकरणम् ॥ ५ ॥

३३. वाक्यान्वयाधिकरणम् १-४-६ (बृ. ६-५; ४-४)

## वाक्यान्वयात् । १ । ४ । १९ ॥

अत्रापि कापिलतन्त्रसिद्धपुरुषतत्त्वावेदनपरं वाक्यं क्वचिद्दृश्यत इति तदतिरिक्त ईश्वरो नाम न कश्चित् संभवतीत्याशङ्क्य निराकरोति । बृहदारण्यके मैत्रेयीब्राह्मणे श्रूयते—(बृ. ६-५-६) "न वा अरे पत्युः कामाय पतिः प्रियो भवति" इत्यारभ्य—"न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति; आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि! आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इति । तत्र संशयः—किमस्मिन् वाक्ये द्रष्टव्यतयोपदिश्यमानः तन्त्रसिद्धः पुरुष एव, अथवा सर्वज्ञः सत्यसङ्कल्पः सर्वेश्वरः इति । किं युक्तम्? पुरुष इति । कुतः? आदिमध्यावसानेषु पुरुषस्यैव प्रतीतेः—उपक्रमे तावत् पतिजायापुत्रवित्तपश्वादिप्रियत्वयोगात् जीवात्मैव प्रतीयते; मध्येऽपि, (बृ. ४-४-१२) "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति; न प्रेत्य संज्ञाऽस्ति" इति उत्पत्तिविनाशयोगात् स एवावगम्यते; तथाऽन्ते च (बृ. ६-५-१२) "विज्ञातारमरे केन विजानीयात्" इति स एव ज्ञाता क्षेत्रज्ञ एव प्रतीयते; नेश्वरः । अत-

---

प्राणपरत्वम् । अतः प्राणशब्दस्य नात्र प्राणयतीति योगव्युत्पत्तिरिति सूत्रकृदाशयः । एवमपि तस्यो-पास्यकोटिप्रवेशः कुतः? यदि स इष्यते, जीवानामपि स्यात् । बृहदारण्यके एतद्विद्यान्ते, 'तस्योपनिषत् सत्यस्य सत्यमिति । प्राणा वै सत्यम्; तेषामेष सत्यम्' इति प्राणसत्यपदविवक्षितजीवातिशयित-निर्विकारस्वरूपसत्यत्वरूपरहस्यनामार्थानुसंधानस्योक्ततया जीवोपासनस्यापि सत्त्वात् ॥ सत्यं सर्वे जीवा अनुसंधीयन्ते; न तु तावदन्तर्यामित्वेनोपासनं तत्रोच्यते इति चेत्-सर्वप्राणान्तर्यामित्वेनोपासनं परं कुतः । रहस्यनामत्वे सत्यपि यदि न तदर्थोपासनम्, नतरामत्रोपासनप्रसक्तिः । व्यतिरेकप्रदर्शनमात्रार्थ-त्वात् प्रकरणस्येति ॥ अस्तु । किमुपासनविचारेण । अनुपास्यत्वेऽपि अपर्यवसानवृत्त्या विशिष्टार्थकत्वं प्राणविषयेऽस्तीत्येतावत एवात्र विवक्षितत्वादित्यलम् ॥ १८ ॥

कर्मशब्दस्य पुण्यपापरूपकर्मैकपरत्वायोगेन जीवव्यतिरेकप्रतिपादकवाक्यबाहुल्येन च बालाकि-विद्यायाः जीवपरत्वं निरस्तम् । मैत्रेयीविद्यायां पतिजायादिप्रतिसंबन्धितया जीवात्मनोऽवश्यग्राह्यत्वात्, तस्य, अमृतत्वोपायस्य सर्वविज्ञानरूपैकविज्ञानविषयस्य वेदलोकादिविधातृत्वश्रवणप्रतीतेः स्पष्टत्वाच्च जीवाति-रिक्तब्रह्मसिद्धिरेवेत्याक्षेपेणाधिकरणारम्भः । मैत्रेयीब्राह्मणद्वयमप्यत्र विषयवाक्यम् । **विज्ञानघन** इति । पाञ्चभौतिकदेहेन सहोत्पत्तिविनाशवर्णनं प्रेत्येतिप्रायणकथनञ्च जीव एव हि घटत इति भावः । **विज्ञातार-**मिति । केन विजानीयादिति कर्तृत्वेनोक्त एव हि विज्ञाता विज्ञातृपदेन ग्राह्य इति भावः । स्वयंप्रकाशतया

स्तन्त्रसिद्धपुरुषप्रतिपादनपरमिदं वाक्यमिति निश्चीयते।

ननु "अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन" इत्युपक्रमात् अमृतत्वप्राप्त्युपायोपदेशपरमिदं वाक्यमित्यवगम्यते। तत् कथं पुरुषप्रतिपादनपरत्वमस्य वाक्यस्य ॥ तदुच्यते। अत एव ह्यत्र पुरुषप्रतिपादनम्। तन्त्रे ह्यचिद्धर्माध्यासवियुक्तपुरुषस्वरूपयाथात्म्यविज्ञानमेवामृतत्वहेतुत्वेनोच्यते। अतः जीवात्मनः प्रकृतिवियुक्तं स्वरूपमिहामृतत्वाय, "आत्मा वा अरे द्रष्टव्यः" इत्यादिनोपदिश्यते।

सर्वेषामात्मनां प्रकृतिवियुक्तं स्वरूपमेकरूपमिति प्रकृतिवियुक्तस्वात्मयाथात्म्यविज्ञानेन सर्व एवात्मानो विदिता भवन्तीति आत्मविज्ञानेन सर्वविज्ञानमुपपन्नम्। देवादिस्थावरान्तेषु सर्वेषु भूतेष्वात्मस्वरूपस्य ज्ञानैकप्रकारत्वात्, "इदं सर्वं यदयमात्मा" इत्यैकात्म्योपदेशः; देवाद्याकाराणामनात्माकारत्वात्, "सर्वं तं परादात्" इत्यादिनाऽन्यत्वनिषेधश्च। "यत्र हि द्वैतमिव भवति" इति च नानात्वनिषेधेन एकस्वरूपे ह्यात्मनि देवादिप्रकृतिपरिणामभेदेन नानात्वं मिथ्येत्युच्यते। "अस्य (तस्य ह वा एतस्य) महतो भूतस्य निश्श्वसितमेतत् यदृग्वेदः" इत्याद्यपि (६-५-११) प्रकृतेरधिष्ठातृत्वेन पुरुषनिमित्तत्वाज्जगदुत्पत्तेरुपपद्यते।

एवमस्मिन् वाक्ये पुरुषपरे निश्चिते सति, तदैकार्थ्यात् सर्वे वेदान्ताः तन्त्रसिद्धं पुरुषमेवाभिदधतीति तदधिष्ठिता प्रकृतिरेव जगदुपादानम्; नेश्वरः— इति—

एवं प्राप्ते प्रचक्ष्महे वाक्यान्वयात्—इति। सर्वेश्वर एवास्मिन् वाक्ये प्रतीयते; कुतः?

---

ज्ञानविषयत्वरूपं ज्ञेयत्वं न भवतीति सांख्यहृदयम्। **नाऽऽशाऽस्ति** आशा नास्ति। **उपपन्न**मिति। साम्यादिति भावः। **ज्ञानैकप्रकारत्वात्** शुद्धचैतन्यरूपत्वात्। तन्मते धर्मभूतज्ञानं नास्ति। **ऐकात्म्यम्** एकजातीयात्मकत्वम्। सर्वस्य ब्रह्मक्षत्रदेवादिदेहरूपस्य दृश्यमानार्थस्याऽऽत्मान्यत्वेन ज्ञानं तत्त्वज्ञानमेवेति स्थिते, कथं तद्वेदकस्य हिंस्यत्वम्, सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेदेति श्रुतमुपपद्यत इत्यत्र तदर्थमाह **देवादी**ति। देवादिदेहाकाराणामात्माकारत्वाभावात् आत्मा देवो मनुष्यो जात इत्यादिव्यवहारानुरोधेन देवादिशब्दानामात्मपर्यन्तत्वात् आत्मपर्यन्तस्यैव च वस्तुत्वात् तादृशं कृत्स्नं वस्तु देवादिशब्दव्यपदेश्यं य आत्मान्यत्वेन मन्यते, सः विपरीततया गृहीतेन वस्तुना हिंस्यते. तद् विपरीतज्ञानं त हिनस्तीत्यर्थ इत्युक्तं भवति। **यत्रही**त्यादि। देह एवात्मेति देहभेदेनात्मभेदं यो मन्यते, स ब्रूयात्, अहमनेनेन्द्रियेणेममात्मानमपश्यम्, अस्प्राक्षमित्यादि। सर्वमात्मपर्यन्तमेव वस्तु इति यो विविनक्ति, स कमात्मानं केनेन्द्रियेण द्रष्टुमर्हति, कस्मिन् देहे आत्मव्यवहारं कुर्यात् प्रकृतिपरिणामभेदस्यात्मनानात्वरूपत्वाभावादित्यर्थः। **प्रकृतेः**-प्रकृतिं प्रति। सतः पुरुषात् केशलोमादिकस्येव चेतनसांनिध्यात् प्रकृतेः शब्दतदर्थरूपसर्वप्रपञ्चस्योत्पत्तिः। अतः **सर्वस्यैतद्**बुद्धिपूर्वकत्वाभावादेव निःश्वसितमिति निर्देश इति।

सांख्यैरपि सर्ववाक्यान्वयस्य कथञ्चित क्रियमाणतया तद्व्यावर्तनायाह **समञ्जस** इति। स्वानुकूलानि

एवमेव हि वाक्यावयवानामन्योन्यान्वयः समञ्जसो भवति। "अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन" इति याज्ञवल्क्येनाभिहिते, "येनाहं नामृता स्याम्, किमहं तेन कुर्याम्। यदेव भगवान् वेद, तदेव मे ब्रूहि" इत्यमृतत्वानुपायतया वित्ताद्यनादरेण अमृतत्वप्राप्त्युपायमेव प्रार्थयमानायै मैत्रेय्यै तदुपायतया द्रष्टव्यतयोपदिष्टोऽयमात्मा परमात्मैव; (श्वे. ३-८) "तमेव विदित्वाऽति मृत्युमेति", (पु.सू.) "तमेवं विद्वानमृत इह भवति; नान्यः पन्थाः" इत्यादिभिरमृतत्वस्य परमपुरुषवेदनैकोपायतया प्रतिपादनात्। परमपुरुषविभूतिभूतस्य प्राप्तुरात्मनः स्वरूपयाथात्म्यम् अपवर्गसाधनपरमपुरुषवेदनोपयोगितयाऽवगन्तव्यम्; न स्वत एवोपायत्वेन। अतोऽत्र परमात्मैवामृतत्वोपायतया, "द्रष्टव्यः" इत्यादिनोपदिश्यते।

तथा. "अस्य (तस्य ह वा एतस्य) महतो भूतस्य निश्वसितमेतत् यदृग्वेदः" इत्यादिना कृत्स्नस्य जगतः कारणत्वमुच्यमानं परमपुरुषादन्यस्य कर्मपरवशस्य, मुक्तस्य निर्व्यापारस्य च पुरुषमात्रस्य न संभवति। तथा, (बृ. ४-४-५) "आत्मनो वा अरे दर्शनेन" इत्यादिना एकविज्ञानेन सर्वविज्ञानमभिधीयमानं सर्वात्मभूते परमात्मन्येवावकल्पते।

यत्त्वेतत्—एकरूपत्वादात्मनामेकात्मविज्ञानेन सर्व(वात्म)विज्ञानमुच्यत इति—तदयुक्तम्; अचेतनप्रपञ्चज्ञानाभावेन सर्वविज्ञानाभावात्। प्रतिज्ञोपपादनाय च, "इदं ब्रह्मेदं क्षत्रम्" इत्युपक्रम्य, "इदं सर्वं यदयमात्मा" इति प्रत्यक्षादिसिद्धं चिदचिन्मिश्रं प्रपञ्चम् 'इदम्' इति निर्दिश्य 'एतत् अयमात्मा' इत्यैकात्म्योपदेशश्च परमात्मन एवोपपद्यते। न हि इदंशब्दवाच्यं चिदचिन्मिश्रं जगत् पुरुषेणाचित्संसृष्टेन, तद्वियुक्तेन स्वरूपेण वाऽवस्थितेन चैक्यमुपगच्छति। अत एव "सर्वं तं परादात् योऽन्यत्राऽऽत्मनः सर्वं वेद" इति व्यतिरिक्तत्वेन सर्ववेदननिन्दा च। तथा प्रथमे च मैत्रेयीब्राह्मणे (बृ. ४-४-१२) "महद्भूतमनन्तमपारम्" इति श्रुताः महत्त्वादयो गुणाः परमात्मन एव संभवन्ति। अतः स एवात्र प्रतिपाद्यते।

यत्तूक्तम्—पतिजायापुत्रवित्तपश्वादिप्रियान्वयिनो जीवात्मनः उपक्रमे तदन्वेष्टव्यतया

---

वाक्यखण्डानि सर्वाणि दर्शयति **अमृतत्वस्येत्यादिना**। पतिजायाद्युपक्रमतोऽप्युपक्रमस्थमिदं वाक्यम्। प्रजापतिवाक्ये जीवात्मज्ञानस्यापि मोक्षहेतुत्वोक्तेः कथं तन्निरास इत्यत्राह **परमपुरुषेति**। **पुरुषमात्रस्य** सर्वस्य जीवस्य। **परमात्मन्येवेति** एकविज्ञानस्यैव हि सर्वविज्ञानरूपत्वं श्रुत्यभिमतम्। तच्च कार्यकारणभूतधर्म्यैक्यमादायोपपादनीयम्। न चैको जीवात्मा सर्वो भवतीति भावः। तदुक्तं निर्वाहमपि निरस्यति **यत्त्विति**। अस्तु सर्वमेवम्; पतिजायावाक्यकदम्बान्वयदौर्घट्यं भवत इत्यत्र तन्मत एव तद्दौर्घट्यमुपपादयितुमनुवदति **यत्तूक्तमिति**। सर्वं परित्यज्य आत्माऽन्वेष्टव्य इति प्रकृतवाक्यविवक्षितोऽर्थः। सर्वेषां स्वेष्टसिद्ध्यर्थत्वोपपादने, तदर्थं सर्वेषामुपादेयत्वमेव स्यात्, न हेयत्वम्। उपादातुः आत्मनो द्रष्टव्यता च नोपपादिता भवति। सर्वाधीनभोगानुभवं प्रति आत्मध्यानादेरनपेक्षितत्वादिति भावः। अत आत्मनःकामायेत्यात्म-

प्रतिपादनात् तद्विषयमेवेदं वाक्यमिति तदयुक्तम्; 'आत्मनस्तु कामाय" इत्यात्मशब्देन जीवात्मसंशब्दने तस्य, "आत्मा वा अरे द्रष्टव्यः" इत्यनेनानन्वयप्रसङ्गात्। "आत्मा वा अरे द्रष्टव्यः" इत्यात्मनो द्रष्टव्यत्वोपयोगितया, "आत्मनस्तु कामाय" इत्युपदिष्टमिति प्रतीयते। आत्मनस्तु कामाय—आत्मनः कामसंपत्तये। काम्यत इति कामः। आत्मन इष्टसंपत्तय इति यावत्। न च "जीवात्मन इष्टसंपत्तये पत्यादयः प्रिया भवन्ति" इत्युक्ते सति, तस्य जीवस्य स्वरूपमन्वेष्टव्यं भवति। प्रियमेव ह्यन्वेष्टव्यम्; न तु प्रियं प्रति शेषिणः प्रियवियुक्तं स्वरूपम्। यस्मादात्मन इष्टसंपत्तये पत्यादयः प्रिया भवन्ति, तस्मात् पत्यादि प्रियं परित्यज्य तद्वियुक्तमात्मस्वरूपमन्वेष्टव्यमित्यसंङ्गतं भवति। प्रत्युत, न पत्यादिशेषतया पत्यादीनां प्रियत्वम्; अपित्वात्मनः शेषतया पत्यादीनां प्रियत्वमित्युक्ते, स्वशेषतया त एवोपादेयास्स्युः। "आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यस्य परेणानन्वये, वाक्यभेदः प्रसज्यते। अभ्युपगम्यमानेऽपि वाक्यभेदे, पूर्ववाक्यस्य न किञ्चित् प्रयोजनं दृश्यते।

अतः पत्यादि सर्वं प्रियं परित्यज्यात्मन एवान्वेष्टव्यत्वं यथा प्रतीयते, तथा वाक्यार्थो वर्णनीयः। सोऽयमुच्यते—"अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन" इति वित्तादीनां नित्यनिर्दोषनिरतिशयानन्दरूपामृतत्वप्राप्त्यनुपायतामुक्त्वा, 'वित्तपुत्रपतिजायादीनां सातिशयदुःखमिश्रकादाचित्कप्रियत्वमनुभूयमानं न पत्यादिस्वरूपप्रयुक्तम्, अपितु निरतिशयानन्दस्वभावपरमात्मप्रयुक्तम्। अतो य एव स्वयं निरतिशयानन्दस्सन् अन्येषामपि

---

शब्दे परमात्मपरे वाक्यान्वय इत्याह सोऽयमिति। वित्तादीनां स्वतःप्रियत्वं वा फलान्तरार्थतया प्रियत्वं वा अमृतत्वहेतुतया प्रियत्वं वा। आद्यं तु न। अन्यदपि प्रियत्वं कादाचित्कमेव दुःखमिश्रञ्चापूर्णञ्चानुभूयते इति ततो विरक्तिसंपादनार्थमिदं वाक्यजातम्। पतिप्रतिसंबन्धिनः जायाप्रतिसंबन्धिनश्च जीवस्यैकत्वाभावात् आत्मपदेन विभिन्नजीवग्रहणं कार्यम्। परमात्मग्रहणे तु न स क्लेशः। पत्यादिप्रतिसंबन्धी जीवोऽर्थसिद्धः। तथा च जीवस्य तस्य तस्य स्वस्वपतिजायादिषु यत् प्रियत्वमनुभूयमानम्, तन्न पत्यादिगतफलार्थम्; तथासति सर्वदैव पत्यादिः प्रियो भवेत्। स्वगतफलार्थमिति तु युक्तम्; तथैवानुभवात्। तत्र स्वस्य पत्यादितः फललाभेच्छा कदाचिदेव भवति, कदाचिन्नेति कुतः?। कर्मानुसारादिति वक्तव्यम्। कर्म च परमात्मसंकल्प एव। एवञ्च परमात्मनः संकल्पवशात् सर्वं प्रियं भवतीति कर्मानुगुणाल्पास्थिरप्रियत्वार्हं सर्वं विहायानल्पस्थिरं प्रियमेवादर्तव्यम्। तच्च, 'तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽस्मात् सर्वस्मात्' इति श्रुतं ब्रह्मैकमेवेति प्रियतमस्य तस्य दर्शनमेव संपाद्यम्; अथ तत्रोपायचिन्तायाम्—पत्यादिप्रियत्वमपि हि तत्समाराधनफलमेव; केवलध्यानादितः फलान्तरं भवेदपि; दर्शनसमानाकारध्यानमेव तु तत्क्रतुन्यायेन तत्प्रापकं ग्राह्यमिति तस्य प्राप्यतमत्वज्ञापनाय द्रष्टव्य इति पूर्वमुच्यते। पत्यादिष्विव तस्मिन् प्रियत्वमौपाधिकं न भवति; तस्यात्मत्वात्—शेषित्वात्। शेष्यतिशयाधानार्थमेव हि शेषसद्भावः। शेषी च स्वार्थ एव शेषं योजयितुमिच्छति। तदर्थमेव परेष्वपि प्रियत्वापादकः स इति स्वस्मिन् निरुपाधिकप्रियत्व-

प्रियत्वलेशास्पदत्वमापादयति, स परमात्मैव द्रष्टव्य' इत्युपदिश्यते। तदयमर्थः—"न वा अरे पत्युः कामाय पतिः प्रियो भवति"—न हि पतिजायापुत्रवित्तादयो मत्प्रयोजनायाहमस्य प्रियः स्यामिति स्वसंकल्पात् प्रिया भवन्ति; अपित्वात्मनः कामाय। परमात्मनः स्वाराधक प्रियप्रतिलम्भनरूपेष्टनिर्वृत्तय इत्यर्थः (१)। परमात्मा हि कर्मभिराराधितः तत्तत्कर्मानुगुण प्रतिनियतदेशकालस्वरूपपरिमाणमाराधकानां तत्तद्वस्तुगतं प्रियत्वमापादयति। "एष ह्येवाऽऽनन्दयाति" इति श्रुतेः। न तु तत्तद्वस्तु स्वरूपेण प्रियमप्रियं वा। यथोक्तम् (वि. पु. २.६) "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते॥ तदेव कोपाय यतः प्रसादाय च जायते। तस्माद् दुःखात्मकं नास्ति न च किञ्चित् सुखात्मकम्" इति।

"आत्मनस्तु कामाय" इत्यस्य जीवात्मपरत्वेऽपि, "आत्मा वा अरे द्रष्टव्यः" इति तु परमात्मविषयमेव। तत्रायमर्थः—यस्मात् पत्यादीनामिष्टसंपत्तये तत्परवशेन पत्यादयः प्रियत्वेन नोपादीयन्ते, अपित्वात्मेष्टसंपत्तये स्वतन्त्रेण स्वप्रियत्वेनोपादीयन्ते—तस्मात् य एवाऽऽत्मनो निरुपाधिकनिर्दोषनिरवधिकप्रियः परमात्मा, स एव हि द्रष्टव्यः; न दुःखमिश्राल्पसुखदुःखोदर्काः परायत्ततत्तत्स्वभावाः पतिजायापुत्रवित्तादयो विषयाः—इति।

अस्मिंस्तु प्रकरणे जीवात्मवाचिशब्देनापि परमात्मन एवाभिधानात्, "आत्मनस्तु

---

मपि तदभिमतम्। तदभिलक्ष्य, अन्यदर्शनध्यानादि विसृज्य स एवात्मा द्रष्टव्यो ध्यातव्यो मन्तव्यः श्रोतव्य इति विवक्षितार्थः।

**इष्टनिर्वृत्तय** इति। अनेन पूर्वपक्ष इव सिद्धान्तेऽपि काम्यमानसंपत्तय इत्येवार्थः। परमात्मसंकल्पादित्यर्थस्यार्थत. सिद्धिमभिलक्ष्य **स्वसंकल्पा**दिति भाषितम्। कामशब्दस्य संकल्पार्थकत्वस्वीकारेण **कामाय** संकल्पं सफलीकर्तुमित्यर्थवर्णनमप्युपनिषद्भाष्यादौ द्रष्टव्यम्। ननु आत्मा वा अरे द्रष्टव्य इत्युपरितनवाक्यैककण्ठ्याय प्रथमप्रतीतार्थत्यागो न युक्तः; पत्यादिशब्दानां सप्रतिसंबन्धिकत्वात् तत्प्रतिसंबन्धिनः स्वस्यैवाऽऽत्मशब्दात् प्रथमं प्रतीतत्वादित्यत्राह **आत्मनस्तु कामायेत्यस्ये**ति। भिन्नविषयकत्वेऽन्वयः कथमित्यत्र तं दर्शयति **तत्रे**ति। न च पत्यादिबाह्यविषयापेक्षयाऽतिशयितत्वात् प्रत्यगात्मरूपपुरुषार्थ एव प्रेर्यताम्, आत्मशब्दार्थैक्यसंभवादिति वाच्यम्—निरतिशयपुरुषार्थलिप्सया पत्यादि त्यजतः स्वातिशयितपुरुषार्थे प्रामाणिकेऽवगम्यमाने सति स्वात्मकपुरुषार्थे प्रेरणायोगात्। **दुःखमिश्रे**ति। दुःखमिश्राल्पसुखाः दुःखोदर्काश्चेत्यर्थः। नन्वेवमसंजातविरोध्युपक्रमप्राबल्येन प्रथमस्यात्मपदस्य जीवात्मपरत्वे सत्येवार्थनिर्वाहे किमिति पूर्वं परमात्मपरतया व्याख्यानमादृतमित्यत्राह **अस्मिंस्तु प्रकरणे** इति। **जीवात्मे**ति। 'एवं वा अरेऽयमात्मा' इत्युक्तात्मशब्द-विज्ञानघनशब्द-प्रज्ञानघनशब्दा इमे इति उपरिवाक्यार्थनिरूपणभाष्यादवगम्यते। अतो बहुशब्दानुरोधेन आत्मनस्तुकामायेति आत्मशब्दोपि परमात्मविषय एव युक्तः। अर्थपौष्कल्यञ्च दर्शितम्। **एकविषयावि**ति। उपरितनात्मादिशब्दवत् अपर्यवसानवृत्त्या वा साक्षाद्वेत्यन्यदेतदिति भावः। शेषं **परिष्कारे**। आत्मशब्दस्य स्वविशिष्टपरमात्मार्थकत्वे प्रथमप्रतीतस्वकामरूपार्थ-

कामाय", "आत्मा वा अरे द्रष्टव्यः" इति पूर्वोक्तप्रक्रियया उभयत्राऽऽत्मशब्दौ एकविषयौ ॥

मतान्तरेणापि जीवशब्देन परमात्माभिधानोपपादनायाह—

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः । १ । ४ । २० ॥

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेरिदं लिङ्गम्, यत् जीवात्मवाचिशब्दैः परमात्मनोऽभिधानमित्याश्मरथ्य आचार्यो मन्यते स्म । यद्ययं जीवः परमात्मकार्यतया परमात्मैव न भवेत्, तदा तद्व्यतिरिक्ततया, परमात्मविज्ञानादेतद्विज्ञानं न सेत्स्यति । (ऐ. १-१) "आत्मा वा इदमेक एवाग्र आसीत्" इति प्राक् सृष्टेरेकत्वावधारणात्, (मु.२ -१) "यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद् विविधाः सोम्य! भावाः प्रजायन्ते तत्र चैवापियन्ति" इत्यादिभिर्ब्रह्मणो जीवानामुत्पत्तिश्रवणात् तस्मिन्नेव लयश्रवणाच्च जीवानां ब्रह्मकार्यत्वेन ब्रह्मणैक्यमवगम्यते । अतो जीवशब्देन परमात्माभिधानमिति ॥ २० ॥

उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः । १ । ४ । २१ ॥

यदुक्तम्—जीवस्य ब्रह्मकार्यतया ब्रह्मणैक्येनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनार्थं

---

स्यापरित्यागसंभवात् नोपक्रमभङ्गोऽपि ॥ १९ ॥

एवं तावत् जीवपरयोर्भेदस्वारस्येन जीवात्मलिङ्गानां परमात्मलिङ्गानाञ्च मध्ये जीवात्मलिङ्गान्यथाकरणमेव युक्तमित्युक्तम् । कथं तर्ह्युपरि, 'अनन्तमपारं विज्ञानघन एव' इति परमात्मजीवात्मनोरभेदनिर्देशः ; भूतैर्देहाकारपरिणतैः सहोत्पत्तिविनाशादिकथनेन विज्ञानघनशब्दस्य जीवपरत्वस्यावश्यकत्वादित्याशङ्कायाम्—तत्प्रयोगनिर्वाहे पक्षत्रयमृषिलयाभिमतं दर्शयति सूत्रकारः। तत्र द्वयमवतारयति मतेति । ननु प्रागेव शास्त्रदृष्टिर्दर्शितैव सूत्रकृता । सत्यम् । सैव कीदृशीति विचार्यत इह । अत्र तृतीयपक्षस्यैव बादरायणाभिमतत्वात् प्रथमं पक्षद्वयं मतान्तरमित्याशयेन **मतान्तरेणापी**त्युक्तम् । **प्रतिज्ञासिद्धे**रिति । **प्रतिज्ञा** एकविज्ञानेनसर्वविज्ञानविषयिका, 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' इति वाक्यरूपा । सा कार्यकारणभावमूलकैक्यास्वीकारे न सिध्यति । इयं प्रतिज्ञा न सिध्यति जीवपरयोर्भेदादिति शंकायाम्, इयं सिध्यति जीवपरयोः समानाधिकरणनिर्देशात् इत्यनुमानेन तत्परिहारात् निर्देशरूपमिदमभिधानं सिद्धिलिङ्गमित्यर्थः । प्रतिज्ञायाः सिद्धिर्निष्पत्तिः, प्रतिज्ञाविषयसर्वविज्ञानसिद्धिर्वा येन कार्यकारणभावमूलकैक्येन, प्रतिज्ञया वा सिद्धिःअवगमो यस्य तादृशैक्यस्य, तस्येदमभिधानं साधकमित्यर्थोऽपि भवितुमर्हति । अक्लिष्टयोजना प्रागुक्ता । आश्मरथ्यमतं परमात्मतो जीवोऽपि जायत इति ; यत् यादवप्रकाशोऽप्याह ॥ २० ॥

द्वितीयं मतान्तरमुच्यते **उत्क्रमिष्यत** इति । इदानीं संसरतः तत्त्वज्ञानानन्तरं देहादुत्क्रमिष्यतः उत्क्रमणानन्तरं भविष्यति य **एवम्भावः** परमात्मैक्यम्, तमादायाभेदनिर्देश इति औडुलोमिः । प्रथमपक्षानादरणे कारणं वक्तुमाह **यदुक्त**मिति । **कारणप्राप्तेः** कारणे परमात्मनि स्वलयस्य ॥ २१ ॥

ब्रह्मणो जीवशब्देन प्रतिपादनमिति—तदयुक्तम्—(कठ. २-२-१९) "न जायते म्रियते वा विपश्चित्" इत्यादिनाऽजत्वश्रुतेः; जीवात्मनां प्राचीनकर्मफलभोगाय जगत्सृष्ट्यभ्युपगमाच्च; अन्यथा विषमसृष्ट्यनुपपत्तेश्च; ब्रह्मकार्यस्य जीवस्य ब्रह्मतापत्तिलक्षणो मोक्षः आकाशादिवदवर्जनीय इति तदुपायविधान-अनुष्ठानानर्थक्याच्च; घटादिवत् कारणप्राप्तेर्विनाशरूपत्वेन मोक्षस्यापुरुषार्थत्वाच्च। जीवात्मन उत्पत्तिप्रलयवादोपपत्तिरुत्तरत्र प्रपञ्चयिष्यते। अतः, (छा. ८-३-४) "एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते", (मु. ३-२-८) "यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्" इत्युत्क्रमिष्यतः परमात्मभावात् जीवशब्देन परमात्मनोऽभिधानमित्यौडुलोमिराचार्यो मन्यते स्म॥

अवस्थितेरिति काशकृत्स्नः। १। ४। २२॥

यदुक्तम्—उत्क्रमिष्यतो जीवस्य ब्रह्मभावाद् ब्रह्मणस्तच्छब्देनाभिधानमिति—तदप्ययुक्तम्; विकल्पासहत्वात्—अस्य जीवात्मन उत्क्रान्तेःपूर्वमनेवम्भावः किं स्वाभाविकः, उतौपाधिकः; तत्रापि पारमार्थिकः, अपारमार्थिको वेति।

स्वाभाविकत्वे, ब्रह्मभावो नोपपद्यते; भेदस्य स्वरूपप्रयुक्तत्वेन स्वरूपे विद्यमाने तदनपायात्॥ अथ भेदेन सह स्वरूपमप्यपैतीति—तथा सति विनष्टत्वादेव तस्य न ब्रह्मभावः; अपुरुषार्थत्वादिदोषप्रसङ्गश्च।

पारमार्थिकौपाधिकत्वे, प्रागपि ब्रह्मैवेति, 'उत्क्रमिष्यत एवम्भावात्' इति विशेषो न युज्यते वक्तुम्। अस्मिन् पक्षे ह्युपाधिब्रह्मव्यतिरेकेण वस्त्वन्तराभावात् निरवयवस्य ब्रह्मण उपाधिना छेदाद्यसंभवाच्चोपाधिगत एव भेद इति उत्क्रान्तेः प्रागपि ब्रह्मैव।

औपाधिकस्य भेदस्यापारमार्थिकत्वे, 'कस्यायमुत्क्रान्तौ ब्रह्मभावः' इति वक्तव्यम्॥

---

स्वाभिमतं काशकृत्स्नमतमाह **अवस्थितेरिति**। 'अनवस्थितेरसंभवाच्च'इति सूत्र **इवावस्थितिः** वर्तमानता। जीवात्मनि परमात्मनः स्थितत्वात् जीवपरमात्मसमानाधिकरणनिर्देश इत्यर्थः। **विकल्पासहत्वात्** संभावितविविधकल्पान्तर्गतैककल्परूपत्वस्याप्यभावेन विकल्पसहनाननुगुणत्वात्। **तत्रापीति**। औपाधिकत्वपक्षेपि इत्यर्थः। **तदनपायादिति**। वर्णितमिदम् 'परमात्मात्मनोर्योगः परमार्थ इतीष्यते। मिथ्यैतत्' इति पराशरवाक्यव्याख्यानावसरे **जिज्ञासाधिकरणे। अपुरुषार्थत्वादीति**। मोक्षस्यापुरुषार्थत्वं स्यात् विनाशरूपत्वादित्यर्थः। **आदिना** अप्रवृत्ति-शास्त्रवैयर्थ्यादिपरिग्रहः। **पारमार्थिकौपाधिकत्वे**-घटाकाशस्येव परमार्थभूतोपाधिकल्पितत्वे। अस्मिन् पक्षेऽपि भेदोऽपारमार्थिक एव। परंतु अभेदज्ञाने सत्येवान्यगतोऽयं घटाकाश इवाऽऽरोपितोऽपि भवतीति विशेषः। **औपाधिकस्य भेदस्यापारमार्थिकत्वे** उपाधिना सह भेदस्यापरमार्थत्वे। **कस्येति**। कल्पितस्य जीवस्य वा, **ब्रह्मणो** वा। नाद्यः; कल्पितस्य तत्त्वज्ञाननिवर्त्यतया परमार्थैक्यायोगादिति भावः। द्वितीये आह **ब्रह्मण एवेति**।

ब्रह्मण एवाविद्योपाधितिरोहितस्वस्वरूपस्येति चेन्न; नित्यमुक्तस्वप्रकाशज्ञानस्वरूपस्याविद्योपाधितिरोधानासंभवात्। तिरोधानं नाम वस्तुस्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः। प्रकाश एव वस्तुस्वरूपमित्यङ्गीकारे तिरोधानाभावः, स्वरूपनाशो वा स्यात्। अतो नित्याविर्भूतस्वस्वरूपत्वात् तस्योत्क्रान्तौ ब्रह्मभावे न कश्चिद्विशेष इति 'उत्क्रमिष्यतः' इति विशेषणं व्यर्थमेव।

"अस्मात् शरीरात् समुत्थाय" इति पूर्वमनेवंरूपस्य न तदानीं ब्रह्मतापत्तिमाह; अपितु पूर्वसिद्धस्वरूपस्याविर्भावम्। तथा हि वक्ष्यते, (शारी- ४-४-१) "संपद्याविर्भावः स्वेनशब्दात्" इत्यादिभिः।

अतः, (छा. ३-६-२) "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य", (बृ. १-७-२२) "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्माऽऽत्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः", (सुबाल- ७) "योक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः", (तै. आ. १-३-२१) "अन्तः प्रविष्टःशास्ता जनानां सर्वात्मा" इति स्वशरीरभूते जीवात्मन्यात्मतयाऽवस्थितेर्जीवशब्देन ब्रह्मप्रतिपादनमिति काशकृत्स्न आचार्यो मन्यते स्म। जीवशब्दश्च जीवस्य परमात्मपर्यन्तस्यैव वाचकः, न जीवमात्रस्येति पूर्वमेवोक्तम्, (छा. ६-३-२) "नामरूपे व्याकरवाणि" इत्यत्र।

एवमात्मशरीरभावेन तादात्म्योपपादने परस्य ब्रह्मणोऽपहतपाप्मत्वसर्वज्ञत्वादिगोचराः, जीवस्याविदुषश्शोचतो ब्रह्मोपासनान्मोक्षवादिन्यः, जगत्सृष्टिप्रलयाभिधायिन्यः, जगतो ब्रह्मतादात्म्योपदेशपराश्च सर्वाः श्रुतयः सम्यगुपपादिता भवन्तीति काशकृत्स्नीयमेव मतं सूत्रकारः स्वीकृतवान्॥

---

ननु समुत्थायेति श्रुतिमनुसृत्यास्माभिरुक्तमित्यत्र, श्रुत्यर्थोऽन्य इत्याह अस्मादिति। ननु, 'उत्क्रमिष्यत एवम्भावात्' इत्युक्तिर्न घटत इत्येव काशकृत्स्नस्यारम्भः। तदभिमतञ्च, जीवस्य ब्रह्मभावेन सर्वदैवावस्थितेः उभयैक्यस्य सार्वकालिकत्वात् समानाधिकरणनिर्देशः समञ्जस इत्येव। अयमेव चैतत्सूत्रार्थ इति चेन्न-आत्मा वा अरे द्रष्टव्य इत्यत्र शुद्धजीवस्वरूपोपासनमुच्यते, उत परमात्मोपासनमिति विशये परमात्मोपासनमेवेति सिद्धान्ते च कृते, कथं जीवसमानाधिकरणनिर्देश इत्याशङ्कायां सार्वकालिकाभेदादिति कथं ब्रूयात्; असिद्धेः। अभेदे सति विशयस्य विचारस्य चानवकाशात्। भेदस्य दुरपह्नवत्वं निश्चित्याभेदस्यान्यानिर्वाहं किलात्र सूत्रकार आह। सार्वकालिकैक्यवादिभास्करशाङ्करादिपक्षाश्च पूर्वं निरस्ता एवेति नैव तेषामवकाश इति च ध्येयम्। महाभारते च बादरायणेन याज्ञवल्क्यमतमुपन्यस्तम्, 'तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः' इति। अतोऽत्र याज्ञवल्क्याभिप्रायोऽयमेवेति साधु काशकृत्स्नं निर्दिश्योपपादितवान् अन्तर्यामितादात्म्यमिति।

ननु सांख्यादिमतो जीवभेदः, अन्यमतो जीवेश्वरभेदश्च न मैत्रेयीविद्यार्थः। किंतु जीवब्रह्मैक्य-

अयमत्र वाक्यार्थः—अमृतत्वोपाये मैत्रेय्या पृष्टे याज्ञवल्क्यः—"आत्मा वा अरे द्रष्टव्यः" इत्यादिना परमात्मोपासनममृतत्वोपायमुक्त्वा, "आत्मनि खल्वरे दृष्टे" इत्यादिनोपास्यलक्षणम्, दुन्दुभ्यादिदृष्टान्तैश्चोपासनोपकरणभूतमनःप्रभृतिकरणनियमनं च सामान्येनाभिधाय, "स यथाऽऽर्द्रैधाग्नेः" इत्यादिना, "स यथा सर्वासामपां समुद्र एकायनम्" इत्यादिना चोपास्यभूतस्य परस्य ब्रह्मणो निखिलजगदेककारणत्वम्, सकलविषय[प्र]वृत्तिमूलकरणग्रामनियमनं च विस्तीर्णमुपदिश्य, "स यथा सैन्धवघनः" इत्यादिना अमृतत्वोपायप्रवृत्तिप्रोत्साहनाय जीवात्मस्वरूपेणावस्थितस्य परमात्मनोऽपरिच्छिन्नज्ञानैकाकारतामुपपाद्य, तस्यैवापरिच्छिन्नज्ञानैकाकारस्य संसारदशायां भूतपरिणामानुवृत्तिम्, 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इत्यभिधाय, "न प्रेत्य संज्ञाऽस्ति" इति मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचाभावेन भूतसङ्घातेनैकीकृत्याऽऽत्मनि देवादिरूपज्ञा-

---

रूपैकात्मवाद एव । 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनां स्वोपासन-जगत्कारणत्व-द्वैतनिषेधादिवाक्यानामाञ्जस्यमत्र पक्ष एवेति मतिमप्यपाचिकीर्षुः वाक्यान्वयादिति विवक्षितमन्वयं विशदयति—**अयमत्र वाक्यार्थ** इति । **उपास्यलक्षण**मिति । एकविज्ञानेन सर्वविज्ञानोक्त्या हि कार्यकारणभावोऽवगत इति जगत्कारणत्वरूपलक्षणं सूचितं भवति । एतद्विवरणं 'स यथाऽऽर्द्रैधाग्नेः' इति । करणनियमनविवरणं 'स यथा सर्वासाम्' इति । प्रथममैत्रेयीब्राह्मणापेक्षया वाक्याधिक्यमभिलक्ष्य द्वितीयब्राह्मणवाक्यानामेवात्र विवरणात् **सैन्धवघन** इत्युक्तम् । प्रथमे तु **सैन्धवखिल्य**पदम् । तत्र जगति परमात्मव्याप्तिदृष्टान्ततया सद्विद्योक्ता उदकेलवणव्याप्तिरुक्ता । इह तु लवणे रसव्याप्तिः ज्ञानगुणकत्वोपमानतार्हा । **आत्मस्वरूपेणावस्थितस्ये**त्यनेन, 'एवं वाऽरे अयमात्मा, इत्यत्रात्मशब्दोपि अपर्यवसानवृत्त्या जीवविशिष्टपर इति ज्ञापितम् । **अपरिच्छिन्ने**ति । आत्मस्वरूपेणावस्थिते अपरिच्छिन्नज्ञानत्वस्य लवणरसदृष्टान्तेनोपपादनं नाम जीवात्मस्वरूपे तदुपपादनमेव । अपरिच्छिन्नज्ञानेति **प्रज्ञानघन**शब्दार्थः । आत्मान्तर्यामी, प्रज्ञानघनान्तर्यामी इतीहार्थः । अयञ्चार्थः, 'महद् भूतमनन्तमपारं विज्ञानघन एव' इति अनन्तशब्दवाच्यपरमात्मैक्यस्य विज्ञानघने कथनात् तन्निर्वाहाय स्वीकार्यः । साक्षात्परमात्मैव प्राज्ञः प्रज्ञानघनः स्यादिति तु न; समुत्थायानुविनश्यतीति देहेन सहोत्पत्तिविनाशकर्तृतया निर्दिष्टत्वात् । **विज्ञानघन इति** पदं **प्रज्ञानघन** इत्येतत्स्थाने प्रथमब्राह्मणगतम् । तस्यात्रोपादानम्—द्वितीयब्राह्मणे **आत्मे**ति पदस्यानुविनश्यतीत्यत्र कर्तृपदत्वसंभवेपि प्रथमब्राह्मणे विज्ञानघनशब्दस्यैव जीवविशिष्टवाचितया कर्तृपदत्वमिति ज्ञापनाय । तेन प्रज्ञानघनशब्दस्यापि विशिष्टपरत्वं स्थिरीकृतं भवति । **मोक्षदशाया**मिति । **समुत्थाये**ति पौनःपुन्येन जननोक्त्या देहात्मभ्रमस्वतन्त्रात्मभ्रमरूपसंज्ञानुवृत्तिः सूचिता । तदुच्छेदः कदेत्यत्र, अमृतत्वरूपप्रकृतार्थकरप्रायणानन्तरं सा न भवतीति **नप्रेत्ये**त्यनेनोच्यते ; 'अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा' इति तस्याविनाशित्ववत् तद्धर्मभूतज्ञानस्याप्यनुच्छित्तेरुक्तत्वादिति भावः । 'पुंस्त्वादिवत्' इति सूत्रे आत्मनो जन्मविनाशवत्ताभ्रान्त्यभावोऽप्येतदर्थं उक्तः । स्वतन्त्रात्मभ्रमादिव्युदासायोपर्युच्यते—**यत्र-**

नाभावमुक्त्वा, पुनरपि, "यत्र हि द्वैतमिव भवति" इत्यादिना अब्रह्मात्मकत्वेन नानाभूतवस्तुदर्शनमज्ञानकृतमिति, निरस्तनिखिलाज्ञानस्य ब्रह्मात्मकं कृत्स्नं जगदनुभवतो ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेन भेददर्शनं निरस्य, "येनेदं सर्वं विजानाति, तं केन विजानीयात्" इति च, 'जीवात्मा स्वात्मतयाऽवस्थितेन येन परमात्मना आहितज्ञानस्सन् इदं सर्वं विजानाति, अयं तं केन विजानीयात्, न केनापि' इति परमात्मनो दुरवगमत्वमुपपाद्य, "स एष नेति नेति" इत्यादिना अयं सर्वेश्वरः स्वेतरसमस्तचिदचिद्वस्तुविलक्षणस्वरूप एव सर्वशरीरः सर्वस्यात्मतयाऽवस्थित इति स्वशरीरभूतचिदचिद्वस्तुगतैर्दोषैर्न संस्पृश्यत इत्यभिधाय, "विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेयि! एतावदरे खल्वमृतत्वम्" इति 'समस्तवस्तुविसजातीयं निखिलजगदेककारणभूतं सर्वस्य विज्ञातारं पुरुषोत्तममुक्तप्रकारादुपासनात् ऋते केन विजानीयादिति, इदमेवोपासनममृतत्वोपायः; ब्रह्मप्राप्तिरेव चामृतत्वमभिधीयते' इत्युक्तवान्। अतः, परं ब्रह्मैवास्मिन् वाक्ये प्रतिपाद्यत इति परमेव ब्रह्म जगत्कारणम्, न पुरुषस्तदधिष्ठिता च प्रकृतिरिति स्थितम्॥ इति वाक्यान्वयाधिकरणम्॥ ६॥

३४. प्रकृत्यधिकरणम् १-४-७ (छा. ६-१)

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्। १। ४। २३॥

---

**हि द्वैत**मिति। उपक्रमे एकविज्ञानेन सर्वविज्ञानमुक्त्वा, 'जगतो नानाभूतस्य ब्रह्मतोऽन्यत्वात् कथमिदम्' इत्याशंकायाम्, 'सर्वं तं' इत्यादिना सर्वत्र ब्रह्मण आत्मतयाऽवस्थानात् सर्वस्यात्मान्तर्भावेणैव वस्तुत्वात् आत्मैवेदं सर्वमिति जगद्ब्रह्मणोरैक्यमेकमुपपादितम्। तत्रोपपादितस्यैक्यस्य दृढीकरणाय तादृशैक्यप्रत्यनीकं द्वैतमत्र निषिध्यते। अन्यथा स्वोक्तसर्वनिषेधे उन्मत्तवाक्यत्वापत्तेः। अतः तदेककण्ठ्याय तत् द्वैतमब्रह्मात्मकत्वरूपं सिध्यति। अब्रह्मात्मकत्वज्ञाने सति द्रष्टृदृश्यदर्शनसाधनादीनां भिन्नभिन्नत्वं स्यात्। तत्त्वज्ञाने सति तु ब्रह्मार्पणमिति न्यायेन सर्वमपि ब्रह्मैवेत्यवगम्यत इति भाव.। **येनेद**मित्यादेः— येन ज्ञानेन सर्वं गृह्णाति, तत् अन्येन न गृह्यते, किंतु स्वयम्प्रकाशमात्रमिति नार्थः; 'यदेव भगवान् वेद' 'आत्मा वा अरे द्रष्टव्यः' इत्युपक्रमादिविरोधादिति भावेनाह **येने**ति। **नेतिनेती**ति न सर्वनिषेधः; किंतु **नेति**-अचेतनसलक्षणं न भवति, **नेति**-चेतनसलक्षणमपि न भवतीत्यर्थः। तेन विकारापुरुषार्थोभयविधहेयराहित्यमुक्तम्। **विज्ञातार**मिति व्युपसृष्टज्ञातृपदेन चेतनाचेतनसर्वविषययथार्थज्ञानवत्त्वस्य ज्ञानमात्रत्वाभावस्य च स्पष्टत्वादपि परमतप्रतिषेधसिद्धिरित्युपपादयति **विज्ञातार**मित्यादिना॥ **सर्वस्यविज्ञातार**मित्यनेन परमात्मसार्वज्ञ्यं विवक्षितमिति स्पष्टम्। ज्ञाधिकरणे जीवज्ञातृत्वप्रस्तावे एतद्वाक्योदाहरणात् इदमपि विज्ञानघनादिपदवत् ज्ञातृजीवविशिष्टपरमित्यभिमन्येत; मा वा॥ २२॥

अयोगस्यान्ययोगस्य च व्यवच्छेदेन श्रुतिवाक्यानां ब्रह्मैककारणत्वे तत्तद्विषयवाक्यार्थवर्णनेन निरूप्यमाणे पुनः सर्वमेव कारणवाक्यं गृहीत्वा, ब्रह्मकारणत्वमपि निमित्तत्वरूपमभ्युपगम्य, सांख्याभिमतप्रकृतेर्वेदान्तिनाऽभ्युपेतत्वमुपादानत्वं तस्या एव सत्तर्कोपबृंहितश्रुतिभिरितरश्रुत्यन्यथाकरणेनाऽऽशं-

एवं निरीश्वरसाङ्ख्ये निरस्ते सति सेश्वरसाङ्ख्यः प्रत्यवतिष्ठते—यद्यपीक्षणादिगुणयोगात् सर्वज्ञमीश्वरं जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति, तथापि वेदान्तैरेव जगदुपादानतया प्रधानमेव प्रतिपाद्यत इति प्रतीयते। न हि वेदान्ताः सर्वज्ञस्यापरिणामिनोऽधिष्ठातुरीश्वरस्य अधिष्ठेयेनाचेतनेन परिणामिना प्रधानेन विना जगतः कारणत्वमवगमयन्ति।

तथा ह्यपरिणामिनमेनं प्रकृतिं चैतदधिष्ठितां परिणामिनीमधीयते—(श्वे.६-१९) "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" (बृ. ६-४-२५) "स वा एष महानज आत्माऽजरोऽमरः", (मन्त्रि) "विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्"॥ ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः। सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्॥ गौरनाद्यन्तवती सा जनित्री भूतभाविनी" इति। तथा प्रकृतिमुपादानभूतामधिष्ठायैवेश्वरो विश्वं जगत् सृजतीति श्रूयते, (श्वे. ४ ६-९) अस्मान्मायी सृजते विश्वमेतत् ... मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति। स्मृतिरपि. (गी. ९-१०) "मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम्" इति।

एवमश्रुतेऽपि प्रधानोपादानत्वे ब्रह्मणो जगत्कारणत्वश्रुत्यन्यथानुपपत्त्यैव प्रधानस्वरूपं तस्येश्वराधिष्ठितस्य जगदुपादान[कारण]त्वं च सिद्ध्यति। एवमेव हि लोके निमित्तोपादानयोरत्यन्तभेदो दृश्यते। मृत्सुवर्णादेरचेतनस्य घटकटकाद्युपादानत्वम्, चेतनस्य कुलालसुवर्णकारादेर्निमित्तत्वं च नियतमुपलभ्यते। कार्यनिष्पत्तिश्च नियमेनानेककारकसव्यपेक्षा दृष्टा। एवं निमित्तोपादानयोर्भेदनियमं कार्यनिष्पत्तेरनेककारकसव्यपेक्षत्वनियमं चातिक्रम्य, एकमेव ब्रह्म उपादानं निमित्तं च प्रतिपादयितुं न प्रभवन्ति वेदान्तवाक्यानि।

अतो ब्रह्म निमित्तकारणमेव, नोपादानम्। उपादानं तु तदधिष्ठितं प्रधानमेव—इति-

---

पद्यते। सांख्यशास्त्रानुयायिभिर्निरीश्वरवादे क्रियमाणेऽपि पुराणेषु कपिलादिभिरीश्वरोपदेशात् सेश्वरसांख्यस्यापि सत्त्वात् तदनुरोधेन पूर्वपक्षः। चमसाधिकरणकारणत्वाधिकरणादिसिद्धार्थं स्वानुकूल्याय दर्शयति न हीति। ध्यायतेऽध्यासिता तेन-पुरुषेणाधिष्ठिता कार्यहेतुतया चिन्त्यते। अत्र वाक्ये उपादानं प्रकृतिरिति, निमित्तमीश्वर इति च व्यक्तिनिर्धारणाभावात् तदनुरूपं वाक्यमाह तथेति। सृजत इति निमित्तत्वेनोक्तस्य सांख्यपुरुषविलक्षणमहेश्वरत्वे तदधिष्ठितमायायाः प्रकृतित्वं चेह स्पष्टम्। श्रुतिप्रमाणमुपन्यस्तम्; श्रुत्यन्यथानुपपत्तिमपि दर्शयति एवमिति। अन्यथानुपपत्त्येति। कार्यस्योपादानमन्तरा निष्पत्त्यभावात् ब्रह्मणो निर्विकारस्य निमित्तमात्रत्वादिति भावः। एवं ब्रह्म नोपादानम् निर्विकारत्वादित्युक्तम्। अथ तत् नोपादानम्, निमित्तत्वादित्यनुमानमभिप्रयन् व्याप्तिं दर्शयति एवमेव हीति। यदि ब्रह्म निमित्तं सदेवोपादानमपि स्यात्, अविशेषात् सहकारिरूपान्यविधकारणमपि भवेत्। न चेष्टापत्तिः; कार्योत्पत्त्ययोगात्। यत् कार्यं तत् कारणकलापरूपसामग्रीजन्यमिति नियमात्। अन्यथा ब्रह्मण एकस्य नित्यस्य सर्वविधकारणत्वे सर्वं सर्वदा स्यादिति विवक्षन् आह कार्येति।

एवं प्राप्तेऽभिधीयते-प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्-इति। प्रकृतिश्च— उपादानं च। न निमित्तकारणमात्रं ब्रह्म, उपादानकारणं च ब्रह्मैवेत्यर्थः। कुतः? प्रतिज्ञादृष्टान्तानुपरोधात्। एवमेव हि प्रतिज्ञादृष्टान्तौ नोपरुध्येते। प्रतिज्ञा तावत्, "स्तब्धोऽस्युत तमादेशमप्राक्ष्यः, येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इति एकविज्ञानेन सर्वविज्ञानविषया। दृष्टान्तश्च, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्...यथा सोम्यैकेन लोहमणिना... यथा सोम्यैकेन नखनिकृन्तनेन" इति कारणविज्ञानात्कार्यविज्ञानविषयः। यदि निमित्तकारणमेव जगतो ब्रह्म, तदा तद्विज्ञानात् न समस्तं जगत् विज्ञातं स्यात्। न हि कुलालादिविज्ञानेन घटादिर्विज्ञायते। अतः प्रतिज्ञादृष्टान्तयोर्बाध एव। ब्रह्मण एवोपादानत्वे उपादानभूतमृत्पिण्ड-लोहमणि-नखनिकृन्तनविज्ञानेन घटमणिक कटकमुकुट-वासीपरश्वथादितत्कार्यविज्ञानवत् निखिलजगदुपादानभूते ब्रह्मणि विज्ञाते तत्कार्यं निखिलं जगत् विज्ञातं (तमेव स्यात्। कारणमेवावस्थान्तरापन्नं कार्यम्, न द्रव्यान्तरमिति कार्यकारणरूपेणावस्थितमृतद्विकारादिनिदर्शनेन प्रतिज्ञासमर्थनाद् ब्रह्म जगदुपादानं चेति निश्चीयते।

यत्तु निमित्तोपादानयोर्भेदः श्रुत्यैव प्रतीयत इति—तदसत, निमित्तोपादानयोरैक्यप्रतीतेः, "उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति" इति; आदिश्यते प्रशिष्यतेऽनेनेत्यादेशः; (बृ. ५-८) "एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिश्रुतेः। साधकतमत्वेन कर्ता विवक्षितः। तमादेष्टारमप्राक्ष्यः, येनाश्रुतं श्रुतं भवति=येनाऽऽदेष्ट्राऽधिष्ठात्रा श्रुतेनाश्रुतमपि श्रुतं भवतीति निमित्तोपादनयोरैक्यं प्रतीयते; "सदेव सोम्येदमग्र आसीदेकमेव" इति प्राक्सृष्टेरेकत्वावधारणात्, अद्वितीयपदेनाधिष्ठात्रन्तरनिवारणाच्च।

नन्वेवं सति (मन्त्रि) "विकारजननीम्", "गौरनाद्यन्तवती" इत्यादिभिः

---

**प्रकृतिश्चेति**। ननु आनन्दमयः परमात्मेत्येवं पूर्वसर्वाधिकरणरीतिदर्शने प्रकृतिः परमात्मेत्यर्थः स्यात्। प्रकृतिशब्दघटितश्रुतिश्चान्वेषणीया॥ नैवम्। तस्याः रीतेरेतत्पादारम्भ एव त्यक्तत्वात्। चकारेण निमित्तत्वसमुच्चयादपि सौत्रं प्रकृतिपदमुपादानपरम्। अतो न मूलप्रकृत्युपादानत्वादिकमप्येतत्सूत्रार्थः। तथास्त्वेवेति हेतौ पूरणीयम्। **लोहमणिः** सुवर्णम्। **नखनिकृन्तन**पदेनायस्सामान्यं लक्ष्यते। **साधकतमत्वेनेति**। ननु कर्तुः करणत्वविवक्षा निकर्षाय; करणस्य कर्तृपरतन्त्रत्वात्॥ नैवम्। चक्राद्यायुधेषु सत्स्वपि नृसिंहो हिरण्यं स्वेनैव जघानेति करणत्वविवक्षायाः उत्कर्षवहत्वदर्शनात्। प्रमातरि आप्ते आप्तप्रामाण्यादिति प्रमाकरणत्वं न्यायमूलोक्तम्। 'तदयोगव्यवच्छेदः प्रामाण्यम्' इति चोदयनाचार्यः। साधकतमस्य फलायोगव्यवच्छेदात्। तेन प्रशासनस्य सार्वकालिकत्वसिद्धिः। एवं कर्ताऽप्ययं जीवकर्मानुगुणादेशकरत्वादकर्ता भवति परतन्त्र इवेति ज्ञापनमपि कर्तृत्वत्यागफलम्। आदेशशब्दस्य उपदेश्यमित्यर्थस्तु न। उपक्रमस्थप्रातिपदिकवाच्यार्थभङ्गेन प्रत्ययार्थान्यथाकरणस्यैव युक्तत्वादित्यन्यत्र विस्तरः। पराक्रान्तमिह प्राच्यैः।

प्रकृतेराद्यन्तविरहेण नित्यत्वं जगदुपादानत्वं च श्रूयमाणं कथमुपपद्यते ॥ तदुच्यते-तत्राप्यविभक्तनामरूपं कारणावस्थं ब्रह्मैव प्रकृतिशब्देनाभिधीयते ; ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात् । तथा हि श्रुतयः, (बृ. ६-५ ७) "सर्वं तं परादात्, योऽन्यत्राऽऽत्मनः सर्वं वेद", (बृ.६-५-१५) "यत्र त्वस्य सर्वमात्मैवाभूत्, तत्केन कं पश्येत्" इत्याद्याः ; (छा. ३-१४-१) "सर्वं खल्विदं ब्रह्म", (छा. ६-९-७) "ऐतदात्म्यमिदं सर्वम्" इति कार्यावस्थं कारणावस्थं च सर्वं जगद् ब्रह्मात्मकमिति श्रवणाच्च ।

एतदुक्तं भवति—(सुबा. ७) "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेद" इत्यारभ्य, "योऽव्यक्तमन्तरे सञ्चरन् यस्याव्यक्तं शरीरं यमव्यक्तं न वेद, योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद", "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति" इत्यारभ्य, "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः" इति च सर्वचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतं परं ब्रह्म कदाचिद्विभक्तनामरूपम्, कदाचिच्चाविभक्तनामरूपम् ; यदा विभक्तनामरूपं तदा तदेव बहुत्वेन कार्यत्वेन चोच्यते ; यदा चाविभक्तनामरूपं तदेकमद्वितीयं कारणमिति च । एवं सर्वदा चिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणोऽविभक्तनामरूपा या कारणावस्था, सा, "गौरनाद्यन्तवती", "विकारजननीमज्ञाम्" 'अजामेकाम्" इत्यादिभिरभिधीयते—इति ।

ननु च, (सुबा. २) "महानव्यक्ते लीयते ; अव्यक्तमक्षरे लीयते" इति प्रलयश्रुतेरव्यक्तस्योत्पत्तिप्रलयौ प्रतीयेते ; तथा च महाभारते, (शान्ति. ३४७-३१) "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम...अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये संप्रलीयते" इति ॥ नैष दोषः, अचिद्वस्तुशरीरस्य ब्रह्मणोऽव्यक्तशब्दवाच्यायाः त्रिगुणावस्थायाः कार्यत्वात् । (—)"यदा तमस्तन्न दिवा

---

**आद्यन्तविरहेण नित्यत्वमिति** । परमात्मनः प्रकृतेश्च जगदुपादानत्वं श्रूयमाणं जगदुपादानप्रकृत्युपादानत्वस्य परमात्मनि स्वीकारेणोपपादनीयम्, तथाच प्रकृतिनित्यत्वश्रवणमनुपपन्नमिति भावः । प्रकृत्युपादानत्वश्रुतेः प्रकृतिविशिष्टब्रह्मोपादानत्वार्थकत्वात् न विरोध इत्याह **तत्रापीति** । **व्यतिरिक्तेति** ; पृथग्भूतेत्यर्थः । शरीरात्मभावस्पष्टीकरणार्थमेकत्वश्रुतिनिर्वाहार्थञ्चाह **एतदुक्तमिति** । **इति चेत्यस्य शरीरतयेत्यत्रान्वयः** । नन्वनुपपन्नमेवाजात्वम्, लयश्रवणादिति कश्चित् पृच्छति **ननुचेति** । अजां गौरित्यादिपदं नाव्यक्तपरम्, किंतु तमःपरम् । तदेव मूलप्रकृतिरित्याह **अचिदिति** । **त्रिगुणावस्थायाः** गुणवैषम्यरूपव्यक्तत्वप्रत्यनीकगुणत्रयसाम्यावस्थायाः । अव्यक्तमुत्पन्नं त्रिगुणमित्युक्तत्वादेवम् । अक्षरादौ गुणत्रयविवेको दुर्ग्रह इत्याशयः । एतदव्यक्तावस्थापूर्वावस्था अक्षराख्या, यत्राक्षरशब्दवाच्यजीवसंसर्गोऽपि सुग्रहो भवति । तत्पूर्वावस्था तम इत्युच्यते । तदपि द्विविधं विभक्तमविभक्तञ्चेति । यदा परमात्मन्येकीभावः, तदा अरणावग्निरिव तदविभक्तं अत्यन्तसूक्ष्मावस्थं भवति ; तदूनसूक्ष्मावस्था विभाग इत्यु-

न रात्रिः" इति कृत्स्नप्रलयदशायामपि ब्रह्मात्मकस्यातिसूक्ष्मस्याचिद्वस्तुनः स्थित्यभिधानात् जगत्कारणस्य परस्य ब्रह्मणः प्रकारभूतमतिसूक्ष्मं चाचिद्वस्तु नित्यमेवेति तत्प्रकारं ब्रह्मैव, "गौरनाद्यन्तवती" इत्यादिष्वभिधीयते। अत एव च, (सुबा. २) "अक्षरं तमसि लीयते तमः परे देव एकीभवति" इति तमस एकीभावमात्रमेव श्रूयते; न तु लयः। एकीभाव इति तमोभिधानातिसूक्ष्माचित्प्रकारस्य ब्रह्मणोऽविभक्तनामरूपतयाऽवस्थानमभिधीयते। (य. ब्रा. २-८-९) "तम आसीत् तमसा गूढमग्रे प्रकेतम्... तमसस्तन्महिनाऽजायतैकम्" इत्याद्यप्येतदेव वदति। तथा च मानवं वचः, (मनु. १-५) "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" इति। "अस्मान्मायी सृजते विश्वमेतत्" इत्यादि अनन्तरमेवोपपादयिष्यते; ब्रह्मणोऽपरिणामित्वश्रुतयश्च।

यत्तु—एकस्य निमित्तत्वमुपादानत्वं च न संभवति, एककारकनिष्पाद्यत्वं च कार्यस्य; लोके तथा नियमदर्शनात्। अतोऽग्निना सिञ्चेदितिवत् वेदान्तवाक्यानि एकस्मादेवोत्पत्तिं प्रतिपादयितुं न प्रभवन्तीति—अत्रोच्यते—सकलेतरविलक्षणस्य परस्य ब्रह्मणः सर्वशक्तेः सर्वज्ञस्यैकस्यैव सर्वमुपपद्यते। मृदादेरचेतनस्य ज्ञानाभावेनाधिष्ठातृत्वायोगात्, अधिष्ठातुः

---

च्यते। तमसस्तन्महिनाजायतैकमिति—तमसस्तत्राविभागेन व्याप्तत्वात् तदेकमेवाभूदित्यर्थः। अप्रज्ञातम् प्रपञ्चवत् प्रत्यक्षागोचरः। कुतः अलक्षणम्, रूपादिप्रपञ्चलक्षणरहितम्। अप्रतर्क्यम् आरणेयाग्नेरिव परमात्मन्येकीभावात्। प्रसुप्तमिव जीवव्यापारलेशस्याप्यभावात् प्रस्वापतुल्यम्। पूर्वपक्षिदर्शितश्रुतिनिर्वाहमधिकृत्याह अस्मादिति। श्रुतयश्चेति। उपपादयिष्यन्त इति विपरिणम्यानुषङ्गः। अत्युपष्टम्भकतया दर्शितं तर्कं निरसितुमाह यत्त्विति। निष्पाद्यत्वञ्चेत्यत्रापि न संभवतीत्यस्य संबन्धः। अतः प्रत्यक्षविरोधादनन्वयात्। अत्रोच्यत इति। द्रवद्रव्यकार्ये सेकः अद्रवद्रव्येणाग्निना न साध्यत इति तत्रानन्वयो विदितः; तद्वत् निमित्तत्वोपादानत्वयोर्न विरोधः; भावाभावरूपत्वाभावात्। लोके तयोरेकत्वादर्शनेऽपि विलक्षणशक्तिके वस्तुन्युभयसमाहारसंभवात् हेतुरप्रयोजक इति।

यदि ब्रह्म उपादानं सदेव निमित्तं स्यात्, मृदपि तथा स्यादिति नापादनीयम्। निमित्तत्वविशेषव्यापकज्ञातृत्वाभावे तदयोगात्। न चोपादानकारणभिन्नत्वमिति निमित्तलक्षणम्; घटादिनिमित्तकारणस्य हस्तकुलालादेः देहसुखाद्युपादानकारणत्वात्। अत उपादानकारणताभिन्नकारणतावत्त्वं निमित्तत्वम्। तदेकस्मिन् कारणताद्वयसमावेशसंभवादसाधकम्! लोके च पुरुषः स्वप्रयत्नेन स्वस्मिन् ज्ञानपुण्यसुखादिसंपादको दृष्टः। तत्र तस्य तत्समवेतज्ञानादिकं प्रति निमित्तत्वमुपादानत्वञ्च दृश्यत इति हेतुरनैकान्तिकश्च। नोपादानं निमित्तत्वादित्यत्रोपादानताशक्तिराहित्यमुपाधिः। तच्छक्तिमत्त्वादेव हि सुखाद्युपादानता चेतने लक्ष्यते। ब्रह्म न निरपेक्षकारणं कारणत्वादित्यनुमाने सत्यसंकल्पत्वाभाव उपाधिः। किञ्च ब्रह्मणोऽपि प्रकृति-जीव-पुण्यपापादिसापेक्षकारणतया बाध एव। स्वतन्त्रकारणनिरपेक्षकारणं न भवतीति साध्यत इति चेत्-किमिदं स्वातन्त्र्यम्? कुलालस्यापि स्वपरतन्त्रमृदादित एव कार्यकारित्वात्

कुलालादेर्विचित्रपरिणामशक्तिविरहादसत्यसङ्कल्पतया च तथा दर्शननियमः। अतो ब्रह्मैव जगतो निमित्तमुपादानं च ॥ २३ ॥

अभिध्योपदेशाच्च । १ । ४ । २४ ॥

इतश्चोभयं ब्रह्मैव; (तै. आनं. ६-२) "सोऽकामयत, बहु स्यां प्रजायेयेति" (छा. ६-२-३) "तदैक्षत बहु स्यां प्रजायेय" इति स्रष्टुर्ब्रह्मणः स्वस्यैव बहुभवनसङ्कल्पोपदेशात्। विचित्रचिदचिद्रूपेणाहमेव बहु स्याम्, तथा प्रजायेयेति सङ्कल्पपूर्विका हि सृष्टिरुपदिश्यते ॥ २४ ॥

साक्षाच्चोभयाम्नानात् । १ । ४ । २५ ॥

न केवलं प्रतिज्ञादृष्टान्ताभिध्योपदेशादिभिरयमर्थो निश्चीयते, ब्रह्मण एव निमित्तत्वमुपादानत्वं च साक्षादाम्नायते, (अष्ट. २-८-७) "किं स्विद्वनं क उ स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छत इदु तत् यदध्य-

व्याप्त्यभावात् ॥ स्वानात्मकत्वं स्वातन्त्र्यमिति चेत्-स्वात्मकतायाः कारणताभञ्जकत्वस्य, स्वानात्मकतायाः कारणताव्यापकत्वस्य वा जगत्यदर्शनात् तद्विशेषणस्यापयोजकत्वात्। अत एव ब्रह्म न कारणं कारणान्तरासहकृतत्वादित्यनुमानमपि पराहतम्; प्रकृत्यादिकारणसत्त्वात्। स्वानात्मकत्वदलस्य च कारणान्तरे निवेशस्य व्यभिचारावारकतया निवेशासंभवाच्च। अत उपादानत्वाभावानुग्राहकतर्काभावात् तदुपादानत्वश्रुतयो न बाध्याः ॥ **अचेतनस्येत्यनेन** चेतने जीवेऽपि क्वचिदुभयसमावेशः प्रत्यक्ष इति ज्ञाप्यते ॥२३॥

**अभिध्येति**। ब्रह्म प्रकृतिश्चेत्यनुषङ्गः। अभितो ध्यानम् **अभिध्या**। परमिव स्वमपि विषयीकुर्वत् ध्यानम्। तथा च स्वकर्तृकभवनविषयकसंकल्पवत्त्वादिति हेतुलाभः। स्वकर्तृकत्वानिवेशे प्रकृतित्वसाधनायोगात् **अभीत्युक्तम्** ॥ **तथाशब्दः** व्यष्ट्या सह समष्टिसमुच्चयार्थः। सूत्रे **चकारः** पूर्वसूत्रोक्तसमुच्चायकः। इदं सदिति कार्यकारणैक्य-अद्वितीयत्वोपदेशाद्यनुक्तसमुच्चायको वा; अत एवोत्तरसूत्रे **उपदेशादिभिरिति** आदिशब्दप्रयोगः ॥ २४ ॥

**साक्षादिति**। श्रुत्यर्थापत्तिमात्रं न; श्रुतिरपीत्याशयः। **आम्नानादित्यस्य** पर्याप्तत्वेऽपि नेदं रामकृष्णादिभवनोपादानत्वम्; किंतु सर्वप्रपञ्चनिरूपितम्; तथा नेदममुख्यमिति व्यक्तये **साक्षात्पदम्**। **उभयेति**—अधिष्ठातृत्वरूपनिमित्तत्वस्याधिष्ठेयाभेदस्य चेत्यर्थः। अधिष्ठेये उपादानमुपकरणादि चान्तर्भवति। किं स्विदिति मन्त्रे कार्योत्पत्तिदेशः कार्योपादानं कार्योपकरणञ्चेति त्रयमधिष्ठेयं पृष्टम्। निमित्तत्वं **धारयन्निति** अनूदितम्; तद्विषये निश्चयात्। यद्वा उभयस्यैव प्रकृतत्वात् **उभयेत्युक्तमिति** निमित्तत्वोपादानत्वोभयेत्येवार्थः। **पृच्छतेदु। इत् उ** इति चावधारणे। वनं वृक्षश्च किमिति पृच्छतैव। अवश्यं मनसा विचारयतैव, भुवनधारक ईश्वरः यत्कर्मकाधिष्ठानमकरोत्, तत् उपकरणजातमपि मनसा पृच्छतैवेत्यर्थः। **मनीषिण** इति संबोधनं यथायथमुत्तरवक्तृप्रष्टृविषयकम्। **निष्टतक्षुरिति** बहुत्वमविवक्षितम्। अनिरुद्धान्तव्यूहाभिप्रायं वा। **धारयन्** इति दिव्यमङ्गलविग्रहविशिष्टमहापुरुषनिर्देशः। **ब्रह्मेति**

तिष्ठद्भुवनानि धारयन् । ब्रह्म वनं ब्रह्म स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इति । अत्र हि स्रष्टुर्ब्रह्मणः किमुपादानं कानि चोपकरणानीति लोकदृष्ट्या पृष्टे, सकलेतरविलक्षणस्य ब्रह्मणः सर्वशक्तियोगो न विरुद्ध इति ब्रह्मैवोपादानमुपकरणानि चेति परिहृतम्। अतश्चोभयं ब्रह्म ॥ २१ ॥

आत्मकृतेः । १ । ४ । २६ ॥

(तै. आनं. ६-२) "सोऽकामयत बहु स्यां प्रजायेय" इति सिसृक्षुत्वेन प्रकृतस्य ब्रह्मणः, "तदात्मानं स्वयमकुरुत" इति सृष्टेः कर्मत्वं कर्तृत्वं च प्रतीयत इत्यात्मन एव बहुत्वकरणात् तस्यैव निमित्तत्वमुपादानत्वं च प्रतीयते । अविभक्तनामरूप आत्मा कर्ता, स एव विभक्तनामरूपः कार्यमिति कर्तृत्वकर्मत्वयोर्न विरोधः । स्वयमेवाऽऽत्मानं तथाऽकुरुतेति निमित्तमुपादानं च ॥ २६ ॥

(तै. आनं. १-१) "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. भृ. ६) "आनन्दो ब्रह्म" (छा. ८-१-२) "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः" (श्वे. ६-१९) "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" (बृ. ६-४-२५) "स वा एष महानज आत्माऽजरोऽमरः" इति स्वभावतो निरस्तसमस्तचेतनाचेतनवर्तिदोषगन्धस्य निरति-

---

सर्वव्याप्तयद्दपरमात्मस्वरूपनिर्देशः । ननु अनेकमहदादिकदम्बभूतप्रकृतिरूपमहावनान्तर्गतमहदादिसमष्ट्यात्मकैकवृक्षजन्यत्वे ब्रह्माण्डरूपकार्यविशेषस्य परमात्माधीने प्रामाणिके सति कुत एवं प्रश्नः । उच्यते । एतदधिकरणपूर्वपक्षितुल्यानां तर्कमूलशंकां मनसिकृत्यैवायं प्रश्नः—कथं निमित्तमुपादानञ्च ब्रह्म ; तदनात्मककारणकलापाभावाच्च कथं सृष्टिरिति । तदनात्मकत्वमप्रयोजकम् ; एकमेव च सर्वविधकारणं भवतीति परिहारः । **स वृक्ष** इत्यस्य द्यावापृथिव्यादिसर्वकार्योपादानभूतवृक्ष इत्यर्थात् उपादानत्वस्यापि साक्षादाम्नानम् । **ब्रह्माध्यतिष्ठ**दिति । ब्रह्मेति कर्म । ननु धारयतोऽपि निमित्तस्य ब्रह्मत्वात् स्वाधिष्ठेयत्वं स्वस्य कथम् ? उच्यते । ब्रह्मशब्दः कालकर्माद्युपकरणविशिष्टब्रह्मपरः। अधिष्ठानकर्मत्वस्य विशेष्ये बाधाद्विशेषणे पर्यवसानम् । अधिष्ठेयमपि (अधिष्ठेयान्तर्याम्यपि) ब्रह्मेति यावत् । आत्मेश्वर**मि**तिवद्वा उपकरणान्तराभावपरम् ॥ २५ ॥

नन्वन्तर्यामिसंकल्पायत्तत्वादुपकरणानामुपकरणत्वस्य, तस्मिन्नुपकरणवाचोयुक्तिः ; तद्वदेवोपादानत्वस्याव्यक्तनिष्ठस्य तदधीनत्वात् स उपादानमिति व्यवहारमात्रम् । अतो वनं प्रकृतिः ; वृक्षो महदादीत्यत्र साक्षादुपादानत्वं स्थापयति **आत्मकृते**रिति । स्वस्य क्रियमाणत्वरूपोपादेयत्वश्रवणात् कार्यकारणैक्यादुपादानत्वमप्यस्तीत्यर्थः । ननु कर्तुरेव कथं कार्यत्वम् , सिद्धसाध्यविरोधादिति चेत्—उपादानस्यैव कथमुपादेयत्वम् ; तत एव विरोधात् । भाव्यवस्थाविशिष्टतया साध्यत्वं भवतीति तु समानः परिहारः । एतदभिप्रायेणाह **अविभक्ते**ति । शंकापरिहाररूपत्वादत्र सूत्रे न चकारः । एवमुपर्यपि ॥ २६ ॥

ननु ब्रह्मणः कार्यत्वायोगात् आत्मानमिति पदं शरीरमित्यर्थकं स्यात् । कार्यत्वे हि विकाराश्रयत्वापत्तिः । तच्च निर्विकारे न घटते इति शंकायां प्रवृत्तमुत्तरसूत्रमवतारयति **सत्य**मिति । जडजीवगत-

ज्ञानानन्दैकतानस्य परस्य ब्रह्मणो विचित्रानन्तापुरुषार्थास्पदचिदचिन्मिश्रप्रपञ्चरूपेणाऽऽत्मनो बहुभवनसङ्कल्पपूर्वकं बहुत्वकरणं कथमुपपद्यत इत्याशङ्क्याह—

परिणामात् । १ । ४ । २७ ॥

परिणामस्वाभाव्यात् । नात्रोपदिश्यमानस्य परिणामस्य परस्मिन् ब्रह्मणि दोषावहत्वं स्वभावतः; प्रत्युत निरङ्कुशैश्वर्यावहत्वमेवेत्यभिप्रायः । एवमेव हि परिणाम उपदिश्यते । अशेषहेयप्रत्यनीककल्याणैकतानं स्वेतरसमस्तवस्तुविलक्षणं सर्वज्ञं सत्यसङ्कल्पमवाप्तसमस्तकामम् अनवधिकातिशयानन्दं स्वलीलोपकरणभूतसमस्तचिदचिद्वस्तुजातशरीरतया तदात्मभूतं परं ब्रह्म, स्वशरीरभूते प्रपञ्चे तन्मात्राहङ्कारादिकारणपरम्परया तमश्शब्दवाच्यातिसूक्ष्माचिद्वस्त्वेकशेषे सति, तमसि च स्वशरीरतयाऽपि पृथङ्निर्देशानर्हातिसूक्ष्मदशापत्त्या स्वस्मिन्नेकतामापन्ने सति तथाभूततमश्शरीरं ब्रह्म, पूर्ववद्विभक्तनामरूपचिदचिन्मिश्रप्रपञ्चशरीरं स्यामिति सङ्कल्प्य, अप्ययक्रमेण जगच्छरीरतया आत्मानं परिणमयतीति सर्वेषु वेदान्तेषु परिणामोपदेशः ।

तथैव बृहदारण्यके कृत्स्नस्य जगतो ब्रह्मशरीरत्वं ब्रह्मणस्तदात्मत्वं चाम्नायते, १) "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः" इत्यारभ्य, "यस्याऽऽपः शरीरम्" "यस्याग्निश्शरीरं" "यस्यान्तरिक्षं शरीरम्" "यस्य वायुश्शरीरम्" "यस्य द्यौश्शरीरम्" "यस्यादित्यः शरीरम्" "यस्य दिशश्शरीरम्" "यस्य चन्द्रतारकं शरीरम्" "यस्याकाशश्शरीरम्" "यस्य तमश्शरीरम्" "यस्य तेजश्शरीरम्" "यस्य सर्वाणि भूतानि शरीरम्" "यस्य प्राणश्शरीरम्" "यस्य वाक् शरीरम्" "यस्य चक्षुः शरीरम्" "यस्य श्रोत्रं शरीरम्" "यस्य मनः शरीरम्" "यस्य त्वक् शरीरम्" "यस्य विज्ञानं शरीरम्" "यस्य रेतः शरीरम्" इत्येवमन्तेन काण्वपाठे । माध्यन्दिने तु पाठे विज्ञानस्थाने, 'यस्याऽऽत्मा शरीरम्' इति विशेषः; लोकयज्ञवेदानां परमात्मशरीरत्वमधिकम् ।

---

सर्वहेयग्रहणम् अपुरुषार्थेति । **परिणामात्** । अपरिणामित्वश्रुत्यादिविरोधशंकापरिहारोऽनेन सूत्रेण । शरीरांशे विकार इति तु न; शरीरभाजोऽपि शरीराधीनकिञ्चिद्विकारवत्त्वादि स्यादिति शंकाऽप्येतत्सूत्रभाष्येऽन्ते शमयिष्यते । ब्रह्मणि परिणामस्य स्थितत्वात् कार्यत्वमुपादानत्वञ्च सुस्थमिति सूत्रार्थः । न च हेयवत्त्वापत्तिः; जडजीवयोरेतच्छरीरमात्रत्वादेतदभेदाभावात् तद्गतहेयानामत्रापादनायोगात् । न च परिणामत्वाविशेषादस्यापि हेयत्वम्; अप्रयोजकत्वात्, श्रुतिविरोधाच्चेति तद्भावः । तमिमं स्पष्टयितुं **परिणामस्वाभाव्या**दित्युक्तम् । चिदचिद्गतहेयानास्पदत्वस्य स्वयं परिणामास्पदत्वस्य चोपपादनार्थं सर्वदा विशिष्टत्वं दर्शयन् विवृणोति **एवमेव ही**ति । **तमश्शरीरं ब्रह्मे**ति सूक्ष्मविशिष्टब्रह्मभवदित्यर्थः । **अप्ययक्रमेणे**ति । अप्ययविपरीतक्रमेणेति स्यात् । अप्ययश्रुतिसूचितोत्पत्तिक्रमेणेति वाऽर्थः । **परमात्मशरीरत्वम्** परमात्म-

सुबालोपनिषदि च (७) पृथिव्यादीनां तत्त्वानां परमात्मशरीरत्वमभिधाय वाजसनेयकेऽनुक्तानामपि तत्त्वानां शरीरत्वम्, ब्रह्मण आत्मत्वं च श्रूयते, "यस्य बुद्धिः शरीरम्" "यस्याहङ्कारश्शरीरम्" "यस्य चित्तं शरीरम्" "यस्याव्यक्तं शरीरम्" "यस्याक्षरं शरीरम्" "यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युश्शरीरम्, यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति। अत्र मृत्युशब्देन परमसूक्ष्ममचिद्वस्तु तमश्शब्दवाच्यमभिधीयते, "अव्यक्तमक्षरे लीयत अक्षरं तमसि लीयते" इति तस्यामेवोपनिषदि क्रमप्रत्यभिज्ञानात्। सर्वेषामात्मनां ज्ञानावरणानर्थमूलत्वेन तदेव हि तमो मृत्युशब्दव्यपदेश्यम्। सुबालोपनिषद्येव ब्रह्मशरीरतया तदात्मकानां तत्त्वानां ब्रह्मण्येव प्रलय आम्नायते, "पृथिव्यप्सु प्रलीयते, आपस्तेजसि लीयन्ते, तेजो वायौ लीयते, वायुराकाशे लीयते, आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ लीयन्ते, भूतादिर्महति लीयते, महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते; तमः परे देव एकीभवति" इति। अविभागापत्तिदशायामपि चिदचिद्वस्तु अतिसूक्ष्मं स्वकर्मसंस्कारं तिष्ठतीत्युत्तरत्र वक्ष्यते(ति)(शारी. २-१-३२) "न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" इति।

एवं स्वस्माद्विभागव्यपदेशानर्हतया परमात्मनैकीभूतात्यन्तसूक्ष्मचिदचिद्वस्तुशरीरादेकस्मादेवाद्वितीयात् निरतिशयानन्दात् सर्वज्ञात् सत्यसङ्कल्पाद्ब्रह्मणो नामरूपविभागार्हस्थूलचिदचिद्वस्तुशरीरतया बहुभवनसङ्कल्पपूर्वको जगदाकारेण परिणामः श्रूयते, (तै. आ. १-१) "सत्यं ज्ञानमनन्तं ब्रह्म...तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः... एष ह्येवानन्दयाति...सोऽकामयत बहु स्याम्, प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा इदं सर्वमसृजत, यदिदं किञ्च। तत् सृष्ट्वा तदेवानुप्राविशत्; तदनुप्रविश्य सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं

---

शरीरत्वाम्नानम्। लीयते इति पूर्वं पश्चाच्च पाठात् **आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु** इत्यत्र तत्पाठाभावात् अत्र लयाविवक्षा स्पष्टा। अतः भूतान्तरेषु लीनेषु आकाशमात्रं स्वलयपर्यन्तमिन्द्रिये आप्यायकभूतेष्वेकत्वात् संसृष्टमस्ति। इन्द्रियाणि च तन्मात्रेण सहाहङ्कारे लयार्थमवतिष्ठन्त इत्यर्थः। उपात्त एकीभाववाक्ये चेतनसद्भावस्यास्पष्टत्वात् सूत्रदर्शितार्थापत्त्या तत्राविवादं दर्शयति **अविभागे**ति। तत्र सूत्रे अचित्प्रस्तावाभावेऽपि **चिदचिद्वस्तु** इति कथनं चितां तदा सत्त्वसिद्धौ उदाहृतवाक्ये अक्षरतमश्शब्दादिकं चिन्मिश्राचिद्वस्तुपरमिति प्रतिबोधनाय। अत एव वस्त्विति एकवचननिर्देशः। तद्वाक्यार्थकथनार्थमेवैतद्वाक्यारम्भ इति। **सोकामयते**ति। **सः** सूक्ष्मचिदचिच्छरीरक आनन्दमयः। **स तप** इति। **सः** यथासंकल्पसृष्टसमष्टिशरीरकः। **निरुक्त**मित्यादि वाक्यान्तरं पूर्ववाक्यार्थविवरणानुवादपूर्वकं सत्यत्वविधायकम्। **निरुक्तनिलयन**शब्दयोः क्रमाभंगेन जीवपरत्वमुचितम्। स एव देव-

चानृतं च सत्यमभवत्" इति। अत्र तपश्शब्देन प्राचीनजगदाकारपर्यालोचनरूपं ज्ञानमभिधीयते; (मु. १-१-६) यस्य ज्ञानमयं तपः" इत्यादिश्रुतेः। प्राक्सृष्टं जगत्संस्थानमालोच्येदानीमपि तत्संस्थानं जगदसृजदित्यर्थः; तथैव हि ब्रह्म सर्वेषु कल्पेष्वेकरूपमेव जगत् सृजति, (तै. नारा. ६-२४) "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो सुवः", (वि. पु. १-५-६९.) "यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानितान्येव तथा भावा युगादिषु" इति श्रुतिस्मृतिभ्यः (भ्याम्)।

तदयमर्थः—स्वयमपरिच्छिन्नज्ञानानन्दस्वभावोऽत्यन्तसूक्ष्मतयाऽसत्कल्पस्वलीलोपकरणचिदचिद्वस्तुशरीरतया तन्मयः परमात्मा विचित्रानन्तक्रीडनकोपादित्सया स्वशरीरभूत प्रकृतिपुरुषसमष्टिपरम्परया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः पुनस्सत्त्यच्छब्दवाच्यविचित्रचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपोऽभवत्—इति। (तै. आनं. ६-३) "तदेवानुप्राविशत्। तदनुप्रविश्य" इति, कारणावस्थायामात्मतयाऽवस्थितः परमात्मैव कार्यरूपेण विक्रियमाणद्रव्यस्याप्यात्मतयाऽवस्थाय तत्तदभवदित्युच्यते।

एवं परमात्मचिदचित्संघातरूपजगदाकारपरिणामे परमात्मशरीरभूतचिदंशगताः सर्वे एवापुरुषार्थाः; तथाभूताचिदंशगताश्च सर्वे विकाराः; परमात्मनि कार्यत्वम्; तदवस्थयोस्तयोर्नियन्तृत्वेनात्मत्वम्; परमात्मा तु तयोः स्वशरीरभूतयोर्नियन्तृतयाऽऽत्मभूतः तद्गतापुरुषार्थैर्विकारैश्च न स्पृश्यते; अपरिच्छिन्नज्ञानानन्दमयः सर्वदैकरूप एव जगत्परि-

---

मनुष्यादिशब्दमुख्यार्थः; मम देवः इत्येवं शरीरमात्रे देवादिशब्दप्रयोगाभावात्। शरीरं प्रति आधारोऽपि स एव॥ तपः कृत्वा सृजतः कथं कर्मफलाननुभव इत्यत्र तपश्शब्दार्थमाह **तप** इति। **पर्यये** पुन.पुनः [संवत्सर] प्राप्तौ। ननु **अकामयत अतप्यतेति** इदं द्वयं किम्? स्वत आनन्दमयस्य च किमर्था सृष्टिः? इत्यत्र तैत्तिरीयवाक्यार्थमाह **तदयमर्थ** इति। **क्रीडनके**ति। व्यष्टिपदार्थेति विवक्षितम्। **प्रकृतिपुरुषसमष्टी**ति। महदादिपृथिव्यन्तानामेव जीवगर्भत्वात् प्रकृतिपुरुषसमष्टित्वम्। आत्मानं महाभूतपर्यन्तं तच्छरीरकं प्रकृतिपुरुषसमष्टिभूतया परम्परया परिणमय्य इत्यन्वयः। **तन्मय** इति **स तप** इत्यत्र **स** इत्यस्यार्थः। सर्वदैव अन्तःस्थितस्य कोऽयं पश्चादनुप्रवेश इत्यत्र तदर्थमाह **तदेवान्वि**ति। सृष्ट्वेत्युत्तरकालो न विवक्षितः; वैशद्यार्थं पृथक्कृत्योच्यते। कार्यानुप्रवेशो नाम कारणावस्थवस्तुनिरूपितात्मत्वातिरिक्तं कार्यावस्थतन्निरूपितात्मत्वमेव; कार्यावस्थावच्छिन्ननिरूपकताकसंबन्धस्य प्रागस्थितत्वात्। तच्च तदवस्थनियमनाद्यनुगुणः परमात्मधर्मभूतज्ञानकल्याणपरिणामविशेषो वितत इत्युक्तमस्माभिः **परिष्कारे**। उपादानत्वविवेचनं मुण्डकोपनिषद्भाष्य**परिष्कारे परमार्थभूषणे** चास्मदीये द्रष्टव्यम्।

एवं विशिष्टकार्यकारणभावमुपपाद्य **ब्रह्मणो** विवक्षितं निर्विकारत्वमाह **एव**मिति। नन्वात्मनः सर्वस्य शरीराधीनकिञ्चिद्ज्ञत्वं दृष्टम्। ततोऽस्य सविकारत्वमिति शंकां सत्यमभवदित्यर्थप्रदर्शनेन परिहर्तुमाह **अपरिच्छिन्ने**ति। ज्ञानानन्दयोः संकोचे हि हेयप्रसक्तिः। रसान्तरमेव तु लभत इति

वर्तनलीलयाऽवतिष्ठते। तदेतदाह, "सत्यं चानृतं च सत्यमभवत्" इति। विचित्रचिदचिद्रूपेण विक्रियमाणमपि ब्रह्म सत्यमेवाभवत्—निरस्तनिखिलदोषगन्धमपरिच्छिन्नज्ञानानन्दमेकरूपमेवाभवदित्यर्थः।

'सर्वाणि चिदचिद्वस्तूनि सूक्ष्मदशापन्नानि स्थूलदशापन्नानि च परस्य ब्रह्मणो लीलोपकरणानि; सृष्ट्यादयश्च लीला' इति भगवद्द्वैपायनपराशरादिभिरुक्तम्, (वायु पु. उत्तर ख. ३६-६६) "अव्यक्तादिविशेषान्तं परिणामर्धिसंयुतम्। क्रीडा हरेरिदं सर्वं क्षरमित्युपधार्यताम्', (वि. पु. १-२-१८) "क्रीडतो बालकस्येव चेष्टां तस्य निशामय" (भा. सभा. ४०-७८.), "बालः क्रीडनकैरिव" इत्यादिभिः। वक्ष्यति च (शारी. २-१-३३) "लोकवत्तु लीलाकैवल्यम्" इति।

(श्वे.) "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः" इति च ब्रह्मणि जगद्रूपतया विक्रियमाणेऽपि तत्प्रकारभूताचिदंशगताः सर्वे विकाराः तत्प्रकारभूतक्षेत्रज्ञगताश्चापुरुषार्था इति विवेक्तुं प्रकृतिपुरुषयोर्ब्रह्मशरीरभूतयोः तदानीं तथा निर्देशानर्हातिसूक्ष्मदशापत्त्या ब्रह्मणैकीभूतयोरपि भेदेन व्यपदेशः; (तै. आ. ७) "तदात्मानं स्वयमकुरुत" इत्यादिभिरैकार्थ्यात्। तथा च मानवं वचः, (मनु. १-८) "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमपासृजत्" इति। अत एव ब्रह्मणो निर्दोषत्वनिर्विकारत्वश्रुतयश्चोपपन्नाः।

अतो ब्रह्मैव जगतो निमित्तमुपादानञ्च॥ २७॥

योनिश्च हि गीयते। १। ४। २८॥

इतश्च जगतो निमित्तमुपादानञ्च ब्रह्म, यस्मात् योनित्वेनाप्यभिधीयते, (मु. ३-१-३) "कर्तारमीशं पुरुषं ब्रह्म योनिम्" इति, (मु. १-१-७) "यद्भूतयोनिं परिपश्यन्ति धीराः"

---

भावः। सदैकरूपत्वे प्रमाणमुक्तम्; लीलायां प्रमाणमाह **सर्वाणी**ति।

पूर्वपक्षिदर्शितश्रुतेः स्वपक्षे सामञ्जस्यं संपादयति **अस्मान्मायी**ति। **अस्मा**दिति **तस्मि**न्निति च प्रधानपरम्; वस्त्वभिप्रायेण क्लीवतेति भावः। पूर्वार्धोक्तवेदवैदिककर्मजातं वा तदर्थः। **अस्मा**दिति ईदृशात् स्वस्मादित्यर्थकं वा। **तस्मि**न्निति च विश्वस्मिन्निति। सर्वथा नातो मायामात्रोपादानत्वप्रसक्तिः। विलक्षणत्वाधिकरणे शरीरगतावस्थायाः परम्परया सत्त्वप्रदर्शनेन कार्यत्वमुक्तम्। अत्र परिणामसूत्रे जीवधर्मभूतज्ञान इव कार्यतोपयोगिपरिणामो ब्रह्मधर्मभूतज्ञाने दर्शितः साक्षादेवावस्थोपपादनाय। तदेवं परिणामस्याप्रामाणिकत्वं वा निष्फलत्वं वा नेति सिद्धमुपादानत्वम्॥ २७॥

ब्रह्म निमित्तत्वविशिष्टोपादानतावत् योनिशब्दोक्तत्वादित्याह **योनि**रिति। 'यो योनिं योनिमधितिष्ठत्येकः' इति योन्यधिष्ठातृत्ववत् योनित्वस्यापि **कर्तारं योनि**मिति कर्तृत्वातिरिक्तस्योक्तत्वादिति भावः। योनिंयोनिमिति अथर्वशिरःपाठः। ननु शास्त्रयोनित्वादित्युक्तम्। न हि शास्त्रं ब्रह्मण उपादानम्।

**इति च। योनिशब्दश्चोपादानवचन इति** (सु. १-१-७) **"यथोर्णनाभिः सृजते गृह्णते च" इति वाक्यशेषादवगम्यते** ॥ २८ ॥ इति प्रकृत्यधिकरणम् ॥ ७ ॥

३५. सर्वव्याख्यानाधिकरणम् १-४-८ ॥

## एतेन सर्वे व्याख्याता व्याख्याताः । १ । ४ । २९ ॥

एतेन **पादचतुष्टयोक्तन्यायकलापेन, सर्ववेदान्तेषु जगत्कारणप्रतिपादनपराः सर्वे वाक्य-**

---

अतः शब्दोऽयं स्थानादिपर. स्यादित्यत्राह **योनिशब्दश्चेति**। योनिशब्द उत्पत्तिस्थानपरः ; तच्चोपादानमेव मुख्यम्। अदूरविप्रकर्षादिनाऽन्यत्र देशेऽपि तत्प्रयोगः। अत्र चोर्णनाभिदृष्टान्तात्, तत्र यादृशम् तादृशमत्र ग्राह्यम्। तच्च निमित्तत्वविशिष्टोपादानत्वरूपम्। न तु तदन्यत्, तत्रैकदेशमात्रं वा। न चोर्णनाभिकार्यस्य तन्तोरूर्णनाभ्यात्मकत्वाभावात् कथं विशिष्टस्य कार्यस्य विशिष्टं कारणमित्युपादानोपादेयभाव इति वाच्यम्-दृष्टान्तप्रदर्शनस्यान्याभिप्रायकत्वात्। यथोर्णनाभिर्जन्तुः स्वशरीरादेव तन्तुं सृजति, न तु स्वस्वरूपात्—तथा ब्रह्मापि सूक्ष्मचेतनाचेतनविशेषणरहितस्वरूपान्न सृजतीति न निर्विकारत्वादिभङ्ग इति। भाष्ये **निमित्तमुपादानश्चे**त्युभयमेलनमूर्णनाभिनिदर्शनाभिप्रायेण। ननु तन्तुत्वप्राग्भूतोर्णात्वावस्था न तज्जन्तोरात्मस्वरूपे साक्षात्; नापि परम्परया; ऊर्णनाभौ ऊर्णेतिव्यवहारापत्तेः। अतः स कथमुपादानमिति चेत्-ऊर्णनाभिदृष्टान्तेन शरीरवैशिष्ट्ये सिद्धे तस्य वैशिष्ट्यस्य प्रकृते कार्यावस्थायामपि सत्त्वे विमृष्टे उपादानत्वस्य सुगमत्वात्। किञ्च नात्रोर्णनाभिमात्रं विवक्षितम्; **वाक्यशेषा**दिति सामान्येनोक्तेः। ऊर्णनाभिदृष्टान्तात् निमित्तत्वस्योपादानशरीरकत्वस्य च सिद्धिः, 'यथा पृथिव्याम्-'इत्युदाहरणान्तरात् साक्षादुपादानत्वसिद्धिः। "पृथिवी योनिरोषधिवनस्पतीनाम्" इति हि भाष्यान्तरोक्तं प्रसिद्धम्। 'यथा सतः पुरुषात्' इति जीवच्छरीरनिदर्शनेनोपादानत्वस्येव तत्र चित्संनिधानस्यापि सिद्धिरिति चेतनाचेतनविशिष्टब्रह्मोपादानकत्वं वाक्यशेषावगम्यमिति भावः ॥ २८ ॥

पूर्वोक्तसर्वाधिकरणन्यायातिदेशाभिप्रायेण प्रवृत्तत्वादत्र एवास्यावसर इति संगतिः। प्रकृत्यधिकरणानन्तरत्वात् तन्न्यायमात्रातिदेश इति वा, **प्रतिज्ञादृष्टान्ते**त्यादिना पूर्वं सद्विद्यानन्दमयविद्याक्षरविद्यादिमात्रप्रदर्शनात् विद्यान्तरादीन्यपि उपादानत्वपराण्यत्र दर्श्यन्त इति वा न मन्तव्यम्, अर्थपौष्कल्यहानेरित्याशयेन **एतेने**त्यस्य **पादचतुष्टयोक्तन्यायकलापेने**त्यर्थमाह। कारणाध्यायत्वात् **सर्वे** इत्यस्य सर्वकारणवाक्यमात्रविषयकता ; न तूपासनादिविषयकता। **सर्वे** इत्यनेन तेषां भिन्नभिन्नार्थपराणां परस्परघातात् प्रागुक्तबहुवाक्यान्तरैककण्ठ्यं युक्तमित्यपि ज्ञाप्यते। अतस्तत्तद्वाक्यमादाय पुनः प्रधानकारणत्वं वा परमाणुकारणत्वं वा चेतनसामान्यकारणत्वं वा प्रकृतिकार्याद्यचेतनविशेष-ब्रह्मरुद्रादिचेतनविशेषकारणत्वं वा न शंकनीयमित्युच्यते। अत्रेक्षणविशेषानन्दविशेषादितत्तत्सूत्रोक्तहेतुसत्त्वे ब्रह्मपरत्वस्य निश्चितत्वात् अतिदेशसूत्रमिदमनावश्यकं स्यादिति ईक्षणाद्यनभिधायिवाक्यजातं विषयः। अथवेक्षणादिश्रुतावपि युक्त्यन्तरेण तदन्यथाकरणेन पूर्वपक्षः। सद्विद्यायाम्, 'न्यग्रोधफलमत आहरेति। भिन्धीति। किमत्र पश्यसीति। अण्व्य इमा धाना इति' इति अणुप्रस्तावादणुकारणत्वशंकाऽपि भवतीत्युक्तं **कल्पतरौ**। तत्र, 'आसा-

विशेषाः चेतनाचेतनविलक्षणसर्वज्ञसर्वशक्तिब्रह्मप्रतिपादनपराः व्याख्याताः । व्याख्याताः इति पदाभ्यासोऽध्यायपरिसमाप्तिद्योतनार्थः ॥ २९ ॥ इति सर्वव्याख्यानाधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य चतुर्थः पादः ॥ १.४ ॥

इति प्रथमोध्यायः । श्रीमते रामानुजाय नमः । श्रीरस्तु ॥

---

मेकां भिन्धि' इति एकाणुत एव वृक्षोत्पत्तिवचनात् न परमाणुद्व्यणुकादिवादोक्तिरिति सा परिहार्या । एतेनेति पदेन च पूर्वोक्तन्यायातिदेशस्यैव क्रियमाणत्वादधिकाशंकां विना तदभावात् तदनुगुणवाक्यजातमात्रमत्र विषयः । तत्र प्राधान्याद् ब्रह्मरुद्रकारणत्वनिराकरणैदम्पर्यं भाव्यते । ननु नारायणकारणत्वनिराकरणमेवाभिमतमस्तु ; भाष्ये सर्वज्ञसर्वशक्तिब्रह्मेति सामान्योक्त्या सामान्यतस्तद्भिन्नमेव निषेध्यमस्तु इति चेन्न-सामान्यस्य कस्मिंश्चिद्विशेषे पर्यवसानस्यावश्यकत्वात्, 'ब्रह्मणि श्रीनिवासे' 'पुरुषोत्तम एवाभिधीयते' इति प्राक् भाषितत्वात्, 'वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तत्रैव तु ब्रह्मशब्दो मुख्यवृत्तो महामुने' इत्यादिप्रमाणाच्च ब्रह्मशब्दो हि नारायणपरः । आनन्दमयाधिकरणे चतुर्मुखातिशाय्यानन्दं ब्रह्मोक्तम्; अन्तरधिकरणे तस्य पुण्डरीकाक्षत्वम्; ज्योतिरधिकरणे पुरुषसूक्तोक्तज्योतिर्भूतश्रीपत्यैक्यम्; अत्त्रधिकरणे, 'सोध्वनः पारमाप्नोति तद् विष्णोः परमं पदम्' इति विष्णुत्वम्; अन्तर्याम्यधिकरणे सुबालाद्यैकरस्यात् नारायणत्वम्; वैश्वानराधिकरणे विष्णुसंबन्धितया प्रसिद्धविश्वरूपवत्त्वम्; द्युभ्वाद्यधिकरणे नारायणनिष्ठतया प्रसिद्धं मोक्षप्रदत्वं बहुधाजायमानत्वादि चेत्येवंरीत्या पूर्वाधिकरणैर्विवक्षितो नारायण एवेत्यस्य निष्प्रकम्पत्वात् तत् तथैव ज्ञात्वा, 'कथमेवं नारायणकारणकत्वमिष्यते, 'हिरण्यगर्भः समवर्तताग्रे', 'न सन्न चासद् शिव एव केवलः' इत्यन्यस्यापि कारणत्वश्रुतेः । चतुर्मुखादेरिन्द्राद्यतिशयित्वेन विष्णुत आधिक्यस्य वा साम्यस्य वा ऐक्यस्य वा स्वीकरणं कस्मान्न भवति' इत्यधिकाशंकायाम्—तयोरपि कर्मवश्यत्वं प्रदर्श्य तत्तत्पदस्यार्थान्तरं कथ्यते । 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानः' इतीतरनिषेधाच्च । 'हिरण्यगर्भ इत्यष्टौ' इति समुद्रशायिनारायणपरत्वाच्च हिरण्यगर्भसूक्तस्य । रमणीयोदर इति तदर्थः । शिवशब्दो मङ्गलवचनः । 'एको रुद्रो न द्वितीयाय' इत्यत्र रुद्रपदं संसाररुद्रावकनारायणपरम् । अथर्वशिरसि मोक्षार्थोपासनविषयत्वं च न रुद्रमात्रस्य; किंतु प्रतर्दनविद्यायामिन्द्रान्तर्यामिण इव रुद्रान्तर्यामिण इति तत्रैव व्यक्तम्—इत्येवंरीत्या आकाशाद्यधिकरणन्यायैरेव शब्दार्थनिष्कर्षादिकं ग्राह्यमिति सिद्धान्त इह निगूढ इति ॥ २९ ॥

श्रीरङ्गलक्ष्मणमुनीन्द्रपदाब्जभक्तश्रीवीरराघवसुधीहृदि लब्धभासः ।
योगीन्द्रदेशिकवशस्य हयाननस्य हेषारवप्रथमलक्षणरूपमेवम् ॥ श्रीः ॥

इति श्रीमद्वेदान्तरामानुज-यतीन्द्र-महादेशिकचरणारविन्दचञ्चरीकस्य श्रीमद्रङ्गरामानुज मुनीन्द्र-महादेशिकपदपद्मसेवासमधिगतसर्ववेदान्तार्थस्य वात्स्यश्रीशैल-सचक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे प्रथमोऽध्यायः ।

श्रीमते रामानुजाय नमः । शुभमस्तु ॥

श्रीः । श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचिते (श्रीभाष्ये)

# श्री शा री र क मी मां सा भा ष्ये




द्वितीयाध्याये प्रथमः पादः

३६. स्मृत्यधिकरणम् 2-1-1.

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न, अन्यस्मृत्यनवकाशदोषप्रसङ्गात्॥ २। १। १॥**

**प्रथमेऽध्याये प्रत्यक्षादिप्रमाणगोचरादचेतनात् तत्संसृष्टात् तद्वियुक्ताच्च चेतनादर्थान्तरभूतं निरस्तनिखिलाविद्याद्यपुरुषार्थगन्धम् अनन्तज्ञानानन्दैकतानम् अपरिमितोदारगुणसागरं निखिलजगदेककारणं सर्वान्तरात्मभूतं परं ब्रह्म वेदान्तवेद्यमित्युक्तम्। अनन्तरमस्यार्थस्य संभावनीयसमस्तप्रकारदुर्धर्षणत्वप्रतिपादनाय द्वितीयोऽध्याय आरभ्यते।**

**प्रथमं तावत् कपिलस्मृतिविरोधात् वेदान्तानामतत्परत्वमाशङ्क्य तन्निराक्रियते॥ कथं स्मृतिविरोधात् श्रुतेरन्यपरत्वम्? उक्तं हि,** (पूर्वमी. १-३-३) **"विरोधे त्वनपेक्ष्यं(क्षं)स्यात्" इति श्रुतिविरुद्धायाः स्मृतेरनादरणीयत्वम्॥ सत्यम्; "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इत्यादिषु**

---

श्रीः

श्रीमते रामानुजाय नमः 

## भाष्यार्थदर्पणः २-१.

वन्दे ब्रह्म परं पूर्णं चिदचित्सर्वकारणम्।
स्मृत्या युक्त्याऽन्यशास्त्रैश्च वेदैश्चाचाल्यवैभवम्॥

ब्रह्म प्रपञ्चान्तर्गतसर्ववस्तुनिरूपितसर्वविधकारणत्ववत्तया वेदान्तवेद्यमिति प्रथमाध्यायनिरूपितोऽर्थः स्मृति-युक्ति-शास्त्रान्तर-कतिपयवेदान्तविरोधाद् दुरवधर इत्याक्षेपे द्वितीयाध्यायप्रवृत्तिः। तत्र स्मृतियुक्तिविरोधपरिहारः प्रथमपादे। शास्त्रान्तरविरोधपरिहारो द्वितीये। एवं कारणत्वासंभवे परिहृते प्रपञ्चान्तर्गतस्य कतिपयस्य कार्यत्वासंभवप्रयुक्तब्रह्मकारणत्वासंभवशङ्का वेदान्तविप्रतिषेधदर्शनमूला तृतीयतुरीयपादाभ्यां परिह्रियते—इतीममर्थमाह **प्रथम** इत्यादिना। **सागर**मिति बहुव्रीहिवृत्तम्; **सागरः** समूहः। तत्र स्मृतिविरोधपरिहारकमाद्यमधिकरणचतुष्टयम्। तत्र द्वाभ्यां सामान्यतः स्मृतिविरोधे परिहृते, सत्तर्कोपबृंहितस्मृतेर्बाधकत्वं दुष्परिहरमिति पुनरशङ्कायां पुनरधिकरणद्वयम्।

**कथ**मिति। न भवतीत्यर्थः। "विरोधे त्वनपेक्ष्यं(क्षं)स्यादसति ह्यनुमानम्" इति पूर्वमीमांसायां (१-३.२) श्रुतिप्राबल्याधिकरणसूत्रम्। तेन तत्पूर्वाधिकरणस्थापितं स्मृतिप्रामाण्यं क्वचिदपोद्यते, प्रत्यक्षश्रुतिविरोधे स्मृतिर्नादर्तव्येति। औदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिः। औदुम्बरी नाम उदुम्बरकृतः स्थाणुविशेषः यज्ञवाटे सदसि निखातः। तां स्पृशन् उद्गानमुद्गाता कुर्यात्। अत्र औदुम्बरी सर्वा वेष्टयितव्येति तस्याः कार्त्स्न्येन वस्त्रेण वेष्टनं स्मृतिर्विदधाति। एवं वेष्टने च तस्याः स्पर्शः—साक्षात्संयोगः श्रुतिविहितो न सिद्ध्यतीति स्मृतिरुपेक्ष्यते॥ ननु स्मृत्युपेक्षणे तन्मूलभूता श्रुतिरेवाप्रमाणं मता स्यात्॥

स्वत एवार्थनिश्चयसंभवात् तद्विरुद्धा स्मृतिरनादरणीयैव ; इह तु वेदान्तवेद्यतत्त्वस्य दुरवबोधत्वेन परमर्षिप्रणीतस्मृतिविरोधे सति, अयमर्थ इति निश्चयायोगात् स्मृत्या श्रुतेरतत्परत्वोपपादनमविरुद्धम् । एतदुक्तं भवति--प्राचीनभागोदितनिखिलाभ्युदयसाधनभूताग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिकर्माणि यथावदभ्युपगच्छता श्रुतिस्मृतीतिहासपुराणेषु,(श्वे. ५-२-२)"ऋषिं प्रसूतं कपिलम्" इत्यादिवाक्यैराप्तत्वेन संकीर्तितेन परमर्षिणा कपिलेन परमनिःश्रेयसतत्साधनावबोधितत्वेनोपनिबद्धस्मृत्युपबृंहणेन विना अल्पश्रुतैर्मन्दमतिभिर्वेदान्तार्थनिश्चयायोगात्, यथाश्रुतार्थग्रहणे च आप्तप्रणीतायाः सांख्यस्मृतेः सकलाया एवानवकाशप्रसङ्गाच्च स्मृतिप्रसिद्ध एवार्थो वेदान्तवेद्य इति बलादभ्युपगमनीयम्---इति । न च वाच्यं मन्वादिस्मृतीनां ब्रह्मैककारणत्ववादिनीनामेवंसति अनवकाशत्वदोषप्रसङ्ग इति ; धर्मप्रतिपादनद्वारेण (द्वारा) (दनपर) प्राचीनभागोपबृंहण एव सावकाशत्वात् । अस्यास्तु कृत्स्नायास्तत्त्वप्रतिपादनपरत्वात् तथाऽनभ्युपगमे निरवकाशत्वमेव स्यात् । तदिदमाशङ्कते स्मृत्यनवकाशदोषप्रसङ्ग इति चेत् इति—

---

नैवम् ; मूलश्रुतेरेवाभावात् । तादृशस्मृतिं प्रति भ्रान्त्यादेरेव मूलत्वात् । तदयं तत्सूत्रार्थः---श्रुतिस्मृतिविरोधे यत् अनपेक्षं वाक्यं तत् श्रुतिमूलं प्रमाणम् ; न तु सापेक्षं स्मृतिवचनम् । किं तु तत् अनपेक्ष्यम्=अनादरणीयम्, उपेक्ष्यम् । असति हि श्रुतिविरोधे स्मृत्या श्रुतेरनुमानं भवति । सति तु विरोधे भ्रान्त्यादिकमेव मूलं कल्प्यमिति । **इह त्विति** । औदुम्बरीस्पर्शविधायकवाक्यं वाक्यान्तरादिनिरपेक्षमेव स्पष्टार्थप्रतिपादकम् । कारणवाक्यं तु सदादिपदघटितं विशेषनिर्णयसापेक्षम्, सर्वशाखाज्ञानविधुराणाम्, 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनात् सर्वशाखाभिज्ञमहर्षिकृतस्मृतिसहकारेण विना दुर्निर्णयम् । एवञ्च स्मृतिवचनविरोधे प्रथमाध्यायप्रदर्शितन्यायाः आभासीभवन्ति । न हि वचनविरोधे न्यायः प्रवर्तते । अत आपातन्यायप्रतीतार्थभिन्नार्थपरत्वं वेदान्तानामित्यर्थः ।

ननु सूत्रे स्मृतिशब्दमात्रप्रयोगात् कापिलस्मृतिमूल एव पूर्वपक्ष इति कथं ज्ञायते ; कपिलस्य विश्वसनीयत्वमत्वे च किं प्रमाणमित्यत्रोपपादयति **एतदिति** । **प्राचीने**त्यादिविशेषणेन बुद्धजिनपशुपतिबृहस्पत्यादिव्यवच्छेदः । तैर्वैदिकाचारानादरात् । कणादाद्यपेक्षया विश्वसनीयत्वे कारणमाह **श्रुतीति** । योगविषये पृथग्योगकरणान्नात्र सूत्रे योगस्मृतिर्विवक्षिता । **ऋषिमिति** । "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येत्" इति श्रुतिः । **नमु** अत्यन्तप्रसिद्धं ऋषिरूपेणैव जातं कपिलं यः परमात्मा सृष्टिपूर्वकाले सर्वविधज्ञानसामग्रीसंपन्नमकरोत्, जायमानकटाक्षविषयञ्च चकारेति तदर्थः । **परमर्षिणा** वेदतदर्थोभयदर्शिना । मन्वादिस्मृतिव्यावर्तनायाह **परमेति** । **स्मृत्युपबृंहणेन** स्मृतिकृतसाहाय्येन । **अल्पश्रुतै**रिति । अल्पं **श्रुतम्** अध्ययनार्थज्ञानरूपं येषां तैः । नन्वस्माकमेवंत्वेऽपि प्रथमाध्यायेन वेदान्तार्थनिर्णेता बादरायणः वेदव्यासः, 'मुनीनामप्यहं व्यासः' इति मानितश्चेति कथं तदाक्षेपेण कपिलपुरस्करणमिति चेत्---सत्यमेतत् । तथापि तस्मिन्नेव व्यासे अर्वाचि प्राच्यपुरुषनिक्षिप्तगौरवेण केनचिदेवमनाप्तत्वभ्रमेण पृच्छ्यमाने स कथं न्यायनिबन्धा स्वात्मानं कपिलातिशयितं स्वयमेव कथयितु-

**तत्रोत्तरम्**—नान्यस्मृत्यनवकाशदोषप्रसङ्गात्—**इति । अन्या हि मन्वादिस्मृतयो ब्रह्मैककारणतां वदन्ति—यथाऽऽह मनुः,** (मनु. १-६) "**आसीदिदं तमोभूतम्**" इत्यारभ्य, "**ततः स्वयंभूर्भगवान् अव्यक्तो व्यञ्जयन्निदम्। महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः...सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमपासृजत्" इति। भगवद्गीतासु च,** (गी. ७-६) "**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा",** (गी.१०-८) "**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" इति च। तथाच महाभारते,** (शान्ति मो. ८-१.) "**कुतः सृष्टमिदं सर्वं जगत् स्थावरजङ्गमम्। प्रलये च कमभ्येति तन्मे ब्रूहि पितामह" इति पृष्ट आह,** (-१२) **नारायणो जगन्मूर्तिरनन्तात्मा सनातनः" इति, तथा, "तस्माद्व्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इति,** (-१४) "**अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये संप्रलीयते" इति च। आह च भगवान् पराशरः,** (वि. पु. १-१-३१) "**विष्णोः सकाशादुद्भूतं जगत् तत्रैव च स्थितम्। स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः" इति।**

---

मुद्युञ्जीत । अतोऽभ्युपेत्योपबृंहणसापेक्षत्वं गूढम् **अन्यस्मृती**ति सामान्येन समाधानं वक्ष्यति। पूर्वाध्यायकृतविचारप्रकारस्य अनृषिभिरपि कर्तुं शक्यत्वात् तत्साधारण्येनैव प्रकृतपूर्वपक्षसमाधानं वक्तव्यमित्याशयः। तथा च स्मृतयः त्रिविधाः मन्वादिधर्मशास्त्ररूपाः, इतिहासपुराणरूपाः, कापिलादिस्मृतयश्चेति। वेदबाह्यागमास्तु न स्मृतिव्यपदेशमर्हन्ति, वेदार्थग्रहणपूर्वकमप्रवृत्तत्वात्। त्रिस्रषु चाद्याः सावकाशाः। द्वितीयाः सात्त्विकराजसतामसभेदात् अनेकपुरुषाभिप्रायप्रदर्शनपरत्वाच्चाव्यवस्थिताः। तृतीयविधासु च भगवदवतारोक्तभिन्नानां न तत्तुल्यता। तत् कपिलस्मृतिरेवोपादेयेति पूर्वपक्षः। (पूर्वाध्यायान्ते, "एतेन सर्वे व्याख्याताः" इति परमात्मपरतया सर्वशाखाव्याख्यानवर्णनमयुक्तम्; सर्वशाखाभिज्ञप्राज्ञतमकपिलाख्यवासुदेवाभिमतप्रकृतिपरतया शाखान्तरानुगुणस्मृत्यनुरोधेन श्रूयमाणशाखाव्याख्यानस्यैव कार्यत्वादिति पूर्वाधिकरणाक्षेपोऽप्यत्र निगूढः।)

**आसीदि**ति। 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः' इति श्लोकः। 'नासदासीत् नो सदासीत् तदानीं तम आसीत्' इति श्रुत्युक्तरीत्या प्रपञ्चोऽयं तमोरूपेणासीत्। 'तमसा गूढमग्रे प्रकेतम्' इति तदनन्तरश्रुत्यर्थः, 'ततः स्वयम्भूर्भगवानव्यक्तः' इत्यनेन वक्ष्यते। **अप्रज्ञातं** प्रत्यक्षत्वहेतुरूपादिरहितम्। **अप्रतर्क्यम्** अनुमानागम्यम्। **अविज्ञेयम्** परमात्मतः पृथक्तया ग्रहणानर्हम्। **सर्वतः** स्वगतसर्वात्मविषयेऽपि। **प्रसुप्तमिव** सुषुप्तकालिकतुल्यम्, ज्ञानप्रसरगन्धहीनम्। **तत** इति। **भगवान्** ज्ञानादिषाड्गुण्यनिधिः परमात्मा **स्वयंभूः** अनन्याधीनसत्ताकः **तमोनुदः** अक्षरावस्थापन्नः, **अव्यक्तः** त्रिगुणाव्यक्तशरीरको भूतः, **इदं व्यञ्जयन्** व्यक्तं प्रपञ्चं जनयिष्यन् **महाभूतादिवृत्तौजाः** महाभूतकारणभूतमहदहङ्कारतत्त्वविषयकसंकल्पाश्रयः **प्रादुरासीत्** महदादिरूपेण। उपरि, **योऽसावि**ति श्लोकेन '**स्वयमुद्बभौ**' इति व्यूहरूपेणावतीर्णत्वमुच्यते। **सोऽभिध्याये**ति। **शरीरात् स्वात्** भूतादिरूपशरीरात् **अप एव ससर्ज** अप्पर्यन्तानि ब्रह्माण्डावरणानि चकार। **तासु** अप्सु **वीर्यं**

आह चाऽऽपस्तम्बः (आप. धर्म २२-६) "पूः प्राणिनः सर्व एव गुहाशयस्य अहन्यामानस्य विकल्मषस्य", इत्यारभ्य (आप. धर्म. २३-२) तस्मात् कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः" इति।

यदि कपिलस्मृत्या वेदान्तवाक्यार्थव्यवस्था स्यात्, तदैतासां सर्वासां स्मृतीनामनवकाशत्वरूपो महान् [अयं] दोषः प्रसज्येत। अयमर्थः—यद्यपि वेदान्तवाक्यानामतिक्रान्तप्रत्यक्षादिसकलेतरप्रमाणसंभावनाभूमिभूतार्थप्रतिपादनपरत्वात् तदर्थवैशद्यायाल्पश्रुतानां प्रतिपत्तॄणां तदुपबृंहणमपेक्षितम्—तथापि तदर्थानुसारिणीनामाप्ततमप्रणीतानां बह्वीनां स्मृतीनां तदुपबृंहणाय प्रवृत्तानामनवकाशत्वं मा प्रसाङ्क्षीदिति श्रुतिविरुद्धार्था कपिलस्मृतिरुपेक्षणीया। उपबृंहणं च श्रुतिप्रतिपन्नार्थविशदीकरणम्। तच्च विरुद्धार्थया स्मृत्या न शक्यते कर्तुम्।

न चैतासां स्मृतीनां प्राचीनभागोदितधर्मांशविशदीकरणेन सावकाशत्वम्; परब्रह्मभूतपरमपुरुषाराधनत्वेन धर्मान् विदधतीनामेतासामाराध्यभूतपरमपुरुषप्रतिपादनाभावे सति तदाराधनभूतधर्मप्रतिपादनासंभवात्। तथा हि परमपुरुषाराधनरूपता सर्वेषां कर्मणां स्मर्यते, (गी. १८-४६) "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः", (दक्षस्मृ(?) "ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु। ब्रह्मलोकमवाप्नोति न चेहावर्तते पुनः", (वि. पु. ५-३०-१६) "यैः स्वकर्मपरैर्नाथ नरैराधितो भवान्। ते तरन्त्यखिलामेतां मायामात्मविमुक्तये" इति। न चैहिकामुष्मिकसांसारिकफलसाधनकर्मप्रतिपादनेनैतासां सावकाशत्वम्; यतस्तेषामपि कर्मणां परमपुरुषाराध-

ब्रह्माण्डसामग्रीं कल्पितवान्। तत् वीर्यं ब्रह्माण्डमभवत्। तस्मात् काया इति। 'स इन्द्रियैर्जगतोऽस्य ज्ञानादन्योऽन्यस्य ज्ञेयात् परमेष्ठी विभाजः' इति पूर्वार्धम्। अवश्यज्ञेयात् तस्मात् **अनन्यस्य** अपृथग्भूतस्यास्य जगतो यत् इन्द्रियैर्ज्ञानम्, तस्मात् **अन्यः** तद्बहिर्भूतः तदविषयः स परमेष्ठी **विभाजः** नामरूपविभागकर्तेति तदर्थः। विभाक्छन्दात् **विभाज** इति पञ्चम्यन्तं चेत्, उत्तरार्धे **तस्मा**दित्यस्य विशेषणम्—नामरूपविभागार्हात् **तस्मात्** परमेष्ठिन इत्यर्थः। **कायाः सर्वे** इत्यस्य नाचेतनमात्रपरत्वमापस्तम्बेष्टम्; किं तु चेतनपरत्वमपीति ज्ञापनाय **पूः प्राणिन** इति पूर्वखण्डिकावाक्यमप्युपात्तम्। **महानि**ति। बहुत्व-आप्ततमप्रणीतत्व-उपबृंहणप्रवृत्तत्वरूपाकारातिशयात् तत्त्यागे दोषस्य महत्त्वम्। ननु कपिलस्मृतिग्रहणेऽन्यस्मृत्यनवकाशत्वं प्रसजेदिति कृत्वा सर्वस्मृतित्यागेन स्वातन्त्र्येण कथमस्मादृशैः श्रुत्यर्थनिर्णयः कार्य इत्याशङ्कायाम् अन्यस्मृतिसहकारेणैव क्रियते इत्युत्तरं वक्तुमाह **अयमर्थ** इति। **धर्मप्रतिपादनासंभवा**दिति। धर्मनिरूपकैर्धर्मत्वप्रकारोऽपि निरूपणीयः। धर्मत्वञ्च धृतिहेतुत्वम्। धृतिः प्रीतिः। तद्धेतुता क्षणध्वंसिनां कर्मणां देवताप्रीतिद्वारा, नापूर्वादिद्वारा। देवतानामन्यासामस्थिरत्वेऽपि आज्ञारूपश्रुत्यादिप्रवर्तकस्य पुरुषधौरेयस्य स्थिरत्वादन्तत आराध्यत्वाच्च न धर्मत्वभङ्ग इत्युपपादनाय, निष्कामभगवदर्थ-

नत्वमेव स्वरूपम्। यथोक्तम्, (गी. ९-२३-२४) "येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः। तेऽपि मामेव कौन्तेय! यजन्त्यविधिपूर्वकम्। अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते" इति; तथा, (वि. पु. ५.२०, ९७) "यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाच्युत। हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक्" इति।

यदुक्तम्—"ऋषिं प्रसूतं कपिलम्" इति कपिलस्याप्ततया संकीर्तनात् तत्स्मृत्यनुसारेण वेदान्तार्थव्यवस्थापनं न्याय्यम्—इति—तदसत्, बृहस्पतेः श्रुतिस्मृतिषु सर्वेषामतिशयितज्ञानानां निदर्शनत्वेन संकीर्तनात् तत्प्रणीतेन लोकायतेन श्रुत्यर्थव्यवस्थापनप्रसक्तेः-इति॥

अथ स्यात्—कपिलस्य स्वयोगमहिम्ना वस्तुयाथात्म्योपलब्धेः तत्स्मृत्यनुसारेण वेदान्तार्थो व्यवस्थापयितव्यः इति—अत उत्तरं पठति—

इतरेषां चानुपलब्धेः। २। १। २॥

चशब्दस्तुशब्दार्थः चोदिताशङ्कानिवृत्त्यर्थः। इतरेषां—मन्वादीनां बहूनां स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वयाथात्म्यानां निखिलजगद्भेषजभूतस्ववाक्यतया, (यजु. २-३-

---

कर्मानुष्ठानस्यैव परमधर्मत्वस्थापनाय च सृष्टितत्त्वनिरूपणस्यात्यन्तापेक्षितत्वात् नेदमप्रसक्तविषयान्तरम्। इयान् विशेषः—ब्रह्मणः प्राधान्येन निरूपणं वेदान्तादिषु; धर्मशास्त्रेषु च तत्स्वरूपविज्ञानशेषतयेति। अन्योद्देश्यककर्मणामपि परमपुरुषाराधनत्वं विशदयितुमाह **यथोक्त**मिति। **हव्ये**ति। पितृरूपेण कव्यभुक् देवरूपेण हव्यभुगिति यथार्हमन्वयः।

कथमाप्ततया प्रसिद्धकर्तृकस्य शास्त्रस्यानादरणीयत्वमिति शंकां परिहर्तुमनुवदति **यदुक्त**मिति। वेदविरुद्धार्थप्रतिपादकत्वे निश्चिते भ्रान्तिमूलकत्वस्यावश्यकत्वादनादरणीयत्वमेवेति भावः॥

योगजन्यसाक्षात्कारशालिनः कारुणिकस्य भ्रान्तिविप्रलम्भादिप्रसक्त्यभावात्, मन्वादौ च कर्मव्याप्रृते योगप्रभावस्य तावतो दुर्वचत्वात् कपिल एव प्रमाणमिति शंकां दर्शयति **अथ स्या**दिति। इत्थमवतरणं सौत्रोपलब्धिपदसूचितम्। **इतरेषा**मिति बहुवचनार्थमाह **बहूना**मिति। **स्वयोगमहिमे**ति। **अयं** भावः—कपिलस्तावत् न साक्षाद् भगवान्; ऋषिं प्रसूतमिति त्वदुक्तमन्त्रत एव भगवदधीनज्ञानकत्वभगवत्कटाक्षविषयत्वयोरवगमात्। जन्मप्रभृति तस्यर्षित्वेऽपि जन्मान्तरीयविविधज्ञानाश्रयत्वेऽपि, जायमानकटाक्ष उच्यमानः सत्त्वगुणाधीनमोक्षचिन्तकत्वसंपदं पश्चात्तनीं दर्शयति। सत्त्वगुणश्च कर्मानुष्ठानायत्तः। यद्यपि धर्माः सर्वे तत्संमताः-तथापि 'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः' इति क्रत्वर्थहिंसानां पुरुषानर्थकरत्वस्यापि तदिष्टत्वात् तत्रानाश्वासोऽप्यूह्यो भवति। भगवन्तं यद्येष नेच्छति, कथंकारमनेन भगवदाराधनरूपेण कर्माणि निर्वर्तितानि स्युः। तदभावे च फलाभिसंधिविरहमात्रेण, गुणेषु कर्तृत्वारोपमात्रेण च यथावस्थितसत्त्वगुणोत्पत्तिर्दुर्वचा। अतो ज्ञानसामग्र्यभावात् योगोऽप्यस्य न यथावन्निष्पन्नः स्यात्। मन्वादयस्तु ज्ञानयोगात् कर्मयोगस्यातिशयिततया यथावस्थितधर्माचरणसंपन्नसत्त्वोन्मेषातिशयाः सुखसाधिततद्योगाः यथावत्सर्वसाक्षात्कारिण इति। जातिस्मरस्य कपिलस्य गुरुमुखार्थग्रहणाद्यनवगमाच्चाविश्व-

३-२.) "यद्वै किञ्च मनुरवदत् तद् भेषजम्" इति श्रुतिप्रसिद्धानां कपिलदृष्टप्रकारेण तत्त्वानुपलब्धेः श्रुतिविरुद्धा कपिलोपलब्धिर्भ्रान्तिमूलेति न तया यथोक्तो वेदान्तार्थश्चालयितुं शक्य इति सिद्धम् ॥ २ ॥ इति स्मृत्यधिकरणम् ॥ १ ॥

३७. योगप्रत्युक्त्यधिकरणम् २-१-२ ॥

## एतेन योगः प्रत्युक्तः । २ । १ । ३ ॥

एतेन—कापिलस्मृतिनिराकरणेन योगस्मृतिरपि प्रत्युक्ता । का पुनरत्राधिकाशङ्का, यन्निराकरणाय न्यायातिदेशः? योगस्मृतावपी(तावी)श्वराभ्युपगमात् मोक्षसाधनतया वेदान्त-

---

सनीयता । भगवदावेशस्तु पुराणाद्यवसेय इति तदिष्टौ तत्रैव कपिलस्य परब्रह्मोपदेशकत्वस्याप्यवगमात् तदपलापो न शक्यः । अपिचाऽऽवेशः क्षत्रियेषु युद्धाद्यर्थमिव, अत्यन्तावैदिककतिपयनिरासार्थमपि संभाव्यते । तावतैव श्रुत्या स प्रशस्यते । तथा तस्य ज्ञानवत्त्वे कथितेऽपि तदीयवाक्यस्य विश्वसनीयत्वं न श्रुत्योक्तम् ; मन्वादिविषये तु तदस्तीति महदन्तरम् । "मनुरवदत्"। "स होवाच व्यासः" इति तत्सूक्तिषु गौरवस्य व्यक्तत्वात् । ननु, 'यद्वै किञ्च मनुः' इति वाक्यं न मनुरूपपुरुष-तद्वाक्यसामान्यविषयकम्, किंतु मन्त्रविषयकम्; यजमानस्येष्टिविशेषे यथावदननुष्ठिते प्रसक्तश्वित्रदोषपरिहारार्थं 'मानव्यौ ऋचौ धाय्ये भवतः' इति मन्त्रद्वयं विधाय तदर्थवादतया एतद्वाक्यस्य प्रवृत्ततया श्वित्रदोषपरिहारकत्वरूपस्य भेषजत्वस्य मन्त्रगतस्यैवालोच्यमानत्वादिति चेन्न—प्रकृतानुगुण्याय भेषजशब्दप्रयोगेऽपि 'मानव्यौ' इति निर्देशतः मनोः, अवददिति तत्कर्तृकशब्दप्रयोगस्य, यत्किञ्चेति तच्छब्दसामस्त्यस्य च स्पष्टमवगमात् सर्वमनुवाक्यप्रशंसामुखेनैव मानव्यमन्त्रग्राह्यत्वकथनमत्रेति मनुवचनसामान्यस्य भेषजत्वं हि निराबाधम् । तच्च भेषजत्वं सर्वात्मरोगनिवर्तकत्वम् । सूत्रेऽस्मिन् **इतरेषा**मिति पदेन व्यासस्यापि ग्रहणं युक्तमेव, 'स होवाच व्यासः पाराशर्यः' इति श्रुतेः । अथापि स्वेनैव स्वस्य ग्रहणं कथमिति शङ्का मा भूदिति कृत्वा भाष्ये तन्नोपात्तम् । **कपिलदृष्टे**ति । किं योगेनैव सर्वं साक्षात्कृतं कपिलेन, किं वा किञ्चित् तथा, किञ्चिच्चानुमानादिनाऽवसितमिति विवेचनीयम् । तत्र वेदावगतार्थविरोधिनाऽनुमानेन वेदोपबृंहणं न भवति । यद्विषयो योगः, तद्विषय एव च साक्षात्कारतुल्यज्ञानजनकत्वं योगस्येष्टमिति नान्यविषये तादृशं ज्ञानम् । अथ योगजधर्मबलात् वस्तुतद्गतधर्मादिसाक्षात्कार एव भवतीति मन्यते, स्यान्नाम ; अथापि स्थूलार्थोपासनेन सूक्ष्मार्थसाक्षात्कारोऽसंभावितः । यावच्च सुसूक्ष्मस्य परस्य ब्रह्मणो विषये विशिष्य योगो नानुष्ठीयते, तावत् अन्यविषयकयोगेन तद्दर्शनं न संभाव्यते । तदयमदृष्टपरब्रह्मा स्वदृष्टवस्तुमात्रे जगद्धेतुतां निरिचिकायेति नूनमेषा भ्रान्तिरेव । न हि स्वयं ब्रह्मादर्शनमात्रेण नेदं ब्रह्मात्मकमित्यब्रह्मात्मकत्वं द्रष्टुं पार्यते । एवमात्मनां विभुत्वाकर्तृत्वादिकम्, बुद्धिरूपायाः प्रकृतेरेव च कर्तृत्वादिकं तद्दृष्टमपि प्रत्यक्षानुमानागमविरोधादसत्यमिति निश्चीयत इति भावः ॥ २ ॥

भगवदवतारतया प्रसिद्धकपिलस्मृतेरेव क्षेपेऽन्यादृशयोगक्षेपस्य कैमुत्यसिद्धत्वादधिकाशङ्काया नावकाश इति पृच्छति **का पुन**रिति । **ईश्वरे**ति । क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर इति

विहितयोगस्य चाभिधानात् वक्तुर्हिरण्यगर्भस्य सर्ववेदवेदान्तप्रवर्तनाधिकृतत्वाच्च तत्स्मृत्या वेदान्तोपबृंहणं न्याय्यम्-इति ॥ परिहारस्तु—अब्रह्मात्मकप्रधानकारणवादात्, निमित्तकारणमात्रेश्वराभ्युपगमात्, ध्यानात्मकस्य योगस्य ध्येयैकनिरूपणीयस्य ध्येयभूतयोरात्मेश्वरयोर्ब्रह्मात्मकत्वजगदुपादानतादिसर्वकल्याणगुणात्मकत्वविरहेणावैदिकत्वात्, वक्तुर्हिरण्यगर्भस्यापि क्षेत्रज्ञभूतस्य कदाचिद्रजस्तमोभिभवसंभवाच्च योगस्मृतिरपि तत्प्रणीतरजस्तमोमूलपुराणवद् भ्रान्तिमूलेति न तया वेदान्तोपबृंहणं न्याय्यम्—इति ॥३॥ इति योगप्रत्युक्त्यधिकरणम् ॥२॥

३८. विलक्षणत्वाधिकरणम् २-१-३ ॥

## न विलक्षणत्वादस्य तथात्वं च शब्दात् । २ । १ । ४ ॥

पुनरपि स्मृतिविरोधवादी तर्कमवलम्बमानः प्रत्यवतिष्ठते--यत् साङ्ख्यस्मृतिनिराकरणेन जगतो ब्रह्मकार्यत्वमुक्तम्, तन्नोपपद्यते, अस्य प्रत्यक्षादिभिरचेतनत्वेनाशुद्धत्वेनानीश्वरत्वेन

तल्लक्षणादिति भावः । क्लेशाः अविद्याऽस्मिता-रागद्वेषाभिनिवेशाः; कर्मणी पुण्यापुण्ये; विपाकाः जन्मायुर्भोगाः; आशयः कर्मवासना । **वेदवेदान्तप्रवर्तने**ति । कपिलस्येव हिरण्यगर्भस्यापि जायमानकटाक्षभाक्त्वं श्रुतम्, (श्वे. ४. १२) 'हिरण्यगर्भं पश्यत जायमानम्' इति । साक्षाद् भगवन्तमाश्रितोऽसौ नानुपासितगुरुः । भगवदाविष्टश्च, तत्सृष्टप्रजात्वात् सर्वत्र सानुकम्पश्च, वेदवेदान्तप्रवचनार्थे भगवतैव नियुक्तश्च, मान्यतयाऽभिमतमन्वाद्युपजीव्यतया ततोऽधिकं गौरवयितव्यश्चेति भावः । **मात्रेश्वरे**ति । ईश्वरत्वमपि न यथावस्थितं तदिष्टम्; पुरुषविशेषत्वादस्य पुरुषान्तरवत् निर्विकारत्वं निर्विशेषत्वरूपमेवेति स्रष्टृत्वनियन्तृत्वादीनामपि प्रकृतिपरिणामगततया प्रतिबिम्बकल्पमेवैश्वर्यमित्यभिधानात् । योगप्रवर्तकोऽपि न वेदान्तविहितयोगप्रवर्तक इत्याह **ध्यानात्मकस्ये**ति । **तत्प्रणीतरजस्तमोमूलपुराणव**दिति । मात्स्ये, "संकीर्णाः सात्त्विकाश्चैव राजसास्तामसास्तथा" इति ब्रह्मकल्पवैविध्यं प्रदर्श्य, तत्तत्कल्पोक्तपुराणानि तत्तद्गुणमयचतुर्मुखकृतानि, ततः संकीर्णेषु सरस्वत्यादिमाहात्म्यं तामसेषु अग्निशिवमाहात्म्यं राजसेषु चतुर्मुखमाहात्म्यञ्च वर्ण्यते इति विभज्य, "सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धाः गमिष्यन्ति परां गतिम्" इति सात्त्विकोपादेयत्वकथनाद् हिरण्यगर्भकृतानामन्येषां यथाश्रुतार्थत्वे भ्रान्तिमूलत्वस्य स्पष्टत्वात् योगोऽपि तत्तुल्ययोगक्षेम एवेति भावः ॥ ३ ॥

सांख्ययोगस्मृतिविरोधवादः तयोर्मन्वादिस्मृत्यपेक्षया दौर्बल्यप्रदर्शनेन निरस्तः । स्मृत्यन्तरविरोधश्च 'एतेन शिष्टापरिग्रहा अपी'ति विलक्षणत्वाधिकरणात् पश्चादेव निरसिष्यते । अतो मध्यगतं विलक्षणत्वाधिकरणं न केवलतर्कविरोधप्रदर्शनेनोत्थितम् । भोक्त्रापत्त्यधिकरणप्रभृत्येव तु तथा । विलक्षणत्वाधिकरणं तु पुनः सांख्यस्मृतेः प्रकारान्तरेण प्राबल्योपपादनेन स्मृतिविरोधवादेनैवोत्थितमिति विमृश्यावतारयति **पुनरपी**ति । प्रमाणत्वाभिमतमनुस्मृतिवाक्यत एव; 'यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' इति तर्काङ्गकप्रमाणस्यैव प्रमाणत्वाभिधानात् सांख्यस्यैव तथात्वात् मन्वादिस्मृतीनां बहुत्वेऽप्यतथात्वादनादरणीयत्वेवेति पूर्वपक्ष्याशयः । **अचेतनत्वेने**ति जडप्रपञ्चमात्रग्रहणे, अचेतनत्वं यथाश्रुतमेव ।

दुःखात्मकत्वेन चोपलभ्यमानस्य चिदचिदात्मकस्य जगतः भवदभ्युपेतात् सर्वज्ञात् सर्वेश्वरात् हेयप्रत्यनीकादानन्दैकतानाद् ब्रह्मणो विलक्षणत्वात्। न केवलं प्रत्यक्षादिभिरेव जगतो वैलक्षण्यमुपलभ्यते ; शब्दाच्च तथात्वं--विलक्षणत्वमुपलभ्यते। (तै.आनं. ६-३) "विज्ञानं चाविज्ञानं च", (कौ.३-१) एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः", (मु.३-१-२) "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः" (श्वे- १-८) "अनीशश्चात्मा बध्यते भोक्तृभावात्" इत्यादिभिः कार्यस्य हि जगतोऽचेतनत्वदुःखित्वादयो निर्दिश्यन्ते। यद्धि यत्कार्यम्, तत् तस्मादविलक्षणम्, यथा मृत्सुवर्णादिकार्यं घटरुचकादि। अतो ब्रह्मविलक्षणस्यास्य जगतस्तत्कार्यत्वं न संभवतीति साङ्ख्यस्मृत्यनुरोधेन कार्यसलक्षणं प्रधानमेव कारणं भवितुमर्हति।

अवश्यं च शास्त्रस्यानन्यापेक्षस्यातीन्द्रियार्थगोचरत्वेऽपि तर्कोऽनुसरणीयः ; यतस्सर्वेषां प्रमाणानां क्वचित्क्वचिद्विषये तर्कानुगृहीतानामेवार्थनिश्चयहेतुत्वम्। तर्को हि नाम अर्थस्व-

---

अन्यथा असर्वज्ञत्वमचेतनत्वमिति विवक्षणीयम्। चेतनाचेतनयोर्यथायथं धर्मान्वयः। **सर्वज्ञा**दित्यादिप्रतिनिर्देशक्रमोऽपि यथार्हं भाव्यः। इदं न ब्रह्मकार्यं तद्विलक्षणत्वादिति प्रयोगे हेत्वसिद्धिं परिहरति **नकेवल**मित्यादिना। सूत्रे **अस्ये**त्येतत् **तथात्व**मित्यनेनाप्यन्वेति। **चकारस्य शब्दा**दित्यनेनान्वयः। श्रोत्रियस्य शब्दप्रमाणेऽत्यादरात् तस्य विशिष्य प्रदर्शनेन चकारेणान्यग्रहणम्। **शब्दा**दित्यस्य शब्दज्ञातमित्यर्थः। **रुचकं** कण्ठाभरणविशेषः। **सलक्षणं प्रधानमेवे**ति। ननु चेतनाचेतनात्मकप्रपञ्चे चेतनांशे कथं प्रधानसालक्षण्यमिति चेन्न ; सांख्यैश्चेतनांशस्य कार्यत्वानंगीकारात्। देहिनां देहांश एवोत्पत्तिपर्यवसानात्।

नन्वनुमानोपष्टब्धा सांख्यस्मृतिरादर्तव्येति न युक्तम्-अनुमानानुपजीवनात्। शब्देन शाब्दबोधे जनितेऽतीन्द्रियार्थविषयकानुमानस्य तद्विलक्षणस्य तत एव बाधो हि प्रत्युत युक्त इत्यत्र, तदपेक्षा शास्त्रपर्यन्तानां सर्वेषां प्रमाणानामनपलप्येति दर्शयति **अवश्यञ्चे**ति। **अपि**शब्दस्य **अनन्यापेक्षस्ये**त्यत्र **अतीन्द्रियार्थगोचरत्वे** इत्यत्र चान्वयः। स्वप्रधानानुमानाद्यनपेक्षत्वेऽपि शब्दः स्वाङ्गभूततर्कापेक्षां न जहातीति भावः। अनुमानानपेक्षायामपि तर्कापेक्षां दर्शयितुं अनुमानवैलक्षण्येन तर्कस्वरूपं निर्वक्ति **तर्को हि नामे**ति। निरुक्तमिदं **न्यायदर्शने,** "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इति। कोटिद्वयाद्युल्लेखेन संशयप्रसक्तौ एककोटिनिर्धारणे प्रमाणेन कार्ये निर्णयकोटेरुत्कटत्वग्राही, एवं स्यादित्याकारकस्तर्कः सहकारी। एवं वा तथा वेति संशयाकारः। एवमेवेति निर्णयाकारः। तद्धेतुश्च प्रमाणम्। तदुपकारी च एवं स्यादित्येकतरकोटिप्राबल्यग्राहकस्तर्क इति भेदः। नायं तर्कोऽनुमानमिति भावः। इदं न ब्रह्मकार्यं तद्विलक्षणत्वादिति प्रागुक्तानुमानञ्चेदृशतर्कोपकारकमात्रम्। अथवा यदीदं ब्रह्मकार्यं स्यात्, तद्विलक्षणं न स्यादिति तर्कप्रयोग एव तत्राभिमतः। तर्कभूतमनुमानं प्रमाणाङ्गमिति वाऽस्तु। तर्कश्चायं प्रत्यक्षेऽप्यपेक्ष्यते ; स्थाणुपुरुषसंशये पुरुषत्वसाधकहस्तपादादिचलनादिदर्शनमुखेन

भावविषयेण वा सामग्रीविषयेण वा निरूपणेनार्थविशेषे प्रमाणं व्यवस्थापयत् तदितिकर्तव्यतारूपमूहापरपर्यायं ज्ञानम्। तदपेक्षा च सर्वेषां प्रमाणानां समाना। शास्त्रस्य तु विशेषेणाऽऽकाङ्क्षासंनिधियोग्यताज्ञानाधीनप्रमाणभावस्य सर्वत्रैव तर्कानुग्रहापेक्षा। उक्तं च मनुना, (म. स्मृ. १२-१०६) "यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" इति। तदेव हि तर्कानुगृहीतशास्त्रार्थप्रतिष्ठापनं श्रुत्या च, (बृ. ६५-६) " मन्तव्यः " इत्युच्यते।

अथोच्येत—श्रुत्या जगतो ब्रह्मैककारणत्वे निश्चिते सति तत्कार्यस्यापि जगतश्चैतन्यानुवृत्तिरभ्युपगम्यते। यथा चेतनस्य सुषुप्तिमूर्च्छादिषु चैतन्यानुपलम्भः, तथा घटादिष्वपि सदेव चैतन्यमनुद्भूतम्; अत एव चेतनाचेतनविभागः—इति॥ नैतदुपपद्यते; यतो नित्यानुपलब्धिरसद्भावमेव साधयति। अत एव चैतन्यशक्तियोगोऽपि तेषु निरस्तः। यस्य हि [न] क्वचित् कदाचिदपि यत्कार्यानु(र्यो)पलब्धिः, तस्य तत्कार्यशक्तिं ब्रुवाणो वन्ध्यासुतसमितिषु तज्जननीनां प्रजननशक्तिं ब्रूताम्। किञ्च वेदान्तैर्जगतो ब्रह्मोपादानताप्रतिपादननिश्चये सति घटादीनां चैतन्यशक्तेः चैतन्यस्य वाऽनुद्भूतस्य सद्भावनिश्चयः, तन्निश्चये सति वेदान्तैर्जगतो ब्रह्मोपादानताप्रतिपादननिश्चय इतीतरेतराश्रयत्वम्। विलक्षणयोर्हि कार्यकारणभावः प्रतिपादयितुमेव न शक्यते॥

किं पुनः प्रकृतिविकारयोः सालक्षण्यमभिप्रेतम्, यदभावात् जगतो ब्रह्मोपादानता-

---

पुरुषत्वकोटावौचित्यपरिशीलने सति अयं पुरुष इति चाक्षुषस्यावधारणस्य जायमानत्वात्। **अर्थस्वभावेति**। **अर्थो** निश्चेयार्थः पुरुषादिः। तत्स्वभावनिरूपणं हस्तपाद्यवयव-तत्कार्यचेष्टा-स्वरादि-तत्कारण-समावेशादिविवेचनम्। **सामग्रीविषयनिरूपणम्** तज्ज्ञानहेतुत्वेन तत्रतत्राभिमतेन्द्रिय-लिङ्ग-शब्द-तदनुबन्धिस्वरूपगतदुष्टत्वादुष्टत्वादिचिन्तनम्। विषयस्य प्रमाणस्य वा स्वभावशोधनमूल ऊह इत्युक्तं भवति। धूमेनाग्निसाधनेऽर्थस्वभावविषयस्तर्कः, यदि अग्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति। अथाग्निव्याप्तिरेव धूमे कुत इत्याक्षेपे, 'धूमोऽस्तु अग्निर्मास्तु' इत्येवंरूपे, यदि अग्निं विनापि धूमः स्यात्, तर्हि धूमोऽग्निजन्यो न स्यात्, धूमार्थी नाग्नौ प्रवर्तेतेत्येवं व्याप्तिरूपसामग्रीनिरूपणजन्यस्तर्क इत्येवं भाव्यम्। व्याहतिरूपविरोध-असंभवरूपेण द्विविधस्तर्कविशेष इष्यते **प्रज्ञापरित्राणे** (न्या. प. २-४)। यदि जननी स्यात्, वन्ध्या न स्यादिति विरोधः; यदि शशे शृङ्गं स्यात्, अद्यापि भवेत्, अध्यक्ष्येतेत्येवं द्वितीय इति। तदुभयमपि वाऽस्तार्थस्वभाव-सामग्रीरूपद्वयनिरूपणजन्यत्वेन विवक्षितमस्तिवत्यलम्।

जगत् चेतनं ब्रह्मकार्यत्वादिति शंकते **अथोच्येते**ति। उक्तानुमाने बाधं दर्शयति पूर्वपक्षी **नैतदि**ति। हेत्वसिद्धिश्च दर्शयति **किञ्चे**ति। घटादिषु चैतन्यनिश्चयानन्तरमेव ब्रह्मकार्यत्वनिश्चय इति कुत इत्यत्राह **विलक्षणयोर्ही**ति।

ननु चेतनाचेतनत्वरूपवैलक्षण्ये सत्यपि प्रकारान्तरेण सालक्षण्यग्रहणेन कार्यकारणभावनिश्चयः स्यादिति विवक्षुः पूर्वपक्षिणं पृच्छति **किं पुनरि**ति। यद्वस्तु सर्वदा यद्वत्तया दृश्यते, स तस्य वस्तुनः

प्रतिपादनासंभवं ब्रूषे। न तावत् सर्वधर्मसारूप्यम्, कार्यकारणभावानुपपत्तेः। न हि मृत्पिण्डकार्येषु घटशरावादिषु पिण्डत्वाद्यनुवृत्तिर्दृश्यते। अथ येनकेनचिद्धर्मेण सारूप्यम्, तत् जगद्ब्रह्मणोरपि सत्तादिलक्षणं संभवति॥ तदुच्यते—येन स्वभावेन कारणभूतं वस्तु वस्त्वन्तराद्व्यावृत्तम्, तस्य स्वभावस्य तत्कार्येऽप्यनुवृत्तिः कार्यस्य कारणसालक्षण्यम्। येन ह्याकारेण मृदादिभ्यो हिरण्यं व्यावर्तते, तदाकारानुवृत्तिस्तत्कार्येषु कुण्डलादिषु दृश्यते। ब्रह्म च हेयप्रत्यनीकज्ञानानन्दैश्वर्यस्वभावम्, जगच्च तत्प्रत्यनीकस्वभावमिति न तत् उपादानम्॥ ननु च वैलक्षण्येऽपि कार्यकारणभावो दृश्यते—यथा चेतनात्पुरुषादचेतनानि केशनखदन्तलोमानि जायन्ते; यथा चाचेतनाद् गोमयात् चेतनो वृश्चिको जायते; चेतनाच्चोर्णनाभेरचेतनस्तन्तुः॥ नैतदेवम्, यतस्तत्राप्यचेतनांश एव कार्यकारणभावः॥ ४॥

अथ स्यात्—अचेतनत्वेनाभिमतानामपि चैतन्ययोगः श्रुतिषु श्राव्यते, (यजु.५-५-२) "तं पृथिव्यब्रवीत्", (अष्ट.१-५-३) "आपो वा अकामयन्त" (बृ. ८-१-७) "ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः" इति। नदीसमुद्रपर्वतादीनामपि चेतनत्वं पौराणिका आतिष्ठन्ते; अतो न वैलक्षण्यम् इति। अत उत्तरं पठति—

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्। २। १। ५॥

तुशब्दः चोदिताशङ्कानिवृत्त्यर्थः पृथिव्याद्यभिमानिन्यो देवताः, "तं पृथिव्यब्रवीत्" इत्यादिषु पृथिव्यादिशब्दैर्व्यपदिश्यन्ते। कुतः? विशेषानुगतिभ्याम्। विशेषः विशेषणम्,

---

स्वभावः, यथा मृदादेर्मृत्त्वादि; न तु पिण्डत्वादीति भावेनाह येन स्वभावेनेति।

जगद्ब्रह्मणोर्न तद्विलक्षणत्वादित्यनुमानं व्यभिचरितम्, यद् यद्विलक्षणम्, तत् न तत्कार्यमिति व्याप्तेर्भङ्गदर्शनादिति पृच्छति ननुचेति। अचेतनांश एवेति। अनेनैव न्यायेन प्रपञ्चे चेतनांशस्याकार्यत्वात् प्रधानस्य सर्वकारणत्वं सुस्थमिति भावः।

नन्वन्यगतं चैतन्यमचैतन्यं वाऽनुपलभ्यमानत्वादनुमानेनैव साध्यम्। यावत् साध्यते, तावदेव शास्त्रेण चैतन्ये उपदिश्यमाने नानुमानमुत्तिष्ठति। यस्तु शब्दाच्चेति शब्दप्रमाणमचैतन्यविषयेऽस्तीत्युपन्यासः—स न साधकः, तस्य शब्दस्य स्पष्टशब्दान्तरविरोधेनान्यार्थकत्वात्। अतः तद्विलक्षणत्वादिति हेतुरसिद्ध एवेति कश्चित् शंकते अथस्यादिति। विशेषणम् विशेषशोधनम्। नन्वस्य व्याकरणवाक्यस्य त्रिवृत्करणसमनन्तरसर्वव्यष्टिविषयकतया व्यष्टिभूताभिमानिदेवतासृष्टेरप्यत्र वक्तव्यत्वात् पूर्वं तदभावात् कथं देवता इति तद्ग्रहणम्। न च देवतापदेन परमात्मन एव ग्रहणेन तदभिमान एव विवक्षितोऽस्तु इति वाच्यम्—तस्याभिमानिदेवतात्वाभावात् सर्वान्तर्यामितया विवक्षितानुपयोगादिति चेत्—देवताशब्दप्रयोगात् भूतेषु अभिमानिदेवतासंबन्ध एष्टव्य इत्येव ह्यत्रोच्यते। पूर्वमभावेऽपि भविष्यद्देवतासंबन्धमेव मनसिकृत्य तत्संबन्धादिसंपत्त्यर्थव्यष्टिसृष्टिसंकल्पस्य परमात्मक्रियमाणस्यात्र कथनं युज्यत एवेति। अत्र इमास्तिस्रो देवता इत्यस्य प्रकृततेजोबन्नरूपभूतत्रयाभिमानिदेवतात्रयमिति

देवताशब्देन विशेष्य पृथिव्यादयोऽभिधीयन्ते; (छा.६-३-२) "हन्ताऽहमिमास्तिस्रो देवताः" इति तेजोऽबन्नानि देवताशब्देन विशेष्यन्ते; (कौ. १०) "सर्वा ह वै देवता अहंश्रेयसे विवदमानाः", ... "ते देवाः प्राणे निःश्रेयसं विदित्वा" इति च। अनुगतिः-अनुप्रवेशः; (ऐत. १-२-४) "अग्निर्वाग् भूत्वा मुखं प्राविशत्। वायुः प्राणो भूत्वा नासिके प्राविशत्। आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्।" इत्यादिना वागाद्यभिमानित्वेनाग्न्यादीनामनुप्रवेशः श्रूयते।

अतो जगतश्चेतनत्वेन विलक्षणत्वात् ब्रह्मकार्यत्वानुपपत्तेस्तर्कानुगृहीतस्मृत्यनुरोधेन जगतः प्रधानोपादानत्वं वेदान्तैः प्रतिपाद्यते (इति प्राप्ते) इति—एवं प्राप्तेऽभिधीयते—

## दृश्यते तु। २। १। ६॥

तुशब्दात् पक्षो विपरिवर्तते। यदुक्तं जगतो ब्रह्मविलक्षणत्वेन ब्रह्मोपादानत्वं न संभवति-इति—तदयुक्तम्, विलक्षणयोरपि कार्यकारणभावदर्शनात्। दृश्यते हि माक्षिकादेर्विलक्षणस्य क्रिम्यादेस्तस्मादुत्पत्तिः॥ ननूक्तमचेतनांश एव कार्यकारणभावः तत्र सालक्षण्यम्॥ सत्यमुक्तम्; न तावता कार्यकारणयोर्भवदभिमतसालक्षण्यसिद्धिः, यथा कथञ्चित्सालक्षण्ये सर्वस्य सर्वसालक्षण्येन सर्वस्मात्सर्वोत्पत्तिप्रसङ्गभयात् वस्तुनो वस्त्वन्तराद् व्यावृत्तिहेतुभूतस्याऽऽकारस्यानुवृत्तिः सालक्षण्यं भवताऽभ्युपेतम्; स तु नियमो माक्षिकादिभ्यः क्रिम्याद्युत्पत्तौ न दृश्यत इति ब्रह्मविलक्षणस्यापि जगतो ब्रह्मकार्यत्वं नानुपपन्नम्। न हि मृद्धिरण्य - घटमकुटादिष्विव वस्त्वन्तरव्यावृत्तिहेतुभूतासाधारणाकारानुवृत्तिर्माक्षिकगोमयक्रिमिवृश्चिकादिषु दृश्यते॥ ६॥

## असदिति चेन्न प्रतिषेधमात्रत्वात्। २। १। ७॥

यदि कार्यभूताज्जगतः कारणभूतं ब्रह्म विलक्षणम्, तर्हि कार्यकारणयोर्द्रव्यान्तरत्वेन कारणे परस्मिन् ब्रह्मणि कार्यं जगन्न विद्यत इति असत एव जगत उत्पत्तिः प्रसज्यत इति

---

नार्थः; देवतारूपजीवेऽनुप्रवेशस्यात्र जीवे परमात्मनि चावक्तव्यत्वात्। भौतिकदेहेऽनुप्रवेश एव हि विवक्षितः। अतः व्याकरिष्यमाणदेवताभिमानविषयीभविष्यन्ति त्रीणि भूतानीत्यर्थः इति भावः **देवताशब्देन विशेष्ये**त्यनेनाप्याविष्क्रियते। 'सर्वा ह वै देवता' इत्यादौ तु देवतानां विशेष्यत्वमेव। तदापि व्यावर्तकत्वमक्षतम्। **अहंश्रेयसे** स्वोत्कर्षाय। **निःश्रेयसम्** नितरां श्रैष्ठ्यम्। **वाग्भूत्वा** वागभिमानी भूत्वा। एवमनेन पूर्वपक्षी तटस्थशंकां परिहृत्य पूर्वसूत्रारब्धं पूर्वपक्षमुपसंहरति **अतो जगत** इति। तटस्थशंकापरिहारप्रकारोऽयं सिद्धान्तिनोऽपि संमत एव॥ ५॥

**न हीति**। वस्तुत्वचेतनत्वाचेतनत्वपृथिवीत्वादिसामान्यधर्मातिरिक्तः हिरण्यादिव्यावृत्तमृत्त्वादिरिव विशेषाकारो माक्षिकत्वादिः क्रिम्यादौ नेति, 'यो यद्विलक्षणः, न स तत्कार्यः' इति नियमभङ्गात् हेतुर्दुष्ट इति भावः॥ ६॥

**न विद्यत** इति। तादात्म्येनेति शेषः। ब्रह्म जगन्न भवतीति वक्तव्ये **ब्रह्मणि जगन्न विद्यत**

**चेत्—नैतदेवम्। कार्यकारणयोः सालक्षण्यनियमप्रतिषेधमात्रमेव हि पूर्वसूत्रेऽभिप्रेतम्; न तु कारणात् कार्यस्य द्रव्यान्तरत्वम्। कारणभूतं ब्रह्मैव स्वस्माद्विलक्षणजगदाकारेण परिणमत इत्येतत्तु न परित्यक्तम्। क्रिमिमाक्षिकयोरपि हि सति च वैलक्षण्ये कुण्डलहिरण्ययोरिव द्रव्यैक्यमस्त्येव॥ ७॥**

---

इत्युक्तिः, अन्यदित्यप्रयुज्य असदिति कूलणात् सांख्यमते कार्योत्पत्तिस्थले स्थिताकाराभिव्यक्तेरेव स्वीकारात् पूर्वपक्षे सांख्यव्यवहारच्छाया युक्तेति। सिद्धान्ते तु रीतिमिमां विसृज्य, 'न तु कारणात् कार्यस्य द्रव्यान्तरत्वम्' इत्येव वक्ष्यति। सूत्रे **मात्र**पदेन न प्रलये जगदाकारसत्त्वसंमतिः क्रियते; किंतु द्रव्यैक्यसंमतिः। **विलक्षणजगदाकारेण परिणमत** इति। ननु जगत्पदेन किं प्रपञ्चविशिष्ट-ब्रह्मग्रहणम्, उत प्रपञ्चमात्रस्य। आद्ये वैलक्षण्यमसिद्धम्। अन्त्ये, ब्रह्मणो न तद्रूपेण परिणामः। यदि च विशेषणभूतप्रपञ्चं प्रति विशेष्यस्य ब्रह्मण उपादानत्वमत्र विवक्षितम्, तर्हि द्रव्यैक्यकथनमप्यत्र न युज्यते—उच्यते। पूर्वपक्षी शुद्धस्य जगतः शुद्धब्रह्मकारणकत्वमेव विलक्षणत्वहेतुना निरस्यतीति, सिद्धान्ती विलक्षणत्वरूपहेतोः साधकत्वं व्यभिचारान्न भवतीत्येतावदेव ह्यत्राह। यदि श्रौतानुपपत्तिः कापि न स्यात्, ब्रह्म जगद्रूपेण परिणन्तुमर्हतीति न वैलक्षण्यस्याकार्यत्वसाधकत्वं वा अनैक्यसाधकत्वं वा ऽस्तीति प्रत्युच्य स निरस्यते। भाष्ये **द्रव्यान्तरत्वम्, परिणमतेइत्येतत्तु न परित्यक्त**मिति वाक्ययोः 'श्रौतानुपपत्त्यभावे' इति पदपूरणमर्थसिद्धम्; गूढोक्तेरभिमतत्वात् तदप्रयोगः। शेषमुत्तर-सूत्रावतरणे। **क्रिमी**त्यादि। अयं भावः—मृदकार्यपटादिव्यावृत्तस्य मृत्त्वरूपाकारस्य मृत्कार्यघटादावुपल-म्भवत् माक्षिकाकार्यवस्तुव्यावृत्तस्य माक्षिकगताकारस्य क्रिमौ नोपलम्भ इति तत्र वैलक्षण्यं दुरपह्नवम्। तत्र कार्यकारणभावो भवदिष्ट इति तत्रासत्कार्यवादप्रसंगो भवता कथं परिह्रियते। सत्यपि वैलक्षण्ये द्रव्यैक्यमस्तीत्येव। तदत्रापि तुल्यमिति। ननु जगत्र ब्रह्मकार्यं तद्विलक्षणत्वादिति हेतुस्तावद् दूषित एव। एवंस्थिते अनेन सूत्रेणासत्कार्यप्रसञ्जनेन पूर्वहेतुदूषणपरिहारः कथमिति चेत्—उच्यते। गोमयवृश्चिकादिस्थले गोमयादिमात्रं नोपादानम्, किन्तु संततपवमानपवनाद्यानीतद्रव्यान्तरांशा अपि। गोमयमपि वृश्चिकगतकिञ्चिदंशोपादानमेव। तदंशश्च कारणे पूर्वं सन्नेव। तत्र सालक्षण्यानुपलम्भस्तु भूयोंशान्तरैरभिभवात। न चैवं ब्रह्मजगद्विषये सुवचम्; ब्रह्मातिरिक्तस्य कारणस्याभावात्। एवञ्च सालक्षण्यं सर्वत्र कार्यकारणस्थलेऽस्त्येव। न च वैलक्षण्यस्य हेतोरप्रयोजकत्वम्; ययोर्वैलक्षण्यम्, तयोर्विभिन्नद्रव्यत्वमिति नियमादसत्कार्यवादप्रसंगादिति पूर्वपक्षी मन्यते। सिद्धान्त्याशयस्तु गोमयातिरिक्त-यादृशभूयोंशमूलकः पूर्णवृश्चिकः, तादृशांशसालक्षण्यं वा कुतो नोपलभ्यते। प्रकृतिमहदहङ्कारतन्मात्र-भूतेषु भवदभिमतक्रमिककार्येषु तत्तत्कारणातिरिक्तावृत्तिस्तदेकवृत्तिः क आकारः तत्तत्कार्ये इष्यते। भौति-केषु देहेषु च भूतवैलक्षण्यं बहु लक्ष्यते। एवं तृणक्षीर-दधिघृत-अन्नरस रक्तादिधातुप्रभृतिष्वपि भाव्यम्। तस्मात् परिणामो द्विविधः सरूपो विरूपश्च; द्वितीय एव विवर्त इत्युच्यते; सर्वत्र द्रव्यैक्यं निराबाधमिति विलक्षणत्वस्य द्रव्यभेदापादकत्वायोगात् अप्रयोजकत्वात् व्यभिचरितत्वाच्च न तस्याकार्यत्व-

अत्र चोदयति—

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्। २। १। ८॥

अपीताविति अपीतिपूर्वकसृष्ट्यादेः प्रदर्शनार्थम्। (छा. ६-२-१) "सदेव सोम्येदमग्र आसीत्", (ऐत. १-१-१) "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिषु अप्ययावस्थोपदेशपूर्वकत्वदर्शनात् सृष्ट्यादेः॥ यदि कार्यकारणयोर्द्रव्यैक्यमभ्युपेतम्, तदा कार्यस्य जगतो ब्रह्मण्यप्ययसृष्ट्यादिषु सत्सु, ब्रह्मण एव तत्तदवस्थान्वय इति कार्यगताः सर्वे एवापुरुषार्थाः ब्रह्मणि प्रसज्येरन्, सुवर्णं इव कुण्डलगता विशेषाः। ततश्च वेदान्तवाक्यं सर्वमसमञ्जसं स्यात्; (मु. १-१-६) "यः सर्वज्ञः सर्ववित्", (छा. ८-१-१) "अपहतपाप्मा विजरो

---

साधकतेति॥ अस्य सूत्रस्यार्थमपि कश्चित् छद्मनोऽर्थः—सालक्षण्यनियमप्रतिषेधमात्रमस्माभिः कृतम्। अस्माभिः प्रकृते कार्यकारणयो द्रव्यैक्यासंभवो वा सालक्षण्याभावोऽपि वा नेष्टः। विशिष्टे कार्यकारणभावस्येष्टत्वात्। भवदुक्तसालक्षण्याभावं कृत्वा चिन्तया तु हेतोर्दुष्टत्वं वैलक्षण्यस्य द्रव्यभेदासाधकत्वञ्चाबोचामेति। ननु सिद्धान्ते सालक्षण्यस्येष्टत्वे तदेव ऋजुभाषिणा सूत्रकृता कथं साक्षान्नोक्तमिति चेत्-न, तथा हि सति वैलक्षण्यस्याकार्यत्वसाधकत्वमङ्गीकृतं स्यात्। सतर्कपुरस्कारेण विरोधोद्भावको हि तर्कदूषणेनैव निरसनीय इति च भाव्यम्॥ ७॥

उपरि सूत्रद्वयं ब्रह्मणो जगदुपादानत्वे हेयास्पदत्वशंकातत्परिहारपरम्। ननु विलक्षणत्वरूपहेतोः अकार्यत्वसाधकत्वं पूर्वपक्षीष्टं सिद्धान्तिना दूष्यते। तदुपरि हेयास्पदत्वशंकायाः पूर्वपक्षिकृतायाः प्रकृते कथमुपयोगः। न ह्येतावता विलक्षणत्वस्य हेतुत्वसंभवो दर्शितो भवतीति चेत्-उच्यते-विलक्षणत्वं द्रव्यभेदसहं तदसहञ्चेति द्विविधम्। तत्र भेदासहं विलक्षणत्वं हेतुर्मा भूत्राम। भेदसहं तु अकार्यत्वसाधकमेव; अन्यथा असत्कार्यवादप्रसंगात्। प्रकृते च कार्यभूतजगन्निष्ठावस्थायाः ब्रह्मण्यभावात् द्रव्यभेदान्न कारणत्वम्। द्रव्यैक्यस्वीकारे तु जगद्गतसर्वहेयास्पदत्वं ब्रह्मणः स्यात्। अतः कार्यकारणद्रव्यैक्यं न परित्यक्तमित्युक्तं न घटते। न च भेदे वैलक्षण्ये च सत्यपि प्रपञ्चगतावस्थां प्रति शरीरात्मभावबलात् ब्रह्माप्याश्रय इति कार्यकारणैक्यनिर्वाह इति वाच्यम्-शरीरात्मभावस्यैव दुर्वचत्वात्, शरीरगतावस्थायाः शरीरिण्यङ्गीकारे तुल्यनयेन सर्वेषामपि हेयानामङ्गीकार्यत्वप्रसंगाच्च; रुमाकाष्ठादिस्थले कादाचित्कसंबन्धेऽपि लवणत्वादिहेयसंबन्धदर्शनेन निरन्तरसंबन्धशालिनि ब्रह्मणि कैमुत्येन प्रपञ्चहेयाश्रयत्वस्य प्रसंगाच्च। अतोऽसंबन्धस्वभावं ब्रह्म न हेयप्रपञ्चकारणम् अखिलहेयप्रत्यनीकत्वादिति पूर्वपक्ष्याशयः। सिद्धान्ती तु तद्गतदोषप्रत्यनीकमपि तत्कारणं लोकदृष्टमित्याहेति।

**सृष्ट्यादेः प्रदर्शनार्थम्**इति आदिना स्थितिग्रहणम्। सृष्टिस्थितिप्रलयकालिककार्यगतसर्वहेयवत्त्वापत्तिर्विवक्षितेति भावः। प्रथमोपस्थितां सृष्टिं विहाय अपीतिकथनं श्रुतौ अपीतेरेव प्रथमनिर्देशादित्याह **सदेवे**ति। ननु अपीतावित्यपि न वक्तव्यमिति चेत्-न; कारणात् कार्यस्य विभागे स्थिते कारणांशे हेयप्रत्यनीकत्वकथनेऽपि अविभागरूपाप्ययकाले तदापत्तिरपरिहार्येति सांख्याशयात्। अपीतिकालमादाय

विमृत्युः", (श्वे. ६-८) "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते", (मु. ३-१-१) "तयोरन्यः पिप्पलं स्वाद्वत्ति", (श्वे. १-८) "अनीशश्चात्मा बध्यते भोक्तृभावात्", (मु. ३ १-२) "अनीशया शोचति मुह्यमानः" इति एकस्मिन्नेव वस्तुनि एषां परस्परविरुद्धानां प्रसक्तेः ॥

अथोच्येत—चिदचिद्वस्तुशरीरकस्य परस्यैव ब्रह्मणः कार्यकारणभावात्, शरीरभूत-चिदचिद्वस्तुगतत्वाच्च दोषाणाम्, न शरीरिणि ब्रह्मणि कार्यावस्थे कारणावस्थे च प्रसङ्ग इति—तदयुक्तम्; जगद्ब्रह्मणोः शरीरशरीरिभावस्यैवासंभवात्। संभवे च ब्रह्मणि शरीर-संबन्धनिबन्धनदोषाणामनिवार्यत्वात्। न हि चिदचिद्वस्तुनोः ब्रह्मणश्शरीरत्वं संभवति।

शरीरं हि नाम कर्मफलरूपसुखदुःखभोगसाधनभूतेन्द्रियाश्रयः पञ्चवृत्तिप्राणाधीन-

---

हेयप्रत्यनीकत्वनिर्वाह इत्यपि दुर्वचमिति ज्ञापनार्थं वा। विलक्षणयोः कार्यकारणभावे सत्यपि कार्यस्य अन्ततः स्वलयाधारेण सालक्षण्यं वक्तव्यम्; यथा वृश्चिकस्य पृथिव्यां लयात् तत्सालक्षण्यम्। एवमत्र ब्रह्मातिरिक्तलयाधाराभावात् ब्रह्मणः तद्वत्ताप्रसंगोऽस्त्येवेति सूचनार्थं वा। अपीताविति पदादर्थान्तरमपि लभ्यते। अपीतौ--इतावपि इति; पदद्वयम्। ब्रह्मणो जगदितौ जगत्प्राप्तौ जगता शरीरात्मभावसंबन्धेऽपि शरीरदोषाणां शरीरिणि प्रसंग एव। अपिशब्दात्, साक्षादैक्ये तु सुतरामिति लभ्यते। तद्वत्प्रसंगादिति। तद्वतः तद्विशिष्टस्य सतः प्रसंगात्। भोक्त्रापत्तेरित्यत्रेव विग्रहः। तद्वत्त्वप्रसंगात् हेयवत्त्वप्रसंगादिति यावत्। वतिप्रत्यय इति स्वीकारे तद्वत् जगतौल्यस्य प्रसंगादित्यर्थः। विलक्षणयोः कार्यकारणभाववादिनाऽपि कार्यगतावस्थायाः कारणे स्वीकार्यतया जगद्वत् सर्वधर्मप्रसंग इति भावः।

सिद्धान्त्याशयं निरसितुमुद्घाटयति अथोच्येतेति। अनन्तरे सिद्धान्तसूत्रे बाल्युवादिदृष्टान्तसद्भाव एवोक्तः; न तु सिद्धान्त्यभिमतस्य शरीरत्वस्य निर्वचनमपूर्वं किमपि। अतो निर्वचनासंभवाशंकापेक्षया अनिष्टान्तरापत्त्याशंकनमभिमतमिति युक्तमित्यालोच्य, द्वितीयं दोषमपि दर्शयति संभवे चेति। तत्र दृष्टान्तपदेन शरीरात्मदृष्टान्तस्याभिमतत्वात् शरीरात्मभावासंभवशंकापरिहारोऽप्यत्र सूत्रकारहृद्गत इति भाष्ये इहैवासंभवविचारविस्तर आदृतः। शरीरं हि नामेति। भौतिकं शरीरेन्द्रियविषयभेदात् त्रिविधं विभजन् वैशेषिकदर्शनभाष्यकारः प्रशस्तदेवः वृक्षादि स्थावरं विषय एवान्तर्भावयति; न शरीरे। तेन जीवाधिष्ठितानामपि तादृशानां शरीरशब्दप्रसिद्धिर्नास्तीति सिद्धौ, का कथा सर्वभौतिक-भूत-तदितराचेतन-चेतनसर्वसाधारणं शरीरत्वमिति वादस्येति ज्ञापयितुं वृक्षादिव्यावृत्तस्वरूपप्रदर्शनमिह। इन्द्रियाश्रय इत्यस्य इन्द्रियाणामाश्रय इत्यर्थः। वृक्षादौ चक्षुरादिकार्याभावात् तदाश्रयत्वं नेति भावः। इन्द्रियोत्पत्तिस्थानेष्वपि तदाश्रयत्वसंभवात् तद्व्यावृत्तये सुखेत्यादिविशेषणम्। साधनभूतः इन्द्रियाश्रयः; इन्द्रियाश्रयता सुखदुःखभोगप्रयोजिका यत्र तत् शरीरमिति पर्यवसितम्। एवमिन्द्रियत्वव्यापकं सुखदुःखभोगसाधनत्वम्; भोगत्वव्यापकं कर्माधीनत्वम्। अतो विधिनिषेधावशमीश्वरमादाय कस्यचिदपि शरीरत्वं वक्तुं न शक्यमिति ज्ञापनाय कर्मेत्यादिविशेषणप्रदानम्। न ह्यत्र शरीरलक्षणमुच्यते; किंतु

धारणः पृथिव्यादिभूतसङ्घातविशेषः; तथाविधस्यैव लोकवेदयोः शरीरत्वप्रसिद्धेः। परमात्मनश्च, (छा. ८-१-१) "अपहतपाप्मा विजरः", (मु. ३-१-१) "अनश्नन्नन्यो अभिचाकशीति", (श्वे. ३-१९) अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः", (मु. २-१-२) "अप्राणो ह्यमनाः" इत्यादिभिः कर्मतत्फलभोगयोरभावात्, इन्द्रियाधीनभोगत्वाभावात्, प्राणवत्त्वाभावाच्च न तं प्रति चेतनाचेतनयोः शरीरत्वम्। न चाचेतनव्यष्टिरूपतृणकाष्ठादीनाम्, समष्टिरूपस्य भूतसूक्ष्मस्य चेन्द्रियाश्रयत्वादि संभवति। भूतसूक्ष्मस्य पृथिव्यादिसङ्घातत्वं च न विद्यते। चेतनस्य तु शरीरकारस्य सर्वमेतन्न सम्भवतीति नतरां शरीरत्वसंभवः॥

न च भोगायतनत्वं शरीरत्वमिति शरीरत्वसंभवः; भोगायतनेषु वेश्मादिषु शरीर-

---

लक्ष्यस्वरूपपरिस्थितिः। **शरीरं हि नामेत्युपक्रमात्**। लक्षणविवक्षायां मध्ये चान्तरञ्च, 'भोगायतनत्वं शरीरत्वम्' इति समनन्तरमेव दृश्यते। **पञ्चवृत्तीति** वृक्षादिवारणाय। तत्र भग्नक्षतसंरोहणादिना प्राणव्यापारसत्त्वानुमानात्। **विशेष** इति पदेन सर्वपृथिव्यादिसाधारण्येन शरीरत्वेऽतिव्याप्तिर्न युक्तेति दर्श्यते। 'चेष्टेन्द्रियार्थाश्रयः शरीरम्' इति **न्यायसूत्रम्**। तत्र चेष्टा नाम प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया। तदाश्रयः शरीरमित्युक्तौ परमाणुप्रभृतिषु प्रयत्नवदीश्वरसंयोगवशात् क्रिया भवतीति तेषामपि शरीरत्वं भवत्येवेति सिद्धान्ती प्रत्यवतिष्ठेतेति तद् विहाय इन्द्रियाश्रय इति पूर्वमुक्त्वाऽथ प्रतिबुध्य, 'विविधा च पृथक् चेष्टा' इति गीतायां प्राणादेर्ग्रहणात् प्राणसंयोगासमवायिकारणकक्रियैव चेष्टाऽस्तु इति मनसिकृत्य **चेष्टाश्रय** इत्येतदेव पञ्चवृत्तिप्राणाधीनधारण इत्यदर्शयत् पूर्वपक्षी। अर्थाश्रयत्वं कुतो नोक्तमिति चेत्—अर्थाः यदि विषयाः, तेषां बाह्यानां शरीरमाश्रयो न भवति; तथाऽर्थः प्रयोजनं भोग इति पक्षेऽपि शरीरे तदाश्रयत्वं न भवति; आत्मन्येव तत्सत्त्वात्। ननु **न्यायभाष्ये आश्रयत्वं** सौत्रं भिन्नभिन्नं दर्शितम्—चेष्टाश्रयत्वमाधारत्वमेव। इन्द्रियाश्रयत्वं तु तदुपजीव्यत्वम्, स्वोपचयोपघातप्रयुक्तोपचयोपघातशालीन्द्रियकत्वमिति यावत्। स्वं शरीरम्। अर्थाश्रयत्वञ्च विषयाधीनसुखदुःखभोगसाधनत्वमेवेति—चेत्—तर्हि **भोगसाधनभूतेन्द्रियाश्रय** इति पदे साधनभूतश्चासौ इन्द्रियाश्रयश्चेति विग्रहेणोभयमप्युक्तमस्तु। अनुवदिष्यति ह्युत्तरसूत्रे **त्वदुक्तश्च कर्मफलभोगहेतुरित्यादिक**मिति। अथ वा इन्द्रियेषु भोगसाधनत्वोक्त्या तत् अर्थसिद्धं मन्यते। पृथक् तल्लक्षणायोगस्य समनन्तरमेव कथनात् तस्येह त्याग इति वा भाव्यम्। नन्विदं शरीरशब्दस्य लोके पामरैर्वृक्षादावप्रयोगमात्रेण शरीरशब्दार्थनियन्त्रणं न सर्वतार्किकादितीर्थकरसंमतम्। स्थावराणां शरीरत्वं प्रमाणप्रतिपन्नञ्च। अतः, "अन्तःप्रज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति प्रमाणात् वृक्षादीनामपि भोगोऽस्तीति भोगघटितलक्षणमेव युक्तम्। अत एव **अर्थाश्रय** इति सूत्रे चरममुक्तम्। तच्च भोगायतनत्वमिति शङ्कां निरस्यति **न च भोगे**ति। **शरीरत्वसंभवः** शरीरलक्षणसंभव.। यद्वा पुण्यापुण्यरूपकर्मफलभिन्नस्यापि भोगस्य स्वीकारात् ईश्वरस्यापि सुखित्वस्य किञ्चिद्रूपेण कतिपयतार्किकादिस्वीकृतत्वात् तद्भोगायतनत्वं चेत-

त्वाप्रसिद्धेः ॥ यत्र वर्तमानस्यैव सुखदुःखोपभोगः, तदेव भोगायतनमिति चेन्न—परकायप्रवेशजन्मसुखदुःखोपभोगायतनस्य परकायस्य प्रविष्टशरीरत्वाप्रसिद्धेः । ईश्वरस्य तु स्वतस्सिद्धनित्यनिरतिशयानन्दस्य भोगं प्रति चिदचितोरायतनत्वनियमो न संभवति ।

एतेन भोगसाधनमात्रस्य शरीरत्वं प्रत्युक्तम् ॥

अथ मतम्—यदिच्छाधीनस्वरूपस्थितिप्रवृत्ति यत्, तत् तस्य शरीरमिति, सर्वस्येश्वरेच्छाधीनस्वरूपस्थितिप्रवृत्तित्वेनेश्वरशरीरत्वं संभवतीति—तदपि न साधीयः ; शरीरतया प्रसिद्धेषु तत्तच्चेतनेच्छायत्तस्वरूपत्वाभावात् ; रुग्णशरीरस्य तदिच्छाधीनप्रवृत्तित्वाभावात् ; मृतशरीरस्य तदायत्तस्थितित्वाभावाच्च ; सालभञ्जिकादिषु चेतनेच्छाधीनस्वरूपस्थितिप्रवृत्तिषु तच्छरीरत्वाप्रसिद्धेश्च । चेतनस्य नित्यस्येश्वरेच्छायत्तस्वरूपत्वाभावाच्च न तच्छरीरत्वसंभवः ।

न च यत् यदेकनियाम्यम्, यदेकधार्यम्, यस्यैव शेषभूतम्, तत् तस्य शरीरमिति वाच्यम् ; क्रियादिषु व्यभिचारात् ।

---

नाचेतनेष्वस्तीति सर्वस्य परमात्मशरीरत्वसंभव इत्यर्थः । **अप्रसिद्धेरि**ति । वेश्मादीनामपि स्थूलरूपेणावच्छेदकत्वात् स्यादिति भावः । **एवकारार्थ**घटनेन व्यावर्नयति **यत्रे**ति । भोगस्य यद्वस्त्ववच्छेदः प्रयोजकः, तत् शरीरम् । भोगप्रयोजकावच्छेदनिरूपकत्वं न वेश्मादौ, अन्यत्रापि भोगोदयादिति भावः । न च वेश्मनि मणिमयवेदिकादौ शयानो यत् सुखमनुभवति, तत्र वेश्मावच्छेद एव प्रयोजक इति वाच्यम्—तत्र वेश्मनो भोगोपकरणत्वेनैव कारणत्वस्वीकारात् तदवच्छेदस्य प्रयोजकत्वानभ्युपगमात् । **परकाये**ति । भूतादिकं हि सजीवपरकायं प्रविश्य तदवच्छेदेन बहु कृत्वा भोगमनुभवति । अथापि न स भूतादेः शरीरमिति । **अप्रसिद्धेरि**ति । पूर्वपक्षी स्वपक्षे कथमिदं वारयतीति चेत्—**कर्मफलरूपे**त्यस्येन्द्रियाश्रयेऽन्तर्भावीकारेण परकीयकर्माधीनोत्पत्तिकत्वस्य तत्र कायेऽभावोपपादनेन । परकायप्रवेशस्थले भूतादेः स्वीयं स्थूलेन सूक्ष्मेण वा कायेन सहैव तत्र प्रवेशात् तत्र नानाव्यापारकरणेऽपि तदधीनभोगावच्छेदकत्वं तन्निविष्टस्वशरीरस्यैवेत्युक्त्या एतल्लक्षणस्वीकारेपि नेष्टसिद्धिरित्याशयेनाह **ईश्वरस्य त्वि**ति । **मात्रस्ये**ति । **मात्र**पदं कात्स्न्र्ये । यद्वा कर्मफलभूतत्व-दुःखरूपत्वादिनिवेशव्यवच्छेदे । सामान्यतोभोगसाधनत्वं शरीरत्वमितीदमयीत्यर्थः ।

'स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्' इति, 'नावेक्षसे यदि ततो भुवनान्यमूनि नालं प्रभो भवितुमेव कुतः प्रवृत्तिः' इति च सिद्धान्ते व्यवहारात् लक्षणमेवमभिमतं स्यादिति विमृश्य तदपि दूषयितुमाह **अथमत**मिति । **स्वरूपं** वस्तु । **स्थितिः** तस्योत्तरकालसंबन्धः । **प्रवृत्तिः** व्यापारः । परमात्मानमादायास्य धर्मस्य जगति सुवचत्वेऽपि नेदं शरीरत्वम्, लोकप्रसिद्धे शरीरे समन्वयाभावादिति दूषयति **तदपि ने**ति । अतिव्याप्तिमप्याह **सालभञ्जिके**ति । सिद्धान्तिसाक्षाद्विवक्षितलक्षणमपि क्षिपति **न चे**ति । **क्रियादिषु व्यभिचारा**दिति । गुणक्रियादौ शरीरत्वं न स्वीकृतम् । तदसाक्षात्संबद्धस्य तच्छरीरत्वायोगात् । गुणादेर्द्रव्यान्तरगतस्यान्यद्रव्यसाक्षात्संबन्धायोगात् । तत्स्वीकारे तु

(कठ. १-२-२२) "अशरीरं शरीरेषु" (श्वे. ३-१९) "अपाणिपादो जवनो ग्रहीता" इत्यादिभिश्चेश्वरस्य शरीराभावः प्रतिपाद्यते ।

अतो जगद्ब्रह्मणोः शरीरशरीरिभावस्यासंभवात् तत्सं (वात्, सं) भवे च ब्रह्मणि दोषप्रसङ्गात् ब्रह्मकारणवादे वेदान्तवाक्यानामसामञ्जस्यम्—इति ॥ ८ ॥

अत्रोत्तरम्—

न तु दृष्टान्तभावात् । २ । १ । ९ ॥

नैवमसामञ्जस्यम्; एकस्यैवावस्थाद्वयान्वयेऽपि गुणदोषव्यवस्थितेर्दृष्टान्तस्य विद्यमानत्वात् । तुशब्दोऽत्र हेयसंबन्धगन्धस्यासंभावनीयतां द्योतयति । एतदुक्तं भवति—चिदचिद्वस्तुशरीरतया तदात्मभूतस्य परस्य ब्रह्मणः सङ्कोचविकासात्मककार्यकारणभावावस्थाद्वयान्वयेऽपि न कश्चिद्विरोधः; यतः सङ्कोचविकासौ परब्रह्मशरीरभूतचिदचिद्वस्तुगतौ; शरीरगतास्तु दोषा नात्मनि प्रसज्यन्ते; आत्मगताश्च गुणा न शरीरे; यथा—देवमनुष्यादीनां सशरीराणां क्षेत्रज्ञानां शरीरगताः बालत्वयुवत्वस्थविरत्वादयो नात्मनि संबध्यन्ते; आत्मगताश्च ज्ञानसुखादयो न शरीरे; अथ च 'देवो जातः, मनुष्यो जातः, तथा स एव बालो युवा स्थविरश्च' इति व्यपदेशश्च मुख्यः ॥ भूतसूक्ष्मशरीरस्यैव क्षेत्रज्ञस्य देवमनुष्यादिभाव इति (शारी. ३-१-१) "तदन्तरप्रतिपत्तौ" इति वक्ष्यते(ति) इति ।

---

चेतनाचेतनगतगुणानां हेयानां साक्षात्परमात्मनि कथने निर्विकारत्वहेयप्रत्यनीकत्वादिभङ्गश्चेति भास्कराद्वैतप्रसंगः, निर्विकारत्वादिश्रुतिविरोधश्चेति । सर्वानुगतशरीरत्वनिर्वचनं श्रुत्यनभिमतञ्चेति दर्शयति **अशरीर**मिति । अपाणिपादादिपदं न कर्मेन्द्रियमात्राभावपरम्, किंतु हस्तपादादिशरीरावयवनिषेधकमपीत्याशयेनाह **अपाणी**ति ।

**न तु दृष्टान्तभावात्** । असमञ्जसमिति अनुवर्तते । नासमञ्जसं ब्रह्मकारणत्ववचनम्, तद्धत्प्रसंगाभावे दृष्टान्तसत्त्वात् । **तु**शब्दः शरीरत्वासंभवव्यवच्छेदकोऽपि । तेन शरीरलक्षणनिर्वचनसंभवः, 'अशरीरं शरीरेषु' इत्यादिश्रुत्यर्थनिर्वाहश्च ज्ञाप्यते । **व्यवस्थितेः** व्यवस्थितिविषये । **संकोचविकासौ** सूक्ष्मत्वस्थूलत्वे । ननु साक्षात् अवस्थाश्रयत्वाभावे कथं ब्रह्मण उपादानत्वमुपादेयत्वञ्चेत्याशंकायां तत्रापि दृष्टान्तभावादिति सूत्रार्थं संगमयति **अथचे**ति । देवत्वादिधर्माणां जीवे परम्परया स्थितावपि कार्यत्वं व्यवहारबलात् प्रामाणिकम्, तथैव श्रुतिबलात् ब्रह्मणोऽपि । न च शुद्धब्रह्मणः कथमुपादानत्वमिति वाच्यम्—दृष्टान्त इवात्रापि सूक्ष्माचिद्विशिष्टत्वसत्त्वेनादोषात । ननु जीवस्य शरीरग्रहणात् प्राक् अचिच्छरीरकत्वाभावात् कथं शरीरद्वारा कारणावस्थाश्रयत्वमित्यत्राह **भूतसूक्ष्मे**ति । महाप्रलयानन्तरभाविप्रथमसृष्टौ स्थूलशरीरमथनपूर्वकभूतसूक्ष्मशरीराभावेऽपि स्थूलशरीर एव जन्मव्यवहारात् जन्मरूपप्रथमस्थूलशरीरप्राप्तिरप्येवं मथननिरपेक्षसूक्ष्मशरीरपूर्विकैवेति तत्रापि कारणावस्थाश्रयत्वमक्षतमिति भावः । विशिष्टब्रह्मणं उपदानोपादेयभावश्च सर्वत्राक्षत एव ।

यत् पुनरुक्तम्—चिदचिदात्मकस्य जगतः स्थूलस्य सूक्ष्मस्य च परमात्मानं प्रति शरीरभावो नोपपद्यते इति—तत् अनाकलितसम्यङ्न्यायानुगृहीतवेदान्तवाक्यगणस्य स्वमतिपरिकल्पितकुतर्क[कल्क]विजृम्भितम् ।

सर्वे एव हि वेदान्ताः स्थूलस्य सूक्ष्मस्य चेतनस्याचेतनस्य च समस्तस्य परमात्मानं प्रति शरीरत्वं श्रावयन्ति—वाजसनेयके तावत् काण्वशाखायां (बृ. ५-७.) माध्यन्दिनशाखायां (६-७) चान्तर्यामिब्राह्मणे, 'यः पृथिव्यां तिष्ठन्'''यस्य पृथिवी शरीरम्'' इत्यारभ्य पृथिव्यादिसमस्तमचिद्वस्तु, (काण्व) "यो विज्ञाने तिष्ठन्'''यस्य विज्ञानं शरीरम्", (माध्य) "य आत्मनि तिष्ठन्'''यस्यात्मा शरीरम्" इति चेतनं च पृथक्पृथङ्निर्दिश्य तस्यतस्य परमात्मशरीरत्वमभिधीयते । सुबालोपनिषदि च, (७ ख.) "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरम्" इत्यारभ्य तद्वदेव चिदचितोः सर्वावस्थयोः परमात्मशरीरत्वमभिधाय, "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति तस्य सर्वभूतानि प्रति आत्मत्वमभिधीयते । स्मरन्ति च, (रा. युद्ध. १२०-२६) 'जगत् सर्वं शरीरं ते", (वि० पु० २१२-३७) "यदम्बु वैष्णवः कायः", (वि. पु. १-२२-३८; ८६) "तत् सर्वं वै हरेस्तनुः", 'तानि सर्वाणि तद्वपुः", (मनु, १-८) "सोऽभिध्याय शरीरात् स्वात्' इत्यादि । भूतसूक्ष्मात् स्वशरीरादित्यर्थः ।

लोके च शरीरशब्दो घटादिशब्दवत् एकाकारद्रव्यनियतवृत्तिमनासादितः क्रिमिकीटपतङ्गसर्पनरपशुप्रभृतिष्वत्यन्तविलक्षणाकारेषु द्रव्येष्वगौणः प्रयुज्यमानो दृश्यते । तेन तस्य प्रवृत्तिनिमित्तव्यवस्थापनं सर्वप्रयोगानुगुण्येनैव कार्यम् । त्वदुक्तं च 'कर्मफलभोगहेतुः' इत्यादिकं प्रवृत्तिनिमित्तलक्षणं न सर्वप्रयोगानुगुणम्; यथोक्तेष्वीश्वरशरीरतयाऽभिहितेषु पृथिव्यादिष्वव्याप्तेः । किञ्च ईश्वरस्येच्छाविग्रहेषु, मुक्तानां च (छा. ७-२६-२) "स एकधा भवति" इत्यादिवाक्यावगतेषु विग्रहेषु तल्लक्षणमव्याप्तम्; कर्मफलभोगनिमित्तत्वाभावात् तेषाम्; परमपुरुषेच्छाविग्रहाश्च न पृथिव्यादिभूतसङ्घातविशेषाः; (भा. शा. २०६-६०)

---

शरीरात् स्वादित्येतत् विवृणोति भूतसूक्ष्मादिति । समष्टिरूपादित्यर्थः ।

ननु लोकप्रसिद्धार्थस्य बाधे श्रौतप्रयोगोऽपि लक्षणयैव निर्वाह्य इत्यत्राह लोके चेति । सर्वत्र शब्दस्य व्युत्पत्तिनिमित्ते कस्मिंश्चित् सत्यपि प्रामाणिकयावद्व्यवहारानुगतप्रवृत्तिनिमित्तस्य कल्पनया यत्र शक्त्यैक्यं शक्योपपादनम्, तत्र नार्थसंकोचोऽनुमन्यते । अत एव द्विपात्त्वचतुष्पात्त्वादि न शरीरशब्दप्रवृत्तिनिमित्तम् । तथैव वृक्षादौ शरीरत्वव्यवहारप्रामाणिकत्वाभङ्गाय पञ्चवृत्तिप्राणकत्वादिलक्षणमपि त्याज्यमाकलयन्ति तत्त्वविदः । एवं देवमनुष्यतिर्यक्स्थावरसर्वानुगतधर्मान्वेषणवत् वेदव्यवहारसिद्धशरीरभावसर्ववस्तुसाधारणोऽपि यदि धर्मोऽन्विष्यमाणः सुलभः, तदा किमिति तदन्यथाकरणमिति भावः । यथोक्तेषु=श्रुतिस्मृतिभिरभ्यासेन विशिष्यैवमुक्तेषु । सर्वत्र शिलाकाष्ठादावव्याप्तिमभिप्रयन् तत्र सजीवत्वे संदिहानं

**"न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः" इति स्मृतेः। अतो भूतसङ्घातरूपत्वं च शरीरस्याव्याप्तम्। पञ्चवृत्तिप्राणाधीनधारणत्वं च स्थावरशरीरेष्वव्याप्तम्। स्थावरेषु हि प्राणसद्भावेऽपि तस्य पञ्चधाऽवस्थाय शरीरस्य धारकत्वेनावस्थानं नास्ति। अहल्यादीनां कर्मनिमित्तशिलाकाष्ठादिशरीरेष्विन्द्रियाश्रयत्वं सुखदुःखहेतुत्वं चाव्याप्तम्।**

**अतः, यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यम्,**

---

प्रति अहल्यादिनिदर्शनेन तत्स्थापनार्थमाह **अहल्यादीना**मिति। न त्विदमन्यशिलादिव्यावर्तकम्। **आदि**पदेन सर्वशिलादिनिविष्टजीवग्रहणम्। **इन्द्रियाश्रयत्व**मिति। त्वया वृक्षादौ सर्वेन्द्रियाश्रयत्वास्वीकारादिति भावः। **सुखदुःखहेतुत्वश्चे**त्युक्त्या पूर्वं **भोगसाधनभूते**त्यत्र पृथक्पदत्वं वा **आश्रय**पदेन कर्मधारयो वा ज्ञायते।

किं तर्हि अन्यूनानतिप्रसक्तं शरीरलक्षणमित्यत्र, पूर्वपक्षिणा अन्ते दूषितमेव परिष्कृत्य दर्शयति **अत** इति। अत्र **लक्षणमास्थेय**मित्येकवचनानुरोधेन समुदितमेकं लक्षणमिति केचित्। एकैकस्यैव निर्दुष्टतया दलानां व्यावर्तकत्वाभावेऽपि बृहत्त्वबृंहणत्वोभयस्य ब्रह्मशब्दार्थे निवेशवत्, तार्किकैर्विनिगमनाविरहात् कृतिसाध्यत्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वानां लिङर्थत्ववर्णनवच्चैकयैव शक्त्या त्रयं समुदितं प्रवृत्तिनिमित्तमिति तावतो लक्षणत्वमिति तदाशयः। 'अन्तः प्रविष्टः शास्ता जनानाम्' इति **वाक्येन,** अन्तर्यामिब्राह्मणादिना च व्याप्तिविशिष्टनियन्तृत्वमात्रेणाप्यात्मशब्दव्यवहारप्रदर्शनात्, "विवक्षितगुणोपपत्तेश्च" इत्येतत्सूत्रे भाष्य एव, "आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्ति**निमित्तानि**" इति भाषितत्वस्य **न्यायसिद्धाञ्जने** प्रदर्शितत्वाच्च प्रत्येकं त्रयं प्रवृत्तिनिमित्तं लक्षणञ्चेति लक्षणत्रयवादिनामाशयः। पूर्वपक्षिणा **शरीरं हि नामे**त्यारभ्य शरीरत्वपरिचायकाकारकथनवत् सर्वमिदं परिचायककथनमात्रम्। **प्रवृत्तिनिमित्तानी**ति भाष्यस्य च शरीरशब्दप्रयोगे, गोसादृश्यादिकमिव गवयशब्दप्रयोगे, उपलक्षणमित्येवार्थः। अतः, इति **शरीरलक्षणमास्थेय**मित्यस्य इत्येतदुपलक्ष्यं किमपि चेतनापृथक्सिद्धद्रव्यत्वरूपं लक्षणमास्थेयमित्यर्थः। 'यस्य चेतनस्य यद्द्रव्यम्, तस्य तत् शरीर'मित्येतावदेव षष्ठ्यर्थापृथक्सिद्धत्वांशविवरणोपयोगितया 'सर्वात्मना स्वार्थे'इत्यादिना व्याख्यायते इति वाऽस्तु इत्यन्येषामाशयः। आस्तामेतत्। लक्षणत्रयमत्र विवक्षितमिति सम्यक्। अत्र **यस्य यत्** इति निर्देशः शरीरशब्दस्य पुत्रादिशब्दवत् ससंबन्धिकार्थबोधकत्वमिनि ज्ञापनाय। यद् द्रव्यं यस्य चेतनस्येति व्यत्यस्यान्वयः। **यद् द्रव्यम्** यदवस्थद्रव्यम्। **चेतनस्य** चैतन्यविशिष्टस्य। **सर्वात्मना** सर्वप्रकारेण; सर्वदेति यावत्। **स्वार्थे** स्वविषये-स्वशक्यकार्ये; स्वं शरीरम्। सिद्धान्ते एकस्मिन्नेव द्रव्ये नानापरिणामभात्रस्वीकारात् देहाकारपरिणतद्रव्यस्य देहाकारात् पूर्वं पश्चाच्च तज्जीवनियाम्यत्वाभावात् सर्वदेत्येतद्घटितलक्षणासंभव इति **यदवस्थ**मिति परिष्कृतम्। देहाकारविशिष्टस्य सर्वदा नियाम्यत्वान्न दोषः। धर्मभूतज्ञानस्य द्रव्यत्वेऽपि जीवनियाम्यत्वेऽपि न तत्रातिव्याप्तिः, चैतन्यस्य तस्य धर्मिमात्रनियाम्यत्वेऽपि चैतन्यविशिष्टनिरूपितनियाम्यत्वायोगात्। एतद्वारणार्थमेव **चैतन्यविशिष्टस्ये**ति परिष्कृतम्। अद्रव्यस्य

**तच्छेषतैकस्वरूपं च, तत् तस्य शरीरमिति शरीरलक्षणमास्थेयम्। रुग्णशरीरादिषु नियमनाद्यदर्शनं विद्यमानाया एव नियमनशक्तेः प्रतिबन्धकृतम्, अग्न्यादेः शक्तिप्रतिबन्धादौष्ण्या-**

---

क्रियादेर्वारणाय द्रव्यमिति। सर्वमिदं लक्षणत्रयेऽपि भाव्यम्। पक्षिकार्यस्यान्तरिक्षसंचारादेः पुरुषकार्यत्वाभावेन कथं सर्वात्मना नियन्तुं शक्यत्वमिति शंकापरिहाराय **स्वार्थे** इत्युक्तम्। न त्विदं लक्षणघटकम्- सर्वदा इत्येव **सर्वात्मने**तिपदेन विवक्षणात् एतद्दलस्यानपेक्षितत्वात्; तदर्थमेवैतत्प्रयोगात्। **नियन्तुं** संकल्पाधीनव्यापारवत्तया कर्तुम। तथाच तस्य तच्छरीरत्वं नाम समभिव्याहृतपदार्थतावच्छेदकीभूतचैतन्यविशिष्टतन्निरूपितसार्वकालिकनियमनविषयत्वार्हतावच्छेदकावस्थाविशिष्टद्रव्यत्वम्। नियमनार्हतायां सार्वकालिकत्वं कालिकसंबन्धेन स्वसत्ताव्यापकत्वम्। सजीवपरकायस्य सर्वदानियाम्यत्वाभावात् न प्रविशन्तं प्रति शरीरत्वम्। एवं प्राणेन्द्रियादीनामपि न शरीरत्वप्रसङ्गः; अनेकशरीरेषु तत्तद्दशाभाव्यन्नाद्याप्यायिततया जीवोपकरणत्वसंपत्तये वायुतः सृष्टानां प्राणवायूनाम्, ततः प्राक् अहंकारतः सृष्टानाञ्चेन्द्रियाणां जीवेषु मुक्तेष्वपि आप्रलयं पश्चात्तिष्ठतां पूर्वं पश्चाच्च जीवसंबन्धमन्तराऽपि सत्त्वेन स्वसत्ताव्यापकनियमनार्हताया अभावात्। एवं पुत्रादौ सालभञ्जिकादौ च भाव्यम्। रुग्णशरीरे त्वस्त्येव नियमनार्हता। सर्वदा भगवदेकनियाम्येषु वस्तुषु क्वचित्क्वचित् कर्मानुरोधेन जीवेऽपि नियमनशक्तिरीश्वरेणाऽऽधीयते। सा देहविषये उत्पत्तिकाले जाता यावन्मरणमवतिष्ठते। तथापि नियमनोपधानाभावः रोगसुषुप्त्यादिकृतप्रतिबन्धादिति नियमनविषयत्वाभावेऽपि न नियमनशक्तिविषयत्वाभावः॥ **न्यायकुसुमाञ्जलौ** पञ्चमस्तबके प्रयत्नवदधिष्ठेयत्वं शरीरत्वमिति उदयनाचार्यकृतः प्रस्तावोऽप्येतल्लक्षणाभिप्रायक एव। स्वसंकल्पाधीनस्वरूपस्थितिप्रवृत्तिभेदसर्वपदार्थः परमात्मेति सर्वमपि तस्य शरीरम्। जीवशरीरस्वरूपादेः जीवसंकल्पाधीनत्वायोगात् प्रवृत्तिमात्रे संकल्पाधीनत्वविवक्षयैव शरीरलक्षणमिष्यते। शिलाकाष्ठादिष्वपि, 'अप्राणिमत्सु स्वल्पा सा स्थावरेषु ततोऽधिका' इति प्रमाणबलात् सूक्ष्मा नियमनशक्तिरस्त्येवेति नाव्याप्तिरिति॥

यस्य चेतनस्य यद् द्रव्यं सर्वात्मना धारयितुं शक्यमिति द्वितीयलक्षणम्। चैतन्यविशिष्टतन्निष्ठाधारतानिरूपितसार्वकालिकाधेयतावच्छेदकावस्थाश्रयत्वं तच्छरीरत्वमित्युक्तं भवति। दलकृत्यं प्राग्वत्। चैतन्यविशिष्टेत्यनुक्तौ सूर्यादिकं प्रति प्रभायाः शरीरत्वापत्तिः। चेतनेत्युक्त्या तद्धारणेऽपि जीवं प्रति तद्धर्मभूतज्ञानस्य सर्वदा तदाधेयस्य शरीरत्वापत्तिरिति चैतन्यविशिष्टेत्युक्तम्। आधारतावच्छेदकमाधेयञ्चैकं न भवतीति तद्धारणम्।

**तच्छेषतैकस्वरूपश्चे**ति तृतीयलक्षणम्। **यद् द्रव्य**मित्यनुषज्यते। **शक्य**मित्यत्रान्वयाय, **नियन्तुं धारयितुश्चे**ति लक्षणद्वयैकीकारः; तत्रान्वयाभावादस्य पृथक्कारः। अत्र **तत्**पदस्य **एक**पदस्य च स्थितत्वात् **यस्य चेतनस्य सर्वात्मने**ति पदानां नानुषङ्गः। पूर्वं शक्यमित्यत्र शक्तावन्वयाय **चेतनस्ये**ति षष्ठ्याः आधेयत्वार्थकत्वात्, तस्याधेयत्वस्य शेषतायामिहान्वयायोगात् **तदि**त्यधिकं प्रयुक्तम्। **यदि**ति प्रयोगे **यच्चेतने**ति चेतनपदमपि प्रयोक्तव्यम्। चैतन्यांशस्याप्यत्र निवेश्यत्वात्। अतः **यच्चेतने**ति

यदर्शनवत्। मृतशरीरं च चेतनवियोगसमय एव विशरितुमारब्धम्, क्षणान्तरे च विशीर्यते। पूर्वं शरीरतया परिक्लृप्तसङ्घातैकदेशत्वेन च तत्र शरीरत्वव्यवहारः।

अतः सर्वं परमपुरुषेण सर्वात्मना स्वार्थे नियाम्यं धार्यं तच्छेषतैकस्वरूपमिति सर्वं चेतनाचेतनं तस्य शरीरम्। (कठ. २-२२) "अशरीरं शरीरेषु" इत्यादि च कर्मनिमित्तशरीरप्रतिषेधपरम्; यथोक्तसर्वशरीरत्वश्रवणात्।

उपरितनाधिकरणेषु चैतदुपपादयिष्यते। 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' 'न तु दृष्टान्तभावात्' इति सूत्रद्वयेन, (शारी. २-१-२१) "इतरव्यदेशात्" इत्यधिकरणसिद्धोऽर्थः स्मारितः ॥ ९ ॥

---

पदद्वयार्थग्रहणाय **तदि**ति प्रयुक्तम्। एवं पृथक्प्रयोगात् **एके**तिपदमपि प्रयुक्तम्। **यद् द्रव्य**मित्यस्य यदवस्थं द्रव्यमित्यर्थः प्राग्वत्। **शेषतैकस्वरूप**मिति अशेषत्वानर्हमित्यर्थः। प्रभायाः प्रभावन्तं प्रति शरीरत्ववारणाय चेतनेति। देहस्यावस्थान्तरे अशेषत्वार्हत्वात् लक्षणं न स्यादिति यदवस्थमिति। क्षेत्रपुत्रादेर्दानादिना शेषत्वापगमान्नातिव्याप्तिः। एषां लक्षणानां त्रयाणां तुरीयस्य चाऽऽवश्यकपरिष्करणप्रकारविस्तरोऽस्मत्कृतायां **नयद्युमणिभूमिकायां** द्रष्टव्यः।

एवं तावत् ब्रह्मणः सर्वशरीरकत्वस्य सुवचत्वात् तेन रूपेण चिदचिद्विशिष्टस्य तस्य कारणत्वोक्तौ बाल्युवादिरूपजीवदृष्टान्तेन शरीरदोषस्य शरीरिणि अप्रसंगात् नोक्तमसामञ्जस्यमित्युक्तम्। शरीरित्वप्रयुक्तदुःखित्वाद्यापत्तिरूपान्यादृशदोषशंकापरिहारस्तु भोक्तृत्वापत्त्यधिकरणोभयलिङ्गाधिकरणादौ करिष्यत इत्याह **उपरितने**ति। **एतत्**—असामञ्जस्यराहित्यम्। वस्तुत एतत्सूत्रद्वयार्थोऽप्यन्यतः सिद्ध एवेत्याह **अपीता**विति। ननु सूत्रद्वयेऽत्र अचिदीश्वरयोः कार्यकारणभावस्य वैलक्षण्यस्य च न विरोधः शरीरात्मभावादित्युक्तम्। एतदुपरि जीवेश्वरयोः चेतनत्वेन सालक्षण्यस्यैव सत्त्वात् शरीरात्मभावमन्तरेणाभेदेनैव कार्यकारणभावः सिद्धान्तीष्ट इति कृत्वा इतरव्यपदेशाधिकरणे हिताकरणादिदोषशंकायां चिदीश्वरयोरपि भेद एव स्थाप्यते। अत एव तत्राधिकरणे अश्मादिवच्चेति एतदधिकरणसिद्धांशदृष्टान्तीकरणम्। अतस्तदधिकरणसिद्धार्थस्मारणमत्रेति कुत इति चेत्—उच्यते। प्रकृत्यधिकरणे विशिष्टवेषेणोपादानत्वम्, आरम्भणाधिकरणे अनन्यत्वञ्च स्थापितम्। तच्चाचिद्विषये अहिकुण्डलाधिकरणसिद्धमंशांशिभावं भेदञ्चोपजीव्य यथा, तथा इतरव्यपदेशाधिकरणसिद्धं अंशाधिकरणेनाक्षिप्यस्थापितञ्चार्थमुपजीव्य। तत्र दोषप्रसक्तिपरिहारः चिदपेक्षया ब्रह्मणोऽधिकत्वेन क्रियते। अन्यत्वेऽपि जीवस्य शरीरत्वे तद्गतदोषः शरीरिण्यपीति शंकाऽपि तत्र यावन्न परिह्रियते, तावत् पूर्वपक्षपरिहारो न भवतीति तत्रापि बाल्युवदृष्टान्तो विवक्षित एव। सूत्रे च अन्यदित्यप्रयुज्य अधिकमिति प्रयोग एवंविधवैलक्षण्यज्ञापकः। एवञ्च चेतनविषयोक्तन्यायेनाचिद्ब्रह्मणोरपि वैलक्षण्यस्य निष्प्रत्यूहं सिद्धिसंभवे किमिति, प्रकृताधिकरणस्य सोऽपि विषय इति वक्तव्यम्। विलक्षणयोः कार्यकारणभावो न भवतीति तर्कभङ्गस्यैव प्रकृताधिकरणकृत्यत्वात्। तत्र विलक्षणयोः कारणत्वदर्शनात् विलक्षणत्वं व्यभिचरितमित्युक्तं 'दृश्यते तु' इति सूत्रेण। तत्र

स्वपक्षदोषाच्च । २ । १ । १० ॥

न केवलं ब्रह्मकारणवादस्य निर्दोषतयैतत्समाश्रयणम्; प्रधानकारणवादस्य दुष्टत्वाच्च तत्परित्यज्यैतदेव समाश्रयणीयम् । प्रधानकारणवादे हि जगत्प्रवृत्तिर्नोपपद्यते । तत्र हि निर्विकारस्य चिन्मात्रैकरसस्य पुरुषस्य प्रकृतिसंनिधानेन प्रकृतिधर्माध्यासनिबन्धना जगत्प्रवृत्तिः । निर्विकारस्य चिन्मात्ररूपस्य प्रकृतिधर्माध्यासहेतुभूतं प्रकृतिसंनिधानं किंरूपमिति विवेचनीयम्—किं प्रकृतेः सद्भाव एव, उत तद्गतः कश्चिद्विकारः, अथ पुरुषगत एव कश्चिद्विकारः ? न तावत् पुरुषगतः; अनभ्युपगमात् । नापि प्रकृतेर्विकारः; तस्याध्यासकार्यतयाऽभ्युपेतस्याध्यासहेतुत्वासंभवात् । सद्भावमात्रस्य संनिधानत्वे मुक्तस्याप्यध्यासप्रसङ्गः इति त्वत्पक्षे जगत्प्रवृत्तिर्नोपपद्यते । अयमर्थः साङ्ख्यपक्षप्रतिक्षेपसमये, (शारी. २-२-८) " अभ्युपगमेऽप्यर्थाभावात् " इत्यादिना प्रपञ्चयिष्यते ॥ १ ॥

तर्काप्रतिष्ठानादपि । २ । १ । ११ ॥

तर्कस्याप्रतिष्ठितत्वादपि श्रुतिमूलो ब्रह्मकारणवाद एव समाश्रयणीयः; न प्रधानकार-

---

सत्कार्यवादभंग इति शंकायाम्, 'यत् विलक्षणम्, 'तत् सत्कार्यकारणं न भवती'त्यपि न व्याप्तिः, गोमयवृश्चिकादौ भङ्गादिति दूषणमपर्युपन्यस्तम् । तदुपरि भेदसहस्य वैलक्षण्यस्याकार्यत्वसाधकत्वमस्तीति पूर्वपक्षिप्रत्यवस्थानं तु न युज्यते; तथासति भेदात् उपादानत्वं न भवतीत्येतावत एव पर्याप्तत्वात् वैलक्षण्यस्य हेतुकोटौ घटनायोगात्; तावतैव विलक्षणत्वहेतोरसाधकतया पूर्वपक्ष्युपरतेः । अतोऽधिकरणान्तरे वक्तव्यमेव प्रसक्तत्वात् यत्किंचित् व्युत्पादनीयमिति सूत्रकृदिह विशदमाह स्मेति भाष्याशयः ॥ तदिह शुद्धजगद्ब्रह्मणोरुपादानोपादेयभावोऽसदिष्ट इति कृत्वा वैलक्षण्यादकारणत्वशंकायां तस्य हेतोराभासत्वमेवेति न सांख्यस्मृतिः सत्तर्कोपबृंहितेत्येतावदेव प्रकृताधिकरणविवक्षितमिति ॥ ९ ॥

शुद्धस्य ब्रह्मणो जगत्कारणत्वमस्माभिरुच्यत इति कृत्वा, कथं हेयप्रत्यनीकस्य निर्विकारस्य ब्रह्मणः कारणत्वमिति पूर्वपक्षी मन्यते । सोऽयं स्वपक्षदोषः, नास्मत्पक्षदोषः; सर्वात्मना निर्विकारत्वस्य वस्तुतोऽस्माभिरनभ्युपगमात्; तस्य तदभिमते कारण एव सत्त्वादित्याह **स्वपक्षदोषाच्चेति । जगत्प्रवृत्तिः** जगदुत्पत्तिः । ' शक्तितः प्रवृत्तेश्च ' इति उत्पत्तौ प्रवृत्तिशब्दः सांख्यैः प्रयुज्यते । प्रकृतिपुरुषसंनिधानम्, पुरुषे प्रकृतिधर्माध्यासः, ततो जगदुत्पत्तिरित्युच्यते । जगदुत्पत्तिर्नाम प्रकृतेर्विक्रियमाणता । तत्र संनिधानस्य नित्यत्वे सर्वदा सर्गापत्तिः । अनित्यत्वे विकारात्मकत्वात् निर्विकारे पुरुषे तदयोगात् प्रकृतेर्विकारोऽयमिति वक्तव्यम् । प्रकृतिविकारश्चाध्यासाधीनो नाध्यासात् प्राक् भवतीति निर्विकारैव प्रकृतेः स्यादिति । **अभ्युपगमेऽप्यर्थाभावादिति** । तत्र सूत्रे भोगापवर्गरूपप्रयोजनाभाव उक्तः । अध्यासमूलभूतस्य संनिधानस्य दुर्वचतया अध्यास-तत्कार्यजगत्-तदधीनफलसर्वाभाव एव तत्र विवक्षित इति भावः ॥ १० ॥

वेदप्रमितं ब्रह्मकारणवादं तर्केण दूषयता तर्कस्य प्राबल्यमिष्यते । तन्न युक्तम्; तस्याप्रतिष्ठितत्वादित्याह **तर्केति** । प्रमाणेतिकर्तव्यतासूत्रस्तर्क इष्यते । तदुपकृतं प्रमाणमेवार्थसाधकम् । स्वातन्त्र्येणानुमानं

णवादः। शाक्यौलूक्याक्षपादक्षपण-कपिलपतञ्जलितर्काणामन्योन्यव्याघातात् तर्कस्याप्रतिष्ठितत्वं गम्यते ॥ ११ ॥

अन्यथानुमेयमिति चेत्-एवमप्यनिर्मोक्षप्रसङ्गः । २ । १ । १२ ॥

इदानीं विद्यमानानां शाक्यादीनां तर्कान् उद्दूष्य अन्यथा प्रधानकारणवादमतिक्रान्ततदुपदर्शितदूषणत्वेनानुमास्यामह इति चेत्—एवमपि पुरुषबुद्धिमूलतर्कैकावलम्बनस्य तथैव (तव) देशान्तरकालान्तरेषु त्वदधिककुतर्ककुशलपुरुषोत्प्रेक्षिततर्कदूष्यत्वसंभावनया तर्काप्रतिष्ठानदोषादनिर्मोक्षो दुर्वारः। अतोऽतीन्द्रियेऽर्थे शास्त्रमेव प्रमाणम्। तदुपबृंहणायैव तर्क उपादेयः। तथाचाऽऽह (मनु. १२-१०६) आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानु-

---

तु प्रमाणान्तरविरोधेऽर्थसाधकं न भवति; अनुमानान्तरेण प्रतिहन्यमानतया च प्रतिष्ठां न लभते। 'यस्तर्केणानुसंधत्ते' इत्यत्र पूर्वार्धे वेदशास्त्राविरोधिनेति विशेषणस्य निर्दिष्टत्वात् कृत्स्नमीमांसातर्काः ग्राह्या एव भवन्ति। उक्तञ्च **सारावलौ,** "सौत्री तर्काप्रतिष्ठा श्रुतिपथविमुखस्वैरवादेषु योज्या" इति। **औलुक्यः** उलूकरूपधारिमहेश्वरोपदिष्टग्राही कणादः। **अप्रतिष्ठतत्व**मिति। अन्योन्यव्याघातादप्रतिष्ठा; वेदविरोधाच्चाभासत्वनिश्चय इति ॥ ११ ॥

ननु वस्तुनि विकल्पायोगादेकरूपेण कारणतत्त्वेन भाव्यम्। अतः सर्वेषां तर्काणां प्रमाणत्वासंभवात् कश्चिद् विपश्चिदपश्चिमः शाक्यादितर्कान् आभासीकृत्य सांख्यतत्त्वं बलिष्ठेन तर्केणेत.परमनुमिनुयादिति चेत्—यथाऽयं सांख्यस्य मनोरथः, तथा तन्निरासकमनोरथोऽपि संभाव्यत इत्याहानन्तरसूत्रेण। **इदानी**मिति। **देशान्तरे**ति उपर्युक्तावपि सर्वत्रेत्येवात्र विवक्षितम्। देशादिसंबन्धस्य तर्कापेक्षया पुरुषेऽन्वये औचित्यमालोच्य **विद्यमानाना**मित्युक्तम्, न तु विद्यमानानिति। एवञ्चोपरि देशान्तरेत्यादेः पुरुषेऽन्वयोऽभिमतः। तर्केऽन्वये तु अत्रापि विद्यमानान् इति पाठः स्यात्, **विद्यमानानां** एतावत् सांख्यैर्दुर्निरसतया लब्धसत्ताकानामित्यर्थः। **शाक्यादीनां तर्कान्**—तदुक्तान् तदनुकूलतया संभावितांश्च तर्कान्। **अन्यथे**ति सौत्रपदम्; **अतिक्रान्ततदुपदर्शितदूषणत्वेन** इति तदर्थः। सूत्रे तर्क्यमित्यप्रयुज्य **अनुमेय**मिति प्रयोगात् अनुमानस्य स्वातन्त्र्येण प्रामाण्याशय आविष्क्रियते। **पुरुषबुद्धिमूले**ति शास्त्राविरोधितर्कव्यावर्तनम्। पूर्वं मनुवचने पूर्वार्धमप्रदर्श्य उत्तरार्धमात्रोदाहरणेन कृतं प्रलोभनमयुक्तमिति पूर्णानुवादेन दर्शयति **तथा चाहे**ति। **आर्ष**मिति। "आर्षं सिद्धदर्शनञ्च धर्मेभ्यः" (९. २-१३) इति कणादसूत्रम्। ऋषीणां प्रातिभं तपोधीनञ्च ज्ञान**मार्षम्**। तन्मूलः तत्त्वोपदेशो धर्मोपदेशश्च वेदाविरोधितर्कानुगृहीतो ग्राह्यः। तथाच कपिलस्यार्षं वेदविरोधान्न सत्तर्कानुगृहीतमिति। केवलतर्कैरार्षादेर्दूषणं वा, केवलतर्कोपस्कृतेन आर्षादिना वेददूषणं वा न युक्तम्। तर्कोपबृंहितप्रत्यक्षश्रुतिविरुद्धं पुनरार्षादिकमुपेक्ष्यम्। आर्षपदेन सर्वोपि ऋषिकर्तृक उपदेशः, **धर्मोपदेश**पदेन च तदन्यकर्तृकः सर्वे उपदेशो ग्राह्य इति वाऽस्तु। **वेदशास्त्राविरोधिने**त्यत्र **विरोधि** बाधकम्, वेदाख्यं शास्त्रमविरोधि यस्य स इति विग्रहः। **अविरोधी**त्यस्य विरुद्धार्थकनञनुसारेण अनुकूलेत्यर्थस्वीकारेण तत्पुरुष एव वा। आगमबाधितः

संधत्ते स धर्मं वेद नेतरः" इति। वेदाख्यशास्त्राविरोधिनेत्यर्थः। अतो वेदविरोधित्वेन, वेदार्थविशदीकरणरूपवेदोपबृंहणतर्कोपादानाय साङ्ख्यस्मृतिर्नादरणीया ॥ १२ ॥

इति विलक्षणत्वाधिकरणम् ॥ ३ ॥

३९. शिष्टापरिग्रहाधिकरणम् २-१-४ ॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः । २ । १ । १३ ।

शिष्टाः **परिशिष्टाः। न विद्यते वेदपरिग्रहो येषामित्यपरिग्रहाः ; शिष्टाश्चापरिग्रहाश्च** शिष्टापरिग्रहाः। एतेन **वेदापरिगृहीतसाङ्ख्यपक्षक्षपणेन परिशिष्टाश्च वेदापरिगृहीताः कणभक्षाक्षपादक्षपणकभिक्षुपक्षाः क्षपिताः वेदितव्याः। परमाणुकारणवादेऽमीषां सर्वेषां संवादात् कारणवस्तुविषयस्य तर्कस्याप्रतिष्ठितत्वं न शक्यते वक्तुमित्यधिकाशङ्का। तावन्मात्रसंवादेऽपि तर्कमूलत्वाविशेषात् परमाणुस्वरूपेऽपि शून्यात्मकत्वाशून्यात्मकत्व-ज्ञानात्मकत्वार्थात्मकत्व-क्षणिकत्वनित्यत्व - एकान्तत्वानेकान्तत्व - सत्यासत्यात्मकत्वादिविसंवाददर्शनाच्चाप्रतिष्ठितत्वमेवेति परिहारः ॥ १३ ॥** इति शिष्टापरिग्रहाधिकरणम् ॥ ४ ॥

४०. भोक्त्रापत्त्यधिकरणम् २-१-५ ॥

## भोक्त्रापत्तेरविभागश्चेत्—स्याल्लोकवत् । २ । १ । १४ ॥

**पुनरपि साङ्ख्यः प्रत्यवतिष्ठते—यदुक्तम्—स्थूलसूक्ष्मचिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणः कार्यकारणरूपत्वात् जीवब्रह्मणोः स्वभावविभाग उपपद्यते-इति—स तु विभागो न संभवति ; ब्रह्मणः सशरीरत्वे, तस्य भोक्तृत्वापत्तेः ; सशरीरत्वे, जीवस्येवेश्वरस्यापि सशरीरत्वप्रयुक्तसुखदुःखयोर्भोक्तृत्वस्यावर्जनीयत्वात् ॥ ननु च**(शारी.१-२-८) **"संभोगप्राप्तिरिति चेन्न वैशेष्यात्" इत्यत्रेश्वरस्य भोगप्रसङ्गपरिहार उक्तः॥ नैवम्। तत्र ह्युपास्यतया हृदयायतने संनिहितस्य शरीरान्तर्वर्तित्वमात्रेण भोगप्रसङ्गो न विद्यत इत्युक्तम् ; इह तु जीववद् ब्रह्मणोऽपि सशरीरत्वे तद्वदेव**

---

तर्कः त्याज्यः । तदनुग्राहको ग्राह्य इति ॥ १२ ॥

एवं सांख्यस्मृत्या वेदान्तार्थबाधं निरस्य शास्त्रान्तरैस्तद्बाधमपि निरस्यति **एतेने**ति । शिष्टापरिग्रहपदे तत्पुरुषो न ; कर्मधारयात् तस्य जघन्यत्वात् । सांख्यस्य वैदिकपरिगृहीतत्वमेव कार्त्स्न्येनेति शंकावहत्वाच्च । **अधिकाशंके**ति । प्रकृतेरुपादानत्वं सांख्ययोगोभयमात्रसंमतम् । परमाणूनां तथात्वं वेदबाह्याबाह्यबहुपरीक्षकसंमतमिति विशेषादिति भावः ॥ १३ ॥

**सांख्य** इत्युपलक्षणम् । ब्रह्मजगतोरात्मशरीरभावविद्वेषिसर्वग्रहणसंभवात् । एवञ्च पूर्वाधिकरणनिविष्टतार्किकादेरपि पूर्वपक्षित्वात् पूर्वाधिकरणेनापि सह संगतिर्भवति । जगद्ब्रह्मणोः स्वभावविभागस्य पूर्वं सांख्यं प्रत्येवोक्तत्वात् तन्मात्रनिर्देशः । पूर्वाधिकरणेऽपि तत् सर्वमतिदिष्टमेवेति भवत्येवानन्तरसंगतिः । **शरीरान्तर्वर्तित्वमात्रेणे**ति । ननु मुखान्तरेणाक्षेपोपि पूर्वोक्तयुक्त्यैव वारितः । कर्मवशत्वाभावाद्धि भोगाप्राप्तिस्तत्रोक्तेति चेत्—अयमाशयः— कर्म हि शरीरस्वामित्वमुत्पाद्य तन्मुखेन भोगहेतुः ।

सुखदुःखयोर्भोक्तृत्वप्रसङ्गो दुर्वार इत्युच्यते। दृश्यते हि सशरीराणां जीवानां शरीरगतबालत्वस्थविरत्वादिविकारासंभवेऽपि शरीरधातुसाम्यवैषम्यनिमित्तसुखदुःखयोगः। श्रुतिश्च, (छा. ८-१२-१) "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति। अतः सशरीरब्रह्मकारणवादे जीवेश्वरस्वभावविभागासंभवात्, केवलब्रह्मकारणवादे मृत्सुवर्णादिवत् जगद्गतापुरुषार्थादिसर्वविशेषाश्रयत्वप्रसङ्गाच्च प्रधानकारणवाद एव ज्यायानिति चेत्—

अत्रोत्तरम्—स्याल्लोकवत् इति। स्यादेव विभागो जीवेश्वरस्वभावयोः; न हि जीवस्य शरीरधातुसाम्यवैषम्यनिमित्तं सुखदुःखयोर्भोक्तृत्वं सशरीरत्वकृतम्, अपि तु पुण्यपापरूपकर्मकृतम्। "न ह वै सशरीरस्य" इत्यपि कर्मारब्धदेहविषयम्; (छा.७-२६-२) "स एकधा भवति त्रिधा भवति", (छा. ८-२-१) "स यदि पितृलोककामो भवति", (छा. ८-१२-३) "स तत्र पर्येति जक्षत् क्रीडन् रममाणः" इति कर्मबन्धविनिर्मुक्तस्याऽऽविर्भूतस्वरूपस्य सशरीरस्यैवापुरुषार्थगन्धाभावात्। अपहतपाप्मनस्तु परमात्मनः स्थूलसूक्ष्मरूपकृत्स्नजगच्छरीरत्वेऽपि कर्मसंबन्धगन्धो नास्तीति नतरामपुरुषार्थगन्धप्रसङ्गः। लोकवत्—यथा लोके राजशासनानुवर्तिनां तदतिवर्तिनां च राजानुग्रहनिग्रहकृतसुखदुःखयोगेऽपि न शरीरित्व (सशरीरत्व)-मात्रेण शासके राज्ञ्यपि शासनानुवृत्त्यतिवृत्तिनिमित्तसुखदुःखयोर्भोक्तृत्वप्रसङ्गः। यथाऽऽह—द्रमिडभाष्यकारः, "यथा लोके राजा प्रचुरदन्दशूके घोरेऽनर्थसङ्कटेऽपि प्रदेशे वर्तमानो व्यजनाद्यवधूतदेहो दोषैर्न स्पृश्यते, अभिप्रेतांश्च लोकान् परिपालयति, भोगांश्च गन्धादीन्

---

तत्तु स्वामित्वं स्वत एवास्तीति कथं ब्रह्मणस्तदभाव इति। सिद्धान्त्याशयस्तु-भोगं प्रति विधिनिषेधरूपशासनविषयत्वमेव प्रयोजकम्। शरीरद्वारैव भोगस्योत्पादयितव्यत्वात्तु स्वामित्वमपि द्वारीभवति। अतः कर्मकृतशरीरस्वामित्वस्य हेतुत्वेऽपि केवलस्वामित्वस्य न तदापादकत्वमिति। विधिनिषेधाविषयत्वमेव **लोकव**दित्यत्र भाष्ये विशदयिष्यते। **विकारासंभवेऽपी**ति। न तु दृष्टान्तभावादिति सूत्रेणास्योपपादितत्वादिति भावः।

परैः भोक्तृभोग्ययोः ब्रह्मकारणकत्वेन ब्रह्मानन्यत्वे भोक्तृभोग्यविभागो न स्यादित्याशंक्य समुद्रोदकानन्यत्वेऽपि फेनतरङ्गबुद्बुदानां परस्परविभाग इव भवत्येवेति परिहृतम्। **लोकव**दित्यस्य समुद्रफेनदृष्टान्तपरत्वं विना राजप्रजादृष्टान्तपरत्वमेव पूर्वव्याख्यारूढमिति तदनुरूपपूर्वपक्षसिद्धान्तवर्णनमेव कार्यमिति प्रतिबोधयितुं द्रमिडभाष्यं दर्शयति **यथाहे**ति। ननु द्रमिडभाष्ये शासनानुवृत्त्यतिवृत्तिप्रस्तावो न दृश्यत इति चेन्न—**परिपालयती**त्यस्यानुवृत्त्यतिवृत्तिफलप्रदानरूपरक्षणपरत्वात्। **प्रचुरदन्दशूके** इति। दन्दश्यते इत्यवयवव्युत्पत्त्या दंशमशकादिरत्र विवक्षित इत्युक्तं **भावप्रकाशिकायाम्**; व्यजनाद्यवधूतेति उपर्युक्त्या तन्निरसनीयजन्तुपरत्वौचित्यात्। शासकत्वमात्रेऽत्र वक्तव्ये **प्रचुरे**त्यादिबहुविस्तरः किमर्थ इति चेत्—यथा दुःखहेतुदेशसंबन्धे तुल्येऽपि कस्यचिद् दुःखं न भवति, तथा दुःखहेतुदेहसंबन्धे-

अविश्वजनोपभोग्यान् धारयति—तथाऽसौ लोकेश्वरो भ्रमत्वसामर्थ्यचामरो दोषैर्न स्पृश्यते, रक्षति च लोकान् ब्रह्मलोकादीन्, भोगांश्चाविश्वजनोपभोग्यान् धारयति" इति। मृत्सुवर्णादिवत् ब्रह्मस्वरूपपरिणामस्तु नैवाभ्युपगम्यते; अविकारत्वनिर्दोषत्वादिश्रुतेः॥

यत्तु—परैर्ब्रह्मकारणवादे भोक्तृभोग्यविभागाभावमाशङ्क्य समद्रफेनतरङ्गदृष्टान्तेन विभागप्रतिपादनपरं सूत्रं व्याख्यातम् - तदयुक्तम्; अन्तर्भावितशक्त्यविद्योपाधिकाद् ब्रह्मणः सृष्टिमभ्युपगच्छताम् एवमाक्षेपपरिहारयोरसङ्गतत्वात्। कारणान्तर्गतशक्त्यविद्योपाध्युपहितस्य भोक्तृत्वात्, उपाधेश्च भोग्यत्वात् विलक्षणयोस्तयोः परस्परभावापत्तिर्हि न संभवति। स्वरूपपरिणामस्तु तैरपि नाभ्युपेयते, (शारी.२-१-३५) "न कर्माविभागादिति चेन्नानादित्वात्" इति क्षेत्रज्ञानां तद्गतकर्मणां चानादित्वप्रतिपादनात्। स्वरूपपरिणामाभ्युपगमेऽपि भोक्तृभोग्याविभागाशङ्का कस्यचिदपि न जायते; मृत्सुवर्णादिपरिणामरूपघट शराव-कटकमकुटादिविभागवद् भोक्तृभोग्यविभागोपपत्तेः। स्वरूपपरिणामे च ब्रह्मण एव भोक्तृभोग्यत्वापत्तिरिति पुनरप्यसामञ्जस्यमेव॥ १४॥ इति भोक्त्रापत्त्यधिकरणम्॥ ५॥

४१. आरम्भणाधिकरणम् २ १-६॥

**तदनन्यत्वमारम्भणशब्दादिभ्यः। २। १। १५॥**

(शारी. २-१-७) "असदिति चेन्न प्रतिषेधमात्रत्वात्" इत्यादिषु कारणभूताद्ब्रह्मणः कार्यभूतस्य जगतोऽनन्यत्वमभ्युपगम्य ब्रह्मणो जगत्कारणत्वमुपपादितम्; इदानीं तदेवान-

ऽपीति केवलस्वामित्वस्याप्रयोजकत्वोपपादनाय। परापादितदुःखबाहुल्यवैपरीत्येन भोगबाहुल्यमेवेति पूर्वपक्षी सुदूरंनिरस्तो भवत्येवमुपपादनेन। लोकन्यायप्रदर्शनमिह; उभयलिङ्गाधिकरणे तु श्रुतिप्रदर्शनम्।

**अन्तर्भावितेति**। प्रलये शुद्धब्रह्ममात्रसत्त्वे सृष्टेरेवायोगात् यादवशङ्करभास्करैः क्रमेण शक्त्यविद्योपाधिसद्भावस्तदा स्वीकृतः। **उपहितस्येति**; विशिष्टस्येत्यर्थः। **उपाधेरिति** पदेन विशेषणभूतं शक्त्यादित्रयमपि विवक्षितम्। ननूपाधेरपि ब्रह्मपरिणामत्वस्य भास्करेष्टत्वात् शक्तेश्च ब्रह्माभेदस्य यादवेष्टत्वात् शंकेत्यत्राह **स्वरूपपरिणामाभ्युपगमेऽपीति**। भोग्यस्य भोक्तृत्वापादनमप्रसक्तं न परिहरणीयम्; ब्रह्मणो भोग्यत्वभोक्तृत्वरूपविकारापादनं पुनः अपरिहृतमेव स्थास्यतीत्याह **स्वरूपेति**॥ १४॥

विस्पष्टां विलक्षणत्वाधिकरणेन सगतिं दर्शयति **असदिति**। तत्र विलक्षणत्वात् ब्रह्मजगतोर्न कार्यकारणभाव इत्याक्षेपे परिहृते, तथासति अनन्यत्वभङ्गः असत्कार्यवादश्च स्याताम् इत्याशङ्का प्रसक्ता अनन्यत्वस्थापनेन परिहृता। तत् अनन्यत्वमाक्षिप्यत इत्यर्थः। नन्वस्याधिकरणस्याविरोधाध्याये कथं संगतिः। अन्यत्ववादिभिरपि कारणत्वस्वीकारात् तदंशे विरोधाभावादिति चेत्—एतदर्थमेव, 'अनन्यत्वमुक्त' मित्यनुक्त्वा **अनन्यत्वमभ्युपगम्य ब्रह्मणो जगत्कारणत्वमुपपादितम्**इति भाषितम्। अनन्यत्वाक्षेपः कारणत्वाक्षेप एवेति भावः। कथम्। उच्यते। जगत्कारणत्वं हि निमित्तत्वरूपमुपादानत्वरूपञ्च सर्वकार्यनिरूपितसाक्षात्कारणत्वम्। तत्र निमित्तत्वं तार्किकपक्षे घटते; नोपादानत्वम्। **कारणद्रव्याति-**

न्यत्वमाक्षिप्य समाधीयते। तत्र काणादाः प्राहुः—न कारणात् कार्यस्यानन्यत्वं संभवति,

रिक्तकार्यद्रव्यवादिभिस्तैरनेकावयवसंयोगत एवावयव्युत्पत्तिस्वीकारात् एकस्य ब्रह्मणो हि न द्रव्यमेकं प्रत्यप्युपादानत्वं भवितुमर्हति; किमुत सर्वं प्रति। एकद्रव्यादपि द्रव्योत्पत्तिस्वीकारेऽपि प्रथममेकमेव ब्रह्मणः कार्यमिति परम्परया जायमानानि प्रति न ब्रह्म कारणं भवेत्। कार्यकारणयोरनन्यत्वे तु तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायात् सर्वकारणत्वं संभाव्यते; तदेव नेति। असदितिसूत्रस्य स्थितत्वात्तु संगतिरेवमुक्ता। तदभावेऽपि संगतिर्भवत्येव। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानिर्वाहायोपादानोपादेयभाव उच्यते सिद्धान्तिना। तदयुक्तम्; भिन्नयोरेवोपादानोपादेयभावदर्शनात्। एवञ्च प्रतिज्ञाया उपचारत एव निर्वाह्यत्वादुपादानत्वमेव न स्वीकर्तव्यमिति। एवं विशिष्टवेषेणोपादानोपादेयभावोऽप्ययुक्तः। तथासति कार्यकारणरूपानेकब्रह्मापत्तेः। जीवस्य देहोत्पत्तिस्थले देहविशिष्टजीवे कार्यत्ववचनमप्ययुक्तम्; कार्यकारणयोर्भेदस्यावश्यकतया देहग्रहणपूर्वभाविजीवापेक्षया देहिनो भेदप्रसंगात् अकृताभ्यागमादि दोषात्। एवञ्च पूर्वाधिकरणेन साकमपि संगतिरेवं भवेत्—ब्रह्मणः सर्वशरीरकत्वेपि शासनाविषयत्वान्न भोक्तृत्वापत्तिरिति किलोपन्यस्तम्। तन्न; विशिष्टरूपकार्यान्तर्गतब्रह्मणां कारणभूतब्रह्मापेक्षया भिन्नत्वेन तस्यतस्य तत्तच्छरीरकत्वेऽपि एकस्य सर्वशरीरकत्वाभावात्; कार्यब्रह्मतो भिन्नत्वेन शासनविषयत्वस्यापि संभवेन सामान्यतो ब्रह्मणि भोक्तृत्वाभावोक्त्ययोगाच्चेति। एतद्दोषपरिहाराय विशिष्टकार्यकारणभावास्वीकारे च प्रागुक्तानन्यत्वाक्षेपः स्थित इति।

उपादानोपादेययोरन्यत्वमनन्यत्वं वेति विचारः। तत्रान्यत्वमिति तार्किकपूर्वपक्षः। अयमसत्कार्यवादी। सत्कार्यवादी सांख्यो वेदान्ती च। तत्र सांख्यः—कारणवत् कार्यमपि सर्वदाऽस्त्येव; किंतु कदाचित् तस्याभिव्यक्तिर्भवति; तदा व्यवह्रियते; तावता नासत्त्वम्, नापि कारणात् कार्यस्यान्यत्वमित्याह। वेदान्ती तु—एकमेव द्रव्यं पूर्वकाले कारणं पश्चात् कार्यं भवति। पूर्वस्थितावस्थापेक्षयाऽवस्थान्तरं तत्रैव द्रव्ये आरभ्यते,। तदा तत् कार्यमित्युच्यते; न तु अवस्थाविशिष्टवेषेणापि तस्यानभिव्यक्ततया सत्त्वं प्राक्। अथापि द्रव्यस्य सत्त्वात सत्कार्यवाद इति प्राह। अयमेव सिद्धान्तो भविष्यति। अत्रादौ तार्किकः स्वपक्षमुपन्यस्यन् सांख्यपक्षं खण्डयति प्रथमम्, अथाद्वैतिपक्षमपि। तत्पक्षश्च—कार्यं किञ्चित्, यदि सत्यम्, तदा किल अन्यत्वानन्यत्वविचारः, तदेव न; कार्यस्य सर्वस्य मिथ्यात्वात् कार्यकारणभावस्य दुर्वचत्वाच्चेति। एवं तर्हि कथं सूत्रकारोऽन्यत्वमाशंक्य अनन्यत्वं स्थापयतीति चेत्—न हि कार्यकारणयोर्वस्तुसतोरभेदं स स्थापयति; किं तु कारणादन्यस्य कार्यस्याभावमेवात्र प्रतिपादयतीत्याहाद्वैती।

तत्र एवं जगतो मिथ्यात्वे जीवस्यापि मिथ्यात्वापत्तिरित्याशंकायाम्, ब्रह्मैव जीव इति न मिथ्यात्वमिति स प्रत्याह। तर्हि जीवेश्वरबद्धमुक्तादिव्यवस्था न स्यादित्याशंकायाम्—तत्परिहाराय प्रतिबिम्बभूतानेकजीववादं नवीनाद्वैतिगृहीतमनूद्य तत्खण्डनपूर्वकमेकजीववादे स्थित्वा बद्धमुक्तादिव्यवस्था सर्वा कल्पितेति समादधानो वास्तवाद्वैती, ब्रह्माज्ञानस्यावश्याङ्गीकार्यतया मायाऽविद्याविभागपक्षमपि निरस्य ब्रह्मण एकाविद्यामूलक एकजीवभाव एवेत्युक्त्वा मिथ्यात्वात् कारणातिरिक्तकार्याभावमेव साधयति।

(१) विलक्षणबुद्धिबोध्यत्वात्; न खलु तन्तुपट-मृत्पिण्डघटादिषु कार्यकारणविषया बुद्धिरेकरूपा। (२) शब्दभेदाच्च; न हि तन्तवः पट इत्युच्यन्ते, पटो वा तन्तव इति। (३) कार्यभेदाच्च; न हि मृत्पिण्डेनोदकमाह्रियते, घटेन वा कुड्यं निर्मीयते। (४) कालभेदाच्च; पूर्वकालं च कारणम्, अपरकालं च कार्यम्। (५) आकारभेदाच्च; पिण्डाकारं कारणम्, कार्यं च पृथुबुध्नोदराकारम्। (६) तथा सत्यामेव मृदि घटो नष्ट इति व्यवह्रियते। (७) सङ्ख्याभेदश्च दृश्यते—बहवस्तन्तवः, एकश्च पटः।

(८) कारकव्यापारवैयर्थ्यश्च—कारणमेव चेत् कार्यम्, किं कारकव्यापारसाध्यं स्यात्॥ सत्यपि कार्ये कार्योपयोगितया कारकव्यापारेण भवितव्यं चेत्—सर्वदा कारकव्यापारेण नोपरन्तव्यम्। सर्वस्य सर्वदा सत्त्वेन नित्यानित्यविभागश्च न स्यात्।

अथ कार्यं सदेव पूर्वमनभिव्यक्तं कारकव्यापारेणाभिव्यज्यते—अतः कारकव्यापारार्थवत्त्वं नित्यानित्यविभागश्चोच्यते; तदसत्; अभिव्यक्तेरभिव्यक्त्यन्तरापेक्षत्वे अनवस्थानात्; अनपेक्षत्वे कार्यस्य नित्योपलब्धिप्रसङ्गात्; तदुत्पत्त्यभ्युपगमे चासत्कार्यवादप्रसङ्गात्। किञ्च कारकव्यापारस्याभिव्यञ्जकत्वे घटार्थेन कारकव्यापारेण करकादेरप्यभिव्यक्तिः प्रसज्यते; संप्रतिपन्नाभिव्यञ्जकभावेषु दीपादिष्वभिव्यङ्ग्यविशेषनियमादर्शनात्। न हि घटार्थमारोपितः प्रदीपः करकादीन् नाभिव्यनक्ति। अतोऽसतः कार्यस्योत्पत्तिहेतुत्वेनैव कारकव्यापारार्थवत्त्वम्। अतश्च सत्कार्यवादासिद्धिः।

न च नियतकारणोपादानं सत एव कार्यत्वं साधयति; कारणशक्तिनियमादेव तदुपपत्तेः॥ नन्वसत्कार्यवादिनोऽपि कारकव्यापारो नोपपद्यते; प्रागुत्पत्तेः कार्यस्यासत्त्वात् कार्यादन्यत्र कारकव्यापारेण भवितव्यम्; तत्र अन्यत्वाविशेषात् तन्तुगतकारकव्यापारेण घटोत्पत्तिरपि प्रसज्यते॥ नैवम्; यत्कार्योत्पादनशक्तं यत् कारणम्, तद्गतकारकव्यापारेण तत्कार्योत्पत्तिसिद्धेः॥

---

अथैतत्पक्षखण्डनेन कार्योत्पत्तिसत्यत्वगोरुपपादनेन कार्यकारणभेदं स्वविवक्षितं स्थापयति तार्किकः। एवं पूर्वपक्षे प्राप्ते पश्चात् अनन्यत्वसिद्धान्त इति संग्रहः।

**विलक्षणे**त्यादिना अष्टौ हेतव उपन्यस्ताः—कार्यं कारणादन्यत् विलक्षणबुद्धिविषयत्वात्, विभिन्नशब्दवाच्यत्वात्, विभिन्नकार्यकरत्वात्, विभिन्नकालकत्वात्, विभिन्नाकारत्वात्, कारणसत्ताकालिकनाशप्रतियोगित्वात्, विभिन्नसंख्यत्वात्, कारणासाधककारकव्यापारसाध्यत्वाच्चेति। तत्र कार्यस्य प्रागेव सत्त्वेऽपि तदभिव्यक्तेः कारकव्यापाराधीनत्वं पाश्चात्त्यस्य तदभिव्यक्त्यभावस्यैव विनाशरूपत्वं च वर्णयन् सांख्यः प्रत्यवतिष्ठते **अथकार्य**मिति। प्रागसत्या एवाभिव्यक्तेः कार्यत्ववत् सर्वत्रासत एव कार्यत्वमुचितमित्याशयेन तार्किक आह **अभिव्यक्ते**रिति। **नियतकारणोपादानम्**। तैलार्थं तिलस्यैवोपादानम्, न सिकताया इति कुतः? तिल एव तत्सत्त्वादेव हि। तथैव सर्वत्रेति भावः।

**अत्राहुः**—कारणादनन्यत् कार्यम्; न हि परमार्थतः कारणव्यतिरिक्तं कार्यं नाम वस्त्वस्ति, अविद्यानिबन्धनत्वात् सकलकार्यतद्व्यवहारयोः। अतो यथा कारणभूतात् मृद्द्रव्यात् घटादिषु विकारेषूपलभ्यमानाद् व्यतिरिक्तं घटशरावादिकार्यं व्यवहारमात्रालम्बनं मिथ्या; कारणभूतं मृद्द्रव्यमेव सत्यम्; तथा निर्विशेषसन्मात्रात् कारणभूताद् ब्रह्मणोऽन्योऽहङ्कारादिव्यवहारालम्बनः कृत्स्नः प्रपञ्चो मिथ्या; कारणभूतं सन्मात्रं ब्रह्मैव सत्यम्। तस्मात् कारणव्यतिरिक्तं कार्यं नास्तीति कारणादनन्यत् कार्यम्॥

न च वाच्यं शुक्तिकारजतादीनामिव घटादिकार्याणामसत्यत्वाप्रसिद्धेर्दृष्टान्तानुपपत्तिरिति; यतस्तत्रापि युक्त्या मृद्द्रव्यमात्रमेव सत्यतया व्यवस्थाप्यते; तदतिरिक्तं तु युक्त्या बाद्ध्यते॥ का पुनरत्र युक्तिः?॥ मृद्द्रव्यमात्रस्यानुवर्तमानत्वम्, तदतिरिक्तस्य च व्यावर्तमानत्वम्। रज्जुसर्पादिषु ह्यनुवर्तमानस्याधिष्ठानभूतस्य रज्ज्वादेः सत्यता, व्यावर्तमानस्य च सर्पभूदलनाम्बुधारादेरसत्यता दृष्टा; तथाऽनुवर्तमानमधिष्ठानभूतं मृद्द्रव्यमेव सत्यम्; व्यावर्तमानास्तु घटशरावादयोऽसत्यभूताः। **किञ्च** सत आत्मनो विनाशाभावात् असतश्च शशविषाणादेरुपलब्ध्यभावादुपलब्धिविनाशयोगि कार्यं **सदसद्भ्या**मनिर्वचनीयमिति गम्यते। अनिर्वचनीयं च शुक्तिकारजतादिवन्मृषैव। तस्य चानिर्वचनीयत्वं प्रतीतिबाधाभ्यां सिद्धम्। **किञ्च कार्य**मुत्पादयत् मृदादि कारणद्रव्यं किम**विकृतमेव**, कार्यमुत्पादयति, उत कञ्चन विशेषमापन्नम्। न तावदविकृतम् उत्पादयति; सर्वदोत्पादकत्वप्रसङ्गात्। नापि विशेषान्तरमापन्नम्; विशेषान्तरापत्तेरपि विशेषान्तरापत्तिपूर्वकत्वेन भवितव्यम्, तस्या अपि तथेत्यनवस्थानात्॥ अविकृतमेव देशकालनिमित्तविशेष**संबद्ध**म्, कार्यमुत्पादयतीति चेत्—न। देशादिविशेषसंबन्धोऽपि ह्यविकृतस्य विशेषान्तरमापन्नस्य च पूर्ववन्न संभवति॥

---

तार्किक एवाद्वैतिपक्षमपि खण्डयितुमुत्थापयति **अत्राहु**रिति। ननु कार्यकारणयोर्भेदस्तार्किकेष्टो यथा, तथा तयोः मिथ्यासत्यभूतयोर्भेदो मृषावादीष्ट एवेति किमिति खण्डनम्—उच्यते—एवं ह्यद्वैती तार्किकमाह—कारणात् कार्यं किञ्चिज्जायते, भिद्यते चेति कार्यत्वं स्वीकृत्य भेदवर्णनमयुक्तमिति। सूत्रकारेण कार्यत्वं स्वीकृत्य अन्यत्वानन्यत्वविचारस्यैव क्रियमाणत्वादद्वैतिपक्षोऽयं पूर्वपक्षिमुखेनैव भाष्ये परास्यते। ननु व्यावर्तमानत्वरूपहेतुरहेतुः, बाधितत्वस्योपाधित्वादित्यत्र उपाधिमपि पक्षे स्थापयति **किञ्चे**ति। **सदसद्भ्या**मिति। सदसच्छब्दाभ्यामित्यर्थः। शुक्तिरजते प्रतीयमानत्वविशिष्टबाधितत्वरूपहेतुना सदसदनिर्वचनीयत्वं सिद्धम्। तत् अनिर्वचनीयत्वं प्रकृते सिद्ध्यत् स्वव्याप्येन बाधितत्वेन सहैव सिद्ध्येदिति भावः। तर्हि मृद् घट इति ज्ञाने जाते घटादिकं बाध्येतेति चेन्न—घटप्रतीतिहेतोर्दोषस्य सत्त्वेन द्विचन्द्रज्ञानवत् घटप्रतीत्यनुवृत्तिसंभवात्। कस्मात् कार्यत्वं प्रत्यक्षसिद्धं नेष्यत इत्यत्राद्वैती विशदयति **किञ्चकार्य**मिति। **अविकृतमेवे**ति प्रथमान्तं कारणद्रव्यविशेषणम्; कञ्चन विकारमापन्नं सदित्यर्थः। **संबद्ध**मित्यपि कारणद्रव्यविशेषणम्, संबद्धं सदित्यर्थः।

नच वाच्यम्—मृत्सुवर्णदुग्धादिभ्यो घटरुचकदध्यादीनामुत्पत्तिर्दृश्यते ; शुक्तिकारजतादिवद् देशकालादिप्रतिपन्नोपाधौ बाधश्च न दृश्यते ; अतः प्रतीतिशरणानां कारणात् कार्योत्पत्तिरवश्याश्रयणीया—इति—विकल्पासहत्वात्—

किं हेमादिमात्रमेव स्वस्तिकादेरारम्भकम् ; उत रुचकादिः, अथ रुचकाद्याश्रयो हेमादिः। न तावत् हेमादिमात्रमारम्भकम् ; हेमव्यतिरिक्तस्य कार्यस्याभावात्, स्वात्मानं प्रति आत्मन आरम्भकत्वासंभवाच्च ॥ हेमव्यतिरिक्तं स्वस्तिकं दृश्यत इति चेत्—न हेमव्यतिरिक्तं तत् ; हेमप्रत्यभिज्ञानात्, तदतिरिक्तवस्त्वन्तरानुपलब्धेश्च ॥ बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरत्वं साधितमिति चेन्न—अनिरूपितवस्त्वलम्बनानां बुद्धिशब्दान्तरादीनां शुक्तिकारजतबुद्धिशब्दादिवद् भ्रान्तिमूलत्वेन वस्त्वन्तरसद्भावस्यासाधकत्वात् ॥ नापि रुचकादि स्वस्तिकादेरारम्भकम् ; स्वस्तिके हि रुचकम्, पटे इव तन्तवो भवतापि नोपलभ्यते। नापि रुचकाश्रयभूतं हेम, रुचकाश्रयाकारेण हेम्नः स्वस्तिकेऽनुपलब्धेः।

अतो मृदादिकारणातिरिक्तस्य कार्यस्यासत्यत्वदर्शनात् ब्रह्मव्यतिरिक्तं कृत्स्नं जगत् कार्यत्वेन मिथ्याभूतम्। तदिदं ब्रह्मव्यतिरिक्तमिथ्यात्वसुखप्रतिपत्तये काल्पनिकमृदादिसत्यत्वमाश्रित्य कार्यस्यासत्यत्वं प्रतिपादितम्। परमार्थतस्तु मृत्सुवर्णादि कारणमपि घटरुचकादिकार्यवत् मिथ्याभूतम् ; ब्रह्मकार्यत्वाविशेषात् ॥

(छा. ६-८.७) "ऐतदात्म्यमिदं सर्वं तत् सत्यम्", (कठ. ४-११) "नेह नानास्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति", (बृ. ४-४ १४) "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" (बृ. ४. ५-१९) "इन्द्रो मायाभिः पुरुरूप ईयते" इत्येवमादिभिः श्रुतिभिश्च ब्रह्मव्यतिरिक्तस्य मिथ्यात्वमवगम्यते। न चाऽऽगमावगतार्थस्य प्रत्यक्षविरोधः शङ्कनीयः ; यथोक्तप्रकारेण कार्यस्य सर्वस्य मिथ्यात्वावगमात् ; प्रत्यक्षस्य सन्मात्रविषयत्वाच्च। विरोधे सत्यप्यसंभावितदोषस्य चरमभाविनः, स्वरूपसद्भावादौ प्रत्यक्षाद्यपेक्षत्वेऽपि प्रमितौ निराकाङ्क्षस्य निरव-

---

**स्वस्तिके** इति। स्वस्तिकावयवतयेत्यर्थः। एवं **पटे** इत्यस्यापि। **ब्रह्मकार्यत्वे**ति। सृष्टिवाक्यैः सर्वस्य ब्रह्मकार्यत्ववर्णनं हि, 'वाचारम्भणं विकारः' इति दर्शितरीत्या कार्यकारणभावस्य व्यावहारिकत्वं दुर्निरूपत्वं ततः सर्वस्यासत्यत्वं दर्शयितुमेवेति भावः। मृत्कार्यस्यासत्यत्वं मृदः सत्यत्वञ्च यथा, तथा सतः सत्यत्वमन्यस्यासत्यत्वञ्च न कण्ठोक्तमिति न, तत्प्रकरणे, अन्यत्र च बहुवाक्यसद्भावादित्याशयेनाह **ऐतदात्म्यमि**ति। **सन्मात्रे**त्यादिवाक्यार्थः जिज्ञासाधिकरणे व्यक्तः। **असंभावितदोषस्ये**ति। न ह्यद्वैतज्ञानस्य भेदवासनारूपदोषमूलकत्वमस्तीति भावः। **चरमभाविनः** इति। द्वैताभावज्ञानस्य द्वैतज्ञानाधीनत्वात् पश्चाद्भावित्वम्। एवं ज्ञानगतमसंभावितदोषत्वं चरमभावित्वञ्च तज्ज्ञानजनके नेहनानास्तीति 'शास्त्रे' उपचरितम्। **स्वरूपसद्भावादा**वित्यादि। नेहनानेत्यानुपूर्वीसद्भावे तद्घटकप्रत्येकपदार्थव्युत्पत्तौ चास्ति बोधयितृमूलकप्रत्य-

काशस्य शास्त्रस्य बलीयस्त्वात् ॥

अतः कारणभूताद्ब्रह्मणोऽन्यत् सर्वं मिथ्या ।

न च प्रपञ्चमिथ्यात्वेन जीवमिथ्यात्वमाशङ्कनीयम्, ब्रह्मण एव जीवभावात् । ब्रह्मैव हि सर्वशरीरेषु जीवभावमनुभवति—(छा. ६-३-२) "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य", (श्वे. ६-११) "एको देवः सर्वभूतेषु गूढः", (यजु- आर. ३) "एको देवो बहुधा निविष्टः", (कठ. ३-१२) "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते", (बृ. १-७-२३) "नान्योऽतोऽस्ति द्रष्टा" इत्येवमादिभ्यः ।

नन्वेकमेव ब्रह्म सर्वशरीरेषु जीवभावमनुभवति चेत्-'पादे मे वेदना', 'शिरसि मे सुखम्' इतिवत् सर्वशरीरेषु सुखदुःखप्रतिसन्धानं स्यात्; जीवेश्वरबद्धमुक्तशिष्याचार्यज्ञत्वाज्ञत्वादिव्यवस्था च न स्यात्—

अत्र केचिदद्वितीयत्वं ब्रह्मणोऽभ्युपयन्त एवैवं समादधते—एकस्यैव ब्रह्मणः प्रतिबिम्बभूतानां जीवानां सुखित्वदुःखित्वादयः, एकस्यैव मुखस्य प्रतिबिम्बानां मणिकृपाणदर्पणादिषूपलभ्यमानानामल्पत्वमहत्त्वमलिनत्वविमलत्वादिवत्, तत्तदुपाधिवशात् व्यवस्थास्य(प्य)न्ते ॥ ननु (छा. ६-३-२) "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" इत्यादिश्रुतेर्न जीवा ब्रह्मणो भिद्यन्त इत्युक्तम् ॥ सत्यम्, परमार्थतः । काल्पनिकं तु भेदमाश्रित्येयं व्यवस्थोच्यते ॥ कस्य पुनः कल्पना? न तावद् ब्रह्मणः; तस्य परिशुद्धज्ञानात्मनः कल्पनाशून्यत्वात् । नापि जीवानाम्; इतरेतराश्रयत्वप्रसङ्गात्—कल्पनाधीनो हि जीवभावः, जीवाश्रया च कल्पनेति ॥ नैतदेवम्; अविद्याजीवभावयोर्बीजाङ्कुरन्यायेनानादित्वात् । किञ्च—प्रासादनिगरणादिवदनुपपन्नतैकवेषायामवस्तुभूतायामविद्यायां नेतरेतराश्रयत्वादयो वस्तुदोषा अनवक्लृप्तिमावहन्ति । वस्तुतो ब्रह्माव्यतिरिक्तानां जीवानां स्वतो विशुद्धत्वेऽपि

---

क्षाद्यपेक्षा । अथापि वाक्यात् वाक्यार्थबोधे उत्पादनीये पदार्थस्मृत्यादिकमेवापेक्षितम् । यथा नेदंरजतमिति प्रत्यक्षं प्रति रजतप्रत्यक्षस्य न कारणत्वम्, रजतस्मृत्यैव निर्वाहात्, तथा अद्वैतविषयकबोधे द्वैतप्रत्यक्षस्य न कारणत्वम् ! अतः शास्त्रस्य बोधोत्पादने साक्षात् प्रत्यक्षापेक्षा नास्तीति निराकांक्षत्वमिति ।

नन्वेवं जीवस्यापि मिथ्यात्वात् कस्य मोक्षार्थः प्रयत्न इति तार्किकप्रश्नं प्रत्याह **नचेति** । **ज्ञत्वेति** । जीवेश्वरादिषु श्रुत्यादिसिद्धज्ञत्वादीत्यर्थः । अन्तिममाक्षेपं स्वयमन्यथा परिहरिष्यन् मुख्याद्वैती सयूथ्यैः क्रियमाणं परिहारं निरसितुमनुवदति **अत्रकेचिदिति** । **केचित् मण्डनमिश्रादयः** । **ब्रह्मसिद्धौ** बिम्बप्रतिबिम्बभाव उपपादितः । **वाचस्पतिमिश्रादे**र्बिम्बप्रतिबिम्बभावविषयेऽनाश्वासेऽपि तत्तुल्यत्वमिष्टमेव । अनेकजीवाश्रितानेकाविद्यावादस्तुल्यः । **कस्येति**; किंनिष्ठेत्यर्थः । **अनवक्लृप्तिम्** असिद्धिम् । "दुर्घटत्वमविद्याया भूषणम्, न तु दूषणम्" इति हि तद्वादः । नन्वन्योन्याश्रयादिदोषे सत्यपि उपपत्त्यनपेक्षतया चेत् अविद्या जीवमाश्रयेत्, अविशेषात् मुक्तम्, परं ब्रह्म चाश्रयेदिति शंकायाम्,

कृपाणादिगतमुखप्रतिबिम्बश्यामतादिवत् औपाधिकाशुद्धिसंभवादविद्याश्रयत्वोपपत्तेः काल्पनिकत्वोपपत्तिः। प्रतिबिम्बगतश्यामतादिवत् जीवगताशुद्धिरपि भ्रान्तिरेव; अन्यथा अनिर्मोक्षप्रसङ्गात्। जीवानां भ्रमस्य प्रवाहानादित्वान्न तद्धेतुरन्वेषणीयः—इति॥

तदेतदविदिताद्वैतयाथात्म्यानां भेदवादश्रद्धालुजनसबहुमानावलोकनलिप्साविजृम्भितम्। तथाहि—जीवस्याकल्पितस्वाभाविकरूपेणाविद्याश्रयत्वे ब्रह्मण एवाविद्याश्रयत्वमुक्तं स्यात्। तदतिरिक्तेन तस्मिन् कल्पितेनाऽऽकारेणाविद्याश्रयत्वे जडस्याविद्याश्रयत्वमुक्तं स्यात्। न खल्वद्वैतवादिनः तदुभयव्यतिरिक्तमाकारमभ्युपगच्छन्ति॥ कल्पिताकारविशिष्टेन स्वरूपेणैवाविद्याश्रयत्वमिति चेत्—तन्न, स्वरूपस्याखण्डैकरसस्याविद्यामन्तरेण विशिष्टरूपत्वासिद्धेः, अविद्याश्रयाकार एव हि निरूप्यते।

किञ्च बन्धमोक्षादिव्यवस्थासिद्ध्यर्थं हि जीवाज्ञानवादाश्रयणम्, सा तु व्यवस्था जीवाज्ञानपक्षेऽपि न सिध्यति। अविद्याविनाश एव हि मोक्षः। तत्रैकस्मिन् मुक्ते अविद्याविनाशादितरेऽपि विमुच्येरन्॥ अन्यस्यामुक्तत्वादविद्या तिष्ठतीति चेत्—तर्ह्येकस्याप्यमुक्तिः स्यात्, अविद्याया अविनष्टत्वात्॥ प्रतिजीवमविद्याभेदः कल्प्यते। तत्र यस्याविद्या विनष्टा, स मोक्ष्यते; यस्य त्वविनष्टा, स भन्त्स्यत इति चेत्—तन्न, प्रतिजीवमिति जीवभेदमाश्रित्य ब्रूषे; स जीवभेदः किं स्वाभाविकः, उताविद्याकल्पितः; न तावत् स्वाभाविकः, अनभ्युपमात्। भेदसिद्ध्यर्थस्य चाविद्याकल्पनस्य व्यर्थत्वात्॥ अथाविद्याकल्पितः, तत्रेयं जीवभेदकल्पिका अविद्या किं ब्रह्मणः उत जीवानाम्॥ ब्रह्मण इति चेत्—आगतोऽसि मदीयं मार्गम्॥ अथ जीवानाम्, किमस्याः जीवभेदक्लृप्तिसिद्ध्यर्थतां विस्मरसि॥ अथ प्रतिजीवं बद्धमुक्तव्यवस्थासिद्ध्यर्थं या अविद्याः कल्प्यन्ते, ताभिरेव जीवभेदोऽपीति मनुषे—जीवभेदसिद्धौ ताः सिद्ध्यन्ति, तासु सिद्धासु जीवभेदसिद्धिरितीतरेतराश्रयत्वम्। न चात्र बीजाङ्कुरन्यायस्सिध्यति; बीजाङ्कुरेषु ह्यन्यदन्यद् बीजमन्यस्यान्यस्याङ्कुरस्योत्पादकम्; इह तु याभिरविद्याभिर्ये जीवाः कल्प्यन्ते, तानेवाश्रित्य तासां सिद्धिरिति अश(शं)कनीयता। अथ बीजाङ्कुरन्यायेन पूर्वपूर्वजीवाश्रयाभिरविद्याभिरुत्तरोत्तरजीवकल्पनां मन्यसे, तथा सति जीवानां भङ्गुरत्वम-

---

उक्तं परित्यज्य पूर्वोक्तबीजाङ्कुरन्यायमेवादृत्याऽऽह **वस्तुत** इति। अशुद्धस्यैवाविद्याश्रयत्वम्, अविद्याश्रयत्वादेव जीवभावः; अशुद्धिरपि मिथ्यैव; तत्काल्पनिकत्वञ्च पूर्वाविद्यात इति बीजाङ्कुरन्याय एवेति भावः। केयमशुद्धिरिति चेत्—अविद्याप्रतिभटत्वाभावः।

शुद्धब्रह्मणो वा, तदन्यस्य कल्पिताकारविशिष्टब्रह्मणो वा, तदभिन्नस्य कल्पिताकारविशिष्टब्रह्मणो वेति त्रेधा विकल्पं कृत्वा दूषयति **जीवस्ये**ति। **मदीयं मार्गम्** ब्रह्माज्ञानवादमार्गम्। **अशकनीयता** बीजाङ्कुरन्यायावतारणस्याशक्यता। प्रतिजीवमविद्यैक्ये बीजाङ्कुरन्यायासंभवेऽपि प्रवाहाविद्यास्वीकारे संभवत्येवेति पृच्छति **अथे**ति। वाक्यान्वयाधिकरणान्ते **भामत्यां** बीजाङ्कुरन्याय उक्तः। अविद्याभेदवत्

कृताभ्यागमकृतविप्रणाशादिप्रसङ्गश्च। अत एव ब्रह्मणः पूर्वपूर्वजीवभावा(?)श्रयाभिरविद्याभिरुत्तरोत्तरजीवभावकल्पनमित्यपि निरस्तम्। अविद्याप्रवाहेऽभ्युपगम्यमाने तत्कल्पितजीव[भाव] स्यापि तद्वत् प्रवाहानादिता स्यात्; न ध्रुवरूपता। आमोक्षाच्च जीव[भाव]स्य ध्रुवत्वमिष्टं न सिध्येत्।

यच्चोक्तम्—अविद्याया अवस्तुरूपत्वेनानुपपन्नतैकत्रेषायाः नेतरेतराश्रयत्वादयो वस्तुदोषा अनवक्लृप्तिमावहन्तीति—तथा सति मुक्तान् परञ्च ब्रह्म आश्रयेदविद्या॥ शुद्धविद्यास्वरूपत्वादशुद्धिरूपा न तत्र प्रसजतीति चेत्—किमुपपत्त्यनुवर्तिनी अविद्या? एवं तर्हि उक्ताभिरुपपत्तिभिर्जीवानपि नाश्रयेत्। किञ्च जीवाश्रयाया अविद्यायास्तत्त्वज्ञानोदयान्नाशे सति जीवो नश्येद्वा, न वा। यदि नश्येत्, स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात्; नो चेत्, अविद्यानाशेऽप्यनिर्मोक्षः; ब्रह्मस्वरूपव्यतिरिक्तजीवत्वावस्थानात्।

---

जीवभेदस्याप्यापत्त्या अनिष्टं दर्शयति **तथासतीति**। **अकृताभ्यागमः**—स्वाकृतकर्मफलानुभवापत्तिः। **कृतविप्रणाशः** स्वकृतकर्मफलानुभवस्य निष्कारणो भङ्गः। ननु तदीयाविद्याकल्पिते जीवे तदीयकर्मसंक्रमः संतानैक्यादिति चेत्-बौद्धपक्षप्रवेशोऽत्र श्रुतिविरोधः स्पष्टः। ननु जीवस्याविद्याकल्पितत्वे खल्वयं दोषः। जीवभावोऽविद्याकल्पितो ब्रह्मण इति ब्रूमः। जीवभावसंततौ सत्यामपि न जीवव्यक्तिसंततिरिति मतमपि निरस्यति **अत** एवेति। जीवभावस्य भङ्गुरत्वादेवेति तदर्थः। इममुपपादयति **अविद्ये**ति। **जीवभावाश्रयाभिः** जीवभावनिमित्ताभिरिति **भावप्रकाशिका**। ततः किमित्यत्राह **आमोक्षाच्चे**ति। जीवस्य कल्पितत्वपक्षे तस्याऽऽमोक्षात् ध्रुवत्वम्, ततो निवृत्तिः; जीवभावस्य कल्पितत्वे धर्म्यनिवृत्तिः, तन्मात्रनिवृत्तिरित्येतावानेव हि विशेषोऽभिमतः। तथापि आमोक्षात् धर्मध्रुवत्वमिष्टं भज्यत इति अनिष्टमिदमिति भावः। **आमोक्षाच्च जीवभावस्ये**ति भाष्यपाठानुसारेणैवं व्याख्यातम्। **जीवस्ये**ति पाठमादृत्य **जीवभावविशिष्टस्ये**ति व्याख्यातं **टीकायाम्**। जीवकल्पन-जीवभावकल्पनरूपपक्षद्वयसाधारणं दूषणमिदमित्यप्युक्तम्। जीवस्य ब्रह्मणो भेदो हि विशेषणभेदप्रयुक्तः। तस्मात् जीवभावस्य प्रवाहतोऽनेकत्वे जीवभावभेदात् तद्विशिष्टजीवोऽपि भिन्नभिन्न एवेति जीवस्याध्रुवत्वं द्वितीयपक्षेऽप्यस्तीति भावः।

वाक्यान्वयाधिकरण**भामत्या**मेव, 'ब्रह्मणो जीवो भाविक एवांशः, न काल्पनिक' इति भास्करमतखण्डनान्ते, 'अस्तु वाऽनुपपत्तिरेव, कार्यकारणयोर्मायात्मकत्वात्। अनुपपत्तिर्हि मायामुपोद्बलयति; अनुपपद्यमानार्थत्वान्मायायाः' इति अविद्यादुर्घटत्वपक्ष आदृतः। तं प्रागुक्तं खण्डयितुमनुवदति **यच्चोक्त**मिति। जीवकाल्पनिकत्वपक्षे दोषान्तरमाह **किञ्चे**ति। बीजाङ्कुरन्यायवर्णनमध्य एव प्राक् अविद्यादुर्घटत्वपक्षस्योक्ततया दूषणावसरेऽपि मध्ये तद् दूषयित्वा पुनर्जीवप्रवाहपक्षे दोषान्तरवर्णनमेवं क्रियते। अस्यैव दोषस्य **यच्चोक्त**मित्यत्रापि वक्तव्यत्वाच्चैवम्। **नो चे**दिति। ब्रह्मणोऽविद्याश्रयत्वे तु ब्रह्म न नश्यतीत्येव स्वीकारान्न दोषः। **व्यतिरिक्तजीवत्वावस्थाना**दिति। जीवस्यावस्थानादिति पाठः स्यात्। जीवत्वेति पाठेऽपि, जीवस्य जीवत्वेन सहैव स्थित्या तथोक्तमिति ध्येयम्। **ब्रह्मव्यतिरिक्तं ब्रह्म**णि

यच्चोक्तम्—मणिकृपाणदर्पणादिषूपलभ्यमानमुखमलिनत्वविमलत्वादिवत् शुद्ध्यशुद्ध्यादिव्यवस्थोपपत्तिरिति—तत्रेदं विमर्शनीयम्—अल्पत्वमलिनत्वादय औपाधिका दोषाः कदा नश्येयुरिति ॥ कृपाणाद्युपाध्यपगम इति चेत्—किं तदाऽल्पत्वाद्याश्रयः प्रतिबिम्बं तिष्ठति वा, न वा। तिष्ठति चेत्—तत्स्थानीयस्य जीवस्यापि स्थितत्वादनिर्मोक्षप्रसङ्गः ॥ नश्यति चेत्—तद्वदेव जीवनाशात् स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात्।

किञ्च-यस्य ह्यपुरुशार्थरूपदोषप्रतिभासः, तस्य तदुच्छेदः पुरुषार्थः। तत्र किमौपाधिकदोषप्रतिभासो बिम्बस्थानीयस्य ब्रह्मणः, उत प्रतिबिम्बस्थानीयस्य जीवस्य, उतान्यस्य कस्यचित्? आद्ययोः कल्पयोर्दृष्टान्तोऽयं न संगच्छते; मुखस्य मुखप्रतिबिम्बस्य चाल्पत्वादिदोषप्रतिभासशून्यत्वात्, न हि मुखं तत्प्रतिबिम्बं वा चेतयते। ब्रह्मणो दोषप्रतिभासे ब्रह्माविद्याप्रसङ्गश्च। तृतीयोऽपि कल्पो न कल्पते; जीवब्रह्मव्यतिरिक्तस्य द्रष्टुरभावात्।

किञ्च अविद्याकल्प्यस्य जीवस्य कल्पकः क इति निरूपणीयम्। न तावदविद्या; अचेतनत्वात्। नापि जीवः; आत्माश्रयदोषप्रसङ्गात्, शुक्तिकारजतादिवत् अविद्याकल्प्यत्वाच्च जीवभावस्य ॥ ब्रह्मैव कल्पकमिति चेत्—ब्रह्माज्ञानमेवाऽऽयातम्।

किञ्च ब्रह्माज्ञानानभ्युपगमे, किं ब्रह्म जीवान् पश्यति वा, न वा? न पश्यति चेत्—ईक्षापूर्विका विचित्रसृष्टिर्नामरूपव्याकरणमित्यादि ब्रह्मणो न स्यात्। अथ पश्यति, अखण्डैकरसं ब्रह्म नाविद्यामन्तरेण जीवान् पश्यतीति ब्रह्माज्ञानप्रसङ्गः।

अत एव मायाविद्याविभागवादोऽपि निरस्तः। अज्ञानमन्तरेण हि मायिनोऽपि ब्रह्मणो जीवदर्शित्वं न स्यात्। न च मायावी परान् अदृष्ट्वा मोहयितुमलम्। नापि माया मायाविनो दर्शनसाधनम्; दृष्टेषु परेषु तन्मोहनसाधनमात्रत्वात् तस्याः ॥ अथ ब्रह्मणो माया तस्य जीवदर्शित्वं कुर्वती जीवमोहनस्य हेतुरिति मन्यसे, तर्हि परिशुद्धस्याखण्डैकरसस्वप्रकाशस्य ब्रह्मणः परदर्शनं कुर्वती माया मायापरपर्याया अविद्यैव स्यात् ॥ अथ मतम्—विपरीतदर्शनहेतुरविद्या; माया तु मिथ्याभूतं ब्रह्मव्यतिरिक्तं मिथ्यात्वेन दर्शयन्ती न ब्रह्मणो विपरीतदर्शनहेतुः। अतस्तस्या नाविद्यात्वमिति ॥ नैवम्-चन्द्रैकत्वे ज्ञायमाने द्विचन्द्रदर्शनहेतोरप्यविद्यात्वात् ॥ यदि च ब्रह्म मिथ्यात्वेनैव स्वव्यतिरिक्तं जानाति, न तर्हि तन्मोहयति। न ह्यनुन्मत्तो

---

कल्पितजीववृत्तितया ब्रह्मावृत्ति जीवत्वं यस्य तस्य जीवस्यावस्थानादिति वाऽर्थः। एवञ्चानेकस्य स्थितिरापादिता भवति। दृष्टान्तवैषम्यं दर्शयन् दूषयति **किञ्च यस्येति**। अविद्याविषयत्वमेव ब्रह्मणः, न त्वविद्याश्रयत्वम्; अथापीक्षणादिकं ब्रह्मणि घटते, मायाशबलितत्वात्। अविद्या माया च भिन्ना। अविद्याश्रयो जीवः, मायाश्रयश्च ब्रह्म। अविद्याया एवाज्ञानत्वात् ब्रह्मणि तदभावात् न ब्रह्माज्ञानवाद इति जरद्द्वैतिमतम्। तदपि खण्डयति **अत एवेति**। मतमिदं **विवरण**कारदूषितमेव। **अज्ञान**मिति। स्वस्य भ्रान्तिहेतुरज्ञानम्; परस्य भ्रान्तिहेतुर्माया; उभयमपि ब्रह्मण्यावश्यकम्; मायाया वा अज्ञानत्वा-

**मिथ्यात्वेन ज्ञातान् मोहयितुमीहते। अथ—अपुरुषार्थापरमार्थदर्शनहेतुरविद्या; माया तु ब्रह्मणो नापुरुषार्थदर्शनहेतुः; अतोऽस्याः नाविद्यात्वमिति मतम्—तन्न। द्विचन्द्रज्ञानस्य दुःखहेतुत्वाभावेनापुरुषार्थत्वाभावेऽपि तद्धेतुरविद्यैव। तन्निरसने च प्रयस्यन्ति। यदि च नापुरुषार्थदर्शनकरी माया, तर्ह्यनुच्छेद्यतया नित्या ब्रह्मस्वरूपानुबन्धिनी स्यात्॥ अस्तु को दोष इति चेत्—द्वैतदर्शनमेव दोषः। (बृ. ४-४-१४) "यत्र हि द्वैतमिव भवति...यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येत्" इत्याद्यद्वैतश्रुतयः प्रकुप्येयुः॥ परमार्थविषया अद्वैतश्रुतयः मायायास्त्वपरमार्थत्वादविरोध इति चेत्—अपरिच्छिन्नानन्दैकस्वरूपस्य ब्रह्मणोऽपरमार्थभूतमायादर्शनं तद्वत्ता चाविद्यामन्तरेण नोपपद्यते; किञ्च अपरमार्थभूतया नित्यया मायया किं प्रयोजनं ब्रह्मणः?॥ जीवमोहनमिति चेत्—अपुरुषार्थेन मोहनेन किं प्रयोजनम्॥ क्रीडेति चेत्—अपरिच्छिन्नानन्दस्य किं क्रीडया॥ परिपूर्णभोगानामेव क्रीडा पुरुषार्थत्वेन लोके दृष्टेति चेत्- नैवमिहोपपद्यते; न ह्यपरमार्थभूतैः क्रीडोपकरणैरपरमार्थतया प्रतिभासमानैर्निष्पन्नया अपरमार्थभूतया क्रीडया अपरमार्थभूतेन च तत्प्रतिभासेनानुन्मत्तानां क्रीडारसो**

---

कारोऽपि वाच्य इति विशिष्टार्थः। अविद्याया इव मायाया अपि अद्वैतविपरीतद्वैतदर्शनं प्रति, तस्य परमार्थतया दर्शनं च प्रति हेतुत्वेऽपि तद्दर्शनमपुरुषार्थहेतुर्न भवतीत्येतावता मायाविद्याविभाग इति पृच्छति **अथापुरुषार्थे**ति। **द्वी**ति। अपुरुषार्थदर्शनहेतुत्वरूपमविद्यालक्षणमव्याप्तमित्यर्थः। अपुरुषार्थतारहितदर्शनहेतुत्वरूपमायालक्षणमसंभवीत्याह **यदि चे**ति। **अविरोध** इति। ननु परमार्थभूतद्वैतविषयकदर्शनाभावस्य सर्वदा सत्त्वात्, 'यत्र हि द्वैतम्' 'यत्र त्वस्ये'ति दशाभेदवर्णनं कथम्॥ उच्यते। **अद्वैतश्रुतय** इत्यस्य किं द्वैताभावबोधकश्रुतय इत्यर्थः, द्वैतदर्शनाभावबोधकश्रुतय इति वा। आद्यश्रुतीनां परमार्थभूतद्वैताभावपरत्वान्न मायासत्त्वे विरोधः। द्वितीयश्रुतयस्तु दशाभेदेन द्वैततदभावबोधिन्यो जीवविषयाः। ईश्वरस्तु नित्यमपरमार्थभूतद्वैतदर्शी। अथाप्यपुरुषार्थाभावान्न विरोध इति भाव इति। मायाया अविद्याविलक्षणत्वेऽपि अविद्या ब्रह्मण्यवर्जनीयेति, किं माययेत्याशयेनाह **अपरिच्छिन्ने**ति। **आनन्दैकस्वरूपस्ये**ति। आनन्दमायोभयस्वरूपत्वे स्वरूपदर्शनमवर्जनीयं स्वाभाविकमिति स्यात्। तदभावादविद्ययैव तदुपपाद्यमिति भावः। मायायाः ब्रह्मस्वरूपत्वाभावेऽपि परमार्थत्वे अविद्या न तद्दर्शनहेतुः स्यादिति **अपरमार्थे**त्युक्तम्। मायास्वरूपदर्शनम्, मायाव्यहमिति स्वस्मिन् कल्पनो मायासंबन्धश्चाविद्यात एवेति वाक्यार्थः। **तद्वत्ता चे**ति चकारेण तदधीनकार्यमप्यपरिच्छिन्नानन्देऽपेक्षाविरहान्न भवतीत्यभिप्रेतम्। तद् विशदयति **किञ्चे**त्यादिना। **क्रीडारस** इति। स किं परमार्थः, अपरमार्थो वा। आद्ये द्वैतापत्तिः। अन्त्ये, अपरमार्थो रस इति जानन् कथं प्रवर्तेत। न जानाति चेत्-अमर्दज्ञत्वमिति।

एवं जीवाश्रिता तावदविद्या; ब्रह्माश्रिता तु मायेति विभागो धर्मिभेदे खलु स्यात्; स एव नेति हेतुनापि तद्वादं दूषयितुम्—ब्रह्मणोऽविद्याविषयत्वमेव, जीव एवाविद्याश्रय इति पक्षे,

निष्पद्यते। मायाश्रयतयाऽभिमतब्रह्मव्यतिरेकेणाविद्याश्रयस्य जीवस्य कल्पनासंभवश्च पूर्ववदेव द्रष्टव्यः॥

अतो ब्रह्मैवानाद्यविद्याशबलं स्वगतनानात्वं पश्यतीति अद्वितीयत्वं ब्रह्मणोऽभ्युपयद्भिरभ्युपेत्यम्।

यत्तु बन्धमोक्षव्यवस्था नोपपद्यत इति—न तद् ब्रह्माज्ञानवादिनश्चोद्यम्; एकस्यैव ब्रह्मणोऽज्ञस्य स्वाज्ञाननिवृत्त्या मोक्ष्यमाणत्वाद् बद्धमुक्तादिव्यवस्थाया एवाभावात्। व्यवह्रियमाणायाश्च बद्धमुक्तशिष्याचार्यादिव्यवस्थायाः काल्पनिकत्वात्। स्वप्नदर्शिन इव चैकस्यैवाविद्यया सर्वकल्पनोपपत्तेः। स्वप्नदृशा ह्येकेन दृष्टाः शिष्याचार्यादयः तदविद्याकल्पिता एव। अत एव[च]बह्वविद्याकल्पनमपि न युक्तिमत्। पारमार्थिकी बन्धमोक्षव्यवस्था स्वपरव्यवस्था च जीवाज्ञानवादिनाऽपि नाभ्युपेयते। अपारमर्थिकी त्वेकस्यैवाविद्ययोपपद्यते।

प्रयोगश्च—बन्धमोक्षव्यवस्थाः स्वपरव्यवस्थाश्च स्वाविद्याकल्पिताः, अपारमार्थिकत्वात्, स्वप्नदृष्टव्यवस्थावदिति। शरीरान्तराण्यपि मयैवात्मवन्ति, शरीरत्वात् एतच्छरीरवत्। शरीरान्तराण्यपि मदविद्याकल्पितानि, शरीरत्वात्, कार्यत्वात्, जडत्वात्, कल्पितत्वाद्वा एतच्छरीरवत्। विवादाध्यासितं चेतनजातमहमेव, चेतनत्वात्; यदनहम्, तदचेतनं दृष्टम्, यथा घटः। अतः स्वपरविभागो बद्धमुक्तशिष्याचार्यादिव्यवस्थाश्चैकस्याविद्याकल्पिताः।

द्वैतवादिनाऽपि बद्धमुक्तव्यवस्था दुरुपपादा; अतीतानां कल्पानामानन्त्यादेकैकस्मिन् कल्पे एकैकमुक्तावपि सर्वेषां मोक्षसंभवादमुक्तानुपपत्तेः॥ अनन्तत्वादात्मनाममुक्ताश्च सन्तीति चेत्—किमिदमनन्तत्वम्॥? असङ्ख्येयत्वमिति चेन्न, भूयस्त्वादल्पज्ञैरसङ्ख्येयत्वेऽपि ईश्वरस्य सर्वज्ञस्य सङ्ख्येया एव। तस्याप्यशक्यत्वे सर्वज्ञत्वं न स्यात्॥ आत्मनां निस्सङ्ख्यत्वादीश्वरस्याविद्यमानसङ्ख्यावेदनाभावो नासार्वज्ञ्यमावहतीति चेत्—भिन्नत्वे सङ्ख्याविधुरत्वं नोपपद्यते। आत्मानः सङ्ख्यावन्तः भिन्नत्वात्, माषसर्षपघटपटादिवत्। भिन्नत्वे चात्मनां घटादिवत् जडत्वमनात्मत्वं क्षयित्वं च प्रसज्यते॥

---

'जीवकल्पकत्वं ब्रह्मण एव वक्तव्यमिति ब्रह्माज्ञानमवर्जनीयमिति ब्रह्मैव जीवः' इत्युक्तं यत्, तदस्मिन् मायाविद्याविभागवादेऽप्यतिदिशति **मायाश्रयतयेति**। **ब्रह्मव्यतिरेकेण** ब्रह्मातिरिक्तेन; ब्रह्म विना। ब्रह्मातिरिक्तस्येत्यर्थस्वीकारेण जीवविशेषणं वा। **पूर्ववदिति**। ब्रह्मणो मायाविद्यानाश्रयत्वपक्ष इवेत्यर्थः। जीवाज्ञानपक्षनिरासमुपसंहरति **अत इति**।

तर्हि तार्किककृतस्य बद्धमुक्तादिव्यवस्थाभावापादनस्य कः परिहार इत्यत्र प्रतिवक्तुमाह **यत्त्विति**। समन्वयाधिकरणान्ते विवरणोक्तमनुसृत्याह **प्रयोगश्चेत्यादि**। अपारमार्थिकं सर्वमिति वादिन एवं मुखपिधानेऽपि पारमार्थिकवादी न तृप्येदित्यत्र तं प्रत्यप्याह **द्वैतेति**। यथा तेन कदाचिद् बद्धः कोपि नास्तीत्युच्यते, तथा मया संप्रति मुक्तः कोपि नेतीत्यविशेष इति भावः।

ब्रह्मणश्चानन्तत्वं न स्यात्। अनन्तत्वं नाम—परिच्छेदरहितत्वम्। भेदवादे च वस्त्वन्तराद्विलक्षणत्वेन ब्रह्मणो वस्तुतःपरिच्छेद रहितत्वं न शक्यते वक्तुम्। वस्त्वन्तरभाव एव हि वस्तुतःपरिच्छेदः। वस्तुतःपरिच्छिन्नस्य देशतः कालतश्चापरिच्छिन्नत्वं च न युज्यते; वस्त्वन्तराद्विलक्षणत्वेन वस्तुतःपरिच्छिन्ना एव घटादयो देशतः कालतश्च परिच्छिन्ना हि दृष्टाः; तथा सर्वे चेतनाः ब्रह्म च वस्तुतः परिच्छिन्नाः देशकालाभ्यामपि परिच्छिद्यन्ते। एवञ्च (तै. आन. १-१) "सत्यं ज्ञानमनन्तम्" इत्यादिभिः सर्वप्रकारपरिच्छेदरहितत्वं वदद्भिर्विरोधः। उत्पत्तिविनाशादयश्च जीवानां ब्रह्मणश्च प्रसज्येरन्; कालपरिच्छेद एव हि उत्पत्तिविनाशभागित्वम्।

अत एकस्यैवापरिच्छिन्नस्य ब्रह्मणोऽविद्याविजृम्भितं ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत्; सुखदुःखप्रतिसन्धानव्यवस्थादयोऽपि स्वाप्नव्यवस्थावत् अविद्यास्वाभाव्यादुपपद्यन्ते। तस्मादेकमेव नित्यमुक्तस्वप्रकाशस्वभावमनाद्यविद्यावशात् जगदाकारेण विवर्तत इति परमार्थतो ब्रह्मव्यतिरिक्ताभावात् तदनन्यत्वं जगतः—इति॥

अत्रोच्यते—निर्विशेषस्वप्रकाशमात्रं ब्रह्म अनाद्यविद्यातिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्येतत् प्रकाशस्वरूपस्य प्रकाशनिवृत्तिरूपतिरोधाने स्वरूपनाशप्रसङ्गेन तिरोधानासंभवादिभ्यः सकलप्रमाणविरुद्धं स्ववचनविरुद्धं चेति पूर्वमेवोक्तम्। यत् पुनरुक्तम्—कारणव्यतिरिक्तं कार्यं युक्तिबाधितत्वेन शुक्तिकारजतादिवद् भ्रमः-इति; तदयुक्तम्, युक्तेरभावात्। यत्तु अनुवर्तमानस्य कारणमात्रस्य सत्यत्वम्, व्यावर्तमानानां घटशरावादिकार्याणामसत्यत्वमिति—तदपि अन्यत्र दृष्टस्यान्यत्र व्यावर्तमानता न बाधिकेत्यादिभिः पूर्वमेव परिहृतम्। यच्च उपलभ्यमानत्वविनाशित्वाभ्यां सदसदनिर्वचनीयत्वेन कार्यस्य मृषात्वमिति—तदसत्। उपलब्धिविनाशयोगो हि न मिथ्यात्वं साधयति; किन्त्वनित्यत्वम्। यद्देशकालसंबन्धितया यत् उपलब्धम्, तद्देशकालसंबन्धितया बाधितत्वमेव हि तस्य मिथ्यात्वे हेतुः। देशान्तरकालान्तरसंबन्धितयोपलब्धस्यान्यदेशकालसंबन्धित्वेन बाधितत्वं देशान्तरकालान्तराव्याप्तिमात्रं साधयति; न तु मिथ्यात्वम्। प्रतिप्रयोगश्च—घटादि कार्यं सत्यम्; देशकालादिप्रतिपन्नोपाधावबाधितत्वात्, आत्मवत्।

यच्चोक्तम्—कारणस्वरूपादविकृताद्विकृताच्च कार्योत्पत्तिर्न संभवति—इति—तदसत्, देशकालादिसहकारिसमवहितात् कारणात् कार्योत्पत्तिसंभवात्॥ तत्समवधानं च विकृतस्याविकृतस्य च न संभवतीति यदुक्तम्—तदयुक्तम्; पूर्वमविकृतस्यैव देशकालादिसमवधानसंभवात्॥ अविकृतत्वाविशेषात् पूर्वमपि देशकालादिसमवधानं प्रसज्यत इति

---

वस्तुपरिच्छेदाभावेऽपि देशकालपरिच्छेदाभावमादायानन्तत्वमुपपन्नमित्यत्राह **वस्तुतःपरिच्छिन्नस्येति**।

एवमुपसंहृतं मुख्याद्वैतिभूतब्रह्माज्ञानवादिपक्षं तार्किकः प्रधानपूर्वपक्षी प्रतिवक्तुमारभते **अत्रोच्यत**

चेन्न, देशकालादिसमवधानस्य कारणान्तरायत्तस्यैतदायत्तत्वाभावात् । अतो देशकालादिसमवधानरूपविशेषमापन्नं कारणं कार्यमुत्पादयतीति न किञ्चिदवहीनम् । कारणस्य च कार्यं प्रत्यारम्भकत्वमबाधितं दृश्यमानं न केनापि प्रकारेणापह्नोतुं शक्यते ।

यत्तु—हेमादिमात्रस्य, रुचकादिकार्यस्य, एतदाश्रयस्य वा हेमादेरारम्भकत्वं न संभवति—इति—तदयुक्तम्; हेमादिमात्रस्यैव यथोक्तपरिकरयुक्तस्यारम्भकत्वसंभवात् । न चारम्भकहेमव्यतिरिक्तं कार्यं न दृश्यत इति वक्तुं शक्यम्; हेमातिरिक्तस्य स्वस्तिकस्य दर्शनात्; बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरस्य साधितत्वाच्च । न चायं शुक्तिकारजतादिवद् भ्रमः; उत्पत्तिविनाशयोरन्तराले उपलभ्यमानस्य तद्देशकालसंबन्धितया बाधादर्शनात् । न चास्या उपलब्धेर्बाधिका काचिदपि युक्तिर्दृश्यते । प्रागनुपलब्धस्वस्तिकोपलब्धिवेलायामपि हेमप्रत्यभिज्ञा स्वस्तिकाश्रयतया हेम्नोऽप्यनुवृत्तेरविरुद्धा । श्रुतिभिस्तु प्रपञ्चमिथ्यात्वसाधनं पूर्वमेव निरस्तम् ।

यच्चान्यदत्र प्रत्यक्षाविरोधादि प्रतिवक्तव्यम्, तदपि सर्वं पूर्वमेव सुष्ठूक्तम् (सूक्तम्) ।

यच्चोक्तम्—एकेनात्मना सर्वाणि शरीराण्यात्मवन्ति इति—तदसत्; एकस्यैव सर्वशरीरप्रयुक्तसुखदुःखप्रतिसन्धानप्रसङ्गात् । सौभरिप्रभृतिषु ह्यात्मन एकत्वेनानेकशरीरप्रयुक्तसुखादिप्रतिसन्धानमेकस्य दृश्यते । न चाहमर्थस्य ज्ञातृत्वात् तद्भेदात् प्रतिसन्धानाभावः; नात्मभेदादिति वक्तुं शक्यम्—आत्मा ज्ञातैव, स चाहमर्थ एव, अन्तःकरणभूतस्त्वहङ्कारो जडत्वात् करणत्वाच्च शरीरेन्द्रियादिवन्न ज्ञातेत्युपपादितत्वात् ।

यच्च-शरीरत्वजडत्वकार्यत्वकल्पितत्वैः सर्वशरीराणामेकस्याविद्याकल्पितत्वमुक्तम्; तदपि सर्वशरीराणामविद्याकल्पितत्वस्यैवाभावादयुक्तम् । तदभावश्चाबाधितस्य सत्यत्वोपपादनात् ।

यच्च चेतनादन्यस्य जडत्वदर्शनात् सर्वचेतनानामनन्यत्वमुक्तम्—तदपि सुखदुःखव्यवस्थया भेदोपपादनादेव निरस्तम् । यत्तु—मयैवात्मवन्ति, मदविद्याकल्पितानि, अहमेव सर्वं चेतनजातमित्यहमर्थस्यैक्यमुपपादितम् तत्—अज्ञातस्वसिद्धान्तस्य भ्रान्तिजल्पितम् । अहंत्वमाद्यर्थविलक्षणं चिन्मात्रं ह्यात्मा त्वन्मते ।

किञ्च निर्विशेषचिन्मात्रातिरेकि सर्वं मिथ्येति वदतो मोक्षार्थश्रवणादिप्रयत्नो निष्फलः, अविद्याकार्यत्वात्; शुक्तिकारजतादिषु रजताद्युपादानादिप्रयत्नवत् । मोक्षार्थप्रयत्नो व्यर्थः, कल्पिताचार्यायत्तज्ञानकार्यत्वात्, शुकप्रह्लादवामदेवादिप्रयत्नवत् । तत्त्वमस्यादिवाक्यजन्यज्ञानं न बन्धनिवर्तकम्, अविद्याकल्पितवाक्यजन्यत्वात्, स्वयमविद्यात्म-

---

इति । **स्वस्तिकाश्रयतये**ति । हेमबुद्धिः कारणविषयिणी; स्वस्तिकबुद्धिः कार्यविषयिणीति । इदमुपलक्षणम्; स्वस्तिकेऽपि हेमत्वजातिस्वीकारात् इदं हेमेति नानुपपन्नमिति । प्रतितर्कानाह **किञ्च निर्विशेषे**ति । यदि श्रवणादिप्रयत्नोऽविद्याकार्यः स्यात्, निष्फलः स्यादित्येवं रीत्याऽत्र तर्काकाराः भाव्याः ।

कत्वात्, अविद्याकल्पितज्ञात्राश्रयत्वात्, कल्पिताचार्यायत्तश्रवणजन्यत्वाद्वा स्वाप्नबन्धनिवर्तनवाक्यजन्यज्ञानवत्।

किञ्च निर्विशेषचिन्मात्रं ब्रह्म मिथ्या, अविद्याकार्यज्ञानगम्यत्वात्, अविद्याकल्पितज्ञात्राश्रयज्ञानगम्यत्वात्, अविद्यात्मकज्ञानगम्यत्वाद्वा। यदेवम्, तत् तथा, यथा स्वाप्नगन्धर्वनगरादिः। न च निर्विशेषचिन्मात्रं ब्रह्म स्वयं प्रकाशते, येन न प्रमाणान्तरमपेक्षते। यत्तु आत्मसाक्षिकं स्वयंप्रकाशज्ञानं दृश्यते, तत्तु ज्ञेयविशेषसिद्धिरूपं ज्ञातृगतमेव दृश्यत इति पूर्वमेवोक्तम्। यानि च तस्य निर्विशेषत्वसाधकानि यौक्तिकानि ज्ञानान्युपन्यस्तानि—तानि चानन्तरोक्तैरविद्याकार्यत्वादित्यादिभिरनुमानैर्निरस्तानि। न च निर्विशेषस्य चिन्मात्रस्याज्ञानसाक्षित्वमहङ्कारादिजगद्भ्रमश्चोपपद्यते। साक्षित्वभ्रमादयोऽपि हि ज्ञातृविशेषगता दृष्टाः, न ज्ञप्तिमात्रगताः। न च तस्य प्रकाशत्वं स्वायत्तप्रकाशता वा सिध्यति; प्रकाशो हि कस्यचित् पुरुषस्य कञ्चनार्थविशेषं प्रति सिद्धिरूपो दृश्यते। तत एव हि तस्य स्वयम्प्रकाशतोपपाद्यते भवद्भिरपि। न चाता(चता)दृशस्य निर्विशेषस्य प्रकाशता संभवति।

यः पुनः स्वगोष्ठीषु, अपरमार्थादपि परमार्थकार्यं दृश्यत इत्युद्घोषः—सोऽपि--तानि कार्याणि सर्वाण्यबाधितकल्पानि व्यावहारिकसत्यानि, वस्तुतस्त्वविद्यात्मकान्येवेति स्वाभ्युपगमादेव निरस्तः; अस्माभिरपि सर्वत्र परमार्थादेव कारणात् सर्वकार्योत्पत्तिमुपपादयद्भिः पूर्वमेव निरस्तः। न च त्वयैषामनुमानानां श्रुतिविरोधो वक्तुं शक्यते; श्रुतेरप्यविद्याकार्यत्वेनाविद्यात्मकत्वेन चोक्तदृष्टान्तेभ्यो विशेषाभावात्।

यत्तु—ब्रह्मणोऽपारमार्थिकज्ञानगम्यत्वेऽपि पश्चात्तनबाधादर्शनाद् ब्रह्म सत्यमेवेति—तदसत्, दुष्टकारणजन्यज्ञानगम्यत्वे निश्चिते सति पश्चात्तनबाधादर्शनस्याकिञ्चित्करत्वात्;

---

ननु प्रमाणगम्यत्वमेव स्वयंप्रकाशे तत्र नेष्यत इति गम्यत्वाद्यसिद्धिरित्यत्राह **न च निर्विशेषे**ति। स्वयमप्यप्रकाशात् आश्रयासिद्धिरिति भावः। ननु घटं जानामीत्येवं ज्ञानं प्रकाशते हीत्यत्राह **यत्त्वि**ति। तद्धि कर्तृकर्मादिविशेषविशिष्टज्ञानम्; न तु ब्रह्मेति भावः। **अनुमानैः** भवदुक्तानुमानापेक्षितव्याप्तिविघटकैस्तर्कैः। **तत एव** अर्थान्तरप्रकाशकत्वादेव। नन्वर्थान्तरप्रकाशकत्वं न स्वयम्प्रकाशत्वव्यापकम्; किंतु व्याप्यम्। अतस्तदभावेऽपि सिद्धान्ते आत्मन इव स्वप्रकाशता स्यादित्यत्राह **न चातादृशस्ये**ति। पराप्रकाशकमपि सविशेषमेव प्रकाशते, न तु निर्विशेषम्; प्रत्यक्त्वैकत्वग्रहादिति भावः। **तादृशस्ये**ति पाठोऽपि **टीका**दर्शितः। तदा—कर्मकर्तृसहितस्य घटज्ञानादेरेव भवद्भिर्निर्विशेषानुभूतिरूपत्वमुच्यते। तथा निर्विशेषमपि न भवति; अनुभवरूपप्रकाशतापि तथानिर्विशेषत्वे न भवतीत्यर्थः। मोक्षादिप्रयत्नो व्यर्थः। अपरमार्थकार्यत्वादपरमार्थत्वाद्वेत्यादिकं न युक्तम्; अपरमार्थादपि परमार्थोत्पत्तेरिति शंकायामाह **यःपुन**रिति। मायाचित्रलिप्याद्युदाहरणेषु कारणं कार्यमुभयमपि त्वन्मतेऽपरमार्थः, अस्मन्मते परमार्थ इति न दोष इत्याह **सोपी**ति। सर्वं जिज्ञासाधिकरणे विशदम्।

यथा शून्यमेव तत्त्वमिति वाक्यजन्यज्ञानस्य पश्चात्तनबाधादर्शनेऽपि दोषमूलत्वनिश्चयादेव तदर्थस्यासत्यत्वम्। किञ्च (कठ. २-४-११) "नेह नानाऽस्ति किञ्चन", (बृ. ३ ९ २८) "विज्ञानमानन्दं ब्रह्म" इति विज्ञानमात्रातिरिक्तस्य कृत्स्नस्य वस्तुजातस्य निषेधकत्वेन सर्वस्मात् परत्वात् पश्चात्तनबाधादर्शनमुच्यते। शून्यमेव तत्त्वमिति तस्याप्यभावं वदतः तस्मात्परत्वेन पश्चात्तनबाधो दृश्यते। सर्वशून्यत्वातिरेकिनिषेधासंभवात् तस्यैव पश्चात्तनबाधादर्शनम्। दोषमूलत्वं तु प्रत्यक्षादीनाम्, वेदान्तजन्मनः, सर्वशून्यज्ञानस्याप्यविशिष्टम्। अतः, 'सर्वं विज्ञानजातं पारमार्थिकज्ञातृगतम्, स्वयं च परमार्थभूतमर्थविशेषसिद्धिरूपम्; तत्र किञ्चित् ज्ञानं दोषमूलम्: दोषश्च परमार्थः; किञ्चिच्च निर्दोषं पारमार्थिकसामग्रीजन्यम्' इति यावन्नाभ्युपेयते—न तावत् सत्यमिथ्यार्थव्यवस्था, लोकव्यवहारश्च सेत्स्यति। लोकव्यवहारो हि पारमार्थिको भ्रान्तिरूपश्च पारमार्थिकज्ञातृगतार्थविशेषसिद्धिरूपप्रकाशपूर्वकः॥ निर्विशेषसन्मात्रस्य तु पारमार्थिकस्यापारमार्थिकस्य च प्रतिभासादेर्हेतुत्वासंभवात् लोकव्यवहारो न संभवति।

यच्च—तैर्निरधिष्ठानभ्रमासंभावत् सर्वाध्यासाधिष्ठानस्य सन्मात्रस्य पारमार्थिकत्वमुक्तम्—तदपि दोष-दोषाश्रयत्व-ज्ञातृत्व-ज्ञानानामपारमार्थ्येऽपि भ्रमोपपत्तिवत् अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेर्निरस्तम्॥ अथ—अधिष्ठानापारमार्थ्येऽपि न क्वचिद् भ्रमो दृष्ट इति सन्मात्रस्य पारमार्थिकत्वमवश्याश्रयणीयमिति मन्यसे—हन्त तर्हि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि न क्वचिद्भ्रमो दृष्ट इति दर्शनानुगुण्येन तेषामपि पारमार्थ्यमवश्याश्रयणीयमिति न कश्चिद्विशेषोऽन्यत्र तत्संरम्भात्।

यत्तु भेदपक्षेऽप्यतीतकल्पानामानन्त्यात् सर्वेषामात्मनां मुक्तत्वेन बद्धासंभवाद् बद्धमुक्तव्यवस्था न संभवति इति—तत् आत्मानन्त्येन परिहृतम्। यत्तु आत्मनां भिन्नत्वे माषसर्षपघटपटादिवत् सङ्ख्यावत्त्वमवर्जनीयमिति—तत्र घटादीनामप्यनन्तत्वात् दृष्टान्तः साध्यविकलः स्यात्॥ दश घटाः, सहस्रं माषाः इति सङ्ख्यावत्त्वं दृश्यत इति चेत्—सत्यम्; तत्तु न घटादिस्वरूपगतम्; अपितु देशकालाद्युपाधिमद्घटादिगतम्, तादृशं तु सङ्ख्यावत्त्वमात्मनामभ्युपगच्छामः। न च तावता सर्वमुक्तिप्रसङ्गः; आत्मस्वरूपानन्त्यात्। यत्तु—आत्मनां भिन्नत्वे घटादिवत् जडत्वानात्मत्वक्षयित्वप्रसङ्ग इति—तदयुक्तम्; एकजातीयानां भेदस्य तज्जातीयानां जात्यन्तरीयत्वानापादकत्वात्। न हि घटानां भेदः तेषां पटत्वमापादयति। यत्तु—भिन्नत्वे वस्तुतःपरिच्छेदात् देशकालाभ्यापि परिच्छेदो ब्रह्मणः प्रसज्यत

---

**पारमार्थिकस्येत्यादि**। पारमार्थिकादिरूपप्रतिभासतदधीनव्यवहारादिकं प्रतीत्यर्थः। **तत्संरम्भादिति**। अधिष्ठानविषयकाभिनिवेशातिरिक्तो विशेषो नेत्यर्थः। **वस्तुतः परिच्छेदात्** स्वभिन्नकिञ्चिद्वस्तुकत्वात्। वस्तुपरिच्छेदस्य देशकालपरिच्छेदविशेषप्रयोजकत्वमिष्यते, उत तत्सामान्यप्रयोज-

इत्यनन्तत्वं ब्रह्मणो न सिध्यतीति—तदयुक्तम्, वस्तुतःपरिच्छिन्नानामपि देशकाल-परिच्छेदस्य न्यूनाधिकभावेनानियमदर्शनात् देशकालसंबन्धेयत्तायाः प्रमाणान्तरायत्तनिर्णय-त्वेन [च] ब्रह्मणः सर्वदेशकालसंबन्धस्यापि प्रमाणान्तरादापततो विरोधाभावात् ॥ वस्तुतः परिच्छेदमात्रादपि सर्वप्रकारपरिच्छेदरहितत्वाभावादानन्त्यासिद्धिरिति चेत्—तद्भवतोऽप्य विद्याविलक्षणत्वं ब्रह्मणोऽभ्युपयतः समानम्। अतः सतोऽविद्याविलक्षणत्वाभ्युपगमात् ब्रह्मणोऽपि भिन्नत्वेन भेदप्रयुक्ता दोषाः सर्वे तवापि प्रसज्येरन्। यद्यविद्याविलक्षणत्वं नाभ्युपेयते; तर्ह्यविद्यात्मकमेव ब्रह्म स्यात्। (तै. आन. १-१) "सत्यं ज्ञानमनन्तं ब्रह्म" इति लक्षणवाक्यमपि तत एवापार्थकं स्यात्। भेदतत्त्वानभ्युपगमे हि स्वपक्षपरपक्षसाधनदूषणादिविवेकाभावात् सर्वमसमञ्जसं स्यात्। आनन्त्यप्रसिद्धिश्च देशकालपरिच्छेदरहितत्वमात्रेण; न वस्तुतोऽपि परिच्छेदरहितत्वेन; तथाविधस्य शशविषाणायमानस्यानुपलब्धेः। भेदवादिनस्तु सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणः सर्वप्रकारत्वात् स्वतः परतोऽपि परिच्छेदो न

---

कत्वम्? नाद्य इत्याह **वस्तुत** इति। परिच्छेदे नानात्वदर्शनात् किञ्चिदेकविशेषप्रयोजकत्वायोग इति भावः। नान्त्य इत्याह **देशे**ति। अप्रयोजको हेतुरिति भावः। **निर्णयत्वेन चे**ति चकारसहितपाठः टीकादृष्टः। तदभावे **वस्तुत** इत्यादिकमेकमेव वाक्यम्; **नियमदर्शना**दितीदं **निर्णयत्वेने**-त्यत्रान्वेति। अधिकाधिकदेशकालसंबन्धेऽपि वस्तुपरिच्छेददर्शनात् सर्वदेशकालसंबन्धेऽपि स भवेदिति विशिष्टार्थः। **अपार्थक**मिति। लक्षणं हि व्यावर्तनायैवोच्यते। भवद्भिश्च भावरूपधर्मद्वेषिभिः सर्वं व्यावृत्त्यर्थकतया ब्रह्मणि अन्वितं क्रियते। तस्याप्यंशस्यानुपगमे तस्यार्थ एव न भवतीति भावः। ननु स्वभिन्नकिञ्चिद्वस्तुकत्वं वस्तुपरिच्छेदः। वस्तुपदं परमार्थवाचकम्। अविद्यादेरपरमार्थस्यावस्तुत्वात् तत्परिच्छेदे सत्यपि वस्तुपरिच्छेदराहित्यमक्षतमिति चेन्न—ब्रह्मभिन्नपरमार्थवस्त्वभावेन त्वन्मते स्वभिन्नवस्तु-कत्वस्याप्रसिद्ध्या तदभावस्य दुर्वचत्वात्। अथ भेदराहित्यमेव वस्त्वपरिच्छेद इति चेत्—अविद्यादि-भेदस्य सत्त्वात् तद्राहित्यं न भवतीत्युक्तम्। तात्त्विकस्य भेदस्याभावो विवक्षित इति चेत्—अविद्या-देरतात्त्विकत्वेऽपि तद्भेदस्तात्त्विक एव। अन्यथा तदैक्यापत्तेः। एवं परमार्थभूतस्य भेदपदार्थस्यानङ्गीकारेऽपि प्रतियोग्यप्रसिद्ध्याऽभावाप्रसिद्धिरेव। तथा ब्रह्मभेदो जगति मिथ्या चेत्-तस्य जडैक्यं स्यात्। सत्यश्चेत्-द्वैतापत्तिरित्याद्यभिप्रेत्याह **भेदतत्त्वे**ति। **जिज्ञासाधिकरणे,** 'भेदो नाम कश्चित्' इत्याद्युक्तिदूषण-विस्तरो द्रष्टव्यः। वस्त्वन्तराभावस्य वस्तुपरिच्छेदाभावरूपत्वे तत एव देशकालाभावात् तदपरिच्छेद-स्यापि सिद्ध्या पृथक् तत्कथनवैयर्थ्यमपि। **न वस्तुतोऽपी**ति। ब्रह्मण्यसंख्याकत्वादिरूपानन्त्यवत् इद-मप्यसंभवादुपेक्ष्यमिति भावः।

एवं तार्किकेण वस्तुपरिच्छेदविषये स्वमतमुक्तम्। अत्राद्वैतोपरि तार्किककृतस्य दूषणस्य सर्वस्य सिद्धान्तिनोऽपीष्टतया वस्तुपरिच्छेदाभाववर्णनासंभवोऽपि सिद्धान्तीष्ट इति न मन्तव्यमिति **ज्ञाप**-**नयात्र** सिद्धान्त्याशयमपि तार्किकमुखेनोद्घाटयति **भेदवादिनस्त्व**ति। सिद्धान्तिन इत्यनुक्त्वा **भेदवा**-

विद्यते । तदेवं कारणाद्भिन्नस्य कार्यस्य सत्यत्वात् ब्रह्मकार्यं कृत्स्नं जगद् ब्रह्मणोऽन्यदेव ॥

इति प्राप्ते प्रचक्ष्महे—तदनन्यत्वमारम्भणशब्दादिभ्य—तस्मात् **परमकारणाद्ब्रह्मणः**, अनन्यत्वं जगतः आरम्भणशब्दादिभ्यः तदुपपादयद्भ्योऽवगम्यते । आरम्भणशब्द आदिर्येषां वाक्यानाम्, तान्यारम्भणशब्दादीनि, (छा. ६) "वाचारम्भणं विकारो नामधेयं

---

**दिन** इत्युक्तिः, भेदपक्षे वस्तुपरिच्छेदस्य सत्त्वात् कथमपरिच्छेद इति शंकाद्योतकः । **तु**शब्दः, अद्वैतमत एव स दुर्वच आसीत्, न तु भेदवादे इति ज्ञापनार्थः । भेदवादिन इति सामान्यनिर्देशात् तार्किकमीमांसकादिपक्षेऽप्येतच्छायायाऽर्थवर्णनं सुकरमिति ज्ञाप्यते । अयं भावः—अद्वैतिना वस्तुपरिच्छेदो वस्तुभेद इत्युक्तत्वात् तदसंभव उपपादित. । विवेचने तु देशादिविषय इव वस्तुविषयेऽपि परिच्छेदः तदन्यासंबन्धित्वविशिष्टतत्सबन्धित्वरूप· । न हि देशभेदकालभेदाभावौ तदपरिच्छेदौ । एवञ्च देशान्तराद्यसंबन्धित्वविशिष्टकिञ्चिद्देशादिसंबन्धित्ववत् वस्त्वन्तरासंबन्धित्वविशिष्टकिञ्चिद्वस्तुसंबन्धित्वं वस्तुपरिच्छेदः । स च संबन्ध इह यथार्हं शेषित्वाधारत्वनियन्तृत्वापृथक्सिद्धिमत्त्वादिरूप. । स च सर्ववस्तुनिरूपित एवास्ति ब्रह्मणीति सिद्धो वस्त्वपरिच्छेदः । ईदृशशेषित्वादिनियमसिद्धं सर्ववस्तुसामानाधिकरण्यार्हत्वमपि स इत्युच्यते, अद्वैतिमत इवास्मन्मतेऽपि इदं ब्रह्म न भवतीति व्यवहाराभावनिर्वाहाय शास्त्रदृष्ट्या । अतः सर्वं वस्तु स्वीकृत्य वस्तुवैशिष्ट्यस्यैव सत्त्वादपरिच्छेद इति वर्णनमेव सम्यक् । न हि देशकालापलापेन तदपरिच्छेदो वर्ण्यते, तद्वद् । **स्वतःपरतोपीति** । यदि परिच्छेदो भेद इत्युच्यते, तदाऽपि सर्वस्य ब्रह्मप्रकारत्वात् प्रकारवाचिनां शब्दानां प्रकारिपर्यन्तत्वात् तत्तदर्थविशिष्टस्य स्वस्यैव तत्तच्छब्दार्थतया स्वस्मिन् स्वभेदाभावेन ब्रह्म घटादिर्न भवतीति स्वपरिच्छेदो न वक्तुं शक्यते । यदि च परिच्छेदः संबन्धनियमः, तदाऽपि चेतनाचेतनसर्वशरीरकत्वेन तस्य सर्ववैशिष्ट्यात् किञ्चिदवैशिष्ट्यं दुर्वचमिति भावः । **स्वतःपरतः** स्वरूपतो गुणतश्च **परिच्छेदः** निकर्ष इत्यप्यर्थः । उक्तं हि **जन्माद्यधिकरणे** स्वरूपेण गुणैश्चानन्त्यम् । अर्थान्तरवर्णनं **टीकायां** द्रष्टव्यम् । **शतदूषण्या**मानन्त्यवादे अस्मत्कृते **परमार्थभूषणे** च विस्तरः ॥ **भेदवादिन** इति सामान्योक्त्या तार्किकादिक्रोडीकारः कथमिति चेत्—भेदरूपवस्तुपरिच्छेदपक्षे वस्त्वपरिच्छेदः शशविषाणायमान इत्युक्तावपि परिच्छेदस्य वैशिष्ट्यविशेषरूपत्वे विशिष्टाद्वैतिच्छायैव सर्वैः सुग्रहा ; "सर्वावेशनिबन्धनश्च सर्वतादात्म्यव्यवहारः" इति **न्यायकुसुमाञ्जलावुदयनाचार्याः।** व्योमादीनां परमात्मशरीरत्वम्, "तथा व्योमशरीरोऽपि"इत्यादिना **कुमारिलभट्टाः** । विस्तरोऽस्मत्कृतायां नयद्युमणि**भूमिकायां** द्रष्टव्यः । किमधिकेन । परमात्मवश्यत्वादे. सर्वत्र सत्त्वेन तादृशसंवन्धस्य सर्वसाधारण्यविवक्षयाऽपि वस्त्वपरिच्छेदः सर्वैर्भेदवादिभिः सुवच इत्यलम् ।

अत आनन्त्यश्रुतेरद्वैतासाधकत्वात् बद्धमुक्तादिव्यवस्थाया वक्तव्यतया आत्मभेदापलापायोगात् तद्वदेव कार्यप्रपञ्चोऽपि सत्य इति भावः । तार्किकः पूर्वपक्षमुपसंहरति **तदेव**मिति ।

**आरम्भणशब्दे**ति । एकविज्ञानेन सर्वविज्ञानबोधकवाक्यस्य सदेवसोम्येदमित्याद्यभेदनिर्देशानामौपचारिकार्थ एव ग्राह्य इति वदन्तं प्रति तद्वाक्यत एवैक्यस्थापनायोगात् ऐक्योपपादकवाक्यं प्रथमं

मृत्तिकेत्येव सत्यम्...सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेयेति । तत् तेजोसृजत...अनेन जीवेनाऽऽत्मनानुप्रविश्य...सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्येतानि । प्रकरणान्तरस्थान्यप्येवंजातीयकानि अत्राभिप्रेतानि । एतानि हि वाक्यानि चिदचिदात्मकस्य जगतः परस्माद् ब्रह्मणोऽनन्यत्वमुपपादयन्ति ।

तथा हि—"स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इति कृत्स्नस्य जगतो ब्रह्मैककारणत्वम्, कारणात् कार्यस्यानन्यत्वं च हृदि निधाय कारणभूतब्रह्मविज्ञानेन कार्यभूतस्य सर्वस्य विज्ञाने प्रतिज्ञाते सति, कृत्स्नस्य ब्रह्मैककारणतामजानता शिष्येण, "कथं नु भगवः स आदेशः" इत्यन्यज्ञानेनान्यज्ञातताऽसम्भवं चोदितः जगतो ब्रह्मैककारणतामुपदेक्ष्यन् लौकिकप्रतीतिसिद्धं कारणात्कार्यस्यानन्यत्वं तावत्, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्" इति दर्शयति । यथैकमृत्पिण्डारब्धानां घटशरावादीनां तस्मादनतिरिक्तद्रव्यतया तज्ज्ञानेन ज्ञाततेत्यर्थः ।

अत्र काणादवादेन कारणात् कार्यस्य द्रव्यान्तरत्वमाशङ्क्य लोकप्रतीत्यैव कारणात्कार्यस्यानन्यतामुपपादयति, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति । आरभ्यते आलभ्यते स्पृश्यते इत्यारम्भणम्; (अष्टा. ३. ३. ११३) "कृत्यल्युटो बहुलम्" इति कर्मणि ल्युट् । वाचा वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः । 'घटेनोदकमाहर' इत्यादिवाक्पूर्वको

---

प्रदर्शनीयम् । तच्च वाचारम्भणमिति वाक्यम् । तत्रारम्भणपदम्, इत्येवसत्यमिति चोपपादकम् । तत्र प्रथमत्वात् आरम्भणशब्दस्य, स साक्षादुक्तः । वाचेति पदस्य तथा मुख्यत्वाभावात् त्यागः । वाचारम्भणमिति एकं पदमिति अद्वैतिमतिरप्यनेनापास्ता भवति । कारणेन कार्यगतावस्थायाः कार्यवाचिशब्दस्य च गृह्यमाणत्वं ह्यनुभवारूढं कथ्यते आरम्भणमिति । तदधीनैक्यव्यवहारस्य च सत्यत्वं मुख्यत्वमुपर्युच्यत इति । एवमभेदे उपपादिते उपरितनानि अभेदनिर्देशवाक्यान्यपि उपष्टम्भकतयाऽऽदिपदेन गृह्यन्ते । आदिः उपक्रमस्थः । इदं प्रकरणान्तरस्थोपलक्षकम् । आदिपदेनैव तेषामपि संग्रहो वा ।

तावदिति; प्रथममित्यर्थः । आरम्भणवाक्यस्योपपादकत्वमुपपादयति अत्र काणादवादेनेति । नन्वारम्भणशब्दः आरम्भवादस्यानुकूल एवेत्यत्र तदर्थमाह आरभ्यते इति । उत्पाद्योत्पादकभावस्यात्र विवक्षितत्वे द्रव्येण नामधेयस्योत्पाद्यत्वाभावात् नामधेयमिति नान्वेति । कार्यकारणद्रव्यभेदे च मृत्तिकेति तत्कार्ये तदभेदव्यवहारसत्यत्वस्थापनञ्च न घटते । कार्यकारणयोः पृथिवीत्वाद्येकजात्याश्रयत्वे विवादाभावात् तद्व्युत्पादनार्थत्वञ्च वाक्यस्य न कल्पत इति भावः। वाक्पदं शब्दव्यवहारपरम् अर्थव्यवहारस्य जलाहरणादेरप्युपलक्षणम् । वाचः पूर्वत्वात् तथा तदुपलक्षणम् । व्यवहारो हि द्विविधः वाचिकः कायिकश्च । वाचिकः प्रयोजकवृद्धव्यवहारः, कायिकश्च प्रयोज्यस्य । विकारनामधेये कारणद्रव्येण व्यवहारार्थं स्पृश्येते इति वाचेत्यादिवाक्यार्थः । विकारोऽवस्था घटत्वादिः; न तु घटादिः; घटस्य स्वकारणद्रव्येण स्पृश्य-

मुदकाहरणादिव्यवहारः; तस्य सिद्धये, तेनैव मृद्द्रव्येण पृथुबुध्नोदरत्वादिलक्षणो विकारः—संस्थानविशेषः, तत्प्रयुक्तं च घट इत्यादि नामधेयं स्पृश्यते—उदकाहरणादिव्यवहारविशेषसिद्धयर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तरभाग् भवति। अतः, घटाद्यपि मृत्तिकेत्येव सत्यम्—मृत्तिकाद्रव्यमित्येव सत्यम्—प्रमाणेनोपलभ्यत इत्यर्थः; न तु द्रव्यान्तरत्वेन। अतस्तस्यैव मृद्धिरण्यादेर्द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेण बुद्धिशब्दान्तरादय उपपद्यन्ते; यथैकस्यैव देवदत्तस्यावस्थाभेदैः बालः युवा स्थविरः इति बुद्धिशब्दान्तरादयः, कार्यविशेषाश्च दृश्यन्ते।

यदुक्तम् सत्यामेव मृदि घटो नष्ट इति व्यवहारात् कारणादन्यत् कार्यमिति—तत् उत्पत्तिविनाशादीनां कारणभूतस्यैव द्रव्यस्यावस्थाविशेषत्वाभ्युपगमादेव परिहृतम्। तत्तदवस्थस्य तस्यैव द्रव्यस्य ते ते शब्दाः तानि तानि च कार्याणीति च युक्तम्। द्रव्यस्य तत्तदवस्थत्वं कारकव्यापारायत्तमिति तस्यार्थवत्त्वम्। अभिव्यक्त्यनुबन्धीनि चोद्यानि तस्या अनभ्युपगमादेव परिहृतानि। उत्पत्त्यभ्युपगमेऽपि सत्कार्यवादो न विरुध्यते; सत एवोत्पत्तेः॥

विप्रतिषिद्धमिदमभिधीयते—पूर्वमेव सत्, तदुत्पद्यते च—इति॥ अज्ञातोत्पत्तिविनाशयाथात्म्यस्येदं चोद्यम्; द्रव्यस्योत्तरोत्तरसंस्थानयोगः पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः, स्वावस्थस्य तूत्पत्तिः। अतः सर्वावस्थस्य द्रव्यस्य सत्त्वात् सत्कार्यवादो न विरुध्यते॥ संस्थानस्यासत उत्पत्तावसत्कार्यवादप्रसङ्ग इति चेत्—असत्कार्यवादिनोऽप्युत्पत्तेरनुत्पत्तिमत्त्वे

---

मानत्वरूपाधाराधेयभावविवक्षायां हि घट इति नामधेयस्य कारणस्पृश्यत्वं न स्यात्। घटत्वस्य जातेः कथं विकारशब्दार्हतेति शंकाशमनाय **पृथुबुध्नोदरत्वे**त्यादि। नामभाक्त्वं दर्शयति **मृत्तिकेत्येवसत्य**मिति। **सर्वंमृन्मय**मित्यस्यानुषङ्गः। सर्वमिदं मृत्तिकाशब्दवाच्यत्वेन (मृद्द्रव्याभेदेन वा) प्रमीयमाणमित्यर्थः। 'मृन्मयं मृत्तिके'ति वाक्यमेव **सत्यम्** अबाधितार्थकमिति वा। कार्यं कारणादन्यदित्यसत्यमिति **एव**कारेणोच्यते। न च कारणसत्यत्वकथनान्मृषावादिमतमेवात्राभिमतं किं न स्यादिति शंक्यम्—**इति**शब्दवैयर्थ्यात्। कार्यासत्यत्वस्य लोकसिद्धत्वाभावेन **एव**कारेण तत्सिद्धवत्कीर्तनञ्च न घटत इति। अतः कार्यस्य कारणैक्यसत्यत्वमेवात्र विवक्षितम्। एवञ्च सर्वसत्यत्वसिद्धिः। **उत्पत्तिविनाशे**ति। उत्पत्तिरवस्थेति कथनेन, घटत्वमुत्पन्नमिति कुतो न व्यवहार इति शंका शमिता। न हि घटत्वेऽवस्थाऽस्ति। अत एव, तद्विनष्टमित्यपि न।

कार्याकारनित्यत्वं सांख्यमतं नास्मदिष्टमिति दर्शयति **अभिव्यक्ती**ति। **उत्तरे**ति। घटो नश्यतीत्यस्य घटद्रव्यमुपात्तघटत्वरूपावस्थोत्तरतद्विरोध्यवस्थाश्रय इत्यर्थः। घट उत्पद्यत इत्यस्य च उपात्तघटत्वरूपावस्थाश्रय इति। न च घटत्वं यावदस्ति, तावत् उत्पद्यत इति व्यवहारः स्यादिति शंक्यम्—आद्यक्षणावच्छिन्नावस्थाया एवोत्पत्तिपदार्थत्वात्। **उत्पत्तेरनुत्पत्तिमत्त्वे** इति। उत्पत्तिरुत्पद्यते न वा—कार्या न वा। न चेत्, सा नित्या स्यादिति घटादेरपि नित्यत्वापत्तिः। आद्ये, उत्पत्त्यु-

सत्कार्यवादप्रसङ्गः ; उत्पत्तिमत्त्वे चानवस्था। अस्माकं त्ववस्थानां पृथक्प्रतिपत्तिकार्ययोगानर्हत्वात् अवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्यम्। कपालत्वचूर्णत्वपिण्डत्वावस्थाप्रहाणेन घटत्वावस्थावत् एकत्वावस्थाप्रहाणेन बहुत्वावस्था तत्प्रहाणेनैकत्वावस्था चेति न कश्चिद्विरोधः।

तथा "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति सदेवेदम् इदानीं विभक्तनामरूपत्वेन नानारूपं जगत् अग्रे नामरूपविभागाभावेनैकमेवासीत्, सर्वशक्तित्वेनाधिष्ठात्रन्तरासहतया अद्वितीयं चेत्यनन्यत्वमेवोपपादितम्। तथा, "तदैक्षत बहु स्यां प्रजायेय" इति स्रक्ष्यमाणतेजःप्रभृतिविविधविचित्रस्थिरत्रसरूपजगत्त्वेनाऽऽत्मनो बहुभवनं सङ्कल्प्य जगत्सर्गाभिधानात् कार्यभूतस्य जगतः परमकारणात्परस्माद्ब्रह्मणोऽनन्यत्वमवसीयते।

सच्छब्दवाच्यस्य परस्य ब्रह्मणः सर्वज्ञस्य सत्यसङ्कल्पस्य निरवद्यस्यैव सदेवेदमिति निर्देशार्हजगत्त्वम्, सच्छब्दवाच्यस्यैव जगतो नामरूपविभागाभावेनैकत्वम्, अधिष्ठात्रन्तरनिरपेक्षत्वम्, पुनरपि तस्यैव विचित्रस्थिरत्रसरूपजगत्त्वेन बहुभवनसङ्कल्परूपेक्षणम्, यथासङ्कल्पं सर्गश्च कथमुपपद्यत इत्याशङ्क्याह, "सेयं देवतैक्षत—हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतम्" इत्यादि। "तिस्रो देवताः" इति कृत्स्नमचिद्वस्तु निर्दिश्य स्वात्मकजीवानुप्रवेशेनैतद्विचित्रनामरूपभाक् करवाणीत्युक्तम्। अनेन जीवेनात्मना—मदात्मकजीवेन आत्मतयाऽनुप्रविश्यैतद्विचित्रनामरूपभाक् करवाणीत्यर्थः। स्वात्मनो जीवस्य चात्मतयाऽनुप्रवेशकृतं नामरूपभाक्त्वमित्युक्तं भवति। (तै. आन. ६-२) "तत् सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्" इति श्रुत्यन्तरेण स्पष्टम्, सजीवं जगत् परेण ब्रह्मणा आत्मतयाऽनुप्रविष्टमिति। तदेतत् कार्यावस्थस्य

---

त्पत्तेरप्युत्पत्तिरित्यनवस्था। उत्पत्तेरुत्पत्तिं विनैव कार्यत्वमिति चेत्—सत्कार्यवादः स्वीकृतः स्यात्। उत्पत्तेरुत्पत्तिमत्त्वव्यवहारो गौण इति चेत्—अवस्थायामुत्पत्तिमत्त्वव्यवहारोपि तथेति। वस्तुतो द्रव्यस्य कार्यत्वमुत्पत्तिमत्त्वमनंगीकृत्य द्रव्यधर्मस्योत्पत्तिरिति धर्मोत्पत्तिस्वीकारेऽनवस्थापरिहारासंभव इत्याशयेनाह **अस्माकंत्विति**। नन्ववयवसंनिवेशस्यैवावस्थारूपतया एकत्वबहुत्वादेः संख्यारूपतयाऽवस्थात्वाभावेन एकस्माद् बहु जायत इति व्यवहारनिर्वाहः कथमित्यत्राह **कपालत्वेति**। आगन्तुकापृथक्सिद्धधर्मोऽवस्थेति एकत्वादेरपि तथात्वमक्षतमिति भावः। पूर्वम्, 'बहवस्तन्तव एकः पटः' इति तार्किकपक्षरीत्या कारणबहुत्वकार्यैकत्वे उक्ते ; सिद्धान्ते तु कारणैकत्वकार्यानेकत्वे इति विपर्ययः। सर्वथा संख्याभेदोऽस्त्येव। अथापि नानन्यत्वभङ्गः। कथमेकानेकैक्यमिति चेत्—एकमपि वस्तुतोऽनेकांशात्मकमेव। अथाप्येकत्वव्यवहारो नामरूपविभागाभावात्। संख्यारूपगुणान्तरस्वीकारो हि नास्मन्मते। तदिदं **विभागाभावेन एकमेवेति** भङ्ग्या प्रदर्श्य **न कश्चिद्विरोध** इत्युक्तम्। ब्रह्मणि तु न बहुत्वं साक्षात्, किंतु शरीरद्वारा।

सौत्रेणाऽऽदिशब्देन गृहीताः श्रुतीर्व्याख्याति **तथेत्यादिना**। **मदात्मकजीवेनेति** फलितार्थकथ-

च कारणावस्थस्य च चिदचिद्वस्तुनः स्थूलस्य सूक्ष्मस्य च परब्रह्मशरीरत्वम्, परस्य च ब्रह्मणः आत्मत्वमन्तर्यामिब्राह्मणादिषु सिद्धं स्मारितम्। अनेन पूर्वोक्ताशङ्का निरस्ता। अचिद्वस्तुनि सजीवे ब्रह्मण्यात्मतयाऽवस्थिते नामरूपव्याकरणवचनात् चिदचिद्वस्तुशरीरकं ब्रह्मैव जगच्छब्दवाच्यमिति, सदेवेदमग्र एकमेवासीत् इत्यादि सर्वमुपपन्नतरम्। शरीरभूतचिदचिद्वस्तुगताः सर्वे विकाराश्चापुरुषार्थाश्चेति ब्रह्मणो निरवद्यत्वं कल्याणगुणाकरत्वं च सुस्थितम्। तदेतत् (शारी. २-१-२२) "अधिकं तु भेदनिर्देशात्" इत्यनन्तरमेव वक्ष्यति। तथा (छा. ६-८-७) "ऐतदात्म्यमिदं सर्वम्" इति कृत्स्नस्य चेतनाचेतनस्य ब्रह्मतादात्म्यमुपदिशति। तदेव च, "तत्त्वमसि" इति निगमयति।

तथा प्रकरणान्तरस्थेष्वपि वाक्येषु (बृ. ३-१४-१) "सर्वं खल्विदं ब्रह्म, (बृ. ६ ५-६) "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्...इदं सर्वं यदयमात्मा", 'ब्रह्मैवेदं सर्वम्', 'आत्मैवेदं सर्वम्' इत्यनन्यत्वं प्रतीयते; तथाऽन्यत्वं च निषिध्यते, (बृ. ६-५-७) 'सर्वं तं परादात् योऽन्यत्राऽऽत्मनः सर्वं वेद," (६. ४-१९) "नेह नानास्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति," इति। तथा, (बृ. ६-५-१५) "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इत्यविदुषो द्वैतदर्शनं विदुषश्चाद्वैतदर्शनं प्रतिपादयत्, अनन्यत्वमेव तात्त्विकमिति प्रतिपादयति। तदेवमारम्भणशब्दादिभ्यो जगतः परमकारणात् परस्माद् ब्रह्मणोऽनन्यत्वमुपपाद्यते।

अत्रेदं तत्त्वम्—चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव सर्वदा सर्वशब्दाभिधेयम्। तत् कदाचित् स्वशरीरतयापि पृथग्व्यपदेशानर्हसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरम्, तत् कारणावस्थं ब्रह्म; कदाचिच्च विभक्तनामरूपव्यवहारार्हस्थूलदशापन्नचिदचिद्वस्तुशरीरम्, तच्च कार्यावस्थम्-इति कारणात् परस्माद् ब्रह्मणः कार्यरूपं जगत् अनन्यत्। शरीरभूतचिदचिद्वस्तुनः शरीरिणो ब्रह्मणश्च कारणावस्थायां कार्यावस्थायां च श्रुतिशतसिद्धया स्वभावव्यवस्थया गुणदोषव्यवस्था च, (शारी. २-१-९) "न तु दृष्टान्तभावात्" इत्यत्रोक्ता॥

ये तु—कार्यकारणयोरनन्यत्वं कार्यस्य मिथ्यात्वाश्रयणेन वर्णयन्ति, न तेषां कार्यकारणयोरनन्यत्वं सिध्यति, सत्यमिथ्यार्थयोरैक्यानुपपत्तेः। तथासति ब्रह्मणो मिथ्यात्वं

---

नम्। **जीवेनात्मना**—जीवान्तर्यामिणा स्वेनेति वाच्यार्थः। **अनेन** साक्षाच्चेतनाचेतनैक्यवारकशरीरात्मभावपूर्वकभवनवर्णनेन। **पूर्वोक्ताशंका** सर्वज्ञस्य सत्यसंकल्पस्य निरवद्यस्य कथमञ्जसावद्यबहुभवनमिति शंका। **उपपाद्यते।** श्रुतिभिरिति शेषः। ननु इमास्तिस्रोदेवताः, तत् सृष्ट्वा इत्यादिभिरुपात्तैर्वाक्यैः समष्टिसृष्ट्यनन्तरं शरीरात्मभावावगमेऽपि सदेवसोम्येति प्रलये ब्रह्ममात्रस्यैव श्रवणात् तस्य तेजोरूपजडाद्यैक्यं साक्षादेव वक्तव्यमिति कथं निरवद्यतेत्यत्र निरूपयति **अत्रेदं तत्त्व**मिति। तदापि सूक्ष्मचेतनाचेतनसद्भावः, 'तमःपरेदेवएकीभवति', 'तमसा गूढमग्रे प्रकेतम्', 'न कर्मानादित्वात्' इत्यादिसिद्धमिति भावः।

जगतः सत्यत्वं वा स्यात् ॥

ये च—कार्यमपि पारमार्थिकमभ्युपयन्त एव, 'जीवब्रह्मणोरौपाधिकमन्यत्वम्, स्वाभाविकं चानन्यत्वम्; अचिद्ब्रह्मणोस्तु द्वयमपि स्वाभाविकम्' इति वदन्ति—तेषामुपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावात् निरवयवस्याखण्डितस्य ब्रह्मण एवोपाधिसंबन्धात्, ब्रह्मस्वरूपस्यैव हेयाकारपरिणामात्, शक्तिपरिणामाभ्युपगमे शक्तिब्रह्मणोरनन्यत्वाच्च जीवब्रह्मणोः कर्मवश्यत्वापहतपाप्मत्वादिव्यवस्थावादिन्यः अचिद्ब्रह्मणोश्च परिणामवादिन्यः श्रुतयो व्याकुलीभवेयुः (व्याकुप्येयुः) ॥

ये पुनः—'निरस्तनिखिलभोक्तृत्वादिविकल्पविप्लवं सर्वशक्तियुक्तं सन्मात्रद्रव्यमेव कारणं ब्रह्म; तच्च प्रलयवेलायां शान्ताशेषसुखदुःखानुभवविशेषं स्वप्रकाशमपि सुषुप्तात्मवत् अचिदविलक्षणमवस्थितम्, सृष्टिवेलायाम्, मृत्तिकाद्रव्यमिव घटशरावादिरूपम्, समुद्र इव च फेनतरङ्गबुद्बुदादिरूपः, भोक्तृभोग्यनियन्तृरूपेणांशत्रयावस्थमवतिष्ठते; अतो भोक्तृ[त्व]-भोग्य[त्व]नियन्तृत्वानि तत्प्रयुक्ताश्च गुणदोषाः शरावत्वघटत्वमणिकत्ववत् तद्गतकार्यभेदवच्च व्यवतिष्ठन्ते; भोक्तृभोग्यनियन्तृणां सदात्मनैकत्वं च घटशरावमणिकादीनां मृदात्मनैकत्ववदुपपद्यते; अतः सन्मात्रद्रव्यमेव सर्वावस्थावस्थितम्' इति ब्रह्मणोऽनन्यज्जगदातिष्ठन्ते—

तेषां सकलश्रुतिस्मृतीतिहासपुराणन्यायविरोधः। सर्वा हि श्रुतयः सस्मृतीतिहासपुराणाः सर्वेश्वरेश्वरं सदैव सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं निरवद्यं देशकालानवच्छिन्नानवधिकातिशयानन्दं परमकारणं ब्रह्म प्रतिपादयन्ति; न पुनरीश्वरादपि परम् ईश्वरांशि सन्मात्रम्। तथा हि, (छा. ६-२-१) "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् तदैक्षत बहु स्यां प्रजायेयेति" (बृ. ३-४-११) "ब्रह्म वा इदमग्र आसीदेकमेव। तदेकं सन्न व्यभवत्। तच्छ्रेयो रूपमत्यसृजत क्षत्रम्; यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति," (ऐतरेय. १-१-१) "आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति," (महोप. १-१) "एको ह वै नारायण आसीत्, न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः। स एकाकी न रमेत।

---

ये च—भास्करीयाः। **हेयाकारपरिणामात्** देहेन्द्रियाद्युपाधितद्धेतुजडप्रपञ्चरूपेण परिणामात्। **ये पुनः** यादवप्रकाशीयाः। **भोक्तृत्वादी**त्यादिना भोग्यत्वेश्वरत्वादिपरिग्रहः। **सर्वशक्ती**ति भोक्तृभोग्येश्वरादिपरिणामार्थशक्तीत्यर्थः। फेनतरङ्गबुद्बुदोपमेयत्वं भोग्यनियन्तृभोक्तृषु क्रमेण भाव्यम्। **विरोध** इति। सन्मात्रं कुत्रापि नोच्यते; सर्वज्ञेश्वरैक्यमेव च भोग्यभोक्तृषु सर्वत्रोच्यते; न तु निष्कृष्टसदैक्यं त्रिषु। ननु सदेवसोम्येदमिति वाक्यमस्ति। न। यतः तत्रत्यसत्पदमपि गतिसामान्यात् सर्वविशिष्टनारायणपरमेव। तदिदं निरूपयति **तथाही**ति। **न व्यभवत्** न वैभवं प्रापत्। **देवत्रा** देवेषु। **मिषत्** इदानीं सव्यापारं

तस्य ध्यानान्तःस्थस्य" इत्यादिभिः परमकारणं सर्वेश्वरेश्वरो नारायण एवेत्यवगम्यते। सद्-ब्रह्मात्मशब्दा हि तुल्यप्रकरणस्थाः तत्तुल्यप्रकरणस्थेन नारायणशब्देन विशेषिताः तमेवाव-गमयन्ति। (श्वे. ६-७) "तमीश्वराणां परमं महेश्वरम्", (श्वे. ६-९) "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इतीश्वरस्यैव कारणत्वं श्रूयते। स्मृतिरपि मानवी, (मनु. १-६) "ततः स्वयम्भूर्भगवान्" इति प्रकृत्य, (मनु. १-८) "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमपा-सृजत्" इति। इतिहासपुराणान्यपि पुरुषोत्तममेव परमकारणमभिदधति, (भारते. मोक्ष. ८-११-१२) 'नारायणो जगन्मूर्तिरनन्तात्मा सनातनः...स सिसृक्षुः सहस्रांशादसृजत् पुरुषान् द्विधा,' (पुरुषं प्रभुः) (वि-पु. १-१-३१) "विष्णोस्सकाशादुद्भूतं जगत् तत्रैव च स्थितम्" इत्यादिषु।

न चेश्वरः सन्मात्रमेवेति वक्तुं शक्यम्, तस्य तदंशत्वाभ्युपगमात्, सविशेषत्वाच्च। न च तस्य ज्ञानानन्दाद्यनन्तकल्याणगुणयोगः कादाचित्क इति वक्तुं शक्यते; तेषां स्वाभाविकत्वेन सदातनत्वात्, (श्वे. ६-८) "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', (मु. १-१-९) "यः सर्वज्ञः सर्ववित्" इत्यादिभ्यः। ज्ञानानन्दा-दिशक्तियोग एवास्य स्वाभाविक इति मा वोचः; 'शक्तिः स्वाभाविकी, ज्ञानबलक्रिया च स्वाभाविकी' इति पृथङ्निर्देशात्; लक्षणाप्रसङ्गाच्च। न च पाचकादिवत् 'सर्वज्ञः' इत्यादिषु शक्तिमात्रे कृत्प्रत्यय इति वक्तुं शक्यम्; कृत्प्रत्ययमात्रस्य शक्तावस्मरणात्। (अष्टा. ३-२-१४) "शक्तौ हस्तिकवाटयोः" इत्यादिषु केषाञ्चिदेव कृत्प्रत्ययानां शक्ति-विषयत्वस्मरणात्। पाचकादिषु त्वगत्या लक्षणा समाश्रीयते।

किञ्च ईश्वरस्य तदंशविशेषत्वात्, तस्य चांशित्वे, (ईश्वरस्यांशत्वे सन्मात्रस्य चां-शित्वे) तरङ्गात् समुद्रस्येवांशादंशिनोऽधिकत्वात्, "तमीश्वराणां परमं महेश्वरम्" "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादीनीश्वरविषयाणि परश्शतानि वचांसि बाध्येरन्। किञ्च सन्मात्रस्य सर्वात्मकत्वे अंशित्वे च, ईश्वरस्य तदंशविशेषत्वात् तस्य सर्वात्मकत्वांशित्वोपदेशाः व्याहन्येरन्। न हि मणिकात्मकत्वं तदंशत्वं वा घटशरावादेः॥ स्वांशेषु सर्वेषु सन्मात्रस्य पूर्णत्वेनेश्वरांशेऽपि तस्य पूर्णत्वात् तदात्मकानि तदंशाश्चेतराणि वस्तूनीति चेन्न---घटेऽपि

---

यत् किञ्चित्, तन्नैवासीदित्यर्थः। **ध्यानान्तःस्थस्येत्येतदनन्तरम्**, 'यज्ञस्तोममुच्यते' इत्यादिवाक्यम्। तेन यज्ञोपयोगिकरणकलेबरादिवस्तुव्यूह - रुद्र-ब्रह्मादिसृष्टिरुक्ता। **ईश्वरस्यैव**; न तु सन्मात्रस्य। **सहस्रांशात्** सहस्रान्तर्गतादेकस्मादंशात्। प्रकृत्येकदेशादिति वा संकल्पैकदेशादिति वा विवक्षितम्। **पुरुषान् द्विधा** इत्यत्र पुरुषं प्रभुरिति पाठः। **पुरुषान्** शरीराणि। **द्विधा** स्त्रीपुम्भेदेन। **क्रिया** कृतिः प्रयत्नः। **शक्तौ हस्तिकवाटयोः**। हस्तिघ्नः, कवाटघ्नः (चोरः)। हन्तेः टक् प्रत्ययः। ननु घटोस्ति

सन्मात्रस्य पूर्णत्वादीश्वरस्यापि घटात्मकत्वतदंशत्वप्रसङ्गात् । न च सन्मात्रस्य 'घटोऽस्ति,' 'पटोऽस्ति' इति वस्तुधर्मतयाऽवगतस्य द्रव्यत्वं कारणत्वं वोपपद्यते । व्यवहारयोग्यता हि सत्त्वम् । विरोधिव्यवहारयोग्यता तद्व्यवहारयोग्यस्यासत्त्वम् । द्रव्यमेव सदित्यभ्युपगमे क्रियादीनामसत्त्वप्रसङ्गः । क्रियादिषु काशकुशावलम्बनेऽपि (म्वनेनापि) सर्वत्रैकरूपा सत्ता दुरुपपादा । सदात्मना च सर्वस्याभिन्नत्वे सर्वज्ञत्वेन सर्वस्वभावप्रतिसन्धानात् सर्वगुणदोषसंकरप्रसङ्गश्च पूर्वमेवोक्तः । अतो यथोक्तप्रकारमेवानन्यत्वम् ॥ १५ ॥

अथोच्येत — एकस्यैवावस्थान्तरयोगेऽपि बुद्धिशब्दान्तरादयो बालत्वयुवत्वादिषु दृश्यन्ते ; मृद्दारुहिरण्यादिषु द्रव्यान्तरत्वेऽपि दृश्यन्ते । तत्र मृद्घटादिषु कार्यकारणेषु बुद्धिशब्दान्तरादयोऽवस्थानिबन्धना एवेति कुतो निर्णीयते इति—तत्रोत्तरम्—

**भावे चोपलब्धेः २ । १ । १६ ॥**

---

पटोस्तीत्यनुवर्तमानत्वात् सन्मात्रं कारणमवसीयत इत्यत्राह **न च सदि**ति । किमनुवर्तमानत्वात् , 'सत्तामात्रमगोचरं वचसाम्' इत्यादिप्रमाणाच्च, 'सत्तैव धर्मः सन्मात्रपदार्थः, उत द्रव्यमिति विकल्पमभिप्रेत्य आद्यपक्षोऽत्र दूषितः । गवादिकं प्रति गोत्वादेरिव धर्मस्य धर्मिणं प्रत्यकारणत्वात् । **व्यवहारयोग्यता** अर्थक्रियाकारित्वम् । अन्त्यं दूषयति **द्रव्यमेवे**ति । **असत्त्वप्रसंगः** । क्रियाऽस्तीत्यादिव्यवहारानिर्वाहः स्यादिति भावः । **काशकुशे**ति । अकुशे कुशत्वकल्पनवत् अद्रव्ये सत्त्वमारोपितमिति वा, मुख्यामुख्यसाधारण्येन कुशपदप्रयोगवत् सत्पदप्रयोग इति वा वर्णने । **दुरुपपादे**ति । तथा च द्रव्यमात्रे सदित्यनुवृत्तमेकं कल्प्यमित्यत्र न प्रमाणम् । अद्रव्येषु रूपं गुणः रसो गुण इत्याद्यनुगतव्यवहारस्यानुगतधर्म्यसाधकत्ववत् घटोऽस्तीत्यादेरपि नानुगतसद्द्रव्यसाधकत्वम् ॥ तार्किकैः सामान्यादौ सत्ताव्यवहारः सामानाधिकरण्येनेष्यते, द्रव्यादौ तु साक्षात् ; तथेहेति चेत्—अर्थक्रियाकारित्वादिरूपैकरूपसत्तायां साधारण्येन सुवचायां किमित्येवं कल्पनेति । घटत्वशरावत्वादेरिव गुणदोषयोरसंकर इत्युक्तं खण्डयति **सदात्मने**ति । **प्रतिसंधानात्** अहमेव जडो जीवश्च परिणामसुखदुःखाद्याश्रयश्चेति ग्रहणात् । ईश्वरस्य अहमेवेदं सर्वमिति ज्ञानं सदभेदप्रयुक्तं यदि युज्यते, सर्वदोषास्पदत्वमपि भवत्येवमिति ॥ १५ ॥

नन्वारम्भणशब्दादिरूपश्रुतिमात्रेण कार्यकारणैक्यसाधनमयुक्तम् , अनुभवविरोधात् । बाले युवेति बुद्धिर्व्यवहारश्च न भवतः, तदवस्थाविरहात् । न तथा कार्यकारणस्थले सुवचम् । कार्यकारणभावानापन्नमृद्दारुप्रभृतिषु न मृदि दार्वादिबुद्धिशब्दौ स्तः। तत्रैव, मृदानीयताम् , तन्तुरानीयतामित्युक्तौ घटपटानयनाकरणादत्रापि भेद एव युक्त इत्याशंकायाम्-मृत्तिकेत्येव सत्यमिति श्रुतिहृदयं दर्शयति **भावे** इति सूत्रेण । आरम्भणशब्दादिरूपहेतुना जगच्छब्दवाच्ये ब्रह्माभेदः प्रथमसूत्रेण साधितः । तस्मिन् ब्रह्माभेदरूपसाध्ये हेत्वन्तरपरत्वमनन्तरसूत्रस्य न भवति ; ब्रह्मण्युपलभ्यामानत्वरूपहेत्वनन्वयात् । अतो मृदादिदृष्टान्तविषयमुत्तरसूत्रम् । ततस्तत्प्रवृत्तिः शंकाप्रसक्त्यभावे न स्यादिति सा दर्शिता **अथोच्येते**ति । अत एव तृतीयसूत्रमपि दृष्टान्तविषयमेव । सूत्रे चकारो न पूर्वोक्तहेतुसमुच्चये । न च मृत्तिकेत्येव सत्य-

कुण्डलादिकार्यसद्भावे च कारणभूतहिरण्यस्योपलब्धेः । 'इदं कुण्डलं हिरण्यम्' इति हिरण्यत्वेन प्रत्यभिज्ञानादित्यर्थः । न चैवं हिरण्यादिषु द्रव्यान्तरेषु मृदादय उपलभ्यन्ते । अतो बालयुवादिवत् कारणभूतमेव द्रव्यमवस्थान्तरापन्नं कार्यमिति गीयते । द्रव्यान्तरवादिनाऽप्यभ्युपेतेनावस्थान्तरयोगेन बुद्धिशब्दान्तरादिषूपपन्नेषु, अनुपलब्धद्रव्यान्तरकल्पनानुपपत्तेश्च । न च जातिनिबन्धनेयं प्रत्यभिज्ञा, जात्याश्रयभूतद्रव्यान्तरानुपलब्धेः । एकमेव हेमजातीयं द्रव्यं कार्यकारणोभयावस्थं दृश्यते । न च द्रव्यभेदे समवायिकारणानुवृत्त्या कार्ये प्रतिसन्धानमिति वक्तुं शक्यम्; द्रव्यान्तरत्वे सति आश्रयानुवृत्तिमात्रेण तदाश्रित(ते) द्रव्यान्तरे प्रतिसंधानानुपपत्तेः ॥ गोमयादिकार्ये वृश्चिकादौ गोमयादिप्रतिसंधानं न दृश्यत इति चेन्न; तत्राप्याद्यि(द्य)कारणभूतपृथिव्यादि(वी)द्रव्यप्रत्यभिज्ञानात् ॥ अग्निकार्ये धूमे अग्निप्रत्यभिज्ञानं न दृश्यत इति चेत्—भवतु न तत्र प्रत्यभिज्ञानम्; तथापि न दोषः; अग्नेर्निमित्तकारणमात्रत्वात् । अग्निसंयुक्तादार्द्रेन्धनाद्धि धूमो जायते । गन्धैक्याच्चार्द्रेन्धनकार्यमेव धूमः । अतः कार्यभावे च तदेवेदमित्युपलब्धेर्बुद्धिशब्दान्तरादयोऽवस्थाभेदमात्रनिबन्धना इत्यवगम्यते । तस्मात् कारणादनन्यत् कार्यम् ॥ १६ ॥

इतश्च—

## सत्त्वाच्चापरस्य । २ । १ । १७ ॥

---

मिति अभेदस्य श्रुत्यैव दृष्टान्ते कथितत्वात् कथं शंकेति वाच्यम्; सिद्धवत्कथनेऽपि तत्र हेतुमुखेनानुपपादनात् । अत आशंक्य हेतुरिह प्रदर्श्यत इति ध्येयम् । **भावे** कार्यदशायां कारणस्य मृदयं घट इति प्रत्यक्षादनन्यत्वमित्यर्थः । चकारेण अभेदे बाधकाभावसमुच्चयः; भेदे बाधकस्य च । मृदानीयतामित्युक्तौ घटाद्यनानयनं तु घटाद्यसाध्यकेवलमृत्साध्यकार्यार्थित्वस्य श्रोत्रा पर्यालोचनादिति भाव्यम् । चकारस्य सौत्रस्यार्थमाह **द्रव्यान्तरेति** । **जातिनिबन्धना** एकजातीयत्वप्रयुक्ता । **द्रव्यान्तरेति** द्रव्यद्वयेत्यर्थः । कार्यं कारणञ्चेति द्रव्यद्वयमिति प्रतीतिः स्यात्; ततो गुरुत्वाधिक्यमपि स्यादिति सर्वमिदं कार्यकारणभेदे बाधकम् ॥ कार्यस्याहिरण्मयत्वेपि समवायिकारणस्योपलभ्यमानस्य हिरण्यत्वात् इदं कुण्डलं हिरण्यमिति व्यवहार इति मतं निरस्यति **नचेति** । **प्रतिसंधानेति** । ऐक्यबुद्धीत्यर्थः । कार्यकारणैक्ये गोमयमयं वृश्चिक इति प्रतिसंधानं स्यादिति पृच्छति **गोमयेति** । **आद्य(दि)कारणेति** । त्वन्मते गोमयरूपसमवायिकारणाभावे तत्कार्यवृश्चिकस्थितिः कथम् । गोमयकारणपृथिव्यंशानां समवायिकराणत्वे तेषामुपलभ्यत्वे च तादृशपृथिव्यैक्यग्रहणं ममाप्यस्तीति भावः ॥ १६ ॥

वर्तमानकालावच्छिन्नत्वावगाहिकारणाभेदग्रहणेन कार्यकारणैक्यं प्रसाध्य भूतकालावच्छिन्नत्वावगाहिज्ञानेनापि तत् साधयति **सत्त्वाच्चेति** । पूर्वम्, कुण्डलमिदं हिरण्यमिति हिरण्यत्वेन हिरण्यं गृहीतमुक्तम् । न हिरण्यत्वं पूर्वावस्था; किंतु रुचकत्वादि । तदवस्थाया नष्टत्वात् तद्विषये प्रत्यक्षं दुर्वचम् । तत् हिरण्यं पूर्वानुभूतहिरण्यत्वेन गृह्यते चेत्, प्रत्यभिज्ञा स्यात् । हिरण्यत्वमात्रेण ग्रहणे

अपरस्य **कार्यस्य कारणे सत्त्वाच्च कारणात् कार्यस्यानन्यत्वम्। लोकवेदयोर्हि कार्यमेव(र्यं) कारणतया व्यपदिश्यते; यथा लोके, 'सर्वमिदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीत्' इति; वेदे च** (छा. ६-२-१) **"सदेव सोम्येदमग्र आसीत्" इति ॥ १७ ॥**

**असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण; वाक्यशेषात् युक्तेः शब्दान्तराच्च। २। १। १८॥**

**यदुक्तम्—कारणे कार्यस्य सत्त्वं लोकवेदाभ्यामवगम्यत इति—तदयुक्तम्;** असद्व्यपदेशात्, (छा. ३-१९) **"असदेवेदमग्र आसीत्",** (शत. ६-१-१) **"असद्वा इदमग्र आसीत्",** (य. अष्ट. २-८-८) **"इदं वा अग्रे नैव किञ्चनासीत्" इति; लोके च 'सर्वमिदं घटशरावादिकं पूर्वाह्णे नासीत्' इति। अतो यथोक्तं नोपपद्यत इति चेत्—तन्न; धर्मान्तरेण तथा व्यपदेशात्। स खल्वसद्व्यपदेशस्तस्यैव कार्यद्रव्यस्य पूर्वकाले** धर्मान्तरेण-**संस्थानान्तरेण; न भवदभिप्रेतेन** तुच्छत्वेन**। सत्त्वासत्त्वे हि द्रव्यधर्मावित्युक्तम्। तत्र सत्त्वधर्मात् धर्मान्तरमसत्त्वम्। इदंशब्दनिर्दिष्टस्य जगतः सत्त्वधर्मो नामरूपे;** असत्त्वधर्मस्तु **तद्विरोधिनी सूक्ष्मावस्था। अतो जगतो नामरूपयुक्तस्य तद्विरोधि सूक्ष्मदशापत्तिर**सत्त्वम् **॥ कथमिदमवगम्यते?** वाक्यशेषात् युक्तेः शब्दान्तराच्च। **वाक्यशेषस्तावत्, "इदं वा अग्रे नैव किञ्चनासीत्" इत्यत्र, "तदसदेव सन्मनोऽकुरुत, स्यामिति" इति। अनेन वाक्यशेषगतेन मनस्कारलिङ्गेनास-**

---

त्वभिन्नेव। सर्वथा कार्यस्य यदवस्थं कारणम्, तदवस्थैक्यं तत्र सूत्रे नोक्तम्। इह सूत्रे तदुच्यत इति विशेषः। तथाच **मृत्तिकैवासी**दित्यस्य कार्याकारविरहविशिष्टा कार्याकारविरोधिपूर्वाकारविशिष्टा मृत्तिकाऽसीदित्यर्थः। मृत्पिण्ड आसीति यावत्। तेन विशेषाकारेण कार्यकारणैक्यं स्पष्टं गृह्यत इत्युक्तं भवति। सूत्रद्वयनिरूप्याकारभेदविषये **टीको**क्तमखिलं तत्रैव द्रष्टव्यम्। **अवरस्य** कार्यस्य कारणे सत्त्वात्—कार्यावस्थस्य कारणावस्थेनाभेदस्य प्रतीतिव्यवहारविषयत्वात् कारणादनन्यत् कार्यमिति सूत्रार्थः। तथा च जगतो ब्रह्मानन्यत्वमपि सिद्धमिति ॥ १७ ॥

वेदलोकबलेन सत्कार्यवादे प्रस्तुते तत एवासत्कार्यपक्षप्रश्नं प्रापय्य प्रतिवक्तुमुपरिसूत्रम् **असदि**ति। लोके वेदे च कार्यस्य प्रागसत्त्वेन व्यपदेशात् न कारणैक्यमिति चेन्नेत्यर्थः। अत्र हेतुः **धर्मान्तरेणे**ति। असद्व्यपदेशादित्यनुषङ्गः। धर्मान्तरेणासद्व्यपदेश इत्यत्र हेतवो वाक्यशेषादयः। **इत्युक्त**मिति। तदनन्यत्वसूत्रभाष्यान्ते, 'व्यवहारयोग्यता वस्तुनः सत्त्वम्; तद्गता विरोधिव्यवहारयोग्यता चासत्त्वम्' इत्युक्तम्। इदमस्तीत्यत्र समभिव्याहृतपदार्थतावच्छेदकधर्मवत्ता सत्त्वम्; तद्विरुद्धधर्मवत्ता असत्त्वमिति ज्ञापयितुम् **इदंशब्दनिर्दिष्ट**स्येत्युक्तम्। वाक्यशेषः असदेवेत्यत्र, तत् सदासीदिति। इदंत्वविरुद्धधर्माश्रयः प्रागासीत्, पश्चात् तदेव इदंत्वरूपरूपनामादिमदासीदित्यर्थः। असदासीदित्यस्य इदमर्थाभाव आसीदित्यर्थे, तत् सदासीदित्यस्य अभावः भाव आसीदित्यर्थो वाच्यः। सोऽनन्वित। असद्वा इत्यत्र, तदात्मानं स्वयमकुरुतेति वाक्यशेषः। अभावश्चेत् असत्पदार्थः, स्वकर्तृत्वं तस्य बाधितम्। **मनस्कारः**

च्छब्दार्थे तुच्छातिरिक्ते निश्चिते, तदैकार्थ्यात्, "असदेवेदम्" इत्यादिष्वप्यसच्छब्दस्यायमेवार्थ इति निश्चीयते। युक्तेश्चासत्त्वस्य धर्मान्तरत्वमवगम्यते; युक्तिर्हि सत्त्वासत्त्वे पदार्थधर्मावववगमयति। मृद्द्रव्यस्य पृथुबुध्नोदराकारयोगो घटोऽस्तीति व्यवहारहेतुः; तस्यैव तद्विरोध्यवस्थान्तरयोगो घटो नास्तीति व्यवहारहेतुः। तत्र कपालाद्यवस्थायास्तद्विरोधित्वेन सैव घटावस्थस्य नास्तीति व्यवहारहेतुः। न च तद्व्यतिरिक्तो घटाभावो नाम कश्चिदुपलभ्यते। न च कल्प्यते; तावतैवाभावव्यवहारोपपत्तेः। तथा शब्दान्तराच्च पूर्वकाले धर्मान्तर योग एवावगम्यते। शब्दान्तरञ्च पूर्वोदाहृतम्, "सदेव सोम्येदमग्र आसीत्" इत्यादिकम्। तत्र हि, "कुतस्तु खलु सोम्यैवं स्यात्" इति तुच्छत्वमाक्षिप्य, "सत्त्वेव सोम्येदमग्र आसीत्" इति स्थापितम्। (बृ. ३-४-४) तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" इति सुस्पष्टमुक्तम् ॥ १८ ॥

इदानीं कार्यस्य कारणादनन्यत्वे निदर्शनद्वयं द्वाभ्यां सूत्राभ्यां दर्शयति—

पटवच्च । २ । १ । १९ ॥

यथा तन्तव एव व्यतिषङ्गविशेषभाजः पट इति नामरूपकार्यान्तरादिकं भजन्ते, तद्वद् ब्रह्मापि ॥ १९ ॥

यथा च प्राणादिः(दि) । २ । १ । २० ॥

---

संकल्पः। **तुच्छातिरिक्ते** भावेतरविलक्षणे। **सर्वत्र** वाक्यशेषतस्तुच्छातिरिक्तत्वे ज्ञायमाने एकमादाय **तदैकार्थ्या**दित्यादिभाषणम्, आसीत् अकुरुतेत्यादेरचेतनसाधारण्यम्, मनोऽकुरुतेत्यस्य विशिष्टचेतनज्ञापकत्वरूपातिशयञ्चाभिप्रेत्य। वाक्यशेषरहितस्थलेऽप्येवमिति च दर्शितं भवति। **कपालादी**त्यादिपदेन पिण्डग्रहणात् घटस्य नाशप्रागभावकालयोः नास्तीति व्यवहारनिर्वाहः। घटात्यन्ताभावस्थले कथं निर्वाह इति चेत्—अत्यन्ताभावो हि घटाधिकरणत्वस्य कदाचिदपि प्रसक्तिरहितस्थल एव भवति। तत्राधिकरणभूताकाशादिगतासाधारणधर्म एव घटात्यन्ताभावः। भूतले घटो नास्तीति सामयिकाभावे कथंनिर्वाह इति चेत्—तत्र घटसंयोगाभाव एव घटाभाव इति **कणादसूत्रे**ऽप्युक्तम्. "नास्ति घटो गेह इति घटे गेहसंसर्गप्रतिषेधः" इति। संयोगाभावश्चायं ध्वंसप्रागभावान्यतर इति पूर्वरीतिरेव। संयोगाधिकरणकालभिन्नकालसंबन्धरूप एव वा। इमे नास्तीतिप्रतीतिविषयभावरूपधर्माः। पटो न घट इति भेदस्तु पटत्वादिरेवेति जिज्ञासाधिकरणे भेदविचारे भाषितम्। **तुच्छत्वमाक्षिप्य**—तुच्छत्वं न युक्तमित्युक्त्वा। **स्थापितम्**; सत्त्वमेवेति शेषः। लोके शब्दान्तरञ्च, घटशरावादिकं पूर्वाह्णे मृत्पिण्ड आसीदिति ॥

**पटवच्च**। यद्यपि तार्किकैः पटस्तन्तुभिन्न एव स्वीकृतः—अथापि तस्य तन्तुसंघातविशेषरूपत्वं लोके आनुभविकम्। शिथिलसंयोगस्थले पट एव पुनस्तन्तुरूपेण विभज्यते चेति धान्यराश्यादिवत् नावयव्यन्यदिति ज्ञाप्यते। वेष्टितप्रसारितपटवैत्यदित्यर्थः **शांकरभाष्ये**: अत्र तु प्रसिद्धरीतिरेवादृता ॥ १९॥

**तार्किकाभिमतस्थलं** निदर्श्याप्याह **यथा च प्राणादि**रिति। **आदिना** अपानादिग्रहः। "एक

यथा च वायुरेक एव शरीरे वृत्तिविशेषं भजमानः प्राणापानादिनामरूपकार्यान्तराणि भजते, तद्वद् ब्रह्मैकमेव विचित्रस्थिरत्रसरूपं जगद् भवतीति परमकारणात् परस्माद् ब्रह्मणोऽनन्यत्वं जगतः सिद्धम् ॥ २० ॥ इति आरम्भणाधिकरणम् ॥ ६ ॥

४२. इतरव्यपदेशाधिकरणम् २-१-७ ॥ 

इतरव्यपदेशात् हिताकरणादिदोषप्रसक्तिः । २ । १ । २१ ॥

जगतो ब्रह्मानन्यत्वं प्रतिपादयद्भिः, (छा. ६-८-७) "तत्त्वमसि", (बृ ६-४-५) "अयमात्मा ब्रह्म" इत्यादिभिर्जीवस्यापि ब्रह्मानन्यत्वं व्यपदिश्यत इत्युक्तम् । तत्रेदं चोद्यते ; यदि इतरस्य जीवस्य ब्रह्मभावोऽमीभिर्वाक्यैर्व्यपदिश्यते, तदा ब्रह्मण सार्वज्ञ्यसत्यसङ्कल्पत्वादियुक्तस्य, आत्मनो हितरूपजगदकरणम् अहितरूपजगत्करणमित्यादयो दोषाः प्रसज्येरन् । आध्यात्मिकाधिदैविकाधिभौतिकानन्तदुःखाकरं चेदं जगत् । न चेदृशे स्वानर्थे स्वाधीनो बुद्धिमान् प्रवर्तते । जीवाद् ब्रह्मणो भेदवादिन्यः श्रुतयो जगद्ब्रह्मणोरनन्यत्वं वदता त्वयैव परित्यक्ताः, भेदे सति अनन्यत्वासिद्धेः ॥

---

एवोपाधिभेदात् प्राणापानादिसंज्ञां लभते' इति हि तैरुक्तमिति भावः ॥ पटरूपं निदर्शनं लौकिकम् ; 'प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत् सर्वं प्राण एव' (बृ. ३-५) इतीदं वैदिकमित्यपि ध्येयम् ॥

पूर्वाधिकरणे ब्रह्मानन्यत्वस्य प्रपञ्चे उक्तत्वात् प्रपञ्चगतसर्वहेयास्पदत्वं तस्य स्यादिति शङ्कयोत्तराधिकरणप्रवृत्तिः । तत्रेह जीवमात्रग्रहणेन शङ्का । यद्यपीदमेवाधिकरणं सर्वहेयास्पदत्वशंकापरिहारस्थानम्-अथापि विलक्षणत्वाधिकरणे प्रसङ्गात् ब्रह्मजगतोश्चेतनाचेतनभूतयोरनन्यत्वासंभवशङ्काशमनाय विशिष्टवेषेणानन्यत्वस्य, तावता शरीरगतदोषाणां शरीरिण्यप्रसङ्गस्य चोपपादितत्वात् , तदुपरि भोक्त्रापत्त्यधिकरणे शरीरस्वामित्वप्रयुक्तदोषस्य च वारितत्वात् पूर्वपक्षी चेतनमात्रविषये स्वाक्षेपं संकोचयति । अचेतनविषये अगत्या विशिष्टवेषेणानन्यत्वनिर्वाहेऽपि, जीवब्रह्मणोश्चेतनत्वाविशेषात् अनन्यत्वस्य एकविज्ञानेनसर्वविज्ञानप्रतिज्ञानिर्वाहार्थमेवोपपादनात् जीवे ब्रह्मकार्यत्वस्यावश्यकत्वे ब्रह्मणोत्तरावस्थाविशेषविशिष्टं जीवशब्दाभिलप्यं सिद्धान्तीष्टमिति स मन्यते । कार्यकारणभावनिबन्धनमेवैवं तत्त्वमस्यादिवाक्यवेद्यमिति प्रकरणादवगम्यते । एवमनन्यत्वमूला चोदनेति संगतिं दर्शयति **जगत** इति । जीवमात्रविषये इह शङ्केति सूत्रत एवावगम्यते, **इतर**पदस्य बहुलं जीव एव प्रयोगात् , अश्मादौ भेदस्य दृष्टान्तीकरणाच्च । **हिताकरणादी**त्यादिपदेन अहितकरणदुःखादिमत्त्वपरिग्रहः । उपादानोपादेयैक्यनिबन्धनस्य दुःखित्वादेः पूर्वाधिकरणगमनिकया स्पष्टं ग्रहणसंभवात् तत् **आदि**पदेन गमयन् निमित्तोपादानैक्यप्रयुक्तं हिताकरणादिदोषं मुक्तकण्ठमाह । स्वस्याहितं करोति जीवाहितकरणमुखेनेति कथनादेव दुःखित्वापादनमपि कृतं भवतीति च मन्तव्यम् । **आकर**मिति बहुव्रीहिः । यथाकथञ्चिद्भेदवर्णनं विना मुख्य भेदस्वीकार एवोक्तदोषपरिहारः इति ज्ञापयितुमाह **जीवा**दिति । भास्करपक्षे दोषस्यापरिहृतत्वं दर्शयितुं

औपाधिकभेदविषयाः भेदश्रुतयः, स्वाभाविकाभेदविषयाश्चाभेदश्रुतय इति चेत्—तत्रेदं वक्तव्यम्-स्वभावतः स्वस्मादभिन्नं जीवं किमनुपहितं जगत्कारणं ब्रह्म जानाति वा, न वा। न जानाति चेत्—सर्वज्ञत्वहानिः; जानाति चेत्—स्वस्मादभिन्नस्य जीवस्य दुःखं स्वदुःखमिति जानतो ब्रह्मणो हिताकरणाहितकरणादिदोषप्रसक्तिरनिवार्या ॥

जीवब्रह्मणोरज्ञानकृतो भेदः, तद्विषया भेदश्रुतिरिति चेत्—तत्रापि जीवाज्ञानपक्षे पूर्वोक्तो विकल्पस्तत्फलं च तदवस्थम्। ब्रह्माज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानसाक्षित्वं तत्कृता जगत्सृष्टिश्च न संभवति। अज्ञानेन प्रकाशस्तिरोहितश्चेत्—तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन प्रकाशस्यैव स्वरूपत्वात् स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषसहस्रं प्रागेवोदीरितम्; अत इदमसंगतं ब्रह्मणो जगत्कारणत्वम् ॥ २१ ॥

---

शंकते औपाधिकेति। शाङ्करपक्षे जीवेति। जीवाज्ञानपक्षो वा ,ब्रह्माज्ञानपक्षो वा। आद्ये, अद्वैतिनां निरीश्वरवादाभावात् सर्वज्ञस्य स्रष्टुः सद्भावस्यात्राप्यधिकरणे तैरुक्तत्वात् उक्त एव दोष इत्याह जीवाज्ञानेति।

नन्वारम्भणाधिकरणे जीवाज्ञानपक्षं प्रदूष्य ब्रह्माज्ञानपक्षस्य ज्यायस्त्वप्रदर्शनात् तस्मिन् पक्षे स्थित्वा पूर्वपक्षः प्रतिविधीयताम्। तत्र ह्यज्ञानाधीनभ्रान्तिमता ब्रह्मणा जीवेश्वरादीनां भिन्नत्वेनैव कल्पितत्वात् सर्वस्या अपि कल्पनायाः भेदैकवादिमतसारूप्यस्वीकारात् व्यवहारदशायां भेद एव, मुक्तदशायामेवाभेद इति नानन्यत्वस्य तन्निबन्धनदोषस्य वा प्रसक्तिरित्यत आह ब्रह्माज्ञानेति। आरम्भणाधिकरणे स पक्षोऽपि दूषित एवेति न तदादरणप्रसक्तिरिति भावः। स्वरूपनाशादिदोषसहस्रमिति। भेदवादिना कल्पितभेदबाध्यद्वैतिविषये एतावानेव दोषः साक्षात् सुवच इत्याशयेनाधिकं न स्पष्टमुक्तम्। दोषसहस्रमिति पदेन, सिद्धान्ते स्थित्वा कथने बहु वक्तव्यं प्रागुक्तरीत्या सुग्रहमिति सूच्यते। यद्ययं भेदवादिरीत्यैव सर्वं स्वीकुर्यात्, तर्हि एकविज्ञानेन सर्वविज्ञानं कार्यकारणभावनिबन्धनसर्वब्रह्मैक्यादिकम् ईश्वरस्य तत्त्वोपदेष्टृत्वादिकञ्च कथं निर्वहेत्। सृष्टिवाक्यानां सर्वनिषेध एव तात्पर्यमित्यादिकं सर्वथा श्रुतिस्मृतिसूत्राणां सर्वेषां कदर्थनमेव। एवमपि भ्रान्तं ब्रह्म ईश्वरं तत्त्वज्ञत्वेन कल्पयति न वा। न चेत्, सर्वज्ञेश्वरासिद्धिः। कल्पयति चेत्-स जीवं स्वाभिन्नत्वेन जानन् तत्त्वज्ञो भवति, नास्तीति जानन् वा। आद्ये, स्वाहितमेव कुर्यात्। अन्त्ये कस्येश्वरः स्यादित्यादि दोषचिन्तनमविशिष्टम् ॥

ननु कथं यादवप्रकाशपक्षो नात्र स्पृष्टः ? ॥ तत्पक्षे जीवस्य ब्रह्मपरिणामतया स्वाभाविकभेदस्य स्थितत्वात् नायं दोष इति चेन्न-अभेदस्यापि स्वाभाविकत्वस्य तदिष्टत्वेन दोषावश्यम्भावादिति चेत्—उच्यते-यादवप्रकाशपक्ष एव पूर्वं दोषमुक्त्वा पूर्वपक्षी पक्षान्तरदूषणेन पूर्वपक्षं प्रवर्तयति। एतदुक्तं भवति—ब्रह्मानन्यत्ववादिना किं तदैक्षतेत्यादिवाक्यस्वारस्यात् सगुणेश्वरात्मकब्रह्मानन्यत्वमिष्यते, उत यादवप्रकाशवत् ईश्वरस्यापि परिणामत्वेन जीवे सन्मात्रैक्यम्। आद्ये स्पष्टा दोषप्रसक्तिः। अन्त्येऽपि स ईश्वरः स्वाभिन्नसन्मात्राभिन्नं जीवं स्वाभिन्नत्वेनैव जानातीति हिताकरणादिकमापतत्येवेति। अत एवाधिकरणसारावलौ, 'उक्तेऽनन्यत्वपक्षे चिदपि परिणतिर्ब्रह्मणः स्यात्' इति पूर्वपक्षोपन्यासः ॥ २१ ॥

इति प्राप्तेऽभिधीयते—

अधिकं तु भेदनिर्देशात् । २ । १ । २२ ॥

तुशब्दः पक्षं व्यावर्तयति । आध्यात्मिकादिदुःखयोगार्हात् प्रत्यगात्मनः अधिकम् अर्थान्तरभूतं ब्रह्म । कुतः ? भेदनिर्देशात् । प्रत्यगात्मनो हि भेदेन निर्दिश्यते परं ब्रह्म— (बृ. मा. ६-७) "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः", (श्वे. १-६) "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति", (श्वे. ६ ९) "स कारणं करणाधिपाधिपः", (श्वे. ४-६) "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्न्यो अभिचाकशीति", (श्वे. १-९) "ज्ञाज्ञौ द्वावजावीशनीशौ", (बृ. ६-३-२१) "प्राज्ञेनाऽऽत्मना संपरिष्वक्तः", (बृ. ६-३-३५) "प्राज्ञेनात्मनाऽन्वारूढः", (श्वे. ४-९) "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः", (श्वे. ६-१६) "प्रधानक्षेत्रज्ञपतिर्गुणेशः", (श्वे. ६-१३) "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्", (सुबाल. ७) "योऽव्यक्तमन्तरे संचरन् यस्याव्यक्तं शरीरं यमव्यक्तं न वेद, योऽक्षरमन्तरे संचरन् यस्याक्षरं शरीरं यमक्षरं न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिभिः ॥ २२ ॥

अश्मादिवच्च तदनुपपत्तिः । २ । १ । २३ ॥

अश्मकाष्ठलोष्टतृणादीनामत्यन्तहेयानां सततविकारास्पदानामचिद्विशेषाणां निरवद्य-निर्विकार-निखिलहेयप्रत्यनीककल्याणैकतान-स्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूप-नानाविधानन्तमहाविभूतिब्रह्मस्वरूपैक्यं यथा नोपपद्यते, तथा चेतनस्याप्यनन्तदुःखयोगार्हस्य खद्योतकल्पस्य, (छा. ८-१-५) "अपहतपाप्मा" इत्यादिवाक्यावगतसकलहेयप्रत्यनीकानवधिकातिशयासङ्ख्येयकल्याणगुणगणाकरब्रह्मभावानुपपत्तिः। सामानाधिकरण्यनिर्देशः, (बृ. मा. ६-७) "यस्यात्मा शरीरम्" इत्यादिश्रुतेर्जीवस्य ब्रह्मशरीरत्वात् ब्रह्मणो जीवशरीरतया तदात्मत्वेनावस्थितेर्जीवप्रकारब्रह्मप्रतिपादनपरश्च,एतदविरोधी,प्रत्युतैतस्यार्थस्योपपादकश्चेति, (शारी. १-४-२२) "अवस्थितेरिति काशकृत्स्नः" इत्यादिभिरसकृदुपपादितम् । अतः सर्वावस्थं ब्रह्म चिदचिद्वस्तुशरीरमिति, 'सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणम्; तदेव ब्रह्म स्थूलचिदचिद्वस्तुशरीरं जगदाख्यं कार्यम्' इति जगद्ब्रह्मणोः सामानाधिकरण्योपपत्तिः,

---

अन्यदित्यनुक्त्वा **अधिक**मिति प्रयोगात् सर्वप्रकारेण भेदोऽतिशयश्चानन्यत्वोपपादकशरीरात्मभावरूपो विवक्षित इति तदनुगुणानेकवाक्योदाहरणम् । यआत्मेत्यादिवाक्येषु यथार्हं सामान्यतः, मुक्ति-जागर-सुप्त्या -मरण-प्रलयदशाभेदेन च जीवब्रह्मभेद उक्तो द्रष्टव्यः ॥ २२ ॥

तर्हि अनन्यत्वनिर्वाहः कथमित्यत्र जडविषय इवैवेत्याशयेनाह **सामानाधिकरण्ये**ति ।

जगतो ब्रह्मकार्यत्वम्, ब्रह्मणोऽनन्यत्वम्, अचिद्वस्तुनो जीवस्य च ब्रह्मणश्च परिणामित्व-दुःखित्वकल्याणगुणाकरत्वस्वभावासङ्करः, सर्वश्रुत्यविरोधश्च भवति। (छा. ६-२-१) "सदेव सोम्येदमग्र आसीदेकमेव" इत्यविभागावस्थायामप्यचिद्युक्तजीवस्य ब्रह्मशरीरतया सूक्ष्मरूपेणावस्थानमवश्याभ्युपगन्तव्यम्; (शारी. २-१-३४) "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" (शारी. २-१-३५) "न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" इति सूत्रद्वयोदितत्वात् तदानीमपि सूक्ष्मरूपेणावस्थानस्य। अविभागस्तु नामरूपविभागाभावादुपपद्यते। अतो ब्रह्मकारणत्वं संभवत्येव।

ये पुनरस्यैव जीवस्याविद्यावियुक्तावस्थमभिप्रेत्येमं भेदं वर्णयन्ति, तेषामिदं सर्वमसंगतं स्यात्। न हि तदवस्थस्य सर्वज्ञत्वं, सर्वेश्वरत्वं, समस्तकारणत्वं, सर्वात्मत्वं, सर्वनियन्तृत्वमित्यादीनि सन्ति। अनेनैव रूपेण ह्याभिः श्रुतिभिः प्रत्यगात्मनो भेदः प्रतिपाद्यते; तस्य सर्वस्याविद्यापरिकल्पितत्वात्। (तत् सर्वं ह्यविद्यापरिकल्पितं त्वन्मते।) न चाविद्यापरिकल्पितस्याविद्यावस्थायां शुक्तिकारजतादिभेदवत् परस्परभेदोऽत्र सूत्रकारेण, "अधिकं तु भेदनिर्देशात्" इत्यादिषु प्रतिपाद्यते; ब्रह्मजिज्ञासा कर्तव्येति जिज्ञास्यतया प्रक्रान्तस्य ब्रह्मणो जगज्जन्मादिकारणस्य वेदान्तवेद्यत्वम्, तस्य च स्मृतिन्यायविरोधपरिहारश्च क्रियते।

---

जीवस्य ब्रह्मपरिणामत्वं दुर्वचमित्याह **सदेव सोम्येति**।

एतदधिकरणस्य मृषावादिकथितं निर्वाहं निरसितुमाह **ये पुनरिति**। **इमं भेदं** जीवेश्वरभेदम्। यदा दुःखादिकमस्ति, तदा जीवेश्वरभेदोऽप्यस्ति। अतो न संकरः, यदा भेदोऽपैति तत्त्वज्ञानात्, तदा दुःखादिकमपि नेत्येवं तैरुक्तम्। तथा 'सर्वज्ञं सर्वशक्ति ब्रह्म नित्यशुद्धमुक्तस्वभावं शारीरादन्यत्' इति च। तत्र नित्यशुद्धमुक्तस्वभावे निर्गुणे ब्रह्मणि सर्वज्ञत्व-सर्वशक्तित्वादेरभावात् तदा जीवस्यैवाभावाच्च तन्मुखेन जीवाद्भेदवर्णनं न युज्यत इत्याह **नहीत्यादिना**॥ **परिकल्पितत्वादित्यस्य असंगतं स्या**दित्यत्रान्वयः। **तस्येत्यादि**स्थाने, तत् सर्वं····त्वन्मते इति पाठान्तरमिति टीका। **नित्यशुद्धे**तिपदेन हेयगुणराहित्यमात्रं विवक्षितमिति निर्दोषकल्याणगुणाकरे ईश्वरे जीवभेदोऽस्तीत्येव विवक्षितम्; न तु सर्वमुक्ते इति चेत्—तदपि निरस्यति **नचाविद्येति**। अविद्यापरिकल्पिताकारविशिष्टस्य मुमुक्षुजिज्ञास्यत्वायोगात्, मुमुक्षुजिज्ञास्ये जीवादाधिक्यस्यैवात्र समर्थनात् तदयुक्तमिति भावः। कल्प्यमानस्येश्वरस्य सर्वज्ञत्व-तत्त्वमस्यादिश्रुतिप्रवर्तकत्वादिमत्त्वेनैव कल्प्यमानतया जीवब्रह्माभेदरूपतत्त्वज्ञानप्रौढ्येण कथं हिताकरणादिदोषान्मुक्तिरिति प्रागुक्तमप्यनुसंधेयम्। अतो व्यवहारदशायां सर्वदोषप्रसक्तिरुक्ता न कथमपि वार्येत; ऐकात्म्यवादे सर्वदुःखाद्याश्रयत्वं ह्यवर्जनीयम्। अश्मादिसूत्रस्य वज्रवैडूर्यपाषाणादिमिथोभेदवत् जीवेश्वरादिभेद इत्यर्थवर्णनमप्ययुक्तम्। तदा हि अश्मादिवच्चोपपत्तिरिति सूत्रेण भाव्यम्; न तु **तदनुपपत्ति**रिति। अधिकरणप्रधानशंकापरिहारस्य ततोऽसिद्धेश्च तदयुक्तमेव। तदनेनाधिकरणेन भेदश्रुतीनां यथाश्रुतमुख्यार्थस्यादरणीयत्वं स्थापितम्॥

(शारी. २-१-८-९) "अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्", "न तु दृष्टान्तभावात्" इति सूत्रद्वयमेतदधिकरणसिद्धमनुवदति ; तत्र हि विलक्षणयोः कार्यकारणभावासंभव एवाधिकरणार्थः । (शारी. २-१-७) "असदिति चेन्न प्रतिषेधमात्रत्वात्" इति च पूर्वाधिकरणार्थ-(णस्थ)मनुवदति ॥ २३ ॥ इति इतरव्यपदेशाधिकरणम् ॥ ७ ॥

४३. उपसंहारदर्शनाधिकरणम् २-१-८ ॥

**उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि । २ । १ । २४ ॥**

**परस्य ब्रह्मणः सर्वज्ञस्य सत्यसङ्कल्पस्य स्थूलसूक्ष्मावस्थसर्वचेतनाचेतनवस्तुशरीरतया सर्वप्रकारत्वेन सर्वात्मत्वं सकलेतरविलक्षणत्वं चाविरुद्धमिति स्थापितम् । इदानीं सत्यसङ्कल्पस्य परस्य ब्रह्मणः स्वसङ्कल्पमात्रेण विचित्रजगत्सृष्टियोगो न विरुद्ध इति स्थाप्यते । ननु च परिमितशक्तीनां कारककलापोपसंहारसापेक्षत्वदर्शनेन सर्वशक्तेर्ब्रह्मणः कारककलापानुपसंहारेण जगत्कारणत्वविरोधः कथमाशङ्क्यते ? ; उच्यते—लोके तत्तत्कार्यजननशक्तियुक्तस्यापि तत्तदुपकरणापेक्ष(क्षि)त्वदर्शनात् सर्वशक्तियुक्तस्य परस्य ब्रह्मणोऽपि तत्तदुपकरणविरहिणः स्रष्टृत्वं नोपपद्यत इति कस्यचिन्मन्दधियः शङ्का जायत इति सा निराक्रियते । घटपटादि-**

---

विलक्षणत्वाधिकरण एव कार्यकारणयोरनन्यत्वस्य तन्मूलप्राप्तासामञ्जस्यपरिहारस्य च ज्ञातत्वात् एतदधिकरणमेतत्पूर्वाधिकरणञ्च व्यर्थमित्याक्षेपं परिहरति **अपीता**वित्यादिना । एकस्याधिकरणस्यैक एव विषयो भवितुमर्हतीति इदमेतदधिकरणार्थभूतमेव तत्रानूदितमिति नैतद्वैयर्थ्यमिति भावः । एवं जीवस्य भिन्नत्वे कथं कार्यत्वम् ; कथमनन्यत्वम् ; कथमेकविज्ञानेन सर्वविज्ञाननिर्वाहः—इति चेत्-तत् सर्वात्माधिकरण-अंशाधिकरणाद्यवसेयम् । विलक्षणत्वाधिकरणे जडविषयोक्तन्यायस्य जीवेऽपि संभवचिन्तयाऽपि शरीरात्मभावः सेत्स्यति ॥ २३ ॥

एवमनन्यत्वमूले दोषे परिहृते संकल्पमात्रसहायकत्ववचनमूलशंकायामुपरितनमधिकरणम् । उपकरणाभावाद् ब्रह्म निमित्तमुपादानञ्च न भवतीति शङ्का । भाष्ये निमित्तमात्रविषयकत्वप्रतीतावपि उपादानविषयकत्वं तुल्यन्यायसिद्धम् । अत एव, 'शक्तौ कर्तृप्रकृत्योरुपकरणगणोपस्थितौ कार्यकृत्त्वम्" **इत्यधिकरणसारावलिः** । उपादाननिमित्तमेलनमात्रेणापि कार्यं न भवति ; बहुसहकारिसापेक्षत्वदर्शनात् । लोके निमित्तभूतानां कुलालादीनामुपादानभूतानां मृदादीनाञ्च उपकरणानि विना कार्यजनकत्वादर्शनात् । अत एव सहकारिसंभरणस्य निमित्तभूतेन चेतनेन क्रियमाणत्वदर्शनात् सर्गारम्भे चोपकरणाभावात् ब्रह्म न निमित्तमुपादानञ्चेति कारणताद्वयस्याप्याक्षेपः । **सर्वात्मत्वं** सर्वानन्यत्वम् । **लोक**इतिवाक्येन सौत्रपूर्वपक्षखण्डसार्थोऽप्युक्तः । **उपकरणविरहिण** इति । ननु कर्मानादित्वाददृष्टरूपोपकरणसत्त्वात् कथं तद्विरह इति चेन्न-अदृष्टस्य दृष्टसामग्रीघटनमुखेनैव कार्यकरत्वात् । अन्यथा कुलालादिकं विनाऽप्यद्य घटाद्युत्पत्तिप्रसङ्गात् । **मन्दधिय** इति । सर्गप्रलयस्वीकारिभिः सांख्यतार्किकादिभिस्तीर्थकरैः अदृष्टमात्रकारितत्वस्य प्रकृत्युपादानके परमाण्वीश्वरकारणके वा सर्गारम्भकालिककार्ये स्वीकृतत्वेन तैरेवं वेदान्तिनं

कारणभूतानां कुलालकुविन्दादीनां तज्जननसामर्थ्ये सत्यपि कानिचिदुपकरणानि उपसंहृत्यैव जनयितृत्वं दृश्यते । 'तज्जननाशक्ताः कारककलापोपसंहारेऽपि जनयितुं न शक्नुवन्ति ; शक्ताः पुनः कारककलापोपसंहारे जनयन्ति' इत्येतावानेव विशेषः । ब्रह्मणोऽपि सर्वशक्तेः, सर्वस्य जनयितृत्वं तदुपकरणानामनुपसंहारे नोपपद्यते । प्राक्सृष्टेश्च असहायत्वम्, (छा. ६ २-२) "सदेव सोम्येदमग्र आसीत्", (महो. १-१) "एको ह वै नारायण आसीत्" इत्यादिषु प्रतीयते । अतः स्रष्टृत्वं नोपपद्यत इत्येवं प्राप्तम् । तदिद माशङ्कते (तदिदमुक्तम्) उपसंहारदर्शनान्नेति चेत्—इति ॥

परिहरति—न क्षीरवद्धि-इति । न सर्वेषां कार्यजननशक्तानामुपसंहारसापेक्षत्वमस्ति । यथा क्षीरजलादेर्दधिहिमजननशक्तस्य तज्जनने, एवं ब्रह्मणोऽपि स्वयमेव सर्वजननशक्तेः सर्वस्य जनयितृत्वमुपपद्यते । हीति प्रसिद्धवन्निर्देशः चोद्यस्य मन्दताख्यापनाय । क्षीरादिष्वातञ्चनाद्यपेक्षा न दध्यादिभावाय ; अपितु शैघ्र्यार्थं रसविशेषार्थं च (वा) ॥ २४ ॥

देवादिवदपि लोके । २ । १ । २५ ॥

यथा देवादयः स्वेस्वे लोके सङ्कल्पमात्रेण स्वापेक्षितानि सृजन्ति, तथाऽसौ पुरुषोत्तमः कृत्स्नं जगत् सङ्कल्पमात्रेण सृजति । देवादीनां वेदावगतशक्तीनां दृष्टान्ततयोपा-

प्रति प्रश्नायोगादिति भावः । जननेति ; उत्पादनेत्यर्थः । असहायत्वमिति । जीवानां प्रकृतेश्चोपादानकोटिनिविष्टत्वात् कर्ममात्रस्यापर्याप्तत्वात् वस्त्वन्तरस्य चाभावादिति भावः ।

क्षीरजलादेरित्यादिपदेनायस्कान्तादिग्रहः । दधिहिमेत्येतदुपलक्षणम् । प्रसिद्धवदिति । यद्यपि नञर्थं प्रति क्षीरवदित्यस्य हेतुसमर्पकत्वात् हिशब्दस्य हेतुत्वमर्थः स्यात्-अथापि संभवतीत्यध्याहारस्थाने संभवादित्यध्याहारे हेतुलाभात्, यद्वा क्षीरवत् खलु ब्रह्मण उपसंहारापेक्षा न भवति इत्येव सूत्रार्थवर्णनात् हिशब्द एवमर्थ इति भावः । 'न ब्रह्म कारणम् उपकरणरहितत्वात्, यन्नैवं तन्नैवम्' इति न ; क्षीरादौ व्यभिचारादिति सूत्रनिष्कृष्टार्थः । ननु तक्रादियोजनादेव क्षीरादिकं दध्यादि भवतीत्यत्राह क्षीरादिष्विति । आतञ्चनं तक्रादिक्षेपः । जलस्य हिमता न सूर्यकिरणापेक्षा । तदवयवमिथोविश्लेषसंश्लेषौ तु तत्र विलक्षणकिरणसंसर्गायत्तौ ॥ ननु "पयोम्बुवच्चेत् तत्रापि" इत्यत्र क्षीरस्यापीश्वरसापेक्षत्वं वक्ष्यते ; कथमत्र निरपेक्षत्वोक्तिः ॥ नैवम् । उपकरणनिरपेक्षत्वं खल्वत्रोच्यते ॥ २४ ॥

लोके इत्यस्य दार्ष्टान्तिकेऽन्वयो न भवति, सर्गादौ लोकाभावात् । अतो दृष्टान्त एवान्वयः । तत्र, 'लोक्यतेऽनेनेति लोकः शब्दः ; तस्मिन् । शब्दप्रमाणावगतदेवादिवदिति यावत्' इति भामत्यर्थः क्लिष्टः । अतोऽर्थान्तरमाह स्वेस्वेलोके इति । अयं भावः—तीर्थकरैः सर्गारम्भे कार्याणामदृष्टमात्रकारितत्वम्, सृष्टिमध्ये तु उपकरणसंमेलनाधीनत्वं स्वीकृतम् । तत्र लोके सृष्टिमध्येऽपि यदि उपकरणनिरपेक्षत्वमिष्यते, सर्गादौ तत् कुतो नेति ज्ञापनाय लोक इति पदमिति । नन्वतिप्रसिद्धो दृष्टान्तः प्रागुक्तः ; तत् किमनेन सूत्रेणेत्यत्राह देवादीनामिति । आदिना मुनिमान्त्रिकादिग्रहणम् । यद्यपि

दानं ब्रह्मणो वेदावगतशक्तेः सुखग्रहणायेति प्रतिपत्तव्यम् ॥ इति उपसंहारदर्शनाधिकरणम् ॥८॥

४४. कृत्स्नप्रसक्त्यधिकरणम् २-१-९ ॥

**कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा । २ । १ । २६ ॥**

(छा. ६ २-१) **"सदेव सोम्येदमग्र आसीत्"** (य. अ. २-८) **"इदं वा अग्रे नैव किञ्चनासीत्"** (ऐत. १-१-१) "आत्मा वा इदमेक एवाग्र आसीत्" **इत्यादिषु कारणावस्थायां** ब्रह्मैकमेव **निरवयवमासीदिति—कारणावस्थायां निरस्तचिदचिद्विभागतया निरवयवं ब्रह्मैवासीदित्युक्तम्। तदविभागमेकं निरवयमेव** ब्रह्म, (छा. ६-२-३) **"बहु स्याम्" इति सङ्कल्प्य आकाशवाय्वादिविभागं ब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञविभागं चाभवदिति चोक्तम्। एवं सति तदेव परं** ब्रह्म **कृत्स्नं कार्यत्वेनोपयुक्तमित्यभ्युपगन्तव्यम्। अथ चिदंशः क्षेत्रज्ञविभागविभक्तः, अचिदंशश्चाऽऽकाशादिविभागविभक्तः इत्युच्यते—तदा, 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्',** 'ब्रह्मैकमेव', **'आत्मैक एव' इत्येवमादयः कारणभूतस्य ब्रह्मणो निरवयवत्ववादिनः शब्दाः** कुप्येयुः बाधिता भवेयुः **। यद्यपि सूक्ष्मचिदचिद्वस्तुशरीरं** ब्रह्म **कारणम्, स्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्यमित्यभ्युपगम्यते—तथापि शरीरांशस्यापि कार्यत्वाभ्युपगमादुक्तदोषो दुर्वारः। तस्य निरवयवस्य बहुभवनं च नोप-**

पूर्वमुपादानस्य निरपेक्षत्वे दृष्टान्त उक्तः; निमित्तस्यापि तथात्वज्ञापनमत्र क्रियत इति सुवचम्-अथापि विशिष्य देवग्रहणादेवमवसीयत इति भावः। ऊर्णनाभिर्हि निरपेक्ष एव स्वशरीरात् तन्तुं सृजति संकल्पमात्रात्; तथेति च भाव्यम्॥ २५ ॥

अथोपादानत्वस्य निमित्तत्वस्य च पृथक्पृथगाक्षेपः क्रमेणाधिकरणद्वयेन। ननु यथा तन्तुनाभः स्वय निरवयवात्मभूतोऽपि स्वशरीरात् नानातन्तुनिर्माणं करोति तथा स्यादित्यत्र, ब्रह्मातिरिक्ताभावे श्रुतीः प्रमाणयति **सदेवेति**। अन्याभावेऽपि तत् सावयवं चेत्-दोषो न स्यात्; तन्नेति उपात्तवाक्यगतैकपदमादायैवाह **एकं निरवयव**मिति। अवयवसमुदायातिरिक्तावयव्यभावात् सावयवे एकत्वव्यवहारो गौण इति भावः। नन्वेकशब्दस्य नामरूपविभागरहितमिति ह्यर्थ इति चेत्—निरवयवमित्यर्थवर्णने तत् अर्थसिद्धं भविष्यतीति अयमेव स्वरसोऽर्थ इति हृदयम्। तत्र चिदचित्स्वीकारोऽपि न युक्त इति दर्शयति **निरस्तचिदचिद्विभागतयेति**। एवं प्रतीतमर्थं, 'निष्कलं निष्क्रियं शान्तम्' इत्यादिवचनानि स्थिरीकुर्वन्ति। अतो विशेषणीभूताः अन्यादृशाश्चांशास्तस्य न सन्त्येवेति भावः। **ब्रह्मैकमेव, आत्मैक एवे**ति पदैः, 'ब्रह्म वा इदमग्र आसीदेकमेव' (बृ. ३-४-११), 'आत्मा वा इदमेक एव' (ऐ.) इति श्रुत्यर्थानुवादः। सौत्रस्य **कोप**शब्दस्यार्थं वक्तुं स्वप्रयुक्तस्य कुप्येयुरिति पदस्यार्थं भाषते **बाधिता भवेयुरि**ति। नन्वनादिकर्मानङ्गीकारे सर्गासंभवात् तदावश्यकत्वे तदाधाराणां चितामपि स्वीकार्यतया विलक्षणत्वाधिकरणवर्णितरीत्या अचेतनानामपि शरीरतया स्वीकारो युक्तः। एवञ्चैकपदं विशेषणभूतांशवारकं न भवति; निषेधस्य प्रमाणप्रतिपन्नेतरविषयकत्वादित्येवं सिद्धान्तिशंकायां तत्पक्षेऽप्याह **यद्यपीति**। **दोष इति**।

**पद्यते । कार्यत्वानुपयुक्तांशस्थितिश्च नोपपद्यते । तस्मादसमञ्जसमिवाऽऽभाति । अतो ब्रह्मकारणत्वं नोपपद्यते ॥ २६ ॥**

**इत्याक्षिप्ते समाधत्ते—**

**श्रुतेस्तु शब्दमूलत्वात् । २ । १ । २७ ॥**

**तुशब्द उक्तदोषं व्यावर्तयति । नैवमसामञ्जस्यम्; कुतः? श्रुतेः । श्रुतिस्तावत् निवयवत्वं ब्रह्मणः, ततो विचित्रसर्गं चाह । श्रौतेऽर्थे यथाश्रुति प्रतिपत्तव्यमित्यर्थः । ननु च श्रुतिरपि अग्निना सिञ्चेदितिवत् परस्परान्वयायोग्यमर्थं प्रतिपादयितुं न समर्था; अत आह-शब्दमूलत्वादिति । शब्दैकप्रमाणकत्वेन सकलेतरवस्तुविसजातीयत्वादस्यार्थस्य विचित्रशक्तियोगो न विरुद्ध्यत इति न सामान्यतोदृष्टं साधनं दूषणं वा अर्हति ब्रह्म ॥ २७ ॥**

---

कृत्स्नं कार्यतयोपयुक्तमित्यादिदोष इत्यर्थः । पक्षद्वयेऽपि दोषमन्यमप्याह **तस्येति** । एवमेकशरीरे शरीरिशस्य परिसमाप्तत्वादन्यत्र न ब्रह्म स्यादिति चात्राभिप्रेतम् । बहुत्र वा एकत्र वा ब्रह्मण उपक्षीणत्वात्, 'कारणं तु ध्येयः' इत्यादि गतमित्याशयेनाह **कार्यत्वानुपयुक्तेति** । कार्यध्यानं तु न विधेयम्; सिद्धत्वात्, कारणध्यानं न कार्यम्; तस्याभावात् प्राप्यत्वायोगादिति । ननु विशिष्टवेषेण कार्यकारणभावे कार्यगतब्रह्मांशस्योपास्यत्वं प्राप्यत्वञ्चास्तु, प्रागगृहीतत्वात् । तत्राह **असमञ्जसमिवेति** । एकस्मिन् कार्ये उपक्षयात कार्यान्तरे तदभावात् विशिष्टवेषेण कार्यकारणभाव एव सर्वत्र दुर्वचः । क्वचित् विशेणमात्रस्य कारणत्वे च सर्वत्रैव तथेति किं ब्रह्मणः कारणत्वेन । तन्न तत् कारणं वा सर्वशरीरि वा भवितुमर्हतीति ॥ २६ ॥

ननु तर्कपराहतस्य श्रुत्यर्थत्वं न भवतीत्येव हि पादेऽत्र विचार्यते । अत उद्भावितस्तर्को वा दूषणीयः, श्रुत्यर्थो वाऽन्यः स्वीकरणीयः; न तु निरवयवमेव ब्रह्म बहुरूपेण भूत्वा स्वरूपेण प्राप्यतयाऽप्यस्तीति व्याहतोऽर्थो वाच्यः । न ह्यग्निना सिञ्चेदित्याप्तवाक्यस्य कश्चित् यथाश्रुतार्थं स्वीकुर्यात् । अतः श्रुतेरिति अनिश्चितार्थकश्रुतिपुरस्करणं न युक्तमिति प्रश्ने, **शब्दमूलत्वादिति** पदमवतीर्णमिति दर्शयति **ननुचेति** । **शब्दैकेति** । प्रमाणान्तरप्रतीतमर्थमनूद्य तत्र चेत् कश्चिद्विशेषः श्रुत्या बोध्येत, तदा उपजीव्यप्रमाणविरुद्धार्थबोधनायोगात् अन्यथा नीयेत । ब्रह्म तु श्रुत्येकसमधिगम्यम् । येन प्रमाणेन यत् यथाऽवगम्यते, तत् तथैव स्वीकर्तव्यम् । अत इतरवस्तुवैजात्यमत्र प्रतीयमानं न तर्केण बाधितुं शक्यते । किं वस्तुग्रहणानन्तरं तर्केण बाधः, पूर्वं वा । नाद्यः, तर्कस्यापि स्वोपजीव्यप्रमाणविरोधेन प्रवृत्त्ययोगात् । नान्त्यः, श्रुतिमन्तरा प्रथमं तस्य तर्काविषयत्वादिति । ननु तर्हि मिथोविरुद्धौ भावाभावौ ब्रह्मणि सर्वविधावपि न निवार्येयाताम् । तथाचाज्ञत्वसर्वज्ञत्व-नित्यत्वानित्यत्व-अणुत्वमहत्त्व-दुःखित्वानन्दमयत्वादिहेयाहेयसर्वास्पदं तद्भवेदिति कृतं शारीरकविचारविस्तरेण; यथाश्रुति सर्वस्य सुस्वीकरत्वात् इत्यत्राह न **सामान्यतोदृष्टमित्यादि** । **सामान्यतः** सजातीये इत्यर्थः । सजातीये दृष्टं यत् अनभिमतार्थकल्पनमनभिमतार्थनिषेधनं वा, तत् विजातीये वस्तुनि न भवतीति वाक्यार्थः । यद्वा **सामान्यतः** साधारणहेतुना साधनं दूषणञ्च यत् अन्यत्र लौकिके दृष्टम्, तत् अलौकिके न भवतीति । वस्तुतस्तु

आत्मनि चैवं विचित्राश्च हि । २ । १ । २८ ॥

**किंच**—एवं वस्त्वन्तरसंबन्धिनो धर्मस्य वस्त्वन्तरे चारोपणे सति, अचेतने घटादौ दृष्टा धर्माः तद्विसजातीये चेतने नित्ये आत्मन्यपि प्रसज्यन्ते । तदप्रसक्तिश्च भावस्वभाववैचित्र्यादित्याह-विचित्राश्च हि-इति ; यथा अग्निजलादीनामन्योन्यविसजातीयानामौष्ण्यादिशक्तयश्च विसजातीया दृश्यन्ते, तद्वत् लोकदृष्टविसजातीये परे ब्रह्मणि तत्रतत्रादृष्टाः सहस्रशः शक्तयः सन्तीति न किञ्चिदनुपपन्नम् । यथोक्तं भगवता पराशरेण—(वि. पु. १-३-१)

---

**साधनं** साधकहेतुं **दूषणं** दूषकहेतुञ्च सामान्यतोदृष्टानुमानरूपं नार्हति ब्रह्मेत्यर्थः । सामान्यव्याप्तिबलेन प्रमाणिकबाधो न युक्त इति यावत । लिङ्गं द्विविधं विशेषतोदृष्टं सामान्यतोदृष्टञ्च । तदुक्तमिह शास्त्रयोनित्वाधिकरणे । तत्र द्वितीयं स्पर्शादिः किञ्चिदाश्रितः गुणत्वात् इति स्पर्शशब्दादिना वाय्वाकाशाद्यनुमानरूपमुक्तं **वैशेषिकदर्शने** । एतदुक्तं भवति—तद्वत्ताबुद्धौ तदभावनिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वात् तादृशधर्मविषये विरोधोऽवश्यमेव स्वीकर्तव्यः । अतो ब्रह्मणि न सर्वज्ञत्वादिविरुद्धानामज्ञत्वादीनां प्रसक्तिः । अत्र तु निरवयवत्वेन साकं बहुभवनादेर्विरोध एव नास्ति । कथमिति चेत्—यथा अग्नेः पदार्थत्वेऽपि नोष्णत्वभङ्गः, तद्वत् । अग्नेरुष्णत्वे प्रत्यक्ष्यमाणे कश्चिदाह, 'अग्निरनुष्णः पदार्थत्वात् । अनग्नौ सर्वत्र व्याप्तिरभग्नैव लक्ष्यते । तत् कथं पदार्थत्वानुष्णत्वविरुद्धमुष्णत्वम्' इति । तत्र कः समाधिः ? अग्नावुष्णत्वस्य पदार्थत्वस्य च प्रमाणप्रमितत्वात् अनुष्णत्वव्याप्यत्वं पदार्थत्वे भग्नं मन्तव्यम् । अतः पदार्थत्वज्ञानं न तदभावव्याप्यवत्ताज्ञानमित्येव । तद्वदेवेह सावयवत्वव्याप्यत्वं बहुभावित्वादौ भग्नं मन्तव्यमिति । ततः सावयवत्वासिद्ध्या न निरवयवत्वविरोध इति ॥ २७ ॥

ईदृशहेतौ सावयवत्वव्याप्तिभङ्गः सर्वसंमतः, अन्यथा सामान्यतोदृष्टेनानुमानेनानिष्टापादने सर्वत्र पदार्थे एवमापत्तिश्चेति दर्शयितुमुपरि सूत्रम् **आत्मनी**त्यादि । निरवयवो जीवात्मेति सर्वसंप्रतिपन्नम् । सोऽणुर्वा भवतु विभुर्वा । तस्य देहेन्द्रियमनःप्राणसंघातनिविष्टस्य एकेन संयोगे सति अन्येन संयोगः कथम्; एकत्रोपक्षीणत्वात् । सौभर्यादिभिरनेकशरीरपरिग्रहश्चात एव न भवति । आत्मा सावयवो द्रव्यत्वादित्येव कुतो नानुमीयते । एवं जडत्वादेरप्यापत्तिः । अतो धर्मिग्राहकप्रमाणविरोधात् अन्यत्र दृष्टरीतिर्नापादनीयेति संमन्तव्यमिति वैजात्यमेवेति भावः । **आत्मनि चैव**मिति भागस्य, कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपोवेति शंकापरिहारः जीवात्मन्यपि **एवं** शब्दमूलत्वतुल्यरीत्या धर्मिग्राहकप्रमाणबलत एव कर्तव्य इत्यर्थो भवितुमर्हति । भाष्ये **एव**मित्यस्य एकधर्मस्यान्यत्रारोपणे सतीत्यर्थः प्रतीयते । तदा आत्मनि च कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपोवेत्यनुषज्य व्याख्येयम् । **तदप्रसक्ति**रिति शब्ददर्शनात् **दीपा**नुसाराच्च आत्मनि उक्तदोषाप्रसक्तिरेवंरीत्यैवेत्यर्थो ज्ञायते । स शब्दोऽध्याहार्य इति **टीको**क्तम् । **सारे** वैजात्ययोग इत्युक्तम् । **एव**मित्यस्यैव वा लोकदृष्टव्याप्तिभङ्गेन विचित्रधर्मयुक्तत्वमित्यर्थः । **विचित्राश्च** हीत्यस्य लोके जडाः पदार्थाश्च विचित्रा हि, तथेत्यर्थः । आत्मन्यायात् अचेतनसर्वपदार्थन्यायाच्च ब्रह्मापि विचित्रमिति विशिष्टार्थः । **विचित्राश्चे**ति चकारस्वरसात् आत्मना सहाचेतनानामपि-

"निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते" इति सामान्यदृष्ट्या परिचोद्य, "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ भवन्ति तपतां श्रेष्ठ! पावकस्य यथोष्णता" इति । श्रुतिश्च, (यजु. अ. २-२-७) "किं स्विद्वनं क उ स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तत् यदध्यतिष्ठत् भुवनानि धारयन् ॥ ब्रह्म वनं ब्रह्म स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद् भुवनानि धारयन्" इति । सामान्यतोदृष्टं चोद्यं सर्ववस्तुविलक्षणे परे ब्रह्मणि नावतरतीत्यर्थः ॥ २८ ॥

इतश्च—

स्वपक्षदोषाच्च । २ । १ २९ ॥

स्वपक्षे-प्रधानादिकारणवादे, लौकिकवस्तुविसजातीयत्वाभावेन प्रधानादेः, लोकदृष्टा दोषाः तत्र भवेयुरिति सकलेतरविलक्षणं ब्रह्मैव कारणमभ्युपगन्तव्यम् । प्रधानं च निरवयवम्; तस्य निरवयवस्य कथमिव महदादिविचित्रजगदारम्भ उपपद्यते? ॥ सत्त्वं रजस्तम इति तस्यावयवा विद्यन्त इति चेत्—तत्रेदं विवेचनीयम् किं सत्त्वरजस्तमसां समूहः प्रधानम्, उत सत्त्वरजस्तमोभिरारब्धं प्रधानम् । अनन्तरे कल्पे प्रधानं कारणमिति स्वाभ्युपगमविरोधः; स्वाभ्युपेतसङ्ख्याविरोधश्च; तेषामपि निरवयवानां कार्यारम्भविरोधश्च । समूहपक्षे च तेषां निरवयवत्वेन प्रदेशभेदमनपेक्ष्य संयुज्यमानानां न स्थूलद्रव्यारम्भकत्व-

समुच्चयः । औचित्यात् विचित्रा इत्यस्य शक्तय इति विशेष्यं न गृहीतम् । **यथोक्त**मिति । **उक्तं** समाहितम् । अस्य विशेष्यं **यथोष्णतेति** इत्यत्र **इति**पदम् । **निर्गुणस्ये**त्यादि जिज्ञासाधिकरणे व्याख्यातम् । **किंस्विदि**त्यादि । लोके निमित्तकारणभूतः तक्षादिरधिष्ठाता कस्मिंश्चिद्देशे उपादानं दार्वादि उपकरणानि च वास्यादीन्यधिष्ठाय रथादि निर्मातीति दृष्टम् । तथा ब्रह्म स्रष्टृ कस्मिन् देशे किमुपादानं कानि चोपकरणान्यधिष्ठाय द्यावापृथिव्यादि निरमादिति प्रश्नः । एवं लोकदृष्टरीत्या सामान्यतोदृष्टहेतुना प्रश्नो न युक्तः; वस्तुवैलक्षण्यादिति वक्तुमेव **ब्रह्म वन**मित्यादि । **मनीषिणो मन-सेत्यनेन** तर्कस्य प्रतितर्केण प्रतिवस्तुवैचित्र्यदर्शनानुसारिणा प्रतिहतिरस्तीति ज्ञाप्यते । **ब्रह्माध्यतिष्ठ**दिति । धारयतः पुंसो ब्रह्मणः ब्रह्माधिष्ठातृत्वं नाम ब्रह्मातिरिक्तोपकरणाधिष्ठानानपेक्षत्वमेव । आत्मेश्वरमितिवत् प्रयोगः ॥ २८ ॥

**प्रधानादीत्यादि**पदेन परमाणुग्रहणम् । **कार्यारम्भे**ति; प्रधानारम्भकत्वेत्यर्थः । तेषां किं संयुज्य प्रधानारम्भकत्वम्, असंयुज्य वा । द्वितीये प्रधानानि त्रीणि स्युः । आद्ये च वक्ष्यमाणो दोषः । ततो महत एव संभवाच्च किमनेन प्रधानेनाजागलस्तनेन । **स्थूले**ति । ननु विभुत्वात् सत्त्वादीनां तदुत्पन्नं स्थूलमेव स्यात । न च सत्त्वाद्यपेक्षया महतः स्थौल्यमिष्यते; किंतु

**सिद्धिः। परमाणुकारणवादेऽपि तथैव अणवो निरंशाः निष्प्रदेशाः प्रदेशभेदमनपेक्ष्य परस्परं संयुज्यमाना अपि न स्थूलकार्यारम्भाय प्रभवेयुः ॥ २९ ॥**

**सर्वोपेता च तद्दर्शनात्। २। १। ३० ॥**

**सकलेतरवस्तुविसजातीया परा देवता सर्वशक्त्युपेता च। तथैव परां देवतां दर्शयन्ति हि श्रुतयः,** (श्वे. ६-७) **"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", तथा,** (छा. ८) **"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः" इति सकलेतरविसजातीयतां परस्या देवतायाः प्रतिपाद्य,** (छा. ८-१-१) **"सत्यकामःसत्यसङ्कल्पः" इति सर्वशक्तियोगं प्रतिपादयन्ति**(न्ती?), **तथा,** (छा. ३-१४-२) **"मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति च ॥ ३० ॥**

---

परिमितत्वमेवेति चेत्—अपरिमितात् अनवयवात् परिमितमेव कथं भवेत्। अधिकपरिमाणत्वरूपस्थूलत्वाभावेऽपि कार्यकारणयोः स्थौल्यसौक्ष्म्ययोरिष्टत्वेन तदेव स्थौल्यं कथं स्यात्; संयोगे वैषम्याभावात्। **परमाण्वि**ति। वक्ष्यत इदं महद्दीर्घाधिकरणे। **निरंशा** इत्यस्य **निष्प्रदेशा** इति विवरणम्। परस्परं संयुज्यमाना अपि न स्थूलारम्भाय प्रभवेयुः, संयोगस्य प्रदेशभेदमपेक्ष्य जातत्वाभावात्; निरवयवतया कार्त्स्न्येनैव सत्त्वादित्यर्थः। इदमुपलक्षणं जातिवादिपक्षे जात्यादेरपि। गोत्वादिजातिर्यद्येकत्रैव गवि कार्त्स्न्येन स्यात्, अन्या गौर्न भवेत्। यद्येकदेशेन, तदा जातेः सावयवत्वापत्तिः। तथा विभूनां निरवयवतया सर्वमूर्तद्रव्यसंयोगोपि न स्यात्। एकत्र संयोगे कृत्स्नोपक्षयादित्यापादनसंभवात् ॥ २९ ॥

निरवयवं प्रधानं न कारणं भवितुमर्हतीति, परमाणूनां प्रदेशभेदमपेक्ष्य संयोगो न भवतीति च हि सांख्यतार्किकपक्षौ निरस्येते। कथं तर्हि प्रकृतेः परमाणुभूतानाञ्च जीवानामुपादानब्रह्मविशेषणतेत्यत्राह **सर्वोपेते**ति। न वयं कल्पयामः किञ्चित्; किंतु श्रुतिप्रामाण्यात् स्वीकुर्मः। अतः प्रत्यक्षस्येव शब्दस्यापि दर्शकस्य न तर्कबाध्यतेति॥ 'तदैक्षते'ति सामान्येन सद्रूपेण प्रक्रान्तं ब्रह्म अनुप्रवेशरूपव्याकरणप्रस्तावावसरे, सेयं देवतैक्षतेति देवतापदेन निर्दिशन्ती श्रुतिः देवतात्वात् सर्वशक्तियोगो भवतीति दर्शयतीति सूचयितुं स्त्रीलिङ्गेन निर्देशः। कण्ठोक्तिमप्याह **तद्दर्शना**दिति। प्रकृत्यादिकमपि शक्तिपदवाच्यम्। **तथे**त्यादिभाष्येण विसजातीयत्वांशेऽपि प्रमाणं दर्शितम्। **प्रतिपादयन्ती** इति स्त्रीलिङ्गपाठः स्यात्। प्रागेव तिङन्तप्रयोगात्। **श्रुतय** इति अस्या अपि ग्रहणम्। नन्वेवं निरवयवं विभु ब्रह्म सर्वसंबद्धं कार्यत्वोपयुक्तमनुपयुक्तमपीति वदता किमेकैकत्रापि तत्र कार्त्स्न्येन संबन्ध इष्टः उतैकदेशेनेति चेत्—अत्र तार्किकच्छाययेदं प्रतिवचनं भवति—निरवयववस्तुविषये कृत्स्नैकदेशविकल्प एव नावतरतीति। वस्तुतः, कार्त्स्न्येनेत्यस्य कोऽर्थः, किमन्यत्रासंबध्यमानं सत् अत्रैव संबद्धमिति, उत प्रतिवस्तु पूर्णमिति। नाद्यः, सर्वत्र वर्तमानत्वरूपेण भावेन सहावर्तमानत्वस्य विरोधात्। द्वितीये तु पूर्तिः सर्वप्रदेशावच्छिन्नसंबन्धरूपव्याप्तिर्वा सर्वशक्तियोगो वा। उभयमपि प्रतिवस्तु तस्याक्षतमिति। तदेवं सर्वत्र

**विकरणत्वान्नेति चेत्—तदुक्तम् । २ । १ । ३१ ॥**

**यद्यप्येकमेव ब्रह्म सकलेतरविलक्षणं सर्वशक्ति—तथापि** (श्वे. ६-८) **" न तस्य कार्यं करणं च विद्यते " इति करणविरहिणस्तस्य न कार्यारम्भः संभवतीति चेत्—तत्रोत्तरम्— " शब्दमूलत्वात् ", " विचित्राश्च हि " इत्युक्तम् । शब्दैकप्रमाणकं सकलेतरविलक्षणं तत्तत्करणविरहेणापि तत्तत्कार्यसमर्थमित्यर्थः । तथाच श्रुतिः**—(श्वे. ३-१९) **" पश्यत्यचक्षुः स शृणोत्यकर्णः अपाणिपादो जवनो ग्रहीता " इत्येवमाद्या ॥** इति कृत्स्नप्रसक्त्यधिकरणम् ॥**३१**॥

४५. प्रयोजनवत्त्वाधिकरणम् २-१-१० ॥

**न प्रयोजनवत्त्वात् । २ । १ । ३२ ॥**

**यद्यपीश्वरः प्राक्सृष्टेरेक एव सन् सकलेतरविलक्षणत्वेन सर्वार्थशक्तियुक्तः स्वयमेव विचित्रं जगत् स्रष्टुं शक्नोति—तथापीश्वरकारणत्वं न संभवति, प्रयोजनवत्त्वात् विचित्रसृष्टेः, ईश्वरस्य च प्रयोजनाभावात् । बुद्धिपूर्वकारिणामारम्भे द्विविधं हि प्रयोजनम् , स्वार्थः परार्थो वा । न हि परस्य ब्रह्मणः स्वभावत एवावाप्तसमस्तकामस्य जगत्सर्गेण किंचन प्रयोजनमनवाप्तमवाप्यते । नापि परार्थः, अवाप्तकामस्य परार्थता हि परानुग्रहेण भवति ; न चेदृशगर्भजन्मजरामरणनरकादिनानाविधानन्तदुःखबहुलं जगत् करुणावान्** (णया) **सृजति ; प्रत्युत**

---

सर्वशक्तियुक्तमिदं ब्रह्म । सूत्रे **चकारेण** पूर्वोक्तवैजात्यसमुच्चयः ॥ ३० ॥

नन्वस्य संकल्पक्रियादिकं स्वाभाविकं नित्यमनित्यं वा । आद्ये सर्वदैव सर्वसृष्ट्यापत्तिः । अन्त्ये तस्य करणकलेबरसापेक्षत्वात् तद्रहिते तन्न भवेदित्याशंक्य परिहर्तुं **विकरणत्वादि**ति सूत्रम् । उपसंहाराधिकरणोक्तरीत्या उपकरणानपेक्षत्वेऽपि कर्तुः करणाद्यपेक्षा ध्रुवेति प्रष्टुराशयः । **करणे**ति शरीरस्याप्युपलक्षणम् , 'न तस्य कार्यं करणं' इति श्रुतावुभयस्यापि निषेधात् । ननु भारूपः सर्वगन्धः सर्वरस इति प्रागुक्तम् ॥ सत्यम् । तदैक्षत, तेज ऐक्षतेत्येवं यदवच्छेदेन संकल्पकर्तृत्वमुक्तम् , तदवच्छेदेन तद्रूपता हि नास्त्येवेति । उत्तरयति **तथापी**ति । सूत्रे **तदुक्त**मित्यस्य **तत्** कार्यारम्भस्य संभवनमुक्तमित्यर्थः । जवन इति । कथं पादाभावे जवनता पाण्यभावे च ग्रहीतृतेति चेत्—जवनत्वं कालविलम्बमन्तरा अपेक्षितदेशसंबन्धित्वम् , ग्रहीतृत्वमपि तद्वस्तुसंबन्धः । विभुत्वात् परमात्मनः सर्वदैव तदस्तीति तात्पर्यम् । यद्यपि पाणिपादरूपाहङ्कारिकेन्द्रियाभावेऽपि देहावयवविशेषरूपपाणिपादवत्त्वैव जवनो ग्रहीता च भवति इत्यर्थो वक्तुं शक्यते—अथापि उपात्तश्रुतौ कार्यपदेन कायस्यापि निषिद्धतया प्रकृतितेजःप्रभृत्यवच्छेदेन कायाभावस्यैव प्रामाणिकतया कायमनभ्युपगम्यैव समाधानं वक्तव्यम् । अतः पूर्वोक्त एव पन्थाः ॥ ३१ ॥

एवं तावत् विरुद्धवदवभातानामपि विजातीये ब्रह्मण्यविरोध उपपादितः । एवमपि भावाभावयोर्मिथोविरोधस्य सर्वलोकदृष्टत्वात् ब्रह्मणो निमित्तकारणत्वं न भवतीत्याशंकायामुपरितनमधिकरणम् । अवाप्तसमस्तकामं **ब्रह्मे**ति सिद्धान्तिसंमतम् । कर्तृसामान्यस्य क्रियासाध्यप्रयोजनवत्त्वात् अवाप्ताशेषकामत्वसाध्यप्रयोजनवत्त्वयोर्भावाभावरूपतया विरोधः । अवाप्तकामश्चेदम् । अतो न कारणमिति शंकाप्रकारः ।

सुखैकतानमेव जनयेत् जगत् करुणया सृजन् । अतः प्रयोजनाभावाद् ब्रह्मणः कारणत्वं नोपपद्यत इति ॥ ३२ ॥

एवं प्राप्ते प्रचक्ष्महे—

लोकवत्तु लीलाकैवल्यम् । २ । १ । ३३ ॥

अवाप्तसमस्तकामस्य परिपूर्णस्य स्वसङ्कल्पविकार्यविविधविचित्रचिदचिन्मिश्रजगत्सर्गे लीलैव केवला प्रयोजनम् । लोकवत् । यथा लोके सप्तद्वीपामेव मेदिनीमधितिष्ठतः संपूर्णशौर्यवीर्यपराक्रमस्यापि महाराजस्य केवललीलैकप्रयोजनाः कन्तुकाद्यारम्भा दृश्यन्ते, तथैव परस्यापि ब्रह्मणः स्वसङ्कल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादेर्लीलैव प्रयोजनमिति निरवद्यम् ॥ ३३ ॥

यद्यपि परमपुरुषस्य सकलेतरचिदचिद्वस्तुविलक्षणस्याचिन्त्यशक्तियोगात्, प्राक्सृष्टेरेकस्य निरवयवस्यापि विचित्रचिदचिन्मिश्रजगत्सृष्टिः संभाव्येत—तथापि देवतिर्यङ्मनुष्यस्थावरात्मनोत्कृष्टमध्यमापकृष्टसृष्ट्या पक्षपातः प्रसज्येत ; अतिघोरदुःखयोगकरणात् नैर्घृण्यं चावर्जनीयमिति ॥ तत्रोत्तरम्—

वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति । २ । १ । ३४ ॥

न सापेक्षत्वादिति । न प्रसज्येयातां वैषम्यनैर्घृण्ये ; कुतः ? सापेक्षत्वात्—सृज्यमानदेवादिक्षेत्रज्ञकर्मसापेक्षत्वात् विषमसृष्टेः । देवादीनां क्षेत्रज्ञानां देवादिशरीरयोगं तत्तत्कर्मसापेक्षं दर्शयन्ति हि श्रुतिस्मृतयः । (बृ. ६-४-५) "साधुकारी साधुर्भवति ; पापकारी पापो भवति । पुण्यः पुण्येन कर्मणा भवति ; पापः पापेन" । तथा भगवता पराशरेणापि देवादि-

---

सृजन्नित्यन्तेन, "सुखैकतानं जनयेत् जगत् करुणया सृजन्" इति सिद्धिग्रन्थसारणम् । न प्रयोजनवत्त्वात् । लोके कर्तॄणां प्रयोजनवत्त्वादस्य तदभावात् न स्रष्टृत्वमिति पूर्वपक्षः॥ लीलाकैवल्यम् । केवलाया भावः कैवल्यम् । लीलायाः कैवल्यम् । केवललीलेति यावत् । लीला हि द्विविधा-'मेदश्छेदकृशोदरम्' इत्याद्युक्तफलविशेषार्थमृगया-पणबन्धद्यूतादिरूपा, फलानपेक्षकन्तुकविहारादिरूपा च । तत्र प्रथमव्यावृत्त्यर्थं केवलेति ॥ ननु द्वितीयलीलायामपि रसः कश्चिद् भवत्येव॥ सत्यमस्ति॥ कथं तर्ह्यवाप्तकामतेति चेत्-अवाप्तकामत्वं नाम अपेक्षितफलसाधनसामग्रीसंपन्नत्वम्, स्वेच्छामात्रेण सर्वसंपादनसामर्थ्यम् । न तस्य साध्येन फलेन विरोधः । अथापि लीलातिरिक्तं फलं तेन नापेक्ष्यते । ननु प्रबलप्रयाससाध्यस्य सृष्ट्यादेः कथं लीलात्वम् । तत्र ; राजकर्तृककन्तुकविहारादिवदीषत्प्रयासोऽपि हि नास्ति ; संकल्पमात्राधीनत्वस्योक्तत्वात् । तदाह स्वसंकल्पमात्रेति । लीलैव प्रयोजनमिति । लीलाया एव भोग्यत्वात् अनुकूलवस्तुविषयकानुभवातिरिक्तस्यानन्दस्याभावात् तदेव प्रयोजनमिति ॥ ३३ ॥

ननु प्राणिद्यूतादिकं सर्वं विचित्रवस्तुसंघटनसापेक्षम् । तदयं लीलायै ब्रह्मादिस्तम्बपर्यन्तविषमसृष्टिविधायी दुःखोत्पादनात् निर्घृणः सुखेऽपि तारतम्यकल्पनाद् विषमश्च भवेत् । न चेदृश ईश्वरस्त्वयेष्यते । अतोऽसौ न कारणमित्यत्र वैषम्येति सूत्रम् ।

वैचित्र्यहेतुः सृज्या[ज्यमाना]नां क्षेत्रज्ञानां प्राचीनकर्मशक्तिरेवेत्युक्तम्, (वि. पु. १-४-५१, ५२) "निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि। प्रधानकारणीभूताः यतो वै सृज्यशक्तयः॥ निमित्तमात्रं मुक्त्वैव नान्यत् किंचिदपेक्षते। नीयते तपतां श्रेष्ठ! स्वशक्त्या वस्तु वस्तुताम्" इति। स्वशक्त्या स्वकर्मणैव देवादिवस्तुताप्राप्तिरिति॥ ३४॥

न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च। २। १। ३५॥

प्राक् सृष्टेः क्षेत्रज्ञा नाम न सन्ति; कुतः? अविभागश्रवणात्, (छा.६-२-१) "सदेव सोम्येदमग्र आसीत्" इति। अतस्तदानीं तदभावात् तत्कर्म न विद्यते; कथं तदपेक्षं सृष्टिवैषम्यमित्युच्यत इति चेत्—न; अनादित्वात् क्षेत्रज्ञानां तत्कर्मप्रवाहाणां च। तदनादित्वेऽप्यविभाग उपपद्यते च; यतस्तत् क्षेत्रज्ञवस्तु परित्यक्तनामरूपं ब्रह्मशरीरतयाऽपि पृथग्व्यपदेशानर्हमतिसूक्ष्मम्। तथाऽनभ्युपगमे अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च। उपलभ्यते च तेषामनादित्वम्—(कठ. १-२-१८) "न जायते म्रियते वा विपश्चित्" इति; सृष्टिप्रवाहानादित्वं च, (तै- नारा १-१४) "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इत्यादौ। (बृ. ३-४-७) "तद्धेदं तर्ह्यव्याकृतमासीत्। तन्नामरूपाभ्यां व्याक्रियत" इति नामरूपव्याकरणमात्रश्रवणात् क्षेत्रज्ञानां स्वरूपानादित्वं सिद्धम्। स्मृतावपि, (गी. १३-१६) "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इति॥ अतः सर्वविलक्षणत्वात्, सर्वशक्तित्वात्, लीलैकप्रयोजनत्वात्, क्षेत्रज्ञकर्मानुगुण्येन विचित्रसृष्टियोगाद् ब्रह्मैव जगत्कारणम्॥ ३५॥

सर्वधर्मोपपत्तेश्च। २। १। ३६॥

प्रधानपरमाण्वादीनां कारणत्वे यद्धर्मवैकल्यमुक्तं वक्ष्यमाणं च—तस्य सर्वस्य धर्मजातस्य कारणत्वोपपादिनो ब्रह्मण्युपपत्तेश्च ब्रह्मैव जगत्कारणमिति स्थितम्॥ ६३॥

इति प्रयोजनवत्त्वाधिकरणम्॥ १०॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये द्वितीयस्याध्यायस्य प्रथमः पादः॥ १॥

---

**निमित्तमात्रम्**—अप्रधानकारणमेव। कार्यगतवैषम्यांशाहेतुत्वात् सर्वसाधारणत्वाच्चाप्रधानता। व्रीहियवाद्यङ्कुरवैषम्ये हि बीजशक्तिरेव हेतुः; सलिलं तु साधारणम्। तस्य तस्य तत्तच्छक्त्याधायकत्वान्निरूपं प्राधान्यं तु परमात्मनोऽस्त्येव। तत्र अव्यवस्थाविरहान्न वैषम्यावकाशः॥ ३४॥

उपादानत्वनिमित्तत्वाक्षेपपरिहारार्थानेकाधिकरणार्थसंग्रहेण निगमयति **अत** इति। अनेनोत्तरसूत्रं न प्रकृताधिकरणमात्रशेषम्; किंतु सर्वशेषमिति ज्ञाप्यते॥ ३५॥

अस्य पादस्य परमतदूषणार्थत्वाभावात् स्वमतानुपपन्नत्वशंकापरिहाररूपत्वात् **सर्वधर्मोपपत्ते**रित्युक्तम्। धर्माणां शब्दमूलमेव स्थापनात् तर्कमूलत्वाभावादुपपन्नत्वम्॥ ३६॥

इति श्रीवात्स्य-सच्चक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु भाष्यार्थदर्पणे द्वितीयप्रथमः।

श्रीमते रामानुजाय नमः। शुभमस्तु॥

## श्रीभगवद्रामानुजविरचिते (श्रीभाष्ये)

# श्री शा री र क मी मां सा भा ष्ये

द्वितीयाध्याये द्वितीयः पादः

४६. रचनानुपपत्त्यधिकरणम् २-२-१ ॥

**रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च । २ । २ । १ ॥**

**उक्तं जगज्जन्मादिकारणं परं ब्रह्मेति । तत्र परैरुद्भाविताश्च दोषाः परिहृताः । इदानीं स्वपक्षरक्षणाय परपक्षाः प्रतिक्षिप्यन्ते । इतरथा कस्यचिन्मन्दधियः तेषां पक्षाणां युक्त्याभासमूलतामजानतः प्रामाणिकत्वशङ्कया वैदिकपक्षे किंचित् श्रद्धावैकल्यं जायेतापि । अतः परपक्षप्रतिक्षेपायानन्तरः पादः प्रवर्तते ।**

**तत्र प्रथमं तावत् कापिलमतं निरस्यते; वैदिकानुमतसत्कार्यवादाद्यर्थसंग्रहेणैतस्य सत्पक्षनिक्षेपसंभावनाभ्रमहेतुत्वातिरेकात् ।** (शारी. १-१-५) **"ईक्षतेर्नाशब्दम्"** इत्या-

---

श्रीः ॥ श्रीमते रामानुजाय नमः ॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

### भाष्यार्थदर्पणे द्वितीयद्वितीयः

उपनिषद्वाक्यविशेषविषयकत्वात् प्रथमाध्यायस्य संगतिः स्पष्टा ; तदाह **उक्त**मिति । द्वितीयप्रथमस्य विशिष्य किञ्चिद्वाक्यविषयकत्वाभावेपि उपबृंहणाविरोधेन तर्काविरोधेन च वेदान्तवाक्यानामर्थो वर्णनीय इति शंकापरिहाररूपत्वात् सर्ववाक्यविषयकत्वेन संभवति शास्त्रसंगतिः ; तदाह **तत्र परै**रिति । अस्य तु द्वितीयद्वितीयस्य केवलं परपक्षप्रतिक्षेपरूपत्वात् वेदान्तवाक्यार्थविचारात्मकत्वाभावान्नैव शास्त्रसंगतिरित्याशंकायां निर्णीतवेदान्तार्थविषयकश्रद्धासंधुक्षणार्थमेव परपक्षप्रतिक्षेपात् तच्छेषतयैव संगतिरिति दर्शयति **इदानी**मित्यादिना । परमतखण्डनप्रकारस्य विशिष्य परिज्ञानाभावेऽपि यस्तावत् अनादिनिधनशास्त्रविपरीतार्थकत्वादेवान्यशास्त्रेष्वप्रामाण्यमातिष्ठते, यश्च प्रत्यक्षविरोध इव निर्णीतार्थवेदविरोधे परतर्काणामप्रतिष्ठितत्वमेवाध्यवस्यति, न तस्य श्रद्धावैकल्यप्रसक्तिरिति **कस्यचि**दित्युक्तम् । **जायेतापी**ति । वेदान्तानां प्राङ्निर्णीत एवार्थ इत्यत्र न विवादः ; अथापि शब्दवत् अनुमानस्यापि प्रमाणत्वात् यावदनुमानेषु परोक्तेषु दोषा नोपलभ्यन्ते, तावत् तेषां तुल्यबलत्वाभिमत्या परोक्षार्थविषये पराभ्युदः कथं सर्वथोपेक्ष्यः स्यादिति मतिर्भवति । तेन परपक्षप्रमाणानां बाधकत्वाभावेऽपि सत्प्रतिपक्षत्वं समायातीति भावः । **संभावनाभ्रमे**ति । सत्पक्षनिक्षेपः स्यादित्युक्तद्वैतत्कोटिकः संशयः संभावना ; सत्पक्ष एव भवतीति विपरीतनिर्णयो भ्रमः ; तदुभयेत्यर्थः । **अतिरेकात्**—अतिशयात् । नन्वीक्षत्यधिकरणकारणत्वाधिकरणप्रकृत्यधिकरणादौ परास्तस्य पुनः परासारम्भे पौनरुक्त्यमित्यत्राह **ईक्षते**रिति । वेदान्तवाक्यानां सांख्यतत्त्वप्रतिपादकत्वासंभवनिरूपणैदम्पर्यं तेषाम् । तन्मतासौष्ठवमत्रैव वक्तव्यमिति भावः । नायं पादः परैः सह कलहेन परपक्षप्रतिक्षेपार्थं प्रवृत्तः । अतो वीतरागस्य किं परैः सह कलहेनेत्याक्षेपस्य नावसरः । वीतरागोऽपि, परैः प्रविश्य प्रत्यवस्थाने क्रियमाणे स्वपक्षगरिमज्ञापनाय तत्र **दोषोद्भावनेन**

दिभिः वैदिकवाक्यानामतत्परत्वमात्रमुक्तम्; अत्रैव तत्पक्षस्वरूपप्रतिक्षेपः क्रियत इति न पौनरुक्त्याशङ्का ॥ एषा[हि]साङ्ख्यानां दर्शनस्थितिः—(सांख्यका. ३)

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"

इति तत्त्वसंग्रहः। मूलप्रकृतिर्नाम सुखदुःखमोहात्मकानि लाघवप्रकाश-चलनोपष्टम्भन-गौरवावरणकार्याणि अत्यन्तातीन्द्रियाणि कार्यैकनिरूपणविवेकानि अन्यूनानतिरेकाणि समतामुपेतानि सत्त्वरजस्तमांसि द्रव्याणि। सा च सत्त्वरजस्तमसां साम्यरूपा प्रकृतिरेका स्वयमचेतना अनेकचेतनभोगापवर्गार्था नित्या सर्वगता सततविक्रिया न कस्यचिद्विकृतिः; अपितु

---

तत्तुल्यबलत्वबुद्धिनिरसनं कर्तुमर्हति; न तु जोषं स्थातुम्। इह तु मुमुक्षून् प्रकृतशास्त्राधिकृतान् उद्दिश्यैव तन्मतदोषव्युत्पादनमिति।

अत्र विशिष्य संशयाद्यनुक्तावपि अधिकरणगत्या सर्वमस्तीति मन्तव्यम्। औपनिषदःकारणवादः एकान्ततः श्रद्धेयो न वेत्येतत्पादानुगतो विशयः। तत्र प्रथमाधिकरणे, सांख्यमतमप्युपपन्नं न वेति विशयः। ब्रह्मणः शास्त्रयोनित्वस्योक्ततया युक्त्या तत्साधनमुखेन सांख्यमतस्य निरासासंभवेऽपि तर्कमात्रेण तत्त्वे निर्णीयमाने सांख्यमतं स्थास्यत्येव, तत्र तत्त्वानां तर्कत एव स्थापनादिति पूर्वपक्षः। अस्य च तन्मतयथावन्निरूपणसापेक्षत्वात् तन्मतप्रक्रियामनुवदति। **एषे**ति। **अविकृतिः**—न विकृतिः। **प्रकृतिविकृतयः** प्रकृतयः सत्यो विकृतयः। **षोडशकः** षोडसंख्यापरिमितो गणः। तुशब्दपाठस्तत्रसंमतः। **विकारस्तु** केवलविकृतिरिति। **चशब्दश्चेत्**, सोऽपि त्वर्थे अवधारण एव। **पुरुषः** जीवः। जात्येकवचनम्। **इति तत्त्वसंग्रहः**—इति कारिकया सांख्यग्रन्थे तत्त्वानां सर्वेषां संक्षिप्य कथनमित्यर्थः। कारिकार्थं विशदयति **मूले**ति। लाघवप्रकाशौ सत्त्वकार्यौ। चलनोपष्टम्भने **रजसः**; शिष्टे तमसः। **लाघवं** गुरुत्वप्रत्यनीको धर्मः। **प्रकाशः** तत्त्वज्ञानम्। **उपष्टम्भनम्**-प्रवर्तनम्। **गौरवं** पतनहेतुर्गुरुत्वम्। **आवरणम**प्रकाशः। **कार्यैके**ति पदस्य कार्यमात्रेण निरूपणं यस्य, स विवेको मिथोभेदो येषां तानीत्यर्थः। सुखदुःखमोहानां मिथोभिन्नत्वमानुभविकम्। सर्वं वस्तु एतत्त्रयात्मकम्। यथैका युवतिः पत्युः सुखाय, सपत्न्याः दुःखाय, कामिनोऽन्यस्य मोहाय च कल्पत इति सा त्रयात्मिका। एषामेव सूक्ष्मतया मूलकारणे सत्त्वरजस्तमांसीति व्यवहारः। सुखदुःखादिवत् लाघवप्रकाशादेर्विरोधाभावात् तत्कार्यभेदेन कारणभेदासिद्ध्या त्रीण्येवेष्टानीति। **अन्यूने**ति तत्पुरुषः; **अनतिरेके**ति बहुव्रीहिः। एतावत्पर्यन्तं कार्यकारणसाधारणम्। **समतामुपेतानी**ति परममूलस्य विशेषः। तदेतत् विस्पष्टयति **साम्यावस्था प्रकृति**रिति। त्रिगुणमिति तैर्व्यवहारे कृतेऽपि सत्त्वादेर्द्रव्यत्वं प्रकृत्यनतिरिक्तत्वञ्च तद्दिष्टम्। 'संघातपरार्थत्वात्' इति त्रयाणां संघातः प्रकृतिरिति हि मन्यते। पश्चाच्चैतन्यारोपो वक्ष्यते; अतः **स्वयम**चेतनेत्युक्तम्। **सर्वगता** सर्वव्यापिनी। **सततविक्रिया** सर्वदा परिणामिनी—प्रलये प्रतिक्षणं समपरिणामा, सर्गे विषमपरिणामा। प्रकृतिविकृतय इत्यत्र विकृतित्वं

**परमकारणमेव । महदाद्याः तद्विकृतयोऽन्येषां च प्रकृतयः सप्त—महान् अहङ्कारः शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रम् इति । तत्राहङ्कारस्त्रिधा (विधः)—वैकारिकः तैजसो भूतादिश्च, क्रमात् सात्त्विको राजसस्तामसश्च । तत्र वैकारिकः सात्त्विक इन्द्रियादिः ; भूतादिस्तामसो महाभूतहेतुभूततन्मात्रहेतुः ; तैजसो राजसस्तूभयोरनुग्राहकः । आकाशादीनि पञ्च महाभूतानि, श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि, वागादीनि पञ्च कर्मेन्द्रियाणि, मन इति केवलविकाराः षोडश । पुरुषस्तु निष्परिणामत्वेन न कस्यचित् प्रकृतिः, न च कस्यचिद्विकृतिः । तत एव निर्धर्मकः चैतन्यमात्रवपुर्नित्यो निष्क्रियः सर्वगतः प्रतिशरीरं भिन्नश्च । निर्विकारत्वात् निष्क्रियत्वाच्च तस्य कर्तृत्वं भोक्तृत्वं च न संभवति ।**

**एवम्भूतेऽपि तत्त्वे मूढाः प्रकृतिपुरुषसंनिधिमात्रेण पुरुषस्य चैतन्यं प्रकृतावध्यस्य, प्रकृतेश्च कर्तृत्वम्, स्फटिकमणाविव जपाकुसुमस्यारुणिमानम्, पुरुषेऽध्यस्य, 'अहं कर्ता भोक्ता' इति मन्यन्ते । एवमज्ञानाद्भोगः, तत्त्वज्ञानाच्चापवर्गः ।**

**तदेतत् प्रत्यक्षानुमानागमैः साधयन्ति । तत्र प्रत्यक्षसिद्धेषु पदार्थेषु नातीव विवादपदमस्ति । आगमोऽपि कपिलादिसर्वज्ञज्ञानमूल इति सोऽपि प्रथमे काण्डे प्रमाणलक्षणे निरस्तप्रायः । यदिदं प्रधानमेव जगत्कारणमित्यनुमानम्, तन्निरसनेन तन्मतं सर्वं निरस्तं भवतीति तदेव निरस्यते ।**

---

प्राक्, प्रकृतित्वं पश्चादित्याशयेन **तद्विकृतय** इति पूर्वमुक्तम् । **इन्द्रियादिः** एकादशेन्द्रियसाक्षात्कारणम् । **भूतादिः** तन्मात्रद्वारा पञ्चभूतकारणम् । तत्र शब्दतन्मात्रमाकाशकारणम् । वाय्वादीनां तु क्रमेण पूर्वसर्वतन्मात्रविशिष्टोत्तरतन्मात्रकारणकता । **निर्धर्मकः** रागादिविकाररहितः । आत्मगुणानां बुद्धिनिष्ठत्वस्यैव तैः स्वीकारात् । **चैतन्यमात्रवपुः** ज्ञानस्वरूपः, न तु ज्ञाता । **एवम्भूतेपि तत्त्वे**— वस्तुस्थितौ एवंसत्यामपि । **पुरुषस्य चैतन्य**मिति राहोः शिर इतिवत् प्रयोगः । **प्रकृतेः** बुद्ध्यपरपर्यायमहत्तत्त्वरूपेण परिणतायाः प्रकृतेः । अहं कर्ता भोक्तेत्यत्र अहमिति अध्यस्तचैतन्यकाहंकाराभिन्नबुद्धितत्त्वाभेदेनात्मग्रहणम् । तत्राऽऽत्मनि कर्तृत्वभोक्तृत्वयोर्बुद्धिगतयोरारोपेणोपलब्धिः ।

एतन्मतनिरासश्च तत्साधकप्रमाणनिरासेनैव कार्यः । तत्र तदिष्टप्रमाणत्रये तर्कमात्रनिरासे कारणं वक्तुमाह **तदेतदि**ति । प्रकृत्यादितत्त्वजातमित्यर्थः । **आगमैरि**ति । पारिभाषिकनामानि, तत्तदर्थोपासनतत्फलादीनि च बहूनि तदागममन्तरा दुर्ग्रहाणीति । **नातीवे**ति । धर्मधर्मिणोरभेदः; कार्याणामभिव्यक्तिरेव, न पुनः अवस्थाप्राप्तिरित्यादौ विवादोऽस्ति । प्रत्यक्षज्ञानं नाम अन्तःकरणस्येन्द्रियकुल्याद्वारा बहिर्निःसृतस्य यथाविषयं संयोगः इतीदृशमपि दूष्यम् । अथाप्यमुख्यत्वादुपेक्ष्यत इति भावः । **प्रमाणलक्षणे** प्रमाणाध्याये मीमांसायां प्रथमे । **निरस्तप्रायः** । धर्ममीमांसायां धर्मविषयकागममात्रस्य निरसनीयत्वेऽपि श्रुतिप्रतिपादितविरुद्धार्थप्रतिपादकत्वहेतुनैव तन्निरासात् वेदान्तविरुद्धतत्त्वार्थागमविषयेऽपि स न्यायोऽवतरतीत्याशयेन **प्राय**पदम् । ननु प्रसिद्धपरमाणुकारणतर्कनिरस्तत्वादेव प्रधानकारणतर्को न स्थास्यतीति

ते चैवं वर्णयन्ति—कृत्स्नस्य जगत एकमूलत्वमवश्याभ्युपगमनीयम्; अनेकेभ्यः कार्योत्पत्त्यभ्युपगमे कारणानवस्थानात्। तन्तुप्रभृतयो ह्यवयवाः स्वांशभूतैः षड्भिः पार्श्वैः परस्परं संयुज्यमाना अवयविनमुत्पादयन्ति; ते च तन्त्वादयः स्वावयवैस्तथाभूतैरुत्पाद्यन्ते; ते च तथाभूतैः स्वावयवैरिति परमाणुभिरपि स्वकीयैः षड्भिः पार्श्वैः संयुज्यमानैरेव स्वकार्योत्पादनमभ्युपेतव्यम्; अन्यथा प्रथिमानुपपत्तेः। परमाणवोऽप्यंशित्वेन स्वांशैस्तथैवोत्पाद्यन्ते, ते च स्वांशैरिति न क्वचित् कारणव्यवस्थितिः। अतः कारणव्यवस्थासिद्ध्यर्थमेकद्रव्यं विविधविचित्रपरिणामशक्तियुक्तं स्वयमप्रच्युतस्वरूपमेव महदाद्यनन्तावस्थाश्रयः कारणमाश्रयणीयम्। तच्चैकं कारणं गुणत्रयसाम्यरूपं प्रधानमिति।

तत्कल्पने हेतून् उपन्यस्यन्ति—(सांख्य. का. १५-१६)

"भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य॥ कारणमस्त्यव्यक्तम्..." इति।

अयमर्थः—विश्वरूपमेव वैश्वरूप्यम्=विचित्रसंनिवेशं तनुभुवनादि कृत्स्नं जगत्। तच्च जगत् विचित्रसंनिवेशत्वेन कार्यभूतं तत्सरूपाव्यक्तकारणकम्; कुतः? कार्यत्वात्। कार्यस्य हि सर्वस्य तत्सरूपात् कारणविशेषाद्विभागः तस्मिन्नेवाविभागश्च दृश्यते; यथा घटमकुटादेः कार्यस्य तत्सरूपात् मृत्सुवर्णादेः कारणाद्विभागः तस्मिन्नेव चाविभागः। अतो विश्वरूपस्य जगतः तत्सरूपात् प्रधानादुत्पत्तिः तस्मिन्नेव लयश्चेति प्रधानकारणकमेव जगत्॥

---

मतिनिरासाय तदाशयमाह **अनेकेभ्य** इति। वक्ष्यमाणकारिकायां **भेदानां परिमाणा**दित्यस्य परमाणुदूषणपरतयाऽपि व्याख्यानं सुकरमित्याशयेनाप्येवं प्रथममुक्तम्। **पार्श्वैः** एकैकपार्श्वगतैरंशैः। परमाणुप्रभृति सर्वं वस्तु दशदिक्संबन्धि। तत्रैकैकमपि वस्तु अन्येन वस्तुना यदा पार्श्वे संयुज्यते, तदा तद्वस्तुतत्पार्श्वगतदिगंशत्रयेण स्वकीयपार्श्वदिगंशत्रये तस्य संयोगो भवतीति परमाणुद्वयगतांशत्रयद्वयं **षड्भिः पार्श्वै**रित्युच्यत इति ध्येयम्। **अन्यथा** पार्श्वमात्रं विना कार्त्स्न्येन संयोगस्वीकारे। **प्रथिमानुपपत्तेः**। उभयोः सम-रिमाणतया स्थूलता न स्यादिति। **अंशित्वेन** सावयवत्वेन। अपरिणतांशोऽप्यस्तीति ज्ञापयति **स्वयमप्रच्युते**ति। **त्रयसाम्यरूप**मिति। गुणानामंशतः संयोगो न; किंतु विभूनां तेषां कार्त्स्न्येन व्याप्तिरेव। एवम्भूतसाम्यस्यैकत्वात् एकं प्रधानमिति नानुपपन्नमिति भावः। **भेदानां** विशेषाणां गुणवैषम्यरूपविशेषभाजां महदादीनां **परिमाणात्** परिमितत्वात् अव्यापित्वात्। अव्यापिनामनित्यतया आदिकारणत्वायोगात्। **समन्वयात्** घटादौ मृदादेरिव सर्वकार्यानुगतत्वादित्यर्थः। **शक्तितः प्रवृत्तेः**। प्रवृत्तिविषयकशक्तिमत्त्वात्। **कारणे**ति। कारणात् कार्यस्य **विभागात्** आविर्भावात्। **वैश्वरूप्यस्य**। विश्वरूपमेव वैश्वरूप्यम्। तस्य विचित्रसंस्थानकस्य **अविभागात्** लयात्। जगत् उत्पद्यमानत्वात् लीयमानत्वाच्च सकारणकम्। तत्र सर्वानुस्यूतत्वात् गुणत्रयात्मकमेव कारणम्। अननुस्यूतवस्तुनि कार्यस्य कदाचिदनभिव्यक्ततया स्थित्यसंभवादिदमेवोत्पादनशक्तम्। महदादीनां तु परिमितत्वात् तत्कारणमन्यत्

गुणत्रयसाम्यरूपं प्रधानमेव जगत्स्वरूपं कारणम्; सत्त्वरजस्तमोमयसुखदुःखमोहात्मकत्वात् जगतः; यथा मृदात्मनो घटस्य मृद्द्रव्यमेव कारणम् ॥ तदेव हि तदुत्पत्त्याख्यप्रवृत्तिशक्तिमत्; तथा दर्शनात् ॥ अव्यक्तस्य गुणसाम्यरूपस्य देशतः कालतश्चापरिमितस्यैव कारणत्वं भेदानां महदहङ्कारतन्मात्रादीनां परिमितत्वादवगम्यते । महदादीनि च घटादिवत् परिमितानि कृत्स्नजगदुत्पत्तौ न प्रभवन्ति । अतस्त्रिगुणं जगद् गुणत्रयसाम्यरूपप्रधानैककारणमिति निश्चीयते—

अत्रोच्यते—रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च । अनुमीयत इत्यनुमानम्—न भवदुक्तं प्रधानं विचित्रजगद्रचनासमर्थम्, अचेतनत्वे सति तत्स्वभावाभिज्ञानधिष्ठितत्वात्; यदेवम्, तत् तथा; यथा रथप्रासादादिनिर्माणे केवलदार्वादिकम् । दार्वादेरचेतनस्य तज्ज्ञानधिष्ठितस्य कार्यारम्भानुपपत्तेर्दर्शनात्, तज्ज्ञाधिष्ठितस्य कार्यारम्भप्रवृत्तेर्दर्शनाच्च न प्राज्ञानधिष्ठितं प्रधानं कारणमित्युक्तं भवति ॥ चकारादन्वयस्यानैकान्त्यं समुच्चिनोति । न ह्यन्वितं शौक्ल्यगोत्वादि कारणत्वव्याप्तम् ॥ न च वाच्यम्—मा भूदन्वितानामपि शौक्ल्यादिधर्माणां कारणत्वम्; द्रव्यस्य तु हेमादेः कार्येऽन्वितस्य कारणत्वव्याप्तिरस्त्येव; सत्त्वादीन्यपि द्रव्याणि कार्येऽन्वितानि कारणत्वव्याप्तानि—इति; यतः सत्त्वादयो द्रव्यधर्माः, न तु द्रव्यस्वरूपम् । सत्त्वादयो हि पृथिव्यादिद्रव्यगतलघुत्वप्रकाशादिहेतुभूताः तत्स्वभावविशेषा एव; न तु मृद्धिरण्यादिवत् द्रव्यतया कार्यान्विता उपलभ्यन्ते । गुणा इत्येव च सत्त्वादीनां प्रसिद्धिः ॥

---

कल्प्यमानमनवस्थाभयादपरिमितमिष्यत इति श्लोकार्थः । **गुणत्रयसाम्यरूप**मित्यादि **समन्वयादि**त्यस्य व्याख्यानम् । **तदेव ही**त्यादि **शक्तितः प्रवृत्ते**रित्यस्य । कार्यस्य प्रवृत्तिरुत्पत्तिरेव । **तथादर्शना**दिति । न हि दण्डादिकं घटादावननुवृत्तं तदुपादानत्वार्हम् । उपादीयते कार्यं यतः, यत्राभिव्यज्यते तद्ध्युपादानमिति भाव.। सूत्रे **रचना**शब्दस्य चेतनव्यापारे प्रसिद्धस्य प्रयोगः चेतनकर्तव्यस्याचेतनमात्राकार्यत्वद्योतनार्थः। ततः फलितमनुमानमाह **न भव**दिति । **विचित्रजग**दिति प्रकृताभिप्रायेण । कार्योत्पादनासमर्थत्वमेव साध्यं दृष्टानुगुणम् । ननु प्रधानस्यानुमानतोऽसिद्धावत्रानुमाने आश्रयासिद्धिः, सिद्धौ तु जगद्रचनसामर्थ्यविरहस्य साध्यस्य बाध इति चेन्न-यद्यचेतनं प्रधानं तत्स्वभावाभिज्ञानधिष्ठितं स्यात्, तर्हि कार्यनिर्माणासमर्थं स्यादिति तर्कप्रयोगे तात्पर्यात् । अत एव सूत्रे **रचनानुपपत्ते**रित्युक्तम् । अत्र व्यतिरेकमुखेनापि व्याप्यव्यापकभावसिद्धिं दर्शयितुम् एतत्तर्कानुग्राह्यमनुमानं दर्शयितुञ्च सूत्रे **प्रवृत्तेश्चे**त्युक्तम् । जगत् प्राज्ञाधिष्ठितकारणकम् उत्पद्यमानत्वात् घटादिवदिति प्रयोगः । न च तर्ह्यनुमानेनैवेश्वरसिद्ध्यापत्तिः; सांख्यसंमतजीवविलक्षणाभिज्ञानेकचेतनग्रहणेनाप्यनुमानपर्यवसानस्य शास्त्रयोनित्वाधिकरणे उक्तत्वात् । एवं तर्कप्रमाणयोः समुच्चयाय द्वितीयश्चकारः । प्रथमस्तु रचनानुपपत्तिवत् समन्वयानुपपत्तिरप्यस्तीत्यनुक्तततसमुच्चायकः । तदाह **चकारा**दिति । सुखदुःखमोहरूपाणां सत्त्वरजस्तमसां शौक्ल्यादिवत् गुणत्वेन प्रसिद्धानां द्रव्यवत् प्राधान्येनान्वयानुपपत्त्या न तदभिन्नस्य प्रधानस्य कारणता । प्राधान्येनान्वयो हि समन्वयः;

यच्च कारणव्यवस्थासिद्धये जगतः एकमूलत्वमुक्तम्, तदपि सत्त्वादीनामनेकत्वान्नोपपद्यते। अत एव कारणव्यवस्था च न सिद्ध्यति। साम्यावस्थाः सत्त्वादय एव हि प्रधानमिति त्वन्मतम्। अतः कारणबहुत्वादनवस्था तदवस्थैव। न च तेषामपरिमितत्वेन व्यवस्थासिद्धिः; अपरिमितत्वे हि त्रयाणामपि सर्वगतत्वेन न्यूनाधिकभावाभावात् वैषम्यासिद्धेः कार्यारम्भासंभवात् कार्यारम्भायैव परिमितत्वमवश्याश्रयणीयम् ॥ १ ॥

यत्र रथादिषु स्पष्टं चेतनाधिष्ठितत्वं दृष्टम्, तद्व्यतिरिक्तं सर्वं पक्षीकृतमित्याह—

**पयोम्बुवच्चेत् - तत्रापि । २ । २ । २ ॥**

यदुक्तं प्रधानस्य प्राज्ञानधिष्ठितस्य विचित्रजगद्रचनानुपपत्तिरिति—तन्न; यतः पयोऽम्बुवत् प्रवृत्तिरुपपद्यते। पयसस्तावत् दधिभावेन परिणममानस्यानन्यापेक्षस्य आद्यपरिस्पन्दप्रभृतिपरिणामपरम्परा स्वत एवोपपद्यते। यथा च वारिदविमुक्तस्याम्बुन एकरसस्य नारिकेलताल-चूत-कपित्थ-निम्ब-तिन्त्रिण्यादिविचित्ररसरूपेण परिणामप्रवृत्तिः स्वत एव दृश्यते—

---

अन्यथा गोत्वशौक्ल्यादौ व्यभिचारादित्यर्थः। **अतएवे**त्येतद् विवृणोति **साम्यावस्था** इति। तथा च सत्त्वादीनां द्रव्यत्वेऽपि परिमितत्वे सिद्धे, भेदानां परिमाणादिति भवदुक्त्यैव कारणान्तरापेक्षेत्यनवस्थेति भावः। सिद्धान्ते तु सत्त्वादिगुणाश्रयः प्रधानमेकमेव विचित्रपरिणामशक्तमित्यदोषः ॥ १ ॥

जगत्कारणमचेतनं चेतनाधिष्ठानसापेक्षमचेतनत्वादित्यनुमानं पयोम्बुप्रभृतौ व्यभिचरितमिति शंकां परिहर्तुमुपरि सूत्रम्। तदर्थं संगृह्णन्नाह **यत्रे**ति। **पक्षीकृत**मिति। पय.प्रभृतौ व्यभिचारप्रदर्शनं हि साध्याभावनिश्चये सत्येव। स तु न; किंतु तत्रापि संशय एव। अचेतनं सर्वं चेतनसापेक्षमिति व्याप्त्यस्वीकारे रथादेरपि कस्यचित चेतनमन्तरा संभवापत्तिरिति स्थिते, तद्बलात् पयोम्बुप्रभृतावपि जगतीव चेतनाधिष्ठानमनुमेयमेव। व्यभिचारसंशयस्तु तर्केण निरस्यते। जगदिति वा जगत्कारणमिति वा पक्षनिर्देशं विना, विवादास्पदं कार्यमिति वा तादृशकारणमिति वा तत्तदनुमाने पक्षनिर्देशाच्च सर्वस्य पक्षतया न व्यभिचारसंशयस्याप्यवकाश इति भावः। **दधिभावेने**ति। यद्यपि सांख्ये, "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" इति वत्सार्थक्षीरप्रवृत्तावेव चेतनानपेक्षत्वं निदर्शितम्—तथापि विभुनि प्रधाने परिस्पन्दरूपप्रवृत्तेस्तदनिष्टत्वात् कार्यजनकत्वरूपं यत् परिणामित्वम्, तद्रूपप्रवृत्तेरेव वक्तव्यत्वात् द्रव्यात्मककार्योपादानत्वस्य प्रकृतसंदर्भे विचार्यमाणत्वाच्चैवं व्याख्यातम्। न चेदं धीस्थं न भवतीति सुवचम्; उपसंहारदर्शनाधिकरणे क्षीरस्य दधिभावेन परिणामे निरपेक्षत्वस्य सूत्रकृतैवोक्ततया तस्यैवात्र स्मारणसंभवात्। अम्बुविषये तु सांख्यैरेव स्पष्टमुक्तम्, "परिणामतः सलिलवत्" इति। अत एव क्षीरस्य वत्सार्थप्रवृत्तिवत्, जलस्य निम्नदेशस्यन्दनरूप प्रवृत्तेरेव ग्रहणेन व्याख्यानं शाङ्करं नादृतम्। सांख्योक्तस्यैव स्वीकारासंभवात्। दृष्टान्तद्वयेऽन्यतरत्र सांख्योक्तरीतित्यागः मतद्वयेऽपि तुल्यः। तत्र कार्यद्रव्यपरिणामित्वानुगुणार्थवर्णनमस्मत्पक्षे इति विशेषः। **परिणममानस्ये**ति। आत्मनेपदिप्रयोगः शांकरादिबहुसमादृत एव। **परिस्पन्दे**ति; परिणामेत्यर्थः। **स्वत एवोपपद्यते** इति।

**तथा प्रधानस्यापि परिणामस्वभावस्यान्यानधिष्ठितस्यैव प्रतिसर्गावस्थायां सदृशपरिणामेनावस्थितस्य सर्गावस्थायां गुणवैषम्यनिमित्तविचित्रपरिणाम उपपद्यते। यथोक्तम्,** (साङ्ख्य-का. १६) **"परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात्" इति। तदेवमव्यक्तमनन्यापेक्षं प्रवर्तत इति चेत्—अत उत्तरम्,** तत्रापि इति; **यत् क्षीरजलादि दृष्टान्ततया निदर्शितम्, तत्रापि प्राज्ञानधिष्ठाने प्रवृत्तिर्नोपपद्यते। तदपि पूर्वत्र पक्षीकृतमित्यभिप्रायः।** (शारी. २-१-२४) **"उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" इत्यत्र दृष्टपरिकरान्तररहितस्यापि स्वासाधारणपरिणाम उपपद्यत इत्येतावदुक्तम्; न प्राज्ञाधिष्ठितत्वं पराकृतम्;** (बृ. १-७-४) **"योप्सु तिष्ठन्" इत्यादिश्रुतेः॥ २॥**

**इतश्च—**

**व्यतिरेकानवस्थितेश्चानपेक्षत्वात्॥ २। २। ३॥**

**सत्यसङ्कल्पेश्वराधिष्ठानानपेक्षपरिणामित्वे सर्गव्यतिरेकेण प्रतिसर्गावस्थयाऽनवस्थितिप्रसङ्गाच्च न प्राज्ञानधिष्ठितं प्रधानं कारणम्। प्राज्ञाधिष्ठितत्वे तस्य सत्यसङ्कल्पत्वेन सर्गप्रति-**

---

आतश्चनव्यापारसापेक्षत्वात् चेतनः कारणमिति शंकाशमनार्थमिदं वाक्यम्; उपलभ्यत इत्यप्रयोगात्, यथेत्यनारम्भाच्च। अथ तु दृष्टान्ततामाह। **यथा** चेति। **चकारः** पयोदृष्टान्तसमुच्चये। **प्रतिप्रतिगुणाश्रयविशेषात्** प्रतिनियताः गुणा यस्मिन् आश्रये (द्रव्ये) स प्रतिगुणाश्रयः। प्रतिगुणाश्रये प्रतिगुणाश्रये विशेषः प्रतिगुणाश्रयं विशेष इति वीप्सायां प्रथमः प्रतिः। आश्रयाश्च तालनारिकेलादयः। **इत्यादी**त्यादिना, 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्यो नद्यः स्यन्दन्ते' इत्यादिग्रहणम्॥ २॥

ननु रथादिस्थले यथादर्शनमेष्टव्यम्। क्षीरादिपक्षीकरणं तु तदा स्यात्, यदि जगत ईश्वरकर्तृकत्वासंभवानिर्णयः। जगन्न प्रेक्षावत्कर्तृकम् स्वार्थ-कारुण्यान्यतरानधीनत्वात्; यन्नैवम्, तन्नैवमिति तदकर्तृकत्वमेव तु सिद्धमिति शंकाम्; "वत्सविवृद्धि" इति कारिकायां **सांख्यतत्त्वकौमुद्यु**क्तरीत्या प्राप्तां मुखान्तरेणोद्भाव्य परिहरिष्यन् प्रधानस्य प्राज्ञानपेक्षत्वेऽनुपपत्तिं निक्षिप्य प्रदर्शयत् सूत्रमवतारयति **इतश्चे**ति। नानुमानमित्यनुषङ्गः। अनुमानमित्यस्य ब्रह्मात्मकं प्रधानमित्यर्थः। **अनपेक्षपरिणामित्वे** इति। तथाच तर्कोपष्टब्धं प्राज्ञकर्तृकत्वानुमानमवतारिकोक्तानुमानेन सत्प्रतिपक्षितं न भवतीति भावः। **व्यतिरेके**ति। जगत्कारणत्वेन कल्प्यस्य प्रधानस्येष्ट आकारः सर्गावस्था। तद्व्यतिरेकः प्रतिसर्गरूपप्रलयावस्था। व्यतिरेकेणावस्थानस्याभावो व्यतिरेकानवस्थितिः। व्यतिरेकेत्यस्यावस्थितावन्वयः। **अनपेक्षत्वात्** चेतनाधिष्ठानरूपकारणान्तरानपेक्षत्वात्। अचेतनं प्रधानं सर्गव्यापृतं न तत उपरमेतेति प्रलयावस्था उभयेष्टा न सिद्ध्येदिति सूत्रार्थः। ननु संकल्प एव प्रतिसर्गविषये कुतो भवति? न हि परिपूर्णस्य ततः फलम्॥ निरन्तरदुःखानुभवनिवर्तनेच्छैव कारणमिति चेत्—इयं हि दया। अस्यां सत्यां तुल्यनयात् दुःखानुत्पादनेच्छाऽपि भवतीति सृष्टिरेव न स्यात्। अचिद्विशिष्टानां चितां सुखोत्पिपादयिषयेति चेत्—विषमसृष्टिः कथम्; सुखमयसृष्टिप्रसङ्गात्। तथा

सर्गविचित्रसृष्टिव्यवस्थासिद्धिः । न च वाच्यम्—प्राज्ञाधिष्ठितत्वेऽपि तस्यावाप्तसमस्तकामस्य परिपूर्णस्यानवधिकातिशयानन्दस्य निरवद्यस्य निरञ्जनस्य सर्गप्रतिसर्गव्यवस्थाहेत्वभावात्, विषमसृष्टौ निर्दयत्वप्रसङ्गाच्च समानोऽयं दोष इति—परिपूर्णस्यापि लीलार्थप्रवृत्तिसंभवात्, सर्वज्ञस्य तस्य परिणामविशेषापन्नप्रकृतिदर्शनरूपसर्गप्रतिसर्गविशेषहेतोः संभवात्; क्षेत्रज्ञकर्मणामेव विषमसृष्टिव्यवस्थापकत्वाच्च ॥

नन्वेवं क्षेत्रज्ञपुण्यापुण्यरूपकर्मभिरेव सर्वाः व्यवस्थाः सिद्ध्यन्तीति कृतमीश्वरेणाधिष्ठात्रा । पुण्यापुण्यरूपानुष्ठितकर्मसंस्कृता प्रकृतिरेव पुरुषार्थानुरूपं तथातथा व्यवस्थया परिणंस्यते; यथा विषादिदूषितानामन्नपानादीनाम्, औषधविशेषाप्यायितानां च सुखदुःखहेतुभूतः परिणामविशेषो देशकालव्यवस्थया दृश्यते । अतः सर्गप्रतिसर्गव्यवस्था देवादिविषमसृष्टिः कैवल्यव्यवस्था च सर्वप्रकारपरिणामशक्तियुक्तस्य प्रधानस्यैवोपपद्यत इति—

अनभिज्ञो भवान् पुण्यापुण्यकर्मस्वरूपयोः । पुण्यापुण्यस्वरूपे हि शास्त्रैकसमधिगम्ये । शास्त्रं चानादिनिधन-अविच्छिन्नपाठसंप्रदाय—अनाघ्रातप्रमादादिदोषगन्ध-वेदाख्याक्षरराशिः; तच्च, 'परमपुरुषाराधनतद्विपर्ययरूपे कर्मणी पुण्यापुण्ये, तदनुग्रहनिग्रहायत्ते च तत्फले सुखदुःखे' इति वदति । तथाऽऽह[भगवद्]द्रमिडाचार्यः, (बृ. २-७-४) "फलसंबिभन्त्सया हि कर्मभिरात्मानं पिप्रीषन्ति । स प्रीतोऽलं फलायेति शास्त्रमर्यादा" इति । तथाच श्रुतिः, (तै. ना.) "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" इति । तथा च भगवता स्वयमेवोक्तम्, (गी. १८-४६) "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।

---

च विषमसृष्टेरेवाभावे किमिति तन्निवर्तनसंकल्प इति शंकां परिहरति **न चेति** । लीलारसानुबुभूषया परेषामनर्थान् संतनयन् लीलारसान् अनुभवतीत्युक्तौ निर्दय एव स्यादित्यत्राह **सर्वज्ञस्येति** । प्रकृतेरेवम्भूते परिणामे प्राप्ते प्रतिसर्ग आरब्धव्यः, एवम्भूते च सर्गः इति संकल्पितवान् स तद्दर्शनवशात् तथा तथा करोति । अनर्थजननरूपं वैषम्यं तु कर्मायत्तमिति । **सर्वाः व्यवस्थाः** प्रकृतेः तत्तत्परिणामव्यवस्था सर्गप्रतिसर्गव्यवस्था दुःखित्वादिव्यवस्था च । **कैवल्यव्यवस्था** कस्यचिन्मोक्षप्राप्तिः । **फलसंबिभन्त्सया** स्वयं फलसंबन्धेच्छया **कर्मभिः** यज्ञदानतपःप्रभृतिभिर्विहितैः देवतोद्देश्यकैस्तदनुद्देश्यकैश्च । **आत्मानं** परमात्मानम् । **पिप्रीषन्ति** प्रीणयितुमिच्छन्ति । **अलमिति** । न मध्ये अपूर्वमप्रामाणिकं कल्प्यमिति भावः । **पिप्रीषन्तीति** सन्प्रयोगः यथावस्थितशास्त्रार्थाभिज्ञकर्तृविवक्षया । तार्किकमीमांसकादिमतस्यापूर्वस्य निरसनकल्पनेयमपूर्वेति मतिव्युदासाय प्राचीनसंमतिप्रदर्शनं **द्रमिडाचार्य** इति । सोऽपि स्वपूर्वपुरुषान् प्रमाणयितुं **पिप्रीषन्तीत्युक्तवान्** । यत इति शुश्रुम पूर्वेषाम्, अतोऽपूर्वकल्पनमेवापूर्वमिति भावः । **इष्टापूर्तम्** इष्टञ्च पूर्तञ्च यागादि तटाकनिर्माणादि च । पूर्तग्रहणं देवतानुद्देश्यकेऽपि तत्प्रीतिस्थितिबोधनाय । **भुवनस्य नाभिः** सर्वाधारभूतः परः **बिभर्ति** भुंक्ते, फलप्रदानभारमपि वहति स्वयम् । तथाच कर्मापेक्षा प्रकृतिपरिणतिरित्यस्य भगवन्निग्रहानुग्रहापेक्षेत्येवार्थ इति

**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति,** (गी. १८-१९) **"तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु," इति च।**

**स भगवान् पुरुषोत्तमोऽवाप्तसमस्तकामः सर्वज्ञः सर्वेश्वरः सत्यसङ्कल्पः स्वमाहात्म्यानुगुणलीलाप्रवृत्तः, एतानि कर्माणि समीचीनानि, एतान्यसमीचीनानीति कर्मद्वैविध्यं संविधाय, तदुपादानोचितदेहेन्द्रियादिकं तन्नियमनशक्तिं च सर्वेषां क्षेत्रज्ञानां सामान्येन प्रदिश्य, स्वशासनावबोधि शास्त्रं च प्रदर्श्य, तदुपसंहारार्थं चान्तरात्मतयाऽनुप्रविश्य, अनुमन्तृतया च नियच्छंस्तिष्ठति। [ते]क्षेत्रज्ञास्तु तदाहितशक्तयः तत्प्रदिष्टकरणकलेबरादिकाः तदाधाराश्च स्वयमेव स्वेच्छानुगुण्येन पुण्यापुण्यरूपे कर्मणी उपाददते। ततश्च पुण्यापुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयते; शासनातिवर्तिनं च तद्विपर्ययैर्योजयति; अतः स्वातन्त्र्यादिवैकल्यचोद्यानि नावकाशं लभन्ते। दया हि नाम स्वार्थनिरपेक्षा परदुःखासहि-**

---

सिद्धमसदनुमानमिति भावः। नन्वेवं कर्मानुसारित्वे तस्य स्वातन्त्र्यहानिः; अननुसारित्वे अनुसारित्वे च शुभकर्मप्रवर्तनसुखमयसृष्ट्यभावात् दयाहानिरित्यत्रोपपादयति **स भगवानि**ति। कर्मानुसारित्वेऽपि तादृशकर्मविभागस्य तेनैव कृतत्वात् स्वकृतव्यवस्थानुसारेण स्वेच्छया स्वयं गच्छति न स्वातन्त्र्यवैकल्यमिति भावः। **सामान्येन प्रदिश्य**—दुष्टोऽपि कदाचित् विवेकस्यावसरे सति सत्कर्म कर्तुं यथा शक्नुयात्, तथा संविधाय। **तदुपसंहारार्थम्**-प्रवृत्तिविषयनिर्वर्तनतत्परस्य सीदतः तन्निष्पत्तिसंपत्तये। **अनुमन्तृतया नियच्छन्** प्रवृत्तप्रवर्तनरूपनियमनं कुर्वन्। ननु प्रथमप्रवृत्तिर्यदि न तदधीना, तर्हि तस्य सर्वकारणत्वभङ्गः। यदि तदधीना, अनुमन्तृत्वरूपविशेषकथनं कुतः इत्यत्र विशदयति **ते क्षेत्रज्ञास्त्वि**ति। सामान्येन शक्ति-देहेन्द्रिय-शास्त्रोपदेश-स्वरूपधारणादिकर्तृत्वात् प्रथमप्रवृत्तेरपि तदधीनत्वमक्षतम्। विशिष्य पुण्ये वा पापे वा प्रथमचिकीर्षाप्रयत्नौ तु न स्वयं संकल्पयति, किंतु पश्चात् तदिष्टपूरणार्थं तदनुमननकरो निर्वर्तयतीत्यर्थः। **ततश्चे**त्यादिकमनुमन्तृत्वविषयकम्; **धर्मार्थकामे**ति सर्वग्रहणात्। मोक्षविषये क्वचित् प्रयोजककर्तृत्वं वक्ष्यते। **तद्विपर्ययैरि**ति। पुण्यविषयेऽनुमन्तृत्वं यदि परमात्मनो लोकहिताय समुचितम्, पापविषयेऽपि तदेष्टव्यमेव; सर्वेश्वरस्य सर्वसाधारण्यात् पापकर्माधीनक्षुद्रफलापेक्षापूरणस्यापि तेनैव कार्यत्वात्। यादृशचोद्यपरिहाराय **स भगवानि**त्यारब्धम्, तादृशस्य परिहृतत्वं दर्शयति **अत** इति। **स्वातन्त्र्यादी**त्यादिपदेन दयागुणस्य, सर्वसाम्यस्य, कृतकर्ममात्रफलप्रदानस्य च ग्रहणात् तत्तद्वैकल्यप्रयुक्तदोषानवकाश उक्तः। दोषावहमव्यवस्थामयं स्वातन्त्र्यं दयानिधिर्न स्वीकरोति। इदमप्येकविधं तस्य स्वातन्त्र्यम्।

सद्विषयेऽनुमन्तृत्वं गुणाय; पापविषये तु निर्दयत्वायेत्याशंकायाम्—**आदि**पदग्राह्यदयाशब्दार्थवर्णनपूर्वकं प्रत्याह **दया ही**त्यादिना। द्वितीयादिप्रवृत्तिविषये निर्दयत्वमस्त्येव, अथापि न स दोष इति भावः। नन्वत्र दयाशब्दार्थवर्णनं किमर्थम्, तस्य प्रसिद्धत्वादिति चेत्—उच्यते। कश्चिदेवं प्रतिवक्तुमिच्छति—'कारुण्यं समजायत' इत्येवं प्रयोगात् परदुःखदुःखित्वं दयाशब्दमुख्यार्थः। तच्च दुःखित्व-

**ष्णुता। सा च स्वाशासनातिवृत्तिव्यवसायिन्यपि वर्तमाना न गुणायावकल्पते; प्रत्युतापुंस्त्वमेवावहति। तन्निग्रह एव तत्र गुणः; अन्यथा शत्रुनिग्रहादीनामगुणत्वप्रसङ्गात्। स्वशासनातिवृत्तिव्यवसायनिवृत्तिमात्रेणानाद्यनन्तकल्पोपचितदुर्विषहानन्तापराधानङ्गीकारेण निरतिशयसुखसंवृद्धये स्वयमेव प्रयतते। यथोक्तम्,** (गी. १०. १०, ११) **"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इति।**

---

मनुमन्तृत्वेन सह स्थातुमर्हतीति कथं निर्दयत्वशंकेति। अन्यश्चाह—स्थितस्य दुःखस्य निराकरणेच्छैव दया। अनुमननस्थले दुःखस्य भावित्वात् भाविदुःखहेतुकर्मानुमन्तृत्वमात्रेण कथं निर्दयत्वमिति। अपरश्च सांख्यानुयायी पृच्छति—ईश्वरे दया कदापि न भवति। स्वार्थं विना परदुःखनिवर्तने हि दया स्यात्। ईश्वरस्य तु सर्वशेषित्वात् स्वार्थमेव प्रवृत्तिः। अतो लीलारससत्त्वात् तस्मिन् नोक्तलक्षणदयेति। त्रयमिदं प्रतिवक्तुं निर्वर्णनम्। यथाप्रसिद्धि इच्छाविशेष एव दया; न तु दुःखित्वम्, आनन्दमये परस्मिन् तदयोगात्। स्थितदुःखनिवर्तनेच्छेति संकोचोऽपि न युक्तः, भाविदुःखपरिहरणसाधारण्येनैव लक्षणं वाच्यम्। तदुच्यते **असहिष्णुते**ति। सहिष्णुत्वं दुःखाभावापादनोद्योगं विना, 'अस्तु नाम' इत्युपेक्षया स्थितिः। असहिष्णुत्वं तदुद्योगः; तदुपधायकेच्छा वा; इच्छामात्रेणापि ईश्वरेण तद्वारणसंभवात्। यत्तु स्वार्थे सति कथं दयेति—तत्र **स्वार्थनिरपेक्षे**ति निवेशेन प्रतिवदामः। उपजीविप्रभृतिषु स्वप्रयोजनं परमलक्ष्यं कृत्वा प्रवृत्तौ दयाव्यवहारवारणाय विशेषणं यद् देयम्, तत् स्वार्थनिरपेक्षत्वरूपम्। स्वार्थस्याभावो नापेक्षितः। स्वार्थः सन्नपि नोद्दिश्यते चेत्—तावदलम्। ईश्वरश्च परप्रयोजनं प्राधान्येन यदा कलयति, तदा दयालुरेवेति। तदेवं त्रिविधं दयाशब्दार्थव्युत्पादनप्रयोजनम् ॥

ननु पापक्रियानिर्वृत्तौ सत्यां फलप्रदानं निग्रहकार्यं लोकनयादस्तु। प्रथमप्रवृत्तस्य निवारणे कर्तव्ये पुनः प्रवर्तनं कुत इति चेत्—प्रवृत्तपुरुषगतोत्कटेच्छा-तदकरणावसाद-पूरणप्रार्थनादिदर्शनादेव; अपथ्यदानेनार्भकप्रीणनपरजननीवत्। निष्पन्नमपि पापं प्रायश्चित्तेन, अपथ्यमौषधेनेव निर्हरेदिति मन्यते; अन्यथा दण्डयोपि कामं भवत्विति च। एवम्भूतशिक्षणमपि लोकसिद्धमेव। सुतरामसुरादौ। ननु पुण्यापुण्यरूपकर्मद्वैविध्यमेव तेन किमर्थं विहितम्। वैषम्यलेशमपि विना एकरूपसुखमयहेतुत्वमेव सर्वस्य कस्मान्न संकल्पयतीत्यादिप्रश्नस्तु प्रत्यक्षरीतिविरुद्धो लोकमर्यादातिलङ्घी; लोके सदसद्विभागस्य नास्तिकपर्यन्तसर्वसंमतत्वात्। किं सत्, किमसदित्यत्राभिप्रायभेदेऽपि विभाग एष हि संमत एव। असन्निराकरणं सत्स्वीकरणञ्चेश्वरकृत्यमित्यपि सर्वेष्टम्। अतः सर्वेश्वरोऽपि वेदेनेदृश एव वेद्यत इति का तत्र कथन्ता? यद्यस्येश्वरस्याभावमिच्छता भवादृशेन जगत् सुखमयं सर्वं सद्रूपमेव सुकरम्, स्वागतं तर्हि। तदयोगे किमनेन प्रद्वेषेणेति ॥ क्वचित् प्रथमप्रवृत्तेरपीश्वराधीनत्वं वक्ष्यन् तत्र निग्रहनिरूपणेनानेनैव 'तानहं द्विषत.' इत्युक्तनिग्रहौचित्यस्यापि दर्शितत्वात् प्रकृतायाः दयायाः पौष्कल्यं यत्र स्फुटीभवति, तन्मात्रमाह **स्वशासने**त्यादिना।

**अतः प्राज्ञानधिष्ठितं प्रधानं न कारणम् ॥ ३ ॥**

**अथ स्यात्—यद्यपि प्राज्ञानधिष्ठितायाः प्रकृतेः परिस्पन्दप्रवृत्तिरपि न संभवतीत्युक्तम्, तथाऽप्यनपेक्षाया एव परिणामप्रवृत्तिः संभवति, तथा दर्शनात्। धेन्वादिनोपयुक्तं हि तृणोदकादि स्वयमेव क्षीराद्याकारेण परिणममानं दृश्यते। अतः प्रकृतिरपि स्वयमेव जगदाकारेण परिणंस्यते—इति॥ तत्राह—**

**अन्यत्राभावाच्च न तृणादिवत् ॥ २ । २ । ४ ॥**

**नैतदुपपद्यते; तृणादेः प्राज्ञानधिष्ठितस्य परिणामाभावात् दृष्टान्तासिद्धेः। कथमसिद्धिः?** अन्यत्राभावात्। **यदि हि तृणोदकादिकमनडुदाद्युपयुक्तं प्रहीणं वा क्षीराकारेण पर्यणंस्यत, ततः प्राज्ञानधिष्ठितमेव परिणमत इति वक्तुमशक्ष्यत; न चैतदस्ति। अतो धेन्वाद्युपयुक्तं प्राज्ञ एव क्षीरीकरोति।** (शारी. २-२ २) **"पयोम्बुवच्चेत्तत्रापि" इत्युक्तमेवात्र प्रपञ्चितं तत्रैव व्यभिचारप्रदर्शनाय॥**

**पुरुषाश्मवदिति चेत्—तथापि ॥ २ । २ । ५ ॥**

**अथोच्येत—यद्यपि चैतन्यमात्रवपुः पुरुषो निष्क्रियः, प्रधानमपि दृक्छक्तिविकलम्, तथापि पुरुषसंनिधानादचेतनं प्रधानं प्रवर्तते; तथा दर्शनात्। गमनशक्तिविकलदृक्छक्तियुक्तपङ्गुसंनिधानात् तच्चैतन्योपकृतो दृक्छक्तिविकलः प्रवृत्तिशक्तोऽन्धः प्रवर्तते; अयस्कान्ताश्मसंनिधानाच्चायः प्रवर्तते। एवं प्रकृतिपुरुषसंयोगकृतो जगत्सर्गः प्रवर्तते। यथो-**

---

परमप्रकृतं निगमयति **अत** इति। ईश्वरे दोषप्रसक्त्यभावात् ईश्वरनिग्रहानुग्रहातिरिक्तानि कर्माणीत्यस्यैवाप्रामाणिकत्वात् ईश्वराभावे कर्मासिद्ध्या प्रतिसर्गावस्थाविरहप्रसङ्गादित्यर्थः। किञ्च प्रलयः किमनुमानत सिद्धः, आगमाद्वा। आद्यपक्षासंभवः, 'न च युगपत् सर्वोत्पत्तिः सर्वोच्छित्तिश्च प्रमाणपदवीमधिरोहतः' इति शास्त्रयोनित्वाधिकरणे भाषितः। आगमस्तु परमात्मानमेव सर्गप्रलयहेतुं वदतीति प्रथमाध्याय एव स्थापितम्। ईश्वरस्वीकारे तु विषमविपाकान्यपि कर्माणि स्वेच्छया युगपदपक्वानि हितबुद्ध्या स्थापयतीत्यादि समाधानं युक्तमिति चेह ध्येयम्॥ ३॥

**परिस्पन्दः** इह समपरिणामः; चलनस्य तदनिष्टत्वात्। **अनपेक्षायाः**—संकल्पानपेक्षायाः। संकल्परूपापेक्षारहिताया इति वा। **परिणामः** विषमपरिणामः। प्राज्ञाधिष्ठानमस्तु। क्षीरादिकमपि पक्षीक्रियताम्। परंतु तदधिष्ठानं चेतनसंनिधिमात्रम्; न तु संकल्पादिरूपम्-धेन्वादौ तावतैव कार्यदृष्टेः। एकचेतनसद्भावस्थले चेतनान्तरकल्पनस्यायुक्तत्वादिति भावः। **स्वयमेव**। धेनुस्वापदशायामपि भावादिति भावः। **प्रहीणं** पथि विकीर्णम्, उपयोगहीनं वा॥ ४॥

चेतनसंनिधाने कञ्चन विशेषमपेक्षितं कृत्वा परमात्मनिराकरणं शंकमानस्योत्तरं **पुरुषे**ति सूत्रेण। धेनुचैतन्यवत् अनुपयुक्तत्वे हि चेतनान्तरसापेक्षता। पङ्गुचैतन्यवत् पुरुषचैतन्यस्य प्रकृतावुपयोग इष्यते। अतो माभूत परमात्मेति पुरुषदृष्टान्तप्रदर्शनाशयः। अश्मदृष्टान्तप्रदर्शनाशयस्तु—पङ्गुचैतन्यस्यान्धे उपयोगो

क्तम्, (२१) "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पंग्वन्धवदुभयोरपि संयोगः तत्कृतः सर्गः" इति। पुरुषस्य प्रधानोपभोगार्थं कैवल्यार्थं च पुरुषसंनिधानात् प्रधानं सर्गादौ प्रवर्तत इत्यर्थः— अत्रोत्तरम्, तथापीति। एवमपि प्रधानस्य प्रवृत्त्यसंभवस्तदवस्थ एव। पङ्गोर्गमनशक्तिविकलस्यापि मार्गदर्शनतदुपदेशादयः कादाचित्का विशेषाः सहस्रशः सन्ति; अन्धोऽपि चेतनस्सन् तदुपदेशाद्यवगमेन प्रवर्तते; तथा अयस्कान्तमणेरपि अयस्समीपागमनादयः सन्ति। पुरुषस्य तु निष्क्रियस्य न तादृशा विकाराः संभवन्ति। संनिधानमात्रस्य नित्यत्वेन नित्यसर्गप्रसङ्गः, नित्यमुक्तत्वेन बन्धाभावः, अपवर्गाभावश्च ॥ ५ ॥

अङ्गित्वानुपपत्तेश्च ॥ २। २। ६ ॥

गुणानामुत्कर्षनिकर्षनिबन्धनाङ्गाङ्गिभावाद्धि जगत्प्रवृत्तिः, (सांख्य. १६) "प्रतिप्रतिगुणाश्रयविशेषात्" इति वदद्भिर्भवद्भिरभ्युपगम्यते। प्रतिसर्गावस्थायां तु साम्यावस्थानां सत्त्वरजस्तमसामन्योन्याधिक्यन्यूनत्वाभावादङ्गाङ्गिभावानुपपत्तेर्न जगत्सर्ग उपपद्यते। तदापि वैषम्याभ्युपगमे नित्यसर्गप्रसङ्गः। अतश्च न प्राज्ञानधिष्ठितं प्रधानं कारणम् ॥ ६ ॥

अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ २। २। ७ ॥

दूषितप्रकारातिरिक्तप्रकारान्तरेण प्रधानानुमितौ च प्रधानस्य ज्ञातृत्वशक्तिवियोगात् त एव दोषाः प्रादुःष्युः। अतो न कथंचिदप्यनुमानेन प्रधानसिद्धिः ॥ ७ ॥

अभ्युपगमेऽप्यर्थाभावात्। २। २। ८ ॥

अनुमानेन प्रधानसिद्ध्यभ्युपगमेऽपि, प्रधानेन प्रयोजनाभावान्न तद[प्य]नुमातव्यम्।

---

नाम तच्चैतन्यविषयार्थविषयकमानसज्ञानभावत्वम्; तथाविधस्यालाभावेपि अस्ति अयस्सांनिध्यविशेष इवाश्मनः, पुरुषरूपचैतन्यप्रतिफलनरूपसानिध्यविशेष एवेत्येवंरूप.। **पुरुषस्येति** कारिकायां **प्रधानस्ये**-त्यस्य **दर्शनार्थ**मित्यत्रान्वय। पुरुषकर्तृकप्रधानकर्मकदर्शनार्थमित्यर्थः; प्रधानोपभोगार्थमिति यावत्। **तथे**त्यस्य चेत्येतदर्थ.। **तत्कृत** इति। उभयसंयोगकृतत्वेपि, यथा पङ्गुर्न गमनकर्ता, तथा पुरुषोपीति भावः ॥

एवं तावत् चेतनानपेक्षा वा, प्रकृतकार्यविषयकचैतन्यानपेक्षा वा न युक्तेति, सांनिध्यविलक्षणमधिष्ठानं जीवव्यावृत्तमेवापेक्षितमिति च स्थापितम्। अथ साम्यावस्थस्य वैषम्यावस्थाप्राप्तिरपि प्राज्ञाधीनेति दर्शयति **अङ्गित्वे**ति। अङ्गित्वं प्राधान्यमेकगुणाधिक्यम्। व्यतिरेकसूत्रे साम्यावस्थाप्राप्त्ययोग आपादितः; इह वैषम्यस्य। एतदधीनः परिणामो महदादिः ॥ ६ ॥

नन्वस्येयता कालेन एवंरूपवैषम्याविर्भावशक्तिरिति परिणामशक्तिरेव स्वीक्रियते, कार्यानुरोधेन कारणकल्पनायाः सहजत्वात्। अतोऽङ्गाङ्गिभावे नानाप्रकारता न विरुद्धेत्यत्र सूत्रम्-**अन्यथे**त्यादि। शक्त्यन्तरस्वीकारेपि ज्ञशक्त्यभावे कार्यासंभवः आरम्भ एवोक्त इति भावः ॥ ७ ॥

कारणाभावात् कार्याभाव उक्तः; अथ फलाभावादपि कार्याभाव उच्यते **अभ्युपगमेऽपीति** सूत्रेण। अभ्युपगमसिद्धान्तो नाम दूषणान्तरोद्भावनाय स्वासंमतपरकीय पक्षस्यापि स्वीकारः। नन्वस्य

(सांख्य. २१) "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य" इति प्रधानस्य प्रयोजनं पुरुषभोगापवर्गावभिमतौ ; तौ च न संभवतः। पुरुषस्य चैतन्यमात्रवपुषो निष्क्रियस्य निर्विकारस्य निर्मलस्य तत एव नित्यमुक्तस्वरूपस्य प्रकृतिदर्शनरूपो भोगः, तद्वियोगरूपोऽपवर्गश्च न संभवति। एवंरूपस्यैव प्रकृतिसंनिधानात् तत्परिणामविशेषसुखदुःखदर्शनरूपभोगसंभावानायां प्रकृतिसंनिधानस्य नित्यत्वेन कदाचिदप्यपवर्गो न सेत्स्यति ॥ ८ ॥

विप्रतिषेधाच्चासमञ्जसम् ॥ २ । २ । ९ ॥

विप्रतिषिद्धं चेदं साङ्ख्यानां दर्शनम्। तथाहि-प्रकृतेः परार्थत्वेन दृश्यत्वेन भोग्यत्वेन च प्रकृतेर्भोक्तारमधिष्ठातारं द्रष्टारं साक्षिणं च पुरुषमभ्युपगम्य प्रकृत्यैव साधनभूतया तस्य कैवल्यमपि प्राप्यं वदन्त एव, तस्य नित्यनिर्विकारचैतन्यमात्रस्वरूपतया अकर्तृत्वं कैवल्यं च स्वरूपमेवाहुः, तत एव बन्धमोक्षसाधनानुष्ठानं मोक्षश्च प्रकृतेरेवेत्याहुः ; एवंभूतनिर्विकारोदासीनपुरुषसंन्निधानात् प्रकृतेरितरेतराध्यासेन सर्गादिप्रवृत्तिं पुरुषभोगापवर्गार्थत्वं चाहुः, (सांख्य. १७) "सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थप्रवृत्तेश्च॥ (१९.) तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य। कैवल्यं

---

फलं न भवतीति कृत्वा कार्यं कारणात् जायमानं कथं वार्येतेति चेत्—नैवम्-कारणविषयकशास्त्रविचारस्य कार्याधीनहेयसंसारविमोक्षार्थत्वात् निष्फलः सांख्यविचारो न कार्यः स्यात्। तत् कुतः प्रधानानुमेति भावः। फलं किं प्रधाननिष्ठम्, उत जीवनिष्ठम्। नाद्यः, तस्याचेतनतया परार्थत्वात्। नान्त्यः, तस्य निर्विकारत्वाभ्युपगमात् भोगापवर्गानाश्रयत्वादिति ॥ तथाच **अभ्युपगमेपी**त्यस्य प्रधानानुमित्यभ्युपगमेऽपीत्यर्थः। अर्थान्तरमप्यभिप्रेत्याह **एवंरूपस्यैवे**ति। अनुमितप्रकृतिसंनिधानाधीनभोगस्य पुरुषेऽभ्युपमेऽपि अपवर्गरूपार्थो न भवति ; संघातस्य नित्यतया नित्यभोगप्रसंगादिति द्वितीयः सूत्रार्थः ॥ ८ ॥

ननु प्रकृत्यात्माविवेकविशिष्टप्रकृतिसंनिधानं बन्धाय, तदभावेऽपवर्ग इति न दोष इति शंकायाम्—बहुविधव्याहतिप्रदर्शनेन दूषयति **प्रतिषेधादि**ति। **आहु**रित्यन्तेषु त्रिषु वाक्येषु प्रथमवाक्यार्थे प्रमाणं **संघाते**त्यादि। द्वितीयवाक्यार्थे प्रमाणं **पुरुषविमोक्षे**त्यादि। तृतीयस्यार्थे प्रमाणं **तथा तस्मादि**त्यादिना दर्श्यते। **संघातपरार्थत्वात्** शयनासनादिवत् संघातरूपस्य सावयवस्य सर्वस्यान्यशेषत्वात् सोऽन्यः पुरुषोऽस्ति। **त्रिगुणादिविपर्ययात्**। 'त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि' इत्युक्ताकाररहितस्यापेक्षितत्वात्, **अधिष्ठानात्** अधिष्ठातुरपेक्षितत्वात्, **भोक्तृभावात्** भोक्तुरपेक्षितत्वाच्च पुरुषोऽस्ति। पुरुषः असंहतत्वात्रिगुणत्वाद्याकार-अधिष्ठातृत्वभोक्तृत्व कैवल्यार्थप्रवृत्तिविशिष्टतया सिध्यतीत्यर्थः। **तस्माच्च विपर्यासात्—त्रिगुणमविवेकी**ति व्यवहितकारिकायां **तद्विपरीत** इति पदोक्तात् त्रिगुणत्वाद्याकारविपर्ययात्। ते च विपर्यासाः अत्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमनुत्पादकत्वञ्च। तत्र चेतनत्वादविषयत्वाच्च साक्षित्वं द्रष्टृत्वञ्च ; अत्रिगुणत्वात् कैवल्यं माध्यस्थ्यञ्च ; विवेकित्वादनुत्पादकत्वाच्चाकर्तृत्वमिति यथार्हं भाव्यम्। **साक्षी ;** यस्मै विवादविषयः प्रदर्श्यते सः। **कैवल्यं**

माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च" इति। (सांख्य. ५७) 'पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" इत्युक्त्वा एवमाहुः, (सांख्य. ६२) "तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्। संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः"इति। तथा, (सांख्य. २०, २१) 'तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः॥ पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पंग्वन्धवदुभयोरपि संयोगः तत्कृतः सर्गः" इति। साक्षित्वद्रष्टृत्वभोक्तृत्वादयो नित्यनिर्विकारस्याकर्तुरुदासीनस्य कैवल्यैकस्वरूपस्य न संभवन्ति। एवंरूपस्य तस्याध्यासमूलभ्रमोऽपि न संभवति; अध्यासभ्रमयोरपि विकारत्वात्। प्रकृतेश्च तौ न संभवतः; तयोश्चेतनधर्मत्वात्। अध्यासो हि नाम चेतनस्यान्यस्मिन् अन्यधर्मानुसंधानम्। स च चेतनधर्मो विकारश्च। न च पुरुषस्य प्रकृतिसंनिधिमात्रेणाध्यासादयः संभवन्ति, निर्विकारत्वादेव। संभवन्ति चेत्—नित्यं प्रसज्येरन्। संनिधेरकिञ्चित्करत्वश्च (शारी. २-१-४) 'न विलक्षणत्वात्" इत्यत्र प्रतिपादितम्।

प्रकृतिरेव संसरति बध्यते मुच्यते चेत्—कथं नित्यमुक्तस्य पुरुषस्योपकारिणी सेत्युच्यते? वदन्ति हि, (सांख्य. ६०) " नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः। गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति" इति।

तथा प्रकृतिर्येन पुरुषेण यथास्वभावा दृष्टा, तस्मात् पुरुषात् तदानीमेव निवर्तत इति

---

मुक्तता। माध्यस्थ्यं सुखदुःखाधीनप्रीतिद्वेषराहित्यम्। अद्धेति निश्चये। तेन पुरुषस्य बद्धत्वमुक्तत्वव्यवहारो न मुख्य इति ज्ञाप्यते। **तस्मात्** पुरुषस्यैव चैतन्यरूपत्वात् बुद्धेरेव च कर्तृत्वात् चेतनत्वकर्तृत्वयोरेकनिष्ठत्वाभावात् स्वयमचेतनमेव **लिङ्गं** बुद्ध्यादि, **चेतना** चैतन्यं तद्विशिष्टमिव पुरुषसंयोगबलाद्भवति; गुणमयस्य बुद्ध्यादेरेव वस्तुतः कर्तृत्वे सत्यपि अकर्तैव पुरुषः उक्तसंयोगबलादेव कर्तेव भवति। दर्पणवत् स्वच्छेऽन्तःकरणे चैतन्यं प्रतिफलति। ततोऽन्योन्याध्यासो भवतीत्यर्थः। एव व्याहतधर्मान् प्रदर्श्य तत्र तत्कारिकाः प्रमाणीकृत्य व्याघातं दर्शयति **साक्षित्वेत्यादिना**। सुखदुःखधर्माधर्मरागद्वेषकर्तृत्वादिकं सर्वं बुद्धिमहदहमर्थाहङ्कारान्तःकरणादिशब्दवाच्याचेतनगतम्, तस्य विषयसंयोग एव ज्ञानम्। बुद्धिगतस्य विषयसंयोगस्य ज्ञानापरपर्यायस्यान्यस्य च तद्धर्मस्य स्वगतत्वेनाध्यासः पुरुषगतः उपलब्धिरिति सांख्यपरिभाषा। ततः पुंसि बन्धं मोक्षञ्च निर्वहन्ति। तदपि खण्डयति **एवंरूपस्येत्यादिना**। **संभवन्ति चेदि**त्यभ्युपगम्य वादः। अध्यासविषयत्वमेव बन्ध इति चेत्—न ह्यन्येनान्यथा गृह्यमाणत्वं वस्तुनो दोषः स्यात्। न च ततोऽनर्थः कश्चिदिति। व्याघातान्तरं दर्शयति **कथमिति**। **नानाविधै**रिति। यथा काचित् कुलवधूः गुणभूयिष्ठा निर्गुणमपि पतिं बहुभिरुपायैः स्वयमुपकारशीलत्वात आराधयति, न च ततः स्वयं कश्चित पुरुषार्थमिह लभते—तथा प्रकृतिरियं (त्रिगुणत्वात्) गुणवती (त्रैगुण्यविपर्ययात्) अगुणं पुरुषं स्वयं कर्तृत्वात् बहुवस्तुपसवधर्मित्वाच्चोपकारिणी (निर्विकारत्वात्) अनुपकारिणमेव तं पुरुषार्थभाजं करोति, न स्वयमर्थं लभते इति कारिकार्थः। पुरुषे चानुपकृते कथमुपकारित्वं

त्वाहुः, (सांख्यका. ५९) "रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तात्। पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ (६१) प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति। या, 'दृष्टास्मी'ति पुनर्न दर्शनमुपैति पुरुषस्य" इति—तदप्यसङ्गतम्। पुरुषो हि नित्यमुक्तत्वात् निर्विकारत्वाच्च तां कदाचिदपि पश्यति, नाध्यस्यति च। स्वयं च स्वात्मानं न पश्यति, अचेतनत्वात्। पुरुषस्य स्वात्मदर्शनं स्वदर्शनमिति नाध्यस्यति च; स्वयमचेतनत्वात्; पुरुषस्य च दर्शनरूपविकारासंभवात्। अथ संनिधिमात्रमेव दर्शनमित्युच्यते—संनिधेर्नित्यत्वेन नित्यदर्शनप्रसङ्ग इत्युक्तम्। स्वरूपातिरिक्तकादाचित्कसंनिधिरपि नित्यनिर्विकारस्य नोपपद्यते। किंच मोक्षहेतुस्तु स्वसंनिधानरूपमेव दर्शनं चेत्—बन्धहेतुरपि तदेवेति नित्यवद् बन्धो मोक्षश्च स्याताम्। अयथादर्शनं बन्धहेतुः, यथावत्स्वरूपदर्शनं मोक्षहेतुरिति चेत्-- उभयविधस्यापि दर्शनस्य संनिधानरूपतानतिरेकात् सदोभयप्रसङ्ग एव। संनिधेरनित्यत्वे, तस्य हेतुरन्वेषणीयः, तस्यापीत्यनवस्था। अथैतद्दोषपरिजिहीर्षया स्वरूपसद्भाव एव संनिधिरिति—तदा स्वरूपस्य नित्यत्वेन नित्यवद् बन्धमोक्षौ। अतः एवमादेर्विप्रतिषेधात् साङ्ख्यानां दर्शनमसमञ्जसम् ॥

येऽपि कूटस्थनित्यनिर्विशेषस्वप्रकाशचिन्मात्रं ब्रह्म अविद्यासाक्षित्वेनापारमार्थिकबन्धमोक्षभागि(गी)ति वदन्ति -- तेषामप्युक्तनीत्या अविद्यासाक्षित्व-अध्यासाद्यसंभवादसामञ्जस्यमेव; इयांस्तु विशेषः— साङ्ख्याः जननमरणप्रतिनियमादिव्यवस्थासिद्ध्यर्थं पुरुषबहुत्वमिच्छन्ति; ते तु तदपि नेच्छन्तीति सुतरामसामञ्जस्यम्। यत्तु प्रकृतेः पारमार्थ्या(र्थिका)पारमार्थ्य(र्थिक)विभागेन वैषम्यमुक्तम्— तदयुक्तम्; पारमार्थिकत्वेऽप्यपारमार्थिकत्वेऽपि नित्यनिर्विकारस्वप्रकाशैकरसचिन्मात्रस्य स्वव्यतिरिक्तसाक्षित्वाद्यनुपपत्तेः। अपारमार्थिकत्वे तु तस्याः दृश्यत्वबाध्यत्वाभ्युपगमात् सुतरामसङ्गतम्।

---

प्रधानस्य। **रङ्गस्य** रङ्गस्थान् प्रति (आत्मानं) स्वस्वरूपं दर्शयित्वा। **प्रकृतेरिति।** प्रकृतिपुरुषविवेकात्मके दर्शने जाते मोक्ष एव, न पुनर्बन्ध इतीदं चमत्कृत्याहुः—अहो प्रकृतेः सौकुमार्यातिशयः, सकृत् दृष्टा पुनर्दर्शनविषयत्वे म्लानिः स्यादित्यपसरतीति। **पुरुषस्य** पुरुषकर्तृकम्। **स्वदर्शनमिति** स्वकर्तृकदर्शनत्वेन। **पुरुषस्य चेति** चकारस्य **असंभवादि**त्यत्रान्वयः ॥ नित्यनिर्विकारत्व-बन्धमोक्षभाक्त्वयोर्व्याघातस्य सांख्यमते प्रदर्शकं सूत्रमिदमर्थात् सर्वमद्वैतमतं निरस्यतीति दर्शयति **येऽपी**त्यादिना। **प्रतिनियमादी**त्यादिपदेन, 'जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धम्' इति सांख्यकारिकोक्तकरणप्रतिनियमायुगपत्प्रवृत्त्यादिग्रहणम् ॥ ननु प्रकृतितत्कार्ययोरपरमार्थत्वात् न निर्विकारत्वेन साकं विरोध इत्यत आह **यत्त्वि**त्यादि। साक्षित्वं हि दृश्यमानविषयग्राहित्वम्। न च विषयोऽस्ति। व्यावहारिकोऽस्तीति चेत् - निर्विकारस्य कथं तद्ग्राहित्वम्। **स्वप्रकाशस्यापरमार्थविरोधिनः** कथमपरमार्थग्राहित्वमित्यादि द्रष्टव्यम्। **सुतरामि**ति। न हि प्रकृतिरव्यक्ता दृश्या भवति।

**औपाधिकभेदवादेऽपि उपाधिसंबन्धिनो ब्रह्मणोऽयमेव स्वभाव इति उपाधिसंबन्धाद्य-नुपपत्तेरसामञ्जस्यं पूर्वमेवोक्तम् ॥ ४६ ॥** ॥ इति रचनानुपपत्त्यधिकरणम् ॥ १ ॥

४७. (तार्किकदूषणं) महद्दीर्घाधिकरणम् २-२-२ ॥

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् । २ । २ । १० ॥

**प्रधानकारणवादस्य युक्त्याभासमूलतया विप्रतिषिद्धत्वाच्चासामञ्जस्यमुक्तम् ; संप्रति परमाणुकारणवादस्याप्यसामञ्जस्यं प्रतिपाद्यते**—महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्—इति ।

---

तददर्शनेऽपि तत्कार्यं दृश्यतामिति चेत्—तददर्शने तस्या अकल्पितत्वात् कथमपारमार्थिकता ॥ अज्ञानमेव प्रकृतिः ; तच्च अहमज्ञ इति दृश्यत इति चेत्—अहमज्ञ इति दृष्टिर्हि सृष्टिमध्ये ; सृष्टेः प्राक् कथमियम् । किञ्च न प्राक् द्रष्टा अहमर्थोऽस्ति । न च ज्ञानाभावत्वमात्रेण ग्रहणम् । प्रकृति-गतगुणसाम्यवैषम्याद्यग्रहणे अपारमार्थिकस्य तस्यासिद्धौ कथं तदधीनं कार्यम् । किंच कथं प्रकृतिप्राकृतानां बाध्यत्वम् - शतशः तदभिमततत्त्वज्ञानोदयेऽपि सर्वानुवृत्तेरेव दर्शनात् ; बाधितानुवृत्त्यसंभवाच्च । अन्यश्च व्याघातः—को हि दृश्यं बाध्यं मन्येत । प्रमाणेन हि यत् दृश्यम्, तदबाध्यमेव । यत् पुनरदृश्यम्, तदेव कल्पनामात्रं बाध्यम् । अतो जगदपारमार्थ्यवचनस्य स्वापारमार्थ्य एव पर्यवसानमिति । दृश्यत्वानु-माननिरासवादे **शतदूषण्यामियं** सूक्तिरुपात्ताऽस्ति । भास्करपक्षेऽप्याह **औपाधिके**ति । ब्रह्मणो नित्य निर्दोषत्वनिर्विकारत्वयोः प्रतिपन्नत्वात् तद्विरोध्याकारकथने व्याहतिरेवेति भावः । अतश्चिदचिदीश्वर-तत्त्वत्रयमेष्टव्यमिति ॥ ९ ॥

ननु सांख्यवैलक्षण्येनाचेतनस्याधिष्ठातृसापेक्षतया परमात्मानमभ्युपयद्भिस्तार्किकप्रवरैर्वैशेषिकैः, पटगृहरथगोपुरशरीरादिसृष्टौ दर्शनसिद्धोऽनेकावयवोपचयाधीनः कार्योत्पाद इति दृष्टानुरोधकृतः परमाणु-कारणवाद एव प्रामाणिक इति प्राप्ते तन्मतखण्डनमारभ्यते। **महद्दीर्घशब्दे** समाहारद्वन्द्वः ; न कर्मधारयः । अतो न महादीर्घेति आत्वम् । महादीर्घेत्यप्रयोगः दैर्घ्ये महत्त्वान्वयभ्रमव्युदासाय ; महदादिपदेन परिमाण-ग्रहणेन किञ्चिदर्थविशेषसूचनाय च । महत्त्वदीर्घत्वार्थकमहद्दीर्घशब्दात् अर्श आद्यचि महद्दीर्घशब्दः परि-माणविशिष्टद्रव्यवाची भवति । अणु महद् दीर्घमिति परिमाणमात्रे प्रयोगः तद्ग्रन्थे प्रसिद्ध एव । यद्वा महत्पदमात्रं परिमाणप्रधानम् । महता सहितं दीर्घं द्रव्यं महद्दीर्घमिति विग्रहः । तच्च द्रव्यं त्र्यणुकादि सर्वम् । महद्दीर्घशब्दात् **वति**प्रत्ययः । परिमण्डलश्च ह्रस्वश्चेति द्वन्द्वः । अल्पाचः पूर्वनिपातः । ह्रस्वपदं द्व्यणुकपरम् । परिमण्डलमिति पदम् "नित्यं परिमण्डलम्" इति तत्सूत्रे (वै. ७. १. २०) परिभाषितं परमाणुपरम् । तत्र परिमण्डलात् द्व्यणुकस्य द्व्यणुकात् त्र्यणुकस्य चोत्पत्तिवर्णनात् तत्क्रमेण व्यत्यस्य द्वन्द्वा-दरः । त्रिभिर्द्व्यणुकैः त्र्यणुकस्य, द्वाभ्यां परमाणुभ्याञ्च द्व्यणुकस्योत्पत्तिस्तद्दिष्टा । अतो ह्रस्वादावेकत्वमधि-वक्षितम् । यद्वा ह्रस्वैः सहिते परिमण्डले ह्रस्वपरिमण्डले ताभ्यामिति विग्राह्यम् । त्रयाणां ह्रस्वानां परि-**मण्डलद्वयस्य च ग्रहणमिदानीं स्पष्टम्** । **प्रयोज्यत्वं पञ्चम्यर्थः** महद्दीर्घान्वयि । **परमाणुद्व्यणुकप्रयोज्य-त्र्यणुकादिजगद्वदिति विशिष्टार्थः** । ह्रस्वग्रहणं परिमण्डलस्य साक्षात् महद्दीर्घहेतुत्वाभावात् **ह्रस्वद्वारे**ति

असमञ्जस**मिति वर्तते । वाशब्दः चार्थे ।** ह्रस्वपरिमण्डलाभ्यां **द्व्यणुकपरमाणुभ्यां** महद्दीर्घवत् **त्र्यणुकोत्पत्ति[वाद]वत् अन्यच्च तदभ्युपगतं सर्वमसमञ्जसम्; परमाणुभ्यो द्व्यणुकादिक्रमेण जगदुत्पत्तिवादवत् अन्यदप्यसमञ्जसमित्यर्थः । तथा हि—तन्तुप्रभृतयो ह्यवयवाः स्वांशैः**

---

व्यञ्जनाय; परिमण्डलस्य संयोगासंभवरूपो वक्ष्यमाणो दोषो ह्रस्वविषयेऽपि तुल्य इति ज्ञापनाय च ।

त्र्यणुकादिवद्वा द्व्यणुकपरमाणुभ्यामित्यनिर्दिश्य परिमाणविशेषमुखेन तन्निर्देशः कुत इति चेत्—दोषान्तरसूचनाय । ह्रस्वपरिमाणादणुपरिमाणाच्च दीर्घपरिमाणं महत्परिमाणञ्च न जायते, परिमाणस्य स्वसजातीयस्वोत्कृष्टपरिमाणजनकत्वनियमादिति तत्पक्षः । तर्हि कथं दीर्घपरिमाणोत्पत्तिरिति चेत्—द्व्यणुकगतसंख्याविशेषात् । अत एव परमाणुपरिमाणादपि न द्व्यणुकपरिमाणम्, उत्कृष्टपरिमाणजनकत्वनियमभङ्गात् । उत्कर्षेष्टौ चाणोर्द्व्यणुकस्याणुतरत्वप्रसङ्गात् । अतोऽणुत्वित्वात् ह्रस्वत्वित्वाच्च त्र्यणुके महत्त्वदीर्घत्वोत्पत्तिरिति तैः स्वीकृतम् । एवं परमाणुद्वित्वसंख्या द्व्यणुकपरिमाणकारणम् । तत्रैवं दोषः—यथैवं नियमः, तथा अवयवानां स्वगतपरिमाणसजातीयस्वोत्कृष्टपरिमाणाश्रयावयविजनकत्वमिति नियमस्यापि स्वीकारसंभवात् कथं परिमण्डलात् ह्रस्वाद्वा महद्दीर्घं जायेतेति । एवं ज्ञापनार्थं परिमाणमुखेन निर्देशः ॥ एवं त्र्यणुकस्य महद्दीर्घत्वे किं प्रमाणम्? । तस्य प्रत्यक्षत्वात्; प्रत्यक्षे महत्त्वस्य कारणत्वात्; दीर्घत्वस्य च तत्समनियतत्वादिति चेत्—तादृशकार्यकारणभाव एव न मानम् । समानदिक्-नानावयवसंघाताधीनस्य दैर्घ्यस्य परितोऽवयवसमावेशनिबन्धनस्य महत्त्वस्य च कथं समनैयत्यं त्रसरेणौ स्वीकारश्च? । 'महत्त्वं प्रत्यक्षे कारणम् । महत्त्वात् सावयवत्वमपि । तदपि महत्त्वमनेकद्रव्यसमवेतसमवेतत्वनियतम्' इति परिकल्प्य, तदर्थमन्तराले द्व्यणुकोत्पादस्वीकारः कुतः? सर्वमिदं गगननृत्तम्; त्रसरेणोरणुत्वे प्रत्यक्षत्वे च विरोधाभावादिति चेह ज्ञाप्यते । एवमेव द्रव्यस्य स्वभिन्नद्रव्योपादानत्वं नास्त्येव । अणुपरिमाणैश्च महत्परिमाणं भवत्येव । सजातीयस्वोत्कृष्टपरिमाणजनकत्वनियमो महत्परिमाणे स्यान्नामेति च वेद्यते । तथा त्रिभिरेव द्व्यणुकैः त्रसरेणुर्भवति; परमाणुद्वयादेव प्रथमकार्यं भवतीति नियमोऽपि कुत इति दूषणमपि दर्श्यते ।

ननु **वति**प्रत्ययः कुतः, एतदसामञ्जस्यस्येदानीमेव ज्ञाप्यतया ज्ञातपूर्वत्वाभावात् इतरासामञ्जस्याविशेषादिति चेत्-यथा ह्रस्वादिपरिमाणात् महदादिपरिमाणस्योत्पत्तिरसमञ्जसेति भवदिष्टम्, तद्वदेव सर्वमसमञ्जसमिति ज्ञापनाय । एवमेतदसामञ्जस्यं ज्ञात्वापि भवद्भिः शाठ्यादेष वादः स्वीक्रियत इति प्रतिबोधनाय च । तथा आरम्भणाधिकरणे अवयवातिरिक्तावयव्युत्पादस्य निरस्तत्वात् परमाणुतः क्रमेण जगदुत्पादासामञ्जस्यं ज्ञापितमिति चैवं दृष्टान्तविधया निर्देशः । तदर्थमेव महद्दीर्घपदेन न त्र्यणुकमात्रग्रहणम्, किंतु **जगत** इत्युक्तम्; सौत्रशब्देऽर्थसंकोचे मानाभावाच्च । अत एव भाष्येऽपि **जगदुत्पत्ती**ति निर्देशः । पूर्वं त्र्यणुकमात्रभाषणञ्च वक्ष्यमाणसंयोगविचारस्य तावन्मात्रविषयकत्वाभिप्रायेणेत्यलम् ।

**वाशब्दश्चार्थ** इति । यद्यपि वतिप्रत्ययबलादेवान्यासामञ्जस्यसमुच्चयलाभादवधारणार्थत्वेऽपि न क्षतिः—अथापि सूत्रान्तरवक्ष्यमाणासामञ्जस्यस्यैव, अनुक्तसमुच्चयेन मनोगगननित्यत्व-अनपेक्षितानेकगुण-

**षड्भिः पार्श्वैः संयुज्यमानाः अवयविनमुत्पादयन्ति। परमाणवोऽपि स्वकीयैः षड्भिः पार्श्वैः संयुज्यमाना एव द्व्यणुकादीनामुत्पादका भवेयुः। अन्यथा परमाणूनां प्रदेशभेदाभावे सति सहस्रपरमाणुसंयोगेऽप्येकस्मात् परमाणोरनतिरिक्तपरिमाणतया अणुत्वह्रस्वत्वमहत्त्वदीर्घत्वाद्यसिद्धिः स्यात् । प्रदेशभेदाभ्युपगमे परमाणवोऽपि सांशाः स्वकीयैरंशैः, ते च स्वकीयैरंशैरित्यनवस्था । न च वाच्यम्—अवयवाल्पत्वमहत्त्वाभ्यां हि सर्षपमहीधरयोः वैषम्यम्; परमाणोरप्यनन्तावयवत्वे अवयवानन्त्यसाम्यात् सर्षपमहीधरयोः वैषम्यासिद्धेः अवयवापकर्षकाष्ठा अवश्याभ्युपगमनीया—इति । परमाणूनां प्रदेशभेदाभावे सति एकपरमाणुपरिमाणातिरेकी प्रथिमा न जायेतेति सर्षपमहीधरयोरेवासिद्धेः ॥ किं कुर्म इति चेत्—वैदिकः पक्षः परिगृह्यताम् ।**

---

सामान्यविशेषादिकल्पनासामञ्जस्यस्यापि संग्रहाय चार्थस्वीकारः। **षड्भिः पार्श्वैरिति** । दशदिक्संबन्धित्वं प्रतिपदार्थमस्तीति परमाणावपि तत् । तत्र परमाणुद्वयस्य मिथः पार्श्वसंबन्धे एकैकपरमाणावपि एकमुख्यदिगंश-कोणदिग्द्वयांशरूपांशत्रयावच्छेदेन परमाण्वन्तरसंयोगो वक्तव्य इति परमाणुद्वयगतांशसमाहारेण षट्पार्श्वता । ते चांशा अवयवा एवेति सावयवत्वं परमाणूनामिति । एवं द्व्यणुकादपि त्र्यणुकं न भवति । एकद्व्यणुके द्व्यणुकान्तरस्य त्रिभिरंशैर्हि संयोगो वक्तव्यः । परमाणोर्निरंशत्वे च द्व्यणुके अंशद्वयस्यैव सत्त्वात् कथं त्र्यंशता । कार्त्स्न्येन संयोगे द्व्यणुकबहुत्वेऽपि एकद्व्यणुकाधिकप्रथिमायोग एवेति । अत्र "षट्केन युगपत् योगात् परमाणोः षडंशता । षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः" इति तार्किकोपरि कृतं दूषणमप्यनुसंधेयम् । ननु परमाणुरेकः स्वभिन्नपरमाणुषट्कमिलितः कार्यं जनयतीति तार्किकैरनुक्तत्वात् कथमेवं दूष्यत इति चेन्न परमाणुद्वयारब्धद्व्यणुकत्रयारब्धतयाऽभिमते त्र्यणुके हि षट् परमाणवोऽन्तर्गता इति निर्विवादम् । तत्र, 'षट्केन योग' इत्यस्य त्र्यणुकस्य परमाणुषट्केन योगः षट्कघटितत्वमित्यर्थ इति षण्णां मिथो योग एवार्थः । तत्र 'एकस्मिन् परमाणौ परमाणुपञ्चकं विभिन्नांशावच्छेदेन श्लिष्यति, अश्लिष्टोऽपि कश्चित् स्वांशो वर्तते' इति स्वीकारे सत्येव षट्परमाणुकृतः प्रथिमा पञ्चकादिसंभाव्यप्रथिमापेक्षयाऽतिशयितः स्यात् । एवमेकस्य परमाणोः षडंशत्वे तुल्यनयात् सर्वोऽप्यणुः षडंशो भवति । यद्यणुर्निरंश एव, तर्हि त्र्यणुकमणुमात्रमेव स्यादिति श्लोकार्थ इति । अथवा कार्यारम्भो भवतु वा मा वा । परमाणवो व्रीह्यादिवत् मिथो यदा मिलन्ति, तदा एकस्मिन् परमाणौ प्रागादिदिक्चतुष्टयोर्ध्वाधोदिग्रूपेषु षट्सु पार्श्वेषु षट् परमाणवो मेलनमर्हन्ति । तत्रैकैकः परमाणुः षडंशो भवति । कार्त्स्न्येन मेलने तु व्रीहिराशिवत् परमाणुराशिरयं न स्यादित्यर्थः । अस्तु वाऽर्थान्तरम् । सर्वथा सांशत्वापादनमक्षतम् ।

**असिद्धेरिति** । असिद्धिप्रसंगादित्यर्थः । तत्सिद्ध्यर्थं सांशत्वमावश्यकमिति भावः । कथं तर्हि परिमाणवैषम्यनिर्वाह इति पृच्छति **किं कुर्म** इति । **वैदिक** इति । सावयवत्वे वैषम्यासिद्ध्या निरवयवत्वे धर्मासिद्ध्या च तार्किकपक्षायोगादिति भावः । ननु सिद्धान्ते त्रसरेणव एव परमाणवः, तदतिरेके मानाभावात् । ते च प्रत्यक्षाः । तेषां मिथः संयोगोऽपि प्रत्यक्ष एव । तदधीनद्रव्यान्तरोत्पत्त्यनङ्गी-

**यत्तु—परैः ब्रह्मकारणवाददूषणपरिहारपरमिदं सूत्रं व्याख्यातम्—तदसङ्गतम्; पुनरुक्तं च; ब्रह्मकारणवादे परोक्तान् दोषान् पूर्वस्मिन् पादे परिहृत्य परपक्षप्रतिक्षेपो ह्यस्मिन् पादे क्रियते। चेतनाद् ब्रह्मणो जगदुत्पत्तिसंभवश्च,** (शारी. २-१-४) **"न विलक्षणत्वात्" इत्यत्रैव**

---

कारेऽपि तदुपचयस्तावदिष्ट एव। तत्र स संयोगः कार्त्स्न्येन वा एकदेशेन वा। आद्ये, उपचयो न स्यात्। अन्त्ये, तस्य सांशत्वापत्तिः। तत्तु नेष्यते। तथैव तन्मतेऽपि स्यादिति चेत्— अत्र **न्यायसिद्धाञ्जनादि** द्रष्टव्यम्। तथाच—निरंशानामपि त्रसरेणूनां मिथः संयोगः अव्याप्यवृत्तिरुपचयोपयोगी प्रत्यक्षप्रमाणबलादिष्यत एव। तार्किकेण तु निरंशवस्तुप्रत्यक्षास्वीकारात् प्रत्यक्षद्रव्ये सर्वत्रांशभेदेनैव संयोगतदभावदर्शनात् तद्रीत्या परमाणौ अप्रत्यक्षे तेनानुमातव्यमिति तद्रीत्या तदापादनं भाष्ये कृतम्। एवं परमाणोरप्रत्यक्षस्य सावयवत्वेऽपि, मेरुसर्षपयोरवयवानन्त्यस्य वर्तमानत्वेपि, परिमाणभेदः आनन्त्ये अवान्तरवैषम्यकल्पनयोपपादयितुं शक्यते, यथा घटत्वपृथिवीत्वजात्योः अनन्तव्यक्त्याश्रितत्वे सत्यपि घटत्वस्य व्याप्यता पृथिवीत्वस्य व्यापकता च, तद्वत्। अथापि अवयवानन्त्ये परिमाणवैषम्यं दुर्निर्वहमिति तदुक्तत्वात् तदनुरोधेनैवं दूषितम्—इति सिद्ध्यति। भवतु तर्हि तार्किकपक्ष एव, त्रसरेण्वतिरिक्ताप्रत्यक्षपरमाण्वस्वीकारेण निरंशत्रसरेणूनामेव जगदारम्भकत्ववादेनेति चेत्—एवमपि द्रव्यान्तरोत्पत्तिवर्णनं न भवतीत्युक्तम्। अवयवातिरिक्तावयव्यपि मा भूदिति चेत्—प्रायस्तत्संमतांशत्यागे स कथं तार्किकपक्षः॥ नानाद्रव्यसंघातभूतं कार्यद्रव्यम्, न तु मूलप्रकृतिभूतैकद्रव्यमूलकमित्यस्यात्यागादयं तार्किकपक्ष इति चेत्—यथाप्रमाणमेकद्रव्यारब्धत्वमपि क्वचित् स्वीकर्तव्यमेव; शिल्पिप्रभृतिभिरेकमहाशिलादिग्रहणेन, महापटात् खण्डपटानामिव, विचित्रविग्रहादिनिर्माणस्योपलम्भात्। सूक्ष्मक्षीरबाष्पादितः स्थूलदधिमेघाद्युत्पत्त्यनुभवाच्च। अतस्तर्को न व्यवस्थापकः। सर्वथा तदुक्तदूषणमत्र सूत्रे कृतं सुस्थम्। एवं **वाशब्द**विवक्षितांशवक्तव्यविस्तरोऽपि द्रष्टव्यः। संग्रहदृष्ट्या तु भाष्ये वैदिकः पक्षः परिगृह्यतामित्येतावदेवोक्तम्। तेन तदुक्तं **अपरिग्रहा**दिति सूत्राभिप्रेतं सर्वमवैदिकं केवलतर्कमूलत्वादप्रतिष्ठितमित्युक्तं भवति।

नन्वसमञ्जसमिति पदस्यानुषङ्गे क्लेशः। एतदपेक्षया परोक्तव्याख्या श्रेयसी; महद्दीर्घवत् (असन्मतमपि) भवतीति वर्णनस्य स्वरसत्वात्। तेन, 'कथं चेतनात् ब्रह्मणोऽचेतनजगदुत्पत्तिः' इत्याक्षेपः ह्रस्वान्महत इवोपपद्यत इत्युक्त्वा क्षिप्यत इति शंकायां तदर्थं दूषयितुमनुवदति **यदि**ति। अत्रौचित्यात् लाघवाच्चानुषङ्गपक्ष आदृतः। भवतीत्यध्याहारेऽपि न दोषः। ह्रस्वादितः महद्दीर्घादेरुत्पत्तिर्वेदान्तिमते प्रामाणिकी न वा। आद्यपक्ष एव तद्वदिदमपीति दृष्टान्तीकरणं युक्तम्। अन्त्ये, तद्वत् अन्यदपि भवतीत्युक्तौ तद्वत् अन्यदप्यप्रामाणिकमित्येवार्थलाभात् अन्यदिति परोक्तग्रहणमेव युक्तम्, न तु स्वमतम्। एवं तन्मते पादसंगतिरपि न भवति। पृथगधिकरणत्वञ्चास्य सर्वथैवायुक्तमित्यभिसंधाय दूषयति **तदि**ति। भाष्ये **यदि**त्यस्य **व्याख्यात**मित्येतद्घटकव्याख्यानक्रियाविशेषणत्वात् **तदि**त्यस्य व्याख्यानमित्यर्थः। तदुक्तस्यार्थस्यासांगत्यादिकं तैरपि गृहीतमेवेत्यतः त्याज्यमेव तदुक्तमित्यभिप्रेत्योपसंहरति

प्रपश्चितः । अतः, ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुह्रस्वोत्पत्तिवत् अन्यच्च तदभ्युपगतं सर्वमसमञ्जसमित्येव सूत्रार्थः ॥ १० ॥

किमत्रान्यदसमञ्जसमित्यत्राह (त आह)—

उभयथाऽपि न कर्मातस्तदभावः ॥ २ । २ । ११ ॥

परमाणुकारणवादे हि परमाणुगतकर्मजनिततत्संयोगपूर्वकद्व्यणुकादिक्रमेण जगदुत्पत्तिरिष्यते। तत्र निखिलजगदुत्पत्तिकारणभूत(तं)परमाणुगतमाद्यं कर्म अदृष्टकारितमित्यभ्युपगम्यते, (वै.द. ५-२-१३) "अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाऽऽद्यं कर्मेत्यदृष्टकारितानि" इति। तदिदं परमाणुगतं कर्म स्वगतादृष्टकारितम्, आत्मगतादृष्टकारितं वा। उभयथाऽपि न संभवति ; क्षेत्रज्ञपुण्यपापानुष्ठानजनितस्यादृष्टस्य परमाणुगतत्वासंभवात् । संभवे च सदोत्पादकत्वप्रसङ्गः । आत्मगतस्य चादृष्टस्य परमाणुगत(गुणस्य)कर्मोत्पत्तिहेतुत्वं न संभवति । अथादृष्टवदात्मसंयोगात् अणुषु कर्मोत्पत्तिः, तदा तस्यादृष्टप्रवाहस्य नित्यत्वेन नित्यसर्गप्रसङ्गः ॥

नन्वदृष्टं विपाकापेक्षं फलायालम्। कानिचिददृष्टानि तदानीमेव विपच्यन्ते, कानिचित् जन्मान्तरे, कानिचित् कल्पान्तरे। अतो विपाकापेक्षत्वान्न सर्वदोत्पादकत्वप्रसङ्ग इति ॥ नैतत् ; अनन्तैरात्मभिरसङ्केतपूर्वकम् अयुगपदनुष्ठितानेकविधकर्मजनितानाम् अदृष्टानामेकस्मिन् काले एकरूपविपाकस्याप्रामाणिकत्वात्। अत एव युगपत्सर्वसंहारः (रोऽपि), द्विपरार्धकालमविपाकेनावस्थानं च न सङ्गच्छते ; न चेश्वरेच्छाहितविशेषादृष्टसंयोगादणुषु कर्म ; आनुमानिकेश्वरासिद्धेः (शारी १-१-३) "शास्त्रयोनित्वात्" इत्यत्रोपपादितत्वात्। अतो जगदुत्पत्तेरणुगतकर्मपूर्वकत्वाभावः ॥ ११ ॥

समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ २ । २ । १२ ॥

समवायाभ्युपगमाच्चासमञ्जसम् कुतः ? साम्यादनवस्थितेः—समवायस्याप्यवयविजाति-

---

**अत** इति। **सूत्रार्थ** इति। परिमण्डलाभ्यामित्यत्र पञ्चम्यर्थो जन्यत्वमिति स्वीकृत्य **महद्दीर्घ**पदं द्व्यणुकस्याप्युपलक्षणमिति कृत्वा शांकररीत्या व्याख्यातमिह। अत्राणोः सांशत्वानंशत्वविकल्पेन कृतं दूषणं शाङ्करेऽनन्तरसूत्रे उक्तम्। तस्य तत्र सूत्रार्थत्वायोगाच्चेहैव तन्निवेशानुगुणार्थवर्णनं साम्प्रतम्॥ १० ॥

चाकारविवक्षितासामञ्जस्येषु कतिपयोदाहरणमुत्तरैः सूत्रैः। तत्र पूर्वमणुनोरनवयवयोः संयोगो न प्रादेशिक इति पृथुद्रव्योत्पत्त्यभाव उक्तः। अधुना स संयोग एव सर्गादौ कारणाभावान्न भवतीत्युच्यते **उभयथे**ति। आत्मन्यदृष्टोत्पत्तिस्तार्किकेष्टा ; भूतेषु तदुत्पत्तिरिति च बुद्धौ तदुत्पत्तिवादिसांख्यच्छायया भवति ; जैनैरिष्यते च। **न संभव**ति ; कार्यकारणयोर्वैयधिकरण्यात्। **विपाकः** फलदशा ॥ ११ ॥

ह्रस्वानां मिथः, परिमण्डलयोश्च मिथः संयोगे संबन्धः समवायः ; तथा कारणद्रव्ये कार्यद्रव्यस्य समवायः ; एवं कर्मणश्च द्रव्येणेत्युक्तं तैः। तत्र कार्यद्रव्यतज्जनकसंयोगतद्धेतुकर्मसंभवो निरस्तः ; अथ तत्संबन्धमपि निरस्यति **समवाये**ति। **अनवस्थितेः** अनवस्थारूपदोषप्रसंगात्। उपपाद**कान्त-**

गुणवत् उपपादकान्तरापेक्षासाम्यादुपपादकान्तरस्यापि तथेत्यनवस्थितेरसमञ्जसमेव । एतदुक्तं भवति—'अयुतसिद्धानामाधाराधेयभूतानामिहप्रत्ययहेतुर्यः संबन्धः, स समवायः' इति समवायोऽभ्युपगम्यते । अपृथक्स्थित्युपलब्धीनां जात्यादीनां तथाभावस्य निर्वाहकत्वेन चेत् समवायोऽभ्युपगम्यते, समवायस्यापि तत्साम्यात् तथाभावहेतुरन्वेषणीयः, तस्यापि तथेत्यनवस्थितिः । समवायस्य तदपृथक्सिद्धत्वं स्वभाव इति परिकल्प्यते चेत्—जातिगुणादीनामेवैष स्वभावः परिकल्पनीयः; न पुनरदृष्टचरं समवायमभ्युपगम्य, तस्यैष स्वभाव इति परिकल्पयितुं युक्तम्—इति ॥ १२ ॥

समवायस्य नित्यत्वे अनित्यत्वे चायं दोषः समानः । नित्यत्वे दोषान्तरं चाऽऽह—

नित्यमेव च भावात् ॥ २ । २ । १३ ॥

समवायस्य संबन्धत्वात् संबन्धस्य नित्यत्वे संबन्धिनो जगतश्च नित्यमेव भावादसमञ्जसम् ॥ १३ ॥

---

**रस्यापि तथे**ति । समवायस्य यत् उपपादकान्तरमपेक्षितम्, तस्यापि उपपादकान्तरापेक्षेत्यर्थः । उपपादकं किमित्येतदुपपादयन् **अन्तर**पदप्रयोगाशयमपि व्यनक्ति **एतदुक्त**मिति । **अयुतसिद्धाना**मिति । यु मिश्रणामिश्रणयोरिति धातुपाठात् युतत्वममिश्रितत्वं पृथग्भावः। अयुतत्वमपृथग्भाव । **सिद्धाना**मिति । सिद्धिः—स्थितिः उपलब्धिश्च । आधाराधेयभूताः द्विविधाः युतसिद्धा अयुतसिद्धाश्च । आद्यविषये संयोगः संबन्धः; अन्यत्र समवायः । **इहप्रत्यय** इत्यस्य इहेतिप्रत्यय इत्यर्थः । इह तन्तुषु पट इत्येवंरीत्या अवयवावयविनि-गुणगुणि-क्रियातदाश्रय-जातिव्यक्ति-विशेषतदाश्रयविषयिणी विशिष्टबुद्धिः विशेषणविशेष्यसंबन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवदिति संयोगदृष्टान्तेन समवायसिद्धिः । स्थितिर्नाम आधाराधेयभाव. । **तथाभावस्य** अपृथक्स्थित्युपलब्धिकत्वस्य । यथा संयोगः विशेषणविशेष्यातिरिक्त एव तत्राधाराधेयभावस्य वैशिष्ट्यबुद्धेश्चोपपादकः, तथा अवयवावयव्यादिस्थलेष्वपि विशेष्यविशेषणोभयातिरिक्त एवोपपादको वक्तव्य इति अतिरिक्तसमवायसिद्धिरिति तन्मतम् । एवञ्च रूपसमवायवान् घट इति विशिष्टबुद्धिनिर्वाहाय तत्रापि समवायरूपविशेषणाद्यतिरिक्त एवोपपादकः संबन्धरूपो वाच्यः; अथ च रूपसमवायीयसंबन्धवानित्येतन्निर्वाहायान्यः संबन्ध इत्यनवस्था। यदि समवायः संबन्धान्तरं विना स्वरूपत एव विशिष्टबुद्धिं निर्वहेत्, रूपादिकमपि तथैव निर्वक्ष्यतीति किं समवायेनेत्यर्थः। ननु समवायस्याधेयत्वास्वीकारात् न तत्र संबन्धापेक्षा; अप्रत्यक्षत्वाच्च न तद्विशिष्टबुद्धिरपीति वैशेषिकमतमिति चेन्न—समवाय आधेयः संबन्धत्वात् संयोगवदित्याधेयत्वानुमानात् । आधेयत्वाभावेऽपि, संबन्धाभावे कथं 'तत्समवाय.', 'समवायी' इत्यादिव्यवहारः । अत एवाप्रत्यक्षत्वेऽपि तद्विशिष्टबुद्धिरन्यविधा नापह्नवमर्हति । समवायस्य प्रत्यक्षत्वमिष्टञ्च नैयायिकानाम् ॥ १२ ॥

प्राभाकरैः समवायस्यानित्यत्वं नानात्वञ्च स्वीकृतम्; तार्किकैस्तु नित्यत्वमिति तत्र दोषान्तरमप्याह **नित्य**मिति । **भावात्** भावप्रसङ्गात् ॥ १३ ॥

रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ २ । २ । १४ ॥

परमाणूनां पार्थिवाऽऽप्यतैजसवायवीयानां चतुर्विधानां रूपरसगन्धस्पर्शवत्त्वाभ्युपगमात् अभिमतनित्यत्वसूक्ष्मत्वनिरवयवत्वादिविपर्ययेण अनित्यत्वस्थूलत्वसावयवत्वादि प्रसज्यते; रूपादिमतां घटादीनामनित्यत्व-तथाविधकारणान्तरारब्धत्वादिदर्शनात् । न हि दर्शनानुगुण्येनादृष्टोऽर्थः कल्प्यमानः स्वाभिमतविशेषे व्यवस्थापयितुं शक्यः । दर्शनानुगुण्येन हि परमाणूनां रूपादिमत्त्वं त्वया कल्प्यते । अतोऽप्यसमञ्जसम् ॥ १४ ॥

अथैतद्दोषपरिजिहीर्षया परमाणूनां रूपादिमत्त्वं नाभ्युपगम्यते, तत्राह—

उभयथा च दोषात् ॥ २ । २ । १५ ॥

न केवलं परमाणूनां रूपादिमत्त्वाभ्युपगम एव दोषः; रूपादिविरहेऽपि कारणगुणपूर्वकत्वात् कार्यगुणानां पृथिव्यादयो रूपादिशून्याः स्युः । तत्परिजिहीर्षया रूपादिमत्त्वाभ्युपगमे पूर्वोक्तदोष इत्युभयथा च दोषादसमञ्जसम् ॥ १५ ॥

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ २ । २ । १६ ॥

कापिलपक्षस्य श्रुतिन्यायविरोधपरित्यक्तस्यापि सत्कार्यवादादिना क्वचिदंशे वैदिकैः परिग्रहोऽस्ति ; अस्य तु काणादपक्षस्य केनाप्यंशेनापरिग्रहादनुपपन्नत्वाच्चात्यन्तमनपेक्षैव निःश्रेयसार्थिभिः कार्या ॥ इति महद्दीर्घाधिकरणम् ॥ २ ॥

४८. (वैभाषिकसौत्रान्तिकदूषणं) समुदायाधिकरणम् २-२-३ ॥

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ २ । २ । १७ ॥

परमाणुकारणवादिनो वैशेषिकाः निरस्ताः; सौगताश्च जगतः परमाणुकारणत्वमभ्युपगच्छन्तीति अनन्तरं तन्मतेऽपि जगदुत्पत्तितद्व्यवहारादिकं नोपपद्यत इत्युच्यते । ते

---

एवं परमाणोः, तज्जद्व्यणुकादेः, तत्कर्मणः, तत्र समवायस्य चासिद्धिर्दर्शिता । अथ तस्य रूपादिगुणविषयविचारं वर्तयन् दोषमाह सूत्रद्वयेन । कार्यगतगुणानां कारणगतगुणपूर्वकत्वमिति कृत्वा जगद्रूपकार्यगतगुणानुरोधेन द्व्यणुके परमाणौ च गुणा अनुमेयाः ; तदा दोषः प्रथममुच्यते । तत्र रूपाद्यस्वीकारे दोषश्च द्वितीयसूत्रेण ॥ १४-१५ ॥

ईश्वरस्वीकारात् सांख्याद्वरीयः काणादमतमिति मतिमपाकर्तुमत्रैव वेदविरुद्धांशाधिक्यं दर्शयितुं सूत्रम् **अपरिग्रहाच्चेति** । अपरिग्रहे कारणं प्रकृत्यादिवैदिकतत्त्वत्यागः। सामान्यविशेषसमवायाभावाख्यातिरिक्तपदार्थ-अप्रामाणिकबहुगुण-अवयवातिरिक्तावयविस्वीकारादितोऽनुपपन्नत्वं **चार्थः** ॥ १६ ॥

आम्नायप्रामाण्यस्वीकारिणाऽपि कणादेन धर्मविषये तद् यथावदिच्छता तत्त्वविषये स्वातन्त्र्येण सर्वस्यान्यथाकरणात् अनुमानतो वैदिकतत्त्वमेव बहु स्वीकुर्वतः सांख्यात् तस्य लघीयस्त्वं दर्शितम् । सर्वथैव वेदबाह्यं लघिष्ठं मतमथ दूष्यते । तत्र काणादा इव बौद्धा अपि चतुर्विधपरमाणुवादिनः ।

परमाणुकारणवादिनोऽपि जैनाः परमाणुषु चातुर्विध्यं नेच्छन्ति ; अनेकान्तवादिनश्चेति भेदः । काणादा अर्धवैनाशिकाः ; कार्यद्रव्यमात्रनिरन्वयनाशस्वीकारात् । बौद्धाः सर्ववैनाशिकाः ; कस्यापि नित्यस्यानिष्टेः । तेषु बौद्धेषु तार्किकादिवत् बाह्यस्वीकारिणः उभये पूर्वं निरस्यन्ते । अथ बौद्धत्वाविशेषादन्यनिरसनम् । तत्र ततो लघीयः ज्ञानमात्रस्वीकारिमतम् । लघिष्ठं तु शून्यमतं तत इति क्रमः । तत्र बुद्धस्य शून्यमत एव नैर्भर्ये सत्यपि गुडजिह्विकान्यायेन विनेयान् वशीकर्तुं तत्तदभिमतानुसरणाभिनयात् बौद्धाश्चतुर्विधाः । त इमे माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकनामानः । तत्र न किमप्यस्तीति शून्यवादं बौद्धोपदिष्टं ये तथैव गृहीतवन्तः, ते माध्यमिकाः । ननु कथं मध्यमत्वमेषाम्, यथोक्तसंप्रतिपत्त्या उत्तमत्वस्यैव युक्तत्वादिति चेत्—शिष्यैर्मननप्रवृत्तैरुपदिष्टविषयेऽनुयोगस्यापि कार्यतया तदकरणादधमत्वमपि तेष्वायातम् । एवमुत्तमत्वाधमत्वयोः प्रसक्त्या मध्यमत्वेन व्यवहार इति वदन्ति । उक्तग्रहणसामर्थ्यमासीत्, तदुपरि विचारसामर्थ्यं नासीदिति मध्यमा इति वा । उपदेष्टा उत्तमः । उपदेश्यो यथावद् गुरुवत् सर्वग्राही मध्यमः । उपदिष्टार्थं यथावदनवधार्य स्वयं किञ्चिदन्यथाऽवगच्छन् अधम इति वा भाव्यम् । केषाञ्चित योगाचारा इति नाम । तेषु योगस्याऽऽचारस्य च सत्त्वात् । **योगः** पर्यनुयोगः प्रश्नः ; **आचारः** स्वीकारः । 'कथं सर्वाभावः ? ज्ञानेनैव तस्य वेद्यतया विज्ञानस्यावश्यकत्वादिति पर्यनुयोगः कृतः ; अन्येषामर्थानामभावश्चोपदिष्टः स्वीकृत इति । अन्ये सौत्रान्तिकाः - सूत्रस्यान्तं पृष्टवन्त इति । सूत्रमुपदेशवाक्यम् । तस्यात्रैव समाप्तिर्न युज्यते ; अर्थाभावे ज्ञानवैचित्र्यायोगात् ; बहिरवभासमानेषु तेषु ज्ञानाकारातिरिक्त-बाह्याकाराभावस्य दुर्वचत्वादित्याक्षिप्योपदेशान्तं पृष्टवन्तः । तान् प्रति उक्तं बुद्धेन—सन्तु कामम् ; तथापि ज्ञानेनानुमेया एव ; न प्रत्यक्षा इति । अथान्यैः शङ्कितम्—सर्वथा प्रत्यक्षाभावेऽनुमानमेव न स्यास्यति । अतो बाह्यज्ञानं प्रत्यक्षमपि जायमानमनपलप्यम् । अतः प्रत्यक्षविषयेषु अनुमेयत्वमेवेति भाषा विरुद्धेति । तस्मात् ते वैभाषिकाः । इमे सर्वे धर्मधर्मिभेदं न स्वीकुर्वन्ति, क्षणिकत्ववादिनश्चेति किञ्चित्प्रकारेण सर्वाभाववादस्यावसरात् शून्यवादसंनिहिताः सौगतशिष्याः । एवं तत्तन्नामार्थनिरूपणवैखरी संप्रति प्रतीयमाना । ग्रन्थान्तरतस्तु विधान्तरमवगम्यते । तद् यथा—शाक्यमुनिनिर्वाणानन्तरं तदुपदेशसंग्रहो मागध्या भाषया कृत आसीत् । तत्र सुत्तपिटक-विनयपिटक-अभिधम्मपिटकनामख्यानं त्रिपिटकमिति च प्रसिद्धं विभागत्रयम् । तदन्तर्गताश्चाष्टादश शाखाः स्थविरादयः । अथ संस्कृतग्रन्थाः सुत्तपिटकानुसारी सूत्रोपदेश इति, विनयपिटकानुरोधी विनयपरिभाषेति, अभिधम्मपिटकानुसारी अभिधर्मविभाषेति अशोकपुत्रकालिकाः । तत्र विभाषाग्रन्थानुयायिनो वैभाषिकाः ; सूत्रोपदेशानुसारिणः सौत्रान्तिकाः ; अथ कनिष्कस्य राज्ञः काले लङ्कावतारसूत्रादिदर्शितो महायानमिति समयः प्रादुर्बभूव । तत्र निविष्टौ योगचारमाध्यमिकौ । महायानप्रतिस्पर्धि हीनयानमिति समयान्तरम् । समाधेः सम्यग्दर्शनस्य च निर्वाहको योगः ; तेनाऽऽचरन्, 'न वादमात्रेणाऽऽलयविज्ञानम् ; किंतु योगेन' इति तत्पराे योगाचारः । माध्यमिकशब्दार्थश्च माध्यमिकवृत्तौ एवमुक्तः, "भावाभावान्तद्वयरहितत्वात् सर्वस्वभावानुत्पत्तिलक्षणा शून्यता मध्यमा प्रतिपत् । स मध्यमो मार्गः" इति ।

चतुर्विधाः—केचित् पार्थिवाऽऽप्यतैजसवायवीयपरमाणुसङ्घातरूपान् भूतभौतिकान् बाह्यान् चित्तचैत्तरूपांश्चाभ्यन्तरान् अर्थान् प्रत्यक्षानुमानसिद्धान् अभ्युपयन्ति । अन्ये तु बाह्यार्थान् सर्वान् पृथिव्यादीन् विज्ञानानुमेयान् वदन्ति । अपरे तु, 'अर्थशून्यं विज्ञानमेव परमार्थसत्, बाह्यार्थास्तु स्वाप्नार्थकल्पाः' इत्याहुः । त्रयोऽप्येते स्वाभ्युपगतं वस्तु क्षणिकमाचक्षते । उक्तभूतभौतिकचित्तचैत्तव्यतिरिक्तमात्माकाशादिकं स्वरूपेणैव नानुमन्वते । अन्ये तु सर्वशून्यत्वमेव सङ्गिरन्ते । तत्र ये बाह्यार्थास्तित्ववादिनः, ते तावन्निरस्यन्ते । ते चैवं मन्यन्ते—रूपरसस्पर्शगन्धस्वभावाः पार्थिवाः परमाणवः, रूपरसस्पर्शस्वभावाश्चाऽऽप्याः, रूपस्पर्शस्वभावाश्च तैजसाः, स्पर्शस्वभावाश्च वायवीयाः पृथिव्यप्तेजोवायुरूपेण संहन्यन्ते । तेभ्यश्च पृथिव्यादिभ्यः शरीरेन्द्रियविषयरूपसङ्घाता भवन्ति । तत्र च शरीरान्तर्वर्ती ग्राहकाभिमानारूढो विज्ञानसन्तान एवाऽऽत्मत्वेनावतिष्ठते ; तत एव सर्वो लौकिको व्यवहारः प्रवर्तते-इति ॥

तत्राभिधीयते—समुदाय उभयहेतुकेऽपि तदप्राप्तिः । योऽयमणुहेतुकः पृथिव्यादिभूता-

---

वैभाषिका वात्सीपुत्रा इत्युच्यन्त इति, "वात्सीपुत्रास्तु शब्दादीन् पञ्च वैभाषिकाः विदुः । शब्दात्मानश्चतुर्ष्वेव केचिदित्यपरेऽब्रुवन्" इति **सर्वार्थसिद्ध्युदाहृतवचनाद्** ज्ञायते । "वत्सी वैभाषिकमाता । तत्पुत्रच्छात्राः वात्सीपुत्राः" इत्या**नन्ददायिनी** । वैभाषिकेषु वात्सीपुत्राः केचित् ; अपरेऽपि सन्तीति तत्रैवोक्तम् । तत्र प्रथमे रूपरसस्पर्शगन्धातिरिक्ततया शब्दमप्यङ्गीकुर्वन्ति । अपरे रूपादिष्वेव श्रोत्रग्राह्यत्वदशया शब्दतेति शब्दमन्यं नेच्छन्ति । यथा पाश्चात्याः वाय्वादिकमेव श्रोत्रग्राह्यतादशायां शब्द इति व्यवह्रियत इति । इम एव वात्सीपुत्राः, 'आत्मा कश्चिद् पुद्गलाख्यो नित्यः संसरति मुच्यते च' इति वदन्ति । इदं मतं बौद्धकृते **तत्त्वसंग्रह** एव निरस्तम् । **सर्वार्थसिद्धौ** च, "विभज्यवैभाषिकवादमन्दः" (१-८) इति एतद्वादिनो वैभाषिकैकदेशिनो विभज्यवैभाषिक इति नाम्ना व्यवहृताः । यत् सत्, तत् क्षणिकमिति बौद्धवादाद्विभज्य खल्वयमस्तीत्यलम् ।

**केचित्** वैभाषिकाः । **संघातरूपा**निति । परमाणवोऽपि रूपादिगुणानतिरिक्ता एव । गन्धरसरूपस्पर्शसंघातः पृथिवी, एकैकगुणह्रासे उत्तरोत्तरं भूतम् । **चित्तचैत्तरूपा**निति । स्कन्धपञ्चकं बौद्धपरिभाषितम्—रूपविज्ञानवेदनासंज्ञासंस्काराः पञ्च स्कन्धा इति । रूपस्कन्धः इन्द्रियविषयाः । विज्ञानम् अहमित्यालयविज्ञानं नीलादिविषयविज्ञानञ्च । ज्ञानज्ञेयमात्रवादिभिः बौद्धैर्ज्ञाता नेष्यते । वेदनाः सुखदुःखोपेक्षाः । संज्ञास्कन्धः सविकल्पप्रत्ययः ; अर्थेन सह नाम्नोऽपि ग्रहणात् । चित्तावस्थाः संस्काराः रागद्वेषमोहादयः । अत्र रूपस्कन्धस्य बाह्यस्यापि ज्ञानविषयत्वाकारेण चित्तचैत्तरूपाभ्यन्तरान्तर्भावोऽपि **शांकर**भाष्यादाविष्टः । **भास्कर**भाष्ये रूपस्कन्धं विना चतुष्टयस्यैव चित्तचैत्तत्वमुक्तम् । तदेवात्रापि ग्राह्यम् ।

**अन्ये** सौत्रान्तिकाः । **अपरे** योगाचाराः । **स्वाप्नार्थकल्पाः** बहिरविद्यमाना इत्यर्थः । **आकाशादिक**मित्यादिना ईश्वरस्य कालस्य च ग्रहणम् । **ये** इति ; वैभाषिकाः सौत्रान्तिकाश्चेत्यर्थः । **ताव**दिति ; **प्रथम**मित्यर्थः । तार्किकसाम्यात् तदानन्तर्यम् । **ग्राहकाभिमानारूढः** अहमित्यवभासमानः ।

त्मकः समुदायः, यश्च पृथिव्यादिहेतुकः शरीरेन्द्रियविषयरूपः समुदायः, तस्मिन् उभयहेतुकेऽपि समुदाये तत्प्राप्तिर्नोपपद्यते—जगदात्मकसमुदायोत्पत्तिर्नोपपद्यत इत्यर्थः। परमाणूनां पृथिव्यादिभूतानां च क्षणिकत्वाभ्युपगमात्। क्षणध्वंसिनः परमाणवो भूतानि च कदा संहतौ व्याप्रियन्ते; कदा वा संहन्यन्ते। कदा विज्ञानविषयभूताः; कदा च हानोपादानादिव्यवहारास्पदतां भजन्ते; को वा विज्ञानात्मा कं च विषयं स्पृशति, कश्च विज्ञानात्मा कमर्थं कदा वेदयते; कं वा विदितमर्थं कश्च कदोपादत्ते। स्प्रष्टा हि नष्टः, स्पृष्टश्च नष्टः; तथा वेदिता विदितश्च नष्टः। कथश्चान्येन स्पृष्टमन्यो वेदयते; कथश्चान्येन विदितम[न्यम]र्थमन्य उपादत्ते। संतानानामेकत्वेऽपि संतानिभ्यस्तेषां वस्तुतो वस्त्वन्तरत्वानभ्युपगमात् न तन्निबन्धनं व्यवहारादिकमुपपद्यते। अहमर्थ एवाऽऽत्मा, स च ज्ञातैवेति चोपपादितं पुरस्तात्॥ १७॥

इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात्॥ २। २। १८॥

---

तत्प्राप्तिरिति। सूत्रे तदप्राप्तिरित्यस्य समुदायभावानुपपत्तिरिति शांकरव्याख्यानम्। इहापि तदेवाभिमतम्। यद्वा उभयशब्दार्थपरामर्शी तच्छब्दः। प्राप्तिश्च संयोगः। 'अप्राप्तस्य या प्राप्तिः' इति व्यवहारात्। तथाच परमाणूनां मिथःसंबन्धस्य भूतानां मिथस्संबन्धस्य चासंभव इत्यर्थः। तत्र हेतुः चेतनानधिष्ठितत्वमिति शांकरे। तत्तु सांख्याधिकरणसिद्धमेव। किञ्चात्रेश्वरमन्तरा कार्यं न भवतीत्येतावन्न वक्तव्यम्। जीवकार्यस्यापि जीवेन कर्तुमशक्यत्वे वक्तव्ये तत्त्यागेन तावद्दूरगमनायोगात्। अतः क्षणिकत्वमत्र हेतुरिष्यते। द्रव्यम्, ततः क्रिया, ततो विभागादिक्रमेण संयोग इति वक्तव्यम्। कर्मोत्पत्तिकाल एव द्रव्यं नष्टमिति कस्य केन संघातरूपः संबन्ध इति। बाह्यानां मिथस्संबन्धासंभवमात्रस्य सूत्रार्थत्वे कदा विज्ञानविषयभूता इत्यादिभाष्यस्यावसराभावात् उभयहेतुके इत्यादेरेवमर्थोऽप्यभिमतो लक्ष्यते—भूतात्मकः परमाणुसमुदायः भौतिकात्मकोऽनेकभूतसमुदायश्चोभयहेतुकः बाह्योपादानकारणहेतुकः आन्तरकर्तृरूपनिमित्तहेतुकश्च। तत्रोभयेषामुपादानानां निमित्तानाञ्च मध्ये उपादानद्रव्याणां मिथः प्राप्तिर्न भवतीति उपपादितम्। तद्वत् निमित्तस्योपादानेषु व्यापृत्यैव कार्यकरत्वात् घटपटादि निर्मातुं विज्ञानरूपं निमित्तं कदोपादानं गृह्णाति, उपादत्ते, व्यापारयति चेति तदप्राप्त्युपपादनमुपरीति। संतानानामिति। आत्मभूतविज्ञानसंतानस्य विज्ञानभेदेऽप्येकत्वम्, उपादानद्रव्यसंतानस्य च तथा तद्भेदेऽप्येकत्वमिति संताने कर्तृत्वं कर्तृव्यापारगोचरत्वञ्चेति चेन्न—संताननाम्नः स्थिरस्य कस्यचिदभावादित्यर्थः। ननु ज्ञानानां क्षणिकत्वाद् ज्ञानानतिरिक्तस्यात्मनः क्षणिकत्वं वेदान्तिनाऽप्येष्टव्यमित्यत्राह अहमर्थ इति। स ज्ञानस्वरूपो भवतु, मा वा। क्षणिकज्ञानातिरिक्तः तदाधारभूत इत्येव वास्तववेदान्तिमतमिति भावः॥

ननु देह एवात्मेति वदन् चार्वाकः भोक्तुर्देहस्य प्रतिक्षणं भिन्नत्वेऽपि संतानैक्यात् बालादिस्थविरान्तदेहेषु अहमेवेति अभेदभ्रान्त्यैव प्रवृत्त्यादि निर्वहति, तथा भोग्यस्य देहान्तरस्य दर्शनोपादानानुभवादिकालभेदेऽपि तदेवेदमिति भ्रान्त्यैव कार्यं निर्वहति। तथैव सर्वक्षणिकत्ववादिनो वयमपि निर्वहामः; अविद्यासाम्राज्यस्यानङ्कुशत्वादिति शंकामनूद्य निरस्यति इतरेति सूत्रेण। प्रत्ययशब्दो बौद्धमते हेतुवाची।

**अविद्यादीनामितरेतहेतुत्वेनोपपन्नं सङ्घातभावादिकमिति चेत्—एतदुक्तं भवति—यद्यपि क्षणिकाः सर्वे भावाः, तथाऽप्यविद्ययैतत् सर्वमुपपद्यते।** अविद्या **हि नाम विपरीतबुद्धिः क्षणिकादिषु स्थिरत्वादिगोचरा। तया** संस्काराख्याः **रागद्वेषादयो जायन्ते। ततश्चित्ताभिज्वलनरूपं** विज्ञानम्। **ततश्च** नामाख्याश्चित्त**चैत्ताः। ततश्च पृथिव्यादिकं[च]रूपिद्रव्यम्।** ततः षडायतनाख्य**मिन्द्रियषट्कम्। ततः** स्पर्शाख्यः **कायः। ततो वेदनादयः। ततश्च पुनरप्यविद्यादयो यथोक्ताः—इत्यनादिरियमविद्यादिका अन्योन्यमूला चक्रपरिवृत्तिः। एतच्च सर्वं पृथिव्यादिभूतभौतिकसंघातमन्तरेण नोपपद्यते। अतः सङ्घातभावादिकमुपपन्नम्-इति। तत्रोत्तरम्**—न सङ्घातभावानिमित्तत्वात्--इति। **नैतदुपपद्यते--एषामविद्यादीनां पृथिव्यादिभूत-**

---

तदाह **इतरेतरहेतुत्वेनेति**। **संघातभावादीत्यादिना** विज्ञानविषयत्व-व्यवहारविषयत्वपरिग्रहः। ननु कथमन्योन्यहेतुकत्वम्, कार्यस्यैव कारणत्वायोगात्; हेतुत्वप्रकारश्च कीदृश.; कियन्ति चेतरेतरपदग्राह्याणीति जिज्ञासायामाह—**एतदुक्तं भवतीति**। अत्राविद्याबलात् शरीरपरिग्रहः ततोऽविद्येति बीजाङ्कुरन्याय उपपाद्यते पर्वक्रमप्रदर्शनेन। **इतरेतरप्रत्ययत्वा**दित्यस्यार्थान्तराभिप्रायकत्वमपि लक्ष्यते-अन्यस्मिन् अन्यबुद्धिरितरेतरप्रत्यय.। क्षणिकादिषु स्थिरत्वादिबुद्धि(रूपाविद्या)त्वात् ज्ञानानां सर्वमुपपद्यत इति। **क्षणिकादिष्विति**। क्षणिकत्वादिधर्माश्रयेष्वित्यर्थः। क्षणिके स्थिरमिति, अनित्ये नित्यमिति, दुःखे सुखमिति, असति सदिति च बुद्धिरविद्या; विषयं प्रतिक्षणभिन्नमप्येकत्वेन मन्यते, विज्ञानञ्च ग्रहकोपादातृभोक्तृत्वरूपधर्मभेदेन भिन्नमप्येकमहमिति। अतः सर्वो व्यवहारश्चलतीति भावः। पर्वक्रमानाह **तयेत्यादिना**। शरीरादौ स्थैर्यबुद्ध्या तत्परिग्रहे रागो भवति; तद्रागानुवृत्तिवशात् चित्तरूपात्मा मातृकुक्षिं प्रविश्य, तत्राहमिति अभिज्वलनं प्राप्य, लप्स्यमानशरीरार्थापेक्षितश्रद्धावीर्यस्मृतिप्रीत्यादि चैत्तं प्रतिलभ्य, तद्वशात् पृथिव्यादिधातुषु संहननप्रवृत्तेषु कललाद्याकारमवाप्य, इन्द्रियषट्कमधिगम्य, प्राणदेहेन्द्रियादिसंघातरूपस्पर्शशब्दार्थभाक् भवन् पुनरविद्यां प्रतिपद्यते, ततः पुनरेवमिति भावः। **नामाख्याश्चित्तचैत्ता** इति अविद्या-संस्कार-विज्ञानरूपचित्तचैत्तानन्तरं नामाख्यचित्तचैत्तप्रादुर्भाव इत्यर्थः। नाम च सविकल्पप्रत्यय इति प्रागुक्तम्। इह शरीरोत्पत्त्युपयोगिश्रद्धास्मृतिप्रीत्यादिरूपं विवक्षितम्। अथ चित्तचैत्तव्यतिरिक्तोत्पत्तिमप्याह **ततश्चेति**। **रूपिद्रव्यम्** रूपशब्दवाच्यशरीरोपादानभूतद्रव्यमित्यर्थः। तेषां द्रव्याणां समावेशो भवति। तत्र क्षणिकत्वात् पदार्थानां, 'तेषां समावेश'इत्यनुक्त्वा, तान्येव भवन्तीत्युच्यते। **वेदनादय** इति। "अविद्या संस्कारो विज्ञानं नामरूपं षडायतनं स्पर्शो वेदना तृष्णा उपादानं भवो जातिर्जरा मरणं शोकः परिदेवना दुःखं दुर्मनस्तेत्येवंजातीयकाः" इति **शांकरभाष्योक्ते** वेदनापर्यन्तमिह कण्ठोक्तम्; अन्यत् **आदि**पदगृहीतम्। तत्र **भवो** धर्माधर्मौ; **जाति**र्जन्म। शिष्टं स्पष्टम्। **संघातभावानिमित्तत्वा**दिति पाठो वृत्तिसंमतोऽस्माकं साम्प्रदायिकः। **उत्पत्तिमात्रनिमित्तत्वादिति** परेषां पाठः। अयमर्थ.—**संघातमन्तरेणाविद्यादि नोपपद्यत** इति वदता त्वया संघातभावं प्रति आक्षेपकत्वमनुपपादकत्वमेवाविद्यादेरुक्तम्; न तु संघातभावं प्रति कारणत्वम्। कारणं न

**भौतिकसङ्घातभावं प्रति अनिमित्तत्वात् । न खल्वस्थिरादिषु स्थिरत्वादिबुद्ध्यात्मिकाऽविद्या, तन्निमित्ताः रागद्वेषादयो वा अर्थान्तरस्य क्षणिकस्य संहतिहेतुतां प्रतिपद्यन्ते ; शुक्तिकारजतादिबुद्धिर्हि न शुक्त्याद्यर्थसंहतिहेतुर्भवति । किंच यस्य क्षणिके स्थिरत्वबुद्धिः, स तदैव नष्ट इति कस्य रागादय उत्पद्यन्ते ? संस्काराश्रयं स्थिरमेकं द्रव्यमनभ्युपगच्छतां संस्कारानुवृत्तिरपि न शक्या कल्पयितुम् ॥ १८ ॥**

उत्तरोत्पादे च पूर्वनिरोधात् । २ । २ । १९ ।

**इतश्च क्षणिकत्वपक्षे जगदुत्पत्तिर्नोपपद्यते ; उत्तरक्षणोत्पत्तिवेलायां पूर्वक्षणस्य विनष्टत्वात् तस्योत्तरक्षणं प्रति हेतुत्वानुपपत्तेः । अभावस्य हेतुत्वे, सर्वं सर्वत्र सर्वदोत्पद्येत । अथ पूर्वक्षणवर्तित्वमेव हेतुत्वमित्युच्यते—एवं तर्हि कश्चिदेव घटक्षणः तदुत्तरकालभाविनां सर्वेषामेव गोमहिषाश्वकुड्यपाषाणादीनां त्रैलोक्यवर्तिनां हेतुस्स्यात् ॥ अथैकजातीयस्यैव पूर्वक्षणवर्तिनो हेतुत्वमिष्यते—तथापि सर्वदेशवर्तिनामुत्तरक्षणभाविनां घटानामेक एव पूर्वक्षणवर्तिघटो हेतुस्स्यात् ॥ अथैकस्यैव हेतुरेक इति मनुषे— तथापि कस्यैकस्य को हेतुरिति न ज्ञायते ॥ अथ यस्मिन् देशे यो घटक्षणः स्थितः, तद्देशसम्बन्धिन एवोत्तरक्षणस्य स हेतुरिति—किं**

---

भवतीत्यस्मद्दूषणं नानेन परिहियते । क्षणिकत्वान्न संहननपर्यन्तं स्थास्यन्ति बाह्यानि, आत्माऽपि क्षणिकत्वात् नात्मानं न वा बाह्यं प्रत्यभिजानातीति पूर्वोक्तदूषणं तदवस्थम् । प्रतीत्यसमुत्पादो (प्रतीत्यसमुत्पादो नाम कारणं प्राप्य कार्यस्योत्पत्तिः-) द्विविधो बौद्धैरुक्तः हेतूपनिबन्धः प्रत्ययोपनिबन्धश्चेति । द्विविधोऽपि समुदयो न चेतयितृसापेक्षः इति तन्मतम् । बीज-आङ्कुर-पत्र-काण्ड-नाल-गर्भ-शूक-पुष्प-फलेषु क्रमेण जायमानेषु पूर्वपूर्वस्योत्तरोत्तरं प्रति हेतुतेत्याद्यः । **प्रत्ययो** नाम **प्रति**—एकैककारणस्यापि **अयः** अन्येन प्राप्तिः । सर्वकारणसमवाय इति यावत् । तदुपनिबन्धः यथा बीजादङ्कुरे जननीये पृथिवीधातुः अङ्कुरं कठिनयति ; जलं स्नेहयति ; तेजः विलक्षणरूपादिमत्तया पाचयति ; वायुर्निर्गमयति । आकाशोऽप्रतिहतिं कल्पयति ; ऋतुः परिणमयतीत्येवं तत्तदर्थे तत्तत्कारणसमावेश इति । सोऽयं संघातभावः कथं क्षणिकेष्विति । यो हि कर्तारमेकं स्वीकृत्य कार्यं क्षणिकमपि स्थिरत्वेन गृहीतं मन्येत, तस्य कथमप्युपादित्सादि संपद्यते, कर्तृक्षणिकत्वे तु न किञ्चित् सिद्ध्येदित्याशयेनाह **किञ्चे**ति । अत्र प्रत्ययोपनिबन्धासंभवः स्पष्टः । एवं हेतूपनिबन्धासंभवोपि हेतुभूतबीजाद्यन्तर्गताणूनां मेलनासंभवेन ग्राह्यः ॥

संघातासंघातादिसर्वसाधारणदूषणमाह **उत्तरे**ति । अयमाशयः—कारणत्वं न कार्यजननस्वरूपयोग्यत्वम्, किंतु कार्योपधायकत्वम् । अत एव कुसूलस्थबीजं नाङ्कुरं प्रति कारणम् ; तद्विषये कुर्वद्रूपत्वाभावात् । उपधायकस्यैव कारणत्वात् सहकारिभूतानेककारणापेक्षाऽपि नेति बौद्धमतम् । तत्र कार्योपधायकत्वं नाम कार्यवैशिष्ट्यम् । अत एव ' प्रतीत्यसमुत्पादः ' इति तद्व्यवहारोपपत्तिः, कार्यं कारणं प्राप्योत्पद्यत इति तदर्थात् । कारणकार्ययोः प्राप्त्यभावे तदयोगात् । अतः कार्यकाले कारणं नास्ति चेत्, कथं तत् स्यादिति ॥ अथ कार्योपधायकत्वं कार्याव्यवहितप्राक्क्षणसंबन्ध एवेति शंकते **अथ पूर्वे**ति । एवमुत्पाद्यत्वं

देशस्य स्थिरत्वं मनुषे? । किञ्च चक्षुरादिसंप्रयुक्तस्यार्थस्य ज्ञानोत्पत्तिकालेऽनवस्थितत्वात् न कस्यचिदर्थस्य ज्ञानविषयत्वं संभवति ॥ १९ ॥

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा । २ । २ । २० ॥

असत्यपि हेतौ कार्यमुत्पद्यते चेत्—सर्वं सर्वत्र सर्वदोत्पद्येतेत्युक्तम् । न केवलमुत्पत्तिविरोध एव, प्रतिज्ञा च भवतामुपरुध्येत, 'अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तौ हेतवः' इति वः प्रतिज्ञा । अधिपतिः इन्द्रियम् । अथ प्रतिज्ञानुपरोधाय घटक्षणे स्थित एव घटक्षणान्तरोत्पत्तिरिष्यते—तथा च सति द्वयोः कार्यकारणयोर्घटक्षणयोर्यौगपद्येनोपलब्धिः प्रसज्येत । न च तथोपलभ्यते । क्षणिकत्वप्रतिज्ञा चैवं हीयेत ॥ क्षणिकत्वं स्थितमेवेति चेत्—इन्द्रियसंप्रयोगज्ञानयोर्यौगपद्यं प्रसज्येत ॥ २० ॥

प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् । २ । २ । २१ ॥

---

न भवतीत्युक्तम् । ज्ञेयत्वमपि न भवतीत्याह **किञ्चे**ति । इदं **किञ्चे**त्यादिभाष्यमुत्तरसूत्रेपि निवेशमर्हति । अथवा **इत्युक्त**मित्येतत्पर्यन्तोपरितनभाष्यमनेन सह निवेशमर्हतीति किञ्चिद् विमृश्यम् ॥ १९ ॥

कारणत्वमव्यवहितपूर्ववर्तित्वमात्रमिति मत्वा कार्यकाले कारणास्वीकारे दोषान्तरमप्याह **असती**ति । कार्यकाले कारणाभावः प्रसज्यत इति दोषः प्राक् सूत्रोक्तः । तदिष्टापत्तौ भाष्ये सूत्राभिप्रेतं दूषणमुक्तम् । अथ सूत्रकारः पक्षद्वयेऽपि सिद्धान्तविरोधरूपं दूषणान्तरमाह **असती**ति । **असति** कार्यकाले कारणेऽसति; तत्सत्त्वानभ्युपगमे इति यावत् । **प्रतिज्ञा**—"चत्वारः प्रत्ययाः हेतुरालम्बनमनन्तरम् । तथैवाधिपतेयश्च" इत्येषा । **सहकारी**-आलोकादिः । **आलम्बनं** विषयः । समनन्तरप्रत्ययः अव्यवहितपूर्वक्षणस्थितं यत् किमपि ज्ञानम् । कथं प्रतिज्ञोपरोधः; पूर्वक्षणे सर्वसद्भावस्य पर्याप्तत्वादिति चेन्न-प्रत्यक्षज्ञानस्य वर्तमानग्राहिताया इष्टत्वात् विषयस्य प्रत्यक्षकाले आवश्यकत्वे तेन संप्रयुज्य सहभूय कारणीभवतामपि तत्कालस्थितिरपेक्षितेत्याशयात् । **इष्यत** इत्यादि । घटक्षणान्तरोत्पत्तिकालेऽपि पूर्वमधिपत्यादिसाहित्येन स्थितघटक्षणस्यापि सत्त्वस्वीकारे इति यावत् । एवञ्च **यौगपद्यमन्यथा** इत्यस्य घटक्षणसत्त्वस्वीकारे घटद्वययौगपद्यापत्तिरित्यर्थ उक्तो भवति । प्रतिज्ञोपरोध इत्यस्य अन्यथेत्यत्राप्यनुषङ्गेणान्यविधप्रतिज्ञोपरोधरूपमर्थान्तरमाह **क्षणिकत्वे**ति । ननु इन्द्रियसंप्रयुक्तविषयसद्भावरूपपूर्वक्षण एव प्रत्यक्षस्यापि स्वीकारान्न क्षणिकत्वभङ्ग इति पृच्छति **क्षणिकत्व**मिति । **यौगपद्य**मिति । अव्यवहितपूर्ववर्तित्वरूपं कारणत्वं भज्येतेति भावः । अयमपि **अन्यथायौगपद्य**मिति सौत्रपदयोरावृत्त्याऽर्थः ॥ २० ॥

बौद्धैः संस्कृतासंस्कृतभेदेन कश्चन विभागं विधाय, **संस्कृतं** रूप-चित्त-चैत्त-चित्तविप्रयुक्तभेदात् चतुर्विधम् । **रूपं** पृथिव्यादि; **चित्त**महंग्रहारूढम्; चैत्तं रागादि; **चित्तविप्रयुक्तं** जन्मजरामरणादीत्युक्त्वा, **असंस्कृत**पदेन प्रतिसंख्यानिरोधस्याप्रतिसंख्यानिरोधस्याकाशस्य च ग्रहणं कृतम् । तत्र संस्कृतं क्षणिकं सर्वं दूषितम् । अथासंस्कृतं सूत्रद्वयेन दूषयति **प्रतिसंख्ये**ति । प्रतिसंख्या चाप्रतिसंख्या च प्रतिसंख्याप्रतिसंख्ये; ताभ्यां निरोधौ अथवा तयोर्निरोधौ तत्संबन्धिनौ निरोधाविति विग्रहः । तयोर-

**एवं तावत्** असत उत्पत्तिर्निरस्ता ; सतो निरन्वयविनाशोऽपि नोपपद्यत इत्युच्यते । क्षणिकत्ववादिभिर्मुद्गराभिघाताद्यनन्तरभावितयोपलब्धियोग्यः सदृशसंतानावसानरूपः स्थूलो यः, सदृशसंताने प्रतिक्षणभावी चोपलब्ध्यनर्हः सूक्ष्मश्च यः निरन्वयो विनाशः प्रतिसङ्ख्यानिरोधाप्रतिसङ्ख्यानिरोधशब्दाभ्यामभिधीयेते, तौ न संभवत इत्यर्थः । कुतः ? अविच्छेदात्—सतो निरन्वयविच्छेदासंभवात् । असंभवश्च, 'सत उत्पत्तिविनाशौ नाम अवस्थान्तरापत्तिरेव ; अवस्थायोगि तु द्रव्यमेकमेव स्थिरम्' इति कारणादनन्यत्वं कार्यस्योपपादयद्भिरस्माभिः (शारी. २-१-१५) "तदनन्यत्वम्" इत्यत्र प्रतिपादितः । निर्वाणस्य दीपस्य निरन्वयविनाशदर्शनात अन्यत्रापि विनाशो निरन्वयोऽनुमीयत इति चेत्-न ; घटशरावादौ मृदादिद्रव्यानुवृत्त्युपलब्ध्या सतो द्रव्यस्यावस्थान्तरापत्तिरेव विनाश इति निश्चिते सति, प्रदीपादौ सूक्ष्मदशापत्त्याऽप्यनुपलम्भोपपत्तेः तत्राप्यवस्थान्तरापत्तिकल्पनस्यैव युक्तत्वात् ॥

## उभयथा च दोषात् । २ । २ । २२ ॥

**क्षणिकत्ववादिभिरभ्युपेता तुच्छादुत्पत्तिः, उत्पन्नस्य तुच्छतापत्तिश्च न संभवतीत्युक्तम् ; तदुभयप्रकाराभ्युपगतौ दोषश्च भवति । तुच्छादुत्पत्तौ तुच्छात्मकमेव कार्यं स्यात् । यद्धि यस्मादुत्पद्यते, तत् तदात्मकं दृष्टम् : यथा मृत्सुवर्णादेरुत्पन्नं मणिकमकुटादि मृत्सुवर्णाद्यात्मकं दृष्टम् । न च जगत् तुच्छात्मकं भवद्भिरभ्युपगम्यते ; न च प्रतीयते । सतो**

---

**प्राप्तिः** तद्विषयकप्रमाणाभाव इत्यर्थः । प्रतिसंख्यानिरोधोऽपि द्रव्यनाशरूपोऽस्मन्मते न भवति, स्थिरत्वात् । **मुद्गराभिघाते**ति प्रयोगात्, **उपलब्धियोग्य** इत्युक्त्या च **प्रतिसंख्यानिरोध**पदस्यार्थद्वयं गम्यते— वस्तुसत्ताप्रतिकूला, सन्तमिमं घटमसन्तं करोमीत्याकारिका बुद्धिः प्रतिसंख्या ; तद्विषयो निरोध इति ; अस्तित्वप्रतीपं यत् नास्तित्वम्, तद्विषयकोपलब्धिविषयो निरोध इति च । प्रतिकूलभाविघटक्षणपरम्पराकाले प्रतिक्षणभवाः निरोधास्तु अनुमेया एव, न प्रत्यक्षा इति । प्रतिपक्षभूता प्रज्ञा प्रतिसंख्येति **शान्तरक्षित तत्त्वसंग्रह**व्याख्या **कमलशीलपञ्जिका** । हेतुसाध्ययोरैक्यपरिहाराय विच्छेदासंभवादिति व्याख्यानम् । **दीपस्ये**ति । इदं तमोपलपतितप्रनष्टोदबिन्दूपलक्षणम् । **युक्तत्वात्** । भूयसांन्यायात् लाघवाच्चेति भावः ॥ २१ ॥

आरम्भणाधिकरणे द्रव्यनित्यत्वस्योपपादितत्वात् निरोधो न भवतीत्युक्तम् । क्षणिकमेव द्रव्यमिति तन्नित्यत्वास्वीकारे दोषमप्याह **उभयथे**ति । **तुच्छात्** असतः । **तुच्छात्मकम्**—भावातिरिक्तम् । ननु विलक्षणयोरपि कार्यकारणभावस्वीकारात् अभावजन्यो भावोऽपि स्यात् । न ; वैलक्षण्येऽपि वस्त्वैक्यस्य प्रागुक्तत्वात् । न ह्यभावो भावश्चैको भवति । **भवद्भिः** वैभाषिकसौत्रान्तिकैः । शून्यवादिनस्तदिष्टं स्यादिति तत्र प्रत्यक्षविरोधं दर्शयति **न च प्रतीयते** इति । न च तुच्छत्वेन प्रतीयते इत्यर्थः । पूर्वं **तुच्छत्वे दोष** उक्तः । **पश्चात्तुच्छत्वे** दोषमाह **सत** इति । तथा च पूर्वं पश्चाच्च तुच्छत्वे मध्येऽपि तुच्छमेव भवेदिति सूत्रार्थः । **उभयथा** उभयतोऽपि तुच्छत्वे । ननु पूर्वक्षणादुत्तरक्षणोत्पत्तिवादिभिः

निरन्वयविनाशे सति, एकक्षणादूर्ध्वं कृत्स्नस्य जगतस्तुच्छतापत्तिरेव स्यात्। पश्चात् तुच्छात् जगदुत्पत्तौ अनन्तरोक्त तुच्छात्मकत्वमेव स्यात्। अत उभयथापि दोषात् न भवदुक्तप्रकारौ-वुत्पत्तिनिरोधौ ॥ २२ ॥

आकाशे चाविशेषात् । २ । २ । २३ ॥

बाह्याभ्यन्तरवस्तुनः स्थिरत्वप्रतिपादनाय प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधयोस्तुच्छरूपता निराकृता; तत्प्रसङ्गेन ताभ्यां सह तुच्छत्वेन सौगतैः परिगणितस्याऽऽकाशस्यापि तुच्छता प्रतिक्षिप्यते। आकाशे च निरुपाख्यता न युक्ता; भावरूपत्वेनाभ्युपगतपृथिव्यादिवत् आकाशस्यापि अबाधितप्रतीतिसिद्धत्वाविशेषात्। प्रतीयते ह्याकाशः, 'अत्र श्येनः पतति, अत्र गृध्रः' इति श्येनादिपतनदेशत्वेन। न च पृथिव्याद्यभावमात्रमाकाश इति वक्तुं शक्यम्, विकल्पासहत्वात्। पृथिव्यादेः प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यन्ताभावो वा आकाशः; सर्वथाऽप्याकाशप्रतीत्यनुपपत्तिः स्यात्। प्रागभावप्रध्वंसाभावयोराकाशत्वे, पृथिव्यादिषु वर्तमानेषु आकाशप्रतीत्ययोगात् निराकाशं जगत् स्यात्। इतरेतराभावस्याकाशत्वेऽपि, इतरेतराभावस्य तत्तद्वस्तुगतत्वेन तेषामन्तराले आकाशप्रतीतिर्न स्यात्। अत्यन्ताभावस्तु पृथिव्यादीनां न संभवति। अभावस्य विद्यमानपदार्थावस्थाविशेषत्वोपपादनाच्च

---

बौद्धैरभावादुत्पत्तिर्नोक्तेति नायं दोषः। न च असतः सज्जायत इति तेषां वादः प्रसिद्ध इति वाच्यम्-तत्र असत इत्यस्याविद्यमानादित्येवार्थात् वर्तमानविनाशप्रतियोगिघटक्षणात् वर्तमानो घटो भवतीति द्रव्यजन्यत्वस्यैव प्रतीतेः। पूर्वं पश्चाच्च यन्नास्ति, तत् मध्येऽपि नास्तीति कथनमप्ययुक्तम्—द्रव्यगतावस्थानां रूपरसादिगुणाना कर्मणाञ्च किञ्चित्कालसत्त्वस्य प्रामाणिकत्वादिति चेत्—उच्यते। घटक्षणस्य पूर्वस्योत्तरघटक्षणं प्रति सहकारिसापेक्षतया कारणत्वम्, उत निरपेक्षतया। आद्ये, कुर्वद्रूपं सहकारिनिरपेक्षमेव कारणमिति स्वसिद्धान्तविरोधः। अन्त्ये, मुद्गराभिघातस्थलेऽपि सदृशसंतानस्योत्पत्त्यापत्तिः। अत उभयथा च दोषः। अथ मुद्गरेण घटाभावे जनिते पश्चादेव कपालोत्पत्तिः; "अभावाद्भावोत्पत्तिः", "नानुपमृद्य प्रादुर्भावात्" इति चातएवोच्यते इति मन्यते—तर्हि तुच्छादुत्पत्त्या तुच्छतैव, न तु भावरूपतेत्येवमाशय उन्नेयः इति ॥ २२ ॥

अविशेषादित्यस्य भावत्वेन प्रतीयमानत्वाविशेषात, अनभ्युपगमे दोषाविशेषात, अविच्छिन्नत्वाविशेषादिति चार्थः। क्रमेण व्यक्तीभविष्यति। अत्यन्ताभावस्त्विति। किं सर्वदेशावच्छेदेन पृथिव्याद्यभावः, उतान्तरिक्षावच्छेदेन। नाद्यः, बाधितत्वात्। नान्त्यः, अन्तरिक्षेऽपि कदाचित् पक्ष्याद्यनेकपृथिवीसंबन्धादत्यन्ताभावायोगादिति भावः। अस्तु सामयिकाभाव एव कश्चिदिति चेत्—प्रभादेः सद्भावात् सर्वाभावः कथम्। प्रतिघातिद्रव्यसामयिकाभाव आकाश इति चेत्—तत्राह अभावस्येति। अयमभावः पदार्थावस्थाविशेषः अभावत्वात् अभावान्तरवदित्यनुमानात्। न चाप्रयोजकत्वम्, अभावस्य प्रतियोग्यनुयोग्युभयसापेक्षताया आनुभविकत्वादिति। ननु अत्र श्येनः पततीत्यत्र अत्रेति नाकाशस्य

आकाशस्याभावरूपत्वेऽपि न निरुपाख्यत्वम् । अण्डान्तर्वर्तिनश्चाकाशस्य त्रिवृत्करणोपदेशप्रदर्शितपञ्चीकरणेन रूपवत्त्वात् चाक्षुषत्वेऽप्यविरोधः ॥ २३ ॥

पूर्वप्रस्तुतं वस्तुनः स्थिरत्वमेवोपपाद्यते—

अनुस्मृतेश्च । २ । २ । २४ ॥

अनुस्मरणम्—पूर्वानुभूतवस्तुविषयं ज्ञानम्; प्रत्यभिज्ञानमित्यर्थः । तदेवेदमिति, सर्वं वस्तुजातमतीतकालानुभूतं प्रत्यभिज्ञायते । न च भवद्भिर्ज्वालादिष्विव सादृश्यनिबन्धनोऽयमेकत्वव्यामोह इति वक्तुं शक्यम्; व्यामुह्यतो ज्ञातुरेकस्यानभ्युपगमात् । न ह्यन्यानुभूतैकत्वं सादृश्यं वा स्वानुभूतस्यान्योऽनुसंधत्ते । अतो भिन्नकालवस्त्वाश्रयसादृश्यानुभवनिबन्धनमेकत्वव्यामोहं वदद्भिर्ज्ञातुरेकत्वमवश्याश्रयणीयम् । न च ज्ञेयेष्वपि घटादिषु ज्वालादिष्विव भेदसाधनप्रमाणमुपलभामहे; येन सादृश्यनिबन्धनां प्रत्यभिज्ञां कल्पयेम ।

यदपि चेदमुच्यते—प्रत्यक्षानुमानाभ्यां घटादेः क्षणिकत्वं सिध्यति । प्रत्यक्षं तावत् वर्तमानार्थविषयम्, अवर्तमानाद्वस्तुनो व्यावृत्तं स्वविषयमवगमयति, नीलमिव पीतात् । एवं च भूतभविष्यद्भ्यां वर्तमानस्य वस्त्वन्तरत्वमवगतं भवति । अनुमानमपि—अर्थक्रियाकारित्वात् सत्त्वाच्च घटादिः क्षणिकः; यत् अक्षणिकं शशविषाणादि, तत् अनर्थक्रियाकारि, असच्च ।

---

ग्रहणम्, अप्रत्यक्षत्वादित्यत्राह अण्डेति । रूपवत्त्वादिति । अत एव नीलं नभ इति प्रतीतिः । ननु पक्षिपतनदेशे नैल्यं नोपलभ्यत इति चेत्—प्रभादिरूपेणाभिभवाद्ग्रहणम् ॥ तर्हि तत्राकाशो न गृह्येत ॥ नैवम् । प्रत्यक्षं प्रति रूपवत्त्वस्यैव प्रयोजकत्वात् । तद्गतरूपप्रत्यक्षे सत्येव तत्प्रत्यक्षमिति नियमाभावात् । अत एव शङ्खः पीत इति श्वेतरूपं विनाऽपि शङ्खप्रत्यक्षम् । अस्तु वा संनिहितस्थले आकाशे पञ्चीकरणप्राप्तं रूपान्तरम्; दूरे च नील इति । सर्वमिदं तर्कमूलप्रश्नस्य तर्कमूलं समाधानम्; नाकाशे रूपसाधने भाष्यनैर्भर्यम् । अत एव चाक्षुषत्वेऽपीत्यपिशब्दः । नीरूपोऽपि कालः सार्वेन्द्रियप्रत्यक्षविषयो भवति, तथा देशोऽयमपि किं न भवेत् । न च प्रभा वा तमो वा यथायथम् अत्रेत्यस्यार्थो भवत्विति शक्यम्; मध्याह्ने यत्राहमिदमपश्यम्, तत्रैवार्धरात्रेऽपि पश्यामीति अविशेषात् अभेदादेकाधिकरणकत्वप्रतीत्या तदयोगात् ॥

एवमविशेषादिति अविच्छेदाविशेषादिज्ञापनेन प्रत्यभिज्ञाप्रतीतेरुपस्थितत्वात्, नानुपपत्तिमात्रेण क्षणिकवभङ्गः, किंतु ज्ञातृज्ञेयसर्वस्थिरत्वसाधकप्रकृतप्रत्यभिज्ञाबलादपीत्याह अनुस्मृतेश्चेति । अनुसरणं सोऽयं घट इत्येवमादि । एकस्येति । पूर्वज्वालाद्रष्टुरुत्तरज्वालादर्शने सति तत्सादृश्यात् तदैक्यव्यामोह इति वक्तव्यम् । तथाचाऽऽत्मस्थैर्यमावश्यकमिति भावः । एवमात्मा स्थिरः अनुस्मृतिमत्त्वादित्यनुमानमुक्त्वा, ज्वालादृष्टान्तवैषम्येण विषयस्थैर्यमपि साधयति न चेति । भेदसाधनप्रमाणं ज्वालासु वर्तितैलांशरूपविभिन्नसामग्रीजन्यत्वम् । अत्राप्यस्ति प्रमाणमित्याशङ्कामुद्भाव्य परिहरति यदपीत्यादिना । अर्थक्रियाकारित्वात् । अर्थः फलम्; तत्क्रिया तन्निष्पत्तिः । किञ्चिन्निरूपितकारणत्वादित्यर्थः । अनर्थक्रियाकारि । अर्थक्रियाकारिभिन्नम् । अन्त्यघटक्षणसत्त्वादिति । अन्त्यः कपालोत्पत्तिप्राक्-

तथा अन्त्यघटक्षणसत्त्वात् पूर्वघटक्षणसत्त्वानि विनाशीनि, घटक्षणसत्त्वात्, अन्त्यघटक्षणसत्त्ववत् इति—

तच्च कार्यकारणभावानुपपत्त्यादिभिः पूर्वमेव निरस्तम्। किञ्च प्रत्यक्षगम्या वर्तमानस्यावर्तमानात् व्यावृत्तिर्न वर्तमानस्य वस्त्वन्तरत्वमवगमयति; अपि तु वर्तमानकालयोगितामात्रम्। न च तावता वस्त्वन्तरत्वं सिद्ध्यति; तस्यैव कालान्तरयोगसंभवात्। यत्तु सत्त्वादर्थक्रियाकारित्वाच्चेति क्षणिकत्वे हेतुद्वयमुक्तम्—तत् अभिमतविपरीतसाधनत्वाद्विरुद्धम्। सत्त्वादर्थक्रियाकारित्वाद्वा घटादि स्थास्नु; यदस्थास्नु तदसत्, अनर्थक्रियाकारि च, यथा शशविषाणमित्यपि हि वक्तुं शक्यम्। किञ्च अर्थक्रियाकारित्वमक्षणिकत्वमेव साधयेत्। क्षणध्वंसिनो हि व्यापारासंभवादर्थक्रियाकारित्वं न संभवतीत्युक्तम्। तथाऽन्त्यघटक्षणस्य हेतुतो नाशदर्शनादितरेऽपि घटक्षणाः हेत्वपेक्षविनाशास्स्युरिति आ मुद्गरादिहेतूपनिपातात् स्थास्नुत्वमेव। न च वाच्यम्—न मुद्गरादयो विनाशहेतवः, अपि तु कपालादिविसदृशसन्तानोत्पत्तिहेतव इति; कपालत्वावस्थापत्तिरेव घटादीनां विनाश इत्युपपादितत्वात्। कपालोत्पत्तिव्यतिरिक्तत्वाभ्युपगमेऽपि विनाशस्य, विनाशहेतुत्वमेव मुद्गरादेरानन्तर्यात् युक्तम्।

अतः प्रत्यभिज्ञया स्थिरत्वमवगम्यमानं न केनापि प्रकारेणापह्नोतुं शक्यम्। पूर्वापरकालसंबन्ध्यैकविषयायाः प्रत्यभिज्ञाया अन्यविषयत्वं ब्रुवन् नीलादिज्ञानानामपि नीलादेरर्थान्तरविषयत्वं ब्रूयात्। किञ्च प्रमातृप्रमेययोः क्षणिकत्वं वदद्भिर्व्याप्त्यवधारणतत्स्मरणपूर्वकानुमानाभ्युपगमोऽपि दुश्शकः। तथा—इदं क्षणिकमित्यादिप्रतिज्ञापूर्वकहेतूपन्यासादिकमपि नोपपद्यते भवताम्; प्रतिज्ञोपक्रमक्षण एव वक्तुर्विनष्टत्वात्; न ह्यन्येनोपक्रान्तमजानद्भिरन्यैः समापयितुं शक्यम्॥ २४॥

---

णस्य: घटरूपः क्षणः; तदेव सत्त्वं वस्तु। स्वार्थे त्वप्रत्ययः। अस्य पूर्वेत्यत्रान्वयः। **घटक्षणसत्त्वा**दित्यत्र तु भावार्थे त्वप्रत्ययः। न चान्त्यघटक्षण इतीदमेव कथं सिद्धमिति शंक्यम्—कपालोत्पत्तिव्यवहितपूर्वक्षणावच्छिन्नघटः अव्यवहितपूर्वक्षणावच्छिन्नघटादन्यः कपालाजनकत्वादिति भेदानुमानात्। एवं तत्पूर्वक्षणघटः तद्घटादन्यः अन्त्यघटक्षणाजनकत्वादिति रीत्या प्रतिक्षणघटभेदसिद्धेः। क्षणिकत्वात् वस्त्वेव क्षणशब्देन व्यवह्रियते। एवं विभिन्नानां घटक्षणानां विनाशानुमानमत्रोक्तम्। **यदपी**त्युक्तस्य **तच्चे**ति परामर्शः। कार्यकारणभावानुपपत्तिः प्रथमद्वितीयसूत्रोक्ता। **आदि**ना इन्द्रियसंप्रयुक्तत्वप्रत्यक्षविषयत्वप्रत्यभिज्ञाविषयत्वानुपपत्तयो गृह्यन्ते। **किञ्चे**ति अवर्तमानव्यावृत्तिर्नाम प्रकृतकालासंबन्धिव्यावृत्तिः प्रकृतकालसंबन्ध एव; न तु पूर्वकालासंबन्धोऽपीति। **इत्यपि** हीति। नन्वेवं पक्षद्वयसाधकत्वे कथं विरुद्धता। न च सत्प्रतिपक्षता, विपरीतसाधकहेत्वन्तरं हि प्रतिपक्षः। न चेदं हेत्वन्तरमिति चेन्न-तदभिमतासाधकत्वरूपविरुद्धत्वस्याक्षतेः। एकस्योभयसाधकत्वायोगेन कतरस्येति परामर्शे विपरीतसाधकत्वे पर्यवसानाच्च। तदिदं **विशदयितुमाह किञ्च अर्थे**ति। **आनन्तर्या**दिति। मुद्गराभिघातः घटनाशः कपालोत्पत्तिरिति क्रमादिति भावः॥

नासतोऽदृष्टत्वात् । २ । २ । २५ ॥

एवं तावत् वैभाषिकसौत्रान्तिकयोर्बाह्यार्थास्तित्ववादिनोः साधारणानि दूषणानि उक्तानि; तत्र यदुक्तम्—संप्रयुक्तस्यार्थस्य ज्ञानोत्पत्तिकालेऽनवस्थितत्वान्न कस्यचिदर्थस्य ज्ञानविषयत्वं संभवतीति—तत्र सौत्रान्तिकः प्रत्यवतिष्ठते—न ज्ञानकालेऽनवस्थानमर्थस्य ज्ञानाविषयत्वहेतुः; ज्ञानोत्पत्तिहेतुत्वमेव हि ज्ञानविषयत्वम् । न चैतावता चक्षुरादेः ज्ञानविषयत्वप्रसङ्गः, स्वाकारसमर्पणेन ज्ञानहेतोरेव ज्ञानविषयत्वाभ्युपगमात् । ज्ञाने स्वाकारं समर्प्य विनष्टोऽप्यर्थो ज्ञानगतेन नीलाद्याकारेणानुमीयते । न च पूर्वपूर्वज्ञानेनोत्तरोत्तरज्ञानाकारसिद्धिः, नीलज्ञानसन्ततौ पीतज्ञानानुत्पत्तिप्रसङ्गात् । अतोऽर्थकृतमेव ज्ञानवैचित्र्यम्-इति ।

अत्रोच्यते-नासतोऽदृष्टत्वात्-इति । योऽयं ज्ञाने नीलादिराकार उपलभ्यते, स विनष्टस्यासतोऽर्थस्याऽऽकारो भवितुं नार्हति; कुतः? अदृष्टत्वात्-न खलु धर्मिणि विनष्टे तद्धर्मस्यार्थान्तरे ङ्क्रमणं दृष्टम् । प्रतिबिम्बादिकमपि स्थिरस्यैव भवति । तत्रापि न धर्ममात्रस्य । अतोऽर्थवैचित्र्यकृतं ज्ञानवैचित्र्यमर्थस्य ज्ञानकालेऽवस्थानादेव भवति ॥ २५ ॥

पुनरपि साधारणं दूषणमाह—

उदासीनानामपि चैवं सिद्धिः । २ । २ । २६ ॥

एवं क्षणिकत्व-असदुत्पत्ति-अहेतुकविनाशाद्यभ्युपगमे उदासीनानाम्-अनुद्युञ्जानानामपि

---

क्षणिकस्य कारणत्वायोगे उच्यमाने प्रतिज्ञाविरोधरूपस्वसिद्धान्तविरोधो वक्तव्य उक्त आसीत् । स दोषो वैभाषिकस्य स्यान्नाम; न सौत्रान्तिकस्य; तेन वर्तमानविषयकप्रत्यक्षस्यास्वीकारादिति शंकाया सौत्रान्तिकदूषणं तत्रैव वक्तव्यमासीत् । परन्तु उक्तसिद्धान्तविरोधवत् बाह्यस्यातुच्छत्वरूपतत्सिद्धान्तविरोधोऽप्यस्तीत्युपपादनार्थम् प्रतिसंख्यानिरोधमेव द्रव्यस्यानिच्छतामप्र संख्यानिरोधस्य का प्रसक्तिरिति असंस्कृतपदार्थप्रस्तावे कृते, तद्वत् असंस्कृत आकाशोऽपि सह शोधनीय इति स शोधितः । तत्र प्रत्यभिज्ञायाः प्रसक्ततया ज्ञातृज्ञेयस्थैर्यमप्युपपादितं पूर्वसूत्रेण । उभयसाधारणदूषणेनोपक्रान्तञ्चाधिकरणमुभयसाधारणदूषणेनैव समापनीयम् । अतः सौत्रान्तिकमात्रं प्रति वक्तव्यस्य दूषणस्य पश्चादनवकाशात् प्रतिज्ञाविरोधोद्भावनप्रसंगागतसर्वसमाप्तौ तस्यैवात्र बुद्धिस्थत्वाच्च तदुपरि सौत्रान्तिकस्याक्षेपं प्राप्तं परिहर्तुं सूत्रं प्रवृत्तमवतारयति **नासत** इति । अत एवात्र चकाराभाव; अस्य पृथगेकमात्रविषयकत्वात् । **स्वाकारे**ति । ज्ञाने स्वाकारसमर्पणहेतुत्वमेव ज्ञानविषयत्वमिति भावः । वैभाषिकेण बाह्यस्य प्रत्यक्षमंगीकृतम् । अयं त्वनुमेयत्ववादी । ज्ञानस्य साकारत्वमेष्टव्यम्; घटाकारज्ञानं पटाकारज्ञानमित्यनुभवात् । अनिष्टौ, एकस्य ज्ञानस्य ज्ञानान्तरवैलक्षण्यं न स्यात् । तत्तदाकारः कुतस्त्य इति विमर्शे, बाह्यविषयसमर्पित इत्येव वाच्यमिति भावः । बाह्यापलापी योगाचारः ज्ञानाकारः पूर्वज्ञानाधीन इत्याह; तथा किं न स्यादिति सगोत्रकलहं शमयति **न** चेति । **न खल्वि**ति । धर्मसंक्रमणमेव न दृष्टम्, नतरां धर्मिणि नष्टे । धर्मस्यापि धर्मिणा सह नाशध्रौव्यात् । **धर्ममात्रस्ये**ति धर्मिव्यवच्छेदः ॥ २५ ॥

**सर्वार्थसिद्धिः स्यात् । इष्टप्राप्तिरनिष्टनिवृत्तिर्वा प्रयत्नादिभिः साध्यते । क्षण[प्र]ध्वंसे हि सर्वेषां भावानां पूर्वपूर्वं वस्तु, तद्गतो वा विशेषः संस्कारादिको विद्यादिर्वा उत्तरत्र न कश्चिदनुवर्तेत इति प्रयत्नादिसाध्यं न किञ्चिदस्ति । एवं सति अहेतुसाध्यत्वात् सर्वसिद्धीनाम्, उदासीनानामप्यैहिकामुष्मिकफलं मोक्षश्च सिद्ध्येत् ॥ २६ ॥** इति समुदायाधिकरणम् ॥ ३ ॥

४९. (योगाचारदूषणम्) उपलब्ध्यधिकरणम् २-२-४.

नाभाव उपलब्धेः । २ । २ । २७ ॥

**विज्ञानमात्रास्तित्ववादिनो योगाचाराः प्रत्यवतिष्ठन्ते—यदुक्तमर्थवैचित्र्यकृतं ज्ञानवैचित्र्यमिति—तन्नोपपद्यते ; अर्थवत् ज्ञानानामेव साकाराणां स्वयमेव विचित्रत्वात् । तच्च स्वरूपवैचित्र्यं वासनावशादेवोपपद्यते । वासना च विलक्षणप्रत्ययप्रवाह एव । यद् घटाकारज्ञानं कपालाकारज्ञानस्योत्पादकम्, तस्य तथाविधस्योत्पादकं तत्पूर्वं घटज्ञानम् ; तस्य च तथाविधस्योत्पादकं ततःपूर्वं घटज्ञानम् इत्येवंरूपः प्रवाह एव वासनेत्युच्यते ॥ कथं बहिष्ठसर्षपमहीधरादे(दि)राकार आन्तरस्य ज्ञानस्येत्युच्यते ? ॥ इत्थम्—अर्थस्यापि व्यवहारयोग्यत्वं ज्ञानप्रकाशायत्तम् ; अन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गात् । प्रकाशमानस्य च ज्ञानस्य साकारत्वमवश्याश्रयणीयम् ; निराकारस्य प्रकाशायोगात् । एकश्चायमाकार उपलभ्यमानो ज्ञानस्यैव । तस्य च बहिर्वदवभासोऽपि भ्रमकृतः । ज्ञानार्थयोः सहोपलम्भनियमाच्च ज्ञानादव्यति-**

---

**संस्कारादिक** इति सुरनरमृगादिजन्मानुरूपभोगप्रवृत्त्युद्भवाय । **विद्यादि**रिति वक्ष्यमाणमोक्षरूपफलाभिप्रायेण । सूत्रे **एव**मित्यस्य क्षणिकत्वाद्यभ्युपगमे इत्यर्थः । **चकारः** प्रयतमानानां फलासिद्धिसमुच्चायकः ॥

**विलक्षणे**ति । यस्य प्रत्ययस्योत्तरं यादृश. प्रत्ययो जायते, तस्य तादृशकार्यकुर्वद्रूपत्वमेव वैलक्षण्यम् । तदनुरोधात् समानाकारप्रत्ययप्रवाहसमनन्तरमेव विजातीयप्रत्ययोत्पत्तिरित्यानुभविकमेतत् । 'ज्ञानक्षणस्य सामर्थ्यभेदो वासनापरनामा' इति **भामती** ; "आलयविज्ञानसंतानपतितमेवासंविदितं ज्ञानं वासना' इति च । योगाचारमते धर्मधर्मिभेदाभावात् विलक्षणप्रत्यय एवेत्युक्तम् । **अन्यथे**ति । ज्ञानं विनैव व्यवहारे इष्यमाणे परोपदेशमूलं किञ्चिद् ज्ञेयमिति न स्यात् । अज्ञानादननुष्ठानमिति न स्यात् । सर्वः स्वयमेव सत्यामपेक्षायां सर्वमनुतिष्ठेत् । अतः स्वविदितं परविदितमिति विशेषः स्वीकर्तव्य इति ज्ञानायत्तमेव सर्वमिति । साकारमेव च ज्ञानमुपलभ्यते इत्याह **उपलभ्यमान** इति । नन्वसावाकारो बाह्यगतः । घटस्याकार. पटस्याकार इत्येवमनुभवादित्यत्राह **तस्य चे**ति । एकस्त्वाकारः । तस्य ज्ञाननिष्ठत्वं बाह्यत्वमुभयं प्रतीयते । एकमुभयविधं न भवतीति एकतरप्रतिषेधे कार्ये बाह्यत्वं प्रतिषिध्यते लाघवादिति भाव. । बाह्यं वस्तु स्वगतमाकारं ज्ञानेऽर्पयतीति सौत्रान्तिकोक्तं किं न स्यादित्यत्राह **ज्ञानार्थयो**रिति । कदाचित् सहोपलम्भः कदाचिच्च पृथगुपलम्भ इति यदि, अभेदो न शक्यः साधयितुम् ; अतो **नियमा**दित्युक्तम् । ज्ञानेन सहैवार्थ उपलभ्यते, न तु तद्विनेति ज्ञानमेव स इत्यर्थः । अस्तु सहैवोपलम्भः, भेदश्चेति चेन्न-अभेदे लाघवाद् बाधकाभावेनैवाभेदसाधनात् । **अर्था-**

रिक्तोऽर्थः । किञ्च बाह्यमर्थमभ्युपयद्भिरपि घटपटादिविज्ञानेषु ज्ञानस्य तत्तदर्थासाधारण्यं तत्तदर्थसारूप्यमन्तरेण नोपपद्यत इत्यवश्यं ज्ञानेऽर्थसरूपं रूपमास्थेयम् । तावतैव सर्वव्यवहारोपपत्तेः तद्व्यतिरिक्तार्थकल्पना निष्प्रमाणिका । अतो विज्ञानमात्रमेव तत्त्वम्; न बाह्यार्थोऽस्ति—इति ।

एवं प्राप्ते प्रचक्ष्महे, नाभाव उपलब्धेः इति । ज्ञानातिरिक्तस्यार्थस्याभावो वक्तुं न शक्यते । कुतः? उपलब्धेः । ज्ञातुरात्मनोऽर्थविशेषव्यवहारयोग्यतापादनरूपेण ज्ञानस्योपलब्धेः । एवमे(मि)व हि सर्वे लौकिकाः प्रतियन्ति—'घटमहं जानामि' इति । एवंरूपेण सकर्मकेण सकर्तृकेण ज्ञाधात्वर्थेन सर्वलोकसाक्षिकमपरोक्षमवभासमानेनैव, 'ज्ञानमात्रमेव परमार्थः' इति साधयन्तः सर्वलोकोपहासोपकरणं भवन्तीति वेदवादच्छद्मप्रच्छन्नबौद्धनिराकरणे निपुणतरं प्रपञ्चितम् । यत्तु, "सहोपलम्भनियमादभेदो नीलतद्धियोः" इति—तत् स्ववचनविरुद्धम्; साहित्यस्यार्थभेदहेतुकत्वात् । तदर्थव्यवहारयोग्यतैकस्वरूपस्य ज्ञानस्य

---

साधारण्यम्—नेदं पटज्ञानम्, किंतु घटज्ञानमित्येवंरूपम् । अर्थसरूपमिति-अर्थाकारसमानमित्यर्थः । अत इति । घटप्रत्ययप्रवाहे सत्येव पटप्रत्ययाद्युत्पत्तेः अन्यथैव वासनावशात् निर्वाहादनुपपत्त्यभावात्, उपलभ्यमानस्याकारस्यैकतया अर्थव्यवहारोपजीव्यज्ञानगतत्वस्य युक्तत्वात्, अर्थरूपधर्मिणोऽपि ज्ञानानन्यत्वस्थापनात्, बाह्याकारवादिनाऽप्यवश्यमान्तराकारस्य स्वीकार्यत्वाच्चेत्यर्थः । एवं स्वप्नादिदृष्टान्तेन ज्ञानसामान्यस्यार्थरहितत्वं पूर्वपक्षिविवक्षितम् ॥ यदुक्तं ज्ञाने आकारोऽवश्यं स्वीकार्य इति—तन्न; विनैव तं व्यवहारनिर्वाहात्: बाह्यघटे ज्ञानस्य संबन्धमात्रेणोपपत्तेः । स्वीकारासंभवाच्च—:आकारो हि किं संस्थानमन्यद्वा । न हि द्रव्यातिरिक्तविषये संस्थानं सुवचम् । न च घटपटादिद्रव्यविषयके एकस्मिन् ज्ञाने तत्तत्संस्थानं सर्वं समावेष्टुमलम् । घटाकारं ज्ञानमित्यस्य हि घटविषयकं ज्ञानमित्यर्थः; न तु घटगताकारवद्ज्ञानमिति । अन्यश्चेत्-स विषयविषयिभाव एव । एवं विषयविषयिभावेन भेदे प्रतीयमाने को ब्रूयात् घटो ज्ञानमेवेति । एवं हि सति घटो ज्ञानमित्यनुभवेत्, न तु घटस्य ज्ञानमिति । अतो ज्ञानं यद्यङ्गीकार्यम्, तत् यथोपलभ्यते, तथैवाङ्गीकार्यमिति ज्ञातृज्ञेयसहितमेव सिद्ध्येत् । न च वासनया विचित्रप्रत्ययोत्पत्तिनिर्वाहः; तथासति कस्मात् कारणात् किं भवतीति दुर्निरूपं स्यात् । निरूपणे लोकप्रवृत्तिनिवृत्तिनिर्वाहायावश्यकेऽपि, यदि व्यवस्था न मन्यते, वरं कार्यकारणभावस्यापलापेनाऽऽकस्मिकं सर्वमिति चार्वाकवादः । वासनाऽपि च दुर्निरूपैवेत्यभिसंधायाह प्रचक्ष्महे इति । एवञ्च ज्ञानस्य क्वचिदंशेऽपि न भ्रान्तिता, बहिर्वस्तुसत्त्वात् ।

प्रच्छन्नबौद्धेति । बौद्धाः अर्थापलापिनोऽपि ज्ञानानामुत्पत्तिविनाशादि स्वीचक्रुः । इमे तु तदप्यपह्नुवत इति विशेषः । तेन ज्ञाननित्यतां कल्पयन्त इदमेव वेदवेद्यं ब्रह्मेति वास्तवब्रह्मादिसर्वापलापमेव मुखान्तरेण कुर्वन्तीति व्यक्तं जिज्ञासाधिकरणभाष्ये । साहित्यस्येति । न हि स्वमेव स्वसहितमिति व्यवह्रियते । ननु दृग्दृश्ययोः संबन्धस्य दुर्वचत्वात् दृश्याभाव इष्यते, न ह्यात्मगुणस्य बाह्यद्रव्येण

तेन सहोपलम्भनियमः तस्माद्वैलक्षण्यसाधनमिति च हास्यम् । निरन्वयविनाशिनां ज्ञानानामनुवर्तमानस्थिराकारविरहात् वासना च दुरुपपादा । विनष्टेन पूर्वज्ञानेनानुत्पन्नमुत्तरज्ञानं कथं वास्यते ? अतो ज्ञानवैचित्र्यमप्यर्थवैचित्र्यकृतमेव । तत्तदर्थव्यवहारयोग्यतापादनरूपतया साक्षात्प्रतीयमानस्य ज्ञानस्य तत्तदर्थसंबन्धायत्तं तत्तदसाधारण्यम् । संबन्धश्च संयोगलक्षणः । ज्ञानमपि हि द्रव्यमेव । प्रभाद्रव्यस्य प्रदीपगुणभूतस्येव, ज्ञानस्याप्यात्मगुणभूतस्य द्रव्यत्वमविरुद्धमित्युक्तम् । अतो न बाह्यार्थाभावः ॥ २७ ॥

यत् परैः स्वप्नज्ञानदृष्टान्तेन जागरितज्ञानानामपि निरालम्बनत्वमुक्तम्—तत्राह—

**वैधर्म्याच्च न स्वप्नादिवत् ॥ २ । २ । २८ ॥**

स्वप्नज्ञानवैधर्म्यात् जागरितज्ञानानामर्थशून्यत्वं न युज्यते वक्तुम् । स्वप्नज्ञानानि हि निद्रादिदोषदुष्टकरणजन्यानि, बाधितानि च ; जागरितज्ञानानि तु तद्विपरीतानीति तेषां न तत्साम्यम् । सर्वेषां च ज्ञानानामर्थशून्यत्वे, भवद्भिः साध्योऽप्यर्थो न सिद्ध्यति ; निरा-

---

संयोगः समवायो वेत्यत्राह **संबन्धश्चे**ति । संयोगादिरिव विषयविषयिभावोऽप्यानुभविको नापलप्यः । वस्तुतोऽस्मन्मते स संयोग एव ॥ अद्रव्यरूपादिविषयकत्वे कथं संयोग इति चेत्-तत्र संयुक्तघटाश्रितत्वं संबन्धः । ननु तत् घटगतधर्मान्तरसाधारणम् । न च तत् सर्वं ज्ञाने विषय इति चेन्न-कर्मवश्यानां प्रत्यक्षादिसामग्रीं विना ज्ञानोत्पत्त्यस्वीकारात् वस्तुविषयतां प्रति ज्ञानसामग्री प्रयोजिकेति, सामग्रीसंबन्धविशिष्टं ज्ञानसंयोग-तत्संयुक्ताश्रितत्वादिकमेव द्रव्यतद्गुणादिधर्मविषये यथार्हं ज्ञानसंबन्ध इति । नन्वतीतानागतपदार्थविषयकत्वे कथं संयोगः संबन्ध इति चेत् । न वै नः किञ्चिद् द्रव्यमतीतमनागतं वा ; निरन्वयविनाशास्वीकारात् । अवस्थानामेव ह्यतीतत्वानागतत्वे । द्रव्यं तु ज्ञानकालेऽस्तीति संयुक्तमेव । अवस्थाविषये च संयुक्तद्रव्याश्रितत्वमेव संबन्धः । तथाच तत्तत्सामग्रीसंबन्धविशिष्टनिरुक्तसंबन्धविशेष एव तद्विषयत्वं यथायथमर्थेषु । सामग्रीसंबन्धो यत्र नास्ति, न तस्य विषयत्वमिति निरवद्यम् ॥ २७ ॥

ननूपलब्धिविषयत्वमात्रेण वस्तुसाधनं न संभवति शुक्तिरजतादिसत्त्वप्रसंगात् । प्रत्युत जागरितप्रत्ययो निरालम्बनः प्रत्ययत्वात् स्वाप्नादिप्रत्ययवदिति निरालम्बनत्वानुमानं सुशकमिति योगाचाराभिमतं दूषयति **वैधर्म्या**दिति । **स्वप्नादीत्यादिपदेन** मायागन्धर्वनगरमृगतृष्णिकादिज्ञानग्रहणम् । तथा च पूर्वसूत्रे हेतुतया निर्दिष्टा उपलब्धिर्न स्वप्नादितुल्या वैधर्म्यादिति सूत्रार्थः । अबाधितोपलब्ध्या हि वस्तुसाधनमिति भावः । वतिप्रत्ययार्थः साम्यं निरालम्बनत्वम् । उक्तानुमाने दुष्टकारणजन्यत्वं बाधितत्वञ्चोपाधिरिति सूत्राभिप्रायः । तथाचोपाध्यभावात् साध्याभावसिद्धिरिति तादृशबाधितत्वाद्यभाव एव वैधर्म्यम् । **बाधितत्वं** बाधितार्थकत्वम् । चकाराभिप्रेतं दूषणान्तरमाह **सर्वेषाञ्चे**ति । निरालम्बनत्वानुमितिजनकपरामर्शादिकं सविषयकं निर्विषयकं वा । अन्त्ये निरालम्बनत्वरूपसाध्यासिद्धिः । व्याप्त्यविषयकज्ञानादनुमित्ययोगात् । आद्ये, निरालम्बनत्वनिरूपितव्याप्त्यादिरूपविषये भासमाने तत्र निरालम्बनत्वरूपसाध्याभावाद् व्यभिचार इति ॥ योगाचारेण तार्किकादिदृष्ट्या स्वाप्नार्थासत्यत्वसिद्धवत्कारेणानुमानप्रयोगात् तद्दृष्टावेव स्थित्वा

लम्बनानुमान[ज्ञान]स्याप्यर्थशून्यत्वात्। तस्यार्थवत्त्वे ज्ञानत्वस्यानैकान्त्यात् सुतरामर्थशून्यत्वासिद्धिः ॥ २८ ॥

न भावोऽनुपलब्धेः ॥ २ । २ । २९ ॥

न केवलस्यार्थशून्यस्य ज्ञानस्य भावः संभवति। कुतः? क्वचिदप्यनुपलब्धेः। न ह्यकर्तृकस्याकर्मकस्य वा ज्ञानस्य क्वचिदुपलब्धिः। स्वप्नज्ञानादिष्वपि नार्थशून्यत्वमिति ख्यातिनिरूपणे **प्रतिपादितम्** ॥ इति उपलब्ध्यधिकरणम् ॥ ४ ॥

---

सूत्रकृता स्वप्नस्य बाधितत्वमन्वारुह्य वैधर्म्यमुक्तम्। स्वाप्नार्थसत्यत्वस्य श्रुतिमात्रप्रमाणकत्वात् तस्य तर्कमात्रविचारावसरे निरूपणायोगात्। अन्ततस्तदनुपपत्तिपरिशीलनादेवादिपदप्रयोगः मृगतृष्णिकादिज्ञानग्रहणाय। वस्तुतः किञ्चिदंशे याथार्थ्यं सर्वस्यापि ज्ञानस्य तार्किकादिसंमतम्। सर्वांशयाथार्थ्यमपि जागरितेऽस्तीत्ययमेव स्वप्नादितो विशेषः। सिद्धान्तेऽपि स्वप्ने सर्वांशयाथार्थ्यं नेष्टम्। स्वाप्नव्यक्तिषु जागरितबन्धुभेदादेः ग्राह्यस्य मिथ्यात्वात्। इदमनन्तरसूत्रतो व्यक्तीभविष्यति। तदंशे मिथ्यात्वमादाय वैषम्यमत्र विवक्षितम् ॥ २८ ॥

वस्तुतो निरालम्बनत्वानुमानोपन्यासे दृष्टान्ते साध्यवैकल्यमर्थान्तरं वेति दर्शयितुमुपरिसूत्रम्। अयं भावः—साध्यमिदं किं यत्किञ्चिद्विषयकत्वाभावः उत परमार्थभूतकृत्स्नविषयकत्वाभावः, किंवा सविषयकत्वसामान्याभावः? आद्ये प्रतिज्ञानं ज्ञानान्तरविषयकिञ्चिद्विषयकत्वाभावस्यासिद्धत्वात् सर्वबाह्यापलापासिद्धिः। द्वितीयेऽपि यत्किञ्चित्परमार्थविषयकत्वेऽपि साध्यसंभवेन पूर्ववत् इष्टासिद्धिरेव। तृतीये स्वप्नादावपि विषयभानात् साध्यवैकल्यम्। परमार्थवस्तुविषयकत्वसामान्याभावः साध्यम् इति चेन्न—तार्किकादिपक्षेपि स्वप्नस्य पूर्वानुभूतार्थविषयकविभ्रमरूपतया वर्तमानत्वावगाहिदर्शनरूपत्वांशबाधेऽपि पूर्वानुभूतधर्मिण एव गृह्यमाणतया धर्म्यंशे पारमार्थ्याक्षतेः। भ्रान्तिज्ञानसामान्यस्य तदभाववति तत्प्रकारकतया पृथक्पृथक् धर्म्यंशे धर्मांशे च पारमार्थ्याक्षतेश्च। सर्वं ज्ञानं यथार्थमिति पक्षे तु सुतराम्। ननु क्वचिदप्यनुपलब्धेरित्ययुक्तम्, अर्थाविषयकज्ञानरूपस्यात्मनः सिद्धान्तीष्टत्वात्, तथा धर्मभूतज्ञानस्यापि सुषुप्तिप्रलययोर्निर्विषयकस्य स्वीकारादित्यत्रोपपादयति **न हीति**। विषयमपलपतस्ते त्वदभिमतस्य वस्तुनो ज्ञानत्वे किं प्रमाणम्, आगमोऽनुभवो वा। आद्यः किमनुभवमूलकः अपौरुषेयो वा। तत्र प्रथमस्यान्त्यपक्षनिरसनेनैव निरासः। द्वितीयस्तु न त्वन्मतेऽस्ति। नान्त्यः; जानामीत्यनुभवस्य कर्तृकर्मघटितविषयकत्वनैयत्येन तद्रहिते ज्ञानत्वासिद्धेः। सविषयकत्वमेव हि ज्ञानत्वम्। सिद्धान्ते आत्मनो ज्ञानत्वव्यवहारः स्वयम्प्रकाशत्वप्रयुक्तः। धर्मभूतज्ञानस्य सुषुप्त्यादौ न प्रकाशः, किंतु स्थितिमात्रम्। तदा तस्य ज्ञानत्वं तु विषयग्रहणस्वरूपयोग्यतामात्रेण। एतदुभयमपौरुषेयागमावगम्यं न प्रकृततर्कविचारविषय इति ॥ २९ ॥

'न भावोऽनुपलब्धेः' इति ज्ञेयाभावे ज्ञानमपि न सिद्ध्येदित्युक्तम्। तदिष्टम्; कस्याप्यभावात् स्थिरत्वक्षणिकत्वकार्यत्वकारणत्वग्राह्यत्वग्राहकत्वादिविचारः सर्वोऽप्यभित्तिचित्रायित इति प्रत्यवतिष्ठमानस्य

५०. (माध्यमिकदूषणम्) सर्वथानुपपत्त्यधिकरणम् २-२-५

## सर्वथाऽनुपपत्तेश्च ॥ २ । २ । ३० ॥

**अत्र सर्वशून्यवादी माध्यमिकः प्रत्यवतिष्ठते। शून्यवाद एव हि सुगतमतकाष्ठा। शिष्यबुद्धियोग्यतानुगुण्येनार्थाभ्युपगमादिना क्षणिकत्वादय उक्ताः। 'विज्ञानं बाह्यार्थश्च सर्वे न सन्ति, शून्यमेव तत्त्वम्; अभावापत्तिरेव च मोक्षः' इत्येव बुद्धस्याभिप्रायः। तदेव हि युक्तम्; शून्यस्याहेतुसाध्यतया स्वतःसिद्धेः। सत एव हि हेतुरन्वेषणीयः। तच्च सत् भावादभावाच्च नोत्पद्यते। भावात् तावन्न कस्यचिदुत्पत्तिर्दृष्टा; न हि घटादिरनुपमृदिते पिण्डादिके जायते; नाप्यभावादुत्पत्तिः संभवति; नष्टे पिण्डादिके ह्यभावादुत्पद्यमानं घटादिकमभावात्मकमेव स्यात्। तथा—स्वतः परतश्चोत्पत्तिर्न संभवति, स्वतः स्वोत्पत्तावात्माश्रय(यादि)दोषप्रसङ्गात्, प्रयोजनाभावाच्च। परतः परोत्पत्तौ परत्वाविशेषात् सर्वेषां सर्वेभ्य उत्पत्तिप्रसङ्गः। जन्माभावादेव विनाशस्याप्यभावः। अतः शून्यमेव तत्त्वम्। अतो जन्म-विनाश-सदसदादयो भ्रान्तिमात्रम्।**

---

प्रत्याख्यानमनन्तराधिकरणे। **शून्यम्** सर्वाभावः। ननु पूर्वेषां त्रयाणां बौद्धानां मते निरुपप्लवा चित्तसंततिरालयविज्ञानरूपाहमर्थधारा मोक्ष इति उपप्लवान्मोक्ष एव मोक्ष इति सुवचम्। शून्यवादे किमवशिष्यते; किं नाम कैवल्यमित्यत्राह **अभावापत्तिरेव** चेति। भावसत्ताभ्रान्तिमूलव्यवहारनिबन्धनदुःखाद्युच्छेदायाभावमतव्युत्पादनम्। अतः सर्वप्रवृत्त्युच्छेदे अभाव एव संपद्यत इति। नन्वस्य बौद्धतत्त्वस्य कुतस्सिद्धिरित्यत्रोपपादयति **तदेवहीति**। कुतः सिद्धिरिति किं कारकप्रश्न. उत ज्ञापकप्रश्न.। नाद्यः, अभावस्य नित्यत्वात्। भावस्यैव ह्युत्पत्त्यपेक्षा। नान्त्य; भावसाधकप्रमाणाभावे तत एव स्वसाधकप्रमाणान्तरं विनैव तत्सिद्धेः। तदाह **शून्यस्येति**। ननु सतो घटादेः कारकस्य मृत्पिण्डादेः, ज्ञापकस्य प्रत्यक्षादेश्च सत्त्वात् भावसाधकाभावादभावसिद्धिरिति न शक्यं वक्तुमित्यत्र तस्य भावासाधकत्वमुपपादयति **तच्च सदिति**। **अनुपमृदिते** इति। तथाच **न्यायसूत्रे**, "नानुपमृद्य प्रादुर्भावात्" इति। **विनाशस्यापीति**। नन्वेवं घटादिर्भाव एव नित्योऽस्तु; किं शून्यवादेनेत्यत्राह **अत** इति। न तावद् घटादिर्नित्यः; सर्वदोपलब्धिप्रसंगात्। ननु सर्वदाऽनुपलब्धिप्रसङ्गात् घटादेः सत्त्वमवर्जनीयमिति चेन्न-अनित्यतया नित्यतया वा तत्सिद्ध्ययोगे निश्चिते घटादिरपरमार्थो भ्रान्तिविषय इत्येव हि युक्तम्। अतो घटादेरसत्त्वे जन्म-विनाश-कादाचित्कतत्सत्त्व-कादाचित्कतदभाव-किञ्चित्कार्यकरत्वादिकं सर्वं भ्रान्तिविषय इति। **सदसदादय** इत्यनेन, "न सन्नासन्न सदसत् न चाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः" इतीदं ज्ञाप्यते। यदि किञ्चित् सत् स्यात्, सर्वदा स्यात्; यद्यसत् स्यात, कदापि न स्यात्। न चैकमेव सत् असच्च; मिथो विरोधात्। नापि सद्भिन्नत्वासद्भिन्नत्वसमुच्चयः, सद्भिन्नत्वस्यासत्त्वरूपतया असद्भिन्नत्वस्य सत्त्वरूपतया च पूर्वोक्तस्य विरोधस्य तादवस्थ्यात्। अतश्चतुर्थोऽपि न भवति तत्त्वम्। ननु किमपि नास्तीति वदता माध्यमिकेन असद्वादे क्रियमाणे कथम-

**न च निरधिष्ठानभ्रमासंभवात् भ्रमाधिष्ठानं किञ्चित् पारमार्थिकं तत्त्वमाश्रयितव्यम्; दोष-दोषाश्रयत्व-ज्ञातृत्वाद्यपारमार्थ्येऽपि भ्रमोपपत्तिवत् अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः।**

**अतः शून्यमेव तत्त्वम्—**

**इति प्राप्ते उच्यते—**सर्वथानुपपत्तेश्च—**इति। सर्वथानुपपत्तेः सर्वशून्यत्वं च भवदभिप्रेतं न संभवति। किं भवान् सर्वं सदिति वा प्रतिजानीते, असदिति वा, अन्यथा वा;**

---

सत्कोटिविनिर्मोकः तदीयतत्त्वस्येति चेत्—न सत् असदिति हि सत्प्रतियोगिकाभाव उच्यते। स न भवति; प्रतियोग्यप्रसिद्धेः। अतः प्रतियोगिनिरपेक्षोऽयमभावः अत एव शून्यपदपरिभाषित इति जगत्प्रसिद्धासद्विलक्षणमिदं शून्यम्। अतो घटादिबुद्धिर्भ्रान्तिरेवेति न ततो वस्तुसिद्धिरिति।

अद्वैतिनो घटादिबुद्धेर्भ्रान्तित्वमिच्छन्तोऽपि शुक्तौ रजतस्येव क्वचिदधिष्ठान एव घटादिभ्रमस्य वक्तव्यत्वादेकमधिष्ठानमवर्जनीयमिति मत्वा ब्रह्म स्वीकुर्वन्ति; तदपि निरस्यति **न च निरधिष्ठाने**ति। न च माध्यमिकसंमतं शून्यमेवाधिष्ठानमिति कथं निरधिष्ठानतेति शंक्यम्—तथासति तस्याद्वैताविशेषप्रसङ्गात्। अतः प्रमाणग्राह्यं वा स्वयम्प्रकाशं वा किञ्चिदस्वीकृत्य शून्यमिति तुच्छालीकशशविषाणपर्यायस्य निर्देशात् न तत् अधिष्ठानम्। अधिष्ठानस्याभावे कथमिदमिति निर्देश इति चेत्-न; स्वप्नविभ्रमेषु बहिः कस्यचिदग्रहणेऽपि इदमिति दर्शनात्। अतो घटादिबुद्धिरेकैकाऽपि पूर्वपूर्वभ्रान्तिमूलस्मृतिरेव भ्रान्तिरूपेति। -

**सर्वथानुपपत्तेश्च।** चकारेण पूर्वसूत्रात् अनुपलब्धेरित्यस्यानुवर्तने, अनुपपद्यमानत्वात् अनुपलभ्यमानत्वाच्च न शून्यपक्ष इत्युक्तं भवति। त्वद्दूषणबाधकसद्भावात् साधकाभावाच्चेत्युक्तं भवति। अथवा **सर्वथे**त्यनेनैव प्रमेयविकल्पवत् प्रमाणविकल्पोऽप्यभिमतोऽस्तु। तदा चकारः शून्यवादश्चेत्यर्थकः। तथाच पूर्वे वादा इवायमपि वादो न भवतीत्यर्थः। इदं **सर्वशून्यत्वञ्चे**ति भाष्यादवगम्यते। अत्र पक्षे न चकारवैयर्थ्यम्; एकेनैव बुद्धेनाहृदयं पक्षान्तराणि अन्वारुह्य वदता पक्षोऽयमादृत इति सूचनार्थत्वात्। तदिदं **भवदभिप्रेत**मिति पदेन सूचितम्। यद्वा **चकारार्थः किञ्चकृतश्चि**दिति वक्ष्यमाणोऽस्तु। अनुपपत्तिमुद्घाटयति **कि**मित्यादिना। अयं भावः—लोके वस्तुनः किञ्चिद्रूपेण सत्त्वम् अन्यरूपेणासत्त्वञ्चाभिलक्ष्य सदिति असदिति वा सर्वं व्यवहरन्ति, नान्यथा। तद् भवता किं तथैव प्रतिज्ञायते, उतान्यथा। **अन्यथे**ति च किं सदसदिति, सदसद्विलक्षणमिति, उक्तसर्वकोटिनिर्मुक्तमिति वाऽभिमतम्। सर्वथा सत्त्वासत्त्वान्यतरस्मिन्नेव पर्यवसानमिति। एतेन-' बौद्धेन चतुष्कोटिविनिर्मुक्तवादिना सदित्यादिप्रतिज्ञाकरणप्रसक्त्यभावात् कथमेवं विकल्पः। न च सदिति प्रतिज्ञामात्रं तस्य दुष्करम्; असत्, उभयात्मकमित्यादिप्रतिज्ञाया अपि तदीयत्वाभावात् 'इति शंकायाः नावकाशः। लोकव्यवहारदर्शनेन, परीक्षकक्रियमाणेऽन्यथाव्यवहारेऽनौचित्यप्रदर्शनार्थत्वादस्य भाष्यस्य। अथवाऽत्र त्रेधा विकल्पादयमर्थः—भवता प्रतिज्ञावाक्यं कीदृशं प्रयुज्यते? सर्वं तुच्छं भवतीति वा, प्रमाणग्राह्यं न भवतीति वा, कोटिचतुष्कनिर्मुक्तमिति वा; अथ शब्दान्तरेण—चतुष्कोटिविनिर्मोकरूपेणास्तीति वा, चतुष्कोटिरूपं न भवतीति

**सर्वथा तत्राभिप्रेतं तुच्छत्वं न संभवति ; लोके भावाभावशब्दयोः तत्प्रतीत्योश्च विद्यमानस्यैव वस्तुनोऽवस्थाविशेषगोचरत्वस्य प्रतिपादितत्वात् । अतः सर्वं शून्यमिति प्रतिजानता, सर्वं सदिति प्रतिजानतेव, सर्वस्य विद्यमानस्यावस्थाविशेषयोगितैव प्रतिज्ञाता भवतीति भवदभिमता तुच्छता न कुतश्चिदपि सिद्ध्यति । किञ्च कुतश्चित् प्रमाणात् शून्यत्वमुपलभ्य शून्यत्वं**

---

वा, अस्तिनास्तिपदयोरेकमप्यप्रयुज्य चतुष्कोटिविनिर्मुक्तमित्येतावदेव वा । सर्वथा वस्तुसद्भाव एवेति ।

तदुपपादयति **लोके** इति । अयं भावः—सत्त्वमसत्त्वं सदसत्त्वञ्चानुभवारूढम् ; सदसद्विलक्षणत्वमनिर्वचनीयवादीष्टम् । सर्वनिरासमभिप्रेत्य चतुष्कोटिनिर्मोकवादः । तत्र चतुष्कोटिविनिर्मुक्तत्वमिति कल्पोऽपि कोटिचतुष्टयान्यतमासत्त्वमेवेति किञ्चिद्रूपासत्त्वपक्ष एव । लोके प्रतीतिर्व्यवहारश्च अस्तीति वा नास्तीति वा भवतीत्यानुभविकम् । तत्र घटोस्तीत्यत्र घटः सर्वकालवर्तीत्यर्थाभावात् सदित्यस्य सर्वकालसदित्यर्थकल्पनमयुक्तम् । घटः वर्तमानघटत्वावस्थ इति तदर्थः । घटो नास्तीत्युक्तौ अवर्तमानतदवस्थः वर्तमानावस्थान्तर इत्यर्थो भवति । एवञ्च, 'सच्चेत्, सर्वदैव स्यादित्यापादनमयुक्तम् । तथाव्याप्तेः त्वया कुत्राप्यग्रहणात् । असच्चेत्, कदापि नोपलभ्येतेत्येतदप्युक्तम् । कादाचित्काभावस्य सार्वकालिकानुपलम्भेन व्याप्त्यग्रहणात् । एवञ्च कालभेदेन सत्त्वमसत्त्वं सदसत्त्वञ्च सुनिरूढम् । एवं घटः स्वरूपेण सन्, पटात्मनाऽसन् ; तत्तदात्मना सन् असंश्चेत्यपि भाव्यम् । एवञ्चास्य सदसद्विलक्षणत्वं कुतः ? यदि तस्य सार्वकालिकसत्त्वविशिष्टात् सार्वकालिकासत्त्वविशिष्टाच्च विलक्षणमित्यर्थः, तर्हि कादाचित्कसत्त्वासत्त्वोभयविशिष्टमित्येव पर्यवसानम् । तथाच कथं चतुष्कोटिविनिर्मोकः । अतो घटादौ सत्त्वमसत्त्वं सदसत्त्वञ्चोपपन्नम् । सदसद्विलक्षणत्वं तु सार्वकालिकसत्त्वासत्त्वाभावविवक्षायामुपपन्नम् ; न चेत्, अनुपपन्नम् । एवमुपपन्नाकारे घटादौ एतदाकारविनिर्मोकोऽनुपपन्न एव । अथ किञ्चित्कालसत्त्वकिञ्चित्कालासत्त्वविशिष्टात् विलक्षणं न भवतीति विनिर्मुक्तपदार्थः, तर्हि सत्त्वासत्त्वे एवोक्ते भवतः । असत्त्वञ्चावस्थान्तरेण सत्त्वमेव । तथाच सदिति वादस्य शून्यमिति वादस्य च नार्थभेद इति । इदमेवोपसंहरति **अतः सर्वं शून्यमिति** । असत्पक्षस्यापि सत्पक्ष एव पर्यवसानात् स इह नोक्तः । शून्यमित्यपि न प्रतियोगिनिरपेक्षम्, अनेनेदं शून्यमित्येव व्यवहारात् । अभावाश्रयस्यैव शून्यपदार्थत्वात् तस्य च भावरूपत्वात्, अभावस्यापि भावत्वोपपादनाच्च भावरूपधर्मविशिष्टभावसिद्धिरेव शून्यमित्यतो लभ्यते । **तुच्छता ने**ति । शशविषाणादि ह्यप्रतीयमानत्वात् तुच्छम् । न च घटादिकमेवम् । प्रतिपन्नोपाधौ बाधाभावात् मिथ्यात्वमेव नास्ति ; कुतस्तुच्छता । ननु प्रागभावप्रध्वंसाभावयोः पूर्वोत्तरावस्थारूपत्वं स्यान्नाम । अत्यन्तान्योन्याभावयोः कथमवस्थात्वमिति चेत्-अवस्थेति असाधारणधर्मविशेष एव संस्थानपदेनेव विवक्षित इह । सदसत्पदयोर्वर्तमानकालसंबन्धप्रतीत्यौचित्यात् प्रागभावादि मनसिकृत्यावस्थाशब्दः प्रयुक्त इति । **कुतश्चि-दपी**त्यनेन प्रमेयविकल्पकरणवत् प्रमाणविकल्पकरणमप्यभिमतम् । प्रत्यक्षादिषु मध्ये किं प्रमाणं तुच्छग्राहकम् ; तुच्छस्याप्रतीयमानत्वादिति । एवं प्रामाणिककिञ्चिद्वस्त्वलीकवादे सर्वालीकवादे च दोषं [illegible] सर्वालीकवादे दोषान्तरं चकाराभिप्रेतमाह **किञ्च कुतश्चि**दिति । ननु न वयं तुच्छं

सिषाधयिषता तस्य प्रमाणस्य सत्यत्वमभ्युपेत्यम्; तस्यासत्यत्वे सर्वं सत्यं स्यात्—इति सर्वथा सर्वशून्यत्वं चानुपपन्नम् ॥ ३० ॥ इति सर्वथानुपपत्त्यधिकरणम् ॥ ५ ॥

५१. (जैनदूषणं) एकस्मिन्नसंभवाधिकरणम् २-२-६ ॥

नैकस्मिन् असंभवात् । २ । २ । ३१ ॥

निरस्ताः सौगताः । जैना अपि परमाणुकारणत्वादिकं जगतो वदन्तीति अनन्तरं जैनपक्षः प्रतिक्षिप्यते ।

ते किल मन्यन्ते—जीवाजीवात्मकं जगदेतन्निरीश्वरम्; तच्च षड्द्रव्यात्मकम् । तानि च द्रव्याणि जीवधर्माधर्मपुद्गलकालाकाशाख्यानि । तत्र जीवाः—बद्धाः, योगसिद्धाः, मुक्ताश्चेति त्रिविधाः । धर्मो नाम गतिमतां गतिहेतुभूतो द्रव्यविशेषो जगद्व्यापी, । अधर्मश्च स्थितिहेतुभूतो व्यापी । पुद्गलो नाम वर्णगन्धरसस्पर्शवद्द्रव्यम् । तच्च द्विविधम्-परमाणुरूपम्, तत्सङ्घातरूपं च पवनज्वलनसलिलधरणीतनुभुवनादिकम् । कालस्तु अभूदस्ति भविष्यतीति व्यवहारहेतुरणुरूपो द्रव्यविशेषः । आकाशोऽप्येकोऽनन्तप्रदेशश्च । तेषु चाणुव्यतिरिक्तानि द्रव्याणि पञ्च अस्तिकाया इति च संगृह्यन्ते—जीवास्तिकायः, धर्मास्तिकायः, अधर्मास्तिकायः, पुद्गलास्तिकायः, आकाशास्तिकायः-इति । अनेकदेशवर्तिनि द्रव्येऽस्तिकायशब्दः प्रयुज्यते ।

---

साधयामः, किंतु परोक्तमतुच्छं प्रतिषेधाम इति चेत्-प्रतिषेधो हि नाम अत्रेदं नास्तीति प्रतियोग्यनुयोगिविशेषोपरागेणाभाववचनम्; न त्वनुपरागेण; अनुपलम्भात् । किञ्चिद्रूपेणासत्त्वञ्च रूपान्तरेण सत्त्वमेवेति युक्तमेव । एतद्विलक्षणं यदि किञ्चिद् विवक्षसि, तदपि प्रमाणं विना न वक्तुमर्हसीति ॥ ३० ॥

सर्वकोटिनिर्मुक्तवादी निरस्तः; अथ सर्वकोटिसमाहारवादी निरस्यते । अयं कोटिचतुष्कमार्गेणानुपरम्य सप्तभङ्गीं प्रतिवस्तु प्रवर्तयति । एवमनेकविधपरमाणुवादिनिरासानन्तरमेकविधपरमाणुवादिनिरास इत्यपि भाव्यम् । कारणत्वादिकमित्यादिपदेन निरीश्वरत्वग्रहणम् । तन्मतप्रक्रियां व्युत्पादयति ते किलेति । स्वागममूलं जैनैरुच्यमानं सर्वं बाह्यागमाप्रामाण्यस्य पूर्वमीमांसायां निरूपितत्वादेव सति वेदविरोधे निरस्तमिति न तद्विस्तरः सूत्रकृदभिमतः । किंतु युक्त्या तैरुपपाद्यमाना सप्तभंगी, आत्मनः सविकारता चात्र निरस्यते । अजीवे पाञ्चविध्यमभिप्रेत्याह षड्द्रव्येति । पुद्गल इति । शब्दोऽयं बौद्धैरपि प्रयुज्यते । रमणीयपर्यायतयाऽपि व्यवहरन्ति । पुट् इति पोषणस्य गल इति गलनस्य च कथनात् पुद्गलशब्दो विकृतः उपचयापचयार्हद्रव्यपरः प्रयुज्यत इति परमाणु-तत्कार्यपरो भवति । स्थितिः गतिनिरोधः । कालस्तु इति तुकारः विभुत्वार्हस्य सर्वमतवैलक्षण्येनाणुत्वं तदिष्टमिति अनादरव्यञ्जनाय । एक इति । एकस्यैव द्वेधाविभागोऽपि तैः कृतः, लोकाकाशः अलोकाकाश इति । लोकानामन्तर्वर्ती लोकाकाशः । सर्वातिक्रमे स्थित आकाशोऽन्यः, यत् मोक्षस्थानम्, 'अद्यापि न निवर्तन्ते अलोकाकाशमार्गगाः' इति ह्याहुः । अनेकेति । कायशब्दस्य स्थूलपरत्वेन स्थूलरूपेण अनेकदेशास्ति-

जीवानां मोक्षोपयोगिनमपरमपि संग्रहं कुर्वन्ति--जीवाजीवाऽऽस्रवबन्धनिर्जरसंवरमोक्षा इति। मोक्षसंग्रहेण मोक्षोपायश्च गृहीतः। स च सम्यग्ज्ञानदर्शनचारित्ररूपः। तत्र जीवस्तु ज्ञानदर्शनसुखवीर्यगुणः। अजीवश्च जीवभोग्यवस्तुजातम्। आस्रवः तद्भोगोपकरणभूतमिन्द्रियादिकम्। बन्धश्चाष्टविधः-घातिकर्मचतुष्टयम् अघातिकर्मचतुष्टयं चेति। तत्राऽऽद्यं जीवगुणानां स्वाभाविकानां ज्ञानदर्शनवीर्यसुखानां प्रतिघातकरम्। अपरं शरीरसंस्थान-तदभिमान-तत्स्थिति-तत्प्रयुक्तसुखदुःखोपेक्षाहेतुभूतम्। निर्जरम् मोक्षसाधनम् अर्हदुपदेशावगतं तपः। संवरो नाम इन्द्रियनिरोधः समाधिरूपः। मोक्षस्तु निवृत्तरागादिक्लेशस्य स्वाभाविकात्मस्वरूपाविर्भावः।

पृथिव्यादिहेतुभूताश्चाणवो वैशेषिकादीनामिव न चतुर्विधाः। अपित्वेकस्वभावाः। पृथिव्यादिभेदस्तु परिणामकृतः।

सर्वञ्च वस्तुजातं सत्त्वासत्त्वनित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वादिभिरनैकान्तिकमिच्छन्ति—स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यम्, स्यादस्ति-

---

त्वविशिष्टं द्रव्यम् **अस्तिकाय** इति परिभाष्यते।

यथा सिद्धान्ते वैलक्षण्यव्यक्तये तत्त्वत्रयविभागः, मोक्षोपयोगी अर्थपञ्चकविभागश्च; यथा च तार्किकमते पृथिव्यादौ नित्यानित्यविभागः, भोगाद्युपयोगितया शरीरेन्द्रियविषयविभागश्च, तथा जैनैरपि तत्त्वाना भेदकाकारेण विभागवत् मोक्षोपयोगि विभागान्तरमपि वर्णितम्। तदाह **जीवानामिति**। **घातिकर्मेति**। इदम् ज्ञानावरणीयम्, आनन्दावरणीयमित्यादिनाम्ना व्यवह्रियते। **अपरमिति**; अघातिकर्मेत्यर्थः। **इदं भामत्यादावन्यथानिरूपितम्**। अथाप्यसद्भाष्योक्तं **परिमले** आदृतम्। **तप** इति। तप्तशिलारोहणादि। **इन्द्रियनिरोधः** शमदमादिः। शमादिर्गुप्तिरित्युच्यते। मनोवाक्कायानां निग्रहः सः। एवं समितिरपि **संवरः**। सम्यक् इतिः **समितिः**, जन्तुहिंसापरिहाराय सम्यगादित्यप्रकाशिते प्रहते पथि गमनम्, मितभाषणभोजनादि च। अस्यान्याह्शमार्गादिनिवृत्तिरूपतया संवरत्वम्। आस्रवः स्रोतसो द्वारं संवृणोतीति संवर इति। **समाधिरूप** इति। समाधिशब्देनापि इन्द्रियनिरोध एवोच्यत इति भावः। नन्वेवं सम्यग्ज्ञानान्मोक्ष इत्यस्य तैरप्युक्तत्वात् स उपायो नोक्तः, तत्साधनस्य शमादेः, सद्व्यापारस्य चैवात्र संवरनिर्जरपदाभ्यामुक्तत्वादिति चेत्-अत एवाभाषि **मोक्षसंग्रहेण मोक्षोपायश्च गृहीत** इति। **शांकरभाष्ये**, 'आस्रवसंवरनिर्जरबन्धमोक्षाः' इति क्रमे सत्यपि अत्रान्यथा पाठः आस्रवस्य बन्धेन, संवरादेर्मोक्षेण च संनिकर्षात्। प्रवृत्त्यपेक्षया निवृत्तिरूपशमादेर्योगान्तरङ्गत्वात् **निर्जरसंवरे**ति क्रमग्रहणम्। तदधीनज्ञानं मोक्षपदोपलक्षितम्। **आत्मस्वरूपे**ति पूर्वोक्तगुणचतुष्टयस्यापि ग्रहणम्।

**पृथिव्यादी**ति। **अस्यांशस्य पूर्वं विभागावसरे वक्तव्यत्वेऽपि** अत्र **कथनम् अनैकान्त्यवादिभि**रिदमैकान्त्यं स्वीकृतमस्तीति तत्कथनारम्भे उपस्थितत्वात्। **स्यादस्तीति**। एवं स्यान्नित्यं **स्यादनित्यम्**,

चावक्तव्यं च, स्यान्नास्ति चावक्तव्यं च, स्यादस्ति च नास्ति चावक्तव्यं चेति सर्वत्र सप्तभङ्गीनयावतारात्। सर्वं वस्तुजातं द्रव्यपर्यायात्मकमिति द्रव्यात्मना सत्त्वैकत्व नित्यत्वादि उपपादयन्ति; पर्यायात्मना च तद्विपरीतम्। पर्यायाश्च द्रव्यस्यावस्थाविशेषाः। तेषां च भावाभावरूपत्वात् सत्त्वासत्त्वादिकं सर्वमुपपन्नम्--इति ॥

अत्राभिधीयते—नैकस्मिन्नसंभवात्-इति। नैतदुपपद्यते; कुतः? एकस्मिन् असंभवात्—एकस्मिन् वस्तुनि अस्तित्वनास्तित्वादेर्विरुद्धस्य छायातपवत् युगपदसंभवात्। एतदुक्तं भवति—द्रव्यस्य, तद्विशेषणभूतपर्यायशब्दाभिधेयावस्थाविशेषस्य च पृथक्पदार्थत्वात् नैकस्मिन् विरुद्धधर्मसमावेशः संभवति—इति। तथा हि—एकेन अस्तित्वादिनाऽवस्थाविशेषेण विशिष्टस्य तदानीमेव न तद्विपरीतनास्तित्वादिविशिष्टत्वं संभवति। उत्पत्तिविनाशाख्यपरिणामविशेषास्पदत्वं च द्रव्यस्यानित्यत्वम्; तद्विपरीतं च नित्यत्वं तस्मिन् कथं समवैति। विरोधिधर्माश्रयत्वं च भिन्नत्वम्; तद्विपरीतं चाभिन्नत्वं कथं वा तस्मिन् समवैति?; यथा अश्वत्वमहिषत्वयोर्युगपदेकस्मिन्नसंभवः। अयमर्थः पूर्वमेव भेदाभेदवादि-

---

स्याद् भिन्नं स्यादभिन्नम् इत्याद्यपि पाठ्यम्। केचित् स्यादस्त्येव स्यान्नास्त्येव इत्युभयत्र एवकारमपि घटयन्ति, व्याख्यान्ति च—स्याच्छब्दो निपातः। अनेकान्त-विधि-विचाराद्यनेकार्थकोऽपि अयमत्रानेकान्तवाची; कथञ्चिदित्यर्थको वा। तदा केनचित् रूपेणास्ति, अन्यरूपेण नास्तीति ज्ञापितं भवति। अनेकान्तार्थकत्वे, वस्तुतोऽस्तित्वनास्तित्वरूपानेकधर्माश्रय एव अस्ति किञ्चिद्रूपेणेति सिद्ध्यति। तच्च किञ्चिद्रूपं द्रव्यधर्मकालदेशान्यतमम्। मृद्रूपेणास्ति, घटत्वरूपेणास्ति, तत्कालतोऽस्ति, तद्देशतोऽस्ति, अन्यरूपेण नास्तीत्येव मुपपाद्यम्। घटो मृद्रूपेणास्त्येव, न तु तद्रूपेण नास्तीत्येवं बोधयितुमेवकार इति। **स्यादस्ति च नास्ति च**। किञ्चिद्रूपावच्छिन्नसत्त्व-अन्यरूपावच्छिन्नासत्त्वोभयाश्रय इत्यर्थः॥ नन्वयमर्थः पूर्वभङ्गद्वयेनैव सिद्धः॥ नैवम्। तत्तदेकधर्मापेक्षया उभयस्यातिरिक्ततया पृथग्वक्तव्यत्वात्। **स्यादवक्तव्यम्**। एकेन पदेन सत्त्वासत्त्वोभयरूपेण वक्तुमशक्यम्। ननु अवक्तव्यत्ववत् वक्तव्यत्वस्यापि घटनेनाष्टभङ्गी किं न भवेदिति चेन्न-सत्त्वासत्त्ववत् वक्तव्यत्वावक्तव्यत्वघटने, स्याद्वक्तव्यं स्यादवक्तव्यमिति पृथक्सप्तभंग्यवतारात्। अस्तीत्युक्त्यैव वक्तव्यत्वस्य सिद्धत्वाच्च किञ्चिद्रूपेणावक्तव्यत्वमेव वक्तव्यमिति। केनाऽऽकारेण सत्त्वं केनाकारेण चासत्त्वमित्यत्र विवृणोति सर्वमिति। सप्तभंगी=एकान्तत्वभङ्गाः सप्त।

ननु कथमसंभवः, घटः किञ्चिद्रूपेणास्ति, अन्यरूपेण नास्तीति लोकानुभवात्। वेदेऽपि प्रलये ब्रह्म सदिति असदिति च कथ्यते इत्यत्राशयं दर्शयति **एतदुक्तंभवती**ति। द्रव्यात्मनाऽस्ति, पर्यायात्मना नास्ति इत्याकारभेदादविरोधवादिनः द्रव्यपर्याययोर्भेदस्तावदिष्टः। तत्र द्रव्यात्मनाऽस्तीत्यस्य द्रव्यमस्तीत्यर्थः। पर्यायात्मना नास्तीत्यस्य च पर्यायविशेषो नास्तीति। तथा च कथं तयोरेकनिष्ठत्वम्॥ पर्यायनिष्ठमेव नास्तित्वं पर्यायद्वारा द्रव्ये व्यवह्रियते इति चेत्-परमतादस्य, सर्वमनैकान्तिकमिति वादस्य को विशेषः। यत्र यदा यत् येन रूपेणास्ति, तत्र तदा तत् तेन रूपेणैव नास्तीत्युक्तावेव हि परमताद्विशेषः स्यात्, तथोक्तिरसंभविनी;

निरसनसमये "तत्तु समन्वयात्" (१-१-४) इत्यत्र प्रपञ्चितः ।

कालस्य पदार्थविशेषणतयैव प्रतीतेः तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः, न च परिहर्तव्याः । कालोऽस्ति नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्यः । जात्यादयो हि द्रव्यविशेषणतयैव प्रतीयन्त इति पूर्वमेवोक्तम् ॥

कथं पुनरेकमेव ब्रह्म सर्वात्मकमिति श्रोत्रियैरुच्यते ? ॥ सर्वचेतनाचेतनशरीरत्वात् सर्वज्ञस्य सर्वशक्तेः सत्यसङ्कल्पस्य पुरुषोत्तमस्येत्युक्तम् । शरीरशरीरिणोः तद्धर्माणाश्चात्यन्तवैलक्षण्यमप्युक्तम् ।

किञ्च जीवादीनां षण्णां द्रव्याणामेकद्रव्यपर्यायत्वाभावात् तेषु द्रव्यैकत्वेन पर्यायात्मना चैकत्वानेकत्वादयो दुरुपपादाः । अथोच्येत—षडेतानि द्रव्याणि स्वकीयैः पर्यायैः स्वेनस्वेन चाऽऽत्मना तथा भवन्ति-इति—एवमपि सर्वमनैकान्तिकमित्यभ्युपगमविरोधः ; अन्योन्यतादात्म्याभावात् । अतो न युक्तमिदं जैनमतम् ।

---

अन्यथोक्त्या तु नानैकान्त्यस्थापनं स्वासाधारणं भवतीति । **भेदाभेदवादि निरसनेति** । तत्र **भास्कर-मतखण्डने** हि सर्वं प्रपञ्चितम् । एवं साधारण्येनास्तित्वनास्तित्वयोरेकत्रासमावेशमभिधाय, जैनैः कालस्य पृथग्गणनं कर्तुमशक्यमिति कालविषये विशिष्य दोषान्तरमाह **कालस्येति** । सर्वेन्द्रियजन्यप्रत्यक्षादौ हि कालः तत्तद्वस्तुविशेषणतयैव भासते ; न हि कालविशेष्यकं प्रत्यक्षमस्ति । एवञ्च गोत्वादिजाति-नीलादि-गुणवत् प्रकारतयैव प्रत्यक्ष्यमाणः कालः जातिगुणादेः पृथक्परिगणनमकुर्वद्भिः पृथङ् न परिगणनीय इति । **पृथगि**त्यनेन विशेषणतया भासमानस्य कालस्य जात्यादिवत् धर्म्यतिरिक्तत्वस्य नापलाप इति ज्ञाप्यते । विशेषणतया भासमाने काले तादृशजात्यादाविव द्रव्यगतास्तित्वनास्तित्वातिरिक्तास्तित्वनास्तित्वाभावात् जीवपुद्गलादिविभिन्नद्रव्येषु पृथक् सप्तभंग्यवतारणवत् काले तदवतारणं जैनैर्न कार्यम् ; विशेष्यद्रव्येऽस्तित्वनास्तित्वरूपविरुद्धधर्मसमावेशासंभवोपपादनेन च तन्मतपरिहारस्यास्माभिः क्रियमाणतया तत एव कालविषयेऽपि तत्परिहारस्य सिद्धतया, तैः पृथगस्तित्वादिवचनेऽपि, न पृथगेतद्विषये परिहारप्रयत्नोऽस्माभिर्विधातव्योऽस्तीति विशिष्टार्थः । ननु विशेष्यतयाऽपि कालभानमस्तीत्याशंक्य, तत् परीक्षकव्यवहारे, न तु लौकिके इत्याशयेन प्रतिवक्ति **काल** इति । अस्तित्वं समभिव्याहृतपदार्थतावच्छेदकधर्मवत्त्वम् ; तदभावो नास्तित्वम् । घटोऽस्तीत्यस्य घटो वर्तमानघटत्वरूपावस्थात्मकजातिमानित्यर्थः । घटत्वमस्तीति व्यवहारस्तु उत्पत्तेरुत्पत्तिमत्त्वव्यवहारवत् वस्त्वन्तरापेक्षां विनैव । तद्वत् घटोस्तीत्यत्र विशेषणतया भातं कालमेव गृहीत्वा विवेचकैः कालोऽयमस्तीत्युच्यते । न तु कालस्य पृथक् धर्मसंबन्धः कालसंबन्धो वाऽस्तीति यावत् । एतेन—जातिगुणादेः कालसंबन्धरूपास्तित्ववत्तायां बाधकाभावात् कथं **जात्याद्यस्तित्वे**त्युक्तमिति शंकाया नावकाशः ; अस्तीत्यस्य समभिव्याहृतपदोपस्थापितावस्थादिरूपवर्तमानधर्मवत्त्वार्थकत्वात् तत् जात्यादौ पृथङ्नास्तीत्येव भाष्याशयात् कालसंबन्धाभावरूपसाजात्यस्याविवक्षणीयत्वात् । लोके जात्यादेः पृथग्भानाभावात् विशेषणतयैव भानात् विशेष्यान्वयितयैव अस्तीतिपदप्रयोगात् कालसं-

ईश्वरानधिष्ठितपरमाणुकारणवादे पूर्वोक्तदोषास्तथैवावतिष्ठन्ते ॥ ३१ ॥

एवं चाऽऽत्माकार्त्स्न्यम् ॥ २ । २ । ३२ ॥

एवं **भवदभ्युपगमे सति आत्मनश्चाकार्त्स्न्यं प्रसज्यते । जीवोऽसङ्ख्यातप्रदेशो देहपरि-**

---

बन्धो विशेषणे जात्यादौ पृथङ्नोच्यत इत्युक्तिसंभवाच्च । एवं कालविषये पृथग्दूषणारम्भगूढाशयस्तु सर्वदेशसर्वद्रव्यसंबन्धितया प्रतीयमानस्य कालस्य विभुत्वे स्वरसगम्ये अणुत्ववर्णनमप्रामाणिकमिति । अतिरिक्तविभुकालसद्भाव एवेष्ट इति श्रीभाष्यकृदाशयविवेचनं तु **नयद्युमणिभूमिकाया**मस्मत्कृतायां द्रष्टव्यम् । **नामसहस्रभाष्ये** च कालस्वरूपम**भियुक्तैः** शोधितम् । विशदश्च सर्वं **श्रीदेशिकग्रन्थेषु ।**

निरीश्वरत्ववादमपि निरस्यति **ईश्वरे**ति । **वादे**ःवादादित्यर्थः । **तथैव ।** सांख्यदूषणावसरोक्तं बौद्धमत इव जैनमतेऽपीति भावः । एकस्वभावपरमाणुतो नानास्वभावपृथिव्यादिभूतोत्पत्तिरत्र न दूषिता, एकरूपप्रकृतितः पञ्चभूतपर्यन्तविचित्रोत्पत्तिवत् सति प्रमाणे प्रतिषेध्यत्वानैर्भर्यात् । धर्माधर्मयोर्विभुत्वकथनमपि नित्यत्वापत्त्या, तयोरीश्वरप्रीतिकोपरूपगुणात्मकत्वस्य सांख्याधिकरणे उक्तत्वेन च निराकृतमित्युपेक्षितम् । आकाशद्वैविध्यवर्णनमव्याकृताकाशेऽप्याकाशपदप्रयोगसंभवादुपेक्षितम् । बन्धमोक्षतद्धेतुस्वरूपविचारस्तु तत्र प्रमाणतयाऽभिमतस्य जैनागमस्याप्रमाणत्वादेव न स्थास्यति । तथा मोक्षो नाम, जले पतितस्य पङ्कघनस्यालाबुफलस्य पङ्के क्षालिते उर्ध्वगमनमिव सततोर्ध्वगमनमिति, अलोकाकाशेऽवस्थानमिति च तैरुच्यते--तन्निर्धारणञ्च युक्त्या दुष्करम्, जीवपरिमाणविशेषनिर्धारणायत्तञ्च तदित्युपेक्षितम् । जीवपरिमाणमेव तदुक्तं विमृशति **एवञ्चे**त्यादिभिः सूत्रैः। क्षणिकसंतानात्मत्वं बौद्धेष्टमिव नानापरिणामशीलस्यात्मत्वमेतदिष्टमयुक्तमिति ।

आत्मनः कृत्स्नस्यैव अहमित्युपलम्भो भवति ; न त्वेकदेशतया । न चायं भ्रमः ; बाधकाभावात् । विभुत्वे चात्मनः कृत्स्नत्वं गृह्यमाणमनुपपन्नं स्यात् । न हि बहिरात्मास्तित्वमुपलभ्यते ; किंतु देहस्यान्तरेव । अतो देहाधिकपरिमाणो न भवत्यात्मा । न चाणुपरिमाणः । सर्वदेहांशावच्छेदेन वेदनानुपपत्तेः अतो देहसरूपः । अवयवानामसंख्यत्वाच्च यथादेहं परिमाणोपपत्तिरिति जैनमतम् । तत्रोच्यते-तत्तद्देहपरिमाणानां भिन्नभिन्नत्वात् नैकस्मिन्नसंभवादिति पूर्वोक्तरीत्या एकस्मिन् विरुद्धानेकपरिमाणायोगे सति यत्किञ्चिदेकदेहपरिमाणस्यैव स्वीकार्यतया तस्य महाशरीरसरूपत्वे मितशरीरे अपरिपूर्णता स्यात् । तथाच विभुत्वपक्षे भवदुक्तो दोष इह प्राप्नोति । मितशरीरसरूपत्वे च महाशरीरे कार्त्स्न्येन व्याप्त्यभावात् सर्वतोवेदनायोग इति भवदुक्तो दोष इति सूत्रार्थः । सूत्रे चकारः आत्माकार्त्स्न्यस्य पूर्वोक्तदोषेण समुच्चयार्थः । **एव**मित्यस्य विरुद्धानेकसमावेशासंभवे सतीति स्वरसोऽर्थो यद्यपि भवितुमर्हति—तथापि **एवंसति**—देहसमानपरिमाणत्वाभ्युपगमे सतीति व्याख्यानाभिप्रायेण **एवं भवदभ्युपगमे सती**ति भाषणम्, आत्माकार्त्स्न्यरूपदोषस्य दोषत्वं तदभ्युपगमविरुद्धत्वादिति ज्ञापनार्थम् । तेन, 'कथमकार्त्स्न्यं दोषः, तार्किकैर्विभुत्वस्वीकारात् । अस्माभिरपि विभोः परमात्मनो नानापरिमाणदेहस्वीकारात ; अणोरप्यात्मनो देहव्यापित्वाभावेऽपि वेदनादिनिर्वाहाच्च 'इति शंकाव्युदासः । तैरणुत्वविभुत्वे यदर्थं त्यक्ते, तत्फलासिद्धिरिति तदुक्तिविरोधप्रदर्शन एव तात्पर्यादिति । **असंख्यातप्रदेश** इति ।

माण इति हि भवतां स्थितिः। तत्र हस्त्यादिशरीरेऽवस्थितस्याऽऽत्मनः ततो न्यूनपरिमाणे पिपीलिकादिशरीरे प्रविशतोऽल्पदेशव्यापित्वेन अकार्त्स्न्यं प्रसज्यते---अपरिपूर्णता प्रसज्यत इत्यर्थः॥

अथ सङ्कोचविकासधर्मतया आत्मनः पर्यायशब्दाभिधेयावस्थान्तरापत्त्या विरोधः परिह्रियत इत्युच्यते ; (च्येत)—तत्राह—

न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ २ । २ । ३३ ॥

न च सङ्कोचविकासरूपावस्थान्तरापत्त्या विरोधः परिहर्तुं शक्यते, विकारतत्प्रयुक्तानित्यत्वादिदोषप्रसक्तेर्घटादितुल्यत्वप्रसङ्गात् ॥ ३३ ॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ २ । २ । ३४ ॥

जीवस्य यत् अन्त्यं परिमाणं मोक्षावस्थागतम्, तस्य पश्चाद्देहान्तरपरिग्रहाभावादवस्थितत्वात्, आत्मनश्च मोक्षावस्थ(स्थित)स्य तत्परिमाणस्य चोभयोर्नित्यत्वात् तदेव आत्मनः स्वाभाविकं परिमाणमिति, पूर्वमपि तस्मादविशेषः स्यात्। अतो देहपरिमाणत्वमात्मनो न

---

मन्तोऽवयवा इयन्त इति न गणयितुं शक्यन्ते इत्यर्थः। अल्पदेहपरिमाणस्यासंख्यातप्रदेशत्वं विरुद्धञ्च ॥३२॥

नन्वेकस्यानेकानि परिमाणानि कामं युगपद्विरुद्धानि, कालभेदेन तु न विरोध इति शंकां परिहर्तुमुपरि सूत्रम्। **पर्यायादपीत्यपि**शब्दः योगिभिर्युगपदनेकविचित्रदेहपरिग्रह. कथम्, विरोधपरिहारश्च कथमिति दूषणाभिप्रायेण। **अनित्यत्वादीत्यादि**पदेन जडत्वादिपरिग्रहः। यद् विविधपरिमाणं तत् अनियमचेतनञ्च दृष्टम्। नन्वनेकावस्थाभाजोपि प्रकृतेर्नित्यत्वं निरन्वयविनाशाभावरूपमिष्टम्, तावदेवात्मनोऽप्यस्तु इति चेन्न--सावयवत्वेऽवयवविशरणादिकमपि यथालोकं स्यादित्याशयात्। ननु संकोचविकासशालिनी प्रभेव स्यादिति चेत-साऽपि क्रमेण विशीर्यत एव। यस्त्वाह—भवन्मतधर्मभूतज्ञानवत् स्यात्। तत् कथमेवं दूष्यत इति--स वैदिकः प्रतिवक्तव्य —भवद्भिरस्माभिश्च परमपुरुषस्य विग्रहे स्वीक्रियमाणे कथं पशुपत्यधिकरणे सशरीरत्वे दोष उद्घाट्यत इति चिन्त्यताम्। शरीरस्य यौक्तिकत्वे स दोष इति चेत्—तुल्यम्। न हि वयं युक्त्या धर्मभूतज्ञानं सावयवमविशीर्णं स्थापयामः, किंतु श्रुत्या। किञ्चाऽऽत्मनः सावयवत्वेऽनेकत्वेन स्वानुभवः स्यात, एकावयवेनानुभूतमन्योऽवयवो न स्मर्तुमर्हतीति, पादेनानुभूतं हस्तेन गृह्णामीत्यादि च न स्यात्। एकावयवकृतस्य फलमन्योऽवयवो नानुभवेत्। अतः सावयवं न चेतनम्। निरवयवत्वे च न संकोचादिप्रसक्तिरित्यादिरप्यादिशब्दार्थः ॥ ३३ ॥

**उभयनित्यत्वात्** उभयोर्नित्यत्वमुभयनित्यत्वम्, तस्मात्। ननु किमर्थमिदं पदम्? उच्यते-अन्ते यत् परिमाणम्, तस्य तदनन्तरं स्थायित्वात् अनादित्वमावश्यकम्। तथाचात्मेव तदप्यनादीति दृष्टान्तविधयाऽऽत्मनिर्देशः। तथा एवं परिमाणस्यानाद्यन्तत्वेऽवस्थाभेदाभावात् आत्मनित्यत्वं प्रतिष्ठितं भवतीति ज्ञापनार्थञ्च। **अविशेषः** पूर्वं देहसरूपत्वरूपविशेषस्य नावकाश इत्यर्थः। किं तत् परिमाणमिति चेत्-यद्वा तद्वा भवतु तार्किकवेदान्त्यादिसंमतप्रमाणानुसारेण। वस्तुतो हस्तं वक्षसि निक्षिप्य अहमिति व्यवहारात् तत्रैव तत्स्थितिर्युक्तेति अणुत्वमेवेति हृदयम्। वक्ष्यति च, “अवस्थिति—हृदि हि” इति ॥ ३४ ॥

**स्यादिति, असङ्गतमेवेदमार्हतमतम् ॥ ३४ ॥** इति एकस्मिन्नसम्भवाधिकरणम् ॥ ६ ॥

५२. (पाशुपतदूषणं) पशुपत्यधिकरणम् २-२-७ ॥

पत्युरसामञ्जस्यात् ॥ २ । २ । ३५ ॥

**कपिलकणादसुगतार्हन्मतानामसामञ्जस्यात् वेदबाह्यत्वाच्च निश्श्रेयसार्थिभिरनादरणीयत्वमुक्तम्; इदानीं पशुपतिमतस्य वेदविरोधादसामञ्जस्याच्च अनादरणीयतोच्यते। तन्मतानुसारिणश्चतुर्विधाः—कापालाः, कालामुखाः, पाशुपताः, शैवाश्च—इति। सर्वे चैते वेदविरुद्धां तत्त्वप्रक्रियाम् ऐहिकामुष्मिकनिश्श्रेयससाधनकल्पनाश्च कल्पयन्ति। निमित्तोपादानयोर्भेदम्, निमित्तकारणं च पशुपतिमाचक्षते; तथा निश्श्रेयससाधनमपि मुद्रिकाषट्कधारणादिकम्। यथाऽऽहुः कापालाः (—) "मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः। भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति। कण्ठिका रुचकं चैव कुण्डलं च शिखामणिः। भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते॥ आभिर्मुद्रितदेहस्तु न भूय इह जायते" इत्यादिकम्। तथा कालामुखा अपि कपालपात्रभोजन-शवभस्मस्नान-तत्प्राशन-लगुडधारण-सुराकुम्भस्थापन-तदाधारदेवपूजादिकमैहिकामुष्मिकसकलफलसाधनमभिदधति। (—) "रुद्राक्षकङ्कणं हस्ते जटा चैका च मस्तके। कपालं भस्मना स्नानम्" इत्यादि च प्रसिद्धं शैवागमेषु। तथा केनचित् क्रियाविशेषेण विजातीयानामपि ब्राह्मण्यप्राप्तिमुत्तमाश्रमप्राप्तिं चाऽऽहुः, (—) "दीक्षाप्रवेशमात्रेण ब्राह्मणो भवति क्षणात्। कापालं व्र(म)तमास्थाय यतिर्भवति मानवः" इति—**

**तत्रेदमुच्यते—**पत्युरसामञ्जस्यात्**—इति। "नैकस्मिन्नसंभवात्" इत्यतो न इत्यनुवर्तते।** पत्युः**—पशुपतेः मतं नादरणीयम्; कुतः?** असामञ्जस्यात्। **असामञ्जस्यं च**

---

**इदानीमिति।** सांख्यादीनां क्रमे संगतिः प्रागेव दर्शिता। अतः परिशेषादवसरसंगत्या पाशुपतं निरसनीयं भवति। पाञ्चरात्रप्रामाण्यस्य वक्ष्यमाणत्वात् त्रिमूर्त्यन्तर्गतव्यक्तिपारम्यपरत्वरूपसंनिकर्षाच्च ततः प्रागस्यौचित्यम्। दिगम्बरेषु केषुचित् क्षितेषु अन्येषां दिगम्बराणां वेदोक्तप्रधानादिपदार्थाभ्युपगन्तृतया प्रामाणिकत्वं स्यादिति शंकयाऽपीदानीमिदं प्राप्तम्। उत्तरोत्तरनिकृष्टमतत्वादघटनात् पाशुपतस्यात्यन्तबाह्यत्वमभिप्रैति बादरायणः; ब्राह्मण्यादिविरुद्धधर्मलम्भन-हेयबहुविधाचारप्रचारणादिदर्शनात्। **पाशुपताः शैवाश्चेति।** अनयोः पदयोः माहेश्वरशब्दवत् चतुर्विधमतस्थसाधारण्येन प्रयोगेऽपि विशेषतोऽपि प्रयोग इष्टः। पाशुपतं नकुलीशपाशुपतशब्देन, शैवं सिद्धान्तशैवशब्देन च विशिष्यापि व्यवहरेयुः। **साधनकल्पनाः** साधनानुष्ठानानि। **कल्पयन्ति**-असत्प्रमाणमूलं वदन्ति। तत्त्वविपर्यये उदाहरणमाह **निमित्तेति।** अनुष्ठानविपर्यये तदाह **तथेति। रुचकमिति।** इदमप्येकं कण्ठाभरणम्। **शिखामणिः** शिखायां निबद्धो मणिः। **आभिः** मुद्रिकाभिः। **शैवागमेषु** कालामुखाचारप्रतिपादकेषु। **विजातीयानामपि** अब्राह्मणानामयतीनाञ्च। असंन्यासित्वे सत्येव मुख्यसंन्यासित्वस्वीकाराद् विरोधः।

**पत्युरिति** सौत्रं पदं चतुर्ष्वपि सूत्रेष्वनुवर्तते। पूर्वाधिकरणेषु प्रवर्तकपुरुषाणामनुक्तत्वेऽपि अत्र परं

**अन्योन्यव्याघातात् वेदविरोधाच्च । मुद्रिकाषट्कधारण-भगासनस्थात्मध्यान-सुराकुम्भस्थापन-तत्स्थदेवतार्चन-गूढाचार-श्मशानभस्मस्नान-प्रणवपूर्वाभिध्यानानि अन्योन्यविरुद्धानि । वेदविरुद्धं चेदं तत्त्वपरिकल्पनमुपासनमाचारश्च । वेदाः खलु परं ब्रह्म नारायणमेव जगन्निमित्तमुपादानं च वदन्ति—**(तै. नारा. १३) **"नारायण परं ब्रह्म तत्त्वं नारायणः परः । नारायण परो ज्योतिरात्मा नारायणः परः"**, (छा. ६-२-३) **"तदैक्षत बहु स्यां प्रजायेयेति"**, (तै. आन. ६) **"सोऽकामयत बहु स्यां प्रजायेयेति"**, (तै. आन.) **"तदात्मानं स्वयमकुरुत" इत्यादयः । परब्रह्मभूतपरमपुरुषवेदनमेव च मोक्षसाधनमुपासनं वदन्ति,** (पुरुषसू.) **"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे ... तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इत्यादिना एकतां गताः सर्वे वेदान्ताः । तदितिकर्तव्यताभूतं कर्म च वेदविहितवर्णाश्रमसंबन्धि यज्ञादिकमेव वदन्ति,** (बृ. ६-४ २२) **"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ... एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादयः । केवलपरतत्त्वप्रतिपादनपरनारायणानुवाकसिद्धतत्त्वपराः केषुचिदुपासनादिविधिपरेषु वाक्येषु श्रुताः प्रजापतिशिवेन्द्राकाशप्राणादिशब्दा इति,** (शारी. १-१-३१) **"शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यत्र प्रतिपादितम् । तथा,** (महोप. १-१) **"एको हवै नारायण आसीत्; न ब्रह्मा; नेशानः" इत्यारभ्य, "स एकाकी न रमेत" इति सृष्टिवाक्योदितं स्रष्टारं नारायणमेव समानप्रकरणस्थाः, 'सदेव सोम्येदमग्रे" इत्यादिषु साधारणाः सद्ब्रह्मात्मादिशब्दाः प्रतिपादयन्तीति,** (शारी. १-१-२) **"जन्माद्यस्य यतः" इत्यत्र प्रतिपादितम् । अतो वेदविरुद्धतत्त्वोपासनानुष्ठानाभिधानात् पशुपतिमतमनादरणीयमेव ॥ ३५ ॥**

---

एवमुक्तिरेतदर्थमेव । तथा प्रवर्तकस्य प्रतिपाद्यस्य चैकत्वमिति विशेषमभिलक्ष्य च । उत्तरसूत्रहेतूनामिव प्रथमसूत्रहेतोरपि साक्षात्पशुपतिनिष्ठत्वप्रत्यायनाच्च मतस्येव तस्याप्यसामञ्जस्यं दर्शितं भवति । सर्वज्ञः समञ्जस एव पशुपतिः पशूनां पापानुरोधेन परमात्मना सनिर्बन्धं प्रेरितोऽसमञ्जस आसीदिति ज्ञाप्यतेऽत्र । **गूढाचारः** स्वानुष्ठानाप्रख्यापनेन आगमार्थानुष्ठानम् । **अन्योन्यविरुद्धानी**ति । अत्रैकैकमपि एकागमपरिगृहीतमपरागमदूषितञ्चेत्यर्थः । नन्वथर्वशिरःप्रभृतिषु रुद्राद्युपासनमेव मोक्षसाधनत्वेन प्रतिपादितमिति शंकायाम्, तत् सर्वं तत्तदन्तर्यामिनारायणपर्यवसितमिति निरूपयितुमेव नारायणानुवाकः प्रवृत्त इत्याह **केवले**ति । न तु स्वयं किञ्चिदुपासनविधानार्थमयमनुवाक इति केवलपदतात्पर्यम् । स्पष्टमिदं लिङ्गभूयस्त्वाधिकरणे । ननु कारणध्यानमेव मोक्षसाधनम् । रुद्रः कारणमिति च, 'कारणं तु ध्येयः शम्भुराकाशमध्ये', 'एको रुद्रः' इत्यादिसिद्धमित्यत्राह **तथा एक** इति । **इत्यत्रे**ति । जन्मादिसूत्रस्य यतो वा इति श्रुतिविषयकत्वात् तस्य यत इत्यनुवादिवाक्यतया पुरोवादिवाक्यनिष्कृष्टार्थानुवादरूपत्वात् महोपनिषद्वाक्यस्य च पुरोवादान्तर्गतत्वात् नारायणस्यैव कारणत्वं तत्र सिद्धम् । न च नारायण उपादानम्; रुद्रो निमित्तमिति ;

अधिष्ठानानुपपत्तेश्च ॥ २ । २ । ३६ ॥

वेदबाह्यानाम्, अनुमानादिह केवलनिमित्तेश्वरकल्पना। तथा सति दृष्टानुसारेण कुलालादिवदधिष्ठानं कर्तव्यम्; न च कुलालादेर्मृदाद्यधिष्ठानवत् पशुपतेर्निमित्तभूतस्य प्रधानाधिष्ठानमुपपद्यते; अशरीरत्वात्। सशरीराणामेव हि कुलालादीनामधिष्ठानशक्तिर्दृष्टा: न चेश्वरस्य सशरीरत्वमभ्युपगन्तव्यम्, तच्छरीरस्य सावयवस्य नित्यत्वे अनित्यत्वे च, (शारी. १-१-३) "शास्त्रयोनित्वात्" इत्यत्र दोषस्योक्तत्वात् ॥ ३६ ॥

करणवच्चेन्न भोगादिभ्यः ॥ २ । २ । ३७ ॥

यथा भोक्तुर्जीवस्य करणकलेबराद्यधिष्ठानमशरीरस्यैव दृश्यते—तद्वत् महेश्वरस्याप्यशरीरस्य च प्रधानाधिष्ठानमुपपद्यत इति चेत्—न; भोगादिभ्यः। पुण्यपापरूपकर्मफलभोगार्थं पुण्यपापरूपादृष्टकारितं हि तदधिष्ठानम्; तद्वत् पशुपतेरपि पुण्यपापरूपादृष्टवत्तया तत्फलभोगादि सर्वं प्रसज्येत। अतो नाधिष्ठानसंभवः ॥ ३७ ॥

अन्तवत्त्वमसर्वज्ञता वा ॥ २ । २ । ३८ ॥

वाशब्दश्चार्थे। पशुपतेः पुण्यापुण्यरूपादृष्टवत्त्वे जीववत् अन्तवत्त्वं सृष्टिसंहाराद्यास्पदत्वमसर्वज्ञता च स्यादित्यनादरणीयमेवेदं मतम्।

(पू. मी. १-१-३) "विरोधे त्वनपेक्षं स्यात्" इत्यादिना वेदविरुद्धस्यानादरणीयत्वे सिद्धेऽपि, पशुपतिमतस्य वेदविरुद्धताख्यापनार्थम्, "पत्युरसामञ्जस्यात्" इति पुन-

---

निमित्तोपादानैक्यस्य श्रौतत्वात्; रुद्रनिषेधश्चेति भावः ॥३५॥ अशरीरस्य च। चोऽकरणत्वसमुच्चये ॥

नन्विदमधिकरणं किमर्थम्? न तावत् पशुपत्यागमानामाचारविषये प्रामाण्याभावज्ञापनार्थम्; तस्य पूर्वमीमांसायामेव सिद्धत्वात्। नापि पाशुपतमतानुरोधेन वेदान्तार्थश्चिन्तनीय इति तत्त्वविषये प्राप्ताक्षेपपरिहारार्थम्; तस्यापि 'एतेन शिष्टापरिग्रहा अपि व्याख्याताः' इति पूर्वपाद एव सिद्धेः। नापि युक्त्या तन्मतेषु दोषाविष्करणार्थम्; सांख्यादिमतेषु तत्संभवेऽपि रुद्रपारम्यरुद्राक्षधारणादेर्युक्त्या निरासायोगादित्याशंकायाम्, सर्वागमसाधारणमीश्वरानुमानिकत्वरूपं दोषमुद्घाट्यासामञ्जस्यमाह सूत्रत्रयेण। अत्र सूत्रोक्तमेव सर्वं शास्त्रयोनित्वाधिकरणेऽभिप्रेतत्वेन प्रतिपादितम् ॥ एवं युक्त्या दूषणीयमंशमभिधाय प्रथमसूत्रस्यावश्यकत्वप्रदर्शनेन पूर्वाधिकरणसार्थक्यमाह **विरोधे** इत्यादिना। कापालकालामुखयोः पूर्वमीमांसा निरासिका स्यात्; न पाशुपतस्य, नतरां सिद्धान्तशैवस्य; वेदाविरोध्याचारप्राचुर्यादित्याक्षेपोऽपि युक्त्या परमतखण्डनप्रकरणे पृथक्प्रयत्नमन्तरा निरस्यते। शिष्टापरिग्रहाधिकरणाद्यभिप्रेतरीत्या परावरव्यत्ययादितत्त्वविरोधादनाश्वसनीयौ शैवपाशुपतौ इति तदाराधनाभिप्रायेण तत्र निबद्धाः सदाचारा अपि श्वदृतिधृतक्षीरादिन्यायेनोपेक्ष्या इति कृत्स्नस्याप्रामाण्यमेवेति ज्ञापनमिहेति। तेनाथर्वशिरसि रुद्रस्योपास्यत्वाभिधानात् रुद्रान्तर्यामितया नारायणोपासनस्य भस्मधारणस्य च ततः सिद्धौ तथैवार्थमुपवर्ण्य आगमा अप्याद्रियन्तामित्यधिकाशंकाऽपि परिहृता भवति। परावरव्यत्यय-उपादानकारणत्वाभावादेः स्पष्टतया

रारम्भः। यद्यपि पाशुपतशैवयोर्वेदाविरोधिन इव केचन धर्माः प्रतीयन्ते—तथापि वेदविरुद्ध-निमित्तोपादानभेदकल्पना-परावरतत्त्वव्यत्ययकल्पनामूलत्वात् सर्वमसमञ्जसमेवेति 'असामञ्जस्यात्' इत्युक्तम् ॥ ३८ ॥ इति पशुपत्यधिकरणम् ॥ ७ ॥

५३. (श्रीपाञ्चरात्रप्रामाण्यम्) उत्पत्त्यसंभवाधिकरणम् २-२-८ ॥

उत्पत्त्यसंभवात् ॥ २ । २ । ३९ ॥

कपिलादितन्त्रसामान्यात् भगवदभिहित-परमनिःश्रेयससाधनावबोधिनि पञ्चरात्रतन्त्रेऽप्यप्रामाण्यमाशङ्क्य तन्निराक्रियते। तत्रैव(त्रेद)माशङ्क्यते—(परमसंहिता) "परमकारणात् परब्रह्मभूतात् वासुदेवात् सङ्कर्षणो नाम जीवो जायते; सङ्कर्षणात् प्रद्युम्नसंज्ञं मनो जायते; तस्मादनिरुद्धसंज्ञोऽहङ्कारो जायते" इति हि भागवतप्रक्रिया। अत्र हि जीवस्योत्पत्तिः श्रुतिविरुद्धा प्रतीयते। श्रुतयो हि जीवस्यानादित्वं वदन्ति, (कठ. २. १८) "न जायते म्रियते वा विपश्चित् इत्याद्याः ॥ ३९ ॥

न च कर्तुः करणम् ॥ २ । २ । ४० ॥

---

तद्विरोधेन नारायणपारम्यस्य तदभिमतत्वकल्पनायोगात् ॥ अत्र **टीकासूक्तिरवधानमर्हति**, "वेदान्तवाक्येषु द्वैताद्वैतयोरेव हि व्याख्यातॄणां विप्रतिपत्तिः। नारायणस्य ब्रह्मशिवादीनाञ्च द्वैतमद्वैतं वा भवतु। सर्वथाऽपि नारायणस्यापरत्वं तस्मात् कस्यचित् तत्त्वस्य परत्वं मोक्षप्रदत्वञ्च श्रुतिविरुद्धमिति सर्वाविगीतम्" इति। अद्वैतिनां शैवप्रायत्वमद्यत्वे लक्ष्यमाणमर्वाक्कालिकः क्षोभः वर्णाश्रमादिधर्मविपर्यय इव कलिकृतः॥

पाञ्चरात्राधिकरणं पादेऽत्र संगमयति **कपिलादी**ति। परमतनिराकरणार्थे पादे पाञ्चरात्रमतस्थापनमसंगतमित्याशंकापरिहारकमिदं भाष्यम्। परमतसाधकयुक्तिदूषणं किलास्मिन् पादे क्रियते। न च पाञ्चरात्रे युक्त्या कश्चिदर्थः स्थापितोऽस्ति, यद्दूषणायेदमधिकरणमित्युच्येत। अतस्तदप्रामाण्यस्थापकैः कथ्यमानं वेदविरोधादप्रामाण्यमपि प्रकृतासंगतमेव। तदपेक्षया औत्सर्गिकतन्त्ररीत्यपवाद इह क्रियत इति युज्यते। जैमिनीयद्वितीयसप्तमाध्यायशैलीमनुसृत्य च वर्णनमिदं रमणीयमिति **परमार्थभूषणे** प्रादर्शि। **अधिकरणसारावलौ** सर्वानुगतोऽपि पादार्थो दर्शितः—वेदस्य तन्त्रविरोधभ्रमनिवर्तनं पादार्थ इति। तत्र तन्त्रैर्वेदो विरुध्यते न वेति विचारः सर्वत्र तुल्यः। अन्येषां तन्त्राणां दुर्बलत्वादविरोधित्वमेतावद् व्युत्पादितम्; पाञ्चरात्रस्य तु विरुद्धार्थाप्रतिपादकत्वादेवाविरोधित्वं सुस्थमित्युच्यत इति विशेषः। अर्थात् पाञ्चरात्रप्रामाण्यस्थापने पर्यवसानमिति। युक्त्या पाशुपतनिराकरणार्थेऽपि पूर्वाधिकरणे वेदविरोधमूलकासामञ्जस्यकथनस्यापि प्रसक्तत्वात् तद्वदत्रापि वेदविरोधशंका प्राप्तेति अप्रामाण्ये प्रसक्ते तत्परिहारः क्रियत इति च ध्येयम्। अस्तु वा पूर्वपक्षसूत्रद्वयं स्वारस्यात् युक्तिविरोधदर्शकमपि। **संकर्षणो नामे**ति। अस्य, **प्रद्युम्नसंज्ञम् अनिरुद्धसंज्ञ** इति पदयोश्च विशेषणत्वं जीवमनोऽहंकारपदानां विशेष्यवाचित्वञ्च स्वरसम्। अतो जीवाद्युत्पत्तिरेवैतद्वाक्यार्थ इति पूर्वपक्षी मन्यते ॥

**कर्तुरि**ति पञ्चम्यन्तम्। एवमहङ्कारद्रव्यादेव मनस उत्पत्तेः प्रामाणिकत्वात् मनसो**ऽहङ्कारोत्पत्ति**-

"सङ्कर्षणात् प्रद्युम्नसंज्ञं मनो जायते" इति कर्तुः जीवात्, करणस्य मनस उत्पत्तिर्न संभवति, (मु. २-१. ३) "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति परस्मादेव ब्रह्मणो मनसोऽप्युत्पत्तिश्रुतेः।

अतः श्रुतिविरुद्धार्थप्रतिपादनादस्यापि तन्त्रस्य प्रामाण्यं प्रतिषिद्ध्यत इति—

एवं प्राप्ते प्रचक्ष्महे—

विज्ञानादिभावे वा तदप्रतिषेधः ॥ २ । २ । ४१ ॥

वाशब्दात् पक्षो विपरिवर्तते; विज्ञानं चाऽऽदि चेति परब्रह्म विज्ञानादि। सङ्कर्षणप्रद्युम्नानिरुद्धानामपि परब्रह्मभावे सति, तत्प्रतिपादनपरस्य शास्त्रस्य प्रामाण्यं न प्रतिषिध्यते।

---

रपि दूषणीया—अथापि सूत्रे तदकथनं मनसो गर्वापर्यायाहङ्काराख्यगुणोत्पत्त्या तद्विरुद्धेतेत्याशयेन ॥ **जायत इतीति**; जायत इत्युक्तेत्यर्थ. । **प्रतिषिद्ध्यत** इति । उत्तरसूत्रस्य **वाशब्दघटितत्वान्** सिद्धान्तसूत्रत्वमेव युज्यते। तत्र **तदप्रतिषेध** इति प्रयोगात् पूर्वपक्षः तत्प्रतिषेधविषयक इति स्पष्टम्। अतः पाञ्चरात्रे तत्प्रतिषेधस्य पूर्वपक्षताया एव सूत्रतः स्पष्टमवगमात् नेदमधिकरणं पाञ्चरात्रदूषकमित्यपि ध्येयम् ॥ ४० ॥

सिद्धान्तसूत्रार्थवर्णनप्रकाराः विस्तरेण श्रीभाष्यकृत्परमाचार्यानुगृहीते **आगमप्रामाण्ये** द्रष्टव्याः। **विज्ञानश्चाऽऽदि चेति**। अत्र पाठो निरीक्ष्यः। अयमेव तु पाठः सर्वादृतः। आदिशब्दस्य पुल्लिङ्गत्वं प्रसिद्धम्। आदीयते अस्मात् कार्यमिति **आदिः** कारणम्। अद भक्षण इत्यतो णिनिप्रत्यये **आदि** इति रूपं संहर्त्रर्थकमित्युक्तं **भावप्रकाशिकायाम्**। परंतु तत्र **विज्ञानश्चतदादि**चेति प्रतीकधारणं कृतम्। **टीकायां** न तथा। तथा चेत् पाठः, **तदादी**ति एकपदत्वमपि स्यात्। तद्गुणसंविज्ञानत्वादिज्ञापनाय विज्ञानश्चेत्येवं विवरणमात्रम्; विग्रहस्त्वन्यादृश एवाभिमतः। आदिशब्दप्रयोगे हि विशेष्यं समुदायिभूतमनेकं स्यात् क्वचित्. यथा सर्वादीनि इति; क्वचित् अनेकसमुदायिघटितः समुदायः स्यात्, यथा जन्मादीति। नैवमनेकवस्तुविवक्षाऽत्र; देवदत्तः श्यामो युवा लोहिताक्ष इति प्रयोगस्थाने देवदत्तः श्यामादिः इति प्रयोगे एकस्मिन्नेव यथा श्यामत्व-आदिशब्दविवक्षितांशसर्वान्वयः, तथा ब्रह्मणि विज्ञानत्वतदन्याकाराणामन्वय इति ज्ञापनाय कर्मधारयरीतिप्रदर्शनम्। एवञ्च विज्ञानपदं विशिष्टज्ञानगुणकपरम्; आदिपदेन शक्त्यादिगुणान्तरविशिष्टतया तद्वस्तु ज्ञाप्यते। तेन षाड्गुण्यविशिष्टं भगवच्छब्दवाच्यं वासुदेवाख्यं परं विज्ञानादि। तदाह **परं ब्रह्मे**ति। अत्र **परशब्दो** वासुदेवविवक्षया। तथा च संकर्षणादीनां परवासुदेवभावः, न तु जीवमनोहङ्कारभेदोऽर्थ इति सति न वाक्यस्याप्रामाण्यमिति सूत्रार्थः। **विज्ञानश्चाऽऽदि चे**त्येव पाठश्चेत्, आदिपदं संहर्तृपरं संकर्षणग्राहि। तस्य व्यूहस्य संहारव्याप्तत्वात् विज्ञानगुणकत्वाच्च विज्ञानादी संकर्षणः। संकर्षणशब्दार्थस्य विज्ञानगुणकसंहर्तृपरब्रह्मभावे सति इति **विवक्षितार्थः**। इदं **प्रद्युम्नादिशब्दार्थस्य** वीर्यादिगुणकस्रष्ट्रादिब्रह्मभावे इत्यस्याप्युपलक्षणम्। तदिदं संगृह्यते **संकर्षणे**त्यादिसमनन्तरवाक्येन। सूत्रे **विज्ञानादी**ति शब्दप्रयोगो बह्वर्थसूचनाय—'सत्यं ज्ञानम्'

एतदुक्तं भवति—भागवतप्रक्रियामजानतामिदं चोद्यम्—यत् जीवोत्पत्तिर्विरुद्धाऽभिहिता—इति। वासुदेवाख्यं परं ब्रह्मैवाऽऽश्रितवत्सलं स्वाश्रितसमाश्रयणीयत्वाय स्वेच्छया चतुर्धाऽवतिष्ठत इति हि तत्प्रक्रिया। यथा पौष्करसंहितायाम् ( — ) "कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपास्यते। क्रमागतैः स्वसंज्ञाभिः ब्राह्मणैरागमं तु तत्" इत्यादि। तच्च चातुरात्म्योपासनं वासुदेवाख्यपरब्रह्मोपासनमिति सात्त्वतसंहितायामुक्तम् (---) "ब्राह्मणानां हि सद्ब्रह्मवासुदेवाख्ययाजिनाम्। विवेकदं परं शास्त्रं ब्रह्मोपनिषदं महत्" इति। तद्धि वासुदेवाख्यं परं ब्रह्म संपूर्णषाड्गुण्यवपुः सूक्ष्मव्यूहविभवभेदभिन्नं यथाधिकारं भक्तैः ज्ञानपूर्वेण कर्मणा अभ्यर्चितं सम्यक् प्राप्यते। विभवार्चनात् व्यूहं प्राप्य व्यूहार्चनात् परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यत इति वदन्ति। विभवो हि नाम रामकृष्णादिप्रादुर्भावगणः। व्यूहो वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धरूपश्चतुर्व्यूहः। सूक्ष्मं तु केवलषाड्गुण्यविग्रहं वासुदेवाख्यं

---

इति प्रकृत्य 'आत्मन आकाशः' इति यत् विज्ञानत्वेन कारणत्वेन चोपनिषत्प्रसिद्धं ब्रह्म, तदित्येकोऽर्थः। सूक्ष्मचिदचिद्विशिष्टेश्वररूपकारणघटकेषु त्रिषु जडं सत् कारणम् अचित्; ज्ञानसंकोचवत् कारणं चित्; तदुभयविलक्षणं विशिष्टज्ञानकमेव कारणं यत् तत् ब्रह्मेत्यर्थान्तरम्। संकर्षणादिमूर्तीनां कारणभूतम्, अप्राकृततया विज्ञानस्वरूपञ्च यत् वासुदेवरूपम्, तत्कार्यतया तदभेदे इत्यन्योऽर्थः। जगत्कारणभूतविधिशिवविलक्षण-निरतिशयज्ञान-जगत्सृष्टिसंहारादिहेतुव्यूहभावे इत्यपरः। विज्ञानादिभिः षड्भिर्गुणैः द्विकद्विकात्मना विभक्तैः संकर्षणादिरूपेण ब्रह्मणो भावे इत्यपि। जीवमनोहङ्काराणां संकर्षणादिपदानि न विशेषणानि; किं तु जीवादिपदान्येव संकर्षणादिविशेषणानि। संकर्षणादिति उपरि प्रयोगात्। अतो जीवादिपदं जीवाद्यभिमानिपरमितीदमप्यत्रोच्यते। इदानीं **विज्ञान**पदं जीवपरम्; आदिना मन-आदिग्रहणम्। संकर्षणादीनां जीवादिभावे=जीवाद्यभिमानित्वे वाक्यार्थे सति न दोष इति। अलं विस्तरेण। **वा**शब्दस्य अप्यर्थकतां स्वीकृत्य प्रामाण्यप्रतिषेधपरतया सूत्रार्थवर्णनं सर्वथैव क्लिष्टम्॥ जीवादिपरत्वेऽप्युत्पत्त्यसंभवो यदि, सुतरां नित्यनिर्विकारब्रह्मपरत्वे इति शङ्का परिहर्तुमुपपादयन् पूर्वपक्षस्यात्यन्तफल्गुतामवगमयति **एतदुक्त**मित्यादिना। **यत्र** यं सिद्धान्तं प्रमाणीकृत्य; **क्रमागतैः** वंशपरम्परयैवाऽऽराधकतया स्थितैः ब्राह्मणैः; **स्वसंज्ञाभिः** संकर्षणादिसंज्ञापुरस्कारेण। **आगममि**ति। मन्त्रसिद्धान्तः आगमसिद्धान्तः, तन्त्रसिद्धान्तः, तन्त्रान्तरसिद्धान्त इति चतुर्षु आगमाख्यस्य चतुर्व्यूहोपासनविषयकत्वमित्यर्थः। **चातुरात्म्येति**। **आत्मा** रूपं व्यूहविग्रहः। वासुदेवे **सद्ब्रह्मे**ति विशेषणमुपनिषदैककण्ठ्यप्रदर्शनाय। **विभवार्चना**दिति। हार्दे योगिनामेवाधिकारः। नन्वर्चामूर्तिः कुतो नोक्ता॥ नैवम्। विभवान्तानामेवार्चाबिम्बे प्रवेशे सति अर्चेति व्यवहारात्। उक्तमिदं **नामसहस्रभाष्य रहस्यत्रयसारयोः**। **विभवो हीति**। भगवद्विभूतिभूतदेवमनुष्यादिरूपसाजात्याद् विभव इति व्यवहारः। व्यूह इति कस्मान्नाम? तत्राऽऽह **चतुर्व्यूह** इति। **चतुर्विभाग** इत्यर्थः। गुणेषु कतिपयविभजनपूर्वककतिपयसंग्रहणाद्वा सृष्ट्यादिकार्यविभजनाद्वापि व्यूहः। ततः संस्थानविशेषे परिभाषेति भाव्यम्।

परं ब्रह्म। यथा पौष्करे (—) "यस्मात् सम्यक् परं ब्रह्म वासुदेवाख्यमव्ययम्। अस्माद्वाप्यते शास्त्रात् ज्ञानपूर्वेण कर्मणा" इत्यादि। अतः सङ्कर्षणादीनामपि परस्यैव ब्रह्मणः स्वेच्छाविग्रहरूपत्वात्, (उ. नारा.) "अजायमानो बहुधा विजायते" इति श्रुतिसिद्धस्वैवाऽऽश्रितवात्सल्यनिमित्तस्वेच्छाविग्रहसंग्रहरूपजन्मनोऽभिधानात् तदभिधायिशास्त्रप्रामाण्यस्याप्रतिषेधः—इति।

तत्र जीवमनोहङ्कारतत्त्वानामधिष्ठातारः सङ्कर्षणप्रद्युम्नानिरुद्धा इति तेषामेव जीवादिशब्दैरभिधानमविरुद्धम्; यथा आकाशप्राणादिशब्दैर्ब्रह्मणोऽभिधानम् ॥ ४१ ॥

विप्रतिषेधाच्च ॥ २ । २ । ४२ ॥

विप्रतिषिद्धा हि जीवोत्पत्तिः तस्मिन्नपि तन्त्रे। यथोक्तं परमसंहितायाम्, (—) "अचेतना परार्था च नित्या सततविक्रिया। त्रिगुणा कर्मिणां क्षेत्रं प्रकृतेः रूपमुच्यते ॥ व्याप्तिरूपेण संबन्धस्तस्याश्च पुरुषस्य च। स ह्यनादिरनन्तश्च परमार्थेन निश्चितः" इति। एवं सर्वास्वपि संहितासु जीवस्य नित्यत्ववचनात् जीवस्वरूपोत्पत्तिः पञ्चरात्रतन्त्रे प्रतिषिद्धैव। जन्ममरणादिव्यवहारस्तु लोकवेदयोर्जीवस्य यथोपपद्यते, तथा (शारी.) 'नात्मा श्रुतेः' इत्यत्र वक्ष्यते। अतो जीवस्योत्पत्तिस्तत्रापि प्रतिषिद्धैवेति जीवोत्पत्तिवादनिमित्ताप्रामाण्यशङ्का दूरोत्सारिता।

यश्चैव केषाञ्चिदुद्घोषः—( — ) "साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवान्" इति, साङ्गेषु वेदेषु पुरुषार्थनिष्ठा न लब्धेति वचनात् वेदविरुद्धमेवेदं तन्त्रम्—इति, सोऽप्यनाघ्रातवेदवचसाम् अनाकलिततदुपबृंहणन्यायकलापानां श्रद्धा-

---

'जीवो जायते' इति वचनवास्तवार्थ उक्तः। एतदर्थापरिज्ञानेऽपि पाञ्चरात्राप्रामाण्यपूर्वपक्षो न युक्तः। यदि हि पाञ्चरात्रं जीवोत्पत्तिमेवाभिदधीत, तदैवं शंक्येत। यतः तत्रैव तद्व्याघातो दृश्यते, उत्पत्त्यभावस्यापि वचनात्। प्रत्युत तादृशवचनभूयस्त्वमपि। ततो भूयसांन्यायेनेह जीवोत्पत्तिवचनस्यार्थान्तरमवश्यं परिशीलनीयम्। 'अनेकजन्मसाहस्रीं संसारपदवीं व्रजन्' इत्यादीनि जीवजन्मवचनानि न ह्यप्रमाणीक्रियन्ते; तद्वदिहापीत्याशयेनोत्तरं सूत्रम्। **विप्रतिषिद्धा** उत्पत्त्यभावप्रतिपादकवाक्यव्याहता। व्याघाते अप्रामाण्यमिति न नियमः। व्याघाते यथाश्रुतार्थत्यागमात्रम्। आप्तवाक्यत्वेऽर्थान्तरम्; अनाप्तवाक्यत्वे उपेक्षेति। विशेषेण प्रतिषेधादित्यपि **विप्रतिषेधा**दित्यस्यार्थ इष्टः। पूर्वपक्षिदर्शितपरमसंहितात एव तत्प्रतिषेधकवाक्यमुदाहरति **यथोक्तं परमे**ति। **वक्ष्यते**। शरीरसंयोग एव जन्म। स जीवस्याक्षतः। एवमपि प्रकृतवाक्यं पूर्वोक्तार्थकमेवेति नात्र शंकालेशावकाशोऽपि।

वेदस्य पाञ्चरात्रेण विशेषेण प्रतिषेधो वेदविप्रतिषेध इति व्याख्याभिप्रायेण शाङ्करे तदप्रामाण्यसाधनायोक्तं निरसितुमनुवदति **यश्चे**ति। **निष्ठा**मिति पदस्थाने **पुरुषार्थ**मिति पदमा**गमप्रामाण्ये**। **यश्च सोपी**ति **चकारः अपिशब्दश्च**, भगवद्व्यूहपरत्वेऽप्युत्पत्त्यसंभवोद्घोषस्य, व्यूहेषु गुणतारतम्याभावोद्घोषस्य,

मात्रविजृम्भितः—यथा, (ऐतरे. ब्रा. ४-५) "प्रातःप्रातरनृतं ते वदन्ति पुरोदयात् जुह्वति येऽग्निहोत्रम्" इति अनुदितहोमनिन्दा उदितहोमप्रशंसार्थेत्युक्तम्; यथा च भूमविद्याप्रक्रमे नारदेन, (छा. ७) "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमम्" इत्यारभ्य सर्वं विद्यास्थानमभिधाय, "सोऽहं भगवो मन्त्रविदेवास्मि; नाऽऽत्मवित्" इति भूमविद्याव्यतिरिक्तासु सर्वासु विद्यासु आत्मवेदनालाभवचनं वक्ष्यमाणभूमविद्याप्रशंसार्थं कृतम्। अथवा अस्य नारदस्य, साङ्गेषु वेदेषु यत् परतत्त्वं प्रतिपाद्यते तदलाभनिमित्तोऽयं वादः। एवमेव शाण्डिल्यस्येति पश्चात् वेदान्तवेद्यवासुदेवाख्यपरब्रह्मतत्त्वाभिधानादवगम्यते।

तथा वेदार्थस्य दुर्ज्ञानतया सुखावबोधार्थः शास्त्रारम्भः परमसंहितायामुच्यते (—) "अधीता भगवन् वेदाः साङ्गोपाङ्गाः सविस्तराः। श्रुतानि च मयाऽङ्गानि वाकोवाक्ययुतानि च। न चैतेषु समस्तेषु संशयेन विना क्वचित्। श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यति" इति, (—) "वेदान्तेषु यथासारं संगृह्य भगवान् हरिः। भक्तानुकम्पया विद्वान् सञ्चिक्षेप यथासुखम्" इति च।

अतः स भगवान् वेदैकवेद्यः परब्रह्माभिधानो वासुदेवो निखिलहेयप्रत्यनीककल्याणैकतान-अनन्तज्ञानानन्दाद्यपरिमितोदारगुणसागरः सत्यसङ्कल्पः चातुर्वर्ण्यचातुराश्रम्यव्यवस्थयाऽवस्थितान् धर्मार्थकाममोक्षाख्यपुरुषार्थाभिमुखान् भक्तान् अवलोक्य अपारकारुण्यसौशील्यवात्सल्यौदार्यमहोदधिः स्वस्वरूप-स्वविभूति-स्वाराधन-तत्फलयाथात्म्यावबोधिनो वेदान् ऋग्यजुस्सामाथर्वभेदभिन्नान् अपरिमितशाखान् विध्यर्थवादमन्त्ररूपान् स्वेतरसकलसुरनरदुरवगाहांश्चावधार्य तदर्थयाथात्म्यावबोधि पञ्चरात्रशास्त्रं स्वयमेव निरमिमीतेति निरवद्यम्॥

---

गुणगुण्यभेदवादो व्यूहतदीयज्ञानादिगुणविषये पाञ्चरात्रे कृत इत्युद्घोषस्य च परकृतस्य समुच्चयार्थौ। **अनुदितहोमे**ति। अनुदिते सूर्ये अग्निहोत्रहोमः, उदिते होमश्च तत्तच्छाखिनां व्यवस्थितः। तत्रैकेनान्यप्रकारापरिग्रहार्थं निन्दा; न तु सर्वात्मना तन्निषेधाय। **उक्त**मिति। मीमांसकादिभिरिति शेषः। **नारदेने**त्यस्य **आत्मवेदनालाभे**त्यत्रान्वयः, नारदकर्तृकात्मवेदनकर्मकलाभाभावस्य भूमविद्योपक्रमे वचनं भूमविद्याप्रशंसार्थमुपनिषदा कृतमित्यर्थः। **कृत**मित्येतदनन्तरं **यथा**शब्दघटितवाक्यद्वयप्रतिसंबन्धि वाक्यम्, 'तथा वेदनिन्देह पाञ्चरात्रप्रशंसार्थं कृता' इत्यध्याहार्यम्। यद्वा **यथे**ति वेदवचोन्यायकलापाज्ञानोदाहरणमिति तच्छब्दस्यार्थसिद्धत्वात् पूर्वत्रैवान्वयः। एवं निन्दामभ्युपगम्य समाधानमुक्त्वा, निन्दां विनैव भूमविद्यावाक्यमिदञ्च निर्वहति **अथवे**ति। द्वितीयपक्षस्योपष्टम्भकमपि दर्शयति **तथे**ति। **वाकोवाक्यानि** विषयवैशद्यार्थानि उक्तिप्रत्युक्तिरूपवाक्यानि। उक्तवचनैः वेदाधिकारिणामेव पाञ्चरात्रस्यापेक्षितत्वबोधनात्, 'वेदानधिकारिणां भवतु पाञ्चरात्रम्' इति वादोऽप्ययुक्त इत्याशयेन वक्तृ-श्रोतृ-विषय-वचनकृतवैलक्षण्यप्रतिपादनेन सर्वप्राबल्यं ज्ञापयन्निगमयति **अत** इति। **भेदभिन्नान्** इत्यादीनि विधेयविशेषणानि।

यत्तु—परैः सूत्रचतुष्टयं कस्यचिद्विरुद्धांशस्य प्रामाण्यनिषेधपरं व्याख्यातम्, तत् सूत्राक्षराननुगुणम्, सूत्रकाराभिप्रायविरुद्धञ्च। तथा हि—सूत्रकारेण वेदान्तन्यायाभिधायीनि सूत्राण्यभिधाय वेदोपबृंहणाय च भारतसंहितां शतसहस्रिकां कुर्वता मोक्षधर्मे ज्ञानकाण्डे अभिहितम्—(१३५) "गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः। य इच्छेत् सिद्धिमास्थातुं देवतां कां यजेत सः" इत्यारभ्य महता प्रबन्धेन पञ्चरात्रशास्त्रप्रक्रियां प्रतिपाद्य, "इदं शतसहस्राद्धि भारताख्यानविस्तरात्। आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम्। नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा। आरण्यकं च वेदेभ्यः ओषधीभ्यो यथाऽमृतम्", (१४०-११) "इदं महोपनिषदं चतुर्वेदसमन्वितम्। साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम्॥ 'इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्। ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा। भविष्यति प्रमाणं वै एतदेवानुशासनम्" इति। साङ्ख्ययोगशब्दाभ्यां ज्ञानयोगकर्मयोगावभि[सं]हितौ; यथोक्तम्, (गी. ३-३) "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्' इति। भीष्मपर्वण्यपि, (६६-३९) "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः। अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः। सात्त्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः" इति। कथमेवं ब्रुवाणो बादरायणो वेदविदग्रेसरो वेदान्तवेद्यपरब्रह्मभूतवासुदेवोपासनार्चनादिप्रतिपादनपरस्य सात्त्वतशास्त्रस्याप्रामाण्यं ब्रूयात्।

ननु च (३२०) "साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने" इत्यादिना साङ्ख्यादीनामप्यादरणीयतोच्यते; शारीरके तु साङ्ख्यादीनि प्रतिषिध्यन्ते; अत इदमपि तन्त्रं तत्तुल्यम्॥ नेत्युच्यते; यतस्तत्रापीममेव शारीरकोक्तं न्यायमवतारयति। "किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा" इति प्रश्नस्याय-

---

**कस्यचि**दित्यनेन पाञ्चरात्रे प्रायः सर्वं ग्राह्यमिति तैरेव कण्ठोक्तमिति सूच्यते। **सूत्राक्षराननुगुण**मिति। **वा**शब्दस्य सिद्धान्तसूचकतायाः पूर्वमीमांसाप्रभृतिप्रसिद्धत्वात् **अप्रतिषेध**शब्दसत्त्वाच्चेति भावः। सूत्रकाराभिप्रायविरोधमुपपादयति **तथाहीनि**। अत्र **महाभारते** (शान्ति. १४७), 'यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः। ज्ञेयः स एव राजेन्द्र! जीवः संकर्षणः प्रभुः। संकर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते। प्रद्युम्नात् योऽनिरुद्धस्तु सोऽहङ्कारः स ईश्वरः।' इत्यादिवचनानि परब्रह्मणो वासुदेवात् क्रमादाविर्भवन्तो व्यूहाः जीवमनोहङ्कारतत्त्वाभिमानितया जीवादिशब्दव्यपदेश्या इति विस्पष्टं बोधयन्ति सन्तीत्यतोऽपि परमते सूत्रकाराभिप्रायविरोधः **परमार्थभूषणेऽस्माभि**रुपपादितोऽप्यनुसंधेयः। **महता प्रबन्धेन**--वक्तृ-श्रोतृ-कर्तृ-देश-कालादिवैलक्षण्यप्रपञ्चनेन। **प्रमाणं वा एतदि**ति। वै इतिच्छेदः। प्रमाणमेवेत्यर्थः। ईषदंशेऽपि नाप्रामाण्यमिति। **अनुशासनम्**; शासनं वेदं कार्त्स्न्येनानुसरतीति। **कृतलक्षणैः** संपन्नतापादिसंस्कारैः। **सात्त्वतविधिः** पञ्चरात्रम्।

**इममेवे**ति। अन्याप्रामाण्यपञ्चरात्रपूर्णप्रामाण्यहेतुमेवेत्यर्थः।

मर्थः—किं साङ्ख्ययोगपाशुपतवेदपञ्चरात्राण्येकतत्त्वप्रतिपादनपराणि, पृथक्तत्त्वप्रतिपादनपराणि वा? यदा एकतत्त्वप्रतिपादनपराणि, किं तदेकं तत्त्वम्? यदा तु पृथक्तत्त्वप्रतिपादनपराणि, तदा एषां परस्परविरुद्धार्थप्रतिपादनपरत्वात् वस्तुनि विकल्पासंभवाच्चैकमेव प्रमाणमङ्गीकरणीयम्; किं तदेकम्—इति। अस्योत्तरं ब्रुवन्, "ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै। साङ्ख्यस्य वक्ता कपिलः" इत्यारभ्य साङ्ख्ययोगपाशुपतानां कपिलहिरण्यगर्भपशुपतिकृतत्वेन पौरुषेयत्वं प्रतिपाद्य, "अवा(पा)न्तरतपा नाम वेदाचार्यः स उच्यते" इति वेदानामपौरुषेयत्वमभिधाय, "पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्" इति पञ्चरात्रतन्त्रस्य वक्ता नारायणः स्वयमेवेत्युक्तवान्।

एवं वदतश्चायमाशयः—पौरुषेयाणां तन्त्राणां परस्परविरुद्धवस्तुवादितया, अपौरुषेयत्वेन निरस्तप्रमादादिनिखिलदोषगन्धवेदवेद्यवस्तुविरुद्धाभिधायित्वाच्च यथावस्थितवस्तुनि प्रामाण्यं दुर्लभम्। वेदवेद्यश्च परब्रह्मभूतो नारायणः। अतः तत्तत्तन्त्राभिहितप्रधानपुरुषपशुपतिप्रभृतितत्त्वस्य वेदान्तवेद्यपरब्रह्मभूतनारायणात्मकतयैव वस्तुत्वमभ्युपगमनीयम्—इति। तदिदमाह च, "सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते। यथागमं यथान्यायं निष्ठा नारायणः प्रभुः" इति। यथागमं यथान्यायम् इति, न्यायानुगृहीततत्तदागमोक्तं वस्तु परामृशतो नारायण एव सर्वस्य वस्तुनः निष्ठेति दृश्यते—अब्रह्मात्मकतया तत्तत्तन्त्राभिहितानां तत्त्वानाम्, (छा. ३-१४-१) "सर्वं खल्विदं ब्रह्म", (तै. ना. ३) विश्वं नारायणः" इत्यादिना सर्वस्य ब्रह्मात्मकतामनुसंदधानस्य नारायण एव निष्ठेति प्रतीयत इत्यर्थः।

अतो वेदान्तवेद्यः परब्रह्मभूतो नारायणः स्वयमेव पञ्चरात्रस्य कृत्स्नस्य वक्तेति तत्स्वरूपतदुपासनाभिधायि तत् तन्त्रमिति च तस्मिन् इतरतन्त्रसामान्यं न केनचिदुद्भावयितुं शक्यम्। अतस्तत्रैवेदमुच्यते, (३४९) "एवमेकं सांख्ययोगं वेदारण्यकमेव च। परस्पराङ्गान्येतानि पञ्चरात्रं तु कथ्यते" इति। सांख्यं च योगश्च सांख्ययोगम्; वेदाश्चारण्यकानि च वेदारण्यकम्। परस्पराङ्गान्येतानि एकतत्त्वप्रतिपादनपरतयैकीभूतानि एकं पञ्चरात्रमिति कथ्यते। एतदुक्तं भवति—सांख्योक्तानि पञ्चविंशतितत्त्वानि योगोक्तं च यमनियमाद्यात्मकं योगम् वेदोदितकर्मस्वरूपाण्यङ्गीकृत्य, तत्त्वानां ब्रह्मात्मकत्वम्, योगस्य च ब्रह्मोपासनप्रकारत्वम्, कर्मणां च तदाराधनरूपतामभिदधाति ब्रह्मस्वरूपं प्रतिपादयन्त्यारण्यकानि। एतदेव परेण ब्रह्मणा नारायणेन स्वयमेव पञ्चरात्रतन्त्रे विशदीकृतम्-इति।

---

**किं तदिति**। तदेत्यादिः। अपान्तरतपाः सुबालोपनिषत्प्रसिद्धः। भगवदवतार इति च भारतम्। **वेदाचार्य**शब्दप्रयोगात् अपौरुषेयत्वं सिद्धम्। **नारायणात्मकतयैवेति**। एवं **वस्तुस्थितौ** सत्यां यत् तेषां स्वातन्त्र्याभिमत्या तन्त्राणि प्रवृत्तानि, ततो न प्रमाणानीति भावः। **यथागमं यथान्यायम्**—सत्तर्कानुगृहीतवेदागमप्रमाणानुरोधेनेत्यर्थः। तद्विवृणोति **यथागमम्**इति। **इतीति इत्यस्येत्यर्थः**।

**शारीरके च सांख्योक्ततत्त्वानामब्रह्मात्मकतामात्रं निराकृतम्; न स्वरूपम्। योगपाशुपतयोश्चेश्वरस्य केवलनिमित्तकारणता, परावरतत्त्वविपरीतकल्पना, वेदबहिष्कृताचारो निराकृतः; न योगस्वरूपं पशुपतिस्वरूपं च। अतः, (शां. ३५०) सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः" इत्यपि—तत्तदभिहिततत्त्वस्वरूपमात्रमङ्गीकार्यम्, जिनसुगताभिहिततत्त्ववत् सर्वं न बहिष्कार्यमित्युच्यते; "यथागमं यथान्यायं निष्ठा नारायणः प्रभुः" इत्यनेनैकार्थ्यात्॥ ४४ ॥२**

इति श्रीशारीरकमीमांसाभाष्ये उत्पत्त्यसम्भवाधिकरणम्॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये द्वितीयस्याध्यायस्य द्वितीयः पादः॥ २ ॥

---

एवं सांख्यादेर्निरसनीयत्वसमर्थनं महाभारतवचनान्तरविरुद्धमित्यत्र तदाशयं दर्शयितुमाह **शारीरके चेति**। **आत्मप्रमाणानि** तत्तत्प्रधानप्रतिपाद्यस्वरूपे प्रमाणानि। **आत्मा** स्वरूपम्। वाक्यस्य प्रधानार्थश्चात्मेत्युच्यते इत्याशयेनाह **तत्तदभिहिते**त्यादि। कणादादिप्रतिपाद्यः परमाण्वादिस्तु स्वरूपतोऽपि नास्ति; नैवमिहेति भावः। अब्रह्मात्मकत्वांशेऽपि प्रामाण्ये पूर्वोक्तविरोधः स्यादित्याह **यथागम**मिति।

श्रीपाञ्चरात्राप्रामाण्यवर्णने जिह्वां प्रवर्तयितुं संकुचद्भिरेव वैष्णवैः **शंकराचार्या**दिभिः स्वाभिमतपादसंगतिलोभेन वाक्यशकलापार्थवर्णनेनाप्रामाण्यं क्वचिदंशे उपवर्ण्य तृप्तम्। **कल्पतरुकारा**दिभिर्व्याख्यातृभिः तदप्यसहमानैर्मुखान्तरेण प्रामाण्यमेव स्वीकृतम्। एवमपि यदर्वाचीनाः पाञ्चरात्रमप्रमाणमेवेति वर्णयितुं व्यवस्यन्ति स्म, तन्नूनं शैवबहुमानलिप्सामूलकं शाश्वतशिवकटाक्षलक्ष्यताभाग्यलवलेशदविष्ठताफलमित्यलमधिकेन॥ श्रीः॥

इति श्रीवात्स्य-सच्चक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु भाष्यार्थदर्पणे द्वितीयद्वितीयः॥

श्रीमते रामानुजाय नमः। शुभमस्तु॥

श्रीः । श्रीमते रामानुजाय नमः ।

## श्रीभगवद्रामानुजविरचिते

## श्रीशारीरकमीमांसाभाष्ये

द्वितीयाध्याये तृतीयपादः (वियत्पादः)

५४. वियदधिकरणम् २-३-१ ॥ (छां. ६. २.)

### न वियदश्रुतेः । २ । ३ । १ ॥

**साङ्ख्यादिवेदबाह्यतन्त्राणां न्यायाभासमूलतया विप्रतिषेधाच्चासामञ्जस्यमुक्तम्; इदानीं स्वपक्षस्य विप्रतिषेधादिदोषगन्धाभावख्यापनाय ब्रह्मकार्यतयाऽभिमतचिदचिदात्मकप्रपञ्चस्य कार्यताप्रकारो विशोध्यते ।**

**तत्र वियदुत्पद्यते, न वा—इति संशय्यते । किं युक्तम्? न वियदुत्पद्यत इति ।**

---

श्रीः । श्रीमते भगवद्रामानुजाय नमः ॥

### भाष्यार्थदर्पणे द्वितीयतृतीयः

ब्रह्मणः सर्वकारणत्वं श्रुतिप्रतिपन्नत्वेन प्रथमाध्यायव्युत्पादितं तर्कस्मृत्यबाध्यमिति द्वितीयप्रथमे निरूप्य परमतानामेतत्प्रतिभटत्वौपयिकं बलं नेति द्वितीयपादे सम्यगुपपाद्य स्थापितमासीत् । परमतवत् अत्रापि श्रुतिविप्रतिषेधादिना सिद्धान्तीष्टे कार्यत्वे क्वचित् दुःस्वीकरे सति पूर्वोक्तं सर्वकारणत्वं पुनश्चालयितुं शक्यमिति शंकनात् द्वितीयपादेन संगतिरित्याह **सांख्येति** । साक्षाद् ब्रह्मनिरूपितकार्यत्वं प्रपञ्चे सर्वत्र सिद्धान्तीष्टम् । तदसंभवः शंक्यते उत्तरपादद्वयेनेति पादद्वयमेका पेटिका । वियदादौ कार्यत्वासंभवस्येव जीवात्मनि कार्यत्वासंभवस्य पूर्वपक्षितत्वाभावात् प्रत्युत कार्यत्वस्यैव तेन शंकनात् सर्वत्र कार्यत्वस्थापनं पादार्थ इति दुर्वचम् । अतः **कार्यताप्रकारो विशोध्यत** इत्युक्तम् । आत्मनि कार्यत्वाभावसिद्धान्तवचनस्यापि स्वभावान्यथाभावरूपकार्यत्वविवेचन एव पर्यवसानात् शोधनं सर्वानुगतं पादार्थ इति भावः । कार्यत्वनित्यत्वपरश्रुतिविप्रतिषेधदर्शनमूलविचारप्रसंगात् आत्मादौ धर्मान्तरविषयविप्रतिषेधादिमूलविचारोऽपि क्रियते । न कदाचिदनीदृशं जगदिति भूतपञ्चकस्यापि नित्यत्वं मीमांसका मन्यन्ते । तार्किका वियन्मात्रस्य । तत्र श्रुत्युपष्टब्धयुक्तिसिद्धस्य वियन्नित्यत्वस्यैव प्रतिक्षेपे अन्यानित्यत्वं किंपुनर्नयसिद्धं भवेदित्याशयेन, श्रुतिविप्रतिषेधप्रदर्शनबुद्ध्या च वियन्मात्रे पूर्वपक्षः प्रथमं प्रवर्त्यते । पूर्वपादान्ते उत्पत्त्यसंभवाधिकरणे जीवोत्पत्त्यसंभवात् यथा जीवोत्पत्तिप्रतिपादकं पाञ्चरात्रवाक्यमन्यपरं नीतम्, तथैव वियदुत्पत्तिश्रुतिरपि नेयेति दृष्टान्तसंगत्याऽधिकरणारम्भः इति **उत्पत्त्यसंभवादिति** पदप्रयोगेणोपरि सूचयिष्यते । प्रथमाधिकरणसंशयमाह **तत्रेति** । **वियत्**पदं विशेषेण **यत्** प्राप्नुवदिति योगार्थमुखेन सर्वव्यापित्वसर्वान्तःप्रवेशबोधकं सत् विभुत्वात् निरवयवद्रव्यत्वाच्च नोत्पद्यते इति युक्तिमपि दर्शयति । मूर्तामूर्तब्राह्मणे च यत्पदेनास्य व्यापकत्वमुक्तम् । श्रुत्या युक्तिबाधो मा भूदिति श्रुत्यभावमप्याह **अश्रुतेरिति** । 'आत्मन आकाशः संभूतः' इति श्रुतौ सत्यां श्रुत्यभावः कथमुच्यत इति न शंक्यम्—**अश्रुते**रित्यस्य उत्पत्तिबोधकवेदवाक्याभावादित्यर्थात् । सा श्रुतिरुत्पत्तिबोधिका न भवति युक्तिश्रुतिविरोधादिति

कुतः ? अश्रुतेः। संभावितस्य हि श्रवणसंभवः । असंभावितस्य तु गगनकुसुमवियदुत्पत्त्यादेः शब्दाभिधेयत्वं न संभवति । न खलु निरवयवस्य सर्वगतस्याऽऽकाशस्य, आत्मन इवोत्पत्तिर्निरूपयितुं शक्यते । अत एव च उत्पत्त्यसंभवात् छान्दोग्ये सृष्टिप्रकरणे तेजःप्रभृतीनामेवोत्पत्तिराम्नायते, (छा. ६-२-३) "तदैक्षत बहु स्यां प्रजायेयेति ; तत् तेजोऽसृजत" इति । तैत्तिरीयकाथर्वणादिषु, (तै. आन. १) "तस्माद्वा एतस्मादात्मन आकाशः संभूतः", (मु. २-१-३) "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः" इत्यादिषु श्रूयमाणा वियदुत्पत्तिः अर्थविरोधात् बाध्यते-इति ॥ १ ॥ एवं प्राप्तेऽभिधीयते—

अस्ति तु ॥ २ । ३ । २ ॥

अस्ति त्वाकाशस्योत्पत्तिः ; अतीन्द्रियार्थविषया हि श्रुतिः प्रमाणान्तराप्रतीतामपि वियदुत्पत्तिं प्रतिपादयितुं समर्थैव । न च श्रुतिप्रतिपन्नेऽर्थे तद्विरोधि निरवयवत्वादिहेतुकमनुत्पत्त्यनुमानमुदेतुम् अलम् ; आत्मनोऽनुत्पत्तिर्न निरवयवत्वप्रयुक्तेति वक्ष्यते ॥ २ ॥

---

पूर्वपक्षिहृदयम् । सूत्रे श्रुतिपदं वेदवाचि ; न तु श्रवणवाचि ; उपरि सूत्रे गौणीति विशेषणनिर्देशात् । बोधकत्वाभावमेवोपपादयति संभावितस्य हीति । गगनकुसुमेति । यथा गगनस्य कुसुमस्य च न मिथोऽन्वयः, तथा वियत उत्पत्तेश्चेति भावः । आत्मन इवेति पूर्वाधिकरणसंगतिप्रदर्शनम् । उत्पत्त्यसंभवादिति पूर्वसूत्रं युक्त्याऽपि जीवोत्पत्तिनिवारणपरमिति पूर्वपक्ष्याशयः। यस्य यस्य श्रुतिवाक्यस्याऽऽपाततः उत्पत्तिवाचकस्याप्यतत्परत्वमिष्टम्, तद्दर्शयति तैत्तिरीयेत्यादिना । नात्र पेटिकायां विप्रतिषेधप्रदर्शनेनार्थानध्यवसाय इष्टः ; स्वाध्यायप्रामाण्यस्यावश्यकत्वात्, एकतरादरणेनैव पूर्वोत्तरपक्षप्रवृत्तेः ॥ १ ॥

श्रुतिसत्त्वेऽप्यन्यथानयनस्य पूर्वसूत्राभिप्रेतत्वात् उत्तरसूत्रे वक्ष्यमाणत्वाच्च अस्तीत्यस्य न, श्रुतिरिति कर्तृसमर्पकं ग्राह्यम् ; किं तु श्रुतेरुत्पत्तिबोधकत्वमिति ; उत्पत्तिरित्येव वा कर्तृग्रहणमित्याशयेन उत्पत्तिरित्युक्तम् । तुशब्दः श्रुतेरन्यथानेयत्वाशयप्रतिक्षेपकः । नचेति । स्थितायाः श्रुतेर्बोधकत्वासंभवो हि युक्त्याऽनुत्पत्तिस्थापनानन्तरावसेयः । युक्त्युदय एव प्रतिरुध्यते आकाशःसंभूत इति श्रुत्येति भावः । प्रसक्ते किलानुमानप्रयोगे हेतुः कीदृश इति शोधनावकाशः । अतो भवदुक्तं विभुत्वं निरवयवद्रव्यत्वं च वस्तुतः सिद्धान्तदृष्ट्या परिमिते पञ्चीकरणकर्मणि चाकाशे नैव स्त इति स्वरूपासिद्धिरिति दोषे जाग्रत्यपि न तदुद्भावनमावश्यकमिति भावः । तर्हि निरवयवत्वादात्मा नोत्पद्यत इति उत्पत्त्यसंभवादिति सूत्रकारेण कथमुक्तमिति चेत्—आत्मनां निरवयवत्वसत्त्वादुक्तमस्तु । वस्तुतः तदप्रयोजकमेव । न च तत्र सूत्रकृतस्तथाकथनमिष्टमित्याशयेनाह आत्मनोऽपीति । निरवयवत्वस्याप्रयोजकत्वात् हेतुत्वं न सूत्रकृदिच्छति । अत एव, 'नात्मा श्रुतेः' इति श्रुतिमेव दर्शयामास ; अस्माभिश्चोत्पत्त्यसंभवसूत्रे श्रुतिरेव दर्शिता । निरवयवद्रव्यत्वहेतुः कुत्र व्यभिचरतीति चेत्—अनुकूलतर्कविरहेणाप्रयोजकशंकां हि कुर्मः ; न तु व्यभिचारं प्रदर्शयामः । निरवयवत्वमात्रस्य व्यभिचरितत्वाद्धि द्रव्यत्वं हेतुकोटौ निवेश्यते । अतो गुणादिवत् द्रव्यमपि किञ्चिन्निरवयवमप्युत्पद्यतामिति शंका हि समुन्मिषतीति भावः॥

पुनश्चोदयति—

गौण्यसंभवाच्छब्दाच्च ॥ २ । ३ । ३ ॥

(तै. आन. १.) "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिवियदुत्पत्तिश्रुतिर्गौणीति कल्पयितुं युक्तम्, (छा. ३-२-३) "तत् तेजोऽसृजत" इति सिसृक्षोः ब्रह्मणः प्रथमं तेज उत्पद्यत इति तेजउत्पत्तिप्राथम्येन, वियदुत्पत्तिप्रतिपादनासंभवात्; (बृ. ४-३-३) "वायुश्चान्तरिक्षं चैतदमृतम्" इति वियतोऽमृतत्वशब्दाच्च ॥ ३ ॥

कथमेकस्य संभूतशब्दस्य आकाशापेक्षया गौणत्वम्, अग्न्याद्यपेक्षया मुख्यत्वमिति चेत्-तत्राह—

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ २ । ३ । ४ ॥

एकस्यैव, (तै. आन. १.) "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति आकाशे मुख्यत्वासंभवात् गौणतया प्रयुक्तस्य संभूतशब्दस्य, "वायोरग्निः" इत्यादिष्वनुषक्तस्य मुख्यत्वं स्यादेव; ब्रह्मशब्दवत्—यथा ब्रह्मशब्दः, (मु. १-१-९) "तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते" इत्यत्र प्रधाने गौणतया प्रयुक्तः तस्मिन्नेव प्रकरणे, "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते" (मु. १-१-८) इति ब्रह्मणि मुख्यतया प्रयुज्यते; तद्वत्। अनुषङ्गे च श्रवणावृत्ताविवाभिधानावृत्तिर्विद्यत एवेत्यर्थः ॥ ४ ॥

---

अथ पूर्वपक्षिणः सूत्रद्वयम्। मुख्यार्थग्रहणे बाधकमस्तीति शंकते **असंभवा**दिति। किं वियत उत्पत्तिः तेजसः प्राक् पश्चाद्वा। नाद्यः, तेजःप्राथम्यश्रुतेः। नान्त्यः; तदपेक्षया सूक्ष्मत्वात् तैत्तिरीयविरोधाच्च। अत उत्पत्त्यसंभव इति। **अमृते**ति। उत्पन्नस्य मृतत्वमवश्यम्भावि। तस्मादमृतत्वेनानुत्पत्तिरनुमेया। नन्वेवं वायोरप्यनुत्पत्तौ सावयवत्वस्योत्पत्तावप्रयोजकत्वं स्यात्॥ अस्तु; श्रुतिविरोधेऽनुमानानुन्मेषात्॥

'तस्मादेतद् ब्रह्म' इत्यत्र ब्रह्मशब्दो न परमात्मवाची। तस्मादित्यस्य सर्वज्ञपरमात्मपरतया तज्जन्यत्वस्य तत्र बाधात्। ततः पूर्वमन्त्रे, 'तपसा चीयते ब्रह्म' इत्यत्र ब्रह्मशब्दो न प्रधानवाची; तपःशब्दवाच्यसंकल्पाधीनोपचयस्य तत्राभावात्। न च—सृष्टिसंकल्पविषयताप्रयुक्त उपचयोऽस्त्येव; उत्तरमन्त्र इवात्रापि प्रधानजन्यत्वमन्नस्य सुवचमिति च नात्रार्थभेद इति वाच्यम्—'अन्नात् प्राणः' इत्युत्तरार्धे प्राणमनआदीनामन्नजन्यत्वोक्त्या पृथिव्यादिरूपान्नात् तदुत्पत्त्ययोगेन तत्सर्वकारणतार्हस्य, 'भोक्ता भोग्यम्' इति श्रुत्यन्तरोक्तस्य प्रधानस्यैवान्नशब्दविवक्षणीयत्वात्; ब्रह्मशब्दस्य परमात्मपरत्वस्वारस्याभङ्गाच्च; वक्ष्यमाणमुपजीव्य प्रक्रमेऽर्थान्यथाकरणयोगाच्च। ननु दृष्टान्ते ब्रह्मशब्दस्य द्विःप्रयोगात् भिन्नभिन्नतेति प्रयोगभेदादर्थभेदो युज्यते; इह तु आकाशः संभूत इति प्रयुक्तः शब्द एवानुषज्यते उपरि। अतः सकृच्छ्रुतः शब्दः इति कथमर्थभेद इति शंकायां सूत्रकारस्य भावमाह **अनुषङ्गे चे**ति। **अभिधाने**ति। अन्विताभिधानपक्षे पूर्वं यदर्थान्वितमभिहितम्, तदर्थाभिधानस्योत्तरवाक्येऽभावात् अभिधानावृत्तिः स्पष्टा। अभिहितान्वयवादेऽपि पूर्वमेव कृतबोधात्मककार्यस्य पुनर्बोधकरत्वं न भवति। अतोऽनुषक्तेन पदेन पुनरर्थो-

परिहरति—

प्रतिज्ञाऽहानिरव्यतिरेकात् ॥ २ । ३ । ५ ॥

छान्दोग्यश्रुत्यनुसारेणान्यासां वियदुत्पत्तिवादिनीनां श्रुतीनां गौणत्वं कल्पयितुं न युज्यते, यतः छान्दोग्यश्रुत्यैव वियदुत्पत्तिरङ्गीकृता; (छा. ६-१-३) येनाश्रुतं श्रुतम्" इत्यादिना ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्। तस्या हि प्रतिज्ञायाः अहानिराकाशस्यापि ब्रह्मकार्यत्वेन तदव्यतिरेकादेव भवति ॥ ५ ॥

शब्देभ्यः ॥ २ । ३ । ६ ॥

इतश्च वियदुत्पत्तिः छान्दोग्ये प्रतीयते; (छा. ६-२-१) 'सदेव सोम्येदमग्र आसी-देकमेवाद्वितीयम्" इति प्राक्सृष्टेरेकत्वावधारणशब्दात् (छा. ६-८-७) ऐतदात्म्यमिदं सर्वम्" इत्येवमादिशब्देभ्यश्च कार्यत्वेन ब्रह्मणोऽव्यतिरेकप्रतीतेः। न च (छा. ६-२)

---

ऽभिधानीयः। तत्र योऽर्थ इष्टः सोऽभिधास्यते। शब्दशक्तेरेकार्थविषये एकत्वेऽपि अभिधानव्यापारो वाक्यभेदेन भिन्न एवेति। द्विः पाठे शब्दभेदः, अनुषङ्गे तु शब्दैक्यमिति च विचार्यम्—ताल्वादि-व्यापारव्यक्तिभेदे शब्दभेद इति कश्चित् पक्षः। एक एव शब्दः सृष्ट्यारम्भे उत्पन्नः ताल्वादिव्यापारेण प्रलयपर्यन्तमभिव्यज्यत इति पक्षान्तरम्। द्वितीयपक्षेऽभिव्यक्तिभेदेऽर्थभेदो युक्त इति वक्तव्यम्। अनुषङ्गेऽपि वाक्यान्तरे योजनादभिव्यक्तिभेदोऽस्त्येव। व्यापारभेदेन शब्दभेदपक्षे तु अनुषङ्गेऽपि प्रथमश्रुतजातीयशब्दस्याश्रुतस्योच्चारणमिति शब्दव्यक्तिभेद एवेत्यलम्। प्रथमोपस्थितार्थपरित्याग एव दोष इति तु शब्दद्वयपक्षेऽपि समानम्। तथाच प्रकृते संभूतशब्दः पूर्ववाक्ये गौण., उत्तरवाक्ये मुख्य एव भवितुमर्हतीति पूर्वपक्षः ॥ ४ ॥

प्रतिज्ञाया अहानिः **प्रतिज्ञाहानिः**। आकाशस्य कार्यत्वे सत्येव प्रतिज्ञाया अहानिर्भवति। तदानीमेव ब्रह्माव्यतिरेकस्य तत्र सिद्धेरिति सूत्रार्थः। जीव इवात्र स्वभावान्यथाभावेन निर्वाहो दुष्कर इति सूत्रकृदाशयः। ननु नित्यानां प्रकृतिकालजीवानामिवाऽऽकाशस्यापि ब्रह्मशरीरतया शरीरवाचिनां शरीरिपर्यन्तबोधकतया चाऽऽकाशपदस्य विशिष्टपरत्वे सति तत्तत्पदवाच्यसर्वद्रव्यैक्यादेकविज्ञानेन सर्वविज्ञानं निर्वहतीति कृतं कार्यत्वेनेति शंकां निरसितुं **ब्रह्मकार्यत्वेने**ति। मृत्पिण्डादिदृष्टान्तबलात् कार्यकारणैक्य-निबन्धनं हि एकविज्ञानेनसर्वविज्ञानमत्रोच्यते। अतो यथा असतः सज्जायते, सत्यादसत्यं जायते, सतोऽसज्जायत इति बौद्धशांकरतार्किकपक्षेषु व्यतिरेकात् प्रतिज्ञाया हानिः, तथाऽकार्यत्वेपि। अत आकाशस्य कार्यत्वमावश्यकमिति भावः ॥ ५ ॥

तेजःप्रथम्यवचनस्याऽऽकाशाकार्यत्वकल्पकत्वाभावं गमयितुम्, 'कार्यताप्रयुक्ताव्यतिरेको न दृष्टा-न्तमात्रात्; किंतु शब्दतोऽपि स्पष्टः' इत्याह **शब्देभ्यः** इति। मुण्डकतैत्तिरीयादावाकाशाद्युत्पत्तिः स्पष्टा। छन्दोग्ये च तदर्थग्रहणस्वारस्यं लक्ष्यते। इदमित्यस्य एकमितिपदानुसारेण नामरूपविभागशालिसर्वपरत्वे हि स्वारस्यम्। ऐतदात्म्यमिदं सर्वमिति सर्वपदसत्त्वात्तु सुतराम्। मुण्डके खाद्युत्पत्तिशब्दाच्च कार्यकारण-

"तत् तेजोऽसृजत" इति तेजस उत्पत्तिश्रुतिर्वियदुत्पत्तिं वारयति। वियदुत्पत्त्यवचनमात्रेण तेजसः प्रतीयमानं प्राथम्यं श्रुत्यन्तरप्रतिपन्नां वियदुत्पत्तिं न निवारयितुम् अलम् ॥ ६ ॥

यावद्विकारं तु विभागो लोकवत् ॥ २ । ३ । ७ ॥

तुशब्दश्चार्थे। "ऐतदात्म्यमिदं सर्वम्" इत्यादिभिराकाशस्य विकारत्ववचनेन तस्याकाशस्य ब्रह्मणो विभागः उत्पत्तिरप्युक्तैव । लोकवत्—यथा लोके, 'एते सर्वे देवदत्तपुत्राः' इत्यभिधाय तेषु केषांचित् तत उत्पत्तिवचनेन सर्वेषामुत्पत्तिरुक्ता स्यात्, तद्वत् । एवं च सति "वायुश्चान्तरिक्षश्चैतदमृतम्" इति, सुराणामिव चिरकालस्थायित्वाभिप्रायम् ॥ ७ ॥

एतेन मातरिश्वा व्याख्यातः ॥ २ । ३ । ८ ॥

अनेनैव हेतुना मातरिश्वनः वायोरप्युत्पत्तिर्व्याख्याता । वियन्मातरिश्वनोः पृथग्योगकरणम्, "तेजोऽतस्तथा ह्याह" इति मातरिश्वपरामर्शार्थम् ॥ ८ ॥

असंभवस्तु सतोऽनुपपत्तेः ॥ २ । ३ । ९ ॥

---

भावप्रयुक्तैक्यविवक्षाऽवगम्यते । अन्यथा शरीरात्मभावप्रयुक्तैक्यस्येदानीमपि सत्त्वात् तथाकथनायोगादिति । **प्रतीयमान**मिति । न हि तेजः प्रथममुत्पद्यत इति उत्पत्तेः प्राथम्यं कण्ठोक्तम् । किंतु पाठक्रमात् कल्प्यम् । तत् स्पष्टवाक्यविरोधे बाध्यत इति भावः ॥ ६ ॥

विशिष्य वियदमृतत्ववचनस्यान्यथासिद्धिं वक्तुम्, वियद्विषये उत्पत्तिर्विशिष्योक्तप्रायैवेत्याह **यावदि**ति । यावन्तो विकाराः तावताम्; सर्वेषां विकाराणामित्यर्थः । **तुशब्द**स्याधिकाशंकापरिहारार्थत्वं न; शब्देभ्य इति दर्शितविषये लोकप्रसिद्धरीतिप्रदर्शनस्यैवात्र क्रियमाणत्वादित्याशयेनाह **चार्थ** इति । **केषाञ्चि**दिति । किञ्चिदंशप्राधान्येन कतिपयपुत्रविशेषनिर्देशवत् प्रत्यक्षविषयत्वरूपप्राधान्येन तेजआदेः विशिष्योक्तिरिति भावः ॥ ७ ॥

ननु, 'न वियन्मातरिश्वानौ श्रुतेः' इत्येव कस्मान्न पूर्वपक्षसूत्रमित्यत्राह **वियदि**ति । **योगः** सूत्रम् । नेदमधिकाशंकायां सूत्रम् । निरवयवत्वाद्यभिमतिविषयस्यैवोत्पद्यमानत्वे सति वायोस्तथात्वस्य कैमुत्यसिद्धत्वात् । "सैषाऽनस्तमिता देवता यद् वायुः" इति वाक्यं तु, एतदमृतमिति वाक्याविशिष्टम् । न चास्तमयो लय इति ॥ ननु तर्हि मा भूदिदं सूत्रम्; अर्थसिद्धत्वादिति चेत्—तर्हि उत्तराधिकरणे तेजो वायोरिति वक्तव्यम्, आप इत्यादौ पदान्तरञ्च प्रयोज्यमिति गौरवम् । यद्वा वायुरतस्तथा ह्याहेति कृत्वा, तेज इति पृथक्सूत्रं कार्यम् । एतत्सूत्रसत्त्वे च, 'परिच्छिन्न-सावयववायुविषये अमृतशब्दगौणत्वं वस्तुतस्त्वदिष्टम्; शब्दस्याभिधानस्य चैकत्वात् वियद्विषयेऽपि तदेष्टव्यम्' इति च ज्ञापितं भवति; **एतेनेत्यस्य अमृत**पदस्यैकस्य गौणार्थत्वेनेत्यप्यर्थात् । **मातरिश्वे**ति प्रयोगः वायोर्व्योमजातेति तज्जन्यत्वदृढीकरणाय । मातरि वियति श्वयतीति मातरिश्वा । श्वि-गतिवृद्ध्योः ॥ ८ ॥

**असंभवस्तु** इति सूत्रं सतोऽप्युत्पत्तिशंकायां तन्निषेधार्थं न भवति । सतः श्रुत्यैकसमधिगम्यतया प्रलये सतश्च तस्योत्पत्तिशंकाया अयोगात् । अत एवानुपपत्तेरिति पदमपि तदुत्पत्तिसाधकयुक्त्यभावादित्यर्थपरं

तुशब्दोऽवधारणार्थः । असंभवः अनुत्पत्तिः सतः ब्रह्मण एव । तद्व्यतिरिक्तस्य कस्यचिदप्यनुत्पत्तिर्न संभवति, अनुपपत्तेः । एतदुक्तं भवति—वियन्मातरिश्वनोरुत्पत्तिप्रतिपादनमुदाहरणार्थम्; उत्पत्त्यसंभवस्तु सतः परमकारणस्य परस्यैव ब्रह्मणः । तद्व्यतिरिक्तस्य कृत्स्नस्याव्यक्तमहदहङ्कारतन्मात्रेन्द्रियवियत्पवनादिकस्य प्रपञ्चस्य एकविज्ञानेनसर्वविज्ञानप्रतिज्ञादिभिरवगतकार्यभावस्यानुत्पत्तिर्नोपपद्यत इति ॥ ९ ॥ इति वियदधिकरणम् ॥ १ ॥

५५. तेजोधिकरणम् २ ॥ (छा. ६-२ ; तै. आन.)

## तेजोऽतस्तथा ह्याह ॥ २ । ३ । १० ॥

ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य ब्रह्मकार्यत्वमुक्तम्; इदानीं व्यवहितकार्याणां किं केवलात् तत्तदनन्तरकारणभूताद्वस्तुन उत्पत्तिः, आहोस्वित् तत्तद्रूपाद् ब्रह्मण इति चिन्त्यते । किं

---

न भवति । अतः तुशब्दस्यावधारणमर्थं प्रदर्श्य तत्र हेत्वन्वयमभिमत्य व्याचष्टे तुशब्द इति । वियदादीनां संभवः, असंभवस्तु सतः । अर्थात् अनुत्पत्तिः सत एव ; न त्वन्यस्य ; अन्यस्यानुत्पत्त्यनुपपत्तेरिति सूत्रार्थः । न च सूत्रवैयर्थ्यम्; वियन्मातरिश्वनोरुत्पत्तिसिद्धावपि महदादेरप्युत्पत्तेर्ज्ञापनार्थत्वादिति दर्शयति एतदुक्तं भवतीति । अव्यक्तेति । तस्यापि तमःकार्यत्व हीष्टम् । अनेन प्रसिद्धमहदादिमात्रग्रहणे अव्यक्ताक्षरयोः कार्यत्वमनुक्तं स्यादिति तद्विहाय ...न्तरेण सर्वकार्यत्व दर्शयतीति ज्ञापितम् । सत्पदञ्च सूक्ष्मचिदचिद्विशिष्टब्रह्मवाचि ॥ तत् सिद्धं सर्वस्याचितः प्रकृतिकालादेः स्वरूपान्यथाभावरूपं कार्यत्वमिति ॥ तर्हि महदादिविषय एव कस्मान्नाधिकरणे पूर्वपक्षो न प्रवर्त्येत इति चेत्—तेषां तथा शास्त्रैकगम्यत्वात् । वियतस्तु लोकसिद्धतया, तार्किकैस्तस्य युक्त्या नित्यत्वस्य साधिततया, अमृतत्वश्रुत्या च विशेषतः पूर्वपक्षावकाशाच्च ॥ ९ ॥

एवमचेतनसामान्यस्य ब्रह्मकार्यत्वमक्षतमित्युक्तम् । तत् कार्यत्वं किं सर्वत्र साक्षात्, उत कूटस्थकार्यत्वमिव वंशस्य क्वचित् साक्षात् अन्यत्र परम्परयेति विचार्यते । ननु वंशे पितापुत्रयोर्भिन्नजीवत्वात पौत्रं प्रति पितामहस्य न साक्षात् कारणत्वम् ; इह तु कार्यकारणयोरेकविज्ञानेन सर्वविज्ञानादितोऽनन्यत्वस्थापनात् तेजआकाशादिपदानामपि ब्रह्मपर्यन्तत्वात् कथं परम्परया कारणत्वशंकेति चेत्—सत्यं प्रकृत्यधिकरणे उपादानत्वमुक्तम्; आरम्भणाधिकरणे चानन्यत्वम् । अथापि शब्दानां विशिष्टपरत्वं लक्षणयेति गृहीत्वा विशिष्टवेषेण कारणत्वमाक्षिपत्यत्र । एवं सर्वशब्दानां परमात्मपर्यवसायित्वं मुख्यवृत्त्येति स्थापनमत्र मुख्यमिति चराचरव्यपाश्रयसूत्रादवगम्यते । अयं भावः—शरीरात्मभावे सति किल अपृथक्सिद्धवाचिनां धर्मिपर्यन्तत्वमिति न्यायोऽवतरेत् । स एव न; 'तत् सृष्ट्वा तदेवानुप्राविशत्' इति वस्तुसृष्टिपश्चात्कालिकत्वस्यैव प्रवेशोऽवगमात् यावत्सत्तं तद्वस्तुधारकत्वादिरूपात्मत्वायोगात् । अतोऽभिमानिव्यपदेशवत् औपचारिक एव तेजआदिशब्दैर्ब्रह्मनिर्देशः । एवञ्च, 'तत् तेज ऐक्षत' इत्यादौ ईक्षणान्वयाय ब्रह्मपर्यन्तलक्षणायामपि, आकाशाद्वायुरित्यादौ विशिष्टपरत्वे मानाभावात् ब्रह्मणो न तदुपादानत्वम् । प्रथमकार्यं प्रति तु अनादितमसः कारणत्वात् तच्छरीरकत्वस्य परमात्मनि सत्त्वात् स्यान्नाम

युक्तम्? केवलात् तत्तद्वस्तुन इति। कुतः? तेजस्तावत् अतः मातरिश्वन एवोत्पद्यते। "वायोरग्निः" इति ह्याह ॥ १० ॥

आपः ॥ २। ३। ११ ॥

आपोऽपि अतः तेजस एवोत्पद्यन्ते। (तै. आन. १-२) 'अग्नेरापः', (छा. ६-२-३) तदपोऽसृजत" इति ह्याह ॥ ११ ॥

पृथिवी ॥ २ । ३ । १२ ॥

पृथिवी [अतः?] अद्भ्यः उत्पद्यते। (तै. आन. १-२) "अद्भ्यः पृथिवी", (छा. ६-२-४) "ता अन्नमसृजन्त" इति ह्याह ॥ १२ ॥

नन्वन्नशब्देन कथं पृथिव्यभिधीयते?, अत आह—

अधिकाररूपशब्दान्तरेभ्यः ॥ २ । ३ । १३ ॥

महाभूतसृष्ट्यधिकारात् पृथिव्येवान्नशब्देनोक्तेति प्रतीयते। अदनीयस्य सर्वस्य पृथिवीविकारत्वात् कारणे कार्यशब्दः। तथा वाक्यशेषे भूतानां रूपसंशब्दने, (छा. ६-४-१) "यदग्नेः रोहितं रूपम्, तेजसस्तद्रूपम्; यच्छुक्लम्, तदपाम्; यत् कृष्णम्, तदन्नस्य" इति अप्तेजसोः सजातीयमेवान्नशब्दवाच्यं प्रतीयते। शब्दान्तरं च समानप्रकरणे, (तै. आन. १-२) "अग्नेरापः, अद्भ्यः पृथिवी" इति श्रूयते। अतः पृथिव्येवान्नशब्देनोच्यत इति अद्भ्य एव पृथिवी जायते ॥

उदाहृतास्तेजःप्रभृतयः प्रदर्शनार्थाः; महदादयोऽपि स्वानन्तरवस्तुन एवोत्पद्यन्ते,

---

विशिष्टे कारणत्वव्यवहारः। तथापि कार्यत्वकारणत्वे विशिष्टनिष्ठे नेति स्वीकर्तव्यमिति। एतच्छङ्कापरिहारः सिद्धान्ते तल्लिङ्गादिति पदे विवक्षित इति ध्येयम्।

अतःशब्दः सौत्रः न अव्यवहितसूत्रोक्तात् सत इत्यर्थकः। तथा सति सिद्धान्तसूत्रता स्यात्। तदा पूर्वपक्ष उत्सूत्रो भवेत्। प्रथमसूत्रवैयर्थ्यञ्च। छान्दोग्ये तस्य स्पष्टत्वात्। तैत्तिरीयमादाय पूर्वपक्ष इति च न ज्ञायेत। तथाह्याहेत्यनेन तदा तद्विवक्षणायोगात्। तदभिध्यानादेवेति सूत्रमेव चालं पूर्वपक्षनिरासे सूत्रत्वे। अतः अत इति पदस्य व्यवहितमातरिश्वपरामर्शितया पूर्वपक्षपरत्वं सूत्राणामाशय्य व्याख्याति मातरिश्वन इति। आवृत्तमतःपदमुत्तरसूत्रयोरर्थान्तरपरं कथमिति न शंकावकाशः; स्याच्चैकस्येति सूत्रतः तत्संभवस्य ज्ञातत्वात्। एवं पूर्वपक्षसूत्रत्वे च तथाह्याहेति तैत्तिरीयग्रहणाद्रम्यमिति ॥ १० ॥

तदपोसृजतेति। शुद्धस्य तेजसः सृष्टिकर्तृत्वं कथमिति चेत्—कर्तृत्वं न यत्नादिः, किंतु व्यापाराश्रयत्वमेवेत्यदोषात्। तेजोभिमानिनः सतः स्रष्टृत्वेऽपि नोपादानत्वम्; तच्छरीरकत्वाभावात् ॥ ११ ॥

अधिकारेति। महाभूतसाहचर्यात् कृष्णरूपवत्त्वात् पृथिवीशब्दघटितस्थानकत्वाच्चान्नं पृथिवीत्यर्थः। न ह्यदनीयस्य कृष्णं रूपं प्रायिकम्। समष्टिभूतपृथिव्यां तु पाकात् प्राक् तदेव रूपमिति शास्त्रप्रामाण्यादिष्टमिति इति। महदादयोऽपीति। यद्येवम्, किमिति सूत्रकारः तेजःप्रभृत्येव गृहीत्वा पूर्वपक्षे

यथाश्रुति अभ्युपगमाविरोधात्। (मु. २-१-३) "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी", (मु. १-१ ९) "तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते", "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" "तत् तेजोऽसृजत" इत्यादयः ब्रह्मणः परम्परया कारणत्वेऽप्युपपद्यन्त इति ॥ १३ ॥

एवं प्राप्ते प्रचक्ष्महे—

तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ २ । ३ । १४ ॥

तुशब्दात् पक्षो व्यावृत्तः, महदादिकार्याणामपि तत्तदनन्तरवस्तुशरीरकः स एव पुरुषोत्तमः कारणम्। कुतः? तदभिध्यानरूपात् तल्लिङ्गात्। अभिध्यानम्—बहु स्यामिति सङ्कल्पः। "तत् तेज ऐक्षत, बहु स्यां प्रजायेयेति...ता आप ऐक्षन्त, बह्व्यःस्याम, प्रजायेमहि" इति आत्मनो बहुभवनसङ्कल्परूपेक्षणश्रवणात् महदहङ्काराकाशादीनामपि कारणानां तथाविधेक्षापूर्विकैव स्वकार्यसृष्टिरिति गम्यते। तथाविधं चेक्षणं तत्तच्छरीरकस्य परस्यैव ब्रह्मण उपपद्यते। श्रूयते च सर्वशरीरकत्वेन सर्वात्मकत्वं परस्य ब्रह्मणः। अन्तर्यामिब्राह्मणे, "यः पृथिव्यां तिष्ठन्....योऽप्सु तिष्ठन्... यस्तेजसि तिष्ठन्....यो वायौ तिष्ठन्....य आकाशे तिष्ठन्" इत्यादि; सुबालोपनिषदि च, (२-७) "यस्य पृथिवी शरीरम्" इत्यारभ्य, "यस्याहङ्कारः शरीरं....यस्य बुद्धिः शरीरम्....यस्याव्यक्तं शरीरम्" इत्यादि ॥

---

प्रवर्तयतीति चेत्—पूर्वं वियन्मातरिश्वनोर्विशिष्य प्रस्तुतत्वात्, तेजःप्रभृतौ अभिध्यानस्य श्रुतौ कण्ठोक्ततया सिद्धान्तप्रदर्शनसौकर्यात् एकत्र वास्तवार्थे दर्शिते सर्वत्र तत्सिद्धेः स्वतोभावादिति मन्तव्यम्। एतत्सूत्रं तटस्थशंकापरिहारार्थम्। अत्रोक्तं सिद्धान्तिनोऽपीष्टमेव ॥ १३ ॥

**तदभिध्याना**दित्यत्र तच्छब्दः बहुभवनपरः। **तल्लिङ्गा**दित्यस्य परमात्मकारणत्वलिङ्गादिति **सारे** व्याख्यानम्। स इति पुल्लिङ्गपदेन 'आत्मन आकाशः संभूत' इति आत्मपदनिर्दिष्टस्य ग्रहणम् ॥ ननु तदभिध्यानादिति पञ्चम्यैव अभिध्यानं स इत्युक्तपरमात्मकारणत्वलिङ्गमिति विज्ञातम्; तत् किं तल्लिङ्गादिति पदेन ॥ न। अभिध्यानस्य लिङ्गत्वासंभवशंकायाः पूर्वपक्षिहृद्गतायाः परिहारार्थत्वात् तस्य। अभिध्यानं न परमात्मकारणत्वसाधकम् शरीरात्मभावायोगेन अभिध्यानबलेन विशिष्टार्थशक्तत्वानवसायादिति हि पूर्वपक्षः। तत्र—बहुशब्दवाच्यत्वं ह्यस्य ज्ञायते। यदि बहुवस्तुजननात् पश्चादेव तत्रानुप्रविशेत्, शरीरात्मभावायोगात् कथं स्वस्मिन् बहुत्वं मन्वीत। अतो यावत्सत्त्वं धारकत्वमस्त्येव। सृष्ट्वेति व्यापारानन्तर्येऽपि न वस्तुसिद्ध्यानन्तर्यलाभः। वस्तुतो व्यवधानं न विवक्षितः। 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति, 'विदधत् रूपमेति' इति च हि श्रूयते। अतो मिथोविरोधाच्च, मुखं व्यादाय स्वपितीतिवत् उभयत्र कालाविवक्षया समानकालिकत्वमेवेति समाधिरभिमतः। इदमेवाभिध्यानं महदादिष्वपि परमात्मनः कारणत्वे तुल्ययुक्त्या लिङ्गं मन्तव्यम्। शरीरात्मभावस्य सर्वत्र श्रुतिषु कण्ठोक्तत्वादपि सृष्ट्यनुप्रवेशयोर्न पौर्वापर्यविवक्षेति दर्शयितुमाह श्रूयते चेति ॥ १४ ॥

यच्चोक्तम्, " एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्यादिषु श्रूयमाणा ब्रह्मणः प्राणादिसृष्टिः परम्परयाऽप्युपपद्यत इति — अत्रोच्यते—

विपर्ययेण तु क्रमोऽत उपपद्यते च। २। ३। १५॥

तुशब्दोऽवधारणार्थः। अव्यक्तमहदहङ्काराकाशादिक्रमाद्विपर्ययेण यः सर्वेषां कार्याणां ब्रह्मानन्तर्यरूपः क्रमः, " एतस्माज्जायते प्राणः " इत्यादिषु प्रतीयते, स च क्रमस्तत्तद्रूपाद् ब्रह्मणस्तत्तत्कार्योत्पत्तेरेवोपपद्यते। परम्परया कारणत्वे ह्यानन्तर्यश्रवणमुपरुध्येत। अतः, "एतस्माज्जायते " इत्यादिक्रमपि सर्वस्य ब्रह्मणः साक्षात्संभवस्योत्तम्भनम्॥ १५॥

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्॥ २। ३। १६॥

विज्ञानसाधनत्वादिन्द्रियाणि विज्ञानमित्युच्यन्ते। यदुक्तम्—" एतस्माज्जायते " इत्यादिना सर्वस्य ब्रह्मणोऽनन्तरकार्यत्वं श्राव्यते; अतश्चानेन वाक्येन सर्वस्य साक्षाद्ब्रह्मण उत्पत्तिरभिधानलिङ्गावगता उत्तम्भ्यत इति—तन्नोपपद्यते; क्रमविशेषपरत्वादस्य वाक्यस्य अत्रापि सर्वेषां क्रमप्रतीतेः। खादिषु तावत् श्रुत्यन्तरसिद्धः क्रमोऽत्रापि प्रतीयते। तैः सह पाठलिङ्गात् भूतप्राणयोरन्तराले विज्ञानमनसी अपि क्रमेणोत्पद्येते इति प्रतीयते। अतः

---

अभिधानबलान्नि श्रुत्यन्तरदर्शितक्रमोपपत्त्यापि तस्य साक्षात्कारणत्वमिति दर्शयितुं **विपर्ययेणे**ति सूत्रम्। तुशब्दस्यावधारणस्य अत इत्यनेनान्वय। अत एवोपपद्यते **विपर्ययेणक्रमः** व्यवहितकार्यत्वविपरीत अन्यवहितत्वरूप. क्रम। अत इत्यस्य साक्षात् ब्रह्मण एषामुत्पद्यमानत्वादित्यर्थः। चकारस्य **क्रम** इत्यनेनान्वयो **दीपा**दावप्युक्तः। आनन्तर्यरूपक्रमश्चोपपद्यते; आकाशाद्वायुः वायोरग्निरित्युक्तक्रमश्चेत्यर्थ॥ साक्षाज्जन्यत्वमेव पञ्चम्यर्थ इति नियमाभावात् अस्या युक्तेः प्राधान्यमविवक्षन्नाह **उत्तम्भन**मिति॥ १५॥

मन्त्रोऽयं न सर्वत्र परमात्मजन्यत्वप्रतिपादनार्थः; किंतु पाठक्रमावगतस्य तत्तत्कार्यगतपौर्वापर्यस्य ज्ञापनार्थ इति शंकामुद्भाव्य परिहरति **अन्तरे**ति। **अन्तरा** अन्तराले। नन्वत्र मन्त्रे विज्ञानस्यानुक्तत्वात विज्ञानमनसी इति कथमित्यत्र विज्ञानपदस्येन्द्रियपरतामाह **इन्द्रियाणि विज्ञान**मिति। **दीपे** इन्द्रियाणि प्राणश्च विज्ञानमित्युक्तम। तत्र तन्मात्रभूतयोरन्तराले इति सुबालोपनिषदनुसारेणान्तराशब्दार्थ उक्त। केचित् विज्ञानपदेन प्राणमात्रं गृह्णीयुः, विज्ञानपदस्य बुद्धिपरत्वात् बुद्धेश्च सांख्यादिसंमतायाः प्राणशब्देन हि तत्रतत्र व्यवहारात्। महतो बुद्धिशब्दवाच्यस्य स्वापादावुच्छ्वासनिश्वासरूपप्राणनक्रियोपकरणत्वं सांख्यानां मते **न्यायकुसुमाञ्जला**वप्युक्तम्। एवं व्याख्यानश्च वायुविशेषरूपप्राणस्य मनसः प्रागुत्पत्त्यभावात तद्ग्रहणायोगात्। तत्रापि--इन्द्रियत्यागात न्यूनता; मनसोऽनन्तरमिन्द्रियाणामुत्पत्तिश्च प्रमाणविरुद्धेति दोषोऽस्ति। पूर्वपक्षिक्रियमाणस्य सर्वस्यापि निर्वाहस्य दुष्टत्वात् यःकश्चिदस्तु पूर्वपक्ष इति उपेक्षयाऽर्थान्तरवर्णनं दीपादौ। अत्र भाष्ये उक्तं तु उचिततमम्; अनुपात्तकिञ्चिदर्थग्रहणेनान्तरालवर्णनापेक्षया प्राणमहाभूतान्तराले इति व्याख्यानं हि युक्तम्। विज्ञानशब्दश्चेन्द्रियेषु स्वरसः। मनोविज्ञाने इति श्रुति-

सर्वस्य साक्षात् ब्रह्मण एव संभवस्योत्पन्नमिदं वाक्यं न भवतीति चेत्—तन्नः अविशेषात्—
" एतस्माज्जायते प्राणः " इत्यनेनाविशेषात् विज्ञानमनसोः खादीनां च । " एतस्माज्जा-
यते " इत्यनेन साक्षात्संभवरूपसंबन्धस्याभिधेयस्य सर्वेषां प्राणादिपृथिव्यन्तानामविशिष्ट-
त्वात् स एव विधेयः ; न क्रमः । श्रुत्यन्तरसिद्धक्रमविरोधाच्च नेदं क्रमपरम् ; (सुबा. २)
" पृथिव्यप्सु प्रलीयते " इत्यारभ्य, "तम...एकीभवति" इत्यन्तेन क्रमान्तरप्रतीतेः। अतो-
ऽव्यक्तादिशरीरकात् परस्माद् ब्रह्मण एव सर्वकार्याणामुत्पत्तिः । तेजःप्रभृतयश्च शब्दास्तदात्म-
भूतं ब्रह्मैवाभिदधति ॥ १६ ॥

नन्वेवं सर्वशब्दानां ब्रह्मवाचित्वे सति तैस्तैः शब्दैः तत्तद्वस्तुव्यपदेशो व्युत्पत्ति-
सिद्ध उपरुद्ध्येत—तत्राऽऽह—

---

क्रमेणापठित्वा सूत्रे **विज्ञानमनसी** इति व्युत्क्रमः, तत्र पाठक्रमस्यानङ्गीकारप्रदर्शनार्थः । द्विवचननिर्देशः तयोर्युगपदुत्पत्तिदर्शकः । श्रुतौ, 'मन सर्वेन्द्रियाणि च' इति चकारः उभयसमुच्चयेनोत्पत्तिसूचक इति तात्पर्यम् । एकादशानामपीन्द्रियाणां युगपदुत्पत्तेरेव श्रुत्यन्तरसंमतत्वादेवम् । सूत्रे **क्रमेणे**त्यस्य पाठ-क्रमेणेत्यर्थः । प्राणमहाभूतयोरन्तराले मनःप्रभृतीनीन्द्रियाणि युगपदुत्पद्यमानत्वेन मन्त्रेणानेन पाठक्रमबले-नोच्यन्ते । अत्र पाठक्रमस्योत्तरार्धे क्रमबोधकत्वसामर्थ्यात् लिङ्गात् । खादिषु हि क्रमस्तैत्तिरीयादि-सिद्धो निर्विवाद इति पूर्वपक्षखण्डार्थः । एतस्मादिति ब्रह्मजन्यत्वरूपः क्रमः कण्ठोक्तः ; पाठक्रमाधीनः क्रमस्तु कल्प्यः । कल्प्ये तात्पर्यवर्णनापेक्षया क्लृप्ते तात्पर्यवर्णनं युक्तमित्याशयेन निषेधति **तन्ने**ति । न च **जायत** इत्येकवचनात् प्राणमात्रे ब्रह्मजन्यत्वावगमः इति वाच्यम्—पूर्वपक्षिणाऽपि मनआदिपदेऽपि जायत इत्येतदनुषङ्गात् कस्मादित्यपेक्षायाम् एतस्मादित्यस्याप्यानुषङ्गनीयत्वात् तत्र तत्र च एतच्छब्दस्य पूर्वोक्तब्रह्मरूपार्थग्रहणे बाधकाभावेन प्राणादिविभिन्नार्थकल्पनस्य स्वीकारायोगात् सर्वत्र ब्रह्मजन्यत्व-मपि प्रतीयत एवेति । पाठक्रमाधीनक्रमे विरोधमप्याह **श्रुत्यन्तरे**ति । **क्रमान्तरप्रतीते**रिति । तत्र वायोराकाशे लय उक्तः, न त्वाकाशस्येन्द्रियेषु लयः ; किंतु संसर्गमात्रम् । सर्वेषां भूतादिशब्दिते अहङ्कारे लय उक्तः ; न तु मनःप्रभृतेः प्राणे । भूतादेश्च लयो महति, महतोऽव्यक्ते, तस्य च तत्कारणे। न तु साक्षात् परमात्मनि भूतादेः भवदुक्तप्राणस्य वा लयः । अतो नात्र पाठक्रमस्य क्रमकल्पकतेति । यदि भवता प्राणस्य स्वकारणकिञ्चिज्जन्यत्वेऽपि तत्कारणान्तर्यामित्वात् परमात्मनः परमात्मजन्यत्वमक्षत-मित्युच्यते, तर्हि महदहङ्कारतन्मात्राकाशादिषु सर्वत्र तस्यान्तर्यामितया सर्वत्र तज्जन्यत्वाविशेषात् स एवास्तु मन्त्रार्थः । अतः प्राण **इ**वान्यत्रापि एतस्मादित्यस्यान्व**याविशेषात्**, सर्वत्र परमात्मार्थकत्वे स्वारस्या**विशे-षात्**, कारणान्तरस्य तदर्थत्वेऽप्यन्तर्यामितयाऽऽत्मग्रहणा**विशेषात्**, पूर्वार्धाविशेषेणोत्तरार्धेऽपि पाठक्रमस्य क्रमाकल्पक**त्वाविशेषात्** मन्त्रोऽयं परमात्मजन्यत्वं सर्वत्र श्रावयतीति सिद्धमस्योत्पत्तिकत्वमिति भावः॥ १६॥

परमात्मनः **तेजःप्रभृतिशब्दवाच्यत्वायोगरूपं** यमर्थं प्रधानीकृत्यैतदधिकरणप्रवृत्तिः, तं दूषयितुं **चराचरसूत्रम्** । तत्र शरीरात्मभावस्यैवाभावात् न परमात्मा तदर्थ इत्यंशनिरासः तल्लिङ्गादिति **पदेन**

**चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ २ । ३ । १७ ॥**

तुशब्दः चोदिताशङ्कानिवृत्त्यर्थः। निखिलजङ्गमस्थावरव्यपाश्रयः तत्तच्छब्दव्यपदेशः भाक्तः—वाच्यैकदेशे भज्यत इत्यर्थः। समस्तवस्तुप्रकारिणो ब्रह्मणः प्रकारभूतवस्तुग्राहिप्रत्यक्षादिप्रमाणाविषयत्वात् वेदान्तश्रवणात् प्राक् प्रकार्यप्रतीतेः, प्रकारिप्रतीतिभावभावित्वाच्च तत्पर्यवसानस्य, लोके तत्तद्वस्तुमात्रे वाच्यैकदेशे तेते शब्दाः भङ्क्त्वाभङ्क्त्वा व्यपदिश्यन्ते। अथवा तेजःप्रभृतिभिः शब्दैः तत्तद्वस्तुमात्रवाचितया व्युत्पन्नैर्ब्रह्मणो व्यपदेशो भाक्तः स्यात् अमुख्यस्स्यादित्याशङ्क्य चराचरव्यपाश्रयस्तु-इत्युच्यते। चराचरव्यपाश्रयः तद्व्यपदेशः—तद्भा-

सूचितः। लोकसिद्धव्युत्पत्तिभङ्गादयुक्तत्वशंकेह परिह्रियते। अत्र योजनाद्वये प्रथमा भाष्यमाले; अन्या दीपसारयोरपि। पूर्वत्र **भाक्त** इति छेदः; उत्तरत्राभाक्त इति। उत्तरत्र ब्रह्मणीति पूरणीयम्। **तद्भावभावित्वा**दित्यस्य पूर्वत्र प्रकारिप्रतीतिभावभावित्वात् इत्यर्थः। अस्य तद्व्यपदेश इत्यत्रानन्वयात् प्रकारिव्यपदेशस्येति पूरणीयम्। तच्छब्दस्य प्रकारिप्रतीतीत्यनुपस्थितार्थकल्पनक्लेशाभावाय, हेतोः पक्षेऽन्वयाय च, ब्रह्मण्यभाक्तत्वे प्रमाणनिर्देशपरत्वाय च द्वितीययोजनादरणम्। शब्दस्य ब्रह्मविषयकत्वे व्युत्पत्तिविरोध इति न। चराचरविषयकव्युत्पत्तेर्लोकक्लृप्ताया अत्यागात्। यथा कश्चित् व्यक्तिमात्रे आकृतिमात्रे वा प्रथमं व्युत्पद्य पश्चात् विशिष्टे व्युत्पत्तिमेव साध्वीं मन्यते--यथा च शरीरमात्रे देवदत्तादिशब्दमनिरिक्तात्मज्ञानात् प्रथमं व्युत्पद्य पश्चादात्मपर्यन्ते व्युत्पद्यते; अथ च शरीरमात्रे तत्प्रयोगमुपचारकृतं मन्यते। यथोक्तं **कणादेनापि,** (३-१-१२) "देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचारात् शरीरे प्रत्ययः" इति—तथा लोके चराचरमात्रे व्युत्पद्य पश्चात् शास्त्रात् ब्रह्मपर्यन्ते व्युत्पद्यते। पूर्वमेव ब्रह्मपर्यन्ते व्युत्पत्तिस्तस्याज्ञातत्वान्न भवति। लोकगृहीतांशत्यागाभावाच्च न व्युत्पत्तिभङ्गः। न हि शब्दस्य ब्रह्मविषयकत्वाभावोऽपि पूर्वमस्य प्रमाणसिद्धोऽस्ति; येन विरोधः स्यात्। अतो व्युत्पत्तिपूर्तिरेव शास्त्रकार्या। चराचरमात्रवाचित्वज्ञानं तु चराचरमात्रसत्त्वज्ञानवत् भ्रम इति। **भङ्क्त्वे**ति। भाक्तइत्यत्र भक्तिः भंगः। भंगेन **गृहीतो** भाक्त इत्यर्थः। ननु पूर्णमर्थं गृहीत्वा जहल्लक्षणया प्रयोगे भाक्त इति युक्तम्; न तु ब्रह्माज्ञाने चराचरमात्रे व्युत्पद्य प्रयोगे। अतो भक्तिः-भागः एकदेशः, तत्र कृतो भाक्त इत्यस्तु इति चेत्—अभिज्ञाः प्राञ्चः व्युत्पाद्यस्य ब्रह्मज्ञानाभावात् विशेषणमात्रे भङ्क्त्वा प्रयुज्य व्युदपादयन्। व्युत्पाद्यस्तु तं भङ्गं मा जानातु। अतः प्रथमप्रयोगो भंगकृत इति भाष्यतात्पर्यम्। एवं चराचरविषये भाक्तत्वकथने ब्रह्मणि मुख्यत्वमर्थसिद्धम्। **तद्व्यपदेशस्तद्वाचिशब्द** इत्युक्तं विवृणोति **चराचरवाचिशब्द** इति। न च **चराचरव्यपाश्रय** इति पदवैयर्थ्यम्; तदभावे **तच्छब्दस्य** चराचररूपार्थाप्रतीतेः। न च **तच्छब्द**वैयर्थ्यम्—ब्रह्मवाचिशब्देनापि कचित् चराचरविशिष्टब्रह्मरूपार्थस्यौचित्याद् ग्रहणस्य, ब्रह्म वा इदमग्र आसीदित्यत्रेव संभवात् तस्य विशिष्टार्थे भाक्तत्वात् तद्वारणाय तदुपयोगात्। अत्र द्वितीयतच्छब्देन ब्रह्मग्रहणात् पूर्वमपि तस्यैव ग्रहणेन चराचरप्रवृत्तिनिमित्तको ब्रह्मविषयकः प्रयोगः प्रकृतशब्दानामभाक्तः ब्रह्मभावभावित्वादित्यर्थोऽपि भाष्याभिमत एव; **ब्रह्मणोव्यपदेश** इति प्राक् प्रयुक्तत्वात्। एवं

चिशब्दः, चराचरवाचिशब्दो ब्रह्मणि अभाक्त.—मुख्य एव : कुतः? ब्रह्मभावभावित्वात् सर्वशब्दानां वाचकभावस्य ; नामरूपव्याकरणश्रुत्या हि तथाऽवगतम् ॥ १७ ॥

इति तेजोऽधिकरणम् ॥ २ ॥

५६. आत्माधिकरणम् २-३-३ ॥

## नाऽऽत्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ २ । ३ । १८ ॥

वियदादेः कृत्स्नस्य परस्माद् ब्रह्मण उत्पत्तिरुक्ता। इदानीं जीवस्याप्युत्पत्तिरस्ति. नेति संशय्यते । किं युक्तम्? अस्तीति । कुतः? एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेः प्राक्सृष्टेरेकत्वावधारणाच्च । वियदादेरिव जीवस्याप्युत्पत्तिवादिन्यः श्रुतयश्च सन्ति, (तै. अष्ट. १.१) "यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्". (यजु. २-अष्ट. "प्रजापतिः प्रजा असृजत", (छा. ६-८-४) "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः", (तै. भृ.) "यतो वा इमानि भूतानि जायन्ते" इति । एवं सचेतनस्य जगत उत्पत्तिवचनात् जीवस्याप्युत्पत्तिः प्रतीयते । न च वाच्यम्—ब्रह्मणो नित्यत्वात् तत्त्वमस्यादिभिश्च जीवस्य ब्रह्मत्वावगमात् जीवस्य नित्यत्वम्-इति ; (छा. ६-८-४) "ऐतदात्म्यमिदं सर्वम्", (छा. ३-१४-१) "सर्वं खल्विदं ब्रह्म" इत्येवमादिभिर्वियदादेरपि ब्रह्मत्वावगमात् तस्यापि नित्यत्वप्रसक्तेः । अतो जीवोऽपि वियदादिवदुत्पद्यत इति—

एवं प्राप्तेऽभिधीयते-नाऽऽत्मा श्रुतेः-इति । नाऽऽत्मोत्पद्यते ; कुतः? श्रुतेः। (कठ. २-१८) "न जायते म्रियते वा विपश्चित्", (श्वे. १-९) "ज्ञाज्ञौ द्वावजौ" इत्यादिभिर्जीवस्योत्पत्ति-

---

ब्रह्मभावभावित्वाद ब्रह्मव्यपदेशः सर्वः शब्दः चराचरव्यपाश्रयः सन् भाक्तः स्यादिति योजनाद्वयार्थग्राही अर्थो भवितुमर्हति । ब्रह्मभावः चराचरेषु ब्रह्मणः सद्भावः—तदनुप्रवेशः तदनन्तरत्वात नामव्याकरणस्येति श्रुतिप्रमाणप्रदर्शनम् । चराचराणां ब्रह्मसत्ताधीनसत्ताकत्वादिति अपृथक्सिद्धिपरत्वे तु प्रकारवाचिनां प्रकारिपर्यन्तत्वमिति न्यायोपन्यासः । ननु सिद्धं श्रुतौ कारणवाक्येषु सर्वेषां शब्दानां विशिष्टपरत्वात् साक्षात् ब्रह्मकार्यत्वमेव सर्वस्येति ॥ १७ ॥

दृष्टान्तसंगत्याऽऽत्माधिकरणप्रवृत्तिमाह **वियदिति**। **जगतः प्रसूतिः** जगदुत्पादकसमष्टिः यज्जन्या, स जीवान् भूम्यां भूतसूक्ष्मैः संमेल्य विससर्ज । विसर्गः सदेहीकरणेन विक्षेपः (ता. च. ८. ६) **प्रसूती** इत्यत्र ईकारः **व्यससर्जे**त्यत्र अकारश्च छान्दसः । **आत्मे**ति **श्रुते**रिति च जात्येकवचनम् । **ताभ्य इति** पदेन पूर्वोक्तश्रुतिगताः नित्यत्वबोधकश्रुतयः अन्याश्च तथाविधा अर्थापत्त्या नित्यत्वावगमिकाः कर्मफलभोक्तृत्व-मोक्षस्थायित्व-अविनाशिविज्ञानवत्त्व-सत्यकामत्वादिश्रुतयो गृह्यन्ते । आत्मा नोत्पद्यते, अनुत्पत्तिबोधकश्रुतिभ्यः, नित्यत्वाच्चेति हेतुद्वयम् । नित्यत्वे प्रमाणम **ताभ्य** इति । ननु उत्पत्तिप्रतिषेधश्रुतिवत् उत्पत्तिश्रुतिरप्यस्ति तथा विनाशश्रुतिरपि—एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति, यतो वा इमानि भूतानि जायन्त इत्यादिः । अतो वियदादिविषय इव निषेधश्रुतिः शीघ्रभङ्गुरत्वादिनिषेधपरा स्यादित्यत

**प्रतिषेधो** हि श्रूयते। आत्मनो नित्यत्वं च ताभ्यः **श्रुतिभ्य एवावगम्यते**, (श्वे. ६-१३) "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्", (कठ. २-१८) "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" इत्यादिभ्यः। अतश्च नाऽऽत्मोत्पद्यते ॥ कथं तर्ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपद्यते? इत्थमुपपद्यते; जीवस्यापि कार्यत्वात्, कार्यकारणयोरनन्यत्वाच्च ॥ एवं तर्हि वियदादिवदुत्पत्तिमत्त्वमङ्गीकृतं स्यात् ॥ नेत्युच्यते। कार्यत्वं हि नाम-एकस्य द्रव्यस्यावस्थान्तरापत्तिः, तत् जीवस्याप्यस्त्येव। इयांस्तु विशेषः—वियदादेरचेतनस्य यादृशोऽन्यथाभावः, न तादृशोऽन्यथाभावो जीवस्य। ज्ञानसङ्कोचविकासलक्षणो जीवस्यान्यथाभावः; वियदादेस्तु स्वरूपान्यथाभावलक्षणः। सेयं स्वरूपान्यथाभावलक्षणोत्पत्तिर्जीवे प्रतिषिध्यते।

एतदुक्तं भवति—भोग्यभोक्तृनियन्तॄन् विविक्तस्वभावान् प्रतिपाद्य, भोग्यगतमुत्पत्त्यादिकं भोक्तरि प्रतिषिध्य तस्य नित्यतां च प्रतिपाद्य, भोग्यगतमुत्पत्त्यादिकं भोक्तृगतं चापुरुषार्थाश्रयत्वं नियन्तरि प्रतिषिध्य तस्य नित्यत्वं निरवद्यत्वं सर्वदा सर्वज्ञत्वं सत्यसङ्कल्पत्वं करणाधिपाधिपत्वं विश्वस्य पतित्वञ्च प्रतिपाद्य, सर्वावस्थयोश्चिदचितोस्तं प्रति शरीरत्वं तस्य चात्मत्वं प्रतिपादितम्। अतः सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म। तत् कदाचित् स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति; तत् कारणावस्थं ब्रह्म। कदाचिच्च विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरम्; तच्च कार्यावस्थम्। तत्र कारणावस्थस्य कार्यावस्थापत्तौ अचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति। चिदं-

---

बहुविधश्रुतिविरोधं दर्शयितुं **नित्यत्वाच्च ताभ्य** इत्युक्तम्। **इत्यादी**त्यादिपदेन '**अविनाशी** वा अरे अयमात्माऽनुच्छित्तिधर्मा' इत्यादिग्रहणम्। अवस्थाया एवोत्पत्तिपदार्थत्वात् अवस्थासत्त्वे उत्पत्तिप्रतिषेधः कथमित्यत्राह **इयांस्त्वि**ति। पूर्वपक्षी आत्मनः वियदादेरिव स्वरूपान्यथाभावं मन्यत इति तन्निषेधः; अन्यादृशी उत्पत्तिस्तु चिदचिद्ब्रह्मसु त्रिष्वपीष्टैवेति भावः। ननु स्वरूपान्यथाभाव एव स्वीक्रियताम्; का हानिः। न च तर्हि अन्यथाभूतस्वरूपस्यैव जीवत्वात् तत्प्रागवस्थायां तद् द्रव्यं ब्रह्म वाऽन्यद्वा। आद्ये जीवब्रह्मैक्यप्रसंगः। अन्त्योऽसिद्धः। जीवानादित्वकर्मानादित्वादि च न स्यादिति वाच्यम्—जैनादिवत् नानापर्यायस्वीकारेऽपि सर्वस्य जीवत्वेनादोषात् एवमनेकजीवद्रव्यवादसंभवादित्यत्र निर्विकारत्वश्रुतिविरोधं दर्शयति **एतदुक्तं भवती**ति। न म्रियते—हन्यमाने शरीरे; 'जीवापेतं वाव किलेदं म्रियते, न जीवो म्रियते', 'एषोऽणुरात्मा' इत्यादिश्रुतिरनुसंधेया। न च निरवयवे आत्मनि संघातान्यथाभावः संभवति। अहमेक इत्यनुसंधानाच्चानवयवत्वं सिद्धम्; श्रुतेश्च। अवश्यस्वीकार्यस्वभावविकारेणैव निर्वाहे जीवसविकारत्वकल्पनावैयर्थ्यञ्चेति ध्येयम्।

**शब्दादिमत्तये**ति। शब्दरूपादीनामयावद्द्रव्यभाविनां कथमवस्थात्वम्; तदातदोत्पद्यमान ककारादि-

शस्य च कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविकारो भवति। उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति। कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः। अत एवैकस्यावस्थान्तरापत्तिरूपविकारापेक्षया (छा.६-१-३) "येनाश्रुतं श्रुतम्" इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय, मृदादिदृष्टान्तः, "यथा सोम्यैकेन" इत्यादिना निदर्शितः। ईदृशज्ञानसंकोचविकासकृततत्तद्देहसम्बन्धवियोगाभिप्रायाः जीवस्योत्पत्तिमरणवादिन्यः, (यजु. ३.८. २) 'प्रजापतिः प्रजा असृजत" इत्याद्याः श्रुतयः। अचिदंशवत् स्वरूपान्यथात्वाभावाभिप्राया उत्पत्तिप्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च, "न जायते म्रियते" इत्याद्याः. "नित्यो नित्यानाम्" इत्याद्याश्च श्रुतयः। स्वरूपान्यथात्व-ज्ञानसंकोचविकासरूपोभयविधानिष्टविकाराभावाभिप्रायाः, "स वा एष महानज आत्माऽजरोऽमृतो ब्रह्म", "नित्यो नित्यानाम्" इत्याद्याः परविषयाः श्रुतयः। एवं सर्वदा चिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणं च नामरूपविभागाभावादुपपद्यते। (बृ. १-४-७) "तद्धेदं तर्ह्यव्याकृतमासीत्। तन्नामरूपाभ्यां व्याक्रियत" इति हि नामरूपविभागभावाभावाभ्यां नानात्वैकत्वे वदति-इति।

ये त्वविद्योपाधिकं जीवत्वं वदन्ति, ये च पारमार्थिकोपाधिकृतम्, ये च सन्मात्रस्वरूपं ब्रह्म स्वयमेव भोक्तृभोग्यनियन्तृरूपेण त्रिधाऽवस्थितं वदन्ति—सर्वेऽप्येते अविद्याशक्तेरुपाधिशक्तेर्भोक्तृभोग्यनियन्तृशक्तीनां च प्रलयकालेऽवस्थानेऽपि तदानीमेकत्वावधारणं नामरूपविभागाभावादेवोपपादयन्ति। "वैषम्यनैर्घृण्ये न सापेक्षत्वात्", "न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" इति सूत्राभ्यां जीवभेदस्य तत्कर्मप्रवाहस्य चानादित्वाभ्युपगमाच्च। इयान् विशेषः— एकस्यानाद्यविद्यया ब्रह्म स्वयमेव

---

शब्दनीलादिरूपभेदेन द्रव्ये घटशरावादाविव भेदप्रतीतिश्च न भवतीति चेत्—शब्दाद्युत्पत्तियोग्यावस्थाविशेष एव स्वरूपान्यथाभावतया विवक्ष्यताम्। **ज्ञानविकासरूपेति**। पादे मे वेदना, शिरसि सुखमिति सर्वशरीरावच्छिन्नसंवेदनानुगुणतत्तच्छरीरव्यापनार्हो विकासोऽयम्; न तु प्रेरणसंकल्पादिरूपः; तस्यायावच्छरीरभावित्वात् तद्भेदेन जीवोत्पत्तिव्यवहाराभावात्। **तदुभयविशिष्टता** तदुभयव्यापनार्हज्ञानविकासः। एवं सति ब्रह्मणो निर्विकारत्वं हेयविकाररााहित्यरूपम्। न हि स्वप्रतिकूलो विकारो ब्रह्मण्यस्ति। ज्ञानविकाससंकोचाज्ञानेऽपि जीवो जातः नष्टः इति व्यवहारात् देहसंयोगवियोगावेव जन्मनाशावित्याह **ईदृशेति**। अन्यदीयदेहसंयोगादौ जन्मादिव्यवहाराभावात् विकासादिकर एव ग्राह्य इति भावः। **संकोचविकासेति**। विकाससंकोचेति ग्राह्यम्। **विभागभावेति**। व्याकृतं—विभागरूपाकारवत् कृतम्। विभागरूपनानात्वाभावः एकत्वम्।

नन्वयमेकशब्दस्यार्थः क्लिष्ट इत्यद्वैतवादशंकायाम्, सर्वपक्षेऽप्यविशेषं दर्शयति **येत्विति**। अविशेषे तत्तन्मतोपेक्षणं कुत इति शंकायामाह **इयान् विशेष** इति। जीवब्रह्माद्वैतपक्षेष्वेषु चेदमधिकरणं

मुह्यति; अन्यस्य पारमार्थिकानाद्युपाधिना ब्रह्मस्वरूपमेव बध्यते; उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्; अपरस्य ब्रह्मैव विचित्राकारेण परिणमते, कर्मफलानि चानिष्टानि भुङ्क्ते; नियन्त्रंशस्य भोक्तृत्वाभावेऽपि सर्वज्ञत्वात् स्वस्मादभिन्नं भोक्तारमनुसंदधातीति स्वयमेव भुङ्क्ते। अस्माकं तु स्थूलसूक्ष्मावस्थचिदचिद्वस्तुशरीरं ब्रह्म कार्यकारणोभयावस्थावस्थितमपि सर्वदा निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरमवतिष्ठते। प्रकारभूतचिदचिद्वस्तुगताः अपुरुषार्थाः स्वरूपान्यथाभावाश्चेति सर्वं समञ्जसम् ॥ १८ ॥

इति आत्माधिकरणम् ॥ ३ ॥

५७. ज्ञाधिकरणम् २-३-४ ॥

## ज्ञोऽत एव। २। ३। १९॥

वियदादिवत् जीवो नोत्पद्यत इत्युक्तम्; तत्प्रसङ्गेन जीवस्वरूपं निरूप्यते।

---

व्यर्थम्। ब्रह्मण उत्पद्यमानत्वस्यानाशंक्यत्वात्; 'असंभवस्तु सतः' इतिसूत्रसिद्धत्वाच्च॥ अविद्यादिविशिष्टाकारेणाप्यनुत्पन्नत्वं स्थाप्यत इति चेत्—अशक्यमेतत्--अन्तःकरणादिरूपोपाधेः जीवात्मना परिणामस्य च कादाचित्कतया विशिष्टेऽनुत्पन्नत्वायोगात्। अतस्तन्मते सर्वमसमञ्जसमित्याशयेन स्वपक्षे सर्वसामञ्जस्यं वदन् उपसंहरति **इति सर्वमिति**। ननु जीवस्य यादृशं कार्यत्वमस्ति, तादृशस्यैव साक्षात् वक्तव्यतया तत् विहाय तदनुत्पत्तिवर्णनं कुत इति चेत्-समष्टिसृष्टिः किल पादेऽत्रोच्यते। जीवस्य तु कार्यत्वं व्यष्टिसृष्टिरिति॥

एवमचितां चिताञ्च कार्यताप्रकारः शोधितः। अयमेव पादार्थः। अथ प्रसंगात् आत्मानुबन्धिसर्वनिरूपणं पादशेषेण क्रियते, यथोत्तरपादे इन्द्रियाणां कार्यत्वचिन्ताप्रसंगात् तत्संख्यादि इत्यभिप्रेत्य प्रसंगसंगतिमाह **वियदादीति**। पूर्वमात्मनित्यत्वस्थापनाधिकरणे प्रतिज्ञानिर्वाहाय स्वभावविकारस्याप्यभिप्रेतत्वात्, तदुपरि, 'सिद्धे हि स्वभावे तद्विकारमादाय कार्यत्वनिर्वाहः, तदेव न' इत्याक्षेपे ज्ञस्वाभाव्यं स्थाप्यत इत्यपि एतदधिकरणस्य संगतिर्भवितुमर्हति। परंतु तथासति अणुत्वस्थापनसूत्राणां ज्ञाधिकरणान्तर्भाववत् ज्ञत्वविचारस्यापि पूर्वाधिकरणान्तर्भावसंभवात् भिन्नाधिकरणत्वं भाष्याभिमतं न सिद्ध्येत्। अतः देवो जायते मनुष्यो जायते चैत्रो जायत इत्येव जीवे जन्मव्यवहारात् तस्य व्यवहारस्य देवादिदेहसंयोगरूपावस्थामादाय, परम्परया देवत्वचैत्रत्वाद्यवस्थामादाय वा, प्रकृतिगतस्थूलत्वादिकमादाय ब्रह्मणीव, जीवे कार्यत्वोपपादनसंभवात्, मृङ् प्राणत्याग इति मरणस्य प्राणत्यागरूपतया जन्मनः प्राणसंयोगविशेषरूपत्वसंभवेन स्वावच्छिन्नदेहगतप्राणसंयोगवत्त्वसंबन्धेन देवत्वादिमत्त्वमेव जीवे जन्मेति वा वर्णनसंभवात् जीवोत्पत्तिनिरूपणार्थमेव धर्मभूतज्ञाननित्यत्वं स्वीकर्तव्यमिति नियन्तुं न शक्यम्। स्वभावस्य कस्यचित् स्वीकारेऽपि तस्य ज्ञानशब्दवाच्यत्वं न लोकतः सिद्ध्यति; सकर्तृकसकर्मकधीविशेषस्यैव ज्ञानपदार्थत्वानुभवस्य जिज्ञासाधिकरणे उपपादितत्वात्। अतस्तदर्थतया ज्ञस्वाभाव्यसिद्धिर्न प्रतितिष्ठतीति परिशील्य पृथगधिकरणत्वकल्पनया प्रसंगसंगतिरेव दर्शिता। अथादनेनास्मदिष्टज्ञानविकासाद्यवस्थावर्णनोपपादनमपि सिध्यतीत्याशयेन **टीकायां** संगत्यन्तरप्रदर्शनम्। पृथगात्मनित्यत्वविचारात् जीवस्य ब्रह्मातिरेकः सिद्धः;

किं सुगतकपिलाभिमतचिन्मात्रमेवाऽऽत्मनः स्वरूपम् : उत कणभुगभिमतपाषाणकल्पस्वरूपमचित्स्वभावमेवाऽऽगन्तुकचैतन्यगुणकम् : अथ ज्ञातृत्वमेवास्य स्वरूपमिति ? किं युक्तम् ?

चिन्मात्रमिति। कुतः ? तथा श्रुतेः। अन्तर्यामिब्राह्मणे हि, (बृ. ५-७) "य आत्मनि तिष्ठन्" इति माध्यन्दिनीयपर्यायस्य स्थाने, (५-७) "यो विज्ञाने तिष्ठन्" इति काण्वा अधीयते। तथा, (तै. आन. ५) "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति कर्तुरात्मनो विज्ञानमेव स्वरूपं श्रूयते। स्मृतिषु च, (वि. पु. १-२-६) "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः" इत्यादिष्वात्मनो ज्ञानस्वरूपत्वं प्रतीयते।

अपरस्तु—जीवात्मनो ज्ञानत्वे ज्ञातृत्वे च स्वाभाविकेऽभ्युपगम्यमाने, तस्य सर्वगतस्य सर्वदा सर्वत्रोपलब्धिप्रसङ्गात्, करणानां च वैयर्थ्यात्, सुषुप्तिमूर्च्छादिषु सतोऽप्यात्मनश्चैतन्यानुपलब्धेर्जाग्रतः सामग्र्यां सत्यां ज्ञानोत्पत्तिदर्शनात् अस्य न ज्ञानं स्वरूपम्; नापि ज्ञातृत्वम्; आगन्तुकमेव चैतन्यम्। सर्वगतत्वं चात्मनोऽवश्याभ्युपेत्यम्, सर्वत्र कार्योपलब्धेः सर्वत्राऽऽत्मनः संनिधानाभ्युपगमात्: शरीरगमनेनैव कार्यसंभवे सति गति-

---

अथ सांख्यशांकरसंमतचिन्मात्रत्वाकर्तृत्वादिनिरासः क्रियते, भोगोऽपवर्गश्च स्वबुद्धिप्रयत्नाधीन इति व्युत्पादनाय। फलप्रापणविषये परिमाणस्य तथोपयोगाभावात् अणुत्वस्याप्रधानतया निरूपणम्। **ज्ञातृत्वमेवेति**। नायमेवकारः चिद्रूपत्वनिषेधकः, किंतु ज्ञानस्यागन्तुकत्वव्यवच्छेदकः। ननु सूत्रे ज्ञ इति पदप्रयोगे सति ज्ञानस्वरूपत्वं कथं सूत्राभिमतं स्यादिति चेत्—मा भूदत्रैव सूत्रे तत्सिद्धिः, **यावदात्मभावित्वाच्चेति** चकारेण सेत्स्यति। ज्ञानं प्रकाशः नाम साक्षात् गुणद्वारा च तदाश्रयत्वं ज्ञातृत्वमिति; अपदेन ज्ञातृत्वमपि सिद्धमित्याहुः। ज्ञानस्य स्वाभाविकधर्मत्वायोगशंकयाऽधिकरणप्रवृत्तौ नित्यज्ञानाश्रयो न वेत्येव विचारः स्यात्। प्रसंगतः स्वरूपशोधनरूपत्वात्तु चिन्मात्रं न वेति विचारः। **व्यतिरेक** इत्यादिसूत्रबलात् चिन्मात्रत्वमत्र प्रतिक्षेप्यमिति ज्ञायते: **पुंस्त्वादिवदि**त्यतः तार्किकमतमपि। चिन्मात्रत्वं चैतन्यानाश्रयत्वे सति चिद्रूपत्वम्। चैतन्यानाश्रयत्वञ्च चैतन्यप्रतियोगिकत्रैकालिकाभाववत्त्वम्। ईदृशाभाववत्त्वविशिष्टचिद्रूपत्वं सुगतकपिलादिसंमतम्। तदस्ति न वेत्येव विचारः। तत्र न वेति कोटिर्विशिष्टाभावः विशेषणाभावविशेष्याभावोभयात्मक इति तार्किकः। विशेषणाभावश्च चैतन्यत्रैकालिकत्वाभावः किञ्चित्कालावच्छिन्नचैतन्यसंबन्धरूप इति स मन्यते। सिद्धान्ती तु विशिष्टाभावोऽयं विशेषणाभावमात्रपर्यवसायी। स च विशेषणाभावः त्रैकालिकचैतन्यसंबन्धरूप इति। विशेष्याभावपर्यवसानानंगीकारादेव चित्स्वरूपत्वमपि सिद्धम्। विशेषणाभाव एव त्विह सूत्रे **ज्ञ एवेति** दर्शित इति विवेकः। **ज्ञानत्व** इति। ज्ञानत्वे स्वाभाविकज्ञातृत्वे चाभ्युपगम्यमाने इत्यर्थः। **सर्वगतस्येति**; सर्वगतत्वादित्यर्थः। ज्ञानत्वाभ्युगमे दोषः सर्वत्रोपलब्धिप्रसंगः। ज्ञातृत्वस्वाभाविकत्वे च सर्वत्रोपलब्धिप्रसंगादिः सर्वो दोषः। **आगन्तुकं** कादाचित्कं कारणायत्तम्। न चागन्तुकत्वेऽपि ज्ञानस्थितिकाले सर्वलोकोपलब्धिप्रसंगतादवस्थ्यमिति वाच्यम्-तदुत्पत्तिपक्षे विभुद्रव्ये गुणस्य स्वसमवायिकारणावच्छेदेनैवोत्पत्तिनियमात् भेरीसंयोगावच्छेदेन गगने शब्दोत्पत्तिवत् मनःसंयोगाव-

कल्पनायां प्रमाणाभावाच्च। श्रुतिरपि सुषुप्तिवेलायां ज्ञानाभावं दर्शयति—(छा. ८-११-२) "नाह खल्वयमेवं संप्रत्यात्मानं जानाति, अयमहमस्मीति ; नो एवेमानि भूतानि" इति। (बृ. ६-५-१३) तथा मोक्षदशायां ज्ञानाभावं दर्शयति, (बृ. ६-५-१३) "न प्रेत्य संज्ञाऽस्ति" इति। "ज्ञानस्वरूपम्" इत्यादिप्रयोगस्तु ज्ञानस्य तदसाधारणगुणत्वेन लाक्षणिक इति ॥

एवं प्राप्ते प्रचक्ष्महे—ज्ञोऽत एव। ज्ञ एव—अयमात्मा ज्ञातृस्वरूप एव, न ज्ञानमात्रम्, नापि जडस्वरूपः ; कुतः? अत एव—श्रुतेरेवेत्यर्थः। "नाऽऽत्मा श्रुतेः" इति प्रकृता श्रुतिः अत इति शब्देन परामृश्यते। तथा छान्दोग्ये प्रजापतिवाक्ये मुक्तामुक्तात्मस्वरूपकथने, (छा. ८-१२-४) "अथ यो वेद, इदं जिघ्राणीति स आत्मा" (८-१२-५) "मनसैवैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके", (छा. ८-७-१) "सत्यकामः सत्यसङ्कल्पः", (८-१२-३) "नोपजनं स्मरन्निदं शरीरम्"। अन्यत्रापि (छा. ७-२६-२) "न पश्यो मृत्युं पश्यति"। तथा वाजसनेयके, (बृ. ६-३-७) "कतम आत्मा" इति पृष्ट्वा, "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इति। तथा (बृ. ६-५-१५) "विज्ञातारमरे केन विजानीयात्" (—) "जानात्येवायं पुरुषः"। तथा, (प्रश्न.४-९) "एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः", (प्रश्न. ६-५) "एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः" इति ॥

---

च्छेदेनैव ज्ञानोत्पत्तिरिति तत्तद्देशमात्रग्रहणात् न सर्वत्रोपलब्धिः। ज्ञाननित्यत्वे तु सर्वात्मप्रदेश एव ज्ञानमिति सर्वत्रोपलब्धिप्रसंग इत्याशयात्। नाहेत्यत्र अहेति च्छेदः, अव्ययम्। प्रसिद्धयर्थकम्। संप्रति यथावत्। संज्ञेति। इदं ज्ञानसामान्यपरमिति तार्किकाभिमानः। ज्ञ इत्येतावता ज्ञस्वाभाव्यस्य स्पष्टसिद्ध्या सौत्रमेवकारमत्रापि योजयति ज्ञएवेति। न सांख्यमत इव विशेष्यविशेषणोभयवत्त्वम्; न वा तार्किकमत इवोभयस्याप्यभावः; किं तु विशेषणमात्रस्याभावः ज्ञस्वाभाव्यपर्यवसायीति भावः। अत्र सूत्रे एतावदर्थविवक्षायां सत्यामेवोत्तरसूत्रस्य कृतमवतरणं घटते। पूर्वसूत्रे श्रुतिः नित्यत्वमिति हेतुद्वयमुक्तम्; तत्र श्रुतिरत्र परामृश्यत इत्याह नात्मेति। पूर्वसूत्रे ताभ्य इत्यनेनैव अत्रैतच्छब्देन पूर्वविवक्षितश्रुत्यधिकश्रुतिग्रहणमपि चिकीर्षितमिति दर्शयति तथेति। मनसा ज्ञानेन। जानात्येवेति। नायमेवकारः अत्यन्तायोगव्यवच्छेदार्थः, तस्य क्रियासामान्यसाधारणतया विशेषाभावात्। नान्ययोगव्यवच्छेदार्थः, ज्ञानातिरिक्तशक्त्यादियोगसत्त्वात्। न च ज्ञाने पुरुषान्ययोगव्यवच्छेदार्थः : जानातिनैव समभिव्याहारात्। अतो ज्ञानायोगव्यवच्छेदार्थः। तत्र ज्ञाधातोः सकर्मकज्ञानस्वरसतया विषयावच्छिन्नचैतन्यस्यैव ग्राह्यत्वेऽपि सुषुप्त्यादौ विषयावच्छिन्नत्वस्य दुर्वचतया केवलचैतन्यमात्रपरत्वमिष्यत इति भावः। षोडश कलाः 'स प्राणमसृजत' इतिवाक्योक्ताः प्राणादयः (पुट. ७१)। मणिज्योत्स्नादिदृष्टान्तपरवचनमपि ग्राह्यम्। उपात्तश्रुतिषु कचित् ज्ञानानाश्रयत्वव्यवच्छेदकत्वं कचित् तत्कादाचित्कत्वव्यवच्छेदकत्वञ्च यथार्हं भाव्यम्। अत एव-श्रुतेरेवेत्यत्र-एवकारः श्रुतेरान्यपर्यव्यवच्छेदाय ॥ १९ ॥

यत्तूक्तं ज्ञातृत्वे स्वाभाविके सति सर्वगतस्य तस्य सर्वदा सर्वत्रोपलब्धिः प्रसज्यत इति ; तत्रोच्यते—

उत्क्रान्तिगत्यागतीनाम् । २ । ३ । २० ॥

नायं सर्वगतः, अपित्वणुरेवायमात्मा । कुतः? उत्क्रान्तिगत्यागतीनां श्रुतेः ; उत्क्रान्तिस्तावत् श्रूयते, (बृ. ६-४-२ "तेन प्रद्योतेनैष आत्मा निष्क्रामति, चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः" इति । गतिरपि, (कौषी. १-२) "ये वै केचास्माल्लोकात् प्रयन्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति" इति । आगतिरपि, (बृ. ६-४-६) "तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे" इति । विभुत्वे ह्येता उत्क्रान्त्यादयो नोपपद्येरन् ॥

स्वात्मना चोत्तरयोः । २ । ३ । २१ ॥

चशब्दोऽवधारणे । यद्यपि शरीरवियोगरूपत्वेनोत्क्रान्तिः स्थितस्याप्यात्मनः कथञ्चिदुपपद्यते । गत्यागती तु न कथंचिदुपपद्येते । अतस्ते स्वात्मनैव संपाद्ये ॥ २१ ॥

नाणुरतच्छ्रुतेरिति चेन्न—इतराधिकारात् । २ । ३ । २२ ॥

(बृ. ६-३-७) "योऽयं विज्ञानमयः प्राणेषु" इति जीवं प्रस्तुत्य, (बृ. ६-४-२५)

---

उत्तरसूत्रमुत्क्रान्त्यादिकालेऽपि ज्ञत्वमस्तीति ज्ञाननित्यत्वस्थापकमेव योज्येनापि, अथापि, नाणुरित्यादिग्रन्थपर्यालोचनयाऽणुत्वस्थापकमेवेति युक्तम् । अनन्तदनुगुणमवतारयति यत्त्विति । यद्यपि ज्ञातृत्वस्य स्वाभाविकत्वेऽपि, आत्मनश्च सर्वगतत्वेऽपि विषयप्रकाशवेलायामेव ज्ञानप्रकाशस्येष्टतया विषयप्रकाशस्य करणायत्तत्वेन करणसंयुक्तात्मप्रदेशावच्छेदेनैव ज्ञानं विक्रियत इति, हृदयाद्यवच्छिन्नब्रह्मप्रदेशस्यैवोपासनेऽभिव्यक्तिवत् तदात्मप्रदेशस्यैव ज्ञानेन सह ग्रहणमिति अनुभवानुरोधेन स्वीकारान्न दोष इत्यप्युच्येत--अथाप्यन्वारुह्यवादस्यानुचितत्वात् प्रामाणिकाणुत्वग्रहणेनैव परिहारः क्रियते । अन्तिम ,त्व तार्किकं प्रति वर्ण्यमानदूषणस्य स्वपक्षे वारणार्थमप्येवम् । सुषुप्तिवेलायां हृदयावच्छेदेनोपलम्भापत्तिश्च परिहरिष्यत एव । ज्ञानस्वरूपत्वस्याप्यस्मदभिमतत्वात् अणुत्वोक्तिं विना तदा प्रकृताक्षेपपरिहारायोगादपि अणुत्वसमर्थनम् । अत इदमपि ज्ञानस्वरूपत्वस्य सूत्रकृदिष्टत्वोपष्टम्भकम् । गत्यागतिपदाभ्याम् ; सता सोम्य तदा संपन्नो भवति", 'सत आगम्य न विदुः' इति शांकरोक्तसुषुप्तिकालिकगत्यागतिग्रहणमपि भवति-अथाप्युत्क्रान्तिपदानन्तरप्रयोगादुत्क्रान्तिपश्चाद्भाविपरतयैव व्याख्यातम् । न च सूक्ष्मशरीरकर्तृकमेव सर्वमिदमिति वाच्यम्—आत्मनो गत्यस्वीकारिणा सूक्ष्मशरीरस्याप्यस्वीकार्यत्वात् । विभोरात्मनो भोगदेश एव सर्वलाभसंभवेन इतो नेयस्य कस्यचित् तार्किकैरस्वीकारात् । "न हि तन्मनस्तानीन्द्रियाणि तस्यैव भोगसाधनानीति नियमः" इति तदुक्तेः ॥ २० ॥ कथञ्चित्—शरीरस्वाम्यनिवृत्तिपरतया । उत्तरयोरित्यनेन सुषुप्तकालिकगत्यागति-विरजान्तिक्रमणरूपगत्याद्यपि विवक्षितं स्यात् ॥ २१ ॥

प्रस्तुत्येति । 'स वा एष महानज आत्मा' इति, (२२) योयं विज्ञानमय इति वाक्या-

"स वा एष महानज आत्मा" इति महत्त्वश्रुतेः नाणुर्जीव इति चेन्न ; इतराधिकारात्—जीवादितरस्य प्राज्ञस्य तत्राधिकारात्। यद्यप्युपक्रमे जीवः प्रस्तुतः—तथापि, (बृ. ६-४-१३) "यस्यानुवित्तः प्रतिबुद्ध आत्मा" इति मध्ये परः प्रतिपाद्यत इति तत्संबन्धीदं महत्त्वम् ; न जीवस्य ॥ २२ ॥

स्वशब्दोन्मानाभ्यां च। २। ३। २३॥

साक्षादणुशब्द एव श्रूयते, (मु. ३-१-९) "एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश" इति। उद्धृत्य मानमुन्मानम्। अणुसदृशं वस्तूद्धृत्य तन्मानत्वं जीवस्य श्रूयते, (श्वे. ५-९) "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः" इति, (श्वे.५-९) "आराग्रमात्रो ह्यवरोऽपि दृष्टः" इति च। अतोऽणुरेवायमात्मा॥

अथ स्यात्—आत्मनोऽणुत्वे सकलशरीरव्यापिनी वेदना नोपपद्यत इति ; तत्र मतान्तरेण परिहारमाह—

अविरोधश्चन्दनवत्। २। ३। २४॥

यथा हरिचन्दनबिन्दुः देहैकदेशवर्त्यपि सकलदेहव्यापिनमाह्लादं जनयति, तद्वदात्माऽपि देहैकदेशवर्ती सकलदेशवर्तिनीं वेदनामनुभवति ॥ २४ ॥

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमात् हृदि हि। २। ३। २५॥

हरिचन्दनबिन्द्वादेर्देहदेशविशेषावस्थितिविशेषात् तथाभावः, आत्मनस्तु तन्न विद्यत इति चेन्न ; आत्मनोऽपि देहदेशविशेषे स्थित्यभ्युपगमात्। हृदयदेशे ह्यात्मनः स्थितिः श्रूयते, (प्रश्न. ३-६) "हृदि ह्ययमात्मा ; तत्रैकशतं नाडीनाम्" इति ; (बृ.६-३) तथा, "कतम आत्मा" इति प्रकृत्य, "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः" इति। आत्मनो देशविशेषस्थितिख्यापनाय चन्दनदृष्टान्तः प्रदर्शितः ; न तु चन्दनस्य देशविशेषापेक्षा ॥ २५ ॥

---

व्यवहितपूर्वमपि श्रूयते ; बहुवाक्यव्यवधानेन पश्चाद् ब्राह्मणस्यान्तेऽपि। योयं विज्ञानमय इति न तद्वाक्यग्रहणम् ; किंतु 'कतम आत्मेति। योयं विज्ञानमयः' (७) इति वाक्यग्रहणम्। तत्रैव, 'यस्यानुवित्तः' इति वाक्यं मध्यगतं भवेत्। **यस्यानुवित्त** इति। **यस्ये**ति पूर्वप्रस्तुतजीवपरम्। **प्रतिबुद्धः** प्राज्ञ **आत्मा** परमात्मा यस्य पूर्वोक्तस्य जीवस्य अस्मिन् अनर्थसंकटे देहे प्रविष्टः सन् **अनुवित्तः** उपासितः प्राप्तश्च भवतीत्यर्थः। उपरि 'स विश्वकृत्' इत्युत्तरार्धेपि स इति परमात्मैव गृह्यते। यस्येत्यस्य पूर्वशेषतया न प्रतिसंबन्धितच्छब्दापेक्षेति द्रष्टव्यम्। **परिष्कारे**ऽन्यत ॥ २२ ॥

**एषोणु**रिति। यस्मिन् जीवे विवेश, यदुपकरणीभवति पञ्चवृत्तिप्राणः, एष जीवात्मा अणुपरिमाणः ध्यातव्य इत्यर्थः। शेषं **परिष्कारे**। **आरा** चर्मसीवनसूची ॥ २३ ॥

**मतान्तरेणे**ति। **गुणाद्वा** इति स्वमतस्य पश्चाद्वक्ष्यमाणत्वादिदं मतान्तरमित्युक्तम् ॥ २४ ॥

**न तु चन्दनस्य देशविशेषापेक्षे**ति। चन्दनस्य मर्मस्थानरूपानेकदेशापेक्षत्वेपि आत्मन इव

एकदेशवर्तिनः सकलदेहव्यापिकार्यकरत्वप्रकारं स्वमतेनाऽऽह—

गुणाद्वाऽऽलोकवत् । २ । ३ । २६ ॥

वाशब्दो मतान्तरव्यावृत्त्यर्थः । आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यावस्थितः : आलोकवत् । यथा मणिद्युमणिप्रभृतीनामेकदेशवर्तिनामालोकोऽनेकदेशव्यापी दृश्यते, तद्वत् हृदयस्थस्याऽऽत्मनो ज्ञानं सकलदेहं व्याप्य वर्तते ; ज्ञातुः प्रभास्थानीयस्य ज्ञानस्य स्वाश्रयादन्यत्र वृत्तिः मणिप्रभावदुपपद्यत इति प्रथमसूत्रे स्थापितम् ॥ २६ ॥

ननूक्तं ज्ञानमात्रमेवात्मेति ; तत् कथं ज्ञानस्य स्वरूपव्यतिरिक्तगुणत्वमुच्यते : तत्राह—

व्यतिरेको गन्धवत् तथा च दर्शयति । २ । ३ । २७ ॥

यथा पृथिव्याः गन्धस्य गुणत्वेनोपलभ्यमानस्य ततो व्यतिरेकः, तथा जानामीति ज्ञातृगुणत्वेन प्रतीयमानस्य ज्ञानस्याऽऽत्मनो व्यतिरेकः सिद्धः । दर्शयति च श्रुतिः, "जानात्येवायं पुरुषः" इति ॥ २७ ॥

पृथगुपदेशात् । २ । ३ । २८ ॥

स्वशब्देनैव विज्ञानं विज्ञातुः पृथगुपदिश्यते. (बृ. ६-३-३०) "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति ॥ २८ ॥

यत्तूक्तम्—"यो विज्ञाने तिष्ठन्", "विज्ञानं यज्ञं तनुते", "ज्ञानस्वरूपमत्यन्तनिर्मलम्" इत्यादिषु ज्ञानमेवात्मेति व्यपदिश्यत इति, तत्राह—

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् । २ । ३ । २९ ॥

तुशब्दश्चोद्यं व्यावर्तयति ; तद्गुणसारत्वात्—विज्ञानगुणसारत्वात् आत्मनो विज्ञानमिति व्यपदेशः । विज्ञानमेवास्य सारभूतो गुणः, यथा प्राज्ञस्यानन्दः सारभूतो गुण इति प्राज्ञ आनन्दशब्देन व्यपदिश्यते—(तै. आन. ७-१) "यदेष आकाश आनन्दो न स्यात्", (तै. भृ. ६-१) "आनन्दो ब्रह्मेति व्याजानात्" इति । प्राज्ञस्य ह्यानन्दः सारभूतो गुणः-(तै. आन. ९-४) "स एको ब्रह्मण आनन्दः", "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इति । यथा वा, (तै. आन. ९-१) "सत्यं ज्ञानमनन्तं ब्रह्म" इति विपश्चितः प्राज्ञस्य ज्ञानशब्देन व्यपदेशः । (तै. आन. १-१-२) "सह ब्रह्मणा विपश्चिता", (मु.

---

हृदयान्तःप्रदेशरूपदेशापेक्षैवेति नास्तीत्यर्थः ॥ २५ ॥

विज्ञानं ब्रह्मेति व्यजानादिति जीवं निर्दिश्य. ब्रह्मविषये आनन्दो ब्रह्मेति व्यजानादिति विशिष्य निर्देशात् आनन्दस्तस्य गुणसार इति युक्तमित्याशयेनाह यथा प्राज्ञस्यानन्द इति । तार्किकैः प्राय आनन्दास्वीकारात् तत्प्रत्युक्तिसमये तदभिमतनित्यज्ञानमादायैव व्याख्यानमुचितम् ; प्राज्ञशब्दौचित्याच्चेत्याशय्य यथावेति पक्षान्तरम् ॥

१-१-९) "यः सर्वज्ञः" इत्यादिषु प्राज्ञस्य ज्ञानं सारभूतो गुण इति विज्ञायते ॥

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात । २ । ३ । ३० ॥

विज्ञानस्य यावदात्मभाविधर्मत्वात् तेन तद्व्यपदेशो न दोषः; तथा च खण्डादयो यावत्स्वरूपभाविगोत्वादिधर्मशब्देन गौरिति व्यपदिश्यमाना दृश्यन्ते; स्वरूपनिरूपणधर्मत्वादित्यर्थः। चकारात् ज्ञानवत् आत्मनोऽपि स्वप्रकाशत्वेन विज्ञानमिति व्यपदेशो न दोष इति समुच्चिनोति ॥ ३० ॥

यच्चोक्तं सुषुप्त्यादिषु ज्ञानाभावात् ज्ञानस्य न स्वरूपानुबन्धिधर्मत्वमिति। तत्राह—

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् । १ । १ । ३१ ।

---

ननु कः सारशब्दार्थः । न तावत् अपृथक्सिद्धत्वं सारत्वम्; तस्य सर्वगुणसाधारण्यात् । तद्गुणपदबोध्यज्ञानरूपगुणमात्रे तदयोगात् । न चेतरव्यावृत्तत्वं तत्—इच्छादेरपि तत्सत्त्वात् । नापि, 'सारो बले स्थिरांशे च' इति कोशात् स्थिरत्वं यावदाश्रयभावित्वरूपं सारत्वम् । इच्छादिवत् कदाचिदेवोत्पद्यमानस्य ज्ञानस्य तदसंभवादिति शंकायाम्, यावदाश्रयभावित्वमस्तीति प्रतिवदन् तावता तत्पदस्य धर्मिपर्यन्तवाचित्वं कथमिति शंकामप्यपनुदति **यावदिति** सूत्रेण । **न दोष** इति । इच्छादिसाम्यरूपो वा, सारशब्दार्थायोगरूपो वा, एवमपि धर्मिवाचित्वासंभवरूपो वा दोषो नेत्यर्थः। ज्ञानानां कादाचित्कत्वेऽपि तेषां किञ्चिद्गुणपरिणामत्वाङ्गीकारात् तस्य गुणस्यैवेह विज्ञानशब्दविवक्षिततया तस्य यावत्स्वरूपभावित्वमक्षतमिति निगूढम् । सूत्रे **आत्म**शब्दः स्वरूपवाची। यावत्स्वरूपभावित्वं नाम स्वरूपं धर्मि यावत्कालमस्ति, तावत्कालं तत्रास्य वर्तमानत्वम्; एवम्भूतधर्मवाचिनां धर्मिपर्यन्ते शक्तिं निदर्श्य दर्शयति **तथा चेति** । प्रकृतसर्वधर्मिवृत्तित्वमपि तत्; कतिपयमात्रवृत्तिधर्मस्य सारत्वायोगात् । अर्थद्वयानुगतमर्थमाह **स्वरूपनिरूपणधर्मत्वादिति** । अनेनातिप्रसक्ताणुत्वादिधर्मव्यावृत्तिरपि कृता भवति । सारशब्दार्थस्यैवं शोधनेऽपि, अपृथक्सिद्धप्रकारवाचिनां शब्दानां प्रकारिपर्यन्तत्वमित्येतावदेवान्ततो विवक्षितम् । कादाचित्कनीलादिगुणवाचिपदैर्गुणिपर्यन्तव्यवहारोऽपि हीष्टः । इच्छादिशब्दैरात्माप्रतीतिः तेषां निष्कर्षकशब्दत्वात् । एवं दोषपरिहारोऽपि सौत्रचकारविवक्षितः । ब्राह्माधिकरणे जैमिनिपक्षं निरस्य प्रकाशत्वस्याप्यात्मनि भगवता बादरायणेन स्थापनात् इहापि तस्य सिद्धान्ते प्रदर्श्यतया अत्र चकारेण तद्विवक्षां दर्शयति **चकारादिति** ॥ ३० ॥

नन्विच्छादिवत् कादाचित्कस्य ज्ञानस्य कथं यावदात्मभावितेति सूत्रकारनिगूढाशयाज्ञानेन शङ्कमानं प्रत्याह **पुंस्त्वादिवदिति** । ननु सुखदुःखेच्छादिवत् ज्ञानं स्थिरं चेत्, प्रकाशत एव । यन्न प्रकाशते, न तद् ज्ञानं भवितुमर्हति। ततो यदीदं यावदात्मभावि, तर्हि सर्वदा प्रकाशेत। अन्यथा कथं तत् ज्ञानमिति चेत्—उच्यते—अस्ति तावदात्मनि कश्चिदनादिर्गुणः । स विषयग्रहणवेलायामेव प्रकाशते । परिणामदशायामेव तस्य विषयग्राहिता । तस्यैव परिणामः प्रत्यक्षानुमित्यादिज्ञानेच्छाकृतिसुखदुःखादिः । यथा प्रकृतिः परिणामदशायां व्यज्यते, अन्यदा चाव्यक्ता, तद्वत् । तस्य सर्वविधपरिणाम-

तुशब्दश्चोदिताशङ्कानिवृत्त्यर्थः। अस्य ज्ञानस्य सुषुप्त्यादिष्वपि विद्यमानस्य जागराद्यिष्वभिव्यक्तेः संभवात् स्वरूपानुबन्धिधर्मत्वोपपत्तिः; पुंस्त्वादिवत्-यथा पुंस्त्वाद्यसाधारणस्य बाल्यावस्थायां सतोऽप्यनभिव्यक्तस्य युवत्वेऽभिव्यक्तौ पुंसस्तत्ता न कादाचित्की भवति। सप्तधातुमयत्वं हि शरीरस्य स्वरूपानुबन्धि; (—) "तत् सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम्" इति शरीरस्वरूपव्यपदेशात्। सुषुप्त्यादिष्वप्यहमर्थः प्रकाशत इति प्रागेवोक्तम्। तस्य विद्यमानस्य ज्ञानस्य विषयगोचरत्वं जागर्यादावुपलभ्यते; एते चात्मनो ज्ञातृत्वादयो धर्माः प्रागेवोपपादिताः। अतो ज्ञातृत्वमेव जीवात्मनः स्वरूपम्। स चायमात्माऽणुपरिमाणः। "न प्रेत्य संज्ञाऽस्ति" इत्यपि न मुक्तस्य ज्ञानाभाव उच्यते; अपितु (बृ. ४-४-१२) "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इति संसारदशायां यद् भूतानुविधायित्वप्रयुक्तं जन्मनाशादिदर्शनम्, तत् मुक्तस्य न विद्यते; (छा. ७-२६-२) "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वशः". (छा. ८-१२-३) "नोपजनं स्मरन्निदं शरीरम्" (छा. ८-१२-५) "मनसैतान् कामान् पश्यन् रमते" इत्यादिश्रुत्यैकार्थ्यात् ॥ ३१ ॥

---

मूलभूतज्ञानपरिणामबहुत्वात् ज्ञानपरिणामप्राचुर्याच्च ज्ञानमिति व्यपदेशः, प्राणवृत्तिप्राचुर्यात् आभ्यन्तरवायौ सर्वत्र प्राणशब्दवत्; प्रकृतौ च अन्नमित्यादिव्यवहारवत्। एवं कार्यवाचिपदेनैव कारणव्यपदेश इत्येतावता न तस्य सर्वदा सविषयकत्व-प्रकाशमानत्वप्रसक्तिः। न च घटादिरूपेण परिणतायाः प्रकाशमानत्वात् प्रकृतिरपि ज्ञानपदव्यपदेश्या स्यादिति शंक्यम्, घटादेर्ज्ञानत्वाभावात्। न हि घटो ज्ञानं यावत्सत्तं प्रकाशमानोऽस्ति; न वा विषयान्तरं गृह्णाति। अतो घटादेर्ज्ञानत्वाभावात् प्रकृतेरपि न ज्ञानता। परिणामोऽपि कश्चित् संस्काररूपो न प्रकाशते; सुतरामपरिणतः स गुणः। तावता शब्दान्तराकल्पनेन विज्ञानादिशब्दैर्व्यपदेशो न दोषाय; सर्वत्र मुख्यामुख्यव्यवहारस्य निराबाधत्वात्। न च गुणस्य कथं परिणाम इति शंक्यम्—ज्योत्स्नावत् द्रव्य एव धर्मत्वमात्रेण गुणत्वव्यपदेशात्। न हि तार्किकसंमतरीत्यैव गुणव्यपदेशः सर्वैः क्रियत इति। **सप्तधातु।** रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः। **त्रिमलम्।** मूत्रपुरीषरेतांसि वा मूत्रपुरीषतदन्यानि वा वातपित्तश्लेष्मरूपाणि वा अन्नजलतेजोरूपाशितत्रयाधीनानि वा त्रीणि। **द्वियोनि** स्त्रीपुरुषरूपयोनिद्वयवत्। **चतुर्विधाहारः** खाद्यलेह्यचोष्यपेयाः। विभुत्वे ज्ञानसंकोचवर्णनक्लेश इत्याह **स चेति**। **नविद्यत इति**। इत्युच्यत इति शेषः॥

श्रुतभाष्ये विभुत्वादात्मनः सर्वदा सर्वत्रोपलब्धिः स्यादिति तार्किकदूषणं परिहरता तदणुत्वे स्थापिते, सर्वदेहव्यापिसंवेदननिर्वाहः कथमिति तच्छङ्कायां ज्ञानगुणव्याप्तिमादायेति समाहितम्। अथ सांख्येन ज्ञानमात्ररूपे आत्मनि ज्ञानगुणकत्ववादो न युक्त इत्याक्षेपे तत् स्थापितम्; आत्मनो ज्ञानशब्दव्यपदेशः कथमिति शंकाऽप्येतावता शमिता। अथ तं सांख्यं प्रति, तार्किकोक्तदूषणं तत्रैवापततीति वदति; अर्थात्, तमप्यात्माणुत्वं स्वीकारयति **नित्येति** सूत्रेण। तदवतारयन्, सांख्यं प्रति वादावसरत्वादत्र सांख्यबाधा-

संप्रति ज्ञानात्मवादे तस्य सर्वगतत्वे दूषणमाह—

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ २ । ३ । ३२ ॥

अन्यथा सर्वगतत्वपक्षे, तस्य ज्ञानमात्रत्वपक्षे च नित्यमुपलब्ध्यनुपलब्धी सहैव प्रसज्येयाताम्; अन्यतरनियमो वा—उपलब्धिरेव वा नित्यं स्यात्, अनुपलब्धिरेव वा। एतदुक्तं भवति—लोके तावत् वर्तमानयोरात्मोपलब्ध्यनुपलब्ध्योरयं ज्ञानात्मा सर्वगतो हेतुस्स्यात्, उपलब्धेरेव वा, अनुपलब्धेरेव वा। उभयहेतुत्वे सर्वदा सर्वत्रोभयं प्रसज्येत। यद्युपलब्धेरेव, सर्वस्य सर्वदा सर्वत्रानुपलम्भो न स्यात्। अथानुपलब्धेरेव, सर्वदा सर्वत्रोपलब्धिर्न स्यात् इति। अस्माकं शरीरस्यान्तरेवावस्थितत्वादात्मनः तत्रैवोपलब्धिः, नान्यत्रेति व्यवस्थासिद्धिः ॥

करणायत्तोपलब्धेरपि सर्वेषामात्मनां सर्वगतत्वेन सर्वैः करणैः सर्वदा संयुक्तत्वात्, अदृष्टादेरप्यनियमादुक्तदोषः समानः ॥ ३२ ॥ इति ज्ञाधिकरणम् ॥ ४ ॥

५८. कर्त्रधिकरणम् २-३-५ ॥

कर्ता शास्त्रार्थवत्त्वात् ॥ २ । ३ । ३३॥

अयमात्मा ज्ञाता, स चाणुपरिमाण इत्युक्तम्; इदानीं किं स एव कर्ता, उत स्वयमकर्तैव सन् अचेतनानां गुणानां कर्तृत्वमात्मन्यध्यस्यतीति चिन्त्यते। किं युक्तम्, अकर्तैवाऽऽत्मेति। कुतः? आत्मनो ह्यकर्तृत्वम्, गुणानामेव च कर्तृत्वमध्यात्मशास्त्रेषु श्रूयते। तथा हि कठवल्लीषु जीवस्य, (कठ. २-१८) "न जायते म्रियते" इत्यादिना जन्मजरामरणादिकं सर्वं प्रकृतिधर्मं प्रतिषिध्य, हननादिषु क्रियासु कर्तृत्वमपि प्रतिषिध्यते, (१९)

---

न्येनाऽऽह संप्रतीति। तार्किकोक्तो दोषः तार्किकमेवास्कन्देदणुत्वास्वीकारे इत्यप्यन्ते उपपादयिष्यति। तस्याधिकोपपादनसापेक्षत्वाच्चावतरणे तदुपेक्षा। **ज्ञानमात्रत्वपक्षे चे**त्यत्र मात्रपदं तन्मतस्थितिकथनाय; न तु प्रकृते अपेक्षितम्। तथा च **अन्यथे**त्यस्य विभुज्ञानस्वरूपात्मवादे इत्यर्थः। कथमित्यत्रोपपादयति **एतदि**ति। देहावच्छेदेनात्मोपलब्धिरस्ति, अन्यावच्छेदेन नास्ति। तत्रोपलब्धावनुपलब्धौ च को हेतुः। आत्मैवेति चेत्—अनुपलब्धिरपि देहावच्छेदेन, अन्यावच्छेदेनोपलब्धिरपि कुतो न। एकमात्रं प्रति हेतुश्चेत्, उपलम्भमात्रं सर्वावच्छेदेन स्यात्; अनुपलम्भमात्रं वेत्यर्थ.। अणुत्वे तु नायं दोष इत्याह **अस्माक**मिति। तार्किकपक्षेपि दोषं कथञ्चिदानयति **करणे**ति। आत्मनां विभुत्वात् सर्वात्मकरणानामपि सर्वसंबन्धित्वात् तत्तत्करणनिष्पाद्यकर्मणामपि सर्वीयत्वात् तत्तज्जन्यादृष्टानामपि साधारणत्वात् तदधीनः आत्मानुभवः सर्वकरणावच्छेदेनाप्येकैकस्यात्मनो भवितुमर्हतीति एकदेहावच्छेदेनैवात्मोपलब्धिरिति कथमिति भावः। **अंशाधिकरणा**न्तर्गतसूत्राण्यत्रानुसंधेयानि। तत् सिद्धमात्मनो ज्ञत्वं ज्ञानत्वमणुत्वञ्च ॥३२॥

आत्मनो ज्ञाननिरूपणानन्तरं तत्कार्यत्वसंगत्या कृतिनिरूपणं क्रियते इत्याशयेनाह **अयमात्मे**ति। **गुणानां** सत्त्वरजस्तमोमयप्रकृतिपरिणामभूतदेहादीनाम्; बुद्धेरेव वा। अयं सांख्यपक्ष एवात्र पूर्वपक्षः।

"हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते" इति। हन्तारमात्मानं जानन् न जानात्यात्मानमित्यर्थः। तथा च भगवता स्वयमेव, 'जीवस्याकर्तृत्वं स्वरूपम्; कर्तृत्वाभिमानस्तु व्यामोहः' इत्युच्यते, (गी. ३-२७) "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते", (गी. १४-१९) "नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति", (गी. १३-२०) "कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते। पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इति च। अतः पुरुषस्य भोक्तृत्वमेव; प्रकृतेरेव तु कर्तृत्वम् इति—

एवं प्राप्ते प्रचक्ष्महे—कर्ता शास्त्रार्थवत्त्वात्—इति। आत्मैव कर्ता, न गुणाः; कस्मात्? शास्त्रार्थवत्त्वात्। शास्त्राणि हि, 'यजेत स्वर्गकामः', 'मुमुक्षुर्ब्रह्मोपासीत' इत्येवमादीनि स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते; न ह्यचेतनस्य कर्तृत्वेऽन्यो नियुज्यते। शासनाच्च शास्त्रम्; शासनं च प्रवर्तनम्; शास्त्रस्य च प्रवर्तकत्वं बोधजननद्वारेण; अचेतनं च प्रधानं न बोधयितुं शक्यम्। अतः शास्त्राणामर्थवत्त्वं भोक्तुश्चेतनस्यैव

---

**हन्ता** हन्तृत्वेन व्यवह्रियमाणः; **हतः** हतत्वेन व्यवह्रियमाणः। **हन्तु**मिति पदं सेतुं जन्तुमित्यादिवत् द्वितीयान्तम्; हन्तारमित्यर्थ इत्युक्तं **टीकायाम्**। तुमुन्नन्तत्वे हि अत्र, 'क्रियायाम्—' इति सूत्रप्रवृत्त्यभावेन, 'समानकर्तृकेषु तुमुन्' इत्येवं सूत्रप्रवृत्तावपि, हननविषयमननपरेऽत्र तुमुन्प्रकृत्यर्थस्य प्रधानक्रियापश्चाद्भावित्व एव सम्प्रयोगदर्शन त मननपाश्चात्यत्वं हनने वक्तव्यम्। हन्तेति हननक्रियाकर्तृत्वाश्रयत्वेन प्रतीते तत्समानकालिकं यद् मननम्, तदनन्तरभावित्वञ्च तस्मिन् हनने दुर्वचम्। अतो नात्र तुमुन्प्रत्यय इत्याशयः। हनने कर्तृत्वं कर्मत्वमुभयं प्रतिषिध्यत इति पूर्वपक्ष्यभिप्रायः। नन्वत्र हननक्रियामात्रे कर्तृत्वं प्रतिषिध्यते; न तु सर्वविषयम्; तत् कथमुच्यते, **हननादिषु क्रियासु** इत्यविशेषेणेत्याशंकायाम्—तत्र हननस्य प्रकृतत्वात् तावन्मात्रोक्तावपि सर्वनिषेध एवेत्यत्र वाक्यान्तरं प्रमाणयति **तथाचे**ति। अत्र **सर्वश** इति पदमप्यस्ति। प्रकृतिसंबन्धिनो गुणा एव सर्वकर्मकर्तारः। तादृशगुणमयतया कर्तृभूताहंकारतत्त्वाभिन्नतया मोहाद् गृह्यमाणस्वस्वरूपः पुरुषः स्वात्मनि कर्तृत्वमारोपयतीति हि स्पष्टमुक्तमित्यर्थः। **नान्य**मित्यस्य, 'गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति' इत्युत्तरार्धम्। गुणभिन्ने कर्तृत्वं यदा न पश्यति, आत्मानञ्च गुणभिन्नं वेत्ति, तदा कपिलवत् मुक्तो भवतीत्यर्थः। **कार्ये**ति। **कार्यं** शरीरम्। **कारण**मिन्द्रियम्। तन्निष्ठे कर्तृत्वे प्रकृतिः कारणम्। कर्तृत्वं हि क्रियाश्रयत्वम्। क्रियां प्रति चाश्रयस्य कारणत्वम्। प्रकृतिपरिणामत्वात् शरीरादीनि क्रियां प्रति आश्रयत्वं कारणत्वं च लभन्ते; भोक्तृत्वं प्रति तु आत्मा आश्रयत्वात् कारणमित्यर्थः।

**शास्त्रार्थवत्त्वात्**। आत्मा कर्ता। तदैव शास्त्राणां विधायकवाक्यानामर्थवत्त्वात् नियोगरूपार्थप्रतिपादकत्वं स्यादित्यर्थः। अधिकारी हि नियोज्यो भवति। अधिकारी च फलस्वामी। स्वाम्यञ्च भोक्तृत्वमात्मन्येवोक्तं सांख्यैः। एवञ्च स एव नियोज्यः। न च नियोगः प्रवृत्त्यनर्हे घटते। न

कर्तृत्वे भवेत् । तदुक्तम्, (पूर्वमी. ३-७) "शास्त्रफलं प्रयोक्तरि" इति ।

यदुक्तम्, "हन्ता चेन्मन्यते" इत्यादिना हननक्रियायामकर्तृत्वमात्मनः श्रूयत इति—तत् आत्मनो नित्यत्वेन हन्तव्यत्वाभावादुच्यते । यच्च, (गी. ३-२७) "प्रकृतेः क्रियमाणानि" इत्यादिना गुणानामेव कर्तृत्वं स्मर्यत इति—तत्, 'सांसारिकप्रवृत्तिष्वस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता; न स्वरूपप्रयुक्ता' इति प्राप्ताप्राप्तविवेकेन गुणानामेव कर्तृतेत्युच्यते । तथा च तत्रैवोच्यते, (गी. १३-२१) "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इति । तथा तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्योच्यते, (गी. १८-१६) "तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः" इति । (गी. १८-१४) "अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्" इति—अधिष्ठानादिदैवपर्यन्तसापेक्षे सति आत्मनः कर्तृत्वे य आत्मानमेव केवलं कर्तारं मन्यते, न स पश्यतीत्यर्थः ॥ ३३ ॥

---

च चैतन्यरहितस्य प्रवृत्तिमत्त्वम् । अनश्चेतन एव नियोज्यः । कर्तृत्व-भोक्तृत्वयोर्वैयधिकरण्यं सांख्येष्टमसंभावितमिति भावः । शास्त्रफलं प्रयोक्तरीत्यस्य पूर्वपक्षसूत्रत्वेऽपि एतदंशोऽयं सिद्धान्तीष्टम् । फलस्य यजमानगामित्वेऽपि परिक्रयविधिबलात् ऋत्विजः कर्तृत्वं तत्र सिद्धान्तितम् । एतत्सूत्रग्रहणेन, आत्मा कर्ता, शास्त्रप्रतिपाद्यो योऽर्थः फलं तद्भोक्तृत्वादिति प्रकृतसूत्रस्यार्थो ज्ञापितो भवति ।

युक्तिरुक्ता; प्रमाणविरोधं परिहरति **यदुक्त**मिति । हन्तुमित्यत्र आत्मानमिति शेषः । हन्ता आत्मानं प्रति हन्तृत्वेनात्मानं मन्यते चेत्, हतश्च हतत्वेन मन्यते चेत्, तज्ज्ञानमज्ञानमिति वाक्यद्वयेनापि आत्मनो हननकर्मत्वं न भवति नित्यत्वादित्येवोच्यते; न तु कर्तृत्वनिषेधः । कर्तृत्वसामान्यनिषेधपरत्वे च हनननिर्देशो न युक्तः । पूर्वं, 'न हन्यते हन्यमाने शरीरे' इति नित्यत्वोपपादनशेषतया हननकर्मत्वमेव हि नेत्युक्तम् । तदेव चानेनोपपाद्यते-हन्ता वा मन्यताम्, हतो वा, अन्योऽपि वा; बहुसंमतत्वेऽपि आत्मनो हन्यमानत्वं न तत्त्वमित्येतावदेवात्र प्रकरणानुगुणमिति भावः । **सांसारिकप्रवृत्तिषु** । संसारो बन्धः; तद्दशाभाविषु व्यापारेषु । कर्तृत्वं स्वरूपकृतम् उपाधिकृतमिति द्विविधम् । प्रथमं मोक्षे भगवत्कैङ्कर्यादिविषयम् । द्वितीयं तु भवे तत्कर्मायत्तम् । कर्म च करणकलेबरघटनेन कर्तृत्वमात्मनि जनयति । एवमात्मन एव कर्तृत्वेऽपि तस्य प्रकृतिसंबन्धविशेषमात्रे भावात् तदभावे चाभावात् प्रकृतावेव गुणमय्यां तत् आरोप्य व्यवह्रियते शास्त्रे इत्यर्थः । **प्राप्ताप्राप्तविवेकेन** । प्राप्तं प्राप्तिः अन्वयः; अन्वयव्यतिरेकपरिशीलनयेत्यर्थः । **प्राप्तं** स्वरूपप्राप्तम्; अप्राप्तम् औपाधिकमिति वा । **कर्तार**मिति आत्मन्येव शास्त्रेषु **कर्तारं कर्ते**ति व्यवहारस्य तद्विवेचनप्रकरणेऽपि क्रियमाणत्वात् कर्तृत्वमात्मनिष्ठमिति ज्ञायते । **केवल**मिति । अधिष्ठानादिसहित**स्यै**वात्मनः कर्तृत्वे सति, तद्रहितमेव कर्तृत्वेन मन्यते चेत्, स न विवेकीत्यर्थः । **चेष्टा** प्राणापानादिव्यापारः । **दैवं** पुरुषोत्तमः ॥ ३३ ॥

बाह्यवस्तुषु देहादेर्व्यापृतत्वेऽपि देहेन्द्रियप्रेरणविषये यत् कर्तृत्वमुच्यते, तत् आत्मन्येव स्वी-

उपादानाद्विहारोपदेशाच्च । २ । ३ । ३४ ॥

(बृ. ४-१-१८) "स यथा महाराजः" इति प्रकृत्य, "एवमेवैष एतान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते" इति प्राणानामुपादाने विहारे च कर्तृत्वमुपदिश्यते ॥ ३४ ॥

व्यपदेशाच्च क्रियायाम्, न चेन्निर्देशविपर्ययः । २ । ३ । ३५ ॥

(तै. आन. ५-१) "विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि च" इति लौकिकवैदिक-(वैदिकलौकिक ?) क्रियासु कर्तृत्वव्यपदेशाच्च कर्ता ॥ विज्ञानशब्देन नाऽऽत्मनो व्यपदेशः; अपित्वन्तःकरणस्य बुद्धेरिति चेत्—एवं सति निर्देशविपर्ययः स्यात्—बुद्धेः करणत्वात् विज्ञानेनेति करणविभक्तिनिर्देशः स्यात् ॥ ३५ ॥

उपलब्धिवदनियमः । २ । ३ । ३६ ॥

आत्मनोऽकर्तृत्वे दोष उच्यते । यथाऽऽत्मनो विभुत्वे नित्योपलब्ध्यनुपलब्धिप्रसङ्ग इत्यादिनोपलब्धेरनियम उक्तः; तद्वत् आत्मनोऽकर्तृत्वे प्रकृतेश्च कर्तृत्वे तस्याः सर्वपुरुषसाधारणत्वात् सर्वाणि कर्माणि सर्वेषां भोगाय स्युः; नैव वा कस्यचित् । आत्मनां विभुत्वाभ्युपगमात् संनिधानमपि सर्वेषामविशिष्टम् । अत एव चान्तःकरणादीनामपि नियमो नोपपद्यते; यदायत्ता व्यवस्था स्यात् ॥ ३६ ॥

---

कर्तव्यमिति दर्शयितुं सूत्रान्तरम् । **स यथेति** । 'स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तते, एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' (बृ. ४-१-१८) इति स्वप्नविषयं वाक्यम् । **प्राणान्** इन्द्रियाणि । **स्वे शरीरे** स्वप्नकालसृष्टे शरीरे । **परिवर्तते** विहरति । इन्द्रियाणां शरीरस्य च कर्मत्वाधिकरणत्वाभ्यां निर्देशात् कर्तृत्वं हि आत्मनिष्ठमेव ॥ ३४ ॥

एवं क्वचित् कर्तृत्वे सिद्धे बाह्यविषयकसद्द्वारककर्तृत्वमपि आत्मन एव । श्रुतिरपि तथैव स्पष्टमाह ; देवो मनुष्य इत्येवमनिर्दिश्य विज्ञानमिति आत्मनः स्वरूपेण निर्देशादित्याशयेनाह **व्यपदेशादिति** । **क्रिया** वैदिकी लौकिकी च । **एवंसतीति** । अन्तःकरणपरत्वे विज्ञानशब्दे करणे ल्युट् । करणं नाम कृतिसाधनम्, न तु क्रियाकर्तृ । अतस्तृतीया स्यात् । न च जानात्यनेनेति ज्ञानविषये साधकतमत्वेऽपि क्रियाविषये कर्तृत्वमेवेति वाच्यम् ; ज्ञातृत्वभोक्तृत्वकर्तृत्वानां सामानाधिकरण्यावश्यकतायाः प्रथमसूत्र एवोक्तत्वात् । सांख्यस्य बुद्धौ कर्तृत्वस्येष्टत्वेऽपि श्रुतेरयमर्थो न भवतीत्येवोलोच्यमानत्वाच्च । अतो विज्ञानपदस्यान्तःकरणपरत्वं यदि श्रुतीष्टम्, तथासति निर्देशविपर्ययः स्यात् । यतः स एव दृष्टः 'मनसैवानुद्रष्टव्यम्', 'एषां प्राणानां विज्ञानेन विज्ञानमादाय,' 'बुद्ध्या यया धारयते मनःप्राणेन्द्रियक्रियाः' इत्येवमिति भावः ॥ ३५ ॥

प्रकृतेर्विभुत्वादिति वक्तव्ये **आत्मनां** विभुत्वाभ्युपगमादिति कुत उक्तमित्यत्राह **अतएव चेति** । सर्वसाधारणमेकं विभु प्रकृतिद्रव्यं न कर्तृ ; किंतु प्रतिनियतं परिमितमन्तःकरणम्, एवञ्च तत्संनिहितः तत्कर्तृकक्रियाफलभोक्तेत्युक्तावपि तत्संनिधानं सर्वात्माविशिष्टमित्यर्थः ॥ ३६ ॥

शक्तिविपर्ययात् । २ । ३ । ३७ ॥

बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वानुपपत्तेर्भोक्तृत्वशक्तिरपि तस्या एव स्यादित्यात्मनो भोक्तृत्वशक्तिर्हीयेत । भोक्तृत्वं च बुद्धेरेव संपद्यत इति आत्मसद्भावे प्रमाणाभावश्च स्यात् । (सां का.) "पुरुषोऽस्ति भोक्तृभावात्" इति हि तेषामभ्युपगमः ॥ ३७ ॥

समाध्यभावाच्च । २ । ३ । ३८ ॥

बुद्धेः कर्तृत्वे मोक्षसाधनभूतसमाधावपि सैव कर्त्री स्यात् । स च समाधिः प्रकृतेरन्योऽस्मीत्येवंरूपः, न च, प्रकृतेरन्योऽस्मीति प्रकृतिः समाधातुमलम् । अतोऽप्यात्मैव कर्ता ॥

नन्वात्मनः कर्तृत्वेऽभ्युपगम्यमाने सर्वदा कर्तृत्वान्नोपरमेतेत्यत्राह—

यथा च तक्षोभयथा । २ । ३ । ३९ ।

वागादिकरणसंपन्नोऽप्यात्मा, यदेच्छति, तदा करोति ; यदा तु नेच्छति, तदा न करोति—यथा तक्षा वास्यादिकरणसंनिधानेऽपि इच्छानुगुण्येन करोति, न करोति च । बुद्धेस्त्वचेतनायाः कर्तृत्वे तस्याः भोगवाञ्छादिनियमकारणाभावात् सर्वदा कर्तृत्वमेव स्यात् ॥

इति कर्त्रधिकरणम् ॥ ५ ॥

५९. परायत्ताधिकरणम् २-३-६

परात्तु तच्छ्रुतेः ॥ २ । ३ । ४० ॥

इदं जीवस्य कर्तृत्वं किं स्वातन्त्र्येण उत परमात्मायत्तमिति । किं प्राप्तम् ? स्वातन्त्र्ये-

---

**शक्तिविपर्ययात्** । भोक्तृत्वशक्तेरपि बुद्धौ प्रसक्तेः आत्मासिद्धिः ॥ एवमात्मस्थाने बुद्धेरभिषेके बुद्धिरूपकरणशक्तिरन्यत्रेष्टेत्यसम्मतमेव॥ ३७ ॥

मोक्षार्थसमाधिः स्वस्मिन् प्रकृत्यन्यत्वविषयकः, तस्मिन् कर्तृत्वं प्रकृतिपरिणामादेः कथमित्याह **समाधीति** । समाध्यभावप्रसंगादित्यर्थः ॥ ३८ ॥

**नोपरमेतेति** । सुषुप्त्यपवर्गादि न स्यादिति भावः । **करोति न करोति चेति** । यथा सर्वक्रियाकर्तृत्वं न सर्वदेति तत्तत्क्रियाविशेषकर्तृत्व कादाचित्कं सहकारिकारणसमावेशायत्तम् , तथा कदाचित् तदभावात् कर्तृत्वस्यैवाभावोऽपीति । **भोगवाञ्छेति** । भोगस्य बुद्धौ स्वीकारे हि तद्वाञ्छा नियामिका स्यात् । न च परार्थायास्तस्याः भोगाश्रयत्वमस्तीति भावः ॥ ३९ ॥

ज्ञानकार्यकृतिरूपधर्मिनिरूपणानन्तरं तद्धर्मः परायत्तत्वं निरूप्यते । अथवा कृतेः कारणमन्यन्निरूप्यते ; परसंकल्पः कारणमिति ह्यत्रोच्यते । अत इहापि हेतुहेतुमद्भाव एव संगतिः । वियदादेर्नित्यत्वकार्यत्वश्रुतिविरोधः; जीवात्मजन्माजन्मश्रुतिविरोधः ; आत्मनां चिन्मात्रत्वज्ञातृत्वश्रुतिविरोधः ; तेजआदेरात्मकार्यत्वतदन्यकार्यत्वश्रुतिविरोधः; आत्मनां कर्तृत्वाकर्तृत्वश्रुतिविरोधश्च परिहृताः। अथ विधिनिषेधश्रुतिभिरन्तर्यामिश्रुतेर्विरोधः परिह्रियते । जीवः परमात्मदत्तकरणकलेबरादितदधीनगुणवैषम्याधीनः सन्

णोति । परमात्मायत्तत्वे हि विधिनिषेधशास्त्रानर्थक्यं प्रसज्येत । यो हि स्वबुद्ध्या प्रवृत्ति-निवृत्त्यारम्भशक्तः, स एव नियोज्यो भवति । अतः स्वातन्त्र्येणास्य कर्तृत्वम्—

इति प्राप्तेऽभिधीयते-परात्तु तच्छ्रुतेः—इति । तुशब्दः पक्षं व्यावर्तयति; तत्—कर्तृत्वमस्य जीवस्य परात्—परमात्मन एव हेतोर्भवति, कुतः? श्रुतेः— (तै. आर. ३-११ १०) 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा", (बृ. ५-७-२२) "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति । स्मृतिरपि, (गी. १५-१५) "सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिः ज्ञानमपोहनं च", (गी.१८-६१) "ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" इति ॥ ४० ॥

नन्वेवं विधिनिषेधशास्त्रानर्थक्यं प्रसज्येतेत्युक्तम्—तत्राह—

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ २ । ३ । ४१ ॥

सर्वासु क्रियासु पुरुषेण कृतं प्रयत्नम् उद्योगमपेक्ष्यान्तर्यामी परमात्मा तदनुमतिदानेन प्रवर्तयति । परमात्मानुमतिमन्तरेणास्य प्रवृत्तिर्नोपपद्यत इत्यर्थः । कुत एतत्? विहितप्रतिषिद्धावैयर्थ्यादिभ्यः—आदिशब्देनानुग्रहनिग्रहादयो गृह्यन्ते । यथा द्वयोः साधारणे

---

परमात्माधीनहितकारिपुरुषाद्युपदेशादिलब्धज्ञानः इच्छन् प्रवर्तत इति परम्परया परमात्माधीनत्वं प्रयत्नस्य सर्वसंमतम् । एतदतिरिक्तमन्तःप्रविश्य नियमनं नाम किमपि स्वीकार्यम् । तच्चेत् नियमनं वायूदकादिवत् जीवमवशं प्रवर्तयेत्, तर्हि किं विधिनिषेधैः । उपदेशजनितज्ञानमूले च प्रयत्ने पुनरन्तःप्रेरणं हि व्यर्थमेवेति पूर्व. पक्षः । शरीरात्मभावस्थले शरीरव्यापारस्य सर्वस्य पुरुषान्तराकृतस्याऽऽत्मसंकल्पाधीनतायाः नियतत्वात् जीवात्मनाञ्च परमात्मशरीरत्वात् तत्कृतीनां तत्संकल्पाधीनत्वमवर्जनीयम् । अतोऽन्तर्यामिश्रुतयो न बाध्या इति सिद्धान्तः ॥ ४० ॥

तर्हि यथा जीवात्मसंकल्पादेव शरीरे व्यापारा भवन्ति; न तत्र शरीरं प्रति विधिनिषेधायोरावश्यकता, प्रसक्तिर्वा, तथा परमात्मप्रेरणादेव जीवकृतौ जनितुमर्हायां किं विधिनिषेधोपदेशेन । न चोपदेशलब्धं ज्ञानं परमात्मप्रेरणामुपरुध्यान्यत्र प्रेरयितुं प्रभविष्यति-इति शंकापरिहरणाय कृतेत्यादि सूत्रम् । यं प्रयत्नं दृष्ट्वा परमात्मा जीवं नियमयति, स प्रयत्नो विधिनिषेधजज्ञानाद्यधीन इति न तद्वैयर्थ्यमिति समाधिः । कृतप्रयत्नपदेन पूर्वजन्मादिकृतं पुण्यपापारम्भककर्म शांकरेष्टम् । इह तु एकैकक्रियायां निष्पादनीयायां आन्तं यावन्तः प्रयत्ना अपेक्षिताः तावत्सु प्रथम उद्योगः कृतप्रयत्नपदार्थ इति ज्ञायते । प्रयत्नपदमपि समञ्जसमत्र । विहितप्रतिषिद्धे विधिनिषेधौ । आदिपदेन निग्रहानुग्रहलौकिककर्मविषयकेष्टसाधनत्वविमर्शादिग्रहणम् । अस्तु वा अविहिताप्रतिषिद्धकर्मविषयेऽनुदासीनत्वमेव । प्रथमवदेव द्वितीयादेः स्वसामग्रीत एव संभवात् किं परमात्मनियमनेनेत्यत्राह अनुमतिमन्तरेणेति । शास्त्रबलादस्यापि कारणत्वमेष्टव्यम् । अनुमतिमन्तरा न भवतीत्यत्र लौकिकोदाहरणमप्याह यथेति । द्वयोः पुरुषयोः साधारणात् धनात्

धने परस्वत्वापादनमन्यतरानुमतिमन्तरेण नोपपद्यते. अथापीतरानुमतेः (ि) स्वेनैव कृतमिति (इतरानुमतिः स्वेनैव कृतेति) तत्फलं स्वस्यैव भवति। पापकर्मणः निवर्तनशक्तस्याप्यनुमन्तृत्वं न निर्दयत्वमावहतीति साङ्ख्यसमयनिरूपणे प्रतिपादितम् ॥ नन्वेवम्, (कौषी. ३-९) "एष ह्येव साधु कर्म कारयति तम्, यमेभ्यो लोकेभ्य उन्निनीषति। एष एवासाधु कर्म कारयति तम्, यमधो निनीषति" इत्युन्निनीषयाऽधोनिनीषया च स्वयमेव साध्वसाधुनी कर्मणी कारयतीत्येतन्नोपपद्यते ॥ उच्यते—एतत्र सर्वसाधारणम् ॥ यस्त्वतिमात्रपरमपुरुषानुकूल्ये व्यवसितः प्रवर्तते; तमनुगृह्णन् भगवान् स्वयमेव स्वप्राप्त्युपायेष्वतिकल्याणेषु कर्मस्वेव रुचिं जनयति। यश्चातिमात्रप्रातिकूल्ये व्यवसितः प्रवर्तते; तं निगृह्णन् स्वप्राप्तिविरोधिष्वधोगतिसाधनेषु कर्मसु सज्जयति (मज्जयति ?) (रुचिं जनयति)। यथोक्तं भगवता स्वयमेव, (गी. १०-८) अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते। इति मत्वा भजन्ते मां बुधा भावसमन्विताः" इत्यारभ्य, "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते", (गी. १०-१०, ११) "तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इति। तथा (गी. १६-८) "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" इत्यादि, (गी. १६-१८) "मामात्मपरदेहेषु प्रद्विषन्तोऽभ्य-

---

स्वांशस्य पृथक्कृत्य दानमप्यनुमतिमन्तरा न भवति। दम्पतिधनविषये तु न पृथक्करणम्, नाप्येकमात्रस्य फलम्। इयान् विशेषः—लौकिकः स्वयमेवानुमतिं संपादयति। ईश्वरस्तु तेन प्रार्थितोऽप्रार्थितोऽपि प्रथमप्रयत्नं दृष्ट्वा स्वयमेव तमनुमन्यते; प्रबलबाधकसत्त्वे क्वचिदननुमत्य प्रयत्नं मोघयत्यपि। अनुमत्यनन्तरमपि इष्टसाधनत्वज्ञानस्येच्छायाश्च कृतिं प्रति कारणत्वमस्त्येव; तदभावे तदभावात्। एवमिदं न वायुदकादिवत् प्रेरणम्। तथाच, इदं कर्म अस्य फलतु इति सामान्येन परमात्मसंकल्परूपनिग्रहानुग्रहात्मकनियमनात् ज्ञानेच्छावत् प्रवृत्तिर्जायमाना अर्थात् देशकालानुसारोपनिपतितभोग्यवस्तुविशेषविषयिणी भवति। अथ तद्व्यक्तिविषयकतयैव तत्प्रवृत्तिमनुमन्यते इति सर्वोऽपि प्रवृत्तिस्तत्संकल्पाधीनैव। तत्र भोगस्य, अन्यार्थसमुपनता या व्यक्तिः तद्विषयकत्वस्य यादृच्छिकत्वात् तत्र प्रथमप्रवृत्तावुदासीनत्वं परस्य; तथैव तदा निवारकत्वाभावरूपमनुमन्तृत्वमपि। प्रवृत्तिहेतुसंकल्पवत्त्वरूपमनुमन्तृत्वं तु द्वितीयादिप्रवृत्तौ। अत्र सर्वत्रापि किञ्चिद्रूपेण प्रवर्तकत्वमप्यस्त्येव। तथापि अत्यन्तानुकूल्यप्रातिकूल्यान्यतरव्यवसितपुरुषविषये क्वचित् प्रथमप्रवृत्तिरपि विषयविशेषालीढतन्नियमनाधीनेति, 'एभ्यो लोकेभ्यः' इति सर्वातिशायित्वनिर्देशादवगम्यते। एवमेतद्वाक्याविषये पुण्यत्वेन पुण्यस्य, पापत्वेन पापस्य वा विशिष्यारम्भकतया क्लृप्ते पुण्ये पापे वा सति तदधीनसंकल्पोपि प्रवर्तकत्वरूपो ग्राह्यः। अनिच्छतोऽपि बलान्नियोजनरूपं नियमनं तु नेष्यते इति सारम्। श्रीव्यासार्य-श्रीदेशिकसूक्त्यर्थसामरस्यमन्यत्र न्यरूपयाम।

**कृता** संपादिता। **इतरानुमते[ः]स्वेनैव कृत**मिति पाठे अनुमत्यनन्तरं परस्वत्वापादनरूपं दानं स्वमात्रकृतमित्यर्थः। **असत्यम्** सत्यशब्दवाच्यब्रह्मानुपादानकम्; अप्रतिष्ठितम् ब्रह्मानाधारकम् ॥ ४१ ॥

सूयकाः" इत्यन्तमुक्त्वा, (गी १६-१९) "तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु" इत्युक्तम् (इति?) ॥ ४१ ॥ इति परायत्ताधिकरणम् ॥

६०. अंशाधिकरणम् २-३-७ ॥

अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके। २। ३। ४२॥

जीवस्य कर्तृत्वं परमपुरुषायत्तमित्युक्तम्; इदानीं किमयं जीवः परस्मादत्यन्तभिन्नः, उत परमेव ब्रह्म भ्रान्तम्, उत ब्रह्मैवोपाध्यवच्छिन्नम्, अथ ब्रह्मांश इति संशय्यते। श्रुतिविप्रतिपत्तेः संशयः। ननु, (शारी. २-१-१५) "तदनन्यत्वमारम्भणशब्दादिभ्यः", (शारी.

---

एवं नियन्तृनियाम्यभावरूपसंबन्धे उक्ते शेषशेषिभावादिसर्वसंबन्धप्रयोजकाकारोऽथ प्रतिबोध्यते। अंशत्वान्यत्वानन्यत्वबोधकश्रुतिविप्रतिषेधपरिहारार्थञ्चेदमधिकरणम्। आत्मनां ब्रह्मांशताबोधकप्रमाणानि सिद्धान्तेऽपि यथाश्रुतार्थानि न भवितुमर्हन्तीति कृत्वा तद्वदेव भेदाभेदश्रुतीनामेकतरादरणेनान्यतरस्यान्यथानयनमस्त्विति तत्तन्मतपक्षपातिनो मन्यन्ते। तन्निरास इह क्रियते। क्वचिदन्यथानयनेऽन्यत्राप्यनाश्वासः प्रसक्तो यथाशक्ति परिहरणीय इति अंशताबोधकप्रमाणयथाश्रुतार्थशिक्षणमेतत्कृत्यम्। तत्र शरीरात्मभावस्वीकारेण विधिनिषेधवैयर्थ्यापादकपरायत्तैकस्वभावकल्पनाद्वरं राजभृत्यन्यायेनात्यन्तभेद इति केचित्। अभेदश्रुतिरक्षणेन भेदश्रुतित्याग एव युक्त इति परे। तत उभयश्रुतिसमादरणेन अंशश्रुतिसामञ्जस्यमेव स्थाप्यते। **श्रुतिविप्रतिपत्तेरि**ति नानात्वैकत्वश्रुतिविरोधादित्यर्थः। अवैदिकमतनिरसनं न प्रकृतमिति। ननु नानात्वमङ्गीकृत्य विशिष्टवेषेण एकत्वश्रुतिनिर्वाहस्य प्रागेव कृतत्वात् कथं विरोधशंकेति पृच्छति **नन्वि**ति। विप्रतिपत्तिपरिहारो हि विशिष्टवेषमादाय कार्यः। विशिष्टत्वमेव स्वभाव इत्यत्रैव विवादे प्राप्ते विप्रतिपत्तिः पुनरुन्मज्जतीति भावः। अत्यन्तभिन्नत्वमिह शरीरात्मभावरहितत्वे सति भिन्नत्वम्। शरीरलक्षणे'यदवस्थं द्रव्यम्' इति निवेशात् देहपरिग्रहकालिकविलक्षणधर्मभूतज्ञानावस्थचेतनशरीरकत्वमात्रेण, अर्थात् अचिद्विशिष्टतादशायां जीवशरीरकत्वमात्रेण अन्तर्यामिश्रुत्यादेरुपपन्नत्वात् शुद्धजीवस्वरूपस्यापि ब्रह्मशरीरत्वं न वक्तव्यम्। अतो विशिष्टवस्त्वेकदेशत्वमेव जीवस्येत्यस्याभावात् तादृशमंशत्वं दुर्वचम्। तादृशांशत्वस्वीकारे परमात्मनोऽप्यंशत्वापत्तिश्च। किञ्च शरीरत्वस्य आधेयत्वविधेयत्वशेषत्वविशेषरूपतया तेषामाकाराणां शरीरवाचिशब्दप्रयोगे प्रतीत्यभावाच्च न तावद्विशिष्टवाचित्वसंभवः। अवयवत्वरूपांशत्वं तु ब्रह्मणो निरवयवत्वात् दुर्वचमेव। औपाधिकप्रदेशत्वमंशत्वमित्युक्तौ तु अंशशब्दमुख्यार्थस्त्यक्त एव भवति। एवञ्च समुद्रे गोष्पदस्येव, मेरोरंशः किरीट इत्यत्रेव च, ब्रह्मैकदेशनिरूपितसाजात्यमात्रेणाप्यंशशब्दनिर्वाहात् अत्यन्तभेद एवास्त्विति कश्चित् पक्षः। अथ भेदाभेदश्रुत्योरेकतरप्राबल्ये स्वीकर्तव्ये प्रमाणान्तरात्यन्ताप्राप्ताभेदबोधकश्रुतिप्राबल्यमेव युक्तम्; अंशत्वश्रुतिश्चास्मिन् पक्षे न पूर्वपक्ष इवात्यन्तगौणतां लभते इति द्वितीयः पक्षः। तत्र ब्रह्मणो जीवैक्ये तद्दोषदुष्टत्वापत्तिरिति पूर्ववाद्युद्भाव्यदोषपरिहाराय सर्वमिथ्यात्वस्वीकारेण जीवब्रह्माभेदः शांकराद्दतः। सर्वमिथ्या-

२-१-२२) "अधिकं तु भेदनिर्देशात्" इत्यत्रैवायमर्थो निर्णीतः ॥ सत्यम्; स एव नानात्वैकत्वश्रुतिविप्रतिपत्त्या आक्षिप्य जीवस्य ब्रह्मांशत्वोपपादनेन विशेषतो निर्णीयते। यावद्धि जीवस्य ब्रह्मांशत्वं न निर्णीतम्, तावत् जीवस्य ब्रह्मणोऽनन्यत्वं, ब्रह्मणस्तस्मादधिकत्वं च न प्रतितिष्ठति। किं तावत् प्राप्तम्?

अत्यन्तभिन्न इति। कुतः? (श्वे. १-९) "ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यादिभेदनिर्देशात्। ज्ञाज्ञयोरभेदश्रुतयस्तु, 'अग्निना सिञ्चेत्' इतिवत् विरुद्धार्थप्रतिपादनादौपचारिक्यः। ब्रह्मणोंऽशो जीव इत्यपि न साधीयः। एकवस्त्वेकदेशवाची ह्यंशशब्दः। जीवस्य ब्रह्मैकदेशत्वे तद्गता दोषा ब्रह्मणि भवेयुः। न च ब्रह्मखण्डो जीव इत्यंशत्वोपपत्तिः, खण्डनानर्हत्वाद् ब्रह्मणः; प्रागुक्तदोषप्रसङ्गाच्च। तस्मादत्यन्तभिन्नस्य च तदंशत्वं दुरुपपादम्।

यद्वा भ्रान्तं ब्रह्मैव जीवः। कुतः? (छा. ६-१०-३) "तत्त्वमसि", (बृ. ६-५-४) "अयमात्मा ब्रह्म" इत्यादिब्रह्मात्मभावोपदेशात्। नानात्ववादिन्यस्तु प्रत्यक्षादिसिद्धार्थानुवादित्वादनन्यथासिद्धाद्वैतोपदेशपराभिः श्रुतिभिः प्रत्यक्षादय इवाविद्यान्तर्गताः ख्याप्यन्ते।

अथवा ब्रह्मैवानाद्युपाध्यवच्छिन्नं जीवः। कुतः? तत एव ब्रह्मात्मभावोपदेशात्। न चायमुपाधिर्भ्रान्तिपरिकल्पित इति वक्तुं शक्यम्, बन्धमोक्षादिव्यवस्थानुपपत्तेः—इति—

एवं प्राप्तेऽभिधीयते ब्रह्मांश इति। कुतः? नानाव्यपदेशात्, अन्यथा च—एकत्वेन व्यपदेशात्। उभयथा हि व्यपदेशो दृश्यते। नानात्वव्यपदेशस्तावत् स्रष्टृत्वसृज्यत्व-नियन्तृत्वनियाम्यत्व-सर्वज्ञत्वाज्ञत्व-स्वाधीनत्वपराधीनत्व-शुद्धत्वाशुद्धत्व-कल्याणगुणाकरत्वतद्विपरीतत्व-पतित्वशेषत्वादिभिर्दृश्यते। अन्यथा च—अभेदेन व्यपदेशोऽपि, "तत्त्वमसि" "अयमात्मा ब्रह्म" इत्यादिभिर्दृश्यते। अपि दाशकितवादित्वमधीयत एके- (ब्रह्मसूक्ते) "ब्रह्म दाशा

---

त्वे अपूर्वानन्तार्थोपदेश-बन्धमोक्षादिव्यवस्थादि सर्वथैव न घटत इति औपाधिकभेदवादो भास्करेष्टः। अनुपहितप्रदेशे दोषाभावमात्रेण ब्रह्मनिर्दोषत्ववचननिर्वहणमेतत्पक्षे।

ज्ञाज्ञाविति। इदं शुद्धजीवस्वरूपेपि भेददर्शकं वाक्यम्। अन्तर्गताः ख्याप्यन्त इति। अविद्यारूपमिथ्यावस्तुमूलभेदपरत्वेन नानात्वश्रुतिभिरवबोध्यन्त इत्यर्थः। तत एव पूर्वोक्तादेव। एवं प्राप्त इति। अंशत्वं जीवस्योक्तमौपचारिकं वा मुख्यं वेति विचार एवान्ततः पर्यवसानम्। औपचारिकमित्येव पूर्वपक्षः। मुख्यमंशत्वं स्थापयति, अभिधीयतेब्रह्मांश इति। परकदर्थ्यमानभेदाभेदश्रुतिभिरेव अंशशब्दमुख्यार्थस्वीकारमार्गोऽप्युपदिश्यत इति ज्ञापयितुं सूत्रे नानेत्यादिहेतव उपन्यस्यन्ते। तत्राद्वैतखण्डनं शिष्टेन। पुरोहितोऽयं राजेतिवत् अभेदश्रुतिः स्तुतिपरतया नेयेति द्वैतिमतं सर्वथा न भवतीति ज्ञापयितुम्—अपि दाशेत्यादिभागः। तर्हि सर्ववाक्यसाधारण्याय कार्यकारणभावादिपरत्वमेवाभेदवाक्यविवक्षितमस्तु इति चेत्-एवं लक्षणया निर्वाहस्य ब्रह्मणि जीवदोषपरिहारकतया श्रेयस्त्वेऽपि अंशशब्दार्थविचारे द्वैतवादादद्वैतवादे किञ्चिन्मुख्यत्वमस्तीति ज्ञापनार्थं सूत्रकृता अभेदश्रुत्युपन्यसनमेवमधिकं कृतम्।

ब्रह्म दासा ब्रह्मेमे कितवाः" इत्याथर्वणिका ब्रह्मणो दाशकितवादित्वमप्यधीयते। तत सर्वजीवव्यापित्वेनाभेदो व्यपदिश्यत इत्यर्थः। एवमुभयव्यपदेशमुख्यत्वसिद्धये जीवोऽयम्, ब्रह्मणोंश इत्यभ्युपगन्तव्यः। न च भेदव्यपदेशानां प्रत्यक्षादिप्रसिद्धार्थत्वेनान्यथासिद्धत्वम्। ब्रह्मसृज्यत्व-तन्नियाम्यत्व-तच्छरीरत्व-तच्छेषत्व-तदाधारत्व-तत्पाल्यत्व-तत्संहार्यत्व-तदुपासकत्व-तत्प्रसादलभ्यधर्मार्थकाममोक्षरूपपुरुषार्थभाक्त्वादयः, तत्कृतश्च जीवब्रह्मणोर्भेदः प्रत्यक्षाद्यगोचरत्वेनानन्यथासिद्धः। अतो न जगत्सृष्ट्यादिवादिनीनां प्रमाणान्तरसिद्धभेदानुवादेन मिथ्यार्थोपदेशपरत्वम्। न च-अखण्डैकरसचिन्मात्रस्वरूपेण ब्रह्मणा आत्मनोऽतद्भावानुसन्धानम्, बहुभवनसङ्कल्पपूर्वकवियदादिसृष्टिम्, जीवभावेन तत्प्रवेशम्, विचित्रनामरूपव्याकरणम्, तत्कृतानन्तविषयानुभवनिमित्तसुखदुःखभागित्वम्, अभोक्तृत्वेन तत्र स्थित्वा तन्नियमनेनान्तर्यामित्वम्, जीवभूतस्य स्वस्य कारणब्रह्मात्मभावानुसन्धानम्, संसारमोक्षम्, तदुपदेशशास्त्रं च कुर्वाणेन भ्रमितव्यमित्युपदिश्यते, तथा सति उन्मत्तप्रलपितत्वापातात्।

उपाध्यवच्छिन्नं ब्रह्म जीव इत्यपि न साधीयः, पूर्वनिर्दिष्टनियन्तृत्वनियाम्यत्वादिव्यपदेशबाधादेव। न हि देवदत्तादेरेकस्यैव गृहाद्युपाधिभेदान्नियन्तृनियाम्यभावादिसिद्धिः।

अत उभयव्यपदेशोपपत्तये जीवोऽयं ब्रह्मणोंश इत्यभ्युपेयम् ॥ ४२ ॥

---

नानात्वश्रुतीनां प्रथमं निर्देशात् अद्वैतवादनिरासे नैर्भर्यं ततो द्वैतवादश्रेयस्त्वसंमतिश्च सूत्रकृतो ज्ञायते। एवं दाशाद्यैक्यप्रदर्शनम्-अत्यन्तानुपपन्नस्य नीचैक्यस्य श्रुतिप्रतिपन्नत्वात् स्वरूपैक्यं न श्रुतिसंमतमिति प्रतिबोध्याद्वैतखण्डनार्थमपि। जीवात्मा ब्रह्मांशः तद्भिन्नत्वतदभिन्नत्वोभयप्रकारकश्रौतबोधविषयत्वादिति सूत्रार्थः। किमिदमंशत्वमिति उपरितनैः सूत्रैरवगमयिष्यते। **नानात्वेति**। सूत्रे **नानाशब्दो** नानात्वपरः। **अपि दाशेति**। अत्यन्तनीचधीवराद्यभेदोऽपि श्रुतः। नेदं वाक्यं ब्रह्माभेदेन दाशादिस्तुतये; दाशादेः प्रकरणार्थत्वाभावात्। न च ब्रह्मनिन्दार्थं; तस्यानिन्द्यत्वात्। अतोऽयमभेदः तात्त्विक एव। अथापि न स्वरूपैक्यम्; नीचोच्चभावादिति भावः। शांकरपक्षं निरस्यति **न च भेदेति**। उपदिश्यमानानामर्थानां प्रमाणान्तरासिद्धत्वेऽपि अद्वैतश्रुतिबलेन मिथ्यात्वं स्वीकृत्य मिथ्यार्था एवोपदिश्यन्त इत्युक्तौ को दोष इत्यत्र विशदयति **न चाखण्डेति**। ब्रह्मणेत्यस्य **कुर्वाणेनेति** विशेषणम्। **भ्रमितव्यम्** भ्रान्तेन भाव्यम्। अयमर्थः—ब्रह्म बहुभवनसंकल्पपूर्वकवियदादिसृष्टिप्रभृति-तदुपदेशशास्त्रपर्यन्तकारित्वेन वेदेन साक्षादुपदिश्यते। इदञ्च निर्विशेषब्रह्मणि स्वप्रकाशे कथं स्यात्। अतोऽन्यथानुपपत्त्या तेन आत्मनोऽतद्भावानुसंधानं कुर्वता भ्रान्तेन, सृष्ट्यादि बहुकर्तृत्वभ्रान्तिमता च भाव्यमिति अस्मिन्नुपदेशे शास्त्रपर्यवसानमिति। एष वादो न युक्तः। अखण्डैकरसचिन्मात्रत्वे स्वरूपतिरोधान-विपरीतानुसंधान-तदधीनकार्यादिकल्पनानवकाशेन सर्वस्योन्मत्तप्रलपितत्वापातादिति॥ **अत** इति। पूर्वमेव सूत्रकृता अनन्यत्वं जीवस्य, जीवाद् ब्रह्मणोऽधिकत्वं जीवेऽवस्थितत्वं जीवशरीरकत्वं जीववाचिशब्दमुख्यार्थत्वं सर्वमुक्तम्। स शरीरात्मभावः अपृथक्सिद्धप्रकारत्वरूपांशत्वात्मकः इति आधेयत्वनिधेयत्वादिप्रयोजकाकारवर्णनमत्र

**मन्त्रवर्णात् । २ । ३ । ४३ ॥**

(पु. सू.) "**पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि**" **इति मन्त्रवर्णाच्च ब्रह्मणोंऽशो जीवः । अंशवाची हि** पादशब्दः । "**विश्वा भूतानि**" **इति जीवानां बहुत्वाद्बहुवचनं मन्त्रे । सूत्रेऽपि अंश इत्येकवचनं जात्यभिप्रायम् ।** (शारी. २-३-१४) "**नात्मा श्रुतेः**" **इत्यत्राप्येकवचनं जात्यभिप्रायम्**; (श्वे. ६-१३) "**नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्**" **इत्यादिश्रुतिभ्य ईश्वराद्भेदस्यात्मनां बहुत्वनित्यत्वयोश्चाभिधीयमानत्वात् । एवं नित्यानामात्मनां बहुत्वे प्रामाणिके सति ज्ञानस्वरूपत्वेन सर्वेषामेकरूपत्वेऽपि भेदकाकारः आत्मयाथात्म्यवेदनक्षमैरवगम्यते ।** (शारी. २-३ ७) "**असंततेश्चाव्यतिकरः**" **इत्यनन्तरमेव चात्मबहुत्वं वक्ष्यति ॥ ४३ ॥**

**अपि स्मर्यते । २ । ३ । ४४ ॥**

---

क्रियते इति शुद्धजीवब्रह्मसंबन्धस्य सर्वमूलस्यैवं ज्ञापनम् । 'स ब्रह्मा .... सोऽक्षरः परमः स्वराट्' इति शुद्धब्रह्मशिवाद्यविशेषं मुक्तस्यापि शरीरात्मभावः श्रुत इहानुसंधेयः ॥ आधेयत्वविधेयत्वादीनां विशेषतो भानाभावेऽपि संसर्गभूततदंशप्रयोजकापृथक्सिद्धप्रकारत्वमक्षतमिति निगूढम् ॥ ४२ ॥

एवं भेदाभेदश्रुतिमूलकार्थापत्त्या जीवानामंशत्वमुपपाद्य तत्र साक्षात् श्रुतिमेव दर्शयति **मन्त्रे**ति । **वर्ण**शब्दः **पाद**शब्दोऽयमंशार्थक इति ज्ञापनाय । बद्धेषु पादत्वस्य अमृते पादत्रयत्वस्य च श्रवणात् सर्वेषां जीवानामविशेषेणांशत्वसिद्धिः । ब्रह्मभिन्नानामेव एतत्पादचतुष्टयतया निर्देशात् तदतिरिक्ततया ब्रह्मणः **अस्ये**ति षष्ठ्या निर्देशाच्च स्वस्वरूपैकदेशत्वरूपपादत्वमत्राविवक्षितमिति स्वगूढाशयज्ञापनार्थश्च **वर्ण**पदम् । तदत्र भेदश्रुत्यविरोधिनोंशत्वस्य विवक्षा । एवं जीवानां बहुत्वस्यानेकांशत्वस्य चावगमात् एकवचनमविवक्षितार्थमित्याह **सूत्रेऽपी**ति । तद्बहुत्वे, पादभूतानां ब्रह्मणो भेदे च स्पष्टश्रुतिमपि दर्शयति **नित्य** इति । ननु नित्यत्वचेतनत्वादिसर्वाकारसाम्ये सति, "तद्वा तादृग्वेति न कश्चिद् विशेषः" इति न्यायात् सर्वात्मैक्यमेव स्यादिति चेन्न—भेदश्रुतिविरोधात् । गोत्वाश्वत्वखण्डत्वमुण्डत्वादिवत् भेदकभावरूपाकाराभावे कथं भेद इति चेत्, तत्राह **एव**मिति । एकरूपेषु परमाणुषु प्रतिव्यक्ति विशेषो भेदको वैशेषिकैरिषितः । तथाऽस्माभिर्नेष्यते ; विशेषाणां विशेषान्तराभावेऽपि भेदेन ग्रहणवत् आत्मव्यक्तीनामेव भेदेन भानप्रयोजकत्वौचित्यात् । एवं बद्धेषु भेदकाकारो धर्मभूतज्ञानवैलक्षण्यम् ; मुक्तादिष्वपि तत्तत्क्रियमाण कैंकर्याद्यनुगुणसंकल्पभेदादितो वैलक्षण्यं सुवचम् । विग्रहरहितेऽनुभवमात्रपरेष्वपि स्वस्वभूतभविष्यत्सर्वदशाप्रत्यक्षस्य सर्वदा सत्त्वात् भेदग्रहणं न दुष्करम् । सर्वात्मना केषुचित् साम्ये सति तु व्यक्तीनां स्वरूपत एव भेदकत्वमस्तु इत्येतावदभिप्रेत्य **आत्मयाथात्म्यवेदनक्षमैरवगम्यत** इति भाषितम् । प्रत्यक्त्वपराक्त्वाभ्यां भेदग्रहणश्च स्वस्वेतरमात्रे प्रत्यात्मम् । तत्रात्मयाथात्म्यवेदनं नापेक्षितम् ॥ एकवचनस्य जात्यभिप्रायकत्वमेतद्घट्टेऽपि सूत्रेऽवगम्यत इत्याह **असंतते**रिति ॥ ४३ ॥

साक्षादंशशब्द एव स्मृतावस्तीति दर्शयति **अपि स्मर्यत इ**ति ॥ ४४ ॥

(गी. १५-७) "ममैवांशो जीवलोके जीवभूतः सनातनः" इति जीवस्य पुरुषोत्तमांशत्वं स्मर्यते । अतश्चायमंशः ॥ ४४ ॥

अंशत्वेऽपि जीवस्य ब्रह्मैकदेशत्वेन जीवगताः दोषाः ब्रह्मण एवेत्याशङ्क्याह—

प्रकाशादिवत्तु नैवं परः । २ । ३ । ४५ ॥

तुशब्दः चोद्यं व्यावर्तयति । प्रकाशादिवत् जीवः परमात्मनोंऽशः । यथाऽग्न्यादित्यादेर्भास्वतो भारूपः प्रकाशोंऽशो भवति, यथा गवाश्वशुक्लकृष्णादीनां गोत्वादिविशिष्टानां वस्तूनां गोत्वादीनि विशेषणानि अंशाः, यथा वा देहिनो देवमनुष्यादिर्देहोंऽशः—तद्वत् । एकवस्त्वेकदेशत्वं ह्यंशत्वम् । विशिष्टस्यैकस्य वस्तुनो विशेषणमंश एव । तथा च विवेचकाः विशिष्टे वस्तुनि विशेषणांशोऽयम्, विशेष्यांशोयमिति व्यपदिशन्ति । विशेषणविशेष्ययोरंशांशित्वेऽपि स्वभाववैलक्षण्यं दृश्यते । एवं जीवपरयोर्विशेषणविशेष्ययोरंशांशित्वम्, स्वभावभेदश्चोपपद्यते ः तदिदमुच्यते—नैवं पर इति । यथाभूतो जीवः, न तथाभूतः परः। यथैव हि प्रभायाः प्रभावान् अन्यथाभूतः, तथा प्रभास्थानीयात् स्वांशात् जीवादंशी परोऽप्यर्थान्तरभूत इत्यर्थः । एवं जीवपरयोर्विशेषणविशेष्यत्वकृतं स्वभाववैलक्षण्यमाश्रित्य भेदनिर्देशाः प्रवर्तन्ते । अभेदनिर्देशास्तु पृथक्सिद्ध्यनर्हविशेषणानां विशेष्यपर्यन्तत्वमाश्रित्य मुख्यत्वेनोपपद्यन्ते । (छा. ६-१०-३) "तत्त्वमसि", (बृ. ६-४-५) "अयमात्मा ब्रह्म" इत्यादिषु, तच्छब्दब्रह्मशब्दवत् त्वमयमात्मेति शब्दा अपि ; जीवशरीरकब्रह्मवाचकत्वेनैकार्थाभिधायित्वात्-इत्ययमर्थः प्रागेव प्रपञ्चितः ॥ ४५ ॥

स्मरन्ति च ॥ २ । ३ । ४६ ॥

---

'उभयव्यपदेशात्त्वहिकुण्डलवत्' इति सूत्रदर्शितरीत्या, जीवानां ब्रह्मजत्वस्याग्निविस्फुलिङ्गन्यायेन यादवप्रकाशादिमतस्यादरणेन च स्वरूपैकदेशत्वरूपमंशत्वं स्वाभिमतमिति मा भूत् ; ब्रह्मणि सर्वदोषसमावेशापत्तेरिति प्रतिबोधनाय विशिष्टवस्त्वेकदेशत्वरूपमंशत्वं स्वाभिमतं सुस्पष्टमाह **प्रकाशे**ति सूत्रेण । **आदि**पदेन अपृथक्सिद्धगुणादीनां देहभूतद्रव्यस्य च ग्रहणम् । **नैवं परः**—विशेष्यविशेषणयोर्भिन्नपदार्थत्वात् विशेषणगतदोषदुष्टं विशेष्यं न भवति ॥ विशेष्यांशोऽयमिति व्यवहारदर्शनात् परस्याप्यंशत्वापत्तिरिति च न । अंश एवांश इत्यवधारणाभिप्रायात् अंशित्वासामानाधिकरणस्यांशत्वस्य अपृथक्सिद्धविशेषणत्वस्य विवक्षयैवांश इति व्यवहारात् । अद्वैतिभिर्निरवयवे अंशपदायोगात् अंश इवांश इत्यन्यथा कृतम् । अस्माभिरंश एवांश इति सम्यगवधार्यत इति विशेष. । **त्वमयमात्मेति शब्दा अपी**ति । **उपपद्यन्त** इत्यनुषज्यते । **त्वं**शब्दा**त्म**शब्दयोरिव **अयं**शब्दस्यापि उपस्थितव्यक्तिशरीरकपरमात्मवाचित्वं तादात्म्यस्याभेदरूपस्य बोधाय स्वीकर्तव्यमिति कथ्यमानमत्रावधेयम् । एवं विशिष्टैक्ये बोधिते तत्तत्पदार्थविशेषणांशैक्यमपि संभवादत्र विवक्ष्यते ॥ ४५ ॥

**स्मरन्ति च** । पूर्वमंशशब्दव्यवहारमात्रे स्मृतिरुदाहृता । अत्र प्रकाशादिसूत्रदर्शितापृथक्सि-

एवं प्रभाप्रभावद्रूपेण शक्तिशक्तिमद्रूपेण शरीरात्मभावेन चांशांशिभावं जगद्ब्रह्मणोः पराशरादयः स्मरन्ति, (वि.पु. १-२२-५६) "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्", (वि. पु. १-२२-३८) "यत्किञ्चित् सृज्यते येन सत्त्वजातेन वै द्विज। तस्य सृज्यस्य संभूतौ तत् सर्वं वै हरेस्तनुः" इत्यादिना। चकरात् श्रुतयोऽपि—(बृ. ५ ७-२२) "यस्यात्मा शरीरम्" इत्यादिना आत्मशरीरभावेनांशांशित्वं वदन्तीत्युच्यते ॥ ४६ ॥

एवं ब्रह्मणोंऽशत्वे, ब्रह्मप्रचर्यत्वे, ज्ञत्वे च सर्वेषां समाने केषांचित् वेदाध्ययनतदर्थानुष्ठानाद्यनुज्ञा, केषांचित् तत्परिहारः, केषांचित् दर्शनस्पर्शनाद्यनुज्ञा, केषांचित् तत्परिहारश्च शास्त्रेषु कथमुपपद्यत इत्याशङ्क्याह—

अनुज्ञापरिहारौ देहसंबन्धात् ज्योतिरादिवत्। २। ३। ४७॥

सर्वेषां ब्रह्मांशत्वज्ञत्वादिनैकरूपत्वे सत्यपि ब्राह्मणक्षत्रियवैश्यशूद्रादिरूपशुच्यशुचिदेहसंबन्धनिबन्धनौ अनुज्ञापरिहारावुपपद्येते; ज्योतिरादिवत्—यथाऽग्नेरग्नित्वेनैकरूपत्वेऽपि श्रोत्रियागारादग्निराह्रियते, श्मशानादेस्तु परिह्रियते—यथा चान्नादि श्रोत्रियादेरनुज्ञायते; अभिशस्तादेस्तु परिह्रियते ॥ ४७ ॥

असंततेश्चाव्यतिकरः। २। ३। ४८॥

ब्रह्मांशत्वादिनैकरूपत्वे सत्यपि जीवानामन्योन्यभेदात्, अणुत्वेन प्रतिशरीरं भिन्नत्वाच्च भोगव्यतिकरोऽपि न भवति। भ्रान्तब्रह्मजीववादे उपहितब्रह्मजीववादे च जीवपरयोर्जीवानां च भोगव्यतिकरादयः सर्वे दोषाः सन्तीत्यभिप्रायेण स्वपक्षे भोगव्यतिकराभाव उक्तः॥

---

द्धविशेषणत्वगमक-शक्तिशरीरादिनानाविधपद-तदनुगुणदृष्टान्तादिमत् स्मृतिजातं विवक्षितम्। चकारेण श्रुतयो गृह्यन्ते। श्रुत्यर्थविचाररूपत्वात् सूत्रस्य तदुपपादनाय स्पष्टार्थकस्मृतीर्निर्दिश्य चकारेण तदुक्तिः॥

जीवानां ब्रह्मभिन्नत्वानंगीकारे भोगसांकर्यं प्रसज्ञयिष्यति। तादृशो दोषः स्वपक्षेऽपि तुल्य इति कस्यचिन्मतिनिरासार्थं स्वपक्षे दोषाभावं वक्तुं सूत्रद्वयम्। तत्रात्मनां ज्ञत्वकर्तृत्वादिवत अंशत्वस्यापि साधारणत्वे सर्वत्रैकरूपा वृत्तिर्युक्ता; लोके एकरूपांशताभाक्षु एकरूपवृत्तेरानुभविकत्वात्। ब्रह्मांशेषु रामकृष्णादिषु यथा एकरूपमाचरणम्, तथा जीवेष्वपि तदंशेषु सर्वत्रैकरूपमाचरणं युक्तम्; न तु कस्यचित् क्वचित् मान्ये कार्ये अनुज्ञानम्, अन्यस्य परिहार इति। अत एकरूपमंशत्वं न स्वीकर्तव्यमिति कश्चिन्मन्यते। तत्राह अनुज्ञेति। आत्मसामान्यस्य मान्यत्वांशेऽप्यैकरूप्यमेवेष्टम्। अनुज्ञापरिहारौ तु न तत्प्रयुक्तौ; किंतु तत्तत्कर्मविशेषप्रयुक्ताविति समाधिः अभिशस्तः दोषप्रवादविषयः॥ ४७॥

असंततेः। सम्यक् ततिः विस्तारः संततिः—सर्वदेशसंबन्धित्वम्। तदभावोऽसंततिरणुत्वम्। चकारार्थो जीवानां ब्रह्मापेक्षया मिथश्च भेदः। तदुभयं मिलितं भोगासंकरे हेतुः। यथा आत्मन एकत्वे भोगसांकर्यमापद्यते, तथा भेदपक्षेपि विभुत्वे सर्वस्य सर्वदेहसंबन्धात् तदापद्यत एव। तथा ब्रह्मणोऽपि

**ननु भ्रान्तब्रह्मजीववादेऽप्यविद्याकृतोपाधिभेदात् भोगव्यवस्थादय उपपद्यन्ते; अत आह-**

**आभास(सा) एव च । २ । ३ । ४९ ॥**

**अखण्डैकरसप्रकाशमात्रस्वरूपस्य स्वरूपतिरोधानपूर्वकोपाधिभेदोपपादनहेतुराभास एव। प्रकाशैकस्वरूपस्य प्रकाशतिरोधानं प्रकाशनाश एवेति प्रागेवोपपादितम्।** आभासा एव **इति वा पाठः; तथा सति हेतव आभासाः। चकारात्** (—) **"पृथगात्मानं प्रेरितारं च मत्वा",** (श्वे. १-६-९)? **"ज्ञाज्ञौ द्वौ",** (श्वे. ४-६) **"तयोरन्यः पिप्पलं स्वाद्वत्ति" इत्यादिश्रुतिविरोधश्च। अविद्यापरिकल्पितोपाधिभेदेऽपि सर्वोपाधिभिरुपहितस्वरूपस्यैकत्वाभ्युपगमात् भोगव्यतिकरस्तदवस्थ एव ॥ ४९ ॥**

**पारमार्थिकोपाध्युपहितब्रह्मजीववादेऽप्युपाधिभेदहेतुभूतानाद्यदृष्टवशात् व्यवस्था भविष्यतीत्याशङ्क्याह—**

**अदृष्टानियमात्। २ । ३ । ५० ॥**

**उपाधिपरम्पराहेतुभूतस्यादृष्टस्यापि ब्रह्मस्वरूपाश्रयत्वेन नियमहेत्वभावादव्यवस्थैव, उपाधिभिः, अदृष्टैश्च स्वसंबन्धेन ब्रह्मस्वरूपच्छेदासंभवात् ॥ ५० ॥**

**अभिसंध्यादिष्वपि चैवम्। २ । ३ । ५१ ॥**

**अदृष्टहेतुभूताभिसन्ध्यादिष्वप्युक्तादेव हेतोरनियम एव ॥ ५१ ॥**

**प्रदेशभेदादिति चेन्नान्तर्भावात्। २ । ३ । ५२ ॥**

**यद्यप्येकमेव ब्रह्मस्वरूपम्, तत् छेदानर्हं नानाविधोपाधिभिः संबध्यते—तथाप्युपाधि-**

---

जीवाभेदे इति ॥ ४८ ॥

परपक्षे दोषमाह सूत्रचतुष्टयेन । **आभास** इति । ब्रह्म तिरोहितस्वरूपं प्रपञ्चकल्पनाश्रयत्वात्, ब्रह्म संभवन्नानोपाधिकं तिरोहितस्वरूपत्वात्, डित्थो न डपित्थभोगाश्रयः तदुपाधिभिन्नोपाधिकत्वादिति हेतव आभासाः; निर्विशेषस्वप्रकाशत्वेन पूर्वसाध्यहेतुनिरासात्; अन्तिमहेतोः सौभर्यादौ व्यभिचरात्। प्रतिबिम्बजीववादे जीवब्रह्मैक्यसिद्धान्तभङ्गः, अविद्योपधानायोगात् प्रतिबिम्बासिद्धिश्चेति ज्ञापनार्थं तिरोधानादिहेतोरप्याभासत्वं भाषितम्। **चकारेण** श्रुतिविरोधसमुच्चयः ॥ ४९ ॥

भास्करपक्षे तिरोधानाद्यभावात् अन्तिमहेतुदोष एव शिष्यते । तत्र तदभिमतं समाधिं दूषयितुमुपरितनसूत्राणि । **ब्रह्मस्वरूपाश्रयत्वेने**ति । न हि सांख्यवत् उपाधिगतत्वमदृष्टस्य तदिष्टम्। एवञ्च भौमदेहावच्छेदेन कृतस्य फलं यथा तार्किकमते स्वर्गावच्छेदेनात्माऽनुभवति विभुत्वे सति एकत्वात्, तथा एकोपाध्यवच्छिन्नोत्पादितादृष्टादन्योपाध्यवच्छिन्नोऽपि फलं सोऽनुभवेदिति । अदृष्टस्याप्यव्यवस्थितत्वात् भोगव्यतिकर इति सूत्रार्थः । अस्य सूत्रस्य मिथ्योपाधिवादिपक्षविषयकत्वमपीष्टं **सारे** ॥ ५० ॥

**अभिसंध्यादी**ति कर्महेतुज्ञानेच्छाप्रयत्नग्रहणम्। **चो**ऽवधारणे; **एवमेव,** अनियम एवेत्यर्थः॥

**संबन्धिब्रह्मप्रदेशभेदादुपपद्यत एव भोगव्यवस्थेति चेत् तन्न, उपाधीनां तत्र तत्र गमनात् सर्वप्रदेशानां सर्वोपाध्यन्तर्भावात् व्यतिकरस्तदवस्थ एव । प्रदेशभेदेन संबन्धेऽपि सर्वस्य ब्रह्मप्रदेशत्वात् तत्तत्प्रदेशसंबन्धि दुःखं ब्रह्मण एव स्यात् । पूर्वत्र** (शारी. २-३, ३२-३६) " **नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा** ", " **उपलब्धिवदनियमः** " **इत्याभ्यां सूत्राभ्यां वेदबाह्यानां सर्वगतजीववादिनां दोष उक्तः ; अत्र तु** " आभास एव च " **इत्यादिभिः सूत्रैर्वेदावलम्बिनामात्मैकत्ववादिनां दोष उच्यते ॥ ५२ ॥**

इति अंशाधिकरणम् ॥ ७ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये द्वितीयस्याध्यायस्य तृतीयः पादः ॥ २-३ ॥

---

**उपाधिसंबन्धीति** । अव्याप्यवृत्तिर्विशेषगुण इष्यते इति तार्किकैः अवच्छेदकस्थल एव कार्यस्वीकारात् तद्रीत्या, यदवच्छेदेनाभिसंध्यदृष्टादेरुत्पत्ति, तदुपलक्षितप्रदेश एव फलमिति स्वीक्रियत इति भावः । **अन्तर्भावात्** उपाधीना सञ्चरिष्णुत्वात् अन्यप्रदेशानामप्येकोपाध्यवच्छिन्नत्वभावात् । तथा च जीवानां मिथोभोगव्यतिकरः स्यादेवेत्यर्थः । सर्वोऽपि भोगो ब्रह्मप्रदेशस्थत्वात् ब्रह्मण एवेति तस्य सर्वदोषदुष्टत्वापत्तिश्चेत्याह । **प्रदेशभेदेनेति** । एषां सूत्राणां पौनरुक्त्यं परिहरति **पूर्वत्रेति** । तथा च सांख्यादिपक्षनिराकरणपरतया सूत्राणामेषां योजनं परकृतं पौनरुक्त्यादयुक्तम् । कथञ्च स्वपक्षेऽपि संभवतो दोषस्य परपक्षे तैरुद्भावनम् । अन्यथा-जीवविषये अवच्छेदवादं बादरायणः स्थापयतीत्यपि स्यात् । एवञ्च न जीवस्य मुक्तिकाले स्थितिरित्यादिदोषोद्भावनमत्राभिमतम् ।

तदेवं जीवात्मनामत्यन्तब्रह्मभिन्नत्वस्य तत्स्वरूपैकदेशत्वस्य च निराकरणेन विशिष्टवस्त्वेकदेशतया तदपृथक्सिद्धविशेषणत्वरूपं तदंशत्वमुपपादितम् । एवम्भूताः तदधीनकर्तृत्वज्ञत्वाश्रयाः अचेतनवत् विकाररहिताः समष्टौ निर्विकाराः व्यष्टौ तत्कार्यभूता इति चेतनाचेतनसर्वकारणत्वं ब्रह्मणः सुस्थमिति पादार्थः ॥

इति श्रीमद्वेदान्तरामानुज-यतीन्द्र-महादेशिकचरणारविन्दचञ्चरीकस्य श्रीमद्रङ्गरामानुज मुनीन्द्र-महादेशिक-पदपद्मसेवासमधिगतसर्ववेदान्तार्थस्य वात्स्यश्रीशैल-सम्राट्चक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे द्वितीये तृतीयः ।

श्रीमते रामानुजाय नमः । शुभमस्तु ।

श्रीः ॥ श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचिते (श्रीभाष्ये)

# श्री शा री र क मी मां सा भा ष्ये

द्वितीयाध्याये चतुर्थः पादः (प्राणपादः)

६१. प्राणोत्पत्त्यधिकरणम् २-४-१ ॥

## तथा प्राणाः । २ । ४ । १ ॥

ब्रह्मव्यतिरिक्तस्य वियदादेः कृत्स्नस्य कार्यत्वेनोत्पत्तावुक्तायां जीवस्य कार्यत्वेऽपि स्वरूपान्यथाभावलक्षणोत्पत्तिरपोदिता ; तत्प्रसङ्गेन जीवस्वरूपं शोधितम् । संप्रति जीवोपकरणानामिन्द्रियाणां प्राणस्य चोत्पत्त्यादिप्रकारो विशोध्यते । तत्र किमिन्द्रियाणां कार्यत्वं जीववत्, उत वियदादिवदिति चिन्त्यते । किं युक्तम् ?

जीववदेवेत्याह पूर्वपक्षी—तथा प्राणाः—इति । प्राणाः—इन्द्रियाणि । यथा जीवो नोत्पद्यते ; तथेन्द्रियाण्यपि नोत्पद्यन्ते । कुतः ? श्रुतेः । यथा जीवस्यानुत्पत्तिः श्रुतेरव-

श्रीः । श्रीमते भगवद्रामानुजाय नमः ।

### भाष्यार्थदर्पणे द्वितीयाध्याये तुरीयः पादः

पूर्वपादे देहारम्भकवियदादेः देहिनश्च कार्यताप्रकारः शोधितः । अस्मिन् पादे व्यष्टिनिविष्टतदीयवस्तुकार्यताशोधनं क्रियते । तानि च वस्तूनि करणानि, प्राणः, कलेबरश्च । तत्र करणादौ कार्यत्वप्रतिष्ठापनम्, कलेबरस्य साक्षात्परमात्मकार्यत्वस्थापनञ्च क्रियते । संख्यापरिमाणादिविचारः सर्वः पूर्वपादे ज्ञत्वकर्तृत्वादिविचारवत् प्रासङ्गिकः । आदिममधिकरणमिन्द्रियाणामुत्पत्तिस्थापकम् । **जीववदिति** दृष्टान्तसंगतिः प्रदर्श्यते । नन्विदम्, 'असंभवस्तु सतोऽनुपपत्तेः' इत्यादित एव सिद्धम् । सत्यम्—अनुत्पत्तिश्रुतिनिर्वाहप्रकारव्युत्पादनाय पुनरारम्भः । एवमत्राधिकाशङ्का—पञ्चीकरणादिविषयकप्रमाणानुरोधेन वियदादेः स्वरूपान्यथाभावात्मकविकारस्वीकारेऽपि इन्द्रियादेः प्रलयकालस्थित्यवगमेनानुत्पत्तौ निश्चितायाम्, तदुत्पत्तिश्रवणं आप्यायकवस्तुसंश्लेषादिकमादाय जीववदन्यथा निर्वाह्यमिति न प्रतिज्ञाहानिरिति । एवमधिकाशंकाप्रतिपादनसौकर्याय **तथा प्राणा** इतीदं पूर्वपक्षसूत्रत्वेनैव भाष्येऽभिमतम्; न तु **शांकर** इव सिद्धान्तसूत्रत्वेन । किञ्च ज्ञाधिकरणप्रभृतीनां प्रासङ्गिकत्वात् नात्रांशाधिकरणादिकमादाय संगतिर्वक्तव्या ; किंतु, 'यत्प्रसङ्गेन यदागतम्, तत्समाप्तौ तद् बुद्धिस्थं जायते' इति न्यायात् बुद्धिस्थेन आत्माधिकरणेन । तदा च जीववद नोत्पद्यत इति **तथाशब्देना**तिदेशात् पूर्वपक्षसूत्रत्वमेव युक्तम् । तद्विहाय वियदधिकरणार्थातिदेशस्तु संभवन्त्यां गतौ व्यवहितत्वान्न युज्यते । तर्हि सिद्धान्तप्रमेयप्रतिपादकसूत्रं न लक्ष्यत इति न मन्तव्यम्—उक्तानुक्तविवेकेन पूर्वपक्षिणं प्रति यद् वक्तव्यम्, तदंशस्यानन्तरसूत्रे सारोद्धारेण कथनात् अपशूद्राधिकरणसूत्रस्येव तस्य सिद्धान्तसूत्रतायाः सम्यगुपपन्नत्वात् । तद् दर्शयिष्यते । सर्वमिदमभिप्रेत्याह **ब्रह्मेति** । सौत्र**तथा**शब्दार्थमाह **यथा जीव** इति । शतपथब्राह्मण-

गम्यते ; तथा प्राणानामप्यनुत्पत्तिः श्रुतेरेवावगम्यते । तथा प्राणा इति प्रमाणमप्यतिदिश्यते । का पुनरत्र श्रुतिः ? (शतपथ. ६-१-१) "असद्वा इदमग्र आसीत् । तदाहुः किं तदासीदिति । ऋषयो वा ते अग्रे असदासीत् । तदाहुः के ते ऋषय इति । प्राणा वाव ऋषयः" इति जगदुत्पत्तेः प्राक् इन्द्रियाणां सद्भावः श्रूयते । प्राणशब्दे बहुवचनादिन्द्रियाण्येवेति निश्चीयते । न चेयं श्रुतिः, (बृ. ४-३-३) "वायुश्चान्तरिक्षं च ; एतदमृतम्", (बृ. ३-५-२२) "सैषाऽनस्तमिता देवता यद्वायुः" इतिवत् चिरकालावस्थायित्वेन परिणेतुं शक्या ; 'असद्वा इदमग्र आसीत्' इति कृत्स्नप्रपञ्चप्रलयवेलायामप्यवस्थितत्वश्रवणात् । उत्पत्तिवादिन्यस्तु जीवोत्पत्तिवादिन्य इव नेतव्या इति ॥ १ ॥

एवं प्राप्तेऽभिधीयते—वियदादिवदेव प्राणाश्चोत्पद्यन्ते ; कुतः ? (छां. ६-२-१) "सदेव सोम्येदमग्र आसीत्", (ऐत. १-१-१) "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिषु प्राक्सृष्टेरेकत्वावधारणात्, (मु. २-१-३) "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इतीन्द्रियाणामुत्पत्तिश्रवणाच्च प्रागवस्थानासंभवात् । न चात्मोत्पत्तिवादवत् इन्द्रियोत्पत्तिवादाः परिणेतुं शक्याः, आत्मवत् उत्पत्तिप्रतिषेधश्रुतीनां नित्यत्वश्रुतीनां चादर्शनात् । (शतपथ. ६-१-१) "असद्वा इदमग्र आसीत्" इत्यादिवाक्येऽपि प्राणशब्देन परमात्मैव निर्दिश्यते ; (छां. १-११-५) "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति प्राणशब्दस्य परमात्मन्यपि प्रसिद्धेः । "प्राणा वाव ऋषयः" इति ऋषिशब्दश्च सर्वज्ञे तस्मिन्नेव युज्यते ; न त्वचेतनेष्विन्द्रियेषु । ऋषयः, प्राणा इति च

---

श्रुतिं (६-१-१) दर्शयति असदिति । प्राणशब्दस्यात्र न मुख्यप्राणपरत्वं परमात्मपरत्वं वेति व्यनक्ति प्राणशब्दे इति । इयं बहुवचनश्रुतिरेव पूर्वपक्षिण इह परमास्त्रम् । वियदधिकरणेनागतार्थत्वं दर्शयति न चेयमिति ।

एवं पूर्वपक्षे प्राप्ते सूत्रकारः पूर्वपक्षिपरमास्त्रभञ्जने कृते सति अन्यत् स्वत एवापास्तप्रायमिति कृत्वा बहुवचनश्रुतिनिर्वाहमात्रं सिद्धान्तसूत्रेणादर्शयत् । अतोऽनुक्तिसिद्धां तदभिमतां सिद्धान्तसरणिं भाष्यकारः स्वयमेवापशूद्राधिकरण इव दर्शयति वियदादिवदेवेत्यादिना । एवमुपपाद्य ज्ञाप्यांशं परिशेष्य सिद्धान्तसूत्रमवतारयतीति सर्वमिदं सिद्धान्तसूत्रमुखरूपम् । वियन्न्यायस्यैवेह प्राप्तिमाह सदेवेति । आत्मन्यायस्याप्राप्तिमाह न चात्मेति । आत्मानुत्पत्तितन्नित्यत्वपराः सत्तर्कबृंहिताः बह्व्यः श्रुतयः सन्तीति तदुत्पत्तिश्रुतिरन्यथा नीता । प्राणविषये तु नैव तादृशश्रुतिरिति वैषम्यम् । एवमुपपादनव्याजेन वक्ष्यमाणसूत्रे, 'असंभवात् तत्प्राक्छ्रुतेश्च' इत्यस्य आत्मन्यायासंभवात्, आसीदेकमेवेति श्रुतेश्चेत्यर्थसंभवोऽपि दर्शितः । ऋषिशब्दश्चेति । असदिति उपक्रमस्थं पदं कारणवाक्यघटकत्वात् गतिसामान्यात् नारायणपरमिति सुगमम् । प्राणपदात् पूर्वश्रुतमृषिपदमपि तत्र स्वरसम् । जघन्यवचनाद्यनुसारेण तदन्यथाकरणमयुक्तम् । तथाच बहुवचननिर्वहणप्रकार एव ज्ञेयोऽवशिष्यते । सोऽपि पाशाधिकरणं पूर्वमीमांसागतं

बहुवचनश्रुतिः कथमुपपद्यत इति चेत्—तत्राह—

गौण्यसंभवात् तत्प्राक्छ्रुतेश्च । २ । ४ । २ ॥

बहुवचनश्रुतिर्गौणी, बह्वर्थासंभवात्; तस्यैव परमात्मनः सृष्टेः प्रागवस्थानश्रुतेरेव ॥

इतश्च प्राणशब्दः परमात्मवचनः—

तत्पूर्वकत्वाद्वाचः । २ । ४ । ३ ॥

वाचः परमात्मव्यतिरिक्तविषयस्य नामधेयस्य वाग्विषयभूत[स्य]वियदादिसृष्टिपूर्वकत्वात् । "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" इति नामरूपभाजामभा-

---

स्मरतां सुगम इत्याशङ्क्याह तत्राहेति । प्रश्नपूर्वकं प्राणा इति उत्तरणात् नैर्भर्यावगमात् पाशनत्रमतिक्रम्य गतिसामान्यादिनयज्ञातातिरिक्त एव तदर्थो वाच्य इति पूर्वपक्ष्याशयः । इन्द्रियेषु असद्वा इदमिति इदंशब्द-वाच्यजगदभेदायोगात् सोऽनुपपन्न इति सिद्धान्तिभावः । तस्यैवेति । तस्यैव प्राक्छ्रुतेरिति विग्रहः । का-रणवाक्यान्तराण्यत्राभिप्रेतानि । असंभवसाधकहेतुरयमिति टीका । अतः सूत्रे चकार एवकारार्थे । तेन हेतोः पूर्वपक्षिज्ञातपूर्वत्वं दर्श्यते । अत एव चः प्रसिद्धौ वा । चस्त्वर्थ इति सारे । दीपे चार्थ एव गृहीत इव ।

अत्रेदमपि बोध्यम्—प्राणसत्ताश्रुतिरियं शतपथगता न मूलकारणविषया, किं तु अवान्तरकारण-प्राणविषयेत्युक्तं शाङ्करे । चित्याग्निसाधननिरूपणार्थमवान्तरप्रलयं प्रस्तुत्य प्रलये स्थितस्याधिकारिपुरुषस्य प्रजापतेः प्राणानां कथनमिहेति च भामती । अत्र तु भाष्ये कारणवाक्यान्तरसमानार्थकत्वमेवाभिमतम् । अन्यथा गौण्यसंभवादित्यस्य उत्पत्तिश्रुतिगौणत्वासंभवादित्यर्थवर्णने क्लेशः ; विषयवाक्यार्थस्य मूलकारणा-वर्णनमिति दोषोऽपि । एवमपि, "तान् प्राणान्" इत्युपक्रम्य व्यष्टिशरीरसृष्टेरत्र प्रकरणे उपरिकथनात् प्राणशब्दस्येन्द्रियपरत्वमेव युक्तमिति शंकाशमनाय तत्प्राक्छ्रुतेरित्युक्तम् । एकवचनान्तप्राणपदेन्द्रपदा-देरप्युपरिश्रवणात् परमात्मनः प्राक्सद्भावस्याप्यत्रावगम इति ऋषिपदस्वारस्येनेदमपि वाक्यं परमात्मपरमेवे-त्युक्तं भवति । ऋषय इति बहुवचनञ्च गौणम् : तान् प्राणान् इत्यत्रेन्द्रियाणां ग्राह्यत्वे प्राणा इत्युप-क्रमस्थं पदं तदुपलक्षितपरमात्मपरं भवतु । एवञ्च भाष्ये श्रुतेरेवेत्यस्य अत्र स्थित इन्द्रपदैकवचनान्त-प्राणपदादिरूपपरमात्मश्रुतेरेवेत्यर्थोऽप्युचित इति । बहुवचनार्थस्य बहुत्वस्य स्वाश्रयप्राणवृत्तिप्राणन-व्यापारतुल्यप्राणनाश्रयवृत्तित्वरूपं साजात्यमेकत्वेऽस्तीति स्वशक्यसजातीये एकत्वे गौणं बहुवचनमिति च युक्तम् ॥ २ ॥

ननु प्राणपदेन परमात्मग्रहणेऽपि, यथा एकमित्यादिश्रवणेऽपि सूक्ष्मचिदचिद्विशिष्टस्यैव कारण-वाक्ये ग्रहणम्, तथा इन्द्रियविशिष्टस्यैव ग्रहणमस्तु । सन्तु चेन्द्रियाण्यपि प्रलये इत्यत्र तृतीयसूत्र-प्रवृत्तिः । ननु तच्छब्देनानुपस्थितवियदादिग्रहणं कथमिति शंकाशमनाय वाग्विषयभूतेत्युक्तम् । वाच इति पदश्रवणात् वाक्संबन्धितया अर्था उपस्थिता भवन्तीति भावः। वाग्विषयभूतस्येत्यपि पाठोऽस्ति । अर्थसृष्टिसामयिकत्वात् नामकल्पनस्य ततः प्राक् वियदादि-तत्कार्यदेहाद्यभावेन नामव्यवहारादेरिन्द्रिय-व्यापारस्यासंभवात् कार्यहेतुतया सूक्ष्मचिदचिद्वैशिष्ट्यस्येव इन्द्रियवैशिष्ट्यस्य तदा कल्पनं न भवतीति

वात् तदानीं वागादीन्द्रियकार्याभावाच्च तानि न सन्तीत्यर्थः॥३॥ इति प्राणोत्पत्त्यधिकरणम्॥

६२. सप्तगत्यधिकरणम् २-४-२ ॥

सप्त गतेर्विशेषितत्वाच्च । २ । ४ । ४ ॥

तानीन्द्रियाणि किं सप्तैव स्युः, अथवैकादशेति चिन्त्यते । श्रुतिविप्रतिपत्तेः संशयः। किं प्राप्तम्; सप्तेति। कुतः? गतेः, विशेषितत्वाच्च। गतिस्तावत् जायमानेन म्रियमाणेन च जीवेन सह लोकेषु सञ्चरणरूपा सप्तानामेव श्रूयते, (मु. २-१-८) "सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्तसप्त" इति। वीप्सा पुरुषभेदाभिप्राया । विशेषिताश्च ते गतिमन्तः प्राणाः स्वरूपतः, (कठ. २-६-१०) "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्" इति। शरीरान्तरसञ्चरणं विहाय मोक्षार्थगमनं परमा गतिः । एवं जीवेन सह जन्ममरणयोः सप्तानामेव गतिश्रवणात्, योगदशायां ज्ञानानीति विशेषितत्वाच्च जीवस्य करणानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणबुद्धिमनांसि सप्तैवेति गम्यते। यानि त्वितराणि विषयाणां ग्राहकत्वेन, (बृ. ५-२-७) "अष्टौ ग्रहाः" (यजु. ७-३-१०) "सप्त वै शीर्षण्याः प्राणाः द्वाववाञ्चौ" इत्यादिषु चतुर्दशपर्यन्तानि प्राणप्रति-

---

भावः। तदानीं प्रलये। कार्याभावाच्चेति चकारेण पूर्वसूत्रोक्तश्रुतिसमुच्चयः। यद्यप्यत्र शतपथप्रकरणे व्यष्टिसृष्टेः ततः प्राक् वेदरूपवाक्सृष्टेश्च कथ्यमानतया, 'वाचः वैदिकशब्दसृष्टेः तत्पूर्वकत्वात् परमात्मपूर्वकत्वात् प्राणः परमात्मे'त्यर्थवर्णनमपि भवति—अथापि शब्दसृष्टेरिन्द्रियसृष्टिपूर्वकत्वस्यापि वर्तमानतया प्राणशब्दस्य परमात्मपरत्वे तत् साधकं न स्यादिति तथा न व्याख्यातम्। वियदादीत्यादिपदेन इन्द्रियाणामपि ग्रहणम्। ननु कार्याभावादिन्द्रियाभाव इति कथमुच्यते । सिद्धान्ते आहङ्कारिकत्वादिन्द्रियाणां भूतसृष्टेः प्रागेव तत्सत्त्वस्येष्टत्वादिति चेत्—उच्यते। प्रलये इन्द्रियसद्भावः किं वचनबलात्, किं वा युक्त्या। आद्ये वक्तव्यं पूर्वसूत्रेणोक्तम्। अन्त्यपक्षनिरसनमत्र क्रियते, इन्द्रियकार्याणां भूतसृष्ट्यनन्तरमेव भावात् पूर्वमिन्द्रियसद्भावो न युक्तिसाध्य इति। इदमित्युच्यमानजगदभिन्नत्वसहितहेतुत्वमिन्द्रियेषु न संभवति; प्रत्युत जगत्पूर्वकत्वमिन्द्रियेषु युक्तितो भवेदिति चात्राभिसंहितम्॥ ३ ॥

सप्त के इत्यत्र तदवधारणार्थं विशेषितत्वाच्चेति। ज्ञानानीति ज्ञानसाधनेन्द्रियकथनात् हस्तादिव्यावृत्तिः। अवतिष्ठन्ते विषयान्तरविमुखानि; बुद्धिरध्यवसायकरणं न विचेष्टेत—नात्मातिरिक्तविषये चलेत्; सा दशा परमा गतिः योगः। जन्ममरणयोरिति। सर्वलोकसंचारो हि जीववत् गतागते। अतो द्वयमप्युक्तम्। श्रोत्रेति। भा. आ. अनुगीतापर्वणि (२६) च, "घ्राणं जिह्वा च चक्षुश्च त्वक् च श्रोत्रञ्च पञ्चमम्। मनो बुद्धिश्च सप्तैते ज्ञेयाः करणहेतवः" इति। अष्टौ ग्रहा इति। ग्रहाः ग्राहकाः। अष्टावतिग्रहाः। अतिग्रहाः विषयाः। "कति ग्रहाः कति अतिग्रहाः" इति आर्तभागस्य प्रश्न एवं याज्ञवल्क्येन समाहितः। उपरि घ्राणवाग्जिह्वाचक्षुःश्रोत्रमनोहस्तत्वच इति विवरणमपि। शीर्षण्याः नेत्रश्रोत्रघ्राणद्वयानि वाक् च। अवाञ्चौ पायूपस्थौ। चतुर्दशपर्यन्तानि।

पादकवाक्येषु वाक्पाणिपादपायूपस्थाहङ्कारचित्ताख्यानीन्द्रियाणि प्रतीयन्ते, तेषां जीवेन सह गतिश्रवणाभावात् जीवस्याल्पाल्पोपकारकत्वमात्रेणौपचारिकः प्राणव्यपदेशः ॥ ४ ॥

इति प्राप्ते प्रचक्ष्महे—

हस्तादयस्तु स्थितेऽतो नैवम् । २ । ४ । ५ ॥

न सप्तैवेन्द्रियाणि, अपि त्वेकादश ; हस्तादीनामपि शरीरे स्थिते जीवे तस्य भोगोपकरणत्वात् ; कार्यभेदाच्च । दृश्यते हि श्रोत्रादीनामिव हस्तादीनामपि कार्यभेद आदानादिः। अतस्तेऽपि सन्त्येव । अतो नैवम् - अतो हस्तादयो न सन्तीत्येवं न मन्तव्यमित्यर्थः । अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यत इति एकादशेन्द्रियाणि। अतः (बृ. ५-९-४) "दशेमे पुरुषे प्राणाः आत्मैकादशः" इति, —आत्मशब्देन मनोऽभिधीयते—(गी. १३-५) "इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः", (वि. पु. १-२-४७) "तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश । एकादशं मनश्चात्र" इत्यादिश्रुतिस्मृतिसिद्धेन्द्रियसङ्ख्या स्थिता । अधिकसङ्ख्यावादाः मनोवृत्तिभेदाभिप्रायाः ; न्यूनव्यपदेशास्तु तत्रतत्र विवक्षितगमनादिकार्यविशेषप्रयुक्ताः ॥ ५ ॥ इति सप्तगत्यधिकरणम् ॥

---

'नव वै पुरुषे प्राणाः नाभिर्दशमी', 'दशेमे पुरुषे प्राणाः', 'एकादशं मनश्च' इत्येवं भाव्यम् । विशेषितत्वादित्यस्य शीर्षण्या इति विशेषणादित्यर्थो न युक्तः; अवाञ्चावित्यत्रापि प्राणपदानुषङ्गस्य स्वतः प्राप्ततया सप्तत्वभंगात् । शीर्षण्यसप्तकमपि शोधने चतुष्कमेव भवतीति च ।

तुशब्दार्थमाह न सप्तैवेन्द्रियाणीति । सप्तत्वव्यावृत्त्यर्थः तुशब्दः ; न चक्षुरादिव्यावृत्त्यर्थः । उपकारबलात् गतिकालात् स्थितिकालस्य वैलक्षण्यदर्शको वा । स्थिते इत्यस्य जीव इति विशेष्यम् । कुत्रेत्याधारप्रश्ने शरीरे इति पूरितम् । हस्तादयोऽपि शरीरस्थजीवोपकारकाः इति सूत्रार्थः । अतो नैवमिति उक्तदार्ढ्याय। पूर्वोक्तैः सप्तभिरेषां स्थिते उपकारकाणां मेलने द्वादशत्वं स्वीकृतं स्यात् ; अतः, 'सप्तत्वनिषेधमेव कुर्मः, न तु द्वादशत्वमिच्छामः' इति अनेन गम्यते ; अधिकसंख्यायां न्यूनसंख्याया अन्तर्भाव इति चतुर्दशेन्द्रियाणीति मन्येत ; तन्निषेधायाह अध्यवसायेति । तैजसानीति । इन्द्रियाणि राजसाहंकारजन्यानीति केचिदाहुः। देवाः—इन्द्रियाणिदश वैकारिकाः—सात्त्विकाहङ्कारजाः ; एवं मनोऽपीति परे । अत्र वैकारिकत्वमेव श्रुतिमूलकस्मृतिगतमित्यर्थः । राजसस्तु उपकारकः । भेदाभिप्राया इति । अनेन—सप्तसप्तेति प्राक् पुरुषभेदाभिप्रायत्वकथनं पूर्वपक्षिदृष्ट्या ; सिद्धान्ते चतुर्दशग्रहणेन स्वरसनिर्वाह एवेति दर्शितम् । गमनादीति ; उक्तश्रुतौ चतुर्दशानामपि संचारे सुवचेऽपि, 'मनष्षष्ठानीन्द्रियाणि', 'गृहीत्वैतानि संयाति····श्रोत्रं चक्षुः ····' इति गीतादिकमत्राभिप्रेतम् । सर्वेषां गमने सति कथं केषाञ्चिदेव गत्युक्तिरिति चेत्—गमनविशेषविवक्षयेति मन्तव्यम् । ज्ञानेन्द्रियतयाऽन्योपकारकत्वरूपप्राधान्याभिप्रायात् । आदिना योगादिग्रहणम् ।

ननु सूत्रे स्थिते इति पदश्रवणात्, पूर्वं गतेरित्युक्तत्वाच्च शरीरस्थितिकालमात्रभवाः हस्तादयः,

चक्षुरादयस्तु गतिमन्तोऽपीति वैलक्षण्यमवगम्यते ॥ उच्यते— एतत्सूत्रार्थो भामत्यामेवमुक्तः। हस्तादयः प्राणाः। तुशब्दात् न सप्तैवेत्युच्यते। एवं अतः अस्मिन् (सार्वविभक्तिकः तसिः) एकादशत्वे स्थिते नैवम् न सप्तत्वमिति। शांकरे तु-स्थिते सप्तत्वातिरेके सप्तवादोऽयुत्यवादः; अतः तस्मात् नैवम् सप्तैवेति न मन्तव्यमिति। भाष्येऽत्र शरीरस्थजीवे इत्येवार्थवर्णनेऽपि न हस्तादीनां गतिः प्रतिषिध्यते। सप्तमात्रगतिवर्णननिरासेऽपि, अतो नैवमित्येतदर्थो भवितुमर्हति ; सप्तसप्तेति चतुर्दशग्रहणसंभवात्। तदन्तरप्रतिपत्त्यधिकरणे, सर्वे प्राणा अनूत्क्रामन्तीति सर्वेन्द्रियोत्क्रान्तेर्वक्ष्यमाणत्वात्। "अत एव सर्वाण्यनु" इति सूत्रभाष्यश्रुतयोऽपि द्रष्टव्याः। तर्हि, स्थिते इत्यस्याशयः क इति चेत्— चक्षुराद्यविशेषं हस्तादेः स्थितिकाले उपकारकत्वे प्रमाणिके सति कथमिन्द्रियत्वापलापः। जीवोपकारकत्वमेव खल्विन्द्रियत्वमिति ज्ञाप्यते। स्थिते इति शरीरस्थितिकथनात् शरीरान्यत्वे सति जीवोपकारकत्वमिति लक्षणं दर्शितं भवति। न च मुख्यप्राणेऽतिव्याप्तिः ; प्राणा इति बहुवचनान्तपदस्य मुख्यप्राणाधीनत्वार्थकतया तद्वारणात्। यद्वा न्यायसूत्रे इन्द्रियाणां शरीराश्रितत्वं शरीरोपचयोपघाताधीनोपचयोपघातत्वस्वरूपं भाषितमिहानुसंधेयम्। अथवा, "अन्यत्र श्रेष्ठात्" इति तद्भिन्नत्वं लक्षणनिविष्टं सूत्रकृत् सूचयिष्यति। अत इन्द्रियलक्षणसूचनार्थं स्थिते इति पदम्। एवंरूपलक्षणकरणं तार्किकरक्षायामपि, "शरीरसंयोगे सत्येव साक्षात्प्रमितिसाधनम्" इत्यादि। न्यायसिद्धाञ्जने च प्राणान्यत्वे सति शरीरप्रदेशावच्छिन्नव्यापारतयोपकारकत्वमित्युक्तम्। एवं पूर्वपक्षिणि गतिश्रुत्यादरेण शंकमाने सिद्धान्ती उपकारजननकालविषयकत्वात् स्थितिश्रुतिरेव संख्यार्थे आदर्तुमुचिता। सा च, चक्षुश्च द्रष्टव्यञ्चेत्येवं सर्वविषयिणी सुबालश्रुतिरित्याह। अतः स्थिते इति पदस्य तात्पर्यान्तरसंभवात् न हस्तादिगतिव्यवच्छेदकता। नन्वेवं दीपग्रन्थविरोधः, तत्र, "श्रोत्रादीनि ···· गच्छन्ति। वाग्घस्तादीनि कर्मेन्द्रियाणि तु स्थिते शरीरे तेनैव सहोत्पत्तिविनाशयोगीनि' इति स्पष्टं कथनात्। एवमेव यादवप्रकाशपक्षोऽपि। सौत्रः तुशब्दश्चात्र स्वरसः इति चेत्—उच्यते। श्रुतिसूत्रभाष्याणि सर्वेन्द्रियगतिविषयाणि प्रागेव दर्शितानि। अतोऽयं दीपग्रन्थो यादवप्रकाशादिपक्षादरणेऽपि नेन्द्रियत्वभङ्ग इत्येवम्परः। अयञ्चात्र दीपसूत्रार्थः—सूत्रे तुशब्दो हस्तादिगतवैलक्षण्यपरः। नैवमित्यस्य, न सप्तत्वमित्यर्थः। अतश्शब्दबलात् यत इत्यपि सिद्ध्यति। यतः सप्तैव गतिमन्त इति वदतः पक्षेऽपि हस्तादयः तद्वैलक्षण्येन शरीरस्थितिकाले उपकारका इति सिद्धम्, अत उपकारकत्वाविशेषात् सप्तत्वं नास्तीति सूत्रार्थः। एवं सूत्रकारः पूर्वपक्ष्यभिमते कतिपयमात्रगतिपक्षे स्थित्वैव तं खण्डितवानिति। एवमन्वारुह्ययोजना सूत्राक्षरस्वारस्यमनुरुध्य दीपे कृतेत्यलम्। सूत्रे हस्तादय इति न शरीरावयवग्रहणम्; किंतु तत्संबन्धिनामिन्द्रियाणाम्। एवं नेत्रादिकमपि बौद्धवन्न गोलकादिमात्रम्। तदाधारमन्यदाहङ्कारिकमिति। भाष्ये अतोनैवमित्यस्य 'हस्तादयो न सन्तीत्येवं न मन्तव्यम्' इति व्याख्यानात्, हस्तादीनां गत्यभाववादी शरीरावयवातिरिक्तं हस्तादिकं नेच्छतीति तत्खण्डनमपि सूत्रकार्यमिति ज्ञायते। तथाच ते न सन्तीति वा, न गतिमन्त इति वा, नेन्द्रियाणीति वा न मन्तव्यमिति ॥ ५ ॥

## ६३. प्राणाणुत्वाधिकरणम् २-४-३ ॥

### अणवश्च । २ । ४ । ६ ॥

(बृ. ३-५-१३) **"त एते सर्व एव समाः सर्वेऽनन्ताः"** इत्यानन्त्यश्रवणात् विभुत्वं प्राणानामिति प्राप्ते अभिधीयते—(बृ. ६-४-२) **'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति'** इत्युत्क्रान्त्यादिश्रवणात् परिमितत्वे सिद्धे सति, उत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वादणवश्च प्राणाः। आनन्त्यश्रुतिस्तु, **"अथ यो हैतान् अनन्तान् उपास्ते"** इत्युपासनश्रवणादुपास्यप्राणविशेषणभूतकार्यबाहुल्याभिप्राया ॥ ६ ॥

### श्रेष्ठश्च । २ । ४ । ७ ॥

प्राणसंवादे शरीरस्थितिहेतुत्वेन श्रेष्ठतया निर्णीतो मुख्यप्राणः, (ऋ. ८-७-१७) **"आनीदवातं स्वधया तदेकम्"** इति महाप्रलयसमये स्वकार्यभूतप्राणनसद्भावश्रवणात्, **"एतस्माज्जायते"** इति जन्मश्रवणस्य जीवजन्मश्रवणवदुपपत्तेः नोत्पद्यत इत्याशङ्क्य, प्राक्सृष्टेरेकत्वावधारणादिविरोधात्, (मु. २-१-३) **"एतस्माज्जायते प्राणः"** इति पृथिव्यादितुल्योत्पत्ति-

---

**अणव** इति। ननु उत्क्रमणबलात् परिच्छिन्नत्वमेवात्र वक्तव्यं विभुत्ववारणाय। तत्र, **अनुपलभ्यमानत्वादणव** इति किमर्थं भाष्यते। न हीन्द्रियाणामुपलभ्यमानत्वं कश्चिदिच्छति। अतिप्रसक्तश्चेदमनुपलभ्यमानत्वं विभौ ब्रह्मकालादाविति चेत्—उच्यते—बृहदारण्यकेऽत्र प्रकरणे, 'वाग्वि विज्ञाता', 'प्राणो ह्यविज्ञातः' इति प्राणगतेन्द्रियागोचरत्वप्रत्यनीकतया विज्ञातत्वकथनात् उपलभ्यमानत्वं श्रुतीष्टं वागादीनाम्, उपकरणाभावात्तु अनुपलम्भ इति मा कश्चित् मंस्तेति सूत्रे परिच्छिन्नत्वमनुपलभ्यमानत्वरूपसूक्ष्मत्वमित्युभयविधमणुत्वमभिमतमित्याशयः। वाचो विज्ञातत्वञ्च विज्ञातार्थज्ञापकत्वरूपम्। इदञ्च परिच्छिन्नत्वं न जीववत् अत्यन्ताणुत्वरूपम्, त्वगादीनां शरीरव्यापिकार्यकरत्वात्। अतो मध्यमपरिमाणमेव। अस्तु वाऽत्यन्ताणुत्वेपि आप्यायकभूतमेलनवशात् मातङ्गमशकादौ एतत्परिमाणतारतम्यम्। अनाप्यायितस्य प्राणस्यानुपलम्भार्हत्वमुक्तं **टीकायाम्**। सांख्येष्टं विभुत्वं तु नाभ्युपगम्यते; प्रतिशरीरं भेदात्; यावदंशे कार्यकरत्वम्, तावदधिकपरिमाणे प्रमाणाभावात्। **त एते** मनोवाक्प्राणाः **समाः** शरीरानुरूपाः **अनन्ताः** प्रभावतोऽपरिच्छिन्नाः; कार्याणामियत्ता नास्तीत्यर्थः। प्राप्यानुरूपवास्तवार्थोपासने संभवति न विभुत्वमारोप्य उपास्यम्—अत आनन्त्यं न विभुत्वम्।

प्राणवायोः श्रेष्ठपदवाच्यत्वे युक्तिमाह **प्राणसंवादे** इति। प्राणेन्द्रियकलहसंदर्भे इत्यर्थः। **प्राण** इत्यस्य **नोत्पद्यत** इत्यत्रान्वयः। **आनीदि**ति। "न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनाऽऽस" इति नासदासीये (ऋ. ८-७-१७) ब्रह्मसूक्ते। **प्रकेतः** स्थानं चिह्नं वा। **आनीत्**। अन-प्राणने। अननमकरोत्। **अवात**मिति निषेधो न पूर्वपक्षविरोधी। अनुत्पद्यमानत्वेन शंक्यमानस्य प्राणस्य आकाशजन्यवातव्यतिरेकस्यैव तद्दिष्टत्वात्। वातप्राणैक्यभ्रान्तिवारणार्थं स निषेध इति च तदाशयात्। **स्वधया** स्वशक्त्या। **आशंक्ये-**

श्रवणात्, उत्पत्तिनिषेधाभावाच्च, जायत एव श्रेष्ठश्च प्राण इत्युच्यते। "आनीदवातम्" इति तु न जैवं श्रेष्ठं प्राणमभिप्रेत्योच्यते; अपि तु परस्य ब्रह्मण एकस्यैव विद्यमानत्वमुच्यते। "अवातम्" इति तत्रैव श्रवणात्। पूर्वेणैव तुल्यन्यायत्वेऽपि पृथग्योगकरणमुत्तरचिन्तार्थम्॥

इति प्राणाणुत्वाधिकरणम्॥ ३॥

६४. वायुक्रियाधिकरणम् २-४-४॥

## न वायुक्रिये पृथगुपदेशात्। २। ४। ८॥

सोऽयं श्रेष्ठः प्राणः किं महाभूतद्वितीयवायुमात्रम्; तस्य वा स्पन्दरूपक्रिया; अथवा

---

त्यस्य उच्यत इत्यत्रान्वयः। एतद्भाष्यस्वारस्यादिदमधिकरणान्तरमिति न मन्तव्यम्; टीकाविरोधात्; "अधिकृतिगणना चिन्मयी" इत्येतद्विरोधाच्च। नयमयूखमालिकागतिस्तु उपेक्ष्या। एतदर्थश्च— आशंकायां यद् वक्तव्यम्, तत् श्रुतप्रथमाधिकरणन्यायस्याऽऽशंकाप्रसक्त्यभावात् केवलं स्मार्यत इति। तथेति पदमनुषक्तमत्रोत्पन्नत्वबोधकमित्यभिप्रेत्याह जायत एवेति। सिद्धत्वे सूत्रं किमर्थमित्यत्राह पूर्वेति। उत्तरेति। अनेन सूत्रमिदं नोत्तराधिकरणनिविष्टमिति ज्ञायते।

अयं भावः—इन्द्रियसंख्याद्यधिकरणयोः प्रासंगिकत्वात् तत्पूर्वोक्तविषयेणैवास्य संबन्धः। अणुत्वपरत्वादस्याधिकरणस्य मुख्यप्राणाणुत्वमेवात्रोच्यत इति तावन्न युज्यते। अणुश्चेति पृथक्सूत्रसत्त्वात्। एकादशत्वरूपेन्द्रियसंख्यान्वयस्य चात्र न प्रसक्तिः। अतोऽपि प्रथमाधिकरणेनैवाऽस्य संबन्धः। तत्रेन्द्रियविषयोक्तन्यायेनैवैतदुत्पत्तेः सिद्धत्वात् अधिकाशंकानवकाशाच्च न विशिष्याधिकरणरचना कार्या। न चात्र विषयवाक्ये प्राणः श्रुतः। आनीदित्यस्य कर्त्राकांक्षायां प्राणस्य कर्तृत्वान्वयौचित्यादेव हि तद्विषयत्वमस्य कल्प्यम्। तन्न; वाय्वभावस्यात्रोक्तत्वात्, वातं प्राण इत्यादौ प्राणस्य वायुविकारत्वप्रसिद्ध्या प्राणाभावस्याप्यवगमात् वाय्वनधीनं केवलं सत्तामात्रमिह आनीदित्युच्यत इति निर्धारणात्। एवं ज्येष्ठश्रेष्ठत्वादिकमप्यप्रयोजकम्। अतो महाप्रलये सत्त्वेन प्रसिद्धस्य कारणवस्तुन एवानन कर्तृत्वम्। स्वधाशब्दश्च 'स्वधा त्वं लोकपावनी' इत्यादिप्रसिद्ध्या लक्ष्म्यर्थकत्वात् नारायणस्यैवानन कर्तृत्वसाधकः। प्राणोत्पत्तिवचनानि च बहूनि। इन्द्रियापेक्षया च पश्चात्तनः प्राणः, सत्यपि तदपेक्षया श्रैष्ठ्ये। तदुत्पत्तिनिषेधकवाक्याभावाच्च नात्मन्यायस्य प्राणेऽवकाशः। अत इदं सूत्रं कार्यताशोधनार्थे पादे कार्यत्वविचारमन्तरा तद्विषयविचारान्तरासौष्ठवात् कार्यत्वरूपसिद्धार्थस्मारणेनशिष्यस्य प्राणविषयजिज्ञासान्तरप्रवेशसंपादकमात्रम्। नाप्युत्तराधिकरणप्रथमसूत्रत्वमस्य। एतत्सूत्राभावे मुख्यप्राणनुपस्थित्यां तद्विषयविचारान्तरारम्भानवकाशात्। प्रकारान्तरेणोपस्थितौ चैतत्सूत्रवैयर्थ्यात्। तत्र चाणुत्वाधिकरणे विशेषसंबन्धाभावात्, सर्वधर्मोपपत्तेश्चेति द्वितीयप्रथमपादान्तसूत्रस्येव अस्येन्द्रियपेटिकाशेषत्वं युक्तमिति॥ ७॥

विविधोपासनविषयत्वात् प्राणस्य तत्त्वमधिगन्तव्यमिति स विचार्यते। वायुमात्रम् वायुसामान्यम्। वायुत्वावस्थामात्रं प्राणशब्दप्रवृत्तिनिमित्तमिति वा। वायुक्रिये इति द्वन्द्वश्रवणेऽपि विकल्प एव वाच्य इत्याशयेनाऽऽह तस्य वेति। उभयोरपि निषेध्यत्वात् द्वन्द्वः। 'विविधा च पृथक्चेष्टा' इति

वायुरेव कश्चन विशेषमापन्नः इति विशये—वायुरेवेति प्राप्तम्; (—) "यः प्राणः स वायुः" इति व्यपदेशात्। यद्वा वायुमात्रे प्राणत्वप्रसिद्ध्यभावात् उच्छ्वासनिश्वासादिवायुक्रियायां प्राणशब्दप्रसिद्धेश्च तत्क्रियैव। इति प्राप्ते—'न वायुमात्रम्, न च तत्क्रिया' इत्युच्यते; कुतः? पृथगुपदेशात्—"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुः" इति। तत एव पृथगुपदेशात् वायुक्रियाऽपि न भवति प्राणः; न हि तेजःप्रभृतीनां क्रिया तैः सह पृथक् द्रव्यतयोपदिश्यते। "यः प्राणः स वायुः" इति तु वायुरेवावस्थान्तरमापन्नः प्राणः; न तेजःप्रभृतिवत् तत्त्वान्तरमिति ज्ञापनार्थम्। उच्छ्वासनिश्वासादावपि, प्राणः स्पन्दत इति क्रियावति द्रव्य एव प्राणशब्दप्रसिद्धिः; न क्रियामात्रे ॥ ८ ॥

किमयं प्राणो वायोर्विकारस्सन् अग्निवद् भूतान्तरम्? नेत्याह—

**चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः । २ । ४ । ९ ॥**

नायं भूतविशेषः; अपि तु चक्षुरादिवत् जीवोपकरणविशेषः। तच्चोपकरणत्वमुपकरणभूतैरिन्द्रियैस्सहशिष्ट्यादिभ्योऽवगम्यते। चक्षुरादिभिः सह अयं प्राणः शिष्यते प्राणसंवादादिषु। तत्सजातीयत्वे हि तैः सह शासनं युज्यते। प्राणशब्दपरिगृहीतेषु करणेष्वस्य विशिष्याभिधानमादिशब्देन गृह्यते; (छा. १-२-७) "अथ ह य एवायं मुख्यः प्राणः", (—) "योऽयं मध्यमः प्राणः" इत्यादिषु विशिष्याभिधानात् ॥ ९ ॥

---

क्रियायां प्रयोगः। तत्रापि न क्रियासामान्ये। **तत एवेति**। 'एतस्माज्जायते' इत्येतस्मादेवेत्यर्थः। **द्रव्यतयेति**; द्रव्यतुल्यतयेत्यर्थः। अतः प्राण.=प्राणनमिति न मन्तव्यमिति भावः। **अवस्थान्तरम्** वायुत्वव्याप्यावस्थाविशेषम्। **तत्त्वान्तरम्** वायुत्वोपमर्दकावस्थापन्नम् ॥८॥ **भूतान्तरमिति**। लोके भूतजन्यस्य तद्भूतत्वरूपावस्थाराहित्ये भूतान्तरत्वदर्शनात् अस्यापि वायुत्वरहितत्वे तथात्वं स्यादित्याशयः। पृथगुपदेशस्योपकरणत्वज्ञप्त्यर्थतयैवोपपत्तेर्न तत्त्वान्तरत्वसाधकतेत्याशयेनाऽऽह **चक्षुरिति**। ननु सूत्रे उपकरणत्वस्यैवावगमात् भूतान्तरत्वशंकाप्रतिक्षेपकत्वं कथं **तुशब्दस्येति** चेत्—उच्यते। प्राणस्य जीवं प्रत्युपयोगः चक्षुरादिवद्वा, शरीरारम्भकखादिभूतवद्वा-स्यात्। तत्र चक्षुरादिवत् प्रतिनियतकार्यादर्शनात् देहारम्भकतुल्यत्वमिति शंकितुराशयः। प्राणस्यापि वायुत्वे तद्वैयर्थ्यं स्यादिति वायुतोऽन्यद्भूतं भवत्विति मन्यते। मनःप्रभृतिभिः सह पूर्वार्धे पाठात उपकरणत्वमेवेति समाधिः। **संवादादिष्विति आदि**पदेन उत्क्रमणादिवाक्यग्रहणम्। **करणेषु** उपकरणेषु। **विशिष्याभिधानम्** अतिशयितत्वेन वचनम्। तेन करणत्वातिशयावगमः। **आदिभ्य** इति बहुवचनं तथाभिधायकनानावाक्याभिप्रायेण। सह वसतः, सहोत्क्रामतः इति शरीरस्थतया, जीवसहशिष्ट्या च शरीरारम्भकान्यत्वावसायादि च **आदि**पदज्ञाप्यम्। **मुख्यः** मुखे भवः; प्राणशब्दमुख्यार्थ इति वा। **मध्यम** इति। श्रुतौ प्राणशब्देन चेतनस्य प्राणवायोरिन्द्रियाणाञ्च व्यवहारात् चेतनात् ऊनतया इन्द्रियतोऽधिकतया चास्य मध्यमता स्यात्; हृदि स्थितत्वाच्च ॥ ९ ॥

चक्षुरादिवदस्यापि करणत्वे (ऽस्योपकरणत्वे?) तद्वत् अस्यापि जीवं प्रति उपकारविशेषरूप-क्रियया भवितव्यम् ; सा तु न दृश्यते; अतो नायं चक्षुरादिवद्भवितुमर्हतीति चेत्—तत्राह—

अकरणत्वाच्च न दोषस्तथा हि दर्शयति । २ । ४ । १० ॥

अकरणत्वात्-करणं क्रिया अक्रियत्वात् । अस्य प्राणस्य जीवं प्रति उपकारविशेषरूपक्रि-यारहितत्वाच्च यो दोष उद्भाव्यते, स नास्ति ; यत उपकारविशेषरूपां शरीरेन्द्रियधारणादि-रूपां क्रियां दर्शयति श्रुतिः ; (छां. ५-१ ७) "यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्यते, स वः श्रेष्ठः" इत्युक्त्वा, वागाद्युत्क्रमणेऽपि शरीरस्येन्द्रियाणां च स्थितिं दर्शयित्वा प्राणोत्क्रमणे शरीरेन्द्रियशैथिल्याभिधानात् । अतः प्राणापानव्यानोदानसमानाकारेण पञ्च-धाऽवस्थितोऽयं प्राणः शरीरेन्द्रियधारणादिना जीवस्योपकरोतीति चक्षुरादिवत् करणत्वम् ॥

नन्वेवं नामभेदात् कार्यभेदाच्च प्राणापानादयस्तत्त्वान्तराणि स्युः ; तत्राह

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ २ । ४ । ११ ॥

यथा कामादिवृत्तिभेदे तत्कार्यभेदेऽपि न कामादिकं मनसस्तत्त्वान्तरम् ; (बृ. १-५-३) "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति वचनात्—एवं (१-५-३) "प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत् सर्वं प्राण एव" इति वचनात् अपानादयोऽपि प्राणस्यैव वृत्तिविशेषाः, न तत्त्वान्तरमित्यवगम्यते ॥ ११ ॥

इति वायुक्रियाधिकरणम् ॥ ४ ॥

६५. श्रेष्ठाणुत्वाधिकरणम् २-४-५ ॥

अणुश्च ॥ २ । ४ । १२ ॥

अणुश्चायम्, पूर्ववदुत्क्रान्त्यादिश्रवणात्, (बृ. ६-४-२) "तमुत्क्रामन्तं प्राणोऽनूत्क्रा-मति" इत्यादिषु । अधिकाशङ्का तु (बृ. ३-३-२२) "सम एभिस्त्रिभिर्लोकैः ; समोऽनेन

---

चक्षुरादिसंमत करणत्वाभावेऽप्यदोषादन्यथा व्याख्याति **करणं क्रियेति** । **अकरणत्वादिति** ; अकरणत्वप्रयुक्तः इत्यर्थः ; दोषविशेषणम् । अत्र-सकलेन्द्रियसमुदायक्रियैव प्राणनम् ; कपोतसंघ-कृतवागुरोत्क्षेपणवत् तत्संघकृतं शरीरचालनमिति नेदं प्राणस्य कार्यमिति सांख्यशंकानिरासार्थमिदमस्थाने ॥

इन्द्रियसंख्यावत् न प्राणसंख्या भेदगर्भेत्युच्यते उपरि । **कामादीनि** । बुद्ध्यहङ्कारचित्तादि-भेदोऽपि सुवच.-अथापि कामादिवाक्यस्य प्राणादिवाक्यसमीपस्थत्वात् (छा. ३-५-३) एतदुक्तिः ॥ ११ ॥

नन्वणुश्चेति सूत्रं व्यर्थम्, मुख्यप्राणाणुत्वस्मारणस्य श्रेष्ठश्चेति तदुत्पत्तिस्मारणस्येवोत्तरत्रानुपयोगात् । न चाणुत्वविधानार्थमेवेदम् ; इन्द्रियाणुत्वविषयवाक्ये, 'त एते सर्व एव समाः ; सर्वेऽनन्ताः' इत्यत्र तच्छब्देन प्रकृतानां वाङ्मनःप्राणानामेव कण्ठोक्ततया तत्रैवैतदणुत्वसिद्धेरित्याशंकायाम् अधिकाशंकां दर्शयति **अधिकेति** । तत्रोपासनार्थतया आनन्त्यकथनात् अनन्तपदस्याविरोध्यर्थान्तरसंभवाच्च विभुत्वस्था-पकत्वाभावेऽपि इमानि वाक्यानि स्थापकान्येवेति शंका । अन्तर्यामिब्राह्मणे सूक्ष्मत्वोक्तिरपि गृह्यते ।

सर्वेण", (प्र. २-६) "प्राणे सर्वं प्रतिष्ठितम्", (—) "सर्वं ह्रीदं प्राणेनावृतम्" इत्यादि-श्रवणात् महापरिमाण इति ॥

परिहारस्तु—उत्क्रान्त्यादिश्रवणात् परिच्छिन्नत्वे निश्चिते, सर्वस्य प्राणिजातस्य प्राणायत्तस्थितित्वेन वैभववादोपपत्तिरिति ॥ १२ ॥ इति श्रेष्ठाणुत्वाधिकरणम् ॥ ५ ॥

६६. ज्योतिराद्यधिष्ठानाधिकरणम् २-४-६ ॥

ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् ॥ २ । ४ । १३ ॥

सश्रेष्ठानां प्राणानां ब्रह्मण उत्पत्तिः, इयत्ता परिमाणं चोक्तम्; तेषां प्राणानामग्न्यादिदेवताधिष्ठितत्वं च पूर्वमेव, (शारी. २-१-५) "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" इत्यनेन सूत्रेण प्रसङ्गादुपपादितम्; जीवस्य च स्वभोगसाधनानामेषामधिष्ठातृत्वं लोकसिद्धम्, (बृ. ४-१-१८) "एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते" इत्यादिश्रुतिसिद्धं च। तदिदं जीवस्याग्न्यादिदेवतानां च प्राणविषयमधिष्ठानं किं स्वायत्तम्; उत परमात्मायत्तमिति विशये—नैरपेक्ष्यात् स्वायत्तम्—इति प्राप्त उच्यते—

ज्योतिराद्यधिष्ठानमिति। प्राणवता— जीवेन सह ज्योतिरादीनामग्न्यादिदेवतानां प्राणविषयमधिष्ठानं तदामननात्—तस्य परमात्मनः आमननाद्भवति। आमननम् आभिमुख्येन मननम्। परमात्मनः सङ्कल्पादेव भवतीत्यर्थः। कुत एतत्? शब्दात्—इन्द्रियाणां साभि-

---

इत्यादीत्यादिपदेन। प्राणायत्तेति। प्रतिशरीरं प्राणो भिन्नः। प्राणसमुदायस्य व्यष्टिलोकस्थता न प्रत्येकविभुत्वस्थापिकेति भावः ॥ १२ ॥

अत्र सूत्रे ज्योतिरादिकर्तृकमधिष्ठानमेव विधेयम्; तदामननादित्यस्य च अधिष्ठानस्याम्नाये आम्नानादित्यर्थः-इति परमतं निरसितुमाह तेषामिति। अतः सिद्धत्वात् स्वारस्याच्च तत् पक्षीकृत्य आमननाधीनत्वमेव विधेयम्। आमननञ्चाऽऽभिमुख्येन मननम्। अन्यथा शब्दादिति च व्यर्थम्; सूत्रभेदनञ्च व्यर्थमिति भावः। अधिष्ठानं प्रवृत्तिकर्तृत्वम्। प्राणवतेति तृतीयानिर्देशेन लोकसिद्धमेव जीवकर्तृकमधिष्ठानमिति ज्ञाप्यते; यथा स्वायत्तसर्वेन्द्रियोऽपि प्राणोऽचेतनः सर्वथा चेतनायत्तः, तथैव चेतनाः सर्वथा परायत्ताः' इति निदर्श्यते च। ननु परायत्त[illegible]करणे जीवकर्तृत्वं परमात्मायत्तमित्युक्तमेव; देवताश्च जीवा एवेति अस्मत्पक्षेऽपि व्यर्थमिदमधिकरणमिति चेन्न-तत्तद्देवताराधितेन परमात्मना ताभ्य ऐश्वर्यं यत् दत्तमस्ति, तत्र स्वयमप्यधिकारं वहतीति न युक्तम्। वृथा च बहूनामधिष्ठातृत्वम्। एवं जीवानां शरीरद्वारा वस्त्वन्तरव्यापारणे परायत्तकर्तृत्वेऽपि तच्छरीरेन्द्रियाधिष्ठानं तदायत्तं मा भूत्, प्रागेव तदीयत्वेन क्लृप्तत्वादित्यधिकाशंका। जीवाधिष्ठाने सत्यपि क्वचिद् देवताधिष्ठानाभावे कार्याभाववत् ईश्वराधिष्ठानाभावे केनोपनिषदुक्तरीत्या देवतानामपि मोघप्रयत्नत्वमेवेति गमयितुं स स्वाधिकारं न त्यजति; एवं जीवविषयेऽपि। श्रुतिसिद्धार्थसंकोचे च न प्रमाणमिति परिहारः। वक्ष्यति चोपरि भाष्य एव, "स्थिरीकरणाय स्मारितम्" इति। एवमपि हिरण्यगर्भस्य निरपेक्षं स्वातन्त्र्यमस्त्वित्याक्षेपश्चान्ति-

मानिदेवतानां जीवात्मनश्च स्वकार्येषु परमपुरुषमननायत्तत्वशास्त्रात्। यथाऽन्तर्यामिब्राह्मणादिषु, (बृ. ५-७-५) "योऽग्नौ तिष्ठन् अग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः, ...यो वायौ तिष्ठन् ... य आदित्ये तिष्ठन् ... यश्चक्षुषि तिष्ठन् .... य आत्मनि तिष्ठन्" इत्यादि। यथा च, (तै. आन. ८-१) "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति। तथा, (बृ. ५-८-६) 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादि ॥

तस्य च नित्यत्वात् ॥ २ । ४ । १४ ॥

सर्वेषां परमात्माधिष्ठितत्वस्य नित्यत्वात्—स्वरूपानुबन्धित्वेन नियतत्वाच्च तत्सङ्कल्पादेवैषामधिष्ठातृत्वमवर्जनीयम्। (तै. आन ६-२-३) "तत् सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादिना परमपुरुषस्य नियन्तृत्वेन सर्वचिदचिद्वस्त्वनुप्रवेशः स्वरूपानुबन्धी श्रूयते ; स्मर्यते च (गी. १०-४२) "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति ॥ १४ ॥ इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

६७. इन्द्रियाधिकरणम् २-४-७ ॥

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ २ । ४ । १५ ॥

---

माधिकरणे परिहरिष्यते। ननु तदधिकरणसमन्तरपूर्वमिदमधिकरणं युक्तम् ; सर्वदेवताविषयविचारानन्तरं हिरण्यगर्भविषये तत्प्रवृत्त्यौचित्यात्। प्राणस्येन्द्रियत्वाभावविचारश्च प्राणधर्मविचारात्मकाणुत्वाधिकरणानन्तरं युक्त इति चेत्—उच्यते। इन्द्रियेष्विव प्राणे परिमाणपर्यन्तविचारे वृत्ते सर्वसाधारणं स्वकार्ये देवताधिष्ठानसापेक्षत्वं संगतविचारम्। एवमीश्वर देवता-जीवरूपत्रिविधचेतनाधिष्ठितत्वे ज्ञाते सत्येव, इन्द्रियशब्दस्य,' 'इन्द्रियमिन्द्रलिङ्गमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' इति निर्वचनात् इन्द्रस्याधिष्ठातुः संबन्धेनेन्द्रियशब्दप्रयोगात् इन्द्रियत्वं साधारणम्; प्राणत्वञ्चेति इन्द्रियपदार्थघटनेनोत्थितिसौष्ठवात् स्थितमेव रम्यम्। प्राणस्यापि देवताधिष्ठितत्वञ्चेदानीमेव स्पष्टं भवति। अन्तिमाधिकरणसंगतिस्तु पूर्वाधिकरणानां प्रासङ्गिकत्वात् कार्यतापराधिकरणेन साकम्। अस्तु वा पूर्वेणापि सह, या वक्ष्यते ॥

ननु जीवाधिष्ठानस्य देवताकर्तृकेणेश्वरकर्तृकेण वाऽधिष्ठानेन संपन्नसहायत्वात् अन्यतरवैयर्थ्यम्। तत्र देवतैश्वर्यरक्षणाय तदधिष्ठानमेष्टव्यमिति किमन्येनेत्यत्राह तस्य च नित्यत्वादिति। स्वरूपानुबन्धिनो धर्मस्य कदाचित् वर्जन एव क्लेशः ; देवताधिष्ठानमशक्त्या कदाचिदसंभव्यपीति तन्नियतमेवेति भावः। सूत्रे तस्य नित्यत्वाच्चेत्यन्वयः। नित्यत्वादित्यस्यार्थमाह स्वरूपेति ॥ १४ ॥

देवताधिष्ठितत्ववत् प्राणेन्द्रियशब्दवाच्यत्वमपि साधारणमित्युत्थितेः संगतिः। ते इति प्रथमाधिकरणोक्तप्राणमात्रपरामर्शात् मुख्यप्राणव्यावृत्तिः। तदन्यस्य श्रेष्ठस्येन्द्रियत्वाभावविधाने तात्पर्यम् ; अन्यथा सिद्धसाधनात्। इन्द्रियाणीति पक्षीकृत्य ते इति वा विधेयम्। तेनेन्द्रियत्वावच्छिन्नोद्देशेन चक्षुरादित्व-

किं सर्वे प्राणशब्दनिर्दिष्टा इन्द्रियाणि, उत श्रेष्ठप्राणव्यतिरिक्ता इति (एवेति) विशये —प्राणशब्दवाच्यत्वात्, करणत्वाच्च सर्व एवेन्द्रियाणीति प्राप्ते उच्यते-श्रेष्ठव्यतिरिक्ता एव प्राणाः इन्द्रियाणि। कुतः? श्रेष्ठादन्येष्वेव प्राणेषु तद्व्यपदेशात्। (गी. १३-५) "इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः" इत्यादिभिर्हि चक्षुरादिषु समनस्केष्वेव इन्द्रियशब्दो व्यपदिश्यते ॥ १५ ॥

भेदश्रुतेर्वैलक्षण्याच्च ॥ २ । ४ । १६ ॥

(मु. २-१-३) "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्यादिष्विन्द्रियेभ्यः प्राणस्य पृथक्छ्रवणात् प्राणव्यतिरिक्तानामेवेन्द्रियत्वमवगम्यते। मनसः पृथक्छ्रवणेऽपि तस्यान्यत्रेन्द्रियान्तर्भाव उक्तः, (गी. १५-७) "मनष्षष्ठानीन्द्रियाणि" इत्यादौ। वैलक्षण्यं च चक्षुरादिभ्यः श्रेष्ठप्राणस्योपलभ्यते—सुषुप्तौ हि प्राणस्य वृत्तिरुपलभ्यते, चक्षुरादीनां तु वृत्तिर्नोपलभ्यते। कार्यं च चक्षुर्वागादीनां समनस्कानां ज्ञानकर्मसाधनत्वम्; प्राणस्य तु शरीरेन्द्रियधारणम्। प्राणाधीनधारणत्वात्(तु)इन्द्रियेषु प्राणशब्दव्यपदेशः। तथा च श्रुतिः; (बृ. ३-५-२१) "त एतस्यैव सर्वे रूपमभवन्। तस्मादेत एतेनाख्यायन्ते" इति। रूपमभवन्—शरीरमभवन्=तदधीनप्रवृत्तयोऽभवन्नित्यर्थः ॥ १६ ॥ इति इन्द्रियाधिकरणम् ॥ ७ ॥

---

रूपप्राणत्वविधानात् तत्रेन्द्रियत्वव्यापकत्वभानात् मुख्यप्राणस्यानिन्द्रियत्वसिद्धिः। **अन्यत्रे**त्यस्य तु **व्यपदेशा**दित्यत्रान्वयः। **इन्द्रियव्यपदेशः** इन्द्रियत्वेन गणनादि। इन्द्रलिङ्गत्वादिकं नेन्द्रियशब्दप्रवृत्तिनिमित्तम्; किंतु व्युत्पत्तिनिमित्तमात्रम्। तस्य शरीरसाधारण्यादतिप्रसक्तत्वात्; परिगणनविरोधाच्च। बृहदारण्यके (३-५-१२) "ततः प्राणोऽजायत। स इन्द्रः। स एषोऽसपत्नः" इति मुख्यप्राणे इन्द्रव्यपदेशात् तज्जुष्टत्वरूपेन्द्रियत्वस्य तत्रैव सुवचत्वाच्च ॥ १५ ॥

त्रिविधं वैलक्षण्यं दर्शयति **सुषुप्ता**वित्यादिना। ज्ञानकर्मेन्द्रियमिथोवैलक्षण्यवत् इदं वैलक्षण्यमप्रयोजकम्; अनुगतं प्राणत्वमेवेन्द्रियशब्दप्रवृत्तिनिमित्तमिति पूर्वपक्ष्याशयोऽप्ययुक्तः। तस्याननुगतत्वात्। इन्द्रिये प्राणशब्दो ह्युपचरितः तीर इव गङ्गाशब्द इत्याह **प्राणाधीने**ति। आत्मापृथक्सिद्धद्रव्यत्वं शरीरत्वम्, शरीरोपचयोपघाताधीनोपचयोपघातवत्तया शरीराश्रितत्वमिन्द्रियत्वम्, तदुभयधारकत्वं प्राणत्वमित्येवंरीत्या भेदोऽनुसंधेयः। **शांकरोक्ता**धिकरणरचनामुपेक्ष्य इयं **वृत्तिरचनैव भामत्या**माहता ॥ १६॥

समष्टिव्यष्टिकार्यनिरूपणार्थे पादद्वये संज्ञामूर्त्यधिकरणमिदमेकं व्यष्टिविचाररूपमिति पूर्वं सर्वमेका पेटिका। प्राणानामन्नाद्याप्यायिततया व्यष्टिसंघातनिविष्टत्वात् अस्मिन् पादे तद्विचारः कृतः। एवम्भूतसंघातकरणमेव रूपव्याकरणम्, 'आण्डजं जीवजमुद्भिज्जम्' इति प्रस्तुत्य, "सेयं देवतैक्षत हन्ताहमिमाः तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति श्रुतम्। परदेवतेयं नामरूपव्याकरणं पूर्वं संकल्प्य तदर्थं तेजोबन्नानां त्रिवृत्करण(पञ्चीकरण)मपि समकल्पयदित्युच्यत इह। पूर्वमात्मप्रस्तावे तत्कर्तृत्वं परायत्तमिति साधितं यतो ज्योतिराद्यधिष्ठान-

६८. संज्ञामूर्तिक्लृप्त्यधिकरणम् २-४-८ ॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २ । ४ । १७ ॥

**भूतेन्द्रियादीनां समष्टिसृष्टिः, जीवानां कर्तृत्वं च परस्माद्ब्रह्मण इत्युक्तं पुरस्तात् । जीवानां स्वेन्द्रियाधिष्ठानं च परायत्तमिति चानन्तरं स्थिरीकरणाय स्मारितम् । या त्वियं नामरूपव्याकरणात्मिका प्रपञ्चव्यष्टिसृष्टिः, सा किं समष्टिजीवरूपस्य हिरण्यगर्भस्यैव कर्म, उत तेजःप्रभृतिशरीरकस्य परस्यावादिसृष्टिवत् हिरण्यगर्भशरीरकस्य परस्य ब्रह्मणः—इतीदानीं चिन्त्यते ।**

**किं युक्तम् ? समष्टिजीवस्येति ; कुतः ? (छा. ६-२-३) 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति जीवकर्तृकत्वश्रवणात् । न हि परा देवता स्वेन रूपेण, 'नामरूपे व्याकरवाणी'त्यैक्षत ; अपितु स्वांशभूतेन जीवरूपेण ; " अनेन जीवेनाऽत्मना " इति वचनात् ॥ नन्वेवं 'चारेणानुप्रविश्य परबलं सङ्कलयानि' इतिवत् 'व्याकरवाणि' इत्युक्त-**

---

परायत्तत्वकथनेन स्थिरीकृतम्, ततो नामरूपव्याकरणं यत् चतुर्मुखकर्तृकम्, तदपि परायत्तमिति स्थितमेव । तथा व्याकरणस्यास्य परमात्मकर्तृकत्वमस्ति न वेतीदानीं विचारः । प्रकृत्यधिकरणेन तेजोधिकरणेन च विशिष्टस्योपादानत्वं सर्वत्र निश्चितम् । एवम्, 'नामरूपयोर्निर्वहिता', 'बहु स्याम्' इति श्रुत्या व्यष्टिविषये निमित्तत्वमप्यवगम्यत एव । तदेव, 'यतो वा इमानि' इति लक्षणवाक्येऽनूद्यते च—तथापि हिरण्यगर्भस्य व्यष्टिकर्तृतायाः स्पष्टप्रमाणप्रमिततया तत्प्रयोजकत्वमात्रम्, तत्कर्तृत्वस्यैतदायत्तत्वमात्रमत्रोच्यते । अत इन्द्रियत्वं क्वचिदिव परकर्तृकत्वं समष्टौ व्यवस्थितमित्यवान्तरसंगत्या पूर्वपक्ष इह । **समष्टिजीवरूपस्य** व्यष्टौ प्रतिशरीरं प्रवेशयिष्यमाणजीवसमुदायाश्रयस्य । **हिरण्यगर्भशरीरकस्येति** । नायं जीवशब्दार्थः ; किंतु स्मृतिसिद्धकथनम् ; सिद्धान्तेऽर्थान्तरकथनात् । **जीवकर्तृकत्वेति** । नामरूपव्याकरणं समष्टावप्यस्ति । व्यष्टौ विशेषः अनेन जीवेनात्मनेत्युच्यते । अस्य चानुप्रवेशे व्याकरणे चोभयत्रान्वय एव स्वरसः । अनुप्रवेशस्य जीवकर्तृकत्वे स्वीकृते ल्यपा तत्समानकर्तृकत्वेनावगते व्याकरणेऽपि तत्कर्तृकत्वमवर्जनीयम् ; भिन्नकर्तृकत्वे क्त्वाप्रत्ययायोगात् । जीवश्चायं न तत्तद्देहविशिष्टो भिन्नभिन्नजीवात्मा ; तस्य घटपटादिकिञ्चित्कार्यकरत्वेऽपि, आण्डजं जीवजमिति प्रस्तुतसर्वव्यष्टिव्याकर्तृत्वायोगात् । सर्वस्रष्टृत्वेन प्रसिद्धश्चतुर्मुख इति स एव जीवेनेति पदेन गृह्यते । तस्य जीवसमष्ट्याश्रयतया तदभेदव्यवहार इति भावः ।

नन्वत्र वाक्ये अहमिति पदं पूर्वप्रस्तुतपरमात्मपरमिति तस्यैवानुप्रवेशव्याकरणकर्तृत्वं वक्तव्यम् । यदि तदुभयकर्तृत्वं जीवस्यैवेष्यते, तर्हि चारकर्तृकक्रियायां राज्ञ इव परमात्मनो हेतुकर्तृत्वमेव विवक्षणीयम् । तथा चाणिजन्तस्य स्वतन्त्रकर्त्रर्थकस्य पदस्य हेतुकर्तरि लक्षणा स्यादिति शंकते **नन्विति** । **कर्तृस्थक्रियः** व्याकरणकर्तृत्वाभिमतव्यक्तिकर्तृकक्रियावाची । **प्रविशतिरिति** । नात्र धातोर्लाक्षणिकत्वमभिमतम् ; अपि तु तदुत्तरप्रत्ययस्य ; **कर्तृस्थक्रिय** इति विशेषणात् ल्यबन्तप्रविशतिरित्यर्थलाभात् । **नैवमिति** । चारगतकर्तृत्वस्य राज्ञि पृथक्सिद्धेऽन्वयायोगात् तत्र लक्षणायामपि प्रकृते चतुर्मुखस्य परमात्मशरीरतया तन्निष्ठ-

मपुरुषः, कर्तृस्थक्रियश्च प्रविशतिर्लाक्षणिकस्स्यात् ॥ नैवम् . तत्र राजचारयोः स्वरूपभेदाल्लाक्षणिकत्वम्; इह तु जीवस्यापि स्वांशत्वेन स्वरूपत्वात् तेन रूपेण प्रवेशो व्याकरणं चात्मन एवेति न लाक्षणिकत्वप्रसङ्गः ॥ न च सहयोगलक्षणेयं तृतीया; कारकविभक्तौ संभवन्त्यामुपपदविभक्तेरन्याय्यत्वात् । न च करणे तृतीया; ब्रह्मकर्तृकयोः प्रवेशव्याकरणयोर्जीवस्य साधकतमत्वाभावात् । न च—जीवस्य कर्तृत्वं प्रवेशमात्रे पर्यवस्यति; नामरूपव्याकरणं तु ब्रह्मण एव—इति शक्यं वक्तुम्—क्त्वाप्रत्ययेन समानकर्तृकत्वप्रतीतेः । जीवस्य स्वांशत्वेन स्वरूपत्वेऽपि परस्वरूपव्यावृत्त्यर्थः, 'अनेन जीवेन' इति पराक्त्वेन परामर्शः । अतो हिरण्यगर्भकर्तृकेयं नामरूपव्याक्रिया । अत एव च स्मृतिषु चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याकरणं संकीर्त्यते, (वि. पु. १-५-६३) "नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवाऽऽदौ देवादीनां चकार

---

कर्तृत्वस्य परस्मिन्, 'आत्मा देवो जातः' इत्यादावात्मनि देवत्वादेरिव परम्परयाऽन्वयसंभवान्न लक्षणेति परिहाराशयः ।

नन्वत्र **जीवेने**ति तृतीया किं कर्तरि, अन्यार्थे वा । नान्त्यः, सहयोगस्य करणस्य चोपरि खण्ड्यमानत्वात् । अत एव चारेणेत्यत्रापि करणत्वं न विवक्षितमिति ज्ञायते । यद्यपि हेतुकर्त्रा राज्ञा व्याप्यमानत्वात् चारस्य कर्तुः करणत्वं भवितुमर्हति । उक्तं हि **भामत्याम्**, "प्रयोजककर्तुस्तु साक्षात्कर्ता करणं भवति, प्रधानक्रियोद्देशेन प्रयोजकेन प्रयोज्यकर्तुर्व्यापनात्" इति—अथापि स्वतन्त्रकर्तृत्वस्यार्थित्वे संभवति करणत्वविवक्षा न युक्तेति भाष्याशय इव । न च कर्तृत्वेऽभिहिते कथं तत्र तृतीयेति वाच्यम्, स्वतन्त्रकर्तृत्वस्यानभिहितत्वात् । अथ चारेणेत्यत्र तथा निर्वाहेऽपि प्रकृते कथम्; 'व्याकरवाणीति जीवगतकर्तृत्वमेव वाच्यं परमात्मनि परम्परयाऽन्वितम्, नाल प्रयोजककर्तृत्वे लक्षणा' इत्यभिमततया जीवगतकर्तृत्वस्यैवाभिहितत्वादिति चेत्—सत्यम् । अथापि, "अनभिहिते कर्तरि तृतीया" इत्येवानुशासनात् कर्तृत्वेऽनभिहिते इत्यनुक्तेः, जीवगतकर्तृत्वोक्तावपि तत्परम्पराश्रयभूत परमात्मरूपकर्तुरेवाभिहितत्वात् जीवस्यानभिहितत्वात् जीवेनेति तृतीया भवितुमर्हतीति न दोषः । अस्तु वा करणत्वमेव हिरण्यगर्भगतं कर्तृत्वपर्यवसायि तृतीयार्थः । उपरि तु कर्तृत्वापर्यवसायि कुठारादितुल्यं करणत्वं तत्तज्जीवस्य खण्ड्यत इति न विरोधः । सिद्धान्ते **जीवेने**त्यस्य तत्तद्देहनिविष्टतत्तज्जीवार्थकत्वं स्वीकृत्य अनुप्रवेशमात्रे तदन्वय एव संमतः; तमंशं खण्डयति **न च जीवस्येति** । ननु हिरण्यगर्भग्रहणे तस्य व्याकरणकर्तृत्वेऽपि तत्तद्देहानुप्रवेशकर्तृत्वं कथमिति चेत्—तदर्थमेव चतुर्मुखेनेत्यनुक्त्वा जीवसमष्टिभूतेनेत्युच्यते । तत्र जीवसमष्ट्यन्तर्गते किञ्चिज्जीवांशेऽनुप्रवेशकर्तृत्वम्, चतुर्मुखांशे व्याकरणकर्तृत्वमिति यथार्हमन्वय इति । अन्यथा पुनः प्रविशतिर्धातुरेव बुद्धिविषयीकरणार्थे लाक्षणिको मन्तव्यः । अनुप्रविश्य=बुद्धिविषयीकृत्येति । परमात्मनोऽपि नित्यव्याप्तस्यानुप्रवेशकर्तृत्वाभावेन तल्लाक्षणिकत्वमविशिष्टमिति । नन्व**आत्मने**ति परमात्मन एव निर्देशात् कथं तत्कर्तृत्ववारणम्; तत्राह **जीवस्येति** । **अनेने**ति पराक्त्वेन निर्देशात् **आत्मेने**त्यस्य

सः" इत्यादि—

एवं प्राप्तेऽभिधीयते—संज्ञामूर्तिक्लृप्तिस्तु—इति । तुशब्दः पक्षं व्यावर्तयति; संज्ञामूर्तिक्लृप्तिः—नामरूपव्याकरणम् । तत् त्रिवृत्कुर्वतः परस्यैव ब्रह्मणः; तस्यैव नामरूपव्याकरणोपदेशात् । त्रिवृत्करणं कुर्वत एव हि नामरूपव्याकरणमुपदिश्यते—"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि; तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति समानकर्तृकत्वप्रतीतेः । त्रिवृत्करणं तु चतुर्मुखस्याण्डान्तर्वर्तिनो न संभवति, त्रिवृत्कृतैस्तेजोबन्नैर्ह्यण्डमुत्पाद्यते; चतुर्मुखस्य च अण्डे संभवः स्मर्यते—"तस्मिन्नण्डेऽभवद्ब्रह्मा सर्वलोकपितामहः" इति । अतः त्रिवृत्करणं परस्यैव ब्रह्मणः । तत्समानकर्तृकं नामरूपव्याकरणं च तस्यैवेति विज्ञायते ॥ कथं तर्हि, 'अनेन जीवेन' इति सङ्गच्छते ॥ "आत्मना जीवेन' इति सामानाधिकरण्यात् जीवशरीरकं परं ब्रह्मैव जीवशब्देनाभिधीयते; यथा (छा. ६-२-३, ४) "तत् तेज ऐक्षत ... तदपोऽसृजत ... ता आप ऐक्षन्त ... ता अन्नमसृजन्त" इति तेजःप्रभृतिशरीरकं परमेव ब्रह्माभिधीयते । अतो जीवसमष्टिभूतहिरण्यगर्भशरीरकस्य परस्यैव ब्रह्मणः कर्म नामरूपव्याकरणम् । एवं च, 'प्रविश्य नामरूपे व्याकरवाणि' इति प्रविशतिरुत्तमपुरुषश्चाक्लिष्टौ मुख्यार्थावेव भवतः । प्रवेशव्याकरणयोः समानकर्तृकत्वमप्युपपद्यते । चतुर्मुखशरीरकस्य परस्यैव ब्रह्मणः कर्म देवादिविचित्रसृष्टिरिति चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याक्रियोपदे-

---

न विशेष्यत्वमिति भावः । जीवसमष्ट्याश्रयत्वात् तस्य कर्तृत्वमुपपन्नमिति ज्ञापितं जीवपदेन । **आत्मना** मदभिन्नेनेत्यर्थात् उत्तमपुरुषादेर्लाक्षणिकत्वं न भवतीति ज्ञापितम् । नन्वाकाशो नामरूपयोर्निर्वहितेति वचनविरोध इत्यत्र बहुस्मृत्युपबृंहितार्थमेवात्र स्वीकृत्य श्रौतेनानेनाविरुद्धतया तच्छ्रुत्यर्थो नेय इति भावः ।

**समाने**ति । ननु पूर्वपक्षिणा त्रिवृत्कुर्वति परमात्मन्येव व्याकरणकर्तृत्वस्य परम्परान्वयस्वीकारात् समानकर्तृकत्वं न भग्नम् । साक्षात्कर्तृत्वस्य प्रतीतस्य त्यागो दोष इति कथनं चेत् सूत्रकृद्विवक्षितम्, तत्र **त्रिवृत्कुर्वत** इति पदविशेषनिर्देशः कुत इति चेत—तावदेव विवक्षितम्; तत्पदनिर्देशस्तु त्रिवृत्करणमपि चतुर्मुखकर्तृकमिति भ्रान्तिवारणार्थमिति । अथवा सूत्रकृता पूर्वपक्षोऽन्यादृशोऽपि खण्ड्यत इत्यस्तु । स तावदेवम्—पूर्वं ब्रह्मणि तदैक्षतेत्येवं सामान्यतः सत्त्वेन निर्दिष्टे सति अत्र, 'सेयं देवतैक्षत' इति देवतापदं प्रयुज्य भङ्ग्यन्तरादरणात् सदंशभूता चतुर्मुखाख्यदेवतैव तदर्थः । अतः स एव व्याकरणकर्ता । जीवेनात्मनेति तद्गतजीवसमष्टिमात्रकथनम् । तस्य चानुप्रवेशमात्र एव यथासिद्धान्तमन्वय इति । तत्खण्डनञ्च—तथासति तस्य चतुर्मुखस्यैव त्रिवृत्करणवाक्येऽन्वयस्य वाच्यतयाऽर्थबाध इति । बाधप्रकारश्च भाष्ये उपपादित एव । **अक्लिष्टा**विति । परम्परान्वयरूपक्लेशो नास्तीति । **समाने**ति । न हि हिरण्यगर्भस्य सर्वत्र देहे प्रवेशोऽस्ति । **आत्मना** मयेति परमात्मोक्तौ तु तस्य व्यापित्वात् तदुपपत्तिः । कर्तुरभिहितत्वात् कथं तृतीयेति चेत्—तस्यैव रूपान्तरेण करणत्वविवक्षयाऽस्तु । अत्र वक्तव्यं सर्वम्

**शश्चोपपद्यते । अतः, 'सेयं देवता' इत्यादिवाक्यस्यायमर्थः—इमाः-तेजोऽबन्नरूपास्तिस्रो देवताः** अनेन जीवेन—**जीवसमष्टिविशिष्टेनाऽऽत्मनाऽनुप्रविश्य नामरूपे** व्याकरवाणि—**देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि । तदर्थमन्योन्यसंसर्गमप्राप्तानामेषां तेजोबन्नानां विशेषसृष्टयसमर्थानां तत्सामर्थ्यायैकैकां त्रिवृतंत्रिवृतं करवाणि-इति । अतः परस्यैव ब्रह्मणः कर्मेदं नामरूपव्याकरणम् ॥ १७ ॥**

---

एतदुपनिषद्भाष्यपरिष्कारयोर्द्रष्टव्यम् । **तिस्रो देवताः** भविष्यद्देवताभिमानविषयभावानि त्रीणि भूतानि । **जीवसमष्टिविशिष्टेने**ति । जीवपदस्य हिरण्यगर्भपरत्वे अनुप्रविश्येत्यत्रान्वयो न स्यात् । अन्यजीवस्य च न व्याकरणकर्तृत्वम् । जीवेनेति पदं पुनरावर्त्य व्याकरवाणीत्यत्रानुषज्य तत्र हिरण्यगर्भपरत्ववर्णनञ्च क्लिष्टम् । हिरण्यगर्भस्यापि व्यष्टिरूपतया तस्यापि व्याकरणकर्मत्वमत्रेति न कर्तृत्वम् । सेयं देवतेति **देवता**पदनिर्देशस्तु सद् ब्रह्म व्यूहरूपेणावतीर्य स्वनाभिस्थानात् ब्रह्माण्डमुत्पाद्य चतुर्मुखप्रभृतिनामरूपव्याकरणं करोतीति ज्ञापनाय । अतः तत्तद्देहनिविष्टजीवशरीरकेणेत्येव **जीवेने**ति पदस्यार्थ इति । ननु परमात्मप्रवर्तितचतुर्मुखसंकल्पेनैव कार्यनिर्वाहे तत्संकल्पस्य किं प्रयोजनमिति चेत्— किं प्रयोजनानुगुणा प्रमाणप्रवृत्तिः ? प्रयोजनं हि प्रमाणानुगुणम् । इदञ्च नामरूपव्याकरणेक्षणं पूर्वजातं यत् बहु स्यामितीक्षणम् तदेव कार्यदशापर्यन्तानुवृत्तम् ; नान्यत् । चतुर्मुखसंकल्पः जीवस्य व्यष्टिरूपतामात्रप्रयोजकः । स्वात्मपर्यन्तनामरूपसंपादनेन स्वस्य कार्यतां परमात्मैव स्वसंकल्पेन निर्वहतीति परमात्मगतकार्यत्वं न चतुर्मुखाधीनमिति सफलमेतत् ॥ १७ ॥

महदादिपृथिव्यन्तसमष्टिसृष्ट्यनन्तरं पञ्चीकरणं भवति । तदेतत् त्रिवृत्करणमिति छान्दोग्ये निर्दिश्यते । पञ्चीकरणं नाम एकैकस्य भूतस्य भूतान्तरचतुष्केण मिश्रणम् । एवं कृते एकैकभूतेऽपि स्वांशोऽर्धम्, अन्यभूतांशाः समभूता अर्धमिति सर्वं पञ्चवृद् भवति । तत्र वाय्वाकाशयोरप्रत्यक्षयोः प्रदर्शनायोगात् त्रिवृत्त्वमेव प्रदर्शयितुं शक्यमिति कृत्वा गुरुः त्रिवृत्त्वमेव छान्दोग्ये प्रोवाच ; भूतत्रयमात्रसृष्टिश्चात एवाऽऽवाह स । त्रिवृदित्यस्य त्रिभिर्व्रियते, त्रिभिर्वृतमित्यर्थः। भूतत्रयात्मकमिति यावत् एवम्भूतभूताधीनत्वात् सर्वस्य प्रपञ्चस्य सर्वमत्र त्रिवृदेव भवति । तदिदं प्रत्ययार्थं गुरुः श्वेतकेतवे अण्डान्तर्गतासु अग्न्यादित्यचन्द्रमोविद्युत्सु प्रदर्श्य एवमेव सर्वमित्यबोधयत् । अथेदृशत्रिवृद्भूतभूतत्रयमपि भुज्यमानं व्यष्टिभूतदेहप्रकृतिर्भवतीति विषयान्तरं बोधयितुम् भुज्यमाने एकैकस्मिन्नपि परिणामत्रयं प्रदर्श्य कार्ये करणे च तदुपयोगमपि वर्णयाञ्चकार । एवं भुज्यमानस्य यत् त्रिवृत्त्वमुक्तम्, तत्र त्रिवृदित्यस्य त्रिभिर्भूतैर्वृतमिति नार्थः ; किंतु त्रिभिः परिणामैर्वृतमिति । अग्न्यादिषूक्तं त्रिवृत्त्वं तु भूतत्रयवृतत्वमेव । अण्डसृष्टेः प्रागेव त्रिवृत्करणस्य निष्पन्नत्वेऽपि अण्डान्तर्वर्तिना अण्डाद्बहिस्तत्प्रदर्शनस्य दुष्करत्वात् अण्डान्तर्गताग्न्यादौ तत् प्रदर्शितम् । अत्र पूर्वपक्षी अग्न्यादिषु भुज्यमाने चोभयत्र त्रिभूतकत्वरूपत्रिवृत्त्वमेवोक्तमिति मत्वा, तत्र भुज्यमाने त्रिवृद्भावस्य भोजनात् पश्चादेव जायमानतया तद्वदेवाग्न्यादित्रिवृद्भावोऽपि पश्चादिति भ्राम्यन्, यतोऽयं पश्चात् अतश्चतुर्मुख एव कर्तुमर्हतीति गृहीत्वा, त्रिवृत्करणस्यापि चतुर्मुखकर्तृक-

अथ स्यात् - नामरूपव्याकरणस्य त्रिवृत्करणेनैकवर्तृकत्वात् परमात्मकर्तृकमिति न शक्यते वक्तुम्; त्रिवृत्करणस्यापि जीवकर्तृकत्वसंभवात्। अण्डसृष्ट्युत्तरकाल हि चतुर्मुख-सृष्टजीवेषु त्रिवृत्करणप्रकार उपदिश्यते (छा. ६-४-७) "यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति, तन्मे विजानीहीति", (छा ६-५-१) "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो भागः तत् पुरीषं भवति, यो मध्यमः तन्मांसम्, योऽणिष्ठः तन्मनः" इत्यादिना। तथा पूर्वस्मिन्नपि वाक्ये "यदग्नेः रोहितं रूपम् तेजसस्तद्रूपम्; यच्छुक्लम्, तदपाम्; यत्कृष्णम्, तदन्नस्य" इत्यादिना चतुर्मुखसृष्टाग्न्या-दित्यचन्द्रविद्युत्सु त्रिवृत्करणं प्रदर्श्यते। नामरूपव्याकरणोत्तरकालं च त्रिवृत्करणं श्रूयते, "सेयं देवतेमास्तिस्रो देवताः अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत्; तासां त्रिवृतंत्रिवृतमेकैकामकरोत्" इति॥ तत्राह—

मांसादि भौमं यथाशब्दमितरयोश्च ॥ ३ । ४ । १८ ॥

यदुक्तम् - अण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवतादिविषयोऽयम्, "तासां त्रिवृतं त्रिवृत-मेकैकामकरोत्" इति त्रिवृत्करणोपदेश इति—तन्नोपपद्यते; "अन्नमशितं त्रेधा विधीयते" इत्यत्र मांसमनसोः पुरीषादणुत्वेनाणीयस्त्वेन च व्यपदिष्टयोः कारणानुविधायित्वेन आप्य-तैजसत्वप्रसङ्गात्, 'आपः पीताः' इत्यत्रापि मूत्रप्राणयोः स्थविष्ठाणीयसोः पार्थिवत्वतैजसत्व-

त्वात्र वाक्यविरोध इति शंकितवान्। तत्र भुज्यमानविषये त्रिवृत्त्वमुक्तं त्रिभूतवृत्तत्वमिति भ्रान्तिमूलक-त्वादस्य प्रश्नस्य स परिहारो मांसादीति सूत्रेण। तदवतारयति अथस्यादिति। त्रिवृत्करणं पश्चादित्यत्र युक्त्यन्तरमप्याह नामरूपेति। अयं भावः—नामरूपे व्याकरवाणि, त्रिवृतमेकैकां करवाणीति संकल्पवाक्ये, ततः निष्पादनपरवाक्ये च 'नामरूपे व्याकरोत् त्रिवृतमेकैकामकरोत्' इत्यत्र व्याकरणा-नन्तरमेव त्रिवृत्करणपाठात् त्रिवृत्करणस्य पश्चात्तनत्वं स्वरसप्रतीतम्। सिद्धान्तिना त्वत्रैवमुच्यते—नामरूपव्याकरणं फलम्, त्रिवृत्करणं तदुपायः। फलेच्छानन्तरमेव लोके उपायेच्छा। अतः संकल्प-क्रमोऽयं त्रिवृत्करणस्य पूर्वत्वमेवावगमयतीति। इदमयुक्तम्-तथासति फलस्योपायानन्तरमेव जायमानत्वात् त्रिवृत्करणं पूर्वं भवति, पश्चात् व्याकरणमिति वक्तव्यम्। अत्र तु व्याकरणनिष्पत्तिः पूर्वतया, त्रिवृत्कर-णनिष्पत्तिः पाश्चात्त्यतया चानन्तरवाक्ये कथ्यते। अतो नास्योपायत्वम्, नाप्यण्डसृष्टेः प्राक्कृतत्वम्। संकल्पवाक्यव्युत्क्रमेण यदि निष्पत्तिपरवाक्यपाठः स्यात्, तदैव तथा वक्तुं शक्यमित्येवं पूर्वपक्ष्याशयः।

मांसेति। अन्नपर्याये अन्नमिति प्रक्रमस्थशब्दानुसारेण तत्रोक्तपरिणामत्रये प्रथमपुरीषरूप-परिणामवत् मांसमनोरूपोत्तरपरिणामद्वयमपि भौममेव। (अन्यथा प्रत्यक्षविरोधश्च)। इतरयोश्च अप्पर्याय-तेजःपर्याययोरपि प्रक्रमस्थाप्छब्दतेजश्शब्दानुरोधेन लोहितप्राणौ मज्जावाचौ द्वितीयतृतीयौ परिणामौ प्रथमपरिणामभूतमूत्राथिवत् यथाक्रमम् आप्यौ तैजसौ चेति सूत्रार्थः।

**प्रसङ्गाच्च । न चैवमिष्यते;** मांसादि हि भौममिष्यते—**पुरीषवत् मांसमनसी अपि** भौमे—**पार्थिवे इष्येते, 'अन्नमशितं त्रेधा' इति प्रक्रमात् ।** यथाशब्दमितरयोश्च **। इतरयोरपि 'आपः पीताः', 'तेजोऽशितम्' इति पर्याययोर्यथाशब्दं विकारा इष्यन्ते । "आपः पीतास्त्रेधा विधीयन्ते" इति अपामेव त्रेधा परिणामः शब्दात् प्रतीयते; तथा, "तेजोऽशितं त्रेधा विधीयते" इत्यत्रापि तेजस एव त्रेधा परिणामः शब्दात् प्रतीयते । अतः पुरीषमांसमनांसि पृथिवीविकाराः, मूत्रलोहितप्राणाः अब्विकाराः, अस्थिमज्जावाचः तेजोविकारा इति प्रतिपत्तव्यम्; 'अन्नमयं हि सोम्य मनः, आपोमयः प्राणः तेजोमयी वाक्' इति वाक्यशेषाविरोधाच्च । अतः 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्युक्तस्त्रिवृत्करणप्रकारः, 'अन्नमशितम्' इत्यादिना न प्रदर्श्यते। तथा सति मनःप्राणवाचां (?) त्रयाणामप्यणीयस्त्वेन तैजसत्वात्, 'अन्नमयं हि सोम्य मनः' इत्यादि विरुध्येत । प्रागेव त्रिवृत्कृतानां पृथिव्यादीनां पुरुषं प्राप्तानाम्, 'अन्नमशितम्' इत्यादिनैकैकस्य त्रेधा परिणाम उच्यते । अण्डसृष्टेः प्रागेव च तेजोबन्नानां त्रिवृत्करणेन भवितव्यम्, अत्रिवृत्कृतानां तेषां कार्यारम्भासामर्थ्यात् । अन्योन्यसंयुक्तानामेव हि कार्यारम्भसामर्थ्यम्; तदेव च त्रिवृत्करणम् । तथा च स्मर्यते,** (वि. पु. १-२-५२, ५३) **"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति । अत एव च, "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत्; तासां त्रिवृतंत्रिवृतमेकैकामकरोत्' इति पाठक्रमोऽर्थक्रमेण बाध्यते । अण्डान्तर्वर्तिष्वग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं श्वेतकेतोः शुश्रूषोरण्डान्तर्वर्ति-**

---

**मनःप्राणवाचां त्रयाणा**मिति। य. स्थविष्ठो भाग इत्युपक्रमानुसारात् भागानामिति विशेष्यं कृत्वा त्रयाणामित्यस्त्रीलिङ्गता । वाक्यशेषमप्यत्र प्रमाणयति **अन्नमय**मिति । अन्नपदं पृथिवीपरम् । अत्र त्रिवृदित्यस्य त्रिभूतवृदिति नार्थ इत्याह **प्रागेवे**ति । प्रागेव त्रिवृत्कृतत्वे युक्तिं प्रमाणञ्च दर्शयति **अण्डे**ति । **संहतिं** मेलनम् । **असमागम्य** पृथक्स्थित्युपलम्भानर्हमिश्रणमप्राप्य । ननु समागमे संहतिरन्तर्भूतैवेति कुतः पृथगुक्तिरिति चेत्—अन्योन्यसमागम. **त्रिवृत्कृतत्वम्** । तादृशभूताना घटनिर्माणे मृज्जलतेजसामिवान्योन्यापेक्षा **संहति**पदेन दर्श्यते । इयमेव **परस्परसमाश्रयते**ति । निष्पत्तिवाक्यपाठक्रमभंगशंकां परिहरति **अत एव** चेति। चकारेण पूर्ववाक्यावगत फलोपायसंकल्पकनैमित्यमपि हेतुरिति ज्ञाप्यते । **बाध्यत** इति। पाठक्रमस्यार्थक्रमाद् बाधश्च पूर्वमीमांसायामेव साधितः—अग्निहोत्रं जुहोतीति वाक्यात् पश्चादेव, यवागूं पचतीत्यस्य पाठेऽपि अग्निहोत्रहोमस्य यवागूद्रव्यसाध्यतया यवागूपाकः प्राक्, होम. पश्चादिति । यदि अण्डसृष्टेः प्रागेव त्रिवृत्करणम्—तर्हि अण्डबहिष्ठेषु त्रिवृत्त्वं गुरुणा ज्ञापनीयमित्यत्राह **अण्डान्तर्वर्तिष्वि**ति । अण्डबहिष्ठार्थस्य वचनसंभवेऽपि प्रदर्शनं हि न भवती-

त्वेन; तस्य बहिःष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात् त्रिवृत्कृतानां कार्येषु अग्न्यादित्यादिषु क्रियते ॥ १८ ॥

स्यादेतत्—'अन्नमशितम्', 'आपः पीताः', 'तेजोऽशितम्' इति त्रिवृत्कृतानामन्नादीनामेकैकस्य तेजोबन्नात्मकत्वेन त्रिरूपस्य कथम्—अन्नम्, आपः, तेज इत्येकैकरूपेण व्यपदेश उपपद्यत इति; तत्राह—

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २ । ४ । १९ ॥

वैशेष्यं—विशेषभावः। त्रिवृत्करणेन त्रिरूपेऽप्येकैकस्मिन् अन्नाद्याधिक्यात् तत्रतत्रान्नादिवादः। द्विरुक्तिरध्याय[परि]समाप्तिं द्योतयति ॥ १९ ॥

इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥

॥ श्रीरस्तु ॥

---

त्याह तस्येति। तस्य श्वेतकेतुं प्रति।

अन्नम्, आप इत्येव प्रयोगात् शुद्धा पृथिवी ईषत्तेजोभ्यां संमेल्य भुज्यमाना त्रेधा विधीयत इत्येवंरीत्याऽर्थवर्णनं पूर्वपक्षी मन्येत। तत्परिहाराय त्रिवृत्येव वस्तुनि एकशब्दप्रयोगे औचित्यं दर्शयितुं सूत्रम्, वैशेष्यादिति। तदवतारयति स्यादेतदिति। पूर्वोक्तवस्तुनामेति वा, वक्ष्यमाण आक्षेपोऽस्तु इति वा तदर्थः। विशेषभावः भूयस्त्वम् - अधिकता। आधिक्यादिति विवरणात् ॥

तत् सिद्धं त्रिवृत्कुर्वतैव नामरूपव्याकरणस्य क्रियमाणतया श्रुत्योक्तत्वात् चतुर्मुखस्य स्मृत्यादिना देवादिकतिपयनामरूपव्याकर्तृत्वेऽपि तेन सह, ततः पृथग्भूय च सर्वव्याकर्ता परमात्मैवेति अस्य समष्टिव्यष्टिसर्वसाक्षात्कारणत्वमिति ॥

इति श्रीमद्वेदान्तरामानुज-यतीन्द्र-महादेशिकचरणारविन्दचञ्चरीकस्य श्रीमद्रङ्गरामानुज मुनीन्द्र-महादेशिक-पदपद्मसेवासमधिगतसर्ववेदान्तार्थस्य वात्स्यश्रीशैल-सच्चक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे द्वितीयोऽध्यायः ॥

श्रीमते रामानुजाय नमः। शुभमस्तु।

श्रीमते रामानुजाय नमः

## श्रीभगवद्रामानुजविरचिते (श्रीभाष्ये)

# श्री शा री र क मी मां सा भा ष्ये

तृतीयेऽध्याये प्रथमः पादः (पञ्चाग्निविद्या छा. ५-४)

६९. तदन्तरप्रतिपत्त्यधिकरणम् ३-१-१ ॥

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् । ३ । १ । १ ॥**

**अतिक्रान्ताध्यायद्वयेन—निखिलजगदेककारणं निरस्तनिखिलदोषगन्धम् अपरिमितोदारगुणसागरं सकलेतरविलक्षणं परं ब्रह्म मुमुक्षुभिरुपास्यतया वेदान्ताः प्रतिपादयन्तीत्ययमर्थः, स्मृतिन्यायविरोधपरिहार-परपक्षप्रतिक्षेप-वेदान्तवाक्यपरस्परविरोधपरिहाररूपकार्यस्वरूपसंशोधनैः तद्दुर्धर्षणत्वहेतुभिः सह स्थापितः; अतोऽध्यायद्वयेन ब्रह्मणः स्वरूपं प्रतिपादितम् । उत्तरेणेदानीं तत्प्राप्त्युपायैः सह प्राप्तिप्रकारश्चिन्तयितुमिष्यते । तत्र तृतीयाध्याये उपायभूतोपासनविषया चिन्ता वर्तते । उपासनारम्भाभ्यर्हितोपायश्च प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यम्, प्राप्यतृष्णा चेति, तत्सिद्ध्यर्थं जीवस्य लोकान्तरेषु सञ्चरतो जाग्रतः स्वपतः**

---

श्रीः ॥ श्रीमते रामानुजाय नमः

भाष्यार्थदर्पणे तृतीयोऽध्यायः

नानालोकगतागतश्रमजनिस्वप्नादिदोषास्पदात् सर्वस्माच्च विलक्षणं स्थिरमहानन्दं परं सद्गतिम् ।
संराध्यं विविधैः सदक्षरमुखैर्योगैः क्रियोदञ्चितैः शेषोर्वीधरशेखरं शुभतनुं सेवेमहि श्रीधरम् ॥

सिद्धे ब्रह्मणि सर्वकारणे प्रथमाध्यायेन श्रुतिभिः श्राविते, द्वितीयेन च बाह्यान्तरक्षोभपरिहारेण स्थिरीकृते, तत् प्रथमद्विकप्रमितं तत्त्वं यस्य साध्यस्य विषयभूतं तत् शेषेण द्विकेन शोध्यते । तच्च साध्यं विषयि हितफलात्मना द्विविधम् । तत्र तत्त्वज्ञानानन्तरभावित्वात् हितानुष्ठानस्य, फलस्य च तदनन्तरत्वात् हेतुहेतुमद्भावक्रमेण हितनिरूपणमारभ्यते । हितप्रवृत्तेरपि प्राप्तविषयवैतृष्ण्य-प्राप्यतृष्णाधीनत्वात् तज्जननं पादद्विकरूपया पेटिकया प्राक् क्रियते । तत्र, 'परमात्मनि यो रक्तो विरक्तोऽपरात्मनि' इत्युक्तरीत्या मनः परस्मिन् रागं प्राप्यैवापरस्मिन् विरज्येदिति यद्यपि, अथाप्यस्वीकृतपरमात्मभिरपि अवरसंसारवैराग्यस्य तीर्थकरैः संपाद्यमानत्वात्, प्राप्तविषयस्यैव पर्याप्तत्वे प्राप्यान्तररुच्ययोगाच्च प्रथमं प्राप्तविषयवैराग्यसंपादनाय संसरतो जीवस्य स्थिताः सर्वेऽप्यपुरुषार्थाः व्युत्पाद्यन्ते । तत्र ब्रह्ममीमांसारम्भसमय एवास्य विरक्तत्वेऽपि कर्मफलफल्गुत्वस्य पञ्चाग्निविद्यारूपोपनिषद्भागमुखेनात्र पादे प्रतिष्ठापनं तदभिवृद्धये भवति । कैवल्यफलकपञ्चाग्निविद्यानिष्ठस्यापि ब्रह्मप्राप्तिसाधकार्चिरादिगतिप्रावण्यस्यात्रावगमनात् कैवल्यस्यापि हेयत्वं सेत्स्यति । तत्र पञ्चाग्निविद्यैव पूर्णप्रथमपादविषयः । तद्विचारमुखेन जननमरणप्रबन्धप्रतिबोधनमुखेन लोकद्वये जाग्रद्दोषज्ञापनं प्रथमपादार्थः । अत एव पञ्चाग्निविद्यायामुपसंहारः, "तस्माज्जुगुप्सेत्" इति । सर्वमिदमाह **अतिक्रान्ते**त्यादिना । **द्वयेने**त्यस्य **अयमर्थः स्थापित** इत्यत्रान्वयः ।

**सुषुप्तस्य मूर्च्छतश्च दोषाः, परस्य च ब्रह्मणस्तद्रहितता, कल्याणगुणाकरत्वं च प्रथमद्वितीययोः पादयोः प्रतिपाद्यन्ते।**

**तत्र देहात् देहान्तरं गच्छन् अयं जीवो देहान्तरारम्भहेतुभिर्भूतसूक्ष्मैः संपरिष्वक्त एव गच्छति, उत नेति चिन्तायाम्—यत्रयत्र जीवो याति, तत्रतत्र भूतसूक्ष्माणां सुलभत्वात् असंपरिष्वक्तो यातीति प्राप्तम्। पश्चादपि पूर्वपक्षबीजानि उपन्यस्य निरसिष्यति॥**

**तत्र सिद्धान्तमाह**—तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः **इति।** (शारी. ३-१-१) संज्ञामूर्तिक्लृप्तिः **इति मूर्तिशब्देन देहः प्रस्तुतः; स तच्छब्देन परामृश्यते।** तदन्तरप्रतिपत्तौ—**देहान्तरगमने भूतसूक्ष्मैः संपरिष्वक्तो जीवो** रंहति—**गच्छतीत्यर्थः। कुतः?** प्रश्ननिरूपणाभ्याम्—**प्रश्नप्रतिवचनाभ्याम्। पञ्चाग्निविद्यायामेवं प्रश्नप्रतिवचने आम्नायेते—श्वेतकेतुं किलाऽऽरुणेयं पाञ्चालः प्रवाहणः कर्मिणां गन्तव्यदेशम्, पुनरावृत्तिप्रकारम्, देवयानपितृयाणपथव्यावर्तने, अमुष्य लोकस्याप्रापारं च वेत्थेति पृष्ट्वा इदमपि पप्रच्छ,** (छा. ५-३-३) "वेत्थ

---

**पाद**योरिति। पादद्वयमेका पेटिका। प्रथमाधिकरणविषयमाह **तत्र देहादि**ति।

अहङ्कारो जगन्मण्डलव्यापीति आहङ्कारिकाणि इन्द्रियाण्यपि व्यापीनि न गच्छन्तीति सांख्याः। नेत्रगोलादिरूपाणीन्द्रियाणि तत्रतत्र नवनवान्युत्पद्यन्त इति सौगताः। मनोमात्रं यातीति काणादाः। जीव एवोत्प्लुत्य देहान्तरं प्रतिपद्यत इति दिगम्बराः। सिद्धान्ते तु जीवस्याणुत्वस्थापनाद स गच्छतीति निश्चितम्। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'त्यादिना प्राणेन्द्रियानुगमनमपि सिद्धम्। सूक्ष्मशरीरमेवास्ति न वेति चिन्त्यम्। तत्फलञ्च—स्थापिते तस्मिन् सोमराजशरीरस्य एतत्सूक्ष्मदेहपरिणामत्वादत्यन्तहेयत्वमप्राकृतवैलक्षण्यं वर्णितं भवतीति। संज्ञामूर्त्यधिकरणे नामान्तरभजनार्हमूर्तिप्राप्तिरुक्ता; संप्रति नामान्तरप्रसिद्धिरहितसूक्ष्मदेहक्लृप्तिरपि मध्यदशायामस्तीत्युच्यत इत्यवान्तरसंगतिः। सिद्धान्तसूत्रारम्भात् उत्सूत्रोऽपि पूर्वपक्षहेतुरस्तीति ज्ञायते; एवं सर्वत्र भाव्यम्। तमाह **सुलभत्वादि**ति। **बीजानि** श्रद्धामात्रहोम्यत्वश्रवणम्, अम्मात्रश्रवणात् सर्वभूतसूक्ष्माभावावगमः, अपामपि जीवदेहत्वानवगमश्च। मरणावसरे, "तेजोमात्राः समभ्याददानः" (बृ. ६-४) इति कथनं करणानां निर्यापारत्वपरम्, न तु सूक्ष्मशरीरग्रहणपरं वा, सूक्ष्मशरीरे करणस्थापनपरं वा; "मनोमयः प्राणमयः .... पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयः" इति च, तत्र काममय इत्यादिवत् स्थूलदेहभविष्यदंशविषयकम्; (बृ.६-१४) तृणजलायुकावत् देहान्तरग्रहणेनैतद्देहत्यागवचनञ्च अन्तकाले भविष्यद्देहभावनाभिप्रायमिति **पूर्वपक्षा**शयः।

**तदन्तरे**ति। अन्या सा **तदन्तरम्**। संज्ञाया अमुख्यत्वात् भिन्नत्वानियमाच्च तत्त्यागेन मूर्तिमात्रस्य तच्छब्देन ग्रहणम्। **प्रतिपत्तिः** प्राप्तिः। तामुद्दिश्येत्यर्थः। सूत्रे सर्वभूतसूक्ष्मैरिति पदाभावेऽपि रंहणकाले तत्परिष्वक्तत्वमेवेह विधेयम्; **सम**िति उपसर्गसूचितमिदम् उत्तरसूत्रतो विशदम्। अत्र न परकृतप्रश्नस्य प्रतिवचनमुच्यते; किं तु स्वकृतप्रश्नविवरणं स्वेनैव क्रियत इति ज्ञापयितुं प्रतिवचनेति अनुक्त्वा **निरूपणे**त्युक्तम्। **वेत्थ**-जानासि किम्। **पुरुषवचसः**-पुरुष इति **वचः** संज्ञा

**यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति। तत इमं पश्चिमं प्रश्नं प्रतिब्रुवंश्च द्युलोकमग्नित्वेन रूपयित्वा,** (छा. ५-४-२) **"तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति; तस्या आहुतेः सोमो राजा संभवति" इत्यादिना—देवाख्याः** जीवस्य **प्राणाः अग्नित्वेन रूपिते द्युलोके श्रद्धाख्यं वस्तु प्रक्षिपन्ति; सा च श्रद्धा सोमराजाख्यामृतमयदेहरूपेण परिणमते; तं चामृतमयं देहं त एव प्राणाः पर्जन्येऽग्नित्वेन रूपिते प्रक्षिपन्ति; स च देहस्तत्र प्रक्षिप्तो वर्षं भवति; तच्च वर्षं त एव प्राणाः पृथिव्यामग्नित्वरूपितायां प्रक्षिपन्ति; तच्च तत्र प्रक्षिप्तमन्नं भवति; तच्चान्नं त एव पुरुषेऽग्नित्वरूपिते प्रक्षिपन्ति; तच्च तत्र रेतो भवति; तच्च त एव योषायाम् अग्नित्वरूपितायां प्रक्षिपन्ति; तच्च तत्र प्रक्षिप्तं गर्भो भवति—इत्युक्त्वा, आह**--(छा. ५-९-१) **"इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति। एवं पञ्चम्यामाहुतौ हुतायाम् आपः पुरुषशब्दाभिलप्या भवन्तीत्यर्थः। एवमुक्ते, पूर्वास्वपि आहुतिष्वनुवर्तमानानामेवापां सूक्ष्मरूपाणामिदानीं पुरुषाकारत्वं भवतीत्युक्तं भवति। अत एवं प्रश्नप्रतिवचनाभ्यां देहहेतुभूतैर्भूतसूक्ष्मैः सह तत्रतत्र यातीति गम्यते ॥ १ ॥**

**ननु "आपः पुरुषवचसः" इत्युक्ते अपां पुरुषाकारपरिणामप्रतीतेः गच्छता जीवेन तासामेव परिष्वङ्गः प्रतीयते। अतः कथं सर्वेषां भूतसूक्ष्माणां परिष्वङ्ग इति—तत्राह—**

**त्र्यात्मकत्वात्तु भूयस्त्वात्। ३। १। २॥**

तुशब्दः चोद्यं व्यावर्तयति। **देहारम्भ(रम्भि)काणामपां केवलानां न देहारम्भसंभवः। देहाद्यारम्भाय हि,** (छा. ६-३-३) **"तासां त्रिवृतंत्रिवृतमेकैकामकरोत्" इति त्रिवृत्करणम्। केवलानामपां श्रवणं तु तासां भूयस्त्वात्। देहे च लोहितादिभूयस्त्वेनाऽऽरम्भकेष्वपां भूयस्त्वं गम्यते ॥ २ ॥**

---

येवां ते। **प्रतिब्रुवन्**। श्वेतकेतुना अज्ञानादुत्थाय गृहं गत्वा वृत्तं विज्ञापितमाकर्ण्य तत्पितरि गौतमे उद्दालके प्रवाहणसविधमागत्य यथावत् प्रश्नार्थान् निरूपयितुं प्रार्थितवति निरूपयन् प्रवाहण इत्यर्थः। **प्राणा** इति। श्रुतौ देवशब्द इह प्राणवाचीति भावः। देवशब्दस्येन्द्रिये बहुलं प्रयोगेऽपि प्राणशब्दस्य तदर्थकत्वे संभवत्यपि प्रक्षेपकर्तृत्वसामर्थ्यात् वायुभूतप्राणपरत्वं भाष्येऽभिमतम्। **एवमुक्ते** इति। अपामियं पञ्चमी आहुतिरित्युक्तौ पूर्वाश्वतस्र आहुतयोऽपि तासामेवेत्यवगमात् प्रथमहवनात् प्रागेव प्राणैः सहापां सद्भावोऽवगम्यत इति भाव. ॥ १ ॥

**देहारम्भिकाणा**मिति पाठः। आरम्भकाणामिति पाठे तु न अविशेषणत्वम्; किंतु निर्धारणे षष्ठी। देहारम्भकाणां भूतानां मध्ये इत्यर्थः। **आरम्भकेष्वपाम्** इति उपरिदर्शनात्। **अपां** त्रिवृत्कृतानामपाम्। **केवलानां** त्रिवृत्कृतभूतान्तरासंसृष्टानाम्। **देहाद्यारम्भाय** हीति। समष्टिभूतानां शुद्धानां त्रिवृत्करणं पञ्चीकरणपर्यवसितं प्रथमम्। एवंकृतानामेव ब्रह्माण्डे व्यष्टौ निवेशः। पञ्चीकृतपञ्चभूतमेलनेनैव पाञ्चभौतिकपदार्थसृष्टिः एकैकामिति श्रुत्यभिमता। तदत्र देहः पञ्चीकृतपञ्चभूतमयः।

प्राणगतेश्च । ३ । १ । ३ ॥

**इतश्च भूतसूक्ष्मपरिष्वक्तस्य गमनमिति गम्यते । उत्क्रामति जीवे प्राणानां तदनुगतिः श्रूयते,** (बृ. ६-४-२) **"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति ; प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति । स्मर्यते च,** (गी. १५-७) **"मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति । शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयात्" इति । न च निराश्रयाणां गतिरुपपद्यत इति तदाश्रयभूतानां भूतसूक्ष्माणामपि गतिरभ्युपगन्तव्या ॥ ३ ॥**

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् । ३ । १ । ४ ॥

(बृ. ५-२-१३) **"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति, वातं प्राणः, चक्षुरादित्यम्" इत्यादिना प्राणानां जीवमरणकाले अग्न्यादिष्वप्ययश्रवणान्न तेषां जीवेन सह गमनमिति गतिश्रुतिरन्यथा नेयेति चेत्—न ;** भाक्तत्वात् अग्न्यादिष्वप्ययश्रवणस्य । **कथं भाक्तत्वम् ? "ओषधीर्लोमानि, वनस्पतीन् केशाः" इति अनपियद्भिर्लोमादिभिः सह श्रवणात् । अतश्चक्षुराद्यप्ययश्रुतिरधिष्ठातृदेवतापक्रमणपरा ॥ ४ ॥**

---

'अन्नमशितं त्रेधा विधीयते' इत्यत्र हि त्रिवृत्कृतभूतत्रयस्याप्याहारत्वं ततो देहोत्पत्तिश्च दर्शिते । अत एव भाष्ये **भूतसूक्ष्मैरि**ति बहुवचनम् । एवं 'भूतेषु तच्छ्रुतेः' इति सूत्रेऽपि । अतः सूत्रे **त्र्यात्मकत्वा**दित्यस्य त्रिवृत्कृतभूतत्रयमयत्वाद् देहस्य अप्छब्दः त्रिवृत्कृतत्रय (पञ्चीकृतपञ्चक) पर इत्यर्थः । त्रिवृत्कृतभूतान्तरापेक्षया त्रिवृत्कृतस्य जलस्यात्र भूयस्त्वात् सर्वस्याप्पदेन ग्रहणम् । "वैशेष्यात्तु तद्वादः" इति सूत्रे त्रिवृत्कृते एकैकस्मिन् तत्पदप्रयोगहेतुर्भूयस्त्वमित्युक्तमेव सर्वत्रिवृत्कृतसमावेशे एकमात्रव्यवहारहेतुतयाऽपि स्मारितमत्र **भूयस्त्वादि**ति । अतो न पौनरुक्त्यमपि । देहत्र्यात्मकत्वहेतुना त्रिवृत्कृतत्रयस्याप्छब्दग्राह्यत्वमत्र विधेयम् । व्यष्टिमध्ये च अपञ्चीकृतवस्तुमात्रव्यवहारस्य नैव प्रसक्तिः । मृगतृष्णादौ जलादिभ्रमोऽपि पञ्चीकृततावन्मात्रग्रहणादेव स्यात् ॥ २ ॥

इह प्राणशब्दः मुख्यामुख्यसर्वप्राणपरः ; श्रुतौ सर्वगतिश्रवणात् । **यच्चे**ति । यस्माच्च देहादित्यर्थः । तत् प्रति तस्मादिति पदाध्याहार उत्तरार्धे । **ईश्वरः** देहादिनियन्ता जीवः । **निराश्रयाणामि**ति । शरीरस्य हि लक्षणमिन्द्रियाश्रयत्वम् । न च पृथग्भूतानीन्द्रियाणि आश्रयं विना अणुना जीवेनैकीकर्तुं शक्यन्ते इति । अस्य सूत्रस्य भूतसूक्ष्मपरिष्वङ्गमात्रसाधकत्वेऽपि सर्वभूतसूक्ष्मसिद्धिरौचित्यात् विनिगमनाविरहात्, स्थूलस्य पाञ्चभौतिकत्वाच्च ॥ ३ ॥

'सत्यं प्राणा गच्छन्ति ; किंतु लयार्थमग्न्यादीन्' इति इन्द्रियादिगतेरप्याक्षेपं तटस्थक्रियमाणं परिहर्तुं सूत्रम् **अग्न्यादी**ति । **अनपियद्भिः** अलीयमानैः । मरणानन्तरमपि लोम्नां तथैव दर्शनात् तदप्ययो हि दुःस्वीकरः । **अधिष्ठात्रि**ति । अग्निं वागप्येतीत्यादेः वागधिष्ठानव्यापारः अग्निदेवतायां लीन इति रीत्याऽर्थः । अपक्रमणम् अधिष्ठानरूपव्यापारान्निवृत्तिः ॥ ४ ॥

प्रथमेऽश्रवणादिति चेन्न; ता एव ह्युपपत्तेः । ३ । १ । ५ ॥

**यदुक्तम्-अद्भिः सूक्ष्माभिर्भूतान्तरसंसृष्टाभिः परिष्वक्तो जीवो गच्छतीति प्रश्नप्रतिवचनाभ्यामवगम्यत इति—तन्नोपपद्यते; द्युलोकाग्निविषये प्रथमे होमे अपां होम्यत्वाश्रवणात् ।** (छा. ५-४-२) **"तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इति श्रद्धैव हि होम्यत्वेन श्रुता । श्रद्धा नाम जीवस्य मनोवृत्तिविशेषत्वेन प्रसिद्धा । अतो नाऽऽपस्तत्र होम्या इति चेत्—न, यतः** ताः—**आप एव श्रद्धाशब्देन तत्राभिधीयन्ते । कुतः ? प्रश्नप्रतिवचनो**पपत्तेः । (छा. ५-३-३) **" वेत्थ, यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नस्य प्रतिवचनोपक्रमे हि श्रद्धा द्युलोकाग्नौ होम्यत्वेन श्रुता ; तत्र यदि श्रद्धाशब्देनाऽऽपो नोच्येरन् , ततः अन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्यसंगतं स्यात् ।** (छा. ५-९-१) **" इति तु पञ्चम्यामाहुतावापः पुरुषवचसः " इति प्रतिवचननिगमनं च श्रद्धाया अप्त्वमेव सूचयति । 'वेत्थ यथा' इति हि प्रश्नगतः प्रकारः, ' इति तु पञ्चम्याम् ' इतीतिशब्देन परिहारे निगम्यते । श्रद्धासोमराजवर्षान्नरेतोगर्भरूपेणापां परिणाम[क्रम]मुक्त्वा हि** एवमापः पुरुषवचस **इति निग-**

नतु द्युलोकगमनपर्यन्तमनुवृत्तश्रद्धस्यैव पुंसः फलप्राप्तिरिति गमयितुं श्रद्धाहोम एव प्रथमाग्नौ श्रुतः । तस्या आहुतेरित्यादेश्च श्रद्धाबलात् सोमभाव इत्येवार्थः, न तु तत्परिणामः सोमतयेति । अब्लाभस्तु मेघप्राप्तौ । तस्मात् पञ्चाप्याहुतयः अब्विषयिका इति कथमिति शंकामुद्भाव्य परिहरति **प्रथम** इति । **उपपत्तेरित्यस्य** पूर्वोक्तप्रश्नप्रतिवचनोपपत्तिः, श्रद्धाशब्दस्यार्थवत्त्वोपपत्तिः, **अब्रूपत्व एव** श्रद्धायाः सोमराजादिभावोपपत्तिश्च भाष्ये क्रमेणार्थतया प्रदर्श्यन्ते । एवं प्रकृते श्रद्धाशब्देनाबादिरूपभूतसूक्ष्माणां निर्देशोपपत्तिरपि यथार्हं ग्राह्या स्यादिति वक्ष्यते । तत्र प्रतिवचनोपपत्तिः प्रतिवचनोपक्रमस्य प्रश्नानुरूपत्वोपपत्तिरूपा प्रतिवचनोपसंहाररीतिरूपा चेति द्विधा । सर्वं यथाक्रमं भाष्ये **द्रष्टव्यम् । परिहारे निगम्यते** इत्येतदुपपादयति **श्रद्धेति** ।

नन्वत्र, श्रद्धा संभवतीति श्रुतिवाक्याभावात् , सोमो राजा संभवतीत्यारभ्य, गर्भो जायते इत्येवं सोमादिरूपेणैव परिणामश्रुतेः, श्रद्धाशब्देन सामान्यतः अपामेव ग्राह्यतया अप्सु अप्परिणामत्वप्रसक्त्यभावाच्च श्रद्धापदमत्र **न युक्तम्** । तदस्तित्वे तु **श्रद्धेति** पृथक्पदं कृत्वा **निगम्यते** इत्यत्रान्वयः कार्यः **स्यात् ;** पूर्वमनन्वयादिति चेत्—उच्यते । अनन्तरसूत्रभाष्ये श्रद्धाया अपि अम्ब्ववस्थाविशेषत्वं **वक्ष्यति ।** अपां स्नानप्रोक्षणादिभिरात्मशुद्धिकरतया श्रद्धारूपास्तिक्यबुद्धिहेतुत्वेन श्रद्धाशब्दलक्ष्यत्ववत् **श्रद्धा**पूर्वानुष्ठितनानाविधयज्ञहोमादिफलभूतस्वर्गदेहारम्भकसूक्ष्मभूततयाऽपि श्रद्धाशब्दलक्ष्यत्वं युक्तम् । बृहदारण्यके (६-३) 'जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते' इति अग्निहोत्रविषये **जनकयाज्ञवल्क्यसंवादोऽनूदितः,** माध्यन्दिनशतपथे (११-६-२) विशदं विहितोऽस्ति । **परिष्कारे** च **संगृहीत** एषः । जनकक्तृता षट्प्रश्नी **याज्ञवल्क्येनापि न समाहिता,** पश्चादुपसन्नं याज्ञवल्क्यं प्रति **जनकेनैव** निरूपिता । प्रश्नाश्चाग्निहोत्राहुत्योः उत्क्रान्ति-गति-प्रतिष्ठा-तृप्ति-पुनरावृत्ति-लोकप्रत्युत्थायित्व**विषयिण्यः ।**

म्यते। श्रद्धाशब्दस्य चाप्सु वैदिकप्रयोगो दृश्यते—(आ. २-४-३३) "अपः प्रणयति। श्रद्धा वा आपः" इति। 'श्रद्धां जुह्वति; तस्या आहुतेः सोमो राजा संभवति' इति सोमाकारेण परिणामश्चापामेवोपपद्यते। अतो भूतान्तरसंसृष्टाभिरद्भिः संपरिष्वक्तो जीवो रंहतीत्युपपन्नम्॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः॥ ३। १। ६॥

यत् पुनः उक्तम्—अद्भिः संपरिष्वक्तो जीवो यातीत्ययमर्थः एतस्माद्वाक्यादवगम्यत इति—तन्नोपपद्यते, अस्मिन् वाक्ये जीवस्याश्रवणात्। अत्र हि श्रद्धादय एवाम्बवस्थाविशेषाः होम्यत्वेन श्रुताः; न तु जीवस्तत्परिष्वक्त इति चेत्—नैष, इष्टादिकारिणां प्रतीतेः—अस्मिन्नेव वाक्ये ह्युत्तरत्र, 'ब्रह्मज्ञानविधुरेष्टापूर्तदत्तकारिणो द्युलोकं प्राप्य सोमराजानो (१) भवन्ति; पुण्यकर्मावसाने च पुनरागत्य गर्भं प्राप्नुवन्ती'त्युच्यते, (छा. ५-१०-३) "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति" इत्यारभ्य, "पितृलोकादाकाशमाकाशाच्चन्द्रमसम्; एष सोमो राजा; तत् देवानामन्नम्; तं देवा भक्षयन्ति। तस्मिन् यावत्सं-

अत्र भामतीकल्पतरू द्रष्टव्यौ। पञ्चाग्निविद्यायामपां पुरुषभाववत् आहुतेः पुरुषभाव इह किञ्चिदन्यथा वर्ण्यते। अग्निहोत्रकथनमितरयागाद्युपलक्षकं युक्तम्। मुण्डके, (१-२) "एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति। प्रियां वाचमभिवदन्त्योऽर्चयन्त्यः" इति आहुतीनां स्थूलशरीरपरिग्रहाय यजमाननेतृत्वं श्रुतम्। प्रायः कर्मणामनुष्ठीयमानानां सोमाज्यपयःप्रभृतिद्रवद्रव्याश्रयत्वात् सूर्यरश्मिषु संक्रान्ता आहुतिरूपा आपः इमा. सूक्ष्मदेहेन द्युलोकं गच्छन्तं जीवं (तद्देहाप्यायकतया) संभूय वहन्तीति तत्त्वे परामृश्यमाने, पथि तादृशाहुत्यंशाप्यायितः सन् सूक्ष्मभूतसंघात एव श्रद्धापूर्वककृतबहुविधाहुत्यवस्थात्मकतया श्रद्धापदेन लक्षणया बोद्धव्यः सोमराजभावौचित्यज्ञापनार्थमिति सिद्ध्यति। एवञ्च श्रद्धायाः परिणामत्वेन रूपेणात्र श्रुतावकथनेऽपि वस्तुनोऽप्परिणामस्यैव श्रद्धादिशब्दैः क्रमेण निर्दिष्टतया, 'श्रद्धादिरूपेणापां परिणाममुक्त्वा' इति भाष्यं नानुपपन्नम्। किञ्च वाक्यमिदं प्राधान्येन श्रद्धावर्णनार्थमेव प्रवृत्तम्; सोमादिपरिणामवत् श्रद्धारूपमप्परिणामं श्रुतिरभिप्रैति; श्रद्धाशब्देनोपक्रम्य 'इति तु पञ्चम्यामाहुतावापः' इति निगमनादिति हि भाष्यार्थ इति। **परिणाम[क्रम]मिति।** "श्रद्धासोमपरिणामक्रमेणागता आपः" इति **भामती।** **अपामेवेति।** सोमस्याम्मयत्वात् श्रद्धाया अप्त्व एव तत्परिणामित्वोपपत्तेरित्यर्थः। **आहुतेरिति** श्रुतौ च पञ्चमी उत्तरवाक्येष्विव उपादानत्वार्थिकेति। केवलानामपां सोमदेहानारम्भकत्वादाह **भूतान्तरेति**॥ ५॥

श्रद्धाशब्दस्य बुद्धिविशेषपरत्वे तस्य पृथग्घोमासंभवात् जीवपर्यन्तग्रहणं स्यात। अपां तदर्थत्वे तु जीव इह नोक्तः स्यादिति शंकते **अश्रुतत्वादिति।** **इष्टं** यागः। **अस्मिन्नेव वाक्ये** इति। अस्मिन् प्रवाहणप्रत्युक्तिरूपमहावाक्ये इत्यर्थः। **दत्तं** दानम्। **इत्युपासते।** **इतिशब्दः** प्रकारवचनः। एवम्भूतं काम्यं कर्म **उपासते** श्रद्धया चरन्ति। **अभिसंभवन्ति।** **समित्युपसर्गात्** संगच्छन्त इत्यर्थः। **एष सोमो राजा।** एते चन्द्रलोकं प्राप्ताः चन्द्रतुल्यदेहा भवन्तीत्यर्थः। एकवचनं सोमशब्दमुख्यार्थस्य

पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते", "योयो ह्यन्नमत्ति, यो रेतः सिञ्चति, तद्भूय एव भवति" इति । अत्रापि, 'द्युलोकाग्नौ श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति' इति, तदेकार्थत्वात् श्रद्धावस्थदेहविशिष्टः सोमरूपदेहविशिष्टो भवतीत्युक्तमिति गम्यते । देहस्य जीवविशेषणतैकस्वरूपस्य वाचकः शब्दो विशेष्ये जीव एव पर्यवस्यति। अतः संपरिष्वक्तो जीवो यातीत्युपपद्यते ॥ ६ ॥

ननु च 'तं देवा भक्षयन्ति' इति देवैर्भक्ष्यमाणत्ववचनात्, 'सोमो राजा' इति न जीव उच्यते, जीवस्यानदनीयत्वात्; तत्राह—

भाक्तं वाऽनात्मवित्त्वात्; तथा हि दर्शयति ॥ ३ । १ । ७ ॥

वाशब्दश्चोद्यं व्यावर्तयति। इष्टादिकारिणोऽनात्मवित्त्वात् स देवानां भोगोपकरणत्वेन इहामुत्र च वर्तते । इहेष्टादिना तदाराधनं कुर्वन्नुपकरोति; आराधनप्रीतैर्देवैर्दत्तममुं लोकं प्राप्य तत्र तत्समानभोगस्तदुपकरणं भवति । (बृ. ३-४-१०) "यथा पशुः, एवं स देवानाम्" इति अनात्मविदः देवानामुपकरणत्वं दर्शयति श्रुतिः । स्मृतिरपि आत्मविदां ब्रह्मप्राप्तिम्, अनात्मविदां च देवभोग्यत्वं दर्शयति, (गी. ७-२३) "देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि" इति । अतो जीवस्य देवानां भोगोपकरणत्वाभिप्रायमन्नत्वेन भक्ष्यत्ववचनम्; अतस्तत् भाक्तम् । तेन तृप्तिरेव च देवानां भक्षणमिति श्रूयते, (छा. ३-६-१) "न वै देवा अश्नन्ति; न पिबन्ति; एतदेवामृतं दृष्ट्वा तृप्यन्ति" इति। तस्माद् भूतसूक्ष्मैः संपरिष्वक्तो जीवो रंहतीति सिद्धम् ॥ ७ ॥ इति तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

---

चन्द्रस्यैकत्वात्। चन्द्रवदेषामपि देवभोग्यत्वमुक्तम्। तांस्तत्र देवा यथा सोमं राजानं........भक्षयन्तीति। **यावत्संपातम्** भोजकादृष्टस्थितिपर्यन्तम्। **तदेकार्थत्वादिति** । तत्र एष इति प्राप्तृजीवानां ग्रहणात् सोमराजपदं तत्समानाधिकरणं तावत् जीवपर्यन्तपरम् । तदैकार्थ्यात् इहापि सोमराजपदं तथा । तदुपादानवाचिनी आहुतिश्रद्धापदे अपि ततो जीवपर्यन्तवाचिनी इत्यर्थः ॥६॥ **जीवस्यानदनीयत्वादिति** । तच्छरीरस्यादनीयत्वात् तथोक्तिरिति चेन्न-यजेत स्वर्गकाम इति भोक्तृतयैव श्रुतत्वात्; भोज्यत्वे प्रवृत्त्ययोगाच्च। **भाक्तमिति** । अन्नत्ववचनं **भाक्तं** जीवानां देवोपकरणत्वरूपलक्ष्यार्थकम् । अनात्मवित्त्वात् कर्मिणां तदुपकरणत्वार्हाज्ञानवत्त्वात् अन्वयौचित्यात् । अनात्मवित्त्वादेव पशुवदुपकरणत्वेऽपि भोग्यताभिमानः । **हि** यतः पशुवत् उपकरणत्वं तेषां दर्शयति बृहदारण्यकमिति सूत्रार्थः । पञ्चाग्निविद्यासंदर्भे एवमुक्तिः ईदृशविद्याविधुरजननिन्दास्पाष्ट्यायेत्याशयेन च अनात्मवित्त्वादित्युक्तम् । **तत्समानभोग** इति पदं भोज्यत्वनिषेधाय, तत्र प्रवृत्तिसंघटनाय च । 'न ह वै' इति वाक्यं मधुविद्यागतम् । **तस्मादिति**। जीवस्य प्राणानाञ्च गमनाभावशंकापरिहारस्येव देहगमनाभावशंकापरिहारस्यापि सिद्धत्वादित्यर्थः ॥ ७ ॥

एवं दिव्यदेहस्यापि भौमदेहांशोपचयरूपत्वात् देवोपकरणत्वाच्च हेयत्वमुक्तम् । सोऽपि भोगो न नित्यः, नाप्यवरोहता तदौपचिककर्मानुष्ठानार्थमेवावरोहणात् क्षिप्रं संपाद्य पुनरारोहणनियमः; अनुशयवत

७०. कृतात्ययाधिकरणम् ३-१-२ ॥

**कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३ । १ । ८ ॥**

**केवलेष्टापूर्तदत्तकारिणां धूमादिना पितृयाणेन पथा गमनं कर्मफलावमाने पुनरावर्तनं चाम्नातम्,** (छा. ५-१०) **'यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते' इति । तत्र प्रत्यवरोहन्** जीवः **किमनुशयवान् प्रत्यवरोहति, उत नेति संशय्यते । किं युक्तम्? कर्मणः कृत्स्नस्योपभुक्तत्वात् नानुशयवानिति प्राप्तम् ।** अनुशयो **ह्युपभुक्तशिष्टं कर्म । तच्च कृत्स्नफलोपभोगे सति नावशिष्यते । 'यावत्संपातमुषित्वा' इति वचनात् कृत्स्नोपभोगश्च ज्ञायते । संपतन्त्यनेन स्वर्गं लोकमिति** संपातः **कर्मोच्यते । श्रुत्यन्तरं च,** (बृ. ६-४-६) **"प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे" इति ॥**

**एवं प्राप्तेऽभिधीयते**—अनुशयवान् **प्रत्यवरोहति—इति । कुतः?** दृष्टस्मृतिभ्याम्—**श्रुतिस्मृतिभ्यामित्यर्थः । श्रुतिस्तावत्**—(छा. ५-१०-७) **'तत् य इह रमणीयचरणा अभ्याशो ह, यत् ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह, यत् ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' इति प्रत्यवरूढान् प्रति श्रूयते । अमुष्माल्लोकात् प्रत्यवरूढेषु रमणीयकर्माणो रमणीयां ब्राह्मणादियोनिं प्रतिपद्यन्ते;** कपूयचरणाः-**कुत्सितकर्माणः कुत्सितां श्व-सूकर-चण्डलादियोनिं प्रतिपद्यन्त इति प्रत्यवरूढानां पुण्यपापकर्मयोगं दर्शयति । स्मृतिरपि,** (गौतम. २-११) **"वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुश्श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते; विष्वञ्चो विपरीता नश्यन्ति" इति । तथा**—(आपस्तम्ब. गृ. २-१) **"ततः परिवृत्तौ कर्मफलशेषेण जातिं**

---

एवावरोहणात् अनुशयानुसारं कपूययोनिप्राप्तेरप्यापातेन तदयोगादिति वैराग्यवर्धनायोत्तरमधिकरणम् । श्रद्धाशब्दादेः सूक्ष्मदेहार्थकत्वे गमकसत्त्वेऽपि चरणशब्दस्यानुशयरूपकर्मपरत्वे मानाभावः, यावत्संपातश्रुतिविरोधश्चेति शंकया संगतिः । **अनुशयः** पश्चात्ताप इत्याद्यर्थभ्रममपोहति **अनुशयो** हीति । स्वर्गादिभोगहेतुकर्मणा सह जातत्वेऽपि **अनु** तत्कर्मक्षयानन्तरमपि शेते **इत्यनुशयः । उपभुक्तशिष्टम्** उपभुक्तकर्मणोऽन्यत् । **संपात**मिति । अस्य कर्मार्थकत्वं, 'प्राप्यान्तं कर्मणः' इति श्रुत्यैककण्ठ्यसिद्धम् । तत्र **यत्किञ्चे**ति पदेन कृत्स्नग्रहणात् इहापि **याव**त्पदं कार्त्स्न्यवाचि; न तु कर्मस्थितिकालावधिपरम् । **इति** आगच्छति । कर्माभावे कथं जन्मेति चेत्—आचारः प्राच्यस्तत्र कारणमिति पूर्वः पक्षः ।

**अभ्याश** इत्यस्य क्षिप्रमित्यर्थसत्त्वेऽप्यत्र तत्सामञ्जस्याभावात् अभ्यागन्तार इत्यर्थः **टीकोक्तः,** अभ्याङ्पूर्वः अशूधातुरिहेति । **कपूये**ति कुत्सितेत्यर्थः । **ततः शेषेण** तदतिरिक्तेन सत्कर्मणा । **विशिष्टे**ति उत्कृष्टेत्यर्थः । **विपरीताः** त्यक्तस्वकर्माणः **विष्वञ्चः** निकृष्टानेकगतिमन्तो नश्यन्ति । **ततः परिवृत्तौ** आमुष्मिकानुभवात् पुनरावृत्तौ । **कर्मफलशेषेण** अनुभूतकर्मातिरिक्तकर्मफलतया ।

रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते । तत् चक्रवदुभयोर्लोकयोः सुख एव वर्तते'' इति । 'यावत्संपातम्' इति फलदानप्रवृत्तकर्मविशेषविषयम् । 'यत्किंचेह करोत्ययम्' इतीदमपि तद्विषयमेव । अभुक्तफलानामकृतप्रायश्चित्तानां च कर्मणां कर्मान्तरफलानुभवान्नाशोऽप्यनुपपन्नः । अतोऽमुं लोकं गताः सानुशया एव यथेतमनेवं च पुनर्निवर्तन्ते—आरोहणप्रकारेण प्रकारान्तरेण च पुनर्निवर्तन्ते इत्यर्थः । आरोहणं हि धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेण । अवरोहणं तु चन्द्रमसः स्थानादाकाशवायुधूमाभ्रमेघक्रमेण । तत्राकाशावरोहणात् यथेतम्; वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्चानेवम् ॥

चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३ । १ । ९ ॥

---

कर्मविशेषेति । यावत्पदं न कृत्स्नार्थकम्—उषित्वेत्यत्रान्वये सर्वाणि कर्माणि प्रति इत्यर्थवर्णने क्लेशात् । अतोऽवध्यर्थकम् । कर्मपदेनामुत्रोपभोगार्थकर्ममात्रग्रहणम् । न हि कर्माणि सर्वाणि तादृशानि; नानाजात्यनुभाव्यभौमफलार्थानामपि तस्मिन् सत्त्वात् । कात्स्न्यपरत्वे भूतभविष्यत्सर्वग्रहणासंभवादपि संकोचनं ध्रुवम् । अत एव यत्किञ्चेति श्रुतिरपि संकोचनीया । कर्मणां हि फलानुभवेन वा प्रायश्चित्तेन वा नाशः । न च स्वर्गलोके भूम्यादिलोकानुभाव्यफलानुभवप्रसक्तिरस्तीति कथं तदन्त उच्येत । न च स्वर्गेऽनेन प्रायश्चित्तं कृतमस्ति । ननु सत्कर्मणः कथं प्रायश्चित्तनाश्यता; पापानां हि सेति चेत्—यत्किञ्चेति शब्दसंकोचमसहमानेन त्वया सर्वस्यापि ग्राह्यत्वात् तदन्तोऽपि तत्र वक्तव्य इति कृत्वा एवं ब्रूमः । अस्ति च पुण्यान्तकरमपि प्रायश्चित्तं निवृत्तिधर्मरूपम् । तस्मात् संकोचे आवश्यके स्वर्गार्थिकर्ममात्रकात्स्न्ये पर्यवसानमिति । वस्तुतः प्राप्यान्तमिति वाक्यं न, सर्वानुभवस्तत्र भवतीति तद्विधानार्थं प्रवृत्तम्; किंतु यदि स्वर्गार्थं कर्म सर्वमप्येष कुर्यात्, तदाऽप्यत्र पुनरेत्येवेति तदन्तवत्त्वपरम् । अथवा 'ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्' इत्येवं सर्वपदसमभिव्याहृततच्छब्दस्थले यच्छब्दसमभिव्याहृतकिञ्चशब्दस्य कात्स्न्यार्थकत्वनिर्बन्धेऽपि अत्र तदभावात् यत् किञ्च यत् किमपि दुर्बलम् अतिप्रबलमपि वा इत्यर्थोऽस्तु । एवं यावत्पदयत्किञ्चशब्दयोरन्यार्थकत्वाशयेनैव सारावलौ, ''कात्स्न्र्येनेत्यश्रुतत्वात्'' इत्युक्तम् । स्वर्गार्थकर्मैकदेश एव भूमौ पुनर्जन्मादिहेतुरपीति वादस्य तु, 'यावत्संपातम्', 'प्राप्यान्तम्' इति वाक्ये निरासके भवेताम् । यथेतं गमनकालप्राप्तं स्थानं किञ्चित् प्राप्य, अनेवं किञ्चिद् विहाय स्थानान्तरपथेन च । ननु अयमंशः किमिति सूत्रे निबद्धः, पूर्वपक्षिणोऽप्यत्राविवादादिति चेत्—'एतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्' इत्युक्तत्वात् निवृत्तः कृत्स्नमध्वानमाप्नोति । तत्र प्रथमस्याकाशस्य चरमस्य धूमस्य च, आकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवतीति निर्देशात् मध्यगतवायुशब्दो लक्षणया पितृलोकादिरात्र्यन्तसर्वमार्गांशलक्षकः स्यादिति मतिव्युदासाय । एतमेवेत्येवकारः निवृत्त्यारम्भप्रभृत्येव मार्गभेद इति नेति ज्ञापनार्थ इति भावः ॥ ८ ॥

तदुपलक्षणार्थेति स्त्रीलिङ्गनिर्देशात्, चरणादिति पूर्वपक्षिवाक्यम्, 'दृष्टशब्दविवक्षितश्रुतिः चरणादेव योनिप्राप्त्यर्थिका' इत्याकारकं भवितुमर्हति । चेन्नेति नञर्थस्य हेतुसापेक्षत्वात् सूत्राभिमतो

'रमणीयचरणाः', 'कपूयचरणाः' इति न चरणशब्देन पुण्यपापरूपं कर्माभिधीयते; चरणशब्दस्य लोकवेदयोराचारे प्रसिद्धेः। लौकिकाः खलु चरणमाचारः शीलं वृत्तमिति पर्यायान् अभिमन्यन्ते। वेदे च, (तै. शिक्षा ११) "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि...यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि" इति चरणकर्मणो भेदेन व्यपदिश्येते; अतः चरणात्—शीलात् योनिविशेषप्राप्तिः, नानुशयादिति चेत्—नञ। चरणश्रुतिः कर्मोपलक्षणार्थेति [हि] कार्ष्णाजिनिराचार्यो मन्यते, केवलादाचारात् सुखदुःखप्राप्त्यसंभवात्। सुखदुःखे हि पुण्यपापरूपकर्मफले ॥ ९ ॥

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३ । १ । १० ॥

एवं तर्ह्यफलत्वादाचारस्य स्मृतिविहितस्यानर्थक्यमेवेति चेत् नैव; तदपेक्षत्वात् पुण्यस्य कर्मणः। आचारवत एव पुण्यकर्मस्वधिकारः, (दक्षस्मृ. २ १९) 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु', (—) 'आचारहीनं न पुनन्ति वेदाः' इत्यादिवचनेभ्यः। अतश्चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनेरभिप्रायः ॥ १० ॥

---

हेतुरुच्यते केवलादिति। उपलक्षणं लक्षणया कर्मप्रतिपादनम्। आचारस्य सुखपरत्वमपि स्वीकृत्य दुःखमेलनम्। पुण्यपापेति ॥ ननु सदाचारो विहितः दुराचारश्च निषिद्ध इति यदि नेष्यते, तर्हि तत्परिशीलनं व्यर्थम्। यदीष्यते, तयोरप्यदृष्टाधायकत्वात् पुण्यपापरूपत्वमेवेति को विशेषः ॥ नैवम्। कर्माचारविभागवाक्यानुसारात् फलापेक्षायां सत्यामसत्यामपि अवश्यकर्तव्यं यत् स आचारः, तदनाचरणं दुराचारः। आवश्यकत्वाभावेऽपि स्वापेक्षितमुद्दिश्य क्रियमाणं पुण्यम्, निषिद्धं कर्म च पापमिति स्वीकार्यमिति ॥ ९ ॥

स्मृतिविहितस्येति स्मृतिपदं वेदविहितस्याचारशब्दव्यवह्रियमाणस्यापि वेदप्रामाण्यायोगात् पुण्यकर्मत्वमेवेष्यते, स्मृतिविहितस्तु वेदमूलकत्वाभावचिन्तया कश्चित् स्यादुपेक्ष्य इति विवेचनार्थम्। ननु तदपेक्षत्वं न दर्शादेः प्रयाजाद्यपेक्षत्ववत् क्रत्वर्थतया, प्रमाणाभावात्, तथासति तद्वदेव पुण्यकर्मान्तर्भावात् पार्थक्यायोगाच्चेत्यत्र पुरुषशेषतयोपयोगमाह आचारवत एवेति। सर्वकर्मसु श्रौतस्मार्तकाम्याकाम्यसर्वकर्मसु। एवं नित्यकर्मणोऽपि ग्रहणं मनसिकृत्यैव पुनन्तीति शब्दप्रयोगः। वेदाः वेदतदर्थाः जपअनुष्ठानविषयाः न पुनन्ति न पापक्षयादिफलहेतवो भवन्ति। 'आचारप्रभवो धर्मः धर्मस्य प्रभुरच्युतः' इति स्मरणात् आचारवत्पुरुषानुष्ठितस्य धर्मस्य फलप्रदोऽच्युतः इति, आचारस्य पृथक्फलाभावः कर्मण एव सुखादिहेतुत्वं चावगम्यत इति 'न पुनन्ति' इत्यत्र काम्याकाम्यसर्वविवक्षा युक्ता। 'अपि चेत् सुदुराचारो भजते मामनन्यभाक्' इत्यत्र अपिशब्दात् सदाचारस्यावश्यकत्वम्, 'क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति' इति उपरि क्रमेण सदाचारमूलधर्मलाभ-दुराचारनिवृत्तिवचनात् निवृत्तिधर्मो भक्तियोगादिर्नियमेन सदाचारसंपाद्यसमृद्धिः, फलान्तरार्थप्रवृत्तिधर्मास्तु ज्ञानतारतम्यमिवाऽऽचारतारतम्यमप्यपेक्ष्य यथाकथञ्चिदुच्चनीचं फलेयुरिति वैषम्यं मनसि निधाय पुनन्तीति पापक्षयो विशिष्य गृहीत इव।

सुकृतदुष्कृते एवेति तु बादरिः ॥ ३ । १ । ११ ॥

**पुण्यं कर्माचरति, पापं कर्माचरति इति कर्मणि चरतेः प्रयोगात्, पृथङ्निर्देशस्य च प्रत्यक्षश्रुतिसिद्ध-अचारानुमितश्रुतिसिद्धविषयत्वेन गोबलीवर्दन्यायेनोपपत्तेः, मुख्ये संभवति न लक्षणा न्याय्येति सुकृतदुष्कृते एव चरणशब्दाभिधेये इति बादरिराचार्यो मन्यते । अत्र बादरिमतमेव स्वमतम्; आचारानुमितश्रुतिविहितसन्ध्यावन्दनादेः कर्मान्तराधिकारसं(पा)पादनं फलमिति तु स्वीकृतम् । अतः सानुशया एव प्रत्यवरोहन्ति ॥** इति कृतात्ययाधिकरणम् ॥

७१. अनिष्टादिकार्यधिकरणम् ३-१-३ ॥

अनिष्टादिकारिणामपि [च] श्रुतम् ॥ ३ । १ । १२ ॥

**केवलेष्टापूर्तदत्तकारिणः चन्द्रमसं गत्वा सानुशया एव निवर्तन्त इत्युक्तम्; इदानीमनिष्टादिकारिणोऽपि चन्द्रमसं गच्छन्ति, नेति चिन्त्यते । ये विहितं न कुर्वन्ति, निषिद्धं च कुर्वन्ति -ते उभयेऽपि पापकर्माणोऽनिष्टादिकारिणः। किं युक्तम्? तेऽपि चन्द्रमसं गच्छन्तीति । कुतः? तेषामपि हि तद्गमनं श्रुतम्;** (कौषी. १-२) **"ये वै के चास्माल्लोकात् प्रयन्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति" इति अविशेषेण सर्वेषामेव गतिश्रवणात् ॥ १२ ॥**

---

नित्यस्याग्निहोत्रादेः प्रयोगविशेषे काम्यत्ववत्, 'प्राजापत्यं गृहस्थानां ब्राह्मं संन्यासिनां स्मृतम्' इत्येवमाश्रमधर्माणां नित्यानामेव कामनासत्त्वे लोकविशेषप्रापकत्ववत् आचारविशेषाणां योग्यताधायकानामपि पृथक्फलहेतुत्वस्यापि संभवेऽपि-अनादिसंचितप्रारब्धकर्मव्यूहस्य कार्त्स्न्येनाभावोऽवरोहति जीवे नैव संभाव्य **इति,** प्रकृते तदविवक्षायां प्रमाणं नास्तीति च चरणपदस्य कर्मसामान्यपरत्वमेव युक्तम् ॥ १० ॥

कर्मत्वं धर्माचारसाधारणं चरणशब्दशक्यतावच्छेदकमेव; न तु लक्ष्यतावच्छेदकम् । एवञ्च सुकृतदुष्कृते एव रमणीयचरणकपूयचरणशब्दवाच्ये, न तु कार्ष्णाजिनमत इव लक्ष्ये इति बादरिमतमाह **सुकृतेति । पृथाङ्निर्देशस्य ।** 'अनवद्यानि कर्माणि, सुचरितानि' इत्येवंरूपस्य । **प्रत्यक्षश्रुतीति ।** न तु आचारतदतिरिक्तविषयकत्वेन । **मुख्ये संभवतीति;** मुख्यत्वे संभवतीत्यर्थः । आचारानर्थक्यपरिहारप्रकारः कार्ष्णाजिन्युक्तः सर्वसंमत इत्याह **आचारेति ॥ ११ ॥**

चरितधर्मणां चन्द्रलोकादवरोहतां कर्मानुगुणयोनिप्राप्तिरुक्ता । अन्येषां सुखावहचन्द्रमण्डलप्राप्तिरपि नेति महत् कष्टमिति ज्ञापयितुं तृतीयमधिकरणम् । **इष्टादिकारिणामेव चन्द्रमण्डलादवरोह इति न;** अन्येषामपि तत्र गमनश्रवणादित्याक्षेपेणाधिकरणप्रवृत्तिः । सर्वपदाघटितयत्किञ्चशब्दघटिते, 'यत्किञ्चेह करोत्ययम्' इति वाक्येऽर्थसंकोचेऽपि सर्वपदघटित प्रकृतवाक्येऽर्थसंकोचो न युक्त इति चाऽऽक्षेपः । इष्टादिकारिणः यागाद्यनुष्ठायिनः । तद्भिन्नाः द्विविधाः विहिताचरणरहिताः निषिद्धकारिणश्च । अत्र 'य इह कपूयचरणाः' इति वाक्यं पूर्वोक्तम् अनिष्टादिकारिभूत-चन्द्रलोकगतपुरुषविषयकमपि स्यादिति च शंका । तदर्थं भूमौ जन्म सर्वं चन्द्रमण्डलादवरोहपूर्वकमेव वा, अन्यथापि वेति विचारोऽप्यत्र । तृतीयस्थानस्थितैरदोलोकासंपूर्तिवचनं तत्र तेषां सुखानुभवार्थसमीचीनस्थित्यभावमात्रपरमिति पूर्वपक्ष्याशयः ।

**एवं तर्हि सुकृतदुष्कृतकारिणोरुभयोरप्यविशिष्टैव गतिः स्यात्; नेत्याह—**

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ ३ । १ । १३ ॥**

तुशब्दः **शङ्कां** व्यावर्तयति। इतरेषाम्—**अनिष्टादिकारिणां** चन्द्रारोहावरोहौ संयमने **यमशासने तत्प्रयुक्तयातनाः अनुभूयैव; नान्यथा।** कुतः? तद्गतिदर्शनात्। **दृश्यते हि पापकर्मणां यमवश्यतया तद्गमनम्,** (कठ. १-२-६) '**अयं लोको नास्ति [न] पर इति मानी पुनःपुनर्वशमापद्यते मे**', (आरण. २-१) '**वैवस्वतं संगमनं जनानां यमं राजानम्**" **इत्यादिषु ॥ १३ ॥**

---

सूत्रे **अपि**र्विरोधे। अनिष्टादिकारिणां चन्द्रमण्डले भोगाभावेऽपात्यर्थः। **च**कार इष्टादिकारिणां विद्यानिष्ठानाञ्च समुच्चये ॥ १२ ॥

ननु पापिनामपि चन्द्रप्राप्तिश्चेत, नरकानुभवो न स्यात्। नरकप्राप्तिर्हि तेषां पूर्वं वा पश्चाद्वा। नाद्यः, चन्द्रमसमेवेति गत्यन्तरनिषेधात्। नान्त्यः; 'एतमेवाध्वानं पुनर्निवर्तन्ते इति श्रुतेः; तदा पञ्चमाहुत्यभावात् अजननप्रसंगाच्चेति शंकां दर्शयति **एवं तर्ही**ति। 'चन्द्रमसमेव ते सर्वे' इत्यत्र **एव**कारः, सर्व एव चन्द्रमसमिति वा, चन्द्रमसं गच्छन्त्येवेति वाऽन्वेति। अतः पूर्वं नरकगतिः, पश्चाच्चन्द्रगमनमिति भावः। **शङ्कां** गत्यविशेषशङ्काम्। परमते एतदारभ्य सिद्धान्तसूत्रत्वात् **तु**शब्दः पूर्वपक्षव्यावृत्त्यर्थः, न त्वस्मन्मते; उपरि **तु**शब्दघटितसूत्रं यावत् पूर्वपक्षसूत्रत्वात्। सूत्रे यमयातनानुभवानन्तरमारोहस्योच्यमानत्वात् तस्य यमलोकारोहरूपत्वायोगात् अनुभवात् प्रागेवाऽऽरोहस्य वक्तव्यत्वात्, अधःस्थेषु नरकेषु आरोहवचनाञ्जस्याभावाच्च **आरोहावरोहौ** चन्द्रलोकविषयौ वाच्याविति पूर्वपक्षसूत्रमेवेदम्। यमराजधान्याः संयमनीनामकत्वेऽपि **संयमने** इत्यस्य यमालय इति नार्थः; तं गतस्यापि नचिकेतःप्रभृतेः यातनानुभवाभावात्। भावे ल्युटः स्वरसत्वाच्च। अतो यमशासने इति व्याख्याय सप्तम्यर्थमाह **तत्प्रयुक्ते**ति। अथवा यमसदन इत्येव तदर्थः! शासनाभावे यातना नेति, शासनभेदेन यातनानुभववैविध्यमिति च ज्ञापनाय स्वयं **यमशासने** इति पूरणं कृतम्। सप्तम्यत्र स्वरसा। अत एव **तत्रापी**ति सूत्रावतरणे **कथं यमसदनप्राप्ति**रिति भाषिष्यते। '**अयं लोको नास्ति पर**' इत्येव कठश्रुतिपाठः। अयं मर्त्यलोक एवास्ति, न परलोक इति मन्यमानो यमवश्य इत्युच्यत इह। **टीकायां** तु, 'अयं लोको नास्ति न पर' इति पठित्वा, 'अत्रामुत्र च सुखं नास्ती' इति व्याख्यातम्। वित्तमोहेन मूढस्य प्रस्तुतत्वात् तस्य प्रत्यक्षलोकाभावबुद्ध्ययोगात् सर्वमिथ्यात्ववादित्वादिरूपार्थान्तरवर्णनासंभवात्। **वित्तार्थं** पर्यटतः सुखाभावस्य सुवचत्वाच्च। तदनुसारेण नञ्घटितपाठ एव भाष्येऽप्यनुवृत्तः। तदा **इति मानी** इत्यस्य एवं सुखरहितो **मानी अहंकारी यमवश्य** इति व्याख्यायते। **वशमापद्यत** इत्यनेन यातनानुभावनमेव विवक्षितम्; स्वारस्यात्। '**यो ब्राह्मणायापगुरते, तं शतेन यातयात्**' इत्यादिश्रुतौ यातनाऽप्युक्ताऽस्ति। **वैवस्वतं**-सूर्यपुत्रम्। **संगमनं** लयकारणम्; स्वलोकसंगमहेतुमिति वा ॥ १३ ॥

स्मरन्ति च ॥ ३ । १ । १४ ॥

**स्मरन्ति च सर्वेषां यमवश्यतां पराशरादयः,** (वि. पु. ३-७-५) **"सर्वे चैते वशं यान्ति यमस्य भगवन् किल" इत्यादिषु ॥ १४ ॥**

अपि सप्त ॥ ३ । १ । १५ ॥

**पापकर्मणां गन्तव्यत्वेन रौरवादीन् सप्त नरकानपि स्मरन्ति ॥ १५ ॥**

**ननु सप्तसु लोकेषु गच्छतां कथं यमसदनप्राप्तिः ?** अत आह—

तत्रापि तद्व्यापारादविरोधः ॥ ३ । १ । १६ ॥

**तेष्वपि सप्तसु यमाज्ञयैव गमनादविरोधः ॥ १६ ॥**

---

**स्मरन्ति चेति** । ननु व्यर्थान्येतदादीनि सूत्राणि ; सिद्धान्तिना नरकादेरङ्गीकृतत्वेनाव्युत्पाद-नीयत्वादिति चेत्—एषां सिद्धान्तसूत्रत्वमतेऽपि वैयर्थ्यमेव ; पूर्वपक्षिणाऽपि सर्वस्येष्टत्वात् । नन्वस्तु तर्हि पूर्वपक्षद्वयम् । प्रथमसूत्रेण प्रथमः पूर्वपक्षः कृतः । तदाशयस्तु—देवयानपितृयाणमार्ग-तद्गम्यलोक-द्वयमात्रकथनादिह तृतीयस्थानगतानां लोकान्तरगमनप्रतीत्यभावाच्च नरकादिकथनमर्थवादमात्रम् ; पापि-भिश्चन्द्रलोकमारुह्यावरुह्य भूमावेव पापफलमनुभाव्यमिति । द्वितीयसूत्रमारभ्य द्वितीयपूर्वपक्षः । **तुशब्दः** प्रथमपक्षनिरासाय । पूर्वाभिसंहितनरकतद्यातनाद्यभावनिरसनायैव सफलानि सर्वाणि सूत्राणि । तृतीयश्च सिद्धान्तपक्षः **विद्येति** सूत्रेणोच्यत इति चेत्—उच्यते । बहुप्रमाणसिद्धनरकाद्यपलापेन पूर्वपक्षस्यानुचितत्वात् पक्षद्वयं नाद्रियत इति । न च सूत्रवैयर्थ्यम्, अवैयर्थ्यानुगुणमेव भाष्ये व्याख्यातत्वात् । तदुच्यते—भाष्ये 'सर्वे चैते' इति विष्णुपुराणतृतीयांशगतः श्लोकः किमित्युदाहृतः । द्वितीयांश एव नरकवि-भाग-यातनाप्रकारादिप्रपञ्चनात् तत्रत्यश्लोकानामेवोदाहार्यत्वात् । तथा, **स्मरन्ति च सर्वेषामिति सर्वपद-**मप्यवधेयम् । अतः यातनानुभवानन्तरस्य चन्द्रलोकारोहस्य प्रागुक्तस्य प्रतिष्ठापनार्थमिदं सूत्रमिति भाष्या-शयः । ये इष्टादिकारिण एव ते चन्द्रलोकमेव गच्छन्ति ; ये पापकारिण एव ते संयमनं गत्वा चन्द्रं गच्छन्तीत्युक्तं युक्तम् ; इष्टादिकारिण एव ये पापकारिणोऽपि भवन्ति, तेषां विषये यातनानुभव-देवलोक-गमनयोः क्रमिकत्वावगमात् तत्तौल्यात् । न च तेषां यमावश्यत्वम्, सर्वेषामेव तद्वश्यत्वात् । तदत्र तृतीयांशे स्पष्टमुच्यत इति पूर्वापरवाक्यग्रहणेनावसेयमिति । तत्रेमे श्लोकाः—"अङ्गुलस्याष्टमो भागो न सोऽस्ति मुनिसत्तम ! । न सन्ति प्राणिनो यत्र कर्मबन्धनिबन्धनाः । सर्वे चैते वशं यान्ति यमस्य भगवन् किल । आयुषोऽन्ते ततो यान्ति यातनास्तत्प्रचोदिताः । यातनाभ्यः परिभ्रष्टाः देवाद्यास्वथ योनिषु । जन्तवः परिवर्तन्ते शास्त्राणामेष निर्णयः" इति । अतः पापिनां यातनानुभवानन्तरारोहवर्णनं युक्तमिति । अत्र **सर्वे** इति पदं वैष्णवव्यतिरिक्तसर्वग्राहीति तत्प्रकरण एव व्यक्तम् । तेषां तदवश्यत्वकथनार्थत्वात् **प्रकरणस्य** ॥

**अपि सप्त** । न केवलं यमसदने, अन्येष्वप्यनुभवन्तीति भावः ॥ १५ ॥

अन्यत्र स्थिताः अन्ये शासितारोऽपि यमाधीना एवेति सर्वं संयमनमेवेत्याशयेनाह **तत्रापीति** ।

अतोऽनिष्टादिकारिणामपि यमलोकं प्राप्य स्वकर्मानुरूपं यातनाश्चानुभूय पश्चाच्चन्द्रारोहावरोहौ स्तः इति प्राप्ते उच्यते—

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३ । १ । १७ ॥

तुशब्दः पक्षव्यावृत्त्यर्थः । अनिष्टादिकारिणामपि चन्द्रप्राप्तिरस्तीत्येतन्नोपपद्यते । कुतः? विद्याकर्मणोरिति । विद्याकर्मणोः फलभोगार्थत्वात् देवयानपितृयाणयोः । एतदुक्तं भवति—अनिष्टादिकारिणां यथा विद्याविधुरत्वात् देवयानेन पथा गमनं न संभवति; तद्वदेवेष्टापूर्तदत्तविधुरत्वात् पितृयाणेन चन्द्रगमनमपि न संभवति इति । देवयानपितृयाणयोः विद्याविषयत्वं पुण्यकर्मविषयत्वं च कथमवगम्यत इति चेत्—प्रकृतत्वात् तयोः । प्रकृता हि देवयाने विद्या; पितृयाणे च कर्म, (छा. ५ १०-१) "तद्य इत्थं विदुः ये चेमे, अरण्ये श्रद्धा तप इत्युपासते" इत्युक्त्वा, "तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः" इत्यादिना देवयानवचनात्; "अथ ये इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते" इत्युक्त्वा, "ते धूममभिसंभवन्ति" इत्यादिना पितृयाणवचनाच्च । "ये वै के चास्माल्लोकात् प्रयन्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति" इत्येतदपि वचनम्; 'ये इष्टादिकारिणः, ते सर्वे' इति परिणेयम् ॥१७॥

---

पूर्वपक्षं निगमयति अत इति सर्वेषां यमवश्यत्वस्य गतिभेदस्य च समर्थनादित्यर्थः ॥ १६ ॥

**विद्याकर्मणोरिति** षष्ठ्यर्थो विषयत्वम् । **इतिशब्दो** हेतौ । देवयानपितृयाणयोरित्यध्याहारः । तयोर्विद्याकर्मविषयकत्वमिति हेतोरित्यर्थः । देवयानपितृयाणे नानिष्टादिकारिमार्गाविति प्रतिज्ञा अर्थसिद्धा । तद्विषयकत्वञ्च तज्जन्यफलभोगार्थत्वम् । विद्याकर्मविषयकत्वमिति हेतुं साधयति प्रकृतत्वादिति । पूर्वपक्षिणा अनिष्टादिकारिविषये देवयानस्य शंकितत्वाभावात् सूत्रे विद्याकथनं दृष्टान्तार्थमित्याशङ्क्य विवृणोति **एतदुक्तं भवतीति** । तर्हि **सर्वे** इत्यस्य निर्वाहः कथमित्यत्राह **ये** इति । **परिणेयम्** संकुचितार्थकं ग्राह्यम् । इदानीञ्च एवकारो नान्यत्र नेय इत्यौचित्यम् ।

इदमत्र बोध्यम्—'ये वै के च—चन्द्रमसमेव' इति वाक्यं किमर्थं प्रवृत्तमिति विचार्यम् । चित्रो नाम राजा याजनाय गौतममारुणिं वव्रे । स पुत्रं श्वेतकेतुं प्रजिघाय । स पप्रच्छ । याजनेन भवताऽहं कं लोकं प्रापणीय इति किमिदं जानासीति । स नाजानात् । पितरमासाद्य पप्रच्छ । सोऽप्यज्ञातवान् राजानमेत्य बोधनीयोऽस्मीति प्रार्थयामास । तदा राजा तमेवमाह—इतः प्रयन्तः सर्वे चन्द्रमसमेव गच्छन्ति । तदधीनौ चन्द्रस्य वृद्धिक्षयौ । तेषु यः प्रतिवचनं यथावद् ददाति, तमुपरि गन्तुमनुमन्यते । एवमनुमतश्च देवयानं प्रतिपद्यते । अन्यं वर्षादिद्वारा भुवं प्रापयति इत्युक्तं पर्यङ्कविद्यायाम् । अनेन देवयानगामिनामपि चन्द्रलोकप्राप्तेरुक्तत्वात्, ये वै के चेति विद्यानिष्ठा अपि कर्मनिष्ठा इव ग्राह्या इति ज्ञायते । परंतु उपक्रमे याजनप्राप्यस्य स्थानस्याध्वनश्च प्रस्तुतत्वात् चन्द्रलोकं प्राप्तेन चन्द्रपोषणस्योपरि उक्तत्वाच्च नायं केवलविद्यानिष्ठः, किंतु तदुचितकर्मविशेषप्रवृत्तोऽपीति गम्यते । इदमपि मनसिकृत्य ये वै केचेति वाक्यप्रकरणप्रमेयमधिगमयितुं सूत्रे **विद्याकर्मणोरिति** प्रयुक्तमिति ज्ञायते ॥

**ननु पापकर्मणां चन्द्रगमनाभावे पञ्चमाहुत्यसंभवात् शरीरारम्भ एव नोपपद्यते। "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति हि शरीरारम्भः श्रूयते। सा चाऽऽहुतिश्चन्द्रप्राप्तिपूर्विकैवेति दर्शितम्। अतः शरीरारम्भायैव तेषामपि चन्द्रारोहावरोहौ अवश्याभ्युपेत्यावित्यत आह—**

न तृतीये तथोपलब्धेः ॥ ३ । १ । १८ ॥

**तृतीय[स्थ]स्थानस्य शरीरारम्भाय न पञ्चमाहुत्यपेक्षा। कुतः?** तथोपलब्धेः। तृतीयस्थान- **शब्देन केवलपापकर्माण उच्यन्ते, तेषां देहारम्भे पञ्चमाहुत्यनपेक्षत्वमुपलभ्यते।** (छा. ५-३-३) **"वेत्थ यथा केनासौ लोको न संपूर्यते" इत्यस्य प्रश्नस्य प्रतिवचने,** (छा. ५-१०. ८) **"अथैतयोः पथोर्न कतरेण चन, तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्वम्रियस्वेति। एतत् तृतीयं स्थानम्। तेनासौ लोको न संपूर्यते" इति तृतीयस्थानस्य द्युलोकारोहावरोहाभावेन द्युलोकासंपूर्तिवचनादस्य तृतीयस्थानस्य शरीरारम्भाय न पञ्चमाहुत्यपेक्षा। "पञ्चम्यामाहुतौ" इति च अपां पञ्चमाग्निसंबन्धस्य पुरुषवचस्त्वहेतुत्वमात्रं प्रतिपादयति; नान्यन्निवारयति, अवधारणाश्रवणात् ॥ १८ ॥**

स्मर्यतेऽपि च लोके ॥ ३ । १ । १९ ॥

---

तथाच केवलविद्यानिष्ठस्यार्चिरादिमार्गमध्ये चन्द्रप्राप्तेः इष्टादिकारिणश्च धूमादिमार्गेण भोगार्थं चन्द्रप्राप्तेः प्रसिद्धत्वात् कौषीतकिब्राह्मणे चात्र विद्याकर्मोभसाध्यतया चन्द्रप्राप्तिदेवयानप्राप्तिद्वयस्यैकाधिकारिविषये कथनात् विद्याकर्मविषय एव चन्द्रप्राप्तिः, न तदभावे इति। तदनुसारेण चेह—**इति** प्रकृतपञ्चाग्निविद्योक्तरीत्या, पर्यङ्कविद्यायां ये वै केचेति चन्द्रप्राप्तिरपि विद्याकर्मविषयिण्येव। सर्वशब्दस्य प्रकृतसर्वपरत्वं हि प्रसिद्धमित्यपि सूत्रार्थो भवति। अभिप्रायस्त्वेक एव। एवञ्च भाष्ये, ये वै केचेत्यस्येष्टादिकारिमात्रविषयत्वकथनम्, प्रकृतस्य विदुषोऽपि चन्द्रप्राप्त्यर्थेष्टकारित्वादेव ग्रहणं भवितुमर्हतीत्याशयेनेति। **अधिकरणसारावलिश्लोक.** (५०८), **परिष्कारश्च** द्रष्टव्यौ॥ १७॥

प्रयन्तः सर्वे चन्द्रारोहिणः, शरीरं सर्वं पञ्चमाहुतिजमिति नियमद्वयस्यापि भङ्गः प्रदर्श्यते उपरि। **स्थान**शब्दः प्रकृतभूतवा**चित**च्छब्दसामानाधिकरण्यात्, 'तेनासौ लोको न संपूर्यत' इत्यसंपूरणकर्तृवाचितच्छब्दसमानार्थकत्वाच्च प्राणिपरमित्याशयेनाऽऽह **केवलपापकर्माण** इति। स्थानं संघः स्कन्धः कक्ष्या। मुमुक्षवः, इष्टादिकारिणः इति स्थानयोर्द्वयोरिदं तृतीयं केवलपापकारिभूतम्। **एतयोः पथोः** देवयानपितृयाणयोः **कतरेण चन** एकतरेणापि। **भूतानि** क्षुद्रजन्तवः। **जायस्वम्रियस्वेति।** क्रियासमभिहारे—पौनःपुन्ये लोण्मध्यमपुरुषः। पुनःपुनर्भवजननमरणविशिष्टानीत्यर्थः। शेषं **परिष्कारे। असौ लोकः** चन्द्रलोकः। **हेतुत्वे** ति। वैकल्पिकेषु हेतुषु अयमेक इति भावः॥ १८॥

ननु क्षुद्रजन्तूनां पुरुषशब्दवाच्यत्वाननुभवात् पुरुषरूपजन्म प्राप्स्यतामेव चन्द्रारोह इति शंकायां तदपि नेत्याह **स्मर्यत** इति सूत्रेण। एवमपि ये वैकेचेति वाक्ये संकोचस्यावश्यकत्वात् **चन्द्रमण्डलभोग-**

पुण्यकर्मणामपि केषाञ्चित् पञ्चमाहुत्यनपेक्षया देहारम्भो लोके स्मर्यते द्रौपदीधृष्टद्युम्नप्रभृतीनाम् ॥ १९ ॥

दर्शनाच्च ॥ ३ । १ । २० ॥

श्रुतावपि दृश्यते केषाञ्चित् पञ्चमाहुत्यनपेक्षया देहारम्भः, (छा. ६-३-१) "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम्" इति । एषु उद्भिज्जस्वेदजयोः भूतयोः पञ्चमाहुतिमन्तरेणोत्पत्तिर्दृश्यते ॥ २० ॥

ननु स्वेदजानामत्र न संकीर्तनमस्ति, "त्रीण्येव बीजानि" इति वचनात्; तत्राह—

तृतीयशब्दावरोधः संशोकजस्य । ३ । १ । २१ ॥

संशोकजस्य-स्वेदजस्यापि, "आण्डजं जीवजमुद्भिज्जम्" इत्यत्र तृतीयेनोद्भिज्जशब्देनावरोधः-संग्रहो विद्यत इत्यर्थः । अतः केवलपापकर्मणां चन्द्रप्राप्तिर्न संभवति ॥ २१ ॥

इति अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

---

शालिनः सर्वं एव सर्वशब्दग्राह्या इति ध्येयम् । सौत्रमपिशब्दं सार्थकयति **पुण्यकर्मणाम**पीति । पुण्यकर्मणां चन्द्रारोहार्हाणामेव यदि पञ्चमाहुतिनिरपेक्षता, किं पुनरन्येष्विति भावः । **लोके** इति पदं वेदमूलकस्मृतिव्यावृत्तये । द्रौपद्यादिजन्म प्रत्यक्षेण दृष्ट्वा हि स्मृत्वा व्यवहरन्तीति भावः । अनेन सूत्रेण अतिशयितपुण्यकर्माणः केचित् आहुतिपञ्चकसंबन्धं विनाप्यवरुह्य प्रादुर्भवन्तीत्यपि सूच्येत ॥ १९ ॥

प्रत्यक्षरूपदर्शनस्य पूर्वसूत्रत एव सिद्धत्वात् **दर्शन**पदं श्रुतिपरतया व्याख्याति **श्रुतावपी**ति । **आण्डजम्** । आर्षो दीर्घः । भूतानां अण्डजत्वादिभेदत्रयवत्त्वात् तद्बीजान्यपि त्रीणीत्यर्थः । अण्डजानामपि जीवजत्वेऽपि जीवच्छरीरात् साक्षादुत्पद्यमानत्वं जीवजन्याण्डाधीनजन्मनां न भवतीति जरायुजानामेव **जीवज**शब्देन ग्रहणम् । उद्भिज्जाः तरुगुल्माद्याः न पञ्चमाहुतिजन्याः । जननकाले भूम्युद्भेदनकरत्वात् उद्भित्त्वम् ॥ एवं ब्रह्मरुद्रमानसपुत्रादीनां सुबालादिश्रुतिदर्शितं पञ्चमाहुतिनिरपेक्षं जन्माप्यनुसंधेयम्; अन्येषामपि भूमौ प्रथमजातब्राह्मणादीनाम् । कौषीतकिब्राह्मणे चन्द्रलोकादवरोहतामेव, कीटो वा पतङ्गो वेति कीटादिभावस्यापि कथनात्, कीटादेः पञ्चमाहुतिं विनाऽप्युत्पत्तिश्च पूर्वोक्तनियमभङ्ग इति भाव्यम् । **दर्शन**पदमविशेषाद् वेदलोकोभयदर्शनपरं वा ॥ २० ॥

**तृतीये**ति । स्वेदजस्य न जीवजेऽन्तर्भावः पापोत्तरत्वायोनिजत्वादिना उद्भिज्जेऽन्तर्भावो युक्त इत्याशयः । ननु पूर्वं तृतीयं स्थानमित्युक्ततया **तृतीयशब्दे**ति तदुपस्थितिरेव भवति; न तु सूत्रकारस्पष्टादर्शितश्रुतिवाक्यगतशब्दान्तरमिति चेत्—न; तत्कथनस्यात्र वैयर्थ्यात् । तद्विचारस्य 'न तृतीये' इति सूत्रसमनन्तरमेव युक्तत्वाच्च । भाष्ये स्वेदजस्य स्वयं पूर्वमुक्तत्वात् तदनुगुणमवतरणं दर्शितम्, यथा शांकरे । अन्ततः सूत्रप्रवृत्तिस्तु—उद्भिज्जशब्देन स्थावरमात्रं न ग्राह्यम्; संशोकजस्यापि सद्भावात् । तस्मादयोनिजत्वेन तच्छब्दसंग्राह्यः स्वेदजोपि पञ्चमाहुतिनिरपेक्षः कश्चिदस्तीति पूर्वपक्षिणे प्रतिबोधनायेति । अत्रैव रीत्यां ग्रन्थतात्पर्यम् ॥ २१ ॥

७२. तत्स्वाभाव्यापत्त्यधिकरणम् ३-१-४ ॥

**तत्स्वाभाव्यापत्तिरुपपत्तेः । ३ । १ । २२ ॥**

**इष्टादिकारिणो भूतसूक्ष्मपरिष्वक्ताः सानुशयाश्चन्द्रमसोऽवरोहन्तीत्युक्तम् । अवरोह-प्रकारश्च,** (छा. ५-१० ५) **"अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशम् आकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति, अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति" इति वचनात् यथेतमनेवञ्च इत्युक्तम् । तत्रास्याऽऽकाशादिप्रतिपत्तौ देवमनुष्यादि-भाववत् आकाशादिभावः, उत तत्सादृश्यापत्तिमात्रम्** (तत्सादृश्यमात्रम्) (तत्साभाव्यापत्तिमात्रम्) **इति विशये—श्रद्धावस्थस्य सोमभाववदविशेषादाकाशादिभावः—इति प्राप्ते—**

**तत्स्वाभाव्यापत्तिरेवेत्युच्यते ।** तत्स्वाभाव्यापत्तिः—**तत्सादृश्यापत्तिरित्यर्थः । कुत एतत्?** उपपत्तेः । **सोमभावमनुष्यभावादौ हि सुखदुःखोपभोगाय तद्भावः । अत्र त्वाकाशादौ सुखदुः-**

केषाञ्चित् चन्द्रमण्डलप्राप्तिरपि नेत्युक्तम् । प्राप्य भुक्तवतामप्यवरोहणकाले चिरमचेतनप्रायत्वरूप-**हेय**भाव इतः परमुपस्यस्यते इति पेटिकान्तरम् । तत्र ये वै केचेति वाक्ये सर्वग्रहणायोगात् शब्दार्थान्य-थाभावस्यावश्यकत्वेऽपि वायुर्भूत्वेत्यादौ यथाश्रुतार्थत्यागो न युक्त इत्याक्षेपादनन्तरसंगतिः । **आकाशादि-भाव** इति । श्रुतावाकाशभावस्याश्रवणेऽपि वायुभावादिश्रवणादग्रप्रायनयेन भूयसांन्यायेन चैकरूप्य-माद्दत्यैवमुक्तम् । **श्रद्धावस्थस्येति** । प्रथमाहुतिरीतेः पञ्चम्यामाहुतावपि दर्शनादपि मध्ये तदैक-रूप्यं युक्तम् । **प्रवर्षतीति** मेघगतस्य वर्षणस्यास्मिन् वर्णनात् अस्य मेघत्वादिप्राप्तिरेवावसीयते । शब्दशक्यार्थत्यागायोगरूपयुक्तेः पोषकमिदं सर्वमिति भाव. । **तत्साभाव्यापत्तिरिति** परेषां सूत्रपाठः । साभाव्यं सभावत्वं समानधर्मकत्वम् । **स्वाभाव्येत्यस्मत्पाठः** । आकाशस्वरूपापत्तिर्वा आकाशभावापत्ति-र्वेति विचार्ये तद्भावापत्तिसमर्थनादयममि पाठो युक्त एव । तत्स्वरूपापत्तिर्नाम तदभेदः । अवरोहिजीवीय-भूतसूक्ष्मस्याकाशादिरूपेण परिणामात् तस्याकाशादिशरीरकत्वमेव तत् । तद्भावापत्तिर्नाम तद्धर्मसजातीय-धर्मप्राप्तिः । आकाशादिपृथग्भूतस्यापि आकाशादिसादृश्यसंभवात् तद्वारणायापृथग्भूतः सन् तत्साम्यापन्न इति वक्तव्यम् । एतदपृथग्भावस्यापि ज्ञापनार्थमेव, आकाशमाकाशाद्वायुमिति प्रथमं द्वितीयान्त-निर्देशः । अत्राकाशादिसंश्लेषविशेष इत्यभाषित्वा **सादृश्यापत्तिरित्येव** भाषणात् **साभाव्येति** पाठोऽपि भाष्यादृतः स्यात् । क्वचित् कोशे सोऽपि पाठो दृश्यते । **कल्पतरौ** स्वाभाव्येति पाठान्तरमुल्लिख्य साभाव्यपाठो **भामत्य**नुमत आदृतः । ननु किमिदं सादृश्यम्? न तावत् आकाशादिगतावस्थासदृशा-वस्थाश्रयत्वं जीवभूतसूक्ष्माणाम् ; पूर्वपक्ष्यविशेषप्रसङ्गात् । न हि पूर्वपक्षेऽपि तद्भूतसूक्ष्माणां महा-काशमहावायुरूपेण परिणामः संभवति । प्रागेवाकाशादे. स्थितत्वाच्च । अत आकाशत्वाद्यवस्थायाः महा-काशादिनिष्ठायाः भूतसूक्ष्मेष्वपि प्राप्तिरेव । एवञ्च गोद्वयगतावस्थयोः सादृश्यवत् , भूतसूक्ष्मीयाकाश-त्वादेः महाकाशादिगततत्सादृश्यमेवेति एतादृशांशशरीरकत्वमेवाकाशादिशरीरकत्वमस्य ; न तु महा-काशशरीरकत्वं पूर्वपक्षेऽपीति न कश्चिद् विशेषः स्यात् । अतोऽपृथग्भावातिरिक्तं सादृश्यं सिद्धान्ते दुर्वच-

स्वोपभोगाभावात् तद्भावानुपपत्तेस्तदापत्तिवचनं तत्संसर्गकृततत्सादृश्यापत्त्यभिप्रायम् ॥२२॥

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

७३. नातिचिराधिकरणम् ३-१-५ ॥

## नातिचिरेण विशेषात् । ३ । १ । २३ ॥

आकाशप्राप्तिप्रभृति यावद्व्रीह्यादिप्राप्ति किं तत्रतत्र नातिचिरं तिष्ठति, उतानियम इति विशये नियमहेत्वभावादनियमः—इति प्राप्ते उच्यते नातिचिरेण-इति । कुतः ? विशेषात्—उतरत्र व्रीह्यादिप्राप्तौ, (छा. ५-१०-६) "अतो वै खलु दुर्निष्प्रपतरम्" इति विशिष्य कृच्छ्रनिष्क्रमणत्वाभिधानात् पूर्वत्र ह्याकाशादिप्राप्तावचिरनिष्क्रमणं गम्यते । दुर्निष्प्रपतरमिति छान्दसः तशब्दलोपः; दुर्निष्प्रपततरम्—दुःखनिष्क्रमणतरमित्यर्थः ॥ २३ ॥

इति नातिचिराधिकरणम् ॥ ५ ॥

७४. अन्याधिष्ठिताधिकरणम् ६ ॥

## अन्याधिष्ठिते पूर्ववदभिलापात् । ३ । १ । २४ ॥

---

मिति चेत्—सत्यम् । अत एव तत्संसर्गकृततत्सादृश्यापत्तीति भाषितम् । नच सादृश्ये तच्छब्द-वाच्यत्वमेव । अत एव टीकायां धर्मान्तराभावचिन्तनया सादृश्यापत्तिः पृथङ्निर्देशानर्हं तत्संसर्गः इत्येवोक्तम् । सारावलौ च, "रेतस्सिग्भावनीत्या पृथगभिलपनानर्हता" इत्युक्तम्; संसर्गकृतेति भाष्यानुसारेण संसर्गसादृश्ययोर्भेदस्यावश्यकत्वात् । तदन्तर्भावात् तेनैव शब्देन व्यपदिश्यते । न तु तत्तुल्यपरिणाम इति । एवञ्च स्वाभाव्येति पाठमादृत्य आकाशादिगतस्य धर्मस्यात्र आपत्ति-रारोप इत्यपि सुवचम् ।

उपपत्तेः । आकाशादीनां प्रागेव स्थितत्वात् तद्रूपेण भूतसूक्ष्मपरिणामायोगात, अन्यथा आकाशभूतस्य पश्चात् वायुभावे पूर्णाकाशलोपप्रसंगाच्च तदयोगात् तत्तुल्यावस्थाश्रयत्वकल्पनस्य च कर्म-फलानुक्त्याऽनावश्यकत्वात् रेतस्सिग्भावे तुल्यावस्थाया दुर्वचत्वाच्च तत्तदन्तर्भावमात्रविवक्षयैव तत्तद्भावव्यव-हारस्य निर्वाहादिति भावः । प्रवर्षति इत्यस्य च वर्षं करोतीत्यर्थापेक्षया वर्षवदाचरतीत्यर्थो युक्तः॥२२॥

आकाशादिभावस्य श्रुतस्य यथाश्रुतरूपत्वायोगात अश्रुतार्थस्वीकारेऽपि, वाय्वादिभावे विलम्बत-दभावान्यतराश्रवणादन्यतरस्याश्रुतस्य नियमनं न युक्तम् । व्रीह्यादितो विलम्बनिष्क्रमणवर्णनमात्रेण पूर्वम-विलम्बनिष्क्रमणनियमकल्पना न भवति, तदनियमेऽपि तदुपपत्तेरिति पूर्वपक्षः । वै इत्यवधारणात् तरपः श्रवणाच्च पूर्वं तावद्विलम्बाभाव एवेति सिद्धान्तः । विशेषात् कचिदतिविलम्बश्रवणरूपात् । अनेन आ-काशादौ शैघ्र्येऽपि जडप्रायत्वानुवृत्त्यतिशयः व्रीह्यादिभावे स्थित इति जुगुप्सा आविष्क्रियते । दुर्नि-ष्प्रपतरम् । दुःखेन निष्प्रपत्यत इति खलि दुर्निष्प्रपतमिति रूपम् । ततः तरप् । तत्रैकतकारलोपः । प्रकारान्तरमुपनिषद्भाष्यादौ द्रष्टव्यम् ॥ २३ ॥

पूर्ववत् आकाशादिवाक्य इव; जन्महेतुकर्मनिर्देशं विनेति यावत् । जायन्ते इत्युक्तं जन्म

अवरोहन्तो जीवाः व्रीह्यादिभावेन जायन्त इति श्रूयते, (छा.५-१०-५) " मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते " इति । ते किमन्यैर्भोक्तृभिर्व्रीह्यादिशरीरैरधिष्ठितान् व्रीह्यादीन् आश्लिष्यन्ति, उत ते भोक्तारो व्रीह्यादिशरीरा जायन्त इति विशये—'जायन्ते' इति वचनात्, देवो जायते, मनुष्यो जायत इतिवद् व्रीह्यादिशरीरा एवेति प्राप्ते— उच्यते—अन्याधिष्ठिते इति । जीवान्तरेणाधिष्ठिते व्रीह्यादिशरीरे तेषां संश्लेषमात्रमेव । कुतः ? पूर्ववदभिलापात्—आकाशादिमेघपर्यन्तवत् केवलतद्भावाभिलापात् । यत्र हि भोक्तृत्वमभिप्रेतम्, तत्र तत्साधनभूतं कर्माभिलप्यते, ' रमणीयचरणाः...कपूयचरणाः" इति । इह चाऽऽकाशादिवन्नाभिलप्यते कर्म ; फलप्रदाने प्रवृत्तस्य स्वर्गोपभोग्यफलस्येष्टादेः कर्मणः स्वर्गोपभोगादेव समाप्तत्वात्, अनारब्धस्य 'रमणीयचरणाः...कपूयचरणाः" इति वक्ष्यमाणत्वात् मध्ये कर्मान्तराभावाच्च । अत आकाशादिभाववचनवद् व्रीह्यादिभावेन जन्मवचनमौपचारिकम् ॥ २४ ॥

अशुद्धमिति चेत्—न ; शब्दात् । ३ । १ । २५ ॥

नैतदस्ति— यदन्याधिष्ठिते व्रीह्यादिशरीरे संश्लेषमात्रम्, भोक्तृत्वहेत्वभावान्न व्रीह्यादिभावेन जन्म इति ; भोक्तृत्वहेतुसद्भावात् स्वर्गोपभोग्यफलमिष्टादिकर्मैव अशुद्धम्— पापमिश्रम् ; अग्नीषोमीयादिहिंसायुक्तत्वात् । हिंसा च (यजु - २-५-५) " न हिंस्यात् सर्वा भूतानि " इति निषिद्धत्वात् पापमेव ।

न चात्र पदाहवनीयादिवदुत्सर्गापवादभावः संभवति ; भिन्नविषयत्वात् । अग्नीषोमीयहिंसाविधिर्हिंसायाः क्रतूपकारकत्वं बोधयति ; ' न हिंस्यात् ' इति तु हिंसायाः प्रत्यवायफलत्वम् ॥

---

व्रीह्यादिगतमेवेत्याशयः । व्रीह्यादिशब्दा ओषधिविशेषपरा इति ओषध्यादिशब्दतो ज्ञायत एव ॥२४॥

ग) **अग्नीषोमीयः** अग्नीषोमीयं पशुमालभेतेति अग्नीषोमदेवतोद्देशेन विहितस्य ज्योतिष्टोमाङ्गस्य यागस्य पशुः । **पदाहवनीये**ति । पदे जुहोतीति वाक्येन सोमक्रयण्याः गोः पदन्यासे होमो विहितः ; एवमश्वमेधे अश्वपदन्यासेऽपि । ' यदाहवनीये जुहोती'ति अनारभ्याधीतवाक्येन होमसामान्ये आहवनीयो विहितः । तस्य पदहोमव्यतिरिक्तविषयकत्वं स्थितम् । तद्वत् सामान्यतो हिंसानिषेधवाक्यं विहिताग्नीषोमीयहिंसाव्यतिरिक्तविषयकम् ; अन्यथा तत्र प्रवृत्त्ययोगादिति भावः । निषेधस्येव विधेरपि पुरुषार्थत्वे विरोधः स्यात् । अत्र तु विधिः क्रत्वर्थः । अतः निषिद्धत्वात् हिंसा पुरुषस्य दोषमप्यावक्ष्यति, विहितत्वात क्रतोश्चोपकरिष्यतीति सांख्यमतेन प्रत्याह **भिन्नविषयत्वा**दिति । **विषयः** वाक्योद्देश्यः ; भिन्नोद्देश्यकत्वात् विधिनिषेधयोरित्यर्थ.। ननु यदर्थं निषेध्यम्, 'निषेधस्तदर्थ इति दृष्टम् । यथा दर्शप्रकरणे, 'नानृतं वदेत्' इति । अत्र दर्शान्तर्गतकिञ्चित्कार्यार्थमनृतवदनप्रसक्तौ तन्निषेधोऽपि दर्शसाद्गुण्यार्थः ; यथा वा, ' न तौ पशौ करोति ' इति आज्यभागाख्ययोः कर्मणोः क्रत्वर्थयोः निषेधोऽपि पशुयागादिरूपकत्वर्थः ।

अथोच्येत-अग्नीषोमीयादिषु विधितः प्रवृत्तेर्न तद्विषयं निषेधविधिरास्कन्दति ; रागप्राप्तविषयत्वात् तस्येति ॥ नैवम्। इहापि रागप्राप्तेरविशिष्टत्वात् । "स्वर्गकामो यजेत" इत्यादौ हि कामिनः कर्तव्यतया यागाद्युपदेशात् यागादेः "स्वर्गादिसाधनत्वमवगम्य फलरागत एव यागादौ प्रवर्तते। अग्नीषोमीयादिष्वपि तेषां फलसाधनभूतस्य यागादेरुपकारकत्वं शास्त्रादवगम्य रागादेव प्रवर्तते। लौकिक्यामपि हिंसायां केनचित् प्रमाणेन हिंसायाः स्वसमीहितसाधनत्वमवगम्य रागात् प्रवर्तत इति न कश्चन विशेषः । तथा नित्येष्वपि कर्मसु (आप. २-१-२-२) "सर्ववर्णानां स्वधर्मानुष्ठाने परम् अपरिमितं सुखम्" इत्यादिवचनात् फलसाधनत्वमवगम्य रागादेव प्रवृत्तिरिति तेषामप्यशुद्धियुक्तत्वम् ॥

अत इष्टादीनां पापमिश्रत्वेनाशुद्धियुक्तानां स्वर्गेऽनुभाव्यं फलं स्वर्गेऽनुभूय हिंसांशस्य

---

तदत्र निषेधस्यापि क्रत्वर्थता स्यात् इति चेन्न—तत्र क्रतुप्रकरणगतत्वात् निषेधस्य क्रत्वर्थत्वेऽपि, नहिंस्यादिति वाक्यस्यातथात्वेन क्रत्वर्थत्वायोगात् । असिद्धश्च स नियमः ; मांसभक्षणादीनां लौकिकानां दानहोमादीनां वैदिकानाञ्च पुरुषार्थानामपि, 'न मांसमश्नीयात्', 'दीक्षितो न ददाति, न जुहोति' इति क्रत्वर्थनिषेधस्येष्टत्वात्। तथैव क्रत्वर्थस्यापि निषेध्यस्य पुरुषार्थनिषेधसंभवात् । न चैवमग्नीषोमीयहिंसायां पुरुषो न प्रवर्तेतेति शंक्यम्—क्षुद्रफलोत्कटरागेण निषेधमुलङ्घ्य प्रवृत्तिदर्शनात् क्रतुफलस्वर्गादिलोभेन पुरुषार्थनिषेधोल्लङ्घनस्य कैमुत्यसिद्धत्वात् । अतो विशेषवाक्यस्य सामान्यवाक्यविषयव्यक्तिविषयकत्वमात्रेण नोत्सर्गापवादनयः ; किंतु विरोधे सति । हिंसाविषये तु न विरोध इति । एवं विमर्शेनैव निषेधस्य विधिप्राप्तविषयकत्वं विना रागप्राप्तमात्रविषयकत्ववर्णनस्यापि निर्युक्तिकत्वं स्थितम् । अथापि तथाविभजनमपि दुष्करमिति व्युत्पादनार्थं तं पक्षं शङ्कते **अथोच्येतेति** । **न कश्चन विशेष** इति । न च विध्यधीनरागप्राप्तेर्विलम्बितत्वात् लौकिकरागप्राप्तिमात्रग्रहणेन वाक्यार्थसंकोचो युक्तः; तथासति यत्र हिंसायां लोकतोऽपि रागप्राप्तिर्महता प्रयासेन, तदविषयकत्वस्यापि प्रसङ्गात् । **अपरिमितं सुखमिति** । एतेन—पुरुषार्थस्यैव निषेध इत्युक्तावपि, क्रत्वर्थस्याप्यन्ततः, 'फलञ्च पुरुषार्थत्वात्' इति न्यायेन पुरुष एव पर्यवसानात् आख्यातोपात्तकर्तृरूपपुरुषार्थत्वं साक्षाद्वा परम्परया वा सर्वस्यास्त्येवेति सर्वनिषेध एव युक्त इति ज्ञापितम् । **सुखमिति** अनिष्टपरिहारस्याप्युपलक्षणम् । मोक्षपर्यन्तसुखस्यात्र विवक्षितत्वात् अर्थतोऽपि तत्सिद्धिः । ननु विधिविषयस्यापि पापहेतुत्वे किमिति नित्यनैमित्तिकशास्त्रैस्तथाविधानम्, निर्दोषकर्ममात्रस्य तथा स्वेनोपदेशस्य युक्तत्वादिति चेन्न-सत्यपि तारतम्ये औषधद्रव्यकक्रियायामपि हिंसा भवत्येवेति सर्वस्यापि दुष्टत्वेवेति शास्त्रतात्पर्यात् । हिंसायुक्तनित्यकर्मसद्भावे नित्यस्यैव काम्यप्रयोगेण लाघवेन फलं प्राप्येतेति तात्पर्याच्च । तत् सिद्धं यथासांख्यं सर्वं कर्माशुद्धमिति ।

ननु व्रीह्यादिभावस्य कर्मफलत्वे उपरि रमणीयचरणादिवत् तत् निर्दिष्टं स्यात् । अनिर्देशात् व्रीह्यादिसंसर्गमात्रविवक्षा प्रतीयत इति पूर्वसूत्र एवोक्तत्वात् अशुद्धत्वेऽपि जन्मविवक्षाप्रसक्त्यभावात् किमनेन शुद्धाशुद्धत्वविचारेणेत्यत्राह **अत इष्टादीनामिति**। यत्कर्मफलभोगार्थं प्रेत्य प्रस्थितः, तदन्य-

**फलं व्रीह्यादिस्थावरभावेनानुभूयते । स्थावरभावं च पापफलं स्मरन्ति,** (मनु. १२·९) **"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति ।**

**अतो व्रीह्यादिभावेन भोगायानुशयिनो जायन्त इति चेत्**—

तन्न ; **कुतः ?** शब्दात्—**अग्नीषोमीयादेः संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात् । पशोर्हि संज्ञपननिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति,**(—) **"हिरण्य-**

---

कर्मफले प्राप्यमाणे कर्मनिर्देशस्यावश्यकत्वेऽपि प्रस्तुतकर्मफलस्यैवात्र कथ्यमानतया तदनुक्तिर्युक्तेति भावेन **अशुद्धमिति** पूर्वपक्षप्रवृत्तिरिति भावः ।

**हिंसात्वाभावशब्दादिति ।** यद्यप्यग्नीषोमीयादेः पशोः **संज्ञपनं** मारणं भवति-तथापि **न** सा हिंसा । तथाच, 'न हिंस्यात्' इत्युक्तहिंसासामान्ये एतदन्तर्भावप्रसक्त्यभावात् न प्रत्यवायहेतुत्वरूपमशुद्धत्वमिति भावः । नेयं हिंसेति केन शब्देन बोध्यत इति चेत्—हिंसाशब्दार्थो लोकव्युत्पत्तिसिद्धः । तत्र निविष्टं दलमत्र नास्तीति अस्य संज्ञपनस्य पशोरतिशयितफलहेतुत्वपरवचनादवसीयते । स्पष्टश्च, 'तस्माद् यज्ञे वधोऽवधः' इत्यादिः शब्दः । मरणानुकूलव्यापारो हिंसेति **तार्किकादिकृतं** वर्णनमसत्, मरणाहेतौ दुःखमात्रहेतौ व्यापारेऽपि हिंसाशब्दस्य बहुलं प्रयोगात्—'स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा भृशमिव प्रत्याह... ....एनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि....' (छा. ७.१५) इत्येवम् । तथाचातिशयिताभ्युदयासाधनं दुःखहेतुर्व्यापारो हिंसाशब्दार्थः । चिकित्सकव्यापारे हिंसाव्यवहाराभावात् तद्वारणाय लोकत एवेदृशविशिष्टव्यापाररूपार्थे व्युत्पत्तिरिति भावः। 'न म्रियसे' इति शब्दस्त्विह मरणाभावबोधकतया न ग्राह्यः । व्युत्पत्तिसिद्धमरणशब्दार्थस्यात्र प्रत्यक्षतया तदभावकथनस्यान्यतात्पर्यकत्वमेव ।

नन्वेवं भाष्ये उत्सर्गापवादपक्षनिरासादवगम्यते, सति तु हिंसाशब्दार्थत्वे सांख्यरीत्या स्यादेवाशुद्धत्वमिति । तथाचोत्सर्गापवादनयस्य नात्र प्रवृत्तिरिति भाष्याशये, सौत्रामणीष्टावनुमतं सुरापानं वामदेव्यसामोपासकीयं परस्त्रीग्रहणं सोमोच्छिष्टपानमित्यादिकं सुरापानादितत्तत्सामान्यनिषेधवाक्यविषयतया प्रत्यवायकरमेव स्यात् । एवञ्च तथाविधबह्वशुद्धफलतयाऽपि व्रीह्यादिजन्मापादानमपरिहृतमेव स्यादिति चेत्—उच्यते । उत्सर्गापवादन्यायस्यात्र प्रवृत्तेः सूत्रकारदिदर्शयिषितत्वे, नानुपपत्तेरित्येव सूत्रेण भाव्यम्; न तु **न शब्दात्** इति । अतः अशुद्ध्यभावबोधकशब्दस्य सत्त्वादशुद्धं न भवतीत्येव सूत्रतोऽवगम्यत इति शब्दप्रदर्शनमेव भाष्ये चिकीर्षितम् । यागीयसुरापानादौ सुरापानत्वाद्याकारसत्त्वेऽपि निर्दोषता निर्दोषत्वपरशब्दमादायोपपादनीया ; प्रकृताग्नीषोमीयसंज्ञपनादौ त्वीदृशवचनमपि पर्याप्तमित्याशयेन तत्त्वव्युत्पादनाय **हिंसात्वाभावशब्दादित्युक्तम् ।** किञ्च उत्सर्गापवादनयो यदि प्रवर्त्यते, तस्य सर्वथा निरसनं सूत्रभाष्याभिमतमिति न निर्बन्धः ; अक्लेशपरिहारकथनमात्राशयेनैवं पूर्वपक्षनिषेधात । **शांकरभाष्यादौ** उत्सर्गापवादनयप्रवृत्तिर्दर्शिता ; **परिमले** च सा न स्वीकृता । **गीताभाष्यतात्पर्यचन्द्रिकाया** (२-३१) **ञ्चैवं श्रीदेशिकचरणैः** संग्रहेणोपन्यस्तम्—" अनर्थपर्यवसितस्तादात्वि-

शरीर ऊर्ध्वः स्वर्गं लोकमेति " इत्यादिकम्। अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा; प्रत्युत रक्षणमेव। तथा च मन्त्रवर्णः, (तै. २-६-९) "न वा

---

कदुःखजनको व्यापारो हिंसा...... 'तस्माद् यज्ञे वधोऽवधः' इति—तत्रापि वध इति पामरदृष्ट्याऽनुवादः; अवध इति तत्त्वकथनम्। यद्यपि क्रत्वनुप्रविष्टानां सोमोच्छिष्टभक्षणप्रभृतीनां हिंसालक्षणवत् न लक्षणान्तरेण व्यवच्छेदः शक्यः—तथापि तेषां प्रत्यवायानाधायकत्ववचनबलादेव तथात्वमङ्गीकुर्मः; न पुनः क्रत्वर्थतया विधानमात्रेण। नन्वेवमुत्सर्गापवादन्यायस्य कीदृशो विषयः? तादृश एव, यत्र निरवकाशविशेषवाक्यविरोधादेव सावकाशसामान्यशब्दसंकोच इति निम्तरङ्गमेतत्" इति।

पदाहवनीयस्थले विरोधः सर्वेष्टः: वैधहिंसायां विरोधे विवदन्ते। हिंसात्वमभ्युपगम्यात्रेदं चिन्त्यते—'क्रतुप्रकरणगतनिषेधानां आख्यातेन कृतेरेवाभिधानात् कर्तुरनभिधानात् न पुरुषार्थत्वम्, अप्रकरणगतानां तु आख्यातेन कर्तुराक्षेपात् कर्तृभूतपुरुषार्थत्वम्' इत्यादिविचारस्तावत् तत्रत्यो न शोभनः; कर्तुरवाच्यत्वे वाच्यत्वे वा सर्वमत एव तत्र क्रत्वर्थत्वपुरुषार्थत्वयोर्व्यवस्थयैव वर्णनीयत्वात्। क्रत्वर्थानामपि परम्परया पुरुष एव पर्यवसानमिति पुरुषार्थत्वमस्त्येव। पुरुषोद्देशेन विहितत्वरूपमङ्गत्वमस्ति न वेत्यन्यदेतत्। तदत्र नहिंस्यादिति निषेधेन क्रत्वर्थहिंसाया अपि क्रोडीकारे, निषेध्याया हिंसायाः क्रतुद्वारा पुरुषार्थत्वात् निषेधस्यापि तदस्तु इति शङ्का कथं परिह्रियताम्। न च मांसभक्षणादेः पुरुषार्थस्य निषेध्यस्य निषेधः क्रत्वर्थो दृष्टः, तथा हिंसानिषेधोऽयं पुरुषार्थ एवास्त्विति वाच्यम्—तत्र निषेधस्य क्रतुप्रकरणस्थतया क्रत्वर्थत्वघटनवत्, अत्र निषेध्यस्य क्रत्वर्थतया निषेधेऽपि तस्योपस्थितस्य घटनाया एव युक्तत्वात्। एवञ्च विधिनिषेधयोर्विकल्पात् अग्नीषोमीयं विनैव क्रत्वनुष्ठानेऽपि न वैगुण्यमिति स्यात्। किञ्चास्य निषेधस्य केवलपुरुषार्थत्वेऽपि पुरुषस्यानिष्टमत्र कल्प्यमानं किं विधिबलावगतेष्टापेक्षयाऽधिकम्, अनधिकं वेति विचार्यम्। प्रतिषेधस्य प्राप्तिपूर्वकत्वात् प्राप्तिर्यादृशफलोद्देशेन, तादृशफलाधिकानिष्टापादकत्वस्यैव निषेधे सर्वत्र स्वीकृततया अग्नीषोमीयाधीनस्वर्गादप्यधिकत्वमनिष्टस्य संमन्तव्यम्। न खलु यागासंबन्धीदृशपशुहिंसायां तावदनिष्टमिष्टमस्ति। नो खलु तत्सदृशभूतहिंसायां क्रत्वनुप्रविष्टायां परं तदधिकानिष्टकल्पनं युज्यते। अधिकत्वे च पापस्य, व्रीह्यादिभावमात्रं फलमपर्याप्तमपि। अथानधिकमेवानिष्टमिति चेत्—निषेधस्य निवर्तकता न स्यात्। सर्वस्यापि कर्मणः सुखदुःखमिश्रतया तत्तारतम्यनिरूपणेनैव प्रवृत्तिनिवृत्त्यन्यतरविधानात्। अतो न तत् निषेधमुखेन ज्ञापनीयम्। यत्तु नित्यनैमित्तिकस्थलेऽपि पापक्षयः प्रत्यवायपरिहारो वा फलमस्तीति पुरुषार्थतैवेति—सत्यमेतत्; अथापि तदन्तर्गतहिंसायाः क्रतुद्वारा प्रत्यवायपरिहारकरत्ववत् निषेधबलात् प्रत्यवायवहत्वस्याप्यङ्गीकारे विरोधो दुष्परिहरः। कथं नु शास्त्रं प्रबलप्रत्यवायवहत्वं प्रत्यवायपरिहारकत्वञ्चैकस्यामेव हिंसायां परिकल्प्य पुरुषं बाधेत, अहिंसात्मकजपस्तोत्राद्यङ्गत एव कार्यनिर्वाहविधानसंभवात्। इदमपि शब्दादित्यत्र निगूढम्। एवमपि यदि निषेधो निरवकाशः स्यात्, अगत्या निर्वाहः कार्यः स्यात्। एवं काम्ये प्रायश्चित्तरूपे च पशुयागे श्रुतिः किं पुरुषमनुमन्यते, उत प्रेरयतीति विचारे—नाद्यः पक्षः; तत्तत्फलसाधनत्वस्य वाक्यान्तरेणाज्ञाततया पूर्वप्रवृत्तत्वा-

उ एतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिः सुगेभिः। यत्र यन्ति सुकृतो नापि दुष्कृतः तत्र त्वा देवः सविता दधातु" इति। चिकित्सकं च तादात्विकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति, पूजयन्ति च तज्ज्ञाः ॥ २५ ॥

इतश्चौपचारिकं व्रीह्यादिजन्मवचनम्—

रेतस्सिग्योगोऽथ ॥ ३ । १ । २६ ॥

व्रीह्यादिभाववचनानन्तरम्, "यो यो ह्यन्नमत्ति यो रेतः सिञ्चति, तद्भूय एव भवति" इति रेतस्सिग्भावोऽनुशयिनां श्रूयमाणो यथा तद्योगमात्रं प्रतिपादयति, तद्वत् व्रीह्यादिभावोऽपीत्यर्थः ॥ २६ ॥

योनेः शरीरम् ॥ ३ । १ । २७ ॥

योनिप्राप्तेः पश्चादेवानुशयिनां शरीरप्राप्तिः। तत्रैव सुखदुःखोपभोगसद्भावात्। ततः प्राक् आकाशादिप्राप्तिप्रभृति तद्योगमात्रमेवेत्यर्थः ॥२७॥ इति अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

भावेनानुमतेर्दुर्वचत्वात्। अतः कर्तव्यताबोधनादनिष्टाननुबन्धित्वमपि तत्तद्विधिसंमतम्। अन्यथा इदमेतत्साधनमित्येतावदेव ब्रूयात्; न तु विदध्यादिति। तस्मात् मानान्तराधिगतदुःखाधिकेष्टहेतुत्वपर्यवसायिनो विधेः मानान्तराधिगतेष्टाधिकदुःखहेतुत्वपर्यवसायिनश्च निषेधस्य मिथो विरोध एवेति सामान्यनिषेधो विशेषविहितव्यतिरिक्तविषयः, विधिशब्दादित्येतदेव रमणीयम् ॥ सुकृतः साधुकारिणः॥२५॥

अनुसहस्रे कश्चिदेव रेतस्सिक्; तदसंश्लेषे पुनर्व्रीह्यादिभावप्रतीक्षैवेति ज्ञापनाय द्वितीययच्छब्दे वीप्सोपेक्षा। तद्भूय एव भवति-भूयः पुनरपि तद्भवति रेतस्सिक् भवति; रेतस्सिक् संश्लिष्टो भवतीति यावत्। तदिति सामान्ये नपुंसकम्। अथवा तद्भूये रेतस्सिग्भावे रेतस्सिक्संश्लेषे इति यावत्; भवति जायते। एवकारेण अन्यदा जन्यभावात् दुर्निष्प्रपततरत्वमुपपादितम्। शेषं परिष्कारे। अथेत्यनेन पूर्वं वाय्वादिभाववत् पश्चात् रेतस्सिग्भावस्यापि संश्लेषरूपतया मध्येऽपि, व्रीह्यादीनां वर्षानन्तरजायमानतया जनिधातुप्रयोगेऽपि, अनुशयिनां व्रीह्यादिसंश्लेष एव युक्त इति दर्शितम्। भावः भावार्थकशब्दः ॥ २६ ॥

कियत्पर्यन्तं संश्लेषमात्रमित्यत्राह योनिरिति। रमणीयां योनिमित्यादिश्रुतमिदं पदम्। अविवादात् सूत्रवैयर्थ्यमिति शंकापरिहाराय सूत्रतात्पर्यमाह अत इति। तदेवं पूर्णा पञ्चाग्निविद्यैव वैराग्यवर्धनाय पादेऽस्मिन् प्रत्यधिकरणं विचारिता। तत् सिद्धं देवयानमप्राप्तवतां जन्ममरणप्रबन्धोऽयमनुच्छेद्य इति ॥

इति श्रीमद्वेदान्तरामानुज-यतीन्द्र-महादेशिकचरणारविन्दचञ्चरीकस्य श्रीमद्रङ्गरामानुज मुनीन्द्र-महादेशिकपदपद्मसेवासमधिगत सर्ववेदान्तार्थस्य वात्स्यश्रीशैल-सचक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे तृतीयप्रथमः ॥

श्रीमते रामानुजाय नमः ॥ शुभमस्तु ॥

श्रीः ॥ श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचिते (श्रीभाष्ये)

# श्री शा री र क मी मां सा भा ष्ये

तृतीयाध्याये द्वितीयः पादः

७५. सन्ध्याधिकरणम् ३-२-१ ॥ (बृ. ६-३)

## सन्ध्ये सृष्टिराह हि ॥ ३ । २ । १ ॥

**एवं कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं ख्यापितम्; इदानीमस्य स्वप्नावस्था परीक्ष्यते। स्वप्नमधिकृत्य श्रूयते,** (बृ. ६-३-१०) **"न तत्र रथा न रथयोगा न पन्थानो भवन्ति; अथ रथान् रथयोगान् पथः सृजते। न तत्राऽऽनन्दा मुदः प्रमुदो भवन्ति; अथाऽऽनन्दान् मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति; अथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता" इति।**

---

श्रीः ॥ श्रीमते रामानुजाय नमः ॥

भाष्यार्थदर्पणे तृतीये द्वितीयः ॥

ब्रह्मेतरविषयवैतृष्ण्याय दोषं निरूप्य ब्रह्मविषयतृष्णाजननाय तद्विभवो निरूपणीयः। वैतृष्ण्यञ्च संसारे संसारिजीवसंबन्धिसर्वावस्थादोषविवेके संवर्धत इति स्वप्नाद्यवस्था अत्र निरूप्यमाणा अपि यद्यपि पूर्वपाद एव निरूपणमर्हन्ति—अथापि जागरदशागतजन्मगतागताद्यर्थमेव पुरुषेण प्रयासस्य क्रियमाणत्वात् स प्रयासो न युक्त इति ज्ञापनार्थं प्रयासप्राप्यानुभवरूपं जागरं पृथक् पादे न्यरूपयत्। अवस्थान्तरेषु स्वप्नस्यैव तदनन्तरत्वात् स एव पूर्वमथ प्रस्तोतव्यः। तत्र, 'जन्माद्यस्य यतः' इति जाग्रद्दशागतप्रपञ्चकारणत्वस्यैव कथितत्वात् तत्र वैराग्ये पूर्वपादेनोत्पादिते, स्वप्नस्रष्टृत्वस्यैव कथनपूर्वकमेव तद्दशादोषस्य ज्ञापनीयताम्, स्रष्टृत्वस्य च भगवन्महिमरूपतया तत्तृष्णासंधुक्षणगुणान्तर्भावञ्च परिशील्य भगवद्गुणवर्णनेदम्पर एव पादे एतन्निवेशं रोचयामास। अतः क्रमादुपरितनावस्थानिरूपणमत्रैव संगतमासीत्। सर्वस्यामप्यस्यामवस्थायां जीवप्रयत्नविशेषाभावात परमात्मगुणातिशयप्रदर्शित्वमस्ति। विशिष्य च स्वप्ने, जागरव्यष्टिसृष्टेर्हिरण्यगर्भादिद्वारकत्वस्येव सद्वारकत्वस्यावश्यकत्वाभावात् भगवतः प्रद्युम्नस्यासाधारण एवायं तैजसस्वप्नसर्ग इत्यूहे तु सुतरामत्रैवैतत्संगतिः। एवमभिप्रेत्याह **एवमिति**।

**तत्र** संध्ये। 'तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवतः इदञ्च परलोकस्थानञ्च। संध्यं तृतीयं स्वप्नस्थानम्।' इति तस्य प्रकृतत्वात्। उक्तस्थानद्वयसंधिभवत्वात् स्वप्नस्य संध्यत्वम्। जागरसुष्वापसंधिभवत्वादपि संध्यत्वं लोकानुभवमनुरुध्योच्यते। विषयवाक्यस्यार्थः सिद्धान्ते भाषिष्यते। **आनन्दाः मुदः प्रमुदः** इति क्रमेण दर्शन-स्वकीयत्व बुद्धि-वस्तुविनियोगजन्यप्रीत्युपधायकाः अनुकूलविषया उच्यन्ते। **वेशान्ताः** वेशन्ताः पल्वलानि। छान्दसो दीर्घः। द्वितीयवाक्ये द्वितीयार्थे प्रथमा। **पूर्वाधिकरणे** जीवस्य श्रीह्यादिभावार्थं प्रयत्नाभावेऽपि अवर्जनीयतद्भावो वर्णितः। स्वप्ने परं तत्प्रयत्नः

तत्र संशयः—किमियं रथादिसृष्टिर्जीवेनैव क्रियते ; आहोस्विदीश्वरेण इति। किं युक्तम्? सन्ध्ये सृष्टिर्जीवेनेति। कुतः?—सन्ध्यं स्वप्नस्थानमुच्यते, "सन्ध्यं तृतीयं स्वप्नस्थानम्" इति वचनात्। सा तु जीवेनैव क्रियते। "सृजते; स हि कर्ता" इत्याह हि। स्वप्नदृक् जीव एव तत्र प्रतीयते ॥ १ ॥

**निर्मातारं चैके पुत्रादयश्च । ३ । २ । २ ॥**

किञ्च—एनं जीवं स्वप्ने कामानां निर्मातारमेके शाखिनोऽधीयते, (कठ. २-५-९)

---

संकल्परूपो भवितुमर्हतीति शंकनादनन्तरसंगतिर्बोध्या। **जीवेनैवेति**। ननु सूत्रे पूर्वपक्षे जीवस्य, सिद्धान्ते वा ब्रह्मणः कर्तृत्वकण्ठोक्त्यभावात् कथमेवं संशयः। प्रत्युत सृष्टिरित्येतावन्मात्रश्रवणात् सृष्टिरिति पूर्वपक्षः; न सृष्टिः, प्रतीतिरूपमायाख्यज्ञानमात्रमिति सिद्धान्त इत्येव सूत्रादवगम्यते। यदि सृष्टिरेष्टव्येत्याग्रहः, तर्हि सृष्ट्यभावपूर्वपक्षमुन्मूल्य कृत्वा सृष्टिस्थापनं प्रथमसूत्रे इत्युच्यताम्; तदनन्तरं जीवपरमात्मान्यतरसृज्यत्वविचारः पृथक् स्यादिति चेत्—उच्यते। पराभिध्यानादिसूत्रत्रयं स्वप्ने जीवसृज्यत्वासंभवनिरूपकमिति स्पष्टम्। तदनुरोधेन मायामात्रसूत्रे अनभिव्यक्तस्वरूपत्ववर्णनमपि जीवस्याशक्तिस्थापकमिति ज्ञायते। एवं सिद्धान्तस्य जीवसृज्यत्वनिषेधकत्वे सति तत्सृज्यत्वविषय एव पूर्वपक्ष इति स्वयमेव ज्ञायेतेति सूत्रकारेण जीवेनेति न प्रयुक्तम्। द्वितीयसूत्रे पुत्रादयश्चेति ससंबन्धिकपदबलादपि जीवलाभ इति मन्यते। तत्पदौचित्यायैव सर्वस्य सिद्धान्तसूत्रताऽपि नेष्टा। यद्यपि कर्तृविचारोपोद्घाततया पृथक् सृष्टिस्थापनमनेन सूत्रेणेति सुवचम्-अथापि पूर्वोक्तरीत्या संभवत्यैकाधिकरण्ये तन्मा भूदित्युपेक्षितम्। न च सूत्रे विधेयस्य सर्वात्मनाऽध्याहार इति दोषः; सृष्टिपदस्यैव विधेयसमर्पकत्वात्। तदयं सूत्रार्थः-संध्ये जीवकर्तृकसृष्टिकर्मविषयकं तथोच्यमानत्वादिति। सिद्धान्तसूत्रे च संध्यं मायामात्रम्, न जीवसृष्टविषयकमित्युच्यत इत्यैकरस्यम् ॥ **कुत** इति पदस्य **क्रियते** इत्येतदनन्तरमनुकर्षः।

ननु स हि कर्तेत्यस्य श्रुतिप्रसिद्धः परमात्मा कर्तेत्यर्थ एव स्वरस इति कथं जीवकर्तृत्वप्रतीतिरित्यत्राह **स्वप्नदृगिति**। एतल्लोकपरलोकोभयानुभाव्यमपि संध्ये पश्यतीति पूर्वमुक्त्वा, 'स यत्र प्रस्विपिती'ति तमेव प्रस्तुत्य, 'स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्विपिति; अत्रायं पुरुषः स्वयंज्योतिर्भवति' इति स्वप्नमेव निर्माय स्वप्नमनुभवतीत्युपवर्ण्य स्वयंज्योतिष्ट्वं स्थापितम्। यदि जागर इवेश्वरसृष्टमेवानुभवेत्, कथमत्रास्य स्वयंज्योतिर्भावः स्यात्। एतदनन्तरञ्च, 'न तत्र रथा' इत्यादि, 'स हि कर्ते'त्यन्तम्। अतः स्वप्नदृगेव कर्ता। **सहीत्यस्य** स्वयंज्योतिर्हीत्यर्थः। तेन सत्यसंकल्पत्वाद्याविर्भाव उक्तो भवति। एतदनन्तरञ्च, 'स्वप्नेन शारीरम्' इत्यादिभिः श्लोकैः हिरण्मय-हंस-देवादिशब्दैरप्ययं जीव एवोच्यते इति निर्विवादमिति मध्ये **स** इति अप्रस्तुतपरमात्मग्रहणं नैव भवतीति ॥ १ ॥

एवं स्वात्यन्तानुकूल श्रुतिरुक्ता; अथ ननु कठश्रुतौ. 'तदेव शुक्रं तद्ब्रह्मे'त्येवं ब्रह्मासाधारणांशवचनात् न जीवस्य कर्तृत्वमित्यत्र तत्रापि स्वाभिमतपरत्वमाह **निर्मातारमिति**। जीवमित्यर्थसिद्धम्; **पुत्रेति** निर्देशात्। 'य एषु' इति यच्छब्दनिर्देशात् श्रुत्यन्तरसिद्धानुवादोऽयम्। पूर्वदर्शितबृहदारण्यके च,

"य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः" इति । पुत्रादयश्च तत्र काम्यमानतया कामशब्देन निर्दिश्यन्ते ; नेच्छामात्रम् । पूर्वत्र हि, (कठ. १-१-२५) "सर्वान् कामान् छन्दतः प्रार्थयस्व", (कठ. १-१-२३) "शतायुषः पुत्रपौत्रान् वृणीष्व" इति पुत्रादय एव कामाः प्रकृताः । अतो रथादीन् जीवः स्वप्ने सृजति । जीवस्य च सत्यसङ्कल्पत्वं प्रजापतिवाक्ये श्रुतम् । अत उपकरणाद्यभावेऽपि सृष्टिरुपपद्यते ॥ २ ॥

इति प्राप्तेऽभिधीयते—

मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपत्वात् । ३ । २ । ३ ॥

तुशब्दः पक्षं व्यावर्तयति । स्वप्ने रथपुष्करिण्याद्यर्थजातं मायामात्रं परमपुरुषसृष्टमित्यर्थः। मायाशब्दो ह्याश्चर्यवाची; (रा. १-१-२७) "जनकस्य कुले जाता देवमायेव निर्मिता" इत्यादिषु तथा दर्शनात् । अत्रापि—"न तत्र रथा न रथयोगा न पन्थानः"—सकलेतर-

'स्वप्नेन शारीरमभिप्रहत्य असुप्तः सुप्तान् अभिचाकशीति⋯पुनरेति स्थानम्' इति शरीरावयवनिश्चेष्टतापादनम्, इन्द्रियेषु सुप्तेषु प्रकाशमानत्वञ्च जीवस्यैव समानाकारेण वाक्येनोक्तम् । कामशब्दश्च धातोः कर्मसाकांक्षत्वात् स्वरसतोऽनुभवितृकामनाविषयवाची । कठोपनिषदुपक्रमे च कामशब्देन तादृशविषयाः पुत्रादय एवोक्ताः । अतः **कामं काम**मित्यस्य संकल्प्य संकल्प्येत्यर्थवर्णनेन परमात्मनि निर्मातृत्वघटनं न युज्यते । तावता जीवव्यावृत्त्यसंभवश्च । यादृगिदं **कामं निर्मिमाणः** इत्यस्य इच्छां कुर्वन्नित्येवार्थात् न वस्तुसृष्टिपरतेति, तादृगेवेदमपि—यत् **काममि**ति संकल्पमात्रवाचीति । **निर्मातारश्चे**ति चकारस्य एकेचेत्यन्वयो युक्तः । तेन प्रकृतबृहदारण्यकेपि, 'स्वयंनिर्माये'ति निर्मातृत्वं स्पष्टं जीवे उक्तं यथा, तथा कठोपनिषद्यपि निर्मिमाण इति इत्युक्तं भवति ॥ २ ॥

**पक्षं व्यावर्तयति** ; न जीवसृष्टमिति गमयतीत्यर्थः । ननु **मायामात्र**मित्यस्य परमपुरुषसृष्टमित्यर्थवर्णनं कथमित्यत्र, नायं वाच्यार्थः, किंतु लभ्यार्थ इति दर्शयति **मायाशब्द** इत्यादिना । **कुले** क्षेत्रविशेषे । **मायेव निर्मिता** मूर्तिमत्त्वेन कृता देवस्याश्चर्यशक्तिरिव । एवञ्च मायाशब्दस्य मिथ्यार्थपरत्वाभावात् आश्चर्यवाचित्वाच्च न विवक्षितालाभ इति भावः ।

आश्चर्यभूतप्रकृतिवाचिमायाशब्दप्रयोगात् साक्षात् प्रकृतित एव स्वाप्नसृष्टिरित्यपि ध्वन्यते । नन्वाश्चर्यवाचित्ववत् ज्ञानवाचित्वस्यापि, माया वयुनं ज्ञानमिति निरुक्तितोऽवगमात् **मायामात्रम्** ज्ञानमात्रम्, न तु विषयोऽस्तीत्यर्थः स्यात् ; तत्राह **अत्रापी**ति । अस्य **आहे**त्यत्रान्वयः । सृजत इति पदप्रयोगात् वस्त्वपलापोऽसंभावितः । आश्चर्यत्वं नाम अपूर्वतयाऽनुभूयमानत्वम् । अनुभवितृपूर्वबुद्ध्यगोचरत्वम्, अनुभूतवस्त्वन्तरविलक्षणत्वञ्च । तदत्र श्रुतितोऽवगम्यत इति भावः । ननु श्रुतौ, नाभवन् इत्यप्रयुज्य न भवन्तीति प्रयोगात् स्वप्नकालेऽपि सर्वात्मना तदभाव एवेति चेन्न-नाभवन्नित्येवार्थः। तथाऽपि स्वप्नस्य प्रवाहनित्यतया लट्प्रयोग इति । अत एव **अथे**ति उपरि प्रयोगः । एवं समाधाने संभवत्यपि लट्स्वारस्यमादृत्यैवार्थमाह **सकले**ति । स्वप्नकालेऽन्यानुभाव्यतया न भवन्तीत्यर्थः ; अन्यथा सृजतिविरोधात् । एवञ्च स्वप्नदेशे

**पुरुषानुभाव्यतया न भवन्तीत्यर्थः (वन्ति ?), " अथ रथान् रथयोगान् पथः सृजते "— स्वप्नदृगनुभाव्यतया तत्कालमात्रावसानान् सृजते इत्याश्चर्यरूपत्वमेवाह । एवंविधाश्चर्यरूपा सृष्टिः सत्यसङ्कल्पस्य परमपुरुषस्यैवोपपद्यते ; न जीवस्य । तस्य सत्यसङ्कल्पत्वादियुक्तस्यापि संसारदशायां कात्स्न्येनानभिव्यक्तस्वरूपत्वान्न जीवस्य तथाविधाश्चर्यसृष्टिरुपपद्यते । ' कामं कामं पुरुषो निर्मिमाणः ' इति च परमपुरुषमेव निर्मातारमाह ; "य एषु सुप्तेषु जागर्ति", " तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन " इत्युपक्रमोपसंहारयोः परमपुरुषासाधारणस्वभावप्रतीतेः । " अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते । स हि कर्ता" इति च, तया श्रुत्या ऐकार्थ्यात् परमपुरुषमेव कर्तारमाह ॥**

**स्वाभाविकं चेत् जीवस्यापहतपाप्मत्वादिकम्, कुतस्तन्नाभिव्यज्यत इत्यत आह—**

**पराभिध्यानात्तु तिरोहितम्; ततो ह्यस्य बन्धविपर्ययौ । ३ । २ । ४ ॥**

---

बाह्यरथादिपदार्थाना यदृच्छया क्वचित् सद्भावेऽपि न क्षतिः ; स्वप्नवस्तुविषयकत्वादस्य वाक्यस्य । न चान्यानुभाव्यत्वस्य सिद्धस्य किमिति कथनमिति शंक्यम् ; ईदृशशंकनस्योभयपक्षाविशिष्टत्वात् । तदननुभवमात्रेण तदपलापो न युक्त इति ज्ञापनार्थत्वाच्च । न चेदं पुरुषबुद्धिकल्पितत्वोपपादकमस्त्विति मन्तव्यम्- सृजतीति विहाय पश्यतीति प्रयोग एव तथा कथनसंभवात्-भ्रान्तिज्ञानमादाय स्वयञ्ज्योतिष्ट्वोपपादनायोगाच्च । परमपुरुषकृतत्वे कथं स्वयंज्योतिष्ट्वमिति चेत् - चेतनान्तरानधीन-स्वकर्ममात्राधीन-स्वबुद्धिमात्रविषयवस्त्वनुभावित्वादिना तद् भवतु । उपनिषद्भाष्येऽर्थान्तरमुक्तम्—जाग्रद्दशानुभाव्यरथादयः **तत्र स्वप्ने** न भवन्ति, न स्वप्नविषयीभवन्ति ; विलक्षणास्तु सृज्यन्त इति । ततश्च स्वप्नकाले स्वप्नदृक्कल्पितरथविकारादिकं कथमत्र न लक्ष्यत इति न शंक्यमित्युक्तं भवति । सूत्रार्थस्तु **मायामात्रम्** आश्चर्यरूपमेव । अहो किमिदं कुतस्त्यमित्यपूर्वतयाऽनुभूयमानमेव । एवमनुभूयमानत्वञ्च जीवस्यानभिव्यक्तस्वरूपत्वप्रयुक्तम् । यदि जीवोऽभिव्यक्तस्वरूपः स्वसंकल्पेन स्रष्टा स्यात—संकल्पतदुपयोग्यनुभवादिविषयतया सर्वस्य उक्तरूपाश्चर्यता न स्यात् । **कात्स्न्येन** जागरतोऽप्याधिक्येन । **तु**शब्दोक्तजीवस्रष्टृत्वव्यवच्छेदे चानभिव्यक्तस्वरूपत्वं हेतुः । यदि विश्वामित्रादीनां जागर इव किञ्चिदभिव्यक्तिः स्यात सुप्तस्वरूपस्य, जीवस्रष्टृत्वं शंक्येतापि ! स्वजागरतौल्यमपि विना सर्वथैव मूढेषु सुप्तेषु अभिव्यक्त्यभाव एव पुष्कल इति, कारणाभावात् कार्याभाव इति । अतोऽर्थसिद्धं परमपुरुषस्रष्टृत्वम् । विवादास्पदं संध्यवस्तुजातं न तदनुभवितृजीवस्रष्टृ्रम् अनभिव्यक्तस्वरूपतदनुभवविषयत्वादिति । शेषं **परमार्थभूषणे । जीवस्य** जीवनमात्रवत. । अ ो न वैयर्थ्यम् ! य एषु सुप्तेष्विति उपक्रमस्थम । तत्र एष्वित्येतत् बृहदारण्यके असुप्तः सुप्तानित्यत्र सुप्तपदवत् नेन्द्रियादिपरम ; 'शरीरत्वाय देहिन' इति पूर्वमन्त्रे देहिना प्रस्तुतत्वान् तत्परामर्शस्यैव युक्तत्वान् । अतो य इति परमात्मैव । **ऐकार्थ्या**दिति । पूर्वं पश्चाच्च बृहदारण्यके परमात्मप्रस्तावाभावेऽपि **स** इति तच्छब्दस्य श्रुत्यन्तरप्रसिद्धग्राहकत्वमैकार्थ्यायेति । स्वयं निर्मायेति तु पुरुषान्तरीयादृष्टस्य तत्र कारणत्वाभावपरम् ॥

**ततो ह्यस्य बन्धविपर्ययौ** इति सूत्रखण्डः, परं ज्योतिरुपसंपद्यैव स्वेन रूपेणाभिनिष्पद्यते '

तुशब्दः शङ्काव्यावृत्त्यर्थः ; पराभिध्यानात्—परमपुरुषसङ्कल्पात् अस्य जीवस्य स्वाभाविकं रूपं तिरोहितम् । अनादिकर्मपरम्परया कृतापराधस्य अस्य स्वाभाविकं कल्याणरूपं परमपुरुषस्तिरोधापयति ; ततः तत्सङ्कल्पादेव हि अस्य जीवस्य बन्धमोक्षौ श्रुतौ, (तै.आन. ७२) "यदा ह्येवैष एतस्मिन् अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन् उदरमन्तरं कुरुते, अथ तस्य भयं भवति", "एष ह्येवानन्दयाति", (तै. आन. ९-१) "भीषाऽस्माद्वातः पवते" इत्यादिषु ॥ ४ ॥

देहयोगाद्वा सोऽपि । ३ । २ । ५ ॥

सोऽपि तिरो[धान ?]भावो देहयोगद्वारेण वा भवति, सूक्ष्माचिच्छक्तियोगद्वारेण वा ; सृष्टिकाले देहावस्थेनाचिद्वस्तुना संयोगाद्भवति ; प्रलयकाले नामरूपविभागानर्हातिसूक्ष्माचिद्वस्तुयोगात् । अतोऽनभिव्यक्तस्वरूपत्वात् स्वप्ने जीवो न रथादीन् सङ्कल्पमात्रेण स्रष्टुं शक्नोति । "तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति सर्वेषु सुप्तेषु जागरणं सर्वलोकाश्रयत्वमित्यादयो हि परमपुरुषस्यैव संभवन्ति । अतो जीवानामल्पाल्पकर्मानुगुणफलानुभवार्थं तावन्मात्रकालावसानान् तदेकानुभाव्यान् अर्थान् उत्पादयति ॥ ५ ॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः । ३ । २ । ६ ॥

इतश्च स्वाप्ना अर्था न जीवसङ्कल्पपूर्वकाः ; यतः स्वप्नोऽभ्युदयानभ्युदययोः सूचकः श्रुतेरवगम्यते, (छा. ५-२-८) "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र

---

इति श्रवणात् 'नान्यः पन्थाः' इति निषेधाच्च पूर्वं बन्धनियमात् न स्वरूपाविर्भावस्य स्वप्ने कल्पनं युक्तमिति ज्ञप्तये ॥ ४ ॥

सोपि तिरोधानभाव इति पाठः दीपग्रन्थ इव स्थितः स्यात् ; तिरोहितमित्येतद्घटकधात्वर्थं धानं विना तिरोभाव इति परकृतस्य प्रयोगस्य टीकायां परमतनिरासावसरे खण्डनात् तदौचित्यात् ॥ वाशब्दविवक्षितं हेत्वन्तरमाह सूक्ष्मेति । नायं सृष्टिकाले । यद्द्वारा पराभिध्यानं तिरोधायकम्, तत्सत्त्वाच्च पराभिध्यानमेतद्विषये न निवृत्तमित्यवसीयत इति कथनार्थमिदं सूत्रम् । तेन, 'जीवस्वरूपस्य जागरादावनभिव्यक्तिवत् स्वप्नसृष्टिवचनबलादभिव्यक्तिरपि स्वीक्रियताम् । तदेव शुक्रं तद् ब्रह्मेति च स्वाप्नसृजि जीवे जगत्सर्गकरब्रह्मतौल्यारोपेण स्तुतिः' इति शंकापरिहारः इत्याशयाविष्काराय तस्मिन् लोका इति पूर्वोपात्तवाक्यविवरणं विधाय सूत्रद्वयस्य मायामात्रसूत्रशेषतां दर्शयति तस्मिन्निति ॥ ५ ॥

ननु स्वाप्नसृष्टिमात्रोपयोगिसत्यसंकल्पत्वाविर्भावः स्यादित्यत्राह सूचकश्चेति । स्वप्न इति शेषः । सृष्टेः प्रागेवानेन स्वप्नानुभाव्यवस्तुस्वरूपस्वभावादिकं ज्ञातमिति भविष्यच्छुभस्मरणमेव सर्वेषां भवेत् ; न तु स्वप्नस्य तत्सूचकत्वम्। वेदादित एव तस्य तस्य ज्ञेयत्वञ्च न स्यादिति। ननु स्वाप्नानां तत्स्रष्टृत्वं भविष्यच्छुभाशुभवेदनं च स्थितमपि जागरे यथा न प्रतिसंधीयेत, तथा किञ्चित् पराभिध्यानम् । अतः स्वप्नदर्शनस्य सूचकत्वमपि वक्तृप्तमिति चेत् - स्वयं समर्थः किमिति जीवमुखेनैवैवं स्वाप्नसर्गे व्याप्नृत्यानन्ता-

जानीयात् तस्मिन् स्वप्ननिदर्शने" इति; (ऐ. आ. ३-२-४) "अथ स्वप्नाः—पुरुषं कृष्णं कृष्णदन्तं पश्यति ; स एनं हन्ति" इत्यादेश्च। स्वप्नाध्यायविदश्च स्वप्नं शुभाशुभयोः सूचकमाचक्षते। सूचकत्वं च स्वसङ्कल्पायत्तस्य नोपपद्यते। तथा च अशुभस्यानिष्टत्वात् शुभस्य सूचकमेव सृष्ट्वा पश्येत्। अतः स्वप्ने सृष्टिरीश्वरेणैव कृता ॥६॥ इति सन्ध्याधिकरणम्॥

## ७६. तदभावाधिकरणम् ३ २-२ ॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च। ३। २। ७॥

इदानीं सुषुप्तिस्थानं परीक्ष्यते। इदमाम्नायते, (छा. ८-६-६) "तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति, आसु तदा नाडीषु सृप्तो भवति" इति; तथा, (बृ. ४-१-११) "अथ यदा सुषुप्तो भवति, यदा न कस्यचन वेद—हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते, ताभिः प्रत्यवसृप्य पुरीतति शेते" इति;

---

न्यादृशाभिध्यानप्रयासमनुभविष्यति ॥ **निदर्शन इतीति**। इत्यत इत्यर्थः; उपरि **चकारश्रवणात्**। **अथ स्वप्ना** इति। प्रत्यक्षदुर्निमित्तकथनानन्तरं तथाविधस्वप्नाः कथ्यन्त इत्यर्थः। **स एनं हन्तीति**। दृश्यमानः तादृश पुरुषः स्वप्नदृशं हन्ति। तद्दर्शनेन स्वनाशं भाविनं जानीयादित्यर्थः। **स्वप्नाध्यायः** श्रुतिगतः; मत्स्यपुराणादिस्मृतिगतोऽपीत्याहुः। दोषान्तरमप्याह **तथा चेति**। **शुभस्येति**। ननु अशुभ-सूचकमपि सृष्ट्वा पश्यति, पश्चात् तत्सूचने सति तत्परिहारादिप्रयत्नो विधीयेतेत्याशयेनेति चेत् — स्वप्नाध्यायादिपठनं विनैव तर्हि इदमेतत्सूचकमिति ज्ञानानुवृत्तिमप्यात्मने कल्पयेत्। नूनमेवं जागरजग-त्सृष्टिरपि समष्टिजीवमूलेत्याग्रह्येत ॥ ६ ॥

एवमतिविचित्रानन्तस्वाप्नसर्गकरत्वस्य ब्रह्मणि निरूपणात् बाह्यसर्गतोऽप्यतिशयितं माहात्म्यमा-विष्कृतं भवति। तावता स्वप्नज्ञानं सत्यविषयकमेवेति न मन्तव्यम्; यथाजागरं ततोऽधिकं वा तत्रापि भ्रान्तिसत्त्वं हि दुरपलपम्। तथा हि तत्र सृष्टे स्वशरीरे जागरस्वशरीरत्वभ्रमः, तदातनपुत्रमित्रकलत्रादिषु बाह्यपुत्रादित्वभ्रमश्च। एतत्पुत्रादय एव देहान्तरपरिग्रहेण तदा संगता इत्यपि न; देहभेदे पुत्रत्वादेर्दुर्वै-चत्वात्। जागरस्थैः पुत्रादिभिः तादृशस्वाप्नव्यवहारास्मरणाच्च। अत्यल्पेऽपवरकेऽतिमहतां महीधरमहार्ण-वादिस्वाप्नार्थानामप्रतिघातस्थितिः, अल्पकाल एवानेकसंवत्सराद्यन्तर्भाव इत्यादिकं योगिसिद्धशरीरादिष्विव विश्वम्भरवटपत्रतल्पडिम्भसंकल्पविभवतः सम्यगुपपद्यते। तत् सिद्धमद्भुतगुणाकरत्वं ब्रह्मणः ॥ (३-२-१)

अथ सुषुप्तानाम् आयासपरिहाराय स्वोपसंपत्तिवहत्वरूपो ब्रह्मगुण आविष्क्रियते। तदर्थं तस्य निय-मेन सुषुप्त्याधारत्वं स्थाप्यते। स्वाप्नार्थस्रष्टृताया परमात्मेतरस्मिन् असंभवेऽपि सुषुप्तं प्रत्याधारत्वं यथाप्रमाण-मन्यत्राप्युपगन्तव्यमिति शंकया संगतिः। **तद्यत्रैतदित्यादि**। **तदेत**दिति प्रसिद्ध्यर्थकम्। **सुप्तः** स्वप्नानु-भावी **यत्र** यदा **समस्तः** सम्यक् **अस्तः** स्थानान्तरात् क्षिप्त **संप्रसन्नः** क्षोभरहित ज्ञानाभावरूपसुषुप्ति-काले **आसु** हृदयसंबन्धितया सूर्यरश्मिसंबन्धितया च प्रागुक्तासु नाडीषु-**सृप्तः** सर्पणेन संबद्धः। **पुरीत-**

**तथा**—(छा. ६-८-१) " यत्रैतत् पुरुषः स्वपिति नाम, सता सोम्य तदा संपन्नो भवति" इति । एवं नाड्यः पुरीतद् ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयन्ते ; किमेषां विकल्पः समुच्चयो वेति विशये—निरपेक्षत्वप्रतीतेः युगपदनेकस्थानवृत्त्यसंभवाच्च विकल्पः इति प्राप्ते

**उच्यते**-तदभावः—इति । तदभावः स्वप्नाभावः—सुषुप्तिः, नाडीषु पुरीतति आत्मनि च भवति । एषां स्थानानां समुच्चय इत्यर्थः । कुतः ? तच्छ्रुतेः—त्रयाणां स्थानत्वश्रुतेः । न च कार्यभेदेन समुच्चये संभवति पाक्षिकबाधगर्भविकल्पो न्याय्यः । संभवति च प्रासादखट्वा-पर्यङ्कवत् नाड्यादीनां कार्यभेदः । तत्र नाडीपुरीततौ प्रासादखट्वास्थानीयौ ; ब्रह्म तु पर्य-

---

**तमभि** हृदयस्य मध्ये लोहितं मांसपिण्डमिति सुबालोक्तपुरीतन्नामकमांसपिण्डमभिव्याप्य । **यत्र** यदा **सता संपन्नः** सति स्थित इत्यर्थः । 'सति संपद्य न विदुः' इति श्रुत्यन्तरात् । सद्वाक्यवत्, आकाशे शेते, प्राणे एकधा भवतीत्यादिपरमात्मपरवाक्यमपि ग्राह्यम् । **निरपेक्षत्वप्रतीते**रिति । व्रीहिभिर्य-जेत, यवैर्यजेत इत्यत्र पृथक् विभक्तिश्रवणात् व्रीहित्वावच्छिन्नकरणतायाः यवत्वावच्छिन्नकरणतायाश्च विभिन्नयागव्यक्तिनिरूपितत्ववत् इहापि नाडीत्वादिव्यावृत्ताः अधिकरणताः विभिन्नशयनव्यक्तिनिरूपिता एव वाच्या इति भावः । ननु स्थले जले च पादभेदेन स्थितिवदस्तु समुच्चय इत्यत्राह **युगपदि**ति । आत्मनोऽणुत्वादिति भावः । सूत्रे **चकारेण** पुरीतद्रूपाधिकरणस्यापि ग्रहणम् । नाड्यात्मोभयग्रहणेनापि विचारस्य पर्याप्तत्वेऽपि वस्तुस्थितिमनुसृत्य त्रयग्रहणम् । **पाक्षिकबाधगर्भविकल्प** इति । विकल्पः पाक्षिकबाधगर्भत्वादन्याय्य इत्यर्थः । व्रीहिशास्त्रमनुरुध्य व्रीहिभिः पुरोडाशनिर्माणे हि यवानामग्रहणात् बाधो भवति ; यवैर्निर्माणे च व्रीहीणाम् । एवञ्च दर्शप्रकरणे नित्यवच्छ्रुतस्य व्रीह्यादेः सर्वदर्शव्यक्त्यन्वय-स्वारस्यभंग इति । तदयं विकल्पोऽष्टदोषदुष्टः—यथा-व्रीहिस्वीकारदशायां यववाक्ये प्रामाण्यत्यागः अप्रामाण्यस्वीकारः, पुनर्यवानुष्ठाने यवशास्त्रे प्राक्स्वीकृताप्रामाण्यत्यागः त्यक्तप्रामाण्यस्वीकारश्चेति यवशास्त्रे चत्वारो दोषाः । एवं यवस्वीकारमादाय विमर्शे व्रीहिशास्त्रे चत्वार इत्यष्टौ दोषाः । अष्टे-त्युपलक्षणम् । वैकल्पिकत्रयादौ दोषाधिक्यात् । अग्निहोत्रं जुहोतीत्यत्र, दध्ना जुहोति, पयसा जुहोति यवाग्वा जुहोतीति वैकल्पिकत्रयादौ हि प्रतिशास्त्रं चत्वारो दोषा भाव्याः । यजेतेति पदेन सर्वयाग-व्यक्तेरेवोद्देश्यतया समर्पणात् तत्र कतिपयविषये व्रीह्यादिद्रव्यानन्वयस्य तदातदा स्वयंपरिकल्पनादवर्जनीया इमे दोषाः । नन्वस्तु प्रामाण्यत्यागो दोषः ; प्रामाण्यस्वीकारः कथं दोष इति चेत्—त्यक्तस्य स्वीकारो-ऽपि दोष एवेति । नन्वस्तु दृष्टान्ते सर्वम् ; प्रकृते शयानपुरुषेण नाड्याद्याधारताशास्त्रविचारपूर्व-कानुष्ठानाकरणात् कथं प्रामाण्यत्यागस्वीकारादिकमिति चेन्न—तेन तदविचारेऽपि परीक्षकैः, शयनाधि-करणत्रयपरे शास्त्रत्रये सति कस्य कदा प्रामाण्यं भवति, कदा कतिपयशयनव्यक्तित्यागादप्रामाण्यमिति विचारसंभवात् । भाष्यकृता तु किं विकल्पे दोषसंख्येयत्तागणनेनेति तत्रानास्थया सारभूतो दोषः समुद्गीर्णः **पाक्षिकबाधे**ति । **टीकायां** बाधचतुष्कमेकैकस्मिन्नपि दर्शितम्—फलसाधनत्वप्रतिपत्ति-बाधः, अनुष्ठानबाधः, अपूर्वोत्पत्तिबाधः, फलबाधश्चेति । इदमपि विहितधर्मविषयकमिति । **कार्य**-

ङ्कस्थानीयम् । अतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम् ॥ ७ ॥

अतः प्रबोधोऽस्मात् । ३ । २ । ८ ॥

यतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम् अतः, अस्मात् - ब्रह्मणः एषां जीवानां प्रबोधः श्रूयमाण उपपद्यते, (छा. ६-१०-२) "सत आगम्य न विदुः सत आगच्छामहे" इत्यादिषु ॥ ९ ॥ इति तदभावाधिकरणम् ॥ २ ॥

७७. कर्मानुस्मृतिशब्दविध्यधिकरणम् ३-२-३ ॥

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः। ३ । २ ९ ॥

किं सुषुप्त एव प्रबोधसमये उत्तिष्ठति, उतान्य इति संशये—अस्य सकलोपाधिविनिर्मुक्तस्य ब्रह्मणि संपन्नस्य मुक्तादविलक्षणत्वेन प्राचीनशरीरेन्द्रियादिसंबन्धाभावादन्यः इति प्राप्ते—उच्यते-स एव तु इति । तुशब्दः पक्षं व्यावर्तयति । स एवोत्तिष्ठति । कुतः ? कर्मानुस्मृतिशब्दविधिभ्यः । कर्म तावत्—सुषुप्तेन पूर्वकृतं पुण्यपापरूपं तत्त्वज्ञानात् प्राक् तेनैव भोक्तव्यम् । अनुस्मृतिरपि- य एवाहं सुप्तः, स एव प्रबुद्धोऽस्मीति । शब्दोऽपि सुषुप्तप्रबुद्धं (द्धः) स एवेति दर्शयति—(छा. ६-१०-२) "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तदाभवन्ति" इति। विधयश्च मोक्षार्थाः सुषुप्तस्य मुक्तत्वेऽनर्थकास्स्युः । न चासौ सर्वोपाधिविनिर्मुक्त आविर्भूत-

---

भेद इति । नाडीगताधिकरणतापेक्षया पुरीतदाद्यधिकरणताया विलक्षणत्वात्, तत्तदंशे तस्यतस्य निरपेक्षत्वप्रतीतिर्न बाध्यत इति भावः ॥ ७ ॥

अतः प्रबोधोऽस्मात् । अतः त्रयसमुच्चयादेव ब्रह्मण आधारताया नियतत्वात् साक्षादाधारत्वाच्च प्रबोधसामान्ये ब्रह्मापादानकत्वमेव श्रूयत इत्यर्थः ॥ ८ ॥

सुषुप्तिकालिकसत्संपत्तेर्मुक्तिकालिकसंपत्तिरूपत्वमस्ति न वेति विचारः क्रियते, सुषुप्तौ क्रियमाणस्योपकारस्य स्वरूपं कीदृशमिति तेन विवेचितं भविष्यतीति। अत एव तदधिकरणान्ते भाषिष्यते, विश्रमस्थानं परमात्मानमित्यादि। विनिर्मुक्तस्येति । शरीरादिकं स्थितमपि न तदीयम्, तस्य संप्रसन्नत्वादिति हृदयम्। ननु सर्वलोकानुभव—ऐहिकामुष्मिकप्रवृत्ति—तत्परशास्त्रसिद्धे आत्मन एकस्य बाल्युव-नरदेवाद्यनेकशरीरपरिग्रहे कथमयं पूर्वपक्ष । प्रलीनस्य पुनः सृष्टिर्यदि संभाव्यते, कथं सुषुप्तस्य मुक्तत्वशंकेति चेत्—बृहदारण्यके (६-३) सुषुप्तिं प्रक्रम्य, 'एषोऽस्य परम आनन्दः' इत्युक्त्वा तैत्तिरीयानन्दमीमांसायामिव चतुर्मुखातिशाय्यानन्दवर्णनात् सुषुप्तस्य मुक्तत्वं श्रुतिस्वरससिद्धमित्याशयेन पूर्वपक्षसंभवात्। किञ्च मुक्तेः सुषुप्त्यादेश्च मिथोवैलक्षण्यव्युत्पादनेन सुषुप्तौ हेयत्वधीप्रतिष्ठापनार्थैवमधिकरणरचनेति। अनुस्मृतिः प्रत्यभिज्ञा। यद्यद् भवन्ति, तदाभवन्ति=सुषुप्तेः पूर्वं व्याघ्रादियद्यद्रूपा भवन्ति जीवाः, ते तत्तद्रूपा एव आभवन्ति—पुनरप्यवतिष्ठन्ते। आङुपसृष्टो भूधातुः। कर्मशब्देन पुण्यादेर्गृहीतत्वात् विधिशब्दं मोक्षपरतया व्याख्याति मोक्षार्था इति । मुक्तिनिर्विशेषत्व-

स्वरूपः; (छा. ८-११) "तद्यत्रैतत्सुपुप्तः" इति सुषुप्तं प्रकृत्य, "नाह खल्वयमेवं संप्रत्यात्मानं जानाति, 'अयमहमस्मी'ति ; नो एवेमानि भूतानि; विनाशमेवापीतो भवति; नाहमत्र भोग्यं पश्यामि" इति वचनात्। मुक्तस्य च, (छा. ८-१२-३) परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते...स तत्र पर्येति जक्षत् क्रीडन् रममाणः", (छा. ७-२५-२) "स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति", (छा. ७-२६-२) "सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति सर्वज्ञत्वादि श्रूयते। अतः सुषुप्तः संसारश्रेव आयस्तसर्वकरणो ज्ञानभोगाद्यशक्तो विश्रमस्थानं परमात्मानमुपसंपद्याऽऽश्वस्तः पुनर्भोगायोत्तिष्ठति ॥ ९ ॥

इति कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

७८. मुग्धाधिकरणम् ३-२-४ ॥

## मुग्धेऽर्धसंपत्तिः परिशेषात् । ३ । २ । १० ॥

मुग्धमधिकृत्य चिन्त्यते। किमियं मूर्च्छा सुषुप्त्यादिष्वन्यतमावस्था, उतावस्थान्तरमिति विशये—सुषुप्त्यादीनामन्यतमावस्थायामेव मूर्च्छाप्रसिद्ध्युपपत्तेः अवस्थान्तरकल्पने प्रमाणाभावादन्यतमावस्थेति प्राप्ते—उच्यते—मुग्धेऽर्धसम्पत्तिः— इति। मुग्धे पुरुषे या तस्यावस्था, सा मरणायार्धसंपत्तिः। कुतः? परिशेषात्। न तावत् स्वप्नजागरौ, ज्ञानाभावात्; निमित्तवैरूप्यादाकारवैरूप्याच्च न सुषुप्तिमरणे। निमित्तं हि मूर्च्छाया अभिघा-

कथनं मुक्तिसुषुप्तिमिथोवैलक्षण्यस्य विविधस्य दर्शकेन वाक्यजातेन च विरुद्ध्यत इति दर्शयति **नचेति** अहेत्यव्ययम्। **संप्रति** यथावत्। **विनाशम्** अदर्शनम्। नन्वनुभवलेशविधुरां सुषुप्त्यवस्थां किमिति प्राणिनां प्रत्यहं कल्पयतीत्यत्राह **अत** इति। अनेन वाक्येन पूर्वाधिकरणशेषत्वमस्याधिकरणस्य सिद्धम्॥

पुनर्जन्मप्रतिपादके पूर्वपादे जाग्रदवस्था मरणावस्था चोक्ते भवतः। अत्र पादे मुक्तिसुषुप्ती पृथगुक्ते। एतदतिरिक्ततया मूर्छाऽपि काचिदवस्था लोके प्रसिद्धाऽस्ति। परंतु श्रुत्यन्तेषु जागरस्वप्नसुषुप्तमरणान्येव सर्वत्र निरूप्यन्ते। अत इयं पृथगपृथग्वेति संशये श्रुत्यादौ पृथगकीर्तनात् अपृथगिति पूर्वपक्षः। तदाह **प्रमाणाभावादिति**। मुग्धस्य मुसलसंपातादिजनितदुःखानुभवव्यग्रमनस्त्वमस्तीति मुसलपातादिस्मरणानुवृत्तौ जाग्रत्तुल्यता ; केवलदुःखानुभवे सुप्ततुल्यता ; न किञ्चिन्मया चेतितमिति मुग्धेनोत्थानानन्तरं वचनात् ज्ञानलेशस्यापि तदानीमभावे सुषुप्ततुल्यता ; उच्छ्वासनिश्वासाभावान्मृततुल्यतेति। **अन्यतमावस्थेति**। किमत्र किञ्चित्पक्षानिर्धारणेनैव पूर्वपक्षः, उतान्यथेति चेत्—**शाङ्करे**ऽप्येवमेव पूर्वपक्षगतिः। परंतु **भामत्यां** विज्ञानाभावात् जागरस्वप्नभेदं पुनरुत्थानात् मरणभेदञ्चोपदर्श्य सुषुप्तिप्रभेदोऽयमित्युक्तम्—यथा सुषुप्तः कश्चित् सुखमहमस्वाप्समिति पश्चादाह ; अन्यः, दुःखमस्वाप्सम् गुरूणि मे गात्राणीति—तद्वदयं मोहोऽपि सुषुप्तिरिति। एवं सुषुप्तिपरिशेषपूर्वपक्षश्चेत्, सिद्धान्ते परिशेषादिति सौत्रहेतुर्न स्वरसः इति अव्यवस्थैव पूर्वपक्षे आहता। मृतिपरिशेषश्च शंकितः सारावली। अतः अन्ततः सुषुप्तिमरणान्यतरेत्यव्यवस्था पूर्वपक्षे स्थास्यति। तद्वैलक्षण्यमप्याह **निमित्तेति**। सुषुप्तेरि-

तादिः । पारिशेष्यात् मरणायार्धसंपत्तिर्मूर्छा । मरणं हि सर्वप्राणदेहसंबन्धोपरतिः ; सूक्ष्मप्राणदेहसंबन्धावस्थितिर्मूर्छा ॥ १० ॥ इति मुग्धाधिकरणम् ॥ ४ ॥

७९. उभयलिङ्गाधिकरणम् ३-२-५ ॥

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ३ । २ । ११ ॥**

दोषदर्शनाद्वैराग्योदयाय जीवस्यावस्थाविशेषा निरूपिताः । इदानीं ब्रह्मप्राप्तितृष्णाजननाय प्राप्यस्य ब्रह्मणो निर्दोषत्वकल्याणगुणात्मकत्वप्रतिपादनायारभते । तत्र जागरस्वप्नसुषुप्तिमुग्ध्युत्क्रान्तिषु स्थानेषु तत्तत्स्थानप्रयुक्ता जीवस्य ये दोषाः, ते तदन्तर्यामिणः परस्य ब्रह्मणोऽपि तत्रतत्रावस्थितस्य सन्ति, नेति विचार्यते । किं युक्तम् ? सन्तीति । कुतः ? तत्तदवस्थशरीरेऽवस्थानात् ॥

ननु (शारी. १-२-९) "संभोगप्राप्तिरिति चेन्न वैशेष्यात्", (शारी. १-३-६) "स्थित्य-

---

न्द्रियश्रमो निमित्तम्, मूर्छायास्तु मुसलाभिघातादिः । एवमूष्मोच्छ्वासनिश्वासस्पष्टता, प्रसन्नवदनता निमीलितनेत्रता च सुषुप्तौ । मुग्धस्त्वन्वेषणीयोष्मादिः सवेपथुर्भयानकवदनो विष्फारितनेत्रश्चेति आकारवैरूप्यमपि । मूर्छामरणयोराकारवैरूप्यञ्च मरणे प्राणोष्मवेपथुप्रभृत्यभावेनावगन्तव्यम् । **निमित्ते**त्यादिना द्वयोरेकीकरणं यथार्हं वैरूप्यद्वयस्याप्येकत्वान्वयलाभाय । एवं सिद्धे मुग्धेरवस्थान्तरत्वे गणनक्रमः कथमित्यत सुषुप्तिमरणमध्यगतेयमिति दर्शयितुमाह **मरणाये**ति । अनेन अर्धसंपत्तिरित्युक्तौ स्वप्नसुषुप्तिमध्यावस्थेति न मन्तव्यमित्युक्तं भवति । 'सति संपद्य' इत्येवं सुषुप्त्यादौ प्रयोगेऽपि **सपत्ति**शब्दः 'स्वाप्ययसंपत्त्यो'रिति सूत्रेदर्शनात् मरणपर । तदर्थमर्ध**संपत्ति**पदार्थः। मनसि करणग्रामस्य, प्राणे मनसः संपत्तिरस्ति ; प्राणश्च बाह्यवाय्वनाप्यायित आस्ते ; न तु जीवे संपद्यते । सेयं मूर्छा । पृथक् सर्वत्र परिगणनं तु मूर्छायाः अन्यवन्नियतत्वाभावात । एवं **मरणाये**ति चतुर्थ्या स्वप्नसुषुप्त्योरिव मूर्छायाः फलं किमिति जिज्ञासाशमनम् । मरणपर्यवसायित्वादस्याः मरणस्य फलमेव फलम् । प्रबलबाधकवशात्तु तन्मरणं कदाचित् प्रतिरुध्यते ; अत प्रबुध्यत इति । इदमेवार्धत्वमुपपादयति **मरणं ही**ति ॥ व्यवस्थिताभिरवस्थाभिरिवाव्यवस्थितयाऽप्यवस्थयोपप्लवो जीवे एवमुक्त । मूर्छायाः सुषुप्तप्रबुद्धैक्यस्य च विशिष्य भगवत्कल्याणगुणातिशयस्थापकत्वाभावेऽपि अत्रैवैतदवसर इति निरूपणम् ॥ अर्धसंपत्तिपदेनैवैतदनन्तरा मरणावस्थाऽप्यस्तीति ज्ञापितम् ॥ १० ॥

पादद्वये एतावत्पर्यन्तं जीवस्य दोषाः दर्शिताः ; अथ निर्दोषत्वं तेन सह सर्वगुणाकरत्वञ्च प्राप्ये तृष्णाजननाय प्रतिपाद्यत इति पेटिकाभेद । तदयमु**भयलिङ्ग**पादः । एवमपि, पूर्वपाद एव सर्वजीवावस्थानिरूपणे सुकरे अत्रैव स्वप्नादिनिरूपणकारणञ्च भगवद्गुणातिशयप्रदर्शनायेति प्रागेवावाचि । नन्वेवं जीवस्य सदोषत्वव्युत्पादनं न ब्रह्मप्राप्तिरुचिसंपादकम्, ब्रह्मणोऽप्येतावद्दोषसद्भावस्याभ्युपगन्तव्यत्वादित्याक्षेपेणैतदधिकरणप्रवृत्तिः । **तत्रतत्रावस्थितस्य** तत्तदवस्थापन्नशरीरस्थितस्य । सौत्रस्यापिशब्दस्याशयं दर्शयितुं प्रश्नोत्तरे करोति **नन्वि**त्यादिना । **स्थिती**ति । संभोगप्राप्तिरिति सूत्रोक्तस्य वैशेष्यस्य निर्बाधत्वा-

दनाभ्यां च" इत्यादिषु परस्याकर्मवश्यत्वेन दोषाभाव उक्तः। तत् कथमकर्मवश्यस्य परस्य ब्रह्मणः तत्तत्स्थानसंबन्धात् दोष उच्यते। इत्थमुच्यते- कर्माण्यपि देहसंबन्धमापादयन्त्यपुरुषार्थजननानि भवन्तीति, (शारी. ३-२-५) "देहयोगाद्वा" इत्यत्रोक्तम्। न च देहसंबन्धस्यापुरुषार्थत्वेन भवति; इतरथा कर्माण्येव दुःखं जनयिष्यन्ति; किं देहसंबन्धेन? अतोऽकर्मवश्यत्वे सत्यपि नानाविधाशुचिदेहसंबन्धोऽपुरुषार्थ एव; अतः तन्नियमनार्थं स्वेच्छया तत्प्रवेशेऽप्यपुरुषार्थसंबन्धोऽवर्जनीयः; पूयशोणितादिमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एव। अतो यद्यपि जगदेककारणं सर्वज्ञत्वादिकल्याणगुणाकरं च ब्रह्म—तथापि (बृ. माध्यं ६-७) "यः पृथिव्यां तिष्ठन्", "यश्चक्षुषि तिष्ठन्", "यो रेतसि तिष्ठन्", "य आत्मनि तिष्ठन्" इत्यादिवचनात् तत्रतत्रावस्थितस्य तत्तत्संबन्धरूपापुरुषार्थाः सन्ति—इति॥

एवं प्राप्ते प्रचक्ष्महे—न स्थानतोऽपि परस्य—इति। न पृथिव्यात्मादिस्थानतोऽपि परस्य ब्रह्मणः अपुरुषार्थगन्धः संभवति। कुतः? उभयलिङ्गं सर्वत्र हि--यतः सर्वत्र श्रुतिस्मृतिषु परं

---

नुमत्यैव हि शरीरेऽवस्थितस्य अनशनविशिष्टप्रकाशातिशयः स्थितिसूत्रे उक्तः। ननु कथं पुनः शंकेति भावः। इत्यादिष्विति आदिपदेन भोक्त्रापत्तेरिति सूत्रमपि ग्राह्यम्। जीववत् परस्यापि शरीरात्मभावरूपसंबन्धसत्त्वेऽपि आज्ञानुवृत्त्यनिवृत्तिरूपकर्माभावान्न भोक्तृत्वमिति तत्रोक्तम्। कर्मणां यद्द्वारा दोषहेतुत्वम्, तस्य द्वारभूतस्य शरीरसंबन्धस्य सत्त्वे, वस्तुस्वभावे हेयरूपे जाग्रति कर्मसद्भावचिन्ता व्यर्थेति पुनराक्षेपः। न ह्यसिः स्वेच्छया स्वशिरसि क्षिप्यमाणो न हन्ति। अतो वस्तुस्वभावायत्तत्वात् दोषस्यावर्जनीयं सर्वस्येति पूर्वपक्षः। एवं प्राप्ते यथा कर्मतो न दोषप्रसक्तिः, प्रागुपपादितरीत्या, तथा तत्तद्वस्थवस्तुप्ववस्थानादपि न हेयप्रसक्तिरिति सूत्रेणोच्यते। इदमुपलक्षणम्—माण्डूक्ये, "जागरितस्थानो बहिःप्रज्ञः—स्थूलभुक्", "स्वप्नस्थानोऽन्तःप्रज्ञः—प्रविविक्तभुक्", "सुषुप्तस्थान एकीभूत आनन्दभुक्" इति प्रस्तुतस्य ब्रह्मण आत्मनो दशाभेदेन भोगोक्तिरपि पूर्वपक्षबीजम्। अत्रोक्तो भोगो जीवद्वारा, न साक्षादिति सिद्धान्ते परिहारः। एकं श्रुतिशकलमादृत्य सर्वश्रुतिभञ्जनमयुक्तमिति ज्ञापनाय सूत्रे सर्वत्रेति पदम्। पृथिव्यात्मादिस्थानत इति प्रयोगात् स्थानशब्दस्याधिकरणार्थकत्वेऽपि न दोषः। बहुव्रीहिस्वरसमुभयलिङ्गपदं न पूर्वान्वयार्हम्; परस्येति षष्ठ्यन्तश्रवणात्। अद्वैतिमतेऽप्यन्ततः सविशेषत्वस्यैकस्यैव लिङ्गस्य निषेध्यत्वात् निर्विशेषत्वरूपस्य लिङ्गान्तरस्य निषेधाभावात् उभयेति न युक्तश्च। अत उभयलिङ्गत्वेन ब्रह्मणः स्त्रीकार्यत्वमेवेत्याशयेन उभयलिङ्गपदमुपरि योजयन्नाह उभयलिङ्गमिति। लिङ्गं चिह्नं लक्षणम्। न च निषिध्यमानमादाय उभयलिङ्गपादः उभयलिङ्गाधिकरणमिति व्यवहारः शोभनः। तदत्रोभयलिङ्गत्वं स्थाप्यते। निर्दोषत्वमात्रस्य सुखान्तरवैराग्येण तृष्णावर्धकत्वं श्रमसाध्यमिति स्वाभाविकसर्वकल्याणगुणाश्रयत्वमप्यत्र वर्णनीयमवश्यम्, येषु च प्रतिनियतगुणग्रहणेनोपासनविषयोऽनन्तरपादे विचारयिष्यन्ते। छान्दोग्ये प्रकृतसूत्र इव, 'यदैनज्जरामाप्नोति प्रध्वंसते वा, किं ततोऽतिशिष्यते'

ब्रह्म उभयलिङ्गम् उभयलक्षणमभिधीयते ; निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वलक्षणोपेतमित्यर्थः । (छा. ८-१ ५) "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः", (वि. पु. ६-५-८४) "समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतसर्गः......तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे", (वि. पु. १-२२-५३) "समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्" इत्यादिश्रुतिस्मृतिभ्यः उभयलक्षणं हि ब्रह्म अवगतम् ॥ ११ ॥

भेदादिति चेन्न प्रत्येकमतद्वचनात् । ३ । २ । १२ ।

यथा जीवस्य प्रजापतिवाक्यावगतापहतपाप्मत्वाद्युभयलिङ्गस्यापि देवादिदेहयोगरूपावस्थाभेदादपुरुषार्थयोगः, तथा अन्तर्यामिणः परस्यापि स्वतोऽपहतपाप्मत्वाद्युभयलिङ्गस्य तत्तद्देवादिशरीरयोगरूपावस्थाभेदादपुरुषार्थयोगोऽवर्जनीय इति चेत्—तन्न ; प्रत्येकमतद्वचनात्-(बृ. माध्यं. ६-७) "यः पृथिव्यां तिष्ठन्....य आत्मनि तिष्ठन्" इत्यादिषु प्रतिपर्यायम्—"स त आत्माऽन्तर्याम्यमृतः" इत्यन्तर्यामिणोऽमृतत्ववचनेन तत्रतत्र स्वेच्छया नियमनं कुर्वतः तत्तत्संबन्धप्रयुक्तापुरुषार्थप्रतिषेधात् । जीवस्य तु तत्स्वरूपं तिरोहितमिति, (शारी. ३-२-४) "पराभिध्यानात्तु तिरोहितम्" इत्यत्रोक्तम् ॥

ननु स्वेच्छया कुर्वतोऽपि तत्तद्वस्तुस्वभावायत्तापुरुषार्थसंबन्धोऽवर्जनीय इत्युक्तम् ॥

---

इति शरीरापाये ब्रह्मापायरूपदोषमाशंक्य, 'नास्य जरयैतज्जीर्यती'त्यादिना निर्दोषत्वमुक्त्वा अपहतपाप्मेत्यादिना तदुपपादनस्य कृतत्वात् तद्वाक्यं प्रथमतो गृह्णाति अपहतपाप्मेति ।

वस्तुस्वभावायत्तो दोष इति पूर्वपक्षस्य प्रथमसूत्रेणैव परिहृतत्वे द्वितीयसूत्रोत्थानायोगात् , द्वितीयसूत्रे प्रत्येकमिति पदस्वारस्यात् तत्रैव परिहारस्याभिप्रेततायाः युक्तत्वाच्च भाष्ये द्वितीयसूत्र एव तत्परिहारो दर्शयिष्यते । द्वितीयसूत्रप्रवृत्तिरेवम्—'नास्य जरयैतज्जीर्यति, न वधेनास्य हन्यते, अपहतपाप्मा विजरः' इत्यादिकं ब्रह्मजीवोभयसाधारणम् । एवञ्च जीवे तत्तदवस्थानिबन्धनदोषाश्रयत्वतदभावयोर्दशाभेदेन स्वीकारवत् ब्रह्मण्यपि स्वीकारः कुतो नेति । ननु जीवस्य बद्धावस्थाया दुष्टता, मुक्तावस्थायां तदभाव इति प्रतिजीवं दशाभेदः सुवचः । ब्रह्म तु कदापि निर्दुष्टं न भवेत् ; सर्वदैव विविधबद्धजीवसद्भावेन तत्तद्वस्तुसंबन्धस्य ब्रह्मणि सदैव सत्त्वात् । न च—प्रकृतिदेशे दोषः, परमपदे च तदभाव इति भेदवर्णनेऽपि कदापि ब्रह्मणो निर्दोषत्वप्रसक्तिरिति चेत्—सत्यम्—दुष्टवस्तुसंबन्धस्यावर्जनीयत्वात् जीवापेक्षया ब्रह्मणि दोषातिशयोऽस्त्येवेति पूर्वपक्ष्याशयः । **प्रत्येकम्** प्रतिपर्यायम् तत्तत्स्थानस्थितिदशायामेव **अतद्वचनात्** मरणादिहेयाभाववचनात् , सुबालोपनिषदि अपहतपाप्मत्वस्य कारणत्वसूचनाच्च पाप्मायत्तमेव दुष्टत्वम् , न वस्तुस्वभावायत्तमित्यवगम्यते । अन्यथा मुक्तस्यापि, 'कामान्नी कामरूप्यनुसंचरन्' इति सञ्चारे पुनर्बन्धापत्तिः । अतो वस्तूनां स्वभावतो निर्दोषपुरुषान् प्रत्यनुकूलत्वमेव स्वभाव इति ज्ञायते । एवं सूत्रदर्शितमर्थं प्रश्नोत्तरमुखेनाह **नन्वित्यादिना** ॥ १२ ॥

नैतद्युक्तम्। न ह्यचिद्वस्त्वपि स्वभावतोऽपुरुषार्थस्वरूपम्; कर्मवश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुषसङ्कल्पादेकमेव वस्तु कालभेदेन पुरुषभेदेन च सुखाय दुःखाय च भवति। वस्तुस्वरूपप्रयुक्ते तु ताद्रूप्ये, सर्वं सर्वदा सर्वस्य सुखायैव दुःखायैव वा स्यात्। न चैवं दृश्यते। तथाचोक्तम् (वि. पु. २-६. ४६-४७-४८) "नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम। वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च। कोपाय च यतः, तस्माद्वस्तु वस्त्वात्मकं कुतः। तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते। तस्मात् दुःखात्मकं नास्ति न च किंचित् सुखात्मकम्" इति। अतो जीवस्य कर्मवश्यत्वात् तत्तत्कर्मानुगुण्येन तत्तद्वस्तुसंबन्ध एवापुरुषार्थस्स्यात्; परस्य तु ब्रह्मणः स्वाधीनस्य स एव संबन्धः तत्तद्विचित्रनियमनरूपलीलारसायैव स्यात्॥ १२॥

अपिचैवमेके। ३। २। १३॥

अपिच एके शाखिनः एकस्मिन्नेव देहसंयोगे जीवस्यापुरुषार्थम्, परस्य तु तदभावं नियमनरूपैश्वर्यायत्तदीप्तियोगं च स्वशब्देनाधीयते,(मु.३-१-१) "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति" इति॥१३॥

अथ स्यात्—(छा. ६-३-२) "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति ब्रह्मात्मकजीवानुप्रवेशपूर्वकं नामरूपव्याकरणमिति ब्रह्मणोऽपि तदात्मभूतस्य देवमनुष्यादिरूपत्वं तन्नामभाक्त्वं चास्ति। ततश्च "ब्राह्मणो यजेत" इत्यादिविधिनिषेधशास्त्रगोचरत्वेन कर्मवश्यत्वमवर्जनीयमिति—तत्राह—

अरूपवदेव हि तत् प्रधानत्वात्। ३। २। १४॥

देवादिशरीरानुप्रवेशे तेनतेन रूपेण युक्तमप्यरूपवदेव तत्—ब्रह्म रूपरहिततुल्यमेव। जीववत् शरीरित्वनिबन्धनं कर्मवश्यत्वमस्य न विद्यत इत्यर्थः। कुतः? निर्वाहकत्वेन प्रधानत्वात्। (छा. ८-१४-१) "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति सर्वानुप्रवेशेऽपि नामरूपकार्यास्पर्शेन नामरूपयोर्निर्वोढृत्वमेव ब्रह्मणः प्रतिपादयति॥ ननु तच्छरीरकत्वेन तदन्तर्यामित्वे कथमरूपवदिति रूपसंबन्धरहिततुल्यत्वमुच्यते? इत्थम्—यथा

---

अमृत इति पदेनान्तर्यामिब्राह्मणे सूचितमर्थं सुस्पष्टयितुम् अपिचेति सूत्रम्। स्थित्यदनाभ्यामिति सूत्रं संभोगभोक्त्वापत्तिप्रकृतसूत्रसर्वसिद्धार्थं हेतुतया प्रदर्श्य तत्र जीवातिरेकस्थापकम्॥ १३॥

एवमकर्मवश्यत्वादेव निर्दुष्टत्वे कथिते कर्मवश्यत्वमेव ब्रह्मणि शंकते अथस्यादिति। प्रागुक्ताकर्मवश्यत्वाक्षेप इह। अरूपवत्। न विद्यते रूपं यस्य तदरूपम्; अरूपेण तुल्यमरूपवदिति वतिप्रत्ययः। तेन रूपभाक्त्वेऽपि रूपकार्याभावादरूपतुल्यत्वमुच्यते। ननु जीवमिव स्वात्मानमपि रूपभाजं कुर्वन् परः रूपकार्यमपि लिप्सत एव; अन्यथा वैयर्थ्यादिति शंकते नन्विति। यत् रूपवैशिष्ट्यकार्यं हेयं न भवति, तदर्थमेव रूपं स्वस्मै कल्पयतीति युज्येत; कार्यस्य सुखदुःखात्मकस्य तु हेयत्वात्

जीवस्य तत्तज्जन्यसुखदुःखभाक्त्वेन तत्तद्रूपसंबन्धः, तथातदभावात् परस्यारूपवत्त्वम्। विधिनिषेधशास्त्राण्यपि कर्मवश्यमेवाधिकुर्वन्ति। तस्मादरूपतुल्यमेव परं ब्रह्म। ततश्चान्तर्यामिरूपेणावस्थितमपि ब्रह्म निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गमेव ॥ १४ ॥

ननु च, (तै. आन. १-१) "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिभिर्निर्विशेषप्रकाशैकस्वरूपं ब्रह्मावगम्यते। अन्यत्तु सर्वज्ञत्वसत्यसङ्कल्पत्वजगत्कारणत्वसर्वान्तरात्मत्वसत्यकामत्वादिकं (बृ. ४-३-६) "नेतिनेति" इत्यादिभिः प्रतिषिध्यमानत्वेन मिथ्याभूतमित्यवगन्तव्यम्; तत् कथं कल्याणगुणाकरत्वनिरस्तनिखिलदोषत्वरूपोभयलिङ्गत्वं ब्रह्मण इति—अत आह—

प्रकाशवच्चावैयर्थ्यात्। ३। २। १५॥

यथा, (तै. आन. १-१) "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यावैयर्थ्यात् प्रकाशस्वरूपत्वं ब्रह्मणोऽभ्युपगम्यते—तथा सत्यसङ्कल्पत्वसर्वज्ञत्वजगत्कारणत्वसर्वात्मकत्वनिरस्तनिखिलाविद्यादिदोषत्वाद्यभिधायिवाक्यावैयर्थ्यादुभयलिङ्गमेव ब्रह्म ॥ १५ ॥

आह च तन्मात्रम्। ३। २। १६॥

किञ्च, (तै. आन. १-१) "सत्यं ज्ञानमनन्तम्" इत्यादिवाक्यं ब्रह्मणः प्रकाशस्वरूपतामात्रं प्रतिपादयति; नान्यत् सत्यसङ्कल्पत्वादिकं वाक्यान्तरावगतं निषेधति।

---

स्वयं स्वाहितकरणायोगात् न तदर्थं रूपवत्त्वम्। स्वपर्यन्तरूपकरणं तु स्वसत्ताधीनसत्ताकत्वं सर्वस्य व्यञ्जयितुं स्वस्य सर्वत्रोपास्यत्वाराध्यत्वादिसिद्धये चेत्येवं विमृश्यम्। **कर्मवश्यमेवे**ति। लोके शास्यशासकयोर्भेदस्य स्पष्टत्वाच्च न स ब्राह्मणादिपदैः स्वात्मानमेव गृहीत्वा शासितुमर्हति! शास्यस्यैव च विधिनिषेधगम्यफलभाक्त्वमित्यकर्मवश्यमेव ब्रह्मेति भावः। **तस्मात्** विधिनिषेधाविषयत्वात् ॥ १४ ॥

सिद्धान्तिसंमततत्त्वहितपुमर्थयाथात्म्यनिरूपकमिदमुभयलिङ्गाधिकरणम् अत्राधिकरणमालायां नायकरत्नम्। अत्र ब्रह्मणो निर्दोषत्वं स्थापितम्—अथापि गुणाकरत्वाभावादुभयलिंगत्वाभावं शंकते **ननुचे**ति। नन्वधिकरणपूर्वपक्षी किमद्वैती, अन्यो वा। आद्ये हेयवस्तुसंबन्धात् जीववत् परस्यापि सदोषत्वं स्यादिति भेदग्रहणेन पूर्वपक्षः कृतो न युज्यते। नान्त्यः, प्रकृतनिश्शास्त्वशंकाया अन्येन कर्तुमशक्यत्वात् ॥ उच्यते। जीवब्रह्मभेदधीपूर्वकमेव पूर्वपक्षे प्रवृत्ते स्वयमुभयलिङ्गत्वं स्थापयन् बादरायणः, तस्य पूर्वपक्षस्य मृषावादिना क्रियमाणं परिहारं खण्डयितुं प्रकाशवच्चेत्यादिमूलजातं निबबन्ध। तत् तदनुगुणमवतार्य भाष्ये व्याख्यायते। अद्वैतिक्रियमाणः पूर्वपक्षपरिहारस्तावदेवम्—ब्रह्मणः सदोषत्वं यदिदमापाद्यते, तत् शुद्धे, बद्धे वा। अन्त्यमिष्टम्; किंतु न परमार्थतः। आद्यं तु न; तदा सर्वस्यैवाभावात सर्वकारणत्वादिगुणाकरत्वप्रसक्त्यभावात् निर्दोषत्वमात्रसत्त्वेनोभयलिङ्गत्वायोगादिति ॥ १५ ॥

ननु ज्ञानमिति ज्ञानस्वरूपत्वकथनात् ज्ञानगुणकत्वाभावे सिद्धे सर्वज्ञत्वसत्यसंकल्पत्वतन्मूलजगत्कारणत्वाद्यभावः उक्तप्राय इति गुणवत्त्ववचनानि अन्यथा नेयानीत्यत्राह **आह च तन्मात्र**मिति। ज्ञानस्वरूपतामात्रमाह; ज्ञानगुणकत्वं न व्यवच्छिनत्ति। तत्सदसद्भावविषये पुनरुदासीनं तद् वाक्यम्।

(बृ. ४-३-६) "नेतिनेति" इति च निषेधस्य विषयोऽनन्तरमेव वक्ष्यते ॥ १६ ॥

दर्शयति चाथो अपि स्मर्यते । ३ । २ । १७ ॥

दर्शयति च वेदान्तगणः कल्याणगुणाकरत्वं निरस्तनिखिलदोषत्वं च—(श्वे. ६-७-८) "तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् । स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः। न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", (मु. १-१-९) "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः", (तै. आन. ८-४) भीषाऽस्मात् वातः पवते भीषोदेति सूर्यः", "स एको ब्रह्मण आनन्दः", (तै. आ. ९-१) "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति", (श्वे. ६-१९) "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादिः। स्मर्यते च—(गी. १०-३) "यो मामजमनादिं च वेत्ति लोकमहेश्वरम्", (गी. १०-४२) "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्", (गी. ९-१०) "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते", (गी. १५-१७) "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः", (वि. पु. ५-१-४७-४८) "सर्वज्ञः सर्वकृत् सर्वशक्तिज्ञानबलर्द्धिमान् । अन्यूनश्चाप्यवृद्धिश्च स्वाधीनो नादिमान् वशी । क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः। निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरः क्रमः" इत्यादि ।

अतः सर्वत्रावस्थितस्यापि ब्रह्मणः उभयलिङ्गत्वात् तत्तत्स्थानप्रयुक्ता दोषा न परं ब्रह्म स्पृशन्ति ॥ १७ ॥

---

यः सर्वज्ञः सर्वविदित्यादिश्रुतिविरोधाच्च अस्माभिस्तावत्तात्पर्यकल्पनमशक्यम् । जडत्वव्यवच्छेदमात्रेण च पदसार्थक्यमिति । ननु नेतिनेतीति वाक्यैककण्ठ्याय तावत्तात्पर्यकल्पनेत्यत्राह **नेती**ति ॥ १६ ॥

**दर्शयति चाथो** । अथो इति कार्त्स्न्ये। कृत्स्नो वेदान्त इत्यर्थः । ननु प्रथमसूत्रे सर्वत्रहीत्युक्तमेवेदमिति किमनेन सूत्रेण ॥ उच्यते। कल्याणगुणाकरत्वे सर्वत्राभिहितेऽपि निर्गुणमित्यादिना तन्निषेधस्यापि कृततया तदन्यथासिद्धमिति शंकायाम्—आदरेण श्रुतिस्मृतिभिरपूर्वतया विहितानां गुणानां निषेधायोगात् उत्सर्गापवादनयेन सामान्यनिषेधो विहितव्यतिरिक्तविषयकः, तथा विशेषनिषेधानामपि श्रुतिस्मृतितोऽवगमात् सामान्यविशेषन्यायेन सामान्यनिषेधस्य तत्रोपसंहारश्चेति अंशद्वयज्ञापनार्थं सूत्रमिति। **दर्शयती**त्यस्य गुणान् विदधाति, विशेषनिषेधञ्च करोतीत्यर्थ.। **परः प्राप्तेः** प्राप्तिकाष्ठाभूतः। **निरधिष्ठः** आधारनिरपेक्षः। **क्रमः** "वृत्तिसर्गतायनेषु क्रमः" इति पाणिनिसूत्रात्, अप्रतिबन्धः उत्साहः स्फीततेत्यर्थत्रयमस्ति। तद्वान् इति **श्रीविष्णुचित्तीये**। उपरितनसूत्रसंगमनानुगुणतया प्रकृतमर्थं निगमयति **अतः सर्वत्रे**ति। निर्गुणपदव्यवच्छेद्यं न गुणाकरत्वम्; किंतु हेयगुणवत्त्वमित्यर्थः ॥ १७ ॥

ननु जलसूर्यचन्द्रदृष्टान्तोपन्यासात् ब्रह्मण उपाधिभूतपदार्थसंबन्धो नास्तीति जिज्ञापयिषितमित्य-

अत एव चोपमा सूर्यकादिवत् । ३ । २ । १८ ॥

यतो नानाविधेषु स्थानेषु स्थितस्यापि परस्य ब्रह्मणो न तत्प्रयुक्तदोषभाक्त्वम्, अत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवत् परमात्मा तत्रतत्रावस्थितोऽपि निर्दोष इति शास्त्रेषूपमा क्रियते—(याज्ञ. ३-१४४) "आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैको ह्यनेकस्थो (स्तु) जलाधारेष्विवांशुमान् ॥", (अमृतबिं) "एक एव हि भूतात्मा भूतेभूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्यादिषु ॥ १८ ॥

अत्र चोदयति—

अम्बुवदग्रहणात्तु न तथात्वम् । ३ । २ । १९ ॥

तुशब्दश्चोद्यं द्योतयति । अम्बुवदिति सप्तम्यन्तात् वतिः । अम्बुदर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते, न तथा पृथिव्यादिषु स्थानेषु परमात्मा गृह्यते । अम्ब्वादिषु हि सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते; न परमार्थतस्तत्रस्थाः । इह तु (बृ. माध्यं. ६-७) "यः पृथिव्यां तिष्ठन्...योऽप्सु तिष्ठन्...य आत्मनि तिष्ठन्" इत्येवमादिना परमार्थत एव परमात्मा पृथिव्यादिषु स्थितो गृह्यते । अतः सूर्यादेरम्बुदर्पणादिप्रयुक्तदोषाननुषङ्गः तत्रतत्र स्थित्यभावादेव । अतो न तथात्वम्—दार्ष्टान्तिकस्य न दृष्टान्ततुल्यत्वमित्यर्थः ॥ १९ ॥

---

वगम्यते इत्यत्राह अत एव चेति । सूर्याद्युपमा च दोषाभावादेव=औपाधिकाकाराभाववत्त्वमूलिकैवेत्यर्थः । सूर्यकपदस्यार्थमाह प्रतिबिम्बितसूर्येति । आदिना आकाशग्रहणमभिप्रेतम् । अत एव, आकाशमेकमित्युदाह्रियते । सूर्यकादिवदित्येतदनन्तरं सूत्रे इतिशब्दोऽध्याहार्यः; अन्यथा उपमाशब्दानन्वयात् । सूर्यकादिवदित्युच्यमाना उपमेत्यर्थः । भूतात्मा सर्वप्राण्यन्तर्यामी ॥ १८ ॥

चोद्यं द्योतयतीति । पूर्वोक्तव्यवच्छेदो हि तुशब्दार्थः; पूर्वं सिद्धान्तिनोक्तस्य व्यवच्छेदे सति चोद्यद्योतनमेव कृतं भवतीति । यथाऽम्बुनि अविद्यमानस्य सूर्यस्य ग्रहणम्, तथा पृथिव्यादावविद्यमानस्य ब्रह्मणो ग्रहणमित्यस्याभावात् विद्यमानस्यैव ग्रहणात् न ब्रह्मणि सूर्यवन्निर्दोषत्वरूपं सूर्यसादृश्यमिति सूत्रार्थः । तथाच पृथिव्यादेः पारमार्थ्ये जलाद्यसंबन्धिसूर्यतौल्यस्यायोगात् सूर्यस्येव ब्रह्मणो वस्तुसंबन्धाभाव एव विवक्षितः; स च पृथिव्याद्यपारमार्थ्य एव सुवच इति जगन्मिथ्यात्व-सर्वगुणराहित्यादिसिद्धिरिति पूर्वपक्ष्याशयः ॥ असंबन्धित्वं विवक्षितं चेत्, आकाशतौल्यं कथमुपपाद्यमिति चेद्—सूत्रे आदिपदेन चन्द्रग्रहणमेव पूर्वपक्षी मन्यते । अत एवाकाशाघटितविषयवाक्योदाहरणं शाङ्करे इति द्रष्टव्यम् । आकाशं प्रदर्श्य पूर्वपक्षे उभयसामञ्जस्याभावोऽनन्तरसूत्र एवोद्घाटनीय इति । तत्रापि शाङ्करे दृष्टान्तदार्ष्टान्तिकरूपोभयेत्याद्यर्थान्तरवर्णनं कृतमयुक्तमित्यन्यदेतत् ॥ १९ ॥

ज्ञानत्ववादः ज्ञानगुणकत्वादिनिरासाय न भवतीति, निर्गुणत्वादिर्वादः कल्याणगुणनिरासाय न भवतीति च पूर्वं ज्ञापितम्; अथेदम् । सूर्यादिदृष्टान्तवर्णनं तावत् आपाद्यमानस्य कस्यचिदनिष्टस्य निवर्तनार्थमिति सर्वसंमतम् । निवर्त्यमनिष्टञ्च पृथिव्यादिसंबन्धित्वमेवेति न युक्तम्—आकाशदृष्टान्तस्य, वस्तुतः तत्संबन्धि-

परिहरति---

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च । ३ । २ । २० ॥

पृथिव्यादिस्थानान्तर्भावात् स्थानिनः परस्य ब्रह्मणः स्वरूपतो गुणतश्च पृथिव्यादिस्थानगतवृद्धिह्रासादिदोषभाक्त्वमात्रं सूर्यादिदृष्टान्तेन निवर्त्यते । कथमिदमवगम्यते? उभयसामञ्जस्यादेवम्---उभयदृष्टान्तसामञ्जस्यादेवमिति निश्चीयते । "आकाशमेकं हि यथा घटादिषु पृथग् भवेत्", "जलाधारेष्विवांशुमान्" इति दोषवत्स्वनेकेषु वस्तुषु वस्तुतोऽवस्थितस्याकाशस्य, वस्तुतोऽनवस्थितस्यांशुमतश्चोभयस्य दृष्टान्तस्योपादानं हि परमात्मनः पृथिव्यादिगतदोषभाक्त्वनिवर्तनमात्रे प्रतिपाद्ये समञ्जसं भवति । घटकरकादिषु यथा वृद्धिह्रासभाक्षु पृथक्पृथक् संयुज्यमानमप्याकाशं वृद्धिह्रासादिदोषैर्न स्पृश्यते-- यथा च जलाधारेषु विषमेषु दृश्यमानोंऽशुमान् तद्गतवृद्धिह्रासादिभिर्न स्पृश्यते---तथाऽयं परमात्मा पृथिव्यादिषु नानाकारेष्वचेतनेषु, चेतनेषु च स्थितः तत्तद्गतवृद्धिह्रासादिदोषैरसंस्पृष्टः सर्वत्र वर्तमानोऽप्येक एव---अस्पृष्टदोषगन्धः कल्याणगुणाकर एव । एतदुक्तं भवति---यथा जलादिषु वस्तुतोऽनवस्थितस्यांशुमतो हेत्वभावात् जलादिदोषानभिष्वङ्गः, तथा पृथिव्यादिष्ववस्थितस्यापि परमात्मनो दोषप्रत्यनीकाकारतया दोषहेत्वभावान्न दोषसंबन्धः --इति । दर्शनाच्च---दृश्यते चैवं सर्वात्मना साधर्म्याभावेऽपि विवक्षितांशसाधर्म्यात् दृष्टान्तोपादानम्, सिंह इव माणवक

---

तया तदयोगात् । अतः सूर्याकाशोभयविधदृष्टान्तानुगुण्यायात्त निवर्त्यत्वाभिमतो धर्मः वृद्धिह्रासभाक्त्वरूप एवेति ज्ञायत इत्याह वृद्धीति । अन्तर्भावादित्यस्य अन्तर्भावप्रयुक्तमित्यर्थः । पृथिव्याद्यन्तःस्थितिबलात प्रतीयमानं यत् ब्रह्मणि वृद्धिह्रासादिदोषभाक्त्वम्, तदेव सूर्यादिनिरूपितं सादृश्यम्, तदेवौपाधिकत्वेन वस्तुतोऽनवस्थितत्वेन च प्रकृते विवक्षितम्, न तु पदार्थासंबन्धित्वादि; सूर्यस्य जलासंबन्धित्वेऽपि आकाशस्य घटादिसंबन्धित्वात् असंबन्धित्वस्योभयदृष्टान्तानुगतत्वाभावात् । वृद्धिह्रासभाक्त्वग्रहणे चोभयसामञ्जस्यादेवमवगमः । न केवलमुभयसामञ्जस्यात्; दर्शनाच्चैवम्=पृथिव्यादिसंबन्धिन आकाशस्यैव दृष्टान्तता तर्हि युक्ता, न तु सूर्यस्येति न; किञ्चिदंशवैषम्येऽपि विवक्षितांशमात्रमादाय दृष्टान्तनिदर्शनस्य बहुलं दर्शनादिति सूत्रार्थः । एवञ्च सूत्रे तथात्वमिति पूर्वसूत्रस्थपदमनुषज्य तथात्वं सूर्यादिसादृश्यं तावत् वृद्धिह्रासादिभाक्त्वमित्यर्थः सुस्वीकरः । निवर्त्यते इति भाष्यमर्थलब्धांशकथनमिति स्यात् । अतो नाध्याहारक्लेशोऽपि । वृद्धिह्रासावित्यप्रयुज्य भाक्त्वमित्यधिकप्रयोगः उपाधिगतौ तौ आरोपवशाद् भजति, न तु तौ वस्तुत इति ज्ञापनाय । एक एवेति श्लोकस्थपदम्, तद्व्याख्यानम् अस्पृष्टदोषेत्यादि । श्लोके पृथगिति बहुधेति चैव श्रवणात् वृद्धिह्रासपदाभावात् उपाधिगतो भेदः आकाशादौ यथाऽऽरोपितः, तथा ब्रह्मणीत्येवार्थवर्णनसंभवेऽपि सूत्रे वृद्धिह्रासकथनं भेदकाकारपुरस्सरमेव भेदस्य ग्राह्यत्वात् । आरोपितत्वमतिदार्ढ्याय जलसूर्यदृष्टान्तकथनम् । असंबन्धिस्थलेऽपि यद्यारोपः, संबन्धिस्थले हि स कैमुत्यसिद्ध इति ज्ञापयितुं विवृणोति एतदुक्तं भवतीति । जगन्मिथ्यात्ववादे तु न दृष्टान्तसामञ्जस्यम्; आकाशवत्

**इत्यादौ। अतः स्वभावतो निरस्तनिखिलाज्ञानादिदोषगन्धस्य समस्तकल्याणगुणाकरस्य पृथिव्यादिस्थानतोऽपि न दोषसंभवः ॥ २० ॥**

**अथ स्यात्**—(बृ. ४-३-१) **"द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तञ्च" इति प्रकृत्य समस्तं स्थूलसूक्ष्मरूपं प्रपञ्चं ब्रह्मणो रूपत्वेन परामृश्य,** (बृ. ४-३-६) **"तस्य हैतस्य पुरुषस्य रूपम्, यथा माहारजनं वासः" इत्यादिना आकारविशेषं चाभिधाय,** (बृ. ४-३-६) **'अथात आदेशो नेति नेति; न ह्येतस्मादितिनेत्यन्यत् परमस्ति" इति सर्वं प्रकृतं ब्रह्मणः प्रकारमितिशब्देन परामृश्य तत् सर्वं प्रतिषिध्य, 'सर्वविशेषाधिष्ठानं सन्मात्रमेव ब्रह्म; विशेषास्त्वेवंविधं स्वस्वरूपमजानता ब्रह्मणा कल्पिताः' इति दर्शयति। अतः कथमुभयलिङ्गत्वं ब्रह्मण इति—अत्राह—**

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः। ३। २। २१ ॥

**नैतदुपपद्यते, यद् ब्रह्मणः प्रकृतविशेषवत्त्वं** नेतिनेति **इति प्रतिषिध्यत-इति; तथा सति भ्रान्तजल्पितायमानत्वात्। न हि ब्रह्मणो विशेषणतया प्रमाणान्तराप्रज्ञातं सर्वं तद्विशेषणत्वे-**

---

सूर्यवच्च घटादीनां जलस्य च वास्तवत्वात्। क्वचित् संबन्धोऽप्यस्ति, क्वचिन्नास्तीत्येतावत एव वैषम्यात्। तत् सिद्धं जगतो नित्यानुकूलत्वात् पूर्वोक्तादिव, ब्रह्मगतात् स्वभावविप्रकर्षादपि ब्रह्मणि न हेयगन्ध इति ॥

यदुक्तं विहितव्यतिरिक्तविषयो निषेध इति, तन्न—विहितस्यैव विशिष्य मूर्तामूर्तब्राह्मणे निषेधात्। अतो निर्विशेषमेव तत्त्वमिति शङ्कां दर्शयति **अथस्यादिति**। मूर्तामूर्तब्राह्मणे मूर्तत्व-मर्त्यत्व-स्थितत्व-सत्त्वरूपधर्मचतुष्कवत्त्वेन पृथिव्यप्तेजांसि, अमूर्तत्व-अमृतत्व-यत्त्व-त्यत्त्वरूपचतुष्टयवत्त्वेन च वाय्वन्तरिक्षे निर्दिश्य, पृथिव्यादित्रयरसत्वेनादित्यमण्डलं वाय्वन्तरिक्षरसत्वेन तत्रत्यपुरुषं चाभिधाय, तथैवाध्यात्मं प्राणहार्दाकाशातिरिक्तांशं मूर्तत्वादिचतुष्कवत्त्वेन, प्राणहार्दाकाशौ अमूर्तत्वादिचतुष्कवत्त्वेन, अक्षि अध्यात्ममूर्तादिरसत्वेन, तत्रत्यपुरुषं प्राणाद्यमूर्तरसत्वेन च प्रतिपाद्य, एवमुभयरूपस्य पुरुषस्य विग्रहः कौसुम्भवस्त्र-पाण्डुकम्बल-इन्द्रगोप-अग्निज्वाला-विद्युत्समानवर्ण इति च प्रथमं न्यरूपि। अथ, 'अथात आदेशो नेति नेती'ति वाक्येन पूर्वोक्तरूपवत्त्वस्यैव निषेधः कृत इति निष्प्रपञ्चं ब्रह्मेति ज्ञायत इत्याशयः। **माहारजनम्**। महारजनं कुसुम्भः इति **टीका**। हरिद्रेति **कल्पतरा**वुक्तत्वेऽपि, 'नैघण्टुकास्तु महारजनं कुसुम्भमाहुः' इत्युक्तं **परिमले। न ह्येतस्मात् इति नेति अन्यत् परमस्ती**ति। **इति न**—उक्तरूपविशिष्टं न इत्युच्यमानादेतस्मादन्यत् किमपि नास्तीति पूर्वपक्ष्यर्थः। यत् मूर्तामूर्तरूपद्वयं विग्रहवत्त्वं चोक्तम्, ईदृशाचेतनमात्रप्रकारकं न; किंतु चेतनप्रकारकमपीति भूयोंशकथनाय, अथात आदेशो नेतीत्यारम्भ इति उत्तरवाक्यतः स्पष्टमवगमात् इति नेत्यस्य प्रकृतरूपमात्रवन्नेत्यर्थ इति सिद्धान्तमाह **प्रकृते**ति। **एतावत्त्वं** परिच्छिन्नत्वम् प्रकृतमात्रवत्त्वम्। 'ये....विशेषाः प्रकृताः तद्विशिष्टतया.... इयता' इति, 'इयता प्रकृता' इति च भाषणात् प्रकृतैरेतावत्त्वमिति, प्रकृतमेतावत्त्वमिति च विग्रहो लभ्यते। उपरि विशेषान्तरवर्णनाभावेऽपि प्रकृतवाक्यमियत्तानिषेधपरमेव वक्तव्यमिति दर्शयति **न ही**ति।

नोपदिश्य पुनस्तदेवानुन्मत्तः प्रतिषेधति । यद्यपि निर्दिश्यमानेषु केचन पदार्थाः प्रमाणान्तरप्रसिद्धाः—तथापि तेषां ब्रह्मणः प्रकारत्वमप्रज्ञातमेव ; इतरेषां तु स्वरूपं ब्रह्मणः प्रकारत्वं चाज्ञातम् । अतस्तेषामनुवादासंभवात् अत्रैवोपदिश्यन्ते । अतस्तन्निषेधो नोपपद्यते । यस्मादेवम्, तस्मात् प्रकृतैतावत्त्वं ब्रह्मणः प्रतिषेधतीदं वाक्यम् । ये ब्रह्मणो विशेषाः प्रकृताः ; तद्विशिष्टतया ब्रह्मणः प्रतीयमाना इयत्ता नेतिनेति इति प्रतिषिध्यते । नेतिनेति नैवं नैवम्=उक्तप्रकारमात्रविशिष्टं न भवति ब्रह्म । उक्तप्रकारविशिष्टतया या ब्रह्मण इयत्ता प्रकृता, साऽत्र इतिशब्देन परामृश्यत इत्यर्थः ॥ यतश्च निषेधानन्तरं ब्रह्मणो भूयो गुणजातं ब्रवीति, अतश्च प्रकृतविशेषणयोगित्वमात्रं ब्रह्मणः प्रतिषेधति । ब्रवीति हि भूयो गुणजातम्, (बृ. ४-३-६) "न ह्येतस्मादितिनेत्यन्यत् परमस्ति । अथ नामधेयं सत्यस्य सत्यमिति ; प्राणा वै सत्यम् ; तेषामेष सत्यम्" इति । अयमर्थः—इतिनेति यद्ब्रह्म प्रतिपादितम्, तस्मादेतस्मादन्यद्वस्तु परं न ह्यस्ति=ब्रह्मणोऽन्यत् स्वरूपतो गुणतश्चोत्कृष्टं नास्तीत्यर्थः (?) । तस्य च ब्रह्मणः सत्यस्य सत्यमिति नामधेयम् । तस्य च निर्वचनम्, "प्राणा वै सत्यं तेषामेष सत्यम्" इति । प्राणशब्देन प्राणसाहचर्यात् जीवाः परामृश्यन्ते । ते तावत् सत्यम्, वियदादिवत् स्वरूपान्यथाभावरूपपरिणामाभावात् । तेषामेष सत्यम्—तेभ्योऽप्येष परमपुरुषः सत्यम्—जीवानां कर्मानुगुण्येन ज्ञानसङ्कोचविकासौ विद्येते ; परमपुरुषस्य त्वपहतपाप्मनस्तौ न विद्येते ; अतस्तेभ्योऽप्येष सत्यम् ॥ अतश्च एवं वाक्यशेषोदितगुणजातयोगात् नेतिनेति इति ब्रह्मणः सविशेषत्वं न प्रतिषिध्यते ; अपि तु पूर्वप्रकृतेयत्तामात्रम् । अत उभयलिङ्गमेव परं ब्रह्म ॥ २१ ॥

ब्रह्मणः प्रमाणान्तरागोचरत्वेन तत्संबन्धितया मूर्तामूर्तादिरूपानुवादेन तन्निषेधासंभवात् प्रकृतेयत्ताप्रतिषेध उक्तः ; तदेव प्रमाणान्तरागोचरत्वं द्रढयति—

तदव्यक्तमाह हि । ३ । २ । २२ ॥

---

**इत्यर्थ** इति ; इति सूत्रपूर्वखण्डार्थ इत्यर्थः । उत्तरखण्डाधिककथनमपि हेतुरित्याह **यतश्चे**ति । सूत्रे **तत** इत्यस्य प्रतिषेधानन्तरमित्यर्थः । **भूयः** उक्तादधिकम् ; अचेतनरूपवत्त्वादधिकं चेतनाख्यरूपवत्त्वम् । निर्विशेषत्वमभिमतं चेत्—पश्चात् रूपान्तरोक्तिर्विरुध्येत । **नहीति** वाक्ये **अन्यत् पर**मिति पदद्वयसत्त्वाद उत्कृष्टमन्यन्नास्ति, सर्वमन्यन्निकृष्टम् ; अतश्चेतनाख्यरूपवदपीदमेवेति वाक्यार्थः । **तेषा**मित्युक्तप्राणेषु ब्रह्मणोऽनन्तर्भावात् निर्धारणषष्ठ्ययोगात **तेभ्य** इति व्याख्यातम् । **नेतिनेती**ति वीप्सा आदरातिशयात् । (बृ. ६-४-२२) 'स एष नेति नेत्यात्मा' इति वाक्ये नेतिनेतीत्यस्य तु तदुत्तरवाक्यानुरोधात् चेतनाचेतनविलक्षण इत्यर्थः ॥ २१ ॥

जीवब्रह्मणोरभेदे जीवस्य स्वं प्रति स्वयंप्रकाशत्वात् ब्रह्मापि जीवं प्रति व्यक्तमेवेति प्रपञ्चे जीवसंबन्धित्वावगमे लोकसिद्धे ब्रह्मसंबन्धित्वमपि ज्ञातमेवेति रभसवादं निरसितुं तस्य जीवातिरेकात् सर्वथैवाव्यक्तत्वमाह **तदव्यक्त**मिति ; तदवतारयति **ब्रह्मण** इति । **आदिना** विग्रहपरिग्रहः ॥ २२ ॥

तत्—ब्रह्म प्रमाणान्तरेण न व्यज्यते। आह हि शास्त्रम्, (तै. नारा. १०) "**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्**", (मु. ३-१-८) "**न चक्षुषा गृह्यते नापि वाचा**" इत्यादि॥

हेत्वन्तरं चाह—

**अपि संराधने प्रत्यक्षानुमानाभ्याम्। ३। २। २३॥**

अपि च संराधने—**सम्यक्प्रीणने भक्तिरूपापन्ने निदिध्यासन एवास्य साक्षात्कारः, नान्यत्रेति श्रुतिस्मृतिभ्यामवगम्यते।** (मु. ३-२-३) "**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्**", (मु. ३-१-८) "**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं** ध्यायमानः" **इति श्रुतिः। स्मृतिरपि,** (गी. ११) "**नाहं वेदैर्न तपसा न दानेन न चेज्यया**···**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप" इति। भक्तिरूपापन्नमेवोपासनं** संराधनम्-तस्य **प्रीणनमिति पूर्वमेवोक्तम्। अतो निदिध्यासनाय ब्रह्मस्वरूपमुपदिशत्, "द्वे वाव ब्रह्मणः" इत्यादिशास्त्रं ब्रह्मणो मूर्तामूर्तरूपद्वयादिविशिष्टतां प्रागसिद्धां नानुवदितुं क्षमम्॥२३॥**

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्। ३। २। २४॥**

**इतश्च प्रकृतैतावत्त्वमेव प्रतिषेधति, न मूर्तामूर्तादिविशिष्टत्वम्; यतः साक्षात्कृतपरब्रह्मस्वरूपाणां वामदेवादीनां दर्शने** प्रकाशादिवत् **ज्ञानानन्दादिस्वरूपवत् मूर्तामूर्तादिप्रपञ्चविशिष्ट-**

यतः स्वभावतो न व्यक्तत्वम्, अत एव संराधनापेक्षेत्याह **अपि संराधन** इति। **अपी**त्यस्य अपि-चेत्यर्थः। चकाराप्रयोगादर्थान्तरमपि गम्यते—संराधनेऽपि तदव्यक्तमेव—इन्द्रियजन्यप्रत्यक्षाविषय एव। संराधने भक्तिरूपापन्ने तस्य दर्शनसमानाकारज्ञानविषयत्वेऽपि सम्यग्दृष्टत्वरूपव्यक्तत्वाभावात्। दर्शन-समानाकारध्यानानन्तरभाविभगवत्प्रसादायत्तपरज्ञानविषयतया तु व्यक्तत्वं भवेत्। तत् धर्मभूतज्ञानबलात्; न तु मनसेति। इदमेव, ज्ञानप्रसादेनेति भन्ङ्गयोच्यते—विशुद्धचेताः तद्बलात् ध्यायमानः तज्ज्ञानवैशद्येन, तदधीनभगवत्प्रसादेन परज्ञानादिना तं साक्षात्करोतीति। श्रुतौ तु पश्यतीतिपदं द्रष्टुमिति गीता-पदसमानार्थं परज्ञानपरम्। **संराधन**पदेन परजीवयोरुच्चनीचभावादिस्पष्टीकरणात् अभेदभ्रमनिरासः। एवं व्यक्तत्वे सत्यप्यव्यक्तत्ववचनं दर्शनकरणभूतप्रमाणागोचरत्वादिति॥ २३॥

ननु तत्त्वज्ञानं प्रति भक्तेः कारणत्वमिष्यते; परं तु तत् तत्त्वज्ञानं निर्विशेषविषयकमेवेति तन्मतनिरासायाह **प्रकाशादिवच्चे**ति। प्रकाशानन्दादिस्वरूपस्येव मूर्तामूर्तादेरपि ब्रह्मधर्मत्वे विशेषो नास्ति। सच्चिदानन्दपदानामत्यन्तपर्यायत्वाभावात् स्वरूपनिरूपकधर्मभेदा अवश्यमाश्रयणीयाः। तावद्विशिष्टत्वेऽपि अद्वैतं धर्म्यैक्यमात्रेणैव निर्वाह्यम्। तद्वत् मूर्तामूर्तादेरपि तद्धर्मत्वात् सर्वविशिष्टवस्त्वद्वैतं सर्वसत्यत्वञ्चाक्षतम्। एवं तत्त्वज्ञाने प्रकाशोऽपि ज्ञानानन्दादिस्वरूपनिरूपकधर्माणामङ्गीकार्यः, तदभाने धर्मिभानायोगात्। तद्वत् मूर्तामूर्तरूपाणामपि प्रकाशो भवत्येव तत्त्वज्ञाने, यदि संराधनात्मकं कर्म वामदेवादिभिरिव

ताया अपि ब्रह्मगुणत्वाविशेष्यं प्रतीयते। (बृ. ३-४-१०) "तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इत्यादि। ब्रह्मस्वरूपभूतप्रकाशानन्दादिश्च तेषां वामदेवादीनां संराधनात्मके कर्मण्यभ्यासादुपलभ्यते; तद्वच्चाभ्यस्तसंराधनानां तेषां मूर्तामूर्तादिविशिष्टत्वमप्यविशेषेण प्रतीयत इत्यर्थः ॥ २४ ॥

उक्तं ब्रह्मण उभयलिङ्गत्वमुपसंहरति—

अतोऽनन्तेन तथा हि लिङ्गम्। ३। २। २५॥

अत.—उक्तैर्हेतुभिः ब्रह्मणः अनन्तेन कल्याणगुणगणेन विशिष्टत्वं सिद्धम्। तथा हि सत्युभयलिङ्गं ब्रह्म उपपन्नं भवति ॥ २५ ॥ इति उभयलिङ्गाधिकरणम् ॥ ५ ॥

८०. अहिकुण्डलाधिकरणम् ३-२-६ ॥

उभयव्यपदेशात्त्वहिकुण्डलवत्। ३। २। २६॥

मूर्तामूर्तात्मकस्य अचित्प्रपञ्चस्य ब्रह्मणो रूपत्वम्, (बृ. ४-३ १) "द्वे वाव ब्रह्मणो

---

सम्यगभ्यस्यते। एवमनभिमत्य, संराधनात्मिका भक्तिरभ्यस्ता विशिष्टविषयिणी, तदधीनः प्रकाशस्तु निर्विशेषस्येति वर्णनं तु निर्मूलम्। प्रत्युत भक्तिर्यावदंशविषयिणी, ततोऽधिकं परिपूर्णं तत्प्रसादात् परज्ञाने प्रकाशते इत्येव प्रामाणिकमिति सूत्राशयः। सूत्रे द्वितीयं प्रकाशपदं तत्त्वज्ञानकृतसर्वप्रकाशपरम्। ब्रह्मस्वरूपभूतप्रकाशानन्दादिश्चेति भाष्यं तु मुखान्तरेणार्थानुवादः; अन्यथा क्लेशात्। सूत्रे कर्मशब्दप्रयोगः भक्तेरपि ध्यानस्य मानसकर्मत्वात् कर्मत्यागैदम्पर्यैरतत्त्वज्ञानं भवत्यनुवर्णनकथनं कथं युज्यत इति तन्मतदोषख्यापनाय ॥ २४ ॥

उपक्रान्तमुभयलिङ्गत्वं वृद्धिह्राससूत्रपर्यन्तेनोपपाद्य शास्त्रेणैव साक्षात् स्वोक्तप्रपञ्चनिषेधस्यैव क्रियमाणतया प्रपञ्चाभावात् न कल्याणगुणाकरत्वप्रसक्तिरित्याशङ्कायां प्रकृतेत्यादिसूत्रैः परिहारः कृतः। एतद्द्वितीयांशोपसंहारपूर्वकं प्रथमांशमप्युपसंहरति अत इति सूत्रेण। एवं प्रथमांशोपसंहारादेवैतदन्तमेकमधिकरणम्। उक्तैर्हेतुभिः विहितनिषेधायोग-विशेषान्तरोपदेश-संराधनीयत्व-तदधीनसर्वप्रकाशवत्त्वरूपैः। कल्याणगुणगणेन प्रपञ्चेश्वरत्वप्रयोजकेन सर्वेणाऽऽकारेण। तथा हि लिङ्गमिति किमर्थमिति चेत्—प्रथमांशोपसंहाराय; निर्दोषत्वरूपलिङ्गमपि दोषरूपप्रतियोग्यप्रसिद्धौ दुरुपपादमिति तद्बलादपि दोषतदाश्रयरूपप्रपञ्चसिद्धिरिति ज्ञापनाय च। यद्वा कल्याणगुणगणेनेत्यस्य, भगवदनुकूलानां तद्गुणभूतानां परश्शतब्रह्माण्डव्यष्टिरूपसर्वप्रपञ्चानां गणेनेत्यर्थः। प्रपञ्चे कल्याणत्वोक्तिः तस्मिन् दोषप्रसङ्गाभावोपपादिका। एवमनन्तप्रपञ्चसहितमेव ब्रह्म; तथासत्येव हि उभयलिङ्गं ब्रह्म भवतीति सूत्रार्थः ॥ २५ ॥

संगतिमाह मूर्तेति। पञ्चानां भूतानामेव मूर्तामूर्तशब्दार्थत्वस्यात्र श्रुताववगमात् अचित्प्रपञ्चस्येति। नन्वत्राप्यधिकरणे मूर्तामूर्तब्राह्मणविचारश्चेत्, तद्विचारकरण एवैतदन्तर्भावः स्यात्। तद्विचारप्रवृत्तप्रकृतैतावत्त्वसूत्रप्रभृति वा स्यादनेन सहैकमधिकरणं शाङ्करवदिति चेन्न—पूर्वसूत्रस्वारस्यादधिकरणैक्यस्य तावत्पर्यन्तत्वावगमात्। प्रकृतैतावत्त्वादिसूत्रजातस्य पूर्वाधिकरणार्थोपपादकतया

रूपे" इत्यादिनोपदिश्यते।

—(बृ. ४-२) "अथात आदेशो नेति नेति" इति मूर्तामूर्ताचिद्वस्तुरूपतया ब्रह्मण इयत्ता प्रतिषिध्यते। "न ह्येतस्मादिति नेत्यन्यत् परमस्ति" इति ब्रह्मणोऽन्यदुत्कृष्टं न ह्यस्तीति प्रतिपादितम्। तदुपपादनाय, "अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति प्राणशब्दनिर्दिष्टेभ्यश्चेतनेभ्योऽप्येष सत्यमिति, कदाचिदपि ज्ञानादि-सङ्कोचाभावादुक्तम्। तथा, (श्वे. ६-१६) "प्रधानक्षेत्रज्ञपतिर्गुणेशः", (तै. ना. ३) "पतिं विश्वस्याऽऽत्मेश्वरम्", (श्वे. ६-१३) "नित्यो नित्यानां चेतनश्चेतनानाम्" इत्यादिश्रुतेश्चायमर्थोऽवगम्यते—

तस्याचिद्वस्तुनो ब्रह्मरूपत्वप्रकार इदानीं चिन्त्यते ब्रह्मणो निर्दोषत्वसिद्ध्यर्थम्—किमस्याचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डलन्यायेन, उत प्रभाप्रभावतोरिवैकजातियोगेन, उत जीवस्येव विशेषणविशेष्यतया अंशांशिभावेन इति।

—इह व्याख्यमानं विशेषणविशेष्यभावमङ्गीकृत्य, (शारी. १-४-२३) "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्", (शारी. २-१-१५) "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र सूक्ष्मचिदचिद्वस्तुविशिष्टाद्ब्रह्मणः स्थूलचिदचिद्वस्तुविशिष्टस्योत्पत्तिरनन्यत्वं चोक्तम्—

**किं युक्तम्? अहिकुण्डलवदिति; कुतः? उभयव्यपदेशात्।** (बृ. ४-५-१) "ब्रह्मैवेदं सर्वम्", (छा. ७-२५ २) "आत्मैवेदं सर्वम्" इति तादात्म्यव्यपदेशात्, (छा. ६-३ २) "हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" इत्यादिभेदव्यपदेशाच्च

---

च तदधिकरणान्तर्भाव एव। प्रकृताधिकरणे च न मूर्तामूर्तब्रह्मणमात्रं विषयः, किंतु ब्रह्मरूपतापरं सर्वं वाक्यमिति। न च निर्दोषत्वस्थापकतयाऽस्य पूर्वाधिकरणशेषता; पूर्वं मृषावादिरीतिनिरासात् अत्र भास्करादिभङ्गीनिरासाच्च वैषम्यात्। पूर्वाधिकरणे प्रपञ्चं स्वीकृत्यैव निर्दोषत्वादिकमुपपादनीयमित्युक्तम्। एवं निर्दोषत्वं सिद्धम्। अथास्मिन्नधिकरणे तन्निर्दोषत्वं किं ब्रह्मणि कार्त्स्न्येन, उतांशेन इति विचार्यते—प्रपञ्चस्य ब्रह्मपरिणामत्वे, नानाब्रह्मवादे च अंशत इति पक्षः स्यात्; ब्रह्मैकमेव; प्रपञ्चस्तदन्यः सन् तच्छरीरमेवेति पक्षे च कार्त्स्न्येन निर्दोषतेति विचारान्तरमेतदिति। पूर्वाधिकरणे जागरादिदेहसंबन्धप्रयुक्तदोषराहित्यमुक्तम्; अत्र देहादिसर्वपदार्थरूपताप्रयुक्तजाड्यादिदोषशंकापरिहारः क्रियत इति संगतिरितः सिद्ध्यति॥ प्रपञ्चो न; ब्रह्मैवास्मि; तदेव सत्यमिति तत्रत्यवाक्यानामर्थ इत्यस्य खण्डितत्वात् विचारो युक्त इति वक्तुमाह **अथात** इति। **अयमर्थ** इति; चिदचिद्विशिष्टत्वं, तत उत्कर्षः, सर्वसत्यत्वञ्चेत्यर्थः। चितां रूपत्वप्रकारस्यांशाधिकरणसिद्धत्वात् पारिशेष्यादाह **तस्याचिद्वस्तुन** इति। **तस्य**— एवं पारमार्थिकनया सिद्धस्य। नन्वेकत्रोक्तस्य न्यायस्यान्यत्रातिदेशसंभवात् किमिति पृथग्विचारः इति चेत्—दुःखित्वाद्यपुरुषार्थस्येव जाड्यादेर्हेयत्वं न भवति, तदिष्टत्वे तस्याप्यनुकूलत्वादिति परिणामित्वसंभवशंकामधिकां शमयितुमिति। प्रथमपूर्वपक्षः अहिकुण्डलवदिति। **कुण्डलभावः सृष्टौ, ऋजुभावः**

अहेः कुण्डलभाव—ऋजुभाववत्, तस्यैव ब्रह्मणः संस्थानविशेषा एवाचिद्वस्तूनि ॥ २६ ॥

प्रकाशाश्रयवद्वा तेजस्त्वात् । ३ । २ । २७ ॥

वाशब्दः पक्षव्यावृत्त्यर्थः। ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थाने भेदश्रुतयः, ब्रह्मणोऽपरिणामित्ववादिन्योऽपि बाधिता भवेयुः। अतः, यथा तेजस्त्वेन प्रभातदाश्रययोर्भिन्नयोरपि तादात्म्यम्, एवमचित्प्रपञ्चस्य ब्रह्मणा रूपत्वमित्यर्थः ॥ २७ ॥

पूर्ववद्वा । ३ । २ । २८ ॥

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः। एकस्यैव द्रव्यस्यावस्थाविशेषयोगे [ऽपि] ब्रह्मस्वरूपस्यैवाचिद्द्रव्यरूपत्वात् उक्तदोषादनिर्मोक्षः। अथ प्रभातदाश्रययोरिवाचिद्ब्रह्मणोर्ब्रह्मत्वजातियोगमात्रम्—एवं तर्ह्यश्वत्वगोत्ववद् ब्रह्मापीश्वरे चिदचिद्वस्तुनोश्चानुवर्तमानं सामान्यमिति सकलश्रुतिस्मृतिव्यवहारविरोधः। पूर्ववदेव—(शारी. २-३-४२) "अंशो नानाव्यपदेशात्", (शारी. २-३-४५) "प्रकाशादिवत्तु नैवं परः" इति जीववत् पृथक्सिद्ध्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वम्। विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः। विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्यः। ब्रह्मणो निर्दोषत्वं च रक्षितम्। तदेवं प्रकाशजातिगुणशरीराणां मणिव्यक्तिगुण्यात्मनः प्रति अपृथक्सिद्धिलक्षणविशेषणतया यथा अंश-

---

ब्रह्मप्रकृतिरूपतायाम् ॥ २६ ॥

पूर्वपक्षान्तरमाह **प्रकाशेति**। तेजस्त्वादिति दृष्टान्तान्वयि। ब्रह्मत्वादिति पूरणीयम्। प्रभातदाश्रययोस्तेजस्त्वरूपजात्यैक्यादिव प्रपञ्चेश्वरयोरेकब्रह्मत्वान्वयादैक्यमित्यर्थः। **भेदश्रुतयः**—'देवात्मशक्तिं स्वगुणैर्निरूढाम्', 'एतत् परमं तु ब्रह्म तस्मिंस्त्रयम्', 'अत्रान्तरं वेदविदो विदित्वा', भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति श्वेताश्वतरीयादिश्रुतयः। **अपरिणामित्वेति**। 'निष्कलम्, सत्यम्' 'अस्मात् मायी सृजते', 'सोऽभिध्याय शरीरात्' इत्यादयो द्रष्टव्याः। सिद्धान्त इवास्मिन् पक्षेऽपि प्रकृतेरीश्वराद् भेदो विशेषणत्वादि चास्ति। ब्रह्मत्वं साधारणमित्यंशोऽधिकः ॥ २७ ॥

वस्तुत्वादिवत् ब्रह्मत्वस्य साधारण्ये, ब्रह्मविदाप्नोति, ब्रह्म वेद ब्रह्मैव भवति, ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्, यतो वा इमानि, बृहति बृंहयति, तस्मिन्नेव ब्रह्मशब्दः इत्यादिसर्वविरोधात् तदनङ्गीकारेण प्रकाशाश्रयवद् विशेष्यविशेषणभावेन सर्वनिर्वाहमभिप्रेत्य सिद्धान्तमाह **पूर्ववद्वेति**। पूर्वशब्देनाहिकुण्डलविवक्षायां अहिकुण्डलसूत्रस्य द्वितीयसूत्रत्वकल्पनया एतत्सूत्रत्याग एव युक्तः। अंशाधिकरणोपरि अधिकाशंकनेनैतदधिकरणप्रवृत्त्या तदधिकरणोपस्थितिः सुलभा। विषयवाक्येषु जीवनिर्देशाच्च तदुपस्थितिरस्त्येव। प्रकाशादिवच्चैत्यस्यार्थत्वसंभवेऽपि उपस्थित्यतिशयात् जीववदित्यर्थ एव साधीयान्। **उक्तदोषात्** भेदश्रुत्यपरिणामश्रुतिबाधरूपात्। अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेतिरीत्या चिन्मात्रे ब्रह्मणि बाह्यकल्पनया साध्यस्य कस्यचिदभावात् जडस्य तदन्यत्वमेवोचितम्। सर्वप्रदेशावच्छेदेन चैतन्यस्वरूपे अंशतोऽपि चैतन्यरूपत्वभङ्गो न युक्तः। **ब्रह्मापीति**। ब्रह्मत्वमपीत्यर्थः। त्रिविधं ब्रह्मेत्यपि, षड्विधा

त्वम्; तथेह जीवस्याचिद्वस्तुनश्च ब्रह्म प्रति अंशत्वम् ॥ २८ ॥

प्रतिषेधाच्च । ३ । २ । २९ । ॥

(बृ. ६-३-२५) "स वा एष महान् अज आत्माऽजरोऽमरः", (छा. ८-१-५) "नास्य जरयैतज्जीर्यति" इत्यादिभिः ब्रह्मणोऽचिद्धर्मप्रतिषेधाच्च विशेषणविशेष्यत्वेनैवांशांशिभाव इत्यर्थः। अतः सूक्ष्मचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म, स्थूलचिदचिद्वस्तुविशिष्टं कार्यभूतं ब्रह्मेति कारणात् कार्यस्यानन्यत्वम्, कारणभूतब्रह्मविज्ञानेन कार्यस्य ज्ञाततेत्यादि सर्वमुपपन्नम्; ब्रह्मणो निर्दोषत्वं च रक्षितम्। ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेन चोभयलिङ्गत्वमपि सिद्धम् ॥ २९ ॥ इति अहिकुण्डलाधिकरणम् ॥ ६ ॥

८१. पराधिकरणम् ३-२-७ ॥

परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः । ३ । २ । ३० ॥

इदानीमस्मात् परस्मात् जगन्निमित्तोपादानरूपपरमकारणात् परब्रह्मणः परमपि किञ्चित् तत्त्वमस्तीति कैश्चिद्धेत्वाभासैराशङ्क्य निराक्रियते, अस्योपास्यस्य निर्दोषत्वानवधिकातिशयासंख्येयकल्याणगुणाकरत्वस्थेम्ने। तत्रेयमाशङ्का—यदिदं परं ब्रह्मोभयलिङ्गम्, एतस्मात् निखिलजगत्कारणात् परमपि किञ्चित् तत्त्वमस्ति ॥ कथम् ॥ (छा. ८-४-१) 'अथ य आत्मा स सेतुर्विधृतिः" इति अस्य परस्य सेतुत्वव्यपदेशात्। सेतुशब्दस्य च लोके कूलान्तरप्राप्तिहेतौ प्रसिद्धेरितोऽन्यदनेन प्राप्तव्यमस्तीति गम्यते। तथा, (छा. ८-४-२) "एतं सेतुं तीर्त्वाऽन्धस्सन् अनन्धो भवति" इति तरितव्यता चास्याभिधीयते; अतश्चान्यत् प्राप्यमस्ति। उन्मानव्यपदेशाच्च—उन्मितं-परिमितम् इदं परं ब्रह्म; (छा. ३-१८-२) चतुष्पाद् ब्रह्म षोडशकलम् इत्युन्मानव्यपदेशात्। स चायमुन्मानव्यपदेशः तेन सेतुना प्राप्यस्यानु-

---

शरणागतिरिरितिवत् कारणस्य कार्यस्य च चेतनाचेतनवैशिष्ट्यनैयत्येनोपपन्नम् ॥ २८ ॥

इत्यादीत्यादिना, 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'इत्यादिकं ग्राह्यम्। रक्षितमिति कात्स्न्र्येनेति शेषः। प्रकाशाश्रयवदैक्यरूपद्वितीयपक्षे यद्यपीश्वरस्य निर्दोषत्वं पुष्कलमेव, अथापि एतत् सत्यं ब्रह्मपुरमिति ब्रह्मत्वेन सामान्यतो निर्दोषत्ववर्णनं न घटेत। वस्तुतः स पक्षोऽत्यन्तानुपपन्नः। धर्मधर्मिभावादिस्वीकारेण सिद्धान्तप्रत्यासन्नत्वात्तु द्वितीयतया गणनम् ॥ २९ ॥

स्वविशेषणभूतचेतनाचेतनायत्तदोषप्रसक्त्यभावेऽपि, स्वाधिकवस्त्वन्तराधीनतया सदोषत्वम्, प्राप्यत्वभोग्यत्वाद्यभावात् कल्याणगुणन्यूनता च स्यादित्याक्षेपेऽधिकरणान्तरम्। तीर्त्वा अतिलंघ्य। चतुष्पाद् ब्रह्म षोडशकलमिति। षोडशकलब्रह्मविद्या (छा. ४-४) सत्यकामं हारिद्रुमतशिष्यं प्रति ऋषभाद्युपदिष्टा। तत्र प्राच्यादिदिक्चतुष्कलः प्रकाशवानिति पादः ऋषभोपदिष्टः; पृथिव्यन्तरिक्षद्युसमुद्रैः चतुष्कलः अनन्तवानिति पादोऽग्निना; अग्निसूर्यचन्द्रविद्युत्कलः ज्योतिष्मानिति पादो हंसेन; प्राणचक्षुश्श्रोत्रमनःकलः आयतनवानिति पादो मद्गुना जलपक्षिविशेषेण। एवंभूतपादचतुष्कवत्त्वात्

न्मितत्वास्तितां द्योतयति । तथा मेयत्वव्यपदेशश्च सेतुसेतुमतोः प्रापकत्वप्राप्यत्वलक्षणो दृश्यते, (श्वे. ६-१९) "अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्" (मु. २. २. ५) 'अमृतस्यैष सेतुः" इति । अतश्च परात् परमस्ति । भेदेन च परात्परं व्यपदिश्यते, (मु. ३-२-८) 'परात्परं पुरुषमुपैति', (तै. नारा. १-५) 'परात्परं यन्महतो महान्तम्" इति च । तथा (श्वे. ३-९) "तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ततो यदुत्तरतरं तदरूपमनामयम्" इति । अत एभ्यो हेतुभ्यः परस्माद्ब्रह्मणः परमपि किञ्चिदस्तीति गम्यत इति ॥ एवं प्राप्तेऽभिधीयते—

सामान्यात्तु । ३ । २ । ३१ ॥

तुशब्दः पक्षं व्यावर्तयति । यत्तावदुक्तं सेतुव्यपदेशात् परात् परमस्तीति—तन्नोपपद्यते । न ह्ययमत्र किञ्चित्प्राप्यं प्रति सेतुरुच्यते ; "एषां लोकानामसंभेदाय" इति सेतुसामान्येन सर्वलोकासङ्करकरत्वश्रुतेः । सिनोति बध्नाति स्वस्मिन् सर्वं चिदचिद्वस्तुजातमसङ्कीर्णमिति सेतुरुच्यते । "एतं सेतुं तीर्त्वा" इति तरतिश्च प्राप्तिवचनः । यथा 'वेदान्तं तरति' इति ॥

बुद्ध्यर्थः पादवत् । ३ । २ । ३२ ॥

योऽयम्—चतुष्पाद्ब्रह्म षोडशकलम्, (पु. सू.) "पादोऽस्य विश्वा भूतानि" इत्युन्मानव्यपदेशः ; स बुद्ध्यर्थः उपासनार्थः ; (तै. आन. १) "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिभिर्जगत्कारणस्य ब्रह्मणोऽपरिच्छिन्नत्वावगमात् स्वत उन्मितत्वासंभवात् । जगत्कारणत्वं हि तस्यैव श्रूयते, (तै. आन. १) "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" (तै. आन. ६) "सोऽकामयत बहु स्यां प्रजायेयेति" इति । अतो यथा, (छा. ३-१८-२) "वाक् पादः प्राणः पादः चक्षुः पादो श्रोत्रं पादः" इत्यादिना ब्रह्मणो [मनसो ?] वागादिपादव्यपदेश उपासनार्थः, एवमयमपि ॥ ३२ ॥

---

ब्रह्मणश्चतुष्पात्त्वं षोडशकलत्वञ्च । एतदर्थसिद्धानुवादरूपमिदं भाष्यवाक्यम् ; न पुनरिदं श्रुतिवाक्यम् । प्रश्नोपनिषदुक्तः षोडशकलस्तु पुरुषो जीवः ; न ब्रह्म । दृश्यते इति । पूर्वं सेतुशब्दस्वारस्यं दर्शितम् । अत्र न सेतुशब्दे आस्था ; प्राप्यान्तरप्रापकत्वरूपार्थवत्त्वबलात परसिद्धिरुच्यते । ततो यदुत्तरतरम्—उक्ताद् ब्रह्मणोऽपि यत् अधिकम्, तत् अनामयं निर्दोषम् । तेन ब्रह्मणःसदोषत्वं सिद्धमिति ॥ ३० ॥

प्रथमहेतुनिरासः क्रियते सामान्यादिति । सामान्यं सादृश्यम् । जलसेतुर्जलासंकरकरः; अयं सर्वासंकरकरः । सेतुशब्दः सिंहशब्दवत् गौणः । तत्र विवक्षितं सामान्यमिदम् । अथवा सामान्यमित्यस्य योगव्युत्पत्तिलभ्यः प्रसिद्धसेतुसाधारणोसंकरकरत्वरूपो धर्म इत्यर्थ इत्याशयेनाह सिनोतीति ॥ ३१ ॥

द्वितीयहेतुनिरासः बुद्ध्यर्थ इति । ब्रह्मचतुष्पात्त्वे ब्रह्मपादस्यैव दृष्टान्तत्वायोगात् पादवदिति मनःप्रभृतेश्चतुष्पात्त्वं श्रुतं विवक्षितम् । तदाह अथो यथेति । ब्रह्मण इत्येतत्स्थाने मनस इति पाठ्यम् । ब्रह्मण इत्येव पाठे ब्रह्मत्वदृष्ट्योपास्यस्य मनस इत्यर्थः । मनोब्रह्मेत्युपासीतेति अत्रैव वागादिचतुष्पात्त्वस्यास्य मनस्युक्तत्वात् । मनसो वस्तुगत्या वागादिपादवत्त्वाभावाच्चोपासनार्थत्वं सिद्धम् ॥ ३२ ॥

स्वयमनुन्मितस्य कथमुपासनार्थतयाऽप्युन्मानसंभवः ; तत्राह—

स्थानविशेषात् प्रकाशादिवत् । ३ । २ । ३३ । ॥

प्रतिपन्नवागादिस्थानविशेषरूपोपाधिभेदात् तत्संबन्धितयोन्मितत्वानुसन्धनं संभवति ; यथा प्रकाशाकाशादेर्विततस्य वातायनघटादिस्थानभेदैः परिच्छिद्यानुसन्धानसंभव इत्यर्थः ॥ ३३ ॥

उपपत्तेश्च । ३ । २ । ३४ ॥

यदुक्तम्—(मु. २-२-५) "अमृतस्यैष सेतुः" इति प्राप्यप्रापकसंबन्धव्यपदेशात् प्रापकात् परं प्राप्यमस्तीति—तन्न, प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः । (मु. ३-२-३) "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति अनन्योपायत्वश्रवणात् ॥ ३५ ॥

तथाऽन्यप्रतिषेधात् । ३ । २ । ३५ । ॥

यत् पुनरुक्तम्—"ततो यदुत्तरतरम्" "परात्परं पुरुषम्", "अक्षरात्परतः परः" इत्यादिभेदव्यपदेशात् परात्परमस्तीति—तन्नोपपद्यते ; तत्रैव ततोऽन्यस्य परस्य प्रतिषेधात्, (श्वे. ३-९) यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" इति । यस्मादपरं परं नास्ति किञ्चित्=न केनापि प्रकारेण परमस्तीत्यर्थः । तथाऽन्यत्रापि (बृ. ४-३-६) "न ह्येतस्मादितिनेत्यन्यत् परमस्ति" इति ; इति नेति निर्दिष्टादेतस्माद्ब्रह्मणोऽन्यत् परं न ह्यस्तीत्यर्थः । तथा, (तै. नारा. १-८) "न तस्येशे कश्चन तस्य नाम महद् यशः" इति । तद्धि जगदुपादानकारणतयाऽनन्तरमुक्तम्, (तै. नारा. १-८)सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि.........स आपः प्रदुघे उभे इमे" इत्यादिना । (तै. नारा. १-१२) "अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टौ" इति च जगत्कारणं पुरुषमेनं प्रत्यभिज्ञापयति ।

---

दृष्टान्तेऽप्युन्मानासंभवशंकां परिहर्तुमनन्तरसूत्रं पूर्वसूत्रशेषम् ॥ ३३ ॥

तृतीयहेतुनिरासः क्रियते **उपपत्तेश्चे**ति । नायमात्मेति मन्त्रः पादत्रयेण ध्यानस्य भक्तिरूपत्वसाधकः ; चतुर्थपादे स्वामिनि पदद्वलात प्राप्यप्रापकैक्यपरः ॥ ३४ ॥

चतुर्थहेतुनिरासः क्रियते **तथे**ति । **तथा**शब्दः पूर्वहेतूनां समुच्चयपरः । **तत्रैव** श्वेताश्वतर एव । यस्मात्परमिति मन्त्र. श्वेताश्वतरे तैत्तिरीये च । मुण्डकेऽप्येतत्पाठ इष्टः । श्वेताश्वतर एवाव्यवहितपूर्वसत्त्वेन प्रथमं तद्ग्रहणम् । परं नास्तीति प्रकृतब्रह्मातिरिक्तोत्कृष्टनिषेधात् अस्यैव परत्वसिद्धिः । इदं परस्येति सूत्रघटिताधिकरणविषयवाक्यतोऽपि सिद्धमिति दर्शयितुमाह **तथाऽन्यत्रापीति । एतस्मात्** मूर्तामूर्तरूपविशिष्टाद् ब्रह्मणः । 'ब्रह्मणो रूपे' इति प्रक्रमात् । तैत्तिरीयेऽप्येतन्मन्त्रसत्त्वात् तत्र लभ्यामधिकां युक्तिं दर्शयति **तथे**ति । **विद्युतः** विद्युद्वर्णात् । **अधीत्यस्य जज्ञिरे** इत्यनेन संबन्धः । **सः** विद्युद्वर्णपुरुषः । **आपः** अपः, अन्तरिक्षं सुवरित्युभे चेमे **प्रदुघे** उत्पादितवान् । ननु मन्त्रे **तमेवे**ति

"ततो यदुत्तरतरम्" इति किमुच्यत इति चेत्—पूर्वत्र, "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्, तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति, "परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्वसाधनम्, नान्योऽमृतत्वस्य पन्थाः" इत्युपदिश्य, तदुपपादनाय, "यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" इति पुरुषस्य परत्वं तद्व्यतिरिक्तस्य परत्वासंभवश्च प्रतिपाद्य, "ततो यदुत्तरतरं तदरूपमनामयम्। य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति" इति पूर्वोक्तमर्थं हेतुतो निगमयति—यत् उत्तरतरं पुरुषतत्त्वम्, तदेवारूपमनामयं यतः, ततो य एतत् पुरुषतत्त्वं विदुः, त एवामृता भवन्ति; अथेतरे दुःखमेवापियन्ति इति। अन्यथोपक्रमविरोधोऽनन्तरोक्तिविरोधश्च।

"परात्परं पुरुषमुपैति दिव्यम्" इति- पूर्वत्र, (मु. २-१-२) "अक्षरात्परतः परः" इति अक्षरात् अव्याकृतात् यः परः समष्टिपुरुषः, तस्मात् परो योऽदृश्यत्वादिगुणकः

---

तच्छब्दोपरि एवकारश्रवणात् महापुरुष एवोपाय, नान्य इत्येवार्थो ज्ञायते; ननु वेदनमेवेति वेदनातिरिक्तस्यानुपायत्वमिति चेत्—वेदनस्योपायतायाः प्रागज्ञातत्वात् तं विदित्वैव मृत्युमत्येतीत्यन्वय एव विवक्षित। एवं तद्विषयकवेदनमात्रस्य साधनत्वोक्तौ पुरुषातिरिक्तस्य, तद्विदितस्य न सर्वस्यानुपायत्वलाभ इति। ततो यदुत्तरतरमित्यत्र तत इत्यस्योत्तरतरमित्यत्र नान्वयः। अनन्तदपेक्षयेत्यर्थो न भवति। किंतु अमृता भवन्तीत्यत्रान्वयात् ततः तस्माद्धेतोरित्यर्थः। यस्मात् परमिति पूर्वमन्त्रोक्तात् प्रकृतपुरुषातिरिक्तस्य परत्वासंभवादिरूपहेतोरिति यावत्। इदं परत्वासंभवश्च प्रतिपाद्य इति भाष्यतो ज्ञायते। ननु अनामयं यतः ततः इति भाष्यात् यत इत्यध्याहारः पूर्वार्धे इति तत इति पदं तत्प्रतिसंबन्धि चेति ज्ञायते; तत् क्लिष्टमिति चेत्—वेदार्थसंग्रहदर्शितरीत्या, पूर्वमन्त्र एवोत्तरतरत्वरूपप्रमेयस्योक्ततया तत इत्यस्य पूर्वोक्तात् उत्तरतरत्वादित्येवार्थः। तदेव स्पष्टयाय यदुत्तरतरमित्यनूद्य तस्यारूपत्वादिकमपि पूर्वार्धे विधीयते। अरूपं कर्मकृतदेहरहितम् अनामयं नीरोगं निर्दोषमिति। उत्तरार्धे एतत्पदेन अरूपत्वादिविशिष्टस्यानुवादात् अरूपत्वादेरपि अमृतत्वहेतुत्वमर्थसिद्धमिति तज्ज्ञापनाय भाष्ये अनामयं यतस्तत इत्युक्तम्। अथापि यथावेदार्थसंग्रहं तत इत्यस्य मन्त्रस्थस्य सर्वस्मात्परत्वादित्येवार्थः, अमृता भवन्तीत्यत्रान्वय इति। यदि तु मन्त्रे यदित्यस्य यस्मादित्यर्थो वर्ण्येत, तदा यस्मादुत्तरतरम्, तत इत्यन्वयः स्यात्। अत्र तत इत्यस्योत्तरार्धेऽन्वयः, हेतुपरत्वञ्च; न तु अवधिपरत्वेनोत्तरतरमित्यत्रान्वय इति हि प्रकृते विवक्षितम्। एवञ्च पूर्वार्धमनुसंधाय तत इत्यस्योत्तरार्धेऽन्वये अनामयत्वादेरपि हेतुत्वं ततश्शब्दलभ्यमित्याशयो वा। पूर्वोक्तमर्थम् महापुरुषवेदनमेवामृतत्वसाधनम्, नान्यः पन्था इत्यर्थम्। हेतुतः तस्यैव परत्वमिति हेतुना। उपक्रमः महापुरुषवेदनोपक्रमः। अनन्तरोक्तिः अव्यवहितपूर्वं यस्मात्परमित्युक्तिः। वेदाहम्, यस्मात् परम्, ततो यदुत्तरतरम् इति पाठक्रमात्। परात् परमिति प्रागुदाहृतस्यार्थं वक्तुं धरति परादिति। दिव्यमितीत्यस्य इहापीत्यनेन संबन्धः। परात् पर इति; परात् पर

सर्वज्ञः परमपुरुषः, स एवेहापि 'परात् परः' इति समष्टिपुरुषात्परत्वेनोच्यते ॥ ३५ ॥

अनेन सर्वगतत्वमायामशब्दादिभ्यः । ३ । २ । ३६ ॥

अनेन ब्रह्मणा सर्वगतत्वम्-सर्वस्य जगतो व्याप्तत्वम्, आयामशब्दादिभ्यः सर्वव्याप्तिवाचि-शब्देभ्योऽवगम्यमानम् अस्मात्परं नास्तीत्यवगमयति । आयामशब्दस्तावत्, (श्वे. ३-९) "तेनेदं पूर्णं पुरुषेण सर्वम्", (तै. नारायणानु. १३) "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" ॥ (मु. १-१-६) "नित्यं विभुं सर्वगतं सुसूक्ष्मं यद् भूतयोनिं परिपश्यन्ति धीराः" । आदिशब्दात् (बृ. ४-५-१) ब्रह्मैवेदं सर्वम्", (छा. ७ २५ २) "आत्मैवेदं सर्वम्" इत्यादयो गृह्यन्ते । अत इदं परं ब्रह्मैव सर्वस्मात् परम् ॥ ३६ ॥ इति पराधिकरणम् ॥ ७ ॥

८२. फलाधिकरणम् ३-२-८ ॥

फलमत उपपत्तेः । ३ । २ । ३७ ॥

उक्तमुपासिसिषोपजननार्थं—जीवस्य सर्वावस्थासु सदोषत्वम्, प्राप्यस्य च परमपुरुषस्य निर्दोषत्वं कल्याणगुणाकरत्वं सर्वस्मात्परत्वञ्च । अतःपरम् उपासनं विवक्षन्, उपासीनानां परस्मादेवास्मात् पुरुषात् तत्प्राप्तिरूपमपवर्गाख्यं फलमिति संप्रति ब्रूते । तुल्यन्यायतया शास्त्री-

---

त्वेनेत्यर्थः । तद्विवरणं समष्टीति । अत्रैव अक्षरात् परत इति प्रागुदाहृतमपि व्याख्यातं भवत्वित्याशयेन परात् पर इत्युक्तिः । ॥ ३५ ॥

ननु यस्मान्नाणीय इति अणीयस्त्वस्याप्युक्तत्वात् कथमिदं परत्वादीत्यत्र, सर्वगतत्वमेवास्य बहुश्रुतिबलात् सिद्धम्; तद्विरोधादणीयस्त्वमतिदुर्ग्रहत्वरूपमिति प्रतिवक्तुं सूत्रम्, अनेन सर्वगतत्वमिति । तथान्यप्रतिषेधादित्यस्य ब्रह्मव्यतिरिक्तसर्ववस्तुनिषेधपरत्वभ्रमोऽप्यनेन सूत्रेणापाकृतः । सर्वसद्भावप्रदर्शनात् । श्रुतौ आयामशब्दाभावेऽपि तदुक्तिः, व्याप्तिवचनानां स्वरूपव्याप्तिरूपार्थविवक्षया ज्ञानमात्रव्याप्ति-सर्वभ्रमाधिष्ठानत्वाद्यर्थविवक्षा मा भूदिति ज्ञापनाय । आयामशब्दाः व्याप्तिप्रतिपादकश्रुतयः । आदिना जगत्सामानाधिकरण्यनिर्देशाः जगदुपादानत्वबोधकशब्दाश्च गृह्यन्ते ॥ ३६ ॥

पराधिकरणवत् फलाधिकरणमपि उभयलिङ्गत्वस्थेम्ने भवति । पूर्वं स्वयंदोषरहितत्वरूपं हेयप्रत्यनीकत्वमुक्तम्; अत्रान्यदीयहेयनिवर्तकत्वरूपं प्रत्यनीकत्वं ज्ञाप्यते; सत्यकामत्वाद्याविर्भावकत्वरूपः कल्याणगुणश्च । फलप्रदस्यैवोपास्यत्वे च उपासनस्य प्रीतिरूपापन्नत्वं स्वरसतो भवति । उपपत्तेश्चेति सूत्रे उपायत्वमंगीकृत्य उपेयत्वमपि साधितम्; तदयुक्तम्-उपासनस्यैवोपायत्वात् । ब्रह्मणस्तद्विषयत्वात्तु उपायत्ववाचोयुक्तिरित्याक्षेपादधिकरणप्रवृत्तिः । विवक्षन्; तृतीयपादे । ब्रह्ममीमांसाया मुमुक्ष्वधिकारिकत्वात् वैराग्यपादेन फलान्तरवैतृष्ण्यस्योपपादितत्वात् पूर्वसूत्रे सेतुत्वप्रसक्त्या चात्र मोक्षरूपं फलमेव वक्तव्यम्; फलमिति सामान्यपदप्रयोगात्, जैमिनिमतनिरसनाच्च त्रिवर्गोऽपि ग्राह्य एव भवतीत्याशयेनाह तत्प्राप्तीत्यादि । ननु प्रथमतः सिद्धान्तारम्भः कुतः; पश्चात्तनसिद्धान्तसूत्रेणैव गतार्थत्वादिति चेत्—

यमैहिकामुष्मिकमपि फलम्, अत एव परस्मात् पुरुषाद्भवतीति सामान्येन 'फलमतः' इत्युच्यते। कुत एतत्? उपपत्तेः—स एव हि सर्वज्ञः सर्वशक्तिर्महोदारो यागदानहोमादिभिरुपासनेन चाऽऽराधितः ऐहिकामुष्मिकभोगजातम्, स्वस्वरूपावाप्तिरूपमपवर्गं च दातुमीष्टे; न ह्यचेतनं कर्म क्षणध्वंसि कालान्तरभाविफलसाधनं भवितुमर्हति ॥ ३७ ॥

**श्रुतत्वाच्च । ३ । २ । ३८ ॥**

(बृ. ६-४-२४) "स वा एष महानज आत्माऽन्नादो वसुदानः", (तै. आ. ७-१) "एष ह्येवानन्दयाति" इति, भोगापवर्गरूपं फलमयमेव ददातीति हि श्रूयते ॥ ३८ ॥

संप्रति पूर्वपक्षमाह—

**धर्मं जैमिनिरत एव । ३ । २ । ३९ ॥**

अत एव-उपपत्तेः शास्त्राच्च यागदानहोमोपासनकर्मणामेव फलदातृत्वं जैमिनिराचार्यो मन्यते। लोके हि कृष्यादिकं मर्दनादिकं च कर्म साक्षाद्वा, परम्परया वा स्वयमेव फलसाधनं दृष्टम्। एवं वेदेऽपि यागदानहोमादीनां साक्षात्फलसाधनत्वाभावेऽपि परम्परया अपूर्वद्वारेण फलसाधनत्वमुपपद्यते। तथा, (यजु. २-५-५) "यजेत स्वर्गकामः" इत्यादिशास्त्रमपि सिषाधयिषितस्वर्गस्य कर्तव्यतया यागादि अभिदधत् अन्यथानुपपत्त्या अपूर्वद्वारेण फलसाधनत्वमवगमयति ॥ ३९ ॥

---

तदन्तरप्रतिपत्तिसूत्र इव वक्ष्यमाणयुक्त्यपेक्षयाऽन्यविधपूर्वपक्षयुक्तिनिरासोऽप्यत्रेति भाव्यम्। फल। तत्त्वज्ञानस्य लोकरीत्या मिथ्याभूतनिवर्तकतया न मोक्षो ब्रह्माधीन इति, कथं तस्योपायतेति पक्षनिरासार्थमिदम्। इदं जगन्मिथ्यात्वपक्षे। तथ्यत्ववादिनस्तार्किका अपि, "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति परमात्मानुग्रहं द्वारमवदन्तो दृष्टप्रक्रियैवान्यादृश्या तत्त्वज्ञानान्मोक्षसिद्धिमाहुः। तदप्यत्र निराचिकीर्षितम्; न तु जैमिनिमतमात्रनिरासार्थमिति ज्ञापनाय सिद्धान्तेनोपक्रमः। एवम्—जैमिनिरस्मदभिमतमेवाद्रियत; तदनुयायिमतिनिरासाय तु तत्खण्डनम्—इति ज्ञापनाय च। एवमत्र चतुर्थपादारम्भेऽपि भाव्यम्। **उपपत्तेः**। जगतः सत्यत्वात्; परमात्मानुग्रहं विना सर्वकर्मक्षयस्य दुर्वचत्वात्; तस्य सर्वशक्तत्व सर्वकारणत्व-सर्वज्ञत्वादिमत्त्वात् विध्वंसिकर्म-देवतान्तरवत् फलहेतुत्वासंभवविरहाच्चेत्यर्थः ॥ ३७ ॥ **अन्नादः** अन्नदः। दीर्घश्छान्दसः। एवमानन्दयातीत्यपि ॥ ३८ ॥

**कृषीति**। कृषिः परम्परया फलसाधनम्। तैलकृतदेहमर्दनादिकं साक्षात्। **अभावेऽपीति**। 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते' इति वार्तिकोक्ततया, 'यदि कामयेत वर्षुकः पर्जन्यः स्यादिति, नीचैः सदो मिनुयात्' इत्युक्तनीचैस्त्वादीनां साक्षात्साधनत्वसंभावनाद्योतनाय **अपिशब्दः**। कृष्यादेर्यादृशपरम्परया कारणत्वम्, तत् लोकतोऽवगम्यते; यागादौ तदवगमः कथमित्यत्र शास्त्रमेवेत्याह **तथेति**। धर्मेण पापमपनुदति, विद्ययाऽमृतमश्नुते, सर्वेभ्यो ज्योतिष्टोमः इत्येवं साधनत्वपरविभक्तिमुदाहृत्य च श्रुतत्वं धर्मगतसाधनत्वे उपपादनीयम् ॥ ३९ ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् । ३ । २ । ४० ॥

तुशब्दः पक्षव्यावृत्त्यर्थः। पूर्वोक्तं परमपुरुषस्यैव फलप्रदत्वं भगवान् बादरायणो मन्यते। कुतः? हेतुव्यपदेशात्—"यज-देवपूजायाम्" इति देवताराधनभूतयागाद्याराध्यभूताग्निवाय्वादिदेवतानामेव तत्तत्फलहेतुतया तस्मिंस्तस्मिन्नपि वाक्ये व्यपदेशात्—(तै. २-१-१) "वायव्यं श्वेतमालभेत भूतिकामः। वायुर्वै क्षेपिष्ठा देवता। वायुमेव स्वेन भागधेयेनोपधावति। स एवैनं भूतिं गमयति" इत्यादिषु। कामिनः सिषाधयिषितफलसाधनत्वप्रकारोपदेशोऽपि विध्यपेक्षित एवेति नातत्परत्वशङ्का युक्ता। एवमपेक्षितेऽपि फलसाधनत्वप्रकारे शब्दादेवावगते सति, तत्परित्यागम् अश्रुतापूर्वादिपरिकल्पनं च प्रामाणिका न सहन्ते। लिङादयोऽपि देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां शब्दानुशासनानुमतामभिदधति, नान्यदलौकिकमिति प्रागेवोक्तम्। तदेवं "वायुर्वै क्षेपिष्ठा देवता" इत्यादिशब्दात् वाय्वादीनां फलप्रदत्वमवगम्यते।

वाय्वाद्यात्मना च परमपुरुष एवाऽऽराध्यतया फलप्रदायित्वेन चावतिष्ठत इति श्रूयते, (तै. नरा. १-६) "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः। तदेवाग्निः तद्वायुः तत् सूर्यः तदु चन्द्रमाः" इति। अन्तर्यामिब्राह्मणे च, (बृ. ५-७) "यो वायौ तिष्ठन् यस्य वायुः शरीरम्", "योऽग्नौ तिष्ठन्", "य आदित्ये तिष्ठन्" इत्यादि श्रूयते। स्मर्यते च, (गी. ७-२१-२२-२३) "योयो यांयां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्। स तया श्रद्धया युक्तः तस्या राधनमीहते। लभते च ततः कामान् मयैव विहितान् हि तान्॥" इति, (गी. ९-२४-२५) "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति—प्रभुरिति-फलप्रदायीत्यर्थः—"देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि", "यान्ति मद्याजिनोऽपि माम्"

---

अपूर्वनिरासपरो बादरायणः पूर्वमेवाद्रियत इत्याह **पूर्वं** त्विति। पूर्वमित्यस्य पूर्वोक्तं परं ब्रह्मेति वा तद्गतफलप्रदत्वमिति वाऽर्थः। **अलौकिकं** लोकानवगतमपूर्वम्। देवताप्रीतिस्तु लोकन्यायावगम्या। **प्रागेव** जिज्ञासाधिकरणरचनावसर एव। **हेतुव्यपदेशा**दित्यस्य क्वचित् परमात्मनः साक्षात्, अन्यत्र देवतादिद्वारा च हेतुत्वव्यपदेशादित्यर्थः। 'वैष्णवं वामनमालभेत', 'परामृतात् परिमुच्यन्ति सर्वे' इत्यादौ साक्षात् साधनत्वं सुग्रहमिति परम्परासाधनत्वमात्रं भाष्ये उपपादितम्। **बिभर्ति** फलवत् करोति। **तदेवे**त्युक्तब्रह्मणोऽन्यादेश्चाभेदभ्रमव्युदासाय **योऽग्नौ** इत्यादि। देवताराधनकर्मण एव मुखान्तरेण भगवदाराधनत्वं व्यङ्क्तुं **देवानि**त्यादि। ननु पूर्वमीमांसादेवताधिकरण एव देवतानां प्रीतिद्वारा फलप्रदत्वस्य अपूर्वरूपधर्माभावस्य चास्मन्मतरीत्या वक्तव्यत्वात् किमर्थमिदमधिकरणमिति चेत्—देवतानां सृज्य-

इति च । लोके च कृष्यादिभिर्विचित्ररूपान् द्रव्यविशेषान् संपाद्य तैः राजानं भृत्यद्वारेण, साक्षाद्वाऽर्चयन्ति ; अर्चितश्च राजा तत्तदर्चनानुगुणं फलं प्रयच्छन् दृश्यते । वेदान्तास्तु अतिपतितसकलेतरप्रमाणसंभावनाभूमिं निरस्तसमस्ताविद्यादिदोषगन्धं स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरं पुरुषोत्तमं प्रतिपाद्य, तदाराधनरूपाणि च यागदानहोमात्मकानि, स्तुतिनमस्कारकीर्तनार्चनध्यानानि च तदाराधनानि, आराधितात् परस्मात् पुरुषात् भोगापवर्गरूपं फलं च वदन्तीति सर्वं समञ्जसम् ॥ ४० ॥ इति फलाधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

तृतीयस्याध्यायस्य द्वितीयः पादः ॥ ३. २ ॥

श्रीमते भगवद्रामानुजाय नमः ॥ शुभमस्तु ॥

---

त्वादेरत्रोक्ततया विनाशित्वावगमात्, देवतान्तरोपासनेऽनुपासितस्य ब्रह्मणः फलप्रदत्वायोगात्, उपासनस्य च यागादिवत् क्षणध्वंसित्वाभावेन साक्षात् हेतुत्वसंभवात्, देवपूजानात्मकपारायणचान्द्रायणादौ देवताप्रीत्यप्रसक्तेः, साक्षी, अवाक्यनादरः इत्येवं परस्य निर्व्यापारत्वानादरत्वाद्यवगमाच्च न तस्य देवतानां वा कारणत्वम्, किंतु धर्मस्यैवेति पुनराशङ्केति । अचेतनस्य चेतनमन्तरा कार्यकरत्वाभावात्, सर्वस्य विधेर्भगवदाज्ञारूपतया सर्वत्र तत्प्रीतेः सुवचत्वात्, देवतान्तरविलयेऽपि अस्यैव सर्वप्रतिभूत्वात्, देवतान्तरमुखेनाप्यस्यैव फलप्रदत्वात्, साक्षित्वानादरत्वादिकथनस्य च वैषम्याद्यभावाभिप्रायकत्वात् पर एव फलप्रद इति समाधिः । तत् सिद्धमुभयलिङ्गत्वपौष्कल्याद् ब्रह्मोत्कृष्टतृष्णापदमिति ॥ श्रीः ॥

इति श्रीमद्वेदान्तरामानुज-यतीन्द्र-महादेशिकचरणारविन्दचञ्चरीकस्य श्रीमद्रङ्गरामानुज मुनीन्द्र-महादेशिकपदपद्मसेवासमधिगतसर्ववेदान्तार्थस्य वात्स्य-श्रीशैल-चक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे तृतीयाध्याये द्वितीयः पादः ॥

श्रीमते रामानुजाय नमः ॥ शुभमस्तु ॥



श्रीः । श्रीमते रामानुजाय नमः ॥

## श्रीभगवद्रामानुजविरचिते (श्रीभाष्ये)

# श्री शा री र क मी मां सा भा ष्ये

तृतीयाध्याये तृतीयः गुणोपसंहारपादः

८३. सर्ववेदान्तप्रत्ययाधिकरणम् ३-३-१ ॥

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् । ३ । ३ । १ ॥

**उक्तं ब्रह्मोपासिसिषोपजननाय वक्तव्यं ब्रह्मणः फलदायित्वपर्यन्तम् । इदानीं ब्रह्मोपासनानां गुणोपसंहार-विकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते । प्रथमं तावदेकस्याः वैश्वानरविद्यादिकाया अनेकशाखासु श्रूयमाणायाः किमेकविद्यात्वम्, उत विद्याभेद इति**

---

श्रीः ॥ श्रीमते रामानुजाय नमः ॥

## भाष्यार्थदर्पणे तृतीयेऽध्याये तृतीयः पादः

पादद्वयात्मिकया पेटिकया भगवदुपासनोपयोगिनौ वैराग्याभ्यासौ संपादितौ । द्वितीयपादे तस्योभयलिङ्गत्ववैशद्यकरणं हि प्रथमाध्यायोक्ततद्गुणादिचिन्तनरूपोऽभ्यास एव । तदन्ते च तस्य **सिद्धोपायत्वं** दर्शितम् । तत् तस्य यस्य साध्योपायस्यापेक्षया भवति, तन्निरूपणमत्र क्रियते । तदाह **उक्तमिति** । **गुणेति** । येषां ब्रह्मोपासनानामनेकस्थलोक्तानामभेदः, तत्र तत्तदुक्तसर्वगुणोपसंहारः—गुणानुसंधानसमुच्चयः ; येषामुपासनानां भेदः, तेष्वेकतमस्यैव फलार्थमनुष्ठानात् विकल्पः इत्येतत्सिद्धिः भेदाभेदचिन्ताफलम् । नन्वनुगतः पादार्थो वक्तव्यः, न भेदाभेदयोर्द्वयोरर्थत्वम् ॥ अस्तु तर्हि अभेद एव पादार्थः ; भेदस्तदपवादतया क्रियते पुरुषविद्यादौ । अत एव गुणोपसंहारपाद इति पादनाम । युक्तश्चैतत्—षड्विंशत्यधिकरणात्मकेऽत्र पादे परविद्यानुबन्ध्यर्थविचारात्मकानि हान्यधिकरण-आनन्दाद्यधिकरण-अक्षरध्यधिकरण-अनियमाधिकरणादीनि, दृष्ट्युपासनविषयाणि च बहूनि । स्वल्पान्येव भेदाभेदविषयाणि । तथा प्रथमे एकनामकविद्यागतमैक्यम्, षष्ठे शाण्डिल्यविद्यैक्यम्, सप्तमे व्याहृतिशरीरकविद्याभेदः, पञ्चदशे उषस्तकहोलविद्यैक्यम्, षोडशे दहरविद्यैक्यम्, त्रयोविंशे वैश्वानरविद्यास्ववान्तरभेदाभावः, चतुर्विंशे विद्यानानात्वमिति । तत्राधिकरणान्तराणामिव परविद्याभेदपराणामपि अभेदपरप्रधानाधिकरणानुषङ्गायत्तत्वमिति चेत्—उच्यते-**भेदाभेदे**त्युभयनिर्देशेन सर्वानुगतोऽर्थः संभवन् ग्राह्य इति ज्ञाप्यते । अत एवोक्तं **सारावलौ,** वेद्यावच्छिन्नविद्यानियमकृदयम् इत्यैदमर्थ्यं समर्थ्यमिति । विवादास्पदविद्यासु (अज्ञानज्ञदृष्टचदृष्टिसर्वसाधारण्येन) वेद्याकारैयत्तावधारणमनुवृत्तः पादार्थ इति तदाशयः ।

प्रथमाधिकरणार्थं दर्शयति **प्रथम**मिति । चोदनाद्यविशेषादैक्ये उच्यमाने, तत्र विशेषे विद्याभेदस्य सुगमत्वात् नानात्वं प्रथमं न साधितम् । एवं सति, नानाशब्दादिभेदादित्यधिकरणप्रवृत्तिहेतुस्तु वक्ष्यते । सूत्रे **चोदनादी**त्यादिपदेन जैमिन्युक्तहेतूनां ग्रहणात्, 'पूर्वमीमांसयैव सिद्धमिदम् ; अधिकाशंकापरिहाराय तु पुनरारम्भः' इति दर्शयति । तच्छङ्कापरिहारावगमश्च तृतीयसूत्रे । ततः प्राक्

चिन्त्यते । अविशेषपुनश्श्रवणस्य प्रकरणान्तरस्य च भेदकत्वात् शाखान्तरे चोभयोरवर्जनीयत्वात् विद्याभेद इति प्राप्तम् । अत एव, (मु. ३-२-१०) "तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवत् यैस्तु चीर्णम्" इति शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियम उपपद्यते । विद्यैक्ये हि विद्याङ्गस्य शिरोव्रतस्यान्येषामपि शाखिनां प्राप्तेर्नियमो नोपपद्यते·

---

जैमिनिकृताधिकरणरचनास्मारणमात्रम् । अधिकाशंका चात्र भाष्ये ज्ञाप्यते अत एवेत्यादिना । भेदकप्रमाणानि च षट् तत्र द्वितीये निरूपितानि, शब्दान्तरमभ्यासः संख्या संज्ञा गुणः प्रकरणान्तरमिति । **शब्दान्तरम**पर्यायधातुः ; एकार्थपर्यवसानानर्हः धातुरिति यावत । सच यजति जुहोत्यादिः । अविशेषपुनश्श्रवणम्. अनन्यथासिद्धं पुनश्श्रवणम् **अभ्यासः** । अग्निहोत्रं जुहोतीति विहितहोमोद्देशेन दधिविधानसंभवात् दध्ना जुहोतीति जुहोत्यभ्यासोऽन्यथासिद्धः सविशेषः । समिधो यजति, तनूनपातं यजति इत्येवं प्रयाजविषये त्वविशेषः । कर्मविधायकवाक्ये संख्याविशेषश्रवणं तदुक्तकर्मणा भेदिका **संख्या** तिस्र आहुतीर्जुहोतीति । **संज्ञाभेदः**, अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिरिति । द्रव्यदेवतादिरूपभेदे भेद इति **गुणस्य** भेदकता, वैश्वदेवी आमिक्षा, वाजिभ्यो वाजिनमिति । **प्रकरणान्तरम्**—अन्यकर्मप्रकरणे उपस्थितिप्रसक्तिरहितामिहोत्रादिप्रसिद्धस्यापि नाम्नः पठनेन कर्मोक्तौ प्रसिद्धाद्विलक्षणकर्मत्वं तस्य, यथा सत्रविशेषे, 'मासमग्निहोत्रं जुहोती'ति । एवं भेदकप्रमाणान्युपन्यस्य सुबहु विचार्य, एतदन्यतमेन प्रतिशाखमग्निहोत्रादि कर्म भिद्यते न वेति द्वितीयान्ते विचारं विधाय भेदापवादतया तदभेदस्तत्र समर्थितः । तत्र सर्वविषयानुगते पूर्वपक्षिगृहीते द्वे एव प्रमाणे अभ्यासः प्रकरणान्तरञ्चेति । शब्दान्तरस्य संज्ञाभेदस्य च नैव प्रसक्तिः । संख्या गुणश्च क्वापि भवेत्, न सर्वत्रेति भाष्येऽत्र तयोर्द्वयोरेव ग्रहणम् ॥ ननु, उपासीत, विद्यात् इति शब्दान्तरमपि पूर्वपक्षी ग्रहीतुमर्हति । न । तत्र सामान्यविशेषन्यायेनैकार्थकत्वस्याऽऽवृत्त्यधिकरणसिद्धत्वात् । एतज्ज्ञापनार्थमेव भाष्येऽत्र **विदिपर्यायस्योपासे**रित्यादिनिर्देशः । भेदान्नेति चेदिति सूत्रे प्रमाणान्तरायत्तशङ्कापरिहरणानुवादोऽपि काममस्तु । अभ्यास उक्तः । शाखाभेदात् दूरत्वरूपमिह प्रकरणान्तरमित्युक्तं **शास्त्रदीपिकायाम्** ।

नन्वभ्यासादिप्रमाणत एव शाखान्तरे कर्मभेदशंका । सा पूर्वमीमांसायामेव परिहृता । तत किं तथैव तत्प्रमाणग्रहणेन पुनर्विचारेणेति शंकायाम् कर्मस्थले शाखान्तरीयाभ्यासादेर्भेदकत्वायोगेऽपि अत्र विद्यायां तस्य भेदकत्वे गमकमस्तीति अधिकाशंकां दर्शयति **अतएवेति** । अक्षरविद्या बृहदारण्यके गार्गीब्राह्मणे, कृत्स्नायां मुण्डकोपनिषदि चाऽऽम्नाता । मुण्डकान्ते च शिरोव्रतचारिभ्य एव तदुपदेशः कर्तव्यतया विहितः। शिरोव्रतं नाम यथाविधि शिरस्यङ्गारपूर्णपात्रधारणमाथर्वणिककर्तव्यम् । उभयत्राक्षरविद्याया एकत्वे च प्रधानानुष्ठायिभिः सर्वैरङ्गस्य शिरोव्रतस्याप्यनुष्ठेयतया तद्वतामेव सा विद्येत्यस्य स्वत एव सिद्धेः, तेषामेवेति विधिर्व्यर्थः स्यात् । अन्येषां शिरोव्रताप्राप्तौ च विरोधः स्यात् । अतो ज्ञायते—अक्षरविद्या भिन्नभिन्ना ; तत्र मुण्डकाक्षरविद्या शिरोव्रतचारिमात्राधिकारिकेति । अत्र च भेदे प्रमाणमभ्यासादिकमेव । तदत्र सर्वशाखाप्रत्ययस्यैकत्वं कर्ममात्रे ; न विद्यायामिति । एतच्छिरोव्रतानुगुण्याय अक्षरविद्येति वक्तव्ये भाष्ये वैश्वान-

**एवं प्राप्ते उच्यते**—सर्ववेदान्तप्रत्यय**मेकमुपासनमिति । कुतः ?** चोदनाद्यविशेषात् । **चोदना तावत्**—(बृ. ३-४-५) "**उपासीत**", (कठ. ६-१७) "**विद्यात्**" **इत्येवंजातीयको धात्वर्थविशेषविधिः ।** आदिशब्देन, (पूर्व. २-४-९) "**एकं वा संयोगरूपचोदनाख्याऽविशेषात्**" **इति कर्मकाण्डशाखान्तराधिकरणसूत्रोक्ताः** संयोगरूपाख्याः **गृह्यन्ते । एषां चोदनादीनामविशेषात् सैवेयं विद्येति शाखान्तरे प्रत्यभिज्ञायते । तथाहि—छान्दोग्यवाजसनेयकयोः** (छा. ५-१८-१) "**वैश्वानरमुपास्ते**" **इति चोदना तावदेकरूपा ; वेद्यैकनिरूपणीयस्वरूपस्य विदिपर्यायस्योपासेर्वेद्यभूतवैश्वानरैक्यात् रूपमप्यविशिष्टम् ; आख्या च वैश्वानरविद्येत्यविशिष्टा । फलसंयोगोऽप्युभयत्रापि ब्रह्मप्राप्तिरूपोऽविशिष्टः । अत एभिः प्रत्यभिज्ञानात् शाखान्तरेऽपि विद्यैक्यम् ॥ १ ॥**

---

रेत्युक्तिः नाक्षरविद्यामात्रस्य भेदे इदं गमकम् । किंतु सर्वस्या इति ज्ञप्तये । एकनामकनानाशाखोक्तविद्याः सर्वा अपि शाखाभेदे भिद्यन्त इति पूर्वपक्षः ।

**प्रत्यय**मिति क्लीबनिर्देशः पूर्वकाण्डे एकमित्यस्य स्मारणार्थः । क्लीबानुसारा**दुपासन**मिति शब्दप्रयोगः ; उत्तरसूत्रे उपनिषत्सु विद्याशब्दप्रयोगभूमकृतस्त्रीलिङ्गानुरोधात् **विद्याया**मिति । प्रतीयते अनेनेति **प्रत्ययः** । सर्वो वेदान्तः **प्रत्ययः**=प्रतिपादको यस्य तत् **सर्ववेदान्तप्रत्ययम्** । अक्षरादितत्तदुपासनोद्देशेन सर्ववेदान्तविधेयत्वोक्तौ तत्तदेकत्वमर्थसिद्धम् । "एकं वा संयोगरूपचोदनाख्याविशेषात्" **इति** जैमिनिसिद्धान्तसूत्रोक्तानामन्येषां त्रयाणामा**दिपदेन** ग्रहणम् । **संयोगः** फलसंबन्धः । रूपं **कर्मशरीरभू**तद्रव्यदेवतावत् अत्रोपास्याकारः । आख्या च तत्र न पूर्वपक्ष्युक्तकाठकादिरूपा, किंत्वग्निहोत्रादिनामधेयरूपा ; इह अक्षरवैश्वानरादिरूपा । चोदना नाम पुरुषप्रयत्न इति शाबरादौ । मुख्यार्थत्यागे **माना**भावादत्र भाष्ये **विधिरि**त्येवोक्तम् । धात्वर्थस्य विभिन्नत्वे विध्यैक्यस्य कर्मैक्यसंपादकत्वायोगात् एकरूपधात्वर्थग्रहणाय **धात्वर्थविशेषविधि**रित्युक्तम् । यथाक्रमं संयोगादीति प्रयोक्तव्ये **चोदनादी**ति प्रयोगः वाक्यमात्राधीनस्य ब्रह्मवेदनस्य विधेयत्वाभावात् तन्न्यायाप्रवृत्तिरिति भ्रमव्युदासाय । एषां चतुर्णा**मविशेषात्** भेदाभावात् कर्मैक्यं यथा तथोपासनैक्यमेवेति सूत्रार्थः । **वैश्वानरमुपास्ते** इति । अग्निरहस्यरूपवाजसनेयके वेदेति विदिमात्रश्रवणेपि उभयोः पर्यायत्वाशयेनैवमुक्तिः । **रूपमपी**ति—अक्षर-दहराकाश-वैश्वानरात्मादिरूपधर्मीत्यर्थः । **फलसंयोगोऽपी**ति । नन्वग्निरहस्ये, 'अप पुनर्मृत्युं जयति सर्वमायुरेती'ति फलान्तरमेवोक्तम ; न पुनः, 'सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती'ति छान्दोग्योक्तं सर्वस्थब्रह्मरूपान्नानुभवाख्यमोक्षफलमिति कथमविशेष इति चेन्न-अग्निरहस्येऽपि वैश्वानरीयशिरःप्रभृतितत्तदेकदेशोपासकानां, 'यूयं पृथग्वैश्वानरान् विद्वांसः पृथगन्नमघस्त' इति अल्पान्नादनरूपनिन्दावचनेन पूर्णोपासकस्य छान्दोग्योक्तपूर्णान्नानुभवरूपफलस्य सूचितत्वात् । आयुरादिफलवचनं तु प्रशंसार्थमेकांशोपासनेऽप्युक्तं तत् फलं पूर्णोपासने कैमुत्यसिद्धमिति ज्ञप्तये । सर्वमिदं **फलसंयोगोऽपी**त्यपिशब्दसूच्यम् ॥ १ ॥

यत्तूक्तम्—अविशेषपुनश्श्रवणात् प्रकरणान्तराच्च विधेयभेदप्रतीतेर्न विद्यैक्यमिति—तदनुभाष्य परिहरति—

भेदान्नेति चेत्—एकस्यामपि ॥ ३ । ३ । २ ॥

अविशेषपुनश्श्रुत्या प्रकरणान्तराच्च विधेयभेदान्न विद्यैक्यमिति चेत्—एकस्यामपि विद्यायां प्रतिपत्तृभेदात् पुनश्श्रुतिः प्रकरणान्तरं चोपपद्यते। यत्र ह्येकस्मिन् प्रतिपत्तरि पुनश्श्रुतिः प्रकरणान्तरं च विद्यते, तत्रान्यथानुपपत्त्या विधेयभेदात् विद्याभेदः। प्रतिपत्तृभेदे तु तत्प्रतिपत्त्यर्थतया पुनश्श्रुत्याद्युपपत्तेस्तत्र न विधेयान्तरसंभवः ॥ २ ॥

यच्चोक्तं शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियमदर्शनात् विद्याभेदः प्रतीयत इति—तत्राह—

स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः । ३ । ३ । ३ ॥

नैतदस्ति—शिरोव्रतोपदेशनियमदर्शनं विद्याभेदं द्योतयति-इति ; शिरोव्रतस्य विद्याङ्गत्वाभावात्। स्वाध्यायस्य तथात्वे हि तन्नियमः। स्वाध्यायस्य तथात्वसिद्ध्यर्थं-तज्जन्यसंस्कारभाक्त्व-

---

पूर्वमीमांसायां नामरूपधर्मविशेषेत्यादिना शाखान्तरे कर्मभेदहेतवो बहव उपन्यस्ताः। अथ सिद्धान्ते संयोगाद्यविशेषादैक्यं प्रसाध्य पूर्वपक्षहेतूनां निरासाय बहूनि सूत्राणि प्रणीतानि। तद्वदत्रापि सिद्धान्तहेतुमेकेन सूत्रेणोक्त्वा पूर्वपक्षहेतुनिरासार्थमपि सूत्रं प्रणीयते संग्रहादेकम्। अधिकाशंकानिराससूत्रं त्वन्यदुपरि। अथ जैमिनिवत् साधकहेतूपन्यासोऽपि। **न विद्यैक्य**मिति। ननु **विधेयभेदा**दित्यस्यापि विद्याभेदादित्येवार्थात् हेतुसाध्यैक्यमिति चेन्न-विधेयपदेन सामान्यकथनात्। अभ्यासादिबलात् तत्रतत्र कर्मणो विद्यायां वा भेदात् इह विद्याऽभेदो नेति विशेषकथनसंभवात्। यद्वा एकमिति पूर्वं स्वयं प्रयोगात् अत्र, **न विद्यैक्य**मित्युक्तम्। नायमध्याहरणीयांशः ; किंतु भेदादित्येतद्विवरणमात्रम्। पूर्वसूत्रात् **सर्ववेदान्तप्रत्यय**मित्यनुषज्यते ; उत्तरसूत्रेऽप्येतदनुवृत्तेः। न तत्तद्वेदान्तोक्तमक्षराद्युपासनं सर्ववेदान्तप्रत्ययम् ; अभ्यासादिना भेदादित्यर्थः। **प्रतिपत्तृभेदा**दिति। तत्तच्छाखाध्येतृभेदादित्यर्थः। अभ्यासस्य भेदकत्वं हि पुनर्विधानायोगात्। न चात्र तदयोगः। अन्यशाखागतविधेरेतच्छाखाध्येत्रनवगतत्वेनैतं प्रति विधानस्य युक्तत्वात्। अतो गुणाद्यर्थान्तराविधायकविधिपुनःश्रवणरूपाभ्यासो विद्यमानोऽपि एकशाखागत एव भेदकः ; तथा प्रकरणान्तरमपि एकशाखागतमेव भेदकम् ; तत्तदध्येतारं प्रति तत्तदनुपस्थितिरिति प्रकरणान्तरसत्त्वेऽपि एकं प्रति विहितस्यैवान्यं प्रति विधानसंभवात् नैक्यबाधकता। अतोऽन्यथानुपपन्नत्व एव तयोर्भेदकतेति ॥ २ ॥

यथा कारीरीष्टिमधीयानैः कैश्चित् क्रियमाणं भूमौ भोजनमध्ययनस्यैवाङ्गम्, तथा शिरोव्रतमिदं ब्रह्मविद्याशब्दवाच्यतद्विद्याविधायकवाक्यराश्यध्ययनाङ्गम् ; न तूपासनाङ्गम्। अतो नाधिकाशंकावसर इत्याह **स्वाध्यायस्येति। तथात्वे** शिरोव्रतवत्त्वविषये ; तद्विशिष्टत्वाय ; तदधीनसंस्कारभाक्त्वायेति यावत्। **शिरोव्रतोपदेशनियमे**ति। यत्र शिरोव्रतम्, तत्रोपदेश इति नियमेत्यर्थः। सूत्रे हीत्यनेन प्रसिद्धिद्योतनं श्रुता-

सिद्ध्यर्थं हि शिरोव्रतोपदेशनियमः ; न विद्यायाः। कुत एतत्? (मु. ३-२-११) "नैतदचीर्णव्रतोऽधीते" इति तस्याध्ययनसंयोगात् ; समाचारेऽधिकाराच्च—समाचाराख्ये ग्रन्थे "इदमपि वेदव्रतेन व्याख्यातम्" इत्यतिदेशात्। (मु. ३-१, १०) "तेषामेवैतां ब्रह्मविद्यां वदेत"—वेदविद्यामित्यर्थः। सववच्च तन्नियमः—यथा हि सवहोमाः सप्तसूर्यादयः शतौदनपर्यन्ता आथर्वणिकैकाग्निसंबन्धिनस्तत्रैव भवन्ति ; न त्रेताग्निषु ॥ ३ ॥

दर्शयति च । ३ । ३ । ४ ॥

दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम् ; तथा हि छान्दोग्ये, (छा.८-१-१) "तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इत्युक्त्वा, "किं तदत्र विद्यते, यदन्वेष्टव्यम्" इति प्रश्नपूर्वकम् अपहतपाप्मत्वादिगुणाष्टकविशिष्टः परमात्मा तस्मिन् उपास्य इत्युक्तम् ; तैत्तिरीयके तु छान्दोग्यस्थं प्रतिनिर्देशमुपजीव्य, (तै. नारा. १०-२३) "तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति गुणाष्टकविशिष्टस्य परमात्मन उपासनमुच्यते ।

---

वेव तत्स्पष्टत्वाभिप्रायेणेति श्रुतिमेव दर्शयति नैतदिति । अधीते, वदेत इति शब्दत एव, एतदिति एतां विद्यामिति च ग्रन्थपरमिति ज्ञायत इति भावः । इदमपि वेदव्रतेन व्याख्यातमिति। अत्र इदमिति व्रतान्तरं निर्दिश्य, तद्विषये वैशद्यं शिरोव्रते उपदिष्टमतिदिश्य ज्ञेयमित्युक्तम् । शिरोव्रतशब्दस्थाने वेदव्रतेति प्रयोगस्तत्र कृत इत्यस्य निर्विवादत्वात् व्रतमिदं वेदाङ्गम्, नोपासनाङ्गमिति ज्ञायत इति भावः । सववदिति। सवाख्याः सप्तसूर्याख्यहोमप्रभृति-शतौदनाख्यहोमपर्यन्ताः होमाः एकाग्नौ कर्तव्यतया विहिताः ; न त्रेताग्नौ। स चैकाग्निराथर्वणिकानामेवेति ते नान्येषामित्यर्थः। ननु शिरोव्रतमन्येषां न भवतीति पूर्वपक्षिणैवोक्तत्वात् सवदृष्टान्तपुरस्सरं सिद्धान्तिनस्तत्स्थापनप्रयासः कुत इति चेत्—पूर्वपक्षीष्टत्वेऽपि अन्यः कश्चिदेवं शङ्कते—वेदविद्याया अङ्गित्वात् व्रतस्य चाङ्गत्वात् तदध्यायिभिः सर्वैरपि व्रतानुष्ठानं युक्तं कर्तुम्, न त्वङ्गानुरोधेनाङ्गिसंकोच इति। तथाच विद्याङ्गत्वे वा वेदाङ्गत्वे वा परेषामपि तद् व्रतं भवेदिति। तत्रोक्तं सववदिति। यथा होमं प्रति अहवनीयाद्यग्नेरङ्गत्वेऽपि न तस्य स्वतन्त्रविधिप्रापणीयाग्न्याक्षेपकत्वम्, तथाऽत्र व्रतस्याविधानात्, यैश्चीर्णमिति व्रतवत्त्वेननिर्ज्ञातपुरुषमात्राधिकारिकत्वस्याध्ययनेऽवगमात्, नान्येषामध्ययनाधिकार इति भावः। सूत्रे प्रथमचकारः अधीते इति श्रुतिगतिसमुच्चायकः। द्वितीयोऽवधारणार्थः। नैतदचीर्णव्रतोऽधीते इत्युक्त्या व्रतमिदमन्येषां नास्तीति कथं ज्ञायत इति न शंक्यम् ; सर्वसाधारणत्वे तेषामेवैतां—यैस्तु चीर्णमिति एवकार-यच्छब्दादिघटितवाक्यगतिभङ्गात्। अत एकाग्निवत् शिरोधार्यपात्राग्निरपि आथर्वणिकविश्रान्त इति। अधिकारादित्यस्य वेदसंबन्धितया निर्देशादित्यर्थः।

जैमिनिना पूर्वपक्षं निरस्य ; "प्रत्ययश्चापि दर्शयति" इति कर्म सर्वशाखाप्रत्ययमेकमित्यत्र दर्शनं प्रदर्शितम् ; तद्वदिहाप्याह दर्शयति चेति। 'किं तदत्र', 'यदन्तः' इत्यत्र गुणमात्रस्य ग्राह्यत्वेऽपि अन्ततस्तद्विशिष्टस्य आकाश—गगनशब्दवाच्यस्य परमात्मन एवोपास्यत्वात् ; विशिष्टः परमात्मा, विशिष्टस्य परमात्मनः इत्युक्तम्। छान्दोग्यानुपजीवने तैत्तिरीये तदन्वेष्टव्यमित्यत्र तच्छब्दार्थो न

तत् उभयत्र विद्यैकत्वेन गुणोपसंहारादेवोपपद्यते ॥ ४ ॥

तदेवं शाखान्तराधिकरणन्यायसिद्धं विद्यैक्यं स्थिरीकृत्य तत्प्रयोजनमाह—

उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च । ३ । ३ । ५ ॥

एवं सर्ववेदान्तेषु समाने सति उपासने वेदान्तान्तराम्नातानां गुणानां वेदान्तान्तरे उपसंहारः कर्तव्यः । कुतः ? विधिशेषवत् अर्थाभेदात्—यथैकस्मिन् वेदान्ते श्रुतो वैश्वानरदहरादिविधिशेषो गुणस्तद्विद्यासंबन्धात् तदुपकाररूपप्रयोजनसिद्ध्यर्थमनुष्ठीयते ; तथा वेदान्तान्तरोदितोऽपि तद्विद्यासंबन्धित्वेन तदुपकाराविशेषादुपसंहर्तव्य इत्यर्थः । चशब्दोऽवधारणे ॥५॥

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

८४. अन्यथात्वाधिकरणम् ३ ३-२

(पू) अन्यथात्वं शब्दादिति चेन्नाविशेषात् । ३ । ३ । ६ ॥

एवं चोदनाद्यविशेषात् विद्यैकत्वम् , एकत्वे च गुणोपसंहारः कर्तव्य इत्युक्तम् ; अतः परं काश्चन विद्या अधिकृत्य प्रत्यभिज्ञाहेतुभूतचोदनाद्यविशेषोऽस्ति, नेति निरूप्य निर्णीयते । अस्त्युद्गीथविद्या वाजिनां छन्दोगानां च । वाजिनां तावत्— (बृ. १-३ १) "द्वया ह

बुध्येत । अन्यतः सुगमत्वादेव तत्र तदनुक्तिरिति सिद्धमुपासनैक्यं दहरविद्यायाम् । तथैवान्यत्रापीति भावः ॥

प्रयोजनमाहेति । अस्य सूत्रस्य पृथगधिकरणत्वं भामत्युक्तस्यापि फल्गुत्वान्न युक्तमिति भावः । नन्वधिकरणान्तरेष्विवात्रापि तदवचनमेव युक्तम् ; सुतरां तु पूर्वमीमांसात एव प्रज्ञातत्वादिति चेत्—अधिकाशंकयाऽधिकरणप्रवृत्तिवत् एतत्कथनप्रवृत्तिरप्यधिकाशंकायामिति भाव्यम् । स्यैवं स्यात्—यथा शिरोव्रतं विद्याभेदसाधकम् तथा सर्वशाखाप्रत्ययविद्यैक्ये गुणोपसंहारायोगोऽपि तत्साधकः ; अनधीतानां शाखानामेवाधिकतया इयत्तानवधारणात् । न चात्र, कर्मविषये स्वाध्यायोऽध्येतव्य इत्यत्र स्वशब्दबलेन एकैकशाखामात्राध्ययनात् ' वेदानधीत्य ' इति वचनानुसारेण वेदान्तरेऽप्येकशाखाध्ययनेऽपि कल्पसूत्रवत् , सर्वभक्तिकल्पसूत्रं सर्वज्ञमहर्षिसंदृब्धमस्ति । अतोऽनुष्ठानहानिरेव स्यादैक्ये । अतः शाखाभेदेन विद्याभेद इति । तत्रेदं सूत्रम्—असद्दुर्ग्रहत्वमात्रेण न्यायसिद्धार्थभञ्जनमयुक्तम् । गुणेयत्ता तु तत्तदनुष्ठातृमहनीययोगिमूलमुपदेशतोऽवधारणीया भवतु ; ग्रन्थलाभे ततो वेत्यन्यदेतदिति । **अर्थाभेदात्** उपकारलाभस्य तुल्यत्वात् । अर्थस्योपासनविशेष्यस्य ब्रह्मण एकत्वादिति कुतो न व्याख्यातमिति चेत्—न हि ब्रह्मगुणमात्रस्योपसंहारः, किंतु वैश्वानरविद्याङ्गप्राणाग्निहोत्रवेदनतुल्यानामङ्गान्तराणामपि । तत्र च तस्य न हेतुत्वम् । **चशब्दोऽवधारण** इति । तथाचेत्यत्रेव **समाने** चेति चो निगमनसूचकः साध्यावधारणे पर्यवस्यतीति । उपसंहारो द्विविधः—शाखान्तरोक्तगुणस्याविरुद्धत्वे सर्वदोपसंहारः, विरुद्धत्वे विकल्पेनोपसंहारः, यथा छान्दोग्योक्तस्याग्निरहस्योक्तस्य च वैश्वानरे उपासकपुरुषीयपूर्णशरीरमात्रत्वस्य प्रादेशमात्रत्वविशेषस्य च ' आमनन्ति चैनमस्मिन् ' इति सूत्रितस्य ॥ ५ ॥

विभिन्नशाखोक्ताक्षरादिविद्यादृष्टान्तेन उद्गीथविद्याया अपि रूपाद्यविशेष एवेति ऐक्यशङ्कया

प्राजापत्याः देवाश्चासुराश्च'' इत्यारभ्य, ''ते ह देवा ऊचुः हन्तासुरान् यज्ञे उद्गीथेनात्ययाम'' इत्युद्गीथेनासुरविध्वंसनं प्रतिज्ञाय, उद्गीथे वागादिमनःपर्यन्तदृष्टौ असुरैरभिभवमुक्त्वा, ''अथ ह इममासन्यं प्राणमूचुः'' इत्यादिना उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा, ''भवत्यात्मना ; पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति, य एवं वेद'' इति शत्रुपराजयफलायोद्गीथे प्राणदृष्टिर्विहिता। एवं छन्दोगानामपि, (१.२.) ''देवासुरा ह वै यत्र संयेतिरे'' इत्यारभ्य, ''तद्ध देवा उद्गीथमाजह्रुः अनेनैनान् अभिहनिष्यामः'' इति उद्गीथेनासुरपराभवं प्रतिज्ञाय तद्वदेवोद्गीथे वागादिदृष्टौ दोषमभिधाय, ''अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे'' इत्यादिना उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा, ''यथाऽश्मानमाखणमृत्वा विध्वंसते, एवं हैव स विध्वंसते, य एवंविदि पापं कामयते'' इति शत्रुपराभवाय उद्गीथे प्राणदृष्टिर्विहिता।

वेदनविषयविधिप्रत्ययाश्रवणेऽपि फलसाधनत्वश्रवणात् वेदनविषयो विधिः कल्प्यते। उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलत्वेऽप्यार्थवादिकमपि फलं तदविरुद्धं ग्राह्यमेवेति देवताधिकरणे प्रतिपादितम्।

तत्र संशय्यते—किमत्र विद्यैक्यम्, उत नेति। किं युक्तम्? विद्यैक्यमिति। कुतः? उभयत्रोद्गीथस्यैवाध्यस्तप्राणभावस्योपास्यत्वश्रवणात् चोदनाद्यविशेषात्। फलसंयोग-

संगतिः। **आसन्यम्**। आस्यशब्दस्य आसन् आदेशः। आस्यभवमित्यर्थः। मुख्यः प्राणोऽयम्। भवत्यात्मना—स्वयं भवति=स्वरूपसत्तां लभते। अस्य द्विषन् पराभवतीत्यन्वयः। भ्रातृव्यत्वं देवासुरयोर्भिन्नोदरभ्रातृत्वात्। अरातिरिति यावत्। **य एवं वेद** उद्गीथे मुख्यप्राणदृष्टिं कृत्वा य उपास्ते। **यत्र संयेतिरे** यदा युयुधिरे। **अश्मानमाखणमृत्वा**। **आखणं** लोष्टः **अश्मानमृत्वा** ग्रावाणं प्राप्य। विस्तर उपनिषद्व्याख्याने। ननु विद्याविधेरेवादर्शनात् कोऽयमैक्यानैक्यविचार इति, वक्ष्माणानभिज्ञशंकां परिहरति **वेदनेति**। **फलसाधनत्वश्रवणादिति**। एवंवित् पराभूतद्विषत्को भवतीत्युक्तौ धनवान् सुखीत्यत्रेव वेदने द्विषत्पराभवं प्रति साधनत्वलाभादिति भावः। ननु 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति उपक्रमे विधिश्रवणात् कथमुपासीतेत्याकांक्षायाम् यएवं वेदेति प्रकारसमर्पणात् विद्याविधानमिष्यत एव। परंत्वस्याः क्रत्वङ्गोद्गीथाङ्गत्वात् क्रतुफलेनैव फलवत्तेति नार्थवादस्य फलसमर्पकता ; यस्य पर्णमयीति वाक्य इव। अत एतत्फलसंयोगाविशेषोपपादनमनवसरमिति शंकां परिहरति **उद्गीथेति** ; **क्रत्वर्थत्वेनेत्यस्य फलत्वेऽपीत्यत्रान्वयः**। अयं भावः—विद्या तावत् न क्रत्वर्था, 'यश्चैवं वेद यश्च न वेद' इति विद्यानुष्ठानानियमस्य वक्ष्यमाणत्वात्। परंतु इदमधिकरणं वक्ष्यमाणस्य क्रत्वनङ्गत्वस्योपजीवनेनैव प्रवृत्तमिति न मन्तव्यम्। वस्तुतस्तदनङ्गत्वे वा, पूर्वपक्षिबुद्ध्या तदङ्गत्वे वा फलमिदं ग्राह्यमेवेति एतत्फलसंयोगाविशेषः सुवच एव। अङ्गानामप्यविरुद्धमार्थवादिकं फलं श्रुतत्वादबाधितं ग्राह्यमिति प्रागेवोक्तत्वात्। न च फलविषये वर्तमानापदेशात् पर्णमयीन्यायः, फलाप्त्यादिमुखेन वागादिदृष्टिनिन्दनाद तत्र नैर्मल्यावगमात। अस्य भाष्यस्यैवमभिप्रायकत्वात्, उद्गीथविद्यायाः क्रत्वङ्गत्वसाधकमिदं भाष्यमिति न

स्तावत् शत्रुपरिभवरूपो न विशिष्यते। रूपमप्यध्यस्तप्राणभावोद्गीथाख्योपास्यैक्यादविशिष्टम्। चोदना च विदिधात्वर्थगताऽविशिष्टा। आख्या चोद्गीथविद्येत्यविशिष्टा। अत्र राद्धान्तिच्छायया परिचोद्य परिहरति अन्यथात्वं शब्दादिति चेन्नाविशेषात् इति यदुक्तं विद्यैक्यमिति—तन्नोपपद्यते, रूपभेदात्; रूपान्यथात्वं हि शब्दादेव प्रतीयते। वाजसनेयके हि, "अथ हेममासन्यं प्राणमूचुः, त्वं न उद्गायेति। तथेति तेभ्य एष प्राण उदगायत्" इति उद्गानस्य कर्तरि प्राणदृष्ट्याऽसुरपराभवमुक्त्वा, "य एवं वेद" इति कर्तर्येव प्राणदृष्टिरेवंशब्दादवगम्यते। छान्दोग्ये, "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इति उद्गानस्य कर्मण्युद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा, "य एवंविदि पापं कामयते" इत्येवंशब्दात् कर्मण्येवोद्गीथे प्राणदृष्टिर्विहिता। अत एकत्र कर्तरि प्राणदृष्टिशब्दात्, अन्यत्र कर्मणि प्राणदृष्टिशब्दाच्च रूपान्यथात्वं स्पष्टम्। रूपान्यथात्वे च विधेयभेदे सति केवलचोदनाद्यविशेषोऽकिञ्चित्कर इति विद्याभेद इति चेत्—तन्न; अविशेषात्, अविशेषेण ह्युभयत्र उद्गीथसाधनकपरपरिभव उपक्रमे प्रतीयते; वाजसनेयके, "ते ह देवा ऊचुर्हन्तासुरान् यज्ञे उद्गीथेनात्ययाम" इत्युपक्रमे श्रूयते; छान्दोग्येऽपि, "तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः" इति। अत उपक्रमाविरोधाय, "तेभ्य एष प्राण उदगायत्" इत्यध्यस्तप्राणभाव उद्गीथ उद्गानकर्मभूत एव पाकादिष्वोदनादिवत् सौकर्यातिशयविवक्षया कर्तृत्वेनोच्यते; अन्यथोपक्रमगत उद्गीथशब्दः कर्तरि लाक्षणिकः स्यात्। अतो विद्यैक्यम्—इति प्राप्ते प्रचक्ष्महे—

न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्। ३। ३। ७॥

नवेति पक्षं व्यावर्तयति। नचै(वै ?)तदस्ति, यत् विद्यैक्यमिति; कुतः ? प्रकरणभेदात्

---

मन्तव्यम्। त्वं न उद्गायेति। प्राणमाहुः त्वमुद्गाता भवेति कथायाउच्यमानायाः, उद्गातरि प्राणदृष्टिं कृतवन्त इति ज्ञापन एव तात्पर्यमिति अन्ततो ज्ञायत इति भावः। अवगम्यत इति। णिजर्थात् कर्मणि बोध्यम्; तदैव क्त्वाप्रत्ययान्वयात्। सूत्रे अविशेषादित्यस्य उपसंहारस्योपक्रमाविशिष्टार्थकत्वादित्यर्थः। प्राण उद्गायदित्यस्य प्राण उद्गीथोऽभवदित्येवार्थः। उद्गीथे उद्गानकर्मणि उद्गानकर्तृत्वमारोपितम्। कर्मकर्तरिप्रयोगे कर्मणि कर्तृत्वविवक्षादर्शनात्तत्रापि कर्तृत्वेनोद्गीथग्रहणसंभवात्। छान्दोग्ये, (१-३) आदित्ये उद्गीथसाम्योपपादकवाक्ये, 'उद्यन्—उद्गायति' इति कर्तृत्वोक्तिरस्ति। तत्र ह्युद्गीथस्याप्युद्गातृत्वं विवक्षितमिति भावः। कर्तरीति। उद्गीथेनात्ययामेत्यस्य उद्गात्रा (उपास्यमानेन) अत्ययामेत्यर्थस्य वर्णनीयत्वादिति भावः। तस्मात् छान्दोग्य इव बृहदारण्यकेऽपि उद्गीथ एव प्राणदृष्टिर्विधीयत इति रूपमप्यविशिष्टमिति पूर्वपक्षः॥ ६॥

उपक्रमाविशेषमुपसंहारे पूर्वपक्षी अयोजयत्। उपक्रमोपकर्मं छान्दोग्ये प्रदर्श्य सिद्धान्ती रूपभेदस्यावर्जनीयत्वात् उद्गातृरूपस्वरसार्थो न त्याज्य इत्याह नवेति। पक्षं व्यावर्तयतीति। नेत्यलम्;

"ओमित्येतदक्षरमुद्गीथमुपासीत" इति प्रकृतमुद्गीथावयवभूतं प्रणवं प्रस्तुत्य, (छा. १-१-१०) "एतस्यैवाक्षरस्योपव्याख्यानं भवति····देवासुरा ह्वै यत्र संयेतिरे" इत्यारभ्य, "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इति उद्गीथावयवभूत-प्रणवविषयमुपासनं छन्दोगा अधीयते। वाजिनस्तु तादृशप्राचीनप्रकरणाभावात्, "हन्तासुरान् यज्ञ उद्गीथेनात्ययाम" इति कृत्स्नमुद्गीथं प्रस्तुत्य, "अथ हेममासन्यं प्राणमूचुः त्वं न उद्गाय" इत्यादि कृत्स्नोद्गीथविषयमधीयते। अतः प्रकरण-भेदेन विधेयभेदः, विधेयभेदे च रूपभेद इति न विद्यैक्यम्। किञ्च, "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इति पूर्वप्रकृतः उद्गीथावयवभूतः प्रणव एवाध्यस्तप्राणभावश्छन्दोगानामुपास्यः; वाजिनां तु कृत्स्नस्योद्गीथस्य कर्तोद्गाता प्राणदृष्ट्योपास्य इति, "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति। तथेति तेभ्य एष प्राण उदगायत्" इति उद्गातरि प्राणाध्यासं निर्दिश्य, "य एवं वेद" इत्युद्गातैवाध्यस्तप्राण-भाव उपास्यो विधीयते। अतश्च रूपभेदः। नचोद्गातर्युपास्ये विहिते, "उद्गीथेनात्ययाम" इत्याख्यायिकोपक्रमविरोधः शङ्कनीयः; उद्गातुरुपासने उद्गीथस्योद्गानकर्मभूतस्या-वश्यापेक्षितत्वात् तस्यापि परपरिभवाख्य फलं प्रति हेतुत्वात्। अतो रूपभेदाद्विद्याभेद इति चोदनाद्यविशेषेऽपि न विद्यैक्यम्। परोवरीयस्त्वादिवत्—यथैकस्यामपि(मेव)शाखायामुद्-गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरी-यस्त्वादिगुण (छा. १-९) विशिष्टदृष्टिविधानमर्थान्तरभूतम् ॥ ७ ॥

---

किं वाशब्देनेति चेत्—प्रणवरूपोद्गीथग्रहणमेव शाखाद्वयेऽपीत्यविशेषांशखण्डनं नेत्यनेन। एवं पूर्ण-ग्रहणे बृहदारण्यके सिद्धे, वेत्यनेन तन्मात्रव्युदासेन तदुद्गीथविशिष्टपुरुषपर्यन्तग्रहणमुपसंहारानुगुण्यायेति साधीयः पक्षान्तरं ज्ञाप्यते। इममर्थं क्रमेण, ओमितीत्यादिना किञ्चेत्यादिना चाह। **प्रकरणभेदात्** वाजसनेयोद्गीथापेक्षया छान्दोग्योद्गीथस्य पूर्वप्रकरणबलात् केवलाक्षररूपतया भिन्नत्वात् रूपभेदात्। एवं छान्दोग्यप्रकरणस्य वाजसनेयप्रकरणस्य चोद्गीथाक्षर-उद्गातृपुरुषरूपभिन्नार्थविषयकतया भेदादित्यप्यर्थः। **उद्गीथावयवभूतमिति**। साम्नः प्रस्तावोद्गीथप्रतिहाररूपभक्तित्रयवत्त्वेन, हिङ्कारप्रस्तावोद्गीथप्रतिहार-निधनरूपभक्तिपञ्चकात्मना, हिङ्कार-प्रस्ताव-ओङ्काररूपोद्गीथीयाद्यावयव-उद्गीथ-प्रतिहारोपद्रवनिधन-रूपभक्तिसप्तकात्मना च छान्दोग्ये द्वितीयाध्याये निरूपणमस्ति। तदत्र प्रस्तावादिषु सामभक्तिषु मध्यमा भक्तिरुद्गीथः। तदेकदेशप्रणवमात्रमुद्गीथपदग्राह्यं छान्दोग्ये; बृहदारण्यके तु तथाग्रहणे माना-भावात् पूर्णोद्गीथग्रहणम्। एवञ्चोद्गीथे प्राणदृष्टिरित्युक्तावपि तत्र पूर्ण एव तद्दृष्टिरेष्टव्या। ततो वरं यथाश्रुति उद्गातरि प्राणदृष्टिः। उद्गीथेनेति तस्य करणत्वनिर्देशश्च उद्गीथविशिष्टाकारेणैवोद्गातुः करण-त्वात् उद्गीथस्यापि करणनिविष्टत्वात्। **परोवरीयस्त्वेति**। वरीयसां परः परोवरीयान्। छान्दोग्य-प्रथमे (७. ८) प्रथमम्, 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते तस्मादुद्गीथः' इति परमात्म-

संज्ञातश्चेत् तदुक्तम्, अस्ति तु तदपि । ३ । ३ । ८ ॥

उद्गीथविद्येति संज्ञैक्यात् तत-विद्यैक्यमुक्तं चेत् तत-संज्ञैक्यं विधेयभेदेऽप्यस्त्येव; यथा अग्निहोत्रसंज्ञा नित्याग्निहोत्रे, कुण्डपायिनामयनाग्निहोत्रे च; यथा चोद्गीथविद्येति छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासु ॥ ८ ॥

व्याप्तेश्च समञ्जसम् । ३ । ३ । ९ ॥

छान्दोग्ये प्रथमप्रपाठके उत्तरास्वपि विद्यासूद्गीथावयवस्य प्रणवस्य प्रथमप्रस्तुतस्योपास्यत्वेन व्याप्तेश्च तन्मध्यगतस्य, "तद्ध देवा उद्गीथमाजह्रुः" इत्युद्गीथशब्दस्य प्रणवविषयत्वमेव समञ्जसम् । अवयवे च समुदायशब्दः 'पटो दग्धः' इत्यादिषु दृश्यते । अतश्चोद्गीथावयवभूतः प्रणव एवोद्गीथशब्दनिर्दिष्ट इति स एव प्राणदृष्ट्योपास्यः छान्दोग्ये प्रतिपत्तव्यः । वाजसनेयके तु कृत्स्नोद्गीथविषय उद्गीथशब्द इति कृत्स्नोद्गीथस्य कर्ता उद्गाता प्राणदृष्ट्योपास्य इति विद्यानानात्वं सिद्धम् ॥ ९ ॥

इति अन्यथात्वाधिकरणम् ॥ २ ॥

---

दृष्टिरुद्गीथे विहिता, अनन्तरम्, 'आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते ... स वा एष परोवरीयान् उद्गीथः' इति पुनस्तत्रैव तद्दृष्टिः । तावता न विद्यैक्यम्—आरोप्यस्याधिष्ठानस्य चोभयत्रैकत्वेऽपि हिरण्मयविग्रहवत्त्वोन्नामकत्व जगत्कारणत्वपरोवरीयस्त्वादिरूपधर्मभेदात् । तद्वत् अत्रोद्गीथाशस्योभयत्र सत्त्वेऽपि तावन्मात्र-तदधिकरूपविषयभेदात् न विद्यैक्यमिति ॥ ७ ॥

संज्ञात इति । संज्ञातस्तदुक्तं चेदित्यन्वय । प्रथमतच्छब्दार्थो विद्यैक्यम्, द्वितीयतदर्थ संज्ञैक्यम् । ननु संयोगरूपचोदनाख्याना चतसृणामविशेषस्यैवैक्यसाधकताया उक्तत्वात संज्ञामात्रैक्यमादाय कथमैक्यशंकेति चेत्—शब्दान्तरादिषु भेदकप्रमाणेषु संज्ञाभेदे कर्मभेदस्योक्तत्वात् तदैक्ये तदैक्यमित्यभिमान. । नन्वेवमपि परोवरीयस्त्वादिवदिति निदर्शनादेव एतच्छंका नोत्तिष्ठेदिति चेत—उच्यते । विद्याया उद्गातृविषयकत्वे उद्गातृविद्येति संज्ञा स्यात ; न तु उद्गीथविद्येति इति शंकितुराशय । उद्गातृविद्याया अपि उद्गीथविषयकत्वसत्त्वात् उद्गीथविद्येति संज्ञा, यथा मासाग्निहोत्रे नित्याग्निहोत्रधर्माणां सत्त्वमात्रेणाग्निहोत्रसंज्ञेति समाधिः । यथा चेति । संज्ञाया. मुख्यामुख्योभयविषये, मुख्यानेकविषये चैकरूपत्वं दृष्टम् । तत् प्रकृते यथायथं भवतीत्याशय. ॥ ८ ॥

ननूपक्रमानुरोधात् छान्दोग्यप्रथमखण्डस्याक्षरमात्रविषयकत्वेऽपि मुख्यप्राणदृष्टिखण्डेऽत्र द्वितीये, वाजसनेयक इव पूर्णोद्गीथविषयकत्वं न स्यादित्यत्राह व्याप्तेश्चेति । उत्तरास्वपीति । ननु द्वितीयखण्डान्ते, 'आगाता ह वै कामाना भवति, य एतदेवं विद्वान् अक्षरमुद्गीथमुपास्ते' इति निर्देशप्रदर्शनं पर्याप्तम । किमित्यनेकप्रदर्शनमिति चेत्—द्वितीयोपक्रमे पूर्णं गृहीत्वा उपसंहारस्थत्वादक्षरपदमन्यथा निनीषेत् यदि, तदयुक्तम्; उत्तरत्रापि (४) ओमित्येतदक्षरमित्युपक्रम एव सत्त्वादिति प्रतिबोधनाय ॥ ९ ॥

८५. सर्वाभेदाधिकरणम् ३-३-३ (कौषीतकिन्रा.)

## सर्वाभेदादन्यत्रेमे । ३ । ३ । १० ॥

छान्दोग्यवाजसनेयकयोः प्राणविद्या आम्नायते, (छा. ५-१-१) "यो ह वै ज्येष्ठं च श्रेष्ठं च वेद, ज्येष्ठश्च ह वै श्रेष्ठश्च भवति । प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" इत्यादि । तत्र ज्यैष्ठ्यश्रैष्ठ्यगुणकं प्राणमुपास्यं प्रतिपाद्य, वाक्चक्षुश्श्रोत्रमनस्सु वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वाख्यान् गुणान् प्रतिपाद्य, वागादीनां देहस्य च प्राणायत्तस्थितित्वेन तदायत्ततत्तत्कार्यत्वेन च प्राणस्य श्रैष्ठ्यं प्रतिपाद्य, वागादिसंबन्धितया श्रुतान् वसिष्ठत्वादीन् गुणांश्च प्राणसंबन्धितया प्रतिपादयति । एवं छान्दोग्यवाजसनेयकयोर्ज्यैष्ठ्यश्रैष्ठ्यगुणको वसिष्ठत्वादिगुणकश्च प्राण उपास्यः प्रतिपाद्यते । कौषीतकिनां तु प्राणविद्यायां तथैव ज्यैष्ठ्यश्रैष्ठ्यगुणकः प्राण उपास्यः प्रतिपादितः ; न पुनर्वसिष्ठत्वादयो वागादिसंबन्धिनो गुणाः प्राणसंबन्धितया प्रतिपादिताः । तत्र संशयः— किमत्र विद्या भिद्यते, उत नेति । किं युक्तम् ? भिद्यते इति । कुतः ? रूपभेदात् । यद्यप्युभयत्र प्राण एव ज्यैष्ठ्यश्रैष्ठ्यगुणक

---

प्राणदृष्टिरूपोपासने निराकृते प्राणोपासनमेव संप्रति विचार्यते । धर्मिरूपविषयभेदात् विद्याभेद उक्तः । तद्दृष्टान्तेन धर्मभेदप्रयुक्तविद्याभेदशंका । धर्मभेदोऽपि नास्तीत्यैक्यमिति परिहारः । कौषीतकिप्राणविद्या शाखान्तरोक्तप्राणविद्यातो भिन्ना तदीयगुणाविषयकत्वादिति पूर्वः पक्षः । **वाजसनेयके**ति । तत्र (८.६) ईषद्भिन्नानुपूर्वीकवाक्यमपि अत्र ग्राह्यम् । **ज्येष्ठं च श्रेष्ठं चे**ति । मुख्यप्राणस्य वायुविकारत्वे, इन्द्रियाणाञ्च सर्वभूतपूर्वभाव्यहङ्कारजन्यत्वे च सति, कथं प्राणो ज्येष्ठ इति चेत्— उत्पत्तौ पश्चात्तनत्वेऽपि कार्योद्योगेऽस्यैव प्राथम्यात् । तदुक्तं **शाङ्करे**, (२-४. ८) "ज्येष्ठश्च प्राणः ; शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात् । ..(अन्यथा) शुक्रं पूयेत ; न संभवेद्वा । श्रोत्रादीनां तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वम् । श्रेष्ठश्च प्राणः गुणाधिक्यात् ; न वै शक्ष्यामस्त्वदृते जीवितुम् इति श्रुतेः" इति । **वसिष्ठत्वे**त्यादि । वाग्वाव वसिष्ठः ? (वसुमत्तमः) ; चक्षुर्वाव प्रतिष्ठा (समविषमभूतलवैषम्यप्रदर्शनेन प्रतिष्ठानकरम्) ; श्रोत्रं वाव सम्पत् (वेदादिश्रवणसंपत्तिकरम्) ; मनो ह वा आयतनम् (भोगायतनम्) ; **प्रतिपाद्ये**ति । को नः श्रेष्ठ इति कलहोक्तिपूर्वमुपपाद्येत्यर्थः । **प्रतिपादयती**ति । यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीत्यादिनेति शेषः । तदर्थश्च, वाग्मिनो वसुमत्तासंपादकत्वरूपवसिष्ठत्वशालिनी अहमिति यत्—तत् त्वद्वसिष्ठत्वमेव ; त्वदधीनमेव मे तदिति यावत् । **प्राणसंबन्धितये**ति । गुणा एव कौषीतक्यनुक्ता इति **शांकरम्** । अत्र तु यदहं वसिष्ठास्मीति पूर्वोक्तरीत्या नोक्ताः ; गुणास्तु कथिता एवेत्युच्यते । चतुर्थाध्यायत्वेन द्वितीयाध्यायत्वेन वा मते प्राणविद्याध्याये तदनुक्तावपि दशमाध्याये तदुक्तिर्**नयमयूखमालिका**याम् । उदाहरिष्यति च सिद्धान्तभाष्ये तत्रत्यं वाक्यम् । **भिद्यते** इति । नन्वनुक्तिमात्रेण कथं भेदः । अनुक्तमन्यतो ग्राह्यमिति गुणोपसंहारस्येष्टत्वादिति चेत् —सत्यम् । अविशिष्टफलकक्रियाविषये गुरुलघुविकल्पायोगात् अश्रुतगुण-

उपास्यः—तथाप्येकत्र वसिष्ठत्वादिभिरपि गुणैर्युक्तः प्राण उपास्यः प्रतीयते; इतरत्र तु तद्विधुर इत्युपास्यरूपभेदात् विद्याभेदः—

इति प्राप्ते ब्रूमः—सर्वाभेदादन्यत्रेमे। नात्र विद्याभेदः। अन्यत्र कौषीतकिनां प्राणविद्यायामपि इमे—वसिष्ठत्वादयो गुणा उपास्यास्सन्ति। कुतः? सर्वाभेदात् प्रतिज्ञातप्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्य सर्वस्य तत्राप्यभेदात्। तथाहि—छन्दोगवाजसनेयिनां प्राणविद्यायाम्, (छा. ५-१-६) "अहंश्रेयसि व्यूदिरे", (बृ. ८ १ ७) "अहंश्रेयसे विवदमानाः" इति चोपक्रम्य वागाद्येकैकापक्रमणे अन्येषां सप्राणानामिन्द्रियाणां शरीरस्य च स्थितिं तत्तत्कार्यं चाभिधाय सर्वेषां प्राणाधीनस्थितित्वतदधीनकार्यत्वाभ्यां प्राणस्य ज्यैष्ठ्य(श्रैष्ठ्य ?)मुपपादितम्। एवमुपपादितं वागादिकार्यस्य प्राणाधीनत्वम्, "अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तत् वसिष्ठोऽसि", इत्यादिना वागादिभिरनूद्यते। कौषीतकिनां प्राणविद्यायामपि प्राणज्यैष्ठ्यश्रैष्ठ्यप्रतिपादनाय वागादिषु वसिष्ठत्वादयः प्रतिपादिताः। (—) "अथ हेमा देवताः प्रजापतिं पितरमेत्याब्रुवन्, को वै नः श्रेष्ठः" इत्यादिना वागादिगताः गुणाः वागादयश्च देहश्च प्राणाधीना इति प्राणस्य ज्यै(?)ष्ठ्यमुपपादितम्। वागादिभिः स्वस्वगुणानां वसिष्ठत्वादीनां प्राणाधीनत्वानुवादमात्रं तु न कृतम्। नैतावता रूपभेदः; वागादीनां वसिष्ठत्वादिगुणान्वितानां प्राणाधीनकार्यत्वोपपादनेनैव प्राणस्य वागादिवसिष्ठत्वादिगुणहेतुत्वस्य सिद्धत्वात्। तदेव हि प्राणस्य वसिष्ठत्वादिगुणयोगित्वम्; यत् वागादिवसिष्ठत्वादिहेतुत्वम्। अतोऽत्रापि वसिष्ठत्वादिगुणयोगात् प्राणो(?)ज्येष्ठः प्रतिपन्न इति नास्ति विद्याभेदः॥ १०॥ इति सर्वाभेदाधिकरणम्॥ ३॥

---

ग्रहणेनैक्यस्य वक्तव्यत्वेऽपि प्राणविद्यायाः मुक्तिफलकत्वाभावेन फलतारतम्यसंभवात् तद्भेदात् यथाश्रुति युक्तमनुष्ठानमिति नैक्यमिति पूर्वपक्ष्याशयः। किञ्च वागादिगतवसिष्ठत्वादीनां प्राणे वस्तुतोऽसंभवादारोप एव वाच्यः। अयमेवाऽऽरोपः, यदहं वसिष्ठाऽस्मीति वाक्येनोच्यते। तद्वाक्याभावस्थले तदारोपे प्रमाणाभावात् तद्रहितमेवोपासनमिति फलवैषम्यम्। इदञ्च न पुनर्वसिष्ठत्वादय इति भाष्यसूचितम्। अश्रूयमाणस्य फलवैषम्यस्य कल्पनमपेक्ष्य फलसंयोगाविशेषमादृत्य विद्यैक्यपक्ष एव लाघवमिति सिद्धान्त्याशयः। सर्वस्य वसिष्ठत्वादेः प्राणाधीनत्वोपपादनप्रकारस्य कौषीतकिवाक्येऽप्यभेदात् अविशिष्टत्वात् यदहं वसिष्ठास्मीति वाक्यस्य उत्कृष्टे निकृष्टगतगुणारोपार्थकत्वस्याकल्पनेन वागादिहेतुत्वरूपार्थपरत्वस्यैव स्वीकारात् इमे वसिष्ठत्ववत्त्वादयः तद्धेतुत्वपर्यवसिताः कौषीतकिविद्यायामपि सन्तीति सूत्रार्थः। **तदेव हि प्राणस्येति** वाक्येन साक्षादसंबन्धित्वमारोपकल्पनानवसरश्च भाषिष्यते। अहंश्रेयसि व्यूदिरे इति छान्दोग्यम्। स्वश्रेयोविषये, स्वस्यस्वस्यैव श्रेयः उत्कर्षोऽस्तीति विवादं कृतवन्त इत्यर्थः। ज्यैष्ठ्यमिति। वृद्धतमत्वरूपज्यैष्ठ्यं श्रैष्ठ्यादन्यत् अनुक्तम्। प्रशस्यस्य श्रः। ज्यः प्रशस्यस्य वृद्धस्य च। अत इह भाष्ये यथापूर्वं श्रैष्ठ्यमिति पाठाभावे ज्यैष्ठ्यमिति पाठे ज्योऽयं भाष्यगतः प्रशस्यशब्दस्थानिकस्सन्, प्रशब्दार्थपर

८६. आनन्दाद्यधिकरणम् ३-३-४ (तै. आनं)

प्राणविद्याङ्गविषयमन्यदपि निरूपणमनन्तरमेव करिष्यते। यथा प्राणस्य वसिष्ठत्वाद्यनुसन्धानेन विना ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानानुपपत्तेरनुक्तानामपि वसिष्ठत्वादीनां कौषीतकिप्राणविद्यायां प्राप्तिः; तथा ब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना नोपपद्यते, ते ब्रह्मविद्यासु सर्वास्वप्यनुसन्धेया इत्ययमर्थः प्रतिपाद्यते—

आनन्दादयः प्रधानस्य। ३। ३। ११॥

अत्र ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासूपसंहारोऽस्ति, नेति विचार्यते। अप्रकरणाधीतानामुपसंहारे प्रमाणाभावात् प्रकरणश्रुतानामेवोपसंहार इत्येवं प्राप्ते - ब्रूमः—आनन्दादयः प्रधानस्य। अभेदादिति वर्तते; प्रधानस्य गुणिनो ब्रह्मणः सर्वेषूपासनेष्वभेदात्, गुण्यपृथग्भावाद्गुणानाम्, सर्वत्रानन्दादयस्तद्गुणा उपसंहर्तव्याः॥ ११॥

एवं तर्हि गुण्यपृथग्भावादेवानन्दादिवत् प्रियशिरस्त्वादयोऽपि, "तस्य प्रियमेव शिरः" इत्यादौ ब्रह्मगुणत्वेन श्रुताः सर्वत्र प्रसज्येरन्; नेत्याह—

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे। ३। ३। १२॥

ब्रह्मस्वरूपगुणानां प्राप्तावुच्यमानायां प्रियशिरस्त्वादीनामप्राप्तिः, तेषामब्रह्मगुणत्वात्;

---

इति मन्तव्यम्। श्रैष्ठ्यनिरूपणे श्रुतौ कथमपि ज्यैष्ठ्यमप्यन्तर्भूतमिति वा; ज्येष्ठश्च श्रेष्ठश्चेत्युभयस्योपक्रमे श्रवणादुभयस्याप्युपपादनीयत्वात॥ १०॥

नन्वानन्दाद्यधिकरणसमनन्तरं पुनः प्राणविषयविचारः करिष्यते। स इहैवास्तु, एकविषयविचारं समानग्रन्थग्रहणौचित्यात्; आनन्दाद्यधिकरणेन तस्य संगत्यभावाच्चेत्यत्राह प्राणविद्येति। अत्र पादे परविद्यानामिव दृष्टि-तद्भिन्नानामन्यविषयविद्यानामपि विचारः क्रियते। तत्र सर्वत्रादरप्रदर्शनार्थं संगत्यनुरोधेन च संकीर्ण एव विचारः। वसिष्ठत्वाद्यनुसंधानेन विना—वागादिगतातिशयहेतुत्वस्य प्राणे ज्ञानं विना। प्राणविद्यायां सर्वत्र वसिष्ठत्वाद्युपपादनप्रकारस्यैकरूपत्वात् सर्वत्र तद्धर्मग्रहणं युक्तम्, न तु सर्वपरविद्यासु आनन्दत्वादिग्रहणम्, तथोपपादनादर्शनात। न च स्वरूपनिरूपकत्वादनुसंधानस्यावश्यकत्वम्, जगत्कारणम्, सर्वज्ञः, नारायण इत्यादिपदैरपि ब्रह्मणो ग्रहणात् आनन्दत्वादि विना तद्ग्रहणासंभवस्य दुर्वचत्वादिति पूर्वपक्ष्याशयः। ब्रह्मस्वरूपगुणानाम्-यावदाश्रयभाविनां ब्रह्मगुणानाम्। तेन तद्धर्मभूतज्ञानपरिणामादिव्यावृतिः। प्रमाणाभावादिति। यदि प्रधानस्य ब्रह्मणोऽनुगतत्वमेव तत्र मानम्, तर्हि सर्वोपसंहाराद् विद्याभेद एव न स्यात्। एतन्मात्रस्योपसंहार्यत्वे विशिष्य प्रमाणं नास्तीति॥ ११॥

अभेदादिति। आनन्दमयोपासनातिरिक्तोपासनविषयत्वं साध्यम्; आनन्दत्वादिः पक्षः, सर्वोपासनविषयधर्मिकत्वादिति हेतुः। अस्य प्रियशिरस्त्वपारमैश्वर्यादिगुणेषु व्यभिचारशंकायाः क्रमेण परिहारकं सूत्रद्वयमुपरि। लोके संस्थानस्य स्वरूपनिरूपकत्वदर्शनात आनन्दमयविद्यायां विशिष्योक्तत्वाच्च प्रथमं प्रियशिरस्त्वादिग्रहणम्। अप्राप्तिः अनुपास्यता। अब्रह्मगुणत्वात्–वस्तुतो ब्रह्मधर्मत्वाभावात्। ननु कथ-

ब्रह्मणः पुरुषविधत्वरूपणमात्रान्तर्गतत्वात् प्रियशिरस्त्वादीनाम् । अन्यथा शिरःपक्षपुच्छाद्यवयवभेदे सति ब्रह्मणोऽप्युपचयापचयौ प्रसज्येयाताम् । तथा च सति "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि विरुध्यते ॥ १२ ॥

नन्वेवमेव ब्रह्मसंबन्धिनामैश्वर्यगाम्भीर्यौदार्यकारुण्यादीनां गुणानामनन्तानां गुण्यपृथक्स्थितत्वमात्रेण, तत्राश्रुतानामप्युपसंहारे सर्वे सर्वत्र प्रसज्येरन्, आनन्त्यादुपसंहाराशक्तिश्च—तत्राह—

इतरे त्वर्थसामान्यात् । ३ । ३ । १३ ॥

तुशब्दश्चोद्यं व्यावर्तयति । इतरे तु-आनन्दादयः अर्थसामान्यात् सर्वत्रानुवर्तन्ते । ये त्वर्थसमानाः—अर्थस्वरूपनिरूपणधर्मत्वेनार्थप्रतीत्यनुबन्धिनः; तेऽर्थस्वरूपवत् सर्वत्रानुवर्तन्ते । ते च गुणाः सत्यज्ञानानन्दामलत्वानन्तत्वानि । (तै. भृगु. १) "यतो वा इमानि"

---

मेवम् । न च सावयवत्वं दोष., एतदनुरोधेन पृथग्भावार्हविनाश्यवयवत्वराहित्यस्यैव निष्कलमित्यादिविवक्षितत्वसंभवादित्यत्र समुचितदोषोपन्यासः क्रियते उपचयेति । शिरःपक्षादीनां विभिन्नपरिमाणकतया, तादृशपरिमाणाभावे तथा व्यवहारायोगात् ब्रह्मण्यपि तदिष्टौ स्थूलत्वकृशत्वादेर्यथायथं स्वीकार्यतया विभुं सर्वगतमनन्तमित्यादिगमितविभुत्वादिप्रधानार्थभङ्गः स्यात् । अतो नेमे वास्तवा इति ॥ १२ ॥

आनन्दत्वादयः, प्रियशिरस्त्वादय इति धर्मव्यूहद्वयं प्रकृतम् । तत्र प्रियशिरस्त्वादय इवेतरेऽपि न सर्वत्र भवन्ति, तत्रैकेषां तदभावः तेषामवस्तुत्वात्, अन्येषां तदभावस्तु सर्वप्रकरणोपदिष्टत्वाभावात् । तदयं प्रयोगः—इतरे आनन्दत्वादयो न सर्वसाधरणाः सर्वत्रोपदिष्टत्वाभावात् ऐश्वर्यादिवत् इत्याशंकायामनिरूपितस्वरूपविशेषणत्वमुपाधिरत्रानुमाने इत्युच्यते उपरि । अन्यथा स्वरूपनिरूपकधर्मस्याप्यनुपदिष्टत्वमात्रेणाननुसंधेयत्वे धर्म्यनुसंधानमेव न स्यात् । अत एव तस्य स्वरूपनिरूपकता ॥ ननु स्वरूपनिरूपकत्वमेवासिद्धमित्युक्तम् ॥ नैवम्-सर्वत्र घटपटादौ अर्थ-वस्तु-प्रमेय-मृन्मयादिशब्दोपस्थाप्यतादशायां घटत्वादेरग्राह्यत्वेऽपि तस्य स्वरूपनिरूपकत्वमानुभविकम्-वस्त्वन्तरवैलक्षण्यप्रयोजकधर्मसद्भावस्य प्रतिवस्तु नियतत्वात् । तद्वत् ब्रह्मणोऽपि तादृशेन धर्मेण भाव्यम् । जगत्कारणत्वेनावगतस्य तस्य सर्वचेतनाचेतनवस्तुवैलक्षण्यावगमकतया सत्यत्वज्ञानत्वादि शोधकवाक्यावसेयमिति तस्य स्थिते तथात्वे, पदार्थान्तरप्रतिसंबन्धित्वादिमुखेन विना धर्मिग्राहकं प्रमाणमिन्द्रियादिजन्यं वा अन्यादृशं वा यदा तद्ग्रहणार्थप्राप्तविकासं ज्ञानम्, तत् तदा तद्धर्मपुरस्सरमेव धर्मि गृह्णातीति सिद्ध्यति स आनन्दत्वादिः स्वरूपनिरूपक इति भावः । सूत्रार्थस्तु —इतरे प्रियशिरस्त्वाद्यतिरिक्ताः प्रागुक्ता आनन्दत्वादयः सर्वसाधारणाः अर्थसदृशत्वात् धर्मिप्रत्यक्षनियतप्रत्यक्षविषयत्वादिति । अन्ये न साधारणाः अतथात्वादित्युक्तं भवति । किञ्च गुणान्तराणां निरूपितस्वरूपविशेषणत्वं कस्यचित् स्वरूपनिरूपकधर्मत्वाभावे कथं स्यात् । विनिगमनाविरहेण गाम्भीर्यौदार्यादौ कस्यचित् तथात्वकल्पनायोगात्; अन्योन्याश्रयप्रसंगाच्च । तत्र सत्यंज्ञानमित्यादि गवादेर्गोत्वादिकमिव स्वरूपनिरूपकमवसीयत इति । पूर्वं कारणत्वज्ञाने सति लौकिककारणन्यायशङ्कितदोषपरिहाराय शोध्यते

इत्यादिना जगत्कारणतयोपलक्षितं ब्रह्म, (तै. आनं.), "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. भृगु. ६) "आनन्दो ब्रह्म" इति आनन्दादिभिर्हि स्वरूपतो निरूप्यते। अत उपास्य-ब्रह्मस्वरूपावगमाय सर्वासु विद्यास्वानन्दादयोऽनुवर्तन्ते। ये तु निरूपितस्वरूपस्य ब्रह्मणः कारुण्यादयो गुणाः प्रतिपन्नाः, तेषां गुण्यपृथक्स्थितत्वेऽपि प्रतीत्यनुबन्धित्वाभावात्, ये यत्र श्रुताः, ते तत्रोपसंहार्याः—इति निरवद्यम् ॥ १३ ॥

यदि—उपचयापचयप्रसङ्गात् प्रियशिरस्त्वादयो ब्रह्मणः पुरुषविधत्वरूपणमात्रार्थाः, न तु ब्रह्मगुणाः—तर्हतथारूपस्य ब्रह्मणः तथात्वेन रूपणं किमर्थं क्रियते? अतथाभूतस्य हि तथात्वरूपणे केनचित् प्रयोजनेन भवितव्यम्। यथा, (कठ. १-३-३) "आत्मानं रथिनं विद्धि" इत्यादिनोपासकस्य तदुपकरणानां च रथिरथादित्वरूपणम् उपासनोपकरणभूत-शरीरेन्द्रियादिवशीकरणार्थं क्रियत इत्युक्तम्। न चेह तथाविधं किञ्चित् प्रयोजनं दृश्यते इति बलाद् ब्रह्मगुणत्वं प्रियशिरस्त्वादीनामभ्युपेत्यम्। तत्राह—

आध्यानाय प्रयोजनाभावात्। ३। ३। १४ ॥

प्रयोजनान्तराभावादाध्यानायायं रूपणोपदेशः क्रियते। आध्यानम् अनुचिन्तनम् उपासनमुच्यते। "ब्रह्मविदाप्नोति परम्" इत्यत्रोपदिष्टाऽऽध्यानरूपवेदनसिद्धये ह्यानन्दमय-ब्रह्मप्रतिपत्त्यर्थमानन्दमयं ब्रह्म प्रियमोदादिरूपेण विभज्य शिरःपक्षादित्वेन रूपयित्वोप-दिश्यते। यथाऽन्नमयः पुरुषः अयं देहः शिरःपक्षादिभिः, "तस्येदमेव शिरः" इत्यादिना बुद्धावारोप्यते, यथा च प्राणमयमनोमयविज्ञानमयाः, "तस्य प्राण एव शिरः" इत्या-

---

इति ज्ञापयति **कारणतयोपलक्षितमिति**। **उपलक्षितमिति** पदस्वारस्यात् जगत्कारणत्वज्ञानाभावेऽपि एत-त्स्वरूपनिरूपकज्ञानं भवितुमर्हतीति ज्ञाप्यते। वक्ष्यति च, "नाना शब्दादिभेदात्" इत्यत्र भाष्ये जगत्कार-णत्वं कतिपयोपासनप्रतिनियतमिति। **निरवद्यमिति**। एवञ्च प्रथमसूत्रे अर्थसामान्यस्यैव हेतुत्वं विवक्षितमिति न व्यभिचार इति भावः। **गुण्यपृथक्स्थितत्वेऽपीति**। गुणिनो गुणापृथक्सिद्धिरप्यपेक्षिता। यं गुणं विहाय गुणी कदापि न भवति, स एव प्रायः स्वरूपनिरूपको भवतीति ॥ १३ ॥

**आध्यानाय**ेत्यादिसूत्राणां प्रियशिरस्त्वप्रत्रानन्तर्यम्य युक्तत्वेऽपि प्रथमसूत्राभिप्रायाविष्करणादर-वशात् सूचीकटाहन्यायाच्च 'इतरे' इति सूत्रस्य मध्ये निवेशः। **बलादिति**। प्रियमोदादयो ब्रह्मावयवा एव; वैश्वानरविद्यायां परमात्मशरीरेष्वेव द्युप्रभृतिषु मूर्धत्वादिकल्पनवत् अवयवेष्वेव शिरस्त्वादिमात्रस्य कल्प-नास्वीकारात् नोपचयापचयप्रसक्तिः। एवञ्चावयवसंस्थानांशाः विभुगता एवेति द्रव्यान्तरसंस्थानवत् अर्थ-सामान्यात् स्वरूपनिरूपका भवन्त्वित्याशयः। तत्र रूपणस्य किञ्चित्प्रयोजनप्रदर्शनेन तदभावशंकावारणमत्र सूत्रे; सावयवत्वदूषणमनन्तरसूत्रे इति विवेकः। **प्रयोजनान्तराभावादिति**। ब्रह्मण्येकस्य भागस्य प्रियत्वम्, अन्यस्य मोदत्वमिति रीत्यादरणे लोके प्रियमोदादीनामानुकूल्यांशे वैषम्यसत्त्वात् ब्रह्मणः सर्वांशैकरूप्यं न स्यात्। अतोऽन्नमयस्य पुरुषस्य मूर्तेः प्रथमं गृहीतत्वात् मूर्तित्वारोपे सुग्रहत्वं स्यादिति पुरुषविधत्वक-

दिना प्राणाद्यवयवैर्बुद्धावारोप्यन्ते—एवमेभ्योऽर्थान्तरभूतस्तदन्तरात्मा आनन्दमयोऽपि प्रियमोदादिभिरेकदेशैः शिरःप्रभृतित्वेन रूपितैराध्यानाय बुद्धावारोप्यते । एवमानन्दमयोपलक्षणत्वात् प्रियशिरस्त्वादीनाम्, न सर्वदा आनन्दमयप्रतीतावनुवर्तन्ते ॥ १४ ॥

आत्मशब्दाच्च । ३ । ३ । १५ ॥

"अन्योऽन्तर आत्माऽऽनन्दमयः" इत्यात्मशब्देन निर्देशात् आत्मनश्च शिरःपक्षपुच्छासंभवात् प्रियशिरस्त्वादयः तस्य सुखप्रतिपत्त्यर्थं रूपणमात्रमिति गम्यते ॥ १५ ॥

ननु, "अन्योऽन्तर आत्मा प्राणमयः", "अन्योन्तर आत्मा मनोमयः" इत्यात्मशब्दस्यानात्मस्वपि पूर्वं प्रयुक्तत्वात्, "अन्योन्तर आत्माऽऽनन्दमयः" इत्यात्मशब्दस्य परमात्मविषयत्वं कथं निश्चीयते? तत्राह—

आत्मगृहीतिरितरवत् उत्तरात् । ३ । ३ । १६ ॥

"अन्योऽन्तर आत्माऽऽनन्दमयः" इत्यत्राऽऽत्मशब्देन परमात्मन एव ग्रहणम्; इतरवत्—यथेतरत्र (ऐत. १-१-१) "आत्मा वा इदमेक एवाग्र आसीत् । स ईक्षत लोकान्नु सृजै" इत्यादिष्वात्मशब्देन परमात्मन एव ग्रहणम्, तद्वत् ॥ कुत एतत्? उत्तरात्—"सोऽकामयत बहु स्यां प्रजायेय" इति आनन्दमयविषयादुत्तराद्वाक्यात् ॥ १६ ॥

अन्वयादिति चेत्—स्यादवधारणात् । ३ । ३ । १७ ॥

पूर्वत्र प्राणमयादिष्वनात्मसु आत्मशब्दान्वयदर्शनात् नोत्तराश्निश्चेतुं शक्यत इति चेत्—स्यादवधारणात् । स्यादेव निश्चयः । कुतः? अवधारणात् । पूर्वत्रापि, "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति परमात्मन एव बुद्ध्याऽवधारितत्वात् । अन्नमयादन्तरे प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा; तदनन्तरं च प्राणमयादन्तरे मनोमये; ततो विज्ञानमये; तत आनन्दमये, प्रक्रान्ता परमात्मबुद्धिः तदन्तराभावात्, उत्तराच्च "सोऽकामयत" इति वाक्यात्

रूपनेयमनवयव एव बौद्धावयवकल्पनयेति भावः । आनन्दमयोपलक्षणत्वात् । प्रियादीनां सर्वेषां सुखानामेतदंशत्वरूपणेन मयडर्थापरिच्छिन्नत्वबोधनमात्रमिति नोपासनविषयत्वं साक्षादिति भावः ॥ १४ ॥

अनवयवत्वमाह आत्मेति । आत्मनः स्वयम्प्रकाशतया अहमित्येकत्वभानं यथा जीवे, तथा "अहमिमास्तिस्रो देवताः" इत्येवं परमात्मन्यपीति नावयवसंघात आत्मा । एकैकस्याप्यंशस्याहंत्वेऽनेकाहमर्थसंघातता, एकानुभूतस्यान्यास्मर्तव्यता, विश्रृंखलप्रवृत्त्यादि च स्यादिति भावः ॥ १५ ॥

आत्मशब्दस्यास्य न निरवयवत्वस्थापकत्वम्; प्रत्युत पूर्वपर्यायानुरोधेन पुरुषविधत्वात् प्रियशिरस्त्वादिभिः सावयवमन्नमेवात्रानन्दमयोऽनात्मभूत इति स्यादिति शंकामनुवदति नन्विति ॥ १६ ॥

उत्तरानुरोधेनार्थस्वीकाराद्वरम् उपक्रमानुरोधेनाऽऽत्मशब्दस्यामुख्यत्वम्, आत्मशब्दोऽयं नात्मत्वाभिप्रायेण प्रयुक्तः अतत्यात्मशब्दत्वात् प्राणमयादिविषयकात्मशब्दवदिति शंकामनूद्य परिहरति अन्वयादिति । सर्वोऽप्यात्मशब्दो मुख्यात्मार्थक एवात्र घट्टे । तदभेदस्यासंभवस्थले परमारोपः । अतो

प्रतिष्ठितेति, उपक्रमेऽप्यपरमात्मनि परमात्मबुद्ध्या आत्मशब्दान्वयः इति निरवद्यम् ॥१७॥

इति आनन्दाद्यधिकरणम् ॥ ४ ॥ ८७. कार्याख्यानाधिकरणम् ३-३-५ ॥

## कार्याख्यानादपूर्वम् । ३ । ३ । १८ ॥

पूर्वप्रस्तुतप्राणविद्याशेषभूतमिदानीं चिन्त्यते । छान्दोग्यवाजसनेयकयोः ज्येष्ठं च श्रेष्ठञ्च प्राणमुपास्यमुक्त्वा, प्राणस्य वासस्त्वेनाऽऽपोऽभिधीयन्ते । छान्दोग्ये तावत्, (छा. ५-२-२) "स होवाच, किं मे वासो भविष्यतीति । आप इति होचुः । तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति । लम्भुको ह वासो भवति । अनग्नो भवति" इति । वाजसनेयके, किं मे वासः इति प्राणेन पृष्टा वागादयः ऊचुः, (माध्यं ९) "आपो वासः" इति । "तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्ति ; अशित्वा चाचामन्ति, एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते । तस्मादेवंवित् अशिष्यन् आचामेत्, अशित्वा चाचामेत् । एतमेव तदनमनग्नं कुरुते" इति ।

तत्र संशयः-किमत्राचमनं विधीयते, उतापां प्राणवासस्त्वानुसन्धानमिति । 'अशिष्यन् आचामेदशित्वा चाचामेत्' इत्याचमने विधिप्रत्ययश्रवणात्, 'एतमेव तदनमनग्नं कुरुते' इति वेदने विधिप्रत्ययाभावात् अनग्नतासङ्कीर्तनस्य स्तुत्यर्थतयाऽन्वयोपपत्तेश्च, भोजनाङ्गस्याऽऽच-

---

नोपक्रमविरोधः । प्रत्युतोपक्रमोपक्रमः सिद्धान्तसाधक इति भावः । तथाच प्रियशिरस्त्वादेरात्मन्ययोगात् न संस्थानरूपस्वरूपनिरूपकधर्मतेति ॥ १७ ॥

संगतिमाह **पूर्वेति** । वसिष्ठत्वादिः प्राणविद्यायामिव, परविद्यायामानन्दत्वादिरवश्यानुसंधेय इति तत्प्रसंगप्राप्तविचारे वृत्ते, पूर्वप्रकृतप्राणविद्याविषयविचारान्तरमवसरसंगत्येति भावः । यद्वा **इदानीमिति** पदेनानन्दाद्यधिकरणेन साकं संगतिरस्त्येवेति ज्ञापनात् **पूर्वप्रस्तुते**त्यादिकथनम्, ईदृशविद्यान्तरापेक्षया प्राणविद्यायां शीघ्रोपस्थितिप्रदर्शनार्थम् । का तर्ह्यवान्तरसंगतिरिति चेत्—परविद्यायां **प्रियशिरस्त्वादेरवा**-न्तरवत्वान्नानुसंधानमिति वाक्यस्याऽन्यपर्यं यथोक्तम्, तथा प्राणविद्यायामपि काल्पनिकाब्वासस्त्वानुसंधानं विहाय विधिश्रवणादवश्यविधेयाचमनविधिस्वीकारेण वास.कीर्तनस्यार्थवादतयाऽन्यपर्यमेव युक्तमिति शंकनात् दृष्टान्तसंगतिरिति । प्रियशिरस्त्वविषयकसूत्राण्येव हि बहून्यन्ते ; अत एवमवगम्यते । **अद्भिः परिदधति** अद्भिर्वेष्टयन्ति-आच्छादयन्ति=अपो वासोवत् कुर्वन्तीति यावत् । **लम्भुकः**-लब्धवान् । वासोलाभवान् भवति । क इति चेत्—प्राणवासस्त्वानुसंधायी तत्क्रतुनयात् वासस्वी भवतीति सिद्धान्ती ब्रूयात् । **अत्र** पूर्वोत्तरपक्षद्वयसंमतार्थ.—एवं प्राणस्याद्भिः परिधानात् प्राणो वासस्वी अनग्नः कृत इत्येतावानेव **स्यात्** ; अनमनग्नं कुरुते इति श्रुत्यन्तरैककण्ठ्यात् । **आपो वास इति** इत्यत्र वाक्यसमाप्तिः । अतः **ऊचुरित्यस्य** कथमुपर्यन्वय इति न शंक्यम् । श्रुतौ वाक्यव्यवधानादपि नैकवाक्यता । तदेवमुभयत्राब्वासस्त्वं श्रुतमिति विचारोपयोगितया दर्शितम्, अथ विचारविषयवाक्यं गृहीत्वा संशयमाह **तद्विद्वांस** इत्यादिना । **किमत्रेति** । **मन्यन्ते एवंविदि**त्यत्र किं वाक्यभेदम्, उत **आचामे**दिति द्विधाविति भावः । **कुरुत इतीत्यस्य अनग्नतासंकीर्तनस्ये**त्यत्रान्वयः । ननु विधिश्रवणेऽपि प्राप्तत्वात् विध्यसंभव इत्यत्राह **भोजनेति** ६

**मनस्य स्मृत्याचारप्राप्तत्वेन, विधिप्रत्ययबलात् प्राणविद्याङ्गमाचमनान्तरं विधीयते—**

**इति प्राप्ते ब्रूमः—आचमनीयानामपां प्राणस्य वासस्त्वानुसन्धानमेव(वेह)-अपूर्वम्-अप्राप्तमिह(सं) विधीयते,** कार्याख्यानात्-**अप्राप्ताख्यानात्; अप्राप्ताख्याने शब्दस्यार्थवत्त्वादित्यर्थः। एतदुक्तं भवति (छा) "किं मे वासः" (बृ) "आपो वासः" (छा) "अद्भिः परिदधति" (बृ) "एतमेव तदनमनग्नं कुरुते" इत्युपक्रमोपसंहारयोर्वाक्यस्थापां प्राणवासोदृष्टिपरत्वप्रतीतेः**

---

विध्यश्रवणे विधिकल्पनाद्वरं विधिश्रवणस्याऽभ्यासप्रमाणेनान्यकर्मविधानमिति भावः।

यदि चिन्तनमविवक्षितम्, तर्हि, 'श्रोत्रिया अशिष्यन्त आचामन्ति; अशित्वा चाचामन्ति, एतमेव तदनमनग्नं कुर्वन्ति' इत्येतावदेव स्यात्; **विद्वांस** इति, मन्यन्त इति च पाठात् प्राणविद्यानिष्ठाः आचमनतीर्थवासस्कत्वानुसंधानं कुर्वीत इत्यपूर्वांशकथनात् तदेव विधेयम्। **एवंविदाचामेदि**ति उपरितनवाक्ये, स्नात्वा भुञ्जीतेत्यत्रेवोपपदार्थे विधिर्मकस्यैव स्वरसत्वात् आचमनार्थकस्य धातोरनुवादतैवेति मीमांसमानः सिद्धान्तमाह **आचमनीयाना**मिति। **अपूर्व**मित्यस्यार्थः अप्राप्तमिति। **इह** अनुसंधानविधिसंनिधौ इत्यर्थः। (उपनिषद्द्वयेऽपि,) किं मे अन्नम् किं मे वासः इति द्वयं पृष्टं प्राणेन। ततोत्तरं वागादिभिरुच्यते। तत्र प्रथमे, यत् किञ्चित् आ श्वभ्यः आ शकुनिभ्यः, तत् ते अन्नमित्युत्तरे सर्वान्नप्राणान्नत्वानुसंधानं विवक्षितमिति; न हवा एवंविदि किञ्चनानन्नं भवतीति **एवंवित्**पदतो ज्ञायते। तत्साहचर्यात् प्राणवासस्त्वानुसंधानमत्र विधित्सितमिति ज्ञायते। **कार्याख्याना**दित्यस्य भाष्ये कण्ठोक्त एकोऽर्थः। अन्यः **अतएवे**ति भाष्येण ज्ञापयिष्यते। तद्वदत्र **इहे**तिपदेनाप्यर्थ एकोऽभिसंहितो भवति। तथाच-पूर्वमेकस्यानुसंधानरूपकार्यस्याऽऽख्यातत्वादत्रापि तद्वदपूर्वं विधेयमिति, कार्यस्य अप्राप्तस्यैवाख्यातव्यत्वात् वासस्त्वानुसंधानं विधेयमिति, छान्दोग्ये अप्परिधानस्यैवाख्यानात् आचमनानाख्यानात् तदेवापूर्वमिति चार्थत्रयम्। सिद्धपरतया प्राणविद्यार्थवादत्वमस्वीकृत्य किञ्चित्कार्याख्यानस्येष्टत्वात् अपूर्वकार्यमेव विधेयमित्यप्यर्थः। अप्राप्ते हि शास्त्रमर्थवदितीदमभिसंधायाह **अप्राप्ताख्याने** इति। सूत्रे **आख्यान**मित्यस्य आख्यातव्यत्वमित्यर्थः। न्यायभाष्ये, व्याकरणवार्तिकादौ च, "हेतुवचनम्" "उपसंख्यानम्" इत्येवमीदृशार्थे ल्युट्प्रयोगः प्रसिद्धः। तव्यप्रत्ययस्य कण्ठोक्त्युपेक्षा च आख्यातत्वादित्येवमर्थान्तरस्यापि लम्भनाय। अप्राप्तस्याऽऽख्यानादप्राप्तमुच्यत इति यथाश्रुते हेतुसाध्याविशेषः स्यादिति आख्यातव्यत्वादित्यर्थो विवक्षणीयः। एवमनुसंधानस्याप्राप्तत्ववचनात्, आचमनं न विधेयम्, प्राप्तत्वादिति दर्शितं भवति। **कार्ये**ति शब्दप्रयोगाच्च कृतस्य पुनःकरणासंभवात् आचमनान्तरविधिर्न भवतीति च ज्ञाप्यते। अतएवाऽऽह **स्मृत्याचारप्राप्तत्वा**दिति।

अयं भावः—आचमनविधानमिहेच्छता किं स्मृत्याचारावगतस्याऽऽचमनस्य मूलमिदं वाक्यमित्युच्यते, किं वा प्राणविद्याङ्गमाचमनान्तरमिति। नाद्यः; आचान्तेन कर्तव्यमिति सर्वकर्मानुष्ठानौपयिकपुरुषप्रायत्यार्थमाचमनं प्रति प्राणविद्यामध्यपातिनो मूलत्वायोगात्। तत एव प्राणविद्यानुष्ठानारम्भेऽप्याचमनस्य प्राप्तत्वान्न तदर्थोऽयं विधिः। एवमशनावसाने आचमनमपि स्मृतिप्राप्तमेव। अतः

**आचमनस्य स्मृत्याचारप्राप्तत्वात्, आचमनमनूद्य आचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानं विधीयते इति। अत एव च्छान्दोग्ये, "तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति" इति अद्भिः परिधानमेवोक्तम्; नाचमनम्** ॥१८॥ इति कार्याख्यानाधिकरणम् ॥५॥

८८. समानाधिकरणम् ३-३-६

## समान एवं चाभेदात् । ३ । ३ । १९ ॥

वाजसनेयके अग्निरहस्ये शाण्डिल्यविद्याऽऽम्नाता, (१-१०-६) **"सत्यं ब्रह्मेत्युपासीत। अथ खलु क्रतुमयोऽयं पुरुषः" इत्यारभ्य, "स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं....सत्यसङ्कल्पम्" इति। तथा तस्मिन्नेव बृहदारण्यके पुनरपि शाण्डिल्यविद्याऽऽम्नायते,** (बृ. ७-६-१) **"मनोमयोऽयं पुरुषो भास्सत्यः। तस्मिन्नन्तर्हृदये यथा**

---

एतद्विद्यानिष्ठस्य प्रत्यशनं पूर्वं पश्चाच्च विधीयमानमिदं प्राणविद्याङ्गमिति वक्तव्यम्। इदमाचमनं किमशनार्थाचमनात् पश्चात् कार्यम्, पूर्वं वा?। नाद्यः; पारणादिरूपाशनस्य साङ्गस्यैकप्रयोगविधिपरिग्रहात् तन्मध्ये एतन्निवेशायोगात्। तन्त्रेणोभयानुष्ठानसंभवे पृथक्करणायोगाच्च। नान्त्यः, प्राणविद्याङ्गाचमनेनैव प्रायत्यस्यापि प्रसंगतः सिद्धौ पुनरशनार्थाचमनप्रसक्त्यभावात्। न चाचमनरूपकार्यार्थिमाचमनान्तरं क्रियते। किञ्चेद प्राणविद्यां प्रति साक्षादङ्गं चेत्, अशनपौर्वापर्यमावृत्तिश्च कुतः? अशनद्वारा च नाङ्गता। अशनस्यानङ्गत्वात्। अत आचमने कार्यतायाः अनाख्येयत्वात् न तद्विधिरिति। एवं छान्दोग्ये आचमनं नोक्तम्। 'तस्माद्वा एतदशिष्यन्तः पुरस्तादुपरिष्टाच्चाद्भिः परिदधति' इति वाक्ये विद्याप्रस्तावाभावात् सर्ववैदिकक्रियमाणाचमनविवक्षैव ज्ञायते। तदर्थाभिरेवाद्भिः प्राणपरिधानकथनात् आचमनान्तरतदर्थतीर्थानपेक्षा स्पष्टा। वाजसनेयकेऽपि, 'अनस्यान्नं वेद' इति प्राणे सर्वान्नित्ववेदनमुक्त्वा, विद्याप्रवृत्तश्रोत्रियक्रियमाणम् आचमनीयतीर्थसंपाद्यानग्नतामननमप्यभिधायाऽऽह, तस्मादेवंविदशिष्यन्नाचामेदिति। एवं क्रमदर्शनादेतदाचमनविधिनिरपेक्षैव श्रोत्रियक्रियमाणा आचमनीयाधीनानग्नतामतिरित्यवगमात् प्रमाणान्तरप्राप्ताचमनग्राहित्वमेव पूर्ववाक्यस्येति नेदं वाक्यमपूर्वाचमनविधायि। किंतु वेदनसंदर्भानुसारात्, अन्नवेदनवत् अनग्नतावेदनस्यापि प्राणविद्भिः आचमनकाले कार्यतया, स्वयमाचमनमकृत्वा तदनुसंधानमनुचितमिति अर्थवादमुखो वेदनविधिरेवेति। ननु कथमपां वासस्त्वमिति चेत्-अन्नस्य वस्तुतोऽन्नत्वसत्त्वेपि प्राणमचेतनं प्रति अन्नत्वं कथम्? अदनव्यापारस्य प्राणेन क्रियमाणत्वात् तदन्नत्वारोप इति चेत्-अपामपि प्राणवायौ बाष्पादिरूपेण व्यापनात् वासस्त्वारोपः ॥ प्राणदेवता सर्वमन्नं कुर्यादिति चेत्-अपोऽपि सा परिदध्यादित्यलम् ॥ १८ ॥

बृहदारण्यकशाण्डिल्यविद्यायां वशित्वादेः, किं प्राणविद्यायामाचमनस्येवानुवादः, किं वा वासस्त्वानुसंधानस्येवापूर्वस्य विधिरिति विचार इहेति पूर्वाधिकरणेन साकमेव संगतिः। तद्दृष्टान्तेन विधिरेवेति विद्याभेद इति पूर्वपक्षः। वाजसनेयकं शतपथब्राह्मणम्। तदन्तो बृहदारण्यकम्। तदव्यवहित पूर्वभागोऽग्निरहस्यम्। अत उभयमेकशाखागतम्। **तस्मिन्नेवे**ति वाजसनेयक एवेत्यर्थः। **भाः** भारूपः। सर्वशाखाप्रत्ययमेकमुपासनमिति प्रथमाधिकरणसिद्धत्वात् छान्दोग्यशाण्डिल्यविद्यायाः अत्रोक्तायाश्च

**व्रीहिर्वा यवो वा। स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति, यदिदं किञ्च" इति। तत्र संशयः—किमत्र विद्या भिद्यते, उत नेति। संयोगचोदनाख्यानामविशेषेऽपि वशित्वाद्युपास्यगुणभेदेन रूपभेदात् विद्याभेदः- इति प्राप्ते उच्यते—**

---

भेदो न शक्यशंकः। अतः एकशाखायामेव वाक्यद्वयमुदाजहार। अत्र द्विर्विधिः प्रतिपत्तृभेदमादाय सार्थक्यासंभवादेवं पूर्वपक्षस्यावकाशः। तर्हि अभ्यासप्रमाणादेव विद्याभेदः शंक्यतामिति चेन्न—अविशेषपुनःश्रवणं ह्यभ्यासः; अत्र तु वशित्वाद्यनेकगुणश्रवणात् नाविशेषपुनःश्रवणम्। ननु गुणभेदे सत्यपि तत्र तत्र विद्यैक्यात् तदुपसंहार इति सर्वसंमतम्। तदत्र कथमस्य विद्याभेदसाधकतेत्याशंकां शमयितुं **रूपभेदा**दित्युक्तम्। संयोगादिभिः सह रूपस्याप्यविशेषे विद्यैक्यस्योक्तत्वात् तद्भेदे विद्याभेदस्यावश्यकत्वमिति। रूपातिरिक्तगुणानां तु भेदकत्वाभावाद्विद्यैक्ये उपसंहार इति भावः।

उत्पत्तिशिष्टगुणविरोधे, वाक्यभेदापादकानेकगुणसत्त्वे वा प्राप्तोद्देशेन गुणविधानायोगात् अपूर्वकर्मविधिरित्युक्तं मीमांसकैः। रूपं विना कर्ममात्रविधायकस्य वाक्यस्य पृथक्सत्त्वे, तदनूद्यानेकरूपविधानस्यानेकवाक्यकार्यस्य संभवान्न कर्मभेदः; यथा अग्निहोत्रं जुहोतीति विहितमुद्दिश्य, दध्ना जुहोति, पयसा जुहोतीत्येवं पृथगनेकविधौ। यागादेर्हि कर्मणः देवता द्रव्यं च रूपम्। उपासनस्य तु रूपमुपास्यं वस्तु। ननु यत्र तत् यादृशमुपास्यम्, तत्र तादृशं तत् रूपं भवति। अन्यथा धर्मिभूतब्रह्ममात्रस्य रूपत्वे सर्वत्र तदविशेष इति रूपभेद एव न स्यात्। तथा च गुणानामपि गुणिन इव रूपेऽन्तर्भावात् तत्रांशतो भेदे सत्यपि रूपभेदस्यावश्यकत्वात विद्याभेद एव स्यात्। एवं च कार्त्स्न्येनाविशेषे सत्येव उपासनैक्यम्। एवंसति एकत्राश्रुतानामप्यन्यतो गुणानामुपसंहार इति कथम्। न च गुणशब्दस्याङ्गमात्रपरत्वात् उपास्यगुणातिरिक्तानामुपासनाङ्गानां वैश्वानरविद्याङ्गप्राणाग्निहोत्रप्रक्रियातुल्यानामेवोपसंहार इति वाच्यम्—दर्शयति चेति सूत्रे तैत्तिरीयदहरविद्यायां छान्दोग्यदहरविद्यैक्यादपहतपाप्मत्वादिगुणोपसंहारस्योक्तत्वात्, अनन्तराधिकरणे वसिष्ठत्वाद्युपसंहारोक्तेः, आनन्दाद्यधिकरणे तैत्तिरीयप्रियशिरस्त्वादिगुणविषये शंकाकरणाच्चाङ्गातिरिक्तानां गुणानामप्युपसंहारतदभावचिन्तायाः सिद्धत्वात्। तदत्र रूपगुणयोः कथं भेद इति। न चात्रापि पूर्वतन्त्र इवोत्पत्तिशिष्टगुणविरोधादिकमेव भेदकमिति वाच्यम्—तथासति अग्निरहस्य एव पूर्वोत्तरवाक्ययोर्विभिन्नोपासनपरत्वप्रसंगात्। 'सत्यं ब्रह्मेत्युपासीत' इति रूपविशिष्टोपासनस्य विहितत्वात् उपासनविषयस्य ब्रह्मणोऽपि प्राप्ततया, 'अरुणैकहायनीन्यायेन सामानाधिकरण्यबलात् सर्वधर्मविशिष्टैकद्रव्यविधि'रित्यस्यापि दुर्वचतया मनोमयत्वप्राणशरीरत्वादावेव विधिपर्यवसानात् अनेकविधाने वाक्यभेदसत्त्वात्। अतः स आत्मानमुपासीतेति उपासनान्तरविधिः स्यात्। तत्रानेकगुणमात्रविधानेष्टौ च तद्वदेव वशित्वादिगुणविधेरपि संभवान्न पूर्वपक्षावकाश इति—

उच्यते-गुणपदस्याङ्गपरतया **टीकायां** व्याख्यानं ब्रह्मगुणातिरिक्तानामङ्गानामपि गुणोपसंहार इत्यत्र गुणपदेन ग्रहणं कार्यमिति ज्ञापनार्थम्। ब्रह्मगुणानां रूपान्तर्भावेऽपि रूपानन्तर्गतोऽपि भवति ब्रह्मगुण इति स्वीकार्यम्। रूपं हि व्यावर्तकाकारः। यावता व्यावृत्तिर्भवति यत्र, तत्र तदधिकस्य रूपान्तर्भावो नेष्यते।

समान एवमिति। यथाऽग्निरहस्ये **मनोमय-प्राणशरीर-भारूप-सत्यसङ्कल्पत्वगुणगणः श्रुतः,** एवं **बृहदारण्यकेऽपि मनोमयत्वादिके** समाने **सति अधिकस्य वशित्वादेश्च सत्यसङ्कल्पत्वगुणाभेदान्न रूपभेदः। अतो विद्यैक्यम्** ॥ १९ ॥ इति समानाधिकरणम् ॥ ६ ॥

---

तच्च दहरत्ववैश्वानरत्वचतुष्पात्त्वादि। अत एव दहरोऽस्मिन्नन्तराकाश इत्यत्र दहराकाशरूपस्य सिद्धत्वात्, 'तस्मिन् यदन्तः' इत्युच्यमानाः गुणा एव; न रूपम्। एवञ्च 'दर्शयति चे'ति सूत्रे तदुपसंहारकथनं युक्तम्। अत एव प्रथमाधिकरणे वैश्वानरैक्यात् रूपमप्यविशिष्टम् इति, 'वैश्वानरमात्मानं संप्रत्यध्येषि' इत्याद्यनुरोधेन वैश्वानरमात्रस्य रूपत्वोक्तिः। वैश्वानरमूर्धादेर्नामधेयविशेष., उपासकशरीरे तस्य मूर्धादिपादान्तपरिच्छिन्नत्व-मूर्धादिचिबुकान्तरूपप्रादेशपरिच्छिन्नत्वद्विकरूपवैकल्पिकगुणादिश्च न रूपेऽन्तर्भवति। उपासनवाक्ये येन रूपेण आनन्दत्वादिस्वरूपनिरूपकधर्मातिरिक्तेन ब्रह्मान्वयः, तद्रूपविशिष्टं ब्रह्म तत्र रूपमित्युक्तं भवति। अनेकधर्मसत्त्वे च विनिगमनाविरहात् सर्वं रूपान्तर्गतमेव। प्रकृते च सत्यं ब्रह्मेत्युपासीतेति वाक्ये ब्रह्मविधाने पश्चादनेकगुणविधानायोगात्; सत्यपदस्य सत्-ति-य पदवाच्यचेतनाचेतननियन्त्रर्थकत्वात ब्रह्मैतादृशमिति हेतोरुपासीतेति उपासनमात्रविधौ कर्माकांक्षायाम्, स आत्मानमिति वाक्येन सर्वगुणविशिष्टब्रह्माख्यरूपसमर्पणमरुणैकहायनीन्यायेनेति न वाक्यभेदावकाशः। प्रकारान्तरं **परिष्कारे** द्रष्टव्यम्। अत्र सर्वेषां गुणानां विनिगमनाविरहात् रूपतयाऽन्वयः। यद्वा स आत्मानमुपासीतेत्यादिः **एष** इत्येतच्छब्दार्थसमर्पकः। एष मे आत्मेत्यत्र आत्मशब्दोक्तब्रह्मानुवादेन एष इत्येकेन शब्देन मनोमयत्वादिसर्वगुणविधानान्न दोषः। एवञ्च, "भूयस्त्वेनोभयश्रुति" (पू. मी. ३. ३. १०.) इति न्यायेन भूयोधर्मश्रवणस्थल एव कर्मणो विधेयत्वात् अग्निरहस्यस्य पूर्वभावित्वाच्च तत्र शाण्डिल्यविद्यायां विहितायाम्, तद्रूपभूतब्रह्मानुवादेन बृहदारण्यके वशित्वादिगुणमात्रविधानमिति वक्तव्यम्। तन्न घटते; अनेकविधाने वाक्यभेदात्। अतोऽत्र गुणविशिष्टब्रह्मविषयकोपासनान्तरविधिरेव। अत्रोपासनवाक्ये वशित्वादेः रूपान्तर्गततया श्रवणात **रूपभेदा**दित्युक्तं भाष्ये। सिद्धान्ते तु गुणस्यानतिरिक्तत्वादभेदकत्वान्न रूपभेद इति रीत्या विमृश्यम् ॥

**गुणगणः श्रुत** इत्यनेन तत्रैव विद्याविधानमिति सूचितम्। सूत्रार्थमाह **एव**मिति। सूत्रे **चे**त्यस्य वशित्वादेश्चेत्यर्थः। **समाने** इत्यस्य मनोमयत्वा दाविति विशेष्यं पूरणीयम्। समानत्वोक्तिः शाण्डिल्यविद्या प्रत्यभिज्ञायते इति दर्शयितुम्। **एव**मित्यस्य अग्निरहस्य इव बृहदारण्यके इत्यर्थः। यद्वा **दीपा**नुसारात् **एवश्चे**त्यस्य वशित्वादिविशिष्टाकारेणापीत्यर्थः। पूर्वाधिकरणसंगत्यभिप्रायत्वे तु **एवं** प्राणविद्याश्रुतस्य स्मृत्याचारप्राप्तस्य चाचमनस्येव, वशित्वादेः सत्यसंकल्पत्वस्य चाभेदादित्यर्थोऽपि भवेत्। **अनन्तरसूत्रस्थस्य** च एवम्पदस्येदृशोऽर्थो भाषिष्यते। **गुणाभेदा**दिति। वशित्वेशानत्वाधिपतित्वप्रशासनरूपेण **संकल्पश्चतुर्विधः**। पूर्वत्रयम्, स वा एष महानज आत्मेत्युपक्रान्तात्मत्वोपयोगि; अन्तिमं भृत्यादिविषये राज्ञ इव भयावहो दण्डभृतः प्रेरणरूपः संकल्पः। वशित्वम्—सर्वं मत्स्वरूपेण धृतमस्त्विति **सर्वाधारताप्रयोजकसंकल्पः**। पृथग्भावानर्हं हि वश्यं भवति। ईशनमन्तर्यामितया नियन्तृत्वरूपसंकल्पः।

८९. संबन्धाधिकरणम् ३-३-७ ॥

## संबन्धादेवमन्यत्रापि । ३ । ३ । २० ॥

बृहदारण्यके श्रूयते, (बृ. ७-४-२) "सत्यं ब्रह्म" इत्युपक्रम्य । "तत् यत् सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषः, यश्चायं दक्षिणेऽक्षन्" इत्युपक्रम्य आदित्यमण्डलेऽक्षणि च सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनोपास्यत्वमुक्त्वा, "तस्योपनिषदहरिति"—अधिदैवतम्, "तस्योपनिषदहमिति"—अध्यात्मम्—इति द्वे उपनिषदौ-रहस्यनामनी उपासनशेषतया आम्नायेते । ते किं यथाश्रुतस्थानविशेषनियतत्वेन व्यवस्थिते, उतोभयत्रोभे अनियमेनेति संशये—सत्यस्य व्याहृतिशरीरस्यैवोपास्यस्य ब्रह्मणो द्वयोः स्थानयोः संबन्धादुपास्यैक्येन रूपाभेदात् संयोगाद्यभेदाच्च विद्यैक्यादनियमेनेति प्राप्तम् । तदिदमुच्यते-संबन्धादेवमन्यत्रापीति । यथा मनोमयत्वादिगुणविशिष्टस्यैकत्वादुपास्यैक्येन रूपाभेदात् विद्यैक्यात् गुणोपसंहारः, एवमन्यत्राक्ष्यादित्यसंबन्धिनो ब्रह्मणः सत्यस्यैकत्वेन विद्यैक्यादुभयोरुभ-

---

अधिपतित्वं स्वामित्वम्—वस्तुगतोपादेयताप्रयोजिका स्वगतातिशयाधानेच्छा, इच्छत्वमिति, सोपि संकल्पः । एषामप्रतिहतस्वरूपं सत्यत्वञ्च सर्वस्येति विशेषणसिद्धमेव । नन्वेवं स्थलद्वयेऽप्यविशेषे अविशेषपुनश्श्रवणरूपाभ्यासात् विद्याभेदोऽवश्यस्वीकार्य इति चेन्न— तत्रोक्तमनोमयत्वादीनामत्र पुनः कथनं तद्विद्याप्रत्यभिज्ञापनार्थम्, एवं प्रत्यभिज्ञाप्य तत्रोक्तस्य सत्यसंकल्पत्वस्यात्र विवरणं क्रियत इति । तेन जैवसत्यसंकल्पादीश्वरीये विशेषो दर्शितो भवति ॥ १९ ॥

दृष्टान्तसंगत्या एतदधिकरणारम्भ इति पूर्वपक्षसूत्रे एवमिति प्रयोगत एव भाव्यम् । **श्रूयते** इति सर्वत्र पाठात् **उपक्रम्ये**त्यत्र वाक्यच्छेदः । सत्यशब्दनिर्वचनादिकमिति शेषः । पूर्वाधिकरणविषयवाक्यब्राह्मणपूर्वब्राह्मणमत्र विषयः । **सत्यंब्रह्मेत्युपक्रम्ये**ति । एतद्वाक्यस्य प्रकृतविद्याविषयकत्वाभावेऽपि, तत्र सत्यंब्रह्मेति वाक्योपक्रमाभावेऽपि एतद्ग्रहणम्, तत्रोक्तस्य सत्यशब्दनिर्वचनस्यात्र विषयवाक्ये 'तद् यत् सत्यम्' इत्युपक्रमानुसारात् ग्राह्यत्वमस्तीति ज्ञापनाय ! हृदये सत्यब्रह्मदृष्टिः प्रागुक्ता; अत्र साक्षाद्ब्रह्मोपासनम् । एतत्फलञ्च हन्ति पाप्मानं जहाति चेत्युक्तं पाप्मविधूननशरीरत्यागरूपमोक्षः । **अक्षन्नित्युपक्रम्ये**ति ; अक्षन्नित्यादिना वाक्यजातेनेत्यर्थः । **व्याहृतिशरीरकत्वेने**ति । भूरिति शिरः—भुव इति बाहू "सुवरिति प्रतिष्ठा (पादौ)" इति कथनात् । **अधिदैवतम् अध्यात्मम्** इति भाष्यस्थपदद्वयं न श्रुतिगतम् । किंतु स्वयं वस्तुतत्त्वकथनाय घटितं शाङ्करभाष्य इव । अन्यथा विस्पष्टत्वात् विचारस्यानवकाशात् ; श्रुतेरेवमभावाच्च । अनयोरन्वयः **आम्नायेते** इत्यत्र । **तदिदमि**ति ; एवं पूर्वपक्ष्यभिमतमित्यर्थः । अयं भावः—आदित्यमण्डले अक्षिणि चोपास्यस्य **ब्रह्मणः** व्याहृतिशरीरकपुरुषत्वमविशिष्टम् । नामधेयञ्च लोके आकारविशेषावच्छिन्नस्य वाचकं भवति ; न तु वासस्थानभेदेन भिद्यते । अतः तस्य भूरिति शिर इत्यादिवाक्यस्य द्विः पाठेऽपि विधिद्वयकल्पनां विहाय **तस्ये**ति पदेन सत्यपुरुषमात्रग्रहणेन भूरादिशिरस्कत्वस्य नाम्नश्च विधानात् नामद्वयसंकर इष्ट इति ।

यत्रोपसंहार इति ॥ २० ॥ एवं प्राप्ते प्रचक्ष्महे—

न वा विशेषात् । ३ । ३ । २१ ॥

न वैतदस्ति—यत्-विद्यैक्यादुपसंहारः इति। कुतः? विशेषात्—उपास्यरूपविशेषात्। ब्रह्मण एकत्वेऽप्येकत्राऽऽदित्यमण्डलस्थतया उपास्यत्वम्, इतरत्राक्ष्याधारतयोपास्यत्वमिति स्थानसंबन्धित्वभेदेन रूपभेदात् विद्याभेदः। नैवं शाण्डिल्यविद्यायाः उपास्यस्थानं भिद्यते; उभयत्र हृदयाधारत्वेनोपास्यत्वात्। अतो व्यवस्थिते इति ॥ २१ ॥

दर्शयति च । ३ । ३ । २२ ॥

दर्शयति चाक्ष्याधाराऽऽदित्याधारयोर्गुणानुपसंहारम्, (छा. १-७-५) "तस्यैतस्य तदेव रूपम्, यदमुष्य रूपम्" इत्यादिना रूपाद्यतिदेशेन। स्वतो ह्यप्राप्तौ अतिदेशेन प्राप्त्यपेक्षा ॥ २२ ॥ इति संबन्धाधिकरणम् ॥ ७ ॥

९०. संभृत्यधिकरणम् ३-३-८ ॥

संभृतिद्युव्याप्त्यपि चातः । ३ । ३ । २३ ॥

---

**गुणोपसंहारः** सत्यसंकल्पत्वस्य वशित्वादिविशेषरूपेणानुसंधानम्। **उभयत्रेति**। मण्डलपुरुषोपासने, अक्षिपुरुषोपासने च। न च तत्तत्स्थानावच्छिन्नत्वेन तदुपासनस्यैकव्यक्तित्वासंभवे कथं विद्यैक्यमिति शंक्यम्—देवताभेदेन ज्योतिष्टोमयागाभ्यासेऽपि यागैक्यवत् विद्यैक्योपपत्तेः। यद्यपि विद्याभेदेऽपि दर्शपूर्णमासवत् समुच्चित्य फलसाधनत्वं स्यात्-अथापि रूपैक्याद्विद्यैक्यमेव पूर्वपक्षीष्टम्। **एवं पूर्वाधिकरणरीत्या अन्यत्रापि** सिद्धान्त्यभिमतस्थानादन्यस्मिन्नपि स्थाने नामिनः संबन्धात् तत्तन्नामापि स्यादिति सूत्रार्थः ॥

उपासनमात्रविधायकवाक्यस्य पूर्वमभावात् शरीरं नाम च निर्दिश्य, पृथक्, 'हन्ति पाप्मानं जहाति च य एवं वेद'इति निगमस्य स्थानशरीरनामरूपांशत्रयविशिष्टसत्यपुरुषोपासनस्य पृथक्पृथक् विधानात् स्थानसंबन्धित्वस्यापि रूपान्तर्भावात् न विद्यैक्यमित्याशयेन सिद्धान्तमाह **न वेति**। **वाशब्दः** किमर्थ इति चेत्—नामार्थकोटौ स्थानस्य प्रवेशाभावेपि, पुरुषमात्रस्य तदर्थत्वेऽपि स्थानादिविशिष्टतयैव विद्याविधानात् विद्याभेदः सिद्ध इति नैकत्र निविष्टस्य नाम्नोऽन्यत्र ग्रहणप्रसक्तिरिति **वाशब्देन** सूच्यते। **न विशेषात्** इत्यनेन च—अहश्शब्दस्याऽऽदित्यप्रकाशावच्छिन्नकालपरतायाः **अहंशब्द**स्याध्यात्मसंबन्ध्यात्मपरतायाश्च लोकप्रसिद्धतया तस्य तस्य नाम्नः तत्तत्स्थानसंबन्धित्वमुखेन परमात्मपरत्वमेव संमन्तव्यमिति विशेषपरत्वादपि न संकरप्रसक्तिरित्युच्यते। **उभयत्र** अग्निरहस्ये बृहदारण्यके च ॥

एकैव विद्या स्थानभेदेनाभ्यस्यते, यद्वा विद्ये भिद्येते इति पक्षद्वये द्वितीय एव श्रुतिसंमत इति दर्शयितुं **दर्शयतिचेति**। अन्तरधिकरणविषयवाक्यगतं **तस्यैतस्येति**; न तु प्रकृताक्ष्यादित्यमण्डलपुरुषवाक्ये। **अमुष्य** आदित्यमण्डलस्थस्य यत् हिरण्मयपुरुषरूपम्, तदेवाक्षिमण्डलस्थस्येत्यर्थः। तथाच द्वयोर्विद्ययोर्दर्शपूर्णमासवत् फलार्थमपि न समुच्चयः। पृथक्पृथगेव फलस्य कीर्तनात् ॥ २२ ॥

सिद्धान्तसूत्रे **अपिचेति** शब्दप्रयोगात् पूर्वाधिकरणोपरि एतदधिकरणप्रवृत्तिराक्षेपसंगत्येति

तैत्तिरीयके (—), राणायणीयानां खिलेषु च, " ब्रह्म ज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान । ब्रह्म भूतानां (ऋतस्य ब्रह्म (तै) प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः " इति ब्रह्मणि ज्येष्ठानां वीर्याणां संभृतिः द्युव्याप्तिश्चेत्यादिगुणजातमाम्नातम् । तेषामुपासनविशेषमनारभ्याधीतानां गुणानां सर्वासु विद्यासूपसंहारे प्राप्ते— उच्यते—

संभृतिद्युव्याप्त्यपि-इति । संभृतिद्युव्याप्तीति समाहारद्वन्द्वत्वादेकवद्भावः । संभृत्यादिकमनारभ्याधीतमपि अत एव स्थानभेदात् व्यवस्थाप्यम् ; न सर्वत्रोपसंहर्तव्यम् । कथमनारभ्याधीतानां स्थानविशेषनियतत्वम् ? स्वसामर्थ्यादिति ब्रूमः । द्युव्याप्तिस्तावत् हृदयाद्यल्पस्थानगोचरासु विद्यासु नोपसंहर्तुं शक्या ; संभृत्यादयोऽपि तत्सहचारिणस्तत्तुल्यदेशा इति अल्पस्थानविषयासु विद्यास्वनुपसंहार्याः । शाण्डिल्यदहरादिविद्यास्वल्पस्थानविषयासु, (छा. ३-१४-३) "ज्यायान् पृथिव्याः", (छां.८-१-३) "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्यादयः तत्रतत्राशक्योपसंहाराः मनोमयत्वापहतपाप्मत्वादिविशिष्टस्योपास्यस्य माहात्म्यप्रतिपादनपराः ॥ इति संभृत्यधिकरणम् ॥ ८ ॥

---

ज्ञाप्यते । तत्तदुपासनविधिवाक्यमध्यनिविष्टत्वादस्तु नाम्नोऽव्यवस्था ; नैवमत्रेति शङ्का । राणायणीयमिति सामशाखाविशेषः । ब्रह्म ब्रह्मणि ज्येष्ठानि अतिप्रशस्यानि वीर्याणि शक्तयः संभृतानि संभृतानि स्थितानि । ज्येष्ठं प्रशस्यतमं ब्रह्म अग्रे दिवमाततान स्वर्गं व्याप्नोत् । ब्रह्म भूतानां सर्वप्राण्यपेक्षया प्रथममेव जज्ञे आविर्भूतम् । ऋतस्येति तैत्तिरीयपाठे उत्तरोत्तरविचित्रपरिणामाख्यगतिविशिष्टप्रपञ्चस्येत्यर्थः । ततःप्राक् चतुर्मुखोत्पादनायावतारात् । तेन वीर्यातिशयदेशकालव्याप्त्यतिशयशालिना ब्रह्मणा स्पर्धां कर्तुं न कश्चित् समर्थ इति मन्त्रार्थः । उपासनविशेषमनारभ्य किञ्चिदुपासनसंनिधानमन्तरा । नन्वेवमुपासनसंनिधानाभावे एषामुपास्यत्व एव न प्रमाणम् ; तत्त्ववर्णनपरतयैव वाक्योपपत्तेः । अतः कुत्रोपासने निवेश इति कोऽयं विचार इति चेत्—एतद्ग्रन्थस्य खिलत्वेन व्यवहृतत्वात् वक्तव्यस्य पुष्कलमनुक्तावेव खिलपदप्रयोगात् ब्रह्मगुणानामनन्तानां पूर्णोपदेशस्य सर्वथैव दुष्करतया तदनुपदेशप्रयुक्तखिलत्वप्रसक्त्यभावात् एतदुपासनतत्फलाद्यकथनप्रयुक्तमेव खिलत्वं वक्तव्यम् । तत्रैकोपासननिर्देशे उपासनान्तरेऽनन्वयः स्यादिति किञ्चिदनिर्देशेनैवेषां पाठ इति गम्यते । परिच्छिन्नत्ववादश्चोपासनार्थ एवेति भावः ।

एकवद्भाव इति । द्युव्याप्त्यनन्वयिनि उपासने संभृतिः सर्वान्वयार्हापि नान्वेति, संनियोगशिष्टत्वादिति ज्ञापयितुं समाहारकरणम् । ननु प्रकरणपठितस्य पृथिवीज्यायस्त्वादेरल्पायतनत्वेन साकमवस्थानुसंधेयत्वात् तद्वत् इयं द्युव्याप्तिरपि निविशतामित्यत्राह शाण्डिल्येति । अशक्योपसंहारा इति ; औपाधिकज्यायस्त्वपरत्वेऽन्वयानर्हा इत्यर्थः । माहात्म्येति । स्वाभाविकमहत्त्वेत्यर्थः । नन्विदं महत्त्वमप्यल्पायतनत्वविरुद्धम् । नैवम्—औपाधिकस्वाभाविकयोरविरोधात् शीतं जलमग्निनोष्णमितिवत् । हृदयपरिच्छिन्नत्व-द्युपरिच्छिन्नत्वे तु उपासनार्थे कल्पिते नैकस्मिन्नुपासने निविशेते । अत एव सर्वविद्यान्वय्यनन्तस्वरूपस्वरूपनिरूपकधर्मेण साकमेषामौपाधिकपरिमाणानामविरोध इति । सूत्रे अपीत्यनेन अनारभ्या—

## ९१. पुरुषविद्याधिकरणम् ३-३-९ ॥

**तैत्तिरीयके पुरुषविद्याऽऽम्नायते,** (तै. नारा. ५२) **"तस्यैवं विदुषो यज्ञस्याऽऽत्मा-यजमानः, श्रद्धा पत्नी, शरीरमिध्मम्, उरो वेदिर्लोमानि बर्हिः" इत्यादिका। छान्दोग्येऽपि पुरुषविद्याऽऽम्नायते,** (छा. ३-१६-१) **"पुरुषो वाव यज्ञः। तस्य यानि चतुर्विंशतिर्वर्षाणि" इत्यादिका। तत्र संशयः—किमत्र विद्या भिद्यते, उत नेति। पुरुषविद्येति नामैक्यात्**

---

धीतानामविशेषात् सर्वगामित्वमिति मीमांसान्यायविरोधोऽपि सह्य इति ज्ञाप्यते। तैरनारभ्याधीतानां प्रकृतिविकृत्युभयगामित्वमाशंक्य विकृतावनन्वयेपि प्रकृतित एव धर्मप्राप्तिसंभवात् प्रकृतिमात्रगामित्वमिति संकोचः कृतः। तथा विरुद्धधर्मस्थलेऽनन्वयोऽपि तदिष्ट एव। एवञ्चात्रापि द्युव्याप्तिहृदयायतनत्वयोर्विरोधादनन्वय इत्युच्यते। विद्यासु प्रकृतिविकृतिभावाभावात् सर्वगामित्वं सुवचम्; स्वाभाविकयोरल्पत्वमहत्त्वयोरेव विरोधः स्यात्; न तु स्वाभाविकौपाधिकयोः, नापि केवलौपाधिकयोरिति उभयसमावेशं पूर्वपक्षी मन्यते। अपरिच्छिन्ने परिच्छेदकल्पनस्योपासनार्थत्वात् द्विविधपरिच्छेदवत्तयोपासने द्विविधाभिव्यक्तियौगपद्ये अनाञ्जस्यात् मिथो विरोध एवेति योग्यतानुसारेणान्वयः, स्रुवेणावद्यतीत्यादाविवार्थसामर्थ्यादिति सिद्धान्त्याशयः। सूत्रे चकारः पूर्वाधिकरण इवेहापि व्यवस्थेति ज्ञापनार्थः। **अत** इति विशेषादिति पूर्वोक्तपरामर्शि। अल्पायतनत्वरूपविरुद्धाकारसत्त्वात् न तत्रैतदन्वय इत्यर्थः ॥२३॥

यथा द्युव्याप्त्यादेरनारभ्याधीततया संबन्धार्हस्यापि शाण्डिल्यविद्यादौ असंबन्धः, तद्वत् तैत्तिरीये पुरुषयज्ञत्वकल्पनस्यापि (स्वतन्त्रपुरुषविद्यात्वात्) पूर्वब्रह्मविद्यया न संबन्ध इत्युत्थितेः संगतिः। **पुरुषविद्येति।** पूर्वपक्षी तैत्तिरीयकभागस्यापि पुरुषविद्यात्वं मन्यते। छान्दोग्य इवात्र निर्विवादस्तद्व्यवहार इति नेति शांकरादवगम्यते। पुरुषविद्याया**मिवे**ति तदीयः सूत्रपाठः। शेषं **परिष्कारे**। विद्वान् पुरुषो यज्ञः, तदात्मस्वरूपं यजमानः, तच्छ्रद्धा पत्नी, पुरुषसंबन्धिसायंप्रातर्मध्यन्दिनकाला एव त्रीणि सवनानि, तत्प्राणधारणपरिमाणमेव दीक्षा, तदशनादिकमेव सोमपानमित्येवंरीत्या कल्पनं तैत्तिरीये; छान्दोग्ये तु—षोडशोत्तरशतसंवत्सरजीवनकामेनानुष्ठेया पुरुषविद्येति तदायुः त्रेधा विभज्य सवनत्रयकल्पना कृता। तत्र प्रातस्सवनस्य गायत्रीछन्दस्कत्वात् तस्याश्चतुर्विंशत्यक्षरकत्वात् चतुर्विंशतिवत्सरमितः प्रथमकालः प्रातस्सवनम्; एवं त्रिष्टुप्छन्दस्कं मध्यन्दिनसवनं चतुश्चत्वारिंशत्संवत्सरमितो मध्यकालः. जगतीछन्दस्कं तृतीयसवनं च तदीयः अवशिष्टः अष्टाचत्वारिंशत्संवत्सरकालः; तदीयमशनायादिकं दीक्षा; अशनादिकमुपसत्; हसनादिकं स्तोत्रादि; तपोदानादिकं दक्षिणेति कल्पना। उभयत्र पुरुषयज्ञत्वकल्पनारम्भात् एका पुरुषविद्येति पूर्वपक्षी मन्यते। तथा **एवं विदुषो यज्ञस्ये**त्यस्य वक्ष्यमाणरीत्या कल्पनां विद्वान् पुरुष एव यज्ञ इति पूर्वपक्ष्यभिमतोऽर्थः। सिद्धान्ते तु ओमित्यात्मानं युञ्जीतेति पूर्वं विद्याया विहितत्वात् पूर्वोक्तविद्यावेद्येव यज्ञ इत्यर्थः। अतोऽयं संदर्भः पूर्वविद्याशेष इति वक्ष्यति। तैत्तिरीयककल्पितरीतेरन्यरीतेश्च बहुलं भेदेऽपि पुरुषसंबन्धिष्वंशेषु यज्ञसंबन्ध्यंशत्वकल्पनमिति सामान्य**कारे** परामृष्टे ऐक्यं सुग्रहम्; एवमैक्ये सति अविरुद्धं समुच्चीयते, विरुद्धं विकल्प्यत इत्याशयेनाह **पुरुषा-**

पुरुषावयवेषु यज्ञावयवकल्पनसाम्येन रूपैक्यात्, तैत्तिरीयके फलसंयोगाश्रवणात्, (छा. ३-१६-७) "प्र ह षोडशं वर्षशतं जीवति" इति छान्दोग्ये श्रुतस्यैव पुरुषविद्याफलत्वात् फलसंयोगस्याप्यविशेषात् विध्यैक्यम् इति प्राप्ते—उच्यते—

पुरुषविद्यायामपि चेतरेषामनाम्नानात् । ३ । ३ । २४ ॥

उभयत्राम्नातयोर्विद्ययोः पुरुषविद्यात्वेऽपि विद्याभेदोऽस्त्येव। कुतः? इतरेषामनाम्नानात्—एकस्यां शाखायामाम्नातानां गुणानामन्यत्रानाम्नानात्। तथा हि—"यत् सायं प्रातर्मध्यन्दिनं च तानि सवनानि" इत्यादयस्तैत्तिरीयके आम्नाताः छान्दोग्ये सवनत्वेन नाम्नायन्ते; त्रेधा विभक्तं पुरुषायुषं छान्दोग्ये सवनत्वेन कल्प्यते। छान्दोग्ये श्रुतानामशिशिषादीनां दीक्षादित्वकल्पनं तैत्तिरीयके न कृतम्; यजमानपत्न्यादिपरिकल्पनं चान्यथा। अतो रूपमुभयत्र भिद्यते। तथा फलसंयोगोऽपि भिद्यते- - तैत्तिरीयके हि पूर्वानुवाके, "ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत" इति ब्रह्मविद्यामभिधाय तत्फलत्वेन, "ब्रह्मणो महिमानमाप्नोति" इत्युक्त्वा, 'तस्यैवं विदुषः' इत्यादिना आम्नाता पुरुषविद्याऽस्यैव ब्रह्मविदुषो यज्ञत्वकल्पनमिति गम्यते। अतो ब्रह्मविद्याङ्गत्वात् ब्रह्मप्राप्तिरेवात्र फलम्। 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायात् तैत्तिरीयकाम्नाता पुरुषविद्या ब्रह्मविद्याङ्गमिति गम्यते। छान्दोग्ये

---

वयवेषु यज्ञावयवकल्पनसाम्येनेति। फलसंयोगाश्रवणादिति। ननु श्रूयत एवैतदनन्तर ब्रह्मणो महिमानमाप्नोतीति फलं छान्दोग्यश्रुतषोडशाधिकशतवर्षजीवनरूपफलातिरिक्तमिति चेत्—यज्ञत्वकल्पनायाः ब्रह्मविषयकत्वेन ब्रह्मप्राप्तिरूपफलस्येहानन्वयात् योग्यतानुसारेण पूर्वोक्तविद्यायामेव तन्नयनात्। अतोऽस्येह फलं न श्रूयत इति छान्दोग्योक्तफलमेव ग्राह्यमिति। प्र ह षोडशमिति। प्रजीवतीत्यन्वयः। षोडशम्। तदस्मिन्नधिकमित्यर्थे "दशान्ताड्डः" इति डप्रत्ययान्तमिदम्। षोडशाधिकमित्यर्थः। विध्यैक्यमिति। अन्यथा यथाश्रुतरूपभेदमादाय विद्याभेदकल्पने तैत्तिरीयविद्यायाः निष्फलत्वप्रसंग इति पुरुषयज्ञत्वमात्रेण रूपैक्यमादृत्य अन्योन्योपसंहारः कार्य इति। पुरुषविद्यात्वेपीत्यपिना तैत्तिरीये पुरुषविद्यात्वव्यवहारे विवादः सूच्यते। सिद्धान्ते एतद्भागस्य स्वतन्त्रविद्यात्वाभावाच्च तथा पृथग्व्यवहारोऽत्र न स्वरसः। अन्यत्रेति। तैत्तिरीयकेऽस्ति, छान्दोग्ये नास्तीत्यर्थः। इदञ्च इतरेषामनाम्नानादिति सूत्रार्थत्वायोक्तम्। अस्यैव ब्रह्मविदुष इति। एवंविदुष इत्यस्य पूर्वोक्तब्रह्मविद्यावेदिन इत्यर्थ एव स्वरसः, तस्येति पदसत्त्वाच्चेति भावः। विदुषोयज्ञत्वकल्पनमिति। उपरि यजमानपत्नीप्रभृतीनामङ्गानां इष्टिपशुसोमयागानां प्रधानानाञ्च पुरुषांशेषु कल्पनात् साङ्गसर्वयज्ञसमष्टिभूतोऽयं ब्रह्मविदिति रूप्यते। फलवत्संनिधाविति। उपरिफलाश्रवणेऽपि पूर्वं सफलतयाश्रुतब्रह्मविद्यानुबन्धित्वात् तत्फलकत्वसिद्धिः, सुतरां तु पूर्वोक्तब्रह्मविद्याफलस्य पुनरन्ते कीर्तनात् तन्मध्यपतितत्वादिति भावः। सूत्रार्थस्तु—तैत्तिरीयभागस्य पुरुषविद्यात्वस्वीकारेऽपि अन्यत्रोक्तानां स्तुतशस्त्रादीनामत्रानाम्नानात् अत्रोक्तानां यजमानादीनामन्यत्रानाम्नानात् विरुद्धानामाम्नानाच्च फलसंयोगभेदाच्च तथैवमिति पूर्वप्रक्रमाच्च विद्याभेदाद् गुणानुपसंहार इति।

त्वायुःप्राप्तिफला पुरुषविद्येत्युक्तम् । अतो रूपसंयोगयोर्भेदात् विद्याभेद इत्येकत्राऽऽम्नातानां गुणानामितरत्रानुपसंहारः ॥ २४ ॥ इति पुरुषविद्याधिकरणम् ॥ ९ ॥

## ९२. वेधाद्यधिकरणम् ३-३-१० ॥

## वेधाद्यर्थभेदात् । ३ । ३ । २५ ॥

आथर्वणिका उपनिषदारम्भे, "शुक्रं प्रविध्य हृदयं प्रविध्य" इत्यादीन् मन्त्रान् अधीयते । सामगाश्च रहस्यब्राह्मणारम्भे, "देव सवितः प्रसुव यज्ञं प्रसुव" इत्याद्यामनन्ति । काठकास्तैत्तिरीयकाश्च, "शं नो मित्रश्शं वरुणः" इत्यादिकम् । शाट्यायनिनश्च, "श्वेताश्वो हरिनीलोऽसि" इत्यादिकम् । ऐतरेयिणस्तु महाव्रतब्राह्मणमधीयते, "इन्द्रो हवै वृत्रं हत्वा महानभवत्" इत्यादि ; कौषीतकिनोऽपि महाव्रतब्राह्मणमेव, "प्रजापतिर्वै संवत्सरः । तस्यैष आत्मा यन्महाव्रतम्"इति । वाजसनेयिनस्तु प्रवर्ग्यब्राह्मणम् , "देवा हवै सत्रं निषेदुः"इत्यादि।

---

अत्रेदं बोध्यम्—पूर्वब्रह्मविद्याङ्गत्वं भाष्योक्तं किंरूपम् । किं पुरुषयज्ञत्वकल्पनेयं यथोक्तं भाव्यमाना अदृष्टविधया विद्याङ्गं भवतीति, किं वा विद्वत्प्रशंसनेनार्थवादमात्रं भूत्वा भागोऽयं पूर्वब्रह्मविद्याविधिशेष इत्येतावता तदङ्गत्ववचनमिति । द्वितीयः पक्षः **शाङ्करे** प्रतीतः । पक्षस्यास्य टीकादौ दूषणाभावात् , विद्यान्तरवैलक्षण्येन एतद्विद्यामात्रस्येदृशकल्पनारूपाङ्गस्य विशिष्य स्वीकारे प्रयोजनादर्शनाच्च भाष्यस्याप्यत्रैव तात्पर्यम् । यदा तु ओमित्यात्मानं युञ्जीतेति **न्यासस्य** भरन्यासस्य प्रपत्तिरूपस्य विधिरिति संप्रदायः परिशील्यते, तदा तस्य सहायान्तरनिरपेक्षत्वात् यज्ञत्वकल्पनस्य चिन्तनरूपस्य नैव प्रसक्तिरिति **श्रीदेशिकचरण**दर्शितदिशा अर्थवादतैवास्य भागस्य । तत्र उपयामगृहीतोसीति प्राक् आत्मग्रहणस्य सोमरसग्रहणत्वभावनात् न्यास एव सोमयाग इति तत्कर्तुरवयवाः सर्वे तदंशतया स्तुताः । अथ तस्येतराङ्गनैरपेक्ष्यज्ञापनाय प्रपत्तीप्रदिनपक्षमाससंवत्सरादौ इष्टिपशुसोमयागादित्वरूपणमपि कृतमिति सुतरामर्थवादतैव । न चैतद्विद्यानिष्ठस्य दक्षिणायनमरणे चन्द्रमस्सायुज्यस्य, उत्तरायणमरणे आदित्यसायुज्यस्य चोपरि वर्णनात् तदुपायतयेदं यज्ञत्वकल्पनमिति वाच्यम्—तत्फलद्वैविध्यप्रयोजकाशम्यात्र यज्ञत्वभावनायामदर्शनेन तथा दुर्वचत्वात् । तर्हि तत्प्रयोजकं किमिति चेत्—तत्र **परिष्कारे** दर्शितम् । शिष्टमपि तत्रैव द्रष्टव्यम् ॥ २४ ॥

यथा तैत्तिरीयोपनिषदन्तश्रुतस्य पुरुषयज्ञत्वकल्पनापरभागस्य फलवत्संनिधावफलं तदङ्गमिति न्यायात् संनिहितविद्याशेषता—तथा तत्तदुपनिषदारम्भश्रुतानामपि विद्याशेषतैव युक्ता, संनिधानादित्युत्थानात् संगतिः। **शुक्रमिति** । सर्वमिति **शाङ्करपाठः**। **विध्येति** लोट् । शुक्रं रिपोः हे देव त्वं प्रविध्य विदारय, हृदयमपि विदारय । **धमनीः प्रवृज्ज** सिराः विभज, शिरोऽभिप्रवृञ्ज । **त्रिधा विपृक्तः** एवं मद्रिपुः त्रिधा विश्लिष्टो भवत्विति वाच्यार्थः । **श्वेताश्व** इति इन्द्रविशेषणम् । हरिनीलः इन्द्रनीलमणिवन्नीलोऽसि हे इन्द्र । **कौषीतकिन** इति । शांकरे अग्निष्टोमब्राह्मणमिति वाक्यान्तरमुपात्तम् । **महाव्रतं** सत्राङ्गम् । **प्रवर्ग्यो** ज्योतिष्टोमाङ्गम् । **मन्त्रा** इति । मन्त्राः आथर्वणिकादिषु । ब्राह्मणानि

**तत्र संशयः—किमुपनिषदारम्भेष्वधीताः "शुक्रं प्रविध्य", "शं नो मित्रः" इत्यादयो मन्त्राः, प्रवर्ग्यादीनि च कर्माणि विद्याङ्गम्, उत नेति। किं युक्तम्? विद्याङ्गमिति। कुतः? संनिधिसमाम्नानात् विद्याङ्गत्वप्रतीतेः। यद्यपि, "शुक्रं प्रविध्य" इत्यादीनां मन्त्राणां प्रवर्ग्यादेश्च कर्मणः श्रुतिलिङ्गवाक्यैर्बलवद्भिर्यथायथं कर्मसु विनियोगोऽवगम्यते, तथाऽपि "शं नो मित्रः", "सह नाववतु" इत्यादेर्मन्त्रस्यान्यत्र विनियोगाभावात् विद्याधिकाराच्च विद्याङ्गत्वमवर्जनीयमिति सर्वासु विद्यासु इमे मन्त्राः उपसंहर्तव्याः—**

**एवं प्राप्ते प्रचक्ष्महे-वेधाद्यर्थभेदात्। 'शुक्रं प्रविध्य हृदयं प्रविध्य', 'ऋतं वदिष्यामि सत्यं वदिष्यामि', 'ऋतमवादिषम् सत्यमवादिषम्' ... 'तेजस्वि नाऽवधीतमस्तु मा विद्विषावहै' इत्यादिभिर्लिङ्गैरभिचाराध्ययनादिष्वेषां विनियोगावगमान्न विद्याङ्गत्वम्।**

---

ऐतरेयादिषु। तत्र ब्राह्मणानामर्थविधानपरत्वादर्थद्वाराऽङ्गत्वं वक्तव्यमिति स्पष्टम्। अतो महाव्रतादीनां विद्याङ्गत्वं शंक्यते। मन्त्राणामनुष्ठानकाले व्याप्रियमाणानामप्यर्थप्रकाशकत्वात् प्रकाशितार्थद्वारैव विनियोग.। निरर्थकस्तोभाक्षरातिरिक्तानाम्, मुख्येऽर्थे संभवति तद्द्वारा, तदभावे गौणेनेति कथमप्यर्थद्वारैवाङ्गत्वस्येष्टत्वात्। अतो विद्यायास्तपःप्रभृतिसापेक्षत्वात् तदेव कथमपि शुक्रहृदयादिवेधनाद्यर्थकमन्त्रार्थो भविष्यति। एवमन्यत्रापि भाव्यम्। ननु मिथोऽन्वयः आकांक्षामूलः। विद्याना तावत् शान्ताकांक्षाणां नैतद्विषयिणी आकांक्षा। अथापि यद्येषामन्यत्रानन्वयेन साकांक्षता स्यात्, तदा संनिधिप्रमाणात् विद्याङ्गत्वं कल्प्यं स्यात्। तदपि न; श्रुत्यादिनाऽन्यत्र विनियुक्तत्वात्। प्रवर्ग्यस्यानरभ्याधीतस्य सोमाङ्गतायाः वाक्याप्रतिपन्नत्वेऽपि 'पुरस्तादुपसदां प्रवर्ग्येण प्रवृणक्ति' इति उपसत्पूर्वभावश्रवणात् उपसदाश्च प्रकरणात् 'तिस्र एव साह्नस्योपसदः' इति वाक्याच्च ज्योतिष्टोमाङ्गत्वस्यावसितत्वेन तदङ्गत्वं सिद्धम्। अतः कथं विद्याङ्गत्वशंकेत्याह **यद्यपीति**। येषां प्रकृतविद्याशेषत्वं शक्यशंकम्, तन्मात्रपर्यवसाय्येव पूर्वपक्ष इति समाधत्ते **तथापीति**। **अन्यत्र** सर्वथा विद्यासंबन्धानर्हे **विनियोगाभावात्** लिङ्गेनापि विनियोजनासंभवात्। यद्वा शंनइत्यादौ कार्यस्य कस्यचिन्मुख्यतया कथनाभावेनान्यविषयलिङ्गाद्यभावादित्यर्थः॥ **इत्यादेर्मन्त्रस्य** इत्येकवचनं प्रयुज्य **इमे मन्त्राः** इति बहुवचनप्रयोगात् प्रविध्यमन्त्रादेरपि पूर्वपक्षविषयत्वमस्तु; ब्राह्मणस्य परं कर्मविधायिनो मा भूदित्याशयोऽवगम्यते। तथा च—विधायकवाक्यानां सकृदर्थबोधनेन शान्तत्वेऽपि मन्त्राणामयं नियमो नेति क्वचिदनेकविनियोगदर्शनादवसीयते। अतः कस्यापि प्रमाणस्याभावे यथेच्छविनियोगकल्पनानुपपत्तावपि प्रबलप्रमाणविनियुक्तानामपि दुर्बलस्यापि प्रमाणस्यावैयर्थ्यायान्यत्र विनियोजकत्वमिष्यतामिति पूर्वपक्ष्याशय.। **वेधाद्यर्थभेदात्** वेधनाध्ययनादिरूपार्थविशेषात्।

तथाच लिङ्गात् तत्तदर्थे विनियोगे सति न संनिधिना विद्याङ्गत्वसंभवः। न च विनिगमनाविरहः; संनिधेर्लिङ्गकल्पनापूर्वकमेव विनियोजकत्वस्य वक्तव्यत्वात् क्रमेण लिङ्गेनाकांक्षाशान्तौ कल्पनायोगात्। तदुक्तम् (पू. मी.) "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति।

एतदुक्तं भवति – यथा हृदयं प्रविध्य' इत्यादिमन्त्रसामर्थ्यात् 'शुक्रं प्रविध्य' इत्यादीनामभिचारादिशेषत्वमवगम्यते, एवमेव 'ऋतं वदिष्यामि', 'तेजस्वि नावधीतमस्तु' इत्यादिमन्त्रसामर्थ्यादेव स्वाध्यायशेषत्वं "शं नो मित्रः" इत्यादिमन्त्राणामवगम्यते। अतो न तेषां विद्याङ्गत्वम् इति। "शुक्रं प्रविध्य" इत्यादीनां प्रवर्ग्यादिब्राह्मणानां चेह पाठो दिवाकीर्त्यत्वारण्येनुवाक्यत्वंकृतः ॥ २५ ॥ इति वेधाद्यधिकरणम् ॥ १० ॥

९३. हान्यधिकरणम् ३-३-११ ॥

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत् तदुक्तम्। ३। ३। २६॥

छन्दोगा आमनन्ति—(छा. ८-१३-१) "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति। आथर्वणि-

संनिधिश्च स्थानं लिङ्गादतीव जघन्यम्। ननु वेधनस्य मुख्यार्थस्याभिचार एव संभवात् न तद्द्वारा मन्त्रस्य विद्याङ्गता; अध्ययनं तु विद्याङ्गं भवितुमर्हतीति तन्मुखेन शन्न इत्यादेर्विद्याङ्गत्वं स्यादित्यत्राह **एतदुक्तं भवतीति**। अध्ययनस्याक्षरराशिग्रहणार्थतया स्वतन्त्रविधिविहितत्वात् अर्थज्ञानस्य च विधिमन्तरा जिज्ञासाबलत एव संपद्यमानत्वात् नाध्ययनं विद्यादिकर्माङ्गम्। अध्ययनसंपादितज्ञानशाल्यधिकारिलाभात् विद्यादिविधिरनधीतिनं नाधिकारितया गृह्णातीत्यन्यदेतत्। अतो मन्त्रस्य नाध्ययनद्वाराऽपि तदङ्गत्वमिति भावः। एवं वेधविषयेऽपि पूर्वपक्षमभिप्रेत्य भाष्यं योजितम्। यदा तु **इमे मन्त्राः** इत्यस्य वक्ष्यमाणरीत्या शन्नइत्यादिमन्त्रा एवार्थः—तदा वेधोक्तिर्दृष्टान्तमात्रतया। तैत्तिरीयमन्त्रमात्रं मुख्यविषयः। एतद्विवरणमेव एतदुक्तं भवतीति क्रियत इति भाव्यम्। तर्ह्यसंबद्धाना कथमत्र पाठ इत्यत्रानर्थक्यं परिहरति **शुक्रमिति**। **दिवाकीर्त्यत्वं** रात्रावकीर्तनीयत्वम्। **अरण्येनुवाक्ये**त्यलुक्समासत्वान्न द्वन्द्वानुपपत्तिः। **वाक्यम्**—वक्तव्यम्। इदमेव कुत एष्टव्यमिति चेत्—उपनिषद्भागान्तराणां किमिति आरण्यकत्वादिकमिष्यते। स्त्रीशूद्रादिभिर्वेदो नाध्येतव्य इति विधिर्वा किमित्यनुमन्यते। यदि अरण्येऽनुवाक्यत्वं विद्याङ्गत्वाशयेनैवेति कल्प्यते, दिवाकीर्त्यत्वस्य को निर्वाहः। एवं ज्योतिष्टोमाङ्गप्रवर्ग्यादेरनारभ्यपाठश्च कुतः। तस्मात् जपपारायणाद्युपयोग्यानुपूर्वीविशेषसिद्धये तत्र तत्र तत्तत्पाठ इति न वैयर्थ्यम्। अतो विना वचनं मन्त्राणामपि प्रबलप्रमाणविनियुक्तानां न विनियोगान्तरकल्पनेति। यदि विद्यैव वा वेद्यं वस्तु वा प्राधान्येन मन्त्रेण प्रतिपाद्येत, तदा तस्य विद्याङ्गत्वं संभाव्येत; न त्विहेति॥

हान्यधिकरणमारभ्याधिकरणत्रयम् विद्याङ्गभूतचिन्ताविशेषानुबन्धिविचाररूपम्। तत्र—यथा संनिहितानामपि मन्त्राणां विद्यासंबन्धाभावः, तथा सर्वविद्याकार्यतया तत्संनिहितहानोपायनद्वयविषयस्य चिन्तनस्यापि विद्यासामान्यसंबन्धाभाव इति शंकया संगतिः। मन्त्रपठनमन्यथासिद्धत्वात् नाङ्गताग्राहकमित्युक्तम्। अपठनमनङ्गताग्राहकं स्यादिति शंकेति वा। **छान्दोगा** इति। नात्र हानोपायनयोरन्यतरस्य कचिद्विद्यायामभावः आशंक्य परिह्रियते; तद्विचारवैयर्थ्यात्। उपासके सौहार्दमाचरितव्यम्, न त्वसौहार्दमिति प्रयोजनमिति **भामती**। तदयुक्तम्; अप्रसक्तत्वात्। विद्यापादे चिन्तनविचार एव संगतः। अत

काश्च, (मु. ३-१-३) 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति। शाट्यायनिनस्तु 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्यादि। (१-३७) कौषीतकिनस्तु, "तत् सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम्" इति। एवं क्वचित् पुण्यपापयोर्हानिः, क्वचित् प्रियाप्रियेषु तत्प्राप्तिः, क्वचिदुभयं च श्रुतम्। तदुभयमेकैकविद्यायां श्रुतमपि सर्वविद्याङ्गमास्थेयम्, सर्वब्रह्मविद्यानिष्ठस्यापि ब्रह्म प्राप्नुवतः पुण्यपापप्रहाणस्यावश्यम्भावित्वात्, प्रहीणविषयत्वाच्चोपायनस्य। तच्चिन्तनं च विधीयमानं सर्वविद्याङ्गं भवितुमर्हति॥

तत्रेदं विचार्यते—हानिचिन्तनमुपायनचिन्तनमुभयचिन्तनं च विकल्प्ये(ल्पे)रन्, उपसंह्रियेरन् वा। किं युक्तम्? विकल्प्ये(ल्पे)रन्निति। कुतः? पृथगाम्नानसामर्थ्यात्। समुच्चये हि सर्वत्रोभयानुसन्धानं स्यात्, तच्च कौषीतकिवाक्येनैव सिद्धमित्यन्यत्राम्नानमनर्थकमेव स्यात्। अतोऽनेकत्राम्नानस्य विकल्प एव प्रयोजनम्। न चाध्येतृभेदेन परिहर्तुं शक्यमनेकत्राम्नानम्। अविशेषपुनश्श्रवणं ह्यध्येतृभेदपरिहार्यम्। अत्र तु हानिरेव द्वयोः शाखयोः; उपायनमेव चैकस्याम्। न च विद्याभेदेन व्यवस्थापयितुं शक्यम्, सर्वशेषभूतमिदमनुसंधानमित्युक्तत्वात्॥

अत्रेदमुच्यते—हानौ तूपायनशब्दशेषत्वात्—इति। तुशब्दः पक्षं व्यावर्तयति हानाविति प्रदर्शनार्थम्। केवलायां हानौ केवले चोपायने श्रूयमाणे तयोरितरेतरसमुच्चयोऽव-

---

इह चिन्तने वैषम्यविचार इति विषयशुद्धिमाह अर्हतीत्यन्तेन। तदाविद्वानिति। यदा पश्यः पश्यते रुक्मवर्णमिति पूर्वार्धम्। तत् तदा; शरीरवियोगकाले; उत्क्रमणात् प्राक्। सर्वविद्याङ्गम् सर्वविद्याफलान्तर्गतम्। ननु हानमावश्यकमस्तु; उपायनं तु कुतः; तदभावेऽपि विदुषो मोक्षसिद्धेरित्यत्राह प्रहीणेति। हानवत् उपायनस्यापि क्वचित् पठिततया तत्र तदवश्यम्भावित्वे सति तुल्यन्यायात् सर्वत्र तदविशेषः। स्थलान्तरलाभात् पापं तत्र लब्धप्रतिष्ठं पुनर्नास्मत्सन्निधमायास्यतीति हानदार्ढ्यसिद्धिः तत्फलम्। विधीयमानमिति। 'विधूय पापं धूत्वा शरीरं ब्रह्मलोकमभिसंभवामि' इत्युत्तमपुरुषदर्शनात् विदुष एतदनुसंधानलाभात्, कौषीतकिब्राह्मणे सुकृतदुष्कृतधूननोपायनविरजानदीगमनब्रह्मस्थानपर्यङ्कप्राप्तिब्रह्मसंभाषणादिकमुक्त्वा, 'ब्रह्मणो या जितिर्व्यष्टिः, तां लभते य एवं वेद' इति अन्ते वेदनावश्यकत्ववचनाच्च तद्विधिः सिद्ध इति भावः। अस्य फलस्य सर्वसाधारणतया अर्चिरादिगतेरिवास्यापि चिन्तनं सर्वेषामिति स्थिते पृथगाम्नानावैयर्थ्याय विकल्प इष्यते। तर्हि अन्यतराचिन्तने कथं तत्सिद्धिः तत्क्रतुनयादिति चेन्न-तत्क्रतुशास्त्रं हि प्राप्यतया चिन्तितमवश्यं प्राप्यत इत्येतावन्मात्रबोधकम्, न पुनरचिन्तितांशप्राप्तिवारकमित्याशयेनाह विकल्प एवेति। तत्राप्यव्यवस्थित एवेत्याह न चविद्याभेदेनेति॥

हानाविति प्रदर्शनार्थमिति। हानिशब्द उपायनस्याप्युपलक्षक इत्यर्थः। किमर्थमनेन तदुपलक्षणमिति चेत्-उच्यते-एवं कश्चिन्मन्यते—उभयश्रवणे उभयमस्तु। उपायनमात्रश्रवणेऽपि कामं

श्यम्भावी। कुतः? उपायनशब्दशेषत्वात्—**उपायनशब्दस्य हानिवाक्यशेषत्वात्। उपायनवाक्यस्य हि हानिवाक्यशेषत्वमेवोचितम्; विदुषा त्यक्तयोः पुण्यपापयोः प्रवेशस्थानवाचित्वादुपायनवाक्यस्य ॥**

**प्रदेशान्तराम्नातस्य वाक्यस्य प्रदेशान्तराम्नातवाक्यशेषत्वे दृष्टान्ता उपन्यस्यन्ते**—कुशाच्छन्दस्स्तुत्युपगानवदिति। **कालापिनः, "कुशा वानस्पत्याः" इत्यामनन्ति। शाट्याय-**

---

हानमप्यस्तु; उपायनस्य स्थलान्तरप्राप्तिरूपस्य पूर्वस्थलपरित्यागसापेक्षत्वात्। हानस्थले सर्वत्र न तदपेक्षा; प्रायश्चित्तनाश्यपापस्थले उपायनाभावात्; भक्तेरपि प्रायश्चित्तविशेषत्वात्। अतोऽत्रोपायनाभावादपि तच्चिन्तनमनपेक्षितमिति। एतन्निरसनमपि चिकीर्षन्नेवं प्रयुङ्क्ते। अयमाशयः—यद्यप्युपासनं प्रायश्चित्तम्—अथाप्यत्र 'विधूय पापम्' इत्येवं विधूननमेवोक्तम्, न नाशनम्। धूननञ्चापसारणम्। अश्व इव रोमाणि, चन्द्र इव राहोर्मुखात् इति दृष्टान्तद्वयाच्च नाशो नेत्यवगम्यते। रोमाणि विधूयेत्यस्य रोमाणि भूतलपरिलुठनसमयलग्नसर्वपांसुरहितानि कुर्वन्नश्व इवेत्यर्थो वा, जीर्णानि रोमाणि स्वगात्रान्निरस्यन् स इवेत्यर्थो वाऽस्तु; उभयस्यापि "अश्वश्च रोमाणि विधुन्वानः त्यजन् रजः सहैव तेन रोमाण्यपि जीर्णानि शातयति" इति शाङ्करत इवासद्भाष्यकारसारसूक्तितोपि सिद्धत्वात्। सर्वथाऽश्वापसृतानि रोमाणीव, रोमतोऽपसृताः पांसव इव च, राहोरपेतश्चन्द्र इव च, पापं पृथगस्तीत्येवावगमात् तस्य स्थलमपेक्षितम्। अतो नाशाभावादुपायनं हानिस्थले सर्वत्र निराबाधमिति। एवं हानिस्थले उपायनावश्यकत्वबुबोधयिषयैव हानिचिन्तने इत्यनुक्त्वा **हाना**वित्येतन्मात्रप्रयोगोऽपि। तदयं सूत्रार्थः—हानिस्त्यागः; न तु नाशः। हानौ भवन्त्यामुपायनमप्यस्ति; हानिवाक्यस्योपायनवाक्यशेषकत्वात्। हानेर्धूननरूपतया नाशरूपत्वाभावेन हीयमानवस्तुप्राप्तिस्थलप्रदर्शकतया, कुशादिवाक्यशेषस्येव, उपायनवाक्यस्यैतद्वैशद्यवहत्वात्। उपायनमात्रश्रुतौ हानिपूर्वकत्वं तु कैमुत्यसिद्धमिति। सूत्रभावस्तु—सर्वस्य सर्वेण विदुषा ज्ञातव्यत्वे सति चिन्तनमात्रे संकोचो न युक्तः; एकतरनिर्देशस्य विकल्पपर्यन्ततात्पर्यकत्वस्य विकल्पस्याष्टदोषदुष्टतया कल्पनानौचित्यादिति। **उपायनशब्दशेषत्वा**दिति उपायनशब्दगतात् शेषत्वादित्यर्थः। उपायनशब्दशेषकत्वादिति बहुव्रीहिर्वा। **शब्दो** वाक्यम्। उपायनशेषत्वादित्यनुक्तिः हानस्योपायनस्य च वस्तुतः शेषशेषिभावाभावात्। कुशादिवाक्यस्थलेष्वपि सामान्यवाक्यस्य विशेषवाक्यमेवोपकारकमिति। एकमात्रपाठः अन्यस्यार्थसिद्धिमभिप्रेत्य। बहुस्थलपाठोऽपि प्रतिपत्तृभेदात् सार्थकः। हानेः शेषत्वे सूत्रात् प्रतीयमाने कथमन्यथा क्रियत इत्यत्राह **उपायनवाक्यस्य हीति**। अर्थस्वभावाविरोधेन हि सूत्रार्थो वर्णनीय इति भावः। ननु विद्याधिगमकालजातस्य पुण्यपापविनाशादेरेव देहावसानकाले हानशब्देनानुवादः क्रियते उपायनस्योपरि निरूपणार्थमिति उपायनवचनस्यैवात्र प्राधान्यमिति शङ्क्यम्—विनाशाद्यपेक्षया हानस्यान्यरूपत्वेन तदनुवादत्वाभावात्। अनुवादत्वेऽपि मोक्षगामिपुरुषस्य उपायनापेक्षया तद्विनाशचिन्तनस्यैव मुख्यत्वात्।

**कालापिन इति। शांकरे** भाल्लविन इति। **कुशाः** स्तोत्रीयासु ऋक्षु **गीयमानासु**

निनां तु "औदुम्बर्यः कुशाः" इति वाक्यं सामान्येन वानस्पत्यत्वेनावगताः कुशाः औदुम्बर्य इति विशिंषत् तद्वाक्यशेषतामापद्यते। तथा, "देवासुराणां छन्दोभिः" इत्यादिना अविशेषेण देवासुराणां छन्दसां प्रसङ्गे, (पैङ्गि) "देवच्छन्दांसि पूर्वम्" इति वचनं क्रमविशेषं प्रतिपादयत् तद्वाक्यशेषतां गच्छति। तथा, "हिरण्येन षोडशिनः स्तोत्रमुपाकरोति" इत्यविशेषेण प्राप्ते, (यजु. ६-६) "समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति" इति विशेषविषयं वाक्यं तद्वाक्यशेषतां भजते। तथा, "ऋत्विज उपगायन्ति" इत्यविशेषप्राप्तस्य, (यजु.३-६)"नाध्वर्युरुपगायेत्" इति वाक्यमनध्वर्युविषयतामवगमयत् तद्वाक्यशेषत्वमृच्छति॥

एवं सामान्येनावगतमर्थं विशेषे व्यवस्थापयितुं क्षमस्य वाक्यस्य तच्छेषत्वमनभ्युपगच्छद्भिस्तयोरर्थयोर्विकल्पः समाश्रयितव्यः। स च संभवन्त्यां गतौ न युज्यते। तदुक्तं पूर्वस्मिन् काण्डे, (१०-८) "अपितु वाक्यशेषः स्यात् अन्याय्यत्वाद्विकल्पस्य, विधीनामेकदेशः

---

गणनार्थमुद्गातृक्लृप्ताः शलाकाः। स्त्रीलिङ्गोऽयं शब्दः एतच्छलाकाविशेषवाची। **देवच्छन्दांसि पूर्वमिति**। न च देवासुराणामिति पाठक्रमादेव देवच्छन्दसां पूर्वत्वावगमादेतदपेक्षा नेति वाच्यम्—असुराश्च देवाश्चेति द्वन्द्वेऽपि अल्पाच्तरत्वेन देवशब्दपूर्वनिपातात् असुराणां ज्यायस्त्वेन तच्छन्दसां पूर्वभावसंदेहाच्चैतदपेक्षावश्यकत्वात्। पैङ्गिवचनमेतत्। **हिरण्येन** हिरण्यनिधानेन। **षोडशिनः** तन्नामकग्रहस्य। **स्तोत्रम्**; प्रगीतमन्त्रसाध्यगुणि(देवता)निष्ठगुणाभिधानरूपं स्तोत्रम्। **उपाकरोति** प्रस्तौति आरभते। **समयाविषिते।** विष विप्रयोगे—अर्धविप्रयुक्ते। अर्धप्रकाशिते इति वा। अर्धोदिते अर्धास्तमिते इत्यर्थद्वयेऽस्य प्रयोगेऽपि इह स्तोत्रोपाकरणकालोऽर्धास्तमयसमय एव। **तद्वाक्यशेषत्वम्**। अध्वर्युभिन्नाः ऋत्विज उपगायन्तीति पर्युदासाश्रयणात्। प्रतिषेधाश्रयणे हि विकल्पः स्यादिति भावः। **उपगानम्** उद्गातृषु गायत्सु भो इति शब्दोच्चारणम्।

नन्वस्तु हानस्य धूननरूपत्वात् उपायनस्य क्वचिदवश्यम्भावः। तत्र प्रियाप्रियव्यवस्था तथा श्रुतस्थलेऽस्तु; अन्यत्र यथातथावापीत्यत्राह **एव**मिति। एवं तर्हि कुशादिस्थलेऽपि उदुम्बरातिरिक्तवनस्पत्यादिग्रहणमपि कदाचित् स्यादिति विकल्पः स्यात्। नाध्वर्युरित्यत्र प्रतिषेधाङ्गीकारेण भिन्नवाक्यत्वे विकल्पः स्यादिति। तत्रेष्टापत्तौ दोषमाह **तदुक्त**मिति। 'यजतिषु येयजामहं करोति' इति अनारभ्याधीतवाक्येन यागेषु येयजामहो विधीयते। येयजामहकरणं नाम—'आश्रावयेति चतुरक्षरम्; अस्तु श्रौषडिति चतुरक्षरम्; यजेति द्व्यक्षरम्, येयजामह इति पञ्चाक्षरम्; द्व्यक्षरो वषट्कारः(वौषट्)' इत्युक्तसप्तदशाक्षरमन्त्रगणपठनम्। एवंस्थिते 'नानूयाजेषु येयजामहं करोति' इति वाक्यान्तरं श्रूयते। तत्र प्रतिषेधः पर्युदासो वेति विचारे—अनूयाजेषु येयजामहकरणप्रतिषेधस्वीकारे अप्रसक्तस्य प्रतिषेधायोगात् शास्त्रं विना चानुयाजेषु येयजामहकरणप्रसक्त्यभावात् शास्त्रप्राप्तस्यैव प्रतिषेधो वक्तव्य इति विकल्पः स्यात्, यथा अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीति ग्रहणाग्रहणयोः। अस्तु काममिति चेत्—सोऽष्टदोषदुष्टत्वादन्याय्यः। अतो नानूयाजेष्वित्यस्य तद्वाक्यशेषत्वसंभवात्

स्यात्" इति। तदेवं केवलहानोपायनवाक्ययोरेकवाक्यत्वात्, केवलस्य हानस्य केवलस्य चोपायनस्याभावात् विकल्पो नोपपद्यते। कौषीतकिनामुभयाम्नानमविशेषपुनश्श्रवणत्वेन प्रतिपत्तृभेदादविरुद्धम्॥ २६॥ इति हान्यधिकरणम्॥ ११॥

९४. साम्परायाधिकरणम् ३-३-१२॥

साम्पराये तर्तव्याभावात् तथा ह्यन्ये। ३। ३। २७॥

सुकृतदुष्कृतयोर्हानमुपायनं च सर्वासु विद्यासु चिन्तनीयमित्युक्तम्। तद्धानं किं देहवियोगकाले देहादुत्क्रान्तस्याध्वनि च, उत देहवियोगकाल एवेति विशये—उभयत्रेति युक्तम्, उभयथा श्रुतत्वात्।' एवं हि कौषीतकिनः समामनन्ति, (१-३-४) "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति" इत्युपक्रम्य, "स आगच्छति विरजां नदीम्। तां मनसाऽत्येति। तत् सुकृतदुष्कृते धूनुते" इति। अत्र वाक्ये अध्वनि सुकृतदुष्कृतहानिः प्रतीयते। ताण्डिनस्तु, (छा. ८-१) "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति। अत्र तु देहवियोगकाले इति प्रतीयते। शाट्यायनकेऽपि, "तस्य पुत्रा दायमुपयन्ति, सुहृदः साधुकृत्याम्, द्विषन्तः पापकृत्याम्" इति पुत्रेषु दायसंक्रान्तिसमकालं सुकृतदुष्कृतसंक्रमणं श्रूयमाणं देहवियोगकाले इति गम्यते। अतः सुकृतदुष्कृतयोरेकदेशो देहवियोगकाले हीयते; शेषस्त्वध्वनि—

---

अनुयाजभिन्नेषु यजतिषु येयजामहं करोतीति पर्युदासाश्रयणम्। अतस्तत्र न तत्प्रसक्तिरित्युक्तं पूर्वमीमांसायाम्। तथेह भाव्यमिति भावः। अत्र शांकरगृहीतो मीमांसासूत्रपाठः अर्थानुवादः, तथा सूत्राभावात्; अपित्वस्मद्भाष्यरीत्यैव। स्पष्टमिदं भामत्याम्। एवं विकल्पापत्तिसूत्रमिह सूत्रकृदभिमतमित्यस्य सर्वेष्टत्वात् चिन्तनघटनमन्तरा हानोपायनविचारमात्रस्य सूत्राभिमतत्वे केवलोपायनासंभवेन तद्वर्णनायोगात् यथाभाष्यं चिन्तनविचार एव सूत्रारूढः। नन्वमूर्तयोः पुण्यपापयोः कथं धूननमुपायनञ्च। कथञ्चान्यदीयं कर्म अन्यदीयफलहेतुरिति चेत्—विदुषः पुण्यापुण्ये नाशयन् भगवान् विदुष्यभिमानात् विद्वन्मित्रामित्रगतयोः विद्वद्विषयकसौहार्दासौहार्दरूपभावयोरेतदीयपुण्यापुण्यपुञ्जफलतुल्यं फलं प्रयच्छतीति शास्त्रतात्पर्यमित्यदोषात्॥२६॥

चिन्तनीयत्वेनोक्तं हानादि किं अंशतः कालद्वयभावित्वेन चिन्तनीयम्, उत देहवियोगकालभावित्वमात्रेणेत्येतदर्थं विचार्यते। हानोपायनान्यतरश्रवणेऽपि उभयविवक्षावत् क्वचिदेककालमात्रश्रवणेऽपि हाने कालद्वयविवक्षाऽस्तीति सर्वत्र तथैव चिन्तनमिति दृष्टान्तेन प्रत्यवस्थानम्। भाष्ये चिन्तनप्रस्तावाभावेऽपि प्रकृतपादबलात् सारग्रन्थानुरोधाच्च चिन्तनविचार एवेहापि। शेषस्त्वध्वनीति। ननु कीदृशमादौ हीयते, कीदृशः शेषः पश्चादिति कथमवधार्यम्। किञ्च संचितप्रारब्धभेदेन द्वितये कर्मव्यूहे प्रारब्धस्तावत् विदुषः भोगैकनाश्य इति तद्विषये धूननस्य दुर्वचत्वात् संचितकर्मधूननमेव 'सुकृतदुष्कृते धूनुते', 'पुण्यपापे विधूय' इत्यादेर्विषयः। तद्धूनने जातेऽपि प्रारब्धकर्मबलात् अर्चिरादिगत्यौपयिकदेहस्य, वसिष्ठादीनां देहान्तरारम्भकदेहस्य च संभवात् उपरि तत्तदयोगशंका च कथम्। अध्वप्रापककर्मलब्धत्वे च

इति प्राप्ते उच्यते—साम्पराये इति । साम्पराये—देहादपक्रमणकाले एव विदुषः सुकृतदुष्कृते निरवशेषं हीयेते । कुतः? तर्तव्याभावात्—विदुषो देहवियोगात्पश्चात् सुकृत-दुष्कृताभ्यां तरितव्यभोगाभावात् । विद्याफलभूतब्रह्मप्राप्तिव्यतिरेकेण हि सुकृतदुष्कृताभ्यां भोक्तव्ये सुखदुःखे न विद्येते । तथा ह्यन्ये देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरिक्तसुखदुःखोप-भोगाभावमधीयते, (छा. ८-१२) "अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः ··· एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते", (छा. ६-१४) "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति ॥ २७ ॥

छन्दत उभयाविरोधात् । ३ । ३ । २८ ॥

एवमर्थस्वाभाव्यात् सुकृतदुष्कृतहानिकालेऽवधृते सति, उभयाविरोधेन—श्रुतेरर्थस्व-भावस्य चाविरोधेन छन्दतः यथेष्टं पदानामन्वयो वर्णनीयः । कौषीतकिवाक्ये, "तत् सुकृत-दुष्कृते धूनुते" इति चरमश्रुतो वाक्यावयवः, "एतं देवयानं पन्थानमापद्य" इति प्रथम-श्रुतावयवात् प्रागनुगमयितव्य इत्यर्थः ॥ २८ ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

(पू) गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः । ३ । ३ । २९ ।

---

शरीरस्य पुंसाऽध्वान्ते शरीरत्यागात् कर्मणश्चाध्वप्रापणादेव क्षीणत्वात् तत्र तद्धूननोक्तिश्च कथम् । अध्व-प्रापकातिरिक्तकर्मधूननञ्चेदध्वनि, तस्य देहवियोगकाले कुतो न हानम् । कस्य कदेत्यत्र च किं विनिगमक-मिति चेत्—उच्यते । प्रारब्धस्य क्षीयमाणस्य धूननाप्रसक्तेरिति संचितधूननमेव स्वलक्ष्ये पूर्वपक्षी मन्यते । तत्र चरमस्थूलदेहवियोगकाल एव प्रारब्धस्य क्षीणत्वात् सुरनरादिभोगौपयिकसंचितकर्ममध्ये अर्चिरादि-गतिमध्यप्राप्यतत्तल्लोकसंबन्धतदनुभवोपयोगि यत् कर्मजातम्, तन्मात्रं परिगृह्य सूक्ष्मशरीरं निर्माय्याध्वानं गमयति परमात्मा । तत्कर्मातिरिक्तं सर्वं स्थूलदेहवियोगकाले हीयते । अध्वान्ते तत्कर्म च हीयते । तेन तत्कर्मसंपाद्यसुरादिजन्माभाव इति । वसिष्ठादिविषयः प्रश्नस्तु-सामान्यतः सर्वस्य तरितव्यभोगाभाव-कथनमयुक्तमित्याशयेनेति व्यक्तीभविष्यति ।

सांपरायशब्दार्थमाह देहादिति । संपराभ्यामुपसृष्ट इण्धातुर्देहवियोगार्थकः । संपरायस्यायं कालः सांपारय इति भावः । तरितव्यं प्राप्तव्यम् । अर्चिरादिगत्यर्था सूक्ष्मदेहस्थितिः न सुकृतदुष्कृताधीना, तत्फलस्याभोक्ष्यमाणत्वादिति सूत्रार्थः । उभयविधश्रुतौ तर्कानुगृहीतश्रुतेरेव प्रबलत्वात् अर्थस्वभावमनु-रुध्य देहवियोगकालकर्महानश्रुतिरेव परिगृह्यत इति भावः ॥ २७ ॥

श्रुत्यन्तरमपि निर्वहति छन्दत इति । छन्दः इच्छा ; तर्कानुगृहीतश्रुत्यर्थस्येह विवक्षानुगुण्ये-नेति यावत् । उभयं श्रुतिस्तर्कश्च । अनुगमयितव्य इति ; अन्वितार्थः कार्य इत्यर्थः । कौषितकि-वाक्यस्यान्वयश्छन्दतः, तथासत्येव श्रुतितर्कोभयाविरोधादिति सूत्रार्थः । अत्र कौषीतकिसंदर्भे बहूनि वाक्यानि छन्दतो योज्यानि सन्तीति परिष्कारे द्रष्टव्यम् ॥२८॥

**सुकृतदुष्कृतयोरेकदेशस्य देहवियोगकाले हानिः, शेषस्य च पश्चादिति** उभयधा **कर्मक्षये सत्येव** गतेरर्थवत्त्वम् ; **देवयानगतिश्रुतेरर्थवत्त्वमित्यर्थः** । अन्यथा हि विरोधः—**देहवियोगकाल एव सर्वकर्मक्षये सूक्ष्मशरीरस्यापि विनाशः स्यात् ; तथा सति केवलस्याऽऽत्मनो गमनं नोपपद्यते । अत उत्क्रान्तिसमये विदुषो निश्शेषकर्मक्षयो नोपपन्नः ॥ २९ ॥ अत्रोत्तरम्—**

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् । ३ । ३ । ३० ॥**

उपपन्न **एवोत्क्रान्तिकाले सर्वकर्मक्षयः । कथम्?** तल्लक्षणार्थोपलब्धेः—**क्षीणकर्मणोऽप्याविर्भूतस्वरूपस्य देहसंबन्धलक्षणार्थोपलब्धेः** । (छा. ८-१२-२-३) **"परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" "स तत्र पर्येति जक्षत् क्रीडन् रममाणः"**, (छा. ७-२५-२) **"स स्वराड्भवति । तस्य सर्वेषु लोकेषु कामचारो भवति"**, (छा. ७-२६-२) **"स एकधा भवति त्रिधा भवति" इत्यादिषु देहसंबन्धाख्योऽर्थो ह्युपलभ्यते । अतः क्षीणकर्मणोऽपि सूक्ष्मशरीरयुक्तस्य देवयानेन गमनमुपपद्यते ॥**

---

**गतेरर्थवत्त्व**मित्यस्य गतिश्रुतेरभिधेयवत्त्वमित्यर्थो भाष्यात् प्रतीयते । **सारावल्यनुसारेण** यथाश्रुतेऽप्यदोषात् वैशद्यायैवमुक्तमिति मन्तव्यम् । तथाचात्रैव मुक्तत्वे गतिर्व्यर्था स्यात् । मा भूदिति **न युक्तम्** ; गतिश्रुतेः इत्युक्तं भवति । **सूक्ष्मशरीरस्यापि विनाशः** स्यादित्युक्त्या सूक्ष्मशरीरपरिग्रहोत्तरक्षण एव स्थूलदेहवियोग इति तदैव सर्वकर्मक्षयः, न तु सूक्ष्मशरीरोत्पत्तेः प्रागिति विवक्षा गम्यते । अन्यथा सूक्ष्मशरीरं नोत्पद्येतेति ब्रूयात् । एवं गतिवैयर्थ्यमुक्तम् । गत्यसंभवरूपदोषमप्याह **अन्यथा-हीति** । **अन्यथेत्यस्य तथासतीत्यन्तं** व्याख्यानम् । **विरोधः** अनुपपत्तिः । नन्वणोरात्मनो गमनवत्त्वं साक्षादेव भवतीति का तावदनुपपत्तिरिति चेत्—विभुत्वेष्टौ देहवत्त्वे परं कथं गमनम् । अतो गतेः प्रयत्नसाध्यत्वात् तस्य च करणकलेबराधीनत्वात् कथं सेत्यभिप्रायः । ननु, "आसु तदा नाडीषु सृप्तो भवति" इति स्वप्नसुषुप्त्यर्थः केवलात्मनो नाडीसंचारोऽवगम्यत इति चेत्—अस्तु ; किं तेन । देहान्तःस्थत्वाद्धि तदा गन्तुं प्रयतितुं प्रभवत्येव । ननु विरजां नदीं विदेह एव यथा तरति, तथा स्यादिति चेत—'तां मनसाऽत्येति' इति तदैव साधनान्तरकथनात् ततः प्राक् कलेबरापेक्षैव गम्यत इति । सुकृतदुष्कृतधूननं तु मनसाऽत्ययानन्तरमेव ; तथैव पाठादिति पूर्वपक्ष्याशयः ॥ २९ ॥

एवं गतिवैयर्थ्यं नापादनीयम् ; सुकृतदुष्कृतधूननानन्तरमपि, 'स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति । स आगच्छति तिल्यं वृक्षम्' इत्येवमुपर्यपि गतिश्रवणात् तद्वैयर्थ्यात् । अतः सुखदुःखभोगार्थं पुण्यपापरूपकर्महीनोऽपि यथाश्रुति अर्चिरादिगत्या परं ज्योतिरुपसंपद्यैव प्रसृतप्रज्ञो भवति ; तावत् तत्संकोचहेतुः संकल्पः परमवतिष्ठते इत्यभिसंधाय समाधत्ते **उपपन्न** इति । उत्क्रान्तिकालिककर्मक्षयः इति विशेष्यमध्याहार्यम् । सत्यं सति शरीरे गच्छतीति, तत्सत्त्वमेव कथमिति शंकते **कथमिति । तल्लक्षणार्थोपलब्धेः** प्रकृतदेहसंबन्धस्थितितुल्यनानादेहान्तरसंबन्धसत्त्वस्यापि क्षीणकर्मण्युपलब्धेरित्यर्थः । तस्य लक्षण(स्वरूप)मिव लक्षणं यस्यार्थस्येति विग्रहः । तत्पदं प्रकृतसूक्ष्मदेहपरम् ;

**कथं सूक्ष्मशरीरमप्यारम्भककर्मविनाशेऽवतिष्ठत इति चेत्—विद्यामाहात्म्यादिति ब्रूमः। विद्या हि स्वयं सूक्ष्मशरीरस्यानारम्भिकापि प्राकृतसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणां च निरवशेषक्षयेऽपि स्वफलभूतब्रह्मप्राप्तिप्रदानाय देवयानेन पथा गमयितुं सूक्ष्मशरीरं स्थापयति,** लोकवत्—**यथा लोके सस्यादिसमृद्ध्यर्थमारब्धे तटाकादिके, तद्धेतुषु तदिच्छादिषु विनष्टेष्वपि तदेव तटाकादिकमशिथिलं कुर्वन्तस्तत्र पानीयपानादि कुर्वन्ति, तद्वत्॥**

अथ **स्यात्—ज्ञानिनां साक्षात्कृतपरतत्त्वानां देहपातसमये कर्मणो निरवशेषक्षयात् देहपातादूर्ध्वं सूक्ष्मशरीरमात्रं गत्यर्थमनुवर्तते, सुखदुःखानुभवो न विद्यते इति यदुक्तम्—तन्नोपपद्यते ; वसिष्ठावा(पा)न्तरतपःप्रभृतीनां साक्षात्कृतपरतत्त्वानां देहपातादूर्ध्वं देहान्तर-**

---

सामान्यतः(प्राकृत)देहपरं वा। मुक्तौ तदभावात **तल्लक्षणार्थे**त्युक्तम्। देहसंबन्धारम्भोऽर्थ इति भाष्यस्याप्यत्रैव तात्पर्यम्। तथाचाप्राकृतानन्तदेहसंबन्धवत् एतद्देहसंबन्धसत्त्वमपि कर्माधीनमिति भावः। सूक्ष्मदेहः कर्मोत्पादित इति प्रागेव पूर्वपक्षिणोक्तत्वात् स्थितिः कथमित्येवेदानीं तेन पृष्टम् ; तत्पक्ष एव स्थित्वा समाधत्ते **विद्ये**ति। **अनारम्भिकाऽपी**त्यपिशब्देन—सूक्ष्मदेहारम्भोऽपि विद्याकृत इत्येव युक्तम् ; भवता तस्य कर्माधीनत्वस्योक्तत्वात्तु अभ्युपेत्योच्यत इति सूच्यते। यदि संचितकर्मलेश एव कश्चित् सूक्ष्मदेहस्थितये स्यात्, तर्हि स स्वफलानुभवौपयिकस्थलान्तरादिप्रापकोऽपि भवेत्। तद् विहाय अर्चिरादिस्थलेषु गमनं तत्राप्यविलम्ब्य गमनं च कथम्। यदि तत् विद्यामाहात्म्यकृतम्, तर्हि तद्देहस्थितिरपि तदधीनेति किं कर्मणा। स्वर्गाद्यर्थकर्मणां तत्तन्मार्गनयनहेतुत्वमिवेदमपि विद्याया एव भवितव्यमिति। किञ्च सूक्ष्मदेहो हि स्थूलदेहस्यैव केचिदंशाः। स्थूलदेहनियन्ता जीवः प्रागेव तदंशनियन्ताऽप्यासीदेव। तदंशमात्रस्य तन्नियाम्यतया संहृत्या स्थापनं विद्याकार्यमिति न कर्मणो मुमुक्षुसूक्ष्मदेहारम्भकत्वमपीति चात्र विवक्षितं स्यात्। देहवियोगरूपमरणहेतुः कर्म सूक्ष्मदेहमुत्पाद्यैव तज्जनयतीत्यप्युच्युच्येत। परंतु न स नियमः। प्रलयप्राक्क्षणे तदभावात्। अतः प्रारब्धकर्मावसाने मरणस्यापि स्वतः प्राप्तत्वेन सूक्ष्मदेहो भाविभोगोपायायत्त इति वक्तव्यम्। एवञ्च प्रकृते विद्यैव तस्योत्पत्तौ स्थितिमात्रे वा हेतुरिति युक्त एव कर्मक्षय इति। भोगार्थोत्पादितस्थूलशरीरस्य जीर्णतया तत्कार्याभावेऽपि कार्यान्तरार्थं तदेकदेशस्थापने दृष्टान्तप्रदर्शकतया **लोकव**दिति पदं व्याख्याति **यथे**ति। लोके राजोपासनबलादिव ब्रह्मोपासनबलादेवापेक्षितलाभ इत्येतावन्मात्रपरतया **दीपसारयो**रिदं व्याख्यातम्। **अशिथिल**मिति। यथा शिथिलांशत्यागेन अशिथिलमेकदेशस्येतस्ततस्तद्गतशिलादिसंयोजनेन स्थापनं पानादिस्वल्पकार्योद्देशेन भवति ; तथेति।

उत्तरसूत्रमवतारयति **अथ स्या**दिति। **वसिष्ठापान्तरतपःप्रभृतीना**मिति। अत्र **शाङ्करम्,** "अपान्तरतमा नाम वेदाचार्यः पुराणर्षिः विष्णुनियोगात् कलिद्वापरयोः संधौ कृष्णद्वैपायनः संबभूवेति स्मरन्ति। वसिष्ठश्च ब्रह्मणो मानसः पुत्रः सन् निमिशापादपगतपूर्वदेहः पुनर्ब्रह्मादेशात् मित्रावरुणाभ्यां संबभूवेति। भृग्वादीनामपि वारुणे यज्ञे पुनरुत्पत्तिः। सनत्कुमारोऽपि····रुद्राय वरप्रदानात् स्कन्दत्वेन प्रादुर्बभूव" इत्यादि। पुनर्देहान्तरपरिग्रहेऽपि, 'त एवैते' इति

**सङ्गमः, पुत्रजन्मविपत्त्यादिनिमित्तसुखदुःखानुभवश्च दृश्यते— इति। अत उत्तरं पठति—**

**यावदधिकारमवस्थितिराधिकारिकाणाम्। ३। ३। ३१॥**

**नास्माभिः सर्वेषां ज्ञानिनां देहपातसमये सुकृतदुष्कृतयोर्विनाश उक्तः; अपितु येषां ज्ञानिनां देहपातानन्तरमर्चिरादिका गतिः प्राप्ता, तेषां देहपातसमये सुकृतदुष्कृतहानिरुक्ता। वसिष्ठादीनां** स्वाधिकारिकाणां **न देहपातानन्तरमर्चिरादिगतिप्राप्तिः; प्रारब्धस्याधिकारस्यासमाप्तत्वात्। तेषां कर्मविशेषेणाधिकारविशेषं प्राप्तानां** यावदधिकारसमाप्ति

---

**स्मृ**तिप्रसिद्धेः वसिष्ठत्वादिकं नापैतीति चोक्तम्। एवं गृहाद् गृहान्तरमिव स्वेच्छया कायान्तर सञ्चरमाणाः पूर्वसरूपदेहं परिगृह्णानाश्च पुत्रजन्मविपत्त्यादौ स्वकीयत्वाभिमानेन सुखदुःखानुभाविनश्च स्मर्यन्ते। मध्ये देहवियोगकाले कर्मक्षये स्वीकृते कथमिदं सर्वमिति। ननु सुकृतदुष्कृतविधूननं सञ्चितविषयम्; प्रारब्धं तु भोगैकनाश्यमिति वक्ष्यते। एकमेव कर्म क्रमिकानेकशरीरोत्पादकमपि भवतीति च स्वीकृतम्। अतः संचितहानावपि प्रारब्धकर्माधीनदेहलाभानुभवादौ काऽनुपपत्तिः। किञ्चोत्तरपूर्वाघाश्लेषविनाशयोः दर्शनसमानाकारध्यानरूपोपायोत्पत्तिकाल एवेष्टत्वेऽपि तदैव सुकृतदुष्कृतविधूननमस्वीकृत्य देहवियोगकाले तत्स्वीकरणं येन कारणेन, तेनैव कारणेन प्रारब्धचरमशरीरवियोगकाल एव तस्य स्वीकार्यतया मध्यकालिकदेहवियोगकाले कर्मक्षयशंकैव कथमिति चेत्—अत एव चास्य न पृथगधिकरणत्वम्। गुणसूत्रेण चानेन वक्ष्यमाणार्थस्मारणमेव क्रियते—**अपीता**वित्यादिसूत्र इवेति न दोषः। असंकोचात् सर्वधूननमेव धूननशब्दार्थ इति वादिना मध्ये धूनने प्रारब्धधूननमप्येष्टव्यमिति कृत्वा पूर्वपक्षिणाऽनुपपत्तिप्रदर्शनम्। वसिष्ठादिविलक्षणाः प्राकृताः ज्ञानिनोऽपि प्रारब्धान्तिमशरीर एव परतत्त्वविषयसाक्षात्कारात्मकज्ञानभाज इति कामं कथ्येत; वसिष्ठादिविषये तु मानविरोधान्नैवं युक्तमिति ते विशिष्य गृहीताः पूर्वपक्षिणा। अत एव यावदधिकारमिति **अधिकार**पदं प्रयुज्य समाधानम्। अधिकारो हि न सामान्यतः प्रारब्धानुभवप्रवृत्तत्वमात्रम्, किंतु पदविशेषप्राप्तिः। **आधिकारिकाणा**मिति पदस्य तदर्थमेव प्रयोगात्। एवमपि अधिकारावसानस्य प्रारब्धावसानस्य चैतद्विषये एकत्वात् प्रारब्धान्तिमशरीरवियोगकाल एव सर्वकर्मक्षयो विवक्षित इति **प्रारब्धस्यही**ति निगमयिष्यति। **जन्मविपत्तीति**। उत्पत्तिर्विनाश इत्यादीत्यर्थः। **नास्माभि**रित्यादेः, 'साक्षात्कृतपरतत्त्वज्ञानिसंबन्धियत्किञ्चिद्देहपातेऽपि भवति कर्मक्षय इति नोच्यते, किंतु चरमदेहपातसमय एव' इति विवक्षितोऽर्थः। **अर्चिरादिका गतिः प्राप्ते**ति। 'अर्चिरादिगत्यनन्तरमपि कर्मक्षयः; देहवियोगकाले सर्वथानुपयुक्तकिंचिदंशक्षयो यथार्हम्' इत्युक्तौ नेयमनुपपत्तिरिति पूर्वपक्ष्याशयः। गत्यनन्तरमित्यनुक्त्वा अर्चिरादिगत्यव्यवहितप्राग्भाविदेहवियोगकाल एव सर्वकर्मक्षय इत्युक्तौ नानुपपत्तिरिति सिद्धान्तिनः परिहारः। एवं पूर्वपक्ष्याशयानुरोधेनार्चिरादिप्रस्ताव इह समाधानावसरे। **आधिकारिकाणाम्** अधिकारे नियुक्तानां **यावदधिकारम्** पदस्थितिपर्यन्तम् अधिकारावसानपर्यन्तम् **अवस्थितिः** सुकृतदुष्कृतयोर्धूननं विना स्थितिरिति सूत्रार्थो युक्तः। ननु ततो धूनने तरितव्यभोगाभावः कथं हेतुः। विद्याप्रारम्भकाल एव एतत्तरितव्यभोगाभावस्य सिद्धतया

तदारम्भकं कर्म न क्षीयते। प्रारब्धस्य हि कर्मणो भोगादेव क्षयः। अत आधिकारिकाणां तदारम्भकं कर्म यावदधिकारमवतिष्ठते। अतस्तेषां न देहपातादनन्तरमर्चिरादिगतिप्राप्तिः॥

इति साम्परायाधिकरणम्॥ १२॥

१५. अनियमाधिकरणम्॥ ३-३-१३॥

## अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्। ३। ३। ३२॥

उपकोसलादिषु येषूपासनेष्वर्चिरादिगतिः श्रूयते, किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः, उत सर्वेषां ब्रह्मोपासननिष्ठानामिति संशये—इतरेष्वनाम्नानात्, (छा. ५-१०-१) "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते", (बृ. ८-२-१५) "श्रद्धां सत्यमुपासते" इति इतरसकलब्रह्मविद्योपस्थापकत्वे प्रमाणाभावाच्च तन्निष्ठानामेवेति प्राप्तेऽभिधीयते—अनियम इति। सर्वेषां—सर्वोपासननिष्ठानां तयैव गन्तव्यत्वात् तन्निष्ठानामेवेति नियमो नास्ति। सर्वेषां तयैव गमने हि सति, शब्दानुमानाभ्यां—श्रुतिस्मृतिभ्यामविरोधः। अन्यथा विरोध एवेत्यर्थः। श्रुतिस्तावत् छान्दोग्यवाजसनेयकयोः पञ्चाग्निविद्यायामर्चिरादिमार्गेण सर्वेब्रह्मोपासननिष्ठानां गमनमाह। "य एवमेतद्विदुः, ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवन्ति" इति वाजसनेयके; "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते, तेऽर्चिषमभिसंभवन्ति" इति छान्दोग्ये। "य इत्थं विदुः" इति पञ्चाग्निविद्यानिष्ठान्, "ये चेमे" इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनांश्चोद्दिश्यार्चिरादिका गतिरुपदिश्यते। (तै. आन. १) "सत्यं

---

तदैव धूननप्रसङ्गश्चेति चेन्न—सूक्ष्मदेहस्थितिगत्यर्थं कर्मसद्भावः पूर्वपक्ष्युक्तो न युक्तः, तत्र तरितव्यस्य भोगस्याभावात् स्थितिगत्योरपि तदधीनत्वस्यानावश्यकत्वात्। अतोऽन्यकर्मैवेदमपि, विधूयेति शास्त्रबलात् सांपरायेऽप्यैतीति हि प्रथमसूत्रार्थः॥ इदमप्यधिकरणं वेद्यैयत्तावधारणरूपमेव; देहवियोगकाले एकदेशमात्रधूननमिति पक्षस्य निरासकत्वात्॥ ३१॥

गतेरर्थवत्त्वमिति सूत्रे अर्चिरादिगतेः प्रस्तुतत्वात् तच्चिन्तनं सर्वविद्याङ्गं न वेत्यवधारयितुं तन्नियमानियमविचारः क्रियते। हानोपायनरूपसुकृतदुष्कृतधूननादेः सर्वसाधारणतया तच्चिन्तनस्य सर्वकार्यत्वेऽपि अर्चिरादिगतेः साधारण्ये प्रमाणाभावात् तच्चिन्तनं न सर्वविद्याङ्गमित्याक्षेपः। तदत्र सूत्रस्यायमर्थः—**अनियमः** नियमो नास्ति—कैश्चिदेवार्चिरादिगतिचिन्तनमिति व्यवस्था नास्ति; यतः **सर्वेषां** सर्वपरविद्यानिष्ठानामप्यर्चिरादिगतिरस्ति; तथासत्येव श्रुतिस्मृत्यविरोध इति। **सारे, सर्वोपासननिष्ठाना**मित्येतदनन्तरं **तया प्राप्तिरि**त्यस्यानुषङ्गादेवमर्थलाभः। **इतीतरेति**। इति=इति वाक्ययोः। नन्वत्रोभयत्रापि ब्रह्मोपासनमेव न प्रतीयते इत्यत्रोपपादयति **य इत्थमि**त्यादिना। अग्निपञ्चकं वा जीवमात्रं वा न पञ्चाग्निविद्योपास्यमिति अप्रतीकालम्बनसूत्रे वक्ष्यमाणत्वात् सुग्रहमिति, अवशिष्टं व्याख्याति; तत्र पूर्वपक्षिणा छान्दोग्यवाक्यस्य पूर्वं निर्दिष्टत्वात् तद् गृहीत्वाऽर्थमाह। वाक्यान्तरोपलक्षणमिदम्। नात्र श्रद्धातपस्सत्यवचनानामुक्तिरिति ज्ञप्तये विशदयति **सत्यं ज्ञानमि**ति। **श्रद्धां सत्यमुपासते** श्रद्धां पुरस्कृत्य ब्रह्मो-

ज्ञानमनन्तं ब्रह्म", (छा. ७-१७) "सत्यं त्वेव विजिज्ञासितव्यम्" इति सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः तपश्शब्दस्यापि तेनैकार्थ्यात् सत्यतपश्शब्दाभ्यां ब्रह्मैवाभिधीयते। "श्रद्धापूर्वकं ब्रह्मोपासनं चान्यत्र श्रुतम् "सत्यं त्वेव विजिज्ञासितव्यम्" इत्युपक्रम्य, "श्रद्धा त्वेव विजिज्ञासितव्या" इति। स्मृतिरपि, (गी. ८-२४) "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" इति सर्वेषां ब्रह्मविदामनेनैव मार्गेण गमनमित्याह। एवंजातीयकाः श्रुतिस्मृतयो बह्वयः सन्ति। एवं सर्वविद्यासाधारणी इयं गतिः प्राप्तैवोपकोसलविद्यादावनूद्यते ॥ ३२ ॥ इति अनियमाधिकरणम् ॥ १३ ॥

९६. अक्षरध्यधिकरणम् ३-३-१४ ॥

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्। ३। ३। ३३ ॥

बृहदारण्यके श्रूयते, (बृ. ५-८-८) "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्क-मश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यम्। न तदश्नाति किंचन ...।

पासते। श्रद्धा तप इति इत्यत्रापि श्रद्धेत्यस्य श्रद्धयेत्यर्थः। तपो ब्रह्म, इत्युपासते तत्तत्प्रोक्त-प्रकारेणोपासते इत्यर्थः। श्रुतिद्वयेऽपि श्रद्धापदेन लक्ष्मीग्रहणे तु नान्वयक्लेशः। इतिशब्दबलाच्च श्रद्धा तप इति पदद्वयं प्रथमान्तम। य एवम्, येचामी इति विभज्य निर्देशस्थले उत्तरयच्छब्देनाविशेषेण सर्वविद्यानिष्ठग्रहणमेव स्वरसम्—तदनुवादेनोपरि अर्चिरादिगतिविधानात् अर्चिरादिश्रवणं क्वचिदेवा-न्यत्र दृष्टमित्येतावन्नोद्देश्यसंकोचायोगादिति सिद्धान्त्याशयः। बह्वय इति। तत्तद्विद्याप्रकरणेऽर्चिरादि-श्रवणस्य तत्तन्मात्रविषयकतया संकोचेन तत्रतत्र विधिकल्पनापेक्षया, 'ये चामी, "द्वे सृती अश्रृणवम्" इत्यादिश्रुत्यनुरोधेन सर्वविषयकत्वसिद्धया तत्तदंशानुवादस्तत्रतत्रेति युक्तमिति भावः। स्मृतिश्च—"य एनमेतज्जानन्ति ये चारण्यकमाश्रिताः। उपासते तपः सत्यं श्रद्धया परया युताः। क्रमात् ते संभवन्त्य-र्चिरहः शुक्लं तथोत्तरम्" इत्यादिः। अभिसंभवन्तीति श्रुतिपदस्थाने संभवन्तीति पदं स्मृतौ। संभूतिः संगमः। अनूद्यत इति। पञ्चाग्निविद्याया अस्याश्चोपकोसलविद्यायाः छान्दोग्यरूपैकताण्डिशाखा-स्थतया द्विरर्चिरादिमार्गोक्तेः प्रतिपत्तृभेदेनोपपत्त्ययोगात् एकत्रैव विधिः, अन्यत्रानुवाद इति स्थिते, पञ्चाग्निविद्यायामेव ये, येचेति सर्वसाधारण्येन विधानसंभवादिहैवानुवादता। तेऽर्चिषमेवाभिसंभवन्ती-त्येवकारदर्शनात् वाक्यस्य तदर्थविधान एव नैर्भयं वक्तव्यमित्यतोऽपि मार्गोक्तिरनुवाद एव। शव्य-करणेऽकरणेप्ययं मार्गो भक्तिनिष्ठानां ध्रुव इत्यत्रैवैतच्छ्रुतितात्पर्यम्। एवमर्चिराद्यनुवादाच्च प्राणो ब्रह्मे-त्यादिः पूर्व उपदेशः ब्रह्मपर एवेति शुश्रूषोरवधारणं भवतीति स सार्थः। एवं तत्रतत्र द्रष्टव्यम् ॥ ३२ ॥

अङ्गचिन्ता वृत्ता। पुनः प्रधानविद्याविषयचिन्तैवारभ्यते। तत्र सर्वविद्यासाधारणांशः कश्चित् प्रथमं चिन्त्यते। कचिच्छ्रुतस्यापि सर्वसाधारण्यं श्रुतिस्मृत्यविरोधायार्चिरादिविषये युक्तम्, न स्थूलत्वादि-ष्वित्याक्षेपः। अस्थूलमित्यादौ यथायथं कचित् तत्पुरुषः, कचिद् बहुव्रीहिः; सर्वत्र बहुव्रीहिरेव वा।

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति। तथा आथर्वणे, (मु. १-१-५) "अथ परा ; यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्" इति।

तत्र संशयः—किमिमे अक्षरशब्दनिर्दिष्टब्रह्मसंबन्धितया श्रुताः अस्थूलत्वादयः प्रपञ्चप्रत्यनीकतास्वरूपाः सर्वासु ब्रह्मविद्यास्वनुसन्धेयाः, उत यत्र श्रूयन्ते तत्रैव—इति। किं युक्तम्? यत्र श्रुतास्तत्रैवेति। कुतः? विद्यान्तरस्य रूपभूतानां गुणानां विद्यान्तरस्य रूपत्वे प्रमाणाभावात् ; प्रतिषेधरूपाणामेषामानन्दादिवत् स्वरूपावगमोपायत्वाभावाच्च। आनन्दादिभिरवगतस्वरूपे हि ब्रह्मणि स्थूलत्वादयः प्रपञ्चधर्माः प्रतिषिध्यन्ते ; निरालम्बनप्रतिषेधायोगात्—

एवं प्राप्ते प्रचक्ष्महे—अक्षरधियां त्ववरोधः—इति। अक्षरब्रह्मसंबन्धिनीनामस्थूलत्वादिधियां सर्वब्रह्मविद्यास्ववरोधः—संग्रहणमित्यर्थः। कुतः? सामान्यतद्भावाभ्याम्—सर्वे-

**प्रपञ्चप्रत्यनीकते**ति। प्रपञ्चवैशिष्ट्ये सत्यपि प्रापञ्चिकपदार्थस्य चेतनाचेतनरूपस्य यथा तत्तद्वैशिष्ट्यं कर्माधीनविकारात्मकम्, न तादृशं तस्येति चेतनाचेतनवैलक्षण्यरूपामलत्वपर्यवसायित्य इत्यर्थः। तेन कथमनन्तधर्मचिन्तनसंभव इति शंकाऽपि परिहृियते। ननु यथा 'सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दो ब्रह्म' इति एकत्र श्रुतानामपि सर्वान्वयित्वमर्थसामान्यात् आनन्दाद्यधिकरणे उक्तम्, तथा स्यादित्यत्राह **प्रतिषेधे**ति। अभावरूपाणामित्यर्थः। "लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते (तादृगेव= लब्धरूपमेव) इति, न्यायेन, अत्रेदं नास्ति, इदमिदं न भवतीत्युभयविधाभावप्रतीतिं प्रत्यपि प्रतियोग्यनुयोग्युभयज्ञानस्यापेक्षिततया अभावविशेष्यस्य धर्मिणो ब्रह्मणो ग्रहणपूर्वकमेव तत्र तस्यानुसंधेयतयाऽभावनिरपेक्षं तस्मिन् ज्ञाते सति कथमभावात्मनो धर्मस्य स्वरूपनिरूपकत्वमिति भावः। एतदेवाह **निरालम्बने**ति। आनन्दादिरूपतया किं जीवब्रह्मोभयग्रहणम्, उत ब्रह्ममात्रस्य। आद्ये, तदुद्देशेनास्थूलत्वादेर्विधीयमानस्य जीवसाधारण्यापत्तिः। अन्त्ये च, एतद्विनैव तन्मात्रग्रहणात् किमनेनेति भावः।

**सामान्यतद्भावाभ्या**मित्यत्र **सामान्य**पदस्य नार्थसामान्यपदसमानार्थता ; अर्थेन ब्रह्मणा समानत्वं तत्प्रतीत्यन्तर्भाव इत्यर्थस्य तद्भावपदेन बोधनात्। अतोऽन्यमर्थमाह **ब्रह्मणः समानत्वादि**ति। नन्वेकधर्मिकत्वरूपमिदं सामान्यं सौशील्यादिगुणान्तरातिप्रसक्तत्वादसाधकम् ; तद्भावमात्रस्य पर्याप्तत्वादिदं व्यर्थञ्चेति चेन्न—विशिष्ट एक एव हेतुः। तत्र धर्मि ब्रह्मैव यदि सर्वसमानं न स्यात्, न ब्रह्मान्तर्भावमात्रेणास्थूलत्वादेः सर्वविद्यासाधारण्यं स्यात्। अतः अस्थूलत्वादि सर्वविद्यासाधारणम् सर्वसमानब्रह्मप्रतीत्यन्तर्भावादित्यनुमाने समानत्वं ब्रह्मविशेषणं देयं **सामान्य**पदेनोच्यत इत्यदोषात्। किञ्चात्राक्षरविद्यायाम्, एतद्वै तदक्षरम्, एतस्य वाऽक्षरस्येत्येवं क्रियासमभिहारेणाक्षरकीर्तनात् तत्पदोपस्थिताक्षरत्वशिष्टधर्म्युद्देशेनैवास्थूलत्वादिविधानात् अक्षरत्वविशिष्टाविषयकविद्यान्वयः कथमस्थूलत्वादेरिति शंका न युक्ता ; अक्षरत्वविशिष्टस्यापि समानत्वादिति दर्शयितुं **सामान्य**पदम्। अत एव **अक्षरस्य ब्रह्मणः**

सूपासनेषूपास्यस्याक्षरस्य ब्रह्मणः समानत्वात्, अस्थूलत्वादीनां तत्स्वरूपप्रतीतौ भावाच्च। एतदुक्तं भवति—असाधारणाकारेण ग्रहणं हि वस्तुनो ग्रहणम्। न च केवलमानन्दादि ब्रह्मणोऽसाधारणमाकारमुपस्थापयति; प्रत्यगात्मन्यप्यानन्दादेर्विद्यमानत्वात्। हेयप्रत्यनीको ह्यानन्दादिर्ब्रह्मणोऽसाधारणं रूपम्। प्रत्यगात्मनस्तु स्वतो हेयविरहिणोऽपि हेयसंबन्धयोग्यताऽस्ति; हेयप्रत्यनीकत्वं च चिदचिदात्मकप्रपञ्चधर्मभूतस्थूलत्वादिविपरीतरूपम्। अतोऽसाधारणाकारेण ब्रह्मानुसन्दधता अस्थूलत्वादिविशेषितज्ञानानन्दाद्याकारं ब्रह्मानुसन्धेयमिति

---

समानत्वादिति भाषितम्। अस्थूलत्वादिधर्मसमुदायस्याक्षरत्वरूपामलत्वाभिन्नतया अक्षरत्वविशिष्टमेव सर्वत्रोपास्यते। अक्षरपदोपक्रमेण विहिततया अक्षरविद्येति नामभाजो विद्याया विशेषरूपं तु भूतयोनित्वसर्वज्ञत्वसूर्यादिप्रशासकत्वादीति भावः। आनन्दत्वादेरेव पर्याप्तत्वात् प्रतिषेधस्य स्वरूपनिरूपकत्वायोगाच्चायुक्तमिदमिति पूर्वपक्षयुक्तविषये सूत्राभिमतं परिहारं विशदयति एतदुक्तं भवतीति। प्रत्यगात्मन्यपीति। उपासनेषु नानन्दादिरूपधर्म्युद्देशेन अस्थूलत्वादिविधिः, येनातिप्रसंगः स्यात। किंतु हेयप्रत्यनीकत्वविशिष्टानन्दरूपब्रह्मोद्देशेन निरूपितस्वरूपगुणादिविधिः। एवमुद्देश्यविशेषणतया वस्तुव्यावर्तकत्वमेषाम्। यथा रूपरहितस्पर्शवान् वायुरिति वायुपदव्यवहार्यताकथने; यथा च सास्नाराहित्यविशिष्ट-गोसरूपसंस्थानयुक्तवस्तुसंनिकर्षे अयं गवय इति ग्रहणे—तथेहापीति विमृश्यमिति भावः। ननु तर्ह्यतिप्रसक्तस्यानन्दत्वादेः स्वरूपनिरूपकत्वं कथमिति चेत्-भवत्येव गवयसंस्थानस्येव। अतिप्रसक्तिपरिहारश्च प्रतिषेधवैशिष्ट्येन। न च प्रतिषेध एवालमिति शंक्यम्-किञ्चिद्धर्मावच्छिन्न एवाभावस्य ग्राह्यतया तस्यावश्यकत्वात्; तत्र विनिगमकाभावात् सर्वग्रहणात्। सत्यत्वज्ञानत्वादिषु उत्तरोत्तरं पूर्वपूर्वव्यावर्तितव्यावर्तकमिति जन्माद्यधिकरणभाष्योक्ततया साधारण्यं सत्यत्वादेरवगम्यते। एवमत्रानन्दस्य साधारणत्वोक्त्यैवानन्दोऽयं न मुख्यानन्दमयत्वरूप इति ज्ञायते। नन्वानन्त्यस्य त्रिविधपरिच्छेदराहित्यस्यासाधारण्यमेवेति चेत्—उच्यते—जगत्कारणत्वेन लक्षणेन ब्रह्मणि सर्वेतरभेदः सिद्धः। अथापि बद्धमुक्तनित्यसाजात्यशंकायां तद्वैलक्षण्यज्ञापनम् सत्यं ज्ञानमनन्तं ब्रह्मेत्यनेन कृतम्। अपुरुषार्थत्वभ्रमश्च आनन्दत्वानुसंधापनेन वारितः। अथापि सर्ववस्तुसामानाधिकरण्यार्हत्वरूपानन्त्यवत्त्वात् तत्तद्वस्तुसंबन्धप्रयुक्तविविधहेयापत्तिशंकायाम्, 'न तु दृष्टान्तभावात्', 'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्', भेदादिति चेन्न प्रत्येकमतद्वचनात्', 'अरूपवदेव हि तत्प्रधानत्वात्' इति सूत्रदर्शितं परिहारं ज्ञापयितुम् अस्थूलादि रूपप्रतिषेधप्रसक्तिः। बहुव्रीहिबलाद्धि स्थूलादिसंबन्ध्यपि ब्रह्म न चेतनाचेतनवत् तत्संबन्धि, किंत्वन्यादृशरीत्येति निरूप्यते। अत एवास्थूलवाक्यान्ते, "न तदश्नाति कश्चन, न तदश्नाति किञ्चन" इति वैलक्षण्यातिशयो निगम्यते। अतो जगद्धेतुत्वोक्तियदोषव्यपनयनप्रकारेषु सत्यादिपदकार्येष्वयमपि कश्चित्। अस्याप्यानन्दाद्यधिकरणसिद्धत्वेऽपि प्रतिषेधरूपत्वात् स्वरूपनिरूपकत्वासंभवशंकायां तन्निरासाय पृथगत्र विचारः।

नन्वभावस्यास्मत्सिद्धान्ते भावात्मकतया कोऽसौ भावरूपो धर्मः; यदि सत्यत्वादिरेव, तर्हि पृथग्वर्णनं व्यर्थम्। अन्यश्चेत् कोऽसाविति चेत्—सूक्ष्ममिति निर्दिष्टो धर्म इति टीकायाम्। सत्य-

अस्थूलत्वादीनामानन्दादिवत् ब्रह्मस्वरूपप्रतीत्यन्तर्भावात् सर्वासु ब्रह्मविद्यासु तथैव ब्रह्मानुसन्धेयमिति ।

गुणानां प्रधानानुवर्तित्वे दृष्टान्तमाह-औपसदवत् इति । यथा जामदग्न्यचतूरात्रपुरो-

---

त्वादिधर्मस्यापि तथात्वेऽपि साक्षाददृष्टगोव्यक्तिं पुरुषं प्रति गोत्वस्यैवाश्वभेदरूपत्वोपदेशस्य आवश्यकता, तथैवादृष्टब्रह्मणोऽस्मान् प्रति तद्गतस्य सत्यत्वादेरस्थूलत्वादिरूपत्वज्ञापनस्यावश्यकतेत्यपि वदन्ति । यो हि स्वप्रकाशं निर्विशेषं ब्रह्मैव जीव इति मन्यते, तस्य मते जीवस्य दृष्टत्वे ब्रह्मणोऽपि दृष्टत्वमिति न तत्रास्थूलत्वाद्युपदेशस्यावश्यकता, न त्वस्मन्मते इति तदाशयः । वस्त्वन्तरसाधारणं चेत् सत्यत्वादि, तदा तत् नास्थूलत्वादिरूपम् । अदृष्टे ब्रह्मणि शब्दोपात्ते स्थूलादिसंबन्धनिबन्धनदैन्यशंकापरिहाराभावेऽपि, तस्मिन् दृष्टे सति शंकाप्रसक्त्यभावात् अगात्या इमे अधिकरणस्वरूपा इत्यपि स्यादित्यन्ये । यदि तत् परं ब्रह्म स्वात्मानं प्रदर्शयदपि कस्यचित् स्वगतमस्थूलत्वादिविशेषं न दर्शयेत् , तदा अवतारस्वरूपस्वप्राकृतत्वादर्शनवत् एतददर्शनमप्येष्टव्यमिति भावरूपधर्मान्तरमेवास्थूलत्वादि ; न हि निर्विशेषमस्मन्मते ब्रह्म ; न चैतावदधिकं भावरूपं तस्य न युक्तमिति शासनमस्ति । अतः कामं सन्तु भावा एव बहवः । स्वरूपनिरूपकत्वञ्चैषाम् , 'असति कतिपयांशप्रत्यक्षप्रतिबन्धे, स्वरूपदर्शनमस्य भवतु'इति ब्रह्मसंकल्पे सति सर्वांशविशिष्टतयैव स्वरूपग्रहणादुपपद्यते । अद्रव्यस्य च द्रव्यधर्मस्यानन्तप्रकारता **न्यायसिद्धाञ्जनो**क्ता । 'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः'इति न्यायो भाव्यः इत्यलम् ।

एकत्रोक्तस्यान्यत्र स्वप्रधानानुसारेण संबन्धे दृष्टान्त उच्यते **औपसदव**दिति । उपसदाख्यकर्माङ्गभूतमन्त्रवदित्यर्थः । तदवतारयति **गुणाना**मिति । प्रकरणान्तराम्नातानामिति शेषः । **प्रधानानुवर्तित्वे** स्थलान्तरगतप्रधानानुसारित्वे । विवृणोति **जामदग्न्ये**ति । सामवेदविहितस्य मन्त्रस्य यजुर्वेदविहितकर्माङ्गतया प्रयोगकाले सामवेदीयमुच्चैष्ट्वं परित्यज्य यजुर्वेदीयमुपांशुत्वमाद्रियते ; कर्मण प्रधानस्य यजुर्वेदीयत्वात् । तद्वदित्यर्थः । गुणमुख्याधिकरणात् पूर्वस्मिन्नधिकरणे, उच्चैः ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा इति वाक्यानि गृहीत्वा, किमेतानि वाक्यानि ऋगादिमन्त्राणामुच्चैष्ट्वादिविधायकानि, किं वा ऋगादिपदानां तत्तद्वेदपरत्वेन ऋग्वेदविहितं सामवेदविहितं यजुर्वेदविहितं चोद्दिश्य क्रमेण स्वरविधायकानि इति विचार्य, ' अग्नेः ऋग्वेदः '' इत्येवमुपक्रमे वेदप्रस्तावात् ऋगादिपदानां तदविरोधाय वेदपरत्वमेवेति उत्तरः पक्षः स्थापितः । तर्हि सामवेदपठितस्य मन्त्रस्य तत्र विहितत्वेनोच्चैष्ट्वप्राप्तौ प्रधानस्य यजुर्वेदविहिततया तदनुरोधायोपांशुत्वमेवेत्युक्तं गुणमुख्याधिकरणे । न च यजुर्वेदविहितोद्देशेनेत्यस्य विहितमन्त्रोद्देशेनेत्यर्थमनुक्त्वा कर्मोद्देशेनेति कथमर्थवर्णना, स्वरस्य कर्मण्यनन्वयादिति वाच्यम्—व्रीहिभिर्यजेत, आरुण्येन क्रयं भावयेदित्यादिवत् उचितद्वारा तदन्वयसंभवाददोषात् । विधिवाक्ये क्रियत इत्येव पदसत्त्वेन विशिष्य मन्त्रमात्रस्योद्देश्यत्ववचनासंभवात् । न च पूर्वाधिकरण एव तत्तद्वेदविहितकर्माङ्गभूतमन्त्रोद्देशेन स्वरविधिरिति वाक्यार्थस्योक्तत्वात् अत्र सामवेदीयस्वरस्य कथं प्रसक्तिरिति शंक्यम्-एतदधिकरणानन्तरमेव तथानिष्कर्षलाभात् ; पूर्वं तु ऋगादिमन्त्ररूपार्थत्यागेन

**डाग्न्युपसद्गुणभूतः सामवेदपठितः,** (ताण्ड्यमहाब्राह्मण २१-१०-११) **"अग्निर्वै होत्रं वेः" इत्यादिको मन्त्रः प्रधानानुवर्तितया याजुर्वेदिकेनोपांशुत्वेन प्रयुज्यते। तदुक्तं प्रथमे काण्डे,**

---

ऋग्वेदादिरूपार्थग्रहणं सिद्धान्तितम्। अथात्र 'क्रियत' इत्येतदर्थशोधनम्। क्रियते विधीयते प्रयुज्यत इत्यर्थात् मन्त्रोपि गृह्येत, कर्मापि॥

अत्र भाष्यवार्तिकाभिमतोदाहरणभेद-सूत्रार्थभेदादिकमन्यत्र द्रष्टव्यम्। बादरायणेनौपसदस्योदाहरणेन तत्र संवादार्थैतत्सूत्रग्रहणं कृतं यथा विशदमवगम्येत, तदर्थं वक्तव्यमिह विमृश्योच्यते—

पञ्चविंशतिब्राह्मणाख्ये ताण्ड्यमहाब्राह्मणे(२१-९)एकविंशे नवमान्ते चतुर्वीरनामकश्चतूरात्र उक्तः। वीरपुत्रचतुष्टयहेतुरहीनोऽयम्। (२१-१०) उपर्यन्ये त्रयश्चतूरात्राः जमदग्नेः वसिष्ठस्य विश्वामित्रस्य च। आदिमः पुष्ट्यर्थः; द्वितीयो हीनतावारकः; तृतीयो भ्रातृव्यपराभवार्थः। तत्र जामदग्न्यचतूरात्रे श्रूयते, पुरोडाशिन्य उपसदो भवन्तीति। आग्नेयैककपालप्रभृतीनां द्वादशकपालपर्यन्तानां द्वादशानामुपसदां मन्त्राश्च, "अग्ने वेर्होत्रं वेरध्वरम्, मा पितरं वैश्वानरमवसेऽकरिन्द्राय देवेभ्यो जुहुता हविः स्वाहा" (हे अग्ने! होतृकृत्यं **वेः** विद्धि। **अकः**—अभिमुखं कुरु मां **पितरं** पालकं विश्वनरहितकरम्, **अवसे** मद्रक्षणाय) इत्यादयः पश्चात् पठिताः।

नन्वत्र प्रधानस्य कर्मणो मन्त्रस्य च सर्वस्य सामवेदविहितत्वात् उच्चैष्ट्वमेवेति कथमत्र विवादः, कथंतराञ्चोपांशुस्वरः। न च—अस्तु तर्हि शाकरोक्तम्। तत्र हि स्वरविचारं विहाय मन्त्रा इमे उद्गातृकर्तृका वा अध्वर्युकर्तृका वेति विचार्य पुरोडाशप्रदानस्याध्वर्युकर्तृकत्वात् अङ्गभूते मन्त्रेऽपि तत्कर्तृकत्वमिति **औपसदव**दित्यस्यार्थवर्णनादिति वाच्यम्—पूर्वमीमांसायां प्रकृतपूर्वाधिकरणे स्वरस्यैव प्रसक्तत्वेन तद्विचारस्यैव कृतत्वात् कर्तृविचाराभावात। पुरोडाशप्रदानभूतस्य च यागस्य यजमानकर्तृकतयाऽध्वर्युकर्तृकत्वायोगात; होमस्य तत्कर्तृकत्वेपि मन्त्रोऽपि तेनैव पठनीय इति निर्धारणायोगाच्च। अन्यथा हौत्रमन्त्राणामध्वर्युकर्तृकत्वापत्तेः। आध्वर्यवसमाख्यातान्तर्भावे तु समाख्याबलादेवाध्वर्युकर्तृको मन्त्रपाठ इति नाङ्गप्रधानभावस्तत्र हेतुः। **भामत्याम्,** मीमांसासूत्रेणान्वयसामञ्जस्याय तदर्थोऽन्यथोक्तः—मन्त्रपाठः उद्गातृवेदे, विनियोगश्चाध्वर्युकार्ये; तत्र विनियोगानुसारात् मन्त्रपाठोऽध्वर्युकर्तृक इति। तदपि विशेषगमकाभावे चिन्तनीयमेव। अस्तु तद् यथा तथा। प्रकृतभाष्यनिर्वाहः कथमिति चेत्—उच्यते—यथा समवेदे, तथा तैत्तिरीयेऽपि, (७-१ ९) 'जमदग्निः पुष्टिकामश्चतूरात्रेणायजत' इत्यारभ्य, पुरोडाशिन्य उपसदो भवन्तीति श्रूयते। तत्र यजुर्वेदाध्येतृकर्तृकेऽस्मिन् चतूरात्रे सामवेदपठितेषु मन्त्रेषु गृह्यमाणेषु उपांशुस्वर एव भवति, नोच्चैष्ट्वमित्युच्यत इति।

अथेदमपि विमृश्यम्—एकत्र श्रुतानामप्यस्थूलत्वादीनामन्यत्र संबन्धः, तत्प्रधानस्य सद्भावादित्यत्र दृष्टान्ते उच्यमानेऽपि, सामवेदविहितचतूरात्रोपसत्संबन्धितया तत्रोक्तानां मन्त्राणां यजुर्वेदेपि ग्रहणमस्ति, प्रधानानुविधानादित्ययमर्थः पर्याप्तः। स्वरविचारः किमर्थ इति चेत्—उच्यते। एतावदेव औपसदवदित्यत्राभिप्रेतम्। अत्र संवादं दर्शयितुं तदुक्तमित्युक्तम्—तत्र च स्वरविचार एव कृतः।

(३-३-९) "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः" इति ॥ ३३ ॥

नन्वेवं सर्वासु ब्रह्मविद्यासु ब्रह्मण एव गुणित्वात् गुणानां च प्रधानानुवर्तित्वात्, (छा. ३-१४-४) "सर्वकर्मा सर्वगन्धः सर्वरसः" इत्यादेर्गुणजातस्य प्रतिविद्यं व्यवस्थितस्याप्यव्यवस्था स्यात् । तत्राह—

इयदामननात् । ३ । ३ । ३४ ॥

आमननम्—आभिमुख्येन मननम्—अनुचिन्तनम् । आमननाद्धेतोरियदेव गुणजातं सर्वत्रानुसन्धेयत्वेन प्राप्तम्, यत् अस्थूलत्वादिविशेषितमानन्दादिकम् । येन गुणजातेन विना ब्रह्मस्वरूपस्येतरव्यावृत्तस्यानुसन्धानं न संभवति, तदेव सर्वत्रानुवर्तनीयम्; तच्चेयदेवेत्यर्थः । इतरे तु सर्वकर्मत्वादयः प्रधानानुवर्तिनोऽपि चिन्तनीयत्वेन प्रतिविद्यं व्यवस्थिताः ॥ ३४ ॥

इति अक्षरध्यधिकरणम् ॥ १४ ॥

९७. अन्तरत्वाधिकरणम् ॥ ३-३-१५ ॥

अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् । ३ । ३ । ३५ ॥

---

तद्घटनाय तदप्युपदर्शितम् । तेनेदमुक्तं भवति—अन्यवेदीयमन्त्रस्य वेदान्तरे प्रधानानुरोधेन ग्रहणे पूर्वस्वरमुपेक्ष्य प्रधानानुसारिस्वरो ग्राह्य इति जैमिनिना स्थापितत्वात् एकत्रोऽन्यत्रापि ग्रहणमस्तीति सिद्धं किलेति । एवञ्च गुणमुख्यव्यतिक्रमाद्यंशस्य प्रकृतानुपयोगेऽपि न दोषः; संवादप्रदर्शनस्य तद्विषयासंबन्धात् । तत्सूत्रार्थस्तैरुक्तोऽस्तु नाम; एवमत्र भाव्यते—मन्त्रस्य क्वचिद् विहितत्वे, कर्मणश्चान्यत्र विधौ सति विहितमन्त्रोद्देश्यके विहितकर्मोद्देश्यके च स्वरे प्राप्ते, गुणमुख्यव्यतिक्रमे=अङ्गस्वरस्य प्रधानस्वरस्य च विरोधे सति गुणस्य मुख्यार्थत्वात् मुख्येन=मुख्यद्वारक एव, स्वरस्य वेदसंयोग इति सूत्रार्थ इति । तथाच क्रियत इत्यस्य अनुष्ठीयत इत्यर्थात् कर्मण एव विशिष्य ग्रहणात् वेदविहितकर्मोद्देशेनेति प्रतीतार्थ एव पर्यवसानमिति ॥ ३३ ॥

नन्वेवमिति । एवं एवंसति । ननु, 'इतरे त्वर्थसामान्यात्' इति सूत्रं पूर्वसूत्रे तद्भावपदञ्चावधारयतां कथमेवं शङ्कावकाश इति चेत्—अयं भावः—प्रतिषेधानां स्वरूपनिरूपकत्वेनाभिमतानां किमभावत्वेन रूपेण स्वरूपनिरूपकत्वम्, भावरूपेण वा । आद्ये प्रपञ्चगतव्यक्तीनां सर्वासामेव सर्वप्रकारेण व्यावर्तनीयतया हि प्रतियोगिनामसर्वज्ञदुर्ज्ञानतया प्रतिषेधाग्रहणमेव । नान्त्यः, परमात्मगुणानां सर्वकर्मत्वादीनां सर्वेषामपि तत्तद्विरोधिप्रत्यनीकाकारतया तेषामपि ग्रहणमावश्यकमिति तद्दोषतादवस्थ्यम्, विद्याव्यवस्थाविलोपश्चेति । इयत् आनन्दाद्यधिकरणे यावदुक्तम् एतावदेव, आमननात् एतावतैव ब्रह्मस्वरूपस्य प्रतिपन्नत्वात्, एतावदंशस्य सम्यङ्मननसंभवाच्च सर्वानुगतमित्यर्थः । वस्तुत एषामभावानां भावरूपत्वेऽपि अभावत्वेनैवानुसंधानम् । न च दुर्ग्रहत्वम्—संग्रहेणानुसंधेयाकारस्यापि आमननात्= निरवद्यं निरञ्जनम्, निरनिष्टः, निर्दोषम् इत्येवमुपदेशात् । स्वप्रतिकूलाश्रयत्वप्रसक्तिराहित्यरूपमखिलहेयप्रत्यनीकत्वात्मकममलत्वमेकं विवक्षितमिति; अत्रैवान्याधीनस्वरूपहेयाभावोऽप्यन्तर्भवति ॥ ३४ ॥

बृहदारण्यके उषस्तप्रश्न एवमाम्नायते, (बृ. ५-४-१) "यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः, तं मे व्याचक्ष्व" इति। तस्य प्रतिवचनम् "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः; योऽपानेनापानिति स त आत्मा" इत्यादि। अतुष्टेन तेन पुनः पृष्ट आह, "न दृष्टेर्द्रष्टारं पश्येः; न श्रुतेः श्रोतारं शृणुयाः; न मतेर्मन्तारं मन्वीथाः; न विज्ञातेर्विज्ञातारं विजानीयाः; एष त आत्मा सर्वान्तरः। अतोऽन्यदार्तम्" इति। तथा तदनन्तरं कहोलप्रश्ने चैवमाम्नायते, "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्व" इति। प्रतिवचनं च, "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति। एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च" इत्यादि, "अतोऽन्यदार्तम्" इत्यन्तम्। तत्र संशय्यते—किमनयोर्विद्याभेदोऽस्ति, नेति। किं युक्तम्?

भेद इति। कुतः? रूपभेदात्। प्रतिवचनभेदाद्रूपं भिद्यते। प्रश्नस्यैकरूप्येऽपि प्रतिवचनप्रकारो हि भेदेनोपलभ्यते। पूर्वत्र प्राणनादीनां कर्ता सर्वान्तरात्मत्वेनोच्यते; परत्राशनायापिपासादिरहितः। अतः पूर्वत्र प्राणिता देहेन्द्रियबुद्धिमनःप्राणव्यतिरिक्तः प्रत्यगात्मोच्यते; परत्र तु तदतिरिक्तोऽशनायापिपासादिरहितः परमात्मा। अतो रूपं भिद्यते। भूतग्रामवतश्च प्रत्यगात्मनः, तस्य भूतग्रामस्य सर्वस्यान्तरात्मत्वेन सर्वान्तरत्वमप्युपपन्नम्। यद्यपि प्रत्यगात्मनः सर्वान्तरत्वं भूतग्राममात्रापेक्षत्वेनापेक्षिकम्—तथापि तदेव ग्राह्यम्। अन्यथा मुख्यान्तरात्मपरिग्रहलोभात् परमात्मस्वीकारे प्रतिवचनभेदो नोपपद्यते। प्रतिवचनं हि पूर्वत्र प्रत्यगात्मविषयम्, परमात्मनः प्राणितृत्वापानितृत्वाद्यसंभवात्। परं च परमात्मविषयम्; अशनायापिपासाद्यतीतत्वात्। तदिदमाशङ्कते-अन्तरा भूतग्रामवत्स्वात्म-

---

उषस्तकहोलविद्या किं भिन्ना, एका वेति विचारः। भेदपक्षेऽपि किं जीवब्रह्मरूपधर्मिभेदाद् भेदः, किं वा ब्रह्मविषयकत्वेऽपि धर्मभेदमात्रादिति च प्रश्नैकरूप्यप्रतिवचनवैरूप्याभ्यां संशयोत्थितिः। सर्वानुगतरीत्या संगतिस्तु—स्वात्मत्वास्थूलत्वादीनां सर्वानुसंधेयत्वम्, प्राणितृत्वाशनायातीतत्वादिकमुषस्तकहोलोभयानुचिन्त्यं न भवति विद्याभेदादिति शंकया भाव्या। साक्षाद् ब्रह्मेत्यन्वयः। ब्रह्मशब्दमुख्यार्थ इत्युक्तं भवति। **अपरोक्षात्** प्रत्यक्षविषयः; विषयत्वार्ह इति यावत्। अर्हता च सर्वदेशसंबन्धित्वरूपेति सिद्धान्ते ज्ञास्यते। साक्षात्पदोत्तरम् अपरोक्षादिति पदस्यैव सत्त्वात् साक्षादपरोक्षत्वमिन्द्रियनिरपेक्षमेव प्रष्टुरपि स्वयंप्रकाशत्वरूपमिति ज्ञायते। तत् तत्तज्जीवमात्रगतम्। तस्य च सर्वान्तरत्वमसंभवि। तदुभययोजनेन प्रष्टुर्वैदग्ध्यं विभाव्य याज्ञवल्क्यः स्वयमपि विदग्ध आह **यः प्राणेने**त्यादि। आशयमजानन् उषस्तः प्रतिवचने परं गवि अश्वत्वकथन इव प्राणितरि सर्वान्तरत्वविरोधमुद्भावितवान्। अथ जीवो मया न विवक्षित इति विशदयितुमुक्तम्, **न दृष्टे**रित्यादि। **आर्तम्** आर्तिमत्-विनाशित्वादिमत्। कहोलेनोषस्तप्रश्नस्यैव स्वयं करणात् **यदेवे**त्येवकारः। अप्रतिबुद्धे वैदग्ध्यप्रदर्शनं मा भूदिति पूर्वापेक्षया आर्जवमाश्रित्योत्तरम् **योऽशनाये**ति। **अत्येति** सर्वान्तरतया स्थितिकालेऽप्येतद्रहित इति

नोऽन्यथा भेदानुपपत्तिरिति चेत—इति। अन्तरा-सर्वान्तरत्वेन प्रथमप्रतिवचनं भूतग्रामवत्स्वात्मनः। भूतग्रामवान्-तदन्तरः स्वात्मा-प्रत्यगात्मा सर्वान्तर इत्युच्यत इत्यर्थः। अन्यथा "यः प्राणेन प्राणिति" "योऽशनायापिपासाद्यतीतः-" इति प्रतिवचनभेदानुपपत्तिरिति चेत्—

अत्रोत्तरं—नेति। न विद्याभेद इत्यर्थः। उभयत्र परविषयत्वात् प्रश्नप्रतिवचनयोः। तथाहि—"यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इति प्रश्नाम्नानं परमात्मविषय एव। ब्रह्मशब्दस्य परमात्मासाधारणत्वेऽपि प्रत्यगात्मन्यपि कदाचिदुपचरितप्रयोगात् तद्व्या-वृत्त्या परमात्मप्रतिपत्त्यर्थं "यत्साक्षाद्ब्रह्म" इति विशेषणं क्रियते। अपरोक्षत्वमपि सर्व-देशसर्वकालसंबन्धित्वम्, (तै. आन. १-१) "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनन्तत्वेनावग-

---

विवक्षितम। तदिदमाशङ्कते इति। इमामाशंकां दर्शयति सूत्रखण्डेनेत्यर्थः। अन्तरा। सौत्रपदस्यार्थमाह सर्वान्तरत्वेनेति। अन्तरा इत्यस्य हि मध्ये इत्यर्थः। मध्ये वर्तमानत्वादेव जीवोऽन्तर इत्युच्यते। परस्य सर्व(देह)व्यापिनोऽन्तरत्वं न स्वरसमिति ज्ञापनाय सौत्र अन्तराशब्दप्रयोगः। प्रथमप्रतिवचनमित्यौचित्यकृतोऽध्याहारः। सर्वशब्दान्वय. कथमित्यत्र भूतग्रामवदिति स्वात्मविशेषणम्। पाञ्चभौतिकदेहान्तर्वर्तित्वात्सर्वभूतान्तर्वर्तित्वरूपं सर्वान्तरत्वम्; अन्नमयप्राणमयमनोमयसर्वान्तरत्वाद्वा। अथवा अन्तरेत्यस्य न सर्वान्तरत्वेनेति व्याख्यानम्। अन्तरा मध्ये इत्यर्थ.। प्रथमप्रतिवचनम्, मध्ये कृतम्, प्रथममुषस्तं प्रति प्रतिवचनं जीवविषयकमित्यर्थः। तेन नदृष्टेर्द्रष्टारमिति प्रतिवचनं गृहीतं भवति। अत्र प्राणितृत्वादेर्जीवे संभवेऽपि 'नदृष्टेर्द्रष्टारम्' इति जीवनिषेधकवाक्यस्य तत्रानन्वयान्न जीव· प्रतिपाद्य इति शंकापरिहारार्थमेतत्। प्रथममुषस्तः, यत साक्षादपरोक्षादिति प्रश्नं कृतवान्। तत्रोत्तरे उक्ते तत्रापरितुष्टः सः तमेव प्रश्नं पुनरावर्तयत्, यदेव साक्षादिति। तत्रोत्तरं, न दृष्टेरिति। अथ कहोलः पुनस्तमेवावर्तयत्। तदा चोत्तरम् योऽशनायेत्यादि। तथाचैकरूपप्रश्ने मध्ये यत् प्रतिवचनम्, तदपि जीवविषयकमेवेत्युच्यते; नदृष्टेरित्यस्य, 'ज्ञानातिरिक्ततया जीवात्मानं न पश्ये' इत्यर्थसंभवेनानन्वया-भावात्। सर्वान्तरत्वं तु भूतग्रामवत्त्वात् तावन्तं प्रतीति पूर्वपक्ष्याशयः।

नेत्यत्र सूत्रकारो हेतुं कस्मान्नाहेति चेत्—साक्षाद् ब्रह्मत्वं सर्वान्तरत्वं च पूर्वपक्षिणैवामुख्यं नीयते। अतो न वक्तव्यमधिकमस्ति। प्रतिवचनभेदायोग एव तदभिमतो हेतुः। स चैकोऽधिकप्रतिवचन-भेदशाल्युपदेशदृष्टान्तेन सुपरिहर इति दृष्टान्तमात्रमाह॥ यत्तु—अन्तरपदस्वारस्यं वर्णितम्— तन्न-अन्तर-शब्दस्य मध्यवर्तित्वार्थकत्वेऽपि एकैकवस्तुमध्ये, सावयवेषु एकैकावयवमध्ये च वृत्तिलाभात; वस्तुतः अन्तर्व-हिश्च तत् सर्वं व्याप्येत्यादिपरामर्शी तत्तद्वस्तुसंयुक्तयावत्प्रदेशावच्छिन्नस्थितिरूपव्यापित्वोपयोगिसूक्ष्मत्व-स्यैव विवक्षाप्रतीतेश्च। तदर्थमेव हि सर्वान्तर इत्युक्तम्। इदञ्च सुसूक्ष्मत्वं नाल्पपरिमाणनिबन्धनमिति ज्ञप्तये सर्वदेशसंबन्धित्वरूपापरोक्षत्वोक्तिः। सर्वमिदमाह तथाहीति। संबन्धित्वमिति। सर्वदा दृश्य-मानत्वाभावात् स्वरूपयोग्यतैव वक्तव्या। तदपेक्षया जीवस्त्वलसो न प्रयतते. स तु सर्वदेशोऽपि सज्जः स्वं दर्श-यितुमिति ज्ञापनायैवमर्थवर्णनम्। उपकरणं विना धर्मभूतज्ञानमात्रेण भक्तियोगानन्तरभवेन भगवत्प्रसादेनाप-

तस्य परमात्मन एवोपपद्यते। सर्वान्तरत्वमपि (बृ. मा.) "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इत्यारभ्य, "य आत्मनि तिष्ठन् आत्मनोऽन्तरः" इति सर्वान्तर्यामिणः परमात्मन एव संभवति।

प्रतिवचनमपि तथैव परमात्मविषयम्। "यः प्राणेन प्राणिति" इति निरुपाधिकं प्राणनस्य कर्तृत्वं परमात्मन एव; प्रत्यगात्मनः सुषुप्तौ प्राणनं प्रति कर्तृत्वाभावात्। एवमजानतोषस्तेन प्राणने कर्तृत्वमात्रमुक्तं मन्वानेन, प्रत्यगात्मनोऽपि साधारणत्वं प्रतिवचनस्य मत्वा अनुष्टेन पुनः पृष्टः, तं प्रति प्रत्यगात्मनो व्यावृत्तं निरुपाधिकत्वेन प्राणनस्य कर्तारं परमात्मानमाह, "न दृष्टेर्द्रष्टारं पश्येः" इत्यादिना। इन्द्रियाधीनानां दर्शनश्रवणमननविज्ञानानां कर्तारं प्रत्यगात्मानम्, प्राणनस्य कर्तृत्वेनोक्त इति न मन्वीथाः; तस्य सुषुप्तिमूर्च्छादौ प्राणनादेरकर्तृत्वात्। (तै. आन. ७-१) "को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्" इति सर्वप्राणिप्राणनहेतुत्वं हि परमात्मन एवान्यत्र श्रुतम्।

अतः पूर्वप्रश्नप्रतिवचने परमात्मविषये। एवमुत्तरे अपि; अशनायाद्यतीतत्वस्य परमात्मासाधारणत्वात्। उभयत्र, "अतोऽन्यदार्तम्" इत्युपसंहारश्चैकरूपः। प्रश्नप्रतिवच-

---

रोक्षो भवतीति साक्षादपरोक्षादित्युच्यत इत्यपि स्यात्। एतदुपपादनार्थमेवोपरि वैराग्यपाण्डित्यबाल्यमौनानि उपवर्ण्य, 'स ब्राह्मणः केन स्यात्। येन स्यात् तेनेदृश एव' इत्युपसंहृतम्। प्राणितृत्वमपि परमात्मन्येव सूपपादमित्याह **यः प्राणेने**ति। प्राणितृत्वं प्राणनव्यापाराश्रयत्वं वा तत्कर्तृत्वं वा। आद्ये प्राणवायावेव तदिति जीवस्याप्यग्रहः स्यात्। प्राणेनेति तस्योपकरणतया पृथक्कृतत्वात् कर्तृत्वमेव विवक्षितमिति चेत्—तत् जीवे सुषुप्तौ कथम्? अत एव जागरेऽपि तस्य तत्कर्तृत्वं नापेक्षितम्। कदाचित् तस्यापि तद्विषयप्रयत्नसत्त्वेऽपि न तन्निरुपाधिकम्; कालावच्छिन्नत्वात्। अतः प्राणनानुकूलप्रयत्नाश्रयत्वं निरुपाधिकं परमात्मन एवेति। **साधारण**मिति। इदमुपलक्षणम्। परमात्मन्यसंभावितं प्राणवायुकरणकप्राणनकर्तृत्वम्, "यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते (केनोप.) इति श्रुतेरिति च मनुते। अत एव गोत्वाश्वत्वयोरिव प्राणितृत्वसर्वान्तरत्वयोर्विरोधमुद्भावयति। नदृष्टेरिति वाक्यस्य जीवव्यावर्तकत्वमर्थान्तरप्रदर्शनेनोपपादयति **इन्द्रिये**ति। दृष्ट्यादिपदानामिन्द्रियपरत्वमप्यभिमतमिव। न पश्येः, न शृणुयाः इति निषेधः सर्वोऽपि न मन्वीथा इत्यर्थक इत्याशयेनाह **नमन्वीथा** इति। विस्तरो **जिज्ञासाधिकरण** एव वृत्तः। ननु जीवसंनिधानाभावे प्राणनायोगात् प्राणनहेतुत्वरूपं प्राणितृत्वं जीव एव सर्वदेत्यत्राह **को ही**ति। अनेन—जीवगतं यत् प्राणनकर्तृत्वं तद्धेतुतारूपप्राणितृत्वमपि परस्यैवेति, अनन्याधीनत्वरूपनिरुपाधिकत्वमपि जैवे कर्तृत्वे नास्तीति च दर्शितम्। "ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति" (कठ) इति प्राणनहेतुत्वं परमात्मन्येव श्रुतम्। आनन्दपदबलात्, 'आनन्दयाति' इति उत्तरवाक्यानुसाराच्च अननप्राणनयोरानन्दविशेषपरत्वेऽपि प्राणनत्ताकालिकानन्द एवाभिमत इति भावेनैतदुक्तिः। अत्र जीवस्यैव कर्तृत्वश्रवणेऽपि हेतुत्वं परस्यैवेति। **एकरूप** इति।

**नावृत्तिस्तु कृत्स्नप्राणिप्राणनहेतोः परस्य ब्रह्मणोऽशनायाद्यतीतत्वप्रतिपादनाय ।**

**तत्र दृष्टान्तमाह-**उपदेशव**दिति। यथा सद्विद्यायाम्** (छा. ६) **"उत तमादेशमप्राक्ष्यः" इति प्रक्रान्ते सदुपदेशे, "भगवांस्त्वेव मे तद्ब्रवीतु इति", "भूय एव मा भगवान् विज्ञापयतु" इति प्रश्नस्य, "एषोऽणिमा ऐतदात्म्यमिदं सर्वं तत सत्यम्" इति प्रतिवचनस्य च भूयोभूय आवृत्तिः सतो ब्रह्मणः तत्तन्माहात्म्यविशेषप्रतिपादनाय दृश्यते—तद्वत् ।**

**अत एकस्यैव सर्वान्तरभूतस्य ब्रह्मणः कृत्स्नप्राणिप्राणनहेतुत्व-अशनायाद्यतीतत्वप्रतिपादनेन रूपैक्यात् विद्यैक्यम् ॥ ३५ ॥**

---

तेन जीवविषयत्वनिषेधः क्रियत इति भावः ।

**उपदेशव**दिति । नन्वस्याप्युपदेशरूपत्वात **उपदेशान्तरवदिति** शाङ्करपाठो युक्तः । नैवम् । सदसि वादक्रमे हि याज्ञवल्क्यः प्रतिवक्ति ; न गुरुर्भूत्वोपदिशति । अतो गौतमेन पुत्राय क्रियमाणः स एवोपदेशः, नायमिति नायं पाठोनुपपन्नः । इदमभिप्रेत्य भाष्ये, "भगवांस्त्वेव मे तद् ब्रवीतु" इत्यंशस्यापि धारणम् । अस्य वाक्यस्याचार्यतया उपदेशार्थं तद्वरणरूपत्वात् । **यथे**त्यादि । अत्रैवमर्थनिष्कर्षो भाव्यः---प्रथमतः गौतमेन, 'उत तमादेशमप्राक्ष्यः' इति पुत्रः पृष्टः । अथ तेन सर्ववस्तुविज्ञातत्वापादकस्वविज्ञानकमेकं वस्तु कथं स्यादिति शङ्कितम् । अथ पित्रा मृत्पिण्डादिदृष्टान्तैः तत्संभवः प्रादर्शि । अथ पुत्रः, इममर्थं स्वगुरुर्जानाति न वेति विमृशन् गुरुसविधं गन्तुमनिच्छन् पितरमेवैतद्विद्यायामाचार्यत्वेन वरीतुं प्रवृत्तः प्रार्थयामास, 'भगवांस्त्वेव मे तद् ब्रवीतु' इति । तदनन्तरमेव जगत्कारणभूतसद्विषयक उपदेशः **सदे**वेत्यादिना पित्रा कृतः । तत्र समष्टिव्यष्टिसर्वकारणत्वनिरूपणावसरे व्यष्टिभूतपाञ्चभौतिकदेहस्य अन्नादिपोष्यत्वमुपपादयन् भुक्तेऽन्नादौ स्थूलसूक्ष्मपरिणामभेदमदर्शयत् । तादृशसूक्ष्मांशस्य, मनआदौ तदाप्यायितत्वस्य च स्पष्टमवगमाय तच्छेषतया शिष्येण प्रथमं पृष्टम्, 'भूय एव मा भगवान् विज्ञापयतु (विज्ञापयतु-विशदं ज्ञापयतु)' इति । पित्रा च तदुपपाद्य, अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वागिति निगमितम् । एवं जगत्कारणसन्निरूपणं खण्डसप्तकेन वृत्तम् । अथ पित्रोपास्याकारोपदिदिक्षया स्वयमेव सतो लयस्थानत्वोपपादनेन 'एषोऽणिमा ऐतदात्म्यमिदं सर्वं तत् सत्यम् स आत्मा तत् त्वमसि श्वेतकेतो' इति उपदेशसारो दर्शितः । तमिमं बहुनिदर्शनमुखेन विशदं वेदितुमिच्छन् पुत्रः, पूर्वमप्रधानविषय इवास्मिन् प्रधानविषयेऽपि, 'भूय एव मा भगवान् विज्ञापयतु'इति प्रार्थयामास । एवं अष्टकृत्वः प्रार्थनायाम् अष्टौ खण्डाः प्रवृत्ताः । सर्वत्र, 'एषोऽणिमा····'इत्यादिनिगमनमेकरूपम् । अनेन चैतद्विद्यावेद्याणिमत्वादिविशिष्टसद्विषयबोधनार्थमेवेमे नव खण्डाः प्रवृत्ता इति ज्ञायते । तत् तत्र यथा प्रश्नैक्ये प्रतिवचनभेदे सत्यपि वेद्यैक्ये पर्यवसानम्, तथेहापीति ।

एवञ्च सदुपदेशार्थमेव, भगवांस्त्वेवेति प्रश्नात्, एषोऽणिमेति प्रतिवचनस्यैतत्प्रश्नोत्तरत्वाभावात् अत्र भाष्ये **भगवांस्त्वेवमेतद्ब्रवीत्विति** इत्यंशस्य **प्रक्रान्ते सदुपदेशे** इत्यतः प्राक्पाठश्चेदुपलभ्येत, शोभनं स्यात् ॥ अन्वयो वा पूर्वं कार्यः । अशितान्नसूक्ष्मांशवैशद्यार्थः **भूय एवे**ति प्रश्नस्तु इहानपेक्षित-

अथ स्यात्—यद्यप्युभे प्रश्नप्रतिवचने परब्रह्मविषये, तथापि विद्याभेदोऽवर्जनीयः, एकत्र सर्वप्राणिप्राणनहेतुत्वेनोपास्यम्, इतरत्राशनायाद्यतीतत्वेनेति उपास्यगुणभेदेन रूपभेदात्। प्रष्टृभेदाच्च ; पूर्वत्र उषस्तः प्रष्टा ; उत्तरत्र कहोलः इति—तत्राह—

व्यतिहारो विंशिषन्ति हीतरवत् । ३ । ३ । ३६ ॥

नात्र विद्याभेदः, प्रश्नप्रतिवचनाभ्यामेकरूपार्थविषयाभ्यामेकेन च विधिपदेनैकवाक्यत्वप्रतीतेः। प्रश्नद्वयं तावत् सर्वान्तरात्मत्वविशिष्टब्रह्मविषयम्। द्वितीये प्रश्ने, "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इत्येवकारश्च पूर्वत्रोपस्तेन पृष्टगुणविशिष्टब्रह्मविषयत्वं कहोलप्रश्नस्यावधारयति। प्रतिवचनं चोभयत्र, "स त आत्मा सर्वान्तरः" इति सर्वान्तरात्मत्वविशिष्टब्रह्मविषयमेकरूपमेव। विधिप्रत्ययश्चोत्तरत्रैव दृश्यते, "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इति। एवं सर्वान्तरात्मत्वविशिष्टब्रह्मैकविषयत्वे द्वयोरवग(धृ)ते सति, एकस्मिन्नेव सर्वान्तरात्मत्वविशिष्टे ब्रह्मण्युपास्ये उपस्तकहोलयोरितरेतरबुद्धिव्यतिहारः कर्तव्यः। उपस्तस्य या सर्वान्तरात्मनो ब्रह्मणः सर्वप्राणिप्राणनहेतुत्वविषया बुद्धिः, सा कहोलेनापि प्रष्टा कार्या ; या च कहोलस्य तस्यैव ब्रह्मणोऽशनायाद्यतीतत्वविषया बुद्धिः, सा उपस्तेनापि कार्या। एवं व्यतिहारे कृते उभाभ्यां सर्वान्तरस्य ब्रह्मणो जीवव्यावृत्तिरवग(धृ)ता भवति।

एवं सर्वान्तरात्मानं प्रत्यगात्मनो व्यावृत्तमवगमयितुं सर्वप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन विंशिषन्ति हि याज्ञवल्क्यस्य प्रतिवचनानि। अतो ब्रह्मणः सर्वान्तरात्म-

---

त्वादविवक्ष्य इति यथाशांकरं पश्चिमनवखण्डोपदेश एव मुख्य इति ॥ ३५ ॥

अथस्यादिति। सद्विद्यायां प्रष्टुरेकत्वात् उपदिष्टा गुणाः सर्वेऽप्येकत्र तेनोपसंह्रियेरन्। इह प्रष्टृभेदात् एकं प्रत्युपदिष्टस्य गुणस्यान्यागृहीततया वेद्याकारभेदस्यावर्जनीयत्वात् विद्यैक्यसिद्धान्तो न घटत इत्यर्थः। वेद्यार्थव्यतिहारत्वस्य विद्यैक्यगमकविषयज्ञानपूर्वकत्वात् सूत्राभिमतं विद्यैक्यं प्रथममुपपादयति नात्रेति। प्रश्नप्रतिवचनाभ्यां प्रश्नद्वयप्रतिवचनद्वयाभ्याम्। विधिपदेन तिष्ठासेदित्यनेनोपस्तकहोलोभयोद्देशप्रवृत्तोपसंहारगतेन। सर्वमिदमुपपादयति प्रश्नद्वयमित्यादिना। एतं वै तमात्मानमित्यादिवाक्यजातमुभयोद्देश्यकम्। एतं त्वां प्रति उक्तम्, तम् उपस्तं प्रति उक्तमात्मानमिति तदर्थः। निर्विद्य प्राप्य बाल्येन स्वमाहात्म्यानाविष्कारिव्यवहाररूपबालकर्मणा युक्तः तिष्ठासेत् ब्रह्मणि निष्ठां लिप्सेत। बाल्येन तिष्ठासेदित्यस्य बाल्ययुक्तो बुभूषेदित्येतावन्मात्रार्थवर्णने तिष्ठासेदिति व्यर्थम्, अपेक्षितानुक्तिश्चेति ध्यानविधिरलेति भावः। एतदुपपादकम्, उपरि बाल्यञ्चपाण्डित्यञ्चेत्यादिवाक्यम्। अतः, कथं ध्यानविध्यनन्तरं संशीलनविधानमिति न शंक्यम्। द्वयोः वाक्ययोः। व्यतिहारः स्वकीयस्यार्पणेनान्यदीयस्य ग्रहणम्। नायं व्यतिहारो गुणोपसंहाररूपः ; किंतु उपासनपूर्वभावितयोपास्यव्यक्तिविषयविशदनिश्चयार्थः इत्याह एवमिति। अस्य गुणोपसंहाररूपत्वे युक्त्यन्तरेणैव विद्यैक्यसिद्धावस्या अर्थसिद्धत्वात् सूत्रमेतदर्थं व्यर्थम्। उपसंहार्यगुणत्वञ्चेत् अशयनायाद्यतीतत्वादेः, पूर्वमुषस्तं प्रति तदनु-

त्वमेवोपास्यगुणः। प्राणनहेतुत्वादयस्तु तस्योपपादकाः; नोपास्याः। ननूपास्यगुणः सर्वान्तरात्मत्वमेव चेत्, प्राणनहेतुत्वस्य अशनायाद्यतीतत्वस्य च प्रष्ट्रोः व्यतिहृत्यानुसन्धानं किमर्थम्? तदुच्यते - सर्वप्राणिप्राणनहेतुत्वेन सर्वान्तरात्मनि जीवाद्व्यावृत्ते ब्रह्मण्युपस्तेनावगम्यते सति कहोलेन, जीवस्य सर्वात्मना असंभावितेन स्वभावविशेषेण सर्वान्तरात्मा व्यावृत्तोऽनुसन्धेय इति कृत्वा, पुनः प्रश्नः कृतः। याज्ञवल्क्योऽपि तदभिप्रायमभिज्ञाय, प्रत्यगात्मनोऽसंभावितमशनायादिप्रत्यनीकत्वमुक्तवान्। अतश्चोपास्यस्य व्यावृत्तिप्रतीतिसिद्ध्यर्थमुभाभ्यां परस्परबुद्धिव्यतिहारः कर्तव्यः।

इतरवत्-यथेतरत्र सद्विद्यायां भूयोभूयः प्रश्नैः प्रतिवचनैश्च तदेव सद्ब्रह्म व्यवच्छिद्यते; न पुनः पूर्वप्रतिपन्नात् गुणात् गुणान्तरविशिष्टतयोपास्यं प्रतिपाद्यते; तद्वत् ॥ ३६ ॥

तत्रापि प्रश्नप्रतिवचनभेदे सति कथमैक्यमवगम्यत इति चेत्—तत्राह—

सैव हि सत्यादयः। ३। ३। ३७॥

---

कत्या न्यूनता च स्यात्। प्राणितृत्वादेरवश्योपास्यत्वे च कहोलं प्रति कथने तदुपेक्षणं न स्यात्। यः प्राणेनेत्येवं सर्वत्र यच्छब्दनिर्देशाच्च प्राणितृत्वादेरुपलक्षणत्वं ज्ञायते। अतः प्रश्नगतं सर्वान्तरत्वमेव रूपम्। तद्वैशद्यार्थमिदं सर्वम्। यथा सद्विद्यायाम्। तत्रापि हि प्रश्नानन्तरमेव बहुनिदर्शनपूर्वमुपपादनम्। अकृते च प्रश्ने तदुपपादनं न भविष्यति। अतोऽणिमत्वादिमात्रं रूपम्, तद्वैशद्याय सर्वमित्यवसीयत इति भावः। असंभावितमिति। प्राणितृत्वदशायामेव स्थितं ह्यशनायाद्यतीतत्वमत्र स्वरसम्। तदुभयं युगपन्न जीवे निविशेत। उषस्तं प्रति उक्तं कहोलः श्रुत्वैव हि यदेवेत्येवकारघटनेन पप्रच्छ। अतो यच्छङ्कापरिहारार्थमेष पृच्छति, सा शंका उषस्तस्यापि संभावितैवेति परिहारप्रकार उभयानुसंधानार्ह एव। प्रष्टृभिन्नत्वेऽप्युभयोरपि संभूय श्रोतृत्वात् एकान्तेवासिकृतप्रश्न-गुरुकृततत्समाधानयोरन्यान्तेवासिग्राह्यत्ववदिह उभयग्राह्यता। उपास्याकारत्वाभावाच्चेदंशांशानुसंधानाभावे वैगुण्यं कामं मा भूत्। अनुसंधानं तु न व्यर्थम्। सूत्रार्थस्तु—व्यतिहारः एकैकस्याप्यन्यगृहीतग्रहणमस्ति। याज्ञवल्क्यवाक्यानि नदृष्टेरित्यादीनि जीवादिव्यावृत्ततया सर्वान्तरं बोधयन्ति हि; यथा गौतमवाक्यानि सद्विद्यायां सदेकमेव विशिंषन्तीति॥३६॥

दृष्टान्तेऽपि विद्यैक्यमसिद्धमिति शंकते तत्रापीति। भेदे सति अनेकत्वे सति; न तु वैलक्षण्ये सतीत्यर्थः। प्रश्ने तदभावात्। सद्विद्या अष्टमखण्ड एव, 'तद्धास्य विजज्ञौ' इत्यन्तेन समाप्ता; उपरि प्रतिखण्डं विभिन्ना विद्येति स्यादित्यर्थः। सैव—सेयं देवतेति पूर्वभागे निर्दिष्टैव, वाङ्मनसि.... तेजःपरस्यांदेवतायामिति अष्टमे पञ्चदशे च प्रत्यभिज्ञायते। य एषोऽणिमेति प्रागुपदर्शितकारणत्वाक्षिप्तसूक्ष्मताविशिष्टमेवानूद्य, 'तत् सत्यम्, स आत्मा, तत् त्वमसि श्वेतकेतो' इति निर्विकारत्वात्मत्वोपासकान्तर्यामित्वरूपगुणविधिः सर्वत्राविशिष्टः। अतोऽणिमत्वाद्युपपादनमेव मुखान्तरैरिति खण्डोपपादिताकाराणां वैशद्यमात्रार्थत्वयोपास्यत्वाभावात् धर्मिभेदस्य धर्मभेदस्य वा विरहान्न दृष्टान्ते विद्याभेदः। पृष्टृभेदादिना त्वत्र शंका तद्दृष्टान्तेनैवं परिहृतेति सिद्धमुषस्तकहोलविद्यैक्यम्॥

सैव हि (?) सच्छब्दाभिहिता परमकारणभूता परा देवतैव, (छा. ६-३-२) "सेयं देवतैक्षत", (छा. ६-८-६) "तेजः परस्यां देवतायाम्" इति प्रकृता, (छा. ६-९-१) "यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति" इत्यादिषु पर्यायेषु सर्वेषूपपाद्यते। [हि?] यतः (छा. ६-८-७) ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा" इति प्रथमपर्यायोदिताः सत्यादयः सर्वेषु पर्यायेषूपपाद्योपसंह्रियन्ते।

केचित्तु-"व्यतिहारो विशिंषन्ति हीतरवत्", "सैव हि सत्यादयः" इति सूत्रद्वयमधिकरणद्वयं वर्णयन्ति। तत्र पूर्वेण—(जाबा.) "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते", (ऐ. आ. २-२-४) "तद्योऽहं सोऽसौ; योऽसौ सोऽहम्" इति वाक्ये जीवपरयोर्व्यतिहारानुसन्धानं प्रतिपाद्यत इत्युच्यते—इत्याहुः; तत्—(छा. ३-१४-१) सर्वं खल्विदं ब्रह्म", (छा. ६-१६-३) "ऐतदात्म्यमिदं सर्वम्.... तत्त्वमसि" इत्यवगतसर्वात्मभावविषयत्वादस्य वाक्यस्य, नात्र प्रतिपादनीयमपूर्वमस्तीति अनादरणीयम्। तत्तु वक्ष्यते, (शा. ४-१-३) "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति। न च सर्वात्मत्वानुसंधानातिरेकेण परस्मिन् ब्रह्मणि जीवत्वानुसंधानम्, जीवे च परब्रह्मत्वानुसंधानं तथ्यं संभवति। उत्तरेण च सूत्रेण,

---

सैव हीति। सूत्रे हीत्येतत् सैवेत्यत्र सत्यादय इत्यत्र चान्वेति। सप्तखण्डी हि एकसद्विषया। तत्र सेयं देवतेति परदेवतात्वेन निर्दिष्टैवाष्टमे परस्यां देवतायामित्युच्यते। तत्र पूर्वोक्तं कारणत्वम्, य एषोऽणिमेत्यनूदितम्। तदेव पुनर्नवमे, 'मधु मधुकृत' इत्यारभ्योपपाद्यते इति सिद्धमेकविषयकत्वम्। प्रतिपर्यायं सत्यत्वादिविधेयांशोपसंहाराच्च वेद्यरूपैक्यं तत्रैवोच्यत इति उपास्यगुणविशिष्टवस्तु तावदेवेति निश्चीयत इति। अणिमादय इत्यनुक्त्वा सत्यादय इति कथनम्, अणिम्नः य एष इति अनुवादमात्रत्वात्। 'मधु मधुकृतो निस्तिष्ठन्ति'=मधुमक्षिकाः वृक्षेभ्यो मधु निष्कास्य हरन्तस्तिष्ठन्ति। अथ रसान् समवहारमेकतां रसं गमयन्तीति वक्ष्यते। नानाभूतानामेव जीवानां सत्संपत्तिकाले ऐकरूप्यमत्र खण्डे उक्तम्। प्रतिखण्डं विवक्षितोऽर्थभेदः परिष्कारे द्रष्टव्यः॥ यत इत्यतः प्राक् हीति सौत्रं व्याख्येयं पदं स्यात्।

शांकरेऽधिकरणत्रयत्वमभिमतं निरसितुमाह केचित्त्विति। त्वं वा इति जाबालोपनिषत्। तद्योऽहमित्यैतरेयारण्यकम्। अतः इति वाक्ये इत्यत्रैकत्वमविवक्षितम्। एवमस्यवाक्यस्येत्यत्रापि। व्यतिहारानुसंधानम् व्यतिहारेणानुसंधानम्—अन्योन्यतादात्म्यभावनारूपमनुसंधानम्। कस्मिन्नधिकरणे उक्तत्वादस्यापूर्वत्वाभाव इत्यत्राह तत्त्विति। तथ्यम् अबाधितविषयकम्। ननु तत्त्वमसीत्यत्रैवास्य वाक्यस्य तत्त्वविषयकत्वं मा भूत्। न चैवमीश्वरे जीवत्वारोपे निकर्षः कृतः स्यादिति वाच्यम्—निर्गुणे ब्रह्मणि सगुणत्वारोपे निकर्षः कृतः स्यादिति कुतो न मन्यसे॥ वस्तुतो गुणस्याभावान्न दोषः; आरोपमात्रं तु फलविशेषायेति चेत—अत्रापि तुल्यमेतत्। एवञ्चात्मत्वोपासनाधिकरणस्य तत्त्वविषयकत्वाद्अस्य गतार्थतेति चेत्—उच्यते—सत्यमयं वो निर्वाहः। सर्वस्य पारमार्थिकत्वात् जीवत्वारोपे लोकवत् निकर्षः स्यादेव। निर्गुणे सगुणत्वकल्पनं निकर्षायेति भामतीकृदेव ब्रूयात्; न परीक्षकः।

(बृ. ७-४-१) "स यो हैतन्महत् यक्षं प्रथमजं वेद सत्यं ब्रह्म" इत्यादिवाक्यप्रतिपादितस्य सत्योपासनस्य, (बृ. ७-५ १) "तद्यत् सत्यम्, असौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषः यश्चायं दक्षिणेऽक्षन्" इत्यादिवाक्यप्रतिपादितोपासनस्य चैक्यं प्रतिपाद्यते इति-तदप्य-युक्तम्, उत्तरवाक्ये अक्ष्यादित्यस्थानभेदेन विद्याभेदस्य पूर्वमेव, (शारी. ३-३-२१) "न वा विशेषात्" इत्यनेन प्रतिपादितत्वात्। न च द्वयोरनयोः,व्याहृत्यादिशरीरकत्वेन रूपवतोः "हन्ति पाप्मानं जहाति च य एवं वेद" इति पृथक्संयोगचोदनावतोर्द्वयोरुपासनयोः, (बृ. ७-४-१) "स यो हैतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति, जयतीमान् लोकान्" इति

---

कल्याणगुणानामपि बहिष्कारेण निर्गुणत्वमेव हि निकर्षः, न सगुणत्वम्। यद्युच्येत—ईश्वरे संसारित्वं नारोप्यते; किंतु ईश्वरसायुज्यं संसारिणो यदा भवति, तदा तयोस्तादात्म्यमिति चेत्—तत्रापि तादात्म्यं बाधितमेव। किञ्चिदंशे साम्येऽपि अन्यांशे निकर्षानपायात् निकर्षकल्पनैव स्यात्। भोग-मात्रसाम्यमेवान्ततो व्यतिहारेणावसेयमिति चेत्—तर्हि यथाश्रुतमर्थं शरीरात्मभावं विहायार्थान्तरकल्प-नादसामञ्जस्यमेव। एवमङ्गीकारे, "ऐकात्म्यस्यैवानेन प्रकारेणानुचिन्त्यमानत्वात्" इति शांकरभाष्य-विरोधश्च। "फलतस्त्वेकत्वमपि दृढीभवति" इति तत्र भाष्ये उक्ततया च तद्दृढीकरणार्थे वाक्यजाते एव-मर्थवर्णनमयुक्तम्। भवन्मतरीत्या त्वेवं वक्तव्यम्—शास्त्रे व्यतिहारवचनं जीवे ईश्वरे च प्रतीतान् धर्मान् व्युदस्य स्वरूपैक्यमात्रे उच्यमाने मिथो व्यतिहारेऽपि न निकर्षप्रसक्तिरिति ज्ञापनार्थमेवेति। अतः फलाय ध्यानविधानमिति न युज्यते। तथा व्यतिहारानुसंधानं प्रपञ्चनिवृत्तयेऽपि नावश्यकम्; एकानु-संधानाकार्यस्याभावात्। अयमपि च वस्तुतो न व्यतिहारः, अखण्डविषयकत्वादित्यन्यदेतत्। सर्वथा तत्त्वज्ञानरूपत्वादनुसंधानस्य आत्मेतीयविकरणोक्तविषयकत्वमेवेति व्यर्थमिदमिति भाष्याशयः।

**सयोहैतदिति**। **एतच्छब्दो** हृदयपरः। पूर्वं हृदयम् हृ इत्यादिनामाक्षरत्रयनिर्वचनज्ञानफल-वर्णनपूर्वकं प्रजापतित्वेनोपासनं प्रस्तुत्य तस्यैव सत्यत्वेनोपासनस्यात्रोक्तेः। **यक्षं** पूज्यम्; **प्रथमजं** प्रथमाविर्भूतमिति सत्यविशेषणम्। इदमुपासनं पूर्वोक्तविवरणरूपं न वेति विचारः स्यान्नाम। फल-विशेषार्थमिदमेकमुपासनं वक्ष्यमाणादन्यदेव। ननु वक्ष्यमाणोपासनद्वयस्येदं फलसंबन्धपरमस्तु। तथाच द्वयस्य तद्द्वयाभेदो युज्यते। अथवा 'न वा विशेषात् इति सूत्रे न विद्याभेदः साधितः। किंतु निर्धेक्येऽपि अहरहम्पदयोरादित्याक्ष्युपाध्यवच्छिन्नपुरुषविषयकतया व्यवस्थितिमात्रम्। अतो न विरोध इत्यत्र विशदयति **न च द्वयोरिति**। **द्वयोरिति**। **द्वयोरनयोरित्यस्य** विवरणम् **उपासनयोरित्यन्तम्**। यद्वा द्वयोः वाक्ययोरित्यर्थः। वाक्यसंबन्धिनोरिति यावत्। **द्वयोरितिपदान्तरमुपासनविशेषणम्**। वाक्यद्वयेत्युक्ते-रयमाशयः—अक्ष्यादित्यस्थानभेदेऽप्येकोपासनमेव चेत् स्यात्, भूरादिशरीरकत्वं फलञ्च पुरुषद्वयविषये वाक्यद्वयेन पृथक्पृथङ् नोच्येत। य एवं वेदेति च पृथक्पृथगुपरमादुपासनद्वयमेवेति। **द्वयोरनयोरिति** अक्ष्यादित्यपुरुषद्वयपरं वा। तद्विषयकत्वमुपासनयोरुच्यते। **यश्चायमिति चकारेण** स्थलभेदेन पुरुषव्यक्ति-भेदावगमाच्चोपासनभेद एव युक्त इति भावः। व्याहृतिशरीरकत्वकथनं पूर्ववाक्यविहिताद्भेदस्य ज्ञापनार्थम्।

संयोगरूपाधिमत्तया निरपेक्षेण पूर्वेणैकेनोपासनेनाभेदः संभवति। न च, "हन्ति पाप्मानं जहाति" इति गुणफलाधिकारत्वम्; प्रमाणाभावात्। पूर्वेणैकविद्यात्वं प्रमाणमिति चेत्—न, इतरेतराश्रयत्वात्; एकविद्यात्वे निश्चिते पूर्वफलस्यैव प्रधानफलत्वेन उत्तरयोः फलयोर्गुणफलत्वम्, तयोर्गुणफलत्वे निश्चिते सति संयोगभेदाभावात् पूर्वेण विद्यैक्यमितीतरेतराश्रयत्वमिति। एवमादिभिर्यथोक्तप्रकारमेव सूत्रद्वयम्॥३७॥ इति अन्तरत्वाधिकरणम्॥ १५॥

९८. कामाद्यधिकरणम् ३-३-१६॥

## कामादीतरत्र तत्र चायतनादिभ्यः। ३। ३। ३८॥

छान्दोग्ये श्रूयते, (छा. ८-१-१) "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इत्यादि; वाजसनेयके च, (बृ. ६-४-२२) "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशः, तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः" इत्यादि। तत्र संशयः किमनयोर्विद्याभेदः, उत नेति। किं युक्तम्? भेद इति। कुतः? रूपभेदात्। अपहतपाप्मत्वादिगुणाष्टकविशिष्ट आकाशः छान्दोग्ये उपास्यः प्रतीयते; वाजनेयके त्वाकाशे शयानो वशित्वादिगुणशिष्ट

---

**संयोगचोदना** फलसंबन्धविधिः। प्रथमवाक्ये स्वरसप्रतीतैक्यस्योत्तरवाक्यमनुरुध्य बाधकल्पनया द्वित्वावधारणमन्याय्यमिति भावेनाह **एकेने**ति। ननूपरितनवाक्ये अहरहमाख्यरहस्यनामानुसंधानफलमेव किञ्चित् कथ्यते; न प्रधानफलमिति न पृथक्संयोगचोदनेत्यत्राह न चेति। **गुणे**ति। दध्नेन्द्रियकामस्य जुहुयादित्यत्रेव गुणफलसंबन्धविधिरस्तु इत्याशयः। **एवमादिभि**रिति। स्वरसप्रतीते मोक्षार्थविद्यात्वे बाधकाभावात् अहरहंशब्दयोः हन्तिजहातिधातुगतहकारवत्त्वादिना तत्फलस्य नामफलत्वकल्पनाऽपि न युक्ता। प्राप्तसत्योद्देशेन आदित्यादिपुरुषत्वव्याहृतिशरीरकत्वाहरादिनामकत्वविधौ वाक्यभेदश्च। **तद्यत् सत्य**मिति पूर्वसत्यविषयकत्वं न विद्यैक्यसाधकम्; ब्रह्मोद्गीथादिरूपैकविषयकत्वेऽपि तद्विद्यानां भेददर्शनात्। भूरादिशरीरकत्वादिविशिष्टतया सत्यानुसंधानविधायकवाक्याभावात् तत्कल्पनागौरवञ्च। सैवहीत्यस्य पूर्वेणैकवाक्यता सूत्रशैल्याऽवगम्यते। संभवत्यैकाधिकरण्येऽधिकरणभेदकल्पनाऽपि न युज्यते इत्येवं भाव्यमिति **आदिभि**रिति शब्दप्रयोगः॥ ३७॥

पूर्वाधिकरणे ब्रह्मजीवरूपविभिन्नधर्मिविषयकत्वे वा ब्रह्मैकविषयकत्वे वा विद्याभेद इत्याशंक्य विद्यैक्यं समर्थितम्। संप्रति छान्दोग्यवत् वाजसनेयकस्यापि गुणविशिष्टवस्तुविषयकत्वे वा निर्गुणविषयकत्वे वा विद्याभेद एव स्यादित्याशंक्य विद्यैक्यं समर्थ्यते। एवं पक्षद्वयावलम्बी पूर्वपक्ष इति उत्तरसूत्रद्वयात् प्रथमसूत्रभाष्याच्च लभ्यते। गुणविशिष्टवस्तुविषयकत्वपक्षे तद्वस्तु यदि छान्दोग्योक्तब्रह्मैवेति मन्यते, तर्हि धर्मिभेदप्रयुक्तपूर्वपक्षो न भवति। तदन्यदेवेत्यत्र युक्त्युपन्यासे धर्मिभेदात् सुतरां विद्याभेदसिद्धिः। एतन्निरासे व्योमातीतं निरस्तं भवति। तत्र निर्गुणपक्षमुत्तरसूत्रे वक्ष्यन् गुणविशिष्टपक्षावलम्बनेन पूर्वपक्षं दर्शयति **अपहते**ति।

उपास्यः प्रतीयते ; अतो रूपभेदात् विद्याभेदः—इति प्राप्ते प्रचक्ष्महे—न भेद इति । कुतः ?

**रूपाभेदात्**—इतरत्र तत्र च **कामाद्येव हि रूपम्**—वाजसनेयके छान्दोग्ये च सत्यकामादिविशिष्टमेव ब्रह्मोपास्यमित्यर्थः। **कुत एतदवगम्यते?** आयतनादिभ्यः। **हृदयायतनत्वसेतुत्वविधरणत्वादिभिस्तावदुभयत्र सैव विद्येति प्रत्यभिज्ञायते। वशित्वादयश्च वाजसनेयके श्रुताः छान्दोग्यश्रुतस्य गुणाष्टकान्यतमभूतस्य सत्यसङ्कल्पत्वस्य विशेषा एवेति सत्यसङ्कल्पत्वसहचारिणां सत्यकामत्वादीनामपहतपाप्मत्वपर्यन्तानां सद्भावमवगमयन्ति। अतो रूपं न भिद्यते। संयोगोऽपि,** (छा. ८-३-४) **"परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते",** (बृ. ६-४-२५)

---

ननु गुणभेदात् भेद इह स्पष्टः। **आकाशः, आकाशे शयानः** इत्येतत् गुणभेदप्रदर्शकं वा धर्मिभेदप्रदर्शकं वेति चेत्—छान्दोग्ये उक्तः आकाशो न भूताकाशः ; किंतु परमात्मेति दहराधिकरण एव निर्णीतम्। तदुपजीवनेनैवेहापि अपहतपाप्मत्वादिगुणाष्टकवैशिष्ट्यमाकाशे उच्यते। वाजसनेयके आकाशपदेन यद्यपि परमात्मरूप आकाशो गृह्येत, तर्हि तत्र शयानस्यैव तत्रोपास्यत्वात् धर्मिभेदः स्पष्टः। कोऽसौ इति चेत्—अस्तु कश्चित्। स तु एतद्भिन्न एव। तैत्तिरीयके, "गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति विशोकत्वादिगुणविशिष्टगगनपदवाच्यदहराकाशरूपब्रह्मनिष्ठं किञ्चिदुपास्यत्वेन दर्शितम्। तत् तावत् अपहतपाप्मत्वादिगुणाष्टकं छान्दोग्योक्तमिति सिद्धान्ती मन्यते। तन्न ; तत्रैवोपरि, "यद्(ओ)वेदादौ स्वरः प्रोक्तः—यः परः स महेश्वरः" इति परस्य महेश्वरस्य कथनात् तद्ग्रहणसंभवात्। तदेतत् गगनान्तर्वर्तित्वात् व्योमातीतम्। एवं तैत्तिरीयवाजसनेयैक्यम्। यदि मन्यते—तैत्तिरीये अकारवाच्यतया महेश्वरस्य कथनात्, 'अकारो विष्णुवाचकः' इत्यस्य च सुप्रसिद्धत्वात्, 'तमीश्वराणां परमं महेश्वरम्' इति तस्मिन्नेव महत्त्वविशिष्टैश्वर्यात्, समनन्तरनारायणानुवाकेन दहरविद्योपास्यत्वमपि नारायणस्यैवेति प्रतिपादनाच्च न तैत्तिरीयं व्योमातीतसाधकम्। वाजसनेयमपि, आकाशपदेन दहराकाश एव ग्राह्य इत्यत्र मानाभावात् प्रसिद्धभूताकाशवाच्येवेति न व्योमातीतसाधकमिति—तर्हि भवतु छान्दोग्यदहरविद्योपास्यं ब्रह्मैवाकाशे शयानम्। अथापि विद्या भिन्नैव। आकाशशायित्वमप्यत्रोपास्याकारः। छान्दोग्ये आकाशपदं तु न तदर्थकम्; प्रत्युत तत्र, 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति वचनसत्त्वात् गायत्रीविद्यायां गायत्रीसादृश्यवत् आकाशतौल्यमुपास्याकार इति। अतो वशित्वादिवदिदमपि भेदकमिति पूर्वपक्षभाष्याशय इति।

**कामादीतरत्र तत्र च।** अत्रेत्यनुक्त्वा **इतरत्रे**ति प्रयोगः छान्दोग्यवत् तैत्तिरीयस्यापि संग्रहार्थः। तेन तैत्तिरीये, 'तस्मिन् यदन्तः' इति प्रसिद्धतया निर्देशात् छान्दोग्यप्रसिद्धं कामादिगुणजातमेव ग्राह्यम्, न त्वप्रसिद्धं किञ्चिद्धर्मीति सूचितं भवति। एवञ्च श्रुतित्रयमेकविद्यापरम्। **कामादीति** गुणनिर्देशः, वशित्वाद्येव कामाद्यपीति ज्ञापनेन गुणभेदप्रयुक्तविद्याभेदवारकः ; कामादिकमस्त्येव, **न तु** गुणाभावः, नातो निर्गुणसगुणप्रयुक्तविद्याभेद इति बोधकश्च। **हृदयायतने**ति। दहरं पुण्डरीकं वेश्म, यत् पुण्डरीकम्, अन्तर्हृदय आकाशः इति सर्वत्र हि हृदयपरिमितस्यैवोपासनं प्रतीयते। **विशेषा**

"अभयं वै ब्रह्म भवति" इति ब्रह्मप्राप्तिरूपो न भिद्यते। आकाशशब्दः छान्दोग्ये परमात्मविषय इति, (शारी. १-३-१३) "दहर उत्तरेभ्यः" इत्यत्र निर्णीतम्। वाजसनेयके त्वाकाशे शयानस्य वशित्वादिश्रवणात् तस्य शयानस्य परमात्मत्वे सति, तदाधाराभिधायिन आकाशशब्दस्य. (तै. ना. ११) "तस्यान्ते सुषिरं सूक्ष्मम्" इति हृदयान्तर्गतस्य सुषिरशब्दवाच्यस्या[व]काशस्याभिधायकत्वमवगम्यते। अतो विद्यैक्यम्॥ ३८॥

अथ स्यात् यदुक्तम्— वाजसनेयके वशित्वादिभिः सह सत्यकामत्वादिसद्भावोऽवगम्यते इति—तन्नोपपद्यते; वशित्वादीनामेव तत्र परमार्थतः सद्भावात्; तदभावश्च, (बृ.६-४-१९.) "मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥ एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्" इति प्रकृतेन वाक्येन, "स एष नेति नेत्यात्मा" इत्युत्तरेण चोपास्यस्य ब्रह्मणो निर्विशेषत्वप्रतीतेरवगम्यते। अतो वशित्वादयोऽपि स्थूलत्वाणुत्ववत् निषेध्या इति प्रतीयन्ते। अत एव छान्दोग्येऽपि सत्यकामत्वादयो न ब्रह्मणः पारमार्थिका गुणा उच्यन्ते; अतोऽपारमार्थिकत्वादेवंजातीयकानां गुणानां मोक्षार्थेषूपासनेषु लोप इति—तत्राह—

## आदरादलोपः। ३। ३। ३९॥

ब्रह्मगुणत्वेन प्रमाणान्तराप्राप्तानां गुणानामेषां सत्यकामत्वादीनाम्, (छा. ८-१)

---

एवेति। सिद्धमिदम्, 'समान एवञ्चाभेदात्' इत्यत्र। पूर्वपक्ष्युक्तं परिहरति **आकाशशब्द** इति। 'वाजसनेयके आकाशे शयानतया वशित्वादिगुणविशिष्टस्योक्ततया स एव छान्दोग्ये, तस्मिन् यदन्तरिति गृह्यताम्; एवञ्च दहरोऽस्मिन्नन्तराकाश इति भूताकाश एव' इति न शङ्कितुमवकाशः, दहराधिकरणे तदर्थस्यान्यथा स्थापितत्वात्। न च तदनुसारेणात्रापि तस्यैवाकाशपदेन ग्रहणप्रसक्तिः; तत्र शयानस्य पुरुषान्तरस्याप्रामाणिकत्वात्। अस्य च वाक्यस्यान्यथासिद्धत्वात्। अतः प्रसिद्धभूताकाशपरत्वमेवेति भावः। न चैवमप्याकाशसादृश्याकाशशयानत्वरूपधर्मभेदः; तदुभयसमुच्चयसंभवात्। वस्तुतः 'यावान् वा' इति वाक्यस्य परमात्मनो वस्तुतः परिच्छिन्नत्वं नास्तीत्यवगमनप्रवृत्ततया सादृश्यरूपधर्मस्याचिन्त्यत्वाच्च॥

एवं सगुणत्वेऽपि विद्याभेद इति पूर्वपक्षं निरस्य, वस्तुतः नेहनानास्तीत्याद्युपरितनवाक्यानुसारेण वशित्वाद्यविवक्षावगमान्निर्गुणविद्यैव वाजसनेयमतेति पूर्वपक्षपरिहारायोपरि सूत्रम्। तदवतारयति **अथस्यादिति**। **प्रकृतेन** सर्वस्यवशीत्यतः प्राक्स्थितेन। नन्वपरमार्थानामप्यत्र कथनादुपास्यत्वं स्वीकर्तव्यमित्यत्र—नोपास्यत्वं कल्पनीयम्, निषेधप्रतियोगिसमर्पकतया वाक्यचरितार्थ्यात्, अत्र घट्टे उपासनद्वये तात्पर्यकल्पनस्यानुचितत्वात्। छान्दोग्ये तु उपासनद्वयमपि संमन्तव्यम्। अतस्तत्रापि तेषामपारमार्थिकत्वं तत्संदर्भादपि सिद्धमित्याशयेनाह **अत एवेति**।

**आदरादलोपः**। छान्दोग्ये वाजसनेयके चात्र प्रकरणेऽन्यत्र च श्रुतिषु ब्रह्मगुणेषु ब्रह्मणीवादरदर्शनात् न तेषामभावः। अतस्ते पारमार्थिकाः। एवञ्च निर्गुणं ब्रह्म निर्मूलम्। तत् सिद्धं विद्यैक्य-

"तस्मिन् यदन्तस्तदन्वेष्टव्यम्"...."एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः", "सर्वस्य वशी सर्वस्येशानः एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" इत्यादिभिरनयोः श्रुत्योरन्यासु च मोक्षार्थोपासनोपास्यब्रह्मगुणत्वेन सादरमुपदेशात् एषामलोपः; अपितूपसंहार एव कार्यः। छान्दोग्ये तावत्, "तत् य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति" इति सत्यकामत्वादिगुणविशिष्टस्य ब्रह्मणो वेदनमभिधाय, "अथ य इहाऽऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेष्वकामचारो भवति" इत्यवेदननिन्दा क्रियमाणा गुणविशिष्टवेदनस्यादरं दर्शयति। तथा वाजसनेयके, "सर्वस्य वशी सर्वस्येशानः"...."एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः" इति भूयोभूय ऐश्वर्योपदेशात् गुणेष्वादरः प्रतीयते। एवमन्यत्रापि। न च मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रं प्रतारकवत् अपारमार्थिकान् निरसनीयान् गुणान् प्रमाणान्तराप्रतिपन्नान् आदरेणोपदिश्य, संसारचक्रपरिवर्तनेन पूर्वमेव बम्भ्रम्यमाणान् मुमुक्षून् भूयोऽपि भ्रमयितुमलम्। "नेह नानाऽस्ति किञ्चन"...."एकधैवानुद्रष्टव्यम्" इति तु सर्वस्य ब्रह्मकार्यत्वेन तदात्मकत्वादेकधाऽनुदर्शनं विधाय अब्रह्मात्मकत्वेन पूर्वसिद्धनानात्वदर्शनं निषेधतीत्ययमर्थः प्रागेव प्रपञ्चितः। (बृ. ६-४-२२) "स एष नेति नेत्यात्मा" इत्यत्र च, इतिशब्देन प्रमाणान्तरप्रतिपन्नं प्रपञ्चाकारं परामृश्य, न तथाविधं ब्रह्मेति सर्वात्मभूतस्य ब्रह्मणः प्रपञ्चविलक्षणत्वं प्रतिपाद्यते। तदेव चानन्तरमुपपादयति, "अग्राह्यः; न हि गृह्यते। अशीर्यः; न हि शीर्यते। असङ्गः; न हि सज्यते। अव्यथितः; न व्यथते, न रिष्यति" इति—प्रमाणान्तरग्राह्यविसजातीयत्वात् प्रमाणान्तरेण न गृह्यते; विशरणीयविसजातीयत्वान्न विशीर्यते; एवमुत्तरत्रानुसन्धेयम्। छान्दोग्येऽपि, (छा. ८-१-५-६) "नास्य जरयैतज्जी-

---

मुपसंहारश्चेति सूत्राशयः। गुणेषु विशिष्यान्वेष्टव्यत्वकथनात्, तदवेदननिन्दनात्, सत्यान् कामानिति विशेषणात्, **एष एष** इति एतच्छब्दावृत्त्या चादरः सिद्धः। एतावदभावेऽपि गुणानां प्रमाणान्तराप्राप्ततया श्रुत्येकसमधिगम्यत्वान्निषेधासंभव एवेति। **नेहनानास्ति किञ्चन**—ब्रह्म विना किमपि नास्ति। **एकधैव**—ब्रह्मात्मकत्वेनैव। **नेति**—अचेतनसजातीयं न भवति, ग्रहणविशरणयोरभावात्; **नेति**—न चेतनसजातीयमपि. सङ्गदुःखरहितत्वात्। ईदृशवैजात्यकथनं न विलक्षणगुणादिमत्त्ववारकमिति। अत एव छान्दोग्ये वैलक्षण्यवर्णनपूर्वकं गुणकथनमित्याह **छान्दोग्येऽपीति** ॥ ३९ ॥

ननु गुणानां सत्यत्वमसत्यत्वं वा, सगुणमिव निर्गुणमप्यस्ति न वेति विचारस्तावदास्ताम्। सगुणोपासनसाध्यस्य मुक्तित्वाभावाद् वास्तवमुक्त्यनुरूपेण ब्रह्मज्ञानेन भवितव्यम्। सगुणोपासनसाध्यं हि सगुणसायुज्यम्। तच्च भोगसाम्यम्। तच्च जक्षत् क्रीडन् रममाण इत्यादिवाक्यावसितरूपम्, जक्षण-क्रीडन-स्त्रीप्रभृतिरमण-ज्ञातिबन्धुसमागम-सर्वलोकसंचारादिकं न सांसारिकफलादन्यद् भवितुमर्हति।

र्यति, न वधेनास्य हन्यते ; एतत् सत्यं ब्रह्मपुरम् । अस्मिन् कामाः समाहिताः" इति सर्वविसजातीयत्वं ब्रह्मणः प्रतिपाद्य तस्मिन् सत्यकामत्वादयो विधीयन्ते ॥ ३९ ॥

नन्वेवमपि, "तत् य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति । स यदि पितृलोककामो भवति" इत्यादिना सत्यकामादिगुणविशिष्टवेदनस्य सांसारिकफलसंबन्धश्रवणात् मुमुक्षोर्ब्रह्मप्रेप्सोर्न सगुणं ब्रह्मोपास्यम्; परविद्याफलं च, (छा. ८-३-४) "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इतीदमेव । अतः सत्यकामत्वादयो ब्रह्मप्रेप्सोर्नोपसंहार्या इति ; अत उत्तरं पठति—

उपस्थितेऽतस्तद्वचनात् । ३ । ३ । ४० ॥

उपस्थितिः—**उपस्थानम्** । **ब्रह्मोपसंपन्ने सर्वबन्धविनिर्मुक्ते स्वेन रूपेणाभिनिष्पन्ने प्रत्यगात्मनि** अत **एव-उपसंपत्तेरेव हेतोः सर्वेषु लोकेषु कामचार उच्यते,** (छा. ८-३-४) "**परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । स उत्तमः पुरुषः । स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा, नोपजनं स्मरन्निदं शरीरम्**", (छा. ७-२५-२) "**स**

---

न चैवं बद्धमेव मुक्तं कश्चिन्मन्तुमर्हति । अतः, परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इत्युच्यमानो ब्रह्मसंपत्तिपूर्वकस्वरूपाविर्भावो विषयानुभवविदूर एव मुक्तिरिति तदर्थमुपासनं न सगुणविषयकम्; तत्क्रतुनयविरोधात् । अतो जगत ईश्वरस्य चासत्यत्वे सत्यत्वे वा वास्तवमुक्तितदर्थोपासनयोरन्यादृशत्वात्, बृहदारण्यके, अभयं वै ब्रह्म भवतीति तत्फलकीर्तनाच्चात्र न कामाद्युपसंहारसंभव इत्यनन्तरसूत्रोत्थापकशङ्कां दर्शयति **नन्वेवमपीति** । अत्र भाष्ये सत्यमिथ्याविचारादर्शनात् साधारण्येन शंकेति ज्ञायते । **इतीदमेवेति** । तथाच छान्दोग्ये प्रथमं सगुणोक्तावपि सगुणोपासनसाध्यसगुणानुभवानन्तरकममुक्तिस्वरूपं परंज्योतिरितिवाक्यदर्शितम् । बृहदारण्यकं तु शुद्धमुक्तिमात्रपरमिति पूर्वपक्ष्याशयः ॥

**उपस्थिते**·········। अयमाशयः—फलभेदोपासनभेदकल्पनमुपनिषद्गमनिकात्यन्तविरुद्धम् । छान्दोग्ये 'स्वरूपेणाभिनिष्पद्यत'इति स्वरूपाविर्भावानन्तरमेव हि उत्तमपुरुषे पर्ययणं जक्षणक्रीडनरमणादिकं च स्पष्टमुक्तम् । स्वरूपाविर्भावश्च परज्योतिरुपसंपत्त्यनन्तरमिति च तत्रैव व्यक्तम् । इयं च संपत्तिः, 'यावन्न विमोक्ष्ये अथ संपत्स्ये' इति विमोक्षानन्तरा । एवमेव, 'पुण्यपापे विधूय' 'विधूय पापं·····धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' इति पुण्यपापविधूननात् पश्चादेव संपत्तिरवगम्यते । अस्य च जक्षणक्रीडनादेः शरीरसाध्यत्वात् प्राकृतशरीरप्रसक्तौ तन्निषेधश्च कृतः, "नोपजनं स्मरन् इदं शरीरम्" इति । भूमविद्यायाञ्च, 'तरति शोकमात्मवित्' इति प्रक्रान्तस्य शोकतरणार्थात्मज्ञानस्य फलं मोक्षः, 'स स्वराड् भवति, तस्य सर्वेषु लोकेषु कामचारो भवति'इत्येवंरूप एवोक्तः । न च सर्वेश्वरस्य प्रशासकान्तररहितस्य पुण्यपापपारवश्यनिबन्धनं जक्षणक्रीडनादि । तत्परमसाम्यापन्ने च मुक्ते तद्वदेव पुण्यपापानधीने कार्ये सति कथं संसारित्वापादनम् । न हि तत्र दुःखलेशस्याप्यवकाशोऽस्ति । 'न रोगं नोत दुःखताम्' इति स्पष्टमुक्तेः । न च स्त्रीजनादिरमणं 'तुष्यन्ति च रमन्ति चे'ति गीतोक्तभगवदनुभवातिरिक्तहेयरत्यादि—

**स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति" इति । तदेतत् चतुर्थे निपुणतरमुपपादयिष्यते । अतः सर्वेषु लोकेषु कामचारस्य मुक्तोपभोग्यफलत्वात् मुमुक्षोः सत्यकामत्वादयो गुणा उपसंहार्याः ॥ ४० ॥** इति कामाद्यधिकरणम् ॥ १६ ॥

---

पम्। न च सशरीराः सर्वे विधिनिषेधशास्त्रवश्याः; देवपशुपक्ष्यादीनामवश्यत्वात्। न च शरीरसाध्यं फलं सर्वं शास्त्रीयकर्मैकजन्यम्, लौकिककर्मणोपि सत्त्वात्; ईश्वरादौ तदभावाच्चेति। स्त्रैणमपि न परमात्मानुभवबाधकमिति ज्ञापनाय हि **स्त्रीभिर्वे**ति। ननु पितृज्ञातिभ्रात्रादिलाभानुभवस्य तत्र वर्णनात्, अतीतपित्रादेरलभ्यत्वात्, उपलब्धेषु पूर्वपितृत्वादिबुद्धौ च भ्रान्तिमत्त्वस्यावश्यकत्वात्, प्रत्यग्रपित्रादिसंपादने च स्वस्य पुत्रादितया जननादिसिद्धेः ईदृशजन्मजरामरणादिसर्वहेयास्पदस्य का नाम मुक्ततेत्यत्राह **तदेतदि**ति। भगवदवतारसरणिं दृष्टान्तीकृत्य सर्वं सम्यगुपपादयिष्यत इत्यर्थः। बृहदारण्यक एवात्रान्ते, 'नैनं कृताकृते तपतः' इति कर्मावश्यत्वमुक्तम्। तैत्तिरीये च, 'एतं ह वाव न तपति, किमहं साधु नाकरवम्, किमहं पापमकरवम्' इति अकर्मवश्यत्वमुक्त्वा पश्चादुपश्लोक्यते, 'इमान् लोकान्····कामरूप्यनुसंचरन्' इत्येवम्। अतस्तत्र सर्वविभूतिविशिष्टब्रह्मानुभवस्यैव प्रपञ्चनात् हेयानुभवलवलेशस्याप्यभावात् तस्यैव शुद्धमुक्तित्वात् तदर्थस्य सगुणोपासनस्यैव शास्त्रार्थत्वात् उपासनान्तरस्याप्रामाणिकत्वात् सर्वत्र पूर्वापरपरामर्शे सगुणोपासनत्वस्यैव सिद्धेः कामाद्युपसंहारः मुख्य इति ॥

एवं संभवदेकाधिकरण्यायामस्यां त्रिसूत्र्यां प्रथमसूत्रं परं दहरविद्याविषयतया परिगृह्य, तदुपरि वैश्वानरविद्याङ्गप्राणाग्निहोत्रमधिकृत्य तन्नियतानियतत्वविचारः शांकरादौ कृतः उपासनविषयकत्वाभावात् निरूपणप्रक्रियासामञ्जस्याभावाच्च सर्वथैवोपेक्षणीयः ॥

सूत्रे **उपस्थिते अतः** इति पदद्वयं क्रमेण, समुत्थायोपसंपद्येति दहरविद्यावाक्यस्य, स स्वराड् भवतीति भूमविद्यावाक्यस्य च ज्ञापनायेत्याशयेन भाष्ये वाक्यद्वयोपादानम्। पूर्ववाक्ये बन्धविनिर्मोकपूर्वकोपसंपत्तिः श्रुता। उपस्थिते जीवे कामचारस्याकर्मवश्यताप्रयुक्तत्वं द्वितीयवाक्यावसेयम्। तत्रोपरि, अन्यराजानस्ते क्षय्यलोका भवन्ति, तेषां सर्वेषु लोकेष्वकामचारो भवति इति अकामचारः कर्माधीन उक्तः। तत्प्रत्यनीकतया चात्र स्वराट्त्वं कामचारे हेतुतया विवक्ष्यते। तदिदम् **अत** इति सूत्रे दर्शितम्। तथाचोपसंपत्त्यनन्तरे तद्धेतुके च सति कामचारे, सगुणविद्याफलं संसारः, उपसंपत्तिः पश्चाद्भाविनी शुद्धब्रह्मविद्याफलमिति मतं नौपनिषदमिति ॥ ४० ॥

परविद्याविशेषे कामादिगुणानां नियतत्वमुक्तम्; तद्वत् विद्याविशेषाणां कर्मसु नियतत्वं स्यादिति शंकया संगतिः। उद्गीथादिविषये दृष्टिविधिरूपाण्युपनिषदुक्तानि उपासनानि किं कर्माङ्गभूतानि, उत फलविशेषार्थानीति विचारः। अयमेव विचार एतत्पादान्तिमाधिकरणे पुनर्विस्तरेण करिष्यते। अत्र तु किञ्चिदंशे प्रश्न इति तत्समाधानमात्रेणाधिकरणसमाप्तिः। पूर्वपक्षी पर्णतान्यायस्येह प्रसरं वस्तुत अर्थवादिकफलभावञ्च मन्यते इति सूत्रस्वारस्याद् ज्ञायते। सिद्धान्ती पर्णतान्याये बाधकम्, अर्थवादस्य फलविशेषसमर्पकत्वञ्चोपन्यस्यति। बाधकप्रदर्शनं सूत्रे **तद्दृष्टे**रिति। फलाभावशंकापरिहरणं **पृथग्घी-**

९९. तन्निर्धारणानियमाधिकरणम् ३-३-१७ ॥

## तन्निर्धारणानियमः तद्दृष्टेः ; पृथग्ध्यप्रतिबन्धः फलम् । ३ । ३ । ४१ ॥

(छा. १-१-१) "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादीनि कर्माङ्गाश्रयाण्युपासनानि, कर्माङ्गभूतोद्गीथादिमुखेन जुह्वादिमुखेन पर्णतादिवत्, कर्माङ्गत्वेन निरूढानुष्ठानानीति उद्गीथोपासनसंबन्धिनः, (छा. १-१-१०) "यदेव विद्यया करोति श्रद्धयोपनिषदा, तदेव वीर्यवत्तरं भवति" इति वर्तमाननिर्देशस्य पर्णतादिसंबन्ध्यपापश्लोकश्रवणवत् पृथक्फलत्वकल्पनायोगात् क्रतुषु नियमेनोपसंहार्याणीत्येवं प्राप्ते प्रचक्ष्महे-तन्निर्धारणानियमः-इति ।

निर्धारणं **निश्चयेन मनसोऽवस्थापनम् ; ध्यानमित्यर्थः** । तन्निर्धारणानियमः- **कर्मस्वुद्गीथाद्युपासनानामनियमः । कुतः ?** तद्दृष्टेः । **उपलभ्यते ह्युपासनानुष्ठानानियमः, "तेनोभौ कुरुतः, यश्चैतदेवं वेद, यश्च न वेद" इति अविदुषोऽप्यनुष्ठानवचनात् । न चाङ्गत्वे सति**

---

त्यादिना । प्रथमांशं विशदमाह **कर्माङ्ग**त्यादिना ; द्वितीयांशं सिद्धान्ते **किमिद**मिति क्षेपेण ज्ञापयिष्यति । 'यस्य पर्णमयी जुहूर्भवति' इति वाक्ये जुह्वाः पलाशदारुविकारत्वं विधीयते । एतदर्थवादः, 'न स पापं श्लोकं शृणोति' इति । नास्य फलसमर्पकत्वम् ; जुह्वाः नियमेन क्रतावेवोपयोगात् क्रतुद्वारा सफलत्वेनावगतजुहूद्देशेन पर्णमयत्वविधाने तत एव फलाकांक्षाविरहात् । (जुहूसंबन्धमुपेक्ष्य पर्णतायाः साक्षादपापश्लोकश्रवणसंबन्धो दुर्वचः । सुवचत्वे जुह्वनाश्रयणेऽपि फलापत्तिः । तदर्थं जुहूसंबन्धस्यापि विधौ उभयविधानाद्वाक्यभेद ) नशृणोतीति वर्तमाननिर्देशाच्च न तस्य फलत्वम् ; नश्रोष्यतीति तदा भाव्यम् । पर्णताकरणकाले कस्यचित् पापश्लोकश्रवणस्यापि संभावितत्वाद्विरोधश्च । तद्वदत्र उद्गीथमुपासीतेति वाक्ये उद्गीथोद्देशेनोपासनविधानात् उद्गीथस्य च नियमेन क्रत्वर्थत्वात् तद्द्वारा सफलमुपासनमिति फलाकांक्षा न भवति । फले वर्तमानापदेशश्चात्रापि तुल्य इति । **निरूढानुष्ठानानी**ति ; नियतानुष्ठेयतया निश्चितानीत्यर्थः ।

**तद्दृष्टेः** अनियमस्य श्रुतौ दर्शनात् ; अनियमवचनादित्यर्थः । अनियमवचनादस्मादेव उद्गीथमुपासीतेत्यादावुद्गीथादेरुद्देश्यत्वेन नान्वयः, विषयाकांक्षायामुपासनविषयसमर्पणमात्रं द्वितीययेति ज्ञायते ; **रात्रिसत्रन्यायेन** । यथा रात्रिसत्रस्य स्वतन्त्रस्य फलानिर्देशात् फलाकांक्षायामन्यकल्पनागौरवादर्थवादश्रुतमेव प्रतिष्ठाख्यं फलम्, तद्वदत्रापि फलाकांक्षायाः सत्त्वात फलमिदमिष्यते । न च षोडशिग्रहणाग्रहणवत् विकल्प एव, 'तेनोभौ कुरुतः' इति वाक्यादिष्यतामिति वाच्यम्—विकल्पस्याष्टदोषदुष्टत्वात् । न च नित्यकर्मणि यथाशक्तिप्रयोगस्येष्टतया शक्त्यभावकालिकानष्ठानानुवाद एवायम्, 'यश्च न वेद' इतीति वाच्यम्—अशक्तिप्रयुक्तानुष्ठानस्य सर्वाङ्गसाधारण्यादत्र विशिष्य कथनस्य व्यर्थत्वात् । अतोऽनङ्गत्वं तद्दृष्टिबलादवगम्यते । अत एवास्य कल्पसूत्रेष्वनिबन्धः । अतः फलाकांक्षायां पृथक्फलसमर्पकमिदमिति । ननु वीर्यवत्तरत्वस्य पृथक्फलत्वसंभवे किलैवं निर्वाहः स्यात् ; तदेव न ; वीर्यातिशये सति कार्यातिशयस्य लोके दर्शनात् अङ्गाधिक्यप्रयुक्तमतिशयितफलजनकत्वमेवात्रावगम्यते । यश्च न वेदेति वचनञ्च—केचिदुपनिषदुक्तत्वात् कर्मकाण्डानुक्तमिदमङ्गं परित्यज्य कुर्वन्ति ; तन्न युक्तमिति अङ्गत्व-

उपासनस्यानुष्ठानानियम उपपद्यते । एवमुपासनस्यानङ्गत्वे निश्चिते सति उपासनविधेः फलाकांक्षायां रात्रिसत्रन्यायेन वीर्यवत्तरत्वं कर्मफलात् पृथग्भूतमेव फलमित्यवगम्यते ॥ किमिदं वीर्यवत्तरत्वम्? कर्मफलस्यैवाप्रतिबन्धः । प्रतिबध्यते हि कर्मफलं प्रबलकर्मान्तरफलेन तावन्तं कालम्; तदभावोऽप्रतिबन्धः । स ह्यप्रतिबन्धः कर्मफलात् स्वर्गादिलक्षणात् पृथग्भूतमेव फलम् । तदिदमुच्यते-पृथग्ध्यप्रतिबन्धः फलमिति । अतः कर्माङ्गाश्रयाणामपि पृथक्फलत्वाद् गोदोहनादिवत् कर्मस्वुद्गीथाद्युपासनानामनियमेनोपसंहारः ॥४१॥ इति तन्निर्धारणानियमाधिकरणम् ॥१७॥

१००. प्रदानाधिकरणम् ३-३-१८ ॥

## प्रदानवदेव तदुक्तम् । ३ । ३ । ४२ ॥

दहरविद्यायाम्, (छा.८-१-६) "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इति दहराकाशस्य परमात्मन उपासनमुक्त्वा, "एतांश्च सत्यान् कामान्" इति गुणानामपि पृथगुपासनं विहितम् । तत्र संशयः—गुणचिन्तनेऽपि तत्तद्गुणविशिष्टतया दहरस्याऽऽत्मनश्चिन्तनमावर्तनीयम्, उत नेति । दहराकाशस्यैवापहतपाप्मत्वादीनां गुणित्वात् तस्य च सकृदेवानुसन्धातुं शक्यत्वाद् गुणार्थं तच्चिन्तनं नाऽऽवर्तनीयम्—

इति प्राप्ते उच्यते-प्रदानवदेवेति । प्रदानवदावर्तनीयमेवेत्यर्थः । यद्यपि दहराकाश एक एवापहतपाप्मत्वादिगुणानां गुणी; स च प्रथमं चिन्तितः—तथाऽपि स्वरूपमात्रात्

---

दार्ढ्यापादकमेवास्तु इत्याशंकापरिहाराय सूत्रे **अप्रतिबन्ध** इति पदम् । अयं भावः—काम्यानां सकलाङ्गोपसंहार एव फलित्वात् एकाङ्गत्यागे फलस्यैवाभावात् एतदभावेऽल्पफलजनकत्वम् एतत्सत्त्वे चाधिकं फलमिति वर्णनमयुक्तम् । अतस्तरपो व्यर्थता । न चात्र फलवत्तरमिति पदमस्ति, किंतु वीर्यवत्तरमिति । वीर्यं शक्तिः फलोत्पादकत्वम् । सा प्रतिबन्धकबलात् निरुद्धा यावत्प्रतिबन्धं न फलं जनयेत । तदत्र प्रतिबन्धकगतशक्त्युपमर्देन स्वकाले कार्यजनकत्वरूपातिशय एव वीर्यवत्तरत्वं विवक्षितमिति ज्ञायते । इदश्चाङ्गिफलादन्यदेवेति एतदर्थमुपासनम्, न त्वङ्गमिति नैतन्नियम इति ॥ **स्वर्गादीति** पदात् औपनिषदस्यास्योपासनस्य भक्तिवृद्ध्यर्थकर्ममात्र एवोपयोग इति न; अविशेषात् स्वर्गाद्यर्थेपीति ज्ञापितं भवति ॥४१॥

पूर्वाधिकरणं प्रासङ्गिकम् । अतस्तत्पूर्वाधिकरणेन संगतिः । ननु—केयं संगतिः? एकविद्याविषयकत्वमेव । दहरविद्यायां कामाद्युपसंहारांशः प्राक्विचारितः; धर्मिचिन्तनावृत्त्यंश इह तत्रैव विचार्यते इति चेत्—नन्वयमपि प्रसंग एव । किञ्च तन्निर्धारणाधिकरणस्य यदि तत्र स्वरससंगतिर्नास्ति, तदा तद्विचारस्य पादान्ते अवश्यमेव करिष्यमाणत्वादत्र तत्त्याग एव वरम् । अतः पूर्वोक्तरीत्या आक्षेपविशेषरूपसंगत्यैव तदधिकरणं प्रवृत्तमिति चेत्—अस्तु कामम् । अस्तु च पूर्वाधिकरणेनैवास्यापि संगतिरेवम्—पूर्वं प्रतिप्रयोगमुद्गीथोपासनावृत्तिर्न भवति, अन्यार्थतयाऽनपेक्षितत्वादित्युक्तम् । तद्वत् दहरविद्यायां धर्मिचिन्तनावृत्तिरपि मा भूत्, अनपेक्षितत्वादित्याक्षेप इति ।

गुणानां पृथगनुसंधानस्य विहितत्वं तेषां गुण्यपृथग्भावसामान्यञ्च संशयनिदानम् । **सकृदेवेति** ।

**गुणविशिष्टाकारस्य भिन्नत्वात्, "अपहतपाप्मा विजरः" इत्यादिना गुणविशिष्टतया चोपास्यत्वेन विहितत्वात् पूर्वं स्वरूपेणानुसंहितस्यापहतपाप्मत्वादिविशिष्टतयाऽनुसन्धानार्थमावृत्तिः कर्तव्या; यथा,** (यजु. २-३-६) **"इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्, "इन्द्रायाधिराजाय, इन्द्राय स्वराज्ञे" इतीन्द्रस्यैव राजत्वादिगुणविशिष्टत्वेऽपि तत्तद्गुणसंबन्ध्या-**

---

चिन्तनीयसर्वधर्मधर्म्युभयचिन्तने सकृत्कृतेऽपि धर्माणामन्यगतत्वशंकाप्रसक्तिवारणादिति भावः। **भिन्नत्वा-** दिति। अस्तु भिन्नत्वम्; किं तेन। एतांश्च सत्यान् कामान् अनुविद्येति गुणमात्रवेदने विधीयमाने गुणिचिन्तनस्य का प्रसक्तिः। अतः चिन्तितस्य चिन्तनं व्यर्थमिति तत्त्यागः, एवं पुनश्चिन्तनवचनाभावादपि—इत्यत्राह **अपहतेति**। अयं भावः—

अनेकगुणविशिष्टब्रह्मचिन्तनस्य सर्वविद्यासाधारण्यात्, 'मनोमयः प्राणशरीरो भारूपः' इति शाण्डिल्यविद्यादावपि सकृदनुसंधानं धर्मिणः आवृत्तिर्वेति कस्मान्न विचार्यते। यदुच्यते—सर्वत्र केवलधर्मिचिन्तनात् तत्तद्गुणविशिष्टाकारेण चिन्तनस्य भिन्नत्वेऽपि नावृत्तिप्रसक्तिः। यथा अरुणयैकहायन्येत्यत्र सामानाधिकरण्येनानेकविशिष्ट एकोऽर्थ इति ज्ञानमानन्दमयाधिकरणे वर्णितम्, तथा मनोमयत्वप्राणशरीरत्वादिसर्वधर्मविशिष्टधर्म्यनुसंधानं सकृदिति सुवचत्वादिति—तर्हि अत्रापि अपहतपाप्मा विजर इत्येवं निर्देशात् सर्वविशेषणविशिष्टधर्मिचिन्तनं सकृत् स्यादित्युक्तौ को दोषः। तथा सति दहराकाशं पृथङ्निर्दिश्य, 'तस्मिन् यदन्तः तदुपासितव्यम्' इति, 'आत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्' इत्येवं गुणानां पृथङ्निर्देशस्वारस्यं हन्यते। सर्वास्वपि विद्यासु प्रकरणावगतगुणसहितस्यैवानुसंधीयमानतया तथैवात्रापि एवंवचनभंग्यभावेऽपि सिद्धेः। अतो यथापाठं दहरं धर्मिणमनुसंधाय गुणाः पृथगनुसंधेया इति चेत्—तर्हि तेषां गुणानां दहरात्मसंबन्धित्वानुसंधानाभावेऽन्यदीयत्वभ्रमादिप्रसंगात् तदीयत्वमप्यनुसंधेयम्। तत्र गुणानां विशेष्यतया, 'अपहतपाप्मा विजरः' इति विशेषणतया च द्वेधा निर्देशोपलम्भात् गुणानां गुणिप्रकारतयैवप्रतीतिस्वारस्याभङ्गेन गुणविशिष्टाकारेण धर्मिचिन्तनमेवाद्रियताम्। परंतु धर्मिचिन्तनात् पृथक्तया। एवं पृथगनुसंधानेऽपि पृथङ्निर्देशः सार्थक एवेति न विद्यान्तराविशेषः। न च पुनः पुनश्चिन्तनवैयर्थ्यम्; विशिष्टाकाराणां भिन्नतया तत्तद्गुणस्य तद्धर्मिसंबन्धज्ञानाय तदावश्यकत्वात। तत्र आनन्दत्वादिसर्वस्वरूपनिरूपकधर्मसहितदहरत्वविशिष्टब्रह्मस्वरूपानुसंधानमेकम्। एवं धर्म्यनुसंधानानन्तरम्, दहरात्मा अपहतपाप्मा, दहरात्मा विजर इत्येवं पृथक्पृथग्वा भवतु। दहरात्मा अपहतपाप्मत्वादिविशिष्टः इत्येकं वा; सर्वथा गुणिचिन्तनमावर्तत इति।

धर्म्यनुसंधानावृत्तौ दृष्टान्तं सूत्रितं विवृणोति **यथेति**। अस्ति त्रैधातवीयेष्टिः इन्द्रायराज्ञ इत्युक्तत्रिपुरोडाशा एकप्रयोगविषयः। तत्र यागभेदे प्रदानभेदः सर्वत्र सिद्धः। यत्र तु संप्रतिपन्नदेवताकत्वम् (देवताभेदो नास्ति), तत्र तन्त्रेण प्रदानानुष्ठानं प्रयोगशैघ्र्यायाऽऽदृतम्। यथा ऐन्द्रं दधि, ऐन्द्रं पय इति विहितदर्शान्तर्गतेन्द्रमात्रदेवताकयागद्वये सांनाय्ययागत्वेन प्रसिद्धे (सान्नाय्यं दधिपयसी)। तद्वदत्र दैवतैक्यं नास्ति; विशेषणभेदेन तत्तद्विशिष्टेन्द्राकार-

कारस्य भिन्नत्वात् प्रदानावृत्तिः क्रियते । तदुक्तं साङ्कर्षणे (सांकर्षे) (संकर्षणकाण्डे) "नाना वा, देवतापृथक्त्वात्" इति ॥ ४२ ॥ इति प्रदानाधिकरणम् ॥ १८ ॥

१०१. लिङ्गभूयस्त्वाधिकरणम् ३ ३-१९ ॥

लिङ्गभूयस्त्वात् तद्धि बलीयः तदपि । ३ । ३ । ४३ ॥

तैत्तिरीया दहरविद्यानन्तरमधीयते, (ना. ११) "सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं प्रभुम्" इत्यारभ्य, "सोऽक्षरः परमः स्वराट्" इत्यन्तम् । तत्र संशयः—किं पूर्वप्रकृतविद्यैकविद्यात्वेन तदुपास्यविशेषनिर्धारणमनेन क्रियते, उत सर्ववेदान्तोदितपरविद्योपास्यविशेषनिर्धारणमिति । किं युक्तम् ? दहरविद्योपास्यविशेषनिर्धारणमिति । कुतः ? प्रकरणात् । पूर्वस्मिन्ननुवाके दहरविद्या हि प्रकृता, (तै. ना. १०) "दहं विपाप्मं परवेश्मभूतं यत् पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहं गगनं

मेदात् । तथाच प्रदानैक्यस्य नैव प्रसक्तिः । अथाप्यत्र त्रैधातवीयेष्टौ पुरोडाशानां त्रयाणामुपर्युपरि निक्षेपेण युगपदवदानं विहितम्, सर्वेषामभिगमयन्नवद्यति अच्छंबट्कारायेति । कस्यचित् पूर्वं कृतमवदानमिति पक्षपातं विना युगपदवदानं क्रियमाणं 'मध्यात् पूर्वार्धाच्चावद्यतीति विहितं पूर्वार्धात् सुकरम् । मध्यात् युगपदवदानार्थं तु मध्ये नलकं प्रवेशनीयम् । एवमवदानं युगपत् त्रिभ्यः कार्यम् । एवमवदानस्य युगपत् विधानात् तत्रेन्द्ररूपदेवैक्यमेव प्रयोजकं स्यादिति प्रदानेऽपि यौगपद्ये प्राप्ते सिद्धान्तः कृतः, नाना वेति । देवतानां हविरुद्देश्यानां विशेषणभेदाद् भेद एवेति प्रदानं पृथक्पृथगेव । अवदानैक्यं तु वचनबलात् सोढव्यमिति । देवतोद्देशस्य यथाविधिवाक्यं कर्तव्यतया राजत्वाधिराजत्वादेर्युगपद्विशेषणत्वस्वीकारे विधिदर्शितोद्देश्याकारभङ्गप्रसंगात् पृथक्पृथगेव त्यागः कार्यः । तथाऽत्रापि पृथग्वचनबलात् गुणानुसंधानस्य पार्थक्ये सति गुणिनं विना तदनुसंधानायोगात् धर्म्यनुसंधानं नानेति । देवतापृथग्ज्ञानादिति शांकरपाठमपेक्ष्य देवतापृथक्त्वादित्यास्माकपाठः श्रेयान् । सांकर्षे इति पाठः । सांकर्षणे इति पाठेपि संकर्षः संकर्षणमित्यर्थैक्यात् तथापि नामेति मन्तव्यम् । द्वादशाध्याय्युक्तार्थमध्ये कतिपयान् आकृष्य विशिष्य संकलय्य विचारोऽत्र कृत इति अयं संकर्षः, इदं संकर्षणम् । सूत्रार्थश्च—प्रदानवत् धर्मिचिन्तनं नाना । प्रदाननानात्वञ्चोक्तं पूर्वकाण्डे इति ॥ ४२ ॥

पूर्वाधिकरणे प्रतिगुणचिन्तनं धर्मिसंबन्धोऽस्तीति यथा, तथा प्रतिपरविद्यं नारायणव्यक्तिसंबन्धोऽस्तीति स्थाप्यत इह । नारायणशब्दस्यैकव्यक्तिनामत्वात् संज्ञाशब्दानामन्येषामिव (नारायण) शब्दरूपशक्यतावच्छेदकोपलक्षितव्यक्तिवाचित्वमिति व्यक्तिनिर्धारणमत्र । तथाच स्वरूपनिरूपकधर्माः सर्वविद्यानुयायिनः प्रागुक्ताः; अनुयायी धर्मी अत्रोच्यत इति विवेकः । अयमर्थः, "नारायण एव सर्वविद्यासूपास्यमस्थूलत्वादिविशेषितानन्दादिगुणकं परं ब्रह्म" इति अत्रत्यभाष्यादवगम्यते । दहरविद्यायाः पूर्वं पश्चाच्च प्रस्तूयमानत्वात् तन्मध्यपाति वाक्यजातं तन्मात्रे नारायणव्यक्तिविषयकत्वपरं स्यादिति पूर्वपक्षी मन्यते । नारायणानुवाकतः प्रकरणविच्छेदः स्यादित्यत्र अविच्छेदे उत्तरत्र दहरविषयानुवृत्ति

विशोकः ; तस्मिन् यदन्तस्तदुपासितव्यम्" इति। अस्मिंश्चानुवाके, "पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्" इत्यादिना हृदयपुण्डरीकाभिधानमस्य नारायणानुवाकस्य दहरविद्योपास्य-निर्धारणार्थत्वमुपोद्बलयतीति—

एवं प्राप्ते प्रचक्ष्महे—लिङ्गभूयस्त्वात्—इति। अस्य निखिलपरविद्योपास्यविशेष-निर्धारणार्थत्वे भूयांसि लिङ्गानि दृश्यन्ते। तथा हि परविद्यासु अक्षर-शिव-शम्भु-परब्रह्म-परज्योतिः-परतत्त्व-परमात्मादिशब्दनिर्दिष्टमुपास्यं वस्त्विह तैरेव शब्दैरनूद्य तस्य नारायणत्वं विधीयते ; भूयसीषु विद्यासु श्रुतान् अनूद्य नारायणत्वविधानभूयस्त्वं नारायण एव सर्व-विद्यासूपास्यमस्थूलत्वादिविशेषितानन्दादिगुणकं परं ब्रह्मेति विशेषनिर्णये [*] लिङ्गं भवति।

---

गमकतया दर्शयति अस्मिंश्चेति। सहस्रशीर्षं देवमित्यादिद्वितीयान्तपदानां क्रियाकांक्षायां प्रकृतदहरो-पासनस्यैवान्वयो युक्तः। उपासितव्यमिति कर्मणोऽभिहितत्वात् द्वितीयान्तान्वयायोगेऽपि पूर्ववाक्यान्वितस्य तस्यैव धातोः विपरिणामेन उपासीतेत्यनुषङ्गात् तद्विद्योपयुक्तगुणसमर्पकत्वमेतेषाम्। न चानेकनारायण-शब्दपाठवैयर्थ्यम् ; पूर्वाधिकरणे गुणभेदेन गुणिचिन्तनावृत्तेरुक्ततया तद्वत् प्रतिविशेषं नारायणव्यक्ति-चिन्तनावृत्त्यभिप्रायेण तदुपपत्तेरिति पूर्वपक्षी मन्यते।

अत्रानुवाके नारायणशब्दस्य मन्त्रे, तदर्थे, प्रतिपाद्ये च क्रमेणावृत्तिरस्ति, तेन नारायणत्वं विधेय-मिति ज्ञायते। न च दहरविद्यायां नारायणशब्दवाच्यतया तद्व्यक्त्यनुसंधानं बहुकृत्वः कर्तव्यमिति तात्पर्यकल्पनं युक्तम् ; पूर्वाधिकरणविषयवाक्ये, 'एतांश्च सत्यान् कामान्'इति 'अपहतपाप्मा विजर' इति च सर्वकामविशिष्टधर्मिचिन्तनानामेकोपासनविषयत्वावगमवत्· अत्र तदभावात्। सहस्र-शीर्ष-परतत्त्व-परज्योतिराद्युद्देशेनैव नारायणत्वविधानात्। दहरविद्यायां तद्विधेरलाभाच्च। एवं नारायणत्वस्य विधेयत्वादेव सहस्रशीर्षमित्यादौ प्रथमाविपरिणाम एव युक्तो लाघवात्। येनावृतं खञ्च दिवं महीञ्चेति-वत्। 'तत्त्वं नारायणः पर'इत्यादिदर्शनाच्चैवम्। उपासीतेत्यध्याहारेपि सहस्रशीर्षं नारायणत्वेनोपासीत, विश्वाक्षं नारायणत्वेनोपासीतेत्येवमेवार्थलाभात् सहस्रशीर्षत्वादेः प्रमाणान्तरप्राप्तत्वावगमात् 'आत्मा नारायणः पर'इत्युक्तस्याऽऽत्मन एकस्य, 'एष आत्माऽपहतपाप्मा'इति दहरविद्यायां प्राप्तत्वेऽप्यन्येषां तत्राप्राप्तत्वात् तत्प्रापकसहस्रशीर्षादिरूपविषयकोपासनान्तराणामेव ग्रहणं स्वरससिद्धम्। अतो नारायण-त्वविधानानां बहुतरत्वात् अनुवाकोऽयं सर्वपरविद्योपास्यनिर्धारक इति लिङ्गभूयस्त्वादिति सूत्रखण्डार्थः। ननु सर्वविद्योपास्यमानन्दत्वादीति प्रागेव ज्ञातम् ; किमनेनेत्याशंकायां विषयभेदं दर्शयति नारायण एवेति। गुणानां स्वरूपनिरूपकाणां पूर्वं सिद्धत्वेऽपि तत् स्वरूपं नारायण इति इतोऽवगम्यत इति भावः। विधानभूयस्त्वं लिङ्गं भवतीत्यन्वयः। कुत्रेत्यत्रोक्तं 'नरायण एव···· विशेषनिर्णये इत्यन्तम्। लिंगं भवति—हेतुर्भवति। भूयोबहुतरमिति पदे नेतः पूर्वम्। भूयस्त्वं बहुतरलिंगं भवतीत्यनन्वयात्। अतस्ते उपरि भाव्ये। पूर्वमेव तत्पाठस्यादरणे तु विधानभूयस्त्वमित्यस्य भूयोविधानमित्यर्थः स्वीकार्यः। यद्वा भूयस्त्वं भवति इति पृथक् कार्यम्। तद्विवरणमुपरि।

**अत्र लिङ्गशब्दः चिह्नपर्यायः । * भूयः बहुतरम् । चिह्नभूतं वाक्यं बहुतरमस्तीत्यर्थः । तद्धि प्रकरणाद्बलीयः** । तदप्युक्तं **प्रथमकाण्डे**, (पूर्वमी. ३-३-१४) **"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पा(प)रदौर्बल्यमर्थविप्रकर्षात्" इति ।**

---

सूत्रे लिङ्गपदं न हेत्वर्थकम्—हेतुभूयस्त्वस्य सुवचत्वेऽपि **तद्धि बलीय** इत्युत्तरभागदर्शने श्रुतिलिङ्गादिप्रमाणोपन्यासस्यात्र प्रतीतेः । न च तत्रोक्तं सामर्थ्यमेवेह एतत्कल्पनलिङ्गं भवितुमर्हति । तद्धि सामर्थ्यं नारायणत्वविधानगतमर्थसामर्थ्यं भवेत् । तत्र नारायणत्वविधानस्यैकत्वे दहरविद्यायामपि तत्संभवात् तद्व्यावृत्तये विधानभूयस्त्वगतसामर्थ्यमेव ग्राह्यम् । एवञ्च तस्य लिङ्गस्य न भूयस्त्वम् । पद्मकोशप्रतीकाशमित्यारभ्य, 'तस्मिन् सर्वं प्रतिष्ठितम्'इति दहरात्मप्रतिपादनसामर्थ्यस्य दहरविद्याशेषत्वसाधकस्य वर्तमानतया समबलत्वञ्च स्यात् । अतः सामर्थ्यस्यैकत्वेऽपि विधानानेकत्वस्यैवात्र विद्यमानत्वात् तदेव लिङ्गादेन विवक्षणीयम् । न च विधानमितीदं श्रुतिलिङ्गादिष्वन्यतमं भवति । अतो विधायकशब्द एव लिङ्गपदग्राह्यः । स च न श्रुतिः, सहस्रशीर्षमित्यादौ द्वितीयाश्रवणेनोद्देश्यविधेयभावोपयोगिविभक्त्यभावात् । तत्तदुपासनान्वयित्वेन रूपेण सहस्रशीर्षादेर्ग्रहणस्य लक्षणयैवोपपाद्यत्वाच्च । अतः शब्दोऽयम्, पर्णमयी जुहूर्भवतीतिवत् उद्देश्योपादेयसमभिव्याहाररूपवाक्यमेव । एवञ्च तत्त्वं नारायण इत्यादेरपि लिङ्भावात् वाक्यत्वेनैव क्रोडीकारः । वाक्यस्यापि प्रकरणापेक्षया बलीयस्त्वेन प्रकरणमूलकपूर्वपक्षः सुपरिहर एव । उत्तरत्र दहरप्रतिपादनसामर्थ्यस्य तु पूर्वपक्ष्यनुकूलस्य प्रतिद्वन्द्वि सामर्थ्यान्तरं प्रागेवोक्तम् । एकस्यापि वाक्यस्य प्रकरणबाधकत्वस्यान्यत्र सत्त्वेऽपि अत्र तदनेकत्वमेव कार्यकरम् ; भूयस्त्वं तु सुतरामित्येतावदभिसंधाय लिङ्गशब्दार्थं वदन् व्याख्याति **अत्रे**ति । यद्यपि वाक्यस्य लिङ्गश्रुतिकल्पनयैव विनियोजकत्वात् वाक्यानां भूयस्त्वे तत्तद्वाक्यकल्प्यलिङ्गे तत्कल्प्यश्रुतौ च भूयस्त्वं भवत्येवेति तदेव लिङ्गभूयस्त्वं सूत्रार्थ इति सुवचम्—तथापि स्थितयोर्बलाबलविचार एव सर्वत्र भवति, न तु स्थितकल्प्ययोरिति तथा न भाषितम् । तत्तद्वाक्यस्य विभिन्नोद्देश्यकनारायणत्वविधानसामर्थ्यं यदस्ति, तद्ग्रहणेन भूयोवाक्यनिष्ठभूयोलिङ्गार्थकत्वं सूत्रस्यास्त्विति चेन्न—शब्दगतस्यार्थप्रतिपादनसामर्थ्यरूपलिंगस्यार्थं प्रति शब्दस्याङ्गत्वबोधनार्थताया एव मन्त्रेषु दर्शनात् सहस्रशीर्षाद्युपासने नारायणविधानं प्रति तस्यानुपयोगात् । **श्रुती**ति । श्रुतिः अपेक्षितस्यार्थस्य साक्षाद्बोधकः शब्दः । लिङ्गं तादृशश्रुतिकल्पनानुकूलं सामर्थ्यम् । वाक्यमुद्देश्योपादेयवाचकयोः पदयोरुद्देश्यत्वादिपरविभक्तिरहितयोः समभिव्याहारः । ययोः संबन्धो विवक्षितः, तयोः परस्पराकांक्षा प्रकरणम् । स्थानं तयोः संनिधानमात्रम् । समाख्या तयोरेकसमाख्याघटकभागद्वयेनोक्तिरिति संक्षेपः । **समवाये** । "समवेता युयुत्सवः"इत्यत्रेव विरोधपूर्वकमेलनं विवक्षितम् । **पारदौर्बल्यम्** । **परमुत्तरं** दुर्बलं यस्मात् तत्, परदुर्बलम्; तस्य भावः पारदौर्बल्यं श्रुत्यादिस्थानपर्यन्तान्वयि । परदौर्बल्यमिति पाठस्तु तत्पुरुषत्वात् सुगमः । परस्य प्रमाणस्य पूर्वप्रमाणकल्पनयैव कार्यकरत्वात् परं यावत् **पूर्वकल्पनया कार्योन्मुखं** भवति, तावत् पूर्वं प्रमाणं क्लृप्तत्वात् स्वकार्यं साधयति । अत **उत्तरं निर्बलं** इति । **अर्थविप्रकर्षात्—अर्थस्य** प्रमाणकार्यस्योत्तरोत्तरप्रमाणे **विप्रकर्षात्** विलम्बात् ।

यत्तूक्तम्, "पद्मकोशप्रतीकाशम्" इत्यादिवचनं दहरशेषत्वमस्योपोद्बलयतीति—तन्न; बलीयसा प्रमाणेन सर्वविद्योपास्यनिर्धारणार्थत्वेऽवधृते सति, दहरविद्यायामपि तस्यैव नारायणस्योपास्यत्वेन तद्वचनोपपत्तेः। न च सहस्रशीर्षमित्यादिद्वितीयानिर्देशेन पूर्वानुवाकोदितोपासनेन संबन्धः शङ्कनीयः; "तस्मिन् यदन्तः तदुपासितव्यम्" इत्युपासिगतेन कृत्प्रत्ययेनोपास्यस्य कर्मणोऽभिहितत्वात् तदुपास्ये द्वितीयानुपपत्तेः। "विश्वमेवेदं पुरुषः", "तत्त्वं नारायणः परः" इत्यादिप्रथमानिर्देशाच्च प्रथमार्थे द्वितीया वेदितव्या। "अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः", "तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः। स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" इति निर्देशैः सर्वस्मात् परो नारायण एव सर्वत्रोपास्य इति निर्णीयमानत्वाच्च प्रथमार्थे द्वितीयेति निश्चीयते ॥ ४३ ॥ इति लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥

---

यत्त्विति। यद्यपि प्रकरणदौर्बल्यस्योक्तत्वादियमाशंकैव न भवति-अथापि वाक्यनिर्वाहविवक्षया एवं शंकानुवादः। दहरविद्यायामपीति। पूर्ववाक्यानां पद्मकोशेत्यादेश्च मिथः संबन्धाभावे, तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येत्यत्र द्वादशाहीनस्येत्यस्य प्रकरणात् पृथक्करणवत् सहस्रशीर्षादिवाक्यानां पृथक्करणम्। अत उपसद्गतद्वादशत्वस्य ज्योतिष्टोम इव सहस्रशीर्षनारायणत्वादेः दहरविद्यायामनन्वय एव। पद्मेत्यादेस्तु दहंविपाप्ममित्यादिना मेलनञ्चास्तु। अतो न विरोध इति सुकर एव समाधिः। तावान् क्लेशोऽप्यत्र न; सर्वविद्याकथनमध्ये दहरविद्याविषयस्यापि कथनसंभवेनाविरोधात्। एवञ्च सदात्मकत्वात्, 'तत् त्वमसी'त्युपसंहारवत् सर्वविद्योपास्यस्य नारायणत्वात् स एव सर्वात्मा दहरकुहरप्रतिष्ठितः सन् उपास्य इत्युपसंहार इति सुवचमिति। पद्मकोशेत्यादिमन्त्राणां दहं पुण्डरीकमित्यादिप्रागुक्तविवरणरूपत्वदर्शनात् दहरविद्योपसंहार इत्युक्तम्। नारायणानुवाकान्ते च, 'स ब्रह्मा स शिव'इत्यादिश्रवणात् सर्वविद्याविषयनिरूपणस्याऽऽन्तं प्रसरणात्, पद्मकोशेत्यादिवाक्यं दहरविद्यानिष्ठपुरुषकार्यस्वशरीरगतदहराकाशानुसंधानमात्रविषयकमित्यनंगीकृत्य, ब्रह्मशिवादिविषयकपरविद्यासु प्रागुक्तपरतत्त्वपरज्योतिरादिविषयोपासनवैलक्षण्येन ब्रह्माद्यन्तर्यामितया नारायण उपास्यः इति वक्ष्यमाणोपयोगितया, 'ब्रह्माद्यन्तर्यामित्वं द्विविधं तदीयदहरहृदयपरिच्छिन्नपरमात्मस्वरूपतया तत्रतत्र हार्दावताररूपदिव्यमङ्गलविग्रहविशिष्टतया च' इति चेतनान्तरविशिष्टोपासनसामान्यविषयकत्वमप्यस्य वाक्यस्य सुवचं चेत्, न तद् भाष्ये नाद्रियते। दहरविद्यामात्रविषयकत्वेपि प्रकरणस्य दुर्बलत्वान्न बाधकत्वमिति तु यथा सूत्रं भाषितम्। न हि प्रकरणविच्छेदः सूत्रोक्तः, किंतु तद्दौर्बल्यम्। तत् कस्मात्? दहरविद्ययाऽप्यत्रोक्तोऽर्थः सर्व उपजीव्यो भवतीत्येव। वस्तुतः पद्मकोशेत्यादिकं न दहरविद्यामात्रविषयम्; किंतु संभावितसर्वविद्याविषयकमेवेति ज्ञापयितुमेव, आन्तं सर्वविद्याविषयानुवृत्तिसद्भावं स्पष्टमेव वक्ष्यति अन्तर्बहिश्चेत्यादिना। अन्तरित्यारभ्यानुवाकोयं तत्तद्विद्यावेद्यतत्तदन्तर्यामित्वप्रकारनिरूपक इति भावः। प्रथमार्थे द्वितीयेति निश्चीयते इति। न तु सहस्रशीर्षमित्यादेः कथञ्चित् उपजीवतीत्यत्रान्वयेन निर्वाहे यतितव्यम्। महावाक्यस्वारस्येन नारायणत्वविधाननैर्भर्यादिति भावः। अनुवाकार्थवैशद्यादि परिष्कारे ॥४३॥

## १०२. पूर्वविकल्पाधिकरणम् ३-३-२० ॥

**(पू) पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् । ३।३ । ४४ ॥**

**वाजसनेयके अग्निरहस्ये मनश्चिद्दाद्योऽग्नयः श्रूयन्ते, (१०-५-३) "मनश्चितः",**

---

सहस्रशीर्षमित्यादेर्दहरविद्याशेषत्वं न भवति, प्रबलप्रमाणेन प्रकरणबाधादित्युक्तम्। तथा प्रबलप्रमाणाभावात् मनश्चिदाद्यग्नीनामपि प्रकरणात् क्रतुशेषत्वं स्यादिति शंकया संगतिः। इयमिह विषयशुद्धिः—आहवनीयाग्न्याधारत्वादग्निशब्देन व्यवह्रियमाणः यथाशास्त्रं कृताभिरिष्टकाभिश्चितः स्थण्डिलविशेषः क्रतुशेष उक्तः। स इष्टकचित इत्युच्यते। इष्टकाभिश्चित इत्यर्थे, 'इष्टकेषीकामालानां चिततूलभारिषु' इत्यनुशासनबलात् चितोत्तरपदत्वेन इष्टकाशब्दे ह्रस्वः। चितः=चयनस्य स्थण्डिलस्थापनस्य कर्म स्थण्डिलः। एतदग्निवत् मनश्चिदाद्यग्नयोऽपि अग्निरहस्ये उक्ताः। मनश्चित् इत्यत्र चिच्छब्दः कर्मण्यग्न्याख्यायामिति सूत्रात् चयनकर्मेत्यर्थकः क्विबन्तः। श्येनचित इत्यत्र श्येनाकारश्चित् इत्यभेदारोपवत् अत्रापि मनोरूपश्चित् इत्यर्थः। अत्र; षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन् अर्कान् मनोमयान् मनश्चितः' इति श्रूयते। पुरुषायुषे षट्त्रिंशत्सहस्रदिनात्मके एकैकदिनान्तर्गतमनोव्यापारा यावन्तः, तावन्तः स्थण्डिलत्वेन भाव्यन्ते। एवं भावितमनोव्यापारसंघात एव मनश्चित्। दिनसंख्ययाऽग्निसंख्याऽपि षट्त्रिंशत्सहस्रात्मिका भवतीति मनश्चित इति बहुवचनम्। तकारान्तोऽयं शब्दः, न तु इष्टकचितशब्दवत् अकारान्तः। अग्नीन् अर्कानित्यस्य स्थण्डिलात् अर्चनीयानित्यर्थः। एष्वग्निष्वेकैक एवालमिति च, तेषामेकैक एव तावान् यावानसौ पूर्व इति वाक्येन ज्ञापितम्। पूर्व इत्यस्य इष्टकचितोऽग्निर्यः प्रागुक्तः स इत्यर्थः। यथाऽयं मनश्चिदग्निः मनसा भावितः, तथा वाक्चिदादयोऽप्यग्नयो भावनीया उक्ताः, "षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन् अर्कान् वाङ्मयान् वाक्चितः।" "षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन् अर्कान् प्राणमयान् प्राणचितः", "षट्····चक्षुर्मयांश्चक्षुश्चितः" षट्··· श्रोत्रमयान् श्रोत्रचितः", "षट्····कर्ममयान् कर्मचितः", षट्····अग्निमयान् अग्निचितः" इति। कर्मशब्देन वागतिरिक्तकर्मेन्द्रियाणां कायस्य वा ग्रहणम्। अग्निरिह जाठरः। **आत्मन** इति पदं मनोवागादिवाचि। मन-आदेरेव दर्शनकर्तृत्वारोपः। वाक्चिदादिपदार्थः मनश्चित्पद इव द्रष्टव्यः। एवमग्नित्वेन भाव्यमानपुरुषायुषान्तर्गतैकदिनीयव्यापारसंघातादेः इष्टकचितवत् अग्नित्वम्, "तेषामेकैक एव तावान्" इति वाक्येन पृथक्पृथगुक्तम्। उक्तमनोव्यापारादिसंघातेष्वेव यथायथं क्रतुसंबन्ध्याधान-ग्रह-स्तोत्र-शस्त्रादिसर्वांशत्वकल्पनाऽप्युपर्युक्ता। एवं, "यत् किञ्चेमानि भूतानि मनसा संकल्पयन्ति, तेषामेव सा कृतिः", "यत् किञ्चेमानि भूतानि वाचा वदन्ति, तेषामेव सा कृतिः" इति रीत्या प्रतिपर्यायं वाक्यमस्ति। तदर्थश्च—मनोवागादिव्यापारसंघातत्वरूपसामान्यधर्मपुरस्कारेण सर्वभूतपुरुषायुषान्तर्गतैकैकदिनीयसर्वव्यापारग्रहणात् सर्वभूतव्यापारस्यापि मनश्चिदादावन्तर्भाव इति। अथ सर्वविषयमन्ते वाक्यत्रयम्—'ते हैते विद्याचित एव। तान् हैतान् एवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्ति अपि स्वपते। विद्यया हैवैते एवंविदश्चिता भवन्ति" इति। एतदर्थः सिद्धान्तसूत्रे व्यक्तीभविष्यति।

"वाक्चितः", "प्राणचितः", "चक्षुश्चितः", "श्रोत्रचितः", "कर्मचितः", "अग्निचितः" इति। तत्र संशयः—किमेते मनश्चिदादयः साम्पादिकत्वेन विद्यारूपा अग्नयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपाः, आहोस्वित् विद्यामयक्रत्वनुप्रवेशेन विद्यारूपा एव-इति विशये—क्रियारूपत्वं तावदाह—पूर्वविकल्पः इत्यादिना। चित्याग्नित्वेन संपादितानामेषां मनश्चिदादीनां क्रत्वनुप्रवेशसाकांक्षाणां स्वदेशे क्रतुविध्यभावात् पूर्वत्र, (अग्नि) "असद्वा इदमग्र आसीत्" इत्यादिनेष्टकचितस्याग्नेः प्रकृतत्वात् तस्य च क्रियामयक्रत्वव्यभिचारित्वेन तत्र क्रतुसंनिधानात् तत्प्रकरणगृहीताः मनश्चिदादयः तेनेष्टकचितेनाग्निना विकल्प्यमानाः क्रियारूपा एव स्युः। विद्यारूपाणामपि क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वं मानसग्रहवदुपपद्यते। यथा द्वादशाहे अविवाक्ये दशमेऽहनि मानसग्रहस्य मनोनिष्पाद्यग्रहणाऽऽसादनस्तोत्रशस्त्रप्रत्याहरणभक्षणत्वेन विद्यारूपस्यापि क्रियामयक्रत्वङ्गतया क्रियारूपत्वम्—तथेहापि ॥ ४४ ॥

---

अत्रेष्टकचितस्थण्डिलस्थाने मनश्चिदादीनामुक्तत्वात् तस्यैव सर्वस्यास्य क्रत्वङ्गत्वमेव ॥ कथं मानसभावनात्मकस्य बाह्यक्रियांगत्वमिति चेत्—दृष्टमिदं कर्मकाण्डेऽपि मानसग्रहे इति पूर्वपक्षः।

**मनश्चितः···अग्निचित** इति। मनश्चिदाद्यग्निचिदन्तशब्दवाच्या इत्यर्थः; न त्वीदृगैकवाक्यगम्याः इत्यर्थः; एवमानुपूर्व्यभावात्। **सांपादिकत्वेन संपत्** आरोपः कल्पना; काल्पनिकत्वेन। अयं विद्यारूपत्वे हेतुः। क्रियामयक्रत्वनुप्रवेशिनो वा, विद्यमयक्रत्वनुप्रवेशिनो वेत्येव विशयः, क्रियारूपा वा विद्यारूपा एव वेति निर्देशस्तु सौत्र**क्रियाविद्या**पदयोः तत्तदनुप्रवेशित्वनिमित्तः प्रयोग इति ज्ञापनाय। क्रतोरत्र विध्यभावात् कथं क्रतुप्रकरणमित्याशंकायाम्, इष्टकचिताग्निप्रकरणमेव क्रतुप्रकरणतुल्यं भवतीत्युपपादयति **चित्येति**। **चित्याग्नित्वेन संपादितानां** चयनकर्मभूतस्थण्डिलत्वेनारोपितानाम्। **चित्येति**पदं ज्वलनरूपाग्निव्यावृत्तये। **क्रतुसंनिधानात्** क्रतोरुपस्थितत्वात् मनश्चिदादिगताकांक्षावशेन क्रतोरप्याकांक्षाकल्पनया प्रकरणसंपत्तिः। **अविवाक्ये**। मानसत्वात् विविधानि वाक्यानि न सन्तीति अविवाक्यत्वम्। **दशमे**। द्वादशाहे प्रायणीयं प्रथममहः, उदयनीयमन्तिमम्। ते विहाय यत् दशरात्रं सर्वसत्रप्रकृतिभूतम्, तत्र दशमे; एकादश इति यावत्। **मानसग्रहस्य**। 'अनया त्वा पृथिव्या पात्रेण समुद्रं रसया प्रजापतये जुष्टं गृह्णामि' इति मन्त्रेण पृथिवीपात्रेण समुद्रसोमरसग्रहणमननविषयस्य ग्रहाख्यपात्रविशेषस्य। **स्तोत्रं** प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम्, शस्त्रे अप्रगीतत्वं विशेषः। ऐन्द्रवायवादिग्रहान्तरेषु सर्वमिदमस्ति। अत्र तु सर्वं भावनामयम्। अनेन ग्रहेण कश्चिन्मानसो वा बाह्यो वा यागो नानुष्ठीयते। तत्प्रसोमयागं प्रति मानसमिदमप्यङ्गमिति एतद्विधिबलादिष्यते। तथैवेहापीति न विद्यामयः क्रतुरनुष्ठेय इति पूर्वपक्षाशयः। सूत्रार्थस्तु—**पूर्वेणेष्टकचिताग्निना** मनश्चिदादीनां विकल्पः। **प्रकरणात्** चित्याग्निप्रकरणात् तद्वदेव मनश्चिदादिरपि **क्रिया**= क्रियामयक्रत्वनुप्रवेशी, यथा मानसः क्रियारूपक्रत्वनुप्रवेशीति। क्रियाशब्दस्य मुख्यार्थे एव स्वीकृतेऽपि, 'मनश्चिदादीनां पूर्वेण विकल्पः; प्रकरणात् क्रियैव शेषिभूता मानसस्येव' इति सूत्रार्थः सुवचः—

(पू) अतिदेशाच्च । ३ । ३ । ४५ ॥

इतश्चेष्टकचितेनाग्निना मनश्चिदादीनां विकल्पः क्रियारूपत्वं चावगम्यते ; "तेषामेकैक एव तावान् यावान् असौ पूर्वः" इति पूर्वस्येष्टकचितस्याग्नेर्वीर्यं मनश्चिदादिष्वतिदिश्यते । तेन तुल्यकार्यत्वात् विकल्पः । ततश्चेष्टकचितवत् तत्क्रतुनिर्वर्तनेन तदङ्गभूताः मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपा एवेति ॥ ४५ ॥

एवं प्राप्ते प्रचक्ष्महे—

विद्यैव तु निर्धारणात् दर्शनाच्च । ३ । ३ । ४६ ॥

तुशब्दः पक्षं व्यावर्तयति ; यदुक्तम्-मनश्चिदादयः[क्रियामयक्रत्वनुप्रवेशेन]क्रियारूपा-एवेति—नैतदस्ति । विद्यारूपा एवैते । विद्यारूपकत्वन्वयिन इत्यर्थः । कुतः ? निर्धारणात् दर्शनाच्च । निर्धारणं तावत्— "ते हैते विद्याचित एव । विद्यया हैवैत एवंविदश्चिता भवन्ति" इति । वाङ्मनश्चक्षुरादिव्यापाराणामिष्टकादिवत् चयनानुपपत्तेर्मनसा संपादिताग्नित्वेन विद्यारूपत्वे सिद्धेऽपि, "विद्याचित एव", "विद्यया हैवैते" इति चावधारणं विद्यामयक्रत्वन्वयेन विद्यारूपत्वज्ञापनार्थमिति निश्चीयते । दृश्यते चात्रैवैषां शेषी विद्यारूपः क्रतुः, "ते मनसैवाधीयन्त मनसैवाचीयन्त, मनसैषु ग्रहा अगृह्यन्त, मनसास्तुवन्त, मनसाशंसन्, यत् किञ्च यज्ञे कर्म क्रियते, यत् किञ्च यज्ञियं कर्म, मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयम-

अथाप्यध्याहाराल्लक्षणा लघीयसीति क्रियाशब्दस्य क्रियानुप्रवेशीत्यर्थादरणम् । तथा सूत्रे प्रयोगश्च विद्याशब्दानुरोधात् । तदिदमुत्तरसूत्रे विशदयिष्यामः ।

नन्विष्टकचितस्यैवैषामग्न्याधारत्वायोगात् कथं विकल्पाश्रयणम् । अतः इष्टकचिताग्निर्नियतः, तस्यैवमेवं भावनापि कार्येति स्यादित्यत्र समाधानं चिकीर्षुः, तेनैव क्रियानुप्रवेशोऽप्यवगम्यत इति युक्त्यन्तरमाह **अतिदेशाच्चेति**। **यावान्** यत्कार्यकरः । 'नास्ति वचनस्यातिभार' इति न्यायात् तदुक्तं स्वीकार्यमिति भावः ।

ननु **विद्याचित** इत्यस्य ज्ञानरूपाग्नय इत्यर्थः। **विद्यया चिता** इत्यस्य ज्ञानसंपाद्या अग्नय इत्यर्थः। तावता विद्यामयप्रधानयागलाभः कथमित्यत्र विवृणोति **वागिति** । अयं भावः—मनश्चिदादिपद इव विद्याचितपदेऽपि विद्यारूपाग्निरित्येवार्थो भवति । पूर्वं मनःप्रभृतिसंबन्धिव्यापारसंघातम्याग्नित्वमुक्त्वा इह ज्ञानस्य व्यापारत्वं कथ्यमानं न घटते । अतो विद्याविषयव्यापारसंघाते विद्यापदस्य लक्षणा ग्राह्या स्यात् । तस्य चानुक्तिसिद्धत्वादेतत्कथनं तदुपरि एवकारघटनञ्च व्यर्थम् । अतो विद्यापदस्य विद्यानुप्रवेशिव्यापारे लक्षणा स्वीक्रियते । एवञ्च क्रियानुप्रवेशव्यावृत्तिः । तदनुरोधाच्च विद्ययेति तृतीयान्तेनापि विद्यामयक्रतुरेवोच्यते, **विद्यया** विद्यारूपप्रयोजनेनेति । एवं श्रुतौ विद्यापदं विद्यानुप्रवेशिपरमस्तीति ज्ञापनार्थमेव सूत्रे विद्येत्येवोक्तम् । एतदानुगुण्याय क्रियेति पदं प्राक् । इदमभिप्रेत्यैव भाष्येऽध्याहारं विहायात्र क्रियारूपत्वविद्यारूपत्वोक्तिः । **दर्शनाच्चेत्येतत्** व्याख्याति **दृश्यते चेति** । **यज्ञेकर्मेति** अङ्गं सर्वमुक्तम् ; **यज्ञियं कर्मेति** च यज्ञपदार्थान्तर्गतं प्रधानम् । तस्य मानसकर्मत्वं सिद्धवदनूद्यत इति ।

क्रियत" इति। इष्टकचितेष्वग्निषु यत् क्रियामयं यज्ञीयं कर्म क्रियते; तत् मनोनिर्वर्त्येषु मनश्चिदाद्यग्निषु मनोमयमेवाक्रियतेति वचनात् क्रतुरपि विद्यामयोऽत्र प्रतीयते ॥ ४६ ॥

नन्वत्र विधिपदाश्रवणात् फलसंबन्धाप्रतीतेश्चेष्टकचिताग्न्युपस्थापितक्रियामयक्रतु-प्रकरणात् विद्यामयक्रत्वन्वयेन विद्यारूपतैषां बाध्यते। नेत्याह—

श्रुत्यादिबलीयस्त्वाच्च न बाधः। ३। ३। ४७ ॥

श्रुतिलिङ्गवाक्यानां प्रकरणात् बलीयस्त्वेन श्रुत्याद्यवगतः क्रतुः, एषां तदन्वयश्च दुर्बलेन प्रकरणेन बाधितुं न शक्यते। श्रुतिस्तावत्, "ते हैते विद्याचित एव" इति। तां विवृणोति, "विद्यया हैवैत एवंविदश्चिता भवन्ति" इति। विद्यया क्रतुना संबद्धाः मनश्चिदादयः चिता भवन्तीत्यर्थः। "तान् हैतान् एवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्ति, अपि स्वपते" इति लिङ्गम्। वाक्यं च, "एवंविदे चिन्वन्ति" इति। समभिव्याहारो वाक्यम्। एवंविदे विद्यामयक्रतुमते सर्वदा सर्वाणि भूतानि चिन्वन्तीत्यर्थः। सर्वभूतकर्तृकं सर्वकालव्यापि चयनं मनसा संपादितं परिमितकर्तृकालक्रियामयेष्टकचितकार्यद्वारेण क्रत्वनुप्रवेशसंभवमलभमानं विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति ॥ ४७ ॥

यच्चेदमुक्तं—विधिप्रत्ययाश्रवणात् फलसंबन्धाप्रतीतेश्च क्रियामयात् क्रतोरन्योऽत्र

---

**विद्यामयक्रत्वन्वयेने**ति तदन्वयाधीनेत्यर्थकं **विद्यारूपते**त्येतद्विशेषणम्। **न शक्यत** इति। विद्यान्वयो हि श्रुत्यादिगम्यः। तत्त्रयमपि प्रकरणाद् बलीयः। बलीयसा विद्यान्वये सिद्धे प्रकरणं क्रियान्वयकल्पनासमर्थं क्षीणमिति तस्य बाधकत्वप्रसक्तिकथैव नेति सूत्रार्थः। **श्रुति**रिति। विद्याचित इत्येकपदश्रुतिः। यद्यपि तत्र विद्यापदस्य विद्यानुप्रवेशिव्यापार इति लक्ष्यार्थवर्णनमिष्टम्, अथापि विद्यापदशक्यार्थः 'यज्ञियं कर्म, मनसैव' इति प्रागुक्तो विद्यामयक्रतुरेव। तस्य चित्पदार्थस्य च संबन्धप्रतीतेः सोऽङ्गाङ्गिभाव एवेति निष्कर्षपूर्वमेव विद्याशब्दस्य विद्यानुप्रवेशीत्यर्थाश्रयणमिति भावः। **विद्यये**ति पदे इत्थम्भूतलक्षणे तृतीयामभिप्रेत्याह **संबद्धा** इति। अत्र वाक्ये श्रुत्यभावेऽपि न क्षतिः; पूर्वव्याख्यानरूपत्वात्। अनेन पूर्ववाक्ये **विद्यापदं** विद्यासंबद्धेत्यर्थकमिति ज्ञापितं भवति। अथवा विद्ययेति प्रयोजने तृतीया। सूत्रे **आदि**पदेन लिङ्गवाक्ये ग्राह्ये। लिङ्गमुदाहरति **तानि**ति। लिङ्गमुपपादयिष्यन् लिङ्गार्थगृहीतश्रुतिवाक्यमध्य एव वाक्यप्रमाणस्यापि सत्त्वात् ततः प्रागेव **वाक्यञ्च** दर्शयति **वाक्यञ्चे**ति। **अपि स्वपते**। उपासकस्वापकालेऽपि सर्वाणि भूतानि तदर्थमेव चयनोपयोगिव्यापारान् कुर्वन्तीत्यर्थः। तत्तद्भूतपुरुषायुषान्तर्गततत्तद्दिनीयव्यापाराणां सर्वेषामुपासकस्य स्वापजागरसर्वकालभवानामपि उपासकेनाग्नित्वेन भावनात् **अपि स्वपत** इत्युक्तम्। ईदृशापरिमितव्यापारभावितस्याग्नेरीदृशव्यापारभावितक्रतुशेषतार्हत्वरूपं सामर्थ्यमिह लिङ्गमित्युपपादयिष्यति। एवंविदे चिन्वन्तीतिः पुरुषविशेषणतयैव विद्याग्रहणात् विद्यायाः चयनस्य च योऽङ्गाङ्गिभावः, तद्वाचकशब्दं विना वस्तुतोऽङ्गाङ्गिभूततदुभयमात्रवचनमिहेति इदं वाक्यप्रमाणं भवति ॥

विद्यामयः क्रतुर्न संभवति—इति, तत्राह—

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम् । ३ । ३ । ४८ ॥**

इष्टकचितान्वयिनः क्रियामयात् क्रतोर्विद्यामयोऽयं क्रतुः पृथक्त्वेन अनुबन्धादिभ्यः पृथक्त्वहेतुभ्योऽवगम्यते । अनुबन्धाः यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयः, "मनसैव ग्रहा अगृह्यन्त, मनसाऽस्तुवन्त, मनसाऽशंसन्" इत्यादिना प्रतिपादिताः । आदिशब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते । श्रुत्यादिभिः सानुबन्धैर्विद्यामयक्रतुः पृथगवगम्यत इत्यर्थः । प्रज्ञान्तरपृथक्त्ववत्—यथा प्रज्ञान्तरं दहरविद्यादि क्रियामयात् क्रतोः पृथग्भूतं श्रुत्यादिभिरवगम्यते, एवमयमपि । एवं चानुबन्धादिभिः पृथग्भूते विद्यामये यज्ञेऽवगते सति,

---

विध्यभावेऽपि विधिर्ग्राह्य इत्युपपादनार्थमनुबन्धसूत्रम् । विधेः फलान्वयपूर्वकत्वात् विधिप्रतिपादकसूत्रस्यैव फलेऽपि तात्पर्यमिति तदनुगुणमवतारयति **यच्चेति** । पूर्वं **दर्शनाच्चेत्यत्र**, 'यत् किञ्च यज्ञियं कर्म' इति वाक्यशकलं विवक्षितम् । अत्रा**नुबन्धपदेन**, 'ते मनसैवाऽऽधीयन्त' इत्यारभ्य, 'यत् किञ्च यज्ञे कर्म क्रियते' इत्युक्तं सर्वं विवक्ष्यते । ननु ग्रहस्तोत्रशस्त्रादित्वेन कतिपयपुरुषायुषान्तर्गतव्यापाराणां भावने यदि विद्यामयः क्रतुरपि कल्प्यः, तर्हि मानसग्रहे द्वादशाहीयेऽपि विद्यामयः सोमयागः कल्प्यताम् । राजन्यादेः दध्युन्मृष्टसंपिष्टन्यग्रोधस्तिभिनीरसरूपफलचमसभक्षणान्यथानुपपत्त्या तस्य द्रव्यस्य सोमयागान्वयवत् यागान्वय एव युज्यते चेति चेत्—न—भक्षणस्योपयुक्तद्रव्यसंस्कारकत्वात् फलचमसस्य पूर्वमुपयोगाभावे तदभावात् क्लृप्ते सोमयागे फलचमसस्य द्रव्यतयाऽन्वय इष्टः । ग्रहाणां यागापेक्षावत् मानसग्रहस्यापि तदपेक्षा स्याच्चेत्, यागः कल्प्येत । न हि भावनामात्रेण वस्तुगत्या ग्रहः कश्चित् सिद्धोऽस्ति, येन तस्योपयोगापेक्षा स्यात् । अतो न तत्र यागकल्पना ; किंतु दशरात्रान्तर्गते दशमस्याह्नः प्रकरणे मानसग्रहविधानात् तदर्थत्वमेव । एवंतर्हि इहापि ग्रहस्तोत्रशस्त्राद्यनुबन्धस्य ज्ञानमयतया वास्तवतदभावात् तदीयाकाङ्क्षावशात् यज्ञकल्पनस्य दुर्वचत्वात् क्लृप्तसोमयागाङ्गत्वमेव स्यादिति चेत्—नात्रानुबन्धस्य यागकल्पकत्वमुच्यते ; किंतु यथा अनुबन्धविषये विधायकवाक्याभावेऽपि ग्रहस्तोत्रादिकं तत्रैव कल्पितं सत् विधेयमितीष्यते, तथैव विद्यारूपविधेयविषयेऽपि चिन्त्यतामिति । ननु स्यादेवम्, यदि विद्यासमर्पकं पदं लक्ष्येतेत्यत्र पूर्वोक्तश्रुतिलिङ्गवाक्यानां तत्समर्पकत्वात् शक्यो विद्याविधिरिति गमयितुमा**दिपदं** सूत्रे ।

**प्रज्ञान्तरपृथक्त्ववदिति** । 'औपनिषदानि उपासनानि न पृथक् सन्ति ; क्रियाशेषभूतकर्तृज्ञानरूपविद्यापरमेव वेदान्तजातम्' इति शंका पुरुषार्थाधिकरणे परिहरिष्यते । तथैवेह विद्यामयक्रत्वभावशंकाऽपि परिहार्येति तच्छेषत्वमेवात्रोक्तानां सर्वेषाम् । हठवादे तु औपनिषदोपासनापलापोऽपि स्यादिति भावः । **प्रज्ञान्तराणि** विद्यामयप्रकृतक्रतुभिन्नानि दहराद्युपासनानि । तेषां पृथक्त्वं क्रियामयक्रत्वपेक्षया । अनुबन्धानां ज्ञानरूपाणां विद्यामयस्य क्रतोश्चैवमवगतानां विध्यभावेऽनुष्ठानासंभवात् यद् विधिकल्पनम्, स प्रकारः कर्मकाण्डेऽपि बहुविषये दृष्ट इत्युच्यते **दृष्टश्चेति** सूत्रखण्डेन । तदर्थक जैमिनिसूत्राणि बहूनि सन्ति ; यत्रैकमुपरि, विधिर्वा धारणवदित्यत्र ज्ञापयिष्यते । **तदुक्तमिति** इह किञ्चिद्विवक्षितमुदाहरति,

विधिः परिकल्प्यते । दृष्टश्चानुवादसरूपेषु कल्प्यमानो विधिः । तदुक्तम्—(पू. मी. ३-५-२१) "वचनानि त्वपूर्वत्वात्" इति ।

फलं च, "तेषामेकैक एव तावान्, यावानसौ पूर्वः" इत्यतिदेशात् स्वक्रतुद्वारेणेष्टकचितस्याग्नेर्यत् फलम्, तदेव मनश्चिदादीनामपि स्वक्रतुद्वारेण फलमित्यवगम्यते ॥ ४८ ॥

यत् पुनः अतिदेशेन तुल्यकार्यत्वावगमात् क्रियामयक्रत्वनुप्रवेशोऽवगम्यत इत्युक्तम्, तत्राह—

**न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः । ३ । ३ । ४९ ॥**

नावश्यमतिदेशादवान्तरव्यापारस्यापि तुल्यतया भवितव्यम्; येन क्रियामयक्रत्वनुप्रवेश एषां स्यात्; यस्मात् कस्माचित् सामान्यमात्रादतिदेशोपलब्धेः । उपलभ्यते हि, 'अभि-

---

"वचनानि त्वपूर्वत्वात्" इति । शेषभक्षणाधिकरणे—(मी. ३-२-६) 'सोमेऽवचनाद् भक्षो न विद्यते' इति पूर्वपक्षे, 'प्रैतु होतुश्चमसः, प्रोद्गातॄणाम्' इत्येवं होतृचमसोद्गातृचमसादिमनाख्याद्दर्शनात् चमसपदस्य च भक्षणपात्रवाचित्वात् होत्रादिभक्षो वेद्यते ; सोमचमस इति लौकिकसमाख्यया च । 'वषट्कर्तुः प्रथमभक्षः' 'सदसि भक्षयन्ति' इत्यादिवाक्यान्यपि सन्ति । तेषां विधायकत्वरूपवचनत्वाभावेऽपि तथात्वमेषितव्यम्; अन्यथा प्राप्त्यभावादित्युक्तम्, 'वचनानि त्वपूर्वत्वात् इति । अस्यैवात्र प्रदर्शनम् अनेकविधिवाक्यानि अत्रापीत्याशयेन । अनुबन्धरूपज्ञानानां विषयोऽनेकः । तथा विद्यामयक्रतुरपि नैकः ; मनोवाक्प्राणचक्षुःश्रोत्रकर्माग्निभेदेन व्यापारभेदात् तत्तद्व्यापारेषु केषुचिद् क्रतुत्वभावनानां पृथक्त्वात् । ननु विद्यामयक्रतुकल्पनं तदा स्यात्, यदि पृथक् फलं श्रूयेत । न हि दहरविद्यादिरूपप्रज्ञान्तराणामिवात्र फलं श्रूयते । न च क्रियामयक्रतुफलमेवैतत्फलमिति अस्माभिर्विना वचनं स्वीकर्तुं साम्प्रतम्-इति शंकां परिहरति **फलश्चेति ।** **अनुबन्धादिभ्य** इति सौत्रेणाऽऽदिपदेन श्रुत्यादीनामिव, 'तेषामेकैक एव' इति प्रकृतवाक्यस्यापि ग्रहणात् ततः फलसिद्ध्या विधिसिद्धिरित्युक्तं भवति । इदं वाक्यमिष्टकचितेन सह मनश्चिदादेर्विकल्पेनाङ्गत्वबोधकमिति पूर्वपक्ष्युक्तम् । श्रुत्यादिना प्रकरणबाधात् विकल्पस्याष्टदोषदुष्टत्वादिष्टकचितकार्यकरत्वस्य मनश्चिदादिषुदर्शनाच्च तमर्थं सिद्धान्ती त्यजन् एवमर्थमाह—इष्टकचितः क्रतुद्वारा यद्यत्फलहेतुः, मनश्चिदादिरपि स्वक्रतुद्वारा तत्तत्फलहेतुरिति । अत्र वाक्ये एकैक इत्यस्य मनश्चिदादिष्वेकैक इति नार्थः ; 'षट्त्रिंशत् सहस्राण्यग्नयोऽर्काः तेषामेकैक एव ' इति हि वाक्यक्रमः । अतो मनश्चित्सु षट्त्रिंशत्सहस्रसंख्याकेषु एकैकोपि मनश्चित् इष्टकचिततुल्य इति । एवमस्य वाक्यस्य प्राणचिदादिष्वपि प्रत्येकं पाठदर्शनात् तत्तच्चित्सु तावत्संख्येषु एकैकोऽपीष्टकचिततुल्य इत्युच्यते । तौल्यञ्च फलप्रयोजकत्वांशे इत्युक्तं भवति । **तदेव····फलमितीति ।** तत्फलाभिन्नत्वेनेत्यर्थः ॥

ननु तेषामेकैक एवेति वाक्यं विद्यामयक्रतुविधिप्रतिबन्धकम् ; यावानित्यस्य फलप्रयोजकत्वरूपव्यवहितसादृश्यपरत्वापेक्षया इष्टकचितवत् क्रियाक्रत्वनुप्रविष्टत्वरूपसादृश्यस्यैव बुद्धिस्थत्वादिति शंकापरिहारकसूत्रमवतारयति **यत् पुनरिति ।** **सामान्यादपि** असाधारणधर्मं विना साधारणधर्मरूपसादृश्या-

१०-५-२) "स एष एव मृत्युः, य एष एतस्मिन् मण्डले पुरुषः" इत्यादिषु संहर्तृत्वादिसामान्यमात्रादतिदेशः; न हि तत्र मण्डलपुरुषस्य मृत्युवत् तल्लोकापत्तिः तद्देशप्राप्तिरपि भवति; एवमिहापि मनश्चिदादीनामिष्टकचिताग्निवद्भावातिदेशमात्रेण, इष्टकचिताग्निदेशरूपक्रियामयक्रत्वनुप्रवेशेनापि न भवितव्यम्। अत इष्टकचिताग्नेः स्वक्रतुद्वारेण यत् फलम्, तदेव मनश्चिदादीनामपि विद्यामयक्रतुद्वारेण फलमिति अतिदेशादवगम्यते ॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः । ३ । ३ । ५० ॥

परेण च ब्राह्मणेनास्यापि मनश्चिदाद्यभिधायिनः शब्दस्य ताद्विध्यं तद्विधत्वम्—विद्यामयप्रतिपादित्वमवगम्यते; परेण हि ब्राह्मणेन, (अग्नि. १०-५-४) "अयं वाव लोक एषोऽग्निश्चितः। तस्याऽऽप एव परिश्रितः" इत्यदिना, "स यो हैतदेवं वेद लोकंपृणाम्, एनं भूतमेतत् सर्वमभिसंपद्यते" इति पृथक्फला विद्यैव विधीयते; तथा (अग्नि. १०-५-६) वैश्वानरविद्यादौ च विद्यैव विधीयते। अतोऽग्निरहस्यस्य क्रियैकविषयत्वं नास्ति। एवं तर्हि विद्यामयाः मनश्चिदादयो बृहदारण्यकेऽनुबद्धव्याः किमर्थमिहानुबध्यन्ते ? तत्रोच्यते-भूयस्त्वात्त्वनुबन्धः इति। मनश्चिदादिषु संपादनीयानामग्न्यङ्गानां भूयस्त्वात् तत्संनिधाविहानुबन्धः कृतः ॥५०॥

इति पूर्वविकल्पाधिकरणम् ॥

१०३. शरीरेभावाधिकरणम् ३-३-२१ ॥

(पू) एक आत्मनः शरीरे भावात्। ३ । ३ । ५१ ॥

---

दपि। असाधारणसादृश्यग्रहणमत्र प्रतिबद्धमपि; इष्टकचितवत् मनश्चिदादेः क्रतूपकारकत्वायोगात्। 'स एष' इति यावद्यमत्र माध्यन्दिनशतपथब्राह्मणदशमकाण्ड एव पूर्वभागे उपक्रमे उपसंहारे चास्ति। मण्डलपुरुषेऽग्नित्वभावना प्रागुक्ता; मृत्युसादृश्यमत्रोच्यते। अमृतत्वप्राप्तिरूपफलभ्रान्ते ॥ ४९ ॥

पूर्वोत्तरभागानुसारेण च मनश्चिदादिप्रतिपादकभागस्य विद्यामयपरत्वमित्याहान्तिमसूत्रेण। परेण चेति चकारेण पूर्वभागग्रहणम्। तत्रामृतत्वादिप्राप्त्यर्थानेकस्वतन्त्रोपासनानामुक्तेः। स च भागः पूर्वसूत्रगृहीत एवेति चकारेण तदुक्तिः। अग्निर्हि इष्टकाकृतः स्थण्डिलविशेषः। तत्र निविधास्विष्टकासु लोकम्पृणेति शब्दः छिद्रम्पृणाशब्दवत् चयनभूप्रदेशपूरकेष्टकाविशेषपरः। तद्विषयोपासनविशेषाः अग्नौ भूम्यन्तरिक्षादिभावनाविशिष्टाः तत्रोक्ताः। तस्याप एव परिश्रित इत्यस्य तत्परिषेचनजलेषु परिश्रिच्छब्दबोध्येषु समुद्रदृष्टिः कार्येत्यर्थः। फलमपि पृथगुक्तम्—'एनं भूतमेतत् सर्वमभिसंपद्यते' इति उपासकं प्रति सर्वस्य प्राणिनः शेषत्वरूपम्। तदुपरितनभागेषु वैश्वानरविद्यादयश्च पूर्वोक्तविद्यामयक्रतुवत् स्वतन्त्रा एवोक्ताः ॥ ५० ॥

पूर्वाधिकरणं विद्यामयक्रतुविषयकत्वेन परविद्याविषयकत्वाभावात् प्रासङ्गिकम्। प्रपूर्वाधिकरणे सर्वपरविद्योपास्यो नारायण इत्युक्तम्—तथोपासकस्वरूपस्यापि सर्वपरविद्योपास्यत्वात् तत्स्वरूपं कीदृशमनुसंधेयमिति विशोध्यते इत्यवसरसंगतिः। यद्वा संनिहितं क्रियामयक्रतुमुपेक्ष्य विद्यामयक्रत्वन्वयो मनश्चि-

सर्वासु परविद्यासु उपास्य-उपासक-स्वरूपवत् उपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तम्, (शारी. १-४-६) त्रयाणामेव चैवमुपन्यासः प्रश्नश्च" इति ; वक्ष्यति चास्य प्रत्यगात्मनःपरमात्मात्मकत्वेनानुसन्धानम्, (शारी. ४-१-३, "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति । किमयं प्रत्यगात्मा ज्ञाता कर्ता भोक्ता इहामुत्रसञ्चारक्षमोऽनुसन्धेयः, उत प्रजापतिवाक्योदितापहतपाप्मत्वादिस्वरूपः ? । किं युक्तम् ? ज्ञातृत्वाद्याकारमात्र इत्येके मन्यन्ते : कुतः ? अस्योपासकस्याऽऽत्मनः शरीरे भावात् ; आत्मनः शरीरे वर्तमानस्य तादृशमेव रूपम् । तावतैवानुसन्धानेन तत्फलसिद्ध्युपपत्तेश्च ; न हि कर्मस्वधिकृतानां स्वर्गादिफलार्थिनां ज्ञातृत्वाद्यतिरेकेण, फलानुभवदशायां यादृशं रूपम्-तादृशं रूपं साधनानुष्ठानदशायामनुसंधातव्यम् ; तावतैव साधनानुष्ठानतत्फलयोः सिद्धेरतिरिक्तानुसंधाने प्रयोजनाभावात् : तदविशे-

---

दादेरुक्तः पूर्वाधिकरणे । तत्रोपस्थितक्रतुसंबन्धे बाधकवत् अत्र जीवस्य उपस्थितसंनिहितधर्मसंबन्धेऽनुसंधेये बाधकाभावादौपाधिककर्तृत्वाद्यन्वयो नोपेक्ष्य इति शंकया स्यादनन्तरसंगतिः । ननु परविद्यासु जीवस्योपासकस्योपास्यत्वे किल तद्विशेषविचारः ; तदेव नेति शंकायाम् —किं 'सर्वधर्मांश्च संत्यज्य सर्वकामांश्च साक्षरान्' इत्यैश्वर्यकैवल्योभयविरक्तस्य मुमुक्षोर्विषयान्तरवत् जीवस्वरूपं त्याज्यत्वान्नानुसंधेयमित्याशयः, किं वा तस्योपास्यत्वं नेति इति विकल्पमभिप्रेत्य आद्ये आह **उपास्येति**, अन्त्ये आह **वक्ष्यति चेति** । **सर्वासु परविद्यास्वित्यस्य** वाक्यद्वयेऽप्यन्वयः । पञ्चाग्निविद्यायां तु पुनरामित्यभिप्रेतम् । **किमयमिति** । ननु अहंब्रह्मास्मीति अहंत्वमात्रमनुसंधेयं प्रतीयते ; न पुनर्विद्यमानोऽप्यन्य आकारः । एवं सति कुतस्त्यो विचारः इति चेत्—उच्यते । देहादावप्यहम्भावस्थितिस्त्योपासकस्यादंत्वरूपप्रत्यक्त्वानुसंधानमात्रेण न देहविवेकस्थैर्यम् । अतो देहे वर्तमानस्य देहात्मभ्रान्तिनिवृत्त्यर्थापेक्षितदेहातिरेकसाधकज्ञातृत्वादि-तदर्थकर्मपारवश्यादिर्धर्मः उपादेयः। ज्ञानत्वानन्दत्वे तु परमात्मसाधारणे। अतः पूर्वम् ज्ञोऽतएव, कर्ता शास्त्रार्थवत्त्वादिति ज्ञातृत्वकर्तृत्वभोक्तृत्वानां तदन्तरप्रतिपत्त्याद्यधिकरणेषु इहामुत्र संचारक्षमत्वस्य च साधितत्वात् तद्रूपेणानुसंधानं युक्तमिति । **एके** पूर्वपक्षिणः । ननु प्रत्यधिकरणमेवम् एके इति प्रयोक्तुं शक्यम्—पूर्वपक्षिसत्त्वादिति चेद्—न । तत्र पूर्वपक्षिणः कस्यचित् स्वपक्षमेव सिद्धान्तं मन्वानस्याभावेऽपि विचारावसरप्राप्तशंकामात्रेण पूर्वपक्षित्वम् । इह तु इममेव सिद्धान्तमाहत्यानुष्ठानप्रवृत्ताः सन्तीत्याशयेनैवमुक्तिः । अतः सत्यकामत्वसत्यसंकल्पत्वाद्यनभ्युपगन्तृतार्किकादय ईदृगात्मानुसंधानत एव मोक्षं साधयन्तः इम **एके** । तथा च पूर्वपक्षे तेषामपि फलसिद्धिः प्रयोजनम् । यद्वा **एके** इति पञ्चाग्निविद्याध्यायिविवक्षा । तदध्यायिनः इहामुत्रसंचारक्षमत्वादिकमेव तत्र वदन्तीति तथैव जीव उपास्य इत्याशयः । **न हि कर्मस्विति** । लौकिककर्मस्वधिकृतानामेकस्मिन् ज्ञातृत्वकर्तृत्वभोक्तृत्वज्ञानमात्र पर्याप्तम् । स्वर्गाद्यर्थिनां देहातिरिक्तत्वं नानादेशदेहसंबन्धक्षमत्वञ्च वेद्यम् । इन्द्रादिपदलिप्सुभिरिन्द्रत्वाद्याकारः स्वस्य न ह्यनुसंधेय इत्यर्थः । अननुसंधानेऽपि तल्लाभवत् अपहतपाप्मत्वादेरपि लाभो भवतु । एवं भविष्यत्त्वमेव प्रजापतिवाक्ये विवक्षितम्, नानुसंधेयत्वमपि । अत एव, 'योऽहमस्मि स सन्

पादिहापि तथैव ॥ ननु चात्र, (छा. ३-१४-१) "यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति" इति विशेषवचनादपहतपाप्मत्वाद्याकार एवानुसंधातव्य इत्यवगम्यते। नैवम्, (माध्यं. अग्नि. १०-५-२) "तं यथायथोपासते" इत्युपास्यविषयत्वात् तस्य।

---

यन्ते' इति भविष्यदाकारानुसंधानस्यानावश्यकत्वं प्रतीयते इति ॥ अनुपस्थितासंनिहितापहतपाप्मत्वादिधर्मान्वयसाधकमत्राप्यस्तीति शंकते **ननु चेति**। **यथाक्रतुः** यत्प्रकारस्वविषयकोपासनवान् **तथा** तद्रूपविशिष्टः। तथाभवतीति जीवगतप्रकारोक्त्या यथाक्रतुरित्यत्र जीवप्रकार एव ग्राह्य इति शंकितुराशयः। यद्वा सिद्धान्त्याशयस्य निरसनायोद्भावनमेवम्। परिहरति **नैवमिति**। तं यथायथोपासते तदेव भवतीति शतपथब्राह्मणे **अग्निरहस्ये**। पूर्वं दक्षिणाक्षिस्थं पुरुषं प्रस्तुत्य, तस्मिन् अवयवव्युत्पत्त्याऽर्थविशेषं परिशील्य, अध्वर्युप्रभृतयः तं यजुस्सामादिशब्दत्वेनोपासते, ततः तत्तदाकारस्य तस्य परमात्मनः उपासकं प्रति आविर्भावो भवतीति तत्रोच्यते। उपासत इति बहुवचनात, **तमिति, तदेव भव**तीति चैकवचनान्तानां न जीवविषयत्वसंभव इति च परमात्मपरतैव। यद्रूपविशिष्टं परमात्मानमुपासते, स तेभ्यस्तद्रूपविशिष्ट एवाविर्भवतीति तद्वाक्यार्थः। अतो जीवोपासनस्य तत्रानुक्तेः तद्रीत्येहापि, यथाक्रतुरस्मिन्निति वाक्ये परमात्मैव विवक्षणीयः। न च—तर्हि पुरुषः तथा भवतीति जीवात्मनः तथाभाववचनम्, जीवपरयोर्भेदान्न घटते। अत इदं वाक्यं जीवविषयमेवेति—वाच्यम्; उपरि, "मनोमयः प्राणशरीरो भारूपः" इत्यादिना तत्तदाकारविशिष्टपरमात्मोपासनस्य, एतमितः प्रेत्याभिसंभवितास्मीति तथाविधतत्प्राप्त्यनुसंधानस्य चैव कथ्यमानतया यथाक्रतुवाक्यस्य च तदर्थमेव प्रवृत्ततया जीवविषयकत्वायोगात्। तर्हि प्रेत्य भवतीति प्रायणसमानकर्तृकं तथाभवनं कथमुच्यत इति चेत्—शतपथे तत्र, "तस्मादेतमेवंवित् सर्वैरेतैरुपासीत। सर्वं हैतद्भवति। सर्वं हैनमेतद्भूत्वाऽवति" इति उपासितप्रकारैर्विशिष्टः सन् परमात्मा रक्षतीति जीवपरभेदस्य कथनात, एतमितः प्रेत्याभिसंभवितास्मीति वक्ष्यमाणमनुसृत्य च भवतीत्यस्य सोपसर्गभूधात्वर्थपरत्वं मन्तव्यम्-उपसर्गस्य द्योतकत्वात। अतः **तथाभवति**-तथाविधमभिसंभवति अनुभवतीत्यर्थः। अत एव सिद्धान्ते भाष्यम्, "यथोपासनमेव हि प्राप्तिः श्रूयते" इति। अथवा यादृशप्राप्तिमत्त्वप्रकारकोपासनवान्, तादृशप्राप्तिमान् भवतीत्यर्थः। सर्वथा वाक्यमिदं परविषयम्, न तु जीवविषयकमिति पूर्वपक्षी। आत्मनः शरीरे वर्तमानत्वात एतत्कालिकाकारमेवानुसंधेयमेके (पञ्चाग्निविद्याविदः) अभिप्रयन्तीति सूत्रार्थः।

जुगुप्सोत्पादनाय पञ्चाग्निविद्यायां गतागतादिवर्णनेऽपि न, तेनैवाकारेणानुसंधेय आत्मेति तत्र विवक्षितम्। "तद् य इत्थं विदुः" इत्यत्र तत्पदेन प्रजापतिवाक्योक्तापहतपाप्मत्वादिविशिष्टस्यैव विवक्षा। इत्थमित्यस्य च पञ्चाग्न्यनुगततया प्रकृतं विलक्षणमित्यर्थः। तत्क्रतुन्यायो न परमात्ममात्रविषयः; किंतु जीवविषयोऽपि। यथाक्रतुरित्यस्य हि उपास्यसर्वविषयकत्वं स्वरससिद्धम्, तथा भवतीति वचनाच्चोपासितांशः प्राप्तिकालेऽस्तीति सिद्धम्। तत्रोपासिताकारादन्य आकारो न प्राप्यत इति वा उपासित आकारः प्राप्यत एवेति वाऽर्थ इति विमर्शे, कतिपयगुणविशिष्टब्रह्मानुसंधानत एव उपासितानुपासितसर्वगुणविशिष्ट-

एवं प्राप्ते प्रचक्ष्महे—

व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् । ३ । ३ । ५२ ॥

न त्वेतदस्ति—यत् ज्ञातृत्वाद्याकार एवानुसंधेय इति । अस्याऽऽत्मनः संसारदशायाः मोक्षदशायां यो व्यतिरेकः, सोऽपहतपाप्मत्वादिकोऽनुसंधेयः ; अस्य मोक्षदशायां यादृशं रूपम्, तादृग्रूप एवोपासनवेलायामात्माऽनुसंधेय इत्यर्थः । कुतः ? तद्भावभावित्वात् तद्रूपापत्तेः । "यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति", (मुद्गलोप. ३) "तं यथायथोपासते, तथै (दे ?) व भवति" इति यथोपासनमेव हि प्राप्तिः श्रूयते । न च परस्वरूपमात्रविषयमेवेदमिति वक्तुं शक्यते ; प्रत्यगात्मनोऽप्युपास्यभूतपरब्रह्मशरीरतया

---

तत्प्राप्तेर्निर्विवादतयाऽन्ययोगव्यवच्छेदरूपप्रथमार्थायोगात् अयोगव्यवच्छेद एव स्वीकार्यः । एवञ्च तं यथायथोपासते इत्यनेन—परमात्मानं मनोमयत्वादिकल्याणगुणकत्वेन, अनुभूयमानसांसारिककर्तृत्वभोक्तृत्वतदौपयिककर्मपरवशत्वादिविशिष्टजीवशरीरकस्वरूपप्रकारवत्तया चोपासने चेत्—स तेभ्यः तत्प्रकारवान् भवत्येवेत्युक्तौ सांसारिकाकारोऽपि प्राप्तिकालेऽनुवृत्तः स्यादिति कथमसौ मोक्षः । सत्यकामः सत्यसंकल्प इत्येतदवगम्यस्वाभाविककर्तृत्वभोक्तृत्वादिकं तु नेदानीमनुभूयमानम् । एवम्भूतकर्मपारवश्यप्रत्यनीकमपहतपाप्मत्वादिकं संसारिकज्ञातृत्वादिविलक्षणं सत्यकामत्वादि चोपास्यते चेत्—तत्प्राप्तिर्भवत्येवेति सर्वं समञ्जसं स्यात् । एवमप्राप्य आकारो नानुसंधेय इत्यस्य तत्क्रतुवचनसामर्थ्यादेव दृष्टिरूपोपासनानां मोक्षाहेतुत्वम् ; कल्पिताकारस्याप्राप्यत्वात् । एवञ्च तत्क्रतुन्यायो न दृष्टिविषयकः ; मोक्षाद्यर्थतत्त्वार्थोपासनविषयकश्चेति सिद्ध्यति । मोक्षार्थोपासनसामान्यस्य तत्त्वविषयकतया, तत्र यस्मिन् धर्मिण्यंशे यस्य यस्यांशस्य यथा भानमस्ति, तत्तदंशः तथा तत्तदंशवान् भवति फलप्राप्तिकाले इत्यस्यार्थस्यैतो निष्पन्नत्वात्, ब्रह्मणि तत्प्रकारभूतचिदादौ चोपासनकाले भासमानैः सर्वैराकारैः तथैव प्राप्तिकालेऽपि भाव्यं यतः, तत औपाधिकाकारा नोपास्या इत्यवगमितं भवति । एवमभिसंधाय सिद्धान्तमाह **व्यतिरेक** इति सूत्रेण । औचित्यात् सूत्रे **न तु** इत्यस्य प्रथमं योजना । औपाधिकाकार इति निषेध्यमध्याहार्यम् । स नोपास्यः ; किंतु तद्व्यतिरेक उपास्य इत्यर्थः । **तद्भावभावित्वात्** ; व्यतिरेकस्य भावित्वादित्यर्थः । नन्वभाविताकारस्यापि भावित्वमिति स्थिते कथं तद्भावभावित्वादित्युच्यत इति चेन्न—**तद्भावे** तद्भावनायां तद्विपरीतौपाधिकाकाराभावनायां भावित्वादित्यत्र तात्पर्यात् । अथवा **तद्भावभावित्वा**दित्यस्य **न तु** इत्यनेनान्वयः । व्यतिरेक एवानुसंधेयः, न त्वौपाधिकाकारः **तद्भावे** औपाधिकाकारानुसंधाने तस्य **भावित्वात्** स्थित्यापत्तेरित्यर्थः । पूर्वयोजनायां, **तद्भावभावित्वात् तद्रूपापत्ते**रिति भाष्यस्य व्यतिरेकात्मकरूपलाभस्य तद्भावनाभावित्वादित्यर्थः । द्वितीययोजनायां **तद्भावभावित्वा**दित्यस्य **तद्रूपापत्ते**रिति व्याख्यानम् । पञ्चम्यन्तम् । **तद्रू**पेति पदमौपाधिकरूपपरम् ; तत्प्रसंगादित्यर्थः ।

**तदेव भवती**ति श्रुतिवाक्यपाठो भाष्ये **इतरभाष्य इव** युक्तः ; शतपथे तथैव सत्त्वात् । **तथैव भवती**ति पाठे तु **मुद्गलो**पनिषत्पाठ इति मन्तव्यम् । तत्रोपनिषदि उपरि अहमस्मीत्यनुसंधान-

**उपास्यकोटिनिक्षिप्तत्वात्।** अतः प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरपरमात्मोपासनस्य तथारूपमेव प्राप्यमित्युक्तं भवति। अत एव, (अग्नि. १-१०-६) "एवं क्रतु-

---

वचनात् तदुपनिषद्ग्रहणे जीवात्मपरत्वमपि तत्क्रतुवचनस्य सूपपादमिति तदुदाहरणमिति भाव्यम्। पूर्वपक्षगतं 'तं यथा यथा' इति वाक्यं तु शतपथगतमेव प्रसिद्धं भवितुमर्हति। **उपास्यकोटिनिक्षिप्तत्वा**दिति। अत्रेदं विचार्यम्—प्रत्यगात्मनो ज्ञानयोगरूपमुपासनं प्रथममस्ति। तेन तदवलोकने सिद्धे ततस्तद्विशिष्टपरमात्मोपासनं भवति। तत्र द्वितीये तस्य तत्कोटिनिक्षेपः। एवञ्च प्रथमोपासनस्य तत्क्रतुवाक्यविषयत्वे मानाभावात् पूर्वपक्ष्युक्तरीत्याऽनुसंधाने को दोषः। तस्य केवलात्मावलोकनमात्रार्थतया औपाधिकाकारग्रहणे बाधकाभावात्; तस्यापि पारमार्थिकत्वात् इति चेत्—उच्यते। मुमुक्षुणा मोक्षे यद्रूपप्राप्तिरिष्यते, तद्रूप एवाऽऽस्थायाः सत्त्वेन, औपाधिकाकारस्य च जुगुप्सितत्वेन, तद्रूपविशिष्टस्वात्मानुसंधानस्यैव भक्तियोगे वक्तव्यत्वे, तद्रूपदिदृक्षायाश्चानुस्यूतं प्रवहन्त्यां तद्रूपेणोपासनं विहायौपाधिकाकारोपासने को नाम प्रवर्तेत। अनुपस्थितत्वे हि तदुपासनाया असंभवः। अत एव संनिहितत्वादयमेवाकार उपास्य इति पूर्वपक्ष्युक्तमयुक्तम्; उपस्थित्यविशेषे सति इष्टत्वस्यैव विनिगमकत्वात्। फलरागिणः फलदशाभाव्यनुसंधानस्य सत्त्वेनानुपस्थितेर्नैव प्रसक्तिः। अन्तरङ्गत्वाच्च। अत एव ज्ञानयोगरूपात्मोपासनपरे प्रजापतिवाक्ये, अपहतपाप्मेत्याद्याकाराणामेवोक्तिः॥ ननु प्रजापतिवाक्यं ज्ञानयोगपरमिति कुतः। दहरविद्यापरमेव स्यात्। दहरविद्यायां परमात्मनो विषयत्वं पूर्वभागे प्रतिपादितम्; अथ प्रजापतिवाक्ये परमात्मविशेषणतयोपास्यजीवस्वरूपमुपपाद्यते। अतः कृत्स्नस्यैकोपासनत्वादेव, एतदुपासनफलतयाऽपि, परं ज्योतिरुपसंपद्येत्याद्युपन्यासः। अन्यथा ह्यङ्गिफलस्याङ्गे निर्देश इति महान् क्लेशः स्यादिति चेत्—उच्यते—प्रजापतिवाक्यात् पूर्वं दहरविद्यासमाप्तिद्योतकपदाभ्याससत्त्वात् नास्य दहरविद्याविषयकत्वम्। न च जीवात्मा दहरविद्यामात्रे परमात्मविशेषणतयोपास्यः; सर्वत्रैव तत्संमतेः। एवञ्चानुपस्थितसर्वविद्याकथनमत्रेत्येतदपेक्षया सर्वपरविद्याङ्गज्ञानयोगपरत्वमेव युक्तम्। प्रथमयोगत्यागे मानाभावाच्च। न चाङ्गिफलवचनानुपपत्तिः; अपहतपाप्मत्वादि-सत्यसंकल्पत्वान्तसर्वगुणविशिष्टात्मावलोकने जातेऽपि तदाविर्भावः कदेत्यपेक्षायाम्, परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पन्नो जक्षणादि-तदर्थसत्यकामत्वसत्यसंकल्पत्वसंपन्नो भवतीत्युपपादनाय तदुक्तेरवश्यप्राप्तत्वात्॥ तर्ह्यधिकरणमिदमपि ज्ञानयोगचिन्त्याकारविचारपरमेव किं न स्यादिति न वाच्यम्—सूत्रे **तद्भावभावित्वा**दिति प्रयोगात् तत्क्रतुवाक्यविचारस्यात्र विवक्षितत्वावगमात् जीवात्मोपासनमात्रेण तत्तद्धर्माविर्भावाभावात्, तत्र वाक्ये **त**मिति परमात्मानं विना जीवमात्रग्रहणायोगाच्च परविद्यान्तर्गतजीवानुसंधानप्रकारस्यैवात्र चिन्त्यत्वात। तत्र **त**मिति पदस्यैव जीवशरीरकपरमात्मेत्यर्थो वा, **तथा**शब्देन जीवशरीरकत्वस्यापि विवक्षा वेत्यन्यदेतत्। शतपथे पूर्वमादित्यमण्डलस्याक्ष्णश्च प्रस्तावात् **त**मित्यनेन तत्र सन्तमित्येतावदेवावगम्यत इति चेत्—तर्हि **तथा**शब्द एवैतद्विवक्षाऽस्तु। **प्रत्यगात्मशरीरपरमात्मोपासनस्य तथारूपमेवे**ति भाष्यञ्च **यथाशब्दे** तद्विवक्षां गमयेत्। **एवंक्रतु**रिति

**हाऽमुं लोकं प्रेत्याभिसंभवति" इत्युच्यते। तस्मात् प्रत्यगात्मा प्राप्याकार एवानुसंधेयः।** उपलब्धिवत्। **यथा ब्रह्मोपलब्धिर्विहिता यथावस्थितब्रह्मस्वरूपविषया, तथा आत्मोपलब्धिरपि यथावस्थितात्मस्वरूपविषयेत्यर्थः। कर्मसु आत्मस्वरूपानुसंधानं न कर्माङ्गम्;** (यजु. २-५-५) **"यजेत स्वर्गकामः" इति कर्मानुष्ठानमेव हि फलाय चोद्यते। देहातिरिक्तज्ञातृत्वाद्याकारात्मावगतिः कालान्तरभाविफलसाधनकर्माधिकारार्थेति तावन्मात्रमेव तत्रापेक्षितमिति न किञ्चिदपहीनम्॥ ५२॥** इति शरीरेभावाधिकरणम्॥ २१॥

१०४. अङ्गावबद्धाधिकरणम् ३-३-२२॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्। ३। ३। ५३॥

च वाक्यान्तरमुपात्तम्। तत्रैवोपरि, एष मे आत्मेति वाक्यादपि प्रत्यगात्मान्तर्यामित्वं विधेयकोटिगतमसीयत इति यथाशब्दे तद्विवक्षा युक्ता। वस्तुतः, ते यथायथेति वाक्ये तमिति परमात्मग्रहणेऽपि तस्य विशेष्यत्वमेवेति न नियमः। पञ्चाग्निविद्याया अपि ग्राह्यत्वात्। अतो विषयत्वं द्वितीयार्थः। परमात्मविषयकमुपासनं यद्यदंशे यद्यदंशसंसर्गावगाहि, तत्तदंशसहिततत्तदंशः प्राप्तावप्यन्येव तदर्थ इति। **एवंक्रतुः** एतद्रूपविशिष्टोपासनवान्।

ननु **नतूपलब्धिव**दिति यथापाठमेवान्वितं भवतु। तेन शंका काचित् परिह्रियते। केतिचेत्—यथा ब्रह्मोपासनं तद्गतज्ञातृत्व-कर्तृत्व-लीलादिरसभोक्तृत्व-इन्द्रादिशरीरकत्व-नानाविधावतारपरिभ्रमणादिसर्वविषयकम्, तथा जीवोपसनमपि स्यादित्येवंरूपा। तत्रोच्यते, **न तूपलब्धिव**दिति। तस्य तेषामंशानां दिव्यत्वादनुकूलत्वात् प्राप्यत्वादुपासनं युज्यते; नास्य; औपाधिकत्वेन हेयत्वादेषामप्राप्यत्वादिति तदर्थ इति चेत्—अस्तु कामम्—पूर्वपक्षस्य कार्त्स्न्येन खण्डनपरं पदमत्रापेक्षितम्। तत्र **न तु** इत्यस्य योजनं युज्यत एव यथाशाङ्करम्। तदधिकरणरचनाप्रकारस्त्वन्य इत्यन्यदेतत्। **तद्भावाभावित्वा**दिति तन्मते पाठः। औपाधिकाकाराणां मुक्तावभावित्वात् व्यतिरेक एवोपास्य इत्यर्थस्तदापि सुवच एव।

ननु शुद्धस्वरूपज्ञानं कर्माकारणमप्यपेक्षितमस्तु; नेत्याह **कर्मस्वि**ति। न हि इदमिदं ज्ञात्वा कुर्यादितिकश्चिद् विधिरस्ति। 'न ह्यविद्वान् अधिकृतोऽस्ती'ति न्यायेन यावज्ज्ञानमपेक्षितम्, तावदेवेष्यते; न त्वर्थमन्यदपि। ज्ञानस्य दृष्टविधयैवोपयोगात्। तार्किकादिपक्षवैलक्षण्येन सिद्धान्तिसंमतमोक्षस्वरूपे उपायानुष्ठानोपयोगितयाऽवश्यज्ञेये तत्र निरन्तरपरमात्मशेषत्वस्य क्लेशावहत्वसंशयापनोदनाय सत्यकामत्वसत्यसंकल्पत्वापहतपाप्मत्वाद्यनुसंधानमावश्यकञ्चेति तथैवोपासनं प्रजापतिवाक्यावगतं नाकाण्डेऽन्यथयितुं युक्तमिति भावः। ननु ज्ञानयोगे अपहतपाप्मत्वाद्यनुसंधानेऽपि भक्तियोगे स्वान्तर्यामित्वमात्रमुपास्याकारोऽस्तु; न तु गुणाष्टकमपीति चेत्—न; आत्मावलोकनात् पश्चादेव भक्तियोगस्य क्रियमाणतया स्वेनरूपेणात्मानमवलोकितवतः पुंसः तदन्तरात्मत्वानुसंधानकाले तद्रूपं न भासत इति साधयितुमशक्यत्वात्। इदमभिप्रेत्याह **न किञ्चिदपहीन**मिति॥ ५२॥

यथा परविद्या सर्वाऽपि शुद्धजीवविषयिणी, तथा सर्वशाखागतोद्गीथादिरपि किञ्चि-

(छा. १-१-१) "**ओमित्येतदक्षरमुद्गीथमुपासीत**", (छा. २-२-१) "**लोकेषु पञ्चविधं सामोपासीत**", (ऐ. आ. २-१-२) "**उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थम् इयमेव पृथिवी**" (अग्नि. १०-५-६) "**अयं वाव लोक एषोऽग्निश्चितः**" **इत्येवमाद्याः क्रत्वङ्गाश्रया उपासना भवन्ति ; ताः किं यासु शाखासु श्रूयन्ते, तास्वेव नियताः, उत सर्वासु शाखासूद्गीथादिषु संबध्यन्त इति विचारः । सर्ववेदान्तप्रत्ययत्वे स्थितेऽपि प्रतिवेदं स्वरभेदादुद्गीथादयो भिद्यन्त इति तत्रतत्र व्यवतिष्ठेरन्निति युक्ता शङ्का । किं युक्तम् ?**

---

च्छाखाविहितोद्गीथाद्युपासनविषय इति सिद्धान्तानुरोधेन संगतिः । अथवा यथा परविद्यान्तर्गतजीवोपासनं शुद्धस्वरूपमात्रविषयकम्, तथा अङ्गावबद्धोपासनं स्वशाखागतोद्गीथव्यक्त्यादिमात्रविषयकं स्यादिति पूर्वपक्षप्रवृत्त्या संगतिः । आद्ये आक्षेपः संगतिः ; अन्त्ये दृष्टान्तः । **उद्गीथम्** उद्गीथाख्यसामभक्त्यवयवभूतम् ओमित्येतत् **उपासीत** रसतमत्व, कामाप्तिमत्त्व-मुख्यप्राणत्व-हिरण्मयपुरुषत्वादिदृष्ट्योपासीत । इयं क्रत्वङ्गोद्गीथाश्रितोपासना । **लोकेषु पञ्चविधं सामोपासीतेति** । हिंकारप्रस्तावोद्गीथप्रतिहारनिधनरूपभक्तिविधापञ्चकयुक्तं साम लोकान्तर्गतपृथिव्यग्न्यन्तरिक्षादित्यद्युलोकदृष्टिं कृत्वोपासीतेत्यर्थः । उक्थमिति यत् कर्माङ्गभूतं शस्त्रं वदन्ति, तत्र पृथिवीदृष्टिः कार्येति **उक्थमित्यादेरर्थः** । य एष **चितः** चयनकर्मभूतोऽग्निः=स्थण्डिलविशेषः, तस्मिन् एतत्पृथिवीलोकदृष्टिः कार्येत्युपर्युच्यते । इमे उद्गीथसामोक्थाग्नयः क्रत्वङ्गभूताः । तदवबद्धाः तदाश्रिताः तन्नियमिताः तान् विनाऽननुष्ठेया उपासनाः **न शाखासु** न तत्तदुपासनविधायकशाखामात्रे ; **हि** यतः **प्रतिवेदं** सर्वास्वपि शाखास्विति स्पष्टमिति सूत्रार्थः । पूर्वपक्ष्याशयस्तु—उद्गीथमुपासीतेत्यत्र यदि उद्गीथस्योद्देश्यत्वं स्यात्, तदा प्रतिप्रधानं गुणावृत्तिरिति सर्वोद्गीथान्वय उपसनस्य स्यात् । उद्देश्यं तु फलमेव । उद्गीथादिस्तु उपकारकमात्रम् । तत्र स्वरादिभिन्नतच्छाखाव्यक्तिग्रहणेनैवोपकारे निर्वृत्ते उद्गीथान्तरं न ग्राह्यम् । एवमग्नावप्याकारभेदाद् तच्छाखीयाकारविशेषविशिष्टाग्निनिर्वृत्तत्वादुपकारस्य नाग्न्यन्तरग्रहणमिति । सिद्धान्त्याशयस्तु—उद्गीथादिव्यक्तेः न स्वरूपेणाश्रयत्वम्, किंतु क्रत्वङ्गत्वमुखेन । सर्वास्वपि शाखासु क्रतोरेकत्वे च तदङ्गत्वमेकस्योद्गीथस्य यथा विधया, तथैवान्यस्यापीति तादृशक्रत्वङ्गताविशिष्टत्वेन रूपेणाश्रयत्वात् सर्वव्यक्तिग्रहणमेव । इदञ्चोद्गीथादिशब्दानां तत्तत्स्वरभेदभिन्नोद्गीथादिव्यक्तिषु अनुगताकाराभावेन प्रत्येकशक्त्यङ्गीकारेऽपि सर्वग्रहणमेव युक्तमिति ज्ञापनाय । यदा पुनः उद्गीथत्वं नाम अभियुक्तैरुद्गीथपदव्यवहार्यत्वमित्येवं सर्वानुगतोद्गीथत्वोक्थत्वाग्नित्वादिधर्मसद्भावः, तदा सर्वव्यक्तिग्रहणमविशेषेणेति । न चैतावता एकैकप्रयोगेऽपि सर्वोद्गीथव्यक्तिविषयकोपासनप्रसक्तिः । अङ्गतयोपात्तव्यक्तेरेवाश्रयत्वसंभवादिति ।

सर्वशाखाप्रत्ययन्याये सति कथमधिकरणोत्थानमित्यत्राह **सर्ववेदान्तेति** । अयं भावः—सर्वशाखाप्रत्ययन्यायेन सर्वत्र सर्वोद्गीथग्रहणं स्यात् ; किंतु विकल्पेन । तत्र उद्गीथानामेकरूपत्वाभावात् यद्येकोद्गीथाश्रितत्वमुपासने प्रतीयेत, तदा प्रतिशाखं तत्रैवोद्गीथे तदुपासनं स्यात् ; नान्योद्गीथेष्विति शंकेति ।

व्यवतिष्ठेरन्निति। कुतः ? "उद्गीथमुपासीत" इति सामान्येनोद्गीथसंबन्धितया श्रुतायाः तस्यामेव शाखायां स्वरविशेषयुक्तस्योद्गीथविशेषस्य संनिधानात् तस्मिन्नेव विशेषे पर्यवसानं युक्तमिति। एवमाद्यास्तास्वेव शाखासु व्यवतिष्ठेरन्निति॥ एवं प्राप्ते प्रचक्ष्महे— अङ्गावबद्धास्तु— इति। तुशब्दः पक्षं व्यावर्तयति। न ह्युद्गीथाद्यङ्गावबद्धा उपासनाः तास्वेव शाखासु व्यवतिष्ठेरन्; अपितु प्रतिवेदं संबध्येरन्; सर्वासु शाखास्वित्यर्थः। हिशब्दो हेतौ। यस्मात् श्रुत्यैवोद्गीथाद्यङ्गमात्रावबद्धाः—तस्मात् यत्रोद्गीथादयः, तत्र सर्वत्र संबध्येरन्। यद्यपि स्वरभेदेनोद्गीथव्यक्तयो भिद्यन्ते—तथापि सामान्येनोद्गीथश्रुत्या सर्वा व्यक्तयः संनिहिता इति न क्वचिद्व्यवस्थायां प्रमाणमस्ति। सर्वशाखाप्रत्ययन्यायेन च सर्वासु शाखासु क्रतुरेकः। अतः सर्वासु शाखास्वेकस्य क्रतोः संनिधानात् क्रत्वङ्गभूतोद्गीथादयोऽपि संनिहिता इति नैकस्य संनिधिविशेषोऽस्तीति न व्यवस्था॥ ५३॥

मन्त्रादिवद्वाऽविरोधः। ३। ३। ५४॥

---

प्रतिवेदमित्युक्त्याः ऋग्वेदादिषु सर्वत्रेत्यर्थः प्रतीयते। उद्गीथस्तु सामवेदमात्रगत इति तदनुरोधेन सर्वासु शाखास्वित्युक्तम्। अग्निविषये तु प्रतिवेदमिति घटते। सर्वासु शाखास्वित्यर्थः सर्वानुगतः। सामान्येनोद्गीथश्रुत्येत्यनेनानुगतार्थवाचित्वमुक्तम्। अननुगतार्थकत्वेऽपि साधारण्यमाह सर्वशाखेति।

ननु सर्वाङ्गोपसंहारस्यैव सर्वशाखाप्रत्ययन्यायलभ्यत्वात् एकशाखापठितमन्त्रादीनां शाखान्तरे प्रधानैक्यानुरोधेन ग्रहणं युज्यते, न त्वेतदुपासनानाम्, अनङ्गत्वात् स्वतन्त्रफलार्थत्वादित्यत्राह मन्त्रादिवदिति। यद्यप्यस्ति वैषम्यम्, अत एव तन्न्यायसिद्धमिदमिति नोच्यते, किंतु सर्वग्रहणे विरोधो नास्ति। शेषशेषिभावाभावेऽपि उपासनेषु क्रतूपजीवित्वस्य वर्तमानत्वात्। दध्नेन्द्रियकामस्य जुहुयादित्यादौ दध्यादेः सिद्धतया व्यापारावेशमन्तरेण फलहेतुत्वायोगात् होमादिक्रियोपजीव्यते। तद्वदिहाभावेऽपि उपासनानां क्रियारूपतया यागादेरिव स्वयं फलहेतुत्वसंभवेऽपि तेषां विषयापेक्षायामुद्गीथाद्यन्वये कृते यागादेर्द्रव्यादिवत् उद्गीथादेरुपासनाङ्गत्वे प्राप्ते, प्रागेवाव्यभिचरितक्रतुसंबन्धादिना क्रत्वङ्गत्वेनावधारितस्य तस्य नैतदङ्गत्वम् नतरामुद्गीथादिप्रयोजकत्वम् इति क्रत्वर्थतया प्राप्तोद्गीथग्रहणेनैवोपासनविधीनां चारितार्थ्यम्। अत एव क्रतुफलाप्रतिबन्धरूपफलान्वयोऽपि घटते। उपासनानां क्रतुमध्यनिविष्टत्वे लिङ्गदर्शनाच्च। एवञ्च सर्वेऽप्युद्गीथाः क्रत्वर्था उपजीव्यन्ते। अत एवोपजीव्यत्वादाश्रयशब्दव्यवहार्यत्वमुद्गीथादीनाम्। पृथक्फलसंबन्धाभावे यत् स्वयमुद्देश्यं भवेत्, तस्य पृथक्फलश्रवणात् तत्साधनायोपजीव्यत्वमेवाऽऽश्रयत्वमिति। यदि तु होमरूपव्यापाराविष्टेन दध्नेन्द्रियं भावयेदिति दधिनिष्ठफलकरणतानिर्वर्तकत्वरूपोपकारकत्वं होमस्येव इहोद्गीथस्योपासनोपकारकत्वम्, तदाऽपि विविदिषन्ति यज्ञेन दानेनेत्यादौ सर्वशाखोक्तयज्ञदानादिग्रहणवत् अनारभ्याधीतत्वादविशेषात् सर्वोद्गीथग्रहणमेवेति न संकोचप्रसक्तिः। एवं तत्तदुद्गीथसाध्यक्रतोस्तत्तत्शाखायां भिन्नत्वेऽपि अविशेषेण सर्वोद्गीथग्राहकत्वेऽवगते तद्द्वारा सर्वक्रत्वन्वयात् सर्वशाखान्वय उपासनानामक्षत एवेत्यपि ध्येयम्।

वाशब्दश्चार्थे। आदिशब्देन जाति-गुण-सङ्ख्या-सादृश्य-क्रम-द्रव्य-कर्माणि गृह्यन्ते; यथा मन्त्रादीनामेकैकशाखास्वाम्नातानामपि शेषिणः क्रतोः सर्वशाखास्वेकत्वेन यथायथं श्रुत्यादिभिः सर्वासु शाखासु विनियोगो न विरुध्यते, तद्वदिहाप्यविरोधः ॥ ५४ ॥

इति अङ्गावबद्धाधिकरणम् ॥ २२ ॥

१०५. भूमज्यायस्त्वाधिकरणम् ३-३-२३ ॥

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति । ३ । ३ । ५५ ॥

(छा. ५-११-१) "प्राचीनशाल औपमन्यवः" इत्यारभ्य वैश्वानरविद्या आम्नाता। तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्यः श्रुतः स्वर्लोकादित्यवाय्वाकाशाप्पृथिव्यवयवः। तत्र च द्यौर्मूर्धा, आदित्यश्चक्षुः, वायुः प्राणः, आकाशः सन्देहः—मध्यकाय इत्यर्थः—, आपो वस्तिः, पृथिवी पादौ-इत्यवयवविशेषाः। तत्र संशयः—किमस्य त्रैलोक्यशरीरस्य व्यस्तस्योपासनं कर्तव्यम्, उत व्यस्तस्य समस्तस्य च, अथ समस्तस्यैवेति। किं युक्तम्?

व्यस्तस्येति। कुतः? उपक्रमे व्यस्तोपासनोपदेशात्। तथा ह्युपदिश्यते—औपमन्यवादयः किलोद्दालकषष्ठाः केकयमश्वपतिमुपसद्य, "आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि, तमेव नो ब्रूहि" इति पप्रच्छुः। स च तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीन् उक्तवद्भ्यो मूर्धादिषु व्यस्तेषूपासनं तत्रतत्र फलं चोक्तवान्, "अत्त्यन्नम्, पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते; मूर्धा त्वेष आत्मन" इति। "एष वै सुतेजा आत्मा वैश्वानरः" इत्यादिना तेषूतेषूपासनेषूपास्यस्य वैश्वानरत्वं चाह। अतो

---

**मन्त्रः** अग्ने वेर्होत्रंवेरित्ययं सामवेदे पठितः यजुर्वेदे गृहीतः (३-३-२३) **जातिः** औदुम्बर्यः कुशाः इति कुशासु उदुम्बरजातिः। (३-३-२६) **गुणः** तैत्तिरीयदहरविद्यायां छान्दोग्योक्तसत्यकामत्वादिः। **संख्या,** 'विराट्संपन्नमग्निहोत्रं जुहोति'इति अग्निहोत्रहोमे एकशाखोक्तं दशसंख्यत्वम्। **सादृश्यं** पुरोडाशे अश्वशफाकारः, अग्नेः श्येनाकारः इति । **क्रमः** देवच्छन्दांसि पूर्वमित्युक्तः (३-३-२६)। द्रव्यं पयःप्रभृति अग्निहोत्रे। **कर्म** पञ्च प्रयाजाः एकत्र विहिताः। तत्सिद्धवत्कारेण, 'ऋतवो वै प्रयाजाः' इति स्तुत्वा तेषां होमदेशैक्यमन्यत्रोच्यते इति ; तथा वैश्वानरविद्यायामग्निरहस्ये अन्यत्रोक्तप्राणाग्निहोत्रस्य ग्रहणमिति। एवमेकशाखागतस्य शाखान्तरे ग्रहणस्थलं सर्वत्र परिशीलनीयम्। **तद्वदिहाप्यविरोध** इति। एकत्रोक्तस्योपासनस्यान्यत्र ग्रहणे विरोधो नास्तीति। तथाच पूर्वसूत्रे श्रुत्या संनिधेर्विरोधेऽपि श्रुतिर्ग्राह्येत्युक्तम्। इदानीं तु एतच्छाखानुक्ततया संनिध्यभावो यथा न विरोधाय, तथा मन्त्रादेरुपासनस्य चाङ्गत्वानङ्गत्वकृतवैषम्यमपि न विरोधायेत्युच्यते। अथवा गुणोपसंहारेण मन्त्रादेरिव सर्वत्र सर्वोद्गीथोपस्थितेः सत्त्वात् संनिधिरप्यस्तीति श्रुतिसंनिध्योरविरोधश्चेत्युच्यते ॥

पूर्वाधिकरणे उद्गीथपदस्य विविधोद्गीथपरत्ववत् वैश्वानरविद्येति नाम्नः व्यस्तसमस्तसमस्तवैश्वानरोपासनवाचित्वमस्त्विति शंका संगतिः। पूर्वविचारिते उद्गीथे व्यस्तसमस्तरूपद्वैविध्यस्योपस्थितत्वात्

व्यस्तस्योपासनं कर्तव्यम्। परत्र, "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति, द्युप्रभृतिप्रदेशावच्छिन्नमात्रे वैश्वानरे उक्तस्य मूर्धाद्युपासनस्य समासेनोपसंहारः इत्यवगन्तव्यम्।

अपर आह—एवमेव समस्तस्याप्युपासनं कार्यमिति; पृथक्फलनिर्देशात्, "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति। न चैतावता वाक्यभेदः; यथा—भूमविद्योपक्रमे नामाद्युपासनं तत्तत्फलञ्चाभिधाय, (छा. ७-१६) "एष तु वा अतिवदति यः सत्येनातिवदति" इत्यादिना भूमविद्यामुपदिश्य, (छा.७-२५-२) "स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इति तत्फलञ्च व्यपदिशति; तत्र—भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्यवान्तरोपासनं तत्तत्फलं चाङ्गीक्रियते—तथा इहापीति—

एवं प्राप्तेऽभिधीयते—भूम्नो ज्यायस्त्वमिति। भूम्नः—विपुलस्य=समस्तस्यैव ज्यायस्त्वं प्रामाणिकत्वमित्यर्थः; एकवाक्यत्वावगतेः। तथा हि, "प्राचीनशाल औपमन्यवः" इत्युपक्रम्य—"उद्दालको ह वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति, तं हन्ताभ्यागच्छाम" इति वैश्वानरात्मबुभुत्सया औपमन्यवादयः पञ्च महर्षयः तमुद्दालकमुपेत्य, तत्र वैश्वानरात्मवेदनमलभमानाः तेन च सहाश्वपतिं केकयं वैश्वानरात्मवेदिनमुपसङ्गम्य, "आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि, तमेव नो ब्रूहि" इति पृष्ट्वा, तत्सकाशात् परमात्मानं वैश्वानरं स्वर्लोकादिपृथिव्यन्तशरीरमुपास्यमवगम्य, तत्फलं च सर्वलोकसर्वभूतसर्वात्मगतान्नभूतब्रह्मानुभवमवगतवन्त इत्युपसंहारतो वाक्यस्यैकत्वमवगम्यते। एवमेकवाक्यत्वेऽवगते सति अवयवविशेषेषूपास्तिवचनं फलनिर्देशश्च समस्तोपासनैकदेशानुवादमात्रमिति निश्चीयते। क्रतुवत्—यथा (यजु. २-२-५) "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इति विहित-

---

तद्वत् वैश्वानरविद्यायामपि स्यादिति टीकोक्तरीत्या वा। परत्र—उपास्ते इतीति; इत्ययमित्यर्थः।

वाक्यभेदः प्रघट्टस्यैकार्थपर्यवसायित्वाभावः। अनेकोक्तावपि तत्रैकं मुख्यमिति न दोष इति भावः। भूमपदस्य बहुत्वमर्थः। तच्च वैपुल्यम्। प्रकृते समस्तत्वरूपलाक्षणिकार्थग्रहणम्। समस्तत्वस्य प्रामाणिकत्वमित्यर्थवर्णनेऽपि न दोषः—अथापि लक्षणायां प्राप्तायां धर्मिपर्यन्तलक्षणैवास्त्वित्याशयेन भाष्ये तथोक्तिः। बहुत्वं वैपुल्यं पदार्थोपचयः स्वर्लोकादित्यादिसर्वांशसंघातः; अवयवसंघात एवावयवी। एवं ज्यायस्त्वपदमपि लाक्षणिकम्। सूत्रे एवं क्लिष्टपदप्रयोगः कुत इति चेत्—अर्थान्तराविष्करणाय। भूमविद्यायां वैश्वानरविद्यायाञ्चैवमवान्तरोपासनतत्फलवर्णनांशे साम्येऽपि भूम्नः भूमविद्यापेक्षया वैश्वानरविद्यायाः ज्यायस्त्वं व्यस्तोपासननिन्दनादिरूपं पृथगुपासनाभावसाधकयुक्तिवैशिष्ट्यमस्ति। अतः क्रतुवाक्य इवात्रैकविद्यापरत्वमित्यर्थान्तरं विवक्षितम्। अत एव भाष्ये इह भूमविद्याप्रस्तावः। संप्रति सम्यक्तया। उपासनैकदेशेति। इदं फलैकदेशस्याप्युपलक्षणम्। वैश्वानरमिति। "यदष्टाकपालो

स्यैव क्रतोरेकदेशाः, "यदष्टाकपालो भवति" इत्यादिभिरनूद्यन्ते। तथा समस्तोपासनमेव न्याय्यम्, न व्यस्तोपासनम्; तथा हि दर्शयतीयं श्रुतिः व्यस्तोपासने अनर्थं ब्रुवती, "मूर्धा ते व्यपतिष्यत् यन्मां नागमिष्यः" इति, "अन्धोऽभविष्यो यन्मां नागमिष्यः" इत्यादिका। अत इदमप्यपास्तम्, यत् नामाद्युपासनसाम्यमुक्तम्। तत्र हि नामाद्युपासनेष्वनर्थो न श्रुतः; नामाद्युपासनेभ्यो भूमोपासनस्यातिशयितफलत्वं श्रुतम्, (छा. ७-१६-१) "एष तु वा अतिवदति यः सत्येनातिवदति" इति। तत एव तत्र भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्युपासनानां सफलानां विवक्षितत्वम्; अन्यथा अतिशयितफलत्वनिमित्तातिवादेन भूमविद्यास्तुत्यनुपपत्तेः। अतः समस्तोपासनमेव न्याय्यम्॥ ५५॥

इति भूमज्यायस्त्वाधिकरणम्॥ २३॥

१०६. शब्दादिभेदाधिकरणम् ३-३-२४॥

## नाना शब्दादिभेदात्। ३। ३। ५६॥

इह ब्रह्मविद्याः सर्वाः ब्रह्मप्राप्तिरूपमोक्षैकफलाः सद्विद्याभूमविद्यादहरविद्योपकोसलविद्या-

---

भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालः, त्रिवृतैवास्मिन् तेजो दधाति। यद् दशकपालः, विराजैवास्मिन् अन्नाद्यं दधाति। यदेकादशकपालः, त्रिष्टुभैवास्मिन् इन्द्रियं दधाति। यद् द्वादशकपालो भवति, जगत्यैवास्मिन् पशून् दधाति'इति पुरोडाशैकदेशफलैकदेशवचनपूर्वकम्, "यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव तेजस्वी अन्नाद इन्द्रियावी पशुमान् भवति" इति समस्ते समस्तफलमुक्तम्। पूतत्वादिकं पुत्रस्य। अत्राष्टाकपालादीष्टयः पृथक् न स्वीकर्तव्या इति साधितं प्रथमे (मी. १-४-१२)। अनर्थाश्रवणम्, अन्त्यस्यातिशयितत्ववादश्च भूमविद्यायामवान्तरोपासनतत्फलपार्थक्ये हेतुः। एकदेशनिन्दनाभावेऽपि वैश्वानरेष्टिन्यायेन समस्तग्रहणमेव भवति। एवंसति भूमविद्यायां पृथगुपासनस्वीकारः अतिशयितत्वस्योक्तस्य स्थापनायेति ज्ञापनाय भाष्ये इदमप्युक्तम्। सूत्रे **तथा हि दर्शयति** इति भागः वैश्वानरविद्यायामवान्तरनिन्दनस्य, भूमविद्यायां फलातिशयितत्ववचनस्य च प्रतिपादक इति भाष्यम्॥ एतदवतरणभूतं **तथे**त्यादि भाष्यम्; न तु **तथे**त्येतत् **यथे**त्येतत्प्रतिसंबन्धि।

वैश्वानरविद्याया नानात्वे निराकृते, परविद्यासामान्यस्य नानात्वं मा भूत्; एवं प्राणाद्येकविषयकावान्तरविद्यानामपि; अतः सर्वविद्योक्तगुणोपसंहार एव कार्य इति शंकया संगतिः। ननु सद्विद्याभूमविद्येत्याद्याख्याभेदे जाग्रति कथं विद्यैक्यशंका; संज्ञया कर्मभेदात्। एवं विद्यैक्ये कुत्र तद्विधिः, कुत्रानुवाद इति कथं ज्ञेयम्; न हि विहितविधानं पुनर्भवति। न च प्रतिपत्तृभेदः; एकस्यामेव शाखायां बहुविधानादिति चेत्—उच्यते—कर्मकाण्डगतिस्तावदिह भाव्या। तत्र हि दानयागहोमादिविधेरैक्यमाशङ्क्य पूर्वं भेदः साधितः। तत्रापर्यायधातुरूपशब्दान्तरादिकं प्रमाणमुपन्यस्तम्। तदन्तर्गतयोरभ्यासप्रकरणान्तरयोरपवादतया सर्वशाखाप्रत्ययमेकं कर्मेत्युक्तम्। तत्रैक्यसाधकं संयोगरूपचोदनाख्याचतुष्टयमेलनम्। एतदपवादाभावे पूर्वोक्तैः प्रमाणैः कर्मभेदो भवति। एवञ्च संज्ञाभेदादिना कर्मभेद-

शाण्डिल्यविद्यावैश्वानरविद्याऽऽनन्दमयविद्याऽक्षरविद्यादिकाः एकशाखागताः शाखान्तरगताश्चोदाहरणम्; अन्याः प्राणाद्येकविषयफलाश्च। किमत्र विद्यैक्यम्, उत विद्याभेद इति संशय्यते। अत्रैवाऽऽसां परस्परभेदे समर्थिते सति, एकस्या दहरविद्यादिकायाः सर्ववेदान्तप्रत्ययन्यायः। किं युक्तम्? विद्यैक्यमिति। कुतः? वेद्यस्य ब्रह्मण एकत्वात्। वेद्यं हि विद्याया रूपम्। अतो रूपैक्याद्विद्यैक्यमिति॥ एवं प्राप्तेऽभिधीयते—नाना-इति। नानाभूता विद्याः; कुतः? शब्दादिभेदात्। आदिशब्देनाभ्याससङ्ख्यागुणप्रक्रियानामधेयानि गृह्यन्ते; शब्दान्तरादिभिरत्र

---

स्थापनरूपसिद्धान्तपूर्वभाविन्याः कर्मैक्यशंकायाः संज्ञाभेदादिकं कथमनुत्थानप्रयोजकं स्यात। तस्य तच्छंकापरिहारकसिद्धान्तयुक्तित्वात्। तद्वदिहैतदधिकरणसिद्धविद्याभेदोपजीवनेनैतत्पादप्रथमाधिकरणप्रभृतिसर्वप्रवृत्तिस्वीकारान्नैवमाक्षेपस्यावकाश इति। अथ पूर्वमीमांसयैव संज्ञाभेदे कर्मभेदसाधिकया विद्याभेदस्य तुल्यन्यायसिद्धत्वात कथमधिकाशंकाविरहेऽधिकरणप्रवृत्तिरिति चेत्—उच्यते—सर्वत्र विधेर्लिङर्थस्यैकरूपत्वेऽपि तद्भेदो धात्वर्थयागदानादिरूपानुबन्धभेदादेव भाव्यः। इह सोऽप्युपासनरूपत्वादेकः। तदनुबन्धभूतब्रह्मप्राणादिधर्मिभेदे कामं तद्भेदः स्यात्। सोऽपि न; ब्रह्मण एव परविद्यायां सर्वत्र वेद्यत्वात्; तद्गुणानां भेदश्च न भेदकः, एकत्र सर्वोपसंहारसंभवात्। विरुद्धगुणोपसंहारः कथमिति चेत—विरुद्धत्वे कथमेकब्रह्मनिष्ठता। कथञ्चिदेकब्रह्मनिष्ठत्वे चैकानुसंधानविषयत्वं कुतो न भवति॥ सत्यम्; तथापि संज्ञाभेद. एकविषये कथमिति चेत्-किमेकस्यानेकसंज्ञा लोके नास्ति। अग्निष्टोमज्योतिष्टोमादिपदं वा किं विभिन्नयागवाचि॥ नेयं दहरविद्या, किंतु शाण्डिल्यविद्येति भेदः प्रतीयत इति चेत्—नैतद् विश्वसनीयम्। किञ्च चातुर्मास्ये एकस्मिन् वैश्वदेववरुणप्रघासादिपर्वभेदवत् तत्तदाकारविशिष्टोपास्यब्रह्मरूपपर्वभेदादपि तद् घटते। न च दहरविद्यादिसंज्ञा श्रौती; केवलं विद्याभेदे सिद्धे व्यवहाराय पश्चात् पुरुषकल्पितेयम्। तन्निर्वाह उक्तरीत्याऽपि भवति। तदुक्तमन्यत्र **टीकायाम्**। अपिच दहरविद्यादिपदानि तत्तत्प्रघट्टनामानि; न तु ध्याननामानीत्यपि वक्तुं शक्यमिति। कुत्र विधिः कुत्रानुवाद इति च, "भूयस्त्वेनोभयश्रुति" इति पूर्वमीमांसोक्तरीत्या विधेयांशभूयस्त्वं यत्र तत्र प्रधानविधिरिति विवेचनीयम्। एवमेकविद्यानिष्णातस्याप्यन्यविद्यालाभाय प्रयासस्योपनिषदि दर्शनाच्च विद्यैक्यमध्यवसातव्यमिति पूर्वपक्ष्याशयः।

सूत्रे शब्दादीनां भेदः **शब्दादिभेदः**। शब्दभेदः शब्दान्तरम्। प्रक्रियाभेदः प्रकरणान्तरम्। एवं संज्ञाभेदः। गुणभेदः, पूर्वविद्यानिवेशानर्हगुणः। अभ्यासोऽपि पुनरुक्तिः यजत्यादिभेद एव। संख्यायास्तु कथं भेद इति चेत्—भेदो हि वैशेष्यम्। न ह्येकत्वसंख्या कर्मभेदिका, अपि तु द्वित्वत्रित्वादिर्विशेष इति। यद्वा शब्दपदेन शब्दान्तरं गृहीत्वा शब्दान्तरादीत्यादिपदेनान्यानि प्रमाणान्युपादाय, शब्दादिभिः कृतो भेदोऽनुबन्धभेदः शब्दादिभेदः। ततो नानात्वं=विधेयविद्याभेद इति व्याख्येयम्। द्वितीयपक्षे भाष्यस्वारस्यम्। प्रकारान्तरेण भेदेऽवगम्यमाने संज्ञाऽप्युपष्टम्भिकेत्यभिप्रायेण नामधेयस्य मीमांसकदर्शितदिशा. मध्ये वक्तव्यस्याप्यन्ते उक्तिः; **शब्दान्तरादिभिरिति**। सर्वत्र विधेर्लिङादेरेक-

**विधेयभेदहेतवोऽनुबन्धभेदाः दृश्यन्ते। यद्यपि वेदोपासीतेत्यादयः शब्दाः प्रत्ययाऽऽवृत्त्यभिधायिनः; प्रत्ययाश्च ब्रह्मैकविषयाः—तथाऽपि तत्तत्प्रकरणोदितजगदेककारणत्वापहतपाप्मत्वादिविशेषणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यवबोधिनः, प्रत्ययावृत्तिरूपाः विद्याः भिन्दन्ति। ब्रह्मप्राप्तिरूपफलसंबन्ध्युपासनविशेषाभिधायीनि च निराकांक्षाणि वाक्यानि प्रतिप्रकरणं विलक्षणविद्याभिधायीनीति निश्चीयते। अस्मिन्नर्थे,** (पू. मी. १-१-२) **"शब्दान्तरे कर्मभेदः"**

---

रूपत्वेऽपि त्रिविभेदः तद्विशेषणीभूतधात्वर्थादिभेदादेव वक्तव्य इति धात्वर्थादिभेद एवानुबन्धभेदः। तद्धेतुको विधेयभेद इत्यस्य साङ्गप्रधानभेद इत्यर्थः। यद्वा **अनुबन्धो** विधेयतावच्छेदकवैजात्यम्; तद्भेदात् विद्याभेद इति। **यद्यपीति**। वेदेत्यादिसामान्यशब्दानामपि दर्शनसमानाकारोपासनरूपविशेषे पर्यवसानात् सामान्यविशेषशब्दानां सर्वेषां पर्यायत्वपर्यवसानात् अपर्यायधातुत्वरूपं शब्दान्तरत्वं कुत इति शंका। पूर्वमीमांसाया प्रथमोपात्तप्रमाणस्य तत्प्रत्यभिज्ञापनाय प्रथमं निर्देशेऽपि अतद्गुणसंविज्ञानबहुव्रीहिणा अभ्यासादिकमेवात्र विवक्षितमिति समाधौ सुकरेऽपि कथञ्चित् शब्दान्तरमप्यानयति **तथापीति**। अन्विताभिधानवादरीतौ धातोरेव समभिव्याहृतसर्वपदोपस्थाप्यार्थान्वितार्थाभिधायित्वात् गुणभेदादिबलादप्यपर्यायधातुत्वं सुवचमिति भाव इति विवृतमिदं **न्यायपरिशुद्धौ**। **प्रत्ययावृत्तीति** उपासनेत्यर्थः॥ तर्हि गुणाद्भेदः कीदृशः? अथोपासनोत्पत्तिवाक्येषु गुणभेदस्य शब्दान्तरेऽन्तर्भावः। तत्र गुणभेदादर्शनेऽपि वाक्यान्तरगृहीतविरुद्धगुणमादाय भेदवर्णने गुणात् विद्याभेदः इति चेन्न—तत्र विद्यैक्येऽपि विकल्पेनैव विरुद्धगुणनिवेशोपपत्तेः; यथा वैश्वानरविद्यायामग्निरहस्योक्तस्य प्रादेशमात्रत्वस्येति चेत्—औपचरिकमत्र शब्दान्तरत्वम्। मुख्यात्तु शब्दान्तरात् मोक्षार्थविद्याभेदः भक्तिप्रपत्त्योर्द्रष्टव्यः; प्रपत्तेरुपासनरूपत्वाभावात्। किञ्च काम्यविद्याविषये समुच्चयस्योत्तराधिकरणे वक्ष्यमाणतया निवृत्तिप्रवृत्तिरूपद्विविधविद्यानामप्यत्र ग्रहणात् तत्र काम्यासु क्वचित् आप्रयाणमनुवर्तमानत्वं गीताष्टमाध्यायोक्तरीत्या; क्वचित् किञ्चित्कालावृत्तिरूपोपासनात्मत्वम्; क्वचिद् यागमध्ये दृष्टिविधौ सकृच्चिन्तनरूपत्वमपीति नानाप्रकारसंभवात् तत्र शब्दान्तराद्भेदकथनाय च सूत्रे **शब्द**पदप्रयोग इति। तत्तद्विद्यायां प्रत्येकं मोक्षरूपफलस्य पुनःपुनरभ्यासः, "तमेवं विद्वानमृत इह भवति" इतीतरनिराकांक्षतया विधानम्, यएवंवेदेति पुनः पुनरावृत्तिः, काम्यविद्याव्यवधानेन पूर्वं पश्चाच्च पृथक् परविद्याप्रस्तावः इत्यादिना मिथो-नैराकांक्ष्यम्, ततः प्रकरणभेदश्च ज्ञाप्यते इति न विद्यैक्यमित्याह **ब्रह्मप्राप्तिरूपेति**। एवमपि यदि सर्वस्या अपि विद्यायाः संभूयैव कार्यकरता, अग्निहोत्रज्योतिष्टोमदर्शपूर्णमासादेरपि संभूयैव कार्यकरत्वं किं न स्यात्। दर्शस्य पूर्णमासस्य च विभिन्नकालिकस्यापि मेलनसंमतेः॥ सर्वसमाहारेण कार्यकरत्वप्रतिपादकवाक्याभावात् प्रत्येकं नैराकांक्ष्यमिति चेत्—तदिहापि तुल्यम्। अत एव वैश्वानरविद्यायां सामस्त्ये वचनसद्भावात् प्रत्येकं न कार्यकरमितीष्यते। इह तु न तथेति वैषम्यम्। एतद्वैषम्यप्रतिपादनायैव तदनन्तरमिदमधिकरणम्। एवं कुत्र विधिः कुत्रानुवादः; अनुवादस्थले अनेकगुणविधानायोगात् विद्याभेद आवश्यक एवेत्यपि मन्तव्यम्। ननु सद्विद्यां पुत्रायोपदिष्टवान् उद्दालको मधुविद्यायामपि

इत्यादिभिः पूर्वकाण्डोदितैः सूत्रैः सिद्धेऽपि, पुनरिह प्रतिपादनम्, 'वेदान्तवाक्यानि अविधेयज्ञानपराणि' इति कुदृष्टिनिरसनाय। अतो विद्याभेद इति स्थितम् ॥ ५६ ॥

इति शब्दादिभेदाधिकरणम् ॥ २४ ॥

१०७. विकल्पाधिकरणम् ३-३-२५ ॥

## विकल्पोऽविशिष्टफलत्वात्। ३। ३। ५७ ॥

ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्यादीनां नानात्वमुक्तम्; इदानीम्—आसां विद्यानामेकस्मिन् पुरुषे प्रयोजनवत्त्वेन समुच्चयोऽपि संभवति, उत प्रयोजनाभावाद्विकल्प एव इति विशये—किं युक्तम्? समुच्चयोऽपि संभवतीति। कुतः? एकफलानां भिन्नशास्त्रार्थानामपि समुच्चयदर्शनात्। दृश्यते ह्येकस्यैव स्वर्गादेः साधनानामग्निहोत्रदर्शपूर्णमासादीनां तस्यैव स्वर्गस्य भूयस्त्वापेक्षयैकत्र पुरुषे समुच्चयः; एवमिहापि ब्रह्मानुभवभूयस्त्वापेक्षया समुच्चयोऽपि संभवतीति ॥ एवं प्राप्ते प्रचक्ष्महे—विकल्प एव; न समुच्चयः संभवतीति। कुतः? अविशिष्टफलत्वात्। सर्वासां हि ब्रह्मविद्यानामनवधिकातिशयानन्दब्रह्मानुभवः फलमविशिष्टं श्रूयते, (तै. आन. १) "ब्रह्मविदाप्नोति परम्", (तै. आन. ८) "स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य", (मु. ३-१-३) "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"

---

प्रवीण इति उपनिषत्तो ज्ञायते। स एव पञ्चाग्निविद्यामधिगन्तुं प्रवाहणं राजानमुपससर्प। वैश्वानरविद्यावित्त्वेन प्रशंसितः सोऽन्यैः सह तां सम्यग् वेदितुं केकयमुपससाद। सर्वमिदं किमर्थम्, यदि एकैकयैव फलं भवेदिति चेत्-न; एकविद्यानिष्ठत्वेऽपि वैशद्याय, वदुष्यातिशयाय, तत्तदधिकारिशिक्षणाय चाधीतसर्ववेदान्तसमुमजातसंशयनिवृत्त्यर्थायाः जिज्ञासायाः सर्वत्र प्राच्यसमादृतत्वेनादोषात्। ज्ञानवैमुख्यं हि न कथमपि युक्तमिति प्राचां पद्धतिः। अधिकरणप्रयोजनमन्यदप्याह अस्मिन्निति। अद्वैतरूपैकार्थज्ञानेन मोक्षवादिनां जगन्मिथ्यात्वैकसत्यत्वपक्षः उपायनानात्वतद्विकल्पप्रतिपादकाधिकरणनिरस्त इति च ध्येयम् ॥

परविद्यानाम्, ब्रह्मविदाप्नोति परम्, ब्रह्म गमयति इति ब्रह्मप्राप्तिफलकत्वात, ब्रह्मप्राप्तौ च सालोक्य-सामीप्य-सारूप्य-सायुज्य-सार्ष्टित्वरूपविशेषसद्भावात्, सायुज्येऽपि कतिपयांशानुभवत्व-तद्वैविध्यसंभवात्, सद्विद्यादहरविद्यावैश्वानरविद्यादिषु अनुसंधेयगुणन्यूनाधिकभावप्रयुक्तलाघवगौरवदर्शनेन फलवैषम्यस्य तदनुगुणं वक्तव्यत्वाच्च नैकैवानुष्ठेयेति पूर्वपक्षः। स्वरूपाविर्भावपूर्वकब्रह्मानुभवस्य परज्योतिरुपसंपत्त्यधीनत्वात्, उपसंपत्तेश्च निश्शेषपुण्यपापनिवृत्त्यनन्तरभावित्वात् अनिष्टनिवृत्त्यंश एव विद्योपयोगः, फलानुभवस्तु स्वरूपप्रयुक्त इति नानुभववैषम्यस्य प्रसक्तिः। अनिष्टनिवृत्तितारतम्यञ्चासंभवि। ईषत्कर्मसद्भावेऽप्यर्चिरादिगत्ययोगात् तत्प्राप्त्यसंभवापत्तेः। अर्चिरादिगतिश्च, तेऽर्चिषमेवाभिसंभवन्तीति सर्वेषां तुल्यतया श्रुता। अधिकगुणानुसंधानरहितायां सद्विद्यायामपि यदि, "यावन्न विमोक्ष्ये अथ संपत्स्ये" इति सर्वविमोक्षपूर्वकसंपत्तिः, किमुतान्यत्र। न्यूनाधिकगुणानुसंधानवैषम्यं भक्तिनिष्पत्तिविलम्बांशोपयोगि कामं भवेत; न फले वैष-

इत्यादिभ्यः । ब्रह्म हि स्वस्य परस्य च स्वयमनुभूयमानमनवधिकातिशयानन्दं भवति । स च तादृशो ब्रह्मानुभव एकया विद्ययाऽवाप्यते चेत्—किमन्ययेति न समुच्चयसंभवः । स्वर्गादेर्हि देशतः कालतः स्वरूपतश्च परिमितत्वेन तत्र देशाद्यपेक्षया भूयस्त्वसंभवात् तदर्थिनः समुच्चयः संभवति ; इह तु तद्विपरीतस्वरूपे ब्रह्मणि तन्न संभवति । सर्वाश्च विद्याः ब्रह्मानुभवविरोध्यनादिकर्माविद्यानिरसनमुखेन ब्रह्मप्राप्तिफला इत्यविशिष्टफलत्वात् सर्वासां विकल्प एव ॥

ब्रह्मप्राप्तिव्यतिरिक्तफलास्तु विद्याः स्वर्गादिफलकर्मवत् यथेष्टं विकल्पेरन् , समुच्चीयेरन् वा ; तासां परिमितफलत्वेन भूयस्त्वापेक्षासंभवात् । तदाह—

**काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्** ३ । ३ । ५८ ॥

अपरिमितफलत्वाभावादित्यर्थः ॥ ५८ ॥ इति विकल्पाधिकरणम् ॥ २५ ॥

## १०८. यथाश्रयभावाधिकरणम् ३-३-२६ ॥

**अङ्गेषु यथाश्रयभावः** । ३ । ३ । ५९ ॥

उद्गीथादिक्रत्वंगेष्वाश्रिताः, (छा. १-१-१) "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादिकाः विद्याः किमुद्गीथादिवत् पुरुषार्थतया क्रतुषु नियमेनोपादेयाः, उत गोदोह-

---

म्यम् । प्रतिबन्धकापाये, स्वरूपाविर्भावे, धर्मभूतज्ञानव्याप्तौ च सत्सु समरूपेषु च जीवेषु नाऽऽनन्दवैषम्यप्रसक्तिरस्तीति समाधिः। **अनवधिकातिशयानन्दं भवतीति** । यादृशानवधिकातिशयानन्दं ब्रह्म, तादृशानन्द एव प्राप्तश्चेत्, एकयैवमपरिमितफलसिद्धौ कथमन्यप्रसक्तिरिति ॥ **अविशिष्टफलत्वं** परिपूर्णब्रह्मरूपैकप्राप्यकत्वम् ॥ ५७ ॥

**काम्यास्त्विति**। "ब्रह्मप्राप्तेश्च परमपुरुषार्थतया काम्यमानत्वेऽपि तत्प्रतिबन्धकनिवृत्त्युपायस्य काम्यवर्गात् पृथगेव व्यपदेशः । प्राप्तितत्साधनानां हि प्रतिबन्धनिवर्तकाः । निवृत्तिधर्माः सर्वेऽपि नैमित्तिकपदे स्थिताः॥" इति **तत्त्वटीका** । अनिष्टनिवृत्तिरूपकाम्यमानपुरुषार्थसाधनत्वात् काम्यत्वं कुतो नेत्यत्र प्रायश्चित्तान्तर**तुल्य**तया नैमित्तिकत्वं कथितम्। अत्र तु **काम्य**पदमपवर्गफलातिरिक्तफलकसर्वपरम् । विद्याप्रकरणात् विद्या इति विशेष्यम् । आत्मानुभवहेतोर्ज्ञानयोगादेर्निवृत्तिधर्मस्य तदनुभवप्रतिबन्धककर्मनिवृत्तिद्वारा तद्धेतुत्वस्वीकारान्न नैमित्तिकत्वभङ्गः । कतीनां समुच्चय इत्यत्रोक्तम् **यथाकाममिति** । काम्यत्वेऽपि प्राप्यफलान्तराभावेऽन्यानुष्ठानकामनाविरहात् अवहननाश्मकुट्टनादेर्वैतुष्य इव, एकपापनिवर्तकत्वाभिमतप्रायश्चित्तानामिव च विकल्प एव । तदाह **न वेति**। भिन्नस्यापि फलस्यैकैकस्याप्यपरिमितत्वेऽन्यानुभवानवकाशात् कामना न भवेत् । अतः **पूर्वहेत्वभावा**दित्यस्य भिन्नफलकत्वादित्यर्थं परित्यज्य परिमितफलकत्वादिति व्याख्या । अस्य पदस्य सूत्रान्ते निवेशात् **नवे**त्यत्राप्यन्वयानुगुणतया कामनारूपसमुच्चायकहेत्वभावादित्यप्यर्थोऽभिमत इव ॥

**काम्यानां** कामानासत्त्व एवान्योन्यसमुच्चय इत्युक्तम् । वीर्यवत्तरत्वरूपैकफलकत्वाभिमतानाञ्चोपासनानामन्योन्यसमुच्चयो भवति न वेति, तदर्थम्—उपासनं यदाश्रितम् । तस्याश्रयस्योपासनस्य च

नादिवत् पुरुषार्थतया यथाकाममिति विशये—नियमेनोपादेया इति युक्तम् ॥ ननु च आसां पुरुषार्थत्वेनानियमः प्रतिपादितः, (शारी. ३-३-४१) "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्" इत्यत्र ॥ सत्यम्; तदेव द्रढयितुं कैश्चिल्लिङ्गदर्शनैर्युक्त्या चाऽऽक्षिप्यते। तत्र हि, (छा. १-१-१०) "तेनोभौ कुरुतः" इत्यनियमदर्शनात् पृथक्फलत्वमुक्तम्। उपासनाश्रयभूतोद्गीथादिवत् उपासनानामप्यङ्गतयोपादाननियमे बहवो हेतव उपलभ्यन्ते। न ह्यत्र "गोदोहनेन पशुकामस्य प्रणयेत्" इत्यादिवत् उपासनाविधिवाक्ये फलसंबन्धः श्रूयते; "उद्गीथमुपासीत" इत्युद्गीथादिसंबन्धितयैवोपासनं प्रतीयते। "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्" इति वर्तमानापदेशरूपवाक्यान्तराद्धि फलसंबन्धो ज्ञायते। स्ववाक्येनैवाव्यभिचरितक्रतुसंबन्ध्युद्गीथादिसंबन्धेन निर्ज्ञातक्रत्वङ्गभावस्य वाक्यान्तरस्थवर्तमानफलसंबन्धनिर्देशोऽर्थवादमात्रं स्यात्, अपापश्लोकश्रवणादिवत्। अतो यथोद्गीथादय उपासनाश्रयाः क्रत्वङ्गतया प्रयोगविधिना नियमेनोपादीय-

---

समुच्चयो नियमेन युक्तो न वेति विचार्यते। परविद्यास्वेकस्या अन्यया साकं विकल्प एवेत्युक्तम्। तद्वत् वीर्यवत्तरत्वरूपैकफलकतयोपासनयोर्विकल्प एवेत्युच्यत इह। उपासनस्यापि क्रत्वङ्गत्वे हि अविशेषात् सर्वमुपासनं प्रयाजानुयाजादिवत् समुच्चीयेतेति। अत्र चत्वारि पूर्वपक्षसूत्राणि। तन्निर्धारणाधिकरणोक्तोपमर्दमभिप्रेतं दर्शयति तत्र हीति। बहव इति। अतः तेनोभौ इत्यस्य, वेदनवान् अन्यश्च कर्तुमर्हति यद्यपि, तथापि विद्ययैव कुर्यादित्यर्थः। अत एवोषस्तिः प्रस्तोत्रादीन् प्रति, मूर्धा ते व्यपतिष्यदिति कथयन् विद्या उपदिदेश; एकप्रयोगे चानेका इति भावः। इदमप्येकं लिङ्गदर्शनम्। अस्यापि समाहारादिवक्ष्यमाणसमाहारेण लिङ्गदर्शनैरिति बहुवचनम्। अत्र पर्णतान्यायो न भवति, किंतु गोदोहनन्याय इत्युक्तं तत्राधिकरणे; तत् क्षिपति न ह्यत्रेति। रात्रिसत्रवन्न फलमार्थवादिकं कल्प्यम्, निराकांक्षत्वादित्याह उद्गीथमिति। स्ववाक्योपात्तोद्गीथेनैव, जुह्वेव पर्णता, निराकांक्षमुपासनं नान्यदुद्देश्यमाकांक्षतीति। न केवलं वाक्यान्तरत्वं फलवाक्यस्य, किंतु वर्तमानापदेशरूपत्वमपि, यस्य पर्णमयीतिवत्। प्रतितिष्ठन्ति हवा इत्यस्य वर्तमानापदेशत्वेऽपि फलपरत्वकल्पना, रात्रिसत्रस्योद्देश्याकांक्षाऽन्यथा न शाम्यतीति इति भावः। ननु उद्गीथस्य फलरूपत्वाभावात् कथमुद्देश्यत्वमित्यत्रोक्तम् अव्यभिचरितक्रतुसंबन्धीति। क्रतोः फलवत्त्वात् तत्संबन्धात् सर्वत्र फलसाधनताप्रयुक्तमुद्देश्यत्वमक्षतमिति भावः। श्रवणादीत्यादिपदेन संस्कारार्थवादस्य, यदाङ्क्ते, चक्षुरेव भ्रातृव्यस्य वृङ्क्ते इत्यादेः, कर्मार्थवादस्य, वर्म वा एतद् यज्ञस्य क्रियते यत् प्रयाजानूयाजा इज्यन्ते इत्यादिकस्य च ग्रहणम्। अत एवोक्तम्, "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्" ,इतीति भावः। सूत्रार्थमाह अतो यथेति। उपक्रमे क्रत्वङ्गेष्वाश्रिताः विद्या इति भाष्यात् अङ्गेष्विति पदोपरि आश्रितविद्या इत्यध्याहार इति ज्ञायते। अत्र तु वाक्यस्वारस्यात् अङ्गेषु इत्यस्य अङ्गभूतेषु उपासनेषु इत्यर्थः प्रतीयते। पूर्वपक्षी उपासनानामङ्गत्वं साधयन् प्रत्यवतिष्ठत इति तेनोक्तं भवति। अतो नाङ्गपदेनोद्गीथादिग्रहणम्, किंतु

न्ते, तथा तदाश्रिताश्चोपासनाः तन्मुखेन क्रत्वङ्गभूता इति नियमेनोपादेया एव ॥ ५९ ॥

[पू] शिष्टेश्च । ३ । ३ ६० ॥

शिष्टिः शासनम्, विधानमित्यर्थः । "उद्गीथमुपासीत" इत्युद्गीथाङ्गतयोपासनविधानाच्चोपादाननियमः । "गोदोहनेन पशुकामस्य प्रणयेत्" इत्यादिवत् विधिवाक्येऽधिकारान्तराश्रवणात् उद्गीथाङ्गभाव एव हि विधेय इति गम्यते ॥ ६० ॥

[पू] समाहारात् । ३ । ३ ६१ ॥

(छा. १-५-५) "होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति" इति उपासनस्य समा-

---

आश्रयपदेनैव । अतएव यथातद्भाव इत्यनुक्त्वा यथाश्रयेत्युक्तिः । तेन त्वया आश्रयत्वेनाभिमतानां मयाऽङ्गत्वेनाभिमतानामुपासनानां क्रतुद्गीथादिसहभावनियम इत्युक्तं भवति । अयं भावः—यस्य पर्णमयीति वाक्ये पर्णतायाः न फलसंबन्धकल्पना, पर्णतायाः व्यापाररूपत्वाभावात् किञ्चिदाश्रित्यैव फलजनकत्वमिति तदपेक्षाध्रौव्यात् तदर्थं जुहूसंबन्धस्वीकारे तत एवाकांक्षा शान्तेति, नोद्देश्यान्तरान्वयः । न च पर्णतावाक्ये फलाकांक्षायामार्थवादिकस्य फलत्वेन, जुह्वाश्चाश्रयतया अन्वय इति मन्तव्यम्—एकेन वाक्येन फलसंबन्धाश्रयसंबन्धद्वयबोधने वाक्यभेदापत्तेः । अनेनाश्रयसंबन्धाबोधने चाश्रयालाभात् । गोदोहनेन पशुकामस्य प्रणयेदिति वाक्यं पशुफलसंबन्धमात्रबोधकम् ; प्रणयनरूपाश्रयलाभस्तु प्रकरणात् । पर्णतावाक्यं त्वनारभ्याधीतमिति नाश्रयसमर्पकं प्रकरणादिकमस्तीति वैषम्यम् । तद्वदेवोद्गीथवाक्यस्याप्यनारभ्याधीतत्वात् प्रकारान्तरेणाश्रयालाभात् अनेनैव वाक्येन फलसंबन्धोद्गीथसंबन्धोभयबोधने वाक्यभेदः स्यात् । न चोपासनस्य स्वयं व्यापाररूपतया सिद्धरूपत्वाभावात् फलजननसमर्थतया नाश्रयापेक्षेति वाच्यम्—तर्हि उद्गीथगानं विनाऽप्युपासनात् फलापत्तेः । न चोद्गीथस्य नोद्देश्यत्वरूपाश्रयतयान्वयः ; किंतु उद्गीथमुपासनविशेषणं कृत्वा सोमविशिष्टयागेनेव उद्गीथविशिष्टोपासनेन फलमिति विशिष्टविधिस्वीकारान्न वाक्यभेद इति वाच्यम्—तथासति कर्मासंबन्धिकिञ्चिदुद्गीथव्यक्तिविषयोपासनतोऽपि फलापत्तेः । क्रत्वङ्गभूतोद्गीथेतिविशेषग्राहकप्रमाणाभावात् । प्रमाणसत्त्वे तु तत उद्गीथस्य क्रत्वङ्गत्वावधारणात् यागे सोमस्येवोद्गीथस्योपासनेऽङ्गत्वायोगात् विशिष्टविधिदौस्थ्यमिति । अतः क्लृप्तक्रत्वङ्गभावमुद्गीथं प्रत्येवोपासनमङ्गमिति । **उपासनाश्रयाः** त्वयोपासनाश्रयत्वेनाभिमताः । **क्रत्वङ्गभूता** इति । मदुपपादितरीत्येति शेषः ॥ ५९ ॥

एवं-यस्यपर्णमयीतिवत् विधेरङ्गत्वबोधकश्रुतेश्चाभावेऽपि वाक्यप्रमाणादेवोद्गीथाङ्गत्वमुपासनस्य भवतीत्युक्तम् । शिष्टेरिह स्पष्टत्वान्नैव संशय इत्याह **शिष्टेश्चेति** । उपासीतेतिविधिः उद्गीथमिति द्वितीया चास्तीति तदुद्देश्यकविधिविषयत्वरूपमङ्गत्वं स्पष्टम् । एवमपि यदि गोदोहनेन पशुकामस्य प्रणयेदित्यत्रेव कामपदघटितमन्यत् स्यात्, तर्हि उद्गीथस्य द्वितीयाश्रवणेऽप्यङ्गत्वभङ्ग आलोच्येत । तत्तु नेति भावः ॥

अथ लिङ्गदर्शनद्वयं सूत्रद्वयेनाह । प्रत्येकमपि साधकमिति ज्ञापनाय पृथक्सूत्रता । **समाहारात्** समाधानात् । **होत्रिति** । उद्गाता गीत उद्गीथो यदि दुरुद्गीथो भवेत्, तर्हि होतृस्थानात् तस्य समा-

द्वारनियमो दृश्यते। दुरुद्गीथं वेदनविहीनमुद्गीथम्। वेदनहानावन्येन समाधानं ब्रुवत् तस्य नियमेनोपादानं दर्शयति ॥ ६१ ॥

(पू) गुणसाधारण्यश्रुतेश्च। ३। ३। ६२॥

उपासनगुणस्य उपासनाश्रयस्य प्रणवस्य सोपासनस्य,(छा.१-१-१९)"तेनेयं त्रयी विद्या वर्तते—ओमित्याश्रावयति, ओमिति शंसति, ओमित्युद्गायति" इति साधारण्यश्रुतेश्चोपासनसमाहारो गम्यते। तेन इति प्रकृतपरामर्शात् सोपासन एव प्रणवः सर्वत्र सञ्चरति। अत उपासनस्य प्रणवसहभावनियमदर्शनाच्चोद्गीथाद्युपासनानामुद्गीथादिवत् नियमेनोपादानम् ॥

इति प्राप्त उच्यते—

[सि] न वा तत्सहभावाश्रुतेः। ३। ३। ६३॥

---

धानं संपाद्यमित्यर्थः। होतृस्थानात् समाधानं नाम होतृकर्तृकात् य उद्गीथः स प्रणवः, यः प्रणवः स उद्गीथ इति पूर्वोक्तज्ञानात् समाधानमेव। अथवा षद्लृ विशरणगत्यवसादनार्थक इति गत्यर्थस्य बुद्ध्यर्थत्वात् 'स उद्गीथ इति होतृषदनात्' इत्यस्य होतृकर्तृकप्रणवोद्गीथैक्यज्ञानादित्येवार्थः। भाष्ये अन्येनेत्यस्य होतृषदनेनेत्यर्थः। दुरुद्गीथस्य होतृगतज्ञानतः समाधानोक्त्या उद्गातुर्ज्ञानाभावकृतं दुरुद्गीथत्वमिति ज्ञायते। तच्चापेक्षितं ज्ञानम् 'असौ वा आदित्य उद्गीथः, एष प्रणवः' इति उद्गीथे आदित्यदृष्टिरूपमिति प्रकरणादवगम्यते। उपासनस्य तत्रोक्तपुत्रप्राप्तिरूपफलार्थतया स्वतन्त्रत्वे तु उपासनं समाहरतीति स्यात्। न तु दुरुद्गीथमिति क्रत्वङ्गोद्गीथेऽङ्गतालोपापादकं दुरुद्गीथत्वमिति भावः ॥ ६१ ॥

**गुणे**ति। **सार-दीपो**क्तव्याख्यारीतिरेवात्रापि भाव्या। **तेने**ति श्रौतपदस्योपासनविशिष्टप्रणवपरामर्शित्वं पूर्वमुपासनप्रस्तावादवगम्यते। **आश्रावयति**—अध्वर्युस्तत्पुरुषो वा आग्नीध्रं प्रति, ओं श्रावयेति प्रैषं करोति। श्रावयेत्यस्य देवान् प्रति हविःप्रदानावसरं श्रावयेत्यर्थः। यद्वा आश्रवं प्रतिज्ञां कारयतीति आश्रावयतीत्येतदर्थः। **शंसति** शस्त्रं वक्ति ; अप्रगीतमन्त्रेण गुणिनमभिधत्ते। एवं विशिष्टस्य त्रयीसंबन्धे उच्यमाने त्रयीकार्यं सर्वं प्रति उपासनविशिष्टप्रणवस्याङ्गत्वबोधनात् प्रणवद्वारा उपासनस्याप्यङ्गत्वमवसीयते। तथा च **गुणे**ति सौत्रपदस्य **उपासनगुणस्य उपासनाश्रयस्ये**ति न व्याख्या। **उपासनगुणस्य उपासनाश्रयस्य** उपासनं प्रति गुणत्वेन वा आश्रयत्वेन वा सिद्धान्त्यभिमतस्य **गुणस्य** प्रणवस्य सोपासनस्य प्रकरणबलात् उपासनविशिष्टतया तत्पदपरामृष्टस्य **साधारण्यश्रुतेः** सर्ववेदकार्यसंबन्धश्रवणादिति भाष्यार्थः। सूत्रे **गुण**पदं सोपासनप्रणवपरं **भाष्य**रीत्या ; दीपादिरीत्या च प्रणवाङ्गत्वाभिमतोपासनपरम्, प्रथमसूत्रगताङ्गपदवत्। तन्निर्धारणाधिकरण इवात्राधिकरणे सूत्रे फलभावाभावाबोधनात्—फलस्वीकारेऽपि इतिकरणेन तृतीयाविभक्त्या वा विनियुक्तानां ममाग्नेवर्च इत्यादिमन्त्राणां अङ्गत्वे सत्येव मीमांसकैः मन्त्रप्रतिपाद्यफलार्थत्वस्वीकारवत् फलमप्यस्तु, नियताङ्गभूतमपीति पूर्वपक्ष्याशयोऽवगम्यते ॥ ६२ ॥

एकेनैव सूत्रेण सर्वं परिहरति **न वे**ति। फलं भवतु मा वा ; उपासनस्योद्गीथसहभावनियमः पूर्वपक्षीष्टः ; स निरस्यते। कादाचित्कत्वात् सहभावमात्रं सिद्धान्तिसंमतमेवेति सूत्रे **सहभावपदं**

न चैतदस्ति, यत् उद्गीथाद्युपासनानां क्रतुषूद्गीथादिवत् उपादाननियमः इति। कुतः ? तत्सहभावाश्रुतेः ; उद्गीथाङ्गभावाश्रुतेरित्यर्थः। अङ्गभावे हि सहभावनियमो भवति। यद्यपि "उद्गीथमुपासीत" इत्यस्मिन् पदसमुदायेऽधिकारान्तरं न प्रतीयते— तथापि तदनन्तरमेव, "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति विद्यायाः क्रतुवीर्यवत्तरत्वं प्रति साधनभावः प्रतिपाद्यते। तेन क्रतुफलात् पृथग्भूतफल-साधनभूता विद्या, उद्गीथमुपासीतेति कर्तव्यतया विधीयते। क्रतुफलात् पृथग्भूतफलसाधन-तयाऽवगतस्योपासनस्य क्रत्वङ्गभूतोद्गीथाङ्गतया विनियोगो नोपपद्यते। अत (थ) उपा-सनस्याश्रयापेक्षायां संनिहितः उद्गीथः आश्रयमात्रं भवति। उद्गीथश्च क्रत्वङ्गभूत इति

---

सहभावनियमरूपाङ्गत्वपरम्। उपासनविधायकवाक्ये उद्गीथपदसत्त्वेन वा, उद्गीथमिति द्वितीयाश्रवणेन वा, दुरुद्गीथत्वकथनेन वा, तेनेत्यस्य पूर्वपरामर्शित्वेन वा नोपासनस्य सहभावनियमोऽवगमितो भवतीत्यर्थः। अयं भाव.—पर्णमयीजूहूरित्यादौ जुह्वादेः पर्णवृक्षादिनोत्पादनरूपोपकारवत् उपासने-नोद्गीथे दृष्टोपकारस्य कस्यचिदभावात्, वाचं ब्रह्मेत्युपासीत, मनो ब्रह्मेत्युपासीतेत्यादाविव उद्गीथमिति द्वितीयायाः किं विषयसमर्पकत्वमात्रेणोपासनस्य प्राधान्यं युक्तम्, यद्वोपासनस्वातन्त्र्यगमकाभावात् कथ-मप्यदृष्टविधया प्रोक्षणादेरिव संस्कारकत्वमिति उद्गीथस्यैव क्रत्वङ्गतया सफलत्वेनावगतस्य प्राधान्यमिति जिज्ञासायाम्, यदेव विद्यया करोतीति वाक्यमुपतिष्ठमानं फलार्थतया स्वातन्त्र्यमुपासनस्य दर्शयति। यदेव विद्यया करोति=विद्याविशिष्टतया क्रियमाणं यत्, तत् कर्म वीर्यवत्तरं भवतीति तद्वाक्यार्थः। 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति वाक्ये ऐन्द्रवायवग्रहा-ग्रताविशिष्टसर्वग्रहग्रहणसाध्यत्वस्य प्रजाक्लृप्तिरूपफलेऽवगमेऽपि प्राप्ताप्राप्तविवेकेन यथा ऐन्द्रवायवाग्रता-रूपविशेषणमात्रस्य तत्फलकत्वनिश्चयः, तथेहापि विद्यारूपविशेषणफलत्वं वीर्यातिशयस्य। विद्याविशिष्टं क्रियमाणं कर्म **वीर्यवत्तरं** कर्मफलाप्रतिबन्धविशिष्टयोग्यताशालि इत्युक्तौ तत्र कर्मकरणं यत् उद्देश्यतावच्छेद-कम्, तत्प्रयोज्यत्वं योग्यतायाम्, विद्यारूपोद्देश्यतावच्छेदकांशप्रयोज्यत्वञ्च तदंशे फलाप्रतिबन्धे सुग-ममेव। यदेव विद्ययेति वाक्यसमनन्तरपूर्वञ्च, 'नाना तु विद्या चाविद्या चे'ति वाक्यम्। **अविद्या** कर्म। विद्याकर्मणोर्नानात्वस्य लोकसिद्धत्वात् अत्र फलद्वारा पार्थक्यमेव विवक्षितम्। तदेवोपरि विव्रियते। एवञ्चा-विद्याफलमन्यद्, तत्र विद्याफलं तदप्रतिबन्ध इत्यवगमात् विद्यायाः फलकरणत्वमेव; नोद्गीथाङ्गत्वमिति।

नन्वेवं वाक्येनानेनोपासने फलसंबन्ध उद्गीथसंबन्धश्च बोध्यते चेत्, वाक्यभेदः स्यात्। अबो-धने च क्रतुसंबन्धं विनाऽप्युपासनं फलाय स्यादिति शंकापरिहारायाह **संनिहित उद्गीथ** इति। अयं भावः—उपासनस्योद्गीथाङ्गत्ववर्णनेऽपि, 'उद्गीथेनात्ययामे'ति उद्गीथस्यैव फलकरणतायाः क्वचिदवगमात् तादृशफलार्थोद्गीथस्यैवोपासनोद्देश्यत्वसंभवेन क्रतुबहिर्भावः किं न स्यात्। अनारभ्याधीतत्वादत्र क्रतु-प्रकरणाभावात्। क्रतोरन्यत्र जुह्वा इव उद्गीथे कार्याभावस्य दुर्वचत्वात्। क्रतोर्बहिरेव अध्ययनपारा-यणादिवत् उपासनोपरिलग्नोद्गीथगानसंभवात्। अथ, 'तेनोभौ कुरुतः यश्च वेद यश्च न वेद' इति

क्रतुप्रयुक्तोद्गीथाद्याश्रये उपासने क्रत्वधिकारिण एव क्रतोर्वीर्यवत्तरत्वेच्छानिमित्तमिदमधिकारान्तरमिति न क्रतुषु तदुपादाननियमः। वीर्यवत्तरत्वं च क्रतुफलस्य प्रबलकर्मान्तरफलेनाप्रतिबन्ध इत्युक्तम्। क्रतोरविलम्बितफलत्वमित्यर्थः। पर्णतादीनां तु, "यदेव विद्यया करोति···तदेव वीर्यवत्तरं भवति" इति विद्यायाः फलसाधनत्ववत्, अपापश्लोकश्रवणादिफलं प्रति साक्षात्साधनभावो न श्रुत इति क्रत्वङ्गतया विनियोगाविरोधात् तदङ्गभूतानां फलान्तरसाधनभावकल्पनानुपपत्तेस्तत्र फलश्रुतिरर्थवादमात्रं स्यात् ॥ ६३ ॥

दर्शनाच्च । ३ । ३ । ६४ ॥

दर्शयति च श्रुतिरुपासनोपादानानियमम्, (छा. ४-१७-१०) "एवंविद्ध वै ब्रह्मा

---

वाक्यात् कर्मोपस्थितं भवति। यदेव विद्यया करोति इत्यतोऽपि। एवं होतृषदनाद्धैवापीति वाक्यात् होत्रादिसर्वसमावेशावगमात् कर्ममध्यपातित्वमवगम्यते। 'एवंविदुद्गाता ब्रूयात् कं ते काममागायानि' इति, 'बको दाल्भ्यो विदाञ्चकार। स ह नैमिषीयाणामुद्गाता बभूव' इत्यादितः यजमानार्थमुद्गातुरुपासकत्वावगमादपि। उषस्तिश्चाक्रायणश्च कर्ममध्य एव प्रस्तोत्रादिभ्य उपासनपद्धतिमुपदिदेश। उद्गीथेनात्ययामेत्यत्रापि यज्ञपदं सुस्पष्टमस्ति—इति न स्वतन्त्रोद्गीथप्रसक्तिरिति चेत्—तर्हि तत एव क्रतुतत्संबन्धिनामत्र मनसि विपरिवृत्तिरस्त्येवेति यथायथमाश्रयो लभ्येतैव। क्रतुद्वारेति संनिधानादवगमे उद्गीथादौ रसतमत्वाद्युपासने विधीयमाने क्रतुरुद्गीथद्वारा भवत्याश्रय इति हि सुगमम्। वस्तुत उद्गीथमुपासीतेति वाक्यमाश्रयसमर्पकम्। अस्य वाक्यस्य क्रतुप्रकरणेऽभावात् उद्गीथः कथं कार्यः इति उद्गीथकथम्भावाकांक्षायां प्रवृत्तत्वाभावात् उपासनप्रकरणात् उपासनविषयसमर्पणार्थत्वस्यैव वाच्यत्वात्। अथ कथमुपासीतेत्यत्र रसतम उद्गीथ इति वाक्यात् रसतमत्वेनेत्यवगम्यते। फलाकांक्षायाञ्च वीर्यवत्तरत्वबोधनम्, तेनैव क्रतुमध्यपातित्वावगमनञ्चेति। **विद्यायाः फलसाधनत्ववदिति।** विद्ययेति तृतीयाया इत्थंभूतलक्षणपरत्वेऽपि विद्याविशिष्टकर्मणो वीर्यवत्तरत्वोक्तौ विद्याप्रयोज्यत्वं वीर्यातिशये वाक्यमर्यादालभ्यमिति प्रागेवोक्तम्। यदा उपपदविभक्तेः कारकविभक्तिर्बलीयसीति करणत्वमेवेह तृतीयार्थः, तदा, करणत्वस्य विद्यानिष्ठस्य साक्षात् कर्मनिरूपितत्वासंभावात्, कर्मानुग्राहकत्वरूपं कर्मगतवीर्यातिशयाधायकत्वरूपं तदिति सुवचत्वात् स्पष्टमेव फलसाधनत्वमिति भावः। अत एव दुरुद्गीथमित्यस्य वेदनहीनमित्यर्थवर्णनं न भवति। उपासनाभावमात्रेणोद्गीथस्य न दुष्टत्वम्। उपासनग्रहणेऽपि वा तद्घटितप्रयोगमात्रविषयं तद् भवतु। एवं 'तेनेयं त्रयी' इति तच्छब्दोऽपि नोपासनविशिष्टप्रणववाची। 'एतदनुज्ञाक्षर' मित्योङ्कारेऽनुज्ञाक्षरत्वस्याधस्तादुक्त्या शुद्धस्यैव प्रणवस्यानुज्ञाक्षरत्वात् तद्वदेवात्रापि शुद्धस्यैव ग्राह्यत्वात्। आश्रावणशंसनादौ उद्गान इवोपासनसहभावस्य वाक्यान्तरतोऽनवगमेन तथाऽर्थवर्णनायोगाच्चेति ॥ ६३ ॥

लिङ्गदर्शनानामसाधकत्वप्रदर्शनाभिप्रायेण स्वपक्षसाधकं लिङ्गदर्शनमाह **दर्शनाच्चेति। एवंविदिति।** 'एष वै यज्ञो योऽयं पवते' इत्यादिखण्डद्वयार्थविदित्यर्थः। तत्र यज्ञस्य वायुत्वम्, मनोवाचोर्मार्गत्वम्, ब्रह्मणो मौनेन मनःकार्यं होत्रध्वर्यूद्गातृणाञ्च वाक्कार्यं यथावदपेक्षितमित्युक्त्वा, तत्तद्भेद-

**यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति " इति ब्रह्मणो वेदनेन सर्वेषां रक्षणं ब्रुवती । उद्गातृप्रभृतीनां वेदनस्यानियमे सति एतदुपपद्यते । अनेन लिंगेन पूर्वोक्तानां समाहारादिलिङ्गानां प्रायिकत्वमवगम्यते । अतोऽनियम एवेति स्थितम् ॥ ६४ ॥** इति यथाश्रयभावाधिकरणम् ॥ २६ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

तृतीयस्याध्यायस्य तृतीयः पादः ॥ ३-३ ॥

---

विहिताङ्गलोपे तत्तद्वेदसारभूतभूरादिव्याहृतिकरणकहोमाः ब्रह्मणा कारयितव्या इत्युक्तम् । **एतदुपपद्यत** इति । ननु होत्रध्वर्यूद्गातॄणां वाक्यार्थस्य प्रकृततया तत्कार्यलोपे प्रायश्चित्तविधानं ब्रह्मकार्यम् । तथाच ब्रह्मवेदनमिदं प्रायश्चित्तानुष्ठापनमुखेन यज्ञपूर्तिकरम् । उद्गातृवेदनरूपोपासनं तु निष्पन्नयज्ञाश्रितगुणफलरूपवीर्यातिशयकरम् । तत्र ब्रह्मवेदनस्योद्गातृवेदनस्य च भिन्नकार्यत्वात् कथमेनेन तदनियमसिद्धिः । प्रत्युत होतृषदनस्य दुरुद्गीथसमाहारकत्वकथनेन उद्गीथोपासनस्यावश्यकत्ववत्, प्रायश्चित्तबलादङ्गानामावश्यकत्वसिद्धिवच्च, ब्रह्मवेदनरक्ष्यत्वकथनेन उपासनावश्यकत्वसिद्धिरेव स्यादिति चेत्—अत्र ब्रह्मवेदनं प्रक्रमावगतवायुत्वदृष्ट्यादिरूपमिति तस्य उद्गातृकर्तृकोपासनस्थानापत्तिर्युक्तेति **परिष्कारे** विवृतं द्रष्टव्यम्। एवमपि समाहारवद् इदमपि उपासनावश्यकत्वमेव स्थापयेदिति चेन्न—एवं भाष्याशयात्—यदि अर्थवादः प्रशंसार्थ इति वेदनस्य क्रत्वर्थत्वमिष्यते, तर्हि, 'ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षती'ति वाक्यमपि वर्तमानापदेशत्वादितुल्ययुक्त्याऽर्थवादमात्रं स्यात् । एवं दुरुद्गीथमनुसमाहरतीत्यपि । तथाच सर्वेषामुपासनानां ब्रह्मवेदन-प्रणवोद्गीथैक्यविषयकहोतृकर्तृकज्ञानोद्गीथोपासनादिरूपाणां क्रत्वर्थतया समुच्चय एव स्यात् । उद्गातृप्रभृतीनां वेदनस्यापि फलार्थत्वं तत एव क्रतावनियतत्वञ्च यदि त्वया न स्वीक्रियते, ब्रह्मणो वेदनेन सर्वरक्षणं ब्रुवती श्रुतिरियमपि स्वार्थतत्परतया त्वया न स्वीकार्या स्यात् । तत्तद्वेदनानियमे स्वीकृत एवैतत्स्वीकार उपपद्यते, एकरूपवाक्येषु एकत्र वाच्यार्थतात्पर्यम्, एकत्र नेति वैषम्यकल्पनस्यानुचितत्वात् । एवं वीर्यवत्तरत्ववत् उपासनविशेषाणां पुत्रप्राप्ति - मृत्युजय - परपरिभव - ऊर्ध्वाधोलोककामेशत्वादिविविधफलप्रतिपादकवाक्यराशेः सर्वस्य वाच्यार्थत्याग इति महान् दोषः स्यात् । अतो यज्ञमुपस्थाप्य यज्ञाङ्गाश्रितोपासनफलप्रतिपादनमेव बहुरूपमत्र विवक्षितमिति नोपासनस्य सद्भावनियम इति । **प्रायिकत्वमिति** । दुरुद्गीथपदस्य वेदनहीनोद्गीथमित्यर्थकत्वेऽपि, तेनेति तच्छब्दस्य वेदनविशिष्टप्रणवपरामर्शित्वेऽपि तत्तद्वाक्यं वेदनघटितकतिपयक्रतुप्रयोगमात्रविषयकं मन्तव्यमित्यर्थः । तावदर्थपरत्वाभावे तु नैव नियमशङ्कावकाशः । अनियम एव नैर्भर्यम्, न तु दुरुद्गीथादिपदस्य त्वदुक्तार्थस्वीकारे इत्याशयेन निगमयति **अतोऽनियम एवेति** ॥ ६४ ॥

इति वात्स्यश्रीशैल-सत्त्वकवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु

श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे तृतीयाध्याये तृतीयः पादः॥

श्रीमते रामानुजाय नमः । शुभमस्तु ॥

श्रीः । श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचिते

# श्री शारीरकमीमांसाभाष्ये

तृतीयाध्याये चतुर्थः पादः

१०९. पुरुषार्थाधिकरणम् ३-४-१ ॥

## पुरुषार्थोऽतः शब्दादिति बादरायणः । ३ । ४ । १ ॥

**गुणोपसंहारानुपसंहारफला विद्यैकत्वनानात्वचिन्ता कृता ; इदानीं विद्यातः पुरुषार्थः,**

---

श्रीः ॥ श्रीमते रामानुजाय नमः ॥

## भाष्यार्थदर्पणे तृतीयाध्याये चतुर्थः पादः

अस्मिन् अङ्गपादे ब्रह्मविद्याङ्गं सर्वं निरूप्यते । तच्च वर्णाश्रमधर्मः शमदमादिकं पाण्डित्यबाल्यमौनरूपञ्च । तत्र कर्मणोऽङ्गत्वप्रसक्तेरेवाभावात् कीदृशं कर्म विद्याङ्गमिति करिष्यमाणस्य विचारस्यावकाश एव नास्तीत्याशङ्का प्रथमाधिकरणेन परिह्रियते । तदाह **गुणे**त्यादिना । संयोगरूपचोदनाख्यानामविशेषे सत्येव विद्यैक्यम् ; अन्यथा तु विद्याभेद एव ; ताश्च विद्याः फलैक्यात् विकल्पिता इत्युक्तं पूर्वपादे । एवम्भूतब्रह्मविद्यैव काचिन्नास्ति ; कृतं सर्वमाकाशताण्डवम् ; उपनिषदां कर्मकर्तृजीवमात्रप्रतिपादकत्वादितीह पूर्वपक्षगतिः । नन्वेवं विद्यापलापेन पूर्वपक्षः पूर्वपादप्रारम्भे कर्तुं युज्यते, न त्वत्रेति चेत्-यथा कर्मेतिकर्तव्यताकब्रह्मोपासनं सर्वं निरूप्यैव, चतुर्थप्रथमारम्भे तदावृत्तिविचारविस्तरं विदधाति, यथा च विद्याभेदनिबन्धनविचारं वर्तितवानेव अन्ते नानाशब्दादिभेदात् इति भेदं समर्थयते-तथा विचारमेनमपि कुरुते । वक्ष्यमाणांशसिद्धवत्कारेणापि पूर्वं तदनुबन्धिविचारपरिपाट्याः सर्वत्र समादृतत्वात् ।

नन्वेवमेवाधिकरणं योज्यमिति को निर्बन्धः । जैमिनेः परब्रह्मस्वीकारित्वं हि, साक्षादप्यविरोधं जैमिनिः, परंजैमिनिर्मुख्यत्वादित्यादौ विस्पष्टम् । देवाः सन्ति ; ते ब्रह्मविद्यामात्राधिकारिण इत्यपि तदिष्टमिति च ज्योतिषिभावाच्चेति सूत्रे व्यक्तम् । स इदानीं ब्रह्मतज्ज्ञानसर्वापलापेन पूर्वपक्षयतीति कुतो वक्तव्यम् । सर्वसंमत्यैव कर्मप्राधान्यपूर्वपक्षस्यात्र तेन सुकरत्वात् । आचारदर्शनादिलिङ्गानि हि ब्रह्मविद्यायाः कर्माङ्गत्वेन सुनिर्वहाणि । यद्युच्येत—शेषत्वात् पुरुषार्थवाद इति पूर्वपक्षारम्भसूत्रे पुरुषविषयकोऽयमर्थवाद इत्युक्तत्वात् क्रतुकर्तृपुरुषप्रशंसारूपत्वमुपनिषदामत्रोच्यत इति तदनुरोधेन ब्रह्माद्यपलापेन पूर्वपक्ष इति वक्तव्यमिति—तन्न ; शेषत्वात् पुरुषार्थवाद इत्यस्य—'मोक्षरूपपुरुषार्थस्य विद्यासाध्यतया वादः विद्यायाः कर्मशेषत्वादेव । अङ्गे चाङ्गिफलस्य वादो दृश्यत एव. 'औदुम्बरो यूपो भवति । ऊर्ग्वा उदुम्बरः । ऊर्क् पशवः । ऊर्जं पशूनाप्नोति ऊर्जोऽवरुद्ध्यै ' इति त्रैधातवीयेष्टिफलस्य पशुप्राप्तिरूपस्य तदङ्गयूपौदुम्बरतायां वर्णनात् ; एवमन्येष्वपि' इति व्याख्यानसंभवात । अथ ब्रह्मोपासनस्य कर्माङ्गत्वं कथमिति चेत्—समुद्रं मनसा ध्यायेत इति समुद्रध्यानस्य मानसग्रहादेश्च द्वादशाहकर्माङ्गत्वं यथा । अत एव क्वचित् जीवातिरिक्ततया ब्रह्मज्ञानम् , क्वचित् तत्त्वमसीति जीवब्रह्मैक्यज्ञानञ्च विधीयमानमुपपन्नम् । यथाशास्त्रमारोपात्मकज्ञान-

उत विद्याङ्गकात् कर्मण इति चिन्त्यते । किं युक्तम् ? अत:—विद्यातः पुरुषार्थ इति भगवान्

---

स्यापि क्वचिदङ्गत्वस्वीकारसंभवात् । 'य एतदक्षरमविदित्वा तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद् भवति'इत्यादौ वेदनस्य कर्माङ्गत्वं स्पष्टम् । अस्मिन्नेवाधिकरणे, परामर्शं जैमिनिरिति सूत्रे, 'प्रणवकरणकब्रह्मोपासनस्तुतिरूपतया तत्तदाश्रमपरामर्शमात्रम् ; न त्वाश्रमविधानम्'इति जैमिनिमतानुवादात् ब्रह्मोपासनं तदिष्टमिति स्पष्टमिति च तदपलापेन पूर्वपक्षारम्भो न साम्प्रतम् । अतः शाङ्करोक्तरीत्यैव किमित्येवमधिकरणयोजनेति चेत्—

उच्यते । न हि भगवद्बादरायणोक्तं सर्वं श्रुत्वा तदनन्तरं जैमिनिरेवं पूर्वपक्षं प्रावर्तयदिति अत्रोच्यते । किंतु बादरायणोपसंपत्तेः प्राक् तेनोपनिषदां यो निर्वाहोऽभिमत आसीत्, स इह प्रस्तूयते । जैमिनिः पश्चात् सर्वथा बादरायणमनुससारेत्यत्र तु ब्रह्मसद्भावप्रवृत्तजैमिन्युपन्यासपरानेकसूत्रसिद्धमस्तु ; किं तेन । प्रकृताधिकरणस्यैवम्परत्वानङ्गीकारे, 'अध्ययनमात्रवतः' इति सूत्रं न समन्वेति । अधीत्येति पदात् उपासनपर्यन्तज्ञानस्याङ्गत्वमवगम्यत इति मीमांसकेनोक्त्यसंभवात् । अधिकोपदेशात्तु इति बादरायणसमाधानक्रमोऽपि न घटते । जीवातिरिक्तब्रह्मोपदेशादित्यर्थो हि जैमिनेर्जीवातिरिक्तपरमात्मानङ्गीकारेण पूर्वपक्षे सत्येवोचितः स्यात् । तर्हि वाक्यार्थज्ञानादधिकस्य ब्रह्मोपासनात्मकस्योपदेशादित्यर्थवर्णनं क्रियतामिति चेत्—तथाव्याख्यानेऽपि तन्मतनिरासो न भवति । समुद्रध्यानादिवत् ब्रह्मोपासनस्य तादृशस्यापि कर्माङ्गत्वं तदिष्टमस्त्विति भवतैवोक्तत्वात् ।

किञ्च जैमिनेर्द्वयी दशा—बादरायणशिष्यभावात्प्राक्तनी, अन्या चेति । उत्तरत्र जीवब्रह्मभेदः, जीवस्य सत्यसंकल्पत्वान्त ब्राह्मरूपाभिनिष्पत्तिः, अर्चिरादिना परोपासनात् परब्रह्मण एव प्राप्तिरित्यादिकं बादरायणवदेव तदभ्युपेतमिति तत्र वैषम्यकल्पने मानं न लक्ष्यते । पूर्वदशायां तु निरीश्वरत्वम्, देवानपि विना कर्मणैवापूर्वद्वारा फलोत्पादः इत्यादिकं तदभिमतमिति मीमांसकप्रवादादवगम्यते । तथा तत्कृतश्च प्रचारः किं तथैव सिद्धान्तेन, किंवा कर्मसु प्ररोचनामात्रमनीषयेत्यन्यदेतत् । अतः प्राक्तनतन्मतं यादृशम्, तादृशमवलम्ब्य पूर्वपक्षप्रवर्तनमेव युक्तम् ॥ ननु सन्ति पक्षान्तराणि—विद्याकर्मणोः समसमुच्चय इति केचित् । कर्म प्रधानम्, विद्या तदङ्गम् ; यथा कर्मयोग आत्मज्ञानगर्भः ज्ञानयोगवत् आत्मावलोकनसाधनम्, तथा भगवदाराधनात्मकं सर्वं कर्म भगवज्ज्ञानगर्भं सत् फलानि जनयिष्यतीत्यन्यः पक्षः । वैखानसाः पाञ्चरात्रिकाश्च नित्यभगवदर्चनादिनिरवधिकपरिचरणपरायणाः पक्षमिमं रोचयन्ते । तदन्तर्गतं परमात्मज्ञानञ्च निरन्तरध्यानरूपमपि काममस्त्विति केचिन्मन्येरन् । अन्ये तु तार्किकादयः ईश्वरमिच्छन्तोपि तत्प्रणिधानमपि चित्तशुद्धये प्राप्तमाकलयन्तोऽपि स्वात्मध्यानमेव कैवल्याख्यमोक्षहेतुमाशेरते । तत्र ध्यानकर्मणोः समसमुच्चयं प्राञ्चः ; विद्याप्राधान्यञ्चोदयनाचार्यादय इति । एवं संभावितमतान्तरनिरसनेन विद्यायाः प्राधान्यमङ्गपादे बादरायणेन प्रतिपादनीयमेवेति ॥ सत्यम् । एवम्भूतनानामतनिरासार्थमेव सिद्धान्तसूत्रं प्रथमतो विधाय पश्चात् पूर्वपक्षप्रवर्तनम् । एवमस्य शैलीति तदन्तरप्रतिपत्तिसूत्रे भाष्यादवगम्यते

बादरायणो मन्यते ; कुतः ? शब्दात्। दृश्यते ह्यौपनिषदः शब्दो विद्यातः पुरुषार्थं ब्रुवन्, (तै. आनं. १) "ब्रह्मविदाप्नोति परम्", (उत्तरना) "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय" (मु. ३-२-८) "यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्" इत्यादिः ॥ १ ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः । ३ । ४ । २ ॥**

नैतदेवम्—यत् विद्यातः पुरुषार्थावाप्तिः शब्दादवगम्यते—इति । न ह्येषः, "ब्रह्म-

---

इति, फलमत इति सूत्रे च तथा तदाशय इति च प्रागेवोक्तम्। तदेवमृष्यन्तरसंशीलितपक्षान्तरप्रतिक्षेपाशयेन विद्यामात्रप्राधान्यं प्रतिपादयितुं सिद्धान्तसूत्रं प्रणीय, स्वशिष्यजैमिनिपूर्वदशाप्रापितप्रचारमपि मतं विशिष्योपन्यस्य निरस्यति समनन्तरमिति साम्प्रतमेतत्। तदाशयश्च—आन्तं यज्ञादिकं कर्मावश्यमनुष्ठेयमिति संन्यासस्वीकारोऽपि न प्रामाणिकः। अगतिकविषये तत्र दोषाभावज्ञापनाय तत्परामर्शमात्रं क्वचिदस्तु। कर्मकर्तुर्जीवादन्यश्च नोच्यते उपनिषत्स्वपि। देवतानामेवाभावे तदधिकस्येश्वरस्य नैवावश्यकता। जगत्सृष्ट्यादिकं जीवकर्मबलादेव भवितुमर्हति। जीवसमष्टिरेवोपनिषत्सु ब्रह्मादिशब्दैर्व्यवह्रियताम्। अत एव तत्त्वमसीत्युक्तम्। तावतेदमद्वैतिमतमिति न मन्तव्यम्, जीवानां सर्वदा भेदस्येष्टत्वात्। जगन्मिथ्यात्वस्य, व्यावहारिकदशया ईश्वरावश्यकतायाश्चानभिमतत्वात्। एवं सृष्टिप्रलयनानादेहसंपत्त्यादिवर्णनात् देहातिरिक्त आत्मेति संप्रतिपत्तिर्भवति ; तस्यां सत्यां पारलौकिकं कर्म कर्तुमुद्युञ्जीतेति ज्ञानमिदं कर्तुरपेक्षितम्। एवम्भूतविद्याङ्गककर्मसंपाद्यं फलं किमिति चेत्—अस्तु काम्यकर्मानुष्ठानवैयग्र्यात स्वर्गादिकमेव। फलानिच्छायामपि, 'प्राजापत्यं गृहस्थानाम्' इति विष्णुपुराणादिदर्शितमस्तु। निष्कामकर्मानुष्ठानान्मोक्षोऽपि भवेदिति तु न श्रद्धेयम् ; धर्मेण पापमपनुदतीति पापक्षयेऽपि सर्वपापक्षयायोगात् ; पुण्यक्षयस्याभावाच्च अनादिसंचितानन्तपुण्यानुभवस्याविश्रमात् ; परमात्माराधनत्वादेश्चासंमतेरित्येवं भाव्यः। यथा च समनन्तराधिकरणे दृष्टिविधिवाक्यानां सर्वेषां स्तुतिमात्रत्वमिति पूर्वपक्षः, तथा ब्रह्मविद्याविधिवाक्यानामपि केवलस्तावकत्वमेवेति संभावितो हि पूर्वपक्षः। स इह निराक्रियते। पूर्वपादान्ते क्रमेण परावयाद्वाथाद्विद्यारूपोभयविद्यानिगमनक्रमेण तदुभयस्थापनमिह कर्मणामङ्गत्वस्थापनोपोद्घातरूपेणेति सुसङ्गतमेतत्।

जीवातिरिक्तपरमात्मतद्दिव्यमङ्गलविग्रहतदाधारपरमव्योम-तदुपासकैहिकफल-आमुष्मिकमुख्यमोक्षयथावस्थितस्वरूपप्रतिपादकान् औपनिषदशब्दान् सूत्राभिप्रेतान् दर्शयति **ब्रह्मविदित्यादिना** ॥ १ ॥

अत्र षड्भिः सूत्रैः पूर्वपक्षः। औपनिषदवाक्यराशेः स्वाभिमतोऽर्थः कर्तृप्राशस्त्यम्। तदाह **प्रथमसूत्रे**। तत्र युक्तिः **शेषत्वादिति**। शेष्युपकारादन्यस्य शेषफलस्य स्वीकाराभावात तत्र विवक्षितमित्याह **न ह्येष इति**। ननु जीवविलक्षणस्य परस्य ब्रह्मणो ज्ञानमुपनिषदुत्पादितं कथं कर्मशेषभूतमित्यत्र कर्तृज्ञानमेव तदुत्पादि-

**विदाप्नोति परम्" इत्यादिशब्दो वेदनात् पुरुषार्थावाप्तिमवगमयति, कर्मसु कर्तृभूतस्याऽऽत्मनो याथात्म्यवेदनप्रतिपादनपरत्वात् । अतः कर्तुः संस्कारद्वारेण विद्यायाः क्रतुशेषत्वात् तत्र फलश्रुतिरर्थवादमात्रम्; यथाऽन्येषु द्रव्यादिषु—इति जैमिनिराचार्यो मन्यते । तदुक्तम्,** (पूर्वमी. ४-३-१)**"द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्" इति ।**

---

तमित्याह **कर्मस्विति** । कर्तुर्जीवस्य ब्रह्मभावज्ञानं संपद्रूपम्, अध्यासरूपम्, क्रियायोगमूलकारोपरूपं वा नाभिमतम्, तस्य सर्वस्यातत्त्वज्ञानरूपत्वात् । संपद्धि नाम अधर्मे धर्ममित्युक्ततामसबुद्धिवत् आरोप्यप्रधाना बुद्धिः; अध्यासश्च राजसविपरीतबुद्धिवत् आलम्बनस्य प्राधान्यमारोप्यस्य चाप्राधान्यमाश्रीयते चेद्, भवति । प्रथमस्योदाहरणम्-अनन्तं मनः अनन्ताः विश्वेदेवाः इति । मनस एव मनस्त्वेनागृहीतस्यानन्तविश्वदेवत्वेन ग्रहणमत्र । द्वितीयस्योदाहरणम्—मनो ब्रह्मेति । अत्र मनस्त्वेन मनोग्रहणमस्ति । तृतीयस्योदाहरणं वायुर्वाव संवर्गं इति । संवरणरूपलयक्रियाकर्तृत्वेन वायौ संवर्गब्रह्मारोपः । जीवत्वाग्रहणेन ब्रह्मारोपे, जीवत्वग्रहेण तदारोपे, जीवत्वग्रहेणैव जीवे बृंहणक्रियाकर्तृत्वविशिष्टारोपे च एतत्पक्षत्रयरीतिः स्वीकृता भवति । तदा जीवब्रह्मणोर्भेद एव वास्तव इति, ईदृशाध्यासाभावे कर्मणां फलहेतुत्वं नास्तीति च भवेत् । तदनिष्टं सर्वेषाम् । अतोऽन्यविधया कर्तृज्ञानं तदुपयोगश्चाह **अत इति** । पत्नी आज्यमवेक्षते इति विहिताज्यावेक्षणादेराज्यसंस्कारकतया यागान्वयवत् यथावस्थितात्मस्वरूपज्ञानस्योपनिषदुत्पादितस्य कर्तृपुरुषसंस्कारकतया यागान्वय इति भावः । कर्तृसंस्कारेत्यप्रयुज्य **कर्तुरिति** व्यस्य प्रयोगः **अर्थवादमात्र**मित्यत्र तदन्वयलाभाय । तेन सूत्रे **पुरुषार्थवाद** इत्यत्र पुरुषस्य कर्तुरर्थवादः तद्विषयकप्रशंसावाक्यमिति विग्रहार्थज्ञापनं भवतीति । **फलश्रुतिरिति** पदं **यथान्येष्विति** इत्युदाहरण स्मारितसूत्रलभ्यम् । विद्यात. फलमिति सिद्धान्तनिरासाय फलश्रुतेरेव ह्यन्यथानयनमत्र चिकीर्षितम् । पुरुषार्थोत इति सूत्र इवेह पुरुपार्थपदार्थग्रहणे पुरुषार्थस्य वादः फलश्रुतिरित्यर्थलाभात् जैमिनिसूत्रात् अर्थवाद इति पदमत्र ग्राह्यम् । पुरुषार्थवाद इति पदस्यैव वा द्विरावृत्तिः । तेनार्थद्वयमपि । एवञ्च जीवब्रह्मैक्यज्ञानं न संपदादिरूपम्, किं तु तत्त्वज्ञानमेवेत्युक्तं भवति । इदमपि नाद्वैत्यभिमतरीत्या । तदा जीवत्वादिसर्वापलापेन जगन्मिथ्यात्वे पर्यवसानात् ततः कर्मकरणायोगात् अननुकूलत्वाद् विरुद्धत्वाच्च । किंतु ब्रह्मण ईश्वरस्य सर्वथैवाभावेन निरीश्वरवादिसंमतेन ब्रह्मशब्देन नानाजीवसमष्टिग्रहणेन जगद्धेतुसमष्ट्यन्तर्भूतत्वस्य कर्तर्यवधारणरूपम् । तेन जगन्मूलसर्वपुण्यपापकर्मकरणसमर्थो देहादिविलक्षणः कर्तेति व्युत्पादितं भवति । अस्य च ज्ञानस्यामुष्मिककर्मप्रवृत्तिहेतुत्वात् आज्यावेक्षणस्याज्यविशुद्धिग्रहमुखेनेव दृष्टविधयैवोपयोगः । **द्रव्यसंस्कारकर्मस्विति** । 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति द्रव्योदाहरणम्; अत्र पर्ण(पलाश)रूपप्रकृतिद्रव्यविधानात् । **संस्कारः** संनिपत्योपकारकं कर्म । 'यदाङ्क्ते । चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति यजमाननेत्रस्याञ्जनलेपनम् । **कर्म** आरादुपकारकम्, 'वर्म वा एतद् यज्ञस्य क्रियते यत् प्रयाजानूयाजा इज्यन्ते' इति । प्रयाजानां प्रधानयागात् पूर्वभावात् अनुयाजानां पश्चाद्भावात् पूर्वपरभागावरणात् वर्मतुल्यता । अत्र वर्मवचनावगम्यं यत् हेत्वन्तरो-

ननु च—कर्मसु कर्तुर्जीवादन्यो मुमुक्षुभिः प्राप्यतया वेदान्तेषु वेद्य उपदिश्यत इति प्रागेवोपपादितम्, (शारी. १-१-१७) "नेतरोऽनुपपत्तेः", (१-१-१८) "भेदव्यपदेशाच्च", (१-२-३) "अनुपपत्तेस्तु न शारीरः", (१-३-१७) "इतरपरामर्शात् स इति चेन्नासंभवात्" इत्येवमादिभिः सूत्रैः। तदेव ब्रह्म तत्त्वमस्यादिसामानाधिकरण्येन जीवादनतिरिक्तमित्येतदपि, (२-१-२२) "अधिकं तु भेदनिर्देशात्" इत्येवमादिभिर्निरस्तम्। सामानाधिकरण्यनिर्देशश्च, (छा. ६-८-७) "ऐतदात्म्यमिदं सर्वम्", (छा. ४-१४-१) "सर्वं खल्विदं ब्रह्म" इति चेतनाचेतनसाधारणः, (बृ. मा. ६-७) "यः पृथिव्यां तिष्ठन्···य आत्मनि तिष्ठन्" इत्यादिनाऽवगततत्तदात्मतयाऽवस्थितिनिबन्धन इति, (शारी. १-४-२२) "अवस्थितेरिति काशकृत्स्नः" इत्यादिभिरुपपादितम्। तत् कथं कर्मसु कर्तुरात्मनो याथात्म्योपदेशपरा वेदान्तशब्दा इति विद्यायाः कर्माङ्गत्वं प्रतिपाद्यते?

उच्यते--वेदान्तवाक्येष्वेव विद्यायाः कर्मप्राधान्यं सूचयद्भिर्लिंगैः, तदुपबृंहितसामानाधिकरण्यनिर्देशेन च वेदान्तशब्दाः देहातिरिक्तजीवस्वरूपयाथात्म्योपदेशपरा इति बलादभ्युपगमनीयमिति पूर्वपक्षिणोऽभिप्रायः॥ ननु च कर्तृसंस्कारमुखेन विद्यायाः क्रत्वनुप्रवेशो न

---

पनिपतितापायवारणम्, तदर्थत्वं प्रयाजादेर्नेष्यते; किंतु आरादुपकारकान्तरवत् यागेन फलापूर्वे जननीये सहकारित्वमेवेति सर्वत्रार्थवादस्य न फलसमर्पकता। तद्वदेव परात् परं पुरुषमुपैति दिव्यमित्यादीनामपीति भावः। नन्वेतावति शारीरकभागे अधीतिनोऽसंभावितेयं शंकेति पृच्छति ननुचेति। एतावदध्ययनात् प्राक् संजातज्ञानाधीनविपरीतवासनोन्मूलनमेवाधिकरणकृत्यमित्याशयेन शंकां समर्थयते उच्यत इति। विद्याया इति पञ्चमी। विद्यापेक्षयेत्यर्थः। सूचयद्भिरिति। कर्मप्राधान्यं लिङ्गसूचितं कदा प्रतिष्ठितं स्यात्? जीवातिरिक्तजगत्कारणब्रह्माभाव एव। अन्यथा तत्रोपनिषत्तात्पर्ये तज्ज्ञानस्य कर्मानुष्ठानशेषत्वाभावात् फलान्तरमेव वक्तव्यमिति कर्मप्राधान्यहानिरिति। ननु कर्तृज्ञानवत् आराध्यस्य फलप्रदातुर्ज्ञानमपि कर्मशेषभूतमेवेति चेन्न—"न तु मामभिजानन्ति" इति गीतायाः, 'अविदित्वा तपस्तप्यते—अन्तवदेव' इत्यादिश्रुतेश्च पर्यालोचने आराध्यज्ञानाभावेऽपि फलोत्पत्तेः सिद्ध्या तत एवेतरदेवताज्ञानाभावेऽपि न दोष इत्यवधारणे सति देवतानामेवापलापे का कथा ब्रह्मज्ञानस्य। अतोऽनपेक्षितत्वात् न तत् कर्मशेषं भवेत्। अतस्तदपलाप एव वरमिति। न चेदं श्रुतिप्रतिकूलम्; जीवब्रह्मसामानाधिकरण्यस्य जीवातिरिक्तब्रह्माभावसाधकत्वात्। अत्र सामानाधिकरण्येन ब्रह्मापलापे कृते लिङ्गानि कर्मप्राधान्यं ज्ञापयन्तीत्युभयोपयोगो भाव्य। नन्वाज्यावेक्षणस्य प्राकरणिकवाक्यविहितत्वात् यागीयमाज्यमिति सुग्रहम्। यस्य पर्णमयीति वाक्यस्यानारभ्याधीतत्वेऽपि जुह्वाः क्रतावेवोपयोगात् अव्यभिचरितक्रतुसंबन्धात् तदुपस्थितौ तदर्थत्वं पर्णतायाः सुगमम्। कर्ता तु जीवः लौकिकालौकिकसर्वकार्यशेष इति क्रतुसंबन्धनियमाभावात् नैतज्ज्ञानस्य क्रत्वर्थत्वं सुग्रहमिति शंकते ननु च कर्त्रिति। उपनिषदुत्पाद्यं देहातिरिक्तत्वं जीवज्ञानम्; तस्य लौकिकार्थेऽनपेक्षितत्वात् परिशेषादिष्टसिद्धिरित्याह नैवमिति। ननु कर्तृत्वभोक्तृत्वा-

शक्यते वक्तुम्, कर्तुर्लौकिकवैदिकसाधारणत्वेनाव्यभिचरितक्रतुसंबन्धित्वाभावात् ॥ नैवम्; लौकिकस्य कर्मणः कर्तुः देहादव्यतिरिक्तत्वेऽप्युपपत्तेः देहातिरिक्तनित्यात्मस्वरूपस्य क्रतावेवोपयोगात् तत्स्वरूपप्रतिपादनमुखेन क्रत्वनुप्रवेशो न विरुध्यते। अतो विद्यायाः क्रतुशेषत्वात् नातः पुरुषार्थः ॥ २ ॥

कानि पुनस्तानि लिङ्गानि; यदुपबृंहितसामानाधिकरण्यनिर्देशेन वेदान्तशब्दा जीवस्वरूपपरा इति निर्णीयन्ते। तत्राह—

(पू) आचारदर्शनात् । ३ । ४ । ३ ॥

ब्रह्मविदां प्राधान्येन कर्मस्वेवाचारो दृश्यते—अश्वपतिः केकयः किल आत्मवित्तमः तद्विज्ञानायोपगतांस्तानृषीन् प्रत्याह-(छा. ५-११-५) "यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इति। तथा जनकादयो ब्रह्मविदग्रेसराः कर्मनिष्ठाः स्मृतिषु दृश्यन्ते, (गी. ३-२०) "कर्मणैव हि संसिद्धिमास्थिता जनकादयः", (वि. ६-६-१२) "इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः" इति। अतो ब्रह्मविदां कर्मप्रधानत्वदर्शनात् विद्यायाः कर्तृस्वरूपवेदनरूपत्वेन कर्माङ्गत्वमेवेति न विद्यातः पुरुषार्थः ॥ ३ ॥

लिङ्गमिदम्; प्राप्तिरुच्यतामित्यत्राह—

(पू) तच्छ्रुतेः । ३ । ४ । ४ ॥

श्रुतिरेव हि विद्यायाः कर्माङ्गत्वमाह, (छा. १-१-१०) "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति। नेयं श्रुतिः प्रकरणादुद्गीथमात्रविषयेति व्यवस्थापयितुं शक्या; यतः प्रकरणात् श्रुतिर्बलीयसी। "यदेव विद्यया करोति" इति विद्यामात्रविषया हीयं श्रुतिः ॥ ४ ॥

---

कारविशिष्टः किलाऽऽत्मा स्वर्गाद्यर्थं ज्ञातव्यः। उपनिषदस्तु अपहतपाप्मत्वादिविशिष्टमुपदिशन्तीति चेन्न-तत्रापि काम्यफलानुभवोपयोग्याकारस्यैव 'सत्यकामः सत्यसंकल्पः' इति कथनात्, तदुपयोगितयैवापहतपाप्मत्वादेर्ग्राह्यत्वात् ॥ २ ॥

कर्मानुष्ठानदर्शनमात्रस्य प्राधान्यासाधकत्वात् पूरयति **प्राधान्येने**ति। आत्मवित्तमस्याश्वपतेर्यज्ञेष्वादरो हि नात्मज्ञानप्राप्तये भवति, किंतु फलसंपत्तय इति यज्ञस्य प्राधान्यमिति भावः ॥ ३ ॥

उपासनप्रकरणे यज्ञप्रस्तावः उपासनाङ्गत्वाभिप्रायेणैवेति न मन्तव्यम्; श्रुतिरूपप्रबलप्रमाणसत्त्वादित्याशयेनाह **तच्छ्रुते**रिति। तस्य विद्यायां कर्माङ्गत्वस्य **श्रुतेः** श्रुतिप्रमाणवत्त्वादित्यर्थः। **श्रुति**रिह तृतीयाविभक्तिः। इदमवतारयति **लिङ्ग**मिति। **प्राप्ति**रिति। प्रापकश्रुतिप्रमाणमिति यावत्। **उपनिषदे**ति उपनिषदधीनकर्तृज्ञानरूपविद्या विवक्षितेति दर्शयति। **प्रकरणात्** उद्गीथमुपासीतेत्युपक्रमादिरूपात्। **विद्यामात्रे**ति मात्रशब्दः कार्त्स्न्ये। कर्मतदङ्गकर्त्रादिसर्वविषयविद्येत्यर्थः ॥ ४ ॥

(पू) समन्वारम्भणात् । ३ । ४ । ५ ॥

(बृ. ६-४-२) "तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोः साहित्यं च दृश्यते। साहित्यं चोक्तेन न्यायेन विद्यायाः कर्माङ्गत्वे सत्येव भवति ॥

(पू) तद्वतो विधानात् । ३ । ४ । ६ ॥

विद्यावतः कर्मविधानात् विद्या कर्माङ्गमित्यवगम्यते, "आचार्यकुलात् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यादौ। 'वेदमधीत्य' इत्यध्ययनवतः कर्माणि विदधत् अर्थावबोधपर्यन्ताध्ययनवत एव विदधाति। अर्थावबोधपर्यन्तं ह्यध्ययनमिति स्थापितम्। अतो ब्रह्मविद्यापि कर्मसु विनियुक्तेति न पृथक्फलायावकल्पते ॥६॥

---

सत्येव भवतीति। समन्वारम्भणं साहित्यम्। विलक्षणब्रह्मविद्याया मोक्षहेतोर्विद्यापदार्थत्वे तत एव मोक्ष इति कर्मसाहित्यं तत्र नोपपद्यते। बुभुक्षुविषये तद्विद्याया अनपेक्षितत्वात् कर्मणि तत्साहित्यमनुपपन्नम्। अतः कर्त्रात्मज्ञानरूपविद्याग्रहण एव साहित्यसिद्धिरिति सिद्धं कर्मप्राधान्यमिति भावः। न चार्थसिद्ध-अनुष्ठानकालापेक्षिततद्विद्यानुवृत्तिकथनं किमर्थमिति वाच्यम्-मृतस्य गमनकाले पूर्वलब्धस्य देहव्यतिरेकावगमस्य दार्ढ्यं भवतीति भावेन तदुक्तेः। तेन देहात्मभ्रमाननुवृत्तिर्दर्शिता भवति ॥ ५ ॥

यदेव विद्ययेति वाक्ये उपनिषत्पदसमभिव्याहारात् शास्त्राधीनात्मज्ञानमिति वक्तव्यम्—अन्यथा युक्तिसिद्धात् देहातिरेकज्ञानादपि कर्मानुष्ठानकथनसंभवात् तदुपेक्ष्येत। अधीत्येति अध्ययनजन्यार्थज्ञानवचनात् औपनिषदात्मज्ञानस्याङ्गत्वलाभः स्पष्टः। तथा कर्मानुष्ठाय विद्यामनुतिष्ठेदित्यनुक्त्वा विद्यामधिगम्य कर्मानुतिष्ठेदिति कथनाच्चाङ्गत्वं विद्यायां सुदृढमित्याशयेन श्रुत्यन्तरं दर्शयति तद्वत इति। गुरोःकर्मातिशेषेण परिचरणात्मकगुरुकर्मनिश्शेषतायाम्, गुरुर्यदा स्वकार्यादुपरतो भवति तदा चेत्यर्थः। टीकार्थोऽप्ययमेव। यथाविधानमधीत्येत्यत्रान्वयः। कर्माणि विदधदिति। ननु शुचौ देशे इत्येतदनन्तरम्, 'स्वाध्यायमधीयानो धार्मिकान् विदधत् आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य अहिंसन् सर्वा भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते' इति वाक्यम्। अत्र कर्मविधानं कुत्रास्ति। धार्मिकान् विदधत् इत्यस्य हि पुत्रशिष्यादीन् धर्मनिष्ठान् कुर्वन्नित्यर्थः। प्रत्युत ध्यानं मोक्षश्चैवालोच्येते इति चेत्—आत्मनीत्यादिना निषिद्धवर्जनम्, अन्यत्र तीर्थेभ्य इति क्रत्वनुष्ठानञ्चोच्यते। ब्रह्मलोकप्राप्तिश्च ब्रह्मपदवाच्यजीवात्मकर्मसंपादिततल्लोकप्राप्तिरेवेत्याशयात्। तदङ्गमिदमध्ययनमर्थज्ञानपर्यन्तम्। अभिसमावृत्येति अध्ययनानन्तरकर्तव्यं समावर्तनमुच्यते। ननु गुरुमुखोच्चारणानूच्चारणं ह्यध्ययनम्। तत् शब्दराश्येकविषयकमिति कथमर्थज्ञानस्येतो लाभ इत्यत्राह अर्थावबोधपर्यन्तं हीति। मीमांसाप्रथमाधिकरण एव—स्वाध्यायोऽध्येतव्य इति वाक्यं न स्वर्गाद्यर्थमध्ययनं विधत्ते, किंतु अर्थज्ञानार्थम्; दृष्टे संभवति अदृष्टकल्पनानुपपत्तेरिति अर्थज्ञानस्योद्देश्यतायाः स्थापितत्वात् तस्य च मीमांसामन्तरा जननायोगात् मीमांसेतिकर्तव्यताकवेदाध्ययनरूपकरणनिष्पन्ने

इतश्च न विद्यातः पुरुषार्थः—

(पू) नियमात् । ३ । ४ । ७ ॥

(ईशावास्य-२) "कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः" इत्यात्मविदः पुरुषायुषस्य सर्वस्य कर्मसु नियमेन विनियोगात् कर्मण एव फलमित्यवगम्यते । विद्या तु कर्माङ्गमिति ॥ ७ ॥

एवं प्राप्ते प्रचक्ष्महे—

अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात् । ३ । ४ । ८ ॥

तुशब्दात् पक्षो व्यावृत्तः । विद्यात एव पुरुषार्थः ; कुतः ? अधिकोपदेशात् । कर्मसु कर्तुर्जीवात् हेयप्रत्यनीकानवधिकातिशयासंख्येयकल्याणगुणाकरत्वेनाधिकस्यार्थान्तरभूतस्य परस्य ब्रह्मणो वेद्यतयोपदेशात् भगवतो बादरायणस्य विद्यातः पुरुषार्थः (फलम्) इत्येवमेव मतम् । लिङ्गानि तिष्ठन्तु ; वेद्यतयोपदेशस्तु तावत् कर्तुः प्रत्यगात्मनोऽधिकस्यैव । कथम् ? तद्दर्शनात् - प्रत्यगात्मन्यशुद्धे शुद्धेऽप्यसंभावनीयानन्तगुणाकरस्य वेद्यस्य निरस्तनिखिलहेयगन्धस्य सर्वज्ञस्य स्वसंकल्पकृतजगदुदयविभवलयलीलस्य सर्वशक्तेर्वाङ्मनसापरिच्छेद्यानन्दस्य जीवाधिपस्य कृत्स्नप्रशासितुः परस्य ब्रह्मणो वेदनोपदेशवाक्येषु दर्शनात्, (छा. ८-१-५) "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः", (छा. ६-२-३) "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" (मु. १-१-९) "यः सर्वज्ञः सर्ववित्", (श्वे. ६-८) पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी "ज्ञानबलक्रिया च", (तै. आन.८-४) "स एको ब्रह्मण आनन्दः", (तै. आन.-

---

सत्येवार्थज्ञाने समावर्तनावकाशात् । न हि सेतिकर्तव्यताकाध्ययने कृतेऽपि अर्थज्ञानं साङ्गयागादिजन्यस्वर्गादिवत् कालान्तरभावि ; येनार्थज्ञानानन्तरमित्यर्थो न लभ्येत । मीमांसासमनन्तरभावित्वात् अर्थज्ञानस्य । एवं सशिरस्कवेदाध्ययनजन्यज्ञानस्य कर्मणि विनियोगाच्च कर्माङ्गत्वानर्हा विद्या स्वाध्यायाधीना नास्तीति गम्यत इति ॥ ६ ॥

**नियमात्** । कर्मापेक्षया विद्यायाः प्राधान्ये तस्या अनुष्ठेयरूपत्वे च कर्मस्वेव पूर्णायुर्विनियोगो न युज्यते । अतः पुरुषजीवनकालत्वव्यापकतारूपनियमस्य कर्मस्वेव बोधनात् ब्रह्मविद्या नाम विलक्षणा काचिन्नास्तीति कर्तृज्ञानमेव विद्येति कर्मैव प्रधानमिति भावः ॥ ७ ॥

वृत्तं शारीरकभागमधीतवत इयमाशंका न भवितुमर्हतीति गमयन् सिद्धान्तमारभते अधिकेति । **अधिकस्य** जीवातिरिक्तस्याऽऽत्मन उपदेशात् **एवं** विद्यातः पुरुषार्थ इति **बादरायणस्य**—बादरायणेष्टम् । **अधिक**पदेन, 'अधिकं तु भेदनिर्देशादित्यादि प्रत्यभिज्ञाप्यते । ननु अधिकोपदेशादित्यस्य अधिकस्य वेद्यतयोपदेशादिति भाष्ये व्याख्यानात्, तद्दर्शनादित्यस्यापि अधिकस्यैव वेदनोपदेशवाक्येषु दर्शनादित्येवार्थवर्णने पौनरुक्त्यमिति चेत्—फलश्रुतिरर्थवाद इति पूर्वपक्ष्युक्तखण्डनं तद्दर्शनादिति । एवम् अधि-

४-१) "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति", (बृ. ६-४-२२) "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः", (श्वे. ६-९) "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः", (बृ. ५-८-९) "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः (एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः)", (तै. आ. ८-१) "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इत्यादिषु। तस्मात् वेदनोपदेशशब्देषु कर्तुः प्रत्यगात्मनः खद्योतकल्पस्याविद्यादिहेयसंबन्धयोग्यस्य गन्धोऽपि नास्तीति परमपुरुषविषयाया विद्यायास्तत्प्राप्तिरूपममृतत्वं तत्रतत्र श्रूयमाणं फलमिति विद्यातः पुरुषार्थ इति सुष्ठूक्तम् ॥ ८ ॥

लिङ्गान्यपि निरस्यन्ते—

तुल्यं तु दर्शनम्। ३। ४। ९॥

यदुक्तम्—ब्रह्मविदां कर्मानुष्ठानदर्शनात् विद्या कर्माङ्गम्-इति; तन्न। विद्याया अनङ्गत्वेऽपि तुल्यं दर्शनम्; ब्रह्मविदां कर्मानुष्ठानदर्शनमनैकान्तिकमित्यर्थः; अननुष्ठानस्यापि दर्शनात्। दृश्यते हि ब्रह्मविदां कर्मत्यागः, (ऐ. आ. ३-२-६) "एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः, किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादौ। अतो ब्रह्मविदां कर्मत्यागदर्शनान्न विद्या कर्माङ्गम्॥ कथमिदमुपपद्यते-ब्रह्मविदां कर्मानुष्ठानमननुष्ठानञ्च॥ फलाभिसन्धिरहितस्य यज्ञादिकर्मणो ब्रह्मविद्याङ्गत्वात् तथाविधस्य कर्मणोऽनुष्ठानदर्शनमुपपद्यते—वक्ष्यति च, (शा. ३-४-२९) "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति। फलार्थस्य तस्यैव

---

कस्योपदिष्टत्वेऽपि, यद्वेदनस्य फलश्रुतितया अमृतहेतुत्वादिवादः, तस्य जीवत्वे अर्थवादत्वशंका स्यात्। अमृतत्वहेतुतया वेदनविधायकवाक्येषु तत्त्वपरवाक्योपदिष्टस्य जीवादधिकस्यैवान्वयदर्शनात्तु विद्यातः फलमित्येव वक्तव्यमिति। इदमेतत्सूत्रभाष्यान्ततो ज्ञेयम्। तथाचाधिकस्य वेद्यत्वोपदेशात् तद्वेदनस्यैव फलहेतुतायाः स्पष्टं दर्शनात् विद्यातः फलमिति। अनेन अधिकस्येश्वरस्य कर्माराध्यतया स्वीकारेऽपि जीवात्मज्ञानादेवामृतत्वमिति ये तार्किकादयः प्रतिपन्नाः, तन्मतमपि निरस्तं भवति। तद्दर्शनादित्यस्य तस्यैवाधिकस्यामृतत्वहेतूपासनविषयकश्रुतिषु दर्शनादित्यर्थः। कर्मणोऽमृतत्वहेतुत्वस्य भवदनुक्तत्वात् दर्शनाभावाच्च कर्मणोऽङ्गत्वमेव भवेदिति चात्र निगूढम्। ब्रह्मोपासनं दृष्टविधया कर्माङ्गतां नार्हति; कर्म तु दृष्टविधया तदुपासननिर्वर्तकमिति वक्ष्यते। अतोऽपि उपासनस्यैव फलहेतुत्वं श्रुतिदृष्टमिति निष्कर्षणीयम् ॥८॥

प्रथमसूत्रेण प्रथमपूर्वपक्षसूत्रखण्डनमासीत्। अथ लिङ्गानां क्रमेण खण्डनम्। तुल्यमिति। आचारस्य यथा दर्शनमस्ति, आचरणाभावस्यापि तथा तदस्तीत्यर्थः। दर्शनमनैकान्तिकमिति। अनुष्ठानदर्शनमनियतम्—अव्यापकमित्यर्थः। यत्रयत्र विद्या तत्रतत्र कर्मानुष्ठानमिति नास्तीति। किमर्था इति। किंफलोद्देश्यका इत्यर्थः। फलापेक्षाविरहात् फलार्थमध्ययनं यजनञ्च न करिष्याम इत्यर्थः। कर्मणां

यज्ञादेः कर्मणो मोक्षैकफलब्रह्मविद्याविरोधित्वात् तस्याननुष्ठानदर्शनमुपपन्नतरम् । विद्यायाः कर्माङ्गत्वे कर्मत्यागः कथमपि नोपपद्यते ॥ ९ ॥

यदुक्तम्-श्रुत्यैव विद्यायाः कर्माङ्गत्वमवगम्यते इति—तत्राह—

असार्वत्रिकी । ३ । ४ । १० ॥

न सर्वविद्याविषयेयं श्रुतिः; अपितूद्गीथविषयैव, "यदेव विद्यया करोति' इति यच्छब्दस्यानिर्धारितविशेषस्य, 'उद्गीथमुपासीत' इति प्रस्तुतोद्गीथविशेषनिष्ठत्वात् । न हि, यत् करोति तत् विद्ययेति संबध्यते । यदेव विद्यया करोति, तदेव वीर्यवत्तरमिति विद्यया क्रियमाणं यच्छब्देन निर्दिश्य, तस्य हि वीर्यवत्तरत्वमुच्यते ॥ १० ॥

यच्चेदमुक्तम्—"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोः साहित्यदर्शनात् विद्या कर्माङ्गम् इति—तत्राह—

विभागः शतवत् । ३ । ४ । ११ ॥

'तं विद्याकर्मणी समन्वारभेते' इत्यत्र उक्तेन न्यायेन विद्याकर्मणोर्भिन्नफलत्वात् विद्या स्वस्मै फलाय समन्वारभते, कर्म च स्वस्मै फलायेति विभागो द्रष्टव्यः । शतवत्—यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते, क्षेत्रार्थं शतम्, रत्नार्थं शतमिति विभागः प्रतीयते—तथेहापि ॥

---

प्रधानत्वे तत्त्यागो न युज्यत इति भावः । अङ्गत्वेपि त्यागो न युक्त इति पृच्छति कथमिति । निष्कामकर्मण एवाङ्गत्वात् कामार्थकर्मत्यागः इहोक्तो युज्यत एवेत्याह फलेति । पूर्वपक्षिणा काम्यकर्मप्राधान्यस्यैवोक्तत्वात् इदमनुपपन्नमेवेत्यर्थः। तदनेन स्वपक्षाविरोधमात्रं नोक्तम्; किंतु परपक्षविरोधोऽपि ॥ ९ ॥

असार्वत्रिकी । सर्वत्र कर्मणि संबद्धा या विद्या कर्तृज्ञानरूपा, सा न; किंतु कतिपयप्रयोगे फलार्थमनुष्ठीयमानत्वादनियता उद्गीथादिविद्येयमित्यर्थः । विद्ययेति श्रुतिः न सर्वत्र न सर्वविद्याविषयिणी, कर्मतदङ्गकलापतत्कर्त्रादिसर्वज्ञानपरा नेत्यर्थः । विविदिषन्ति यज्ञेनेत्यत्र यज्ञस्येव विद्यायाः विधेयान्तर्भावे श्रुत्या सर्वग्रहणं स्यात् । विद्यया यत् करोतीति अनुवाद्यकोटिनिविष्टत्वात् अनुवादस्य सति संभवे संनिहितगामित्वमिति न्यायेन संनिहितोद्गीथविद्यैव ग्राह्येत्याह नहीति । नन्वेवं संनिधानात् उद्गीथे रसतमत्वदृष्टिमात्रं ग्राह्यं स्यादिति चेन्न-उद्गीथमुपासीत तस्योपव्याख्यानमिति वक्ष्यमाणसर्वविद्याप्रक्रमात् प्रकरणागतसर्वविद्याग्रहणस्यैवोचितत्वात् ॥ १० ॥

स्वस्मै स्वकीयाय । द्वन्द्वसमासत्वात् समप्राधान्यावगमात् अन्यतरस्याङ्गत्वमत्र न विवक्षितम् । प्रधानोक्त्यैवाङ्गस्यार्थसिद्धतया तन्निर्देशो व्यर्थश्च । परविद्यावत् नामब्रह्मेत्युपासीतेत्येवमैश्वर्यफलाः काश्चित् ज्योतिष्टोमादितुल्या अपि विद्याः सन्ति । मृतश्च ता विद्याः तानि च कर्माणि अनुवर्तन्ते । यत्फलेन पूर्वं भाव्यम्, तदनन्तरमन्यफलं भविष्यति । अतोऽत्र विद्यापदेन कर्मपदेन वा अङ्गग्रहणं न युक्तमिति भावः । वाक्यमिदमविद्वद्विषयम् । न स्वर्चिरादिमार्गगविषयम् । तत्र कर्मसाहित्यायोगात् ॥ ११ ॥

अध्ययनमात्रवतः । ३ । ४ । १२ ॥

यदुक्तम्-विद्यावतः कर्मविधानात् विद्या कर्माङ्गम्-इति—नैतद्युक्तम्, (छा. ८-१५-१) "वेदमधीत्य" इत्यध्ययनमात्रवतो विधानात् । न चाध्ययनविधिरेवार्थबोधे प्रवर्तयति ; आधानवत् अध्ययनस्याक्षरराशिग्रहणमात्रे पर्यवसानात् । गृहीतस्य च स्वाध्यायस्य फलवत्कर्मावबोधित्वदर्शनात् तन्निर्णयफले तदर्थविचारे पुरुषः स्वयमेव प्रवर्तते । ततः कर्मार्थी कर्मज्ञाने प्रवर्तते, मोक्षार्थी च ब्रह्मज्ञान इति न विद्या कर्माङ्गम् । यद्यप्यध्ययनविधिरेवार्थावबोधे प्रवर्तयति, तथापि न विद्या कर्माङ्गम् ; अर्थज्ञानादर्थान्तरत्वात् विद्यायाः । यथा ज्योतिष्टोमादिकर्मस्वरूपविज्ञानात् फलसाधनभूतं कर्मानुष्ठानमर्थान्तरम् ; तथाऽर्थज्ञानरूपाद्ब्रह्मस्वरूपविज्ञानादर्थान्तरमेव ध्यानोपासनादिशब्दवाच्या पुरुषार्थसाधनभूता विद्येति न तस्याः कर्मसंबन्धगन्धो विद्यते ॥ १२ ॥

नाविशेषात् । ३ । ४ । १३ ॥

यच्चोक्तम्—"कुर्वन्नेवेह कर्माणि" इति आत्मविदं ज्ञानात् व्यावर्त्य यावज्जीवं कर्मानुष्ठाने नियमयतीति—तन्नोपपद्यते ; अविशेषात् । न ह्ययं नियमः फलसाधनभूतस्वतन्त्रकर्मविषय

'तद्धतो विधानात्' इति तच्छब्देन विद्या ह्यभिमता पूर्वपक्षिणः । अधीत्येति वाक्येऽध्ययनमात्रोक्त्या विद्यावत इति न लभ्यत इत्याह **अध्ययनमात्रे**ति । **आधानव**दिति । वसन्ते ब्राह्मणोऽग्नीनन्वादधीतेत्यादि आधानविधायकवाक्यं स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिवाक्यञ्चानारभ्याधीतम् ; न तु क्रतुप्रकरणगतम् । अतोऽध्ययनस्याधानस्य च न कर्माङ्गताबोधकं प्रमाणमस्ति । कर्मानुष्ठानं प्रति अग्नेर्विद्यायाश्चापेक्षायाम्, य आधानसिद्धाग्निमान् अध्ययनाधीनार्थज्ञानवांश्च तल्लाभेन शान्ताकांक्षाः कर्मविधयो न स्वयं कस्यचिदाधानमध्ययनं वाऽऽक्षिपन्तीति स्थितिः । तत्र यथाऽध्ययनविधेः क्रत्वनुष्ठानपर्यन्ते प्रवृत्तिर्नास्तीति मीमांसकेष्टम्, तथा क्रतूपयोग्यर्थज्ञानपर्यन्तेऽपि न प्रवृत्तिरित्यपि संमन्तव्यम् । स्वाध्यायोऽध्येतव्य इति तव्यप्रत्ययबलेनाक्षरराशेरेव कर्मत्वावगमात् अध्ययनमात्रसंस्कारकमिति मीमांसकोक्तत्वाच्च स्वाध्यायाप्तेरेव फलत्वात् । न च विध्यभावेऽर्थज्ञानासंभवः ; स्वयमेव भावादित्याह **गृहीतस्य चे**ति । सर्वमिदं ग्रन्थारम्भ एव सम्यक् भाषितम् । अधीत्येति ल्यपा च नाङ्गत्वं बोध्यते ; अभिसमावृत्येत्यत्रेवोत्तरकालमात्रे तदुपपत्तेः । मीमांसकेष्टमर्थज्ञानपर्यन्तत्वमन्वारुह्याप्याह **यद्यपी**ति । इदानीञ्चैवं सूत्रार्थः— अर्थज्ञानपर्यन्ताध्ययनमात्रवत एव कर्मसु विनियोगात् ; तज्ज्ञानविलक्षणोपासनरूपविद्यायाः कर्माङ्गत्वे श्रुतिर्न प्रमाणमिति । एवञ्चाधीत्येत्यत्रार्थज्ञानविवक्षायामपि तत्र क्रत्वादिज्ञानं क्रत्वनुष्ठाने, अभ्रिकोपदेशादिति प्रागुक्तब्रह्मज्ञानं ब्रह्मोपासने च यथायथमुपयुज्यत इति ॥

**नियमा**दिति कृतं पूर्वपक्षं सूत्रद्वयेन परिहरति । तत्र कुर्वन्नेवेत्यस्य कर्मविधित्वस्वीकारेण प्रथमः परिहारः । अनुमतिपरत्वस्वारस्यदर्शनेन द्वितीयः । **फलसाधनभूते**ति । काम्यकर्मविधिरत्रेति पूर्वपक्षी । 'न कर्म लिप्यते नरे' इत्यस्य च कर्ममध्ये विधिबलात् क्रियमाणं हिंसादिकं न पापलेपाय कल्पत इत्यर्थः ।

**इति विशेषहेतुरस्ति ; विद्याङ्गभूतकर्मविषयतयाऽप्युपपत्तेः । "कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति च, विदुषस्त्वाप्रयाणादुपासनस्यानुवर्तमानत्वात् ॥ १३ ॥**

**एवमर्थस्वाभाव्येन चोद्यं परिहृत्य, "कुर्वन्नेवेह कर्माणि" इत्यस्य वाक्यस्यार्थमाह—**

**स्तुतयेऽनुमतिर्वा । ३ । ४ । १४ ॥**

**वाशब्दोऽवधारणार्थः । "ईशावास्यमिदं सर्वम्" इति विद्याप्रकरणात् विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम् । विद्यामाहात्म्यात् सर्वदा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति । वाक्यशेषश्चैवमेव दर्शयति, "एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" इति । अतो न कर्माङ्गं विद्या ॥ १४ ॥**

**कामकारेण चैके । ३ । ४ । १५ ॥**

---

सिद्धान्ती तु, 'विदुषा काम्यकर्मणस्त्याज्यत्वात् उपासनसहकारितया निष्कामकर्मविधिः ; फलस्यानुद्दिष्टत्वादेव न तल्लेपप्रसक्तिः' इत्याह । एवमर्थद्वये पूर्वपक्ष्युक्त एव ग्राह्य इत्यत्र विशेषाभावान्न पूर्वपक्षसाधनमित इति भाव । एतत्सूत्राभिमतार्थानुसारेण मन्त्रोत्तरार्धस्यैवमर्थः— **एवं त्वयि**-अङ्गतया कर्मणामनुष्ठेयत्वमेव त्वयि विद्याधिकारिणि । **नान्यथेतोऽस्ति** कर्माभावेऽपि विद्या निष्पद्येतेति नास्ति । करणे कर्म लेपकं स्यादिति तु न । अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचिदिति सात्त्विकत्यागपूर्वकर्मकरणे तदप्रसक्तेः । न रमत इति **नरः** विरक्त इत्यर्थः । **कर्मणैवहीत्यस्य** कर्मयोगेनैव ज्ञानयोगं विनैव आत्मावलोकनरूपसिद्धिं प्राप्तवन्त इति वास्तवार्थो गीताभाष्ये द्रष्टव्यः । अस्य तु सूत्रस्यापातार्थमादायापि पूर्वपक्षनिरासकत्वात् तदनुरोधेनोपासनाङ्गकर्मपरत्वे स्थित्त्वोक्तमत्र । संसिद्धिपदस्य स्वर्गादिफलपरत्वं प्रकरणविरुद्धम् । मोक्षो वा उपासनं वा भवतु संसिद्धि । एवकारश्च नान्ययोगव्यवच्छेदाय ; किन्तु अयोगव्यवच्छेदायेति ॥

वास्तवार्थ एवोच्यताम् ; किमर्थमेतत्कथनमित्यत्राह **अर्थस्वाभाव्येन चोद्यं परिहृत्येति** । विविदिषन्ति यज्ञेनेत्येवं विद्यायाः कर्माङ्गकत्वस्य बहुप्रमाणसिद्धत्वात् तथानिर्वाहोऽप्यत्र कर्तव्य इति शिक्षणार्थं तदुक्तिः । अस्य वाक्यस्यार्थस्त्वन्य इति भावः । **अनुमतिरिति** । विधिपक्षे कर्माणीति विद्याङ्गकर्मपरम् ; अत्र तु काम्यनिषिद्धपरम् । ब्रह्मवित् त्वं कामं काम्यं निषिद्धञ्च कुर्वन् जीव । अथापि न ते तदधीनो बन्धः । भविष्यता दर्शनसमानाकारध्यानेन सर्वस्य विनंक्ष्यत्त्वात् । अतो न कर्म लिप्यते नरे त्वयीत्येतदेवम् प्रामाणिकम् ; **नान्यथेतोऽस्ति**=नैव लेपावकाश इति उत्तरार्धयोजनाऽत्र पक्षे कार्या । विस्तरोऽस्मदीये ईशोपनिषदाचार्य भाष्यतात्पर्यग्रन्थे द्रष्टव्यः ॥

एवं पूर्वपक्ष्युक्तलिङ्गानामसाधकत्वमदर्शि । अथ स्वयं कर्माङ्गत्वं विद्याया नेत्यत्र लिङ्गान्युपन्यस्यति । **विविदिषन्ति यज्ञेन दानेन,** कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते इत्यादीनि स्पष्टवाक्यानि तु **तद्दर्शनादि**त्यत्रैवाभिप्रेतानीति न पृथगुच्यन्ते । यदि कश्चित् जीवातिरिक्तब्रह्मविषयकविद्याया अपि क्रतूपयोगमेवोद्गीथविद्याया इव कथमपि परिकल्प्य काम्यकर्मप्राधान्यं मन्वीत, तं प्रत्याह **कामकारेणेति** । **काम-**

अपि चैवमेके शाखिनः कामकारेण ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते, (बृ. ६-४-२२) "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" इति। विदुषो विरक्तस्य कामकारेण गार्हस्थ्यकर्मत्यागं ब्रुवदिदं वचनं ब्रह्मविद्यायाः कर्मानङ्गत्वं दर्शयति। यज्ञादिकर्माङ्गत्वे हि विद्यायाः, विद्यानिष्ठस्य कामकारेण गार्हस्थ्यत्यागो न संभवति। अतो न विद्या कर्माङ्गम् ॥ १५ ॥

उपमर्दं च । ३ । ४ । १६ ॥

पुण्यापुण्यरूपस्य समस्तसांसारिकदुःखमूलस्य कर्मणो ब्रह्मविद्ययोपमर्दं च प्रतिवेदान्तमधीयते, (मु. २-२-८) "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादिकम्। तत् विद्यायाः कर्माङ्गत्वे न संगच्छते ॥

ऊर्ध्वरेतस्सु च शब्दे हि । ३ । ४ । १७ ॥

ऊर्ध्वरेतस्सु आश्रमेषु ब्रह्मविद्यादर्शनात् तेष्वग्निहोत्रदर्शपूर्णमासादिकर्माभावाच्च न विद्या कर्माङ्गम् ॥ ननूर्ध्वरेतस आश्रमा न सन्त्येव, (आप. ३-१४-८) 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिनाऽग्निहोत्रदर्शपूर्णमासादीनां यावज्जीवाधिकारश्रुतेः; श्रुतिविरुद्धानां स्मृतीनां चाप्रामाण्यात्। अत आह-शब्दे हि इति। वैदिक एव हि शब्दे ते दृश्यन्ते, (छा. २-२३-१) "त्रयो धर्मस्कन्धाः", (छा. ५-१०-१), "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते", (बृ. ६-४-२२) 'एत' मेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादौ। यावज्जीवश्रुतिस्त्वविरक्तविषया ॥ १७ ॥

---

**कारेण**—कामयित्वा; स्वेच्छयेति। **गार्हस्थ्यत्यागम्** गृहस्थकर्मणां काम्यानां त्यागम्। **किमिति**। येषामस्माकमयं परमात्मा सर्वविधबन्धुरस्ति, अनुभूयमानश्च, तेषामस्माकं प्रजादिसाध्यं किमस्ति। तस्मात्त तदर्थे कर्मणि प्रवर्तामहे इत्यर्थः। ब्रह्मविद्याया अपि चेत् काम्यकर्मार्थित्वमिष्यते, तत्त्यागस्य, पृथक्फलार्थित्वस्य च वचनं विरुद्धयेतेति भावः। **आचारदर्शना**दिति सूत्रदर्शितजातीयमेव श्रुतिवाक्यं मुखान्तरेण प्राप्तशंकापरिहारायेहोपन्यस्यत इति न पौनरुक्त्यम् ॥ प्रजार्थं कर्म गृहस्थकर्मेति **गार्हस्थ्ये**त्युक्तम्। कर्मत्यागममधीयते इत्याध्याहृत्य सूत्रार्थो वर्णनीयः ॥ **१५** ॥

ब्रह्मविद्यायाः काम्यकर्मोपकारकत्वं भवदिष्टम्; तस्याः काम्यकर्मनाशकत्वावसाय तु विपरीतमेव श्रौतमित्याह **उपमर्दश्चे**ति। उपमर्दश्चाधीयते इत्यर्थः। **एके** इति नानुषञ्जनीयम्, प्रायः सर्वत्रोपलम्भादिति बोधयितुं **प्रतिवेदान्त**मित्युक्तम्। **इत्यादिक**मिति पदम् **अधीयत** इति बहुवचनान्ताध्ययनक्रियाविशेषणम्; पृथग्वाक्यं वा। **तत्** अध्ययनम् ॥

अस्तु तर्हि कर्तृज्ञानातिरिक्ता ब्रह्मविद्याऽपि गृहस्थकर्मभूतनित्यनैमित्तिकज्योतिष्टोमाद्यङ्गम्; तत्राऽऽह-**ऊर्ध्वे**ति। **आश्रमेष्वि**ति पुरुषपरम्। संन्यासिषु च ब्रह्मविद्या दृश्यते। संन्यासिनः **शब्दे** वेदप्रमाणे **दृश्यन्ते** हीति सूत्रार्थः। **अविरक्तविषया**—'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति श्रुतसंन्यासौपयिकदारपुत्रक्षेत्रादिविषयवैराग्यरहितपुरुषविषयेत्यर्थः ॥

**परामर्शं जैमिनिरचोदनाच्चापवदति हि । ३ । ४ । १८ ॥**

**यदिदम्— "त्रयो धर्मस्कन्धाः" इत्यादौ वैदिके शब्दे ऊर्ध्वरेतस आश्रमा दृश्यन्ते ; अतस्ते सन्त्येवेति—नैतदुपपद्यते ; यतः "त्रयो धर्मस्कन्धा" इत्यादिषु तेषामाश्रमाणां** परामर्शमात्रं **क्रियते—अनुवादमात्रमित्यर्थः । कुत एतत् ?** अचोदनात् **अविधानादित्यर्थः । न ह्यत्र विधिशब्दः श्रूयते ; "त्रयो धर्मस्कन्धाः" इत्यादिना हि प्रकृतं प्रणवेन ब्रह्मोपासनं स्तूयते, "ब्रह्मसंस्थोऽमृतत्वमेति" इत्युपसंहारात् । अतोऽन्यार्थमनुवादमात्रमत्र क्रियते तेषामाश्रमाणाम् । "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति च देवयानविधिपरत्वात् तत्रापि नाश्रमान्तरविधिसंभवः । अपि चापवदति हि श्रुतिराश्रमान्तरम्,** (यजु. १-५-२) **"वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यादिका । अतः ऊर्ध्वरेतस आश्रमा न सन्तीति जैमिनिराचार्यो मन्यते ॥ १८ ॥**

---

संन्यासाश्रमस्यैवाश्रौतत्वादप्रमाणिकत्वं शंकते पूर्वपक्षी **परामर्श**मिति । आहेति सूत्रे क्रियाध्याहारः । गृहस्थाश्रमे क्लेशे सर्वधर्मानुष्ठानाशक्ति संन्यासाश्रमधर्मस्य सम्यङ्निर्वाहानुकूल्यञ्च परिशील्य ये यदृच्छया त्यक्तपूर्वाश्रमाः तदनुवादमात्रम् । यावज्जीवश्रुतिविरुद्धस्याश्रमस्य स्मृत्युक्तस्यापि प्रामाणिकत्वायोगात् ; **अचोदनाच्च**—संन्यासाश्रमस्य कर्तव्यतायां विध्यभावाच्च । यदहरेव विरजेदिति वाक्यमपि न संन्यासविधायकम् ; किंतु 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' 'प्रजातन्तुं मा व्यवच्छेत्सीः' इत्यादिकमुल्लङ्घ्यापि ब्रह्मचर्यादारभ्य अशक्तपुरुषक्रियमाणसंन्यासाश्रमस्वीकारसंभवकथनमात्रमित्याशय. । **प्रकृत**मिति ; वक्तुमारब्धमित्यर्थः ; ब्रह्मसंस्थ इत्यनेनोपासनस्य, तदनन्तरमेव च, ओंकारः संप्रास्रवदिति प्रणवस्य तदङ्गस्य वक्ष्यमाणत्वात् । **उपसंहारादिति ;** अन्ते विधानादित्यर्थः । **ब्रह्मोपासनस्ये**ति प्रयोगात् कर्मात्मज्ञानवत् ब्रह्मोपासनमप्यङ्गं भवत्विति पूर्वपक्ष्याशयोऽवसीयते । य कश्चिदस्तु धर्मस्कन्धः, सर्वत्र ब्रह्मणि निष्ठायाममृतत्वं भवतीति वाक्यार्थः । न तु धर्मस्कन्धविधानम् । अत्र धर्मस्कन्धत्वेन कीर्तनात्, तत्तद्धर्मस्यैव प्राधान्यम् . तदङ्गं ब्रह्मविद्येत्यपि पूर्वपक्षिणो गूढाशय । अप्रामाणिकत्वेन तस्यैव निराकरणसंभवे तावदंशेऽप्यवकाशो न देय इत्याशयेन तु अप्रामाणिकत्वमेवोक्तम् । एतेन—विधिर्वा भवतु परामर्शो वा । संन्यासस्य तत्रोपासनस्य च स्थितत्वे ब्रह्मविद्यायाः यज्ञाद्यंगत्वमिति पूर्वपक्षिवादो गत एवेति परामर्शादिसूत्राणां शांकरपक्ष इव पृथगधिकरणत्वमेव युक्तम् ; न पूर्वाधिकरणान्तर्भाव इति शङ्का परास्ता, तत्तदाश्रमधर्माङ्गत्वमस्तु ब्रह्मविद्याया इति पूर्वपक्षस्यानुवर्तनात् । **(सारावलौ** द्रष्टव्यम्) एवमपि स यथाशक्ति तदप्रामाणिकत्वस्थापनेऽपि यतते । संन्यासधर्मस्याप्रामाणिकत्वे संन्यासिनोऽमृतत्वकथनं पुनर्जन्मान्तरे ब्रह्मचर्यगार्हस्थ्यान्यतरधर्माङ्गसंपत्तिमुखेन ब्रह्मविद्याफलिष्य त्याशयेनास्त्विति पूर्वपक्षी विवक्षति । **वीरे**ति । अग्निविनाशनं देववीरहननमेव भवति । अतो **गृहस्थ एव** स्यात । सूत्रे **चकार**. यावज्जीवश्रुतिविरोधसमुच्चायकः । **अपवदति** निन्दतीत्यर्थः । एवञ्च स आश्रमो नानुष्ठे . अलसस्वच्छन्दपरिग्रहमात्रत्वादिति ॥ १८ ॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः । ३ । ४ । १९ ॥

गृहस्थाश्रमवत् आश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते । कुतः ? साम्यश्रुतेः । उपादेयतयाऽभिमतगृहस्थाश्रमसाम्यं हि तेषामप्याश्रमाणां श्रूयते । "त्रयो धर्मस्कन्धाः" इत्यारभ्य ब्रह्मसंस्थस्तुत्यर्थतया सङ्कीर्तनं गृहस्थाश्रमस्येतरेषां च समानम् । अथ गृहस्थाश्रमस्यानुवादः प्राप्तौ सत्यामेव संभवतीति तस्य प्राप्तिरवश्याभ्युपेत्येति मतम्— तत् इतरेषामपि समानमन्यत्राभिनिवेशात् । न च— गार्हस्थ्यधर्म एव, यज्ञोऽध्ययनं दानं तपो ब्रह्मचर्यम् इति सर्वैः शब्दैरभिधीयते ; ब्रह्मचर्यतपसोर्गृहस्थस्यैव संभवादिति—युक्तम्, "त्रयो धर्मस्कन्धाः" इति त्रित्वेन संगृह्य, "प्रथमः...द्वितीयः...तृतीयः" इति विभाग वचनानुपपत्तेः । अतः, "यज्ञोऽध्ययनं दानम्" इति गृहस्थाश्रम उच्यते । अध्ययनशब्दो वेदाभ्यासपरः । तपश्शब्देन वैखानसपारिव्राज्ययोर्ग्रहणम्, उभयोः तपःप्रधानत्वात् । तपश्शब्दो हि कायक्लेशे रूढः ; स च द्वयोरपि समानः । ब्रह्मचारिधर्म एव ब्रह्मचर्यशब्देनाभिधीयते । 'ब्रह्मसंस्थोऽमृतत्वमेति' इति परत्र श्रूयमाणो ब्रह्मसंस्थशब्दो यौगिकः सर्वाश्रमसाधारणः ; सर्वेषामाश्रमिणां ब्रह्मसंस्थासंभवात् । ब्रह्मणि संस्था-संस्थितिः ब्रह्मसंस्थत्वम् ; तच्च सर्वेषां संभवत्येव । ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजः ; तेष्वेव ब्रह्मनिष्ठोऽमृतत्वभाक् भवति । तदेतत् विस्पष्टमुक्तं भगवता पराशरेण, "प्राजापत्यं

---

अग्रवर्णं ब्राह्मणमुपनयीतेत्येवं विधिबाहुल्यात् ब्रह्मचर्ये साम्यकथनायोगात **गृहस्थाश्रमव**दिति तन्मात्रकथनम् । नन्वत्र गृहस्थाश्रममात्रमेव कीर्त्यते, सर्वकीर्तनाभिसंधौ ब्रह्मचर्यं हि प्रथमं कीर्त्येत । उपरि तपोब्रह्मचर्यकथनं गृहस्थाश्रमसंभावितत**द्विषयकम्**, अत एव तस्मिन्नाश्रमे तस्यतस्याल्पत्वात् द्वितीयत्वेन तृतीयत्वेन च व्यवहार इति मतिं व्युदस्यति **नचे**ति । तथासति, 'ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' इति वाक्यं न घटत इत्यपि भाव्यम् । प्रथमं गृहस्थाश्रमकथनं तु तस्य श्रैष्ठ्यात्, ज्ञानयोगात् कर्मयोगस्येव लोकसंग्रहार्थत्वादिनोत्कर्षात्, संन्यासोत्कर्षभ्रान्तिवारणार्थत्वाच्चेति भावः । श्रुतौ **ब्रह्मचारि**शब्द एवास्ति, न ब्रह्मचर्यशब्दः ; अथापि पूर्वानुसारेण तन्निष्ठधर्म एव पर्यवसानात् तथोक्तिः । **वेदाभ्यासे**ति । न तु ग्रहणाध्ययनम्, तस्य पूर्वाश्रमकार्यत्वादिति भावः । नन्वेवमपि त्रयाणामेवोक्तया सपत्नीकवानप्रस्थधर्म एव तप इति, नोर्ध्वरेतस्सिद्धिरित्यत्र, अनुवादरूपत्वात् प्रमाणप्रतिपन्नस्य संन्यासस्यापि तेन ग्रहणं विनिगमनाविरहादित्याशयेनाह **तपश्शब्दे**नेति । **ब्रह्मचारिधर्म एवे**ति । न तु गृहस्थधर्मभूतमुख्यं ब्रह्मचर्यमभिधीयत इत्यर्थः । प्राचीनैः **ब्रह्मसंस्थ**पदं धर्मस्कन्धान्तर्गतविषयकमेव व्याख्यातम् । **शांकरे** तु तदनभिमत्या त्रयो धर्मस्कन्धा इति वानप्रस्थपर्यन्तग्रहणमभिमत्य ब्रह्मसंस्थपदं चतुर्थाश्रमविषयं व्याख्यातम् । तन्निरासाभिप्रायेणाह **ब्रह्मे**ति । ननु तपःपदेन संन्यासस्यापि ग्रहणे तन्निष्ठस्य सर्वस्यामृतत्वभाक्त्वात् ब्रह्मसंस्थपदं तदन्तर्भूतकिञ्चित्परमिति कथमुच्यतेत्यत्र, न सर्वः संन्यासी मुक्तिमेवैति इत्याह **ब्रह्मनिष्ठाविकला** इति । **प्राजापत्यं** कश्यपादिसंबन्धि

ब्राह्मणानाम्'' (वि. पु. १-६) इत्यारभ्य, ''ब्राह्मं संन्यासिनां स्मृतम्'' इत्यन्तेन वर्णानामाश्रमाणां च केवलानां ब्रह्मलोकप्राप्त्यन्तं फलमभिधाय, ''एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये। तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः'' इति तेष्वेव ब्रह्मनिष्ठानां ब्रह्मप्राप्तिमभिदधता। अतो गृहस्थाश्रमतुल्याः ऊर्ध्वरेतस आश्रमा अपि दृश्यन्त इति तेऽप्यनुष्ठेयाः। (छा. ५-१०-१) ''ये चेमेऽरण्ये श्रद्धा तप इत्युपासते'' इति च अरण्ये इति तपःप्रधानाश्रमप्राप्त्यपेक्षत्वात् देवयानविधानस्य तत्रापि तत्प्राप्तिरङ्गीकरणीया ॥ १९ ॥

परामर्शपक्षे विधानपक्षे च गृहस्थाश्रमतुल्यमेषामप्यनुष्ठेयत्वमित्युपपाद्य, विधिरेवायमाश्रमाणां सर्वेषाम्, नानुवाद इत्युपपादयितुमाह—

विधिर्वा धारणवत् । ३ । ४ । २० ॥

वाशब्दोऽवधारणार्थः। विधिरेवायमाश्रमाणाम्; धारणवत्-यथा दिष्टाग्निहोत्रे, 'अधस्तात् समिधं धारयन् अनुद्रवेत्; उपरि हि देवेभ्यो धारयति' इत्यत्रानुवादसरूपादपि वाक्यात्, उपरिधारणस्याप्राप्तत्वात् विधिराश्रीयते; तदुक्तं शेषलक्षणे, (पू. मी. ३-४-५-) ''विधिस्तु धारणेऽपूर्वत्वात्'' इति—तथाऽत्राप्यप्राप्तत्वाद्विधिरेवाश्रयणीयः। (जाबालोप. ४-ख.) ''ब्रह्मचर्यं समाप्य गृही भवेत्। गृहाद्वनी भूत्वा प्रव्रजेत्। यदि वेतरथा, ब्रह्मचर्यादेव प्रव्रजेत्; गृहाद्वा; वनाद्वा। यदहरेव विरजेत्, तदहरेव प्रव्रजेत्'' इति जाबालानामाश्रमविधिमनन्तमिव कृत्वा, एतेष्वन्यपरेष्वपि वाक्येष्वाश्रमप्राप्तिरवश्याश्रयणीयेत्युपपादितम्। एवमाश्रमान्तरविधानात् ऋणश्रुतिर्यावज्जीवश्रुतिरपवादश्रुतिश्च, अविरक्तविषया एवेति वेदितव्याः। अन्याश्च, ब्रह्मविदः कर्मणामाप्रयाणादवश्यकर्तव्यताविधायिन्यः श्रुतयः स्मृतयश्च स्वस्वाश्रम-

---

स्थानम्। ये चेति गृहस्थादिग्राहित्वेऽपि **अरण्य** इति निर्देशः संन्यासिमुखेन सर्वग्रहणायेति भावेनाह **तत्रापी**ति ॥ १९ ॥

नन्वत्र सर्वविषयेऽनुवादरूपत्वेऽपि गृहस्थाश्रमो विधेयः; अन्यथा आचार्यकुलान्निष्क्रम्य ब्रह्मचारी वा स्नातको वा भवन् अगृहस्थ एव कश्चित् तिष्ठासेदिति चेत्—तर्हि संन्यासोऽपि विधेयः; अन्यथा गृहाद्विनिष्क्रम्य गृहस्थधर्मान् संत्यज्यैव च कश्चित् तिष्ठासेत्। तं प्रति गार्हस्थ्यत्यागाभिसंधौ संन्यासिना भाव्यमिति तद्विधिरप्यत्र विवक्षणीय इत्याह **विधिर्वे**ति। **विधिस्तु धारणे** इति। 'अधस्तात् समिधं धारयन् अनुद्रवेत्; उपरि हि देवेभ्यो धारयती'ति वाक्यम्। मृताग्निहोत्रे स्रुचि गृहीतं पित्र्यं हविर्होतुं यदा गार्हपत्यादाहवनीयं प्रति गच्छेत्, तदा स्रुचोऽधस्तात् समिधं संमेल्य हस्तेन गृहीत्वा गच्छेत्। देवेभ्यश्चेत् हविर्दानम्, तदा हि समिध. स्रुग्दण्डोपरि संमेलनमिति तदर्थः। दैवहविस्त्यागार्थगमनकाले उपरिसमिद्धारणं प्रमाणान्तराप्राप्तं सिद्धवदनूद्यते। तत्र प्रापकप्रमाणस्याभावादस्यैव तथा विधिरूपत्वं (३-४-५) सिद्धान्तितम्। तद्वदिहाप्यनुवादवत् स्थितस्यापि विधित्वमेष्टव्यमित्यर्थः। **अपवादश्रुतिः। अपवादो** निन्दा, वीरहेत्येवम्। **अवश्यकर्तव्यते**ति। तत्तदाश्रमधर्माङ्गत्वं विद्याया अस्त्विति वादश्च न

धर्मविषयाः । अत ऊर्ध्वरेतस्सु च ब्रह्मविद्याविधानात् विद्यातः पुरुषार्थ इति सिद्धम् ॥२०॥

इति पुरुषार्थाधिकरणम् ॥ १ ॥

११०. स्तुतिमात्राधिकरणम् ३-४-२ ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् । ३ । ४।२१ ॥

**इदमिदानीं चिन्त्यते, (छा. १-१-३) "स एष रसानां रसतमः परमः परार्ध्योऽष्टमः, यदु(य उ)द्गीथः" इत्येवंजातीयकानि वाक्यानि क्रत्ववयवभूतोद्गीथादिस्तुतिमात्रपराणि, आहोस्वित् उद्गीथादिषु रसतमादिदृष्टिविधानार्थानीति । अत्र प्रतिपादितमुपासनपरत्वमङ्गीकृत्योपासनस्य पुरुषार्थत्वेन क्रतुषूपादानानियम उक्तः । किं युक्तम्? स्तुतिमात्रपराणीति । कुतः? उद्गीथाद्युपादानात् । क्रत्वङ्गभूतानि ह्युद्गीथादीन्युपादाय तेषां रसतमादित्वं प्रतिपादितम् । यथा जुह्वदीनां पृथिव्यादित्वं प्रतिपादयतो वचनस्य, "इयमेव जुहूः स्वर्गो लोक आहवनीयः" इत्यादिकस्य न स्तुतिमात्रपरत्वम्—तथेहापि । तदिदमाशङ्कते-**स्तुतिमात्रमुपादानादिति चेत् **इति । उद्गीथाद्युपादानात् तत्स्तुतिमात्रमेवैषां वाक्यानां विवक्षितमिति चेत्—**

**अत्रोत्तरं** नापूर्वत्वात् **इति । न स्तुतिमात्रत्वमुपपद्यते ; कुतः?** अपूर्वत्वात्-**अप्राप्तत्वात् ।**

---

युक्तः । आश्रमधर्माणां स्वतन्त्रफलसाधनत्वस्य श्रुतावदर्शनात् ब्रह्मविद्यायाः श्रूयमाणं फलमुपेक्ष्याश्रुतफलकाश्रमधर्माङ्गत्वस्य दुर्वचत्वात् । ब्रह्मविद्यायाः दृष्टविधया आश्रमधर्माङ्गत्वस्य दुर्निरूपत्वाच्च । 'तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन 'इति सर्वाश्रमधर्माणामपि ब्रह्मविद्याङ्गतया विधानात् तद्विरोधाच्च । विद्याङ्गत्वस्य धर्मेषु दृष्टविधयाऽस्मन्मते निरूपणादस्यैवात्यन्तोचितत्वाच्च । तदिदमुपरितनाधिकरणैः सुग्रहमिति नात्र विशिष्योक्तम् ॥ २० ॥

एवं जीवातिरिक्तब्रह्मतद्विद्याविध्यपलापपूर्वके उपनिषदां कर्मकाण्डशेषत्ववादे गलहस्तिते, दृष्टिविधिवाक्यराशिमात्रस्यार्थवादतयाऽपि स्वमनोरथं सफलयितुकामः तावन्मात्रार्थवादत्वं विलक्षणयुक्त्या वर्णयन् प्रत्यवतिष्ठते— मा भूत् ब्रह्मविद्यावाक्यानामर्थवादता । ब्रह्मदृष्ट्यादिपरत्वेन प्रतीयमानानां तु स्यादित्याक्षेपः । **स्तुतीति** । स एष रसानामित्यादिवाक्यकार्यमुद्गीथादिस्तवनमात्रम्, उद्गीथादेः कर्माङ्गतयोपादीयमानत्वात् जुह्वादिवाक्य इव तदन्वयौचित्यादिति चेन्न—**अपूर्वत्वात्** रसतमत्वादेरप्राप्ततया अनुवादासंभवात् स्तुतिपरत्वायोगात् । तथा **अपूर्वत्वात्**—उद्गीथविधिपूर्वकत्वस्य वा उद्गीथविधिं प्रति पूर्वत्वस्य वा वाक्येऽभावात् उद्गीथविधेः क्रतुप्रकरण एव सत्त्वेन एतदुपनिषद्वाक्यानां दूरस्थतया तद्विध्येकवाक्यत्वायोगादिति सूत्रार्थः । **अष्टम** इति । उत्तरोत्तरं रसं निर्दिश्य रसतमत्वमुद्गीथे उक्तम्—"एषां भूतानां पृथिवी रसः ; पृथिव्या आपो रसः ; अपामोषधयो रसः ; ओषधीनां पुरुषो रसः ; पुरुषस्य वाक् रसः ; वाच ऋक् रसः ; ऋचः साम रसः ; साम्न उद्गीथो रस इति । एषु रसेष्वष्टमोऽयमुद्गीथः **रसतमः** सारतमः । **परार्ध्यः** परस्योत्कृष्टस्य ब्रह्मणोऽर्धं स्थानमर्हतीति, तत्तुल्य इति । **स्तुतिः** प्रशंसा । **इयमेव** पृथिव्येवेत्यर्थः । न हि तत्र जुह्वादौ पृथिवीत्वादिदृष्टिर्विधीयते, तथैवेहापीति शंका ॥ २१ ॥

न ह्युद्गीथादयो रसतमादितया प्रमाणान्तरेण प्रतिपन्नाः ; येन तत्प्राशस्त्यबुद्ध्युत्पत्त्यर्थं रसतमादित्वेनानूद्येरन् । न चोद्गीथादिविधिरत्र संनिहितः ; येन, "इयमेव जुहूः स्वर्गो लोक आहवनीयः" इत्यादिवत् तदेकवाक्यत्वेन यया कया चन विधया तत्स्तुतिपरत्वमाश्रीयेत । अतः क्रतुवीर्यवत्तरत्वादिफलसिद्ध्यर्थमुद्गीथादिषु रसतमादिदृष्टिविधानमेव न्याय्यम् ॥२१॥

**भावशब्दाच्च । ३ । ४ । २२ ॥**

"उपासीत" इत्यादिभावशब्दाच्च विधिपरत्वमेव न्याय्यम् । विधिप्रत्ययुक्तो हि क्रियाशब्दो विधेयमेव स्वार्थमवगमयति । तस्मादुपासनविधानार्था एताः श्रुतयः ॥ २२ ॥

इति स्तुतिमात्राधिकरणम् ॥ २ ॥

११२. पारिप्लवार्थाधिकरणम् ३-४-३ ॥

**पारिप्लवार्था इति चेन्न विशेषितत्वात् । ३ । ४ । २३ ॥**

(कौ. ३-१) 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम", (छा. ६-१-१) , श्वेतकेतुर्हाऽऽरुणेय आस" इत्येवमादीनि वेदान्तेष्वाख्यानानि किं पारिप्लवप्रयोगार्थानि, उत विद्याविशेषप्रतिपादनार्थानीति चिन्तायाम्--"आख्यानानि शंसन्ति" इत्याख्यानानां पारिप्लवे विनियोगान्न विद्याप्रधानत्वं न्याय्यमिति चेत्—न सर्वाण्याख्यानानि पारिप्लवप्रयोगे विनियोगमर्हन्ति ; कुतः ? विशेषितत्वाद्विनियोगस्य । "आख्यानानि शंस

---

नन्वपूर्वमपि आदित्यस्वहिरण्मयपुरुषत्वादिकमुद्गीथेऽनन्वितम् । एवं रसतमत्वमपि । तथाचादित्यो यूप इतिवत् स्तवनमेव कार्यमित्यत्राह **भावशब्दाच्चेति । भावो** धात्वर्थः साध्यावस्थापन्नः । इयमेव जुहूरित्यत्र कार्यं किञ्चिन्नोच्यते । इह तु उपासीतेति विधिरस्ति । कथमुपासीतेति आकांक्षा च । अतो दृष्टिविधिस्वीकारान्न स्तुतिमात्रम् । **मात्र**पदं दृष्टिविधौ अर्थात् प्रशंसाऽपि लभ्यमाना न वार्येति ज्ञप्तये ॥

यथाकथञ्चित् कतिपयौपनिषदवाक्यानामपि कर्मकाण्डोक्तयज्ञाद्यन्वयेन स्वपक्षजयं संपिपादयिषुः पूर्वपक्षी, 'मा भूद्विधिरूपाणामर्थवादतया कर्मकाण्डसंबन्धः ; उपाख्यानरूपाणां तु भवतु 'इति शंकते **पारिप्लवार्था** इति । यदि तत्रतत्र किञ्चिद्विधेयतया गृह्यते, तर्हि औपनिषदानि आख्यानान्यपि पारिप्लवशंसनविधिविषयतया गृह्यन्तामिति तद्दृष्टान्तेन च प्रत्यवस्थानम् । **पारिप्लवार्था** इत्यत्र उपनिषद्गताख्यायिका इति विशेष्यमध्याहार्यम् । अश्वमेधे पारिप्लवं शंसतीति पारिप्लवनामकं शस्त्रं विहितम् । सर्वाण्याख्यानानि पारिप्लवे शंसन्तीति सर्वाख्यानशंसनरूपमिदं पारिप्लवशंसनमिति ज्ञापितम् । पुत्रामात्यपरिवृताय राज्ञे पारिप्लवमाचक्षीत प्रथमेऽहनि मनुर्वैवस्वतो राजेत्यादि, द्वितीयेऽहनि यमो वैवस्वत इत्यादि, तृतीयेऽहनि वरुणआदित्यइत्यादीति विवृतञ्च । तत्राहर्विशेषे आख्यायिकाविशेषनिर्देशस्य तत्रतत्र तत्तद्व्यवस्थाफलकत्वेऽपि इतराख्यानवारणतात्पर्याभावात् **सर्वा**णीति पदस्वारस्यात् औपनिषदाख्यानानामपि पारिप्लवे विनियोग इति पूर्वपक्षः । **विशेषितत्वात्**=इयमियमिति प्रतिपाद्यपुरुषनामपूर्वं ज्ञापितत्वात् । सर्वेषामाख्यानानां वेदमात्रगतानां वेदान्तमात्रगतानामप्यनन्तत्वात् सर्वाख्यानासंभवात् केषामिति आकांक्षा

न्ति" इत्युक्त्वा तत्रैव, "मनुर्वैवस्वतो राजा" इत्यादिना मन्वादीनामाख्यानानि विशेष्यन्ते। अतस्तेषामेव तत्र विनियोग इति गम्यते। तस्मान्न सर्वाः वेदान्तेष्वाख्यानश्रुतयः पारिप्लवप्रयोगार्थाः; अपितु विद्याविध्यर्थाः ॥ २३ ॥

तथा चैकवाक्योपबन्धात् । ३ । ४ । २४ ॥

(बृ. ६-५-६) "आत्मा वा अरे द्रष्टव्यः" इत्यादिविधिनैकवाक्यतयोपबन्धाच्चाऽऽख्यानानाम्, विद्याविध्यर्थान्येव तानीति गम्यते; यथा (यजु. १-५-१) "सोऽरोदीत्" इत्येवमादेः कर्मविध्यर्थत्वम्; न पारिप्लवार्थत्वम् ॥ २४ ॥ इति पारिप्लवार्थाधिकरणम् ॥ ३ ॥

११२. अग्नीन्धनाद्यधिकरणम् ३-४-४ ॥

अत एव चाग्नीन्धनाद्यनपेक्षा । ३ । ४ । २५ ॥

स्तुतिप्रसङ्गादवान्तरसङ्गतिविशेषेणार्थद्वयं चिन्तितम्। विद्यावन्त ऊर्ध्वरेतस आश्रमिणः सन्तीत्युक्तम्, "ऊर्ध्वरेतस्सु च शब्दे हि" इत्यादिभिः सूत्रैः। इदानीमूर्ध्वरेतसो यज्ञाद्यभावात् तदङ्गिका विद्या न संभवतीत्याशङ्क्याह—अत एव चाग्नीन्धनाद्यनपेक्षा इति। यत ऊर्ध्वरेतस आश्रमिणो विद्यासंबन्धित्वेन श्रुत्या परिगृह्यन्ते, (छा. २ २३-१) "ब्रह्म-

---

ध्रुवा। अतो विशेषनिर्देशतस्तत्पूरणे सति नान्यप्रसक्तिः। सर्वाणीत्येतत्तु 'सर्वत्वमाधिकारिकम्' इति न्यायेन उक्तेषु कस्यचिदपरित्यागार्थमिति भावः। आख्यानवैयर्थ्यं परिहरति **तस्मादिति** ॥ २३ ॥

**एकवाक्योपबन्धाच्च**-विद्योपदेशेन सहैकस्मिन् वाक्येऽन्तर्भावाच्च **तथा**-न पारिप्लवार्थाः; किंतु विद्यार्था इति सूत्रार्थः। अयं भावः—मन्त्राणामेव प्रयोगसमवेतार्थस्मारकतया विध्यन्वयाकांक्षा; न वाक्यान्तराणाम्। तेषामर्थप्रतिपादनोपक्षीणतयाऽर्थज्ञानस्यैवोपयोगोऽपेक्षितः। एवञ्च तदर्थज्ञानस्य संनिहितविद्याविधिविहितार्थप्ररोचकतया संभवत्येकवाक्यत्वे किमिति विभज्य पारिप्लवे नयनम्। तत्र नयनेऽपि तेषां शब्दराशित्वादर्थद्वारैवोपयोगो वक्तव्य इति प्रशंसादिरूपद्वारमन्वेषणीयमेव। तदिहैव संनिहितविद्याप्ररोचकतया सम्यगुपपद्यते। विद्योपदेशात् पूर्वं पश्चाच्च स्थितयोरुपाख्यानभागयोरेकवाक्यताऽपि मध्यांशपृथक्करणे दुष्करा स्यात्। अन्यथा तुल्यनयात्, बर्हिषि रजतं न देयमिति निषेधाद्यर्थवादभूतानां, "सोरोदीत्" इत्यादिकर्मकाण्डगताख्यायिकानामपि पारिप्लवे विनियोगस्य वाच्यतया तादृशार्थवादानां संनिहितविध्येकवाक्यताभंग एव स्याद्। तथाच यथा ते, तथेमे संनिहितविध्यर्थवादा इति ॥ २४ ॥

प्रथमाधिकरणेन संगतिमाह **स्तुतीति**। तदैव **अतएवे**ति सौत्रपदार्थवर्णनसंभव इति भावः। **स्तुतिप्रसंगादिति**; कर्मशेषभूतकर्तृस्तुतिपरत्वमेवोपनिषदामिति पूर्वपक्षप्रसंगादित्यर्थः। तन्निरासाय सर्वाश्रमकर्तव्यविलक्षणब्रह्मविद्यापरत्वे उपनिषदां तत्र स्थापिते, दृष्टिविधीनामपि स्तुतिपरत्वाभावः आख्यायिकानां विद्यास्तुतिपरत्वमित्यर्थद्वयमधिकरणद्वयेन वक्तव्यमासीदिति। **अत एव**—ऊर्ध्वरेतस्सु च सद्भावादेव। **चकारः** शंकाद्योतक इति **टीका**। विद्यायाः संन्यासिगतत्ववचनमयुक्तम्-कर्माङ्गकत्ववादिना तस्य दुःस्वीकरत्वादिति शंका। अत एव सर्वाश्रमसाधारण्यादेव अग्नीन्धनाद्यनपेक्षा च सर्वापेक्षा चेति अर्थद्वयसमुच्चये वा;

संस्थोऽमृतत्वमेति", (छा. ५-१०-१) "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते", (बृ. ६-४-२) "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति", (कठ. १-२-१५) "यदिच्छन्तो ब्रह्मचर्यं चरन्ति" इत्यादिकया—अत एवोर्ध्वरेतस्सु विद्या अग्नीन्धनाद्यनपेक्षा। अग्नीन्धनम् अग्न्याधानम्; आधानपूर्वकाग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षा तेषु विद्या। केवलस्वाश्रमविहितकर्मापेक्षेत्यर्थः ॥ २५ ॥ इति अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

११३. सर्वापेक्षाधिकरणम् ३-४-५ ॥

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् । ३ । ४ । २६ ॥

यदि विद्या यज्ञाद्यनपेक्षैवामृतत्वं साधयति, तर्हि गृहस्थेष्वपि तदनपेक्षैव साधयितुमर्हति। यज्ञादिश्रुतिरपि, (बृ. ६-४-५२) "विविदिषन्ति" इति शब्दात् कर्मणो वेदनाङ्गतां न प्रतिपादयतीति—

अत आह-सर्वापेक्षा-इति। अग्निहोत्रादिसर्वकर्मापेक्षैव विद्या कर्मवत्सु गृहस्थेषु। कुतः? यज्ञादिश्रुतेः। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिना यज्ञादयो हि विद्याङ्गत्वेन श्रूयन्ते। यज्ञादिना विविदिषन्ति वेदितुमिच्छन्ति= यज्ञादिभिर्वेदनं प्राप्तुमिच्छन्तीत्यर्थः। यज्ञादीनां ज्ञानसाधनत्वे सत्येव, यज्ञादिभिः ज्ञानं प्राप्तुमिच्छन्तीति व्यपदेश उपपद्यते; यथा असेर्हननसाधनत्वे सति, असिना जिघांसतीति व्यपदेशः। अतो यज्ञादीनां ज्ञानसाधनत्वमवगम्यते। ज्ञानं च वाक्यार्थज्ञानादर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्यं विशदतमप्रत्यक्षतापन्नस्मृतिरूपं निरतिशयप्रियमहरहरभ्यासाधेयातिशयम् आप्रयाणादनुवर्तमानं मोक्षसाधनमित्युक्तमस्माभिः पूर्वमेव (लघुसि.)। वक्ष्यति च, (शा. ४-१-१) "आवृत्तिरसकृदुपदेशात्" इत्यादिना। एवंरूपं च ध्यानमहरहरनुष्ठीयमानैर्नित्यनैमित्तिककर्मभिः परमपुरुषाराधनरूपैः परमपुरुषप्रसादद्वारेण जायत इति, यज्ञादिना

---

ब्रह्मचारिगतत्वादपीति तत्समुच्चये वा। एवं समुच्चयार्थस्यापि संभावनयैव भाष्ये, 'चशब्दोऽवधारणे' इत्यन्यत्रैवालोतरत्र चानुक्तिः। अनपेक्षत्वे कथं विद्यायाः कर्माङ्गकत्वमित्यत्राह केवलेति ॥ २५ ॥

अनपेक्षैव-अपेक्षां विनापि। गृहस्थेष्वपीति। एकस्या एव तदपेक्षत्वतदनपेक्षत्वयोर्विरोधादिति भावः। विविदिषन्तीति। सन्नन्ततया वेदनेच्छाया एव कर्मसाध्यत्वावगमादिति भावः। सन्प्रकृत्यर्थं प्रति यज्ञादेः करणत्वं वाक्यवेद्यमित्येतदुपपादयति वेदितुमिच्छन्तीत्यादिना। सनर्थं प्रति करणत्वं यज्ञेनेत्येवं तृतीयाया वक्तुं न शक्यते व्युत्पत्त्यभावादिति परमार्थभूषणेऽस्माभिरुपपादितम्। किञ्च वेदनेच्छायाः वेदनसाधनार्थत्वात् वेदनमेव परमं साध्यम्। परमसाध्येच्छाविरहे च साधनपरम्परायामिच्छा न भवतीति वेदनविषयकेच्छया पूर्वं भाव्यम्। तथाच यज्ञादिकं विनैव तदुत्पत्त्या तस्यास्तत्साध्यत्वं दुर्वचम्। इदमुभयमभिप्रेत्याह ज्ञानसाधनत्वे सत्येवेति। प्रसादद्वारेणेति। यज्ञादीनां दृष्टद्वारा कारणत्वे यतिष्वपि तदपेक्षा स्यात्। भगवत्प्रीतिद्वारैव प्रतिबन्धकपापजन्यरजस्तमोनिबर्हणेन कारण-

विविदिषन्तीति शास्त्रेण प्रतिपाद्यते। अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्यनैमित्तिकसर्वकर्मापेक्षा विद्या। अश्ववत्—यथा गमनसाधनभूतोऽश्वः स्वपरिकरबन्धपरिकर्मापेक्षः, एवं मोक्षसाधनभूताऽपि विद्या नित्यनैमित्तिककर्मपरिकरापेक्षा। तदिदमाह स्वयमेव भगवान्, (गी. १८-५) "यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्", (गी. १८-४६) "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति ॥ २६ ॥ इति सर्वापेक्षाधिकरणम् ॥ ६ ॥

११४. शमदमाद्यधिकरणम् ३-४-६ ॥

## शमदमाद्युपेतस्स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात्। ३। ४। २७ ॥

गृहस्थस्य शमदमादीन्यप्यनुष्ठेयानि, उत नेति चिन्तायाम्—आन्तरबाह्यकरणव्यापाररूपत्वात् कर्मानुष्ठानस्य, शमदमादीनां तद्विपरीतरूपत्वाच्चाननुष्ठेयानि—इति प्राप्ते उच्यते—यद्यपि गृहस्थः करणव्यापाररूपकर्मसु प्रवृत्तः, तथाऽपि स विद्वान् शमदमाद्युपेतस्स्यात्। कुतः? तदङ्गतया तद्विधेः—विद्याङ्गतया तेषां विधेः, (बृ. ६-४-२३) "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति। विद्योत्पत्तेश्चित्तसमाधानरूपत्वेन दृष्टपरिकरत्वाच्छमादीनाम्, विद्यानिर्वृत्तये तेषां शमादीनामप्यवश्यानुष्ठेयत्वाच्च तान्यप्यनुष्ठेयानि। न च करणव्यापार-तद्विपर्ययरूपत्वेन कर्मणां शमदमादीनां च परस्परविरोधः, भिन्नविषयत्वात्; विहितेषु करणव्यापारः, अविहितेषु प्रयोजनशून्येषु च तदुपशम इति। न च करणव्यापाररूपकर्मसु वर्तमानस्य वासनावशात् शमादीनामुपादेयत्वा-

---

त्वात्, गृहस्थान् यज्ञादिषु कृतेष्वेवानुगृह्णातीति स्वीकारात् न सापेक्षत्वानपेक्षत्वयोर्विरोध इति भावः। मोक्षसाधनेति। ननु स्थितोऽश्वः यथा शफत्राणस्याभीषुादेश्चाभावेऽपेक्षितं गमनं न साधयति, तथा निष्पन्नाऽपि विद्या यज्ञाद्यभावे मोक्षं न साधयतीति भास्करपक्ष एव एवंसति उक्तो भवतीति चेन्न-भक्त्युत्पत्तिविवृद्ध्युभयार्थत्वात् कर्मानुष्ठानस्य। कर्माभावे विद्या वैशद्यप्रीतिरूपापन्नत्वादिरूपं मोक्षप्रयोजकविशेषं न लभते इत्युक्तौ, विद्याया ज्ञानरूपतया क्षणिकत्वात् अश्ववत् स्थिरत्वाभावात् तादृशविशिष्टज्ञानोत्पत्तावेव पर्यवसानात्। अश्वनिदर्शनेन, तदङ्गतया तेषामपीति सूत्रांशेन च समसमुच्चयो नेति सिद्धम् ॥ २६ ॥

एवं यज्ञादिकर्मापेक्षत्वस्वीकारात् शान्तोदान्त इति वाक्यं यतिविषयकमेव वक्तव्यमिति शंकायां शमदमाद्यधिकरणम्। न शमादिकं सर्वव्यापारोपरतिरूपम्, किंतु निषिद्धकर्माद्युपरतिरूपमिति सिद्धान्तः। तद्विपरीतरूपत्वाच्चेति। "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते" इति अधिकारिभेदावगमाच्चेति भाव्यम्। विहितेषु अवश्यकर्तव्येषु। अविहितेषु अवश्यकर्तव्यनित्यनैमित्तिकभिन्नेषु। तत्रापि लौकिकेषु यज्ञाद्यर्थार्जनदेहधारणादिकार्येषु भक्त्युत्पत्त्यर्थशास्त्रीयकाम्येषु च प्रवृत्तेरिष्टत्वात् विशिनष्टि प्रयोजनशून्येषु चेति। उपादेयत्वासंभवः निष्पाद-

**संभवः, विहितानां कर्मणां परमपुरुषाराधनतया तत्प्रसादद्वारेण निखिलविपरीतवासनोच्छेद-हेतुत्वात् । अतो गृहस्थस्य शमदमादयोऽप्यनुष्ठेयाः ॥ २७ ॥** इति शमदमाद्यधिकरणम् ॥ ६ ॥

११५. सर्वान्नानुमत्यधिकरणम् ३-४-७ ॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् । ३ । ४ । २८ ॥

**वाजिनां छन्दोगानां च प्राणविद्यायाम्**, (बृ. ८-१-१४) **" न ह वा अस्यानन्नं जग्धं भवति ; नानन्नं परि(प्रति)गृहीतं भवति",** (छा. ५-२-१) **" न ह वा एवंविदि किञ्चन अनन्नं भवति" इति प्राणविदः सर्वान्नानुमतिः सङ्कीर्त्यते । किमियं प्राणविद्यानिष्ठस्य सर्वान्नानु-मतिः सर्वदा, उत प्राणात्ययापत्ताविति विशये—विशेषानुपादानात् सर्वदा इति प्राप्ते--उच्यते प्राणात्यये—इति । चशब्दोऽवधारणे ; प्राणात्ययापत्तावेवेत्यर्थः । कुतः ?** तद्दर्शनात् । **दृश्यते ह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा ; किंपुनः प्राणविदः ।** (छा. १-१०)

---

त्वासंभवः । निष्कामकर्मानुष्ठानं काम्यकर्मवासनां कथं जनयेत् । प्रत्युत तन्नाशार्थमेव तत् । निष्काम-कर्मवासना तु न शमविरोधिनीत्याशयेनाह **विहितानामि**ति । यत्तु आरुरुक्षोरिति वचनम् , तत् आत्मा-वलोकनपर्यन्तं कर्मयोगानुवर्तनीयत्वबोधकम् ; न तु भक्तविषयकमिति । यज्ञादेरिव शमदमादेरपि साम्येन किञ्चिदाधिक्येन वा विद्याङ्गताया बोधनीयत्वात् , शान्तोदान्त इति वाक्यान्तरविषयकत्वाच्चास्य पूर्वाधिकरणशेषत्वं विना पृथगधिकरणत्वमिति ध्येयम् ॥ २७ ॥

पूर्वं पश्चाच्च ब्रह्मविद्विषयकस्यैव विचारस्य क्रियमाणत्वात इहापि सति संभवे तत्त्यागायोगात् प्राणविद्यान्तर्गतवाक्यविचार इह क्रियमाणस्तदर्थमेव । तथाच पूर्वाधिकरणे ब्रह्मविदो यः शमादिरुक्तः निषिद्धव्यापारोपरतिरूपः, स किं भोजनप्रतियोगिकोऽपि भवति, उत सर्वस्य भक्ष्यत्वात् तदन्यमात्रादुपरति-रिति चिन्त्यते । अन्यमात्रादिति पूर्वपक्षः । तत्र निकृष्टस्य प्राणविद एव सर्वदा सर्वभक्षत्वे संमन्यमाने, ब्रह्मविदि कः संशय इति युक्तिः । तदर्थं प्राणविद एव तत्संमतिस्तथाऽस्ति, नेति विचार्यते । प्राणविद्यां ज्यैष्ठ्यश्रैष्ठ्यगुणकप्राणविषयां उपासके ज्यैष्ठ्यश्रैष्ठ्यप्राप्तिफलिकां विधाय प्राणस्य वागादिमध्ये ज्यैष्ठ्यञ्च श्रैष्ठ्यञ्च विस्तृतम् । अथ—पराजितान् वागादीन् प्राणः पप्रच्छ, एवं प्रभोर्मे किमन्नं किं वास इति । ' आ श्वभ्यः सर्वप्राणिभुज्यमानमन्नं सर्वं तवैव, पीयमाना आपश्च वासः ' इति वागादयः प्रत्यूचुरि-त्युक्त्वा, एवं प्राणस्य सर्वान्नत्वानुसंधानम् अब्वासस्त्वानुसंधानञ्च विधाय, एवमनुसंधातुः सर्वान्नादत्वमन-न्नत्वञ्चोक्तम् । तत्रान्नादत्वोक्तौ विचारः । सुविशदवाजिवाक्यानुसारेण छान्दोग्यवाक्येऽपि वेदितुः सर्वान्नभक्षकत्वमेव वाक्यार्थः । तत्र यद्यपि सर्वमन्नं भक्षयेदिति न विधिः; श्वादिभुज्यमानस्यापि भक्षणी-यत्वप्रसंगात् ; कलभकरभादिभोज्यकाष्ठकण्टकादेर्युगपत् क्रमेण वा भक्षणासंभवाच्च ; रागप्राप्तभक्षण-विधेरनुचितत्वाच्च । अथापि भक्षणप्रवृत्तपुरुषानुमतिमात्रं प्रवृत्तिविषयसर्वविषये । अन्यथा वाक्यवैयर्थ्या-दिति पूर्वपक्षः । ब्रह्मविदामपि प्राणात्ययावसर एवाभक्ष्यभक्षणानुमतिदर्शनात् प्राणविदि सर्वदाऽनुमते-रनुचितत्वात् प्राणात्ययकाल एवेति सिद्धान्तः । ननु वामदेव्याख्यसामोपासकस्य विशिष्य सर्वयोषित्परिह-

उषस्तिः किल चाक्रायणो ब्रह्मविदग्रेसरो मटचीहतेषु कुरुषु दुर्भिक्षदूषितेषु इभ्यग्रामे वसन् अनशनेन प्राणसंशयमापन्नो ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादमाकाङ्क्षमाणः इभ्यं कुल्माषान् खादन्तं भिक्षमाणः, तेन च, 'उच्छिष्टेभ्योऽन्ये न विद्यन्ते' इति प्रत्युक्तः, पुनरपि, "एतेषां मे देहि" इत्युक्त्वा तेन चेभ्येनोच्छिष्टेभ्य आदाय दत्तान् कुल्माषान् प्रतिगृह्य, अनुपानप्रतिग्रहमिभ्येनार्थितः, "उच्छिष्टं वै मे पीतं स्यात्" इति वदन् चाक्रायणः, (वदन्, चाक्रायण!?) किमेते कुल्माषा अनुच्छिष्टा इति इभ्येन पर्यनुयुक्तः,

---

रणविधिवत् प्राणविन्मात्रविषये सर्वदा सर्वभोजनानुमतिरस्तु। नैवम्।. तत्र, 'न काञ्चन स्त्रियं परिहरेत तद् व्रतम्' इति अनुष्ठेयतया स्पष्टविधिदर्शनात्; अत्र तदभावात्। यदि तु अव्वासस्त्वानुसंधानफलमनग्नत्वमिव प्राणस्य सर्वान्नित्वानुसंधानस्य फलं सर्वान्नभोजनमित्युच्यते, तदा फलस्य शत्रुवधरूपाभिचारस्येव विधेयत्वायोगात् भोजने दोषाभावो दुर्वचः। वस्तुतः तत्तदनुसंधानस्य प्राणविद्याङ्गत्वात् फलापेक्षैव नास्तीति फलपरत्वेऽर्थवादत्वमेव। उक्तञ्च **सारावलौ**, 'प्रागुक्ता प्राणविद्या तदिदमवसरे चिन्तितं त्वङ्गमस्याः' इत्यादि।

ननु प्राणात्ययमात्रे सर्वान्नानुमतिः प्रमाणान्तरसिद्धैवेति, एतद्वाक्यवैयर्थ्यम्। अत्र वाक्ये प्राणात्ययशब्दाभावात् संकोचोऽपि न युक्त इति चेत्—वाक्यमिदं न सर्वभक्षणविधायकम्, नाप्यपूर्वतयाऽनुमतिज्ञापकम्; किंतु सर्वस्य प्राणात्यये प्राप्तमभक्ष्यभक्षणमनुवदत् अर्थवादभूतं पूर्वेणैकवाक्यीभवतीति। शास्त्रवश्यो हि निषिद्धमन्नं स्वरसतो न भुञ्जीत। प्राणापदि चेत भक्षयति, तर्हि प्राणस्य सर्वान्नकत्वात् प्राणस्यान्नं प्राणार्थमेव भक्षयतीति सिद्धं तस्य तं प्रति अदनार्हत्वमिति हि वाक्यतात्पर्यमिति। सूत्रस्याप्येवमेवार्थः—सर्वान्नविध्यभावस्य पूर्वपक्षिणोऽपीष्टत्वात् सर्वान्नानुमितिरेव तेनोच्यते; (तस्या अप्यत्र विधेयत्वे गमकाभावात्) पूर्वैकवाक्यतया साऽनुमतिश्चानूद्यमाना प्रापकप्रमाणानुसारेण प्राणात्यय एव भवतीति। भाष्येऽप्येवं तात्पर्यस्वीकारे नास्ति विरोधः। वस्तुतो वाक्यस्यास्यानुमतिपरत्वमपि नास्तीत्येव भाष्याशय इति सुवचम्। 'सर्वान्नानुमतिः, प्राणात्यय एवेष्यते, तथैव दर्शनात्' इति वदता सूत्रकृता प्रकृतवाक्यस्यानुमत्यर्थकत्वमभिमतमिति न मन्तव्यम्। किंतु 'अनुमतिः प्राणात्यय एव प्रामाणिकी; तद्विरुद्धार्थवर्णनमयुक्तमिह' इत्येतावदेव विवक्षितम्, अतएवैतत्सूत्रभाष्यान्ते, 'प्राणसंशय एव सर्वान्नानुमतिदर्शनात् अत्राविशेषेण कीर्तितमपि सर्वान्नीनत्वं प्राणात्ययापत्तावेव' इति सूक्त्या—अनुमतिपरवाक्यमन्यत्, इदं वाक्यं नानुमतिबोधकम्, तद्वाचकपदाभावात्; किंतु सर्वान्नीनत्वरूपतद्विषयमात्रकीर्तनमिति निगम्यते। अतोऽर्थसिद्धानुवादतया पूर्वेणैकवाक्यतेति। अनुमतिपरपदकल्पने प्राणात्ययपदमपि सह कल्प्यताम्; प्रमाणान्तरानुसारस्य तुल्यत्वात्। **मटची**=अश्मवृष्टिः। अशनिरिति **शाङ्करम्**। **कल्पतरौ** तु, "मटच्यो नाम रक्तवर्णाः क्षुद्रपक्षिविशेषाः। तैर्हतेषु कुरुदेशस्थेषु" इत्युक्तम्, **इभ्याः** इभपाल्काः। **आकांक्षमाण** इति कानच्। **कल्पतरुप्रभृतौ आकांक्षते** इति प्रयोगोऽप्यस्ति, (१-१-१. सूत्रेनैवचेति भामतीव्याख्यानघट्टे) **एतेषां मे देहि**। उच्छिष्टकुल्माषैकदेशमेव मह्यं देहि। **चाक्रायणः** इति

"न वा अजीविष्यमिमान् अखादन्...कामो मे उदपानम्" इति कुल्माषाखादने स्वस्य प्राणसंशयापत्तेः तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामकारितं निषिद्धं स्यादित्युक्त्वा, स्वखादितशेषं जायायै दत्त्वा, तया च रक्षितान्, अपरेद्युर्याजनेनार्जिजीवया जिगमिषुः पुनरपि प्राणसंशयमापन्नः, तानेवेभ्योच्छिष्टान् स्वोच्छिष्टभूतान् पर्युषितांश्चखाद। अतो ब्रह्मविदामपि प्राणसंशय एव सर्वान्नानुमतिदर्शनादत्राविशेषेण कीर्तितमपि प्राणविदः सर्वान्नीनत्वं प्राणात्ययापत्तावेवेति निश्चीयते ॥ २८ ॥

अबाधाच्च । ३ । ४ । २९ ॥

(छा.७-२६-२) "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति ब्रह्मविद्योत्पत्तावाहारशुद्धिविधानाबाधादपि ब्रह्मविदां सर्वान्नीनत्वमापद्विषयमवगम्यते। एवं ब्रह्मविदामतिशयितशक्तीनामपि सर्वान्नीनत्वस्यापद्विषयत्वात् प्राणविदोऽल्पशक्तेः सर्वान्नानुमतिरापद्विषयैव॥

अपि स्मर्यते । ३ । ४ । ३० ॥

अपि च आपद्विषयमेव सर्वान्नीनत्वं ब्रह्मविदामन्येषां च स्मर्यते, (—) "प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति ॥ ३० ॥

शब्दश्चातोऽकामकारे । ३ । ४ । ३१ ॥

यतो ब्रह्मविदामन्येषां च सर्वान्नीनत्वमापद्विषयमेव; अत एव सर्वेषामकामकारे शब्दः—कामकारस्य प्रतिषेधकः शब्दो वर्तते। अस्ति हि कठानां संहितायां कामकारस्य प्रतिषेधकः शब्दः, "तस्माद्ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजा इति" इति। पाप्मना

---

पदं पुनरुक्तम्। कुल्मग्रहेण संबुद्धिः स्यात्। **पुनरपि प्राणसंशय**मिति। अर्थसिद्धमेतत्। **सर्वान्नीने**ति। सर्वान्नभक्षकेत्यर्थः। "अनुपद-सर्वान्न-अयानयं बद्धा-भक्षयति-नेयेषु" (पा. ५-२-९) इति सूत्रात् भक्षयतीत्यर्थे सर्वान्नशब्दात् खप्रत्ययः ॥ २८ ॥

परविद्यानिष्ठस्य भक्ष्यव्यवस्थापनं प्रकृतम्। ब्रह्मविदोऽप्युषस्तेः प्राणविद्यानिष्ठादतिशयितत्वेपि परविद्यानिष्ठत्वमनिश्चितम्। अतो भूमविद्यायां परविद्यार्थतयैव भोजननियममुक्तं प्रमाणयति **अबाधाच्चे**ति। **आपद्विषयैवे**ति। अतः अनापद्यपि सर्वान्नानुमतिपरत्वमस्य वाक्यस्य नास्तीति भावः ॥ २९ ॥

ब्रह्मविद्यानिष्ठे कैमुतिकन्यायेन भक्ष्यव्यवस्थाविरहस्य तद्विवक्षितत्वात् तत्प्रतिकूलकैमुतिकन्यायसंचारार्थं ब्रह्मविदि व्यवस्थादर्शिवाक्यविरोधज्ञापनार्थश्च वक्तव्यमुक्तम्। अथ कैमुतिकन्यायं विना साक्षादेव प्राणविदमप्यविशेषेण विषयीकुर्वद् वाक्यं दर्शयति सूत्रद्वयेन। तत्र सर्वस्याप्यन्नमनेन प्रतिग्राह्यमिति नेति प्रथममुच्यते। सर्वमन्नं न ग्राह्यमिति चोपरि ॥ ३० ॥

**कामकारस्य** इच्छायाः; यथेच्छप्रवृत्तेरिति वा। पाप्मना नोत्सृजै इत्यस्य पाप्मत्यक्तो न भवेयमित्यर्थो न घटते, पयःपानादौ कृतेऽपि स्थिरपाप्मत्यागाभावात्। अतोऽर्थमाह **पाप्मने**त्यादिना पाप्मानुत्पादायेति वाक्यार्थः। अतः कतिपयभोजनस्य पाप्महेतुत्वदर्शनात् अनापदि तद्भोजनस्य सर्वविषये-

**संस्पृष्टो न भवानीति मत्वा ब्राह्मणः सुरां न पिबतीत्यर्थः॥७ ॥** इति सर्वान्नानुमत्यधिकरणम्॥

११६. विहितत्वाधिकरणम् ३-४-८ ॥

## विहितत्वाच्चाश्रमकर्मापि । ३ । ४ । ३२ ॥

**यज्ञादिकर्माङ्गिका ब्रह्मविद्येत्युक्तम्। तानि च यज्ञादीनि कर्माणि अमुमुक्षुणा केवलाश्रमिणाऽप्यनुष्ठेयानि, उत नेति चिन्तायाम्—विद्याङ्गानां सतां केवलाश्रम(मि)शेषत्वे नित्यानित्यसंयोगविरोधः प्रसज्यत इति यज्ञादीनां केवलाश्रम(मि)धर्मत्वं न संभवति—इति प्राप्ते उच्यते**—आश्रमकर्मापि-**इति। आश्रमस्य कर्मापि भवति। केवलाश्रमिणाऽपि अनुष्ठेया-**

---

ऽपि पाप्महेतुत्वात् सर्वान्नानत्ववचनस्यास्य तदबाधेनोपपत्तौ तद्बाधेनार्थवर्णनमयुक्तमिति भावः ॥

सर्वापेक्षाधिकरणसमनन्तरमेव विहितत्वाधिकरणस्यास्य प्रवर्त्यत्वेऽपि, 'शमादि वा त्याज्यम्, सर्वापेक्षा वेति उक्तार्थास्थैर्यस्य प्रसक्तत्वात् सर्वापेक्षायाः स्थिरत्वे सत्येव प्रकृतविहितत्वाधिकरणविचारस्य संभवात् शमादिविचारो मध्ये आपतितः। तत्समाप्तौ प्रागेव चिकीर्षितं प्रस्तूयते। अत्र प्रथमसूत्रं पर्याप्तम्; अस्तु वाऽन्तिममपि; विद्याकर्माश्रमकर्मभेदाभेदविचारस्तु तृतीयसूत्रे क्रियमाणः विषयस्य भिन्नत्वान्नात्रान्तर्भवतीति न मन्तव्यम्। सर्वसूत्रैकाधिकरण्यनिर्वाहानुगुणमेवं विचारसरणेरादर्तव्यत्वात्। सेयम्—अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादीनि विद्यानिष्ठैरिव केवलाश्रमिभिरपि कार्याणि, न वा। तदर्थं विचार्यते। तत्तदनुष्ठेयाग्निहोत्रादीनि अभिन्नानि भिन्नानि वेति। भेदपक्षे विद्याङ्गभूताग्निहोत्राद्यनुष्ठानेन आश्रमधर्माग्निहोत्रादीनां कृतत्वासिद्ध्या विद्यानिष्ठैः पृथक् तान्यनुष्ठेयानि स्युः; केवलाश्रमिभिश्च क्रियेरन्। सिद्धान्तिना त्वभेदमंगीकृत्य पृथगनुष्ठानोपेक्षणात केवलाश्रमिधर्मत्वमेषां न भवितुमर्हतीति स्वैरितैवाश्रमिणामिति पूर्वपक्षः। तत्र सिद्धान्तः—एषामाश्रमकर्मत्वमप्यस्ति, पृथगनुष्ठानं विना विद्यासहकारित्वमपि ॥ कर्मणां भिन्नजातीयत्वे ह्याश्रमकर्मत्वम्; अतः कथमिदमिति न मन्तव्यम्—य एव विद्याङ्गभूताः, त एवाश्रमधर्मा अपीत्यदोषात्। न चाभेदे विरोधोऽस्ति; प्रत्युत दर्शनानुगुण्यमेवेति चतुर्भिः सूत्रैराह।

अभेदे विद्याङ्गत्वाश्रमाङ्गत्वयोर्विरोध एवं मन्यते पूर्वपक्षिणा। विद्याङ्गत्वे फलार्थमनुष्ठीयमानत्वात् अनवश्यम्भावित्वरूपमनित्यत्वम्; आश्रमाङ्गं तु नित्यं नैमित्तिकञ्च सर्वदैवानुष्ठेयत्वान्नित्यं भवति। अतो नित्येन जीवनादिना, अनित्येन कतिपयेष्यमाणेन मोक्षफलेन च संयोगात् नित्यत्वानित्यत्वरूपविरुद्धधर्मापत्तिः। ननु 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति पूर्वमीमांसायामेव—एकस्यैव उभयत्वे=वाक्यद्वयगम्यत्वरूपे आकारद्वयवत्त्वे संयोगपृथक्त्वम्=विनियोगभेदः तत्तदुद्देश्यसंबन्धस्यानेकस्य सत्त्वं घटत एव। अत एव दध्ना जुहोति, दध्नेन्द्रियकामस्य जुहुयादिति वाक्यद्वयसत्त्वात् दध्नः नित्यत्वं काम्यत्वञ्चेत्युक्तम्। अत्रापि तथैव, यावज्जीवमिति वाक्यं विविदिषन्ति यज्ञेनेति वाक्यञ्चादायोभयविषत्वे कथ्यमाने कथमाशंकेति चेत्—न; वैषम्यात्। तत्र अग्निहोत्रत्वज्योतिष्टोमत्वादिप्रातिस्विकरूपेणैव वाक्यद्वये कर्मान्वयात्। अत्र विविदिषन्ति यज्ञेनेति सामान्यनिर्देशात तत्परत्वनिश्चयाभावात। केवलकाम्यानि यानि स्वर्गाद्यर्थान्येव यज्ञा-

नीत्यर्थः। कुतः? "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिना विहितत्वात्—जीवननिमित्ततया नित्यवद्विहितत्वादित्यर्थः ॥ ३२ ॥

तथा विद्याङ्गतया च, "तमेतं वेदानुवचनेन" इत्यादिना विहितत्वात् विद्याशेषतयाऽप्यनुष्ठेयानीत्याह—

## सहकारित्वेन च । ३ । ४ । ३३ ॥

---

दीनि, तेषामेव विद्यार्थं विनियोगान्तरमिति सुवचत्वात्। तदा नित्यत्वानित्यत्वसमावेशरूपदोषाभावात्। एवं काम्ये अग्निहोत्रे क्रियमाणे तत एव नित्यस्यापि प्रसङ्गनिष्पन्नतया न पृथगनुष्ठेयत्वम्। तस्मिन् प्रयोगे तस्य कर्मणो न नित्यत्वम्, किंतु काम्यत्वमात्रमिति स्थितिः। अत्र तु विद्यार्थं कर्मणां सामान्येनैव विनियुक्तत्वात्—अग्निहोत्रं यदाऽनुष्ठेयम्, तस्मिन् काले तद्विहायान्यस्य यज्ञादेरनुष्ठानेऽपि विद्योपकारसिद्ध्या अग्निहोत्रत्यागः स्यात्। यदि तदा प्रत्यवायभियाऽग्निहोत्रमेव करोतीत्युच्यते, तर्हि तदा तस्य नित्यत्वमेषितव्यमिति तेन सहानित्यत्वस्य कथं समावेशसंभवः। अतो विशेषरूपेण प्रतिदिनं विद्यार्थतयाऽपि कार्यत्वेन प्रतिपादकस्य वाक्यस्याभावादस्ति वैषम्यम्। एवं नित्यकाम्याग्निहोत्रैक्यमेकप्रकरण एव वाक्यद्वयसत्त्वादिष्यते। न तथेहैकप्रकरणे विद्यार्थं विनियोगः। किञ्च विद्याया यावज्जीवमभ्यस्यमानतया तदर्थमग्निहोत्रादीनामपि यावज्जीवमनुष्ठेयतया तादृशविद्वदधिकारिकानुस्यूतानुष्ठानकथनपरतयैव यावज्जीवमग्निहोत्रं जुहोतीत्यादिवाक्यानामुपपत्तौ केवलाश्रमिकर्तव्यतायां न किञ्चित् प्रमाणम्। तदर्थं नित्याग्निहोत्रमासाग्निहोत्रयोरिव नित्यानामग्निहोत्रादीनां विद्यार्थानामग्निहोत्रादीनाञ्च भेदस्वीकारे विद्यानिष्ठैस्तेषां द्विरनुष्ठानमापद्येतेति—

अत्रायं समाधिः—विविदिषन्ति यज्ञेनेत्यादेरुपनिषद्येव श्रवणात् कर्मकाण्डे विद्वदनुपस्थित्या संकोचे मानाभावात् यावज्जीवादिश्रुतीनां विद्वदविद्वत्साधारण्यमेव युक्तम्। अन्यथा अग्निहोत्रादेर्विद्यार्थत्वात् विद्याभ्यासबलादेव तदभ्यासस्याप्यर्थसिद्ध्या तदर्थं यावज्जीवादिवचनमनपेक्षितमिति तद्वैयर्थ्यञ्च। विद्यार्थमवश्यं प्रत्यहमभ्यसनीयत्वं तत्र विवक्षितमिति चेत्—अनुपस्थितविद्वद्विषये संकोचेनाऽऽवश्यकत्ववर्णनापेक्षया विद्वदविद्वत्साधारण्येनावश्यकत्वे कर्मकाण्डेन बोध्यमाने विद्वानप्यवश्यं करिष्यतीति वर्णनमेव वरम्। अतोऽग्निहोत्रादीनामाश्रमकर्मत्वं सर्वविषयेऽप्यक्षतम्। अत एव विद्वान् अग्निहोत्रं परित्यज्य तस्मिन् समयेऽन्यदनुष्ठाय विद्योपकारं न संपादयितुमर्हति। अन्यविधशंकापरिहारश्चोत्तरसूत्रेषु भाव्यः।

स एवम्—ननु यदा विद्योद्देशेनैव करोति तदा तदर्थत्वेऽपि, प्रत्यवायभिया यदा करोति, तदा विद्यार्थता न स्यात्; एकस्मिन् नित्यत्वानित्यत्वयोर्मीमांसकैरस्वीकृतत्वात्; तत्राह **सहकारित्वेन** चेति। नित्यत्वबुद्ध्या करणेऽपि सहकारित्वेनापि करणमस्तीत्यर्थः। कथम्। इत्थम्। मुमुक्षुणा सर्वस्यापि कर्मणः, 'यत् करोषि यदश्नासि—तत् कुरुष्व मदर्पणम्' इति वचनबलात् सात्त्विकत्यागपुरस्सरमेव शेषत्वानुसंधानपूर्वकं कार्यत्वात्, भगवानेव स्वस्मै स्वप्रीतये स्वयमेव कारयतीति भावानुवृत्त्या विद्यार्थानुष्ठानस्यापि अन्यादृशाकारत्वाभावेन काम्यान्तरन्यायो न भवतीति। अत एव, यज्ञेनेत्यत्र

विद्योत्पत्तिद्वारेण विद्यासहकारितयाऽप्युनुष्ठेयानि। अग्निहोत्रादीनामिव जीवनाधिकार-स्वर्गाधिकारवत् विनियोगपृथक्त्वेनोभयार्थत्वं न विरुध्यत इत्यर्थः ॥ ३३ ॥

तद्वदेव कर्मान्तरत्वमपि नास्तीत्याह—

सर्वथाऽपि त एवोभयलिङ्गात्। ३। ४। ३४॥

सर्वथा-विद्यार्थत्वे आश्रमार्थत्वेऽपि, त एव यज्ञादय इति प्रतिपत्तव्यम्; न कर्मस्वरूपभेद इत्यर्थः। कुतः? उभयलिङ्गात्—उभयत्र श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञाप्य विनियोगात्; कर्मस्वरूपभेदे प्रमाणाभावाच्च ॥ ३४ ॥

अनभिभवं च दर्शयति। ३। ४। ३५॥

(तै. ना. ५०) "धर्मेण पापमपनुदति" इत्यादिभिश्च तानेव यज्ञादिधर्मान् निर्दिश्य तैर्विद्याया अनभिभवं पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति। अहरहरनुष्ठीयमा-

---

संकोचे मानाभावात्, 'यत् करोषी'ति वचनस्य सर्वग्राहित्वात्, स्वेस्वेकर्मणीत्यादितश्च, 'इयाज सोपि सुबहून्' इत्युक्तयज्ञान्तराणामिव नित्यानामङ्गत्वं निर्बाधम्। अग्निहोत्रादीनामिवेति। कतिपयनित्यानामिव सर्वेषामपीत्यर्थः ॥ ३३ ॥

अत एवाविरोधात् कर्मभेदस्यानवकाश इत्याह सर्वथाऽपीति। काम्यान्तरे नित्यत्वकाम्यत्वयोरिवेह नित्यत्वविद्यार्थत्वयोरेकप्रयोगे समावेशास्वीकारे वा, पूर्वोक्तरीत्या स्वीकारे वा सर्वथाऽपि प्रकरणान्तरप्रयुक्ताग्निहोत्रस्येवात्र कर्मणां भेदो नास्तीति आश्रमधर्मा एव विद्याङ्गधर्मा अपि। तत्र हि अग्निहोत्रपदस्य एकहोमविशेषासाधारणनामत्वात् मासमग्निहोत्रमिति वाक्यस्यान्योद्देशेन तद्विनियोगरूपत्वाभावात् कर्मण एव विधेयत्वात् विहितविधानायोगाद् तत्सदृशहोमान्तरविधिः। इह तु यज्ञत्वेन प्रमाणान्तरावगतसर्वयज्ञविनियोगान्तरत्वसंभवात्, यज्ञत्वेन सर्वयज्ञानामुपस्थितौ तदन्तर्गतकीदृशयज्ञसदृशं यज्ञान्तरं विधीयते इति विवेकाभावात् सर्वयज्ञसदृशबहुविधयज्ञान्तरविधिरिति कल्पनक्लेशस्यानपेक्षितत्वात् न भेदः। अतो विदुषां न द्विरनुष्ठानं प्रसज्यते ॥ ३४ ॥

न केवलं कर्मैक्यम्; फलैक्यमपीत्याह अनभिभवमिति। नित्यकाम्याग्निहोत्रस्थले नित्यफलं पापक्षयः, काम्यफलं स्वर्गादीति भेदोऽस्ति। इह तु विद्यार्थे कर्मणा क्रियमाण उपकारः प्रतिबन्धकपापक्षय एव; नित्यफलमपि पापक्षय एवेत्यविशेष इति। तदयं सूत्रार्थः—धर्मेण पापमपनुदति, विद्यया मृत्युं तीर्त्वेति पापक्षयं वदत्, पापाधीनस्याभिभवस्याभावं दर्शयति, 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते', 'सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति च स्पष्टमिति। अनेन सूत्रेण शङ्कान्तरमपि शमितम्—तदाह अहरहरिति। कथं कर्मणो विद्यासहकारित्वम्; कारणद्वयसाध्ये कार्ये ह्येकस्मिन् तयोर्मिथः सहकारित्वं स्यात्। यस्तु अङ्गसहकृतमङ्गीति प्रयोगः, सः अङ्गैः सहानुष्ठितमङ्गीत्यर्थेऽपि स्यादिति भवति शंका। समाधिस्तु—उत्तरोपासनव्यक्तिं प्रकृप्यमाणां प्रति पूर्वपूर्वोपासनव्यक्तिः कर्म च सहसूय कारणम्। उपासनव्यक्तिर्वासनाद्वारा, कर्म च पापशमनद्वारेति सिद्धं सहकारित्वम्। अतो विद्याजन्यमोक्षफलोत्पादने कर्मणा-

नैर्हि यज्ञादिभिर्विशुद्धेऽन्तःकरणे प्रत्यहं प्रकृष्यमाणा विद्या उत्पद्यते । अतस्त एवोभयत्र यज्ञादयः ॥ ३५ ॥ इति विहितत्वाधिकरणम् ॥ ८ ॥

११७. विधुराधिकरणम् ३-४-९ ॥

## अन्तरा चापि तु तद्दृष्टेः । ३ । ४ । ३६ ॥

चतुर्णामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति [इति ?], विद्यासहकारिण आश्रमधर्मा इति चोक्तम् । ये पुनराश्रमान् अन्तरा वर्तन्ते विधुरादयः, तेषां ब्रह्मविद्यायामधिकारोऽस्ति, न वेति विशये—आश्रमधर्मैतिकर्तव्यताकत्वात् विद्यायाः, अनाश्रमिणाश्च आश्रमधर्माभावात् नास्त्यधिकारः इति प्राप्ते उच्यते—अन्तरा चापि तु इति । तुशब्दः पक्षव्यावृत्त्यर्थः। चशब्दोऽवधारणे । अन्तरा वर्तमानानाम्-अनाश्रमिणामपि विद्यायामधिकारोऽस्त्येव । कुतः ? तद्दृष्टेः। दृश्यते हि रैक्वभीष्मसंवर्तादीनामनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वम् । न चाश्रमधर्मैरेव

---

मुपयोगाभावेऽपि न क्षतिरिति । साह्यम्=अप्रधानकृत्यं करोतीति चाङ्गस्य सहकारित्वम् । इदं विद्योत्पत्तिद्वारेणेति प्राक् सूचितमिह अहरहरित्यादिना विवृतम् । सर्वोऽयमेतच्चतुस्सूत्रीविवरणप्रकारः एतदधिकरणभाष्ये यथायथं विनिवेश्यानुसंधेयः ॥ ३५ ॥

अन्तरा मध्ये पूर्वोत्तराश्रममध्ये । अपितु इति न समुदितं किञ्चिदर्थपरं सूत्रे इत्याशयेन पृथक्कृत्य व्याख्याति तुशब्द इति । तद्दृष्टेरिति दृष्टिः श्रुतौ स्मृतौ च । रैक्वस्य श्रुतौ, भीष्मादेश्च स्मृतौ । रैक्ववाचक्नवीप्रभृतयो विधुरा इति भामती । संवर्गविद्यायां विद्यानिष्ठाय रैक्वाय महत्तमाय जानश्रुतिना कन्यादानं कृतमुक्तम् । अतः स तदा न गृहस्थः । भीष्मो ब्रह्मचारीति प्रसिद्धिः । गुरुकुले वासाभावात् नासौ नैष्ठिको भवितुमर्हति । समावृत्तश्च न ब्रह्मचारी ; किंतु अनाश्रमी । आदिपर्वणि (१०९) 'अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति । परित्यजाम्यहं राज्यं मैथुनञ्चापि सर्वशः ' इति वचनस्वारस्यात्, अनुशासनपर्वणि, (२७३) 'स्तूयमानो महातेजाः भीष्मस्याग्नीन् अनुव्रजन् ', 'युधिष्ठिरोऽहं नृपते···· प्राप्तोऽस्मि समये राजन् अग्नीनादाय ते विभो ' इति वाक्यत आहिताग्नित्वावगमात् गृहस्थ एव भीष्म इति ज्ञायते । मीमांसकैस्तथैवोक्तः । अथाप्यत्र अन्तरेति पदेन तत्तदाश्रमीयपूर्णधर्मानुष्ठानरहितानामप्यधिकारस्य विवक्षितत्वात्, शांकरभाष्ये च विधुराणामिव द्रव्यादिसंपद्रहितानामपीह ग्रहणात् पत्नीसाहित्यप्रद्वेषिणो भीष्मस्य बहुगृहस्थधर्मवैकल्यमेवात्र विवक्षितम् । संवर्तश्च (आश्वमे. ५) स्वाग्रजेनाऽऽङ्गिरसेन बृहस्पतिना बाधितः अर्थान् उत्सृज्य दिग्वासाः वने वासमरोचयत् । उक्तश्च तेनैव स्वयाज्यं मरुत्तं प्रति, (७) 'गार्हस्थ्यञ्चैव याज्याश्च सर्वा गृह्याश्च देवताः । पूर्वजेन ममाक्षिप्तम्, शरीरं वर्जितं त्विदम्' इति । एवम्भूतस्योपरि मरुत्तयाजकत्वोक्त्या, अयं निर्विण्णो दारिद्र्यवशात् नग्नप्रायोऽपि असंनिहित पत्नीकोऽपि, गार्हस्थ्योत्तरमाश्रममप्राप्त एव पाण्डित्यं निर्विद्य बाल्येन स्थित इति अस्याप्यत्र ग्रहणम् ॥ एवमन्तराऽपि विद्यासद्भावे श्रुतिस्मृतिप्रदर्शकस्य सूत्रस्य तदुचितकर्ममात्रस्यापि विद्याङ्गत्वसंभवस्तेनावगम्यत इति ज्ञापने तात्पर्यम् ; तदाह नचेत्यादिना ॥ ३६ ॥ अथ तावन्मात्रेणापि विद्यानिष्पत्तिमेव स्मृतितो-

विद्यानुग्रह इति शक्यं वक्तुम्, (बृ. ६-४-२२) "यज्ञेन दानेन तपसाऽनाशकेन" इति दानादीनाम् आश्रमेषु अनैकान्तिकानामप्यनुग्राहकत्वदर्शनात्। यथोर्ध्वरेतस्सु विद्यानिष्ठत्वदर्शनादग्निहोत्रादिव्यतिरिक्तैरेव विद्यानुग्रहः क्रियते ; तथाऽनाश्रमिष्वपि विद्यादर्शनादाश्रमानियतैः जपोपवासदानदेवताराधनादिभिर्विद्यानुग्रहः शक्यते कर्तुम् ॥ ३६ ॥

अपि स्मर्यते । ३४ । ३७ ।

अपिच अनाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते, (मनु. २-८७) "जप्येनापि च संसिद्ध्येत् ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यात् मैत्रो ब्राह्मण उच्यते" इति । संसिद्ध्येत्—जपाद्यनुगृहीतया विद्यया सिद्धो भवतीत्यर्थः ॥ ३७ ॥

विशेषानुग्रहश्च । ३ । ४ । ३८ ।

न केवलं न्यायस्मृतिभ्यामयमर्थः साधनीयः ; श्रूयते चानाश्रमनियतैर्धर्मविशेषैर्विद्यानुग्रहः, (प्रश्नोप. १-१०) "तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्य" इति ॥

अतस्त्वितरज्ज्यायो लिङ्गाच्च । ३ । ४ । ३९ ॥

तुशब्दोऽवधारणे । अतः—अनाश्रमित्वात् इतरत्—आश्रमित्वमेव ज्यायः । अनाश्रमित्वमापद्विषयम् ; शक्तस्य त्वाश्रमित्वमेवोपादेयमित्यर्थः ; भूयोधर्मकाल्पधर्मकयोरतुल्यकार्यत्वात् । लिङ्गाच्च—स्मृतेरेवेत्यर्थः । स्मर्यते च शक्तं प्रति आश्रमस्योपादेयत्वम् , (द. स्मृ. १-१६) "अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इत्यादिना । निवृत्तब्रह्मचर्यस्य मृत-

---

ऽपि दर्शयितुमुत्तरसूत्रम् ; न तु विद्यासद्भावं दर्शयितुम् , पूर्वसूत्रोक्तत्वात् । तदनुरुध्य व्याख्याति **जपादिभिरेवे**ति । जप्येन—जपविषयताविशिष्टमन्त्रेण । **संसिद्ध्येत्** , सर्वकर्मानुष्ठानसाध्यं फलं विद्योपकारादि प्राप्नुयात् । **कुर्यादन्यत्**—दार-द्रविणाद्युपपत्तौ सत्यां यज्ञादिकं कुर्यात् , तदभावे न कुर्यात् । **मैत्रो ब्राह्मण उच्यते** । वैधहिंसाया अहिंसात्वात् तदनुष्ठानेन प्राणिष्वस्य मैत्रीहान्यभावेऽपि प्राणिनः प्रति हिततयाऽनुकूलत्वेऽपि, प्राणिनामस्मिन् मैत्री दुर्लभा । जपतपःपरेषु तु प्राणिनः स्निह्यन्तीति शास्त्रप्रसिद्धम् । अतस्तादृशमित्रसंपन्नत्वरूपं लाभमवेक्ष्य संतोष्टव्यम् । तेन ब्रह्मनिष्ठतारूपब्राह्मणत्वलाभ इति ।

सूत्रद्वयार्थानुवादः **न्यायस्मृतिभ्यामि**ति । अनुग्रहस्मारणस्य दर्शितत्वात् परिशेषसिद्धमाह **श्रूयते** इति । धर्म**विशेषैः** यागाद्यपेक्षया विशिष्टैर्धर्मैः । कायिकवाचिकमानसेषु मानसं श्रेष्ठम् । कायक्लेशेन्द्रियनिग्रहाराध्यध्यानादिना च तपो विशिष्यते । तादृशस्याधिककालाचरणं हि श्रेय इति भावः ॥ ३८ ॥

नन्वेवं मैत्रत्वे विशेषानुग्रहे च चिन्त्यमाने विद्यानिष्ठानामनाश्रमित्वमेव ज्यायः । तत्राह **अतस्त्वि**ति । **इतरत्तु** आश्रमित्वमेव । **भूयोधर्मके**ति । तपआदिचरणासमर्थेषु हि धर्माल्पत्वमेव । इदमुपलक्षणम् । अविद्वल्लोकसंग्रहस्यापि कार्यत्वादाश्रमित्वं ज्यायः । ईदृशार्थस्य केवलतर्कासाध्यत्वादाह **स्मृतेरेवे**ति । रैक्वस्य दारपरिग्रहप्रवृत्त्यादिकं ज्यायस्त्वे लिङ्गमिति दुर्निष्कर्षम् , वैराग्यमान्द्यादपि तत्संभवात् । सूत्रे **चकार** एवकारार्थः । **द्विज** इति । 'आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते यतः' इत्युत्तरार्धम् । **निवृत्ते**ति

भार्यस्य च अवैराग्ये सति दारालाभः आपत् ॥ ३९ ॥ इति विधुराधिकरणम् ॥ ९ ॥

११८. तद्भूताधिकरणम् ३-४-१० ॥

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः । ३ । ४ । ४० ॥**

नैष्ठिकवैखानसपरिव्राजकाश्रमेभ्यः प्रच्युतानामपि ब्रह्मविद्यायामधिकारोऽस्ति, नेति चिन्तायाम् — विधुरादिवत् अनाश्रमैकान्तैर्दानादिभिर्विद्यानुग्रहसंभवादस्त्यधिकारः इति प्राप्ते उच्यते—तद्भूतस्य तु नातद्भाव —इति । तुशब्दः पक्षव्यावृत्त्यर्थः। तद्भूतस्य—नैष्ठिकाद्याश्रमनिष्ठस्य, नातद्भावः—अतथाभावः अनाश्रमित्वेनावस्थानं न संभवति । कुतः ? तद्रूपाभावेभ्यो नियमात्-तद्रूपाणि=तेषां नैष्ठिकादीनां रूपाणि-वेषाः, धर्मा इत्यर्थः ; तेषामभावाः—तद्रूपाभावाः ; तेभ्यः शास्त्रैर्नियमात् । नैष्ठिकाद्याश्रमप्रविष्टान् स्वाश्रमधर्मनिवृत्तिभ्यो नियच्छन्ति हि शास्त्राणि, (छा. २-२३-१) "ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" इति, (—) "अरण्यमियात् ; ततो न पुनरेयात्" इति, (यजु. का?) "संन्यस्याग्निं न पुनरावर्तयेत्" इति च । अतो विधुरादिवत् नैष्ठिकादीनामनाश्रमित्वेनावस्थानासंभवात् न तान् अधिकरोति ब्रह्मविद्या । जैमिनेरपि इति अविगानं दर्शयन् उक्तं स्वाभिमतं द्रढयति ॥ ४० ॥

अथ स्यात्—नैष्ठिकादीनां ब्रह्मचर्यात्प्रच्युतानां प्रायश्चित्ताधिकारः संभवति। अस्ति च प्रायश्चित्तमधिकारलक्षणे निरूपितम्, (पू. ६-८-२२) "अवकीर्णिपशुश्च तद्वत्" इति । अतः प्रच्युतब्रह्मचर्यस्य प्रायश्चित्तसंभवात् कृतप्रायश्चित्तो ब्रह्मविद्यायामधिकरिष्यति-इति। तत्राह—

---

**आपद्विषय**मिति स्वयंभाषितापत्पदार्थवर्णनम् । स्नातको विधुरश्चानाश्रमीति एतद्भाष्योक्तम् ॥ ३९ ॥

अनाश्रमित्वाविशेषात् आश्रमभ्रष्टानामप्यस्तु विद्याधिकार इति शंकया संगतिः । गृहस्थस्य अध्ययनाशया वा हेत्वन्तरेण वा कदाचित् ब्रह्मचारिधर्मपरिग्रहे प्रायश्चित्तमाल्पम्, न भ्रष्टताव्यवहार इति त्रिनयमात्तग्रहणम्। सूत्रे तच्छब्दः नैष्ठिकादिवाची । **नेत्यस्य**, 'न साधुः ; नापद्दशायामपि निर्दोष' इत्यर्थः । **नियमात् तद्रूपाभावेभ्यः**—तत्तद्धर्माभावान्निवर्तनात् शास्त्रकृतात् । **अनाश्रमित्वेनावस्थानासंभवा**दिति । अशक्तविषये अलब्धदारविषये चानाश्रमित्वेनावस्थानं स्नातकादौ शास्त्रेष्टम्. न तथेहेति तदयोगादित्यर्थः । **अविगानम्** असंमत्यभावम् । संन्यासमनिच्छतो जैमिनेः, संन्यस्तस्य गार्हस्थ्यप्राप्तिरिष्टा स्यादिति न मन्तव्यमिति सूचनाय **जैमिनेरपी**त्युक्तमिति भावः । उपरि जैमिनिसूत्रस्य ग्रहीष्यमाणत्वाच्च तदुपस्थित्या तदुक्तिः । सूत्रे विद्यानधिकारबोधकपदाभावेऽपि तस्य बहिस्त्विति वक्ष्यमाणसूत्रादर्थतः सिद्धिः । अतस्तावत्पर्यन्तमेकमेवाधिकरणम् ॥ ४० ॥

**अधिकारलक्षणे** अधिकारविचारपरेऽध्याये । अयमस्यां विंशत्यध्याय्यां मीमांसायां षष्ठः । 'अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्' इति पूर्णसूत्रम्। अवकीर्णी=स्त्रीगमनाद् भग्नव्रतः । तत्कर्तव्यः प्रायश्चित्तरूपः पशुयागः, 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत'इति विहितः । होमस्याहवनीये

**न चाऽऽधिकारिकमपि पतनानुमानात् तदयोगात् । ३ । ४ । ४१ ॥**

अधिकारलक्षणोक्तमपि **प्रायश्चित्तं नैष्ठिकादीनां तद्भ्रष्टानां न संभवति ; कुतः ?** पतनानुमानात् तदयोगात्—**नैष्ठिकादीनां प्रच्युतानां पतनस्मृतेः तस्य प्रायश्चित्तस्यासंभवात्**—(आग्नेय. १६-५-२३) "**आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा" इति । अतोऽधिकारिलक्षणोक्तं प्रायश्चित्तमितरब्रह्मचारिविषयम् ॥४१॥**

**उपपूर्वमपीत्येके भावमशनवत् तदुक्तम् । ३ । ४ । ४२ ॥**

---

कार्यत्वात् आधानेनाग्निं संपाद्य तत्र जुहोतीति पूर्वपक्षे, आधानस्य कालो न प्राप्त इति लौकिकाग्नौ होम इति सिद्धान्तितम् । **तद्वदि**त्यस्य पूर्वाधिकरणोक्तस्थपतीष्टिवदित्यर्थः । उपनयनहोमवदित्युक्तं **कल्पतरौ ।** तेषां लौकिकाग्नौ कर्तव्यत्वं तत्पूर्वाधिकरणे उक्तम् । संभवति समनन्तराधिकरणार्थग्रहणे तत्त्यागो न युक्तः । एवं-उपनयनहोमाः उपनयनात् प्रागपि काञ्चिदुदूह्य तया सहाग्निमाधाय तत्र क्रियन्ताम् । पश्चाद्विवाहश्चापत्याद्यर्थो भविष्यतीति विचारस्य, तत्परिहारस्य च प्रपूर्वाधिकरण एव कृतत्वात् अवकीर्ण्यधिकरणे पुनस्तथा पूर्वपक्षो न कर्तव्यः । अतः उपनयनात् पूर्वं विवाहायोगेऽपि, स्थपतेरद्विजत्वाद् आधानविध्यभावेऽपि, अवकीर्णिब्रह्मचारी द्विजत्वात् यथाऽवकीर्णी तथैवऽऽधानमाचरेत् ; अथवा विद्यावत्त्वाद् विवाहकालस्य च प्राप्तत्वात् विवाहं कृत्वा सदार आधाय पश्चात् प्रायश्चित्तमाचरतु इति पूर्वपक्षः । अवकिरणहेतुस्त्रीत्यागपूर्वमेव प्रायश्चित्तस्य कार्यत्वात्, 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति प्रायश्चित्तात्पश्चादेव विवाहेऽधिकारात् आधानकालो न प्राप्त इति लौकिक एवाग्नौ अवकीर्णिपशुरिति च सिद्धान्तः। अधिकारलक्षणे ब्रह्मचारिप्रायश्चित्तमात्रस्य विचारितत्वेऽपि भाष्ये **नैष्ठिकादीना**मिति अवतारिकारम्भे व्याख्यावसरे च **आदि**शब्दप्रयोगः कथमिति चेत्—श्रुतौ ब्रह्मचारीति पदं स्त्रीसंगराहित्यनियमरूपब्रह्मचर्याश्रयवानप्रस्थादित्रयपरमिति पूर्वपक्षाशयात् । यद्वा सूत्रे **चकारेण अपि**शब्देन वा सामान्यत उक्तस्य प्रायश्चित्तान्तरस्य ग्रहणेन यत्यादिष्वपि तद्भावाभावविचार इह क्रियत इत्यस्तु । जैमिनिसूत्रस्य ब्रह्मचारिमात्रविषयकत्वादेवोपरि भाष्ये एकवचनमपीति । **आरूढ** इत्युदाहरणं यत्यादिपतनस्मृत्युपलक्षणम् । **विषय**मिति । पश्चाद् विवाहार्हं उपकुर्वाणो यः प्रथमाश्रमी तन्मात्रविषयम् ; न तु नैष्ठिकादिसर्वविषयमित्यर्थः । न च ब्रह्मचारित्वेन रूपेण सामान्यतो निर्देशात् अवकीर्णिपशुरुभयविषयक इति जैमिन्याशयः स्यादिति वाच्यम्-नैष्ठिकस्य विवाहप्रसक्त्यभावात् विवाहात् पश्चात् प्रायश्चित्तचरणमस्त्विति पूर्वपक्षस्य वा, आधानस्या**प्राप्तकाल**त्वादिति समाधानस्य वाऽनवसरात् । प्रत्युत नैष्ठिकस्य चेत् प्रायश्चित्तम्, तत् लौकिकाग्नावेव कार्यमिति तथैवोपकुर्वाणस्यापि स्यात्, कर्मण एकत्वात् । अतो व्यर्थं स्यादधिकरणम् । अत उपकुर्वाणमात्रविषयमिति भावः ॥ ४२ ॥

अनाश्रमित्वेऽप्यधिकारः पूर्वसूत्रे वारितः । तद्भूतस्य प्रायश्चित्ते कृते तद्भाव एवास्तीति तदाश्रमितयैवाधिकारः स्यादिति शङ्का प्रायश्चित्ताभावाभिप्रायेणात्र परिहृता । अथ प्रायश्चित्तमस्तीति ऋष्यन्तरपक्षमाह **उपपूर्व**मिति । उपशब्दपूर्वकपातकशब्दवाच्यमिति तदर्थः । उपपातकमिति यावत् । पात-

**नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनमुपपूर्वम्-उपपातकम् महापातकेष्वपरिगणितत्वादिति, तत्र प्रायश्चित्तस्य** भावं—**विद्यमानतामप्येके आचार्या मन्यन्ते**; अशनवत्—**यथा मध्वशनादिनिषेधः तत्प्रायश्चित्तश्च उपकुर्वाणस्य नैष्ठिकादीनां च समानम्। तदुक्तं स्मृतिकारैः,** (गौत. १-प्र.) "**उत्तरेषां चैतदविरोधि**" **इति। गुरुकुलवासिनो यदुक्तम्, तत् स्वाश्रमाविरोधि उत्तरेषामप्याश्रमिणां भवतीत्यर्थः। तद्वदिहापि ब्रह्मचर्यप्रच्यवने प्रायश्चित्तसंभ(सद्भा)वात् ब्रह्मविद्यायोग्यताऽप्यस्ति ॥ ४२ ॥**

---

कशब्दप्रयोगेऽपि जुगुप्सेव सूत्रकारस्य। **अपिशब्दस्य भाव**मित्यत्रान्वयो भाष्यादवगम्यते। यथास्थानमेव तदिष्टौ तु अवकीर्णित्वमुपपातकमपि भवतीति हेतोः प्रायश्चित्तभावमेके आहुरित्यर्थः। गुरुदारसंगमादवकीर्णित्वं महापातकरूपम्, अन्यविधं तूपपातकम्। उपपातकत्वे च प्रायश्चित्तमस्तीति भावः। **उत्तरेषां** गृहस्थवानप्रस्थपरिव्राजकानामपि। **एतत्** नैष्ठिकानैष्ठिकब्रह्मचारिविषये उक्तं ग्राह्यम्। न सर्वम्, किं तु यत् तदाश्रमाविरोधि तावन्मात्रमित्यर्थः। गौतमधर्मसूत्रे ब्रह्मचारिधर्मान् प्रस्तुत्य, वर्जयेत् मधुमांसगन्धमाल्येत्यादिभिः कतिपयनिषेधान् कतिपयविधींश्च कृत्वा, विद्यान्ते....कृतानुज्ञस्य स्नानमिति समावर्तनं विधाय, अथ नैष्ठिकगृहस्थभिक्षुवैखानसरूपेण विभज्य नैष्ठिकधर्मांश्च प्रतिपाद्योक्तम्, उत्तरेषाञ्चैतदिति। सामान्यतो ब्रह्मचारिविषये उक्तं सर्वमत्र **एतच्छब्दोपस्थाप्यम्**। यद्यपि मध्वशनवर्जनादिव्यतिक्रमे प्रायश्चित्तं तत्र पूर्वं नोक्तम्—अथापि निषेधपरामर्शे सति तद्व्यतिक्रममूलप्रायश्चित्तस्यापि प्रमाणान्तरसिद्धस्योपस्थित्या निषेधाद्यतिदेशकथनं तस्यापि ज्ञापकं भवतीत्याशयः। मध्वशने इदं प्रायश्चित्तमिति प्रातिस्विकविधेः उत्तराश्रमविषयकत्वमप्यस्तीत्येतद्धि उत्तरेषाञ्चैतदिति प्रकृतवाक्येन तेषुतन्निषेधप्रवृत्तिज्ञाने सत्येव भवेत्। इदमभिप्रेत्यैव **टीकायां पूर्वोक्तधर्मान् प्रायश्चित्तश्चेति** धर्मेषु परं पूर्वोक्तत्वमुक्तम्। सूत्रप्रवृत्तिफलमाह **ब्रह्मविद्यायोग्यताप्यस्तीति**। विद्याधिकारापादनार्थमेव प्रायश्चित्तस्य शंकितस्य पूर्वसूत्रे निषेधात् पुनः प्रायश्चित्तभाववर्णनमधिकारशंकाभिप्रायेणैव हि भवतीति। अत एवेदं चोद्यसूत्रमिति **टीकायामुक्तम्**। यदि तु कृतप्रायश्चित्तस्याधिकारशंकायां सूत्रकारः तद्विषये मतभेदं सूत्रद्वयेनोपन्यस्य प्रायश्चित्तभावाभावविवादेऽपि विद्याधिकारशंका न युक्तेति उपर्याहेति सूत्रत्रयमेकीक्रियते, तदेदं न चोद्यसूत्रं स्यात्। सर्वथा तात्पर्यमेकमेव। उत्तरसूत्रे **तुशब्दो मतान्तरव्यावृत्त्यर्थ** इत्युक्तम्; शंकाव्यवच्छेदक इति नोक्तम्। अतो ब्रह्मविद्याधिकारोऽप्यस्तीति उपपातकत्वपक्षे युक्तमिति केषांचित् सिद्धान्त इति ज्ञायते। तदा इदं न चोद्यसूत्रम्; किंतु चोद्यवत् परिहरणीयतन्मतानुवादकमिति स्यात्।

ननु **तदुक्त**मिति स्मृतिवाक्योदाहरणमयुक्तम्। सर्वत्र शारीरके **तदुक्त**मिति पूर्वमीमांसासूत्रपरामर्शस्यैव दर्शनादिति चेत्—अत्र स्वरसतः तथा सूत्रं सुग्रहं नेत्याशयः। यत्तु **शांकरो**क्तम्, तन्न घटते। तत्र हि—प्रथमाध्यायस्थम्, 'तेष्वदर्शनात् समा विप्रतिपत्तिः स्यात', 'शास्त्रस्था वा तन्निमित्तत्वात्' इति यववराहाद्यधिकरणपूर्वपक्षसिद्धान्तसूत्रद्वयमुपात्तम्। आर्यम्लेच्छाभ्यां प्रयोगात् यत्र शब्देऽर्थभेदप्रतीतिः, तत्राविशेषात् द्वयमपि प्रामाणिकमिति शंकायाम्, गमकविशेषाभावेऽपि शास्त्रस्था आर्या एवादरणीयाः;

बहिस्तूभयथाऽपि स्मृतेराचाराच्च । ३ । ४ । ४३ ॥

तुशब्दो मतान्तरव्यावृत्त्यर्थः । उपपातकत्वे महापातकत्वेऽप्येते बहिर्भूता एव ब्रह्मविद्याधिकारिभ्यः ; ब्रह्मविद्यायामनधिकृता इत्यर्थः । कुतः ? स्मृतेः—पूर्वोक्तात् पतनस्मरणात् । यद्यपि कल्मषनिर्हरणाय कैश्चिद्वचनैः प्रायश्चित्ताधिकारो विद्यते, तथापि कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न संभवति, "प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा" इति स्मृतेरित्यर्थः। आचाराच्च—शिष्टा हि नैष्ठिकादीन् भ्रष्टान् कृतप्रायश्चित्तानपि वर्जयन्ति । तेभ्यो ब्रह्मविद्यादिकं नोपदिशन्ति । अतः तेषां नास्ति ब्रह्मविद्यायामधिकारः ॥ ४३ ॥

इति तद्भूताधिकरणम् ॥ १० ॥

---

तेषां धर्माविप्लुतिहेतोः यथार्थपदप्रयोगरक्षणपरत्वादिति तदर्थः । तद्वदिह नाऽऽर्यतदन्यमूलविवादः । ब्रह्मचार्यवकीर्णीत्यत्र ब्रह्मचारिपदस्य साधारणत्वात उपकुर्वाणविषये संकोचो न युक्त इत्यस्य चेदं मीमांसासूत्रं नार्जवेनोपपादकम् । ब्रह्मचारी गुरुदारगत्या यद्यवकीर्णी, तदेदं प्रायश्चित्तं किं शुद्धिकरं भवति । एवञ्च संकोचे कार्ये नैष्ठिकविषयादपि संकोचो भवेदपि । माऽस्तु नाम अवकीर्णिपशुः । उपपातकत्वे तत्प्रयुक्तं विशेषविहितं वा स्नानजपसंकीर्तनादि सामान्यरूपं वा प्रायश्चित्तान्तरमेव मध्वशन इव भविष्यतीति किमनेन । अतो मीमांसासूत्राङ्गस्याभावात् अशनविषयप्रमाणोपन्यासस्यापेक्षितत्वाच्च भाष्ये तदुक्तमिति स्मृतिविषयकतया व्याख्यातम् । यदि यथाकथञ्चिदीषदुपयोगेनापि मीमांसासूत्रग्रहणमेव युक्तमित्याशयः, तर्हि, तत्र दशमषष्ठद्वादशं मध्वशनाधिकरणमेवोपादीयताम् । तत्र हि, (१०-६-३२) 'मधु न दीक्षिताः ब्रह्मचारित्वात्', 'प्राश्यते वा यज्ञार्थत्वात्' इति, सत्रे ऋत्विजां दीक्षितत्वात् ब्रह्मचारिधर्मवत्त्वेन मध्वशनं न कार्यमिति पूर्वपक्षः ; क्रत्वर्थमिदं कार्यमिति च सिद्धान्तः । तेन ब्रह्मचारिणो मध्वशनं निषिद्धमिति ज्ञायते, तत एव प्रायश्चित्तमपीति अशनवदित्युक्तस्योपपादनं भवितुमर्हति । ब्रह्मचार्यवकीर्णीत्यत्र ब्रह्मचारिशब्दस्य वानप्रस्थादिसाधारण्यमपि भवति न वेति विचारेऽपि एतन्मीमांसाधिकरणविचारसरणिरुपकरोतीति प्रयोजनान्तरमपि भवेत् । प्रमाणे उपन्यसनीये यदतीवोपयुक्तम्, तत सूत्रार्थत्वेन ग्राह्यमित्याशयेन, स्थितमपि मीमांसासूत्रमुपेक्ष्यान्यदुक्तम्, संगतमसंगतं वा मीमांसासूत्रमेव तदुक्तमित्यत्र ग्राह्यमिति मतिर्मा भूदिति परशिक्षार्थम् ॥ ४२ ॥

कर्माधिकारेति । कर्मणां नरकादिहेतुप्रत्यवायकरत्वं कर्माधिकारानापादकत्वं सजातीयवासनावहत्वञ्चेति शक्तित्रयम् । 'शुध्येत् स आत्महा' इति विशेषोक्त्या कर्माधिकारप्रतिबन्धकशक्तिविघटकत्वमत्र विषये कस्यापि प्रायश्चित्तस्य नास्तीति ज्ञायत इति ॥ ४३ ॥

विद्याङ्गभूतो वर्णाश्रमादिधर्मः प्रवृत्तिरूपः शमदमादिरूपश्च बहिरङ्गो विचारितः ; अथान्तरङ्गः पाण्डित्यादिर्विचारयिष्यते । बहिरङ्गक्रत्वाश्रितोपासनानामपि क्रतुवीर्यवत्तरत्वाधानेन विद्योपयोगात् तद्विषयेऽपि यदि किञ्चिदिह पादे विचार्यमस्ति, तदत्रैव प्राप्तावसरम् । तत्र पूर्वं परविद्यारूपोपासनानुष्ठाता कस्क इति विचारितत्वात् तथैव क्रत्वाश्रितोपासनकर्ताऽपि को भवितुमर्हति उपस्थितत्वात्

११९. स्वाम्यधिकरणम् ३-४-११ ॥

स्वामिनः फलश्रुतेरित्यात्रेयः । ३ । ४ । ४४ ॥

कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि किं यजमानकर्तृकाणि, उत ऋत्विक्कर्तृकाणीति चिन्तायाम्—यजमानकर्तृकाणीत्यात्रेयो मन्यते ; कुतः ? फलश्रुतेः—वेदान्तविहितेषु दहराद्युपासनेषु फलोपासनयोरेकाश्रयत्वदर्शनात् इह च क्रतुफलाप्रतिबन्धरूपस्योद्गीथोपासनफलस्य यजमानाश्रयत्वश्रवणादित्यर्थः । न च गोदोहनादिवत् अङ्गाश्रयत्वेन यजमानकर्तृकत्वासंभवः; गोदोहनादिषु ह्यध्वर्युकर्तृकप्रणयनाश्रयगोदोहनोपादानमन्येनाशक्यम् ; इह तूद्गातृकर्तृकेऽप्युद्गीथे तस्योद्गीथादेः रसतमत्वानुसंधानं यजमानेनैव कर्तुं शक्यते ॥ ४४ ॥

इति प्राप्तेऽभिधीयते—

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते । ३ । ४ । ४५ ॥

आर्त्विज्यम्—ऋत्विजः कर्म उद्गीथाद्युपासनमित्यौडुलोमिराचार्यो मन्यते । कुतः? तस्मै हि प्रयोजनाय ऋत्विक् परिक्रीयते ः फलसाधनभूतस्य साङ्गस्य क्रतोरुपादानायेत्यर्थः। कर्म-

---

विचार्यते । स्वामिन इति । स्वामी यजमानः ; तत्कर्तृकमित्यर्थः । उद्गीथाद्युपासनं स्वामिकर्तृकम् स्वामिगतफलार्थत्वादिति । ननु गोदोहनेन पशुकामस्य प्रणयेदिति विहिते स्वामिफलभूतपश्वर्थे साध्याभावाद् व्यभिचार इत्यत्राह गोदोहनेति । उक्तानुमाने हेतुकोटौ शक्यत्वमपि निवेश्यम् ; प्रणयनेऽध्वर्युणा क्रियमाणे तत्कर्मभूतगोदोहनोपादानं स्वाम्यशक्यमिति तद्व्यावृत्तिरिति ॥ ४४ ॥

आर्त्विज्यम्—ऋत्विक्कर्म । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति क्रियारूपार्थे ष्यञ् । तस्मै कर्मणे हि ऋत्विक् स्वामिना परिक्रीयते—नियतकालं भृत्या स्वीक्रियते । स्वकर्तव्यसर्वकार्यनिर्वाहाय ऋत्विग्वरणस्य शास्त्रानुमतत्वात् वृतेनैव सर्वं कार्यम् । यागस्य तु स्वत्वत्यागरूपतया यजमानद्रव्यस्य ऋत्विजा दातुमशक्यत्वात् तत्र स्वाम्येव कर्ता । एवं याजमानमिति समाख्यादिरूपापवादस्थलेऽपि। तदन्यत् सर्वमृत्विक्कार्यमेवेति । अन्यथा हि स्वामिफलार्थत्वात् सर्वं स्वामिकर्तव्यमेव स्यात् । अतस्तत्फलार्थत्वं तदनुष्ठेयत्वे न हेतुः। अत एव तृतीये (३-८-१३) ऋत्विक्फलं करणेष्वर्थवत्त्वात् ; स्वामिनो वा तदर्थत्वादित्यधिकरणे, 'ममाग्ने वर्चो विहवेष्वस्तु' इत्यादिकरणमन्त्राणामाध्वर्यवत्वेऽपि ममपदसत्त्वेऽपि फलस्य यजमानगामित्वमेव निर्णीतम् । 'तथा कामोऽर्थसंयोगात्' (३-८-५) इत्यधिकरणे च, यद्यपि, 'यदि कामयेत वर्षुकः पर्जन्यः स्यादिति, नीचैः सदो मिनुयात्' इत्यत्र पर्जन्यवर्षुकत्वकामनायाः यजमानकर्तृकत्वस्थापनेऽपि सदोमानक्रियायाः आध्वर्यवत्वं तज्जन्यफलस्य स्वामिगतत्वञ्चाभिमतम् । नन्वेवं पूर्वमीमांसयैव नीर्णीतत्वात् पौनरुक्त्यम् ; तत्र प्रणयनादिवदृत्विक्कर्तृकत्वेन सिद्धविषये फलस्य स्वामिगतत्वस्थापनात्, स्वामिफलार्थं स्वामिशक्यं यत् तत् स्वामिकार्यमिति शंकाया अत्र परिहारात् वैलक्षण्यात्। सूत्रे तस्मै इति चतुर्थी न, 'परिक्रयणे संप्रदानमन्यतरस्याम्' इति सूत्रे विशेषविधानात तद्बलात साधकतमरूपार्थे, यथा शतेन शताय वा परिक्रीतः इति इति मा कश्चिन्मंस्तेत्याशयेन प्रयोजनायेति

विधिषु, (यजुः. ६-३-७) "ऋत्विजो वृणीते", "ऋत्विग्भ्यो दक्षिणां ददाति" इति ऋत्विक्कर्तृकत्वशास्त्रेण फलसाधनभूतं साङ्गं कर्म ऋत्विग्भिरनुष्ठेयमित्यवगम्यते ; तदन्तर्गतानि कायिकानि मानसानि च कर्माणि ऋत्विक्कर्तृकाण्येव। न च शक्त्यशक्ती तस्य निबन्धनम्। यद्यप्युद्गीथाद्युपासनं पुरुषार्थः, तथापि क्रत्वधिकृताधिकारत्वात् क्रतोश्च साङ्गस्य ऋत्विक्कर्तृकत्वात्, "यदेव विद्यया करोति...तदेव वीर्यवत्तरम्" इति ऋत्विक्कर्तृकक्रियोपयोगित्वेन विद्यायास्तदेककर्तृकत्वश्रवणात् ऋत्विक्कर्तृकाण्येतानि। दहरादिषूपासनेषु ऋत्विक्कर्तृकत्वाश्रवणात्, (पू. मी. ३-७-१८) "शास्त्रफलं प्रयोक्तरि" इति न्यायाच्च फलिकर्तृकत्वमेव ॥

इति स्वाम्यधिकरणम् ॥ ११ ॥

## १२०. सहकार्यन्तरविध्यधिकरणम् ३-४-१२ ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् । ३ । ४ । ४६ ॥

व्याख्यानम् । चतुर्थी तादर्थ्ये इति भावः । **क्रत्वधिकृतेति**। उद्गीथोपासनमृत्विक्कर्तृकं तत्कर्तृकक्रतुप्रयोगान्तर्गतत्वे सति तच्छक्यत्वे सति अपवदनाविषयत्वादिति शक्यत्वमत्रैवानुकूलमिति भावः। **ऋत्विक्कर्तृकेति**। ननु यदेव विद्यया करोतीति वाक्ये यच्छब्देन वीर्यवत्तरत्वरूपफलाश्रयस्य क्रतोः प्रधानस्यैव ग्रहणौचित्यात् तस्य च यज्ञस्य स्वामिकार्यत्वात् कथमेवमिति चेत्—क्रतोः साक्षादाश्रयत्वाभावात् अङ्गद्वारैवाश्रयत्वात् अङ्गानुष्ठानस्य चार्त्विज्यत्वात् यत् प्रधानकर्म विद्याश्रयभूताङ्गक्रियाविशिष्टं करोतीत्यर्थ एव पर्यवसानमिति। **शास्त्रफलमिति**। यद्यपीदं पूर्वपक्षसूत्रम्, सर्वं स्वामिकार्यमिति शंकार्थम्, अथापि अत्र सिद्धान्ते, "अन्यो वा स्यात् परिक्रयाम्नानात्" इति परिक्रयस्थल एवान्यकर्तृकत्वसिद्धान्तकरणादितरत्र पूर्वपक्ष्युक्तसंमतिरिति इदमिह प्रमाणम्। न च तेनैवाधिकरणेन गतार्थत्वादिदमधिकरणवैयर्थ्यम्—परिक्रयस्य कर्मकाण्डकल्पसूत्राद्युक्तमात्रविषयकत्वम्, नोपनिषदुक्तानुपस्थितोपासनविषयकत्वमिति ऋत्विक्कलहशमनार्थत्वात्। एतदुपरि श्रुतेश्चेति सूत्रमपि परे पठन्ति, उद्गीथाद्युपासनघट्टे अधीयमाने स्पष्टं ज्ञायत एव प्रायः ऋत्विक्कर्तृकत्वमिति। श्रुतिवाक्यवत् औडुलोम्युक्तयुक्तेरप्यप्रधृष्यत्वात् संप्रदायाभावाच्च तत् सूत्रमत्र नादृतम्। परिक्रयणसिद्धांशानुवादरूपं तत् सर्वं वाक्यमिति ज्ञापनायात्रैव भाष्ये तत्सूत्रार्थसूचनमपि कृतं **तदेककर्तृकत्वश्रवणादिति** ॥ ४५ ॥

पादारम्भे कर्मप्राधान्यस्य प्रस्तुतत्वात् निष्कामकर्मणां सत्त्वजननेन ध्यान इव पाण्डित्यमौनयोरप्युपयुक्तत्वाच्च विद्यासहकारिभूतं कर्म, अथ तद्वत् ध्येयाविषयकतया बहिरङ्गभूतं सहकारि शमादिकञ्च निरूप्य, तदनुबन्धितया दृष्टिविधिनियोज्यश्चाभिधाय, अथ ध्यानसमानविषयकतया विद्यान्तरङ्गभूतं यत् पाण्डित्यं मौनञ्च तत्परवाक्यार्थविचारोऽधिकरणद्वयेन क्रियते। अन्तरङ्गपाण्डित्यविचारे आरब्धे तत्संनियोगशिष्टतया बाल्यस्यापि तदनन्तरं विचार इत्यवसरसंगतिः। इयं **सहकार्यन्तरेति** सूत्रपदेनैव दर्शिता। कहोलब्राह्मणे सर्वान्तरात्मब्रह्म प्रतिबोध्य, तद्वेदनेन एषणात्रयाद् व्युत्थाय भिक्षाचर्ये प्रवृत्तिर्भवतीत्युक्त्वा पठितम्, 'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्। बाल्यं पाण्डित्यं च निर्विद्याथ मुनिः।

(बृ. ५-५-१) "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्। बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यत्र बाल्यपाण्डित्यवत् मौनमपि विधीयते, उतानूद्यत इति विशये— मौनपाण्डित्यशब्दयोः ज्ञानार्थत्वात्, "पाण्डित्यं निर्विद्य" इति विहितमेव ज्ञानम्,

---

अमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः। स ब्राह्मणः केन स्यात्। येन स्यात् तेनेदृश एव'इति। अत्र मौनं न विधेयमिति पूर्वपक्षः; विधेयमिति सिद्धान्तः। **निर्विद्ये**त्यस्य प्राप्येत्यर्थः। बाल्यमेव विधेयम्; पाण्डित्यं मौनञ्चैकमेव श्रवणानन्तरभाविनो मननादनन्यत् प्राप्तत्वान्न विधेयमिति पूर्वपक्ष्याशयः। तस्मात् मननादन्यदेव पाण्डित्यम्। मौनञ्च ततोऽन्यत्। अतः पाण्डित्यं बाल्यं मौनमिति त्रयमत्र विधेयम्। तत्र, अथ मुनिरिति मौनविधिरिति सिद्धान्त्याशयः।

अत्र गुणसूत्रद्वयोत्थित्यनुगुणतया पूर्वपक्षगतिरेवं भाव्या—अथ मुनिरित्युक्तं मौनं सामान्यतो मननं वा अभ्यासरूपमन्यद्वेति विशये—अन्त्यं न भवति; तथासति तत्तदाश्रमधर्मव्यग्रस्य तत्रानवकाशात्। अतो विलक्षणमननविधिस्वीकारिणा तत्तदाश्रमधर्मत्याग एषितव्यः। तथाच सति छान्दोग्ये गृहस्थधर्मेणोपसंहारः, अत्र भिक्षाचरणरूपयतिधर्मोक्तिश्च न घटेतेति, तस्य तस्य वाक्यस्य तत्तद्धर्मसद्भावे तात्पर्यं नास्ति; अपित्वाश्रमान्तरधर्मप्रतिक्षेप एव इति वक्तव्यम्। एवमपि विविदिषन्ति यज्ञेन दानेनेत्यादिविरोधः स्यात्। अतो मौनं मननज्ञानमेव। केवलश्रवणे पाण्डित्यं न भवति, किंतु मननव्यापारे कृत एवेति मननव्यापाराधीनज्ञानमेव पाण्डित्यं मौनञ्चेति॥ सिद्धान्तगतिस्तु--श्रवणं विद्याप्रतिपादकवेदभागान्तर्गतवाक्यानां यथावदर्थाधिगम आचार्यात्। मननं नाम प्रतिवाक्यं विविच्य स एवार्थ इति सहेतुकं स्थापनजम्। पाण्डित्यं नाम उपदेशात् परविद्याविशेषानुष्ठानप्रकारमवगम्य तदर्थकवेदभागार्थे शाखान्तरावगतार्थोहस्य, 'अनुसंधेयगुणोपपादकत्वमस्य धर्मस्य, न तु अनुसंधेयत्वम्' इति कतिपयभागापोहस्य च क्षमं यत् ज्ञानम्, तत्संपत्तिः। यद्वाऽनन्तरवक्ष्यमाणम्। मौनमालम्बनसंशीलनम्। इदमपि बहुविधाश्रमधर्मसाहित्येन संभवत्येवेति॥ सूत्रे **सहकारि**शब्दः उत्तरो **विधि**शब्दश्च यज्ञादेः शमादेश्चोपस्थापकः। तत्, 'सहकारी यज्ञादिः शमादिश्चे'ति भाष्यादवगम्येत। अन्तरपदबलात्तु सहकारिपदं मौनपरम्। अन्यत् सहकारि **सहकार्यन्तरम्**। द्वितीय**विधि**शब्दस्य विधीयमानपरत्वस्यावश्यकत्वात् तदैकरूप्याय, **तृतीय**मिति पदेन सामानाधिकरण्यसंपत्तये च प्रथम**विधि**पदमपि विधीयमानपरम्। अतः सहकार्यन्तरञ्चासौ विधिश्चेति विग्रहः। तृतीयमिति पदात् पाण्डित्यबाल्ययोर्द्वयोस्तृतीयमिति लभ्यते। **पक्षेण**—आदरेण—तत्परत्वेन-प्रसिद्ध्या (भूरिप्रयोगेण) इत्यर्थः। **विध्यादिव**दित्यस्य अङ्गवदित्यर्थो न युक्तः। अङ्गं हि विध्यन्त इत्युच्यते। विधिकृताकांक्षात्रये साध्यसाधनाकांक्षयोर्वृत्तयोः तृतीयकथम्भावाकांक्षापूरकत्वादङ्गकलापस्य। अतोऽत्र विधिपदं यज्ञादिपरम्; **आदि**पदं विधानानर्हश्रवणमननरूपसहकारिपरम्। तथाच **तद्वतः** विद्यावतः यज्ञशमादिवत् श्रवणमननवच्च पूर्वोक्तसहकारिभ्योऽन्यत् पाण्डित्यबाल्ययोः सतो. **तृतीयं** विधीयमानं भवति मौनम्, तत्राभ्यासरूपे विधेय एव तत्पदप्रसिद्धेरिति सूत्रार्थः।

**विहितमेवे**ति; अभिहितमेवेत्यर्थः। पाण्डित्यशब्दस्य श्रवणानन्तरमननपरत्वात् पूर्वपक्षे, तस्य

"अथ मुनिः" इत्यनूद्यते ; विधिशब्दो न ह्यत्र श्रूयत इत्येवं प्राप्ते ब्रूमः—सहकार्यन्तरविधिः—इति । तद्वतः—विद्यावतः । विध्यादिवत् । विधीयते इति यज्ञादिः सर्वाश्रमधर्मः शमदमादिश्च विधिशब्देनोच्यते । आदिशब्देन श्रवणमनने गृह्येते । सहकार्यन्तरविधिरित्यत्रापि विधीयत इति विधिः ; सहकार्यन्तरं विधिश्चेति सहकार्यन्तरविधिः। एतदुक्तं भवति—यथा "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिना, "शान्तो दान्तः" इत्यादिना च सहकारी यज्ञादिः शमदमादिश्च विधीयते—यथा च (बृ. ४-४-५) "श्रोतव्यो मन्तव्यः" इति श्रवणमनने चार्थप्राप्ते विद्यासहकारित्वेन गृह्येते—तथा "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यादिना पाण्डित्यं बाल्यं मौनमिति त्रितयं विद्यायास्सहकार्यन्तरं विधीयते—इति । मौनं च पाण्डित्यादर्थान्तरमित्याह—पक्षेणेति । मुनिशब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनात् मौनं पाण्डित्यबाल्ययोर्द्वयोस्तृतीयम् । यद्यपि "अथ मुनिः" इत्यत्र विधिप्रत्ययो न श्रूयते, तथापि मौनस्याप्राप्तत्वात् विधेयत्वमङ्गीकरणीयम्, अथ मुनिस्स्यात् इति । इदं च मौनं श्रवणप्रतिष्ठार्थान्मननादर्थान्तरभूतमुपासनालम्बनस्य पुनःपुनस्संशीलनं तद्भावनारूपम् ।

तदेवं वाक्यार्थः—ब्राह्मणः-विद्यावान् । पाण्डित्यं निर्विद्य—उपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णं च विदित्वा—श्रवणमननाभ्यामप्राप्तं (भ्यां प्राप्तं) वेदनं प्रतिलभ्येत्यर्थः। तच्च भगवद्भक्तिसहकृतसत्त्वविवृद्धिकृतम् ; यथोक्तम्, (गी. ११-५३-५४) "नाहं वेदैः" इत्यारभ्य, "भक्त्या त्वनन्यया शक्यः···ज्ञातुम्" इति । श्रुतिश्च, (श्वे. ६-२३) "यस्य देवे परा

---

विधानायोग्यत्वात् । वक्ष्यति च सिद्धान्ते **मननादर्थान्तरभूत**मिति। यद्वा एतद्भाष्यस्वारस्यात् पूर्वपक्षी सिद्धान्तिवत् श्रवणजमननातिरिक्तं पाण्डित्यं तद्विधिञ्च स्वीकृत्य तदेव मौनमित्येतावन्मात्रमाहेति मन्तव्यम् । **न ह्यत्रे**ति । पूर्वं तु तिष्ठासेदिति विधिश्रवणात् पाण्डित्यादिविशिष्टविधिः । इह त्वश्रवणात् 'अथ ब्राह्मण' इत्युपरितनवाक्य इव न विधिरिति भावः । **त्रितयं····विधीयत** इति भाष्यं तात्पर्यार्थः । सहकार्यन्तरविधिभूतं तृतीयमिति सामानाधिकरण्यमेव विवक्षितमिति परमतनिरासघट्टे **टीकायां** व्यक्तम् । **पक्षेण** आदरेण । अध्याहारे प्रयोगेऽन्वयः । दीपाद्यनुसारात् पक्षेणेत्यस्य पर्यवसितार्थो वा **प्रकृष्टे**त्यादिः । **एवं वाक्यार्थ** इति ; एवं वाक्यजातव्याख्येत्यर्थः । **परिशुद्धं परिपूर्णञ्चे**ति । विद्यान्तरव्यावृत्तं प्रस्तुतविद्योपास्यसर्वाकारविशिष्टञ्चेत्यर्थः । यद्वा—श्रवणमनने कतिपयभागविषयके । पाण्डित्यं तु सामरस्येन निश्शङ्कं सर्वोपनिषदादिनिर्वाहप्रावीण्यम् । **पण्डा** ऊहापोहक्षमा धीरिति इदमेव लोकप्रसिद्धम् । एवञ्च परिशुद्धं परिपूर्णमिति अखिलहेयप्रत्यनीकत्वकल्याणगुणगणपूर्णत्वविशिष्टविषयेऽत्यन्तवैशद्यमुक्तं भवति । **श्रवणमननाभ्यामप्राप्त**मिति पाठः । श्रवणमननव्यापारलब्धात् विलक्षणमित्यर्थः । **प्राप्त**मिति पाठे 'पाण्डित्यंनिर्विद्ये'त्यस्य **विदित्वे**त्यन्तमेव व्याख्यानम् । अथ तदधीनं पूर्वकृतश्रवणमननप्राप्ते वेदने वैशद्यं सिद्धमनूद्यते। श्रवणमननप्राप्तिमात्रेणेदं न सर्वसुलभमित्याह **तच्चे**ति । **यथोक्त**मिति भक्तेः

भक्तिः", (कठ. २-२-२३) "नायमात्मा प्रवचनेन" इत्यादिका। बाल्येन तिष्ठासेत्। बाल्यस्वरूपं चानन्तरमेव वक्ष्यते। बाल्यं पाण्डित्यं च निर्विद्याथ मुनिःस्यात्-बाल्यपाण्डित्ये यथावदुपादाय परिशुद्धे परिपूर्णे ब्रह्मणि मननशीलो भवेत् निदिध्यासनरूपविद्यावाप्तये। एवमेव त्रितयोपादानेन लब्धविद्यो भवतीत्याह, अमौनं च मौनं च निर्विद्याथ ब्राह्मणः इति। अमौनं मौनेतरसहकारिकलापः; तं च मौनं च यथावदुपाददानो विद्याकाष्ठां तदेकनिष्पाद्यां लभेतेत्यर्थः। स ब्राह्मणः केन स्यात् इति उक्तादुपायात् किमन्योऽप्युपायोऽस्तीति पृष्टे, येन स्याद् तेनेदृश एव इति, 'येन मौनपर्यन्तेन ब्राह्मणस्स्यादित्युक्तम्, तेनैवेदृशस्स्यात्; न केनाप्यन्येनोपायेन' इति परिहृतम्। अतः सर्वेष्वाश्रमेषु स्थितस्य विदुषो यज्ञादिस्वाश्रमधर्मवत् पाण्डित्यादिकं मौनतृतीयं विद्यायास्सहकार्यन्तरं विधीयते॥ ४६॥

अथ स्यात्--यदि सर्वेष्वाश्रमेषु स्थितानां विदुषां तत्तदाश्रमधर्मसहकारिणी मौनतृतीयसचिवा विद्या ब्रह्मप्राप्तिसाधनमुच्यते, कथं तर्हि छान्दोग्ये, (छा. ८-१५-१) "अभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यारभ्य, "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते; न च पुनरावर्तते" इति यावदायुषं गार्हस्थ्यधर्मेण स्थितिदर्शनमुपपद्यते—अत आह—

कृत्स्नभावात्तु गृहिणोपसंहारः। ३। ४। ४७॥

---

कारणत्वे मानमाह। सत्त्वस्य तु सर्वसंमतम्। तिष्ठासेदिति। अत्र विशिष्टध्यानविधिरिति अन्तरत्वाधिकरणटीकायाम्। स ब्राह्मणः केन स्यादिति किमर्थमिति चेत्—उक्तविधमौनस्य तत्तदाश्रमधर्मसहभावायोगात् कथमयमुपाय इति शंकाशयः। योगव्यतिरिक्तकाले विषयान्तरव्यग्रत्वे योगस्य सम्यगनिष्पत्तिरिति गच्छतस्तिष्ठतः शयानस्य च व्यापारान्तरकालेपि तत्संशीलनमावश्यकमित्यविरोध इति परिहारः। प्रकृताधिकरणकार्यमेवैवमुपनिषदा कृतं भवति। शेषं परिष्कारे। स्यादितीति; स्यादिति वाक्येनेत्यर्थः। एवेति इति; एवेति वाक्येनेत्यर्थः।

मौनस्यालम्बनसंशीलनरूपत्वनिरासकः पूर्वपक्षी छान्दोग्ये गृहस्थधर्मकथनं यतिधर्मानास्थासूचकम्, कहोलब्राह्मणे यतिधर्मकथनं गृहस्थधर्मानास्थासूचकमिति परस्परप्रतिक्षेपादुभयासिद्धिं स्वीकृत्यैव मौनमेवंरूपं स्थाप्यमित्याशयितवान्। तथा तदनास्थासूचकत्वे न, किंतु अन्योपलक्षकत्वमेव। मौनस्य धर्मैः सहाविरोधादिति निरूपणार्थं सूत्रद्वयम्। प्रथमं छान्दोग्यविषयकम्। तदवतारयति अथ स्यादिति। सहकारिणीति बहुव्रीहि। अन्यथा वा। मौनतृतीयसचिवेति बहुव्रीहिगर्भबहुव्रीहिः। कथंतर्हीति। ईदृशाश्रमधर्मसहकारिकत्वप्रतिक्षेपकत्वं किलास्य स्वीकर्तव्यमिति पूर्वोक्तपूर्वपक्ष्याशय इह भाव्यः। एवमुत्तरसूत्रमपि गृहस्थाश्रमधर्मप्रतिक्षेपकत्वं किल तस्य स्वीकार्यमिति पूर्वपक्ष्याशयेऽवतीर्णम्। अथवा पूर्वमङ्गतया स्थापितानामाश्रमधर्माणां सर्वथा प्रतिक्षेपो मा भूदिति पूर्वस्मात् किञ्चिदन्यथा पूर्वपक्ष्याशयमाविष्कुर्वन् अवतारयति अथ स्यादिति। विलक्षणस्य मौनस्य स्वीकारे तस्याश्रमधर्मप्रतिक्षेपकत्वं स्यादिति मदुक्तोपरि यत् भवदुक्तम्, इदमप्याश्रमधर्मवत् सहकार्यन्तरमेवेति, तत् स्यान्नाम। अथाप्यस्य संशी-

तुशब्दश्चोद्यं व्यावर्तयति। कृत्स्नभावात्—कृत्स्नेषु भावात्, कृत्स्नेष्वाश्रमेषु विद्यायाः सद्भावात् गृहिणोऽप्यस्तीति तेनोपसंहारः। तस्मात् सर्वाश्रमधर्मप्रदर्शनार्थो गृहिणोपसंहार इत्यभिप्रायः ॥ ४७ ॥

तथैतस्मिन्नपि वाक्ये, (बृ. ५-५-१) ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति पारिव्राज्यैकान्तधर्मं प्रतिपाद्य, "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यादिना पारिव्राज्यधर्मस्थितिहेतुकमौनतृतीयसहकारिविधानं प्रदर्शनार्थमित्याह—

मौनवदितरेषामप्युपदेशात्। ३। ४। ४८ ॥

सर्वैषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशः सर्वेषामाश्रमधर्माणां प्रदर्शनार्थः।

---

त्न-धारणादिरूपस्य धर्मैः सह स्थित्यसंभवात् तत्तदाश्रमी एतन्मौननिष्पत्तिपर्यन्तं धर्मान् अनुतिष्ठन् तन्निष्पत्तिसौकर्ये प्राप्ते धर्मान् त्यजन् मौनमात्रमाद्रियत इत्येव वक्तव्यम्। एवमस्य प्रतिक्षेपकत्वे सति यावदायुषं गार्हस्थ्यधर्मस्थितिदर्शिवाक्यविरोधः। अतो मौनमिदं नातिरिक्तमिति शंकाशयः। **विद्यायाः सद्भावात्** मौनतत्तदाश्रमधर्मोभयसमुचितविद्यायाः सर्वत्र भावात्। तत्तदाश्रमधर्मानुष्ठायिभिरेव वसिष्ठादिवत् मध्येमध्ये पुनःपुनःसंशीलनादेः सुकरत्वादितराङ्गतौल्याच्च समुच्चयभंगः इति। **तस्मा**दिति। यत् प्रागुक्तम्, गृहस्थधर्ममात्रकथनमितराश्रमधर्मप्रतिक्षेपस्य मौनसद्भावोन्नीतस्योपोद्बलकमिति, तदपि न; प्रत्युताविरोधात् सर्वधर्मोपलक्षणं सत् सर्वाश्रमिमोक्षसद्भावपरमेव। अन्यथा गृहस्थधर्मस्य स्वसद्भावमुखेनैवेतरधर्मनिवारकत्वात् स्वसद्भाव एव कथं मौनेन सहेति शंकायामविरोधोपपादनस्यावर्ज्यत्वादिति भावः।

सूत्रार्थस्तावत्—छान्दोग्ये **गृहिणोपसंहारः**-यावदायुषं गृहस्थधर्मानुवृत्तिकथनपूर्वकब्रह्मप्राप्तिनिगमनं **कृत्स्नभावात्** कृत्स्नेष्वाश्रमेषु मौनाश्रमधर्मोभयसहितविद्यासद्भावात् इतरोपलक्षकत्वबुद्ध्यैवेति। उच्यते चात्रैव दहरविद्यायां ब्रह्मचर्येण ब्रह्मलोकप्राप्तिरित्युक्त्वा यज्ञादीनाम्, 'अथ यन्मौनमित्याचक्षते' इति मौनस्य च ब्रह्मचर्यमयत्वम्। अतोऽविशेषं यज्ञादिभिः सह मौनमपि गृहिणि भवति। एवं तेन सह अनाशक-अरण्यायनादिकथनात् सर्वाश्रमिषु विद्यासद्भावादेव गृहिणोपसंहार इति अस्योपलक्षकत्वमेवेति॥४७॥

एवं कहोलब्राह्मणे यतिधर्ममात्रकथनमितरधर्मप्रतिक्षेपोपोद्बलकं न भवति, इतरधर्मोपलक्षकत्वस्यैव संभवादित्याह **तथे**ति। यतिधर्मपूर्वकं मौनं कथितमिह आश्रमान्तरधर्मसमुच्चयस्य स्वस्मिन् वारकं-सत् यतिमात्रगमेव किं न स्यादिति शंकाऽप्यत्र गर्भिता। **मौनतृतीयसहकारी**ति। मौनतृतीयकपाण्डित्यादिरूपसहकारीत्यर्थः। सूत्रार्थ एवम्—अत्र ब्राह्मणे मौनस्येवेतरेषामपि ग्रहणम्;=पूर्वं यतिधर्मं प्रस्तुत्य मौनवचनात् यत्यनुष्ठेयमौने, तथा मौनस्य सर्वसाधारण्यात् अर्थस्वाभाव्यात् अन्याश्रमानुष्ठेये च मौने अथमुनिरिति वाक्यविहिते मौनवत् इतरेषामपि गृहस्थादिधर्माणामत्रोपलक्षितत्वमिति यावत्। तत्र हेतुमाहो**पदेशा**दिति। हेतुवाक्येऽपि **इतरेषामपी**ति संबध्यते। अस्य पूर्वमपि संबन्धोऽस्तीति **सर्वेषामाश्रमधर्माणा**मिति भाष्यपदलभ्यम्। दीपसारयोः इतरेषां धर्माणामित्येव व्याख्या। सत्यमत्र

कुतः ? एवंविधमौनोपदेशवत् इतरेषामाश्रमिणामपि, (छा. २-२३-१) "त्रयो धर्मस्कन्धाः" इत्यारभ्य "ब्रह्मसंस्थोऽमृतत्वमेति" इति ब्रह्मप्राप्त्युपदेशात् । उपपादितश्च पूर्वमेव ब्रह्मसंस्थशब्दः, सर्वाश्रमिसाधारण इति । अतः सुष्ठूक्तम्—यज्ञादिसर्वाश्रमधर्मवत् मौनतृतीयः पाण्डित्यादिर्विद्यासहकारित्वेन विधीयते इति ॥४९॥ इति सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥

१२१. अनाविष्काराधिकरणम् ३-४-१३ ॥

अनाविष्कुर्वन्नन्वयात् । ३ । ४ । ४९ ॥

(बृ. ५-५-२१) "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इत्यत्र विदुषा बाल्यमुपादेयतया श्रुतम् । बालस्य भावः, कर्म वा बाल्यम् । बालभावस्य वयोवस्थाविशेषस्यानुपादेयत्वात् कर्मैवेह गृह्यते । तत्र किं बालस्य कर्म कामचारादिकं सर्वं विदुषोपा-

---

यतिधर्मपूर्वकमौनोपदेशः, तथाप्यन्यत्रान्येषामपि ब्रह्मप्राप्त्युपदेश एवं कृतोऽस्ति । अतो नास्येतरधर्मप्रतिक्षेपकत्वं वा इतरत्र मौनाभावगमकत्वं वेति भावः ॥ छान्दोग्यगते उपसंहारवाक्ये वानप्रस्थादिमोक्षप्रदर्शनायोगात् ब्रह्मसंस्थ इति वाक्यमुपात्तम् । अत्र ब्रह्मसंस्थपदं प्रकृतस्य सर्वाश्रमेषु मौनसद्भावस्य सूचकमपि भवतीति निगूढम् । इदमुपलक्षणम्—बृहदारण्यके, (६. ४.) तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति इतराश्रमधर्मान् विद्यासाधनत्वेन विधाय, 'एतमेव विदित्वा मुनिर्भवती'ति मौनमपि सर्वसाधारण्येन विधाय पश्चादेव प्रव्रज्याप्रस्तावः कृतः । अतस्तत्र मौनस्येवाश्रमान्तरधर्माणामप्युपदेशात् तद्धर्मसमुच्चयस्यापि मौने ग्राह्यतया कहोलब्राह्मणे एवमुक्तिरुपलक्षिकैवेति । तत्र सिद्धं मौनस्य पाण्डित्याद्यतिरिक्तस्य सर्वसाधारण्येनैव विधिरिति ॥

एवं तावत् टीकोक्तफलफलिभावानुसारेण सर्वसूत्रभाष्याशय उक्तः । मौनस्येतराश्रमधर्मप्रतिक्षेपकत्वप्रस्तावं विनाऽपि भाष्ययोजना स्यात् । मौनस्येतराश्रमधर्मैर्विरोधोऽस्तीत्यपि भाष्ये नोक्तम्—अपूर्वं किञ्चिद्विधेयं न भवतीत्येव पूर्वपक्षः कृत इत्यन्यदेतत् । दीपे उत्तरसूत्रे, 'तुशब्दो हि गृहिण एवेति शंकाव्यावृत्त्यर्थः" इत्युक्तम् । तेन गृहस्थधर्मानुष्ठानेन मोक्षः पूर्वपक्षीष्ट इति ज्ञायते । मौनवदिति सूत्रदर्शने यतिधर्मेणापि मोक्ष इष्ट इति च । तस्मादेवं पूर्वपक्ष्याशय —पाण्डित्यं निर्विद्येत्यादेः सर्वाश्रमसाधारणप्राप्तज्ञानविषयकत्वमेव । अन्यथा अपूर्वं मौनं विधीयत इति स्वीकारे मुनिशब्दस्य परिव्राजि प्रयोगबलात् पूर्वमत्र षष्ठे भिक्षाचरणस्योक्तत्वाच्च तदीयमेव मुनित्वं विधेयं स्यात् । एवञ्च कहोलविद्या यतिविश्रान्ता भविष्यति । तुल्यनयात् छान्दोग्यविद्या गृहिणोपसंहारात् तन्मात्रे स्यादिति । तत्र सिद्धान्तः—सर्वाश्रमधर्मसहचरितमभ्यासरूपं मौनमस्ति विधेयम् । छान्दोग्ये गृहिणोपसंहार इतरोपलक्षक एव । कहोलब्राह्मणेऽपि, भिक्षाचरणोक्त्या तत्सहचरितमौनवत् अन्यत्रान्यधर्मोक्त्या तत्सहचारितमौनस्यापि ग्राह्यतया मौनवदितरेषामप्यत्र विवक्षितत्वमेव । तथैवान्यत्रोपदेशात् सर्वाश्रमिग्रहणेन, 'ब्रह्मसंस्थ इत्येवमिति ॥

उपादेयतयेति । विधेये कृतिसाध्यत्वमुपादेयत्वम् । अनुपादेयत्वात्-युवत्वाद्यवस्थापन्ने तस्याभावात् । कामचारादिकम् प्रागुपनयनात् कामचारः कामवादः कामभक्ष इत्युक्तम् । सौलभ्य-विधेयत्व-

देयम्; उत डम्भादिरहितत्वमेवेति विशये— विशेषाभावात् सर्वमुपादेयम्; नियमशास्त्राणि च विशेषविधिनाऽनेन बाध्यन्त इत्येवं प्राप्तेऽभिधीयते—अनाविष्कुर्वन्निति। बालस्य यत् स्वभावानाविष्काररूपं कर्म, तदुपाददानो वर्तेत विद्वान्। कुतः? अन्वयात्—तस्यैवान्वयात्। "बाल्येन तिष्ठासेत्" इत्यस्मिन् विधौ तस्यैव ह्यन्वयसंभवः; इतरेषां विद्याविरोधित्वश्रवणात्, (कठ. २-२४) "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्", (छा. ७-२६-२) "आहारशुद्धौ सत्त्वशुद्धिः" इत्यादिषु॥

इति अनाविष्काराधिकरणम् १३॥

१२२. ऐहिकाधिकरणम् ३-४-१४॥

ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्। ३। ४। ५०॥

द्विविधा विद्या—अभ्युदयफला मुक्तिफला च। तत्राभ्युदयफला स्वसाधनभूतैः

---

ऋजुभाषणादिकर्म। डम्भादिरहितत्वम्। स्वभावेति। बालो यथा जानन् अजानन् वा रूपधनाभिजनादिस्वधर्मानाविष्कारिव्यवहारो भवति, तथाऽयमपि विद्याभिजनादिस्वमहिमाप्रदर्शकव्यवहारः स्यात्। सूत्रार्थस्तु—श्रुतौ बाल्येन तिष्ठासेदित्यस्य बाल्योपलक्षितो ध्यायेदित्यर्थकत्वात् अनाविष्कारविशिष्टरूपार्थ एव वाक्यप्रतिपाद्यः, तस्यैवान्वयात्, वयोविशिष्टरूपार्थस्येव कामचारादिमद्रूपार्थस्यापि 'नाविरत' इत्यादिविरोधादन्वयासंभवादिति॥ ४९॥

एवं विद्याङ्गानि सर्वाणि चिन्तितानि। अथैतदङ्गाधीना विद्यानिष्पत्तिः कदेति अधिकरणद्वयेन चिन्त्यते। पूर्वाधिकरणे मौनपर्यन्तस्य कारणकलापस्योक्तत्वात् एतदधिककारणाभावात् सामग्र्यां सत्यां कार्यावश्यम्भावनियमात्, सामग्र्यन्तर्गतमननादीनां दृष्टविधयैव कारणतया तदैव विद्यानिष्पत्त्यभावे तेषां कारणत्वमेव न स्यादिति च तदैव विद्यानिष्पत्तिरिति शंका। प्रतिबन्धकाभावस्यापि सामग्र्यन्तर्गतत्वात् तस्मिन् सति तदैव, न चेत् अन्यदेति परिहारः। सूत्रे ऐहिकमिति। ऐहिकपदमेतज्जन्मभवरूपार्थे आमुष्मिकपदं जन्मान्तरभवरूपार्थे च मीमांसकप्रसिद्धम्। इह लोके भवत्, लोकान्तरे भवदिति च लोकप्रसिद्धोऽर्थः। उपरि मुक्तिफलेति निर्देशात् तदन्यसर्वफलग्रहणाय ऐहिकमित्यस्य इह प्रकृतिमण्डले भवत् फलमित्यर्थग्रहणे फलस्याङ्गभूतकर्मजन्यत्वाभावात् उपासनजन्यत्वात्, उपासनरूपार्थग्रहणे च तत्र प्रकृतिमण्डलभवत्वस्यावक्तव्यत्वाच्च ऐहिकपदमैहिकफलसाधनोपासनमित्यर्थकं वाच्यम्। उपासनस्यैहिकफलहेतुत्वं सुकृतजन्यत्वञ्च गीतम्, 'चतुर्विधा भजन्ते मां जनाः सुकृतिन' इत्येवम्। एवञ्च मुक्तिफलकोपासननिष्पत्तिविलम्बाविलम्बविचारः उत्तराधिकरणे, अत्र तदन्यफलकविषयविचार इति सिद्ध्यति।

अत्रेदं वक्तव्यम्। अङ्गेषु निरूपितेषु तज्जन्यमुपासनं कदा भवतीति सामान्यविचार एव स्वरसप्राप्तः; न तु अभ्युदयफलकं कदा, मुक्तिफलकञ्च कदेति विभागेन। न हि मुक्तिफलकादभ्युदयफलकस्य शीघ्रनिष्पत्तौ अनुपपत्तिरधिकाऽस्ति; येन तस्य पृथक् प्रथमं विचारः स्यात्। प्रत्युत मुक्तिफलकविषय एवाधिकाशंका वक्ष्यते। तस्मादुक्तमङ्गजातं कदोपासनं जनयति, कर्मणामैहिकत्वामुष्मिकत्वभेद-

पुण्यकर्मभिः पुण्यकर्मानन्तरमेव उत्पद्यते, उतानन्तरम्, कालान्तरे वेत्यनियम इति संशयः। पूर्वकृतैः पुण्यकर्मभिर्हि विद्वान् जायते। यथोक्तं भगवता (गी. ७-१६) "चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन" इति। साधने निर्वृत्ते विलम्बहेत्वभावादनन्तरमेवेति प्राप्ते उच्यते—ऐहिकमप्रस्तुतप्रतिबन्धे—इति। ऐहिकम्—अभ्युदयफलमुपासनम् अप्रस्तुतप्रतिबन्धे अप्रस्तुते—प्रबलकर्मान्तरप्रतिबन्धे असति अनन्तरम्, प्रतिबन्धे सति तदुत्तरकालमित्यनियमः। कुतः? तद्दर्शनात्। दृश्यते हि प्रबलकर्मान्तरेण कर्मफलप्रतिबन्धाभ्युपगमः श्रुतौ, (छा. १-१-१०) "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्" इत्युद्गीथविद्यायुक्तस्य कर्मणः फलाप्रतिबन्धश्रवणात् ॥ ५० ॥ इति ऐहिकाधिकरणम् ॥ १४ ॥

१२३. मुक्तिफलाधिकरणम् ३-४-१५ ॥

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः। ३। ४। ५१ ॥

---

भिन्नफलजनकत्वस्य कर्मकाण्डसिद्धत्वादिति विशये—स्वर्गादेरिवोपासनस्य कालान्तरभावित्वदेहान्तरभावित्वनियमाभावात् कर्मसहकारिभूतानां श्रवणमननपाण्डित्यमौनादीनां दृष्टविधया शीघ्रकार्यनिष्पादकत्वदर्शनाच्चेहैवोपासननिष्पत्तिरिति पूर्वपक्षः। तत्र सिद्धान्तिनोच्यते—उपासनमैहिकमेव; परंतु अप्रस्तुतप्रतिबन्धे इति। अतः ऐहिकपदस्य एतज्जन्मभवमित्यर्थः प्रसिद्ध एव ग्राह्यः। एवञ्च गुरुभूतार्थे लक्षणाऽपि नास्ति। अङ्गफलमुपासनमिति प्रसक्तत्वादेवोद्देश्यवाचकपदलाभात् साध्यसमर्पकमेवैहिकपदम्। एवमुपासनसामान्ये ऐहिकत्वानियमोक्तौ मुक्तिफलकविषये पश्चाद्विशेषाक्षेप इति चोत्तराधिकरणप्रवृत्तौ सामञ्जस्यम्। न च-इह जन्मनीत्येतावता समनन्तरमेवेति पूर्वपक्ष्याशयः कथं सिद्ध्येदिति शंक्यम्—कारणे सति कार्येण भाव्यमित्येव पूर्वपक्षात् अव्यवहितोत्तरमित्यस्यार्थसिद्धत्वात्। कर्मस्वाभाव्यमवेक्ष्य ऐहिकानैहिकत्वांशविचारसंभवस्य च प्रागुक्तत्वात्। एवञ्च भाष्यादिषु अभ्युदयफलेति विभज्य निरूपणं मुक्तिफलविचारस्यानन्तराधिकरणे क्रियमाणतया परिशेषसिद्धिमाशङ्क्य; न तु विचारभङ्गीमपि तथैव परिशील्येति। शेषं भावप्रकाशिकायाम्। अभ्युदयो निःश्रेयसातिरिक्तं फलम्। कालान्तरे वेति कोट्यन्तरोल्लेखे गमकं दर्शयति पूर्वकृतैरिति। सुकृतिन इति पदमपि तज्जन्मकृतसुकृतपरं श्रवणोन्मुख्यादिहेतुभूतप्राचीनसुकृतपरं वा स्यादिति पूर्वपक्ष्याशयः। अप्रस्तुते प्रतिबन्धे इति भाष्यदीपयोः पृथक्करणात् अप्रस्तुते इति व्यस्तपाठः सूत्रे इष्टः स्यात्। अन्यथैवं व्याख्याने क्लेशात। अथवा तात्पर्यार्थोऽयम्। अप्रस्तुतप्रतिबन्धे इति समासे कर्मधारयौचित्याभावात् बहुव्रीहिः। कालः पुरुषः कर्म वा विशेष्यम्। तस्मिन् अप्रस्तुतप्रतिबन्धे सति उपासनमैहिकं भवतीत्यर्थः। अप्रतिबन्धे इत्येव यद्यप्यलम्, अथापि प्रस्तुतपदोक्तिः; प्रायः प्रतिबन्धप्रसक्तिरस्तीति ज्ञापनाय। प्रस्तुतेन प्रसक्तेन प्रबलेन कर्मणा प्रतिबन्धस्य, प्रस्तुतस्य प्राप्तस्य प्रतिबन्धस्य वा यस्मिन् कर्मणि उत्तम्भकोत्तेजिते भवत्यभावः, तत उपासनमैहिकमित्युक्तं भवति। तद्दर्शनात्। उद्गीथाद्युपासनस्याप्रतिबन्धः फलमित्युक्त्या तदभावे प्रतिबन्धसंभावना हि श्रुतिदर्शितैवेति ॥ ५० ॥

मुक्तिफलस्याप्युपासनस्य स्वसाधनभूतैरतिशयितकर्मभिरुत्पत्तौ एवमेव कालानियमः ; तस्यापि पूर्ववत् प्रतिबन्धाभावप्रतिबन्धसमाप्तिरूपावस्थावगतेः—अत्रापि तस्य हेतोः समानत्वादित्यर्थः ॥

सर्वेभ्यः कर्मभ्यो मुक्तिफलविद्यासाधनस्य कर्मणः प्रबलत्वात् प्रतिबन्धासंभव इत्यधिकाशङ्का ॥ तत्रापि ब्रह्मविदपचाराणां पूर्वकृतानां प्रबलानां संभवात् प्रतिबन्धः संभवति (प्रतिबन्धसंभव) इति परिहारः । द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥ इति मुक्तिफलाधिकरणम्॥ १५॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ३.४ ॥ समाप्तस्तृतीयाध्यायः ॥

॥ श्रीरस्तु ॥

---

न सर्वं कर्म प्रतिबन्धार्हम् । अभ्युदयफलकोपासनार्थं कर्मैव तथा स्यात् ; न तु मोक्षफलकोपासनार्थं भगवत्प्रीत्यतिशयहेतुः सात्त्विकत्यागयुक्तं कर्म तथा । विष्णुभक्तस्य मुमुक्षोरुद्देश्यविघाताय देवा अपि न प्रभविष्णव इति हि ' तस्य ह न देवाश्चन अभूत्या ईशते ' (३-४) इति बृहदारण्यकोक्तम् । एवं सति कोऽन्यो विघातक इत्यधिकाशंका । **अतिशयितेति** । कर्मणामतिशयितत्वं सात्त्विकत्यागादियुक्तत्वात् साक्षाद्भगवत्कीर्तनादिरूपत्वाच्च । **प्रतिबन्धाभावप्रतिबन्धसमाप्तिरूपेति** । " प्रबलकर्मान्तरप्रतिबन्धे असति अनन्तरम् , प्रतिबन्धे सति तदुत्तरकालम् " इति प्रागुक्तसंग्रहोऽयम् । **ब्रह्मविदपचाराणामिति** । योऽयं ब्रह्मवित् , एतदधिकानां समानाश्च ब्रह्मविदां विषये हि संभाविता अपराधाः भगवदपचारापेक्षयाऽप्यतिशयितानर्थहेतवः । अतः प्रतिबन्धका भवन्ति । अतो निरपराधेन, शमादिमत्तयाऽत्र जन्मनि तदप्रसक्तावपि पूर्वापराधशंकया तत्परिहारपरेण चैवोद्गीथविद्यादिविशिष्टैः कर्मभिर्मुक्तिफलमुपासनमविलम्बेन निष्पाद्यमिति । मुक्तिः फलं यस्य तत् उपासनं मुक्तिफलम् । तस्याप्यनन्तरोत्पत्तिनियमो नास्ति । तत्रापि **तस्याः** पूर्वोक्तायाः द्विविधावस्थाया अवधारणादिति सूत्रार्थः । प्रतिबन्धकनिवर्तनैदम्पर्योपदेश्च एतदधिकरणद्वयप्रयोजनम् । शेषं **सारावलौ** ॥ ५१ ॥

इति श्रीमद्वेदान्तरामानुज-यतीन्द्र-महादेशिकचरणारविन्दचञ्चरीकस्य श्रीमद्रङ्गरामानुजमुनीन्द्र-महादेशिकपदपद्मसेवासमधिगतसर्ववेदान्तार्थस्य वात्स्यश्रीशैल-सच्चक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे तृतीयाध्याये चतुर्थः पादः ॥

श्रीमते रामानुजाय नमः । शुभमस्तु ॥

श्रीः । श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचिते

# श्री शा री र क मी मां सा भा ष्ये

चतुर्थाध्याये प्रथमः पादः

१२४. आवृत्त्यधिकरणम् ४-१-१ ॥

## आवृत्तिरसकृदुपदेशात् । ४ । १ । १ ॥

**तृतीयेऽध्याये साधनैः सह विद्या चिन्तिता । अथेदानीं विद्यास्वरूपविशोधनपूर्वकं विद्याफलं चिन्त्यते । तत्र, (तै. आन. १) 'ब्रह्मविदाप्नोति परम्", (श्वे. ३-८) "तमेव विदित्वाऽति मृत्युमेति", (मु. ३-२-९) "ब्रह्म वेद ब्रह्मैव भवति", (मु. ३-१-३) "यदा पश्यः पश्यते रुक्मवर्णम्" इत्यादिवेदान्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थः, उतासकृदावृत्तमिति संशयः ।**

**किं युक्तम्? सकृत्कृतमिति; "ब्रह्म वेद ब्रह्मैव भवति" इति वेदनमात्रस्यैव**

---

श्रीः ॥ श्रीमते रामानुजाय नमः ॥

**भाष्यार्थदर्पणे चतुर्थाध्याये प्रथमः पादः**

यस्य ध्यानात्मसाक्षात्कृतिजनिविगताश्लिष्टपूर्वोत्तराघः काले प्राणाक्षभूतैः सह यदनुगृहीत्युद्गतो ब्रह्मनाड्या । जीवो नीतोऽर्चिराद्यैर्यदुपसदनतो नैजरूपोपपन्नः प्राप्नोत्यानन्दसाम्यं स्थिरमवतु स नः शेवधिः श्रीनिवासः॥

साध्यविषयतया ब्रह्मनिरूपके उत्तरद्विके उपायभूतसाध्यनिरूपणं तृतीये; फलभूतसाध्यनिरूपणं चतुर्थे । तदाह **तृतीये** इति । **साधनैः** । इतरवैतृष्ण्यं प्राप्यतृष्णा वर्णाश्रमधर्मः शमादिः पाण्डित्यबाल्यमौनानि च साधनानि । **विद्याफलम्** । उत्तरपूर्वाघाश्लेषः उपासनप्रारम्भकालिकः, ब्रह्मनाड्या निष्क्रमणम्, अर्चिरादिना गतिः, ब्रह्मप्राप्तिविशेषश्च क्रमेण चतुर्भिः पादैर्निरूप्यन्ते । इमानि फलानि । आदौ षड्भिरधिकरणैः यत् विद्यास्वरूपतदनुष्ठानरीतिप्रदर्शनम्, तदिहासंगतमिति शंकापरिहाराय **विद्यास्वरूपविशोधनपूर्वक**मित्युक्तम् । कस्यचित् केवलवेदनमपि फलहेतुः, कस्यचिदुपासनम्, कस्यचिद्दर्शनमित्यव्यवस्थापरिहाराय, सर्वत्र प्रथमवेदनमेव पर्याप्तमिति शंकाव्युदासाय च यदवस्थापन्नायाः विद्यायाः उत्तरपूर्वाघाश्लेषविनाशकरत्वमस्ति, तस्या अवस्थायाः फलकारणतावच्छेदकत्वेन निरूप्यतया फलपादे संगतिरस्त्येव । एवं भजनमुखमेकस्य विपुलमिति भक्तेः प्रीतिरूपापन्नायाः भोग्यत्वात उपायस्यापि फलत्वाकारोऽस्तीति ज्ञापनाय चात्रैतच्छोधनम् । तत्तद्विद्याविषयविशेषाः तृतीये चिन्तिताः; तदत्र साधनशोधनपेटिकायां सर्वविद्यासाधारणस्वरूपं शोध्यते । पूर्वाधिकरणेन संगतिस्तु—मुक्तिफलस्योपासनस्य कर्मजन्यत्वमयुक्तम्; सकृद्वेदनस्य मुक्तिफलतया तदनन्तरं कर्मणां तदर्थं करणासंभवात् । अतो दर्शादेः प्रयाजादिवत् फलोत्पादने सहकारित्वं कामं भवतु नाम; न तु विद्याजनकत्वमित्याक्षेपः ।

विधानात् असकृदावृत्तौ प्रमाणाभावात्। न चावघातादिवत् वेदनस्य ब्रह्मापरोक्ष्यं प्रति दृष्टोपायत्वात् यावत्कार्यमावृत्तिरिति शक्यं वक्तुम्; वेदनस्य दृष्टोपायत्वाभावात्। ज्योतिष्टोमादिकर्माणि वेदान्तविहितं च वेदनं परमपुरुषाराधनरूपम्, आराधिताच्च परमपुरुषात् धर्मार्थकाममोक्षाख्यपुरुषार्थावाप्तिरिति हि, (शारी. ३-२-३७) "फलमत उपपत्तेः" इत्यत्र प्रतिपादितम्। अतो ज्योतिष्टोमादिवत् यथाशब्दं सकृत्कृतमेव शास्त्रार्थः—

इति प्राप्ते प्रचक्ष्महे—आवृत्तिरसकृत्—इति। असकृदावृत्तमेव वेदनं शास्त्रार्थः। कुतः? उपदेशात्—ध्यानोपासनपर्यायेण वेदनशब्देनोपदेशात्। तत्पर्यायत्वं च विद्युपास्तिध्यायतीनामेकस्मिन् विषये वेदनोपदेशपरवाक्येषु प्रयोगादवगम्यते। तथा हि, (छा. ३-१८-१) "मनो ब्रह्मेत्युपासीत" इत्युपासिनोपक्रान्तोऽर्थः, "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" इति विदिनोपसंह्रियते; तथा, (छा. ४-१-४) "यस्तद्वेद यत् स वेद स मयैतदुक्तः" इत्युपक्रमे विदिनोक्तं रैक्वस्य ज्ञानम्, "अनु म एतां भगवो देवतां शाधि, यां देवतामुपास्से" इत्युपासिनोपसंह्रियते। तथा, (तै. आन. १-१) "ब्रह्मविदाप्नोति परम्" इत्यादिवाक्यसमानार्थेषु वाक्येषु, (बृ. ४-४-५) "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", (मु. ३-१-८) "ततस्तु तं पश्यति निष्कलं ध्यायमानः" इत्यादिषु ध्यायतिना वेदनमभिधीयते। ध्यानं च चिन्तनम्। चिन्तनं च स्मृतिसन्ततिरूपम्;

---

**अवघातादिवद**िति। यथा व्रीहीनवहन्तीति वाक्येऽवहननमात्रं विहितम्; न तु तदावृत्तिः, अथापि तत्फलस्य वैतुष्यस्य सकृत्करणसाध्यत्वाभावादावृत्तावहननमेव शास्त्रार्थः संपद्यते, तथेह, पश्यते रुक्मवर्णम्, निचाय्य तम्, तस्मिन् दृष्टे, द्रष्टव्यः इति दर्शनस्योक्ततया तस्य सकृद्वेदनासाध्यतयाऽऽवृत्तिसिद्धिरिति शंका। श्रवणादीनां साक्षात्कारं प्रति दृष्टविधया कारणत्वं न क्लृप्तमिति समाधानमाह **वेदनस्ये**ति। तर्हि दर्शनबोधकवाक्यानां का गतिरिति चेत्—विशदश्रवणादौ दर्शनशब्दो दृष्टः, यथा, 'तस्मै तमसः पारं दर्शयति भगवान् सनत्कुमारः', 'चिरनिर्वृत्तमप्येतत् प्रत्यक्षमिव दर्शितम्' इति। ध्यानोपासनादिशब्दा अपि सावधानत्वमात्राभिप्रायाः इति। **आराधनरूप**मितीदं **कर्माणी**त्यस्यापि विशेषणम्। फलान्तरोद्देशेऽपि देवतान्तरोद्देश्यकत्वेऽपि वस्तुतः परमपुरुषाधानत्वमस्त्येव। **फलमत** इति। सूत्रमिदं दृष्टोपायत्ववादखण्डकमपीति भावः। **शास्त्रार्थः**—विधायकवाक्याभिप्रेतम्।

**कीर्त्या यशसे**त्यनयोः पौनरुक्त्यपरिहाराय ज्ञानशक्तिरूपविभिन्नविषयकत्वं यथारुचि कल्पनीयम्; यथा, 'स्नेहो मे परमो राजन् त्वयि नित्यं प्रतिष्ठितः। भक्तिश्च नियता वीर भावो नान्यत्र गच्छती'त्यत्र स्नेहभक्तिशब्दयोः। राजपदोपात्तरञ्जनक्रियानुसारेण सौलभ्यमूलकत्वं स्नेहस्य, वीरपदोक्तपराक्रमानुरोधेन परत्वज्ञानमूलकत्वं भक्तेश्च हि तत्र स्वीक्रियते। **यस्तद्वेदे**त्येतदर्थो **जिज्ञासाधिकरणे** (पु. १७)। एवं व्यतिकरेणार्थविशेषपरत्वमुक्तम्। अथ गतिसामान्यात् सामान्यविशेषन्यायरूपच्छागपशुन्यायेनापि तत्सिद्धिरित्याह **तथे**ति। ध्यानोपासनदर्शनादिशब्दानां सकृत्कृतवेदनमात्रपरत्वे

**न स्मृतिमात्रम्।** उपास्तिरपि तदेकार्थः ; एकाग्रचित्तवृत्तिनैरन्तर्ये प्रयोगदर्शनात्। तदुभयैकार्थ्यात् असकृदावृत्तसन्ततस्मृतिरिह, "ब्रह्म वेद ब्रह्मैव भवति", (श्वे. १-८) "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिषु वेदनादिशब्दैरभिधीयते इति निश्चीयते ॥ १ ॥

**लिङ्गाच्च । ४ । १ । २ ॥**

लिङ्गं—स्मृतिः। स्मृतेश्चायमर्थोऽवगम्यते। स्मर्यते हि मोक्षसाधनभूतं वेदनं स्मृतिसन्ततिरूपम्, (वि. पु. ६-७-९१) "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्स्पृहा। तत् ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा" इति। तस्मादसकृदावृत्तमेव वेदनं शास्त्रार्थः॥२॥

इति आवृत्त्यधिकरणम् ॥ १ ॥

१२५. आत्मत्वोपासनाधिकरणम् ४-१-२ ॥

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च । ४ । १ । ३ ॥**

इदमिदानीं चिन्त्यते—किमुपास्यं ब्रह्म उपासितुरन्यत्वेनोपास्यम्, उतोपासितुरात्मत्वेनेति। किं युक्तम्? अन्यत्वेनेति। कुतः? उपासितुः प्रत्यगात्मनोऽर्थान्तरत्वात् ब्रह्मणः। अर्थान्तरत्वञ्च (शारी. २-१-२२) "अधिकं तु भेदनिर्देशात्", (३-४-८) "अधिकोपदेशात्", (१-१-१७) "नेतरोऽनुपपत्तेः" इत्यादिषूपपादितम्। यथावस्थितश्च ब्रह्म उपास्यम्; अयथोपासने हि ब्रह्मप्राप्तिरप्ययथाभूता स्यात्; (छा. ३-१४-१) 'यथाक्रतुरस्मिन्

---

लक्षणा। वेदनस्य ध्याने विश्रमे तु न लक्षणा; न च विशेषांशस्य प्रतीतस्य त्यागरूपो दोषः; सामान्यमुखेन ध्यानव्यक्तिबोधाङ्गीकारसंभवात्। न च स्मृतिदर्शनयोरभेदायोगः; स्मृतौ संतन्यमानायां दर्शनसमानाकारत्वसंपत्तेर्लोकानुभवसिद्धत्वेन तत्रैव वाक्यतात्पर्यात् ॥

ध्यानदर्शनादिशब्दानामन्यथा नयने न केवलं लक्षणा, स्पष्टप्रमाणविरोधोऽपि; स्मृतिसंततेरेव कारणत्वावगमादित्याह **लिङ्गाच्चे**ति। **स्मृतिः** स्मृतिग्रन्थः। **तद्रूपप्रत्यये** ब्रह्मविषयकज्ञानस्य। **अन्यनिःस्पृहा** प्रकृतध्यानविषयीकार्यातिरिक्तफलान्तरदेवतान्तराद्यविषयिणी। **षड्भिः** यमनियमासनप्राणायामप्रत्याहारधारणाभिः ॥ २ ॥

वेदनस्वरूपं निरूपितम्—तद्विषये विशेष. प्रागनुक्त उच्यते। अत्र-यदि असकृदावृत्तं ब्रह्मवेदनं शास्त्रार्थः, तर्हि तस्य अहं ब्रह्मास्मीत्याकारकता न युज्यते; सकृदनुसंधानं सत्यवधाने कथमपि शरीरात्मभावप्रतिबोधेन भवेत्। असकृत् तथानुसंधानं तु देहात्मविवेकिनामपि स्थूलोऽहमित्यनुसंधान इव भ्रमापादकमेव स्यादिति शंकया संगतिः। ब्रह्मण उपास्यत्वमिव जीवात्मनोऽप्युपास्यत्वं शरीरेभावाधिकरणसिद्धम्। तयोः कीदृशः संबन्धो ग्राह्य इति विचार.। **अन्यत्वेनोपास्य**मिति। नाहं ब्रह्मेति वा, अन्यत्वप्रतिष्ठापकाकारान्तरैर्वा। **उपासितुरात्मत्वेने**ति। अहं ब्रह्मास्मीत्येवमित्यर्थः। **अयथोपासने ही**ति। नन्वन्तर्यामित्वरूपात्मत्वेनोपासनं कथमयथोपासनं स्यात्; तस्यापि भेदसाधकत्वात्। उक्तश्च, 'भेदेनैनमधीयते" इति आत्मत्वानुसंधानस्य भेदानुसंधानरूपत्वमिति चेत्—अभेदशंकानावहरीत्यैवोपासनं कार्यम्। तच्चो-

लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति न्यायात्। अतोऽन्यत्वेनोपास्यमिति।

एवं प्राप्तेऽभिधीयते—आत्मेति तु—इति। तुशब्दोऽवधारणे। उपासितुरात्मेत्येवोपास्यम्। उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथा आत्मा, तथा स्वात्मनोऽपि परं ब्रह्माऽऽत्मेति आत्मेत्येवोपासीतेत्यर्थः। कुतः? एवं ह्युपगच्छन्ति पूर्वे उपासितारः, "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि" इति। उपासितुरर्थान्तरभूतं ब्रह्म उपासितारोऽहमिति कथमभ्युपगच्छन्तीत्यत्राह ग्राहयन्ति च इति। इममर्थमविरुद्धमुपासितॄन् ग्राहयन्ति शास्त्राणि—तान् प्रत्युपपादयन्तीत्यर्थः। (भा. ६·७)

---

पासितृमात्रं पृथक् ब्रह्म च पृथक् विषयीकृत्य तयोः संबन्धविशेषानुसंधानरूपमेव भवितुमर्हति। इदमेवान्यत्वेनोपासनम्। आत्मेत्येवोपासीतेत्यस्याप्ययमेवार्थः। तद्विहाय अहंब्रह्मास्मीत्येकेनैवाहमुल्लेखेनोभयग्रहणे स्थूलोऽहमित्यत्रेवैक्यशंका प्रसजेदिति भावः। अयथाभूता स्यादिति। नामब्रह्मोपासनादिष्विव ब्रह्मप्राप्तिरेव न स्यादित्यर्थः। तर्हि—त्वं वा अहमस्मीत्यनुसंधानं कथमिति चेत्—शरीरात्मभावप्रयुक्तं चेत् इदमनुसंधानम्, तर्हि शरीरवाचिनां शरीरिपर्यन्तत्वात् इदमनुसंधानं मुख्यं स्यात्। मुख्यत्वविषयादरेण तत्स्वीकारे च कदाचिद् भ्रान्तेरवकाशः स्यादित्युक्तम्। अतो अन्यत्वनिश्चयात्मकानुसंधानमेवोपासितृगतं लाक्षणिकप्रयोगेण श्रुत्या एवं प्रदर्श्यते इति तद्वैशद्याय पूर्वोक्तरीत्या पृथगनुसंधानमेव तदभिमतमिति। नन्वयं पूर्वपक्षः शरीरात्मभावस्वीकारेण वा तदपलापेन वा, तथा सर्वोपासनविषयो वा कतिपयविषयो वेति चेत्—बह्वधिकरणसिद्धस्यापि शरीरात्मभावस्य बन्धदशामात्रस्थायित्वम्, पश्चात् तदभावञ्च परिकल्प्य पूर्वपक्षी तन्निषेधतीत्यस्तु। अथवाऽस्त्येव शरीरात्मभावः, तथा शब्दानां विशिष्टवाचित्वमपि। अथापि निष्कर्षकत्वस्यापि शब्दे दर्शनादनवधानात् भ्रमस्याप्यवसरोऽस्तीति अहंब्रह्मास्मीत्यनुसंधानं नेच्छति पूर्वपक्षी। अतो यत्र तदवकाशः तत् सर्वमुपासनमत्र विषयः। तदिष्टौ च तत्रतत्र कदाचिदैक्यभ्रमो वा दृष्टिविधित्वैक्यारोपप्रतीतिर्वा भवेदिति तत् त्याज्यमिति तदाशयः।

त्वं वा अहमित्यत्र न दृष्टिरूपता। दृष्टिविधिर्निकृष्टे उत्कृष्टस्यैव भवति। अतो ब्रह्मणि स्वदृष्टेरपि विवक्षाऽत्र न शक्यते। अतो व्यतिकरायोगात् दृष्टिपक्षनिवृत्तावपि ऐक्यभ्रमव्युदासः कथमित्याशयेन पृच्छति उपासितुरिति। एतत्समाधानार्थमेव ग्राहयन्ति चेत्युक्तमित्याह अत्राहेति। शरीरात्मभावस्य दृढप्रतिपन्नत्वात् शब्दानां विशिष्टवाचित्वस्य दृढमवधृतत्वाच्च तादृशवेदनस्यैवाभ्यासः क्रियत इति कथमैक्यशंकावकाशः। न च ध्यानकाले शब्दप्रयोगोऽस्ति। अतस्तदा निष्कर्षकशब्दत्वभ्रमस्यापि नावकाशः। व्यवहारकाले प्राप्ते च नैल्यादेर्घटादिप्रकारतैकस्वभावत्वानुभावी यथा नीलो घट इत्येवमेव प्रयुङ्क्ते; न तु नैल्यवान् घट इति पृथक्। तथाऽयमुपासकः अहं ब्रह्मास्मीत्येव प्रयुञ्जीत। तत्प्रयोजनञ्च जीवस्य तत्प्रकारतैकस्वभावत्वाभावभ्रमव्युदासः। अव्युत्पन्नस्य संभवन् भ्रमो न वेदान्तव्युत्पत्तिनिमग्नस्य भवितुमर्हतीति सप्रयोजनमिदमनुसंधानं कथं स त्यजेत्। तेन हि सार्वकालिकं शेष्यतिशयाधानं स्वस्मिन् शेषे तस्य प्रतिष्ठितं भवतीति भावः। ननु 'आत्मेत्येवोपासीत' इति विध्यविरोधेन ब्रह्म मदन्तर्यामीत्येव स्पष्टमुपास्य-

"य आत्मनि तिष्ठन् आत्मनोऽन्तरः, यमात्मा न वेद, यस्याऽऽत्मा शरीरम्, य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः" इति, तथा, (छा. ६-८-४) सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः। ऐतदात्म्यमिदं सर्वम्", "सर्वं खल्विदं ब्रह्म तज्जलानिति" इति च—'सर्वस्य चिदचिद्वस्तुनः तज्जत्वात् तल्लत्वात् तदनत्वात् तन्नियाम्यत्वात् तच्छरीरत्वाच्च सर्वस्यायमात्मा। अतः स ते आत्मा। अतो यथा प्रत्यगात्मनः स्वशरीरं प्रति आत्मत्वात् 'देवोऽहम्' मनुष्योऽहम् इत्यनुसन्धानम्—तथा प्रत्यगात्मनोऽप्यात्मत्वात्परमात्मनः तस्याप्यहमित्येवानुसन्धानं युक्तम्' इति। एवं शास्त्रैरुपपादितं सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन सर्वशब्दानां ब्रह्मैकनिष्ठत्वमभ्युपगच्छन्तः, "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" इति व्यतिकरेणोक्तवन्तः। एवं च, (बृ. ३-४-१०) "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद", (बृ. ३-४-७) "अकृत्स्नो ह्येषः··· आत्मेत्येवोपासीत", (बृ. ६-५-७) "सर्वं तं परादात्, योऽन्यत्राऽऽत्मनः सर्वं वेद" इत्यात्मत्वाननुसन्धाननिषेधः, (श्वे. १-६) "पृथगात्मानं प्रेरितारञ्च मत्वा" इति पृथक्त्वानुसन्धानविधानं चाविरुद्धम्। अहमिति स्वात्मतयाऽनुसन्धानादन्यत्वानुसन्धान-

---

ताम्; किं अहं ब्रह्मास्मीत्युपासनेनेति चेत्—अत्रापि **ग्राहयन्ति** चेत्येतदेवोत्तरम्। तत्र आत्मेत्युपासनं कार्यमित्युक्त्वा तद्विवरणे प्रवृत्य अर्थवादपुरस्सरम्, "य एवं वेद अहं ब्रह्मास्मीति, स इदं सर्वं भवति' इति अहमित्याकारकत्वस्यैव कण्ठोक्तेः; तदुपरि, योऽन्यां देवतामुपास्ते इत्यादिना विशिष्टानुसंधानं विहाय पृथगनुसंधानं न कार्यमित्युक्तत्वाच्च। तदिदम् **एवञ्चे**त्यादिभाष्येण दर्शयिष्यते।

कार्यकारणभावनिबन्धनमेवैक्यमत्र श्रुतिवाक्ये विवक्षितमिति न; शरीरात्मभावनिबन्धनमत्र मुख्यम्; तस्यैव कार्यकारणभावप्रयोजकत्वादिति दर्शयितुमुपात्तश्रुत्यर्थमाह **सर्वस्येति**। ननु सन्मूला इत्यादिवाक्यार्थे वर्ण्यमाने मध्ये, 'अतः स ते आत्मा' इति वाक्यमनन्वितमिति चेन्न—एतद्वाक्यार्थवर्णनपूर्वं 'स त आत्मान्तर्यामी'ति पूर्वोपात्तान्तर्यामिब्राह्मणस्यापि समुच्चित्य विवरणात् तथा प्रयोगात्। एवमन्तर्यामिब्राह्मण इव सन्मूला इत्यत्रापि तत त्वमसीत्येवोपसंहारात स त आत्मेति श्वेतकेतुं प्रति गौतमेन वक्तुं शक्यते। सर्वं खल्वित्यत्रापि, 'एष मे आत्मेति यस्य स्यादद्धा' इति अस्मच्छब्दप्रयोगात् जीवे सति, स त आत्मेत्युक्तप्रायमिति च कृत्वा एवं प्रयोगः। एवमस्य साक्षात्भाष्यकारवाक्यत्वं विहायान्योक्त्यनुवादत्वस्यैव स्वीकार्यतया तदवगमाय, **अनुसंधानं युक्तमिति** इति वक्ष्यमाणवाक्योपरि **उपपादयन्तीति** शेषपूरणं कार्यम्। **उपपादयन्तीत्यर्थ** इति पूर्वोक्तनिगमनमेवमिति तदनुषङ्गसंभवात्। यदि भाष्ये, **अतः स त आत्मे**त्यंशं विनैव पाठ उपलभ्येत, तदा न कश्चित् क्लेशः। **अन्यो**ऽहमिति। तत्पृथक्सिद्धोऽहमिति मत्वा य उपास्ते, न स वेदेत्यर्थः। **पृथगात्मान**मिति। जीवब्रह्मैक्यग्रहं विना शरीरात्मभावादिप्रयुक्तभेदवत्त्वेन मत्त्वेत्यर्थः। न च आत्मेतीति इतिशब्दात् नामब्रह्मेतीत्यत्रेव दृष्टिविधिप्रतीतेरन्तर्यामित्वमवास्तवमिति शंक्यम्। प्रमाणसहस्रसिद्धस्यान्तर्यामित्वस्यान्यथासिद्धेन तत्त्वातत्त्वसाधारणेन **इतिशब्दे**-

निषेधो रक्षितः। स्वशरीरात् स्वात्मनोऽधिकत्वानुसन्धानवत् स्वात्मनो(तो)ऽपि परमात्मनोऽधिकत्वानुसन्धानात् पृथक्त्वानुसन्धानविधानं च रक्षितम्। अधिकस्य ब्रह्मणः प्रत्यगात्मन आत्मत्वात् तस्य च ब्रह्मशरीरत्वात् निषेधवाक्ये, "अकृत्स्नो ह्येषः" इत्युक्तम्। अत उपासितुरात्मत्वेन ब्रह्म उपास्यमिति स्थितम् ॥ ३ ॥ इति आत्मत्वोपासनाधिकरणम् ॥ २ ॥

१२६. प्रतीकाधिकरणम् ॥ ४-१-३ ॥

**न प्रतीके न हि सः ४ । १ । ४ ॥**

(छा. ३-१८-१) "मनो ब्रह्मेत्युपासीत", (छा. ७-१-५) "स यो नाम ब्रह्मेत्युपास्ते" इत्यादिप्रतीकोपासनेष्वप्यात्मत्वानुसन्धानं कार्यम्, उत नेति चिन्तायाम्, "मनो ब्रह्मेत्युपासीत" इति ब्रह्मोपासनत्वसाम्याद्ब्रह्मणश्चोपासितुरात्मत्वादात्मेत्येवोपासीतेत्येवं प्राप्तेऽभिधीयते—न प्रतीके—इति। प्रतीके नाऽऽत्मत्वानुसन्धानं कार्यम्। न हि सः—न ह्युपासितुरात्मा प्रतीकः। प्रतीकोपासनेषु प्रतीक एवोपास्यः; न ब्रह्म। ब्रह्म तु तत्र दृष्टिविशेषणमात्रम्। प्रतीकोपासनं हि नाम अब्रह्मणि ब्रह्मदृष्ट्याऽनुसंधानम्;

---

नापलापायोगात्। आत्मानमुपासीतेत्युक्तौ आत्मत्वमुपास्याकार इति न निश्चीयेतेति तस्योपास्याकारत्वस्थापनार्थमेव इतिशब्दप्रयोगः। अन्यथा कल्पिताकारोपासने परविद्यात्वायोगाच्च। अतः अहमित्युल्लेखावश्यम्भावायैव आत्मेतीत्युक्तमिति सूत्राशयः। ह्येष इति। एषः एकैकोपासकः; पृथक्पृथगुपासकः।

अत्र—अहमित्युल्लेखे आत्मेत्येव गृह्णन्ति, अन्तर्यामित्वेनैवोपासते; न तु कदाऽप्यैक्यभ्रमं लभन्ते इत्यपि सूत्रेण ज्ञाप्यते। इदम् अहंब्रह्मास्मीत्यनुसंधानं पञ्चाग्निविद्यायां न भवति तत्र, तद्य इत्थं विदुः, ये चेमे इति पृथङ्निर्देशस्वारस्यरक्षणाय जीवात्मविशेष्यकोपासनस्यैव विवक्षितत्वात्। ब्रह्मप्राप्तिरूपफलानुसारेण ब्रह्मणोऽपि विषयत्वाङ्गीकारेऽपि तस्य ब्रह्मशरीरभूतोऽहमित्युल्लेख्यविशेषणत्वमेवेष्टम्। न च ब्रह्मशब्दः मुख्यवृत्त्या ब्रह्मप्रकारजीववाची भवितुमर्हति। धर्मवाचिनां धर्मिपर्यन्तशक्तत्ववत् धर्मिवाचिनामपि धर्मपर्यन्तशक्ततायां युक्तिप्रमाणयोरभावात्। तदेतत् अस्मदीये ईशोपनिदाचार्यभाष्यतात्पर्ये विशदं द्रष्टव्यम्। शेषमप्रतीकालम्बनसूत्रे। अतोऽहं ब्रह्मास्मीत्यनुसंधानं तदन्यविद्यास्वेव ॥ ३॥

तर्हि प्रतीकोपासनेष्वपि ब्रह्मणि अहमित्यनुसंधानं स्यादित्यत्र तन्निरासार्थमुपरितनाधिकरणम्। प्रतीकः शरीरम्। ब्रह्मशरीरस्य ब्रह्मणश्चाभेदारोप इह प्रतीकोपासनम्। ब्रह्मानिपन्नकप्रतीकमात्रविषयकोपासनरूपं तु प्रतीकोपासनं नात्र ग्राह्यम्; ब्रह्माविषयके आत्मत्वोपासनशंकानवकाशात्। उद्गीथादौ आदित्यादिदृष्टिविधिस्तु न प्रतीकोपासनम्, तस्य तत्प्रतीकत्वाभावात्। आरोपाधिष्ठानं सर्वं प्रतीक इति परे। अङ्गं प्रतीकोऽवयवः इति कोशः। विशिष्टवस्त्वेकदेशरूपावयवः प्रतीक इत्यपि स्यात्। पूर्वपक्षस्तु परविद्यावत् प्रतीकोपासनमपि ब्रह्मविशेष्यकम्; तस्यैव प्राधान्यात् मनसोऽचेतनत्वाच्च। तत्र मनोदृष्टिः। एवञ्च मनस्त्वेनोपास्यं ब्रह्मेति तत् अहंत्वेनाप्युपासितुमर्हमिति। राद्धान्तस्तु—मनो ब्रह्मेत्युपासीतेत्यादौ मन इति द्वितीयान्तम्; वाचं ब्रह्मेत्युपास्ते इत्यादिवाक्यानुरोधात्। इतिशब्दयोगात् ब्रह्मेति प्रथमान्तम्। एवञ्च

तत्रोपास्यस्य प्रतीकस्योपासितुरात्मत्वाभावान्न तथाऽनुसंधेयम् ॥ ४ ॥

नन्वत्रापि ब्रह्मैवोपास्यम्; ब्रह्मण उपास्यत्वसंभवे मनआदीनामचेतनानामल्पशक्तीनां चोपास्यत्वाश्रयणस्यान्याय्यत्वात्। अतो मनआदिदृष्ट्या ब्रह्मैवोपास्यमिति; अत आह—

ब्रह्मदृष्टिरुत्कर्षात्। ४। १। ५॥

मनआदिषु ब्रह्मदृष्टिरेव युक्ता। न ब्रह्मणि मनआदिदृष्टिः; ब्रह्मणो मनआदिभ्य उत्कर्षात्; तेषां च विपर्ययात्। उत्कृष्टे हि राजनि भृत्यदृष्टिः प्रत्यवायकरी; भृत्ये तु राजदृष्टिरभ्युदयाय ॥ ५ ॥ इति प्रतीकाधिकरणम् ॥ ३ ॥

१२७. आदित्यादिमत्यधिकरणम् ४-१-४ ॥

आदित्यादिमतयश्चाङ्ग उपपत्तेः। ४। १। ६।

(छा. १-३-१) "य एवासौ तपति तमुद्गीथमुपासीत" इत्यादिषु कर्माङ्गाश्रयेषु उपासनेषु संशयः—किमुद्गीथादौ कर्माङ्गे आदित्यादिदृष्टिः कर्तव्या, उतादित्यादिषूद्गीथादिदृष्टिः—इति। उत्कृष्टदृष्टिर्निकृष्टे कर्तव्येति न्यायात्, उद्गीथादीनां च फलसाधनभूतकर्माङ्गत्वेनाफलेभ्य आदित्यादिभ्यः उत्कृष्टत्वादादित्यादिषूद्गीथादिदृष्टिः इति प्राप्तेऽभिधीयते—आदित्यादिमतयश्चाङ्गे इति। चशब्दोऽवधारणे। क्रत्वङ्गे उद्गीथादावादित्यादिदृष्टय एव कार्याः।

---

मनस एव विशेष्यत्वम्। न च मनःपदं मनोऽन्तर्यामिपरम्; तथासति प्रतीकोपासनत्वभंगात्; अन्तर्यामिण इह पूर्वमगृहीततयोद्देश्यत्वायोगात्; अन्तर्यामिणि ब्रह्माभेदस्य साक्षादेव सत्त्वेन अभेदारोपाविवक्षणे इतिशब्दवैयर्थ्याच्च। अतो मनोविशेष्यकब्रह्मत्वारोपात्मकमुपासनमिति तत्र विशेष्ये मनसि अहमिति प्रतीतिर्न घटत इति ॥ ४ ॥

या ब्रह्मणः प्राधान्यरूपा युक्तिः, सा वचनविरोधे न प्रवर्तते। प्रत्युत सत्तर्कोपबृंहितत्वात् वचनं प्रबलतरमित्युच्यतेऽनन्तरसूत्रेण ॥ ५ ॥

यदि निकृष्टे उत्कृष्टदृष्टिः, तर्हि कर्माङ्गदृष्टिरेवाऽऽदित्यादिषु कार्या; कर्माङ्गानामेवोत्कृष्टत्वादिति शंकया संगतिः। य एवासौ तपति तमित्यत्र यच्छब्दयोगात्, उद्देश्यवचनं पूर्वं विधेयस्य ततःपरमिति न्यायाच्च, तमित्यस्य द्वितीयान्तत्वाच्च तमित्युक्ते आदित्ये उद्गीथदृष्टिरिति पूर्वपक्षः। कथं देवताया निकर्ष इत्यत्राह उद्गीथादीनाञ्चेति। अफलेभ्य इति। देवतानां स्वयं फलरूपत्वे फलसाधनकर्मापेक्षयोत्कर्षः स्यात्; तत्तु न। नापि फलसाधनत्वम्; यदेव विद्ययेति वचनात् आदित्याद्युपासनस्यैव फलसाधनत्वात्। यत्कर्माङ्गाश्रितमिदमुपासनम्, तत्कर्माङ्गत्वमप्युद्गीथस्येव प्रकृतस्यादित्यस्य नास्ति। अतः प्रधानफलसाधनकर्माङ्गोद्गीथापेक्षया, अप्रधानफलसाधनोपासनान्वितस्याऽऽदित्यस्य निकर्ष एवेति भावः॥ आदित्यादिदृष्टय एव कर्माङ्गे उद्गीथादौ कार्याः; न तु विपरीतम्। आदित्यादीनामुत्कर्षोपपत्तेरिति सूत्रार्थः। आराधनस्याराध्यशेषत्वं प्रसिद्धम्। फलं प्रति अन्तरङ्गसाधनत्वाच्च साध्योपायात् सिद्धोपायः प्रधानम्। आदित्यादेस्तत्र तत्रोपास्यस्य तत्तत्कर्मानाराध्यत्वेऽपि राजान्तरपुरुषस्य किञ्चिद्राजापेक्षयाऽपि

कुतः ; उपपत्तेः आदित्यादीनामेवोत्कृष्टत्वोपपत्तेः ; आदित्यादिदेवताराधनद्वारेण हि कर्मणामपि फलसाधनत्वम् । अतस्तद्दृष्टिरुद्गीथाद्यङ्गे ॥ ६ ॥ इति आदित्यादिमत्यधिकरणम् ॥४॥

१२८. आसीनाधिकरणम् ॥ ४-१-५ ॥

आसीनः संभवात् । ४ । १ । ७ ।

मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ज्ञानं ध्यानोपासनादिशब्दवाच्यमसकृदावृत्तं सन्ततस्मृतिरूपमित्युक्तम् । तदनुतिष्ठन् आसीनः शयानः तिष्ठन् गच्छंश्च विशेषाभावाद्नियमेनानुतिष्ठेत् — इति प्राप्ते उच्यते—आसीनः इति । आसीन उपासनमनुतिष्ठेत् । कुतः ? संभवात्—आसीनस्यैव ह्येकाग्रचित्ततासंभवः ; स्थितिगत्योः प्रयत्नसापेक्षत्वात् , शयने च निद्रासंभवात् । पश्चार्धधारणप्रयत्ननिवृत्तये सापाश्रये आसीनः कुर्यात् ॥ ७ ॥

ध्यानाच्च । ४ । १ । ८ ॥

( बृ. ६-५-६ ) "निदिध्यासितव्यः" इति ध्यानरूपत्वादुपासनस्य, एकाग्रचित्तताऽवश्यंभाविनी । ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनमित्युक्तम् ॥ ८ ॥

निकर्षवत् कर्मणां देवतापेक्षया सर्वथा निकर्ष एवेति भावः । एवञ्च य एवासौ इति यच्छब्दनिर्देशः प्राथम्यमित्यादिकमनियतत्वादुद्देश्यत्वासाधकम् । उद्गीथं तमुपासीतेत्यन्वयः । तत्र तच्छब्दविवरणार्थं यच्छब्दघटितवाक्यं तस्यापि पूर्वज्ञातत्वादुपपन्नम् । द्वितीयाविभक्तिश्चोभयत्रैवास्तीति न विशेष इति ॥ ६॥

उद्गीथाद्युपासनानामुपासनशब्दवाच्यत्वेऽपि किञ्चित्कर्मप्रयोगान्तर्गततया दर्शनसमानाकारतापादकसंततस्मृतिरूपत्वायोगात् संध्योपासनादिवत् यथाप्रमाणं तिष्ठताऽपि कार्यत्वसंभवात् तद्व्यावृत्तये मोक्षेत्यादि । फलान्तरार्थानामहरहरनुवर्तनीयानामुपासनान्तराणामप्युपलक्षणमेतत् । उपासनान्तरङ्गसाधनविशेषविचार इह । यमनियमासनादिषु योगाङ्गेषु यमनियमाः कर्मशमादिरूपाः तृतीयचतुर्थ एवोक्ताः । प्राणायामप्रत्याहारादिश्चाप्रतिक्षेप्यः । यत् पुनरासनरूपाङ्गवचनम्—तत् देहारोग्यसंपत्त्यर्थनानाविधासनशिक्षणमात्रम् , न पुनः आसीनेनैव कार्यमित्येतदर्थमिति आसनप्रभेददर्शनादेव ज्ञायते । विद्विषामपि कंसादीनां गमनभोजनादिव्यापृतानामपि भगवद्दर्शनसंपत्तिः स्मर्यते । श्वेताश्वतरोपनिषदादौ आसीनत्वं न स्पष्टमुपदिष्टम् । अतो ध्याने देशकालाद्यनियमवत् मानसव्यापारसाध्ये कायपरिस्थितिविशेषनिर्बन्धो निर्निबन्धन इति पूर्वपक्षः । एकाग्रचित्ततेति । सा हि बाह्यव्यापारतदौपयिकमानसवृत्तिराहित्यविशिष्टमानसवृत्तिरूपा । तत्र गमनादिकाले विशेषणांशस्य, शयने विशेष्यांशस्य चासिद्धिरिति ॥

उपासक आसीनः स्यात् एकाग्रतापेक्षत्वादित्युक्तम् । अथ स आसीन एव ; ध्यानवत्त्वाच्चेत्युच्यते । न हि मोक्षार्थोपासनमुद्गीथादिदृष्टिवत् सामान्यज्ञानरूपम् , किं तु, 'ततस्तु तं पश्यति निष्कलं ध्यायमानः' इत्येवमुक्तध्यानरूपम् । इदञ्चाविच्छिन्नानन्यगोचरस्मृतिसंतानरूपमनासीनस्य न निष्पद्यत इति ॥ ८ ॥

न केवलमान्तरतद्विषयव्यापारसत्त्वमात्रेण ध्यानशब्दप्रयोगः ; अपितु व्यापारान्तरराहित्ये एव स मुख्यः । अतो ध्यायतिप्रयोगः आन्तरव्यापारम् , अचलत्वरूपंबाह्यव्यापाराभावञ्चापेक्षते । प्रत्युत बाह्यव्या-

अचलत्वं चापेक्ष्य । ४ । १ । ९ ॥

निश्चलत्वं चा(ह्य)पेक्ष्य पृथिव्यन्तरिक्षादिषु ध्यानवाचोयुक्तिर्दृश्यते, (छा. ७-६-१) "ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षम्, ध्यायतीव द्यौः, ध्यायन्तीवापः, ध्यायन्तीव पर्वताः" इति । अतः पृथिवीपर्वतादिवत् एकाग्रचित्ततया निश्चलत्वमुपासकस्यासीनस्यैव संभवेत् ॥

स्मरन्ति च । ४ । १ । १० ॥

स्मरन्ति चासीनस्यैव ध्यानम्, (गी. ६-११-१२) "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् । तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्याऽऽसने युञ्ज्यात् योगमात्मविशुद्धये" इति ॥ १० ॥

यत्रैकाग्रता तत्राविशेषात् । ४ । १ । ११ ॥

एकाग्रतातिरिक्तदेशकालविशेषाश्रवणात् एकाग्रतानुकूलो यो देशः कालश्च, स एवोपासनस्य देशः कालश्च । (श्वे. २-१०) "समे शुचौ शर्करावह्निवालुकाविवर्जिते" इति वचनमेकाग्रतैकान्तदेशमाह; न तु देशं नियच्छति; "मनोऽनुकूले" इति वाक्यशेषात् ॥११॥

इति आसीनाधिकरणम् ॥ ५ ॥

१२९. आप्रयाणाधिकरणम् ॥ ४-१-६ ॥

आप्रयाणात् तत्रापि हि दृष्टम् । ४ । १ । १२ ॥

तदिदमपवर्गसाधनमुक्तलक्षणमुपासनमेकाह एव संपाद्यम्, उत आप्रयाणात् प्रत्यहमनुवर्तनीयमिति विशये—एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात् तावतैव परिसमापनीयमिति

---

व्यापाराभावमात्रेऽपि तदुपचरणात् तस्य प्राधान्यमवगम्यत इत्याह अचलत्वञ्चेति । चः आन्तरव्यापारस्य निर्विवादस्य समुच्चायकः । वाचोयुक्तिः किञ्चिदुपचरितः प्रयोगः । आप इति । अपां निर्व्यापारत्वं पवनाद्यभावे तटाकादौ; प्रवहणाभावात् ॥ ९ ॥

यदि शुचौ देशे इत्याद्युक्तस्य नियमेनापेक्षा, तर्हि, "समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोनुकूले न तु चक्षुःपीडने गुहानिवाताश्रयणेन योजयेत्" इत्युक्तगुहादिनियमोऽपि स्यादिति पूर्वपक्षिशंकायामाह । यत्रैकाग्रतेति । मनोनुकूले इति विशेषनिर्देशात् प्रायस्तदानुकूल्यं देशगतसमत्वशुचित्वादौ भवितुमर्हतीति विशेषोक्तिः, न तु नियमार्थम् । गमनशयनादिकं तु ध्यातृपुरुषगतव्यापारत्वात् ऐकाग्र्यविरोधीति । एवमस्य सूत्रस्यात्रैव संगतत्वात् न पृथगधिकरणत्वम् ॥ ११ ॥

व्यतिकरेण निर्देशात् सामान्यविशेषभावाच्च वेदनं दर्शनसमानाकारध्यानरूपमिति सिद्धं प्रथमाधिकरणे । तत्साधनमासनञ्च पूर्वाधिकरणे उक्तम् । अथाऽऽसननियमवत् आप्रायणं ध्यानानुवर्तननियमो वा, उत भजनसुखलिप्सया तत्र प्रायः प्रवृत्तिसंभवात् तदनुवादमात्रमिति देशकालानियमवत् तदनियमो वेति विचारे देशकालानियमवदनियम इति पूर्वाधिकरणान्तिमसूत्रावलम्बनेन पूर्वपक्षः । एकस्मिन्नेवेति । अह्नि दर्शनसमानाकारं निष्पन्नम्, ततः पश्चात् न कार्यम् । न च 'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते'

प्राप्ते उच्यते—आप्रयाणात्—इति। आमरणादनुवर्तनीयम्; कुतः? तत्रापि हि दृष्टम्—उपासनोद्योगप्रभृति आप्रयाणान्मध्ये यः कालः, तत्र सर्वत्रापि दृष्टमुपासनम् (छा. ८-१५-१) "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते" इति ॥ १२ ॥

इति आप्रयाणाधिकरणम् ॥ ६ ॥

१३०. तदधिगमाधिकरणम् ॥ ४-१-७ ॥

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्। ४। १। १३ ॥

एवं विद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते; ब्रह्मविद्याप्राप्तौ पुरुषस्योत्तरपूर्वाघयोरश्लेषविनाशौ श्रूयेते, (छा. ४-१४-३) "तद् यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते", (बृ. ६-४-२३), "तस्यैवाऽऽत्मा (व स्यात्) पदवित् तं विदित्वा न कर्मणा लिप्यते पापकेन" इत्युत्तराघाश्लेषः, (छा. ५-२४-३) "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते", (मु. २-२८) "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति पूर्वाघविनाशः। एतावश्लेषविनाशौ विद्याफलभूतावुपपद्येते, नेति संशयः।

किं युक्तम्? नोपपद्येते इति। कुतः? (ब्रह्मवैवर्ते प्रकृतिखण्डे. २६-अ. ७० श्लो) "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादिशास्त्रविरोधात्। अश्लेषविनाशव्यपदेशस्तु मोक्षसाधनभूतविद्याविधायिवाक्यशेषगतः कथञ्चिद्विद्यास्तुतिप्रतिपादनेनाप्युपपद्यते।

कलेबरम्' इति भाविप्राप्त्यनुरूपान्तिमप्रत्ययस्यावश्यकत्वादाप्रयाणमावर्तनीयमिति शंक्यम्—तत्प्रकारस्य कर्मिविषयेऽपि तुल्यत्वेन तेषामिव प्रतिदिनध्यानाभावेऽपि तदनुचिन्तनात् देवानुग्रहबलादन्तिमप्रत्ययसंभवात्; अन्तकाले यत्नेन चित्ते विनिवेशनस्याऽऽवश्यकस्यैव पर्याप्तत्वाच्चेति। प्रतिदिनं सकृदेव योगमुपविश्यानुतिष्ठेदित्यभिप्रायेण दिनघटनेन विचारः। तत्रापि प्रयाणपर्यन्तकालेऽपि। दृष्टं शास्त्रोक्तम्। आसीनत्वनियमविशिष्टमिवैतन्नियमविशिष्टमपि दृष्टमुपासनमित्यर्थः॥ यावदायुषमिति। न हि यावद्दर्शनमित्युक्तमिति भावः॥ १२॥

चतुर्थाध्याये फलसाधनशोधनपेटिका वृत्ता; अथ फलपेटिकेत्याह एवमिति। अश्लेषविनाशरूपं फलं न केवलवेदनादिति वेदयितुमावृत्त्यादि वर्णितम्। तत्र पूर्वाधिकरणे मुक्त्यर्थं प्रयाणपर्यन्तावृत्त्यावश्यकताबोधनात् तावदावृत्तिविशिष्टमुपासनमेवोपाय इति गम्यते। युक्तञ्चैतत्; सांपरायाधिकरणे देहवियोगकाल एव सुकृतदुष्कृतधूननस्योक्तत्वात्। एवञ्च सति विद्याफलमुत्तराघाश्लेष इति कथम्, उपायनिष्पत्त्युत्तरं देहस्यैवाभावादिति शंकायां प्राप्तायाम्-अन्यः प्रत्यवतिष्ठते-उत्तरपूर्वाघाश्लेषवचनमर्थवादः; कर्मफलस्यावश्यभोक्तव्यत्वादिति। अत एतत्फलसदसद्भावविचारः क्रियत इति संगतिः। अत्र सिद्धान्तिनिष्कर्षस्तावत्—'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति दर्शनानन्तरमेव कर्मक्षयवचनात् अनावृत्तं वेदनमपर्याप्तमिति आवृत्तिनिरूपणं कृतम्। अत एव वचनात् उत्तराघाश्लेषवाक्यस्य

**न च विद्या पूर्वोत्तराघयोः प्रायश्चित्ततया विधीयते ; येन प्रायश्चित्तेनाघविनाश उच्यते। विद्या हि,** (तै. आन. १) **"ब्रह्मविदाप्नोति परम्",** (मु. ३-२-९) **"ब्रह्म वेद ब्रह्मैव भवति" इति ब्रह्मप्राप्त्युपायतया विधीयते। अतो विद्यार्थवादोऽयमघविनाशाश्लेषव्यपदेश इति।**

**एवं प्राप्तेऽभिधीयते**—तदधिगमे—**इति। विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेषविनाशावुपपद्येते। कुतः? एवंविधं हि विद्यामाहात्म्यमवगम्यते, "एवंविदि**

---

दर्शनसमानाकारध्याननिष्पत्त्यनन्तरक्षण एवाश्लेषादिकमिति। अश्लेषादिवचनमर्थवाद इति वदतः पक्षोपपादनमेवम्—स्वर्गपापक्षयादिरूपेषु फलेषु एकोद्देशेनैव कर्मानुष्ठानवत् विद्यानुष्ठानमपि पापक्षयोद्देशेन वा ब्रह्मप्राप्त्युद्देशेन वा स्यात्। तत्रावश्यापेक्षितं ब्रह्मविदाप्नोतिपरमिति विधिवाक्यान्वितं ब्रह्मप्राप्तिरूपमिष्टतममेवोद्देश्यं भवतीति नान्यस्य फलत्वप्रसक्तिः। असंभवि चाश्लेषादेः फलत्वम्; भोगैकनाश्यत्वे कर्मणां शास्त्रावगते, विद्यानाश्यत्वकल्पनायोगात्। न च विद्या प्रायश्चित्तरूपा; फलान्तरोद्देशेन विधानस्य दर्शितत्वात्। अश्लेषकरत्वं तु सुतरां न भवति; निमित्ते सति नैमित्तिकमुदेतीति न्यायात् करिष्यमाणोत्तराघाश्लेषार्थं प्रायश्चित्ततया पूर्वं विद्यानुष्ठानमित्यस्य दुर्वचत्वात्। तथासति, 'नाविरतो' दुश्चरितात् इति वाक्यविरोधश्च। एवञ्चोत्तराघाश्लेषवचनमर्थवाद एवेति पूर्वाघविनाशवचनमपि तुल्ययोगक्षेमम्। तर्हि, अश्व इव रोमाणि विधूय पापमित्याद्यर्थः क इति चेत्—विद्यानिष्ठो देहवियोगात् प्राक् विद्याबलात् स्वगतं पुण्यपापराशिं प्रत्यक्षीकृत्य तदनुभवार्थं महिम्ना युगपदेव तदर्हाणि सुरनरखरकीरपटीरादीनि परस्सहस्राणि शरीराणि परिगृह्य अनुभवमुखेन सर्वं विधूय ब्रह्मलोकमभिसंभवतीत्येवेति। अत्रोच्यते—**तदधिगमे** इति।

अस्य ब्रह्माधिगमे इत्यर्थः 'यया तदक्षरमधिगम्यत' इत्येतदनुगुण इति न मन्तव्यम्—आवृत्तिसूत्रप्रभृत्युपस्थितविद्याग्रहणेन **तदधिगमे** दर्शनसमानाकारध्यानप्राप्तावित्यर्थस्यैवोचितत्वात्। अधिगम इत्यनेन आरम्भवचनात् आप्रयाणानुवृत्तस्यैवाघविनाशहेतुत्वमिति नेष्यत इति ज्ञापितम्। अत एवाधिगमपदसार्थक्यम्। उत्तराघस्याश्लेषः पूर्वाघस्य विनाश इति यथासंख्यमन्वयः। ननु अल्पाच्कत्वानुरोधेन पूर्वोत्तरेति वक्तव्ये **उत्तरपूर्वे**ति कुतः। न चाश्लेषवचनं छान्दोग्ये चतुर्थाध्याये, विनाशवचनं पञ्चमे इति क्रमानुसारादिति वाच्यम्—प्रथमाध्याय एव, 'उदेति हवै सर्वेभ्यः पाप्मभ्यः' इति वचनात्। ईशोपनिषदि प्रथमं 'न कर्म लिप्यते नरे' इतिवत् बृहदारण्यके, 'सर्वान् पाप्मन औषत्' इति प्रथमं पाप्मदाहस्योक्तेः। प्रश्ने च, 'स पाप्मना विनिर्मुक्तः' इति। तद्वचनस्य पूर्वत्वेऽपि पूर्वोत्तरेति पाठेऽपि, दर्शपूर्णमासशब्द इव, उत्तरं च पूर्वश्च पूर्वोत्तरे इति विग्रहसंभवात् तथाप्रयोगत्यागे कारणं नोक्तं भवतीति चेत्—सत्यम्; तथा प्रयोगेऽपि, **अश्लेषविनाशा**वित्युपरितनप्रयोगानुगुण्याय च दर्शितो विग्रहः सुज्ञान एव--अथापि अवतरणे पूर्वपक्षे चोक्तरीत्या पूर्वमुत्तराघाश्लेषाक्षेपमेव कृत्वाऽधिकरणप्रवृत्तिरिति, तथा सिद्धान्ते उत्तराघाश्लेषस्य विद्याफलत्वमवश्यं स्वीकर्तव्यमिति तद्वत् विनाशस्यापि फलत्वमित्येवं सुवचमिति च विस्पष्टज्ञापनार्थमेवं प्रयोग इति भाव्यम्। तदयमर्थः—यद्यनुभवेनैव सर्वं क्षपणीयम्, स एव च वचनार्थ इति—तर्हि कस्यचिदश्लेषकथनं कथम्। बाधितमर्थमादाय हि स्तुतिरपि न घटते। न च शास्त्रप्रति-

पापं कर्म न श्लिष्यते", "एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इत्यादिव्यपदेशात्। न च, "नाभुक्तं क्षीयते कर्म" इत्यनेन शास्त्रेणास्य विरोधः; भिन्नविषयत्वात्। तद्धि कर्मणां फलजननसामर्थ्यद्रढिमविषयम्; एतत्तु उत्पन्नाया विद्यायाःप्राकृतानां पाप्मनां फलजनन-

पक्षेऽर्थे विमतेरवसरः। अतो विद्या उत्तराघाश्लेषकरीत्येव स्वीकर्तव्यम्। तत्र नाविरतोदुश्चरितात् इत्याद्यविरोधाय प्रामादिकाश्लेषे पर्यवसानमस्तु। एवमेकस्य फलत्वे सति पूर्वाघविनाशस्यापि तत्त्वं संभवन्नोपेक्ष्यम्। अपेक्षितश्च तत्। अन्यथा अनादिसंचितसर्वपापराशेरनन्तेनापि कालेनानन्तदेह-परिग्रहेणापि क्षपणासंभवात्। परिगृहीतमनुष्यादिशरीराणामपि प्रतिक्षणबुद्धिपूर्वबह्वनर्थापादकतया पाप-सञ्चयातिशयस्यैव प्रसक्तेः। न चानेकफलोद्देशकल्पनमयुक्तमित्युक्तमिति वाच्यम्—प्रामादिकोत्तराघाश्लेष-स्येवास्यापि अनुद्देशेऽपि स्वत एव संभवात्। ब्रह्मानुभवविशेषस्योद्दिष्टत्वे तस्य पापक्षयमन्तराऽनुदयेना-स्यानुषङ्गसिद्धत्वाच्च। अथवा कर्मक्षय एवोद्देश्यः; प्रतिबन्धकविरहेऽनुद्दिष्टस्यापि स्वभावाविर्भावस्य स्वत एव संभवात्। एवं तस्यानुभवस्योत्तराघाश्लेषस्य चानुद्देशेऽपि भावात् पूर्वकर्मक्षयस्यैवोद्दिष्टत्वादेव विद्यायाः प्रायश्चित्तत्वोक्तिः। अश्लेषांशे प्रायश्चित्तरूपत्वास्वीकारात्, निमित्तात् पूर्वं कथं नैमित्तिक-मिति शंकाया नावकाशः। विद्यारूपप्रतिबन्धकसद्भावात् प्रामादिकं कर्म अनुत्पन्नशक्तिकम् अतएवापापं भवतीति अश्लेषवाक्यतात्पर्यमिति।

**भिन्नविषयत्वा**दिति। एकं कर्मतद्गतशक्तिविषयकम्, अन्यत् विद्यातद्गतशक्तिविषयकम्। एवमेकं कर्मशक्तिर्भोगं विना न नश्यतीति सामान्यविषयकम्; अन्यत् विद्यानुष्ठातृपुरुषगतकर्मसंबन्धिशक्ति-र्भोगं विना नश्यतीति विशेषविषयम्। एवञ्च सामान्यवचनस्य प्रायश्चित्तविधायकवाक्यान्तरानुरोधेनैव प्रकारान्तरानाश्यकर्मशक्तिरूपविशेषे भोगैकनाश्यत्वप्रतिपादनपर्यवसानात् भिन्नविषयकत्वमिति। नाभुक्त-मिति वचनप्रवृत्तिरपि, 'कर्म वा न कार्यम्; कृतं वा प्रायश्चित्तेनापनोद्यम्; अन्यथाऽनर्थः' इति ज्ञापनार्थ-मेव। लोके ज्ञानेच्छाभयादीनां क्षणिकतया स्वयं नाशदर्शनात् तद्वदेव कर्मणां त्रिचतुरक्षणस्थायित्वात् तज्ज-न्या शक्तिः परं कियन्तं कालं स्थास्यतीति निर्भयो मा भूः; तस्याः भगवत्प्रीतिकोपरूपत्वेऽपि स्वयं विनाशो न भवतीति तद्वचनतात्पर्यमिति। **सामर्थ्यद्रढिमविषय**मिति। **द्रढिम**पदेन उक्तरीत्या ज्ञानादिक्षणिकगुणकर्मतौल्याभाव एव विवक्षितः। यद्यपि कर्मणां विदुषि फलाजनकत्वेऽपि तत्प्रायणानन्तरं तत्सुहृद्विपक्षयोः स्वफलजनकत्वात् सामर्थ्यस्यानुभवोत्पादनं विना न भङ्ग इतीदृशं सामर्थ्यस्य दार्ढ्यं शक्यशंकम्—अथापि अविद्वद्विषयेऽपि कृतप्रायश्चित्तानां कर्मणां फलजननसामर्थ्य-स्याभावात्, विद्याया अपि प्रायश्चित्तरूपतया उक्तत्वेन सामर्थ्यनाशस्यावश्यकत्वात्, 'धर्मः क्षरति कीर्तनात्' इति स्वकृतधर्मस्य स्वयं कीर्तने कर्मशक्तिनाशस्योक्तत्वाच्च नानुभवोत्पादननिर्बन्धः सुकरः। तर्हि सुहृद्विपक्षयोरेतत्कर्मफलानुभवश्रवणनिर्वाहः कथमिति चेत—कथमेककृतकर्मफलानुभवोऽन्येन क्रियेतेत्यपि विचार्यम्। कर्मणो वा तच्छक्तेर्वा मूर्तत्वाभवात् कथं धूननं वा स्थलान्तरोपायनं वा स्यादि-त्यपि चिन्त्यम्। सर्वनिर्वाहप्रकारश्च कृत एव **टीकासारावल्यादिषु**—'विद्वत्कर्मणां नाश एव। तत्सुहृद्वि-

**शक्तिविनाशसामर्थ्यम्, उत्पत्स्यमानानां च फलजननशक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यञ्च प्रतिपादयतीति द्वयोर्विषयो भिद्यते। यथा अग्निजलयोरौष्ण्यतन्निवारणसामर्थ्यविषययोर्द्वयोः प्रमाणयोरपि विषयभेदात् प्रामाण्यम्, एवमत्रापीति न कश्चिद्विरोधः।** अघस्याश्लेषकरणं— **वैदिककर्मायोग्यता-वासना-प्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम्। अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यताम्, सजातीयकर्मान्तरारम्भरुचिम्, प्रत्यवायं च कुर्वन्ति।** अघस्य विनाशकरणम्—**उत्पन्नायास्तच्छक्तेर्विनाशकरणम्। शक्तिरपि परमपुरुषाप्रीतिरेव। तदेवं विद्या वेदितुर्वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसञ्चयजनितपरमपुरुषाप्रीतिं विनाशयति; सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिं च प्रतिबध्नाति॥ तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यम्;**

---

पक्षौ न विद्वत्कर्मणः फलमनुभवतः। किंतु परमात्मा विद्वत्सुहृदि तत्कृतसौहार्दस्य फलं कल्पयति, तद्विपक्षे च तत्कृतद्वेषस्य। तत् फलञ्च विद्वत्कृतयावत्सत्कर्मफलसमानं तत्स्नेहस्य, तदीयदुष्कर्मव्यूहफलसमानं द्वेषस्येति गमयितुमेव एतदीयकर्मणां तत्र तत्र गत्युक्तिरिति। अतः कर्मसामर्थ्यस्य नाशोऽनुभवं विनाऽपि भवतीति नान्यादृशस्य दार्ढ्यस्य प्रसक्तिरिति। **विद्याया** इत्यस्य **सामर्थ्य**मिति पदद्वयेऽप्यन्वयः। **पाप्मना**मित्यस्य **शक्ति**पदद्वयेऽन्वयः। **शक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यं** नाम शक्त्यनुत्पत्तिप्रयोजकत्वमेव। नन्वघस्य कर्मरूपस्य विदुषा क्रियमाणस्य तन्निष्ठतया तदश्लेषः कथम्, एवं कृतस्याघस्य कर्मणोऽचिरस्थायितया प्रागेव नष्टत्वात् विद्यया नाश इति च कथमिति तटस्थशंकां परिहरति **अघस्ये**त्यादिना। शक्तिर्नाम भूतनिष्ठोऽतिशयविशेषः, आत्मनिष्ठमपूर्वं वेति मतिं व्युदसितुमाह **शक्तिरपी**ति। **अप्रीतिः** निग्रहसंकल्पः। नन्वर्थवादत्वमस्वीकृत्य अश्लेषवचनस्य यथार्थत्वस्वीकारे, 'नाविरतो दुश्चरितात्' इति श्रुतिविरोधः। तथा पूर्वं ब्रह्मविदपचारादौ सति मुक्तिफलोपासनविलम्बोक्तिविरोधश्च। न हि प्राथमिकदर्शनसमानाकारविद्योत्पत्तिमात्रप्रतिबन्धकत्वमेव दुश्चरितस्य, पश्चात्तु तत्सत्त्वेऽपि न दोष इति युक्तम्; 'अहिंसन् सर्वा भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषम्' इत्येवं यावदायुषं शमदमानुवृत्तेरेव शास्त्रीयत्वात; वृत्रवसिष्ठादिभिर्दुष्कर्मफलानुभवाच्चेत्यत्राह **तदिद**मिति। बुद्धिपूर्वमुत्तराघं तु प्रायश्चित्ताकरणे भोगेनैव नाश्यम्। एतद्विषयमपि भवति, नाभुक्तमिति वाक्यम्।

यद्येवं दर्शनसमानाकारज्ञानप्रथमव्यक्त्युत्पत्तिसमय एव पूर्वोत्तराघाश्लेषविनाशौ भवतः, तर्हि देहवियोगकाले धूननोक्तिः कथमिति चेत्—उच्यते—विनाशः, अश्लेषः, धूयमानत्वम्, उपायनञ्चेति चत्वारः कर्मधर्माः परमात्मसंकल्परूपाः। प्रथमसंकल्पद्वयाकारौ यदिशब्दालिङ्गितौ; यद्ययमुपक्रान्तमुपायं समापयेत्, तदा संचितपापफलं न दास्यामि, करिष्यमाणप्रामादिककर्मफलञ्च न दास्यामीत्येवंरूपत्वात्। अन्यौ द्वौ तु समाप्त्यनन्तरभावित्वात् क्रमात्—इतः परमेतत्फलं न दास्यामि, एतत्कर्मफलतुल्यफलमेतत्प्रियाप्रियपुरुषौ स्वकृतप्रीत्य[illegible]ीति फलतयाऽनुभवतामित्याकारकौ इति विशेषः।

ननु तत्तदघकरणे तत्तत्फलमनुभाव्यम् (तत्तत्परिहाराकरणे न क्षम्यते) इति सामान्यसंकल्पः पर-

(कठ. २-२४) "नाविरतो दुश्चरितात्" इत्यादिभिः शास्त्रैराप्रयाणादहरहरुत्पद्यमानायाः

मात्मनः तत्तद्विधिबलादवगम्यते। 'परिहारे कृते क्षमिष्ये' इति संकल्पोऽपि प्रायश्चित्तविधिबलादवगम्यते। तदनुरोधेन कृते प्रायश्चित्ते क्षान्तमिति संकल्पः स्यान्नाम। स एव निग्रहनिवृत्तिः। एतदतिरिक्ततया उपासनारम्भकाले यथालिङ्गितसंकल्पकल्पनं किमर्थम्। न हि कृच्छ्रचान्द्रायणादेरारम्भेऽवसाने चेति संकल्पद्वयमिष्यते इति चेत्-उच्यते। 'अनुतापादुपरमात् प्रायश्चित्तोन्मुखत्वतः। तत्पूरणाच्चापराधाः सर्वे नश्यन्ति पादशः' इत्युक्तरीत्या सर्वत्र प्रायश्चित्तारम्भेऽपि किञ्चित्पापांशनिवर्तनसंकल्पोऽस्त्येवेति तद्वदयमिहेति॥ तर्हि यथालिङ्गितत्वं मा भूत्; पापफलचतुर्भागमवशेष्य तदन्यसर्वांशनिवृत्त्यश्लेषावेवोपायारम्भे, समाप्तौ च शिष्टांशनिवर्तनमित्येवमेव सुवचत्वादिति चेत्—एवं कुर्वन्नेवेश्वरः मुमुक्षौ प्रीत्यतिशयात्, यद्येष समापयेत्, सर्वनिवृत्तिः कार्येति स्वयं त्वरत इति तत्प्रीत्यतिशयप्रदर्शनाय तथोक्तिः। वस्तुतः पादशोऽश्लेषः प्रामादिकविषये न भवति, अज्ञातविषयेऽनुतापादेर्दुर्वचत्वात्। अथाश्लेषः संकल्परूप इत्येव मा भूत्। अविद्वद्विषये प्रामादिकपापविषये यादृशः संकल्पो भवति, तादृशस्य संकल्पस्य विद्वद्विषये प्रामादिककर्मोत्तरकालेऽनुदयमात्रमेवाश्लेषोऽस्तु इति चेत्—तर्हि विनाशोऽपि उपायानुष्ठानात् पूर्वमनुवृत्तस्य निग्रहसंकल्पस्य पश्चादननुवृत्तिरेवास्तु, तावतैव कार्याभावसंभवात्। यदि—पूर्णफलप्रदानसंकल्पनिवृत्तावप्युक्तरीत्या पापफलचतुर्भागदानसंकल्पः, यद्ययमुपायं न समापयेदिति यथालिङ्गिताकारोऽस्ति; स एव विनाशः—इत्युच्यते, तर्हि अश्लेषस्यापि विद्यासमापकपुरुषविषय एव स्वीकार्यतया सोऽपि यथालिङ्गिताकार एवेति॥

अथ विनाशाश्लेषाकारौ यथालिङ्गनं विनैव स्वीक्रियेताम्; का हानिः। हानिश्रुतेरेव हानिरिति चेत्—कथम्॥ इत्थम्; उपासनारम्भकाल एव पूर्वेषां विनष्टत्वात् उत्तरेषाञ्चाश्लिष्टत्वात् अचिरस्थायिकर्मणामिव तच्छक्तीनामप्यभावे सति कस्य धूननरूपा हानिरन्ते स्यादिति चेत्—विद्याफलप्राप्तिविरोधिनामघानां विद्यारम्भकाल एव विद्याकार्यविरोधित्वात् विनाशोऽपि, उपायविरोधिनां विनाशो नेष्यते। तद्विनाशो देहवियोगकाल एव। विद्याङ्गभूतधर्मानुष्ठानेनापि न तन्नाशः; सञ्चितान्तर्गतानामुपायविरोधिनां प्रारब्धमध्यनिष्पाद्यविद्याप्रतिबन्धकत्वायोगात्; तेषां फलदानप्रवृत्तत्वाभावात्। धर्मेण पापमपनुदतीत्यादिकं हि प्रारब्धमध्यसमापतितमेवोपायविरोधि निवर्त्यतया विषयीकरोति। प्रारब्धान्ते चोपाये सुनिष्पन्ने सञ्चितान्तर्गतमुपायविरोधि धूननीयं भविष्यति। स्वीक्रियतां वा विद्यारम्भे सर्वसंचितविनाश एवासंकोचात्। तथापि विनष्टाश्लिष्टयोरुपायननिर्देश एव श्रुतेर्भर्यम्। तच्छेषतया विद्वत्तोऽपयातस्यान्यत्रोपायनमिति ज्ञापनार्थं तु पूर्वजातविनाशाश्लेषयोरनुवाद एव धूननवचसा क्रियते। अत एव हानिवाक्यस्योपायनवाक्यं प्रति शेषत्वमेव, 'हानौ तूपायनशब्दशेषत्वात्' इति सूत्रितम्। तत्र भाष्याणां गतिरन्यथेत्यन्यदेतत्। एवञ्च विनाशाश्लेषातिरिक्तं धूननं मा भूत्। अन्यथा, पापफलचतुर्भागमात्रावशेष इत्यस्य चानङ्गीकारे, उपासनारम्भकालिकस्य यथालिङ्गिताकारकसंकल्पस्य सर्वथा निष्प्रयोजनत्वात् विदुषो विनष्टपूर्वाघत्वरूपातिशयो नैवोक्तो भवेत्। अत्र हि संचितकर्मफलाप्रदानसंकल्पोऽयम्; प्रारब्ध-

**उत्तरोत्तरातिशयभागिन्याः विद्यायाः दुश्चरितविरतिनिष्पाद्यत्वावगमात् ॥ १३ ॥**

इति तदधिगमाधिकरणम् ॥ ७ ॥

---

मध्ये च तत्फलप्रदानप्रसक्तिर्नास्ति। उपायासमाप्तौ हि प्रारब्धावसाने सञ्चितफलदित्सा भविष्यत्येव। उपायसमाप्तौ तु एतत्संकल्पाभावेऽपि नैव भविष्यतीति किमनेन संकल्पेन। अश्लेषसंकल्पस्तु सप्रयोजनः; प्रारब्धमध्ये प्रामादिकफलाननुभवस्यैव फलत्वात्। तस्मात् प्रायश्चित्तानधीनाघविनाशवत् विद्यारम्भकालश्रुतोऽघविनाशोऽपि पुनस्तदघसंगप्रसंगरहित एव वाच्य इति—

अत्रोच्यते। एवं तर्हि प्रारब्धकाले विद्यासमाप्त्यभावे का गतिः॥ नन्वसंभवावितमेतत्। यो हि अवताररहस्यचिन्तनाद्युपायप्रदर्शनेन जन्मन्येकस्मिन्नेवोपायनिष्पत्तिमभिजिघृक्षति, अद्वेषाभिमुख्यादिमात्रेणाद्भुतानुग्रहपरो भवति; यं प्रति, 'स एव साधु कर्म कारयति', 'ददामि बुद्धियोगं तम्', 'अहमज्ञानजं तमो नाशयामि' इति चोद्घुष्यते, स कथं दर्शनसमानाकारविद्योत्पत्त्यनन्तरं यावत्प्रारब्धावसानं भक्तियोगसमाप्तिं नानुगृह्णीयात्। न हि दर्शनरूपध्यानस्याऽऽवृत्तौ अतिशयितसंख्याविशेष इयानित्यपेक्षितोऽस्ति। अतो विद्योत्पत्तेः प्राक् अवसानसंदेहेऽपि पश्चान्न तत्प्रसक्तिरिति॥ नैवम्— संपन्नविद्यस्य प्रारब्धमध्य एव विद्या समाप्तैव भवतीति निश्चयो दुर्घटः; कस्यचित् प्रारब्धान्तिमशरीरे भाग्यादन्ते विद्योत्पत्तौ समनन्तरमेव योगभ्रंशादिना तदसमाप्तेः संभवात्। विचित्रविपाकत्वात् कर्मणां केषाञ्चिदनेकप्रारब्धजन्मसत्त्वेऽपि विच्छेदात् विद्यासमाप्त्यभावसंभवाच्च। तदा संचितकर्मप्रदानेनैव तस्याः समापनीयता। नाशाश्लेषातिरिक्तं धूननं नास्तीति च न युक्तम्; विद्यारम्भानन्तरं तदभिवृद्धये कृतानामदत्तफलानां '**पाते तु**' इति सूत्रखण्डोक्तरीत्या धूननीयत्वात्; तेषामश्लेषाविषयत्वस्य वक्ष्यमाणत्वात्। यदुक्तम्-किं विद्यारम्भे क्रियमाणेन निष्प्रयोजनेन संकल्पेनेति; तत्रेदं वक्तव्यम्—भवत्येव विद्यामाहात्म्यात् संचितानां विनाशः, प्रायश्चित्तादिव। अतश्चतुर्भागावशेष इत्यपि मा भूत। अथाप्यस्त्येव यद्यलिङ्गिताकारः संकल्पः, यद्ययं समापयेत् संचितफलं न दास्यामीति। तदर्थस्तु—विद्यानिष्ठो यदि प्रारब्धावसानपर्यन्तं विद्यामनुवर्तयितुं न पारयेत्—तदर्थे यावतः सञ्चितभागस्यावर्जनीयपापमिश्रस्य प्रदानेनायमनुग्राह्यः, तावत्संचितमस्मै प्रदास्यभि; शेषं त्वद्यैव नाशयामि। यदि तु समापयेत्, नेषदपि तत्फलं प्रदास्यामीति। न हि शीघ्रं विद्यां न समापयतीति हेतोः संचितसर्वकर्मफलं देयं भविष्यति। तथाचेतरसर्वांशनिवृत्त्या संकल्पस्य सप्रयोजनत्वं संकल्पस्यावश्यकत्वं विदुषो बहुभारनिवृत्त्या मनस्समाधानञ्च सिद्धम्। एवमविनाशेन रक्षितस्याघस्य धूननमुच्यते इति विनाशादितो धूननमतिरिक्तमेव। अन्यत् उपायविरोधिपापमपि प्रागुक्तम्। एवञ्च पुण्यविषय इव पापविषयेऽपि धूननस्य विधेयस्य सत्त्वाच्च एकत्र पदे किञ्चिदंशानुवादत्वकिञ्चिदंशविधायकत्वायोगात्, विनाशातिरिक्तमेव धूननमिति तस्य प्राधान्यात् उपायनस्यैव धूननशेषत्वम्। एतेन—यदि फलदित्सा नास्तीति संचितस्य पूर्वमेव विनाशः, पश्चात् कस्य विधूननम्। यद्यस्ति दित्सा, कथं नाशवाचोयुक्तिः-इति शंकाऽपि शमिता। अत्र **रत्नपेटिकायां** जीवपरिच्छेदे उक्तमप्यनुसंधेयम्। विनाशविषयव्यक्तीनामेव धूननविषयत्वमिति स्वारस्यचिन्तायां तत्।

१३१. इतराधिकरणम् ॥ ४-१-८ ॥

## इतरस्याप्येवमसंश्लेषः पाते तु । ४ । १ । १४ ॥

**उत्तरपूर्वाघयोर्विद्यया अश्लेषविनाशावुक्तौ; इतरस्य - पुण्यस्यापि, एवम्—उक्तेन**

प्रकारान्तरेण चात्र उभयोरपि विषयो दर्शितः । अश्लेषस्तु उत्तरग्रामादिकविषयः यथनालिङ्गिताकार एव सुवचः, उपासनसमाप्त्यभावे संसारानुवृत्तये पूर्वाघस्यावश्यशेषणीयत्ववत्, असमाप्तौ ग्रामादिकस्यापि फलं देयमिति निर्बन्धाभावात् । संचितकर्मप्राप्त्या पुनर्विद्यायामेव प्रवृत्तिसंभवेन पूर्वमिव ग्रामादिकफलाप्रदानस्यैव समुचितत्वाच्च । अतः फलदित्सारूपनिग्रहाननुवृत्तिमात्रं वा यथनालिङ्गितसंकल्पो वा स भवतु ॥ अननुवृत्तेरभावरूपायाः किञ्चिद्भावरूपत्वमावश्यकमिति चेत्-अस्तु किं तेन । निग्रहरहितपरमात्मगतज्ञानपरम्परायाः कृत्स्नाया एव निग्रहाभावरूपत्वसंभवात् । तर्हि टीकायामश्लेषविषयेऽपि यद्यालिङ्गितसंकल्पवर्णनं कुत इति चेत्—भक्तिनिष्पत्त्यर्थं वृष्टयन्नादिहेतुकाम्यकर्मराशौ कृते, 'पाते तु' इत्युक्तरीत्या किञ्चिदंशपरिशेषसत्त्वेन, तत्तत्र काम्ये परमात्मसंकल्पः एवं भवति—यद्ययमन्यथैव समापयेत्, एतत्फलं न दास्यामि; अन्यदा, अनियतायुष्कतया आयुर्वृद्ध्या एतदपेक्षायामपि दास्यामीति । एवञ्च तत्तत्कर्म विनैव समापने तदश्लेषो भवति । एवं प्रारब्धावसानादर्वागेव विद्यासमाप्तिसंशयेन यदि कश्चित् प्रारब्धावसानानन्तरानुभाव्यफलार्थं कर्मापि कदाचित् कुर्यात्, तद्विषयेऽपि यद्यालिङ्गित एव संकल्पाकार इति ईदृशस्याश्लेषविषयत्वसंभवाभिप्रायेण । सर्वथैकरूप्याय संकल्परूपत्वं सर्वस्यापि युक्तम् । सहजो हि पूर्वसंकल्पानिष्टौ प्रतीपसंकल्पश्चेतनस्य । अत एव भाष्ये अश्लेषः विनाशः इत्येतावति अनुपरम्य, **अश्लेषकरणम् विनाशकरण**मिति गृहीत्वा विवरणमित्यलम् ॥ १३ ॥

आतिदेशिकी संगतिः । पुण्यफलस्यापि पापफलस्येव ब्रह्मप्राप्तिविरोधित्वेऽपि सुखरूपतया, न सर्वेष्टप्यस्त्वम्; मधुविद्यादिभक्तिनिष्ठैरपि तदिष्टत्वदर्शनात् । 'पाप्मानः प्रदूयन्ते' इति पाप्मनामेव विनाशव्यपदेशाच्च । न च, 'न सुकृतं न दुष्कृतम्; सर्वे पाप्मानोऽतो निवर्तन्ते' इति वाक्यात् सुकृतस्यापि पाप्मत्वमवगम्यत इति वाच्यम्—'नैनं सेतुमहोरात्रे तरतः, न जरा न मृत्युः न शोको न सुकृतं न दुष्कृतम्, सर्वे पाप्मानः" इत्यानुपूर्व्यात् अहोरात्रादीनामपि पाप्मत्वापत्तेः । पृथग्वाक्येनाहोरात्रादेरिव सुकृतस्यापि निरस्तत्वात पाप्मशब्देन सुकृतग्राह्यत्वनिर्बन्धाभावात् । छत्रिन्यायेन ग्रहणमिति चेत, तदत्राप्यविशिष्टम् । तावता प्रकृतवाक्ये पाप्मान इति न लाक्षणिकं भवेत । न च सुकृतनाशे प्रारब्धसमाप्त्यनन्तरमपि संचितपुण्यवशात जन्मापत्तिः; अन्तिमकालप्राप्तवैराग्यातिशयेन तेषां धूननोपपत्तेः विद्यारम्भे तद्विनाशस्याकल्प्यत्वात । एवमश्लेषोऽपि दुर्वचः । स किं बुद्धिपूर्वस्य, तदन्यस्य वा । बुद्धिपूर्वं काम्यं विरक्तस्य न भवितुमर्हति । भवति चेत्—इष्टत्वात् फलस्य लेप एव । विद्यार्थकाम्यस्य च लेप आवश्यकः; इति तदश्लेषे हि विद्याविरोध एव स्यात् । अबुद्धिपूर्वस्य तु कथं काम्यता । अज्ञातसुकृतादिकं च विद्यानुकूलभगवत्प्रीत्यादिजननेन श्लेष्टुमर्हमेव—इत्यधिकाशंका ।

पूर्वसूत्रे **उत्तरपूर्वे**ति विभज्य निर्देशात् द्विवचनम्; अत्र **इतरस्ये**ति इतरत्वेन सर्व-

न्यायेनाश्लेषविनाशौ विद्यया स्याताम्, विद्याफलविरोधित्वसामान्यात्; व्यपदेशाच्च। भवति च व्यपदेशः उभे सुकृतदुष्कृते निर्दिश्य, (छा. ८-४-१) "सर्वे पाप्मानोऽतो निवर्तन्ते" इति, (कौषी. १-४) "तत् सुकृतदुष्कृते धूनुते" इति च। मुमुक्षोरनिष्टफलत्वात् सुकृतस्यापि पाप्मशब्देन व्यपदेशः। सुकृतस्यापि शास्त्रीयत्वात् तत्फलस्य केषांचिदिष्टत्वदर्शनाच्च विद्यया अविरोधशङ्कां निवर्तयितुमतिदेशः॥ ननु विदुषोऽपि सेतिकर्तव्यताकोपासननिर्वृत्तये वृष्टयन्नादिफलानीष्टान्येव; कथं तेषां विरोधाद्विनाश उच्यते;

---

ग्रहणादेकवचनम्। पूर्वोत्तरपुण्ययोरित्येवार्थः। अपिशब्दात तदधिगमे इति पदानुवृत्तिलाभः। एवमित्यस्य उक्तन्यायेनेत्यर्थः। तद्व्यपदेशादिति यावत्। क्षीयन्ते चास्य कर्माणीति सामान्यनिर्देशात, अनिष्टफलकतयाशास्त्रवेद्यत्वरूपपापशब्दशक्यतावच्छेदकस्य अहोरात्रजरादावभावेऽपि मुमुक्षुं प्रति पुण्येऽपि संभवेन, सर्वे पाप्मान इत्यत्र तत्त्यागायोगात् संचितसर्वपुण्यनाश एव। भक्ताः प्रारब्धमध्ये यदि विशिष्य किञ्चिदपेक्षन्ते, तदा तदा तस्यागत्या परमात्मना क्रियमाणत्वेऽपि संचितं सर्वं नाशयत्येवेति भावः। असंश्लेष इति पदसत्त्वात् अश्लेषविनाशावित्यस्यानुवृत्तिर्नेष्यते। अश्लेष इत्यप्रयुज्य समुपसर्जनं पूर्वमबुद्धिपूर्वपापाश्लेषस्यैवोक्तत्वात् नेह तथा ग्रहणम्; किंतु बुद्धिपूर्वपुण्याश्लेष एवेति ज्ञापनाय—बुद्धिपूर्वत्वात् सम्यक् भवति श्लेष इति हि मन्यते, स संश्लेषो नास्तीति। विदुषा व्यामोहेन काम्यकरणेऽपि हितैषिणा परमात्मना पश्चादनुतापोत्पादनेन वा अन्तरायकल्पनेन वा फलवारणसंभवात्। विद्वदर्थं बन्ध्वादिकृतकाम्यस्य विद्वदाशयानुरोधेनैव वारणसंभवाच्च। एवं विद्यानुपयोगिकाम्याश्लेषः। विद्योपयोगिकाम्यानां यथार्हं शरीरपातपर्यन्तं श्लेषप्रतीक्षाऽस्ति। अवशिष्टानां त्वनवसरादश्लेषः। सूत्रे असंश्लेषमात्रोक्तावपि विनाशोऽपि ग्राह्यः। संचितपुण्यानां विनाशस्यैव वक्तव्यत्वात्। तत् अर्थसिद्धमिति नोक्तम्। बुद्धिपूर्वकमुत्तरपुण्यमप्यश्लिष्टं भवतीति समुपसर्जनपूर्वकं विशिष्य वक्तव्यत्वात एतत्पदप्रयोग.। तर्हि इतरस्याप्येवमिति वाक्यं समाप्यताम्। अश्लेषविनाशावित्यनुवर्त्यताम्। असंश्लेषपदं तु उत्तरपुण्यविषयत्वात् पाते तु इत्यत्रान्वेष्यतीति चेत्—सत्यम्। अत एव दीपे अनुवृत्तिमप्यकृत्वा एवम्पदस्यैव अश्लेषविनाशावित्यर्थमुक्त्वा असंश्लेषपदस्योपर्यन्वयः कृतः। भाष्यगतिस्तु न तथा। अत्रेदमौचित्यम्—उत्तरपुण्येषु येषां विषये फलदित्सारूपशक्त्यात्मकः संकल्प एव नोदेति, तत्रैवाश्लेषपदस्वारस्यम्। तत् विद्याविरोधिकाम्यविषयम्। विद्यार्थकाम्यानुष्ठानसमन्तरञ्च तत्फलदित्सा भगवतो जायत एव। परन्त्ववसरालाभात् शरीरपाते नश्यति। अतस्तत्राश्लेषपदं न स्वरसमिति। अत एवान्ते भाष्ये, विनाशः नश्यन्तीति प्रयोग इति। एवमसंश्लेषपदस्य समित्युपसर्गस्य च संगमनौचित्यायैवेदमधिकरणं पुण्यविषयम्, पूर्वाधिकरणं पापविषयमिति व्यवस्था कृता। अन्यथा श्रुतौ पाप्मादिशब्दस्येव सूत्रे अघशब्दस्यापि पुण्यपापोभयविषयकत्वस्वीकारेण, 'पूर्वाधिकरणेनैव पुण्यपापाश्लेषविनाशौ सिद्धौ; इदं तु सूत्रं सर्वोत्तरपुण्याश्लेषे विद्याविरोधिन इव विद्यार्थकाम्यकर्मणोऽप्यश्लेषात् विद्यैव न वर्धेतेति शंकायाम्, इतरस्यापि विद्यार्थकाम्यस्यापि योऽसंश्लेषः प्राप्तः, स शरीरपात एव, न पूर्व-

तत्राह पाते तु इति । शरीरपाते तु तेषां विनाशः । शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानि सुकृतानि नश्यन्तीत्यर्थः ॥ १४ ॥ इति इतराधिकरणम् ॥ ८ ॥

१३२. अनारब्धकार्याधिकरणम् ॥ ४-१-९ ॥

अनारब्धकार्ये एव तु पूर्वे तदवधेः । ४ । १ । १५ ॥

ब्रह्मविद्योत्पत्तेः पूर्वोत्तरभाविनोः सुकृतदुष्कृतयोरश्लेषविनाशावुक्तौ ; ततः पूर्वभाविनोः सुकृतदुष्कृतयोः किमविशेषेण विनाशः, उतानारब्धकार्ययोरेवेति विशये,—(छा. ५-२४-३) 'सर्वे पाप्मानः प्रदूयन्ते' इति विद्याफलस्याविशेषश्रवणात्, विद्योत्पत्त्युत्तरकालभाविन्याश्च शरीरस्थितेः कुलालचक्रभ्रमणादिवत् संस्कारवशादप्युपपत्तेरविशेषेणेति प्राप्ते उच्यते—अनारब्धकार्ये एव तु पूर्वे इति । विद्योत्पत्तेः पूर्वे सुकृतदुष्कृते अनारब्धकार्ये—अप्रवृत्तफले एव विद्यया विनश्यतः ; कुतः ? तदवधेः—(छा. ६-१४-२) "तस्य तावदेव चिरं यावन्न विमोक्ष्ये ; अथ संपत्स्ये" इति शरीरपातविलम्बावधिश्रुतेः । न च पुण्यापुण्यकर्मजन्यभगवत्प्रीत्य-

---

मिति नानुपपत्तिः इत्यर्थपरमेवेत्यपि भाष्येत । अघपदं अत्र पापमात्रपरम्, इतरपदञ्च सर्वपुण्यपरमिष्टमिति उत्तरसूत्रे सर्वतदुभयविषये पूर्वे इति द्विवचनप्रयोगात् ज्ञायते । असंश्लेषपदमुभयसाधारण्याय अननुभवार्थकं वा । पुण्यकर्माश्लेषश्चात्रोक्तो न सर्वांशविषयः । पापस्यांशत्रय इव, पुण्यस्य फलजनने सजातीयकर्मरुच्युत्पादने पङ्क्तिपावनत्वादिजनने च शक्तिरस्ति । तत्र तृतीयस्य विद्याविरोधित्वाभावात् न तच्छक्तिवारकत्वमिति । एवञ्च संचितपुण्यनाशः काममस्तु । विद्वच्छरीरकृतपुण्याश्लेषस्यापि स्वीकारे पङ्क्तिपावनत्वादिश्रेयोहानिः स्यादिति शंकापरिहारायापि समित्युपसर्गः । पूर्णश्लेषो नास्ति ; पंक्तिपावनत्वाद्यंशश्लेष इष्यते, विद्याविरोधाभावादित्युक्तं भवति ॥ १४ ॥

विचारितपूर्वोत्तरकर्ममध्ये पूर्वविषये विशेषविचारः समनन्तरम् । तत उत्तरविषयेऽपि भविष्यति । यदि पाप्मशब्दः पुण्यसाधारण इति सर्वग्रहणम्, तर्हि सर्वशब्दासंकोचाय प्रारब्धस्यापि ग्रहणमित्याक्षेपः । ननु विद्वत्सु सुचिरं सर्वप्रकारेण जीवत्सु प्रत्यक्षविरोधेन सर्वकर्मक्षयशंका कथं क्रियते । यावदायुषं वर्तयन्निति, जिजीविषेच्छतं समा इति च श्रुतिरपि प्रारब्धफलकर्मानाशं दर्शयतीत्यत्राह विद्योत्पत्तीति । सांख्यैर्जीवन्मुक्तिवादिभिः सर्वक्षयेऽपि, 'चक्रभ्रमिवद् धृतशरीरः' इति संस्कारमूला शरीरतत्कार्यानुवृत्तिरुक्ता । मृषावादिभिः पक्षोऽयमनुसृतः । तत्र तत्त्वज्ञाने सति मिथ्याभूतसर्वनिवृत्तिध्रौव्येण मृषावादिपक्षायोगेपि जगत्सत्यत्वास्थायिभिः सांख्यसमयानुसरणे सुकरे, किमिति संचितप्रारब्धसर्वकर्मनाशो नेष्यत इति शंकापरिहारार्थमिदमधिकरणमिति भावः । न चेति । यथायथं भूतेषु आत्मसु च संस्कारो मीमांसकादिकथितः । "संस्कारः पुंस एवेष्टः" इति तार्किकाः । अवश्यस्वीकार्यभगवत्प्रीत्यादित एव निर्वाहे तदसंभवः फलाधिकरणादावुक्त एव । अतस्तदतिरिक्तपरोक्षसंस्काराभावात् तन्नाशेऽपि संस्कारोऽस्तीति न शक्यं वक्तुम् । अतः शब्दान्तरेण कर्मशक्त्यनाश एव कथितो भवतीति भावः । पूर्वे विद्याधिगमात्प्राक्कालिके पुण्यपापे अनारब्धकार्ये फलोत्पादनाप्रवृत्ते एव नश्यतः, तदवधेः ।

प्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति ॥ १५ ॥

इति अनारब्धकार्याधिकरणम् ॥ ९ ॥

१३३. अग्निहोत्राद्यधिकरणम् ॥ ४-१-१० ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् । ४ । १ । १६ ॥

प्रारब्धकार्यं तत्पदार्थः । प्रारब्धफलरूपादवधेः प्रारब्धफलसद्भावस्य मोक्षं प्रति पूर्वावधित्वश्रवणात् तत्सत्तापर्यन्तं न मोक्षः । प्रारब्धकर्मणोऽपि नाशस्वीकारे तु विदुषो मोक्षं प्रति तस्यावधित्वाभावात् तदैव मोक्षः स्यादिति सूत्रार्थः। इदं प्रारब्धकर्म प्रकृतैकशरीरेणैव निवर्तते, न वेति विचार इह पादान्ते भविष्यति ॥ १५॥

अथोत्तरविषये विचार । तत्र बुद्धिपूर्वकोत्तरपापस्य श्लेष एव सिद्धान्तिनोऽपीष्टः । पुण्यविषय एव बुद्धिपूर्वस्याश्लेषं सिद्धान्ती मन्यते । तदन्तर्गताग्निहोत्रादिविषये विचार्यते । नन्वत्राग्निहोत्राद्यनुष्ठानाननुष्ठानविचारोऽसंगतः ; तृतीयचतुर्थस्यैव तत्स्थानत्वात् । अश्लेषो वा श्लेषो वेति विचारोऽपि नैतदधिकरणसर्वसूत्रानुगतः, द्वितीयतृतीययोः उपायनं कस्येत्येव निरूपणात् । अतोऽधिकरणविषयः क इति विचार्यमिति चेत्-उच्यते-श्लेषाश्लेषविचार एवात्र । तत्फलमनुष्ठेयत्वतदभावौ । गुणसूत्रद्वयं तु प्रासङ्गिकम् । ननु तस्य प्रासङ्गिकत्वे अग्निहोत्राद्यधिकरणकार्यविचारानुपयुक्तत्वे पृथगधिकरणत्वमेव युक्तमिति चेन्न-विद्वत्संबन्धिपुण्येषु कियतः फलं तदनुभाव्यम् , कियत् तत्सुहृज्जनसंक्रामीत्येवं सामान्यतो विचारस्वीकारादैकाधिकरण्यसिद्धेः ।

तत्रैवं पूर्वपक्षः—विद्योत्पत्तेः प्राक्तनं पुण्यं संचितं विद्याबलान्नश्यतीति प्रागेव सिद्धम् । विद्यारम्भजन्मन्येव विद्योत्पत्तेः प्राक् कृतेष्वपि यत् प्रारब्धकर्ममध्य एवानुभाव्यफलं स्यात्, तत् विद्यानुकूलमन्यद्वा विहायान्येषामपि संचितराशिनिवेशान्नाश एव । नष्टातिरिक्तस्य च प्राचीनस्य फलावश्यम्भावात् श्लेष एव । विद्योत्तरमपि पुण्यं धीपूर्वमधीपूर्वमिति द्विविधम् । तद् द्वयं प्रत्येकं विद्यानुकूलमननुकूलञ्चेति द्विधा । अनुकूलं धीपूर्वं—नित्यनैमित्तिकरूपम्, अन्यच्च काम्यं विविदिषन्तीत्यादिविधिबलात् विद्यार्थमेव भगवत्प्रीतये कृतम्, विद्यार्थवृष्ट्यान्नाद्युद्देशेन विहितञ्चेति बहुविधम् । अस्य सर्वस्य श्लेष एव संभावितः । यत् पुनरननुकूलं धीपूर्वं मोहवशात फलान्तरार्थं कृतम्, तस्यापि श्लेष एव युक्तः, धीपूर्वोत्तरपाप्मवत् । अधीपूर्वं तु पुण्यमज्ञातसुकृतादि । तस्य भगवता प्रीतेन यथार्हं विद्यायामुपयोगकल्पनसंभवात् श्लेष एव । अननुकूलमधीपूर्वं तु वासनादिवशादष्टाक्षरजपमध्ये पञ्चाक्षरीविपरिवृत्त्यादिकम् । तस्य वस्तुतो विद्वदनिष्टत्वात् संकल्प्य कृतत्वाभावाच्च निष्फलकर्मत्वचिन्तया भगवतोपेक्ष्यत्वात् फलमेव नास्ति । एवञ्च फलवतां पुण्यानां सर्वेषामनुकूलत्वेऽननुकूलत्वेऽपि विद्वदनुभाव्यत्वात् अश्लेषः कस्येति विचारे विशेषादरेण कृतानां वृष्ट्याद्यर्थानामन्यादृशकाम्यानाञ्च श्लेषस्यावश्यकत्वात् अग्निहोत्रादिनित्यनैमित्तिकरूपे कर्मण्येव किञ्चिद् वक्तव्यमस्ति । तदिदम्—नित्यकर्मणः पापापनोदद्वारा हि विद्यार्थत्वम् । तच्च पापं संचितान्तर्गतं विद्याविरोधि न भवति ; तस्य प्रारब्धमध्ये कार्यकरत्वायोगेन तदपनोदनस्यानावश्यकत्वात् । प्रारब्धान्तर्गतं विद्याविरोधि च परिमितं कतिपयदिनकृतेन नित्येन

'इतरस्याप्येवमसंश्लेषः' इति विद्याबलात् सुकृतस्याप्यसंश्लेष उक्तः। अग्निहोत्रादीनां नित्यनैमित्तिकानां स्वाश्रमधर्माणामपि सुकृतत्वसामान्येन तत्फलस्याश्लेषादनिच्छतोऽ-

भगवत्प्रीत्यर्थकाम्येन 'चापनुन्नं भवतीति सर्वमन्यन्नित्यमनुत्पादितफलमेवावतिष्ठते। विद्वत्संबन्ध्याश्रमधर्मस्य च विद्याव्यतिरिक्तं फलं तद्विषयककामनाविरहात् दुर्वचम्। गोदोहनेन पशुकामस्य प्रणयेदित्येवं गुणफलं तु श्लिष्यत्येव; अपेक्षितत्वात्। नित्यकर्माद्यन्तर्गतानां करणमन्त्रादीनाम्.'ममाग्ने वर्चो विहवेष्वस्तु' इत्येवम्भूतानामनुकूलार्थपरत्वसंभवेन फलाश्लेषो दुर्वचः। तस्मादग्निहोत्रादिकमेव यत् पापापनोदरूपफलस्य प्रतियोग्यभावेनाजनकमासीत, तद् विदुष्यदत्तफलं भवति। एवञ्च सुहृदः साधुकृत्यामिति वाक्यमेतद्विषयकमेवेति।

अत्राह **अग्निहोत्रादीति। तत्कार्यायैव।** विविदिषन्ति, धर्मेण पापमपनुदति इत्यादिबलात् विद्योत्पत्तिरूपयादृशकार्यार्थं तत् प्राय इष्टम्, तस्मै कार्यायैव सर्वमग्निहोत्रादि। न च विद्योत्पत्तेः प्राक् तस्य तदर्थत्वेऽपि उत्पन्नायां तस्याम्, नेहाभिक्रमनाशोऽस्तीति न्यायेन अंशप्रसक्त्यभावात् तदावृत्तिविरोधिषु पापेषु अधीपूर्वपापानामश्लिष्टत्वात् धीपूर्वाणाञ्च प्रायश्चित्तैकापनोद्यत्वात्, विद्याविरोधिपुण्यस्य च विद्याबलादेवाश्लेषः, प्रबलत्वे श्लेषो वेति स्वीकारात् एतन्नित्यनैमित्तिककार्यं नास्तीति कथमिदं **तत्कार्यायैवे**ति शंक्यम् - विद्योत्पत्तेः प्रागिह कृतानां जन्मान्तरकृततया संप्रत्यज्ञातानामसंभावितप्रायश्चित्तानुष्ठानानाञ्च प्रारब्धान्तर्गतानां धीपूर्वाणाम् नित्यकर्मैकनाश्यत्वात्। पापस्य क्वचित् प्रसक्त्यभावेऽपि नित्यवर्गस्य भगवत्प्रीत्यर्थमेव क्रियमाणतया तत्प्रीत्या भक्तिरूपध्याने उत्तरोत्तरप्रीत्यतिशयसंभवेन निरतिशयप्रीतिरूपापन्नध्यानरूपविद्योत्पत्त्युपयोगस्यानपायाच्च। **तद्दर्शनात्** विविदिषन्ति यज्ञेन, स खल्वेवं वर्तयन् यावदायुषम्, नायमात्मा प्रवचनेन इत्यादितो विशिष्टविद्योत्पादकत्वश्रवणादिति सूत्रार्थः। तस्मा इत्यनुक्त्वा **तत्कार्याये**त्युक्तिः विद्योत्पत्त्यनन्तरक्रियमाणस्य धर्मस्य विद्याकार्यकत्वं न भवतीति प्रागुक्तशंकाशमनाय। एवकारेण विद्यातः पूर्वं कृतस्य विद्यार्थता, पश्चात् कृतस्य फलार्थतया विद्यासहकारितेति यादवप्रकाशमतप्रत्याख्यानम्। न च तस्याः कार्यं तत्कार्यमिति विग्रहात् यादवप्रकाशपक्षस्थापनमेवेति मन्तव्यम्—तत्पुरुषात् कर्मधारयस्य ज्यायस्त्वात्; तथासति एवकारायोगाच्च। पूर्वं विद्यार्थम्, उत्तरं फलार्थमिति कार्यद्वये सति एकमात्रार्थत्वकथनं हि न युज्यते; अपिशब्दस्यैव तत्र युक्तत्वात्। एवं कार्यपदप्रयोगात् विद्यायाः कर्मकार्यत्वबोधनात् संनिपत्योपकारकत्वज्ञापनात् आरादुपकारकत्ववादो भास्करकृतोऽप्यपास्त इति।

**स्वाश्रमधर्माणामपी**ति। अनारब्धकार्याणां पूर्वसुकृतानामिवैषामपीत्यर्थः। **तत्फलस्याश्लेषादि**ति। नित्यकर्मणोऽपि फलान्तरसाधनयोग्यतायां सत्यामपि विद्याविरोधात् विद्वदनिष्टतया न श्लेषः। निवर्त्यपापाभावस्थले चोक्तरीत्या पापापनोदरूपफलस्याप्यश्लेष एवेति। **अनिच्छत** इति। यदि कश्चित् पापशङ्कया, स्वविषयेऽनुपयुक्तत्वे सुहृत्संक्रमो भवत्विति सुहृदभिमानाद्वाऽनुतिष्ठेत, करोतु नाम। अन्यस्तु न कुर्यादिति। न च—नित्यकर्मणामननुष्ठाने प्रत्यवायप्रसंगात् तद्भियाऽवश्यानुष्ठेयत्वे सति कथमननुष्ठानम्॥ अथापि अनभिमतकर्मलेपभियाऽननुष्ठानमिति तु न; 'भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्, इति प्रागेवावधृतत्वादिति वाच्यम्—प्रपत्त्यादिना पश्चात् प्रत्यवायं परिजिहीर्षता तदननुष्ठानोपपत्तेः विद्यो-

**नत्वनुष्ठाने प्राप्ते उच्यते**—अग्निहोत्रादि तु-**इति । तुशब्दः सुकृतान्तरेभ्यो विशेषणार्थः ; अग्निहोत्राद्याश्रमधर्माः फलाश्लेषासंभवादनुष्ठेया एव । तदसंभवश्च तत्कार्यार्थत्वात् तेषाम् । विद्याख्यकार्यायैव हि विदुषोऽग्निहोत्राद्यनुष्ठानम् । कथमिदमवगम्यते ?** तद्दर्शनात् । **दृश्यते हि,** (बृ. ६-४-२२) **"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिनाऽग्निहोत्रादीनां विद्यासाधनत्वम् । विद्यायाश्च आप्रयाणादभ्यासाधेयातिशयाया अहरहरुत्पाद्यत्वात् तदुत्पत्त्यर्थमाश्रमकर्माण्यहरहरनुष्ठेयमेव । अन्यथाऽऽश्रमकर्मलोपे दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् ॥ १६ ॥**

**यदि—अग्निहोत्रादिसाधुकृत्याः विद्योत्पत्त्यर्थाः ; विद्योत्पत्तेः प्राचीनं च सुकृतम्,** (छा. ५-१०-५) **"यावत्संपातमुषित्वा",** (बृ. ६-४-६) **"प्राप्यान्तं कर्मणः" इति अनुभवेन विनष्टम् ; भुक्तशिष्टं च प्रारब्धफलम्—, "सुहृदः साधुकृत्याम्" इत्यस्य को**

त्पादकत्वपक्ष इव तत्र नैर्भर्यं न स्यात् । यथाशक्त्यनुष्ठानमादृत्य यथावदनुष्ठानोपेक्षाऽपि भवेदित्याशयात् । विद्यार्थत्वबुद्ध्याऽनुष्ठानं न स्यादिति वा विवक्षितमस्तु । श्लेषाश्लेषविचार एवात्र मुख्य इति । **विशेषणार्थः** व्यावर्तनार्थः । पापापनोदरूपकार्याभावेऽपि अकरणमूलः प्रत्यवाय एव यथावस्थितविद्याप्रतिबन्धकः स्यादित्याह **अन्यथे**ति ॥ १६ ॥

ननु सुकृतेषु किं विद्वदनुभाव्यफलम्, किमन्यादृशमिति विचारे निष्पापविद्वत्क्रियमाणाग्निहोत्राद्यतिरिक्तस्य कस्यापि सुकृतस्य फलाननुभावकत्वासंभवात् तदेव सुकृतं तादृशमिति तस्यैव, 'सुहृदः साधुकृत्याम्' इत्यत्र ग्राह्यत्वमालोचितम् । तस्यापि संप्रति श्लेषोपपादनात् साधुकृत्यामिति निर्विषयमेव स्यादिति शंकते **यदी**ति । अन्यत् सुकृतं न विषय इत्येतदुपपादयति **विद्योत्पत्ते**रिति । पूर्वं सुकृतमनुकूलमननुकूलं वा, तथोत्तरमपि द्वेधा । तत्रानुकूलं विद्यार्थत्वात् श्लिष्टमेव । अननुकूलं प्राप्यान्तमित्यादिरीत्या भुक्तमेव । इदमुपलक्षणम् अभुक्तमपि विद्यामाहात्म्यात् विनष्टमेवेत्यस्य । तदर्थमेव चकारः । तथा विनष्टञ्च भोगविनष्टमिव नोपायनमर्हति । उत्तरमननुकूलं तु विवेकिनोऽसंभावितम् । संभाव्यते चेत्—भोक्तव्यमेवेति न तदुपायनप्रसक्तिरिति भावः । **भुक्तशिष्टञ्चे**ति । विद्योत्पत्तेः प्राचीने विद्याविनाश्यसंचितव्यतिरिक्ते यत् प्राप्यान्तमित्यादिवचनविषयभूतं प्रारब्धं भुक्तम्, तदन्यत् प्रारब्धं 'भोगेन त्वितरे' इति वक्ष्यमाणन्यायेन भोक्तव्यमेवेति, न तस्योपायनमिति भावः । **साधुकृत्या**मिति । ननु द्विषन्तः पापकृत्यामित्यस्य को विषय इति कस्मान्न पृच्छ्यते ; तत्रापि पूर्वपापानां मध्ये केषाञ्चित् भुक्तत्वात् अन्येषां विद्यया विनष्टत्वात् अविनष्टस्य प्रारब्धस्यानुभाव्यत्वात् उत्तरपापवर्गेऽपि प्रायश्चित्ताविनाशितस्यानुभाव्यत्वात् कृतप्रायश्चित्तस्य च नष्टत्वात् अन्याभावादिति चेन्न—सुकृतविषयकाधिकरणे तत्प्रश्नस्यानवकाशात् । एकत्रार्थे विचारिते अन्यत्र यथार्हं तन्न्यायातिदेशसंभवात् । प्रामादिकपापानामश्लिष्टानामेवोपायनसंभवेन पापकृत्यामित्यस्य निर्विषयत्वाभावाच्च । अस्ति विनष्टादश्लिष्टस्य विशेषः । विनष्टं नान्यत्र संक्रमणार्हम् । अश्लेषकरणं नाम शक्त्युत्पत्तिप्रतिबन्धकरणमिति प्रागुक्तत्वात् अनुत्पत्तिरित्यनुक्तेः प्रथमं

विषयः ? तत्राह—

अतोऽन्याऽपि ह्येकेषामुभयोः । ४ । १ । १७ ॥

अतः—अग्निहोत्रादिसाधुकृत्यायाः विद्योत्पत्त्यर्थायाः अन्याऽपि विद्याधिगमात्पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोः प्रबलकर्मप्रतिबद्धफला साधुकृत्याऽनन्ता संभवत्येव ; तद्विषयमिदमेकेषां शाखिनां वचनम्, "तस्य पुत्रा दायमुपयन्ति ; सुहृदः साधुकृत्याम्" इति। विद्यया अश्लेषविनाशश्रुतिश्च तद्विषया ॥ १७ ॥

अनुष्ठितस्यापि कर्मणः फलप्रतिबन्धसंभवं पूर्वोक्तं स्मारयति—

यदेव विद्ययेति हि । ४ । १ । १८ ॥

(छा. १-१-१०) "यदेव विद्यया करोति···तदेव वीर्यवत्तरम्" इति उद्गीथविद्यायाः क्रतुफलाप्रतिबन्धफलत्ववचनेन अनुष्ठितस्यापि कर्मणः फलप्रतिबन्धः सूच्यते हि।

---

प्रतिबन्धेऽपि कदाचिदन्यत्र तदुत्पत्तिर्भवेदिति ततः सिद्ध्यतीति। साधुकृत्या तु ग्रामादिकी विद्योत्पत्त्यर्हा नास्ति, संकल्पाभावे फलान्तराप्रसक्तेरिति विशेष इति। प्रबलकर्मप्रतिबद्धेति। विद्यार्थमन्यार्थं वा संकल्प्य कृतं सर्वमनुभूयत एवेति पूर्वपक्ष्युक्तं न युक्तम्; प्रतिबन्धस्य बहुप्रकारं संभवात्। अतः, 'पाते तु' इत्यत्र अग्निहोत्रादिकतिपयनित्यकर्मैव विवक्षितमिति न मन्तव्यमिति भावः। सूत्रे उभयोरिति शब्दप्रयोगात् विद्योत्पत्तेः पूर्वं पाश्चात्यञ्च गृहीतम्। तत्र प्रारब्धमात्रग्रहणमित्यत्र नियामकाभावात् संचितमपि गृह्यते। सर्वत्र प्रबलकर्मप्रतिबद्धफलकत्वस्याविशिष्टत्वात्। प्रारब्धसुकृतं यथा प्रबलतरप्रारब्धवशात् प्रतिबद्धम्, तथा संचितमपि, फलदानप्रवृत्ततया ततः प्रबलं यत् प्रारब्धम् तेन प्रतिबद्धमिति। तत्र विद्वद्विषये प्रियाप्रियभूतेषु विद्वत्कर्मसंक्रम उच्यमानः विद्याबलात् यस्यस्य फलं विदुषाऽननुभाव्यमासीत् तत्तत्कर्मविषय एव समुचितः, न तु प्रायश्चित्तादिनष्टविषयोऽपि। अतः उपायनश्रुतिः अश्लेषविनाशश्रुतिश्च तद्विषया प्रबलकर्मप्रतिबद्धफलकर्मजातरूपैकविषया। एवञ्च सुहृदः साधुकृत्यामित्यस्यानेकविषयलाभः। विनाशश्रुतिः सर्वपूर्वकर्मविषया; अश्लेषश्रुतिः विद्याननुकूलोत्तरविषया; धूननश्रुतिः, विद्यानुकूलादत्तफलोत्तरकर्मविषया विनाशाश्लेषश्रुतिविषयाऽपि वा। धूननं विनष्टाश्लिष्टसर्वविषयकमित्येतत् अत्र भाष्ये न स्पष्टम्। अनन्तराधिकरणान्ते पादार्थनिगमनभाष्येऽपीदं न स्पष्टम्। उपायनश्रुतिस्तु तच्छ्रुतित्रयविषयसर्वविषयेति। तदिदं सर्वम्, उभयोरिति सामान्यतो निर्देशात् सूत्रकारेण सूच्यत इत्यभिसंधायाह विद्ययाऽश्लेषेति। चकारेण उपायनश्रुतिसमुच्चयः। तच्छब्दः प्रबलकर्मप्रतिबद्धफलककर्मार्थकः। साधुकृत्याविषये उक्तमिदं पापकृत्याविषयेऽपि न्यायतौल्यसिद्धम्। सूत्रार्थस्तु—अग्निहोत्रादिनित्यकर्मव्यतिरिक्ता पूर्वोत्तररूपोभयपुण्यान्तर्गता एकेषां शाट्यायनिनां साधुकृत्यापदाभिमता यस्मादस्ति, ततो न निर्विषयत्वम्; नाप्यग्निहोत्रादेः सर्वथा वा विद्योद्देशेन वाऽननुष्ठानप्रसक्तिरिति ॥ १७ ॥

पूर्वपक्षी कृतं सुकृतं सर्वमवश्यमनुभूयमानमेव भवति, विदुषा प्रतिबन्धसंभवनापरिहरणपूर्वमेव क्रियमाणत्वादिति मन्यते। न तथा कार्त्स्न्येन सुवचमित्याशयेनाह यदेवेति। इतिशब्दः प्रकारवचनः।

**अतो विदुषोऽनुष्ठित-प्रतिबद्धफलविषयम्, 'सुहृदः साधुकृत्याम्' इति शाट्यायनिकम् ॥१८॥**

इति अग्निहोत्राद्यधिकरणम् ॥ १० ॥

१३४. इतरक्षपणाधिकरणम् ॥ ४-१-११)

**भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते । ४ । १ । १९ ॥**

**ययोः पुण्यपापयोरश्लेषविनाशावुक्तौ, ताभ्यामितरे आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने, उत तच्छरीरावसाने शरीरान्तरावसाने वेत्यनियमः इति संशये— (छा. ६-१४-२) "तस्य तावदेव चिरं यावन्न विमोक्ष्ये; अथ संपत्स्ये" इति तच्छरीरविमोक्षावसानत्वश्रवणात् तदवसाने इति प्राप्ते उच्यते—**भोगेन तु-**इति। तुशब्दः पक्षव्यावृत्त्यर्थः।** इतरे **आरब्धकार्ये पुण्यपापे स्वारब्धफल**भोगेन क्षपयित्वा[अथ ?]**तत्फलभोगसमाप्त्यनन्तरं ब्रह्म** संपद्यते ; **ते च पुण्यपापे एकशरीर(रोप)भोग्यफले चेत्, तच्छरीरावसाने संपद्यते; अनेकशरीरभोग्यफले चेत्, तदवसाने संपद्यते ; भोगेनैव क्षपयितव्यत्वादारब्धफलयोः कर्मणोः । "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति च भोगेन तयोः कर्मणोः विमोक्ष उच्यते ; देहावधिनियमाश्रवणात् ।**

---

एवमन्यान्यदपि गमक द्रष्टव्यमिति ॥ १८ ॥

प्रपूर्वाधिकरणे विद्योत्पत्तिसमनन्तरं सर्वकर्मक्षय इत्याशंक्य, तस्य तावदेव चिरमित्यादिबलात् प्रारब्धातिरिक्तमात्रक्षय इत्युक्त्वा, अनन्तराधिकरणे प्रारब्धेऽपि कियदनुभाव्यं कियन्नेति सुकृतोदाहरणेनावधारितम् । अथात्र तत्प्रारब्धबलात् जन्मान्तरानुवृत्तिरपि संभाव्यते उत विद्यायोनिशरीरावसानमेवावधिरिति विचार्यते । प्रारब्धकर्मणः एकशरीरहेतुत्वमेवेति न शरीरान्तरप्रसक्तिः । अत एव, 'अस्माच्छरीरात् समुत्थाय परंज्योतिरुपसंपाद्य' इति विद्यायोनिशरीरमेव संनिकृष्टम**स्मा**दित्युक्तम् । एतदनुरोधेन, 'यावन्न विमोक्ष्ये' इति सामान्यवचनमेतच्छरीरावधिपरमेव । अत एव प्रारब्धस्याधिकजन्मप्रदत्वेऽपि अनारब्धकार्यमिवाऽऽरब्धकार्ये तदंशोऽपि नश्यतु ॥ नन्वाधिकारिकाणां विदुषां जन्मान्तरसद्भावः यावदधिकारमिति सूत्रे उक्तः स्मृतिप्रामाण्यादिति ॥ सत्यम् । अधिकारार्थगृहीतं शरीरं तेषां प्रधानम् । मध्ये मध्ये परकायप्रवेशवत् कायान्तरग्रहणेऽपि पुनर्वसिष्ठादिभावे तेषामवस्थानात् तदत्यन्तावसानमवधिस्तेषाम् । अन्येषां तु विदुषामस्मादृशां नान्यजन्मतस्तादृशस्यावकाश इति विद्यायोनिशरीरावसानमेवावधिरिति । अत्राह **भोगेन त्वितरे** इति । अनारब्धकार्ययोर्न कश्चिदप्यंशो विद्यापनोद्य इति। सूत्रे हेत्वनिर्देशः **तदवधे**रिति प्रागुक्त एवेत्याशयेन । सूत्रे **अथ**शब्दः अथसंपत्स्ये इति श्रुतेरयमर्थ इति ज्ञापनाय । तत्र **अथ**=भोगेन प्रारब्धे क्षपयित्वेत्यर्थवर्णने पौनरुक्त्यात् **भोगसमाप्त्यनन्तर**मित्यर्थो भाषिष्यते । वसुधर्मादेः भीष्म-विदुरादिजन्मवत् भरतादेर्मृगद्विजजन्मावसाने मोक्ष इति प्रमाणसिद्धम् । **अस्मा**च्छरीरादित्यत्रेदम्पदम्, अनुभूयमानहेयताप्रदर्शकम्, न त्वेतद्व्यक्तिपरम् । 'अनित्यमसुखं लोकमि**मम्**, **इमं** मानवमावर्तम्, भूतावास**मिमं** त्यजेत् इत्यादि द्रष्टव्यमिति । **शरीरावसाने** शरीरमवसाने ययोस्ते इत्येवंरीत्या

**तदेवं ब्रह्मविद्यायाः प्रागनुष्ठितमभुक्तफलमनारब्धफलं पुण्यपापरूपं कर्म अनादिकालसंचितमनन्तं विद्यामाहात्म्यात् विनश्यति ; विद्यारम्भोत्तरकालमनुष्ठितं च न श्लिष्यति ; तत्र पुण्यरूपं सर्वं विदुषः सुहृदो गृह्णन्ति, पापं च द्विषन्त इति निरवद्यम् ॥**

इति इतरक्षपणाधिकरणम् ॥ ११ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये चतुर्थस्याध्यायस्य प्रथमः पादः ॥ १ ॥

॥ श्रीरस्तु ॥

---

विग्रहः। श्रुतौ विमोक्ष्ये इत्युक्तस्य मोक्षस्यापादानं न प्रकृतदेहः ; अपितु पुण्यपापरूपप्रारब्धकर्मणी इत्याह **तयोः कर्मणोर्विमोक्ष** इति। अनारब्धकार्याधिकरणे **शरीरपातविलम्बे**ति कथनं प्रारब्धकार्यान्तिमशरीरपाताभिप्रायम । **देहावधी**ति विद्याया निदेहावधीत्यर्थः। **अनुष्ठितश्चे**ति। **पुण्यपापरूप**मित्यनुवर्तते। न सर्वमत्र ग्राह्यम् ; किंतु यथार्हम्।

पादार्थं संगृह्णाति **तदेव**मिति। **सर्वम्**—विनष्टमश्लिष्टञ्च सर्वम्। विद्याबलात् विदुष्यदत्तफलं सर्वमिति यावत्। **गृह्णन्ती**ति। ननु सुहृदो न तत् सुकृतं जानन्ति ; कथं गृह्णीयुः। कुतस्तराञ्च पापमनिष्टं द्विषन्तः। अशक्यञ्चामूर्तानामेकस्मादन्यत्र नयनमिति चेत्—सत्यम्। 'विधूय पापम्', 'सुकृतदुष्कृते धूनुते' इत्युक्तं धूननं परं किं मुमुक्षुः करोति। न हीश्वरकर्तृकत्वेन धूननमिह श्रुत्योच्यते। तस्मादौपचारिकः प्रयोगः सर्वत्र संभाव्यते। उपायनवचनमौपचारिकमिति प्रागेवोक्तम्। तदिह विदुषि तत्सुहृद्द्विषद्भिः प्रीतिद्वेषकरणं विद्वद्गतसुकृतदुष्कृतराशिफलतुल्यफलप्राप्तये भवतीति ज्ञापनाय, प्रीतिद्वेषकर्तृषु पुण्यपापग्रहणकर्तृत्वारोपणमिति बोद्धव्यम् ॥ श्रीः ॥

इति श्रीमद्वेदान्तरामानुज-यतीन्द्र-महादेशिकचरणारविन्दचञ्चरीकस्य श्रीमद्रङ्गरामानुजमुनीन्द्र-महादेशिकपदपद्मसेवासमधिगतसर्ववेदान्तार्थस्य वात्स्यश्रीशैल-सच्चक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे चतुर्थाध्याये प्रथमः पादः ॥

श्रीमते रामानुजाय नमः।

शुभमस्तु ॥

श्रीः ॥ श्रीमते रामानुजाय नमः ॥

## श्रीभगवद्रामानुजविरचिते
## श्रीशारीरकमीमांसाभाष्ये

चतुर्थाध्याये द्वितीयः पादः (छा. ६-८-६)

१३५. वागधिकरणम् ४-२-१ ॥

### वाङ्मनसि दर्शनाच्छब्दाच्च । ४ । २ । १ ॥

**इदानीं विदुषो गतिप्रकारं चिन्तयितुमारभते । प्रथमं तावत् उत्क्रान्तिश्चिन्त्यते । तत्रेदमाम्नायते, (छा. ६-८-६) "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते ; मनः प्राणे ; प्राणस्तेजसि ; तेजः परस्यां देवतायाम्" इति । अत्र "वाङ्मनसि संपद्यते" इति वाचो मनसि संपत्तिश्रुतिः किं वाग्वृत्तिमात्रविषया, उत वाग्विषयेति विशये—वृत्तिमात्रविषयेति युक्तम् । कुतः ? मनसो वाक्प्रकृतित्वाभावात् तत्र वाक्स्वरूपसंपत्त्यसंभवात् । वागादिवृत्तीनां मनोऽधीनत्वेन वृत्तिसंपत्तिश्रुतिः कथंचिदुपपद्यत इत्येवं प्राप्ते—अभिधीयते**

---

॥ श्रीः ॥ श्रीमते रामानुजाय नमः ॥

### भाष्यार्थदर्पणे चतुर्थाध्याये द्वितीयः पादः

पूर्वपादान्तिमाधिकरणे, अथ संपद्यते इत्यत्राथशब्देन द्वितीयतृतीयपादयोरर्थः संगृहीतः । तत्र फलक्रमे उत्क्रान्तिपूर्वकप्रस्थानं प्रकृतपादार्थः । गतिरनन्तरपादार्थः । प्रस्थानं गत्युपक्रमः ; स च नाडीप्रवेश इति **आसृत्युपक्रमा**दित्येतद्व्याख्याने वक्ष्यति । कृतसंनाहस्य पुंसो गृहं विसृज्य मार्गप्राप्तिपर्यन्तं प्रस्थानम् ; तथेह नाड्या शरीरान्निष्क्रम्य रश्मिसंबन्धपर्यन्तोऽपि गत्युपक्रम इति कृत्वा नाड्यां गतिरप्यत्र पादे विचार्यते । यादृशस्य तदर्थं उत्क्रान्तिर्भवति, तादृशत्वं=सेन्द्रियमनःप्राणसंपन्नत्वं प्रथममुपपाद्यते । तदत्र, वाङ्मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायामिति वाक्यानि क्रमेण विचारयितुमधिकरणानि । तत्रेन्द्रियसंश्लिष्टत्वं मनसि सिद्धान्त्यभिमतं प्रकृतवाक्यान्न सिद्ध्यतीत्याह पूर्वपक्षी । संश्लेषश्चेदिह संपत्तिपदार्थः, तत्र न किञ्चित् प्रमाणम् । अविशेषात वाचि मनः संपद्यत इत्यपि प्रयोगः स्यात् । अथ, 'मनो वाचि संपद्यत' इति व्यवहारे मनो वाचं व्यापारयितुमुद्युङ्क्ते इत्यर्थः प्रतीयते इत्युच्येत—तर्हि वाङ् मनसि संपद्यते इत्युक्तौ तत्प्रतीपोऽर्थो ग्राह्यः-मनसो निर्व्यापारत्वात् वाग्वृत्तिर्न भवतीति तदर्थ इति । तत्र **मनसी**ति सप्तमीश्रवणात् द्वितीयाविरहादपि संपत्तिर्न संश्लेषः ; किंतु लयः । वाचो मनसि लयायोगात् वाग्वृत्तेर्लय उच्यताम् । ननु तद्गतवृत्तीनां लयस्तत्रैव भवतीति कथं मनसि वाग्वृत्तिलय इति चेन्न—कथञ्चिदुपपत्तेः । वाग्वृत्त्युपधायकव्यापारस्य मनोगततया तस्य तत्र लयस्यैव विवक्षितत्वात् । न च प्रथमश्रुते वाक्छब्दे लक्षणा स्यादिति वाच्यम्—प्रमेये वक्तव्ये निश्चिते, प्रथमपदे लक्षणं विनाऽन्यत्र लक्षणयाऽप्यस्यार्थस्य वर्णनसंभवात् ; वागिन्द्रियं मनोव्यापारविरहप्रयुक्तवृत्तिरहितं भवतीति उत्तरपद एव लक्षणास्वीकारादिति । सिद्धान्तस्तु—संपद्यत इत्यस्य संश्लेषरूपार्थेऽपि प्रसिद्धेः तद्ग्रहणे च कस्यापि पदस्य

वाङ्मनसि इति । वाक्स्वरूपमेव मनसि संपद्यते। कुतः ? दर्शनात्। दृश्यते हि वागिन्द्रिये उपरतेऽपि मनःप्रवृत्तिः। वृत्तिमात्रसंपत्त्यापि तदुपपद्यत इति चेत्—तत्राह शब्दाच्चेति। 'वाङ्मनसि संपद्यते' इति वाक्स्वरूपसंपत्तावेव हि शब्दः; न वृत्तिमात्रसंपत्तौ। न हि तदानीं वृत्त्युपरमे वागिन्द्रियं प्रमाणान्तरेणोपलभ्यते; येन वृत्तिमात्रमेव संपद्यत इत्युच्येत।

---

लक्षणाविरहात् संश्लेष एव वाक्यार्थः। संश्लिष्टयोर्मध्ये मनसः प्राधान्यज्ञापनाय तत्र सप्तमी। वाक् स्वस्थानं विहाय, यत्र मनोऽस्ति तत्र मनसा संश्लिष्टमिति विवक्षितम्। न च वाङ्मनसिसंपद्यते इति श्रौतपदत्रये द्वयानुपठनमात्रेण सूत्रे, अयमर्थोऽभिमत इति कथं ज्ञायत इति शंक्यम्—अत्र वाक्ये कस्मिन्नपि पदे नामुख्यार्थग्रहणमिति तेन ज्ञापनात, सूत्रे सप्तम्या मनसः किञ्चिद्रूपमाधारत्वमस्तीति ज्ञापनाच्चेष्टसिद्धेः। संपद्यत इत्यस्येह कोऽर्थ इति चिन्तनं तु तदर्थविचारान्तर्भावीति न सूत्रे तस्य विशिष्योक्तिः; पक्षद्वयेऽपि तदर्थस्य (द्विविधस्य) मुख्यत्वाच्च।

ननु प्रायणकाले वाचो मनआधारकत्वं वा मनस्संश्लेषो वा कुत्र दृश्यते। अतो दर्शनादिति कथमित्यत्र तदर्थमाह दृश्यते हीति। मनोव्यापाराधीनत्वं वागादिव्यापारे जीवनकाले सर्वानुभवसिद्धम्; तथा वाग्व्यापारं विना मनोव्यापारोऽपि जीवनकाले, मूकस्य पिहितमुखस्य च व्यवहारार्थप्रयासे, प्रत्याहृतेन्द्रियस्य चिन्ताध्यानादौ च दृष्टः॥ अस्त्वेतत्; 'अस्य सोम्य! पुरुषस्य प्रयतो वाङ् मनसि संपद्यते' इति प्रायणं हि प्रस्तुतम्। तदा तस्य वाग्व्यापाराभावेऽपि मनोव्यापारोऽस्तीति कथं परैर्ज्ञायत इति चेत—निरीक्षणमुखविकासादितोऽनुमेयम्। व्याध्याद्यवशात् मुमूर्षोः स्वानुभवगतो मनोव्यापारः यदृच्छया मरणान्निवृत्तौ स्वयं कथ्यत इति तस्य दर्शनमेव भवतीति च ध्येयम्। वाक्पदस्य सर्वेन्द्रियोपलक्षकत्वात्, दृश्यते हि सर्वेन्द्रियोपरमेऽपि मनःप्रवृत्तिरिति कथं घटते इति शंकाऽप्येवं शमिता। ध्यानाद्यवसरस्य दर्शितत्वात्; व्याध्यादिसमये स्वानुभवगतस्य वर्णनसंभवाच्च। नन्वस्तु वाचो निर्व्यापारत्वेऽपि मनसः सव्यापारत्वम्। तस्य वाचो मनस्संश्लेषसाधकत्वं कथमिति चेत्—प्रवृत्तस्वकार्ये दारुणि तदधीनस्याग्नेर्निवृत्तस्वकार्यस्यान्तर्भावदर्शनात् वागपि मनोधीनव्यापारा स्वयं निर्व्यापारतायां सव्यापारे मनस्यन्तर्भवितुमर्हतीति। ननु क्वचिद्दर्शनमात्रेण न तस्य संश्लेषसाधकत्वम्, अप्रयोजकत्वस्यानैकान्तिकत्वस्य च संभवादिति चेत्—इदमेवोपरि शब्दाच्चेत्येतदवतरणभाष्ये उक्तमिति। अथवा प्रायणकाले वाचो मनसश्च निर्व्यापारत्वे तुल्ये वाच एव मनसि प्राधान्यप्रयोजकः संश्लेषः, न वैपरीत्यमिति कुत इत्यत्र दर्शनादित्युक्तम्। तत्रतत्र वाचि व्यापारहीनायामपि मनसः सव्यापारत्वात् वैपरीत्याभावात निर्व्यापारत्वेन तौल्यस्यासार्वकालिकत्वात् वाचि मनोधीनत्वदर्शनात् मनसः प्राधान्यमेवेति भावः। किमनया युक्त्या, शब्द एव स्पष्टोऽस्तीत्याह शब्दाच्चेति। वाङ्मनसीति शब्दादित्यर्थः। एतदनन्तरशब्दः उत्तरादिति उपरि वक्ष्यते। यदि व्यापाराभावावसरे प्रायणकाले मनसः पृथग्भूयैव स्वस्थाने वागस्तीति प्रमाणेन केनापि ज्ञायेत, तदा आदित्यो यूप इत्यत्रेव शक्यार्थत्यागेन वाग्वृत्तिलयमात्रं वक्तव्यं स्यात्। न चैतदित्याह न हीति। तदानीं प्रायणकाले। ननु संपत्त्यसंभवात् वाक्छब्दे लक्षणे-

**यदुक्तं मनसो वाक्प्रकृतित्वाभावात् वाचो मनसि संपत्तिर्नोपपद्यत इति— तत्, 'वाङ्मनसि संपद्यते' इति वचनात् मनसा वाक् संयुज्यते; न तु तत्र लीयत इति परिहर्तव्यम् ॥१॥**

**अत एव सर्वाण्यनु। ४। २। २॥**

**यतो वाचो मनसा संयोगमात्रं संपत्तिः; न तु लयः—अत एव वाचमनु सर्वेषामिन्द्रियाणां मनसि संपत्तिश्रुतिरुपपद्यते, (प्रश्न—) "तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः" इति ॥ २ ॥** इति वागधिकरणम् ॥ १ ॥

---

स्युक्तमित्यत्राह **यदुक्त**मिति। संपत्तिर्लय इत्यर्थे संपत्त्यसंभवेऽपि संपत्तिः संश्लेष इत्यर्थेऽनुपपत्तिर्नेति भावः ॥ १ ॥

ननु **अतएवे**ति सूत्रं किमर्थम्। वाग्विषये उक्तस्य तुल्यन्यायत एवान्यत्र सिद्धेरिति चेत्—न। वृत्तिलयार्थकत्वे वाक्छब्दस्य सर्वोपलक्षकत्वं युक्तम्; मनसो निर्व्यापारत्वे सर्वेन्द्रियवृत्तिराहित्यस्य प्रामाणिकत्वात्। संश्लेषस्तु यथाशब्दं वाङ्मात्रस्यैव स्यात्। न च, "पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः" इति शब्दान्तरात् सर्वेन्द्रियसंश्लेष इति वाच्यम्-अणुनि मनसि सर्वेन्द्रियसंश्लेषासंभवेन तत्र वृत्तिलयस्यैव विवक्षणीयत्वादिति पूर्वपक्ष्याशयखण्डनार्थत्वात्। सूत्रे **एवकार**—न वृत्तिपक्षे श्रुत्यनुपपत्तिदर्शकः; किंतु शक्यार्थरक्षणार्थं परिगृहीतात् इन्द्रियसंश्लेषपक्षत एवोपपन्नत्वात् अनुपपन्नत्वाभावात् न लक्ष्यार्थनिर्वाह्यलयपक्षस्वीकार इत्यर्थदर्शकः। यद्यपि यतएव दर्शनाच्छब्दाच्च वाचः संश्लेष एव, ततो दर्शनाच्छब्दाच्चैवान्येषामपि संश्लेष एव। शब्दश्च इन्द्रियैर्मनसिसंपद्यमानैरित्ययम्—इत्यर्थोऽपि सुवचः—अथापि संश्लेषपक्षे इन्द्रियैरिति श्रुत्यनुपपत्तिशंकापरिहारार्थत्वं सूत्रस्य गमयितुमन्यथा भाषितम्। अस्मन्मते मनसः परमाणुत्वाभावान्न संश्लेषासंभव इति भावः। श्रुत्यर्थस्तु—**तस्मात्** उदानस्य नेतृत्वात् मरणे शान्तौष्ण्यः मनःसंश्लिष्टैरिन्द्रियैः सह **पुनर्भवं** पुनर्जन्म प्रति, **यच्चित्तस्तेनैष प्राणमायाति**—यत्फलकामः, तेन फलेन हेतुना जीव एष प्राणवायुमाप्नोतीति उपर्यन्वयेन ग्राह्यः। सूत्रे **अनु**शब्दः वाक्छब्देन शक्यार्थोपस्थित्यनन्तरं सर्वेन्द्रियलक्षणादर्शकः। संश्लेषपक्षादेव स्वीकृताद् सर्वाण्यपीन्द्रियाणि वाक्छब्दलक्षितानि मनसि संश्लिष्यन्तीति सूत्रार्थः॥

ननु करणवृत्तिलयो वा मनसि, तत्संश्लेषो वा वाक्यार्थ इति किमनेन विचारेण। अस्य वाक्यराशेः पूर्वपक्ष्युक्तार्थस्वीकारेऽपि, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति; प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति वाक्यत एव तदन्तरप्रतिपत्त्यधिकरणोक्तरीत्या सर्वविशिष्टरंहणसिद्धेरिति चेत्—श्रुत्यन्तरप्रतिपादितार्थवैशद्यव्यवहार्थस्य तच्छ्रुतिनिरपेक्षमित एवावगन्तुं शक्यत्वेऽत्र तद्व्युत्पादनस्यैव युक्तत्वात्; वागादेर्मनसि संश्लिष्टत्ववचनादेव पूर्वपक्ष्यभिमतस्य निर्व्यापारत्वस्यापि सिद्ध्या तस्य विशिष्यावक्तव्यत्वाच्च। अतः 'तमुत्क्रान्तमिति वाक्यजातसमानार्थं समानप्रयोजनश्चेदं वाक्यजातम्। गतिचिन्तनवत् अस्यापि भोग्यतया चिन्त्यत्वात् मनसि सर्वेन्द्रियसंश्लेषस्य ततोऽसिद्धेश्च। पूर्वपादान्ते **संपद्यत** इति प्रयोगात् संपद्यतेपदघटितानि प्रकृतविषयाणि वाक्यान्युपस्थितानीति अत्र न तादृशी संपत्तिरियमित्याक्षेपे तदर्थश्चिन्त्यत इति ॥२॥

१३६. मनोधिकरणम् ४-२-२ ॥

## तन्मनः प्राण उत्तरात् । ४ । २ । ३ ॥

तत्—**सर्वेन्द्रियसंयुक्तं** मनः प्राणे संपद्यते—**प्राणेन संयुज्यते ; न मनोवृत्तिमात्रम् । कुतः ?** उत्तरात—(छा. ६-८-६) "**मनः प्राणे**" **इति वाक्यात् ।**

**अधिकाशङ्का तु**—(छा. ६ ६-५) "**अन्नमयं हि सोम्य मनः**" **इति वचनात् मनसोऽन्नप्रकृतित्वमवगम्यते ; अन्नस्य च,** (छा. ६-२-४) "**ता अन्नमसृजन्त**" **इति अम्मयत्वं सिद्धम् ।** "**आपोमयः प्राणः**" **इति च अप्प्रकृतित्वं प्राणस्यावगम्यते । अतो मनः प्राणे संपद्यत इत्यत्र** प्राणशब्देन **प्राणप्रकृतिभूता अपो निर्दिश्य तासु मनस्संपत्तिप्रतिपादने परम्परया स्वकारणे लय इति संपत्तिवचनमुपपन्नं भवति-इति ॥**

**परिहारस्तु** "**अन्नमयं हि सोम्य मनः**", "**आपोमयः प्राणः**" **इति मनःप्राणयो-**

---

तन्मन इति पदद्वयेऽन्यतरद् व्यर्थमित्यत्र **सर्वेन्द्रियसंयुक्त**मिति तच्छब्दस्यार्थमाह । तथा च मनः प्राण इत्यत्र मनश्शब्देन केवलमनो वा वाङ्मात्रसंपत्तिमन्मनो वा न ग्राह्यम् . किं तु श्रुत्यन्तरसिद्धसर्वसंश्लेषयुक्तमेवेति पूर्वसूत्रद्वयसिद्धार्थज्ञापनार्थं तच्छब्द इति भावः। नन्वत्र पूर्वोत्तरपक्षौ कीदृशौ ॥ मनोवृत्तिलयो वा मनःसंश्लेषो वेति विचार इति चेत्—पूर्वन्यायेनैव तस्य शमयितव्यत्वादधिकरणं व्यर्थम् । अधिकाशंकयाऽधिकरणारम्भ इति चेत्—तत्र तत्र ह्यधिकाशंका पूर्वाधिकरणवदेव पूर्वोत्तरकोटिग्रहणे भवति । पूर्वाधिकरणे तद्वृत्तिलय इति पूर्वपक्षः, तत्संश्लेष इति सिद्धान्तः ; अत्र तु मनोलय **इति** पूर्वपक्षः, तत्संश्लेष इति सिद्धान्त इति वैषम्यम् । एवं स्थिते, **न मनोवृत्तिमात्र**मित्यप्रसक्तप्रतिषेधोऽपि भाष्ये न युज्यत इति ॥ अत्रोच्यते—पूर्वाधिकरणेऽपि वाक्छब्दो वृत्तिपरो वा मुख्यार्थपरो वेति न विचारः ; किंतु वाक्यं लयपरं वा संश्लेषपरं वेत्येव। तत्र स्वाप्यय-अशनाया-उदन्याविवेचनेन पूर्वं लयस्योक्तत्वात् तत्प्रकरणात् लयपरत्वशंकायाम्—वागादिलयपरत्वं न भवति ; प्रकृतिविकारभावाभावात् । अर्थान्तरमादाय लयवर्णने च लक्षणेत्युक्तम् । तदिह प्रकृतिविकारभावस्य सुवचत्वात् लयः सुवच इति तन्न्यायाप्रवृत्त्याशङ्का—पृथिवीविकारगोमयजन्यस्य वृश्चिकस्य पृथिव्यामिव मनःप्रकृतिभूतपृथिवीप्रकृतिभूतास्वप्सु मनोलयस्य सुवचत्वादिति । तत्र परिहारः—आहङ्कारिकस्य मनसः पृथिवी न प्रकृतिः। किञ्च अब्विकृतिभूतपृथिवीविकारत्वाभिमतस्य मनसोऽप्सु लयसंभवेऽपि अब्विकारान्तरे प्राणे लयो दुर्वच एवेति प्राणशब्दे लक्षणैव स्यादिति ॥ स्यादेतत्—न मनो लीयते इति भाषितव्ये **न मनोवृत्तिमात्र**मिति भाषितं कथमिति चेत्—उच्यते । अयमाशयः—मनसोऽप्सु लयस्य सुवचत्वेऽपि न स प्रकृतवाक्यार्थः। न हि प्रायणकाले मनसो लयो भवति ; उत्क्रान्तिवचनविरोधात् । अतो मनोवृत्तिलय एव पर्यवसानं लयरुचिना संमन्तव्यम् । अतः पूर्वन्यायाविशेष इति । **टीकायां सारावलौ** च मनोलयपूर्वपक्ष उक्तः ; **उपनिषद्भाष्ये** वृत्तिलयपूर्वपक्षः । मनोलय इत्येव पूर्वपक्षे प्रवृत्ते वृत्तिलये पर्यवसानं व्युत्पाद्य सिद्धान्ती खण्डयतीति वक्तव्यम् । **अन्नप्रकृतित्वम्** पृथिवीप्रकृतिकत्वम् । **अप्प्रकृतित्वम्** अप्प्रकृतिकत्वम् । **प्रकृतिः** उपा-

**रन्नेनाद्भिश्चाप्यायनमुच्यते ; न तत्प्रकृतित्वम् ; आहङ्कारिकत्वान्मनसः, आकाशविकारत्वाच्च प्राणस्य । प्राणशब्देनापां लक्षणा च स्यात्-इति ॥ ३ ॥** इति मनोधिकरणम् ॥ २ ॥

१३७. अध्यक्षाधिकरणम् ४-२-३ ॥

## सोऽध्यक्षे तदुपगमादिभ्यः । ४ । २ । ४ ॥

**यथा "वाङ्मनसि संपद्यते, मनः प्राणे" इति वचनानुरोधेन मनःप्राणयोरेव वाङ्मनसयोः संपत्तिः—तथा** (छा. ६-६-५) **"प्राणस्तेजसि" इति वचनात् तेजस्येव प्राणः संपद्यते—इति प्राप्ते उच्यते—**सोऽध्यक्षे-**इति ।** सः-**प्राणः,** अध्यक्षे **करणाधिपे जीवे संपद्यते । कुतः?** तदुपगमादिभ्यः—**प्राणस्य जीवोपगमस्तावच्छ्रूयते,** (बृ. ६ ३-३८) **"एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इति ; तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते,** (बृ, ६-४-२) **"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इति । प्रतिष्ठा च जीवेन सह श्रूयते,** (प्रश्नो. ६-३) **"कस्मिन् उत्क्रान्ते उत्क्रान्तो भविष्यामि, कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि" इति । एवं जीवेन संयुज्य तेन सह तेजस्संपत्तिरिह, "प्राणस्तेजसि" इत्युच्यते ; यथा यमुनायाः गङ्गया संयुज्य सागरगमनेऽपि, 'यमुना सागरं गच्छति' इति वचो न विरुध्यते—तद्वत् ॥ ४ ॥** इति अध्यक्षाधिकरणम् ॥ ३ ॥

१३८. भूताधिकरणम् ४-२-४ ॥

## भूतेषु तच्छ्रुतेः । ४ । २ । ५ ॥

(छा. ६-८-६) **"प्राणस्तेजसि" इति जीवसंयुक्तस्य प्राणस्य तेजसि संपत्तिरुक्ता, सा**

---

दानम् । **आकाशविकारत्वा**दिति, प्राणस्य वायुत्वात् । मनश्शब्दे लक्षणा भवतु मा वा ; प्राणशब्दे लक्षणा स्यादेवेत्याह **प्राणे**ति ॥ ३ ॥

**मनःप्राणयो**रिति सप्तमी । **करणाधिपे** । 'स कारणं करणाधिपाधिपः' इति वाक्यं स्मार्यते । प्राणः स्वाध्यक्षे जीवे संश्लिष्यति । **तदुपगमादिभ्यः** । उपगमः समीपगमनं संश्लेषार्थसमागमः, **आदि**ना अनुगमप्रतिष्ठानयोर्ग्रहणम् । अनुगमः उत्क्रान्तिः । **कस्मिन् उत्क्रान्त** इति । इदं जीवस्य स्वात्मनि चिन्तनरूपम् । एवं समीक्ष्य प्राणसृष्टेः उपरि कथनात् **कस्मिन्** इति प्राणग्रहणम् । मया सह कस्मिन् उत्क्रान्ते सति अहमुत्क्रमणकार्यभाक् स्याम् , मया सह कस्मिन् वसति वासः स्थितः स्यादिति समीक्षा । तदत्र प्राणोत्क्रमाद्यनन्तरं जीवोत्क्रमादिकमुक्तमिति न मन्तव्यम् । एवम् , "सैषा प्राणस्य सर्वाप्तिः" इति प्राणस्यातिशयं प्रदर्श्य, 'सह ह्येतावस्मिन् वसतः ; सहोत्क्रमतः' इति जीवप्राणयोः सहस्थितिरियमुक्ता । तर्हि प्राणस्तेजसीत्यत्र तेजश्शब्दो जीवलाक्षणिकः किमित्यत्र, नेत्याह **एवं जीवेने**ति । परम्परया संश्लेष इह विवक्षित इति भावः । **पृथिवीमय** इति । स्वस्याणुत्वात् स्वापेक्षया स्वसंश्लिष्टस्य पृथिव्यादेः परिमाणाधिक्यात् प्राचुर्यार्थे मयट् ॥ ४ ॥

संपत्तिः किं तेजोमात्रे, उत संहतेषु सर्वेषु भूतेष्विति विशये—तेजोमात्रश्रवणात् तेजसीति प्राप्ते उच्यते—-भूतेषु इति। भूतेषु संपद्यते। कुतः? तच्छ्रुतेः—(बृ.६-४ ५) "पृथिवीमय आपोमयःतेजोमयः···" इति जीवस्य सञ्चरतः सर्वभूतमयत्वश्रुतेः ॥ ५ ॥

ननु तेजःप्रभृतिष्वेकैकस्मिन् क्रमेण संपत्तावपि, पृथिवीमयः इत्यादिका श्रुतिरुपपद्यते ; अत आह—

नैकस्मिन् दर्शयतो हि। ४। २। ६॥

नैकस्मिन् ; एकैकस्य कार्याक्षमत्वात्। दर्शयतो ह्यक्षमत्वं श्रुतिस्मृती, '(छां. ६-३-२३) "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति—नामरूपव्याकरणयोग्यत्वाय त्रिवृत्करणमुपदिश्यते—(वि. पु. १-२-१२-१३) "नानावीर्याः पृथग्भूताः ततस्ते संहतिं विना। नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः। समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। महदाद्याःविशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति। अतः "प्राणस्तेजसि" इति तेजश्शब्देन भूतान्तरसंसृष्टमेव तेजोऽभिधीयते। अतो भूतेष्वेव संपत्तिः ॥ ६ ॥ इति भूताधिकरणम् ॥ ४ ॥

१३९. आसृत्युपक्रमाधिकरणम् ४-२-५ ॥

समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य। ४। २। ७॥

इयमुत्क्रान्तिः किं विद्वदविदुषोः समाना, उताविदुष एवेति चिन्तायाम्—अविदुष

---

ननु तेजश्शब्दस्य मुख्यार्थत्वे संभवति लक्षणानुपपत्तेः प्राणस्याध्यक्षद्वारा संभवन् तेजःसंश्लेष एव सिद्धान्त्यभिमतो वाक्यार्थः। एवञ्च मुख्यार्थत्वायैव तेजोमात्रसंश्लेष एवार्थोऽस्तु। न च—सृष्ट्यर्थं त्रिवृत्करणमस्ति; भूयस्त्वरूपवैशेष्यादेवचैकभूतशब्देन व्यवहार इति प्रागेवोक्तमिति वाच्यम्—सृष्टेः प्राक् तथाभावेऽपि लयेऽस्मिन् प्रायणे शुद्धतेजोंशमात्रग्रहणोपपत्तेः पृथिवीमय इत्यादितोऽपि न समुच्चयसिद्धिरिति शंकयाऽधिकरणप्रवृत्तिः। तेजस ऊर्ध्वज्वलनत्वादुत्क्रमणसौकर्याय तदाधिक्येऽपि अमुक्तविषये अस्यैव तेजसः पश्चात् स्थूलदेहरूपेण परिणामात् इदमत्रिवृत्कृतं न भवतीति समाधिः। एवं तावदपञ्चीकृततेजोग्रहणं वारितम्। वस्तुतोऽत्र पञ्चीकृतभूतसूक्ष्मपञ्चकं वा एकं वेति विचारस्त्वन्यः। एकतोऽपि मुक्तस्य गत्युपपत्तेरेतावदत्रोक्तम्। "व्यष्टिं पञ्चीकृतैस्तैः" इति २७३ सारावलिः।

**क्रमेण संपत्तावपि।** कदाचित् कस्मिंश्चित् भूते संपत्तिः, अन्यदाऽन्यस्मिन्नित्येवं सत्यपि। **श्रुतिस्मृती** इत्यत्र **इति** शब्दद्वयान्वयः। **नामे**ति मध्ये विवरणं व्याकरणानन्तरं त्रिवृत्करणमिति भ्रमव्युदासाय॥

तेजस्संपत्त्यनन्तरम्, तेजः परस्यां देवतायामिति परमात्मसंपत्तिः श्रुता। तस्या अपि सर्वसमानत्वेऽपि, मुक्तस्य परमात्मसंपत्तिरस्ति न वेति तदंशे विवादस्यानवकाशात एतावदुक्तमात्रविषये विवाद इति तच्छमनायानन्तरमेव **समानाचे**त्यधिकरणम्। उक्तं सर्वममुमुक्षुविषयम्; मुमुक्षोरत्रैवामृतत्वब्रह्मप्राप्त्योरुक्तत्वात् उत्क्रान्तिर्निषेधाच्चेति पूर्वपक्षः। **इयमुत्क्रान्ति**रिति तेजस्संपत्तिरूपोत्क्रान्ति-

एवेति प्राप्तम् । कुतः ? विदुषोऽत्रैवामृतत्ववचनादुत्क्रान्त्यभावात् । विदुषो ह्यत्रैवामृतत्वं श्राव्यते, (कठ. २-६-१४) 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति ॥ एवं प्राप्तेऽभिधीयते—समाना चाऽऽसृत्युपक्रमात्— इति । विदुषोऽपि आसृत्युपक्रमादुत्क्रान्तिः समाना । आ सृत्युपक्रमात् आ गत्युपक्रमात् नाडीविशेषेणोत्क्रम्य गतिः श्रूयते, (कठ. २-६-१६) "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन् अमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति । एवं नाडीविशेषेण गतिश्रवणात् विदुषोऽप्युत्क्रान्तिरवर्जनीया । सा च नाडीप्रवेशात्प्राक् विशेषाश्रवणात् समाना । तत्प्रवेशदशायां च विशेषः श्रूयते, (बृ. ६-४-२) "तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः" इति । "शतं चैका च हृदयस्य" इत्यनया श्रुत्या ऐकार्थ्यात् मूर्ध्नो निष्क्रमणं विद्वद्विषयम् ; इतरत् अविद्वद्विषयम् । यदुक्तम्—विदुषोऽत्रैवामृतत्वं श्राव्यते इति—तत्रोच्यते अमृतत्वं-चानुपोष्य इति । चशब्दोऽवधारणे । अनुपोष्य— शरीरेन्द्रियादिसंबन्धमदग्ध्वैव, यदमृतत्वम् — उत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते, तदुच्यते "यदा सर्वे प्रमुच्यन्ते" इत्यादिकया श्रुत्येत्यर्थः । "अत्र ब्रह्म समश्नुते" इति च उपासनवेलायां यो ब्रह्मानुभवः ; तद्विषयमित्यभिप्रायः ॥

तदापीतेः संसारव्यपदेशात् । ४ । २ । ८ ॥

अवश्यं च तत्—अमृतत्वम् अदग्धदेहसंबन्धस्यैवेति विज्ञेयम् । कुतः ? आपीतेः संसारव्यपदेशात् । अपीतिः—अप्ययः, ब्रह्मप्राप्तिः । सा चार्चिरादिना मार्गेण देशविशेषं गत्वेति वक्ष्यते । आ तदवस्थाप्राप्तेः संसारः देहसंबन्धलक्षणो हि व्यपदिश्यते, "तस्य तावदेव चिरं

रित्यर्थः । जीवस्य भूतसूक्ष्मसंपत्तिर्हि स्थूलशरीरादुत्क्रान्तिरेव । इयं समानेत्युक्तौ उपरितनांशे समानत्वप्रसक्त्यभावात् **आसृत्युपक्रमा**दिति कथनम् नाडीप्रवेशश्रवणान्यथानुपपत्त्या संपत्तिरियं मुमुक्षुविषयेऽपि स्वीकार्येति ज्ञापनार्थम्, पश्चादुच्यमाना परमात्मसंपत्तिरपि अमुमुक्षुतुल्या, न तु लयादिरूपेति सूचनार्थञ्च । **अदग्ध्वैवेति** । उष दाहे इति धातोः रूपमनुपोष्येति । ल्यबन्वयः कुत्र समानकर्तृकक्रियायामित्यत्राह **प्राप्यत** इति । इदं णिजन्तम् । ज्ञानेनेति शेषः । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते' 'सर्वे पाप्मानः प्रदूयन्ते' इति कर्माणि दहत् ज्ञानं न शरीरं दहति । एवमदाहकं सत् ज्ञानं शरीरसत्त्वकाल एव यादृशममृतत्वं प्रापयति, तदेवात्र ग्राह्यम् । तच्च विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरत्वमिति । सूत्रे प्रथमचकारो विदुषश्चेति तत्समुच्चये । द्वितीयोऽवधारणे इत्युक्तमेव । अमृतत्वम् अनुपोष्य प्राप्यमाणमेव भवति, नान्यत् यत् विदेहदशाप्राप्यं मुक्तस्वरूपम् ॥ ७ ॥

'यदा सर्वे प्रमुच्यन्ते' इति मन्त्रात् पश्चादेव, 'अणुः पन्थाः' इत्यारभ्य, 'तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः' इति परमपदरूपस्वर्गलोकाप्यय उक्तः । तत्प्रत्यभिज्ञापनार्थं **अपीतिपदम्** । एवञ्च **वक्ष्यते** इति भाष्यस्य शारीरके वक्ष्यत इतिवत्, यदा सर्वे इति प्रागुपात्तमन्त्र-

यावन्न विमोक्ष्येऽथ संपत्स्ये" इति, (छा. ८-१३-२१) "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति च॥८॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः । ४ । २ । ९ ॥

इतश्च विदुषोऽपि बन्धो नात्र दग्धः; यतः सूक्ष्मं शरीरमनुवर्तते । कुत इदमवगम्यते? प्रमाणतस्तथोपलब्धेः । उपलभ्यते हि देवयानेन पथा गच्छतो विदुषः, (कौ. १-२) 'तं प्रतिब्रूयात् ··· सत्यं ब्रूयात्' इति चन्द्रमसा संवादवचनेन शरीरसद्भावः । अतः सूक्ष्मशरीरमनुवर्तते । अतश्च बन्धो न दग्धः ॥ ९ ॥

नोपमर्देनातः । ४ । २ । १० ॥

अतः, "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति वचनं न बन्धोपमर्देनामृतत्वं वदति ॥ १० ॥

अस्यैव चोपपत्तेरूष्मा : ४ । २ । ११ ॥

---

संदर्भे वक्ष्यत इत्यप्यर्थः । **तस्येति** ज्ञानिनं परामृश्य **चिरं यावन्नविमोक्ष्य** इति वाक्येन, ज्ञानसमनन्तरमेव न विमोक्षः, किंतु विलम्बेनेति कथनात् विमुक्तेः प्राक् ज्ञानकाले संसारित्वमेवोक्तं भवति । विमोक्षानन्तरं संपत्त्यर्थं विलम्बो नास्तीत्युक्त्या च तावत् संसारित्वलाभः । सूत्रार्थस्तु—**आ अपीतेः** ब्रह्मप्राप्तिपर्यन्तं संसारित्वव्यपदेशात **तत्** उक्तस्वरूपमेवामृतत्वम्, न तु मुक्तस्वरूपमिति ॥ ८ ॥

नन्वत्र, 'अथायमशरीरोऽमृतः' इत्यशरीरत्वेऽमृतत्ववचनात् अथ मर्त्योऽमृतो भवतीत्यत्र न कामादिराहित्यविशिष्टमर्त्यत्वसमानकालिकममृतत्वं विवक्षितम् । अतः स्थूलशरीरवियोगक्षणेऽत्रैवामृतत्वं ब्रह्मसमशनञ्च स्यादित्याशङ्कायाम्—अनुपोष्येत्युक्तोपोषणकर्मतयाऽभिमतं शरीरं न **स्थूलमेव,** किंतु सूक्ष्मम् । अतस्तदभाव एवामृतत्वादि । न च सूक्ष्मशरीरस्याभावः; प्रमाणसत्त्वादित्याह **सूक्ष्ममिति** । उपोषणकर्मत्वाभिमतं सूक्ष्मम्; प्रमाणतो जीवस्य **तथा** सूक्ष्मदेहवत्त्वेनोपलब्धेरिति सूत्रार्थः । तमित्यादिः कौषीतक्यर्थानुवादः । तत्र वाक्यम्—"तमागतं पृच्छति (चन्द्रमाः), कोऽसीति । तं प्रतिब्रूयात्" इत्यादि । प्रतिवचनस्य तत्र विस्तरभूतत्वात् तदर्थं संगृह्णाति **सत्यंब्रूयादिति** । तत्र वक्तव्यमुक्त्वा 'तेन सत्येन तपस्तुरस्मि' इति उक्तस्य सत्यरूपत्वकथनात् **सत्यं ब्रूयादित्युक्तम्** । **प्रमाणतश्चेति चकारः** गत्यर्थापत्त्यादिपरः । **प्रतिब्रूयादित्युक्तं** वचनं हि ताल्वादिव्यापारः । अतः शरीरमुक्तं भवति ॥ ९ ॥

एवं सूक्ष्मशरीरस्थापनफलमाह **नोपमर्देनेति** । **अतः** सूक्ष्मशरीरसत्त्वात् **नोपमर्देन** बन्धोपमर्दभाविनौ अमृतत्व-ब्रह्मानुभवावत्र वक्तुं न शक्याविति । ब्रह्मानुभवोऽप्युपासनकालभावी अमुख्य एवेति ज्ञापनमेतत्सूत्रमुख्यप्रयोजनम् । अत एवात्र भाष्ये पूर्णमन्त्रानुवादः ॥ १० ॥

**अस्यैवचेति** । नन्वणोर्जीवस्य सूक्ष्मशरीरं विनाऽपि गतिरुपपद्यते । चन्द्रमस्संवादस्तु अमृतत्वादेः सम्यक्प्राप्ततया संकल्पवशात् तदात्वे संपन्नकिञ्चिद्देहपरिग्रहादस्तु । उपरिस्थूलदेहानारम्भात् सूक्ष्मदेहस्येतः संपादनं कुतः । (सारावली) । तथा च प्रागेवामृतत्वादिसिद्धिरित्यत्रेदं सूत्रम् । विदुषोऽपि मृतस्य शरीरे

अस्य—सूक्ष्मशरीरस्य क्वचिद्विद्यमानत्वोपपत्तेर्विदुषः प्रक्रान्तमरणस्य मरणात्प्राक् ऊष्मा स्थूले शरीरे क्वाचित्क उपलभ्यते ; न च स्थूलस्यैव शरीरस्यायमूष्मा, अन्यत्रानुपलब्धेः । ततश्चोष्मणः क्वचिदुपलब्धिर्विदुषः सूक्ष्मशरीरस्योत्क्रान्तिनिबन्धनेति गम्यते । तस्मात् विदुषोऽप्यासृत्युपक्रमात् समाना उत्क्रान्तिरिति सुष्ठूक्तम् ॥ ११ ॥

पुनरपि विदुष उत्क्रान्तिर्न संभवतीत्याशङ्क्य परिह्रियते—

प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् । ४ । २ । १२ ॥

यदुक्तम्—विदुषोऽप्युत्क्रान्तिः समानेति, तन्नोपपद्यते ; विदुष उत्क्रान्तिप्रतिषेधात् । तथा हि, (बृ.६-४-१)"स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्वप(व)क्रामति" इत्युपक्रम्य, "तेन प्रद्योतेनैष आत्मा निष्क्रामति । तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्यविदुष उत्क्रान्तिप्रकारमभिधाय, "अन्यन्नवतरं कल्याणतरं रूपं कुरुते" इति देहान्तरपरिग्रहं चाभिधाय, "प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे इति तु कामयमानः" इति अविद्वद्विषयं परिसमाप्य, "अथाकामयमानः—योऽकामो निष्काम आप्तकाम आत्मकामः, न तस्य प्राणा उत्क्रामन्ति; ब्रह्मैव सन् ब्रह्माप्येति" इति विदुष उत्क्रान्तिः प्रतिषिध्यते । तथा पूर्वत्र आर्तभागप्रश्नेऽपि विदुष उत्क्रान्तिप्रतिषेधो दृश्यते, (बृ. ५-२-१०) "अप पुनर्मृत्युं जयति" इति विद्वांसं प्रस्तुत्य, "याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्ति, आहो न" इति पृष्टः नेति होवाच

'संतापयति स्वं देहमापादतलमस्तकम्' इति व्याप्तस्याग्नेरुपसंहारे सति, क्वचित्प्रदेश एव कञ्चित् कालमूष्मोपलम्भः. 'प्राणस्तेजसि' इत्युक्तस्य मुख्यामृतत्वप्रतिबन्धकसूक्ष्मदेहसंबन्धस्योत्क्रान्तेः प्राक् आत्मन्युपपन्नत्वादेव । एवमूष्माधिक्यं तदातनम्, ऊर्ध्वगतिसौकर्यञ्चाभिप्रेत्यैव हि **तेजसी**त्युक्तम् ॥ ११ ॥

नन्वेवं स्वीकारे विदुषः शरीरादुत्क्रान्तिप्रतिषेधवचनं विरुध्यत इत्यत्राह **प्रतिषेधा**दिति । पूर्वपक्ष्युक्तहेतुत्रये अथ मर्त्योऽमृत इति, अत्र ब्रह्म समश्नुत इति चोभयं निरूढम् । उत्क्रान्तिप्रतिषेधरूपतृतीयहेतुरत्र परिह्रियते । **तेजोमात्राः** तेजश्शब्दितान् भूतसूक्ष्मांशान् । इन्द्रियाण्यपि वा । **प्रस्तुत्ये**त्यादि । अत्र वाक्ये पृष्ट इति पदं नास्ति चेत्, नान्वयक्लेशः; **याज्ञवल्क्येती**त्यारभ्य **शेते** इत्यन्तं श्रुत्यनुवाद इति सुवचत्वात् । **प्रस्तुत्य प्रतिषेधः** इत्यन्वयः । **पृष्ट** इति पदसत्त्वे तस्य भाष्यकृत्पदत्वात्—'आहो न' इत्येतावत् श्रुतिरनूद्यते ; नेतीत्यादि श्रुतिवाक्यमेव स्ववाक्यवत् पठ्यते । पृष्ट इत्यस्य याज्ञवल्क्यः इत्यत्रान्वयः । प्रस्तुत्येति प्रस्तावे याज्ञवल्क्यः कर्ता । **इति पृष्टः** इत्यस्य इति श्रुत्युक्तरीत्या पृष्ट इत्यर्थ इति निर्वाह्यम् । **यत्राय**मित्यादेः पूर्वपक्ष्यभिमतोऽर्थस्तावत्—अयं **पुरुषः** देहः म्रियते । **अस्मात्** शरीरात् । **अत्रैव** शरीर एव **समवनीयन्ते** संगताः क्रियन्ते । अत एव **स** देहः **उच्छ्वयति** उच्छूनः पीनो भवति । **आध्मायति** बाह्यवायुपूरितो भवति । सिद्धान्ते तु **पुरुषः** जीवः म्रियते देहसंबन्धं त्यजति । **अस्मात्** जीवात् । **अत्रैव** जीव एव समवनीयन्ते=सहोत्क्रमणार्थं मेलिता भवन्ति ।

याज्ञवल्क्यः अत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायति आध्मातो मृतः शेते इति। अतो विद्वानिहैवामृतत्वं प्राप्नोतीति चेत्—

**तन्न** ; शारीरात्-प्रत्यगात्मनः प्राणानामुत्क्रान्तिरत्र प्रतिषिध्यते ; न शरीरात्। "न तस्य प्राणा उत्क्रामन्ति" इत्यत्र तच्छब्देन "अथाकामयमानः" इति प्रकृतः शारीर एव परामृश्यते ; नाश्रुतं शरीरम्॥ "तस्य" इति षष्ठ्या प्राणानां संबन्धित्वेन शारीरो निर्दिष्टः ; न तूत्क्रान्त्यपादानत्वेन। उत्क्रान्त्यपादानं तु शरीरमेवेति चेत्—न, अपादानापेक्षायाम् अश्रुताच्छरीरात् संबन्धितया श्रुतस्याऽऽत्मन एव संनिहितत्वेनापादानतयाऽपि ग्राह्यत्वात्। किञ्च प्राणानां जीवसंबन्धितयैव प्रज्ञातानां तत्संबन्धकथने प्रयोजनाभावात् संबन्धमात्रवाचिन्या षष्ठ्या अपादानमेव विशेष इति निश्चीयते। यथा 'नटस्य शृणोति' इति। न चात्र विवदितव्यम्—स्पष्टो ह्येकेषाम्—माध्यन्दिनानामाम्नाये शारीरो जीव एवापादानमिति, (माध्यं. ६. १) "योऽकामो निष्काम आप्तकामो आत्मकामः, न तस्मात् प्राणा उत्क्रामन्ति" इति॥ शारीरात् प्राणानामुत्क्रान्तिप्रसङ्गाभावात् तन्निषेधो नोपपद्यत इति चेत्-न (छा. ६. १४) "तस्य तावदेव चिरम्" इति विदुषः शरीरवियोगकाले ब्रह्मसंपत्तिवचनेन प्राणानामपि तस्मिन् काले शारीराद्विदुषो वियोगः प्रसज्यते। ततश्च—देवयानेन पथा ब्रह्मसंपत्तिर्नोपपद्यत इति, न तस्य प्राणा उत्क्रामन्ति—देवयानेन पथा ब्रह्मप्राप्तेः प्राक् जीवाद्विदुषोऽपि प्राणा न विश्लिष्यन्तीत्युच्यते।

(५-२) आर्तभागप्रश्नोऽपि यदा विद्वद्विषयः, तदा अयमेव परिहारः। स त्वविद्वद्विषयः ; तत्र प्रश्नप्रतिवचनयोः ब्रह्मविद्याप्रसङ्गादर्शनात्। तत्र हि ग्रहातिग्रहरूपेणेन्द्रियेन्द्रियार्थस्वभावः, अपामग्न्यन्नत्वम्, म्रियमाणस्य जीवस्य प्राणपरित्यागः, मृतस्य नामवाच्य-

---

**सः** देही। उच्छ्वयतीत्यादेः पूर्ववदर्थः। प्राणाभावादेवोच्छूनत्वादिकम्। तच्च विशेष्ये देहिनि बाधात् विशेषणे देहे विश्रान्तम्। यद्वा विद्वद्विषयत्वेऽप्यविद्वद्विषयत्वेऽपि पुरुषादिपदं जीवात्मपरमेवेति **परिष्कारोक्तं** भवतु॥ **तस्येत्यस्य** शारीरार्थकत्वेऽपि उत्क्रान्त्यपादानं शरीरमेवेति पृच्छति **तस्येति**-**षष्ठ्येति**। **विशेष** इति। अभिमत इति शेषः। **प्रसज्यते** इति। प्रसङ्गोऽस्तीत्यर्थः। **ततश्च** प्रसङ्गसत्त्वाच्च। अस्य **उच्यत** इत्यत्रान्वयः। **नोपपद्यत इतीति**—देवयानेन ब्रह्मसंपत्त्यनुपपत्तिशंकासद्भावादित्यर्थः। अस्यापि **उच्यत** इत्यत्रान्वयः। **अयमेव परिहारः** देवयानगतिनिर्वाहार्थं विद्वत्तः प्राणानामविश्लेष उच्यत इत्येवंरूपः। अविद्वद्विषयत्वे **अप पुनर्मृत्युं** जयतीति विद्वत्प्रकमविरोध इत्यत्र पूर्वमप्यविद्वद्विषयमेवेति पूर्णमार्तभागप्रश्नार्थं निरूपयति **तत्र** हीति। अष्टौ ग्रहाः प्राणवाग्जिह्वाचक्षुःश्रोत्रमनोहस्तत्वच इन्द्रियाणि। अतिग्रहा तत्तद्विषयाः। ग्रहाणां स्वभावो जीवग्राहित्वं स्ववशे जीवस्थापकत्वम्। अतिग्रहस्वभावः इन्द्रियापेक्षयाऽपि तत्रातिशयितत्वम्। **अग्न्यन्नत्वम्** अग्न्यन्नकत्वम्। कस्या देवताया मृत्युरन्नमिति प्रश्ने अग्निर्वै मृत्युः सोऽपामन्नमि त्युत्तरणात्। **प्राणपरित्यागः** नेति-

कीर्त्यनुवृत्तिः, तस्य च पुण्यपापानुगुणगतिप्राप्तिरित्येतेऽर्थाः प्रश्नपूर्वकं प्रत्युक्ताः। तत्र च, "अप पुनर्मृत्युं जयति" इति अपामग्न्यन्नत्वज्ञानादग्निजय एव मृत्युजय उच्यते। अतो नात्र विदुषः प्रसङ्गः। अविदुषस्तु प्राणानुत्क्रान्तिवचनम्—स्थूलदेहवत् प्राणा न मुञ्चन्ति, अपि तु भूतसूक्ष्मवत् जीवं परिष्वज्य गच्छन्तीति प्रतिपादयतीति निरवद्यम् ॥ १२ ॥

स्मर्यते च। ४। २। १३॥

स्मर्यते च विदुषोऽपि मूर्धन्यनाड्योत्क्रान्तिः, (याज्ञ. ३-१६७ श्लो.)
"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्" इति ॥ १३ ॥ इति आसृत्युपक्रमाधिकरणम् ॥५॥

१४०. परसंपत्त्यधिकरणम् ४-२-६ ॥

तानि परे तथा ह्याह। ४। २। १४॥

सकरणग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मा उत्क्रान्तिवेलायां तेजःप्रभृतिभूतसूक्ष्मेषु संपद्यत इत्युक्तम्। सैषा संपत्तिर्विदुषो न विद्यत इत्याशङ्क्य परिहृतम्। तानि पुनर्जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यं च स्वकार्याय गच्छन्ति, उत परमात्मनि संपद्यन्त इति विशये—मध्ये परमात्मसंपत्तौ सुखदुःखोपभोगरूपकार्यादर्शनात् तदुपभोगानुगुण्येन यथाकर्म यथाविद्यं च गच्छन्ति—इति प्राप्ते उच्यते—तानि परे इति। तानि परस्मिन् आत्मनि संपद्यन्ते। कुतः? तथा ह्याह श्रुतिः, (छा. ६-८-६) "तेजः परस्यां देवतायाम्" इति। यथाऽऽह श्रुतिः, तदनुगुणं कार्यं कल्प्यमित्यर्थः। सुषुप्तिप्रलययोर्यथा

होवाचेति प्रागुक्तः। **नामवाच्यकीर्ती**ति। म्रियमाणं पुरुषं किं न जहातीति प्रश्ने नामेति समाहितम्। नामशब्दवाच्या च कीर्तिरित्यर्थः। **पुण्यपापे**ति। कायं तदा पुरुषो भवतीति म्रियमाणविषयगतिप्रश्ने, आहर सोम्य हस्तमार्तभागेति हस्तग्रहेण सजनं विहायान्यत्र गत्वा द्वाभ्यामामन्त्रितम्, 'पुण्यःपुण्येन कर्मणा भवति, पापः पापेन' इति। एवमविद्वद्विषयसंदष्टत्वात्, प्राणाः क्रामन्त्याहो नेति प्रश्नोऽपि अविद्वद्विषय एवेति॥ स्यादेतत्-अप पुनर्मृत्युं जयतीत्यस्य किमायातमित्यत्र विशदयति **तत्र चे**ति मृत्युशब्देनाग्नेरेव प्रकृतत्वात् अपामग्न्यन्नकत्वज्ञानवन्तं प्रति अग्नेरमृत्युत्वमेवोच्यत इति। सर्वमिदं तत्त्वव्युत्पादनम्। प्रश्नप्रतिवचने विद्वद्विषयत्वेऽन्यविषयत्वे वा जीवं प्राणा न त्यजन्तीत्येवार्थे इति। **प्रत्युक्ताः** बोधिताः ॥१२॥

एवं पूर्वपक्ष्युक्तहेतुत्रयं निरस्य मूर्धन्यनाड्या निष्क्रमणश्रुत्या उत्क्रान्तिर्विदुषोऽपि स्थापिता। तथा निष्क्रमणे स्मृतिमपि दर्शयति **स्मर्यते चे**ति। **तेषां** नाडीविशेषाणां मध्ये **य** ऊर्ध्वं स्थितः **तेन** तद्द्वारा सूर्यमण्डलं भित्वा चतुर्मुखलोकमतिक्रम्य परां गतिं यातीत्यर्थः। एवं गतिव्यपदेशादुत्क्रान्तिः समानेति। पूर्वपक्षी मूर्धन्यनाड्यादिगतिं तथागत्वाफलप्राप्तिकामिविषयव्यवस्थितां मन्यते ॥ १३ ॥

पुनरधिकरणद्वयेन विद्वदविदुषोः समानैव परदेवतासंपत्तिः शोध्यते। **गच्छन्ती**ति। न तु ततः **परमात्मसंपत्तिः** काचिदस्ति। तेजः परस्यां देवतायामिति वाक्यं तु, 'एतावत् सर्वसाधारणम्, इतः परं

परमात्मसंपत्त्या सुखदुःखोपभोगायासविश्रमः; तद्वदिहापि ॥ इति परसंपत्त्यधिकरणम् ॥६॥

१४१. अविभागाधिकरणम् ४ २-७ ॥

अविभागो वचनात् । ४ । २ । १५ ॥

सेयं परमात्मनि संपत्तिः किं प्राकृतलयवत् कारणापत्तिरूपा, उद "वाङ्मनसि" इत्यादिवदविभागरूपेति चिन्तायाम्—परमात्मनः सर्वेषां योनिभूतत्वात् कारणापत्तिरूपेति प्राप्ते उच्यते—अविभागः-इति । अपृथग्भावः=पृथग्व्यवहारानर्हसंसर्ग इत्यर्थः । कुतः? वचनात् । "तेजः परस्यां देवतायाम्" इत्यत्रापि, "वाङ्मनसि संपद्यते" इत्यतः संपद्यत इति वचनस्यानुषङ्गात्; तस्य च संसर्गविशेषवाचित्वात्; अनुषक्तस्याभिधानवैरूप्ये प्रमाणाभावात् । उत्क्रान्तिवेलायां कारणापत्तिप्रयोजनाभावात् । पुनस्तत्राव्यक्तादिसृष्टयवचनाच्च ॥

इति अविभागाधिकरणम् ॥ ७ ॥

१४२. तदोकोधिकरणम् ४-२-८ ॥

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया । ४ । २ । १६ ॥

एवं गत्युपक्रमावधि विद्वदविदुषोः समानाकारः उत्क्रान्तिप्रकार उक्तः; इदानीं विदुषो विशेष उच्यते । तत्रेदमाम्नायते—(कठ. २-६-१६) "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन् अमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति । 'अनया नाडीनां शताधिकया मूर्धन्यनाड्यैव विदुषो गमनम्, अन्याभिरेव चाविदुषो गमनम्' इत्ययं नियम उपपद्यते, नेति संशयः ।

---

तु परदेवता यत्र गतिं संकल्पयति तत्रेति विशिष्य तदधीनत्वं वक्तीति भावः । **आयासविश्रमः** आयासपरिहारः ॥ १४ ॥ **कारणापत्तिरूपेति** । प्राणकरणभूतसूक्ष्मविशिष्टस्य जीवस्य प्राणादिकारणाकाशादौ सति कथं परस्मिन् लयोक्तिरिति चेन्न—गोमयैकदेशतः परिणतस्य वृश्चिकस्य परम्परोपादाने पृथिव्यामिव प्राणादीनामपि द्वारभूतद्रव्ये लयमन्तरा साक्षादेव परमकारणे लयसंभवात् । अतः अत्यन्तसूक्ष्मचिदचिद्विशिष्टे ब्रह्मणि प्राणादिविशिष्टजीवलय इति । सूत्रे **वचना**दित्यस्य अनुषक्तसंपद्यतेशब्दात्, श्रद्धां जुह्वतीत्यादिवचनाच्चेत्यर्थः । **अवचनाच्चे**ति । परमात्मनि लीनस्य संसारिणः उत्क्रान्तिगतिस्वर्गप्रवेशादिकं सोपकरणस्यैवोक्तम् । तथात्वञ्चास्याव्यक्तमहदादिक्रमेणोपकरणोत्पत्त्यैव वक्तव्यम् । तत्तु नोक्तम् । कल्पनायाश्च गौरवमिति । पूर्वमेव कारणापत्तेरेषां सुवचत्वात् वाङ्मनसि संपद्यत इत्यादिवचनञ्च व्यर्थमिति **तद्वचना**दप्यविभाग एव संपत्तिरिति च ध्येयम् । अयञ्चाविभागो देवताशब्दस्वारस्यात् परमात्मसंयोगस्य प्रागेव सत्त्वाच्च हार्दविग्रहसंश्लेषरूपोऽपि युक्तः । हार्दरहितजन्तुषु तु तदयोगात् अविभागोऽयम् आयासपरिहारार्थं प्रसादविशिष्टपरमात्मसंश्लेषरूपो भवितुमर्हति ॥ १५ ॥

परदेवतासंश्लेषपर्यन्तस्य विद्वदविद्वत्साधारण्यमुक्तम् । एवं नाडीनामपि सर्वसाधारण्यमेव ।

किं युक्तम्? नियमो नोपपद्यत इति। कुतः? नाडीनां भूयस्त्वादतिसूक्ष्मत्वाच्च दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात्। "तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति यादृच्छिकीमुत्क्रान्तिमनुवदतीति युक्तमिति॥

एवं प्राप्ते प्रचक्ष्महे—शताधिकयेति। विद्वान् शताधिकया मूर्धन्ययैव नाड्योत्क्रामति। न चास्याः विदुषो दुर्विवेचत्वम्; विद्वान् हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्यात् विद्याशेषभूततयाऽऽत्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेणानुगृहीतो भवति; ततश्च तदोकः तस्य जीवस्य स्थानं हृदयम्, अग्रज्वलनं भवति अग्रे ज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनम्। परमपुरुषप्रसादात् प्रकाशितद्वारो विद्वान् तां नाडीं विजानातीति तया विदुषो गतिरुपपद्यते॥ १६॥ इति तदोकोधिकरणम्॥ ८॥

१४३. रश्म्यनुसाराधिकरणम् ४-२-९॥

## रश्म्यनुसारी। ४। २। १७॥

विदुषो हृदयात् शताधिकया मूर्धन्यनाड्या निर्गतस्याऽऽदित्यरश्मीन् अनुसृत्याऽऽदित्यमण्डलगतिः श्रूयते—(छा. ८-६-५) "अथ यत्रैतदस्माच्छरीरादुत्क्रामति, अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति। तत्र रश्म्यनुसारेणैवेत्ययं गतिनियमः संभवति, नेति चिन्तायाम्—निशि मृतस्य विदुषो रश्म्यनुसारासंभवादनियमः। वचनं तु पक्षप्राप्तविषयमिति प्राप्ते उच्यते रश्म्यनुसारी—इति। रश्म्यनुसार्येव विद्वानूर्ध्वं गच्छति; कुतः? "अथैतैरेव

---

अतो न नियम इति शंकया संगतिः। **अशक्यत्वादिति**। इदमुपलक्षणम्; अर्चिरादिमार्गस्य विशालस्य सर्वनाडीसंबन्धित्वाच्चैवमिति। तर्हि श्रुतिविरोध इत्यत्र तद्गतिमाह **तयोर्ध्वमिति**। सूत्रे अन्तिमपदमेव प्रधानपूर्वपक्षनिरासकमिति तद् गृह्णाति **शताधिकयेतीति**। अवशिष्टानि सौत्रपदानि पूर्वपक्षहेतुस्फोरणेन तत्परिहारार्थानि। **तदोको** हृदयम्; स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति इत्युक्तेः। **अग्रज्वलनम्** अग्रभागे प्रद्योतविशिष्टम्; 'हृदयस्याग्रं प्रद्योतते' इति श्रुतेः। **तत्प्रकाशितद्वारः** हृदयान्तस्थो निष्क्रमणमार्गं प्रसादाधीनप्रद्योतवलेन ज्ञातवान्। अग्रप्रद्योतस्य द्वारप्रकाशस्य च विद्वदविद्वत्साधारण्यादिदं द्वयं पूर्वमुक्त्वा विद्यासामर्थ्यादिकं विद्वन्मात्रसंबन्धि पश्चादुक्तं सूत्रे। अग्रज्वलनादावपि हार्दानुग्रहस्यापेक्षितत्वात् पूर्वं व्याख्यातं भाष्ये। विद्यायाः **सामर्थ्यं** पौष्कल्यम्। विद्याशेषत्वं गत्यनुस्मृतेः। तदोकोऽग्रज्वलनमिति पृथग्वाक्यम्। अत एवास्य पदद्वयत्वमादृतं भाष्ये। अन्यत् सर्वमेकं वाक्यम्। **शताधिकया** शतादतिरिक्तया एकशततम्या नाड्या सुषुम्नाख्यया। उत्क्रामतीति शेषः॥ १६॥

अस्तु शताधिकयैव नाड्येति नियमः। तदनन्तरं रश्मिभिरेवेति नियमस्तु न भवति। रश्म्यभावकालेऽपि गतेः-इत्याक्षेपः। **पक्षेति**। एवकारस्तु रश्मिसद्भावकाले रश्मिभिरेवेति नियमार्थः स्यात्। पूर्वं महापथदृष्टान्तेन नाड्यादित्ययोः रश्मीनां संततत्वं वर्णितम्। तद् यदा भवति; तदा रश्मिभिरेवेति तात्पर्यम्। रश्मिकाले रश्मिभिरेव अन्यदा त्वन्यथेति व्यवस्था च निष्प्रयोजना; मार्गान्तरावचनाच्च

रश्मिभिः" इत्यवधारणात्; पाक्षिकत्वे ह्येवकारोऽनर्थकस्स्यात्। यदुक्तम्—निशि मृतस्य रश्म्यसंभवात् रश्मीननुसृत्य गमनं नोपपद्यत इति—तन्न; निश्यपि सूर्यरश्म्यनुसारः संभवति; लक्ष्यते हि निश्यपि निदाघसमये ऊष्मोपलब्ध्या रश्मिसद्भावः; हेमन्तादौ तु हिमाभिभवाद् दुर्दिन इवोष्मानुपलम्भः; श्रूयते च नाडीरश्मीनां सर्वदाऽन्योन्यान्वयः, (छा. ८-६-२) " तद्यथा महापथ आततः उभौ ग्रामौ गच्छति इमं चामुं च, एवमेवैते आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं च। अमुष्मादादित्यात् प्रतायन्ते; ताः आसु नाडीषु सृप्ताः। आभ्यो नाडीभ्यः प्रतायन्ते; तेऽमुष्मिन्नादित्ये सृप्ताः" इति। तस्मान्निश्यपि रश्मिसंभवान्निशि मृतानामपि विदुषां रश्म्यनुसारेणैव ब्रह्मप्राप्तिरस्त्येव ॥ १७ ॥

इति रश्म्यनुसाराधिकरणम् ॥ ९ ॥

१४४. निशाधिकरणम् ४-२-१०

निशि नेतिचेन्न संबन्धस्य यावद्देहभावित्वात् दर्शयति च। ४। २। १८॥

इदमिदानीं चिन्त्यते—विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति, नेति।

यद्यपि निशायां सूर्यरश्मिसंभवात् रश्म्यनुसारेण गतिर्निशायामपि संभवति—तथापि निशामरणस्य शास्त्रेषु गर्हितत्वात् परमपुरुषार्थलक्षणब्रह्मप्राप्तिर्निशामृतस्य न संभवति। शास्त्रेषु दिवामरणं प्रशस्तम्, विपरीतं निशामरणम् (—) " दिवा च शुक्ल-

मार्गान्तरप्रतिक्षेपार्थतयैव एवकारसार्थक्यमुचितमि त्याशयेनाह **अनर्थकः** इति। **लक्ष्यते** अनुमीयते। सर्वदा रश्मिसत्त्वे कथं हेमन्ते उष्मानुपलम्भः। तदा रश्म्यभावे च रश्मिभिरेव याति विद्वानिति नियमो वा कथमित्यत्राह **हेमन्तादा**विति। **दुर्दिन** इवेति। मेघच्छन्नमहो **दुर्दिन**म्। 'शैशिरेष्विव दुर्दिनेषु' इति शाङ्करमपपाठः स्यात्; अर्थान्तरे वा। **सर्वदे**ति। महापथ इति पथो महत्त्वविशेषणं मार्गान्तरवत् कादाचित्कत्ववारणाय। तथा **प्रतायन्त** इति वर्तमाननिर्देशस्वारस्याच्च सार्वदिकत्वमिति भावः। श्रुतौ, **ताः ते** इति च रश्मिशब्दस्योभयलिङ्गत्वात्! **अस्त्येवे**ति। ननु रश्म्यनुसारेणैव ब्रह्मप्राप्तिरित्येतावदेव प्रकृतम्; **अस्त्येवे**ति किमर्थमेवकार इति चेत्—**रश्मिभिरेवे**त्येवकारश्रवणात् रश्म्यभावे ब्रह्मप्राप्तिर्नास्त्येवेति, न शंक्यमिति ज्ञप्तये। रात्रौ रश्म्यभावे प्रत्यूषं प्रतीक्ष्य यात्विति वा कस्मान्नाशंक्यते इति न वाच्यम्-'स यावत् क्षिप्येन्मनः, तावदादित्यं गच्छति' इति मरणानन्तरमविलम्बेनादित्यप्राप्तिकथनात् रश्मिषु सत्सु असत्सु च गतेरावश्यकत्वात्। अतोऽस्त्येव ब्रह्मप्राप्तिः। अतः उत्तराधिकरणद्वय इव तदभावशंकादेर्न प्रसक्तिः। उत्तरत्र तु विशेषप्रमाणमूला तथा शंकेति। ब्रह्मप्राप्तिरस्ति। तदत्रैव सूत्रे सिद्धमेव; नोपरि तदवकाशः या ब्रह्मप्राप्तिरस्त्येव। सा रश्म्यनुसारेणैवेति सिद्धान्त्यत इति कथनाच्च उत्तरसूत्रस्यापि रश्मिविषयकतया व्याख्यानं शांकरं निरस्तं भवति ॥ १७ ॥

रात्रौ रश्म्यभावप्रयुक्ता गत्यभावशंका कामं मा भूत्। निशामृतत्वप्रयुक्तस्तु गत्यभावो न वारयितुं पार्यते, हेतुव्यक्तेर्हेतुत्वस्य च संप्रतिपन्नत्वादिति शंका। भाष्ये **विपरीत**पदं गर्हितमित्यर्थे। प्रमाणवचने

पक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्" इति । दिवामरण-निशामरणयोः प्रशस्तत्वविपरीतत्वे चोत्तमाधमगतिहेतुत्वेन स्याताम् । अतो निशि मरण-मधोगतिहेतुत्वान्न ब्रह्मप्राप्तिहेतुरिति चेत्—

तन्न ; विदुषः कर्मसंबन्धस्य यावद्देहभावित्वात् । एतदुक्तं भवति—अनारब्धकार्याणा-मधोगतिहेतुभूतानां कर्मणां विद्यासंबन्धेनैव विनाशात्, उत्तरेषां चाश्लेषात् प्रारब्धकार्यस्य च चरमदेहावधित्वात् बन्धहेत्वभावात् विदुषो निशामृतस्यापि ब्रह्मप्राप्तिः सिद्धैव । दर्शयति च श्रुतिः, (छा. ६-१४ २) "तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये" इति । "दिवा च शुक्लपक्षश्च" इत्यादिवचनमविद्वद्विषयम् ॥ इति निशाधिकरणम् ॥ १० ॥

१४५. दक्षिणायनाधिकरणम् ४-२-११ ॥

## अतश्चायनेऽपि दक्षिणे । ४ । २ । १९ ॥

निशि मृतस्यापि विदुषो ब्रह्मप्राप्तौ यो हेतुरुक्तः, तत एव हेतोर्दक्षिणेऽप्ययने मृतस्य ब्रह्मप्राप्तिः सिद्धा ॥

अधिकाशङ्का तु—(तै. ना. ५२-अनु) "अथ यो दक्षिणे प्रमीयते, पितृणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति" इति दक्षिणायने मृतस्य चन्द्रप्राप्तिश्रवणात्

---

**विपरीत**मिति पदं रात्रिकृष्णपक्षदक्षिणायनरूपार्थे । ननु कर्मसंबन्धो यावद्देहभावीति किमुच्यते, याव-त्कर्म देहसंबन्धः प्राप्त इत्येव वक्तव्यत्वादित्याशंकायाम्—विवृणोति **एतदुक्त**मिति । अस्य वाक्यस्य प्रारब्धदेहसद्भावपर्यन्तं संचितकर्मसंबन्धः, तदवसाने कर्माणि धूयन्ते इत्येकोऽर्थः । यावान् देहः प्रारब्ध-कर्मकार्यतया प्रारम्भे परिगणितः तावत्पर्यन्तमेव कर्मसंबन्धः स्यादिति निशामृतदेहस्यान्तिमत्वे तदुपरि कर्माभाव एवेति चार्थः । तथाच निशि मृते संचितानां धुतत्वात् प्रारब्धकार्यस्य कर्मणोऽवसितत्वे गति-निरोधः कथमिति । युक्तिरुक्ता ; प्रमाणमप्याह दर्शयति चेति । रात्रिमरणगर्हणवचनविरोधं परिहरति **दिवे**ति । अविदुषां कर्मसद्भावात् गर्हितकालरूपकारणमादाय दुष्कर्म फलितुं प्रवर्तत इति भावः । न च नायमवसितकर्मा निशि मृतत्वादित्यनुमीयतां निशामरणनिन्दनस्मृत्यनुरोधेनेति शक्यम्—कर्मशेषे सत्येव निशामरणं भवतीति नियन्तुमशक्यत्वात् ; मरणस्य तत्कारणमात्रसापेक्षत्वात् । सति कर्मशेषे निशामरण-रूपकारणं दुष्कर्मफलौन्मुख्यापादकमित्येतावत एव स्वरसत्वात् । दक्षिणायनाद्यप्रशस्तकालमरणेऽपि मोक्षप्रतिपादकस्य वचनस्योत्तराधिकरणे वक्ष्यमाणत्वेन कालप्राशस्त्यस्याप्रयोजकत्वाच्च ॥ १८ ॥

अयनविषयेऽधिकाशङ्कायामधिकरणान्तरम् । **अथ य** इति । 'य एवं विद्वानुदगयने प्रमीयते' इति विदुष एव प्रस्तुतत्वात् तस्य देवलोकप्राप्त्या आदित्यसायुज्यवत्, दक्षिणायनमरणे पितृलोकप्राप्ति-पूर्वकचन्द्रमस्सायुज्यमुक्तम् । न चेयमातिवाहिकभूतचन्द्रप्राप्तिः ; दक्षिणायनमरणप्रयुक्तपितृलोकप्राप्तिपूर्वक-चन्द्रमस्सायुज्यरूपतया विलक्षणत्वात् । परीनैतीत्यन्तं बृहदारण्यकवाक्यम् । उपरि तत्र वाक्यम्, 'अथेममे-वाकाशमभिनिष्पद्यन्ते' इत्यारभ्य, 'त एतमेवानुपरिवर्तन्ते' इत्येवम् । **तेषां** चन्द्रं प्राप्तानां **तत्** कर्म

चन्द्रं प्राप्तानां च (बृ. ८२-१६) "तेषां यदा तत्पर्यवैति", (छा. ५-१०-५), "अथैतमेवाध्वानं पुनर्निवर्तन्ते" इति पुनरावृत्तिश्रवणात्, भीष्मादीनां च ब्रह्मविद्यानिष्ठानामुत्तरायणप्रतीक्षादर्शनात् दक्षिणायने मृतस्य ब्रह्मप्राप्तिर्न संभवति—इति।

परिहारस्तु—अविदुषां पितृयाणेन पथा चन्द्रं प्राप्तानामेव पुनरावृत्तिः; विदुषस्तु चन्द्रं प्राप्तस्यापि, "तस्माद्ब्रह्मणो महिमानमाप्नोति" इति वाक्यशेषात् तस्य दक्षिणायनमृतस्य चन्द्रप्राप्तिः ब्रह्म प्रेप्सतो (प्रपित्सतो) विश्रमहेतुमात्रमिति गम्यते। वाक्यशेषाभावेऽपि पूर्वोक्तादेव बन्धहेत्वभावात् विदुषश्चन्द्रं प्राप्तस्यापि ब्रह्मप्राप्तिरनिवार्या। भीष्मादीनां योगप्र-

यदा पर्यवैति समाप्नोति, अथाऽऽवर्तत इति तदर्थः। अथैतमेवेति तु छान्दोग्यम्। तत्पूर्ववाक्यभागस्तु, "तस्मिन् यावत्संपातमुषित्वा" इति। श्रुतिद्वयमपि पुनरावृत्तिपरम्। ब्रह्मविद्यानिष्ठानामिति। (अनु. २७४) 'संनिरुद्धस्तु तेनाऽऽत्मा सर्वेष्वायतनेषु च। जगाम भित्त्वा मूर्धानं दिवमभ्युत्पपात ह' इति मूर्धतो निष्क्रमणवर्णनात्; (२७३) 'त्वयाऽहं समनुज्ञातो गच्छेयं परमां गतिम्' इति कृष्णं प्रति तदुक्तेः, (भीष्म. ११९) 'महोपनिषदश्चैव योगमास्थाय वीर्यवान्। जपन् शान्तनवो धीमान् कालाकांक्षी स्थितोऽभवत्' इत्यतश्च ब्रह्मविद्यानिष्ठत्वं ज्ञायते। उत्तरायणप्रतीक्षायाश्च (११९) 'अन्तरिक्षे च शुश्राव दिव्या वाचः समन्ततः। कथं महात्मा गाङ्गेयः सर्वशस्त्रभृतां वरः। कालकर्ता नरव्याघ्रः संप्राप्ते दक्षिणायने', 'धारयिष्याम्यहं प्राणान् पतितोऽपि महीतले। उत्तरायणमन्विच्छन् सुगतिप्रतिकांक्षया, 'नाहं गन्ता कथञ्चन। दक्षिणावर्ते आदित्ये....गमिष्यामि स्वकं स्थानमासीत् यन्मे पुरातनम्। उदगायन आदित्ये....प्राणानाञ्च समुत्सर्गे ऐश्वर्यं नियतं मम।....यश्च दत्तो वरो मह्यं पित्रा तेन महात्मना। छन्दतस्ते भवेन्मृत्युरिति तत् सत्यमस्तु मे' इत्यादि, (अनु. २७३) 'अनुजानामि भीष्म त्वां वसून् प्राप्नुहि पार्थिव....पितृभक्तोऽसि राजर्षे मार्कण्डेय इवापरः' इति कृष्णवचनञ्चानुसंधेयम्। विश्रमहेतुमात्रमिति। मध्येमार्गप्राप्यकिञ्चिद्ब्रह्मविभूतिभोगहेतुमात्रम्, न तु मुख्यफलहेतुः; मोक्षस्यैवैनं प्रति मुख्यत्वात्। विश्रमशब्दोऽत्र न श्रमपरिहारपरः, श्रमस्याप्रसक्तेः। मार्गमध्ये किञ्चित्कालभावित्वात् तच्छब्दप्रयोगः। इयं चन्द्रप्राप्तिः धूमादिमार्गेण चन्द्रप्राप्तेः आतिवाहिकभूत-सर्वविद्वत्साधारणचन्द्रप्राप्तेश्च विलक्षणा। अस्य विद्याविशेषस्य चन्द्रादित्यान्यतरसायुज्यावान्तरफलपूर्वक ब्रह्मप्राप्तिः फलम्; न सर्वस्याः। शेषं परिष्कारे। वाक्यशेषाभावेऽपीति। चन्द्रमस्सायुज्यं तावत् न दक्षिणायनमरणफलम्; मरणस्य पुरुषकार्यत्वाभावात्; अविहितत्वाच्च। न च कर्मफलम्; कर्मणोऽप्रस्तुतत्वात्। अतो ब्रह्मविद्याफलमेव। तस्याश्च ब्रह्ममहिमप्रापकत्वम् उपरि वाक्यशेषाभावेऽपि, तस्यैवं विदुष इत्येतत्पूर्वभाविवाक्यत एव ज्ञातम्। तस्यैवमित्यादेः पृथग्विद्यात्वं न भवतीति पुरुषविद्याधिकरणे प्रागेव स्थापितम्। अतो मोक्षफलाया एव तस्याः आन्तरालिकमिदं फलमित्यवगमात् न पुनरावृत्तिप्रसक्तिः। ब्रह्मवित्तया तेन देहावसाने सर्वकर्मधूननात्; अर्चिरादिमार्गमध्यभावित्वाच्चादित्यसायुज्यस्येव चन्द्रमस्सायुज्यस्य; प्रारब्धकर्मणोऽपि क्षपितत्वात् बन्धहेत्वभावादिति भावः।

**भावात् स्वच्छन्दमरणानां धर्मप्रवर्तनाय उत्तरायणप्राशस्त्यप्रदर्शनार्थस्तथाविधाचारः ॥१९॥**

**ननु च विदुषो मुमूर्षून् प्रति पुनरावृत्तिहेतुत्वेन कालविशेषविधिर्दृश्यते,** (गी.८-२३-२४) **"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ । अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते । शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः" इति; तत्राह—**

**योगिनः प्रति स्मर्येते स्मार्ते चैते । ४ । २ । २० ॥**

---

तर्हि सुगतिप्राप्तये उत्तरायणप्रतीक्षा भीष्मकृता कुत इत्यत्राह **भीष्मेति । धर्मप्रवर्तनायेति ।** उत्तरायणप्राशस्त्यं शास्त्रघोषितमनुसृत्य, अन्तरिक्षे 'कथं महात्मा गाङ्गेयः कालकर्ता दक्षिणायने' इति दिव्या वाचः, 'भीष्मः कथं महात्मा सन् संस्थाता दक्षिणायने' इति हंसभूतर्षिकुलवाक्यञ्च निशम्य, अविद्वद्विषये उत्तरायणप्राशस्त्यस्य स्थितस्य स्थापनेन, धार्मिकस्य मरणमुत्तरायण एवेति धर्मस्थापनेन च लोकसंग्रहः कार्य इति विमृश्य योगप्रभावात् प्रतीक्षामकरोत् । किं योगप्रभावात् उत पितृकृतवरबलादिति चेत्—'धारयिष्याम्यहं प्राणान्....ऐश्वर्यं नियतं मम' इति स्वसामर्थ्यं प्रथममभिधाय, 'यश्च दत्तो वरो मह्यं पित्रा तेन महात्मना 'छन्दतस्ते भवेन्मृत्युः' इति पितृवरदानस्य समुच्चयनात् प्रभावस्य प्राधान्यम् । न च लोकसंग्रहार्थं प्रवृत्तस्यास्य, ब्रह्मविदामप्युत्तरायण एव मोक्ष इति भ्रान्तिजनकत्वात् लोकक्षोभकरत्वमेवापततीति शंक्यम्—अनेन स्वकीयपुरातनवसुपदप्राप्तेरेव प्रथमं क्रियमाणतया तत्फलार्थमुत्तरायणप्रतीक्षेत्येवावगतिसंभवेन तथाक्षोभायोगात् । ब्रह्मविदां विशेषज्ञतया पामरलोकत्वाभावेन तत्क्षोभप्रसक्त्यभावाच्च । स्वच्छन्दमरणेन अन्तेऽपि लोकसंग्रहः कार्य इत्येतावत एवेतःसिद्धेश्च । **सूत्रार्थस्तु—अतः** संबन्धस्य यावद्देहभावित्वादेव दक्षिणेऽप्ययने विदुषः शताधिकयोत्क्रमणं रश्म्यनुसारश्चेति । **चकारेण,** ज्योतिश्शास्त्रेण चरमत्वेन निर्णीतदेहभाजामपि दक्षिणायनादौ मरणदर्शनात्, 'यदु चैवास्मिन् शव्यं कुर्वन्ति, यदु च न' इति शव्यकर्माद्यभावेऽपि धर्मान्तरवैलक्षण्येन विद्याया मोक्षहेतुत्वावगमात् देशविशेषानपेक्षायाः प्रामाणिकत्वाच्च तद्वत् कालनियमोऽपि नेति ज्ञाप्यते ॥ १९ ॥

ननु उत्तरसूत्रेण सूत्रकारो वक्ष्यमाणपादार्थं प्रस्तावनां करोति । न पूर्वेण कश्चित् संबन्धः प्रतीयते इति शंकायामवतारयति **ननु चे**ति । कालविधानात् कालान्तरे न मोक्ष इति शंकायामिदं सूत्रमिति भावः । '**यत्र काले**' इति **काल**शब्दं गृहीत्वा शंकायाम्, '**नैते सृती**' इति **सृति**शब्दं गृहीत्वा समाहितं सूत्रकारेण **एते** इति । **स्मार्ते** इति । गतिचिन्तनरूपस्मृतेरेव शास्त्रविहितत्वात् गीतायामपि, '**जानन् योगी न मुह्यति**' इति योगिकर्तव्यचिन्तनोक्तेर्न कालविधिः । अत एव, अर्चिरादावुपक्रमस्थे कालान्यत्वस्य स्पष्टत्वात्, देवतात्वस्य वक्ष्यमाणत्वाच्च न कालपरत्वमिति भावः । **स्मार्ते** चिन्त्ये, चिन्त्यत्वेन श्रुत्यवगते । **स्मर्येते** गीतारूपस्मृतिवाक्येन स्मार्तत्वेन प्रतिपाद्येते ।

नात्र मुमूर्षून् प्रति मरणकालविशेषोपादानं स्मर्यते; अपितु योगिनः-योगनिष्ठान् प्रति स्मार्ते स्मृतिविषयभूते स्मर्तव्ये देवयानपितृयाणाख्ये गती स्मर्येते-योगाङ्गतयाऽनुदिनं स्मर्तुम्। तथा ह्युपसंहारः (गी. ८-२१, २६, २७) "नैते सृती पार्थ जानन् योगी मुह्यति कश्चन। तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन" इति। (गी. ८-२३-२४) 'अग्निर्ज्योतिः", "धूमो रात्रिः" इति च देवयानपितृयाणे प्रतिभिज्ञायेते। उपक्रमे च, "यत्र काले तु" इति कालशब्दः कालाभिमानिदेवतातिवाहिकपरः; अग्न्यादेः कालत्वासंभवात्। अतः, (ब्र. ८-२-२५) "तेऽर्चिषमभिसंभवन्ति" इति विहितदेवयानानुस्मृतिरत्र विद्यानिष्ठान् प्रति विधीयते, न मुमूर्षून् प्रति मरणकालविशेषः॥ इति दक्षिणायनाधिकरणम्॥११॥

इति श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये चतुर्थस्याध्यायस्य द्वितीयः पादः॥ २ ॥

---

धूमादिसृतेः कथं योगिचिन्त्यत्वमिति चेत्—योगिपदस्य, 'चतुर्विधा भजन्ते माम्' इत्युक्तचतुर्विधभक्तपरत्वात्, ऐश्वर्यार्थिनां तन्मार्गसत्त्वादिति टीका। मुमुक्षुर्योगी पितृयाणव्यावृत्ततयाऽर्चिरादिमार्गं जानीयादिति च पञ्चाग्निविद्याऽभिप्रैतीति नैतेसृती इति वाक्यमपि तावन्मात्राभिप्रायं स्यात्। गीताभाष्ये योगिपदं पुण्यकर्मसंबन्ध्युपलक्षकं लक्षकं वा यथायथमिति स्वीकृतम्। भगवद्भक्ते धूमादिमार्गगम्यफलार्थे तन्मार्गस्य संभवेऽपि, पुरुषश्चाधिदैवतमिति सर्वातिशयितमैश्वर्यं न तन्मार्गसापेक्षम्। कतिकति धूमादिमार्गं विनैव विमानमारुह्य गताः स्मर्यन्ते इति भाष्याशय इव॥

अत एव नत्र मुमुक्षुमात्रविषयतया यत्रकाले इत्यादिवाक्यजातमवतार्य, मध्ये अर्थान्वयार्थं योगिपदं पुण्यकर्मसंबन्धिपरतया व्याख्याय, योगीमुह्यतीत्यत्र योगिशब्दस्य तदुत्तरश्लोकस्थयोगिशब्दस्येव मुमुक्षुमात्रपरत्वमाविष्कृत्य, तेन गतिचिन्तनाय मार्ग एकः, अन्यश्च हेयत्वाय ज्ञायत इत्युक्तम्। तत्र भाष्यचन्द्रिके द्रष्टव्ये। अत्रापि सूत्रे योगिन इति तदनुरोधात मुमुक्षुमात्रग्राहि भवितुमर्हति। देवयानानुस्मृतेरित्युक्तेः। ऐश्वर्याद्यपेक्षोपासकानां पुण्यकर्मणामिव धूमादिमार्गचिन्त्यत्वमनपेक्षितञ्च।

अत्रावतारिकाभाष्यार्थ एवम्—कालोपक्रमात्, 'अग्निः', 'धूमः' इति श्लोकयोः मिथोव्यावृत्तकालमात्रविशेषोपसंहाराच्च योगिनो मुमुक्षोरेव आवृत्त्यनावृत्तिकारणत्वं कालविशेषेषु ज्ञापयितुमेव गीताप्रवृत्तिरिति। परिहारस्तु—तथा सति अग्निधूमोपक्रमस्यानावश्यकत्वात्, शुक्लकृष्णयोर्गतित्वव्यपदेशात्, सृती इति प्रयोगाच्च गतिविवेचनमेव तच्चिन्तनविधानशेषतया क्रियत इति। सूत्रे एते इति पदं कथम्। प्राक् गत्योरप्रस्तुतत्वादिति चेत्—अयनयोः पूर्वसूत्रतः स्मृतत्वात तद्विषये प्रश्ने सति एते इति तयोः चिन्तनीयत्वोक्तौ, तस्य कृत्स्नगतिचिन्तनबलादेव प्राप्तिसंभवात् कृत्स्ने गती उपलक्ष्येयाताम्। यद्वा, "नैते सृती" इति गीतास्थस्य एते इत्यस्य निर्देशोऽयम्। तत्रैव स्मार्तत्वबोधनात॥

इति श्रीवात्स्यश्रीशैल-सच्चक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु

श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे चतुर्थाध्याये द्वितीयः पादः॥

श्रीमते रामानुजाय नमः। शुभमस्तु॥

श्रीः ॥ श्रीमते रामानुजाय नमः ॥

## श्रीभगवद्रामानुजविरचिते
## श्रीशारीरकमीमांसाभाष्ये

चतुर्थाध्याये तृतीयः पादः

१४६. अर्चिराद्यधिकरणम् ४-३-१ ॥

### अर्चिरादिना तत्प्रथितेः । ४ । ३ । १ ॥

विदुष उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहाद् गत्युपक्रम उक्तः । तस्य गच्छतो मार्ग इदानीं निर्णीयते । तत्राश्रुतिषु मार्गप्रकाराः बहुधा आम्नायन्ते ; छान्दोग्ये तावत्, (छा. ४-१४-३) "यथा पुष्करपलाशे आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य ब्रह्मविद्यामुपदिश्याऽऽम्नायते, "अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च न, अर्चिषमेवाभिसंभवन्ति अर्चिषोऽहः अह्न आपूर्यमाणपक्षम् आपूर्यमाणपक्षात् यान् षडुदङ्ङेति मासांस्तान्, मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्, तत्पुरुषोऽमानवः । स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथः । एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति । तथाऽत्रैवाष्टमे. (छा. ८-६-५) "अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति । कौषीतकिनश्च देवयानमार्गमन्यथाऽधीयते, (कौ. १-अ. ३) "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति, स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इति । तथा बृहदा-

---

॥ श्रीः ॥ श्रीमते रामानुजाय नमः ॥

**भाष्यार्थदर्पणे चतुर्थाध्याये तृतीयः पादः**

विदुषो मुमुक्षोः स्थूलदेहे भवत् फलं निरूपितं पादद्वये क्रमेणोत्तरपूर्वाघाश्लेषविनाशः, अप्रशस्तकालेऽप्युत्क्रान्तस्य विद्याप्रभावात् सुषुम्नया निष्क्रम्य सूर्यरश्मिसंबन्ध इति । अथ पादद्वयेन स्थूलदेहादपेतस्य फलमुच्यते क्रमेण, अर्चिरादिनेत्वधीनब्रह्मलोकप्राप्तिः, तत्रापुनरावृत्तिकोऽनुभवप्रकारश्चेति । तत्र नेतारः के, तत्र कः क्रमः, नेतृस्वरूपं कीदृशम्, नेयं पदञ्च किमिति विचार्यतेऽत्र । तत्र क्रमविचारोऽधिकरणद्वये करिष्यते । प्राक् अर्चिरादिरन्यश्च नेता भवेदिति शंकायाम् अर्चिरादिनियम प्रथमाधिकरणे ।

**उदङ्** ऊर्ध्वं गच्छन् । उत्तरस्यां दिशि सूर्य उपर्युपरि गच्छति, दक्षिणस्यां क्रमेणाधः । अत एवोदीची अवाचीति दिशावुच्येते । **तत्पुरुष** इति । तदिति पृथक्पदमव्ययम् । तदेत्यर्थ. । **सः** विद्युदभिन्नः । **पुरुषः** विशिष्य भगवत्प्रेरितः । परमपदस्थत्वात् मानवावर्तसंबन्धी न भवतीत्यमानवः । मानवं मनुसंबन्धि ब्रह्माण्डम् । **आवर्तम्** अधोगतिहेतुम् । **अष्टमे** इति । अत्राऽऽदित्यमात्रमुक्तम्, नाधिकं किञ्चिदिति न पूर्णमुपात्तम् । अग्नेरादित्यस्य च प्राय उक्तावपि अन्यत् सर्वं विलक्षणमिति कौषीतकिवाक्यप्रदर्शनम् । लोकशब्दोऽप्यधिकः । पूर्ववैलक्षण्येन देवलोकपदेन मानसपदेन च द्वयं

रण्यके, (बृ. ८-२-१५) "य एवमेतद्विदुर्ये चेमे अरण्ये श्रद्धां सत्यमुपासते, तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षण्मासान् उदङ्ङादित्य एति, मासेभ्यो देवलोकं देवलोकादादित्यम्, आदित्याद्वैद्युतं वैद्युतात्पुरुषो मानसः स एत्य ब्रह्मलोकान् गमयति" इति। तत्रैव पुनरन्यथा, (बृ. ७-१८-१) 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति, स वायुमागच्छति। तस्मै स तत्र विजिहीते, यथा रथचक्रस्य खम्। तेन स ऊर्ध्वमाक्रमते। स आदित्यमागच्छति। तस्मै स तत्र विजिहीते, यथा आडम्बरस्य खम्। तेन स ऊर्ध्वमाक्रमते; स चन्द्रमसमागच्छति। तस्मै स तत्र विजिहीते, यथा दुन्दुभेः खम्" इत्यादि।

तत्र संशयः—किमर्चिरादिरेक एव मार्ग आभिः श्रुतिभिः प्रतिपाद्यत इति तेनैव ब्रह्म गच्छति विद्वान्; उत तस्मादन्येऽन्यत्र मार्गाः इति तैर्वाऽनेन वेत्यनियमः इति।

किं युक्तम्? अनियम इति। कुतः? अनेकरूपत्वान्नैरपेक्ष्याच्चेति। एवं प्राप्तेऽभिधीयते—अर्चिरादिना—इति। अर्चिरादिरेक एव मार्गः सर्वत्र प्रतिपाद्यते। अतोऽर्चिरादिनैव गच्छति। कुतः? तत्प्रथतेः—तस्यैव सर्वत्र प्रथितेः। प्रथितिः—प्रसिद्धिः; तस्यैव सर्वत्र प्रत्यभिज्ञानादित्यर्थः। प्रत्यभिज्ञानात् स एव मार्गः सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यत इति विद्यागुणोपसंहारवत् अन्यत्रोक्तानामन्यत्रोपसंहारः क्रियते। छान्दोग्ये तावत् उपकोसलविद्यायां पञ्चाग्निविद्यायां चैकरूप एवाम्नायते। वाजसनेयके च पञ्चाग्निविद्यायां

---

निर्दिशद् वाक्यान्तरमाह तथेति। वैद्युतं विद्युत्पुरुषम्। वैद्युतात्पुरुषो मानस इत्यस्यार्थः पञ्चमसूत्रे द्रष्टव्यः। अन्यथा अहरादीनामनुक्त्या वाय्वादेश्चेतनत्वख्यापनेन च। तस्मै इत्यादि। गच्छते विदुषे स्वमध्ये रथचक्रमध्यस्थाकाशसंमितं छिद्रं परिकल्प्य गमनायावकाशं ददातीत्यर्थः। एवं दुन्दुभिवाद्यान्तराल-आडम्बरवाद्यान्तरालतुल्यमित्युपरि अर्थो ग्राह्यः। एष देवपथो ब्रह्मपथ इति प्रयोगात् मार्गत्वं सिद्धमिति तत्र विचारणीयमंशमाह किमर्चिरादिरेक एव मार्ग इति। अर्चिराद्यातिवाहिकनेयत्वमार्गत्वात् अर्चिरादिमार्ग इति व्यवहारः। प्रत्यभिज्ञामुपपादयति छान्दोग्य इत्यादिना। मार्गाणां भिन्नभिन्नत्वे यत्र विद्यायां मार्गानुक्तिः, तत्र कतमस्य ग्रहणमित्यपि दुर्निष्कर्षं स्यात्। तद्य इत्थं विदुः ये चेमे अरण्ये इति सर्वविद्वत्साधारण्यस्यार्चिरादौ दर्शितत्वात् न्यूनाधिकोक्तिस्थलेष्वप्येतस्य घटनीयत्वादैक्यमेव। न च गुणोपसंहारस्याशक्यतया सर्वब्रह्मविद्यैक्यासंभववत् अत्र दोषः। सर्वोपसंहारेऽपि द्वादशैवार्चिरादय इति संख्यानात्। नन्वनियमाधिकरण एवार्चिरादेः सर्वसाधारण्यस्योक्तत्वात् पुनरुक्तमिदमधिकरणमिति चेन्न-तत्र क्वचिदेवाम्नानात् अन्यत्राभावात् चिन्तनस्य सर्वसाधारण्याभावः शङ्कितः। चिन्तनस्य सर्वसाधारण्यं वक्तुं तच्छेषतया, ये चेमे इति वाक्यमादाय गतिसाधारण्यं दर्शितम्। अत्र तु अनाम्नानस्थले सामान्यवचनेनार्चिरादिग्रहणेऽपि, यत्र, 'स वायुमागच्छति', 'सूर्यद्वारेण ते विरजाः प्रयान्ति', 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति वाय्वादित्वसूर्यादित्वादेरपि गत्यामवगतिः—तत्रार्चिरादित्वं नेति मार्गभेदशंका परिह्रियत इति विशेषः। पूर्वविचारितत्वादेव, 'ये चेमे' इति वाक्यं भाष्ये नोपात्तम्।

तथैवार्चिरादिः अल्पान्तरः आम्नायते । अतस्तत्रापि स एवेति प्रतीयते । अन्यत्रापि सर्वत्रा-ग्न्यादित्यादयः प्रत्यभिज्ञायन्ते ॥ १ ॥ इति अर्चिराद्यधिकरणम् ॥ १ ॥

१४७. वाय्वधिकरणम् ४-३-२ ॥

## वायुमब्दादविशेषविशेषाभ्याम् । ४ । ३ । २ ॥

अर्चिरादिनैव गच्छन्ति विद्वांस इत्युक्तम्; तत्रार्चिरादिके मार्गे छन्दोगाः मासादित्ययोरन्तराले संवत्सरमधीयते, (छा. ४-१५ ५) "मासेभ्यः संवत्सरं संवत्सरादादित्यम्" इति । वाजसनेयिनस्तु तयोरेवान्तराले देवलोकम्, (बृ. ८-२-१५) "मासेभ्यो देवलोकं देवलोकादादित्यम्" इति । उभयत्रापि मार्गस्यैकत्वादुभावुभयत्रोपसंहार्यौ । तत्र मासादूर्ध्वमभिहितयोः संवत्सरदेवलोकयोः पञ्चम्याऽभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽपि, "अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङ्ङेतिमासांस्तान्" इति अधिककालानां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेशदर्शनात् संवत्सरस्यैव मासादनन्तरं बुद्धौ विपरिवृत्तेः

---

सूत्रार्थस्तु—रश्म्यनुसारीत्युक्तो विद्वान् अर्चिरादिनैव गच्छति । तस्यार्चिरादिमार्गस्य सर्वत्र तत्तदेकदेशनिर्देशतः, 'ये चेमे अरण्ये' इति सर्वकोडीकारिवाक्यवशेन च प्रत्यभिज्ञानादिति ॥ १ ॥

अनुक्तानामुपसंहारेणैक्यमेष्टव्यमित्युक्तम् । उपसंहारप्रकारो विचार्यतेऽधिकरणद्वयेन । अधिकोक्तिर्यत्र तत्रानुक्तोपसंहारः प्रदर्श्यते, लाघवात् । उपसंहार्येषु पूर्वो वायुः प्रथमं विचार्यते, उत्तरो वरुणादिश्च पश्चात् । देवलोकादादित्यमिति वचनात् आदित्यात् पूर्वत्वं देवलोकस्य ज्ञायते । 'तेन स ऊर्ध्वमाक्रमते । स आदित्यमागच्छति' इति वाक्ये तेनेत्यस्य वायुच्छिद्रेणेत्यर्थकतया वायुरादित्यात् पूर्व इति बुध्यते । न च—स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति; स वायुलोकमिति अग्न्यानन्तर्यमेव वायोः किं न शंक्यमिति वाच्यम्—तत्र क्रमवाचकपदाभावात् तत्तद्वस्तुपाठक्रमेण क्रमस्य कल्प्यत्वात् श्रौते क्रमे सति तत्कल्पनानवकाशात् । तदत्र संवत्सरादित्यमध्यनिविष्टयोर्वायुदेवलोकयोः कीदृशः क्रम इति विचार्यते ।

नन्वत्र तयोर्विभिन्नव्यक्तित्वपक्षे क्रमानियमस्यैव कथनात् तदा क्रमविशेषस्यानिर्णेयत्वात वायुदेवलोकशब्दौ भिन्नार्थौ उताभिन्नार्थाविति विचार एव पर्यवसानम् । भेदपक्षे कस्याचिन्तयाऽपि कस्यचित्क्रमस्य निर्धारणीयस्याभावात् । तथा च वायुर्देवलोक इत्येव सूत्रेण भाव्यम्; न तु वायुमब्दादिति ॥ तर्हि शांकरादूह्यमानमस्तु । किं तदिति चेत्—अर्चिरादौ छान्दोग्ये विस्तरेणोक्ते मध्ये निवेश्यो वायुः किमग्निलोकानन्तरं निवेश्यः, उतादित्यात्पूर्वमिति विचारे पाठक्रमस्य वस्तुक्रमविशेषकल्पकमात्रत्वात् श्रौतक्रमवशात् आदित्यात् पूर्वमिति । इदमपि न स्वरसम् । तथासति वायोरादित्यमिति, आदित्यात्पूर्वं वायुमिति वा स्यात् । अब्दप्रस्तावस्य व्यर्थत्वात् । श्रौतक्रमे सति पाठक्रमस्य क्रमकल्पकत्वप्रसक्त्यभावेन शङ्कानवकाशाच्च । एवं वा किं न स्यात्—मासादित्यमध्ये मासेभ्यो देवलोकं देवलोकादादित्यमिति देवलोकः श्रुतः; मासेभ्यः संवत्सरं संवत्सरादादित्यमिति संवत्सरश्च । तत्र देवलोकशब्दः योगव्युत्पत्त्या

संवत्सर एव मासादूर्ध्वं निवेशयितव्य इति तत ऊर्ध्वं देवलोक इति निश्चीयते। अन्यत्र वाजसनेयिनः, (बृ. ७-१०-१) "यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खम्। तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इत्यादित्यात्पूर्वं वायुमधीयते। कौषीतकिनस्तु, (कौ. १-३) "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकम्" इत्यग्निलोकशब्दनिर्दिष्टादर्चिषः परं वायुमधी-

---

कथमपि संवत्सरवाची भवितुमर्हतीति पञ्चमीश्रुतक्रमाभङ्गेनोभयोरैककण्ठ्यम्। अतो वायुर्वा देवलोको वेति विचारस्य नावकाशः। निवेश्यश्च वायुः माससंवत्सरमध्ये निवेशं नार्हति तयोरैकराश्यादिति, अब्दात् पश्चादेव निविशते। अतो न विचारणीयं किञ्चिदस्तीति। इदमपि स्यात्—देवलोकशब्दः संवत्सरपरो वा वायुपरो वेति विचार्य, 'योऽयं पवते एष देवानां गृहाः' इति श्रुत्यनुसारात् वायुरेव देवलोक इति निर्णीयत इति। मूलस्वारस्याभावस्य सर्वत्र तुल्यत्वात्। यदि देवानां गृहा इति वचनसत्त्वे कथं संदेह इति मन्यते, तर्हि वायुदेवलोकशब्दभिन्नार्थत्वसंदेहानवकाशे भाष्यदर्शिता रचनाऽपि न भवत्येवेति—

उच्यते—**शांकरे** एतदधिकरणान्ते—वायुदेवलोकयोर्मध्ये कः क्रमः? यद्यनियमः, तर्हि वायुमब्दादिति व्यवस्थापनं कथमित्याशंक्य, "आदित्यानन्तर्याय देवलोकात् वायुमभिसंभवेयुः। वायुमब्दादिति छन्दोगश्रुत्यपेक्षयोक्तम्" इति निगमितम्। तेन सूत्रोक्तः क्रमो न मुख्य इत्युक्तं भवति; अब्द-देवलोकवाय्वादित्यक्रमस्य तदिष्टत्वात्। इदमयुक्तमित्युपपादनाय वायुदेवलोकैक्येन सूत्रार्थसंरक्षणायैवं भाष्ये विचारः प्रवर्तितः। भाष्य एव संवत्सरवत् देवलोकस्य मासादित्यमध्यनिवेशाविशेषस्य ज्ञापितत्वात् संवत्सरदेवलोकैक्यशंकाया अप्यवसरोऽदर्शि। 'संवत्सरः खलु वै देवानां पूः' इति श्रुतिरपि **टीकायामुपात्ता**। 'एत एव लोकाः यदहोरात्राणि—संवत्सराः' इति च **भाष्ये** (४-३-४)। तस्मात् पूर्णपूर्वपक्षरीतिरेवम्—

वायुदेवलोकयोर्भेदस्वीकारे क्रमानियम आपद्यते। कोऽसौ देवलोक इत्यनिर्धारणञ्च। वस्तुविकल्पश्चायुक्तः; चिन्तनविकल्पे चाष्टदोषदुष्टता। अतो योगव्युत्पत्त्या कथञ्चिदैक्यादरणे कार्ये संवत्सरदेवलोकैक्यमेव किं न स्यात्। एवञ्च मासेभ्यः संवत्सरं संवत्सरादादित्यमित्यनेनैकार्थ्यम्, मासेभ्यो देवलोकं देवलोकादादित्यमित्यस्य। अस्तु; वायुनिवेश आदित्यात प्राक् भवत्येवेति चेन्न-संवत्सरादादित्यमिति श्रौतक्रमभंगात्। यथा हि माससंवत्सरमध्ये वायुर्न निविशते, कालत्वेन मासेन संवत्सरस्य संनिकर्ष इति शीघ्रोपस्थितेः-तथा संवत्सरेणादित्यस्य संनिकर्षः प्रसिद्धः। तद्गतेरेव मासर्त्वादिकालपरिच्छेदकत्वात्। श्रुतिश्च, 'संवत्सरोऽसावादित्यः' इत्यादिर्बहुप्रकारा। तस्मात् संवत्सरादित्यमध्ये तस्य न प्रवेशः। अतः, अग्निलोकमागच्छति स वायुलोकमिति कौषीतकिपाठक्रमात् अर्चिषः पश्चादेव वायुः। अग्निवाय्वोर्भूम्यन्तरिक्षदेवतात्वेन संनिकर्षात् सखित्वाच्च। वाय्वादित्ययोरन्तरिक्षस्वर्गदेवतयोरप्येवं संनिकर्षोऽस्ति। परं तत्र वाय्वनन्तरमादित्यः स्वकार्याहःपक्षादिसर्वकालपूर्वकं गृह्यत इत्यस्त्येव श्रुतक्रमे औचित्यम्।

**यते। तत्र कौषीतकिनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायोर्वाजसनेयिनाम्, "तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इत्यूर्ध्वशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयसा आदित्यात्पूर्वं प्रवेशो निश्चीयते। अत आदित्यात्पूर्वं संवत्सरादूर्ध्वं देवलोको वायुश्च प्राप्तौ।**

**तत्रेदं चिन्त्यते—किं देवलोको वायुश्चार्थान्तरभूतौ यथेष्टक्रमेण विद्वान् अभिगच्छेत्, उत अनर्थान्तरत्वेन संवत्सरादूर्ध्वं देवलोकं सन्तं वायुमभिगच्छेत्—इति। किं युक्तम्?**

---

वायोरूर्ध्वमादित्य इति बृहदारण्यकं तु संवत्सरादादित्यमिति औचित्यसहकृतश्रौतक्रमविरोधात् पारम्परिकक्रमपरमेव। तद्बलात् वायुर्वरुणादिवत् आदित्यात् पश्चान्न भवतीत्येतावत् सिद्ध्यति। अतः संवत्सरदेवलोकयोरैक्यात् अग्नेरनन्तर एव वायुरिति।

अत्र प्रतिविधीयते **वायुमब्दा**दिति। कौषीतकिपाठक्रमो न क्रमकल्पनार्हः, स वरुणलोकं स आदित्यलोकमिति व्युत्क्रमदर्शनात्। बृहदारण्यके, 'तेन स ऊर्ध्वमाक्रमते' इति वाय्वानन्तर्ये आदित्यस्य श्रुते तर्कानुग्रहोऽप्यस्ति। 'प्राणो ह्येष य एष तपति' (२-२) इत्यैतरेयम्। 'आदित्यो ह वै बाह्यः प्राण उदयति एष ह्येनं चाक्षुषं प्राणमनुगृह्णानः' इति प्रश्नः। कालभिदाहेतुभूते ज्योतिश्चक्रे प्रधानभूतयोः सूर्यः प्रसक्तः। तद्गतिहेतुश्च, 'सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह। वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै' इत्युक्तो वायुः। अहरादिकालरूपकार्यकथनानन्तरं तद्धेतुगणनावसरे वायुसूर्यचन्द्रमध्ये स प्राथम्यमर्हतीति अब्दसूर्यमध्यगणनीयोऽयम्। एवम्, 'तेन स ऊर्ध्वमाक्रमते' इति वाय्वानन्तर्यमादित्ये श्रुतम्, संवत्सरादादित्यम् इति संवत्सरानन्तर्यञ्च। संवत्सरादित्ययोरिव वाय्वादित्ययोरपि संनिकर्षस्योपपादितत्वात् किं संवत्सरादित्यवगतक्रमभंगो युक्तः, किं वा ऊर्ध्वमित्यवगतवाय्वानन्तर्यक्रमभंग इति विचारे अन्त्यपक्षे अर्चिषोऽहरिति प्रथमश्रुतक्रमभङ्ग इति दोषः। उपक्रमस्थपञ्चम्यर्थाभङ्गेन यावदर्थवर्णनं सुकरम् तावत् गत्वा, यत्र ऊर्ध्वमिति वचनाभङ्गायागत्या क्रमो भञ्जनीयो भवति तत्रैव तदिष्टिरिति युक्तम्। अतः संवत्सरादादित्यमित्यत्रैवान्यथाकरणमुपपद्यते। एवञ्च देवलोकशब्दस्य संवत्सरार्थकत्वे देवलोकादिति पञ्चम्यर्थभङ्गः; वाय्वर्थकत्वे च मासेभ्यो देवलोकमिति पञ्चम्यर्थभंगः। तत्र वायुसंवत्सरयोर्मध्ये कतरस्य देवलोकत्वं समुचितमिति समीक्षायां काले लोकरूपदेशत्वकथनापेक्षया वायौ तत्कथनं युक्तम्। उक्तञ्च **टीकायाम्** काले देवपुरत्वमवास्तवम्. ज्योतिर्मयकृत्स्नवैमानिकदेवतागणस्य वायुपाशधृतत्वात् वायौ देवगृहत्वं वास्तवमिति। एवम**विशेषदेवलोकशब्द**-**विशेषवायुशब्दाभ्यां** वायौ आदित्यपूर्वत्वावगमात् अब्दात् पश्चादेव वायुः। सूत्रे अविशेषपदेन देवलोकशब्दस्य संवत्सरसाधारण्यस्यापि ज्ञापनात् पूर्वोक्तपूर्वपक्षप्रकारसूचनं भवतीति।

**पाठक्रमात् बलीयसे**ति। पाठकल्प्यात् क्रमात् क्लृप्तकल्प्ययोर्मध्ये क्लृप्तं बलीय इति न्यायेन बलवत्तरभूतेनेत्यर्थः। संवत्सरादिति पञ्चम्युक्तः श्रौतक्रमः। संवत्सरादादित्यमभिसंभवन्तीति आदित्यप्राप्तेः संवत्सरापादानकत्वस्य पञ्चम्युक्तत्वात्। अपादानत्वञ्च विभागावधित्वम्; यद्देशसंयोगनाशजन्यः उत्तरदेशसंयोगः, तत्त्वम्। तत्र जन्यजनकभावघटनात् एतत्प्राप्तेः पूर्वत्वमन्यप्राप्तेः पश्चात्तनत्वञ्च ज्ञायत इति।

भिन्नार्थत्वम्; प्रसिद्धेः। भिन्नार्थत्वे चोर्ध्वशब्देन पञ्चम्या चोभयोः संवत्सरादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वात्, विशेषाभावाच्च यथेष्टमिति प्राप्ते—उच्यते—वायुशब्दात्-इति। वायुं संवत्सरादूर्ध्वमभिगच्छेत्। कुतः? अविशेषविशेषाभ्यां वायोरेव निर्दिष्टत्वात्। देवलोकशब्दो हि अविशेषेण-सामान्येन देवानां लोक इत्यनेन रूपेण वायुमभिधत्ते। "स वायुमागच्छति तस्मै स तत्र" इति वायुशब्दो विशेषेण वायुमभिधत्ते। अतो देवलोकवायुशब्दाभ्याम् अविशेषविशेषाभ्यां वायुरेवाभिधीयत इति संवत्सरादूर्ध्वं वायुमेवाभिगच्छेत्। कौषीतकिनां वायुलोकशब्दश्चाग्निलोकशब्दवत् वायुश्चासौ लोकश्चेति व्युत्पत्त्या वायुमेवाभिधत्ते। वायुश्च देवानामावासभूत इति अन्यत्र श्रूयते, (जै. उपनि. ब्रा. ३-१.) "योऽयं पवते एष[एव] देवानां गृहाः" इति ॥ २ ॥ इति वाय्वधिकरणम् ॥ २ ॥

## १४८. वरुणाधिकरणम् ॥ ४-३-३ ॥

### तटितोऽधि वरुणः संबन्धात् । ४ । ३ । ३ ॥

कौषीतकिनाम्, "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति; स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इत्यत्राग्निलोकशब्दस्यार्चिःपर्यायत्वेन प्राथम्यमविगीतम्। वायोश्च संवत्सरादूर्ध्वं निवेश उक्तः। आदित्यस्याप्यत्रप्राप्तपाठक्रमबाधेन, "देवलोकादादित्यमादित्याद्विद्युतम्" इति वाजसनेयकोक्तश्रुतिक्रमात् देवलोकशब्दाभिहिताद्वायोरुपरि निवेशः सिद्धः। इदानीं वरुणेन्द्रादिषु चिन्ता। किमेते वरुणादयो यथापाठं वायोरूर्ध्वं निवेशयितव्याः, आहोस्विद्विद्युतोऽधीति विशये—अर्चिःप्रभृतिषु

---

श्रुति-अर्थ-पाठ-स्थान-मुख्य-प्रवृत्त्याख्यानि षट् क्रमनियामकप्रमाणानि पूर्वमीमांसापञ्चमाध्यायोक्तानि। तत्र पूर्वपूर्वं बलीयः। अतः पाठात् श्रुतिर्बलीयसीति। यथेष्टमिति। एवं वाय्वानन्तर्यनियम आदित्ये माऽस्तु इति कथयति, यदि देवलोकशब्दे योगव्युत्पत्तिरिष्यते, वायोरत्र नैवावकाश इति निगूढम्।

देवानां लोक इति। देवानां गृहा इत्येतदनुरोधायेदम्। देवश्चासौ लोकश्चेति व्युत्पत्तावपीष्टसिद्धिः। अविशेषविशेषाभ्यामित्यविशेषस्य प्रथमग्रहणं तस्य पूर्वपक्षेऽप्युपयोगात्। वायुश्च देवानामावासभूत इत्यन्यत्रेति। चकारेण संवत्सरेऽपि देवलोकत्वस्य पूर्वपक्षीष्टस्य सूचनम्। भूतपदेन वायोरावासत्वं संवत्सरस्येव नात्यन्तोपचरितमिति सूच्यते। अन्यत्रेत्यत्र प्रकृतोपनिषद्भ्योऽन्यत्र, 'संवत्सरो वै देवानां पूः' इतिश्रुतेरन्यत्रेत्यर्थद्वयमभिसंहितमिति परिशीलने भाष्यग्रन्थसिद्ध एव पूर्वापूर्वपक्षप्रकारः।

वायोरव्यवहितपरत्वसिद्धावपि वायोरूर्ध्वमादित्योक्त्या तदव्यवहितपरत्वमादित्यस्य न संभवति, वरुणेन्द्रप्रजापतीनां मध्ये निवेश्यत्वादिति शंकया संगतिः। पाठक्रमबाधेनेति। स वायुलोकं स वरुणलोकमिति पाठप्राप्तस्य वरुणे वाय्वानन्तर्यस्य बाधेनेत्यर्थः। सिद्धः स्वरसप्रतीतः। अस्यैव मुखान्तरेण पुनराक्षेप इहेत्याशयेनाह इदानीमिति। अप्राप्तौ चेत्यस्य वैयर्थ्येऽन्वयः। 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायात्, ऊर्ध्वमिति, देवलोकादादित्यमिति च श्रौतक्रमत्यागेन पाठक्रम आदरणीय इति भावः।

सर्वेषु "अर्चिषोऽहः" इत्यादिश्रुतिक्रमोपरोधात्, विद्युतः परस्ताच्च, "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति विद्युत्पुरुषस्य ब्रह्मगमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ चोपदेशावैयर्थ्यायावश्यं कस्यचिद्बाध्यत्वे, पाठक्रमानुरोधेन वायोरनन्तरं वरुणो निवेशयितव्यः। वाय्वादित्ययोः क्रमस्य बाधितत्वेनेन्द्रप्रजापती अपि तत्रैव निवेशयितव्यौ इति प्राप्ते उच्यते—तडितोऽधि वरुणः इति। वरुणस्तावत् विद्युत उपरिष्टान्निवेशयितव्यः। कुतः? संबन्धात्—मेघोदरवर्तित्वात् विद्युतो वरुणेन संबन्धो लोकवेदयोः प्रसिद्धः। एतदुक्तं भवति—वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशयितव्यत्वे सति पाठक्रमादर्थक्रमस्य बलीयस्त्वात् विद्युतोऽधि वरुणो निवेशयितव्यः; ततश्च अमानवस्य गमयितृत्वं व्यवधानसहमित्यवगम्यते। तस्य च व्यवधानसहत्वादिन्द्रादेश्चोपदिष्टस्यावश्यनिवेशयितव्यस्य वरुणादुपर्युपदिष्टत्वात् आगन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादिर्निवेशयितव्य इति॥ ३॥ इति वरुणाधिकरणम्॥ ३॥

---

नन्वेवं स आदित्यलोकं स इन्द्रलोकमिति पाठक्रममादृत्य आदित्याच्चन्द्रमसमिति श्रौतक्रमोऽपि भञ्जनीय इति वा, तत्रैव वरुणो निवेश्यतामिति वा न शंक्यमित्याशयेनाह **वाय्वादित्ययो**रिति। प्रथमश्रुतवरुणानुरोधेन प्रथमक्रमभंगे कृते क्रमद्वयाभंगाय उपरिश्रुतयोरिन्द्रप्रजापत्योरप्यत्रैवाकर्ष इति भावः।

सूत्रे तटितो वरुणमित्यनिर्देशः, विदुषः वरुणप्राप्तावपि तटित्त्यागाभावात्; वरुणस्याप्रधानत्वाच्च। अधिशब्दप्रयोगः तडिद्वरुणयोः संबन्धे सति वरुणस्तटितः प्रागेव कस्मान्न निविशत इति शंकापरिहारार्थः। चन्द्रमसो विद्युतमिति श्रौतक्रमाभंगाय विद्युतः परस्तात् वरुणादिरिति भावः। ननु संबन्धसद्भावमात्रेण पाठक्रमभञ्जनं न न्याय्यम्। अमानवानन्तरं वरुणादिनिवेशे अमानवस्य ब्रह्मप्रापकत्वश्रवणविरोधश्चेत्यत्रोपपादयति **एतदुक्तं भवती**ति। **अर्थक्रमस्ये**ति। नन्वग्निहोत्रयवागूपाकयोरिवात्र प्रथमपठितस्य वरुणस्य चरमायास्तटितश्च, प्राप्तौ पौर्वापर्यमर्थतः कथमवगम्यत इति चेत्—मेघोदरोत्पन्ना बहिः प्रसृता विद्युत् गन्त्रा प्रथमं प्राप्यते, उदरस्थं जलं तदन्तर्देवता वा पश्चादेवेति। तर्हि चन्द्रमण्डलादूर्ध्वस्याऽऽदित्यस्य चन्द्रात् पूर्वत्वं कथमिति चेत्—श्रौतक्रमाविरोधाय तत्र चन्द्रदेवतायाः पश्चात्प्रापकत्वमिष्यते। न त्विह स्वरसप्रतीतभङ्गः; किंतु देवलोकादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतमिति श्रौतक्रमरक्षणमेवेति। **व्यवधानसह**मिति। वरुणागमनात् प्राक् विद्युतोऽमानवस्य प्रापकत्वं निर्बाधम्। तत् चन्द्रमसो विद्युतमित्यतोऽवगतम्। 'स एनान् ब्रह्म गमयती'त्यपि नानुपपन्नम्; वरुणादीनां किञ्चिद्दूरमेव नेतृतया तदनन्तरममानवस्यैवाऽऽन्तं नेतृत्वात्। मध्येऽन्यसहकृतो न भवतीति तु न वाक्यगम्यम्। अतस्तस्मिन्नेतरि सत्येव वरुणादयोऽपि स्वकृत्यं विधाय धन्या बुभूषन्तीति तद्द्वाराऽप्यमानव उपचरतु; किं तेनेति भावः। **वरुणादुपरी**ति। वरुणलोकं स आदित्यलोकं स इन्द्रलोकमिति मध्ये आदित्यपाठेऽपि वरुणोपर्येव हीन्द्रादिपाठः; न पूर्वमिति। **आगन्तूना**मिति। भोजनार्थमागतेषु यथायथमुपविष्टेषु पश्चादागताः पूर्वोपविष्टपुरुषानन्तरमेवोपवेश्या भवन्ति; न तु उपविष्टोत्थापनम्। अत एव, 'अग्नये कृत्तिकाभ्यः

१४९. आतिवाहिकाधिकरणम् ॥ ४-३-४ ॥

आतिवाहिकास्तल्लिङ्गात् । ४ । ३ । ४ ॥

इदमिदानीं चिन्त्यते, 'किमर्चिरादयो मार्गचिह्नभूताः, उत भोगभूमयः, अथवा विदुषां ब्रह्म प्रेप्सतामतिवोढारः इति ।

किं तावत् युक्तम्? मार्गचिह्नभूता इति । कुतः? उपदेशस्य तथाविधत्वात् । दृश्यते हि लोके ग्रामादीन् प्रति गन्तॄणामेवंविधो दैशिकैरुपदेशः—'इतो निष्क्रम्य, अमुकं वृक्षममुकां नदीममुकं च पर्वतपार्श्वं गत्वाऽमुकं ग्रामं गच्छ' इति ।

अथवा भोगभूमय एताःस्युः, कालविशेषतया प्रसिद्धानामहरादीनां मार्गचिह्नत्वानुपपत्तेः । अन्यस्य च मार्गचिह्नभूतस्यैतेषामनभिधायकत्वात् । भोगभूमित्वं च, (—) "एत एव लोकाः यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सराः" इत्यहरादीनां लोकत्ववचनादुपपद्यते । अत एव च कौषीतकिनः, (कौ. १-३) "अग्निलोकमागच्छति" इत्यादिना लोकशब्दानुविधानेनार्चिरादीन् पठन्तीति ।

एवं प्राप्ते ब्रूमः—आतिवाहिकाः इति । विदुषामतिवाहे परमपुरुषेण नियुक्ताः आतिवाहिकाः देवताविशेषा एतेऽर्चिरादयः । कुतः? तल्लिङ्गात् अतिवहनलिङ्गात् । अतिवहनं हि गन्तॄणां गमयितृत्वम् । गमयितृत्वं च "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति उपसंहारे श्रूयमाणं पूर्वेषामप्यविशेषश्रुतानां स एव संबन्ध इति गमयति । वदन्ति चार्चिरादयः शब्दाः अर्चिराद्यात्मभूतान् अभिमानिदेवताविशेषान्, (यजु. ५-५) "तं पृथिव्यब्रवीत्" इतिवत् ॥

---

पुरोडाशमष्टाकपालं निर्वपेत्' इति नक्षत्रेष्टौ दर्शपूर्णमासविकृतौ, 'सोऽत्र जुहोति अग्नये स्वाहा' इत्येवमुपदिष्टाः उपहोमाः अव्यवधानेन प्रत्यक्षपठिता अपि प्रकृत्युत्तरक्रियमाणातिदिष्टनारिष्टहोमानन्तरमेवानुष्ठेया इति जैमिनिना आत्रेयाशयोपमर्देन बादरायणपुरस्कारेणैवोक्तम्, "अन्ते तु बादरायणः तेषां प्रधानशब्दत्वात्" (५-२-१९.) इति सूत्रेण । आगन्तुशब्दः पू. ५-३-७ सूत्रे द्रष्टव्यः । तत्र, 'अन्ते वा तदुक्तम्' इति सिद्धान्तसूत्रमुपहोमाधिकरणपरामर्शीति तदेवेहोदाहरणम् । इन्द्रानन्तरः प्रजापतिरित्यर्थक्रमोऽप्यस्मिन् । एवमर्थक्रमविमर्शे अब्दोपरि वायुविद्युद्वरुणचन्द्रसूर्येन्द्रप्रजापतय इति वाऽन्यथा वा सूत्राविरोधेन क्रमसंभावनाऽपि श्रौतक्रमविरोधान्नाद्रियते ॥ ३ ॥

आतिवाहिका इति । उक्ताग्न्यादिस्वरूपशोधनमवसरसंगत्या क्रियते । उक्तक्रमविषये आक्षेपोऽपि द्रष्टव्यः । अत्र – अहरादीनां कालत्वात् एकस्मिन् अन्यस्यान्तर्गतत्वाच्च न तेषां क्रमप्राप्यता । संवत्सरकालं स्थित्वा पश्चात् मुक्तिमेनीत्युक्तौ, 'स यावत् क्षिप्येन्मनः, तावदादित्यम्' इति वचनविरोधश्च । वाय्वादित्यचन्द्रविद्युद्वरुणक्रमोऽप्ययुक्तः; उत्तरोत्तरस्योपरितनदेशत्वाभावादित्याक्षेपः । कालदेशादिरूपार्थत्यागेन सर्वेषां तत्तदभिमानिदेवतारूपातिवाहिकभावान्न दोष इति समाधिः । अमानवे तथाभूते सति वरुणादीनां निवेशो न युक्त इत्यमानवोऽन्त एव स्यादिति चाक्षेपः; गुणसूत्रेण तत्परिहारः ॥ ४ ॥

**यद्येवम्, "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति वैद्युतस्यैव पुरुषस्य ब्रह्मगमयितृत्वश्रुतेर्विद्युतः परेषां वरुणादीनां कथमातिवाहिकत्वेनान्वय** इत्यत्राह—

वैद्युतेनैव ततस्तच्छ्रुतेः । ४ । ३ । ५ ॥

ततः **विद्युत उपरि, वैद्युतेनामानवेनैवातिवाहिकेन विदुषामाब्रह्मप्राप्तेर्गमनम् । कुतः ?** तच्छ्रुतेः **"स एनान् ब्रह्म गमयति" इति तस्यैव गमयितृत्वश्रुतेः । वरुणादयस्त्वनुग्राहका इति तेषामप्यातिवाहिकत्वेनान्वयो विद्यत एव ॥ ५ ॥** इति आतिवाहिकाधिकरणम् ॥ ४ ॥

---

मार्गचिह्नत्वभोगभूमित्वपक्षयोरिव आतिवाहिकत्वपक्षेऽप्ययुक्तिं शङ्कते **यद्येव**मिति । तर्हीति शेषः । 'अमानवः स एनान् ब्रह्म गमयति' 'वैद्युतात् पुरुषो मानस एत्य ब्रह्मलोकान्' इति वाक्ययोः ब्रह्मप्रापकत्वेनोक्तोऽमानवो मानसश्च विद्युदभिन्नः । स एव सूत्रकारेण वैद्युतपदेन प्रापकत्वेनोक्तः; अन्यत्वे श्रुतिविरोधप्रसंगात । तर्हि 'वैद्युतात् पुरुषो मानस' इति पञ्चमी कथमिति शंका स्यात् । तत्परिहारमपि कृत्वाऽयमर्थ एवादरणीय इति ज्ञापनार्थमेव सूत्रे **एव**कारेण सह **तत** इत्यपि प्रयोगः । **एव**कारो वरुणादीनां प्राधान्यं व्यवच्छिनत्ति । श्रौती पञ्चमी सुनिर्वहेति ज्ञापनाय स्वयमपि **तत** इति प्रयुक्तम् । **तत्**पदं तदितोऽधीति प्रागुक्ततदित्परामर्शीति मन्येत **विद्युत** इति भाष्यदर्शने । वस्तुतः चन्द्रमसो विद्युतमिति विद्युत्पदस्मारणाय तथा भाषितम् । वैद्युतपदोक्तस्यैव तु **अत** इति पदेनापि ग्रहणम् । इदं **सारे** व्यक्तम् । तथा च विद्युत्पदस्याऽऽतिवाहिकदेवतापरत्वात् वैद्युतमानसामानवपदान्यपि तदर्थकान्येवेति ॥ कथममानवं वैद्युतपदेन गृह्णाति सूत्रकारः; अन्यग्रहण एव हि श्रुतिस्वारस्यमिति न शंकनीयम् । पूर्वं, विद्वांसं कर्तृत्वेन परिगृह्य, अर्चिषोऽहः—चन्द्रमसो विद्युतम् इतिवत् विद्युतोऽमानवमिति चेदश्रोष्यत, नूनममेस्यत । इह तु भंग्यन्तरमादृत्य विद्युतं प्राप्तं मुमुक्षुममानवो ब्रह्म गमयतीत्युक्त्या विद्युद्देशे तदुपरि च तस्य नेतृत्वप्रतीत्या 'सः' इति अभेददर्शिपदसत्त्वाच्च विद्युदभिमानिदेवतात्वेनाप्यमानव एव ग्राह्य इत्यवसायात् सूत्रकारस्तं वैद्युतपदेन निर्दिदेशेममर्थं गमयितुम् । अतः वैद्युतो यो नेतृत्वेन ज्ञातः तत्प्रभृति आन्तं स एवेति वैद्युतादिति पञ्चम्यन्तश्रुतिवाक्यार्थः । सूत्रे **तत** इति, भाष्ये **विद्युत उपरि** इति, सारे **वैद्युतपुरुषात् परस्ता**दिति, सारावलौ तस्माच्चेनेत्यत्र **तस्मा**दिति, श्रुतौ **वैद्युता**दिति च पञ्चम्याऽयमर्थवर्णनप्रकारो ज्ञाप्यते—योऽयमार्चिरादिवत कश्चिद् वैद्युत उक्तः तदुपरि को गमयितेति चेत्—तदुपरि स एव, अमानवत्वात्, तदर्थं भगवता मनसा सृष्टत्वेन मानसत्वात्, **एत्ये**ति तस्य ब्रह्मलोकादिहैतदर्थमागन्तृत्वश्रवणाच्चेति सत्स्वपि वरुणादिषु अयमेव प्रधाननेता, अन्यप्रसक्तिरहिते ब्रह्माण्डोपरितनप्रदेशेऽप्ययमेवेति । तथा च वैद्युतनेयप्रदेशं परिमितं मनसिकृत्य तदुपरितनदेशावच्छेदेन नेतृजिज्ञासायाम्, तथादेशभेदग्रहणेन समाधानामिति । **परमपदसोपाना**दिग्रहणेनात्र वक्तव्यं सर्वं बृहदारण्यक (८-२) **परिष्कारेऽस्माभि**रुक्तं मुखान्तरेणैवमिह विशदीकृतम् ॥ ५ ॥

विदुषो गतिर्विचारिता । गन्तव्यमथ विचार्यते । गन्तव्यप्राप्तेश्चोपासनाधीनत्वात् गन्तव्ये विवादे सति तत्क्रतुनयादुपास्येऽपि विवादः प्राप्नोति । यद्यप्युपास्यः सत्यत्वादिगुणविशिष्टो नारायणः परं

## १५०. कार्याधिकरणम् ४-३-५ ॥

### कार्यं बादरिरस्य गत्युपपत्तेः । ४ । ३ । ६ ॥

**अर्चिरादिनैव गच्छति विद्वान्; अर्चिरादिरमानवान्तश्च गणः आतिवाहिको विद्वांसं ब्रह्म गमयतीत्युक्तम् । इदमिदानीं चिन्त्यते । किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान्नयति, उत परमेव ब्रह्मोपासीनान्, अथ परं ब्रह्म उपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्च -इति विशये—**

**कार्यमुपासीनानेव गमयतीति बादरिराचार्यो मन्यते । कुतः? अस्य—हिरण्यगर्भमुपासीनस्यैव गत्युपपत्तेः । न हि परिपूर्णं सर्वज्ञं सर्वगतं सर्वात्मभूतं परं ब्रह्मोपासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते; प्राप्तत्वादेव । नित्यप्राप्तपरब्रह्मविषयाविद्यानिवृत्तिमात्रमेव हि**

---

ब्रह्मेति निर्णीतं गुणोपसंहारपादे—अथापि तस्य परमात्मनः प्राप्तेरर्चिरादिगत्यनपेक्षत्वे पर्यालोच्यमाने सर्वमन्यथयितव्यमेवेति अत्र शंकितुर्भावः ।

अत्र षट्के बादरिजैमिनिबादरायणानां क्रमेण निर्देशात् तावत्पर्यन्तमेकविषयविचार इति ज्ञायते । कार्यमित्यस्य क्रियाकांक्षायाम् अनन्तरसूत्रोक्तस्य नयतेरेवात्र ग्रहणं स्वरसमित्यतोऽपि । तत्र **अप्रतीकालम्बनान्नयतीति** विशिष्य द्विकर्मकनयत्यपेक्षितकर्ममध्ये अप्रधानकर्मविशेषस्य स्वयमज्ञाततया ज्ञापनात् बादरिजैमिन्योरत्रद्विषये पक्षोऽन्य इति ज्ञायत एव । कोऽसौ पक्ष इति जिज्ञासायाम्—तत्क्रतुनयादुपासनानुरूपत्वात् प्राप्तेः, कार्यं प्राप्यं कथयतः कार्यमालम्बनमिति. परं प्राप्यं प्रतिष्ठापयतश्च परमालम्बनमिति परिशीलनं सुकरम्—इत्यभिप्रेत्य नयतिकर्मत्वेन सूत्रकृदुक्तस्य कार्यस्योपासनकर्मत्वमपि घटयन् त्रिकोटिकं संशयं दर्शयति **किमयमिति** । ननु गुणोपसंहारपादनिर्णीतस्योपास्यविशेषस्य कथं सहसैवमनुपास्यत्ववादः । अतः परमेवोपास्यताम् । तदुपासकानेवार्चिरादयः कार्यं नयन्तु । तत्र ते स्थित्वा परविद्याफलमविद्यानिवृत्तिं ब्रह्मणा सह परस्यान्ते प्राप्स्यन्तीत्येव बादर्याशयोऽस्तु इति चेत्—तर्हि परविद्यानिष्ठस्य प्रारब्धावसानेऽत्र देहवियोगकाल एव विधूतपुण्यपापस्य सत्यलोके स्थूलदेहादिसाहित्येन संख्यातीतकालस्थितिः किमधीना स्यात् । अतः परोपासकत्वेन ये प्रागुक्ताः तेऽत्रैव मुच्यन्त इति कार्योपासकानामेवार्चिरादितः कार्यप्राप्तिरित्येव बादर्याशय इति भाष्याशयः । नन्वयुक्त उपासीनानित्यध्याहारः; **कार्यमित्यस्य** कार्यलोकपरतायाः **कार्यात्यये** तदध्यक्षेणेति वक्ष्यमाणसूत्रादवगतेः । नैवम् । परमित्येतत्प्रतिद्वन्द्वितया उपक्रमे कार्यशब्दः हिरण्यगर्भपर एव । तत्र त्वन्वयानुपपत्त्याऽर्थान्तरमिति । **अस्येति** सौत्रपदस्य कार्यस्येत्यर्थोऽपि घटते; कार्यमुद्दिश्येति यावत् । अत्रैव मुक्तिकथनादद्वैतवाद एव बादरिसंमत इति न मन्तव्यमिति व्यङ्क्तुमाशयं विशदयति **न हि परिपूर्णमित्यादिना** । ननु **प्राप्तत्वादेवेति** कथम् । प्राप्तिः किं संयोगः उतानुभवः? ब्रह्मविदाप्नोतिपरमित्यादौ साध्यतया ज्ञातायाः प्राप्तेर्नित्यस्थितसंयोगरूपत्वायोगादनुभव एव प्राप्तिः । स देशान्तरगतिं विनाऽत्रैव भवितुमर्हतीति हि विवक्षितम् । अतः प्राप्यत्वादिति वक्तव्यमित्याशंकायां विवृणोति **नित्येति** । अयमाशयः । अत्रैवानुभवः सुलभ इत्येव विवक्षितम् । तत्र

परविद्याकार्यम्। कार्यं तु हिरण्यगर्भरूपं ब्रह्मोपासीनस्य परिच्छिन्नदेशवर्तिप्राप्यप्राप्त्यर्थं गमनमुपपद्यते। अतोऽर्चिरादिरातिवाहिकगणस्तमेव नयति॥ ६॥

विशेषितत्वाच्च। ४। ३। ७॥

(बृ. ८-२-१५) "पुरुषो मानस एत्य ब्रह्मलोकान् गमयति" इति लोकशब्देन, बहुवचनेन च लोकविशेषवर्तिनं हिरण्यगर्भमुपासीनमेवामानवो गमयतीति विशेष्यते। किञ्च (छा. ८-१४-१) "प्रजापतेः सभां वेश्म प्रपद्ये" इति कार्यस्य हिरण्यगर्भस्य समीपगमनमर्चिरादिना गतः प्रत्यभिसन्धत्ते॥ ७॥

नन्वेवम्, "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इत्ययं निर्देशो नोपपद्यते। हिरण्यगर्भनयने हि, 'स एनान् ब्रह्माणं गमयति' इति निर्देष्टव्यं स्यात्। अत आह—

सामीप्यात् तु तद्व्यपदेशः। ४। ३। ८॥

(श्वे. ६-१८) "यो ब्रह्माणं विदधाति" इति हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्यात् तस्य ब्रह्मशब्देन व्यपदेश इति गत्यनुपपत्तिविशेषणादिभिरुक्तैर्हेतुभिर्निश्चीयत इत्यर्थः॥८॥

अथ स्यात्—अर्चिरादिना हिरण्यगर्भप्राप्तौ, "एष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते", (कठ. २-६-१६) "तयोर्ध्वमायन्नमृतत्वमेति"

---

च हेतुः तस्य परमात्मनो विभुत्वेन व्यापितया प्राप्तत्वमेव हि। अतः प्राप्तत्वादित्युक्तम्। किञ्च जीवात्मनस्तदनुभवोऽपि न सामग्र्यधीनः, किंतु मणेउज्ज्वल्यस्येव स्वाभाविकः। अत उपायमन्तरा तस्य प्राप्तप्रायत्वात् परविद्याफलं कर्मनिवृत्तिमात्रम्। तत् देहावसानकाल एव संपन्नमिति कथं परोपासकाः परमात्मानं तदैव नानुभवेयुरिति बादरिरिति। बादरेरद्वैतमेवाभिमतमित्युक्तावपि न नः कोऽपि हानिः; तन्मतस्यात्र दूष्यत्वात्। प्रागुक्तपरोपासनप्रकारानपलापेनात्र बादर्याशयवर्णनं समुचितमिति विशब्द्यैवमुक्तम्। 'अभावं बादरिः' इति सूत्रेऽपि हि देहं विना ब्रह्मानुभवैकतानतां बादरिमतं वक्ष्यति; न तु जीवब्रह्मभेदस्यापि तन्मते अभावमिति॥ ६॥

लोकशब्दो मुख्यवृत्त्या देशविशेषपरः। अतो ब्रह्मैव लोक इति कर्मधारयो न युक्तः; नतरां लोकानिति बहुवचने सति इत्याशयेनाह लोकशब्देन बहुवचनेन चेति। उपासकस्यैकस्य बहुब्रह्मलोकनयनाभावेऽपि उपासकानां बहुत्वान्नानुपपत्तिरिति भावः। ब्रह्मशब्दोऽत्र हिरण्यगर्भवाची बहुवचनान्तलोकशब्दान्वयित्वादित्युक्तं भवति। चकारविवक्षितमाह किञ्चेति॥ ७॥

साधकान्युक्तानि। बाधकं परिहरति सामीप्यादिति। तुः शंकाच्छेदे। प्रथमजत्वेनेति। पश्चाज्जातान् प्रति प्रथमजो ज्येष्ठः पितृसमः; तदुत्पादितोत्पादितात् तदुत्पादितः संनिकृष्टश्च; सर्वानुभवातिशायी चतुर्मुखलोकानुभवः परमात्मानुभवानन्तरश्चेति सामीप्यम्। प्रथमजाते पितृनामसंबन्धकल्पनमपि स्मरन्ति। ननु सर्वथा लक्षणैवापततीत्यत्राह गत्यनुपपत्तीति। आदिना पूर्वसूत्रोक्ततत्सभाप्रवेशप्रत्यभिसंधिग्रहणम्। एतत्त्रयेण कार्यपरत्वावश्यकत्वे सति कार्ये कारणोपचारः सोढव्य इति भावः॥ ८॥

इत्यमृतत्वप्राप्त्यपुनरावृत्तिव्यपदेशो नोपपद्यते ; हिरण्यगर्भस्य कार्यभूतस्य द्विपरार्धकालावसाने विनाशशास्त्रात् , (गी. ८-१६) "आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति वचनात् हिरण्यगर्भं प्राप्तस्य पुनरावृत्तेरवर्जनीयत्वात् - इति—अत्राह—

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् । ४ । ३ । ९ ॥

कार्यस्य ब्रह्मलोकस्यात्यये, तदध्यक्षेण हिरण्यगर्भेणाऽऽधिकारिकेणावसिताधिकारेण विदुषा सह स्वयमपि तत्राधिगतविद्यः अतः कार्याद्ब्रह्मलोकात् परं ब्रह्म प्राप्नोतीति, अर्चिरादिना गतस्यामृतत्वप्राप्त्यपुनरावृत्त्यभिधानात्, (तै. ना. १०-२४) "ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति वचनाच्चावगम्यते ॥ ९ ॥

स्मृतेश्च । ४ । ३ । १० ॥

स्मृतेश्चायमर्थोऽवगम्यते—(कूर्मपु. पूर्वभा. १२-२६९) "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति ।

अतः कार्यमुपासीनमेवार्चिरादिको गणो नयतीति बादरेर्मतम् ॥ १० ॥

अत्र जैमिनिः पक्षान्तरपरिग्रहेण प्रत्यवतिष्ठते—

परं जैमिनिर्मुख्यत्वात् । ४ । ३ । ११ ॥

परं ब्रह्म उपासीनानर्चिरादिर्नयतीति जैमिनिराचार्यो मन्यते ; कुतः ? मुख्यत्वात् । "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् । प्रमाणान्तरेण कार्यत्वनिश्चये सत्येव हि लाक्षणिकत्वं युक्तम् । न च गमनानुपपत्तिः प्रमाणम् ; परस्य ब्रह्मणः सर्वगतत्वेऽपि विदुषो विशिष्टदेशग-

---

अत्यय इति । प्रत्युपस्थिते इति शेषः । उपासितकार्यस्य कार्यप्राप्तावप्युपायाभावात् कथं मुक्तिरित्यत्राह तत्राधिगतविद्य इति । अत इति । न स्थलान्तरगमनम् ; तत्रैव लोके अविद्यानिवृत्तौ ब्रह्मप्राप्तिरिति स्थिते अत इति पदं किमर्थमिति चेत —पुनस्तल्लोकप्रवेशाद्यनपेक्षाज्ञापनार्थम् ; तल्लोकात्ययात् पूर्वं तत्र मुक्तिरिति ज्ञापनार्थम् । अथ वा कार्यात्यये इत्यत्र प्रत्युपस्थिते इत्यध्याहारो मा भूत् । चतुर्मुखः यत्र स्थित्वा मुक्तो भविष्यति, तत स्थलान्तरं ब्रह्माण्डावरणादिरूपं तेन सह तल्लोकाद् गत्वा चतुर्मुखलोकस्यात्यये जाते परमाप्नोतीत्यर्थः । अभिधानादितीदमनेकधा व्याख्याति अमृतत्वेति । ब्रह्मलोक इति । ब्रह्मलोकस्थितास्ते परस्य परनामकचतुर्मुखायुषः अन्तकाले अवसानसमये परामृतात्—चतुर्मुखादिवत् मृतिप्रसक्तिरहितात परतत्त्वादुपासितात ; तदुपासनबलादिति यावत् । सर्वे चतुर्मुखवत् अन्येऽपि । परिमुच्यन्ति महामुक्तिं प्राप्नुवन्ति ॥ ९ ॥ प्रतिसंचरे प्रलये । परस्य ब्रह्मायुषः ॥ १० ॥

मुख्यत्वादिति । अर्चिरादिगतिवाक्ये ततः पूर्वस्मिन् , 'प्राणो ब्रह्म—य एषोऽक्षिणि पुरुषो दृश्यते—एतद्ब्रह्म ' इत्यत्र च ब्रह्मशब्दस्य मुख्यार्थकत्वमेवोचितमिति परस्यैवोपास्यत्वप्राप्यत्वावगमात् न कार्यस्य प्रसक्तिरिति भावः । मुख्यार्थत्यागहेतून् बादर्यभिमतान् खण्डयितुमाह प्रमाणान्तरेणेति ।

तस्यैवाविद्यानिवृत्तिशास्त्रात् । यथा हि विद्योत्पत्तिर्वर्णाश्रमधर्मशौचाचारदेशकालाद्यपेक्षा, (बृ. ६-४-२२) "तमेतं वेदानुवचनेन" इत्यादिशास्त्रादवगम्यते, तथा निश्शेषाविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते । विदुष उत्क्रान्तिप्रतिषेधादि तु पूर्वमेव परिहृतम् ॥ ११ ॥

यत्तु "ब्रह्मलोकान्" इति लोकशब्दबहुवचनाभ्यां विशेषणात् कार्यभूतहिरण्यगर्भप्रतीतिरिति—तदयुक्तम्, निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्तत्वात् । अर्थस्य चैकत्वे निश्चिते बहुवचनस्य (पू. मी. १-३-५) "अदितिः पाशान्" इतिवदुपपत्तेः । परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसङ्कल्पस्य स्वेच्छापरिकल्पिताः स्वासाधारणा अप्राकृताश्च लोका नात्यन्ताय न सन्ति; श्रुतिस्मृतीतिहासपुराणप्रामाण्यात् ।

**दर्शनाच्च । ४ । ३ । १२ ॥**

दर्शयति च श्रुतिः मूर्धन्यनाड्या निष्क्रम्य देवयानेन गतस्य परब्रह्मप्राप्तिम्, (छा. ८-३-४) "एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति ॥ १२ ॥

यदुक्तम्—(छा. ८-१४-१) "प्रजापतेः सभां वेश्म प्रपद्ये" इत्यर्चिरादिना गतस्य कार्ये प्रत्यभिसन्धिर्दृश्यत इति—तत्रोत्तरम्—

**न च कार्ये प्रत्यभिसन्धिः । ४ । ३ । १३ ॥**

---

**निःशेषाविद्यानिवर्तनेति** । पुनर्जन्मापादकपुण्यपापविधूननोपयोगिन्याः विद्यानिष्पत्तेरत्र जातत्वेऽपि सूक्ष्मसंस्कारपर्यन्तसर्वनिवर्तनशक्तिमत्त्वरूपा निष्पत्तिः देशविशेषावच्छिन्नायामेव विद्यायामित्यर्थः । **प्रतिषेधादीति**। 'न तस्य प्राणा उत्क्रामन्ति', 'अत्र ब्रह्म समश्नुते' इत्यत्र प्रतीतं प्रतिषेधोऽत्रैवामृतत्वमिति द्वयमित्यर्थः । विशेषितत्वादित्युक्तपूर्वपक्षपरासकं दर्शनाच्चेति सूत्रं व्याख्यातुं पूर्ववक्तव्यमाह **यत्त्वित्यादिना** । **निषादेति** । आत्मानमेव लोकमुपासीतेति दर्शनानुसारादिति भावः । **परिपूर्णस्य** । अनेकलोकसद्भावादिकमपि परिपूर्णत्वोपपादकमिति भावः । **अत्यन्तायेति** । अयमाशय.—सर्वात्मना न सन्तीति यद्युच्यते-तन्न-एकपादरूपैतद्विभूत्यपेक्षया त्रिपाद्विभूतौ अधिकलोकसंभावनात् । सायुज्यार्थसर्वप्राप्यस्य देशस्यैकत्वात् एकलोकस्थितिः छान्दोग्यकौषीतकिब्राह्मणादौ दर्शिता। "लोकेषु विष्णोर्निवसन्ति केचित्" इति श्लोकः प्राकृताप्राकृतद्विविधलोकपरः स्यात् । (अत एव विष्णुलोकादिष्विति **आदिपदप्रयोगः** रहस्यत्रयसारे ।) वैखानसग्रन्थे आमोदप्रमोदसंमोदनामानो लोका अप्राकृताः तमसः परस्तात् प्रतिपादिता इति । विस्तरोऽस्म**द्विरचिते वैखानसविजये** । लोकदर्शकं वाक्यमेकं निर्दिशति **एष संप्रसाद** इति । "स तत्र पर्येति जक्षत् क्रीडन् रममाणः" इत्यादिकमुपरितनवाक्यमिहानुसंधेयम् ॥ १२ ॥

**विशेषितत्वाच्चेति चकारविवक्षितं** निरसितुमुपरितनं सूत्रम् । **न च कार्ये** इति । प्रजापतिशब्दस्य कार्यभूतहिरण्यगर्भपरत्वाभावात् प्रजापतिसभाप्रपन्नतया स्वानुसंधानरूपः प्रत्यभिसंधिः न चतुर्मुख-

न चायं प्रत्यभिसन्धिः कार्ये हिरण्यगर्भे; अपि तु परस्मिन्नेव ब्रह्मणि; वाक्यशेषे, "यशोऽहं भवामि ब्राह्मणानाम्" इति तस्याभिसन्धातुः सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसन्धानात्; (छा. ८-१३-१) "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति अभिसंभाव्यस्य ब्रह्मलोकस्याकृतत्वश्रवणात्; सर्वबन्धविनिर्मोकस्य च साक्षाच्छ्रवणात्। अतः परमेव ब्रह्मोपासीनमर्चिरादिरातिवाहिको गणो नयतीति जैमिनेर्मतम् ॥ १३ ॥

इदानीं बादरायणस्तु भगवान् स्वमतेन सिद्धान्तमाह—

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च । ४ । ३ । १४ ॥

अप्रतीकालम्बनान् प्रतीकालम्बनव्यतिरिक्तान् नयत्यर्चिरादिरातिवाहिको गण इति भगवान् बादरायणो मन्यते। एतदुक्तं भवति—कार्यमुपासीनान्नयतीति नायं पक्षः संभवति। परमेवोपासीनानित्ययमपि नियमो नास्ति। न च प्रतीकालम्बनानपि नयति। अपितु ये परं ब्रह्मोपासते, ये चाऽऽत्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते; तान् उभयविधान् नयति; ये तु ब्रह्मकार्यान्तर्भूतं नामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवत् ब्रह्मदृष्ट्या,

विषयक इत्यर्थः। प्रजापतिशब्दः प्रजाशब्दार्थासंकोचाय, निरुपाधिकपतित्वग्रहणाय च स्वरसतः परमात्मपरः। प्रसिद्धश्च प्रजापतिशब्दः परमपुरुषे; यतः, 'सप्तदश प्राजापत्यान् पशूनालभते' इत्यत्र, 'श्यामा एकरूपा भवन्ति; एवमिव हि प्रजापतिः' इति देवतायाः श्यामत्वमुक्तम्। अत्रैव छान्दोग्ये पूर्वं, 'श्यामाच्छबलं प्रपद्ये' इति श्यामशब्दः। 'एष वै सप्तदशः प्रजापतिः' इत्यत्रापि स शब्दो विष्णुपर इति, 'चतुर्भिश्च....स नो विष्णुः प्रसीदतु' (स्तोत्रभाष्ये १२) इति भारतवचनावगमितम्। उत्तरवाक्यतोऽपि साधयति वाक्यशेषे इति। ब्राह्मणराजन्यवैश्ययशस्त्वेन परमात्मोच्यते तैर्वेदादिमुखेनाभिष्टुतत्वात्। मूर्तयशोरूपतद्भावं स्वस्मिन् मुक्तोऽनुसंधत्ते। स च सर्वाविद्याविमोकानन्तरभावी। तस्यानुसंधानात् अयं सत्यलोकस्थो न भवतीति भावः। पूर्ववाक्यतोऽपि साधयति अश्व इवेति ॥१३॥

नयतीत्यत्र प्रधानकर्म किमिति विचारे जैमिन्युक्तं निर्बाधम्। यत् खलु तत्प्राप्त्यन्यथानुपपत्त्या तदुपासकानामेवाप्रधानकर्मत्वमर्थसिद्धमिति, तत्रैव किञ्चिद्वक्तव्यमस्ति। कार्योपासकनिरासेन परोपासकानां स्वीकार्यत्वेऽपि तन्मात्रस्वीकारो न; किंतु तदन्यस्यापि कस्यचित् शुद्धजीवयाथात्म्योपासकस्य। अत उभयानुगमाय अप्रतीकालम्बनानिति वक्तव्यमिति स्वाशयं बादरायण आह अप्रतीकालम्बनानिति। परमेवेति नियमास्वीकारे प्रतीकालम्बनोऽपि ग्राह्यः स्यात्। अतः कथं कार्योपासकवारणमित्यत्राह नचप्रतीकेति। कार्याकार्यसर्वप्रतीकास्वीकार एवेति भावः। 'न प्रतीके न हि सः' इति सूत्रे आरोपाधिष्ठाने प्रतीकशब्दप्रयोगात् दृष्टिरूपोपासनायां प्रतीकालम्बनत्वं ज्ञायते। एवञ्च कार्याद्युपासकानामपि अप्रतीकालम्बनत्वं प्राप्नोति। अतस्तदर्थमाह येत्विति। प्रतीकः शरीरम्। ब्रह्मशरीरभूतस्य वस्तुनो ब्रह्मशरीरत्वा-

केवलं वा तत्तद्वस्तूपासते, न तान्नयति । अतः परं ब्रह्मोपासीनान् आत्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान्नयति—इति । कुतः ? उभयथा च दोषात् । कार्यमुपासीनान्नयतीति पक्षे, (छा. ८-३-४) "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य" इत्यादिकाः श्रुतयः प्रकुप्येयुः । परमेवोपासीनानिति नियमे, (छा. ५-१०-१) "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते, तेऽर्चिषमभिसंभवन्ति" इति पञ्चाग्निविदोऽर्चिरादिर्गणो नयतीति श्रुतिः प्रकुप्येत् । अतः उभयस्मिन्नपि पक्षे दोषः स्यात् । तस्मादुभयविधान्नयतीति । तदेतदाह-तत्क्रतुश्च-इति । तत्क्रतुः-तथोपासीनः तथैव प्राप्नोतीत्यर्थः ; (छा. ३-१४-१) "यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति", "तं यथायथोपासते" इति न्यायात् । पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणात्, अर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च अत एव तत्क्रतुन्यायात् प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसन्धानं सिद्धम् । नामादि-

कारान्महेणोपासकाः प्रतीकालम्बनाः । एवञ्च कार्याद्युपासकानां नाप्रतीकालम्बनत्वमिति भावः । केवलं ब्रह्मदृष्टिरहितम् । प्रकुप्येयुरिति । अन्योपासकस्यान्यप्राप्त्ययोगादिति भावः । प्रकुप्येदिति । परविशेष्यकोपासनविरहेऽपि परप्राप्तेरिति भावः । उभयविधान् पञ्चाग्निविदः परोपासकांश्च । तदेतदाहेति । अन्योपासनस्य तदन्यप्रापकत्व न भवतीत्येतदाहेत्यर्थः । तत्क्रतुश्चेति चकारेणेदमुच्यते— यच्चिन्तापरो भवति पुरुषः, स जन्मान्तरे तदन्यत् तद्विरुद्धं तदसद्भूतं न प्राप्नुयादिति, 'यंयं वाऽपि ···· सदा तद्भावभावितः' इति सामान्यवचनसिद्धमेव । विशिष्य परमात्मप्राप्तिविषये तदुपासनस्यावश्यकत्वे तत्क्रतुवचनमपि प्रमाणमिति । तत्क्रतुश्चेति सूत्रखण्डवाच्यार्थस्तु यथाभाष्यम्—तद्विषयकोपासनवान् तत् प्राप्नोतीति । एतदर्थाच्च श्रुतिगम्यादिति चो हेतौ वा । ननु जीवोपासकस्य परमात्मप्राप्तीष्टौ कार्योपासकस्यापि सा स्यात् ; अनिष्टौ जीवोपासकस्यापि न स्यादित्यत्राह पञ्चेति । सिद्धमित्यत्रान्वयः । पञ्चाग्निविद्विषये अर्चिरादिगतिः अपुनरावृत्तिविशिष्टब्रह्मप्राप्तिश्च श्रुता । तत्रैकैकस्या अपि ब्रह्मात्मकस्वात्मानुसंधानसाधकत्वमस्तीति ज्ञापनाय श्रवणाच्चेति चकारः । ननु तदनुपासनेऽपि तत्प्राप्तिः पञ्चाग्निविद्विषये वचनबलादस्तु । विशेषवचनाभावे तु तत्क्रतुन्याय औत्सर्गिक इति न कार्योपासकस्य परापत्तिरिति शंकानिरासाय अत एव तत्क्रतुन्यायादिति । अत एव उक्तादेव । न्यायानुपमर्देन श्रुत्यर्थे वर्णयितुं शक्ये किमिति तद्भञ्जनमिति भावः । ब्रह्मात्मकात्मेति । पञ्चाग्निविदः स्वात्मानुसंधानं सर्वेष्टम् । तच्च यथावस्थितस्वरूपविषयकम् । स्वरूपे चापहतपाप्मत्वादिवत् परमात्मशेषत्वमप्यन्तर्भवति । तदुपासनं तद्विषयकमपि वा न वेति विमर्शे ब्रह्मप्राप्तिश्रवणात् तत्क्रतुन्यायाच्च स्वरसप्राप्ततद्विषयकत्वं नोपेक्ष्यम् । यदि कैवल्यादिमात्रं फलमुक्तं स्यात्, तदा तदंशोपासनमुपेक्ष्येत ; न त्वत्रेति भावः । अत एवात्र ब्रह्मणो विशेषणतया प्रवेशसिद्धिरिति भाष्यम् । न च तर्हि कार्यहिरण्यगर्भादीनामपि परमात्मशेषत्वमेव स्वरूपमिति तत्स्वरूपतदुपासनान्मोक्षः स्यादिति शंक्यम्—जीवविषये पञ्चाग्निविद्यावत् तद्विषयेऽपि ब्रह्मप्राप्तिश्रुतिसत्त्वे इष्टत्वात् । अभावे आपादनाप्रसक्तेः । न च यथाक्रतुवचनमेक

**प्राणपर्यन्तप्रतीकालम्बनानां तु उभयविधश्रुतिसिद्धोपासनाभावादचिन्मिश्रोपासने तत्क्रतुन्यायादर्चिरादिना गतिर्ब्रह्मप्राप्तिश्च न विद्यते ॥ १४ ॥**

तद्विषायकम्; तस्य प्रमाणान्तरसिद्धांशानुवादतयाऽर्थवादत्वात्। न च 'यंयं वाऽपि' इति न्यायेन परमात्मशेषतयैव किञ्चिच्चिन्तनव्यग्रस्यान्तकाले तत्स्मरणे फलस्यावर्जनीयत्वमिति वाच्यम्-शास्त्रविहितोपासनविशेषनिष्ठानामेवार्चिरादिगतेः तद्द्वारकब्रह्मप्राप्तेश्चेष्टतयाऽन्यादृशचिन्ताया अन्यादृशप्राकृतपृथग्विधफलहेतुत्वेऽपि मोक्षप्रसक्त्यभावात्।

ननु तत्क्रतुवचने तथैव भवतीत्यस्यान्ययोगव्यवच्छेदपरत्वे किल केवलात्मोपासनान्मोक्षाभावः। अयोगव्यवच्छेदपरत्वे कुतोऽसंभव इति चेत्—तद्विषयकचिन्तायाः तदन्ययोगवारकत्वाभावेऽपि तदन्ययोगो न हि निर्हेतुको भवितुमर्हति। परमात्मानुभवरूपमोक्षं प्रति कर्मणो हेतुत्वायोगात्। तज्ज्ञानस्यैव तत्र हेतुतायाः भक्त्यादिविधायकशास्त्रसिद्धत्वात्; शुद्धजीवोपासनादेव तत्संभवे भक्तियोगविधानवैयर्थ्यात्; 'नान्यः पन्था अयनाय विद्यते' इति उपायान्तरनिषेधाच्च तच्चिन्तनरूपकारणस्य घटनमावश्यकमिति। एवञ्च चिन्तनातिरिक्तकारणाजन्यत्वात् मोक्षस्य परमात्मानुभवे परमात्मोपासनजन्यत्वोपपादनायात्र **तत्क्रतुन्याया**दित्युक्तम्। एवं पञ्चाग्निविदा गतागतरूपसंसारित्वाकारस्योपासने संसारित्वप्राप्तिरेव स्यात्। एवकारस्यायोगव्यवच्छेदपरत्वात्। अतः शरीरेभावाधिकरणोक्तरीत्या शुद्धस्वरूपोपासनमेव कार्यमिति बोधनार्थमप्येतद्भाषणम्। अत एव आत्मनः **प्रकृतिविनिर्मुक्ते**ति विशेषणदानमिह।

तत्क्रतुविषयाणि वाक्यानि तावत्, "तं यथायथोपासते तदेव भवति", "तं यथायथोपासते तथैव भवति", यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति", "एवंक्रतुर्ह्यमुं लोकं प्रेत्याभिसंभवितास्मि" इतीमानि। 'यंयं वाऽपि स्मरन् भावम्....." इति गीता च। तत्र तृतीयादिवाक्यानि आमुष्मिकैकविषयाणि। आद्यद्विकमिहापि उपासकापेक्षानुरूपपरमात्माविर्भावप्रदर्शकम्; तथा परमात्मैकविषयकम्; न तु गीतादिवत् सामान्यविषयकम्। तत्र प्राकृताकाराद्युपासने प्राकृताकारप्राप्तिरेव स्यादिति तत्रतत्रापादनं परमात्मोपासने तत्क्रतुवाक्योक्ते जीवात्मन उपास्यतया घटकत्वमस्तीत्याशयेन, यंयंवाऽपीति सामान्यवचनानुसारेण चेति ध्येयम्। अधिकमन्यत्रानुसंधेयम्। अस्मदीयपरिष्कार-टिप्पणपरिशिष्टादिकमपि द्रष्टव्यम्।

ननु पञ्चाग्निविद्यायां परमात्मनो घटनीयत्वे सिद्धे, विद्यान्तरन्यायेन जीवशरीरकपरमात्मोपासनस्वीकार एव युक्तः, शरीरवाचिनां शब्दानां शरीरिपर्यन्तार्थकतया, प्रसिद्धाया मुख्यरीतेस्त्यागे मानाभावादिति चेत्—तर्हि 'तत् य इत्थं विदुः' इत्यस्य स्वात्मशरीकपरमात्मोपासनं ये कुर्वन्तीत्यर्थः स्यात्। सर्वा अपि परविद्या ईदृश्य एवेति, 'येचेमे' इति पृथग्वचनस्य प्रसक्तिरेव न भवेत्। न हि वेद्याकारान्तरं पञ्चाग्निविद्यायामिष्टम् ॥ नन्वग्निपञ्चकमत्रोपास्यम्। तदभावे तन्निरूपणं किमर्थमिति चेत्—तत्तदग्न्यधीनसंतापबाहुल्यमेव संसरत इति वैराग्याभिवर्धनाय तथोक्तेः। येचेमे इति द्वितीयवाक्ये **तपः** इति **सत्य**मिति च ब्रह्मणो विशिष्य निर्देशाच्च पूर्वमुपासनं ब्रह्मविशेष्यकं न भवतीति ज्ञायते। **ब्रह्मविषयकत्वे**

**तमिमं विशेषं श्रुतिरेव दर्शयतीत्याह—**

**विशेषञ्च दर्शयति । ४ । ३ । १५ ॥**

(छा. ७-१-५) **"यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" इत्यादिका श्रुतिः नामादिप्राणपर्यन्तप्रतीकमुपासीनानां गत्यनपेक्षं परिमितफलविशेषं च दर्शयति ।**

---

च ब्रह्मप्राप्त्ययोगात् उभयसामञ्जस्याय विशेषणतया ब्रह्मविषयकत्वस्वीकारः । स च न लक्षणया । चिद्विषयकोपासनमित्युक्तौ तद्याथात्म्यविषयकत्वसिद्धेः तत्र तच्छेषत्वादेरप्यन्तर्भावादिति । अस्य पञ्चाग्निविदः आत्मविशेष्यकोपासनानुरूपं कैवल्यमपि फलमस्तीति **गीताभाष्ये** दर्शितम् । तदनन्तरमिदं ब्रह्मगमनम् । विस्तरस्तात्पर्यचन्द्रिकायाम् ॥

एवं तर्हि पञ्चाग्निविद्यायामिव भूमविद्याप्रकरणोक्तप्राणोपासनेऽप्यर्चिरादिगत्यादि स्यात् । तत्र प्राणशब्दस्य जीवार्थकत्वादित्यत्राह **नामादिप्राणपर्यन्ते**ति । भूमविद्यायां भूमभूतब्रह्मनिरूपणात् प्राक् नामवाङ्मनस्संकल्पचित्तध्यानविज्ञानबलान्नाप्तेजआकाशस्मराशाप्राणाः पञ्चदश उपास्या उक्ताः । तत्र नामादिषु आशान्तेषु प्रत्येकं ब्रह्मदृष्ट्योपानं तदनुरूपसर्वलोकसंचाररूपं फलञ्च पृथक्पृथगुक्तम्, नाम ब्रह्मेत्युपास्ते इत्येवम् । प्राणरूपजीवविषये यद्यपि ब्रह्मदृष्ट्योपासनं नोक्तम्—अथापि न तत् मोक्षार्थोपासनतुल्यम्, प्राणोपासकमुपेक्ष्य भूमोपासकस्यैवोपरि शोकतारकतया प्रशंसनादिति भावः । **अचिन्मिश्रोपासन** इति । नामादिशब्दानां देवताविशेषपरत्वेऽचिन्मिश्रपरत्वम् । नामादिमात्रपरत्वे तु नामाद्युपासनमचिदुपासनम्; प्राणोपासनं तु अचिन्मिश्रोपासनम्; प्राणशब्दस्य प्राणवायुरूपाचिद्विशिष्टजीवपरत्वात् । एतदुपासनस्य मोक्षार्थत्वाभावेन प्रतीताचित्संश्लेषस्यात्यागेनैनोपासनवर्णनसंभवादिति भावः । अथवा **अचिन्मिश्रे**त्यादि न नामादिविषयकम्, किंतु, एतदधिकरणे पूर्वप्रकृतकार्यहिरण्यगर्भादिविषयकम् । **तत्क्रतुन्यायाच्चे**ति । परमात्मविषयकं हि तत्क्रतुवचनम् । तदीदृशोपासनेषु कथं प्रसरेदिति चेत्—तदप्रसरेऽपि तन्नयातिदेश औचित्याद् भवेत्; 'यंयं वाऽपिस्मरन्' इति दर्शनादित्याशयः ॥

नामादिप्रतीकोपासनानां पृथक्फलनिर्देशस्तावदस्त्येव । अनिर्देशेऽपि मोक्षफलं दुर्वचम्—ब्रह्मोपासनं विना ब्रह्मानुभवायोगादित्युक्तम् । संप्रति विशेषनिर्देशसत्त्वादपि तदभावमाह **विशेषश्चे**ति । मुक्तिफलकत्वाभावस्य सिद्धत्वेऽपि तत्तदुपासनफलमिदमिति विशेषानिर्देशे दुरवधरं तत् स्यात्, मोक्षार्थोपासनाङ्गत्वशंका च स्यात् । अत एतत्प्रदर्शनम् । **प्राणपर्यन्ते**ति । ननु प्राणविषये फलस्यानुक्तत्वात् कथमेवम् । प्रत्युत फलाकीर्तनेन प्राणोपासकस्यातिवादित्वमात्रं प्रथममुक्त्वा ततस्तत्प्रतिक्षेपेण भूमसत्यब्रह्मोपासकस्यातिवादित्ववर्णनात् प्राणस्यापि तदुपासनान्तर्भावोऽभिमतः स्यादिति चेन्न—प्राणशब्देनाचिन्मिश्रस्य वा शुद्धस्य वा जीवस्य विवक्षायामपि तदुपासके पृथगतिवादित्वप्रसंगतत्परिहारप्रदर्शनादेव क्षुद्रफलकत्वस्याप्यवसायात् । कैवल्यफलस्य नामाद्युपासनफलवत् लोककामसंचाररूपत्वाभावेन तत्समानरीत्यभावादनुपन्यासः; कैवल्यस्य जीवोपासकलब्धैहिकात्मसाक्षात्काराविशिष्टत्वेन न विशिष्य वक्तव्यं किञ्चिदस्तीति न तदुपन्यासोपेक्षा स्यात् । **गत्यनपेक्ष**मिति । अर्चिरादिगतौ सत्यां फलं परिमितं न भवतीति भावः ॥

**तस्मादचिन्मिश्रं केवलं वा चिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च य उपासते, न तान् नयति; अपितु परं ब्रह्मोपासीनान् आत्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान् आतिवाहिको गणो नयतीति सिद्धम् ॥ इति कार्याधिकरणम् ॥ ५ ॥**

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य तृतीयः पादः ॥ ३ ॥ श्रीरस्तु ॥

---

श्रीविष्णुपुराणे च विशेषो दर्शितः—"योगिनाममृतं स्थानं स्वात्मसंतोषकारिणाम्" इति प्रतीकोपासकानामात्मयोगिनां विष्णुपदाख्यं ध्रुवादुपरिस्थानममृतशब्दवाच्यमिति कैवल्यस्थानमिति ; "एकान्तिनः सदा ब्रह्मध्यामिनो योगिनो हि ये । तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः" इति नित्यसूरिदृश्यं परमं पदं परमैकान्तिगम्यम्; अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः" इति तेषामपुनरावृत्तिरिति च । देवयानविवरणञ्च तत्र, (२-८) "नागवीथ्युत्तरं यच्च सप्तर्षिभ्यश्च दक्षिणम् । उत्तरः सवितुः पन्थाः देवयानस्तु स स्मृतः" इति । अश्विन्यादिनक्षत्रेषु त्रित्रिनक्षत्रलक्षणाः नव वीथयः । तत्र प्रथमा नागवीथिः । तस्या अप्युत्तरत्र देवयानम् । मूलाषाढोत्तराढामयी अजवीथिः । तद्दक्षिणा उपान्त्यवीथिः अन्तिमवैश्वानरवीथ्युत्तरा पितृयाणम् । ननु चतुर्मुखलोकं प्राप्तस्याप्यपुनरावृत्तिः प्रागुक्ता । सत्यम् । तत्र 'ब्रह्मणा सह ते सर्वे' स्मृतिवचनं तदुपासनेन तल्लोकप्राप्तस्य पश्चात्परमात्मोपासनमूलमोक्षपरम् । "ते ब्रह्मलोके तु" इति श्रुतिवाक्यं तु न चतुर्मुखलोकविषयकम्—व्याख्यातमिदमेवं **दीपे,** "ब्रह्मलोकशब्दस्य कर्मधारयवृत्त्या ब्रह्मविषयत्वात् ब्रह्मण्युपास्ये वर्तमानाः **परान्तकाले** चरमदेहावसानसमये **परामृतात्** परस्माद् ब्रह्मण उपासनप्रीतात् हेतोः सर्वस्मात् बन्धाद्विमुच्यन्त इति **वेदान्तविज्ञानसुनिश्चितार्था** इति (एतल्लोकस्यज्ञानिपर) प्रकरणादवगम्यते" इति । लोकान्तरात् परमपदगामिनामर्चिरादिमार्गे यथायथमन्वय ऊह्यः ॥

अधिकरणार्थमुपसंहरति **तस्मादिति** । सत्स्वपि प्रकृत्याद्युपासनेषु केवलाचेतनोपासनानुक्तिः उपासनमुत्कृष्टविषयकध्यानरूपमिति अभिमानिदेवतादिसंपर्कमन्तरेणाचितामनुपास्यत्वमित्याशयेन । यद्वा तेषामर्चिरादिगतिप्रापकत्वशंकाया अभावात् अचिन्मिश्रचिद्रूपहिरण्यगर्भोपासन एव शंकायाः प्राप्तत्वात् तस्य, तत्तुल्यचिदुपासनप्रकाराणाञ्चात्र प्रतीकालम्बनत्वमुपपाद्यार्चिरादिगत्यभाव उक्त.—चिदुपासनं चतुर्विधम्—अचिन्मिश्रचिद्विषयकं ब्रह्मदृष्टिरूपम्, शुद्धचिद्विषयकं ब्रह्मदृष्टिरूपम्, ब्रह्माविषयकमेव अचिन्मिश्रचिद्विविषयकं, शुद्धचिन्मात्रविषयकञ्चेति । एतत् सर्वं प्रतीकालम्बनमेवाचिदुपासनवदिति । **नयतीति** । जैमिन्युक्तरीत्या परं ब्रह्मैवेति शेषः । पूर्वपादोक्तरीत्या प्रस्थितानां मुमुक्षूणामर्चिरादिभिः क्रियमाणं प्रकृतिमण्डलातिक्रमणपूर्वकब्रह्मलोकप्रापणमेवमत्र पादे प्रत्यपादि ॥ श्रीः ॥

इति श्रीवात्स्यश्रीशैल-सच्चक्रवर्तिनो वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु
श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे चतुर्थाध्याये तृतीयः पादः ॥
श्रीमते रामानुजाय नमः । शुभमस्तु ॥

श्रीमते रामानुजाय नमः

## श्रीभगवद्रामानुजविरचिते
## श्रीशारीरकमीमांसाभाष्ये

चतुर्थाध्याये-चतुर्थः पादः (१५१) संपद्याविर्भावाधिकरणम् ४-४-१ ॥

**संपद्याविर्भावः स्वेनशब्दात् । ४ । ४ । १ ॥**

परं ब्रह्मोपासीनानाम्, आत्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानामर्चिरादिना मार्गेणापुनरावृत्तिलक्षणा गतिरुक्ता; इदानीं मुक्तानामैश्वर्यप्रकारं चिन्तयितुमारभते। इदमाम्नायते—(छा. ८-१२-२) "एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति। किमस्माच्छरीरात् समुत्थाय परज्योतिरुपसम्पन्नस्य देवादिरूपवत् साध्येन रूपेण संबन्धोऽनेन वाक्येन प्रतिपाद्यते, उत स्वाभाविकस्य स्वरूपस्याऽऽविर्भाव इति संशये—

साध्येन रूपेण संबन्ध इति युक्तम्। अन्यथा ह्यपुरुषार्थावबोधित्वं मोक्षशास्त्रस्य स्यात्; स्वरूपस्य स्वतोऽपुरुषार्थत्वदर्शनात्। न हि सुषुप्तौ देहेन्द्रियव्यापारेषूपरतेषु केवलस्याऽऽत्मस्वरूपस्य पुरुषार्थसंबन्धो दृश्यते। न च दुःखनिवृत्तिमात्रं परं ज्योतिरुपसंपन्नस्य पुरुषार्थः; येन स्वरूपाविर्भाव एव मोक्षः इत्युच्येत; (तै. आन. ८-४) "स एको ब्रह्मण

---

श्रीः । श्रीमते रामानुजाय नमः

### भाष्यार्थदर्पणे चतुर्थाध्याये चतुर्थः पादः

संगतिमाह **परमि**ति। यादृशफलानुभवार्थं गतिः पूर्वपादे उक्ता, तादृशं फलमत्र पादे निरूप्यत इति पादसंगतिरनन्तरसंगतिश्च। तत्रानन्तरसंगतौ विशेषान्तरं व्यक्तुं **अपुनरावृत्तिलक्षणे**त्युक्तम्। अर्चिरादिगतेर्न कार्यलोकप्रापकत्वम्, किंतु अपुनरावृत्तिवहपरप्राप्तिकरत्वमित्युक्तं पूर्वाधिकरणे। तत्र गतस्य स्वरूपाभिनिष्पत्तिः साध्याकारलाभो वा स्वाभाविकरूपाविर्भावो वेति विमर्शे, साध्याकारलाभ इत्येव वक्तव्यमिति तस्यानित्यत्वात् पुनरावृत्तिः संभाव्यत इत्याक्षेपादेतदधिकरणप्रवृत्तिरिति। **ऐश्वर्यप्रकार**मिति। ईश्वरस्य भावः ऐश्वर्यमीश्वरधर्मप्राप्तिः स्वराट्त्वम्। तत् किमकर्मवश्यत्वमात्रम्, उत ज्ञानानन्दसाम्यम् अप्राकृतदेहवत्त्वं सत्यसंकल्पत्वादि च, संकल्पश्च कियदवधिक इत्यादिकमत्र चिन्त्यते। **देवादिरूपव**दिति। यथा देवादयो भूत्वा उपायसाधितशरीरेन्द्रियाद्युपकरणाधीनभोगा भवन्ति, तथेमे भक्त्युपायनिष्ठा अपीति भावः। स्वाभाविकरूपाविर्भाव इत्यस्य अस्वाभाविकरूपनिवृत्तिरित्यर्थो वा, स्वाभाविकरूपप्रकाशरूपतेत्यर्थो वा, स्वरूपेणावस्थितिरित्यर्थो वा। सर्वथा मोक्षशास्त्रमपुरुषार्थबोधकमेवेत्याह **अन्यथे**ति। **दर्शनादि**त्युक्तमुपपादयति **न ही**ति। जागरदशायां पुरुषार्थानुभवस्तु न स्वात्मानन्दः, किंतु विषयानन्दः; सुषुप्तावभावात ॥ तार्किकादिभिर्दुःखोच्छेदमात्रं मोक्ष इति वर्णनात् प्रथमपक्षो युक्त इति न मन्तव्यमित्युपपादयति **न चे**ति। तन्मतादरणे परज्योतिरुपसंपत्तिः पूर्वाधिकरणोक्ता किमर्थ-

आनन्दः । श्रोत्रियस्य चाकामहतस्य ", (तै. आन. ७-१) "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिभ्यो मुक्तस्य सुखानन्त्यश्रवणात् । न चापरिच्छिन्नानन्दरूपचैतन्यमेवास्य स्वरूपम्, तच्च संसारदशायामविद्यया तिरोहितं परं ज्योतिरुपसंपन्नस्याविर्भवतीति शक्यं वक्तुम्, ज्ञानस्वरूपस्य तिरोधानासंभवात् । प्रकाशपर्यायस्य ज्ञानस्य तिरोधानं तद्विनाश एवेति हि पूर्वमेवोक्तम् । न च प्रकाशमात्रस्याऽऽनन्दता संभवति ; सुखस्वरूपता ह्यानन्दस्वरूपता । सुखस्वरूपत्वं चात्मनोऽनुकूलत्वम् ; प्रकाशमात्रात्मवादिनः कस्य प्रकाशोऽनुकूलवेदनीयो भवेदिति प्रकाशमात्रात्मवादिनः कथंचिदप्यानन्दस्वरूपता दुरुपपादा । स्वरूपापत्तिमात्रे च साध्ये स्वरूपस्य नित्यनिष्पन्नत्वात् उपसम्पन्नस्य, "स्वेन रूपेणाभिनिष्पद्यते" इति वचनमनर्थकं स्यात् । अतोऽपूर्वेण साध्येन रूपेण संपद्यते । एवं च अभिनिष्पद्यते इति वचनं मुख्यार्थमेव भवति । स्वेन रूपेण—इत्यपि आनन्दैकान्तेन स्वासाधारणेनाभिनिष्पद्यत इति संगच्छत इत्येवं प्राप्ते—

---

माद्रियत इति सूचयितुं परं ज्योतिरित्यादि । सुखानन्त्येति । एवञ्च देवादिवत् साध्यानन्दसंपत्तिरेष्टव्येति भावः । अथ द्वितीयपक्षनिरासः । तत्र ये तार्किकादिपक्षमुपेक्ष्य, गुणभूतानन्दमप्यनभ्युपगम्य, आनन्दात्मकचैतन्याविर्भावमेव मोक्षं पुरुषार्थमातिष्ठन्ते, तेषामद्वैतिवासनावासितानामधिकरणनिर्वाहं निरस्यति न चापरिच्छिन्नेति । तिरोधानासंभवादिति । ज्ञानं हि स्वयंप्रकाशम् । तस्य कथमप्रकाशमानतेति । ज्ञानधर्मतया प्रकाशमस्वीकृत्य ज्ञानमेव प्रकाश इत्यद्वैतिरीतौ तिरोधानाभ्युपगमे दोषान्तरमप्याह प्रकाशपर्यायस्येति । हीति । अतोऽपि तिरोधानासंभव इति भावः । निर्विशेषप्रकाशो आनन्दपदव्यवहार्यता न भवति । अतः स्वरूपमपुरुषार्थं एवेत्यप्याह न च प्रकाशमात्रस्येति । अस्येति अनुकूलेत्यत्रान्वेति । कं प्रति अनुकूलतया वेदनीय इत्यर्थः । निर्विशेषे अनुकूलत्वमिवानुकूलताप्रतियोगित्वमपि दुर्लभमित्यर्थः । एवमद्वैतिनिर्वाहो निरस्तः । अथ मा भूदेवम् । सिद्धान्ते आत्मनश्चैतन्यत्वमानन्दत्वञ्चेष्टम् । स्वप्रकाशकत्वात् चैतन्यत्वम् । अनुकूलतयाप्रकाशमानत्वाच्चानन्दत्वम् । इदञ्च तार्किकाद्यसंमतमिति पुरुषार्थस्थितिरिति चेत्— एवं सर्वदैवैकत्वानुकूलत्वविशिष्टतया भासमानस्याऽऽत्मनो बन्धरूपदु.खनिवृत्तिमात्रं स्वरूपाविर्भाव इति पक्षे, आनन्दी भवतीत्यादिश्रुतिविरोधस्तदवस्थः । इयान् विशेषः—अद्वैतिमते स्वरूपस्याप्यपुरुषार्थता, एतत्पक्षे आत्मनः पुरुषार्थसंबन्धाभावः । दुःखनिवृत्तेः सुखदुःखनिवृत्तिरूपोदासीनावस्थान्तर्गतायाः पुरुषार्थत्वाभावादिति । स्वरूपापत्तिरूपतृतीयपक्षे आनन्दी भवतीत्यादिश्रुतिविरोधवत् प्रकृत-विषयवाक्यानर्थक्यञ्चेत्याह स्वरूपापत्तीति । निगमयति अतोऽपूर्वेणेति । स्वेनेत्येतद् व्यर्थमित्यत्राह स्वेनेति । पूर्णवाक्यवैयर्थ्यापेक्षया पदवैयर्थ्यं सह्यम् । सिद्धान्तेऽपि स्वेनेत्यस्य साध्यातिरिक्तेनेति न वाच्यार्थः ; अप्रसिद्धेः । किंतु स्वकीयेनेत्यर्थे स्वसंबन्धे उपाध्यनिर्देशादनौपाधिकत्वरूपस्वाभाविकत्वलाभ इति वक्तव्यम् । अभिनिष्पद्यत इति अभिहिताभिनिष्पत्तिविरुद्धत्वान्नैवमाक्षेपः शक्यः । अतः स्वासाधारणत्वमुपायान्तरदुर्लभत्वमत्र विवक्षितम् ; न त्वनादित्वं यावदात्मभावित्वं वा ; साध्यस्य कादाचित्कतायाः ध्रुवत्वादिति ।

प्रचक्ष्महे—संपद्याविर्भाव:—इति । अयं प्रत्यगात्माऽर्चिरादिना परं ज्योतिरुपसंपद्य यं दशाविशेषमापद्यते, स स्वरूपाविर्भावरूपः; नापूर्वाकारोत्पत्तिरूपः । कुतः? स्वेनशब्दात् । "स्वेन रूपेण" इति विशेषणोपादानादित्यर्थः । आगन्तुकविशेषपरिग्रहे हि "स्वेन रूपेण" इति विशेषणमनर्थकं स्यात्, अविशेषणेऽपि तस्य स्वकीयरूपत्वसिद्धेः ॥

यत्तूक्तं स्वरूपस्य नित्यप्राप्तत्वात् "उपसंपद्याभिनिष्पद्यते" इति वचनमनर्थकमिति—तत्रोत्तरम् ।

मुक्तः प्रतिज्ञानात् । ४ । ४ । २ ॥

कर्मसंबन्धतत्कृतदेहादिविनिर्मुक्तः स्वाभाविकरूपेणावस्थितोऽत्र "स्वेन रूपेणाभिनिष्पद्यते" इत्युच्यते । अतो नित्यप्राप्तस्यापि स्वरूपस्य कर्मरूपाविद्यातिरोहितस्य तिरोधाननिवृत्तिरत्राभिनिष्पत्तिरुच्यते । कुतः? प्रतिज्ञानात् । सा हि प्रतिपाद्यतया प्रतिज्ञाता । कुत इदमवगम्यते? "य आत्मा" इति प्रकृतं प्रत्यगात्मानं जागरिताद्यवस्थात्रितयविनिर्मुक्तं प्रियाप्रियहेतुभूतकर्मारब्धशरीरविनिर्मुक्तं च प्रतिपादयितुम्, "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति पुनःपुनरुक्त्वा, "एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यभिधानात् । अतः कर्मणा संबद्धस्य परं ज्योतिरुपसंपद्य बन्धनिवृत्तिरूपा मुक्तिः स्वेन रूपेणाभिनिष्पत्तिरुच्यते । स्वरूपाविर्भावेऽप्यभिनिष्पत्तिशब्दो दृश्यते, युक्त्याऽयमर्थो निष्पद्यते' इत्यादिषु ॥२॥

---

उपरितनसूत्रद्वयेन अभिनिष्पद्यत इत्येतदुपपत्तिं पुरुषार्थसंबन्धञ्च दर्शयिष्यन् स्वाभाविकरूपाविर्भाव इति सिद्धान्तमस्मिन् सूत्रे आह **संपद्याविर्भाव** इति ॥

नन्वाविर्भावपदेन किं सत्ता विवक्षिता आहो प्रकाशः । नान्त्यः, तस्याभिनिष्पत्तिशब्दमुख्यार्थत्वाभावात् । आद्ये संपद्येत्युक्तमुत्तरकालिकत्वं नान्वेति; स्वरूपसत्ताया नित्यत्वादित्यवतारयति **यत्त्विति** । एतत्सूत्रभाष्यान्ते प्रकाशपक्षनिर्वाहमपि करिष्यति । साध्यत्वरूपमुख्यार्थमादाय सूत्रकृतो निर्वाहः प्रथमं विस्तरेण वर्ण्यते । **तिरोधानेति** । पूर्वमद्वैतिपक्षे तिरोधानासंभवः उक्तः । नैष नः पक्षे । धर्मिनित्यप्रकाशस्य, तद्गतधर्माणां स्वेनरूपेणेत्युक्तानां संसारे तिरोधानस्य, मुक्तौ तद्विषयप्रकाशरूपार्थस्य च स्वीकारात् ।

परंज्योतिरुपसंपद्य मुक्त इति वक्तव्ये हि **स्वेनरूपेणाभिनिष्पद्यत** इत्युक्तम् । स्वरूपाभिनिष्पत्तिर्नाम मुक्तिः अविद्यानिवृत्तिः । तस्याश्च साध्यत्वात् निष्पद्यत इति समन्वितमिति भावः । ननु **रूप**पदेन कस्य ग्रहणम् । न ज्ञानत्वानन्दत्वादेः; तस्य निष्पद्यमानत्वाभावात् । नाविद्यानिवृत्तेः, वैतुष्यविशिष्टतया व्रीहीणां साध्यत्ववत् निवृत्तिविशिष्टतया जीवस्य निष्पद्यमानत्वेऽपि तस्याः संपत्त्यनन्तरभाविन्याः **स्वेनेति** विवक्षितानागन्तुकत्वाभावात् ॥ अविद्यानिवृत्तिर्नाम अपहतपाप्माविजरोविमृत्युरित्याद्युक्ततत्तदभावरूपधर्म एवेति चेत्—कथमागन्तुकानागन्तुकयोरैक्यम् । अपहतपाप्मत्वादेरागन्तुकत्वे स्वेनेतिसिद्धान्त्यभिमतार्थानन्वयः, अनागन्तुकत्वे च **निष्पद्यत** इत्येतदनन्वय इत्याशंकापरिहारमभिप्रेत्याह **स्वरूपाविर्भावेऽपीति** ।

यच्चोक्तम्—आत्मस्वरूपस्य सुषुप्तावपुरुषार्थत्वदर्शनात् स्वरूपाविर्भावे मोक्षशास्त्रस्यापुरुषार्थावबोधित्वं स्यादिति कृत्वा देवाद्यवस्थावत् सुखसंबन्ध्यवस्थान्तरप्राप्तिरभिनिष्पत्तिः—इति—तत्रोत्तरम्—

आत्मा प्रकरणात् । ४ । ४ । ३ ॥

स्वरूपेणैवायमात्मा अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणकः प्रकरणादवगम्यते । "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति हि प्रजापतिवाक्यप्रक्रमः । इदं च प्रकरणं प्रत्यगात्मविषयमिति, (शारी. १-३१-८) "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इत्यत्र प्रतिपादितम् । अतोऽपहतपाप्मत्वादिस्वरूप एवायमात्मा संसारदशायां कर्माख्याविद्यया तिरोहितस्वरूपः परं ज्योतिरुपसम्पद्याऽऽविर्भूतस्वरूपो भवति । अतः प्रत्यगात्मनोऽपहतपाप्मत्वादयः स्वाभाविका गुणाः परं ज्योतिरुपसंपद्यास्याऽऽविर्भवन्ति ; नोत्पद्यन्ते ; यथोक्तं भगवता शौनकेनापि, (विष्णुधर्म. १०४, ५५, ५६, ५७) "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणान्न

---

अयं भावः—अपहतपाप्मत्वादिकमेव रूपम् । अस्य जागराद्यवस्थास्वननुभूयमानत्वाद् विपरीतोपलम्भाच्चेन्द्रस्य तदभावशंकायाम्, 'अन्ते परज्योतिरुपसंपत्त्यनन्तरं स्वरूपमिदमभिनिष्पद्यते ; अत इदानीमननुभवेऽपि न क्षतिः' इति प्रजापतिनोक्तम् । अतोऽस्य धर्मस्य कार्यकरत्वं मुक्तावेवेत्याशयेनैव, पूर्वं दहराधिकरणे आविर्भूतस्वरूपस्तु इत्युक्तम्, अत्र मुक्त इति च । एवमस्याविर्भाव एवेति प्रथमसूत्रे कथनात् अस्य रूपस्य स्वेनेत्युक्तं स्वाभाविकत्वमक्षतम् । स्वाभाविकरूपाभिनिष्पत्तिर्नाम अस्वाभाविकरूपनिवृत्तिविशिष्टस्वाभाविकरूपसंपत्तिः ; अस्वाभाविकरूपनिवृत्त्युत्पत्तिरेव । सा निवृत्तिः स्वाभाविकरूपं न भवति, अस्यानादित्वात् ; निवृत्तेश्चागन्तुकत्वात् । अतो निवृत्तिरियं स्वाभाविकरूपप्रकाशरूप एव भावइत्याशयेनाविर्भावः प्रथमसूत्रोक्तः । एवञ्च विपरीतनिवृत्तौ प्रयोक्तव्यः उत्पत्तिवाची अभिनिष्पत्तिशब्दः विशिष्टरूपे उपचारात् प्रयुक्त इत्येव न ; आविर्भावरूपप्रकाशेऽप्यभिनिष्पत्तिशब्दस्य लोके दृष्टेः ; युक्त्या निष्पद्यत इत्यस्य युक्त्याऽवधार्यत इत्यर्थादिति । स्वरूपस्थितिरभिनिष्पत्तिरिति तु नाद्रियते ; तस्याः सार्वदिकत्वादिति ॥ २ ॥

एवं वाक्यार्थवर्णनेऽपि पुरुषार्थसंबन्धासिद्धिरूपो दोषस्तदवस्थः ; दुःखनिवृत्तेरिवापहतपाप्मत्वादेरपि सुखरूपत्वाभावादितीदं निरसितुमुत्तरसूत्रम् । यच्चोक्तमिति उक्तमित्यत्र 'कृत्वेत्यस्यान्वयः । नाहमत्र भोग्यं पश्यामीति जागरस्वप्नसुषुप्तिषु प्रत्यवस्थं जुगुप्सां दर्शितवत इन्द्रस्य अपहतपाप्मत्वादिसत्यसंकल्पत्वान्तगुणं तत्कार्यं जक्षणक्रीडनादिकञ्च कथयता प्रजापतिना अनौपाधिकनानाविधानुभवोपयोग्यात्मस्वरूपवर्णनस्य कृतत्वात् एतद्दशप्रकरणबलात् आविर्भूतस्वरूपोऽयमात्मा अत्यन्तानुकूलत्वेनानुभूयत इति विवक्षितत्वात् कथमयमपुरुषार्थः । सुखस्येव साक्षात् परम्परया वा तत्साधनानामपि पुरुषार्थत्वात् अपहतपाप्मत्वसत्यकामत्वादीनामपि तदस्तीति नित्यं तद्विशिष्टत्वात् पुरुषार्थोऽपि आत्मैवेति सूत्रार्थः ।

ज्ञानमात्मनः क्रियते तथा। यथोदपानकरणात् क्रियते न जलाम्बरम्। सदेव नीयते व्यक्तिमसतः संभवः कुतः। तथा हेयगुणध्वंसादवबोधादयो गुणाः। प्रकाश्यन्ते, न जन्यन्ते, नित्या एवाऽऽत्मनो हि ते" इति। अतो ज्ञानानन्दादिगुणानां कर्मणा आत्मनि सङ्कुचितानां परं ज्योतिरुपसंपद्य कर्मरूपबन्धक्षये विकासरूपाविर्भावो नानुपपन्न इति सुष्ठूक्तं सम्पद्याविर्भावः इति ॥ ३ ॥ इति सम्पद्याविर्भावाधिकरणम् ॥ १ ॥

१५२. अविभागेनदृष्टत्वाधिकरणम् ॥ ४-४-२ ॥

## अविभागेन दृष्टत्वात् । ४ । ४ । ४ ॥

किमयं परं ज्योतिरुपसंपन्नः सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति, उत तत्प्रकारतया तदविभक्तम्--इति विशये—(तै.आन.१) "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता", (मु. ३-१-३) "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति", (गी. १४-

---

प्रकरणवशात पुरुषार्थभूतमपहतपाप्मत्वादिकं प्रकरणादेव स्वरूपमेव भवति। अतो न देवाद्यवस्थावत् आगन्तुकं रूपमिति वा। **उदपानं** कूपतटाकादि। **जलाम्बरम्**। जलञ्चाम्बरञ्च। जलमवकाशश्च प्रागेव स्थितमिति। **सदेव**=प्राक् स्थितमेव **व्यक्तिम**भिव्यज्यमानतां **नीयते**। द्रव्यं सर्वं सदिति सत्कार्यवादो हीष्टः। **अवबोधादयः** धर्मभूतज्ञानमपहतपाप्मत्वादिशक्तिविशेषाश्च **न जन्यन्ते** नोत्पाद्यन्ते। **ज्ञानानन्दे**ति। ज्ञानरूपद्रव्यमेवानुकूलत्वांशविषयकतया परिणतमानन्दो भवतीति तदपि रूपं स्थितमेव। **गुणाना**मिति। ननु द्रव्यस्यैव सार्वकालिकसत्त्वं नियतम्; गुणानामागन्तुकत्वमपि स्यादिति किमित्येषामनादित्वमिति चेत्-ज्ञानं द्रव्यं प्रभावदिति ज्ञानानन्दद्रव्यमनाद्येव। आत्मद्रव्यायत्तस्थितित्वमात्रेण गुणत्वव्यवहारः। सत्यकामत्वमित्युच्यमानस्य भोग्यजातस्यापि प्रायो द्रव्यत्वात्, अवस्थानां कादाचित्कत्वेऽपि, अनादित्वमेव। सत्यसंकल्पत्वमित्युक्तसंकल्पोपि ज्ञानद्रव्यमेवेति पूर्वोक्तरीतिरेव। अपहतपाप्मत्वादयः शक्तिविशेषाः गुणा अपि अनाद्यात्मानुबन्धित्वात् अनुत्पन्ना एव स्वीकर्तव्या इति तन्नाशायोगात् कर्मवश्यतारूपसंसारदशायां स्थितानामेव तेषां प्रतिबन्धवशात् कार्याजनकत्वमात्रम्। अन्याश्चानित्यवस्तुगताः शक्तयस्तु तैः सहोत्पद्यमानत्वात् मध्येमध्ये प्रतिबन्धकबलात् नश्येयुः, तदपाये पुनरुत्पद्येरंश्च; नित्यात्मगताः सहजशक्तयस्तु नैवमिति विशेषः। तत् सिद्धं सर्वस्यास्य सहजस्याविर्भाव एवेति। इदं सर्वमभिप्रेत्याह सुष्ठूक्तमिति॥ ब्राह्माधिकरणे अपहतपाप्मत्वादिरूपाविर्भावो वक्ष्यते। अतस्तत्र पूर्वपक्षी 'प्रथमाधिकरणे तस्य विशिष्यानिर्देशात्, रूपपदेन धर्मभूतज्ञानमात्रग्रहणेन तदाविर्भावमात्रं, तत एव ज्ञानसंकोचादिमुक्तत्वम्, तस्य ज्ञानस्य अनुकूलतया वस्तुविषयकस्य पुरुषार्थभूतस्य स्वाभाविकरूपत्वञ्च परं सूत्रत्रयेण विवक्षितमस्तु; अपहतपाप्मत्वादिकं विचार्य निर्धार्यम्' इति मन्यत इति ध्येयम् ॥ ३ ॥

मुक्तौ स्वरूपाविर्भावः फलमित्युक्तम्। जीवात्मस्वरूपानुभवमात्रं कैवल्यापरपर्यायं मोक्षं केचन तीर्थकरा मन्यन्ते। पूर्वोक्तप्रजापतिवाक्यादिप्रकरणपरामर्शे तदुपेक्षितं भवति। तद्वैशद्याय अविभाग-

२) इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इत्यादिश्रुतिस्मृतिभ्यां मुक्तस्य परेण साहित्यसाम्यसाधर्म्यावगमात् पृथग्भूतमनुभवति इति प्राप्ते—उच्यते-अविभागेन-इति। परस्माद्ब्रह्मणः स्वात्मानमविभागेनानुभवति मुक्तः। कुतः? दृष्टत्वात्-परब्रह्मोपसंपत्त्या निवृत्ताविद्यातिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात्। स्वात्मनः स्वरूपं हि, (छा. ६-८-७) "तत्त्वमसि", (बृ. ४-५-१९) "अयमात्मा ब्रह्म", "ऐतदात्म्यमिदं सर्वम्", (छा. ३-१४ १) "सर्वं खल्विदं ब्रह्म" इत्यादिसामानाधिकरण्यनिर्देशैः, (बृ. ६-७ मा) "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः", (य. अ. १-३-२१) "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इत्यादिभिश्च परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतमिति प्रतिपादितम्, (शारी. १-४-२२) "अवस्थितेरिति काशकृत्स्नः" इत्यत्र। अतोऽविभागेन 'अहं ब्रह्मास्मि' इत्येवानुभवति। साम्यसाधर्म्यव्यपदेशो ब्रह्मप्रकारभूतस्यैव प्रत्यगात्मनः स्वरूपं तत्सममिति देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानशुद्धिं प्रतिपादयति; सहश्रुतिस्त्वेवंभूतस्य प्रत्यगात्मनः प्रकारिणा ब्रह्मणा सह तद्गुणानुभवं प्रतिपादयति इति न कश्चिद्विरोधः। ब्रह्मप्रकारतया तदविभागोक्तेर्हि, (शारी. ४-४-५) "सङ्कल्पादेव तच्छ्रुतेः" इत्यादि न विरुध्यते; (शारी. २-१-२२) "अधिकं तु भेदनिर्देशात्", (शारी. ३-४-८) "अधिकोपदेशात्" इत्यादि च ॥ ४ ॥ इति अविभागेनदृष्टत्वाधिकरणम् ॥ २ ॥

---

विचारव्याजेन पूर्णब्रह्मानुभवमेव पृथक् स्थापयति द्वितीयाधिकरणे। जीवपरमात्मनोरविभागः अपृथक्सिद्धिः प्राक् साधितैव। अथापि साम्यसाधर्म्यादिवचनविरोधान्न तदनुभवः संभवतीति प्रत्यवस्थानम्। अविभागे अपृथक्सिद्धिरूपेऽनुभूयमाने शरीरात्मभावोऽनुभूयत इत्यनुक्तिसिद्धम्। एवञ्चाऽऽधेयत्वविधेयत्वशेषत्वेष्वनुभूयमानेषु शेषत्वानुगुणकैङ्कर्यव्यग्रतायामापतितायां स्वामिदासभूतयोः कथं साम्यसाधर्म्यवचनं घटेत। तस्मादविभागो नानुभूयते। अननुभूयमानस्य तस्य सद्भावोऽपि तर्हि न संमन्तव्य इति चेत्—विभोः परमात्मतः पृथक्सिद्धिः कथं भवितुमर्हति? आधाराधेयभावमात्रस्य नियतस्य, ज्ञानत्वेन समयोर्धर्मधर्मिज्ञानयोरिव, स्वीकार्यत्वेऽपि विधेयत्वं शेषत्वञ्च मुक्तौ मा भूदिति पूर्वपक्ष्याशयः। आत्मत्वेनोपासनस्य प्रागुक्तत्वात् फलस्य यथोपासनभावित्वात् आत्मशब्देन शेषशेषिभावनियन्तृनियाम्यभावाविवक्षायां प्रमाणाभावात् अन्तर्यामिब्राह्मणादौ शरीरात्मभावस्य स्पष्टमुक्तत्वाच्च सर्वमस्ति; अनुभूयते च। प्रकारप्रकारिभावस्य साम्यस्य च न विरोध इति सिद्धान्तः। एवमनेनाधिकरणेन जीवस्याशेषशेषतैकरतित्वं स्थापितम्; अवश्यवक्तव्यस्यास्यान्यतोऽसिद्धेः। साहित्यसाम्यसाधर्म्यावगमादिति। सहेति, साम्यमिति, साधर्म्यमिति च शब्दैरवगमितार्थबलादित्यर्थः। साहित्यं समानदेशवर्तित्वम्। तदप्येकस्यान्योपसर्जनत्वं वारयति। समयोरेव नित्यसाहित्यसंभव इति। व्यपदेशत्रयाविरोधं दर्शयति साम्येति। अविभागो ब्रह्मैक्यमित्यद्वैती। तत्राह ब्रह्मप्रकारेति। ऐक्ये, उपर्यधिकरणत्रये पूर्वञ्च स्पष्टं भेदोक्तिविरोध इति ॥४॥

१५३. ब्राह्माधिकरणम् ॥ २ ॥

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः । ४ । ४ । ५ ॥

प्रत्यगात्मनः परं ज्योतिरुपसंपद्य निवृत्ततिरोधानस्य स्वरूपाविर्भाव एवेत्युक्तम् । तत्र येन स्वरूपेणायमाविर्भवति, तत् स्वरूपं श्रुतिवैविध्यात् विचार्यते । किमपहतपाप्मत्वादिकमेवास्य स्वरूपमिति तेन रूपेणायमाविर्भवति, उत विज्ञानमात्रमेवेति तेन रूपेण, अथोभयोरविरोध इत्युभयरूपेणेति । किं तावत् प्राप्तम् ? ब्राह्मेणेति जैमिनिराचार्यो मन्यते । ब्राह्मेण— अपहतपाप्मत्वादिनेत्यर्थः । अपहतपाप्मत्वादयो हि दहरवाक्ये ब्रह्मसंबन्धितया श्रुताः । ब्राह्मेणेति कुतोऽवगम्यते ? उपन्यासादिभ्यः । उपन्यस्यन्ते हि ब्रह्मगुणाः अपहतपाप्मत्वादयः प्रत्यगात्मनोऽपि प्रजापतिवाक्ये, (छा. ८-७-१) "य आत्माऽपहतपाप्मा" इत्यादिना "सत्यसङ्कल्पः" इत्यन्तेन । आदिशब्देन सत्यसङ्कल्पत्वादिगुणायत्ता जक्षणादयः, (छा. ८-१२-३) "जक्षत् क्रीडन् रममाणः" इत्यादिवाक्यावगता व्यवहारा गृह्यन्ते । अत एभ्यः उपन्यासादिभ्यः प्रत्यगात्मनो विज्ञानमात्रस्वरूपत्वं न संभवतीति जैमिनेर्मतम् ॥ ५ ॥

चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः । ४ । ४ । ६ ॥

---

प्रथमाधिकरणेन संगतिमाह **प्रत्यगिति** । मध्ये सूचीकटाहन्यायादेकोऽर्थो विचारित इति भावः । अथवा प्रथमाधिकरणेन पुनरुक्तमिदमिति न मन्तव्यमित्येतदर्थमिदं भाष्यम् । संगतिस्तु—अविभागाविरोधितया पूर्वाधिकरणोक्तं साम्यसाधर्म्यादिपदवाच्यं किंरूपमिति विचार्यत इत्येवम् । एवमपृथक्सिद्धिरूपाविभागोक्तिरयुक्ता ; मुक्तेः कैवल्यरूपतया, किञ्चिन्निरूपितधर्मत्वधर्मित्वराहित्यस्य चैतन्यमात्ररूपत्वस्य वक्तव्यत्वादित्यौडुलोमिमतानुरोधिशंकायामधिकरणारम्भ इति **सारावलित** ऊह्यम् । अत्र जक्षणाद्युपन्यासस्यापि **उपन्यास**पदेनैव ग्राह्यत्वसंभवात् किमिति **आदि**पदमिति न शंक्यम् ; उप-समीपे न्यासः-ब्रह्मनिष्ठत्वेनोक्तस्य तत्संनिकृष्टे वचनमित्यर्थात् दहरविद्यायां तन्निष्ठत्वेनावगमितस्यापहतपाप्मत्वादेः प्रजापतिवाक्ये जीवात्मनि वचनमिति ब्राह्मत्वोपपादनम् । एवं जक्षणादेः प्रागनुक्ततयेदृशोपन्यासाभावात् **आदि**पदप्रयोग इति । **व्यवहाराः** व्यापाराः । तेषां सत्यकामत्वादिकार्यत्वात् ततो ब्राह्मरूपत्वसिद्धिः । ननु सिद्धान्तेऽपि ब्राह्मरूपस्येष्टत्वात् बादरायणमतादत्र को विशेषः । अविशेषश्चेत्, इदमेवोत्तरसूत्रं कर्तुं युक्तम् ; तृतीयसूत्रेणैकीकार्यं वा इत्याशंकायां जैमिन्याशयं दर्शयति **अत** इति । विज्ञानघनएवेति वाक्ये एवकारेण विज्ञानघनत्वान्ययोगव्यवच्छेदात् विज्ञानमात्ररूपतेति औडुलोमिः । तत्तु वाक्यं रसघनदृष्टान्तस्वारस्यात् विज्ञानगुणकत्वमेव ब्रूयात् ; न विज्ञानस्वरूपत्वम् । अतः कामसंकल्पयोर्विज्ञानान्तर्भावसंभवात् धर्मधर्मिभावसत्त्वेन धर्मान्तरमपि सुस्वीकरमिति एवकारो निर्धर्मकत्वव्यवच्छेदकः स्यात् । अथवा विज्ञानगुणकत्वस्यैव सिद्ध्या विज्ञानत्वं गुणे एव, न तु स्वरूपे इति विज्ञानत्वव्यवच्छेदक एवेति जैमिन्याशयः । बादरायणस्तु विज्ञानस्वरूपत्वमप्यौडुलोम्युक्तमभ्युपगच्छतीति विशेष इति भावः ॥ ५ ॥

चैतन्यमात्रमेवास्य स्वरूपमिति तेन रूपेणाविर्भवतीत्यौडुलोमिराचार्यो मन्यते। कुतः? तदात्मकत्वात्—तावन्मात्रात्मकत्वादस्य प्रत्यगात्मनः। (बृ. ६-५-१३) "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव", (बृ. ४-४-१२) "विज्ञानघन एव" इत्यवधारणात् विज्ञानमात्रमेवास्य स्वरूपमित्यवगम्यते। अतोऽस्य गुणान्तराभावात्, "अपहतपाप्मा" इत्यादयः शब्दाः विकार-सुखदुःखाद्यविद्यात्मकधर्मव्यावृत्तिपरा इति चितितन्मात्ररूपेणाविर्भाव इत्यौडुलोमेर्मतम्॥६॥

संप्रति भगवान् बादरायणः स्वमतेन सिद्धान्तमाह—

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः। ४। ४। ७॥

एवमपि—विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि, सत्यकामत्वादीनां पूर्वोक्तानां गुणानामविरोधं बादरायण आचार्यो मन्यते। कुतः? उपन्यासात् पूर्वभावात्—औपनिषदात् "य आत्माऽपहतपाप्मा" इत्याद्युपन्यासात्प्रमाणात् पूर्वेषाम् अपहतपाप्मत्वसत्यकामत्वादीनामपि भावात् विद्यमानत्वात्। तुल्यप्रमाणकानामितरेतरबाधो न युज्यत इत्यर्थः। न च वस्तुविरोधादपहतपाप्मत्वादीनामविद्यापरिकल्पितत्वं न्याय्यम्; 'विशेषाभावात् विपरीतं

---

चैतन्येति। चितितन्मात्रेण—चितिश्चैतन्यम्, तद्गतचैतन्यत्वमात्रेणेत्यर्थः। तच्छब्देन चैतन्यत्वग्रहणं कथमिति चेत्—चितिपदशक्यतावच्छेदकतयोपस्थितत्वात्। वस्तुतो ज्ञानातिरिक्तज्ञानत्वरूपधर्मास्वीकारं दर्शयितुं तत्पदेन ग्रहणम्। ननु चैतन्यमात्रतायाः सार्वदिकत्वात् कोऽयमाविर्भावः। ब्रह्मरूपस्य तु साक्षात्कारविषयत्वरूपाविर्भावः सुवच आसीदिति चेत्—अयमौडुलोम्याशयः—आविर्भावोऽयमौपाधिकाकारनिवृत्तिविशिष्टयमेव। इदमेवापहतपाप्मत्वादिकम्। सत्यकामः सत्यसंकल्प इत्यनेन च, अपवर्गप्राप्तेः प्राक् तस्य सत्यस्य स्थिरस्य प्राप्तये कामः संकल्पश्चासीदिति, एकैकस्याप्यात्मनः स्थिरविषयककामसंकल्पस्वभावकत्वं यद् बन्धकालेऽस्ति तद् बोध्यते। अतो नापवर्गे कैवल्यरूपेऽन्यधर्मप्रसक्तिरिति। सैन्धवघनः लवणखण्डः। व्यावृत्तिपरा इति। कामाद्युपलक्षितत्वं वाच्यार्थः सत्यकाम इत्यादेः। तेन तदा तद्वैशिष्ट्यव्यावृत्तिरेव कृता भवतीति॥ ५॥

विज्ञानमात्रस्वरूपत्वेति। मात्रशब्दोऽवधेयः। विज्ञानगुणकत्वमेवोच्यते, न तु विज्ञानस्वरूपत्वमिति जैमिनिपक्षं परित्यज्य आत्मस्वयम्प्रकाशत्वप्रामाणिकत्वानुरोधेनात्रापि तदर्थकत्वविवक्षां कृत्वा एवकारेण तन्मात्ररूपकत्वप्रतिपादनेऽपीत्यर्थः। उपन्यासात् पूर्वभावात् पूर्वोक्तेनोपन्यासरूपहेतुना ब्रह्मरूपस्य सत्यकामत्वादेर्भावात्। एवकारस्यान्ययोगव्यवच्छेदपरत्वेऽपि प्रमाणावगतधर्मव्यतिरिक्तधर्मव्यवच्छेदकत्वमेव तस्य। न हि चक्षुर्मात्रग्राह्येत्युक्तौ मनोग्राह्यत्वस्यापि व्यवच्छेदो भवति। न च सत्यकामत्वाद्युपलक्षितत्वमत्रोच्यते; ब्रह्मरूपत्वादस्य, ब्रह्मणि यादृशं तादृशस्यैवात्र वक्तव्यत्वात् बन्धकाले तादृशसत्यकामत्वादेरभावेनापवर्ग एव तस्य संमन्तव्यत्वात्। इतरेतरबाध इति। एकेनान्यस्य बाध इत्यर्थः। न हि रसघन एवेत्यनेन रूपादिबाध इति भावः। अपहतपाप्मत्वादीनामविद्यापरिकल्पितत्वमिति।

कस्मान्न भवति' इति न्यायात् । तुल्यबलत्वे ह्यशक्यस्यावधारणस्यान्यपरत्वमेव न्याय्यम् ॥

एवमप्यविरोधः इति अभ्युपगम्यवदन् ज्ञानमात्रमेवास्य स्वरूपम्, नान्यत् किञ्चिदस्तीत्ययमर्थः, (बृ. ४ ४-१२) "विज्ञानघन एव" इत्यादिभिर्न प्रतिपाद्यत इति मन्यते । कस्तर्हि (बृ. ४-४-१२) "विज्ञानघन एव" इत्यवधारणस्यार्थः? कृत्स्नोऽप्यात्मा जडव्यावृत्तस्वप्रकाशः, नान्यायत्तप्रकाशः स्वल्पोऽपि प्रदेशोऽस्तीत्ययमर्थो वाक्यादेव सुव्यक्तः, (बृ. ६-५-१३) "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इति । न चैवं प्रत्यगात्मनो धर्मिस्वरूपस्य कृत्स्नस्य विज्ञानघनत्वेऽप्यपहतपाप्मत्वसत्यसङ्कल्पत्वादिधर्मसंबन्धो वाक्यान्तरावगतो विरुध्यते; यथा सैन्धवघनस्य कृत्स्नस्य रसघनत्वे रसनेन्द्रियावगते चक्षुराद्यवगताः रूपकाठिन्यादयो न विरुध्यन्ते । इदमत्र वाक्यतात्पर्यम्—यथा रसवत्सु आम्रफलादिषु त्वगादिप्रदेशभेदेन रसभेदे सत्यपि सैन्धवघनस्य सर्वत्रैकरसत्वम्—तथाऽऽत्मनोऽपि सर्वत्र विज्ञानस्वरूपत्वम्; स्वप्रकाशस्वरूपत्वमित्यर्थः ॥ ७ ॥ इति ब्राह्माधिकरणम् ॥ ३ ॥

---

पाप्मजरामृत्युशोकादिसंभावनार्हदेहादिमत्त्वेऽपि तन्निरोधित्वरूपशक्तिविशेषरूपा हि अपहतपाप्मत्वादयः देहित्वावस्थायामेवेति तेषामविद्याकल्पितत्वमद्वैतपरौडुलोम्यादीष्टम् । **अन्यपरत्वमि**ति । विज्ञानघनत्वं विज्ञानतामात्रस्वरूपकत्वम् । मात्रचा नापहतपाप्मत्वादिरूपकत्वनिरासः, प्रतिपन्नत्वात् । किंतु देहाद्यात्मवादिचार्वाकाद्यवेदान्तिकल्पितरूपकत्वनिरास इति भावः । सौत्रस्यापिशब्दस्य तात्पर्यमाह **एवमपी**त्यादिना ।

विज्ञानमात्रस्वरूपकत्वमिति अन्ययोगव्यवच्छेदो नात्रैवकारार्थः; विशेष्यसंगत एवकारो ह्यन्ययोगव्यवच्छेदार्थकः; अयं तु विशेषणसंगतः । अतो ज्ञानस्वरूपत्वायोगव्यवच्छेदः एतदर्थः । एवञ्च न ब्राह्मरूपनिषेधप्रसक्तिलेशोऽपीति भावः । **स्वप्रकाशस्वरूपत्वमित्यर्थ** इति । नन्वेवंसति, निरवयवस्यात्मनोऽणोः प्रदेशभेदाभावात् एकदेशजडत्वशंकाप्रसक्त्यभावात् किमर्थमिदं वाक्यमि चेत्—औडुलोमिना अद्वैतिना मुक्तानां जीवानां चिन्मात्रात्मभाववादिना तद्विभुत्वस्येष्टत्वात् प्रदेशभेदेन जडप्रपञ्चपरिणामार्हत्वादिना जडत्वसंभावनायां तन्निरासार्थमेवमर्थ औडुलोमिनैव सुस्वीकर इति सूत्रकाराशय इति भाष्यतात्पर्यम् । एवमपीत्यपिशब्दः—ज्ञानमात्रस्वरूपकत्वमित्यर्थमभ्युपगम्येतिवत्, विज्ञानघन इत्यस्य ज्ञानस्वरूपत्वमित्यर्थमभ्युपगम्यापि ब्रूमः इत्यर्थमपि सूचयतीति ज्ञानस्वरूपत्वातिरिक्तार्थेऽप्यादरोक्तिः संभवति । मत्रयीब्राह्मणप्रकरणमिदं, हि 'न प्रेत्य संज्ञाऽस्ती'त्येवं नित्यज्ञानगुणकत्वनिरूपणपरमिति तदनुगुणार्थवर्णनं वरम् ।

ननु रसघनदृष्टान्तस्वारस्यात् **आत्मसिद्धौ, जिज्ञासाधिकरणे** चोदाहृतरीत्या विज्ञानगुणकत्वमेव चेत् विज्ञानघनशब्दार्थः, तदा एवकारार्थः क इति चेत्—आत्मा **अनन्तरः** देहान्तरवर्तमानोऽपि **अबाह्यः** देहाद्यन्तः स्थितोऽपि सर्वत्र विज्ञानवानेवेति ज्ञानगुणायोगव्यवच्छेदः, जानात्येवायं पुरुष इतिवत् । विज्ञानं प्रकाश इति पक्षे च **अनन्तरःअबाह्यः** गुणतः स्वरूपतश्च प्रकाशवान् ज्ञानस्वरूपो ज्ञानगुणकश्च; न तत्रैकस्य जडत्वमित्यर्थः । द्वितीयोऽर्थो जिज्ञासाधिकरणे **टीकायामुक्तः** ॥ ६ ॥

१५४. संकल्पाधिकरणम् ॥ ४ ॥

संकल्पादेव तच्छ्रुतेः । ४ । ४ । ८ ॥

मुक्तः परं ब्रह्मोपसंपद्य ज्ञानस्वरूपोऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक आविर्भवतीत्युक्तम् । तमधिकृत्य सत्यसङ्कल्पत्वप्रयुक्ताः व्यवहाराः श्रूयन्ते, (छा. ८-१२-३) "स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इति । किमस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा, उत परमपुरुषस्येव सङ्कल्पमात्रादेव भवतीति विशये—लोके राजादीनां सत्यसंकल्पत्वेन व्यवह्रियमाणानां कार्यनिष्पादने प्रयत्नान्तरसापेक्षत्वदर्शनादस्यापि तत्सापेक्षा—इति प्राप्ते उच्यते—सङ्कल्पादेव—इति । कुतः? तच्छ्रुतेः । (छा. ८-२-१) "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इति हि सङ्कल्पादेव पित्रादीनां समुत्थानं श्रूयते । न च प्रयत्नान्तरसापेक्षत्वाभिधायि श्रुत्यन्तरं दृश्यते; येनास्य "सङ्कल्पादेव" इत्यवधारणस्य (४-४ ७) "विज्ञानघन एव" इतिवत् व्यवस्थापनं क्रियते ॥ ८ ॥

अत एव चानन्याधिपतिः । ४ । ४ । ९ ॥

यतो मुक्तः सत्यसङ्कल्पः; अत एवानन्याधिपतिश्च । अन्याधिपतित्वं हि विधि-

---

प्रजापतिवाक्ये स्वरूपाभिनिष्पत्तिकथनानन्तरं जक्षणक्रीडनादिकं कथितम् । तदिदं संकल्पमात्रादिति, दहरविद्यायामपहतपाप्मत्वादिसत्यकामविशिष्टपरमात्मभाजः कामचारोपपादनार्थैः, 'स यदि पितृलोककामो भवति, संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिभिर्वाक्यैरवगम्यते । तत्र एवकारस्यान्ययोगव्यवच्छेदकत्वात् प्रयत्नादिनिरपेक्षत्वमिष्टम् । अत्र पूर्वपक्षी—यथा विज्ञानघन एवेत्यत्रान्ययोगव्यवच्छेदेऽपि ब्रह्मरूपव्यवच्छेदो न भवतीति संकोचः कृतः, तथाऽत्राप्यस्तु । राजादीनां सत्यसंकल्पत्वमिव मुक्तसत्यसंकल्पत्वमपि उद्दिष्टकार्यापूर्त्यभावमात्रादिति सुवचत्वात् प्रयत्नादिकारणव्यवच्छेदं विना अस्य प्रतिबन्धकनिरसनानपेक्षत्वे पर्यवसानं युक्तम् । अवश्यञ्च परमात्मसंकल्पस्य सहकारित्वमङ्गीकार्यमिति अविशेषात् प्रयत्नादिकमपि लोकदृष्टं न निषेध्यम् । अथवा एवकारोऽयोगव्यवच्छेदपरः । 'यथा लोके बद्धस्य पुरुषस्य असंकल्पितानपेक्षितमातापित्रादिप्राप्तिर्भवति, न तथा मुक्तस्य. यद्यत् प्राप्यते तत् सर्वं तत्संकल्पाविनाभूतम्' इति वर्णनसंभवात्—इति विज्ञानघनएवेत्यत्र पूर्ववर्णितार्थातिदेशेन प्रत्यवतिष्ठत इति संगतिः । सिद्धान्ते **विज्ञानघनएवेतिवत्** इति भाष्येण संगतिरियं सूचयिष्यते । अपहतपाप्मत्वादिपरवाक्यवत् विशिष्य मुक्तस्य प्रयत्नादिसद्भावपरवाक्याभावात् श्रुतैवकारस्वरसार्थः लोकदृष्टन्यायातिदेशवारको भवतीति प्रयत्नाद्यनपेक्षैवेति सिद्धान्तः ॥ ४ ॥

राजादीनां कर्मवश्यतया प्रायः प्रयत्नाद्यपेक्षा; कर्मवश्येष्वपि केचिदृषिदेवप्रभृतयः संकल्पमात्रेण किञ्चित् साधयन्ति; किमुत मुक्ता इति स्वराट्श्रुतिमपि प्रमाणयितुमाह **अत एव** चेति । संकल्पमात्रनिष्पादनशक्ततया सत्यसंकल्पत्वादेवानन्याधिपतिश्चोक्तोऽयं स्वराट्छब्देन । **अनन्याधिपति-**

निषेधयोग्यत्वम् । विधिनिषेधयोग्यत्वे हि प्रतिहतसङ्कल्पत्वं भवेत् । अतः सत्यसङ्कल्पत्वश्रुत्यैवानन्याधिपतित्वं च सिद्धम् । अत एव, (छा. ७-२५-२) "स स्वराड्भवति" इत्युच्यते ॥ ९ ॥ इति सङ्कल्पाधिकरणम् ॥ ४ ॥

१५५. अभावाधिकरणम् ॥ ५ ॥

## अभावं बादरिराह ह्येवम् । ४ । ४ । १० ॥

किं मुक्तस्य देहेन्द्रियाणि न सन्ति, उत सन्ति, अथवा यथासङ्कल्पं सन्ति न सन्ति चेति विशये—शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते ; कुतः ? आह ह्येवम् । (छा. ८-१२-

श्चेति भाष्यात् चकारस्योत्तरपदेनान्वयो ज्ञायते । अन्याधिपतिकत्वमीश्वरातिरिक्ताधिपत्यधीनत्वम् । 'स स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति ; येऽन्यथाऽतो विदुः, अन्यराजानः ते क्षय्यलोका भवन्ति । तेषां सर्वेषु लोकेष्वकामचारो भवति 'इत्युक्तं भूमविद्यायाम् । दहरविद्यायाम् , 'पुण्यचितो लोकः क्षीयते । तद् य इहात्मानमननुविद्य व्रजन्ति, एतांश्च सत्यान् कामान् , तेषां सर्वेषु लोकेष्वकामचारो भवति 'इति अकामचारस्य पुण्याधीनत्वोक्त्या भूमविद्यायामन्यराजान इत्यन्यपदेन पुण्यग्रहणमिति ज्ञायते । पुण्यकर्मफलप्रदातृदेवतान्तरराजकत्वोक्तावपि तात्पर्यमेकमेव । एतांश्च सत्यान् कामानिति समुच्चयस्वारस्यात् मुक्तिहेतुभूतापहतपाप्मत्वादिगुणविशेषविशिष्टपरमात्मोपासन तत्तुल्यमुक्तयर्थोपासनातिरिक्तं परमात्मतदितरविषयकं सर्वमन्यपदग्राह्यम् । तदधिपतिकत्वाभावः अनन्याधिपतित्वम् । अनधिपतिरित्यनुक्त्वा अन्यपदप्रयोगः ईश्वररूपाधिपतिसद्भावात् तदतिरिक्तस्य श्रुतौ अन्यपदोक्तस्यैव प्रतिषेध इति ज्ञप्तये । यद्यपि श्रौतस्य स्वराट्छब्दस्य स्वस्य स्वात्मराजकत्वरूपोऽर्थो बाधित इति स्वान्यराजकत्वाभावः तदर्थः, स्वराट्छब्दव्याख्यानमेव सूत्रे अनन्याधिपतिशब्देन कृतमिति अन्यशब्दः स्वान्यपर एव स्यात्, न तु ईश्वरान्यपरः—तथापि यथासंकल्पसंचाररूपकामचारविरोध्यकामचारो यदधीनतया श्रुत्युक्तः तदधिपतिकत्वाभावस्यैव तत्पदविवक्षिततायाः प्रकरणादवगमात् न प्रमाणसिद्धेश्वराधिपतिकत्वप्रतिषेधप्रसक्तिः । अन्यशब्दस्य स्वभिन्नस्वसजातीयपरत्वस्य प्रसिद्धतया स्वसजातीयबद्धचेतनान्तरभूतदेवतान्तराधिपतिकत्वाभावरूपार्थग्रहणमपि भवेत् । न च स्वसंकल्पस्येश्वरसंकल्पेन प्रतिरोधः । सर्वसाक्षात्कारिणा तदेकशेषत्वरसिकेन मुक्तेन परमात्मसंकल्पप्रत्यक्षीकरणेन तदनुरूपसंकल्पस्यैव स्वीकरणात् । संकल्पातिरिक्तकारणानपेक्षत्वपरेण च एवकारेण स्वसंकल्पानन्तरभाविप्रयत्नादिकारणापेक्षाविरहस्यैवावगमेनेश्वरसंकल्पस्यैतत्संकल्पात् प्रागेव स्थितस्य नैव वारणप्रसक्तिरिति ॥ ९ ॥

एवं मुक्तस्य व्यापारनिरपेक्षसंकल्पमात्रेण बहुसंपन्नत्वमुक्तम् । इदमाक्षिप्यते बादरिणा—कथं हि स्वस्य पुत्रत्वाभावे केषांचित् पितृलोककामो भवतीत्युक्तः पित्रादिभावः । पुत्रत्वञ्च मुक्तस्य न युक्तम्-देहेन्द्रियाद्यभावात् । तदभावश्च श्रुतेः, सुखदुःखप्राप्त्या मुक्तत्वभङ्गाच्चावसीयते । अतः संकल्पं सिद्धं कृत्वा एवकारार्थविचारोऽयं न घटते । एकधाभवति त्रिधाभवतीत्यादिकं तु शुद्धस्यैवाऽऽत्मनः संसारावस्थावस्थितवैविध्यानुवादमात्रम् । अयुक्तश्च संकल्पशरीरादिस्वीकारः, सता संकल्पस्य सर्वा-

१, २) "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति शरीरसंबन्धे दुःखस्यावर्जनीयत्वमभिधाय, (छा. ८-१२-१, २) "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति मुक्तस्याशरीरत्वं ह्याह श्रुतिः ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् । ४ । ४ । ११ ॥

मुक्तस्य शरीरेन्द्रियभावं जैमिनिराचार्यो मन्यते। कुतः? विकल्पामननात्—विविधः कल्पो विकल्पः; वैविध्यमित्यर्थः। (छा. ७ २६-२) "स एकधा भवति त्रिधा भवति पञ्चधा। सप्तधा" इत्यादिश्रुतेः। आत्मन एकस्याच्छेद्यस्यानेकधाभावासंभवात् त्रिधाभावादयः शरीरनिबन्धना इत्यवगम्यते। अशरीरत्ववचनं तु कर्मनिमित्तशरीराभावपरम्; तदेव हि शरीरं प्रियाप्रियहेतुः ॥ ११ ॥

भगवांस्तु बादरायणः स्वमतेन सिद्धान्तमाह —

द्वादशाहवदुभयविधं बादरायणोऽतः । ४ । ४ । १२ ॥

'सङ्कल्पादेव' इत्येतत् अतश्शब्देन परामृश्यते; अत एव सङ्कल्पात्, उभयविधं सशरीरमशरीरं च मुक्तं भगवान् बादरायणो मन्यते। एवञ्चोभयी श्रुतिरुपपद्यते। द्वादशाहवत्—यथा "द्वादशाहमृद्धिकामा उपेयुः", "द्वादशाहेन प्रजाकामं याजयेत्" इत्युपैतियजतिचोदनाभ्यां सङ्कल्पभेदेन सत्रमहीनं च भवति ॥ १२ ॥

---

वेदनश्रुतेरिति। तत्र जैमिनिपक्षमभ्युपन्यस्य स्वपक्षोऽपि प्रतिबोध्यते सूत्रकारेण। यद्वा विज्ञानघनएवेत्यत्र सर्वव्यवच्छेदो न भवतीत्युक्तम्। संकल्पादेवेत्यत्र एवकारः सर्वव्यवच्छेदक इति पश्चादुक्तम्। एवम् अशरीरमिति पदमपि सर्वशरीरनिषेधकमिति शंकत इति संगतिः।

पञ्चधासप्तधेत्यादीति। 'स एकधा भवति त्रिधा भवति पञ्चधा। सप्तधा नवधा चैव पुनश्चैकादश स्मृतः। शतञ्च दश चैकश्च सहस्राणि च विंशतिः।" इति श्लोकाः। मुक्तिदशाप्रकरणे कथितमिदम्। अतः संसारदशास्थितमात्रमिति वचनं साहसम्। गुणाष्टकाविर्भाव-संकल्पकल्पितानेकस्वादिपरपरस्सहस्रवचनविरोधश्च। सर्वमिदं विकल्पामननादित्यत्र विवक्षितमित्यभिप्रायेण इत्यादिश्रुतेरिति भाषितम् ॥ ११ ॥

सर्वदा सशरीरत्वं जैमिनीष्टम्। पूर्वाधिकरणे विज्ञानस्वरूपत्वगुणाष्टकादेः सर्वदा समुच्चयः कथितः; इह सशरीरत्वाशरीरत्वयोः कालभेदेन समुच्चयः। सत्रं बहुयजमानकमेव; अहीनं तु न तथा। सत्रत्वे लिङ्गम् उपेयुरिति उपैतिधातुप्रयोगः; अहीनत्वे लिङ्गं तु यजत इति। एकदिनमात्रे सोमरसमादाय प्रधानयागो ज्योतिष्टोमे। दिनद्वयादौ सोमयागे द्विरात्रप्रभृत्येकादशपर्यन्तमहीनता। त्रयोदशाहप्रभृति सत्रम्। मध्ये द्वादशाहश्चोभयविध इति। संकल्पभेदेनेति। श्रुतौ उपैतियजतिचोदनाश्रवणेन भेदावगमेऽपि अनुष्ठानकाले भेदावगमः संकल्पादेवेत्याशयः। द्वादशाहमुपैष्याम इति सत्र-

यदा शरीराद्युपकरणवत्त्वम्; तदा तानि शरीराद्युपकरणानि स्वेनैव सृष्टानीति नास्ति नियम इत्याह—

तन्वभावे सन्ध्यवदुपपत्तेः । ४ । ४ । १३ ॥

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेः सत्यसङ्कल्पोऽपि स्वयं न सृजति । यथा स्वप्ने, (बृ. ६-३-१०) 'अथ रथान् रथयोगान् पथः सृजते" इत्यारभ्य,

---

संकल्पः । द्वादशाहेन यक्ष्ये इति अहीनसंकल्पः । अनयोर्लक्षणं (पू. १०-६-१६) अधिकरणे उक्तम् । उपेतीत्युपलक्षणम् । 'सत्रमासत' इति आसनचोदनाया अपि सत्त्वात् । नियतबहुयजमानकंसत्रम् । अनियतयजमानसंख्याकाहर्गणत्वमहीनत्वम् । एकाहेषु अतिव्याप्तिवारणाय गणपदम् ॥ १२ ॥

उभयविधमित्युक्त्या बादरिसंमतं ज्ञानाद्यभावेन स्वरूपेणावस्थानमप्यशरीरत्वावस्थायामिष्टमिति कश्चिन्मन्येत । तद्व्यावृत्तये उपरि सूत्रद्वयेन स्वाशयाविष्करणमिति प्रतीयते । तथा संकल्पादेवेत्युक्त्या स्वसंकल्पाभावे न पित्रादिरिति मतिनिरासार्थश्च । तत्र प्रथमसूत्रेण-यथा स्वप्ने देहेन्द्रियव्यापाराभावेऽपि नानाविधोऽनुभवोऽस्ति, तथा मुक्तस्यापि भवितुमर्हतीति वक्तव्यम् । तत्रेदं विचार्यम्—किमत्र संध्यवदिति दृष्टान्तीकरणं स्वाप्नसत्यत्वपक्षे, उत पक्षान्तरे । आद्ये देहान्तरग्रहणेनैव तत्तदनुभवात न दृष्टान्तता । अन्त्ये मुक्तस्य नानाविधविभ्रमवशत्वं स्यात् । पित्रादिषु सत्सु तथाग्रहणात । न च किञ्चिदंशमात्रेण दृष्टान्तत्वं युज्यते यथा स्वप्नानुभवो देहेन्द्रियनिरपेक्षः, तथा तदा मुक्तानुभव इतीति वाच्यम्-स्वप्नानुभवस्य मनस्सापेक्षत्वात् । न चात्रापि 'मनसैतान् कामान् पश्यन् रमते' इति तत् सर्वदैवेष्टम्; देहेन्द्रियाभावेऽपि निर्वाहायैव मनसेत्युक्तत्वादिति वाच्यम्—देहनिरपेक्षस्य मनसः कुत्रापि कार्यकरत्वादर्शनात् । संध्येऽपि तस्य देहस्थत्वात् कारणत्वोपपत्तेः । अतो मनःपदमिह धर्मभूतज्ञानपरम्; अत एव (छा८-१८ ५.) "स वा एष एतेन दिव्येन चक्षुषा मनसा" इति दिव्यचक्षुष्ट्वस्य तत्रोक्तिरिति । अथ—स्वप्नेऽपि बाह्येन्द्रियाणामिव मनसोऽप्यपेक्षामुपेक्ष्य धर्मभूतज्ञानपरिणामप्रभेदवशादेव कर्माधीनात् सर्वनिर्वाहो विषयासत्यत्वपक्षान्वारोहेऽपि सिद्धान्तिना वक्तुं शक्यत इति तदभिप्रायकमिदं संध्यवदिति दृष्टान्तवचनमिति चेत्—एवं वा किं न स्यात्—देहादिसत्त्वे मुक्तः तैर्व्यापृत्य सामग्रीसंविधानेन कार्यपरम्परया क्रमेणापेक्षितं साधयति; तदसत्त्वे च स्वप्ने यथा कश्चित् पूर्वकारणसमावेशप्रतीक्षानिरपेक्षमेव पायसपाननदीतरणराज्याभिषेकादिमान् भवति, तथा संकल्पितमनुभवतीति सन्ध्यवदित्युक्तमिति । इदञ्च सत्यत्वासत्यत्वपक्षसाधारणम् । सत्यत्वपक्षे च पायसादिकं परमात्मसंकल्पसृष्टम् । देहादिसाध्यकार्यकारणपरम्पराक्रमविरहेऽपि वस्त्वनुभव इत्येतावन्मात्रे संध्यमिह दृष्टान्तः; न तु पायसपानादेरेव विवक्षा, देहाद्यभावात् । ईदृशव्याख्यानविकल्पावकाशे सत्यपि भाष्यकारः यादृशार्थस्वीकारे स्वाप्नसत्यत्वपक्षोऽपि रक्षितः स्यात्—देहाभावाद् ज्ञानाद्यभाव इति बादरिपक्षोऽपि क्षिप्तः स्यात्—तादृशमर्थमादृत्य व्याख्याति स्वेनैवेति । पूर्वं संकल्पादेवास्य पितरः समुत्तिष्ठन्तीति वाक्यं हि विचारितम् । तेन स्वसृष्टदेहेन्द्रियभोग्यभोगोपकरणशालित्वं बुद्धिस्थं तन्वभावे इत्यनूद्यते । तदा स्वप्न इव परमात्मसंकल्पमात्र-

"अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता" इति, (कठ. ५-८) "य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति ईश्वरसृष्टैः रथाद्युपकरणैर्जीवो भुङ्क्ते—तथा मुक्तोऽपि लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥ १३ ॥

भावे जाग्रद्वत् । ४ । ४ । १४ ॥

स्वसङ्कल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे जाग्रत्पुरुष[भोग]वत् मुक्तोऽपि लीलारसं भुङ्क्ते ॥ परमपुरुषोऽपि लीलार्थं दशरथवसुदेवादिपितृलोकादिकमात्मनः सृष्ट्वा तैर्मनुष्यधर्मलीलारसं यथा भुङ्क्ते—तथा मुक्तानामपि स्वलीलायै पितृलोकादिकं स्वयमेव सृजति कदाचित्, कदाचिच्च मुक्ताः सत्यसङ्कल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ॥ १४ ॥

नन्वात्माऽणुपरिमाण इत्युक्तम्; कथमनेकशरीरेष्वेकस्याणोरात्माभिमानसंभव इत्यत्राह—

प्रदीपवदावेशस्तथा हि दर्शयति । ४ । ४ । १५ ॥

---

सृष्टपदार्थानुभावी भवति । पितृलोकादिभिरिति आदिपदेन अप्रतिसंबन्धिकप्रपञ्चग्रहणमपि । तथा च स्वयंसृष्टतन्वाद्यभावकालो द्विविधः परमात्मसृष्टतन्वादिमत्त्वकालः, शुद्धजीवस्वरूपेणावस्थानकालश्च । तत्र आद्यकाले पित्रादिरूपसप्रतिसंबन्धिकपदार्थानुभवो व्यवहाराश्च सन्ति । अन्त्ये वस्त्वनुभवमात्रमिति भगवल्लीलारसानुभवसंपत्तिरिति। एवमदेहत्वेऽप्यनुभवोपपादनात् बादर्यांशयपरास इति। तनुशब्दः सर्वोपकरणोपलक्षणम् । सूत्रार्थस्तु— संकल्पादेवेत्युक्तस्वसृष्टतन्वाद्यभावेऽपि ज्ञानभोगविशिष्ट एव मुक्तः; सन्ध्य इवोपपत्तेरिति। अनेनेदृशतन्वभावे ज्ञानाद्यभावरूपकैवल्यमेवेति शंकापरिहारायेदं सूत्रमिति सिद्ध्यति ॥

भावे जाग्रद्वत् । ननु किमर्थमिदं सूत्रम्; जैमिनिबादरायणपक्षोपन्यासत एवास्य सिद्धत्वादिति चेत्—शंकाविशेषपरिहारार्थम् । स एवम्—स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वेति ज्ञात्यादिकथनं पितृलोककामो भवति चेत्र पित्रादिबन्धुसंपादनकथनञ्चानुपपन्नम्—स्वस्य किञ्चित्पुत्रत्वेनोत्पत्तावेव हि सर्वमिदं घटेत । न च परमपदे मुक्तेषु सर्वेषु सर्वज्ञेषु अयं मे पुत्रो ज्ञातिर्बन्धुरिति भ्रान्तेरवसरोऽस्ति; येन तादृशाभिसंधिशालिजनताप्रवेशेन स्वयं रसविशेषमनुभवेदित्येवंरूपः । परिहारस्तु पित्रादिसंपादनं ज्ञात्यादिभिर्विहारश्च न परमपदे; किंतु परमात्मवत् स्वस्य तेन सह वा तन्नियोगेन पृथग्वाऽवतारप्रसक्तावेव। अत्र तु बद्धाः पित्रादयोऽवतीर्णमप्येनं पुत्रत्वादिना भ्राम्यन्तीति, विवेकिनोऽस्य रसानुभवः परमात्मन इव भवतीति । इदमाविष्कुर्वन् सूत्रद्वयार्थं कोडीकरोति परमेति । एवमस्य प्राकृतविषयाधीनत्वादेव लीलापदप्रयोगः । मुक्तानामपीति । भोगायेति शेषः । तत्र तथेत्यस्यान्वयः ॥ १४ ॥

देहवत्त्वं सिद्धम्; 'त्रिधा भवति सप्तधे'त्युक्तनानादेहवत्त्वं कथमिति शंकापरिहार उपरि सूत्रेण । अपुनरावृत्तिश्रुतिविरोधात कथं प्रकृतिमण्डले पितृलोकादिसंपादनमित्याशंकापरिहारार्थमपीति

यथा प्रदीपस्यैकस्यैकस्मिन् देशे वर्तमानस्य स्वप्रभया देशान्तरावेशः, तथाऽऽत्मनोऽप्येकदेहस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः । यथा चैकस्मिन्नपि देहे हृदयाद्येकप्रदेशवर्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन् देहे आत्माभिमानः, तद्वत् । इयान् विशेषः---अमुक्तस्य कर्मणा सङ्कुचितज्ञानस्य देहान्तरेषु आत्माभिमानानुगुणा व्याप्तिर्न संभवति; मुक्तस्य त्वसङ्कुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिः, 'इदम्' इति ग्रहणानुगुणा च नानुपपन्ना । तथा हि दर्शयति, (श्वे. ५-म. ९) 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इति । अमुक्तस्य कर्म नियामकम्; मुक्तस्य तु स्वेच्छेति विशेषः ॥ १५ ॥

ननु परं ब्रह्म प्राप्तस्याऽऽन्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः, (बृ. ६-३-२१) "प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" इति; तत् कथं मुक्तस्य सार्वज्ञ्यमुच्यते? तत्रोत्तरम्—

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि । ४ । ४ । १६ ॥

नेदं वचनं मुक्तविषयम्ः अपितु स्वाप्ययसंपत्त्योरन्यतरापेक्षम् । स्वाप्ययः—सुषुप्तिः; संपत्तिश्च—मरणम्, (छा. ६-८-६) "वाङ्मनसि संपद्यते" इत्यारभ्य, "तेजः परस्यां देवतायाम्" इति वचनात् । तयोश्चावस्थयोः प्राज्ञप्राप्तिर्निस्सम्बोधत्वं च विद्येते । अतस्तयोरन्यतरापेक्षमिदं वचनम् । सुषुप्तिमरणयोर्निस्संबोधत्वं, मुक्तस्य च सर्वज्ञत्वमाविष्कृतं हि श्रुत्या । (छा. ८-११-२) "नाह खल्वयमेवं संप्रत्यात्मानं जानाति अयमहमस्मीति, नो एवेमानि भूतानि; विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामि" इति सुषुप्तिवेलायां निस्सम्बोधत्वमुक्त्वा तस्मिन्नेव वाक्ये मुक्तमधिकृत्य, (छा. ८-१२-५) "स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इति

---

भाव्यम् । ननु चैतन्यव्याप्तिमात्रेण चेत कस्यचित् देहत्वम्, तर्हि बद्धेन मुक्तेन च यद्यत् गृह्यते, तत् सर्वं तस्यतस्य देहः स्यादित्यत्राह इयान् विशेष इति । आत्माभिमानानुगुणेतिपदेन धर्मभूतज्ञानपरिणामे किञ्चिद्वैलक्षण्यमभिप्रेतम् । तत् क्वचिदेव भवति कर्मवशात् बद्धस्य, मुक्तस्य च संकल्पवशादिति भावः । ईदृशव्याप्तिविशेष एव परमात्मनः प्रतिवस्तु सृष्टिकाले भवन् अनुप्रवेश इत्युच्यत इति ध्येयम् । मुक्तस्यात्माभिमानो न देहात्मबुद्धिः; किंतु अस्याहमात्मेति यथार्थज्ञानम् । एतदनुगुणा व्याप्तिर्यथासंकल्पं क्वचिदेव । इदमितिव्यवहारानुगुणा व्याप्तिस्तु सर्वविषयेष्वपीति भेदः । मुक्तस्य परमपदे स्थितस्यावतारार्थागमनेऽपि कर्मफलभोगार्थज्ञानसंकोचात्मकोत्पत्त्यभावात् अनावृत्तिवादः । यद्वा परमपदे स्थित एव स्वज्ञानावेशमात्रेणावतीर्णत्वेनोच्यत इति नात्मव्यक्तिरिहावर्तत इति भावः ॥ १५ ॥

नाहेति । अहेत्यव्ययम् । संप्रति सम्यक् । विनाशम् अदर्शनम्, धर्मभूतज्ञानेन विषयीकृतत्वाभावम्; ज्ञानसंकोचं वा । निस्संबोधत्वम् देहादिनैकीकृत्य वा शुद्धतया वा ज्ञानेनाविषयीकारम्; ज्ञाना–

सर्वज्ञत्वमुच्यते । तथा, (छा. ७-२६-२) 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः'' इति च स्पष्टमेव सर्वज्ञत्वमुच्यते । तथा मरणे च निस्सम्बोधत्वम्, (बृ. ४-४-१२) "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इत्युक्तम् । विनश्यति—न पश्यतीत्यर्थः । अतः (बृ. ६-३-२१) "प्राज्ञेनाऽऽत्मना" इति वचनं स्वाप्ययसम्पत्त्योरन्यतरापेक्षम् ॥१६॥

इति अभावाधिकरणम् ॥ १० ॥

१५६. जगद्व्यापारवर्जाधिकरणम् ४ ४-६ ॥

## जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च । ४ । ४ । १७ ॥

किं मुक्तस्यैश्वर्यं जगत्सृष्ट्यादि परमपुरुषासाधारणं सर्वेश्वरत्वमपि, उत तद्रहितं केवलपरमपुरुषानुभवविषयमिति संशयः ।

किं युक्तम्? जगदीश्वरत्वमपीति । कुतः? (मु. ३-१-३) "निरञ्जनः परमं साम्यमुपैति" इति परमपुरुषेण परमसाम्यापत्तिश्रुतेः; सत्यसङ्कल्पत्वश्रुतेश्च । न हि परमसाम्यसत्यसङ्कल्पत्वे सर्वेश्वरासाधारणजगन्नियमनेन विनोपपद्येते । अतः सत्यसङ्कल्पत्वपरमसाम्योपपत्तये समस्तजगन्नियमनरूपमपि मुक्तस्यैश्वर्यमिति । एवं प्राप्ते प्रचक्ष्महे—

जगद्व्यापारवर्जम् इति । जगद्व्यापारः—निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनम् । तद्वर्जं निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तस्यैश्वर्यम् ।

---

भाव वा । सर्वं पश्यतीति ज्ञानप्रसरणमुक्तम् । सर्वमाप्नोतीति विभूत्यनुभव आनन्दरूप उच्यते । सर्वश इति क्रियाद्वयान्वयि । विनश्यतीत्यस्यार्थमाह न पश्यतीति । ननु णश अदर्शन इति धातुपाठः । अदर्शनमदृश्यमानत्वम् । अतो न दृश्यत इति व्याख्येयम् । नैवम्---स्वरूपध्वंसाभावात् ज्ञानसंकोचरूपध्वंसस्यात्र विवक्षितत्वेन तस्यैव विवरणात् । अन्यतरापेक्षम्---अन्यतरोद्देशेन प्रवृत्तम्; अन्यतरावच्छिन्नजीवतात्पर्यकम् । यद्यपि प्राज्ञेनात्मनेतीदं वचनं सुषुप्तिविषयकमेव; अथापि वचनान्तरमप्याशय्यैवमुक्तिः । तत्रैव बृहदारण्यके हि मरणप्रकरणे (६-३.) प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् याति' इति प्रस्तुत्य, (६-४.) अथारूपज्ञो भवति । एकीभवति, न पश्यतीत्याहुः' इत्यादि श्राव्यते ॥ १६ ॥

एवं तावत् मुक्तिः स्वरूपमात्रेणावस्थितिरिति पक्षं निरस्य सत्यसंकल्पत्वविशदीकरणेन मुक्तैश्वर्यस्य रक्षा कृता; अथ व्यवस्था क्रियते अनेनाधिकरणेन । सत्यसंकल्पत्वस्य प्रदीपवदावेशस्य च प्रागुक्त्या परमात्मवत् सर्वनियमनसंकल्पसंभवेन जगत्सृष्ट्यादिकमपि कुर्यादेव । अन्यथा कामचारादिश्रुतिविरोधः । परमसाम्यादिश्रुतेश्च । ननु परमसाम्येऽपि गोलक्षणं गवयस्य न प्रसज्यत इति चेत्—साधारणत्वेन प्रतीयमानस्य जगद्व्यापारस्य लक्षणत्वास्वीकारात् । महत्त्वे सति चेतनत्वं श्रीपतित्वमित्यादि किमपि लक्षणं भविष्यति । स्वातन्त्र्याभावे पुनरावृत्तिप्रसङ्गश्चेति शंकया संगतिः । सृष्ट्यादीति । सृष्टिः सर्जनं जननसंकल्पः । अत ऐश्वर्याभेदान्वयोपपत्तिः । तद्रहितम् । तद्भिन्नमित्यप्रयोगः वर्जमिति सौत्रपदानुसारात् । ऐश्वर्यरूपनियमनसमुदाये जगद्व्यापारो नान्तर्भवतीत्यर्थः । प्रवृत्तिभेदेति । भेदो विशेषः ।

कुतः? प्रकरणात्। निखिलजगन्नियमनं हि परं ब्रह्म प्रकृत्याऽऽम्नायते, (तै. भृगु. १) "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति। यद्येतन्निखिलजगन्नियमनं मुक्तानामपि साधारणं स्यात्, ततश्चेदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते। असाधारणस्य हि लक्षणत्वम्। तथा, (छा.६ २-१) "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत", (बृ. ३-४-११) "ब्रह्म वा इदमेकमेवाग्र आसीत्। तदेकं सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रम्—यान्येतानि देवत्रा क्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति", (एत. १-१) "आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किंचन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमान् लोकानसृजत", (महो. १-अ. १) "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः। स एकाकी न रमेत। तस्य ध्यानान्तःस्थस्यैका कन्या दशेन्द्रियाणि" इत्यादिषु, (बृ. ५ ७-३) "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इत्यारभ्य, (बृ. मा. ६-७) "य आत्मनि तिष्ठन्" इत्यादिषु च निखिलजगन्नियमनं परमपुरुषं प्रकृत्यैव श्रूयते। असंनिहितत्वाच्च। न चैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य संनिधानमस्ति; येन जगद्व्यापारस्तस्यापि स्यात्॥

प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः। ४। ४। १८॥

(छा. ७-२५-२) "स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति", (तै. भृगु. १०-५) इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्" इति प्रत्यक्षेण—श्रुत्या मुक्तस्य जगद्व्यापार उपदिश्यते। अतो न जगद्व्यापारवर्जमिति चेत्—तन्न, आधिकारिकमण्डल-

---

तद्विषयकं नियमनम्। तद्वर्जमिति। जगद्व्यापारं वर्जयित्वेत्यर्थे णमुल्। अनुदात्तं पदमेकवर्जमिति प्रयोगानुसारेण द्वितीयायाञ्चेति णमुल्विधायकसूत्रे त्वरावाचिनः परीप्सायामित्यस्यानुवृत्त्यनङ्गीकारात् शय्योत्थायमित्यादाविवात्र त्वराविरहेऽपि न क्षतिः। णमुलो धातुसंबन्धापेक्षत्वात् भवतीति क्रियाध्याहारोऽस्त्येव। व्यापारं वर्जयतीति व्यापारवर्जमिति कर्मण्यण्प्रत्यये तु सुबन्तत्वम्। **निर्व्याजेति** अनुभवविशेषणम्। फलान्तरप्राप्तिरूपव्याजरहितेत्यर्थः। अस्तु परमात्मविषय एव प्रकरणम्; अथापि परमसाम्यादिश्रुतिबलात् अस्याप्यायास्यतीति प्रश्ने नेदमुत्तरमित्यत्राऽऽशयमाह **यदेत**दिति। लक्षणत्वैवास्योक्तत्वान्नास्य साम्यश्रुतिविषयतेति भावः। **न व्यभवत्**—न वैभवं प्राप्तम्। **अत्यसृजत** अतिशयितसृष्टिमकरोत्। **देवत्रा** देवेषु। **कन्या** कनत् मनइन्द्रियम्। ननु प्रकरणाभावेऽपि संनिधिप्रमाणादन्यस्यापि भवेत्। यथा स एको ब्रह्मण आनन्द इति परमात्मप्रकरणश्रुतस्यानन्दस्य, श्रोत्रियस्यचाकामहतस्येति मुक्तविषयेऽपि स्वीकार इत्यत्राह **असंनिहितत्वा**दिति॥ १७॥

ननु आनन्दविषये श्रोत्रियस्यचाकामहतस्येत्युपदेशवत् जगद्व्यापारविषयेऽपि प्रत्यक्षोपदेशोऽस्तीत्याशङ्क्याह **प्रत्यक्षे**ति। नात्र लोकसृष्ट्यादिरूपो जगद्व्यापार उच्यते; किंतु अन्यसृष्टेषु लोकेषु

स्थोक्तेः । आधिकारिकाः-अधिकारेषु नियुक्ता हिरण्यगर्भादयः; मण्डलानि तेषां लोकाः; तत्स्थाः भोगाः मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थः; 'तस्य सर्वेषु लोकेषु कामचारो भवति' इत्यादिनोच्यते। अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूतान् अनुभूय यथाकामं तृप्यतीत्यर्थः। तदेवं विकारान्तर्वर्तिनः आधिकारिकमण्डलस्थान् सर्वान् ब्रह्मविभूतिभूतान् अनुभवतीति अनेन वाक्येनोच्यते; न जगद्व्यापारः ॥ १८ ॥

यदि संसारिवत् मुक्तोऽपि विकारान्तर्वर्तिनो भोगान् भुङ्क्ते, तर्हि बद्धस्येव मुक्तस्याप्यन्तवदेव भोग्यजातम्, अल्पं च स्यात्; तत्राह—

विकारावर्ति च तथा हि स्थितिमाह ४।४।१९ ॥

विकारे—जन्मादिके न वर्तत इति विकारावर्ति; निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परं ब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः। तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वम्। तथा हि परस्मिन् ब्रह्मणि निर्विकारेऽनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिः, (तै. आन. ७-२-१) "यदा ह्येवैष एतस्मिन् अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति", "रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिका। तद्विभूतिभूतं च जगत् तत्रैव वर्तते, "तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति श्रुतेः। अतः सविभूतिकं ब्रह्मानुभवन् विकारान्तर्वर्तिनः आधिकारिकमण्डलस्थानपि भोगान् भुङ्क्त इति, (छा. ७-२५ २) "सर्वेषु कामचारः" इत्यादिनोच्यते; न मुक्तस्य जगद्व्यापारः ॥ १९ ॥

---

विहाररूपो व्यापार इति प्रतिवक्ति आधिकारिकेति। मुक्तस्य तत्र नाधिकारलेशोऽप्यस्तीति भावः। प्रत्यक्षेणेत्यस्य श्रुत्येति व्याख्यानम् ॥ १८ ॥

विकारावर्तीति ब्रह्मोच्यते। निर्विकारं ब्रह्माप्यनुभवति विकारिलोकैः साकम्; नैतत् बद्धस्य। ब्रह्मशेषतया सर्वानुभाविना मुक्तेन ब्रह्मणा सह भूतभवद्भविष्यत्सर्वविकारानुभवोऽपि क्रियते। न तु ब्रह्म विना स्वतन्त्रतया तत्तन्मात्रानुभव इत्यविशेषो नेति। विकारावर्तीति पदप्रयोगः दुःखसंकीर्णत्वानुभवविच्छेदयोरभावद्योतनायापि भवति। बद्धा यथा परिणामरूपविकारविशेषे सजन्ति, न तथा मुक्ताः। विकारवर्तिवत् विकारावर्त्यपि सर्वमनुभवन्ति। अनुकूलतायां विकारत्वं न प्रयोजकम्। किं तु ब्रह्मशेषत्वम् ॥ १९ ॥

ननु सत्यसंकल्पत्वादिकं जीवस्य स्वाभाविकं रूपमिति प्रागुक्तम्। यत् स्वाभाविकमनादिवस्तुगतम्, तत् अन्याधीनं न भवितुमर्हति। एवमनन्याधीनशक्तिसंपन्नस्य जगद्व्यापाराभावो दुर्वचः। न चैवं लक्षणत्वभंगः। मुक्तानां जगद्व्यापारवत्त्वस्य मुक्त्यनन्तरमेव संभवात् ततः प्राचीनजगन्निर्माणस्य तैः करणासंभवात् सर्वजगत्कारणत्वरूपलक्षणस्य मुक्तेष्वप्रसक्तेः। नन्वेवं मुक्तसाधितस्य जगतः ईश्वरानधी-

## दर्शयतश्चैवं प्रत्यक्षानुमाने । ४ । ४ । २० ॥

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य नियन्तृभूतपरपुरुषासाधारणं जगद्व्यापाररूपं नियमनं न संभवतीत्युक्तम्; निखिलजगन्नियमनरूपो व्यापारः परमपुरुषासाधारण इति दर्शयतः श्रुतिस्मृती, (तै. आन. ८-१) "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति, (बृ. ५-८-६) "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिः; तथा (बृ. ६-४-२२.) "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति च श्रुतिः। स्मृतिरपि (गी. ९-१०) "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते" इति, (गी. १०-४२) "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति च। तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्याप्यानन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः, (तै. आन. ७-२१) "एष ह्येवानन्दयाति", (गी. १४-२६, २७) "मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते। ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च। शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च" इति। यद्यप्यपहतपाप्मत्वादिः सत्यसङ्कल्पत्वपर्यन्तो गुणगणः प्रत्यगात्मनः स्वाभाविक एवाऽऽविर्भूतः—तथाऽपि तस्य तथाविधत्वमेव परमपुरुषायत्तम्; तस्य नित्यस्थितिश्च तदायत्ता। परमपुरुषस्यैतन्नित्यतायाः नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः। एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य, परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति शास्त्रादवगम्यते। अतो मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यं च जगद्व्यापारवर्जम् ॥२०॥

---

नत्वात् सर्वजगत्कारणत्वासंभव इति चेन्न-स्वरूपाविर्भावप्रतिबन्धककर्मनिवृत्तेः परमात्माधीनत्वेन तदनन्तरमुक्तकर्तृकसृष्टेरपि परम्परया तदधीनत्वमात्रेण सर्वकारणत्वोपपत्तेः। विश्वामित्रादिष्वपि विलक्षणजगत्सर्गशक्तेषु प्रमाणसिद्धेषु कैमुत्यसिद्धं किल मुक्तानां शक्तत्वम्। अतः परमसाम्यादिश्रवणबलात् सर्वैश्वर्यमभ्युपेत्यमित्याशंकायाम् परमपुरुषादन्यत्र तदभावप्रतिपादनपर्यवसायि वाक्यजातं दर्शयति **दर्शयतश्चेति**। गीतायां **ब्रह्मण** इति शुद्धजीवार्थकम्। पूर्वार्धे कैवल्यं तृतीयपादे ऐश्वर्यं तुरीये मोक्षश्च विवक्ष्यते। ननु स्वाभाविकधर्मत्वेन स्वीकृतस्य कथमन्यायत्तत्वम्, व्याघातादिति पृच्छति **यद्यपीति**। प्रत्याह **नित्यताया** इति। नन्विच्छानन्तरं यदि भवेत्, तदैवेच्छाधीनत्वम्; कथमेवम्भूतस्य स्वाभाविकत्वं नित्यत्वं चेति चेत्—अत एव **इष्टत्वादित्यनुक्त्वा नित्येष्टत्वादित्युक्तम्**। अनादौ काले नित्यपदार्थस्वरूपादीनां तत्तत्क्षणे स्थितिं प्रति तत्तत्पूर्वक्षणावच्छिन्नेश्वरेच्छायाः कारणत्वात् एवं प्रतिक्षणमेवेच्छासत्त्वात् सर्वोपपत्तिरिति। इच्छा चेयम्, इदं नित्यं भवतु इति वा भवत्वित्येतावन्मात्राकारा वा भवतु। "इच्छात एव तव विश्वपदार्थसत्ता" इत्यभियुक्तवचनमेतदर्थकमेव ॥

भोगमात्रसाम्यलिङ्गाच्च । ४ । ४ । २१ ॥

**ब्रह्मयाथात्म्यानुभवरूपभोगमात्रे मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गात् जगद्व्यापारवर्जमित्यवगम्यते, (तै. आन. १-२) "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति । अतो मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वं च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति जगद्व्यापारवर्जमेव मुक्तैश्वर्यम् ॥ २१ ॥**

---

एवं तावत् जीवानां स्वाभाविकं रूपमपि परमात्माधीनमेवेत्युक्तम् । एतावता जगद्व्यापारः सर्वथा न भवतीति कथं सिद्धमिति चेत्—उच्यते-कोऽयमापाद्यमानो जगद्व्यापारः, किं जगदुपादानत्वम् उत निमित्तत्वम् । तत्रापि व्यष्टिसमष्टिसर्वविषये, उत कतिपयव्यष्टिविषये । 'य आत्मनि तिष्ठन्' इत्यादिना जीवान्तर्यामितायाः, 'योऽव्यक्तमन्तरे संचरन्' इत्यादिना प्रकृत्याद्यन्तर्यामितायाश्चैकस्मिन्नेवैवमवगमात् विशिष्टवेषेणोपादानत्वस्य मुक्तेषु न प्रसक्तिः । एवञ्चैकजीवव्यष्ट्युपादानत्वमप्येषामसंभावितम् । निमित्तत्वमपि परमात्मसंकल्पाधीनसंकल्पमादायैव वक्तव्यम् । तत्र क्लृप्तेन तत्संकल्पेनैव निर्वाहे किमस्ति मुक्तसंकल्पस्य प्रयोजनम् । मिथोविरोधपरिहारायानन्तमुक्तान्तरसंकल्पाविरोधप्रतीक्षस्यान्यथासिद्धस्य च मुक्तसंकल्पस्य कारणत्वमतो न घटते । संकल्पश्चायम्, अहं बहु स्यां प्रजायेयेति न भवति; अनन्तर्यामित्वात् । अन्यादृशश्च संकल्पो नैव श्रुतोऽस्ति । अन्ततश्चतुर्मुखादिवत् व्यष्टिं प्रति निमित्तत्वं संभाव्यते । तत्रापि तदर्थानेकपुण्यकर्मानुष्ठानपूर्वं फलप्रतीक्षेषु जाग्रत्सु जीवेषु बद्धेषु, न मुक्तान् नियोक्ष्यतीति तत्त्वस्थितिः । काममियं शक्तिः परिमिता स्वीक्रियतां मुक्ते । नित्यसूरीणां तु केषाञ्चित् प्रकृतिपुरुषाद्यभिमानितया भगवता क्लृप्तानां व्यवस्थितविषये संकल्पः कारणं भवेन्नाम । अन्यसृष्टलोकेष्ववान्तरानेकसृष्टिस्तु परमात्माराधनशेषतया मुक्तकार्येष्यत एवेत्यलम् । सर्वमिदमभिप्रेत्य निगमितम् **अतो मुक्तस्येति** ॥२०॥

तर्हि परमसाम्यश्रुतिनिर्वाहः क इत्यत्राह **भोगमात्रेति** । यदंशे साम्यं श्रुतम्, तत्र पारम्यं= तारतम्याभाव एव तदर्थः ; न तु सर्वांशसाम्यमिति भावः । सर्वत्र श्रुतौ तत्तद्देवतासायुज्यं हि वर्ण्यमानं न तत्तद्देवतागतमधिकारमपि भोक्तरि स्थापयेदिति दर्शयितुं सूत्रे चकारः ॥ एतेन सति पारतन्त्र्ये दुःखमवर्जनीयमिति शंकाऽपि शमिता । "सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्" इति वचनात् स्वातन्त्र्यं सुखाय, पारतन्त्र्यं दुःखायेति न नियन्तुं शक्यम् । स्वातन्त्र्यपारतन्त्र्ययोः तात्कालिकसुखत्वदुःखत्वप्रतीतिसद्भावेऽपि विपरीतपर्यवसानस्यापि दर्शनात् । न हि स्वातन्त्र्यनिबन्धनमुद्बन्धनं सुखाय; न च बालानां हितैषिपित्रादिशासनातिक्रमः सुखाय, न वा सदुपदेशमूलतदनुवर्तनं दुःखाय । अतः विवेकिन एव स्वातन्त्र्यं सुखाय । तथा विवेकिनं परं प्रति पारवश्यं सुखायैव । स्वप्रयोजनपरप्रयोजनयोर्विप्रतिषेधे परः स्वप्रयोजनदृष्टिः स्वपरतन्त्रमप्युपेक्षेतेति कृत्वा पारतन्त्र्यं दुःखायेत्युच्यते । विप्रतिषेधस्यैव मोक्षे न प्रसक्तिः ; मुक्तानां सर्वज्ञतया स्वाम्यभिप्रायापरिज्ञानाभावात् स्वामिप्रयोजनातिरिक्तप्रयोजनाकांक्षत्वाभावाच्च । अस्ति चापेक्षितं स्वातन्त्र्यमपि ; अप्रतिहतेच्छत्वादिति ॥ २१ ॥

यदि परमपुरुषायत्तं मुक्तैश्वर्यम्, तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्तिसंभवाशंकेत्यत्राह—

अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् । ४ । ४ । २२ ॥

यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञः सत्यसङ्कल्पः आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्तसमाभ्यधिकसंभावनः परब्रह्माभिधानः परमपुरुषोऽस्तीति शब्दादवगम्यते— एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीतः उपासीनान् अनादिकालप्रवृत्तानन्तदुस्तरकर्मसञ्चयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवावगम्यते । शब्दश्च, (छा. ८-१५-१) "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते [न च पुनरावर्तते]" इत्यादिकः । तथा च भगवता स्वयमेवोक्तम्, (गी ८-१५, १६) "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति ।

न च उच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदेकप्रियस्यान-

---

नन्वेवमैश्वर्यसंकोचे तत्र मा भूत् भोगसंकोचः । अथाप्यावृत्तिशंकया दुःखप्रसक्तिः; आवृत्तौ दुःखनिमग्नत्वञ्चावर्जनीयमित्यत्राह अनावृत्तिरिति । ननु पूर्वं तन्वभावे संध्यवदिति, अत्र च दर्शयतश्चैवमिति भगवदधीनत्वस्योक्ततया मुक्तकार्यं सर्वं तदधीनमिति, कथञ्चित् जगद्व्यापारस्वीकारेऽपि भगवदधीनतयैव तत्स्वीकारसंभवात् तत्र पूर्वपक्षिणा तदनधीनत्वस्यापि स्वीकर्तव्यत्वाभावात्, अनधीनत्वपक्षे जगद्व्यापाराभावेऽपि स्वातन्त्र्यसंभवाच्चैतत्सूत्रस्य एतदधिकरणासंबन्धादेतच्छेषत्वं विना पृथगधिकरणत्वमेव युक्तमिति चेत्— न; संभवत्यैकाधिकरण्ये पार्थक्यायोगात् । भवति हि तदनुगुणा शंका—जगद्व्यापारादेरप्यस्मिन् स्वीकृतौ सर्वस्वामितया साम्येन स्वातन्त्र्यात् न स एनमावर्तयितुं प्रभवतीति स्यात् । अन्यथा त्वावर्तयेदपीति ।

शब्दो द्विविधः श्रुतिः स्मृतिश्चेति । प्रकारान्तरेणापि द्विविधः, साक्षादनावृत्तिबोधकः, अनावृत्त्याक्षेपकार्थप्रतिपादकश्चेति । तत्र **न च पुनरावर्वत** इति प्रथमः । **मामुपेत्ये**ति द्वितीयः । तृतीयः **प्रियोही**त्यादिः । क्रमेणात्र सर्वभाषणम् । **यथे**त्यादिना सिद्धतत्त्वपरपूर्वाध्यायद्वयार्थसंग्रहः । **एव**मित्यादिनोत्तरद्विकार्थस्य साध्यस्य । पुरुषार्थगतपारम्योपयोग्यंशकथनं **निखिले**त्यादिना । अभिगम्यत्वानुगुणाकारकथनमा**श्रिते**त्यादिना । आकारद्वयसिद्धांशो **निरस्ते**तिपदोक्तः । द्वितीयाध्यायार्थाभिप्रायकश्चेदं पदम् । संसिद्धौ पारम्यविशेषणं कैवल्यस्यापि व्यावर्तनाय । **पुनरावर्तिन** इति । लोकानामेव पुनः पुनरुत्पत्तिकथने प्रजानामस्थिरत्वं कैमुत्यसिद्धम् । लोकानां पुनरावृत्तिर्नाम सजातीयलोकान्तररूपपरिणामः । **विद्यते** लभ्यते; अत **उपेत्ये**ति पुरुषकर्तृकत्वान्वयोपपत्तिः । अस्तीत्यर्थे हि न समानकर्तृकत्वम् ।

सूचकशब्दं दर्शयितुमारभते **नचोच्छिन्ने**ति । ननु येन केनापि हेतुना पुनरावृत्तिशंका यदि,

वधिकातिशयानन्दं ब्रह्मानुभवतः अन्यापेक्षातदर्थारम्भाद्यसंभवात् पुनरावृत्तिशङ्का । न च परमपुरुषः सत्यसङ्कल्पोऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति, य एवमाह— (गी ७-१७, १८, १९.) "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः। उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥ आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् । बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ॥ वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" इति । सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति—इति सर्वं समञ्जसम् ॥ २२ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

श्रीशारीरकमीमांसाशास्त्रं श्रीभाष्यञ्च परिसमाप्तम् ॥

श्रीमते रामानुजाय नमः ॥ श्रीरस्तु ॥ शुभमस्तु ॥

---

तर्हि जीवगतधर्मोऽपि न हेतुरिति वक्तव्यम् । ईश्वरः स्वातन्त्र्यादावर्तयेदिति शंकयैव प्रवृत्ते सूत्रे ईश्वरे तद्धेतुप्रतिषेध एव कार्यः । अत उपरि **नचे**त्यादिकं संगतम्; न त्विदं जीवे तद्धेतुप्रतिषेधकं संगतमिति चेत्—उच्यते । अनावृत्तिसूचकार्थप्रतिपादकशब्दोदाहरणं चिकीर्षुः तदेव हि सूचकत्वं भंग्या प्रथममुपपादयति । तत्र, 'स च मम प्रियः' इतीदं प्रकृतम् । ततः प्राक् 'प्रियो हि ज्ञानिनोऽत्यर्थम्' इत्यस्य सद्भावात् तस्यापि अनावृत्तिसूचकत्वमस्तीति अर्थादुपपादयितुमिदं वाक्यमिति । यद्वा स्वातन्त्र्यादीश्वर आवर्तयेदिति पृच्छतः क आशयः—किं संसार इव जीवधर्मसापेक्षेण स्वातन्त्र्येणेश्वर आवर्तयेदित्युच्यते, उत निरपेक्षेण । नाद्य इत्याह **नचे**ति प्रथमवाक्येन । जीवस्य कर्म वा कांक्षा वा नास्तीति न तदनुरोधिस्वातन्त्र्यं कारणमिति भावः । अथवेश्वरस्वातन्त्र्ये यथा, तथा जीवस्वातन्त्र्येऽपि जीवेच्छयैवाऽऽवृत्तिशंका भवत्येव । यदि तत्र जीवस्येच्छा न भवितुमर्हतीति मत्वा शब्दप्रमाणमादाय स्वयं जीवस्याऽऽवृत्तौ कारणं नेत्युच्यते, तुल्यमिदमीश्वरेऽपीति ज्ञापनार्थमिदम् । एवञ्च दृष्टान्तार्थमिदं वाक्यमिति । **उच्छिन्ने**त्यादि सर्वं हेतुगर्भविशेषणम् । **ने**त्यत्र साक्षाद्धेतुः **अन्यापेक्षातदर्थारम्भाद्यसंभवा**दिति । न ब्रह्म अनुभवतः पुनरावृत्तिशंका, अन्यापेक्षाद्यसंभवादित्युक्तं भवति । **अन्यत्** ऐश्वर्यं कैवल्यञ्च । **वासुदेवः सर्वमिती**ति **पूर्वत्रा**न्वेति । **सर्वं**=प्राप्यः प्रापकः; माता पिता दाराः पुत्रः क्षेत्रमित्यादिस्थानापन्नश्च । **सूत्राभ्यास** इति । पदाभ्यासः प्राक् अध्यायसमाप्तिद्योतनाय कृतः । पूर्णसूत्राभ्यासः पूर्णग्रन्थसमाप्तिद्योतनाय । **इति सर्वं समञ्जसम्** । **इति**-एवमुपपादिते प्राच्यरीत्यनुसारिणि सर्वसूत्रार्थे साङ्गवेदवेदान्तसहितं पूर्वोत्तरभागद्वयात्मकमीमांसाशास्त्रं कृत्स्नं समञ्जसम् । यद्वा **इती**दं **सर्वं** शास्त्रस्वरसार्थत्वात् समञ्जसम् ॥

1. नाथयामुनमुखैर्मतान्तरक्षेपपूर्वमुपपादितं मतम्। वेदसूत्रगणरूढमद्भुतं दर्शयन् जयति लक्ष्मणो मुनिः॥

2. यतीन्द्रवचनामृतस्वदनजीवनौ संश्रये सुदर्शनगुरुत्रयीशिखरदेशिकौ विश्रुतौ ।

निरर्गलमबोधयन्निखिलभाष्यवाक्यानि यः, ररक्ष कृतिभिर्मतं निपुणमद्भुताभिश्च यः ॥

"अविस्तृताः सुगम्भीरा रामानुजमुनेर्गिरः । दर्शयन्तु प्रसादेन स्वं भावमखिलं दृढम् ॥"

3. साक्षात्स्वामीत्यभिख्यप्रवरयतिसदृक्-तर्कपाथोजभानु-
श्रीमद्वेदान्तरामानुजयतिचरणाम्भोजभृङ्गायमाणः ।
विद्वच्छिष्यव्रजाभिष्टुत बहुकृतिकृद्रङ्गरामानुजाख्य-
ख्यातश्रीयोगिवीक्षाबलदृढविदिताशेषवेदान्तमर्मा ॥

4. आस्थापूर्वमुपागतान् बहुविधान् अध्याप्य विद्यार्थिनः
तन्त्रन्यायनिरूढबोधमहिता निर्माय नाना कृतीः ।
नानोपाख्य उपेतराष्ट्रपतिसंमानप्रकर्षश्च यो
वात्स्यः सोऽकृत **वीरराघव** इमं **भाष्यार्थसद्दर्पणम्** ॥

5. भाष्यस्याध्ययनं प्रवर्तनमपि स्यादाद्यकैङ्कर्यमि-
त्यादेशं यतिपुङ्गवस्य शिरसा धृत्वाऽखिलैर्वैष्णवैः ।
आर्हन्तीमधिगम्य शास्त्रपठनादास्वादनीये रसे
दासः श्रीहयवक्त्रदेशिकदृशा धन्योऽस्मि लब्धान्वयः ॥

6. निगमशिरोगुरुप्रमुखसद्गुरुसाधुकृता-
धिकरणदर्पणादि विलयं बत यातमिह ।
वरशतटिप्पणादिगदितार्थगणं भवतात्
तदपि निरूपणीयबहु राजति भाष्यमिदम् ॥

7. उपनिषदः प्रकाश्य कृतभाष्यपरिष्करणाः परमतशोधनीरपि कृतीः कृतिरुद्यमिनः ।
अपि शुभदिव्यसूरिनिगमव्रजरक्षिकृतेः अभिनवदेशिकादियमभूत् शकसज्जजये ॥

8. **भाष्यार्थदर्पण**न्यस्तचक्षुषां सर्वदर्शकः । प्रीयतां फणिराजाद्रिपारिजातः प्रियः श्रियः ॥

इति श्रीमद्वेदान्तरामानुज-यतीन्द्र-महादेशिक चरणारविन्दचञ्चरीकस्य श्रीमद्रङ्गरामानुजमुनीन्द्र-महादेशिकपदपद्म सेवासमधिगतसर्ववेदान्तार्थस्य तर्कार्णव-पूर्वोत्तरमीमांसाप्रदीपादि-बहु-विधदभाजः प्रौढानेकतर्कमीमांसावेदान्तादिग्रन्थनिर्माणालङ्कर्मीणस्य श्रीवात्स्यश्रीशैल-सचक्रवर्तिनः पवित्रहृदयाचारपद्माधिवासिनीश्रीचक्रवर्त्याचार्यपुत्रस्य वीरराघवाचार्यस्य
अभिनवदेशिकस्य कृतिषु श्रीभाष्यव्याख्याने
भाष्यार्थदर्पणे चतुर्थाध्याये चतुर्थः पादः ॥

**भाष्यार्थदर्पणः संपूर्णः ।**

श्रीमते रामानुजाय नमः । श्रीगुरुपरम्परायै नमः ॥

शुभमस्तु ॥

# श्रीभाष्ये शारीरकसूत्र अकारादि सूची

[ पुटसंख्या ]

# ब्रह्मसूत्राधिकरणानाम् अकारादिसूची।

॥ श्रीरस्तु ॥

# शोधनिका

442- 1 अहन्यमानस्य
14 तमभ्यर्च्य
26 श्रुत्यर्थ
444-10 विश्वसनीय
30 यथाश्रुतमेव
452-20 दर्शयति
453-13 असमवायि
457- 8 आश्रय
460-14 दूषणमुपर्यु
461- 7 शास्त्रमेव.... पबृंहणा
8 शास्त्राविरोधिना
467-10 रज्जवादेः सत्यता
468- 7 नुपलब्धेश्च... साधित
471-12 तदीयकर्मसंक्रमः
474-10 अपारमार्थिकी
475-29 परिच्छेदभावेऽपि
478;13 प्रमासंभवात्
480 26 सर्वैर्भेदवादिभिः
27 आनन्त्यश्रुतेः
481-24 उत्पाद्योत्पादक
25 नामधेयस्य
487-28 उपलभ्यमान
489-23 लोके वेदे च
498- 6 निरवयवत्वं
501-14 इति स्त्रीलिंग
505 टी 12 पराभ्यूह
506 टी 1 मुमुक्षून्
518-20 एवंव्याहत

520-22 विगृह्यम्
523- 4 कार्त्स्न्येन वा
524-22 दूषणं
526-18 परमाणुकारण
535-10 क्षणिकत्वभंगः
537-11 संक्रमणं
541- 7 मात्रप्रमाणक
546- 7 स्वाभाविकात्म
20 मनोवाक्कया
550-16 अगोत्यमचेतनं
29 प्रमाणानुसारेण
553 30 परिहृता भवति
555-15 पुंलिङ्ग
556- 2 समाश्रयणीयत्वाय
559-20 पाञ्चराते
560- 2 तदेकंतत्त्वम्
17 अनुसंदधानस्य
565-27 तेजःप्राथम्य
567-17 शास्त्रैक.... अमृतत्व
569-16 प्रस्तुतत्वात्
20 पुंलिङ्ग
27 श्रूयते
572- 6 स्यात्
574-22 चिदचिद्ब्रह्मसु
26 दर्शयति
27 इत्यादिश्रुति
575-24 प्रतिकूलो
576-27 सिद्ध्यति

577-18 स्वाभाविक..नित्यज्ञाना
27 ज्ञानत्वाभ्युपगमे
29 सर्वलोपलब्धि.... तदुत्पत्ति
578-19 इव विशेषण
583- 8 अपितु
585-19 प्रतिषिध्यते
586-22 व्यापारेषु
23 तत्तत्कार्यायत्तम्
587- 9 उपलब्धिवदनियमः
588-30 षेधश्रुतिभि
589-12 कृतं प्रयत्नं
19 तत्कृतीनां
21-22 विधिनिषेधयोरा
590- 5 स्वयमेव
16 प्यप्रार्थितोऽपि
18 एवञ्चेदं
30 अप्रतिष्ठं ब्रह्माना
591-14 भेदश्रुति.... अंशश्रुति
593-30 आधेयत्वविधेयत्वादि
594-11 जीवब्रह्मसंबन्धस्य
595- 1 ब्रह्मणि
596- 4 चकारात्
599-30 दर्शयिष्यते
600-24 सूत्रमवतारयतीति
602-19 तत्सत्त्वस्येष्टत्वादिति
603-28 केषाञ्चिदेव
30 कालमात्रभवाः
604- 5 वर्णननिरासोऽपि

604- 8 प्रामाणिकेसति
605-26 अह्न आसीत्
606-11 मनुषक्तमेवो
22 वाक्यानि च
30 पृथक्चेष्टा
607--15 (बृ. 3,5,21)योऽयं
608- 6 यस्मिन्नुत्क्रान्ते
21 चक्षुरादिसंमतकरण
614- 3 मूर्तिकृतिः
61 -25 निष्पत्तिवाक्यपाठ
619-22 क्तोऽपरमात्मनि
24 वैराग्यस्य
622-25 इति ।
623-15 अविषयकाः
30 विषयिणः
625-21 अपि ततो जीव
626 16 चण्डालादि
629- 3 आचारानुमित
13 गतिश्रवणात्
20 पृथङ्निर्देशस्य
639-15 शङ्किताभ्युदयसाधनं
640 17 विधिनिषेधयो
641-10 शरीरप्राप्तिः
642-15 संसरज्जीव
22 मध्यस्यामवस्थायां
654-25 प्रदर्श्य
662-14 प्रामाणिकमिति
663-18 मूर्तामूर्तब्राह्मणमात्रं
664 30 षड्विधा
667- 3 त्वानुसंधानं

671-टी. 7 व्यङ्क्तुं
672-टी 12 शाण्डिल्य
676-टी 3 सिद्धान्त
677-टी 10 आहवनीय
679-11 क्रतुसाद्गुण्य
680-14 माजहु
683-टी. 6 उत्पत्तौ
684- 7 सप्राणानामिन्द्रि
9 मुपपादितम् ।
685-टी. 13 मयोपासना
686 टी. 7 सर्व साधारणा
10 कत्वमेवा
687-11 प्रियशिरस्त्वा
692-टी. 27 यत्र
697-टी. 20 स्तोत्रादि
698 टी. 13 उपरिफलाश्रव
700-टी. 2 विद्याङ्गत्वं
702-टी. 2 शाट्यायनि
704- 3 ज्यायस्त्वेन
17 पर्युदासोवा
705 14 दुष्कृतसंक्रमणं
706-टी. 9 देहवियोगार्थं
10 साम्पराय
14 कौषीतकि
707-टी. 3 गतिश्रुतेः
708-टी. 11 तीत्यप्युच्येत
710-13 तेऽर्चिरभिसं
टी. 6 साधारणतया
711-टी. 17 नास्थूल
712- 4 तत्रसंशयः

712-30 सुसूक्ष्म
715- 1 अग्ने वेर्होत्रं
टी. 22 सामवेदे
717- 1 बृहदारण्यके
720-टी. 22 प्रक्रान्ते
721- ,, 13 युक्त्यन्तरेणैव
,, 14 अशनायाद्य
722-11 सैवहि
टी- 5 अशनायाद्य
7 यच्छंकापरि
8 रन्यान्तेवासि
725-13 गुणविशिष्ट
726- 3 आयतनादिभ्यः
टी- 8 परस्य
727 ,, 2 विशिष्टस्योक्त
730 ,, 1 कम्, न च
,, 16 बन्धविनिर्मो
,, 19 तत्प्रत्यनीकत
732 , 6 औपनिषद
,, 7 पासनस्य
735 ,,19 नारायण
736 ,, 4 पद्मकोश
7 8 ,, 9 षट्त्रिंशत्स
,, 17 श्रोत्रमयान्श्रोत्र
,, 21 यथायथं....न्ध्याधा
,, 25 सर्वव्यापार
739 ,, 1 स्थण्डिल
5 विद्यामय
,, 13 समुद्रसोमरस
740- 3 दिषुतिदिश्यते

टी. 8 संघातस्या
741-10 व्याहारो
741-टी. 14 चिन्वन्तीति, पुरुष
742 ,, 9 तदपेक्षा
743 ,, 9 श्रयते
714- 9 इत्यादिनो
टी. 2 वाक्यमत्र
749 ,, 8 जीवोपासन
12 तन्मतेपाठः
20 साधयितुम
750-12 उपासनस्य
,, भिन्नतच्छाखा
752-16 कुले
टी. 3 विराट्संपन्न
756 ,, 12 औपचारिक
757- 3 वैदुष्यानिश
,, 4 समुपजात
758 ,, 12 प्रायश्चित्ताना
,, 16 कामनासत्त्व
763- 8 एवं विद्धवै
,, 14 त्वासंभवात्
764 ,, 16 मृत्युजय
766 ,, 11 जैमिने
,, प्राक्तन
769-12 नाधिकरण्याय
770- 1 स्वर्गाद्यर्थे
772- 9 हेयप्रत्यनीका
टी. 1 तव्यताकाध्ययने
778 ,, 6 मुलंघ्यापि
779-10 अध्ययनशब्दो
781-10 जुह्वादीनां

783-टी. 11 यथाते, तथेमे
788- 7 कैमुतिक
790-11 मग्निहोत्रादीनां
791 1 तयाप्यनुष्ठेयानि
टी. 15 अविद्ययामृत्युं
792- 5 श्रुतौ स्मृतौ च
793- 2 यथोर्ध्वरे
,, टी. 11 आश्रमित्व
798 ,, 15 निर्णीतत्वात्
804 ,, 3 मौनसद्भावस्य
6 प्रवज्याप्रस्तावः
819.टी. 25 मूर्तत्वाभावात्
,, 26 चिन्त्यम्
821.टी. 7 एवंकुर्व
,, 28 उपासनारम्भ
822 ,, 20 प्रदास्यामि
829 ,, 19 संभावनापरि
835- 8 मनस्सम्पत्ति
840.13 आप्तकामः
844- 4 मूर्धन्ययैव
13 सदुत्क्रामति
टी. 13 संततत्वं
845 ,, 9 दित्यप्राप्ति
846-टी 8 कर्मशेषे
850-15 रश्मिभि
851-12 तत्प्रथितेः
851 ,, टी. 5 किमर्चिरादिरेक
854-टी. 2 संवत्सर
858-टी. 21 समाधानमिति
859.टी. 4 अप्रतीकालम्बन
863. ,, 3 प्रजापतिः

864. ,, 1 कार्याद्युपासका
,, 4 तदन्यप्रापक
866.टी. 5 पञ्चाग्नि
,, 8 दृष्ट्योपासनं
867 ,,. 7 मूलाषाढोत्तराषा-
ढामयी
20 न्मिश्रचिद्विषयकं
869.टी. 2 मप्यनभ्युपगम्य
871.टी. 16 नुकूलत्वेन
872. 4 संकुचितानां
873.30 ब्रह्मैवयमि
874.13 त्यौडुलोमिः
875. 1 तेनरूपेणा
12 मैत्रेयी
14 घनदृष्टान्त
16 देहाद्यन्तःस्थि
17 अबाह्यः
879.16 यजतिचोदना
884.टी. 10 मुक्तविषये
885.टी. 6 बद्धस्येव
886. 2 जगद्व्या
11 एष ह्येवा
15 एवाविर्भूतः
16 स्वमेवपरम
टी. 1 प्रतिबन्धक
2 मुक्तकर्तृक
5 तुरीये मोक्षश्च
11 इच्छातएव
892- 3 अर्चिरादिना 850
8 अविभागेन दृष्ट 872
22 अस्यैव चोपप 839
27 आतिवाहि 857

अनुभूतचरानेकमुद्रणालयदौःस्थ्यतः । शोधकस्यासहायत्वादप्यशुद्धिस्तु भूयसी ॥
कथञ्चिन्निरवर्त्यैतत् कार्यं तत्रेति तुष्यत । सन्तो गुणान् ग्रहीष्यन्ति किमन्यैर्दोषदर्शिभिः ॥

---

हेतुः सर्वान्तरात्मा भवतदितरभूम्थः स्वतन्त्रान्यशून्यो
निर्बाधः स्वप्रमाणक्षपितपरमतो व्योमकृच्चाक्षहेतुः ।
नीचोच्चस्थाननेता निरघगुणनिधिर्ध्येय इज्यार्थकर्मा
पापच्छित् त्याजिताङ्गो गतिकृदमृतदो ब्रह्मसूत्राब्धिमेयः ॥

जयतु यतिपतिश्रीलक्ष्मणार्यात्र्यमूक्तिः
जयतु निगमचूडादेशिकानर्घसूक्तिः ।
जयतु तदुभयास्वाद्यस्मदाचार्यपंक्तिः
जयतु तदभिगम्यः सन्निधिः श्रीनिधिर्नः ।

श्रीरस्तु ॥ शुभमस्तु ॥

